# श्रीमहाभारतं

श्रीमन्महर्षिवेदव्यासविरचिता

श्रीमन्महाभारतसंहिता

अनुशासनाश्वमेधिकाश्रमवासिकमौसलमहाप्रस्थानिक
स्वर्गारोहणिकखिलहरिवंशपर्व्वघटितः

चतुर्थखण्डः

साधारणविद्यावृद्ध्यर्थकसमितिधनव्ययेन मुद्रितुमारब्धस्तत्परित्यक्तत्वात्
गौड़देशीयया आसियातिकाख्यसभाया अनुज्ञया

कलिकातानगरराजधान्यां [illegible]

मुद्रितः

संस्कृतपाठशालाध्यापकेन श्रीनिमाइचन्द्रशिरोमणिना आसियातिकाख्यसभाध्यापकेन
श्रीरामगोविन्दतर्करत्नेन श्रीरामहरिन्यायपञ्चाननेनापि
संशोधितश्च

शकाब्दाः १७६१
ई॰ १८३९

# श्रीमहाभारतं

## ॥ अनुशासनपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

॥ युधिष्ठिर उवाच ॥ शमो बहुविधाकारः सूक्ष्म उक्तः पितामह। न च मे हृदये शान्तिरस्ति कृत्वेदमीदृशं।
अस्मिन्नर्थे बहुविधा शान्तिरुक्ता पितामह। स्वकृते का नु शान्तिः स्याच्छमाद्बहुविधादपि।
शराचितशरीरं हि तीव्रव्रणमुदीक्ष्य च। शर्म्म नोपलभे वीर दुष्कृतान्येव चिन्तयन्।
रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलं। त्वां दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजं।
अतः कष्टतरं किन्नु मत्कृते यत्पितामहः। इमामवस्थां गमितः प्रत्यमित्रै रणाजिरे।
तथा चान्ये नृपतयः सहपुत्राः सबान्धवाः। मत्कृते निधनं प्राप्ताः किन्नु कष्टतरं ततः।
वयं हि धार्त्तराष्ट्राश्च कालमन्युवशं गताः। कृत्वेदं निन्दितं कर्म्म प्राप्स्यामः कां गतिं नृप।
इदन्तु धार्त्तराष्ट्रस्य श्रेयो मन्ये जनाधिप। इमामवस्थां सम्प्राप्तं यदसौ त्वां न पश्यति।
सोऽहं तव ह्यन्तकरः सुहृद्वधकरस्तथा। न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितं क्षितौ।
दुर्य्योधनो हि समरे सहसैन्यः सहानुजः। निहतः क्षत्रधर्म्मेऽस्मिन् दुरात्मा कुलपांसनः।
न स पश्यति दुष्टात्मा त्वामद्य पतितं क्षितौ। अतः श्रेयो मृतं मन्ये नेह जीवितमात्मनः।
अहं हि समरे वीर गमितः शत्रुभिः क्षयं। अभविष्यं यदि पुरा सह भ्रातृभिरच्युत।
न त्वामेवं सुदुःखार्त्तमद्राक्षं सायकार्द्दितं। नूनं हि पापकर्म्माणो धात्रा सृष्टाः स्म हे नृप।
अन्यस्मिन्नपि लोके वै यथा मुच्येम किल्विषात्। तथा प्रशाधि मां राजन्मम चेदिच्छसि प्रियं।
॥ भीष्म उवाच ॥ परतन्त्रं कथं हेतुमात्मानमनुपश्यसि। कर्म्मणां हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियं।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः।
गौतमी नाम कौन्तेय स्थविरा शमसंयुता। सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनं।
अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः। लुब्धकोऽर्ज्जुनको नाम गौतम्याः समुपानयत्।
स चाब्रवीदयं ते स पुत्रहा पन्नगाधमः। ब्रूहि क्षिप्रं महाभागे बध्यतां केन हेतुना।
अग्नौ प्रक्षिप्यतामेष छिद्यतां खण्डशोऽपि वा। नह्ययं बालहा पापश्चिरं जीवितुमर्हति।

॥ गौतम्युवाच ॥ विसृजैनमबुद्धिस्त्वमवध्योऽर्जुनक त्वया। को ह्यात्मानं गुरुं कुर्यात्प्राप्तव्यमविचिन्तयन्।

प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः। मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके।

हत्वा चैनं नामृतः स्यादयं मे जीवत्यस्मिन्कोऽत्ययः स्यादयं ते। अस्योत्सर्गे प्राणयुक्तस्य जन्तोर्मृत्योर्लोकं को नु गच्छेदनन्तं।

॥ लुब्धक उवाच ॥ जानाम्यहं देवि गुणागुणज्ञे सर्वार्तियुक्ता गुरवो भवन्ति। स्वस्थस्यैते तूपदेशा भवन्ति तस्मात् क्षुद्रं सर्पमेनं हनिष्ये।

समार्थिनः कालगतिं वदन्ति सद्यः शुचं त्वर्थविदस्त्यजन्ति। श्रेयः क्षयं शोचति नित्यमोहात्तस्माच्छुचं मुञ्च हते भुजङ्गे। १५

॥ गौतम्युवाच ॥ आर्तिर्नैवं विद्यतेऽस्मद्विधानां धर्मारामः सर्वदा सज्जनो हि। नित्यायस्तो बालकोऽप्यस्ति तस्मादीशे नाहं पन्नगस्य प्रमाथे।

न ब्राह्मणानां कोपोऽस्ति कुतः कोपाच्च यातना। मार्दवात् क्षम्यतां साधो मुच्यतामेष पन्नगः।

॥ लुब्धक उवाच ॥ हत्वा लाभः श्रेयसा ह्यक्षयः स्याल्लाभो लाभः स्याद्बलिभ्यः प्रशस्तः। कालाल्लाभो यस्तु सद्यो भवेत श्रेयो लाभः कुत्सितेऽस्मिन् न ते स्यात्।

॥ गौतम्युवाच ॥ कार्थ प्राप्तिर्गृह्य शत्रुं निहत्य का वा शान्तिः प्राप्य शत्रुं न मुक्त्वा। कस्मात्सौम्याहं न क्षमे नो भुजङ्गे मोक्षार्थं वा कस्य हेतोर्न कुर्यां।

॥ लुब्धक उवाच ॥ अस्मादेकाद्बहवो रक्षितव्या नैको बहुभ्यो गौतमि रक्षितव्यः। कृतागसं धर्मविदस्त्यजन्ति सरीसृपं पापमिमं जहि त्वं। २०

॥ गौतम्युवाच ॥ नास्मिन् हते पन्नगे पुत्रको मे सम्प्राप्स्यते लुब्धक जीवितं वै। गुणं चान्यं नास्य वधे प्रपश्ये तस्मात्सर्पं लुब्धक मुञ्च जीवं।

॥ लुब्धक उवाच ॥ वृत्रं हत्वा देवराट् श्रेष्ठभाग्वै यज्ञं हत्वा भागमवाप चैव। शूली देवो देववृत्तं चर त्वं क्षिप्रं सर्पं जहि माभूत्ते विशङ्का।

॥ भीष्म उवाच ॥ असकृत्प्रोच्यमानापि गौतमी भुजगं प्रति। लुब्धकेन महाभागा पापे नैवाकरोन्मतिं।

ईषदुच्छ्वसमानस्तु कृच्छ्रात्संस्तभ्य पन्नगः। उत्ससर्ज गिरं मन्दां मानुषीं पाशपीडितः।

॥ सर्प उवाच ॥ को न्वर्जुनक दोषोऽत्र विद्यते मम बालिश। अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत्। २५

तस्यायं वचनाद्दष्टो न कोपेन न काम्यया। तस्य तत्किल्बिषं लुब्ध विद्यते यदि किल्बिषं।

॥ लुब्धक उवाच ॥ यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभं। कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी।

मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा। कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग।

किल्बिषी चापि मे वध्यः किल्बिषी चासि पन्नग। आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजङ्गम।

॥ सर्प उवाच ॥ सर्वं एते ह्यस्ववशा दण्डचक्रादयो यथा। तथाहमपि तस्मान्मे नैव दोषो मतस्तव। ३०

अथ वा मतमेतत्ते तेऽप्यन्योन्यप्रयोजकाः। कार्यकारणसन्देहो भवत्यन्योन्यचोदनात्।

एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी। किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषं।

॥ लुब्धक उवाच ॥ कारणं यदि न स्याद्वै न कर्ता स्यास्त्वमप्युत। विनाशकारणं त्वं च तस्माद्वध्योऽसि मे मतः।

अथवाप्यपि कृते कार्य्ये नेह पन्नग लिप्यते। तस्मान्नात्रैव हेतुः स्यादत्र किं बहु मन्यसे।

॥ सर्प उवाच ॥ कार्य्याभावे क्रिया न स्यात्सत्यपि कारणे। तस्मात्समेऽस्मिन् हेतौ मे वाच्यो हेतुर्विशेषतः।

यद्यहं कारणत्वेन मतो लुब्धक तत्त्वतः। अन्यः प्रयोगे स्यादत्र किल्बिषी जन्तुनाशने।

॥ लुब्धक उवाच ॥ वध्यस्त्वं मम दुर्बुद्धे बालघाती नृशंसकृत्। भाषसे किं बहु पुनर्वध्यः सन् पन्नगाधम।

॥ सर्प उवाच ॥ यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः। न फलं प्राप्नुवन्त्यत्र परलोके तथा ह्यहं।

॥ भीष्म उवाच ॥ तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते। आजगाम ततो मृत्युः पन्नगं चेदमब्रवीत्।

॥ मृत्युरुवाच ॥ प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदं। विनाशहेतुर्नास्य त्वमहं न प्राणिनः शिशोः।

यथा वायुर्जलधरान् विकर्षति ततस्ततः। तद्वज्जलदवत्सर्प कालस्याहं वशानुगः।

सात्त्विका राजसाश्चैव तामसा ये च केचन। भावाः कालात्मकाः सर्वे प्रवर्त्तन्ते ह जन्तुषु।

जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि। सर्वे कालात्मकाः सर्प कालात्मकमिदं जगत्।

प्रवृत्तयश्च लोकेऽस्मिंस्तथैव च निवृत्तयः। तासां विकृतयो याश्च सर्वं कालात्मकं स्मृतं।

आदित्यचन्द्रमा वायुरापो विष्णुः शतक्रतुः। अग्निः खं पृथिवी मित्रः पर्जन्यो वसवो दितिः।

सरितः सागराश्चैव भावाभावौ च पन्नग। सर्वे कालेन सृज्यन्ते ह्रियन्ते च पुनः पुनः।

एवं ज्ञात्वा कथं मां त्वं सदोषं सर्प मन्यसे। अथ चैवं गते दोषे मयि त्वमपि दोषवान्।

॥ सर्प उवाच ॥ निर्दोषं दोषवन्तं वा न त्वां मृत्यो ब्रवीम्यहं। त्वयाहं चोदित इति ब्रवीम्येतावदेव तु।

यदि काले तु दोषोऽस्ति यदि तत्रापि नेष्यते। दोषो नैव परीक्ष्यो मे न ह्यत्राधिकृता वयं।

निर्मोक्षस्त्वस्य दोषस्य मया कार्य्यो यथा तथा। मृत्योरपि न दोषः स्यादिति मेऽत्र प्रयोजनं।

॥ भीष्म उवाच ॥ सर्पोऽथार्जुनकं प्राह श्रुतं ते मृत्युभाषितं। नानागसं मां पाशेन सन्तापयितुमर्हसि।

॥ लुब्धक उवाच ॥ मृत्योः श्रुतं मे वचनं तव चैव भुजङ्गम। नैव तावददोषत्वं भवति त्वयि पन्नग।

मृत्युस्त्वं चैव हेतुर्हि बालस्यास्य विनाशने। उभयं कारणं मन्ये न कारणमकारणं।

धिङ्मृत्युं च दुरात्मानं क्रूरं दुःखकरं सतां। त्वां चैवाहं वधिष्यामि पापं पापस्य कारणं।

॥ मृत्युरुवाच ॥ विवशौ कालवशगावावां निर्दिष्टकारिणौ। नावां दोषेण गन्तव्यौ यदि सम्यक् प्रपश्यसि।

॥ लुब्धक उवाच ॥ युवामुभौ कालवशौ यदि मे मृत्युपन्नगौ। हर्षक्रोधौ यथा स्यातामेतदिच्छामि वेदितुं।

॥ मृत्युरुवाच ॥ या काचिदेव चेष्टा स्यात्सर्वा कालप्रचोदिता। पूर्वमेवैतदुक्तं हि मया लुब्धक कालतः।

तस्मादुभौ कालवशावावां निर्दिष्टकारिणौ। नावां दोषेण गन्तव्यौ त्वया लुब्धक कर्हिचित्।

॥ भीष्म उवाच ॥ अथोपगम्य कालस्तु तस्मिन्धर्मार्थसंशये। अब्रवीत्पन्नगं मृत्युं लुब्धं चार्जुनकं तथा।

॥ काल उवाच ॥ नह्यहं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः। किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः।

अकरोद्यदयं कर्म तन्नोऽर्जुनक चोदकं। विनाशहेतुर्नान्योऽस्य वध्यतेऽयं स्वकर्मणा।

यदनेन कृतं कर्म तेनायं निधनं गतः। विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयं।

कर्मदायादवांल्लोकः कर्मसम्बन्धलक्षणः। कर्माणि चोदयन्तीह यथान्योऽन्यं तथा वयं।

यथा मृत्पिण्डतः कर्त्ता कुरुते यद्यदिच्छति। एवमात्मकृतं कर्म मानवः प्रतिपद्यते।
यथा छायातपौ नित्यं सुसम्बद्धौ निरन्तरं। तथा कर्म च कर्त्ता च सम्बद्धावात्मकर्मभिः। ७५
एवं नाहं न वै मृत्युर्न सर्पो न तथा भवान्। न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणं।
तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप। स्वकर्मप्रत्ययाल्लोकान्मत्वार्जुनकमब्रवीत्।
॥ गौतम्युवाच ॥ नैव कालो न भुजगो न मृत्युरिह कारणं। स्वकर्मभिरयं बालः कालेन निधनं गतः।
मया च तत्कृतं कर्म येनायं मे मृतः सुतः। यातु कालस्तथा मृत्युर्मुञ्चार्जुनक पन्नगं।
॥ भीष्म उवाच ॥ ततो यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः। अभूद्विशोकोऽर्जुनको विशोका चैव गौतमी। ८०
एतच्छ्रुत्वा शमं गच्छ माभूः शोकपरो नृप। स्वकर्मप्रत्ययाल्लोकान्सर्व्वे गच्छन्ति वै नृप।
नैतत्त्वया कृतं कर्म नापि दुर्य्योधनेन वै। कालेन तत्कृतं विद्धि निहता येन पार्थिवाः।
॥ वैशम्पायन उवाच ॥ इत्येतद्वचनं श्रुत्वा बभूव विगतज्वरः। युधिष्ठिरो महातेजाः पप्रच्छेदञ्च धर्म्मवित्।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि गौतमीलुब्धकव्यालमृत्युकालसंवादे प्रथमोऽध्यायः ॥ १ ॥

॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्व्वशास्त्रविशारद। श्रुतं मे महदाख्यानमिदं मतिमतांवर।
भूयस्तु श्रोतुमिच्छामि धर्म्मार्थसहितं नृप। कथ्यमानं त्वया किञ्चित्तन्मे व्याख्यातुमर्हसि। ८५
केन मृत्युर्गृहस्थेन धर्म्ममाश्रित्य निर्जितः। इत्येतत्सर्व्वमाचक्ष्व तत्त्वेनापि च पार्थिव।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। यथा मृत्युर्गृहस्थेन धर्म्ममाश्रित्य निर्जितः।
मनोः प्रजापते राजन्निक्ष्वाकुरभवत्सुतः। तस्य पुत्रशतं जज्ञे नृपतेः सूर्य्यवर्च्चसः।
दशमस्तत्र पुत्रस्तु दशाश्वो नाम भारत। माहिष्मत्यामभूद्राजा धर्म्मात्मा सत्यविक्रमः।
दशाश्वस्य सुतस्त्वासीद्राजा परमधार्म्मिकः। सत्ये तपसि दाने च यस्य नित्यं रतं मनः। ९०
मदिराश्व इति ख्यातः पृथिव्यां पृथिवीपतिः। धनुर्वेदे च वेदे च निरतो योऽभवत्सदा।
मदिराश्वस्य पुत्रोऽभूद्द्युतिमान्नाम पार्थिवः। महाभागो महातेजा महासत्त्वो महाबलः।
पुत्रो द्युतिमतस्त्वासीद्राजा परमधार्म्मिकः। सर्व्वलोकेषु विख्यातः सुवीरो नाम नामतः।
धर्म्मात्मा कोषवांश्चापि देवराज इवापरः। सुवीरस्य तु पुत्रोऽभूत्सर्व्वसंग्रामदुर्ज्जयः।
सुदुर्ज्जय इति ख्यातः सर्व्वशस्त्रभृतांवरः। दुर्ज्जयस्येन्द्रवपुषः पुत्रोऽग्निसदृशद्युतिः। ९५
दुर्य्योधनो नाम महान् राजा राजर्षिसत्तम। तस्येन्द्रसमवीर्य्यस्य संग्रामेष्वनिवर्त्तिनः।
विषये वासवस्तस्य सम्यगेव प्रवर्षति। रत्नैर्धनैश्च पशुभिः शस्यैश्चापि पृथग्विधैः।
नगरं विषयश्चास्य प्रतिपूर्णस्तदाभवत्। न तस्य विषये चाभूत्कृपणो नापि दुर्गतः।
व्याधितो वा कृशो वापि तस्मिन्नाभून्नरः क्वचित्। सुदक्षिणो मधुरवागनसूयुर्ज्जितेन्द्रियः।
धर्म्मात्मा चानृशंसश्च विक्रान्तोऽथाविकत्थनः। यज्वा च दान्तो मेधावी ब्रह्मण्यः सत्यसङ्गरः। १००
न चावमन्ता दाता च वेदवेदाङ्गपारगः। तं नर्म्मदा देवनदी पुण्या शीतजला शिवा।
चकमे पुरुषव्याघ्र स्वेन भावेन भारत। तस्यां जज्ञे तदा नद्यां कन्या राजीवलोचना

जाता सुदर्शना राजन् रूपेण च सुदर्शना। तादृग्रूपा न नारीषु भूतपूर्वा युधिष्ठिर।
दुर्योधनसुता यादृगभवद्वरवर्णिनी। तामग्निश्चकमे साक्षाद्राजकन्यां सुदर्शनाम्।
भूत्वा च ब्राह्मणो राजन् वरयामास तं नृपम्। दरिद्रश्चासवर्णश्च ममायमिति पार्थिवः। १०५
न दित्सति सुतां तस्मै तां विप्राय सुदर्शनाम्। ततोऽस्य वितते यज्ञे नष्टोऽभूद्धव्यवाहनः।
ततः सुदुःखितो राजा वाक्यमाह द्विजांस्तदा। दुष्कृतं मम किन्नु स्याद्भवतां वा द्विजर्षभाः।
येन नाशं जगामाग्निः कृतं कुपुरुषेष्विव। न ह्यल्पं दुष्कृतं नोऽस्ति येनाग्निर्नाशमागतः।
भवतां चाथ वा मह्यं तत्त्वेनैतद्विमृश्यताम्। तत्र राज्ञो वचः श्रुत्वा विप्रास्ते भरतर्षभ।
नियता वाग्यताश्चैव पावकं शरणं ययुः। तान्दर्शयामास तदा भगवान् हव्यवाहनः। ११०
स्वं रूपं दीप्तिमत्कृत्वा शरदर्कसमद्युति। ततो महात्मा तानाह दहनो ब्राह्मणर्षभान्।
वरयाम्यात्मनोऽर्थाय दुर्योधनसुतामिति। ततस्ते कल्यमुत्थाय तस्मै राज्ञे न्यवेदयन्।
ब्राह्मणा विस्मिताः सर्वे यदुक्तं चित्रभानुना। ततः स राजा तच्छ्रुत्वा वचनं ब्रह्मवादिनाम्।
अवाप्य परमं हर्षं तथेति प्राह बुद्धिमान्। प्रायाचत च तं शुल्कं भगवन्तं विभावसुम्।
नित्यं सान्निध्यमिह ते चित्रभानो भवेदिति। तमाह भगवानग्निरेवमस्त्विति पार्थिवम्। ११५
ततः सान्निध्यमद्यापि माहिष्मत्यां विभावसोः। दृष्टं हि सहदेवेन दिशो विजयता तदा।
ततस्तां समलङ्कृत्य कन्यामाहतवाससम्। ददौ दुर्योधनो राजा पावकाय महात्मने।
प्रतिजग्राह चाग्निस्तु राजकन्यां सुदर्शनाम्। विधिना वेददृष्टेन वसोर्धारामिवाध्वरे।
तस्या रूपेण शीलेन कुलेन वपुषा श्रिया। अभवत् प्रीतिमानग्निर्गर्भं चास्या मनो दधे।
तस्यां समभवत्पुत्रो नाम्नाग्नेयः सुदर्शनः। सुदर्शनस्तु रूपेण पूर्णेन्दुसदृशोपमः। १२०
शिशुरेवाध्यगात्सर्वं परं ब्रह्म सनातनम्। अथौघवान्नाम नृपो नृगस्यासीत्पितामहः।
तस्याप्योघवती कन्या पुत्रश्चौघरथोऽभवत्। तामोघवान् ददौ तस्मै स्वयमोघवतीं सुताम्।
सुदर्शनाय विदुषे भार्यार्थे देवरूपिणीम्। स गृहस्थाश्रमरतस्तया सह सुदर्शनः।
कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः। गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो।
प्रतिज्ञामकरोद्धीमान् दीप्ततेजा विशाम्पते। तामथौघवतीं राजन् स पावकसुतोऽब्रवीत्। १२५
अतिथेः प्रतिकूलं ते न कर्त्तव्यं कथञ्चन। येन येन च तुष्येत नित्यमेव त्वयातिथिः।
अप्यात्मनः प्रदानेन न ते कार्या विचारणा। एतद्व्रतं मम सदा हृदि सम्परिवर्त्तते।
गृहस्थानां च सुश्रोणि नातिथेर्विद्यते परम्। प्रमाणं यदि वामोरु वचस्ते मम शोभने।
इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा। निष्क्रान्ते मयि कल्याणि तथा सन्निहितेऽनघे।
नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव। तमब्रवीदोघवती तथा मूर्ध्नि कृताञ्जलिः। १३०
न मे त्वद्वचनात्किञ्चिदकर्त्तव्यं कथञ्चन। जिगीषमाणस्तु गृहे तदा मृत्युः सुदर्शनम्।
पृष्ठतोऽन्वगमद्राजन् रन्ध्रान्वेषी तदा सदा। इध्मार्थन्तु गते तस्मिन्नग्निपुत्रे सुदर्शने।

अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा । आतिथ्यं कृतमिच्छामि त्वयाद्य वरवर्णिनि ।
प्रमाणं यदि धर्मस्ते गृहस्थाश्रमसंमतः । इत्युक्ता तेन विप्रेण राजपुत्री यशस्विनी ।
विधिना प्रतिजग्राह वेदोक्तेन विशांपते । आसनञ्चैव पाद्यञ्च तस्मै दत्त्वा द्विजातये । १२५
प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते । तामब्रवीत्ततो विप्रो राजपुत्रीं सुदर्शनां ।
त्वया ममार्थः कल्याणि निर्विशङ्केन तदाचर । यदि प्रमाणं धर्मस्ते गृहस्थाश्रमसंमतः ।
प्रदानेनात्मनो राज्ञि कर्तुमर्हसि मे प्रियं । स तथा छन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया ।
नान्यमात्मप्रदानात्स तस्या वव्रे वरं द्विजः । सा तु राजसुता स्मृत्वा भर्तुर्वचनमादितः ।
तथेति लज्जमाना सा तमुवाच द्विजर्षभं । ततो विहस्य विप्रर्षिः सा चैवोपविवेश ह । १३०
संस्मृत्य भर्तुर्वचनं गृहस्थाश्रमकाङ्क्षिणः । अथेध्मान्समुपादाय स पावकिरुपागमत् ।
मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः । ततस्त्वाश्रममासाद्य स पावकसुतस्तदा ।
तामाजुहावौघवतीं क्वासि यातेति चासकृत् । तस्मै प्रतिवचः सा तु भर्त्रे न प्रददौ तदा ।
कराभ्यां तेन विप्रेण स्पृष्टा भर्तृव्रता सती । उच्छिष्टास्मीति मन्वाना लज्जिता भर्तुरेव च ।
तूष्णींभूताऽभवत्साध्वी न चोवाचाथ किञ्चन । अथ तां पुनरेवेदं प्रोवाच स सुदर्शनः । १३५
क्व सा साध्वी कुतो याता गरीयः किमतो मम । पतिव्रता सत्यशीला नित्यं चैवार्जवे रता ।
कथं न प्रत्युदेत्यद्य स्मयमाना यथा पुरा । उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनं ।
अतिथिं विद्धि संप्राप्तं ब्राह्मणं पावके च मां । अनया छन्द्यमानोऽहं भार्यया तव सत्तम ।
तैस्तैरतिथिसत्कारैर्ब्रह्मन्नेषा वृता मया । अनेन विधिना सेयं मामर्चति शुभानना ।
अनुरूपं यदत्रान्यत्तद्भवान् कर्तुमर्हति । कूटमुद्गरहस्तस्तु मृत्युस्तं वै समन्वगात् । १४०
हीनप्रतिज्ञमत्रैनं वधिष्यामीति चिन्तयन् । सुदर्शनस्तु मनसा कर्मणा चक्षुषा गिरा ।
त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदं । सुरतं तेऽस्तु विप्राग्र्य प्रीतिर्हि परमा मम ।
गृहस्थस्य तु धर्मोऽग्र्यः संप्राप्तातिथिपूजनं । अतिथिः पूजितो यस्य गृहस्थस्य हि गच्छति ।
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः । प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु ।
अतिथिभ्यो मया देयमिति मे व्रतमाहितं । निःसंदिग्धं मया वाक्यमेतत्ते समुदाहृतं । १४५
तेनाहं विप्र सत्येन स्वयमात्मानमालभे । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं ।
बुद्धिरात्मा मनः कालो दिशश्चैव गुणा दश । नित्यमेते हि पश्यन्ति देहिनां देहसंश्रिताः ।
सुकृतं दुष्कृतं चापि कर्म धर्मभृतां वर । यथैषा नानृता वाणी मयाद्य समुदीरिता ।
तेन सत्येन मां देवाः पालयन्तु दहन्तु वा । ततो नादः समभवद्दिक्षु सर्वासु भारत ।
असकृत् सत्यमित्येवं नैतन्मिथ्येति सर्वतः । उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः । १५०
वपुषा द्यां च भूमिं च व्याप्य वायुरिवोद्यतः । स्वरेण विप्रः शैक्षेण त्रीँल्लोकाननुनादयन् ।
उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य नामतः । धर्मोऽहमस्मि भद्रं ते जिज्ञासार्थं तवानघ ।

प्रातः सत्यश्च ते भ्राता प्रीतिश्च परमा त्वयि । विजितश्च मया मृत्युर्योऽयं त्वामनुगच्छति ।
रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः । न चास्ति त्रिषु लोकेषु कश्चित्पुरुषोत्तम ।
पतिव्रतामिमां साध्वीं तवोदीक्षितुमप्युत । रक्षिता त्वद्गुणैरेषा पतिव्रतगुणैस्तथा । १६५
अधृष्या यदियं ब्रूयात्तथा तन्नान्यथा भवेत् । एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी ।
पावनार्थञ्च लोकस्य सरिच्छ्रेष्ठा भविष्यति । अनेन चैव देहेन लोकांस्त्वामिह पश्यति ।
अर्द्धेनौघवती नाम त्वामर्द्धेनानुयास्यति । शरीरेण महाभागा योगो ह्यस्या वशे स्थितः ।
अनया सह लोकांश्च गन्तासि तपसार्जितान् । यत्र नावृत्तिमभ्येति शाश्वतांस्तान् सनातनान् ।
अनेन चैव देहेन लोकांस्त्वमभिपत्स्यसे । निर्जितश्च त्वया मृत्युरैश्वर्यञ्च तवोत्तमं । १७०
पञ्चभूतान्यतिक्रान्तः स्ववीर्याच्च मनोजवः । गृहस्थधर्मेणानेन कामक्रोधौ च ते जितौ ।
स्नेहो रागश्च तन्द्री च मोहो द्रोहश्च केवलः । तव शुश्रूषया राजन् राजपुत्र्या विनिर्जिताः ।
॥ भीष्म उवाच ॥ शुक्लानान्तु सहस्रेण वाजिनां रथमुत्तमं । युक्तं प्रगृह्य भगवान् वासवोऽप्याजगाम तं ।
मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च । बुद्धिः कालो मनो व्योम कामक्रोधौ तथैव च ।
तस्माद्गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै । ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय । १७५
अतिथिः पूजितो यद्धि ध्यायते मनसा शुभं । न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः ।
पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत् । स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ।
एतत्ते कथितं पुत्र मयाख्यानमनुत्तमं । यथाहि विजितो मृत्युर्गृहस्थेन पुराभवत् ।
धन्यं यशस्यमायुष्यमिदमाख्यानमुत्तमं । बुभूषताभिमन्तव्यं सर्वदुश्चरितापहं ।
इदं यः कथयेद्विद्वानहन्यहनि भारत । सुदर्शनस्य चरितं पुण्याँल्लोकानवाप्नुयात् । १८०
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि सुदर्शनोपाख्याने द्वितीयोऽध्यायः ॥ २ ॥
॥ युधिष्ठिर उवाच ॥ ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्वर्णैर्नराधिप । कथं प्राप्तं महाराज क्षत्रियेण महात्मना ।
विश्वामित्रेण धर्मात्मन् ब्राह्मणत्वं नरर्षभ । श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह ।
तेन ह्यमितवीर्य्येण वशिष्ठस्य महात्मनः । हतं पुत्रशतं सद्यस्तपसापि पितामह ।
यातुधानाश्च बहवो राक्षसास्तिग्मतेजसः । मन्युनाविष्टदेहेन सृष्टाः कालान्तकोपमाः ।
महान् कुशिकवंशश्च ब्रह्मर्षिशतसङ्कुलः । स्थापितो नरलोकेऽस्मिन् विद्वान् ब्राह्मणसंस्तुतः । १८५
ऋचीकस्यात्मजश्चैव शुनःशेफो महातपाः । विमोक्षितो महासत्रात्पशुतामभ्युपागतः ।
हरिश्चन्द्रक्रतौ देवांस्तोषयित्वात्मतेजसा । पुत्रतामनुसम्प्राप्तो विश्वामित्रस्य धीमतः ।
नाभिवादयते ज्येष्ठं देवरातं नराधिप । पुत्राः पञ्चाशदेवापि शप्ताः श्वपचतां गताः ।
त्रिशङ्कुर्बन्धुभिर्मुक्त ऐक्ष्वाकुः प्रीतिपूर्व्वकं । अवाक्शिरा दिवं नीतो दक्षिणामाश्रितो दिशं ।
विश्वामित्रस्य विपुला नदी देवर्षिसेविता । कौशिकी च शिवा पुण्या ब्रह्मर्षिसुरसेविता । १९०
तपोविघ्नकरी चैव पञ्चचूडा सुसम्मता । रम्भा नामाप्सराः शापाद्यस्य शैलत्वमागता ।

तथैवास्य भयाद्बद्ध्वा वसिष्ठः सलिले पुरा । आत्मानं मज्जयन् श्रीमान् विपाशः पुनरुत्थितः ।
तदाप्रभृति पुण्या हि विपाशाभून्महानदी । विख्याता कर्म्मणा तेन वसिष्ठस्य महात्मनः ।
वाग्भिश्च भगवान् येन देवसेनापतिः प्रभुः । स्तुतः प्रीतमनाश्चासीच्छापाच्चैनममुञ्चत ।
ध्रुवस्योत्तानपादस्य ब्रह्मर्षीणां तथैव च । मध्ये ज्वलति यो नित्यमुदीचीमाश्रितो दिशं । १९५
तस्यैतानि च कर्म्माणि तथान्यानि च कौरव । क्षत्रियस्येत्यतो जातमिदं कौतूहलं मम ।
किमेतदिति तत्त्वेन प्रब्रूहि भरतर्षभ । देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत् ।
एतत्तत्त्वेन मे तात सर्व्वमाख्यातुमर्हसि । मतङ्गस्य यथा तत्त्वं तथैवैतद्वदस्व मे ।
स्थाने मतङ्गो ब्राह्मण्यं नालभद्भरतर्षभ । चण्डालयोनौ जातो हि कथं ब्राह्मण्यमाप्नुयात् ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि विश्वामित्रोपाख्याने तृतीयोऽध्यायः ॥ ३ ॥
॥ भीष्म उवाच ॥ श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा । ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च । २००
भरतस्यान्वये चैवाजमीढो नाम पार्थिवः । बभूव भरतश्रेष्ठ यज्वा धर्म्मभृतांवरः ।
तस्य पुत्रो महानासीज्जह्नुर्नाम नरेश्वरः । दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मनः ।
तस्यात्मजस्तुल्यगुणः सिन्धुद्वीपो महायशाः । सिन्धुद्वीपाच्च राजर्षिर्बलाकाश्वो महाबलः ।
वल्लभस्तस्य तनयः साक्षाद्धर्म्म इवापरः । कुशिकस्तस्य तनयः सहस्राक्षसमद्युतिः ।
कुशिकस्यात्मजः श्रीमान् गाधिर्नाम जनेश्वरः । अपुत्रः प्रसवेनार्थी वनवासमुदावसत् । २०५
कन्या जज्ञे सुता तस्य वने निवसतः सतः । नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि ।
तां वव्रे भार्गवः श्रीमांश्च्यवनस्यात्मसम्भवः । ऋचीक इति विख्यातो विपुले तपसि स्थितः ।
स तां न प्रददौ तस्मै ऋचीकाय महात्मने । दरिद्र इति मत्वा वै गाधिः शत्रुनिवर्हणः ।
प्रत्याख्याय पुनर्य्यान्तमब्रवीद्राजसत्तमः । शुल्कं प्रदीयतां मह्यं ततो वेत्स्यसि मे सुतां ।
॥ ऋचीक उवाच ॥ किं प्रयच्छामि राजेन्द्र तुभ्यं शुल्कमहं नृप । दुहितुर्ब्रूह्यसंसक्तो माभूत्तत्र विचारणा । २१०
॥ गाधिरुवाच ॥ चन्द्ररश्मिप्रकाशानां हयानां वातरंहसां । एकतः श्यामकर्णानां सहस्रं देहि भार्गव ।
॥ भीष्म उवाच ॥ ततः स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभुः । अब्रवीद्वरुणं देवमादित्यं पतिमम्भसां ।
एकतः श्यामकर्णानां हयानां चन्द्रवर्च्चसां । सहस्रं वातवेगानां भिक्षे त्वां देवसत्तम ।
तथेति वरुणो देव आदित्यो भृगुसत्तमं । उवाच यत्र ते छन्दस्तत्रोत्थास्यन्ति वाजिनः ।
ध्यातमात्रे ऋचीकेन हयानां चन्द्रवर्च्चसां । गङ्गाजलात्समुत्तस्थौ सहस्रं विपुलौजसां । २१५
अदूरे कान्यकुब्जस्य गङ्गायास्तीरमुत्तमं । अश्वतीर्थं तदद्यापि मानवैः परिचक्ष्यते ।
ततो वै गाधये तात सहस्रं वाजिनां शुभं । ऋचीकः प्रददौ प्रीतः शुल्कार्थं तपतांवरः ।
ततः स विस्मितो राजा गाधिः शापभयेन वै । ददौ तां समलङ्कृत्य कन्यां भृगुसुताय वै ।
जग्राह विधिवत्पाणिं तस्या ब्रह्मर्षिसत्तमः । सा च तं पतिमासाद्य परं हर्षमवाप ह ।
सन्तुतोष च ब्रह्मर्षिस्तस्या वृत्तेन भारत । छन्दयामास चैवैनां वरेण वरवर्णिनीं । २२०

याचे तद्धर्म्मपत्नी या कन्या राजसत्तम। अथ तामब्रवीन्माता सुतां किञ्चिदवाङ्मुखीं ।
ममापि पुत्रि भर्त्ता ते प्रसादं कर्त्तुमर्हति। अपत्यस्य प्रदानेन समर्थश्च महातपाः ।
ततः सा त्वरितं गत्वा तत्सर्व्वं प्रत्यवेदयत् । मातुश्चिकीर्षितं राजन्नृचीकस्तामथाब्रवीत् ।
गुणवन्तमपत्यं सा अचिराज्जनयिष्यति । मम प्रसादात्कल्याणि मा भूत्ते प्रणयोऽन्यथा ।
तव चैव गुणश्लाघी पुत्र उत्पत्स्यते महान् । अस्मद्वंशकरः श्रीमान् सत्यमेतद्ब्रवीमि ते । १९५
ऋतुस्नाता च साश्वत्थं त्वञ्च वृक्षमुदुम्बरं । परिष्वजेथाः कल्याणि तत इष्टमवाप्स्यथः ।
चरुद्वयमिदञ्चैव मन्त्रपूतं शुचिस्मिते । त्वञ्च सा चोपयुञ्जीतं ततः पुत्रानवाप्स्यथः ।
ततः सत्यवती हृष्टा मातरं प्रत्यभाषत। यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयं ।
तामुवाच ततो माता सुतां सत्यवतीं तदा । पुत्रि पूर्व्वोपपन्नायाः कुरुष्व वचनं मम ।
भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः । एतं मह्यं प्रयच्छ त्वं मदीयं त्वं गृहाण च । २००
व्यत्यासं वृक्षयोश्चैव करवाव शुचिस्मिते । यदि प्रमाणं वचनं मम मातुरनिन्दिते ।
स्वमपत्यं विशिष्टं हि सर्व्व इच्छत्यनाविलं । व्यक्तं भगवता चात्र कृतमेवं भविष्यति ।
ततो मे त्वच्चरौ भावः पादपे च सुमध्यमे । कथं विशिष्टो भ्राता मे भवेदित्येव चिन्तय ।
तथा च कृतवत्यौ ते माता सत्यवती च सा । अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ।
दृष्ट्वा गर्भमनुप्राप्तां भार्य्यां स च महानृषिः । उवाच तां सत्यवतीं दुर्म्मना भृगुसत्तमः । २०५
व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति । व्यत्यासः पादपे चापि सुव्यक्तं ते कृतः शुभे ।
मया हि विश्वं यद्ब्रह्म त्वच्चरौ संनिवेशितं । क्षत्रवीर्य्यञ्च सकलं चरौ तस्या निवेशितं ।
त्रैलोक्यविख्यातगुणं त्वं विप्रं जनयिष्यसि । सा च क्षत्रं विशिष्टं वै तत एतत्कृतं मया ।
व्यत्यासस्तु कृतो यस्मात्त्वया मात्रा च ते शुभे । तस्मात् सा ब्राह्मणश्रेष्ठं माता ते जनयिष्यति ।
क्षत्रियन्तूग्रकर्म्माणं त्वं भद्रे जनयिष्यसि । न हि ते तत्कृतं साधु मातृस्नेहेन भाविनि । २१०
सा श्रुत्वा शोकसन्तप्ता पपात वरवर्णिनी । भूमौ सत्यवती राजंश्छिन्नेव रुचिरा लता ।
प्रतिलभ्य च सा संज्ञां शिरसा प्रणिपत्य च । उवाच भार्य्या भर्त्तारं गाधेयी भार्गवर्षभं ।
प्रसाद्यमानो भार्य्यायां मयि ब्रह्मविदाम्वर । प्रसादं कुरु विप्रर्षे न मे स्यात्क्षत्रियः सुतः ।
कामं ममोग्रकर्म्मा वै पौत्रो भवितुमर्हति । न तु मे स्यात्सुतो ब्रह्मन्नेष मे दीयतां वरः ।
एवमस्त्विति होवाच स्वां भार्य्यां सुमहातपाः । ततः सा जनयामास जमदग्निं सुतं शुभं । २१५
विश्वामित्रञ्चाजनयद्गाधिभार्य्या यशस्विनी । ऋषेः प्रसादाद्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनं ।
ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः । क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ।
तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्द्धनाः । तपस्विनो ब्रह्मविदो गोत्रकर्त्तार एव च ।
मधुच्छन्दश्च भगवान्देवरातश्च वीर्य्यवान् । अक्षीणश्च शकुन्तश्च बभ्रुः कालपथस्तथा ।
याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः । उलूकोऽथ मुद्गलश्च तथर्षिः सैन्धवायनः । २२०

स्त्री वा मित्रवती वा ऐश्वर्यं वा कुलान्वितं। श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्म्मभिः।
शौचेन लभते विप्रः क्षत्रियो विक्रमेण तु। वैश्यः पुरुषकारेण शूद्रः शुश्रूषया श्रियं। ३१०
नादातारं भजन्त्यर्था न क्लीवं नाक्रियं तथा। नाकर्म्मशीलं नाशूरं तथा नैवातपस्विनं।
येन लोकास्त्रयः सृष्टा दैत्याः सर्व्वाश्च देवताः। स एष भगवान् विष्णुः समुद्रे तप्यते तपः।
स्वं चेत्कर्म्मफलं न स्यात्सर्व्वमेवाफलं भवेत्। लोको दैवं समालम्ब्य उदासीनो भवेन्ननु।
अकृत्वा मानुषं कर्म्म यो दैवमनुवर्त्तते। वृथा श्राम्यति सम्प्राप्य पतिं क्लीबमिवाङ्गना।
न तथा मानुषे लोके भयमस्ति शुभाशुभे। यथा त्रिदशलोकेषु भयमल्पेन जायते। ३१५
कृतः पुरुषकारस्तु दैवमेवानुवर्त्तते। न दैवमकृते किञ्चित्कस्यचिद्दातुमर्हति।
यदा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि। कथं कर्म्म विना दैवं स्थास्यति स्थापयिष्यते।
न दैवतानि लोकेऽस्मिन् व्यापारं यान्ति कस्यचित्। व्यासङ्गं जनयन्त्युग्रमात्माभिभवशङ्कया।
ऋषीणां देवतानाञ्च सदा भवति विग्रहः। कस्य वाचा ह्यदैवं स्याद्यतो दैवं प्रवर्त्तते।
कथं तस्य समुत्पत्तिर्यतो दैवं प्रवर्त्तते। एवं त्रिदशलोकेऽपि प्राप्यन्ते बहवो गुणाः। ३२०
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः। आत्मैव चात्मनः साक्षी कृतस्याप्यकृतस्य च।
कृतञ्चाप्यकृतं किञ्चित्कृते कर्म्मणि सिध्यति। सुकृतं दुष्कृतं कर्म्म न यथार्थं प्रपद्यते।
देवानां शरणं पुण्यं सर्व्वं पुण्यैरवाप्यते। पुण्यशीलं नरं प्राप्य किं दैवं प्रकरिष्यति।
पुरा ययातिर्विभ्रष्टश्च्यावितः पतितः क्षितौ। पुनरारोपितः स्वर्गं दौहित्रैः पुण्यकर्म्मभिः।
पुरूरवाश्च राजर्षिर्द्विजैरभिहितः पुरा। ऐल इत्यभिविख्यातः स्वर्गं प्राप्तो महीपतिः। ३२५
अश्वमेधादिभिर्यज्ञैः सत्कृतः कोशलाधिपः। महर्षिशापात्सौदासः पुरुषादत्वमागतः।
अश्वत्थामा च रामश्च मुनिपुत्रौ धनुर्द्धरौ। न गच्छतः स्वर्गलोकं सुकृतेनेह कर्म्मणा।
वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासवः। मिथ्याभिधानेनैकेन रसातलतलं गतः।
बलिर्वैरोचनिर्बद्धो धर्म्मपाशेन दैवतैः। विष्णोः पुरुषकारेण पातालशयनः कृतः।
शक्रस्योद्यम्य चरणं प्रस्थितो जनमेजयः। द्विजस्त्रीणां वधं कृत्वा किं दैवेन निवारितः। ३३०
अज्ञानाद्ब्राह्मणं हत्वा स्पृष्टो बालवधेन च। वैशम्पायनविप्रर्षिः किं दैवेन निवारितः।
गोप्रदानेन मिथ्या च ब्राह्मणेभ्यो महामखे। पुरा नृगश्च राजर्षिः कृकलासत्वमागतः।
धुन्धुमारश्च राजर्षिः सत्रेष्वेव जराकृतः। प्रीतिदायं परित्यज्य सुष्वाप स गिरिव्रजे।
पाण्डवानां हृतं राज्यं धार्त्तराष्ट्रैर्महाबलैः। पुनः प्रत्याहृतञ्चैव न दैवाद्भुजसंश्रयात्।
तपोनियमसंयुक्ता मुनयः संशितव्रताः। किं ते दैवबलाच्छापमुत्सृजन्ते न कर्म्मणा। ३३५
पापमुत्सृजते लोके सर्व्वं प्राप्य सुदुर्ल्लभं। लोभमोहसमापन्नं न दैवं त्रायते नरं।
यथाग्निः पवनोद्धूतः सूक्ष्मोऽपि सुमहान् भवेत्। तथा कर्म्मसमायुक्तं दैवं साधु विवर्द्धते।
यथा तैलक्षयाद्दीपः प्रह्रासमुपगच्छति। तथा कर्म्मक्षयाद्दैवं प्रह्रासमुपगच्छति।

विपुलमपि धनौघं प्राप्य भोगान् स्त्रियो वा पुरुष इह न शक्तः कर्म्महीनो हि भोक्तुं । सुनियतमपि चार्थं दैवतै रक्ष्यमाणं
पुरुष इह महात्मा प्राप्नुते नित्ययुक्तः ।
व्यपगतमपि साधु कर्म्मणा संश्रयन्तं भवति मनुजलोकाद्देवलोकाद्विशिष्टः । बहुतरमुपसृष्टा मानुषाणां गृहाणि पितृवन
भवनाभं दृश्यते चामराणां । ३१०
न च फलति विकर्म्मा जीवलोके न दैवं व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वं । गुरुमिव कृतमग्र्यं कर्म्म संयाति दैवं नयति
पुरुषकारः सञ्चितस्तत्र तत्र ।

एतत्ते सर्व्वमाख्यातं मया वै मुनिसत्तम । फलं पुरुषकारस्य सदा सन्दृश्य तत्त्वतः ।
अभ्युत्थानेन दैवस्य समारब्धेन कर्म्मणा । विधिना कर्म्मणा चैव स्वर्गमार्गमवाप्नुयात् ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दैवपुरुषकारे षष्ठोऽध्यायः ॥ ६ ॥

॥ युधिष्ठिर उवाच ॥ कर्म्मणाञ्च समस्तानां शुभानां भरतर्षभ । फलानि भरतश्रेष्ठ प्रब्रूहि परिपृच्छतः ।
॥ भीष्म उवाच ॥ हन्त ते कथयिष्यामि यन्मां पृच्छसि भारत । रहस्यं यदृषीणान्तु तच्छृणुष्व युधिष्ठिर । ३१५
या गतिः प्राप्यते येन प्रेत्यभावे चिरेप्सिता । येन येन शरीरेण यद्यत्कर्म्म करोति यः ।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते । यस्यां यस्यामवस्थायां यत्करोति शुभाशुभं ।
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि । न नश्यति कृतं कर्म्म सदा पञ्चेन्द्रियैरिह ।
ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा तथैव च । चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृतां ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः । यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते । ३२०
श्रान्तायादृष्टपूर्व्वाय तस्य पुण्यफलं महत् । स्थण्डिलेषु शयानानां गृहाणि शयनानि च ।
चीरवल्कलसंवीते वासांस्याभरणानि च । वाहनानि च यानानि योगात्मनि तपोधने ।
अग्नीनुपशयानस्य राज्ञः पौरुषमेव च । रसानां प्रतिसंहारे सौभाग्यमनुगच्छति ।
आमिषप्रतिसंहारे पशून् पुत्रांश्च विन्दति । अवाक्शिरास्तु यो लम्बेदुदवासञ्च यो वसेत् ।
सततञ्चैकशायी यः स लभेतेप्सितां गतिं । पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयं । ३२५
दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः । वीरासनं वीरशय्यां वीरस्थानमुपासतः ।
अक्षयास्तस्य वै लोकाः सर्व्वकामगमास्तथा । धनं लभेत दानेन मौनेनाज्ञां विशाम्पते ।
उपभोगांश्च तपसा ब्रह्मचर्य्येण जीवितं । रूपमैश्वर्य्यमारोग्यमहिंसाफलमश्नुते ।
फलमूलाशिनो राज्यं स्वर्गः पर्णाशिना भवेत् । प्रायोपवेशिनो राजन् सर्व्वत्र सुखमश्नुते ।
गवाढ्यः शाकदीक्षायां स्वर्गगामी तृणाशनः । स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् । ३३०
स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमं । सलिलाशी भवेद्यस्तु सदाग्निः संस्कृतो द्विजः ।
मरुं साधयते राज्यं नाकपृष्ठमनाशके । उपवासञ्च दीक्षायां अभिषेकञ्च पार्थिव ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते । अधीत्य सर्व्ववेदान्वै सद्यो दुःखाद्विमुच्यते ।
मानसं हि चरन् धर्म्मं स्वर्गलोकमुपाश्नुते । या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः ।

यथा भर्त्ताश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर । स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः ।
क्षत्रियः शतवर्षी च दशवर्षी द्विजोत्तमः । पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणो गुरुः ।
नारी तु पत्यभावे वै देवरं कुरुते पतिं । पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिं । ४८५
पुत्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते । अग्निवच्चोपचर्य्या वै ब्राह्मणाः कुरुसत्तम ।
ऋजून्सतः सत्यशीलान्सर्व्वभूतहिते रतान् । आशीविषानिव क्रुद्धान् द्विजान् परिचरेत्सदा ।
तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर । उभे चैते परित्याज्ये तेजश्चैव तपस्तथा ।
व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते । हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः ।
भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात् । कुर्य्यादुभयतः शेषं दत्तशेषं न शेषयेत् । ४९०
दण्डपाणिर्यथा गोषु पालो नित्यं हि रक्षयेत् । ब्राह्मणान् ब्रह्म च तथा क्षत्रियः परिपालयेत् ।
पितेव पुत्रान् रक्षेथा ब्राह्मणान् धर्म्मचेतसः । गृहे चैषामवेक्षेथाः कच्चिदस्तीह जीवनं ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि भीष्मयुधिष्ठिरसंवादेऽष्टमोऽध्यायः ॥ ८ ॥
॥ युधिष्ठिर उवाच ॥ ब्राह्मणानान्तु ये लोकाः प्रतिश्रुत्य पितामह । न प्रयच्छन्ति मोहात्ते के भवन्ति महाद्युते ।
एतन्मे तत्त्वतो ब्रूहि धर्म्मं धर्म्मभृताम्वर । प्रतिश्रुत्य दुरात्मानो न प्रयच्छन्ति ये नराः ।
॥ भीष्म उवाच ॥ यो न दद्यात्प्रतिश्रुत्य स्वल्पं वा यदि वा बहु । आशास्तस्य हताः सर्व्वाः क्लीबस्येव प्रजाफलं । ४९५
यां रात्रिं जायते जीवो यां रात्रिञ्च विनश्यति । एतस्मिन्नन्तरे यद्यत्सुकृतं तस्य भारत ।
यच्च तस्य हुतं किञ्चिद्दत्तं वा भरतर्षभ । तपस्तप्तमथो वापि सर्व्वं तस्योपहन्यते ।
अथैतद्वचनं प्राहुर्धर्म्मशास्त्रविदो जनाः । निशाम्य भरतश्रेष्ठ बुद्ध्या परमयुक्तया ।
अपि चोदाहरन्तीमं धर्म्मशास्त्रविदो जनाः । अश्वानां श्यामकर्णानां सहस्रेण स मुच्यते ।
अत्रैवोदाहरन्तीममितिहासं पुरातनं । सृगालस्य च संवादं वानरस्य च भारत । ५००
तौ सखायौ पुरा ह्यास्तां मानुषत्वे परन्तप । अन्यां योनिं समापन्नौ शार्गालीं वानरीं तथा ।
ततः परासून् खादन्तं सृगालं वानरोऽब्रवीत् । श्मशानमध्ये संप्रेक्ष्य पूर्व्वजातिमनुस्मरन् ।
किं त्वया पापकं पूर्व्वं कृतं कर्म्म सुदारुणं । यस्त्वं श्मशाने मृतकान् पूतिकानत्सि कुत्सितान् ।
एवमुक्तः प्रत्युवाच सृगालो वानरं तदा । श्मशानमध्ये संप्रेक्ष्य पूर्व्वजातिमनुस्मरन् ।
ब्राह्मणस्य प्रतिश्रुत्य न मया तदुपाकृतं । तत्कृते पापिकां योनिमापन्नोऽस्मि प्लवङ्गम । ५०५
तस्मादेवंविधं भक्ष्यं भक्षयामि बुभुक्षितः ।
॥ भीष्म उवाच ॥ सृगालो वानरं प्राह पुनरेव नरोत्तम । किं त्वया पातकं कर्म्म कृतं येनासि वानरः ।
॥ वानर उवाच ॥ सदा चाहं फलाहारो ब्राह्मणानां विहङ्गम । तस्मान्न ब्राह्मणस्वन्तु हर्त्तव्यं विदुषा सदा ।
समं विवादो मोक्तव्यो दातव्यञ्च प्रतिश्रुतं ।
॥ भीष्म उवाच ॥ इत्येतदब्रुवतो राजन् ब्राह्मणस्य मया श्रुतं । कथां कथयतः पुण्यां धर्म्मज्ञस्य पुरातनीं । ५१०
श्रुतश्चापि मया भूयः कृष्णस्यापि विशाम्पते । कथां कथयतः पूर्व्वं ब्राह्मणं प्रति पाण्डव ।

न हर्तव्यं विप्रधनं क्षन्तव्यं तेषु नित्यशः । बालाश्च नावमन्तव्या दरिद्राः कृपणा अपि ।
एवमेव च मां नित्यं ब्राह्मणाः संदिशन्ति वै । प्रतिश्रुत्य भवेद्देयं नाशा कार्या द्विजोत्तमे ।
ब्राह्मणो ह्याशया पूर्वं कृतया पृथिवीपते । सुसमिद्धो यथा दीप्तः पावकस्तद्विधः स्मृतः ।
यं निरीक्षेत संक्रुद्ध आशया पूर्वजातया । प्रदहेच्च हि तं राजन् कक्षमक्षय्यभुग्यथा । ४१५
स एव हि यदा तुष्टो वचसा प्रतिनन्दति । भवत्यगदसङ्काशो विषये तस्य भारत
पुत्रान् पौत्रान् पशूंश्चैव बान्धवान् सचिवांस्तथा । पुरं जनपदं चैव शान्तिरिष्टेव पोषयेत् ।
एतद्धि परमं तेजो ब्राह्मणस्येह दृश्यते । सहस्रकिरणस्येव सवितुर्धरणीतले ।
तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर । यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम ।
ब्राह्मणस्य हि दत्तेन ध्रुवं स्वर्गो ह्यनुत्तमः । शक्यः प्राप्तुं विशेषेण दानं हि महती क्रिया । ४२०
इतो दत्तेन जीवन्ति देवताः पितरस्तथा । तस्माद्दानानि देयानि ब्राह्मणेभ्यो विजानता ।
महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते । वेलायां न तु कस्याञ्चिद्गच्छेद्विप्रो ह्यपूजितः ।
इति श्रीमहाभारते अनुशासनपर्वणि आनुशासनिके पर्वणि शृगालवानरसंवादे नवमोऽध्यायः ॥ ९ ॥
॥ युधिष्ठिर उवाच ॥ मित्रसौहार्द्दभावेन उपदेशं करोति यः । जात्यावरस्य राजर्षे दोषस्तस्य भवेन्न वा ।
एतदिच्छामि तत्त्वेन व्याख्यातं वै पितामह । सूक्ष्मा गतिर्हि धर्मस्य यत्र मुह्यन्ति मानवाः ।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि शृणु राजन् यथाक्रमम् । ऋषीणां वदतां पूर्वं श्रुतमासीद्यथा पुरा । ४२५
उपदेशो न कर्त्तव्यो जातिहीनस्य वै क्वचित् । उपदेशे महान् दोष उपाध्यायस्य भाष्यते ।
निदर्शनमिदं राजन् शृणु मे भरतर्षभ । दुरुक्तवचनो राजन् यथा पूर्वं युधिष्ठिर ।
ब्रह्माश्रमपदे वृत्तं पार्श्वे हिमवतः शुभे । तत्राश्रमपदं पुण्यं नानावृक्षगणायुतं ।
नानागुल्मलताकीर्णं मृगद्विजनिषेवितं । सिद्धचारणसंयुक्तं रम्यं पुष्पितकाननं ।
व्रतिभिर्बहुभिः कीर्णं तापसैरुपशोभितं । ब्राह्मणैश्च महाभागैः सूर्य्यज्वलनसन्निभैः । ४३०
नियमव्रतसम्पन्नैः समाकीर्णं तपस्विभिः । दीक्षितैर्भरतश्रेष्ठ यताहारैः कृतात्मभिः ।
तपोऽध्ययनघोषैश्च नादितं भरतर्षभ । वालखिल्यैश्च बहुभिर्यतिभिश्च निषेवितं ।
तत्र कश्चित्समुत्साहं कृत्वा शूद्रो दयान्वितः । आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः ।
तांस्तु दृष्ट्वा मुनिगणान् देवकल्पान् महौजसः । विविधा वहतो दीक्षाः सम्प्रहृष्यत भारत ।
अथास्य बुद्धिरभवत्तपस्ये भरतर्षभ । ततोऽब्रवीत् कुलपतिं पादौ संगृह्य भारत । ४३५
भवत्प्रसादादिच्छामि धर्मं चर्तुं द्विजर्षभ । तन्मां त्वं भगवन् वक्तुं प्रव्राजयितुमर्हसि ।
वर्णावरोऽहं भगवन् शूद्रो जात्यास्मि सत्तम । शुश्रूषां कर्तुमिच्छामि प्रपन्नाय प्रसीद मे ।
॥ कुलपतिरुवाच ॥ न शक्यमिह शूद्रेण लिङ्गमाश्रित्य वर्त्तितुं । आस्यतां यदि ते बुद्धिः शुश्रूषानिरतो भव ।
शुश्रूषया परान् लोकानवाप्स्यसि न संशयः ।
॥ भीष्म उवाच ॥ एवमुक्तस्तु मुनिना स शूद्रोऽचिन्तयन्नृप । कथमत्र मया कार्यं श्रद्धा धर्मे परा च मे । ४४०

विज्ञातमेवं भवतु करिष्ये प्रियमात्मनः । गत्वाश्रमपदाद्दूरमुटजं कृतवांश्च सः ।
तत्र वेदीश्च भूमिश्च देवतायतनानि च । निवेश्य भरतश्रेष्ठ नियमस्थोऽभवन्मुनिः ।
अभिषेकांश्च नियमान् देवतायतनेषु च । बलिञ्च कृत्वा हुत्वा च देवताश्चाप्यपूजयत् ।
सङ्कल्पनियमोपेतः फलाहारो जितेन्द्रियः । नित्यं सन्निहिताभिश्च ओषधीभिः फलैस्तथा ।
अतिथीन् पूजयामास यथावत्समुपागतान् । एवं हि सुमहान् कालो व्यत्यक्रामत तस्य वै । ५५५
अथास्य मुनिरागच्छत् सङ्गत्या वै तमाश्रमं । सम्पूज्य स्वागतेनर्षिं विधिवत्पर्यतोषयत् ।
अनुकूलाः कथाः कृत्वा यथागतमपृच्छत । ऋषिः परमतेजस्वी धर्म्मात्मा संशितव्रतः ।
एवं सुबहुशस्तस्य शूद्रस्य भरतर्षभ । सोऽगच्छदाश्रमम् ऋषिः शूद्रं द्रष्टुं नरर्षभ ।
अथ तं तापसं शूद्रः सोऽब्रवीद्भरतर्षभ । पितृकार्य्यं करिष्यामि तत्र मेऽनुग्रहं कुरु ।
बाढमित्येव तं विप्र उवाच भरतर्षभ । शुचिर्भूत्वा स शूद्रस्तु तस्यर्षेः पाद्यमानयत् । ५६०
अथ दर्भांश्च वन्यांश्च ओषधीर्भरतर्षभ । पवित्रमासनञ्चैव वृषीञ्च समुपानयत् ।
अथ दक्षिणमावृत्य वृषीं परमशीर्षिकां । कृतामन्यायतो दृष्ट्वा ततः शूद्रमृषिरब्रवीत् ।
कुरुष्वैतां पूर्व्वशीर्षां भवांश्चोदङ्मुखः शुचिः । स च तत्कृतवान् शूद्रः सर्व्वं यदृषिरब्रवीत् ।
यथोपदिष्टं मेधावी दर्भाद्यादि यथातथं । हव्यकव्यविधिं कृत्स्नमुक्तं तेन तपस्विना ।
ऋषिणा पितृकार्य्ये च स च धर्म्मपथे स्थितः । पितृकार्य्ये कृते चापि विसृष्टः स जगाम ह । ५६५
अथ दीर्घस्य कालस्य स तप्यन् शूद्रतापसः । वने पञ्चत्वमगमत्सुकृतेन च तेन वै ।
अजायत महाराजवंशे स च महाद्युतिः । तथैव स ऋषिस्तात कालधर्म्ममवाप ह ।
पुरोहितकुले विप्रः आजातो भरतर्षभ । एवन्तौ तत्र सम्भूतावुभौ शूद्रमुनी तदा ।
क्रमेण वर्द्धितौ चापि विद्यासु कुशलावुभौ । अथर्व्ववेदे वेदे च बभूवर्षिः सुनिष्ठितः ।
कल्पप्रयोगे चोत्पन्ने ज्योतिषे च परङ्गतः । साङ्ख्ये चैव परा प्रीतिस्तस्य चैवं व्यवर्द्धत । ५७०
पितर्य्युपरते चापि कृतशौचस्तु पार्थिवः । अभिषिक्तः प्रकृतिभी राजपुत्रः स पार्थिवः ।
अभिषिक्तेन स ऋषिरभिषिक्तः पुरोहितः । स तं पुरोधाय सुखमवसद्भरतर्षभ ।
राज्यं शशास धर्म्मेण प्रजाश्च परिपालयन् । पुण्याहवाचने नित्यं धर्म्मकार्य्येषु चासकृत् ।
उत्स्मयन् प्राहसच्चापि दृष्ट्वा राजा पुरोहितं । एवं स बहुशो राजन् पुरोधसमुपाहसत् ।
लक्षयित्वा पुरोधास्तु बहुशस्तं नराधिपं । उत्स्मयन्तञ्च सततं दृष्ट्वाऽसौ मन्युमाविशत् । ५७५
अथ शून्ये पुरोधास्तु सह राज्ञा समागतः । कथाभिरनुकूलाभी राजानमभ्यरामयत् ।
ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ । वरमिच्छाम्यहं त्वेकं त्वया दत्तं महाद्युते ।
॥ राजोवाच ॥ वराणां ते शतं दद्यां किमुतैकं द्विजोत्तम । स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ।
॥ पुरोहित उवाच ॥ एकं वै वरमिच्छामि यदि तुष्टोऽसि पार्थिव । प्रतिजानीहि तावत्त्वं सत्यं तद्वद नानृतं ।
॥ भीष्म उवाच ॥ बाढमित्येव तं राजा प्रत्युवाच युधिष्ठिर । यदि ज्ञास्यामि वक्ष्यामि अजानन्न तु संवदे । ५८०

॥ पुरोहित उवाच ॥ पुण्याहवाचने नित्यं धर्म्मकृत्येषु याजक । शान्तिहोमेषु च तथा किं त्वं हससि वीक्ष्य मां ।
सव्रीडं वै भवति हि मनो मे त्वत्कृते नृप । कामया श्रावितो राजन्नान्यथा वक्तुमर्हसि ।
सुव्यक्तं कारणं ब्रूहि न ते हास्यमकारणं । कौतूहलं मे सुभृशं तत्त्वेन कथयस्व वै ।
॥ राजोवाच ॥ एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि । तदप्यवश्यं वक्तव्यं शृणुष्वैकमना द्विज ।
पूर्व्वदेहे यथावृत्तं तन्निबोध द्विजोत्तम । जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे शृणु । ८५
शूद्रोऽहमभवं पूर्व्वं तापसो भृशसंयुतः । ऋषिरुग्रतपास्त्वञ्च तदाऽभूर्द्विजसत्तम ।
प्रीयता हि तदा ब्रह्मन् मयाऽनुग्रहबुद्धिना । पितृकार्य्ये त्वया पूर्व्वमुपदेशः कृतोऽनघ ।
वृष्यां दर्भेषु हव्येषु कव्ये च मुनिसत्तम । एतेन कर्म्मदोषेण पुरोधास्त्वमजायथाः ।
अहं राजा च विप्रेन्द्र पश्य कालस्य पर्य्ययं । मत्कृतस्योपदेशस्य त्वयावाप्तमिदं फलं ।
एतस्मात् कारणाद् ब्रह्मन् प्रहसे त्वां द्विजोत्तम । न त्वां परिभवन् ब्रह्मन् प्रहसामि गुरुर्भवान् । ९०
विपर्य्ययेण मे मन्युस्तेन सन्तप्यते मनः । जातिं स्मराम्यहं तुभ्यमतस्त्वां प्रहसामि वै ।
एवं तवोग्रं हि तप उपदेशेन नाशितं । पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे ।
इतस्त्वमधमामन्यां मा योनिं प्राप्स्यसे द्विज । गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम ।
॥ भीष्म उवाच ॥ ततो विसृष्टो राज्ञा तु विप्रो दानान्यनेकशः । ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामांश्च सर्व्वशः ।
कृच्छ्राणि चीर्त्वा च ततो यथोक्तानि द्विजोत्तमैः । तीर्थानि चापि गत्वा वै दानानि विविधानि च । ९५
दत्त्वा गाश्चैव विप्रेभ्यः पूतात्माभवदात्मवान् । तमेव चाश्रमं गत्वा चचार विपुलं तपः ।
ततः सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम । सम्मतश्चाभवत्तेषामाश्रमे तन्निवासिनां ।
एवं प्राप्तो महत्कृच्छ्रमृषिः स नृपसत्तम । ब्राह्मणेन न वक्तव्यं तस्माद्वर्णावरे जने ।
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः । एतेषु कथयन् राजन् ब्राह्मणो न प्रदुष्यति ।
तस्माद्द्विजेन वक्तव्यं कस्यचित् किञ्चिदग्रतः । सूक्ष्मा गतिर्हि धर्म्मस्य दुर्ज्ञेया ह्यकृतात्मभिः । १००
तस्मान्मौनेन मुनयो दीक्षां कुर्व्वन्ति चादृताः । दुरुक्तस्य भयाद्राजन्नाभाषन्ते च किञ्चन ।
धार्म्मिका गुणसम्पन्नाः सत्यार्ज्जवसमन्विताः । दुरुक्तवाचाभिहितैः प्राप्नुवन्ति सुदुष्कृतं ।
उपदेशो न कर्त्तव्यः कदाचिदपि कस्यचित् । उपदेशाद्धि तत्पापं ब्राह्मणः समवाप्नुयात् ।
विमृश्य तस्मात् प्राज्ञेन कर्त्तव्यं धर्म्ममिच्छता । सत्यानृतेन हि कृत उपदेशो हिनस्ति हि ।
वक्तव्यमिह पृष्टेन विनिश्चित्य विनिश्चयं । स चोपदेशः कर्त्तव्यो येन धर्म्ममवाप्नुयात् । १०५
एतत्ते सर्व्वमाख्यातमुपदेशे कृते मया । महान् क्लेशो हि भवति तस्मान्नोपदिशेदिह ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि शूद्रमुनिसंवादे दशमोऽध्यायः ॥ १० ॥
॥ युधिष्ठिर उवाच ॥ कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ । श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्र ते वर्णयिष्यामि यथावृत्तं यथाश्रुतं । रुक्मिणी देवकीपुत्रसन्निधौ पर्य्यपृच्छत ।
नारायणस्याङ्कगतां ज्वलन्तीं दृष्ट्वा श्रियं पद्मसमानवर्णां । कौतूहलाद्विस्मितचारुनेत्रा पप्रच्छ माता मकरध्वजस्य ।

जाते नारायणात्पुत्रं शङ्खचक्रगदाधरात् । एष विद्वान् गुणश्रेष्ठो विष्णुः परमदुर्जयः ।
दिव्यचक्षुर्महातेजा वीक्षते योगचक्षुषा । तस्य भक्त्या तु कृष्णेन जगद्व्याप्तं महात्मना ।
तं प्रसाद्य तदा देवं बदर्य्यां किल भारत । अर्थात्प्रियतरत्वञ्च सर्वलोकेषु वै तदा ।
प्राप्तवानेव राजेन्द्र सुवर्णाक्षान्महेश्वरात् । पूर्णं वर्षसहस्रन्तु तप्तवानेष माधवः ।
प्रसाद्य वरदं देवं चराचरगुरुं शिवं । युगे युगे तु कृष्णेन तोषितो वै महेश्वरः । ६००
भक्त्या परमया चैव प्रीतश्चैव महात्मनः । ऐश्वर्यं यादृशं तस्य जगद्योनेर्महात्मनः ।
तदयं दृष्टवान् साक्षात्पुत्रार्थे हरिरच्युतः । तस्मात्परतरञ्चैव नान्यं पश्यामि भारत ।
व्याख्यातुं देवदेवस्य शक्तो नाम्नामशेषतः । एष शक्तो महाबाहुर्वक्तुं भगवतो गुणान् ।
विभूतिञ्चैव कार्त्स्न्येन सत्यां माहेश्वरीं नृप ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तदा भीष्मो वासुदेवं महायशाः । भवमाहात्म्यसंयुक्तमिदमाह पितामहः । ६०५
॥ भीष्म उवाच ॥ सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि । शिवाय विश्वरूपाय यन्मां पृच्छद्युधिष्ठिरः ।
नाम्नां सहस्रं देवस्य तण्डिना ब्रह्मयोनिना । निवेदितं ब्रह्मलोके ब्रह्मणो यत्पुराभवत् ।
द्वैपायनप्रभृतयस्तथा चेमे तपोधनाः । ऋषयः सुव्रता दान्ताः शृण्वन्तु गदतस्तव ।
ध्रुवाय नन्दिने होत्रे गोप्त्रे विश्वसृजेऽग्नये । महाभाग्यं विभो ब्रूहि मुण्डिनेऽथ कपर्द्दिने ।
॥ वासुदेव उवाच ॥ न गतिः कर्म्मणां शक्या वेत्तुमीशस्य तत्त्वतः । हिरण्यगर्भप्रमुखा देवाः सेन्द्रा महर्षयः । ६१०
न विदुर्यस्य भवनमादित्याः सूक्ष्मदर्शिनः । स कथं नरमात्रेण शक्यो ज्ञातुं सतां गतिः ।
तस्याहमसुरघ्नस्य कांश्चिद्भगवतो गुणान् । भवतां कीर्त्तयिष्यामि व्रतेशाय यथातथं ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु भगवान् गुणांस्तस्य महात्मनः । उपस्पृश्य शुचिर्भूत्वा कथयामास धीमतः ।
॥ वासुदेव उवाच ॥ शुश्रूषध्वं ब्राह्मणेन्द्रास्त्वञ्च तात युधिष्ठिर । त्वञ्चापगेय नामानि शृणुष्वेह कपर्द्दिने ।
यदवाप्तं मया पूर्वं साम्बहेतोः सुदुष्करं । यथावद्भगवान् दृष्टो मया पूर्वं समाधिना । ६१५
शम्बरे निहते पूर्वं रौक्मिणेयेन धीमता । अतीते द्वादशे वर्षे जाम्बवत्यब्रवीद्धि मां ।
प्रद्युम्नचारुदेष्णादीन् रुक्मिण्या वीक्ष्य पुत्रकान् । पुत्रार्थिनी मामुपेत्य वाक्यमाह युधिष्ठिर ।
शूरं बलवतां श्रेष्ठं कान्तरूपमकल्मषं । आत्मतुल्यं मम सुतं प्रयच्छाच्युत मा चिरं ।
न हि तेऽप्राप्यमस्तीह त्रिषु लोकेषु किञ्चन । लोकान् सृजेस्त्वमपरानिच्छन् यदुकुलोद्वह ।
त्वया द्वादशवर्षाणि व्रतीभूतेन शुष्यता । आराध्य पशुभर्त्तारं रुक्मिण्यां जनिताः सुताः । ६२०
चारुदेष्णः सुचारुश्च चारुवेशो यशोधरः । चारुश्रवाश्चारुयशाः प्रद्युम्नः शम्भुरेव च ।
यथा ते जनिताः पुत्राः रुक्मिण्यां चारुविक्रमाः । तथा ममापि तनयं प्रयच्छ मधुसूदन ।
इत्येवं चोदितो देव्या तामवोचं सुमध्यमां । अनुजानीहि मां राज्ञि करिष्ये वचनं तव ।
सा च मामब्रवीद्गच्छ शिवाय विजयाय च । ब्रह्मा शिवः काश्यपश्च नद्यो देवा मनोऽनुगाः ।
क्षेत्रौषध्यो यज्ञवाहाः छन्दांस्यृषिगणा धरा । समुद्रा दक्षिणा स्तोभा ऋक्षाणि पितरो ग्रहाः । ६२५

देवपत्न्यो देवकन्या देवमातर एव च । मन्वन्तराणि गावश्च चन्द्रमाः सविता हरिः ।

सावित्री ब्रह्मविद्या च ऋतवो वत्सरास्तथा । क्षणा लवा मुहूर्त्ताश्च निमेषा युगपर्य्ययाः ।

रक्षन्तु सर्व्वत्र गतं त्वां यादव सुखाय च । अरिष्टं गच्छ पन्थानमप्रमत्तो भवानघ ।

एवं कृतस्वस्त्ययनस्तथाहं ततोऽभ्यनुज्ञाय कपीन्द्रपुर्य्यां । पितुः समीपं नरसत्तमस्य मातुश्च राज्ञश्च तथाऽऽहुकस्य ।

गत्वा समावेद्य यदब्रवीन्मां विद्याधरेन्द्रस्य सुता भृशार्त्ता । तानभ्यनुज्ञाय तदातिदुःखात् गदं तथैवातिबलञ्च रामं । ११

अथोचतुः प्रीतियुतौ तदानीं तपःसमृद्धिर्भवतोऽस्त्वविघ्नं ।

प्राप्यानुज्ञां गुरुजनादहं तार्क्ष्यमचिन्तयं । सोऽवहद्धिमवन्तं मां प्राप्य चैनं व्यसर्ज्जयं ।

तत्राहमद्भुतान् भावानपश्यं गिरिसत्तमे । क्षेत्रञ्च तपसां श्रेष्ठं पश्याम्यद्भुतमुत्तमं ।

दिव्यं वैयाघ्रपादस्य उपमन्योर्महात्मनः । पूजितं देवगन्धर्व्वैर्ब्राह्म्या लक्ष्म्या समावृतं ।

धवककुभकदम्बनारिकेलैः कुरवककेतकजम्बुपाटलाभिः । वटवरुणकवत्सनाभबिल्वैः सरलकपित्थपियालसाल-तालैः । १२

बदरीकुन्दपुन्नागैरशोकाम्रातिमुक्तकैः । मधूकैः कोविदारैश्च चम्पकैः पनसैस्तथा ।

वन्यैर्बहुविधैर्वृक्षैः फलपुष्पप्रदैर्युतं । पुष्पगुल्मलताकीर्णं कदलीषण्डशोभितं ।

नानाशकुनिसम्भोज्यैः फलैर्वृक्षैरलङ्कृतं । यथास्थानविनिक्षिप्तैर्भूषितं भस्मराशिभिः ।

रुरुवानरशार्दूलसिंहद्वीपिसमाकुलं । कुरङ्गबर्हिणाकीर्णं मार्ज्जारभुजगावृतं ।

पूगैश्च मृगजातीनां महिषर्क्षनिषेवितं । १३

सकृत्प्रभिन्नैश्च गजैर्विभूषितं प्रहृष्टनानाविधपक्षिसेवितं । सुपुष्पितैरम्बुधरप्रकाशैर्महीरुहाणाञ्च वनैर्विचित्रैः ।

नानापुष्परजोमिश्रो गजदानाधिवासितः । दिव्यस्त्रीगीतबहुलो मारुतोऽभिमुखो ववौ ।

धारानिनादैर्विहगप्रणादैः शुभैस्तथा बृंहितैः कुञ्जराणां । गीतैस्तथा किन्नराणामुदारैः शुभैः स्वनैः सामगानाञ्च वीर ।

अचिन्त्यं मनसाऽप्यन्यैः सरोभिः समलङ्कृतं । विशालैश्चाग्निशरणैर्भूषितं कुसुमावृतैः ।

विभूषितं पुण्यपवित्रतोयया सदा च जुष्टं नृप जह्नुकन्यया । विभूषितं धर्म्मभृतां वरिष्ठैर्महात्मभिर्वह्निसमानकल्पैः । १४

वाय्वाहारैरम्बुपैर्जप्यनित्यैः सम्प्रक्षालैर्योगिभिर्ध्याननित्यैः । धूमप्राशैरूष्मपैः क्षीरपैश्च सञ्जुष्टञ्च ब्राह्मणेन्द्रैः समन्तात् ।

गोचारिणोऽथाश्मकुट्टा दन्तोलूखलिकास्तथा । मरीचिपाः फेनपाश्च तथैव मृगचारिणः ।

अश्वत्थफलभक्षाश्च तथा ह्युदकशायिनः । चीरचर्म्माम्बरधरास्तथा वल्कलधारिणः ।

सुदुःखान्नियमांस्तांस्तान् वहतः सुतपोधनान् । पश्यन् मुनीन् बहुविधान् प्रवेष्टुमुपचक्रमे ।

सुपूजितं देवगणैर्महात्मभिः शिवादिभिर्भारत पुण्यकर्म्मभिः । रराज तच्चाश्रममण्डलं सदा दिवीव राजन् शशिमण्डलं यथा । १५

क्रीडन्ति सर्पैर्नकुला मृगैर्व्याघ्राश्च मित्रवत् । प्रभावाद्दीप्ततपसां सन्निकर्षान्महात्मनां ।

तत्राश्रमपदे श्रेष्ठे सर्व्वभूतमनोरमे । वेष्टिते द्विजमुख्यैश्च वेदवेदाङ्गपारगैः ।
नानानियमविख्यातैः ऋषिभिः सुमहात्मभिः । प्रविशन्नेव चापश्यं जटाचीरधरं प्रभुं ।
तेजसा तपसा चैव दीप्यमानं यथानलं । शिष्यैरनुगतं शान्तं युवानं ब्राह्मणर्षभं ।
शिरसा वन्दमानं मामुपमन्युरभाषत । स्वागतं पुण्डरीकाक्ष सफलानि तपांसि नः । ११५
यः पूज्यः पूजयसि मां द्रष्टव्यो द्रष्टुमिच्छसि । तमहं प्राञ्जलिर्भूत्वा मृगपक्षिष्वथाग्निषु ।
धर्म्मे च शिष्यवर्गे च समपृच्छमनामयं । ततो मां भगवानाह साम्ना परमवल्गुना ।
लप्स्यसे तनयं कृष्ण आत्मतुल्यमसंशयं । तपः सुमहदास्थाय तोषयेशानमीश्वरं ।
इह देवः सपत्नीकः समाक्रीडत्यधोक्षज । इहैनं देवतश्रेष्ठं देवाः सर्षिगणाः पुरा ।
तपसा ब्रह्मचर्य्येण सत्येन च दमेन च । तोषयित्वा शुभान् कामान् प्राप्नवन्तो जनार्द्दन । १२०
तेजसां तपसाञ्चैव निधिः स भगवानिह । शुभाशुभान्वितान् भावान् विसृजन् संक्षिपन्नपि ।
आस्ते देव्या सहाचिन्त्यो यं प्रार्थयसि शत्रुहन् । हिरण्यकशिपुर्योऽभूद्दानवो मेरुकम्पनः ।
तेन सर्व्वामरैश्वर्य्यं शर्व्वात् प्राप्तं समार्बुदं । तस्यैव पुत्रप्रवरो मन्दरो नाम विश्रुतः ।
महादेववराच्छक्रं वर्षार्बुदमयोधयत् । विष्णोश्चक्रञ्च तद्घोरं वज्रमाखण्डलस्य च ।
शीर्णं पुराभवत्तात ग्रहस्याङ्गेषु केशव । यत्तद्भगवता पूर्व्वं दत्तं चक्रं तवानघ । १२५
जलान्तरचरं हत्वा दैत्यञ्च बलगर्व्वितं । उत्पादितं वृषाङ्केन दीप्तं ज्वलनसन्निभं ।
दत्तं भगवता तुभ्यं दुर्द्धर्षं तेजसाद्भुतं । न शक्यं द्रष्टुमन्येन वर्जयित्वा पिनाकिनं ।
सुदर्शनं भवत्येवं भवेनोक्तं तदा तु तत् । सुदर्शनं तदा तस्य लोके नाम प्रतिष्ठितं ।
तज्जीर्णमभवत्तात ग्रहस्याङ्गेषु केशव । ग्रहस्यातिबलस्याङ्गे वरदत्तस्य धीमतः ।
न शस्त्राणि वहन्त्यङ्गे चक्रं वज्रशतान्यपि । अर्द्द्यमानाश्च विबुधा ग्रहेण सुबलीयसा । १३०
शिवदत्तवरान् जघ्नुरसुरेन्द्रान् सुरा भृशं । तुष्टो विद्युत्प्रभस्यापि त्रिलोकेश्वरतां ददौ ।
शतं वर्षसहस्राणां सर्व्वलोकेश्वरोऽभवत् । ममैवानुचरो नित्यं भवितासीति चाब्रवीत् ।
तथा पुत्त्रसहस्राणामयुतञ्च ददौ प्रभुः । कुशद्वीपञ्च स ददौ राज्येन भगवानजः ।
तथा शतमुखो नाम धात्रा सृष्टो महासुरः । येन वर्षशतं साग्रमात्ममांसैर्हुतोऽनलः ।
तं प्राह भगवांस्तुष्टः किं करोमीति शङ्करः । तं वै शतमुखः प्राह योगो भवतु मेऽद्भुतः
बलञ्च दैवतश्रेष्ठ शाश्वतं सम्प्रयच्छ मे । तथेति भगवानाह तस्य तद्वचनं प्रभुः ।
स्वायम्भुवः क्रतुश्चापि पुत्त्रार्थमभवत्पुरा । आविश्य योगेनात्मानं त्रीणि वर्षशतान्यपि ।
तस्य च प्रददौ पुत्त्रान् सहस्रं क्रतुसम्मितान् । योगेश्वरं देवगीतं वेत्थ कृष्ण न संशयः ।
याज्ञवल्क्य इति ख्यातः ऋषिः परमधार्म्मिकः । आराध्य स महादेवं प्राप्तवानतुलं यशः ।
वेदव्यासश्च योगात्मा पराशरसुतो मुनिः । सोऽपि शङ्करमाराध्य प्राप्तवानतुलं यशः । १४०
बालखिल्या मघवता ह्यवज्ञाताः पुरा किल । तैः क्रुद्धैर्भगवान् रुद्रस्तपसा तोषितो ह्यभूत् ।

कुतः क्षीरोदनं वत्स मुनीनां भावितात्मनां । वने निवसतां नित्यं कन्दमूलफलाशिनां ।
आस्थितानां नदीं दिव्यां वालखिल्यैर्निषेवितां । कुतः क्षीरं वनस्थानां मुनीनां गिरिवासिनां ।
पावनानां वनाशानां वनाश्रमनिवासिनां । ग्राम्याहारनिवृत्तानामारण्यफलभोजिनां ।
नास्ति पुत्र पयोऽरण्ये सुरभीगोत्रवर्जिते । नदीगह्वरशैलेषु तीर्थेषु विविधेषु च ॥ ५१५
तपसा जप्यनित्यानां शिवो नः परमा गतिः । अप्रसाद्य विरूपाक्षं वरदं स्थाणुमव्ययं ।
कुतः क्षीरोदनं वत्स सुखानि वसनानि च । तं प्रपद्य सदा वत्स सर्वभावेन शङ्करं ।
तत्प्रसादाच्च कामेभ्यः फलं प्राप्स्यसि पुत्रक । जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन् ।
प्राञ्जलिः प्रणतो भूत्वा इदमम्बामचोदयं । कोऽयमम्ब महादेवः स कथञ्च प्रसीदति ।
कुत्र वा वसते देवो द्रष्टव्यो वा कथञ्चन । तुष्यते वा कथं शर्वो रूपं वा तस्य कीदृशं । ५२०
कथं ज्ञेयः प्रसन्नो वा दर्शयेज्जननी मम । एवमुक्ता तदा कृष्ण माता मे सुतवत्सला ।
मूर्द्ध्न्याघ्राय गोविन्द सबाष्पाकुललोचना । प्रमार्जतीव गात्राणि मम वै मधुसूदन ।
दैन्यमालम्ब्य जननी इदमाह सुरोत्तम ।
॥ अम्बोवाच ॥ दुर्विज्ञेयो महादेवो दुराधर्षो दुरन्तकः । दुराबाधश्च दुर्ग्राह्यो दुर्दृश्यो ह्यकृतात्मभिः ।
यस्य रूपाण्यनेकानि प्रवदन्ति मनीषिणः । स्थानानि च विचित्राणि प्रसादाश्चाप्यनेकशः । ५२५
को हि तत्त्वेन तद्वेद ईशस्य चरितं शुभं । कृतवानिह रूपाणि देवदेवः पुरा किल ।
क्रीडते च यथा शर्वः प्रसीदति यथा च वै । हृदिस्थः सर्वभूतानां विश्वरूपो महेश्वरः ।
भक्तानामनुकम्पार्थं दर्शनञ्च यथाश्रुतं । मुनीनां ब्रुवतां दिव्यमीशानचरितं शुभं ।
कृतवान् यानि रूपाणि कथितानि दिवौकसैः । अनुग्रहार्थं विप्राणां शृणु वत्स समासतः ।
तानि ते कीर्त्तयिष्यामि यन्मां त्वं परिपृच्छसि । ५३०
॥ अम्बोवाच ॥ ब्रह्मविष्णुसुरेन्द्राणां रुद्रादित्याश्विनामपि । विश्वेषामपि देवानां वपुर्धारयते भवः ।
नराणां देवनारीणां तथा प्रेतपिशाचयोः । किरातशबराणाञ्च जलजानामनेकशः ।
करोति भगवान् रूपमाटव्यशबराण्यपि । कूर्मो मत्स्यस्तथा शङ्खः प्रवालाङ्कुरभूषणः ।
यक्षराक्षससर्पाणां दैत्यदानवयोरपि । वपुर्धारयते देवो भूयश्च बिलवासिनां ।
व्याघ्रसिंहमृगाणाञ्च तरक्ष्वृक्षपतत्रिणां । उलूकश्वशृगालानां रूपाणि कुरुतेऽपि च । ५३५
हंसकाकमयूराणां कृकलासकसारसां । रूपाणि च बलाकानां गृध्रचक्राङ्गयोरपि ।
करोति चाथ रूपाणि धारयत्यपि पर्वतान् । गोरूपश्च महादेवो हस्त्यश्वोष्ट्रखराकृतिः ।
छागशार्दूलरूपश्च अनेकमृगरूपधृक् । अण्डजानाञ्च दिव्यानां वपुर्धारयते भवः ।
दण्डी छत्री च कुण्डी च द्विजानां धारणस्तथा । षण्मुखो वै बहुमुखस्त्रिनेत्रो बहुशीर्षकः ।
अनेककटिपादश्च अनेकोदरवक्त्रधृक् । अनेकपाणिपार्श्वश्च अनेकगणसंवृतः । ५४०
ऋषिगन्धर्वरूपश्च सिद्धचारणरूपधृक् । भस्मपाण्डुरगात्रश्च चन्द्रार्द्धकृतभूषणः ।

अनेकरावसंघुष्टश्चानेकस्तुतिसंस्तुतः। सर्वभूतान्तकः शर्वः सर्वलोकप्रतिष्ठितः।
सर्वलोकान्तरात्मा च सर्वगः सर्ववाद्यपि। सर्वत्र भगवान् ज्ञेयो हृदिस्थः सर्वदेहिनाम्।
यो हि यं कामयेत्कामं यस्मिन्नर्थेऽर्च्यते पुनः। तत्सर्वं वेत्ति देवेशस्तं प्रपद्य यदीच्छसि।
नन्दते कुप्यते चापि तथा हुङ्कारयत्यपि। चक्री शूली गदापाणिर्मुसली खड्गपट्टिशी। ७५
भूधरो नागमौञ्जी च नागकुण्डलकुण्डली। नागयज्ञोपवीती च नागचर्मोत्तरच्छदः।
हसते गायते चैव नृत्यते च मनोहरम्। वादयत्यपि वाद्यानि विचित्राणि गणैर्वृतः।
वल्गते जृम्भते चैव रुदते रोदयत्यपि। उन्मत्तमत्तरूपञ्च भाषते चापि सुस्वरः।
अतीव हसते रौद्रस्त्रासयन्नयनैर्जनम्। जागर्त्ति चैव स्वपिति जृम्भते च यथासुखम्।
जपते जप्यते चैव तपते तप्यते पुनः। ददाति प्रतिगृह्णाति युञ्जते ध्यायतेऽपि च। ८०
वेदीमध्ये तथा यूपे गोष्ठमध्ये हुताशने। दृश्यतेऽदृश्यते चापि बालो वृद्धो युवा तथा।
क्रीडते ऋषिकन्याभिर्ऋषिपत्नीभिरेव च। ऊर्द्ध्वकेशो महाशेफो नग्नो विकृतलोचनः।
गौरः श्यामस्तथा कृष्णः पाण्डुरो धूमलोहितः। विकृताक्षो विशालाक्षो दिग्वासाः सर्व्ववासकः।
अरूपस्याद्यरूपस्य अतिरूपाद्यरूपिणः। अनाद्यन्तमजस्यान्तं वेत्स्यते कोऽस्य तत्त्वतः।
हृदि प्राणो मनो जीवो योगात्मा योगसंज्ञितः। ध्यानं तत्परमात्मा च भावग्राह्यो महेश्वरः। ८५
वादको गायनश्चैव सहस्रशतलोचनः। एकवक्त्रो द्विवक्त्रश्च त्रिवक्त्रोऽनेकवक्त्रकः।
तद्भक्तस्तद्गतो नित्यं तन्निष्ठस्तत्परायणः। भज पुत्र महादेवं ततः प्राप्स्यसि चेप्सितम्।
जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन्। मम भक्तिर्महादेवे नैष्ठिकी समपद्यत।
ततोऽहं तप आस्थाय तोषयामास शङ्करम्। एकं वर्षसहस्रन्तु वामाङ्गुष्ठाग्रविष्ठितः।
एकं वर्षशतञ्चैव फलाहारस्ततोऽभवम्। द्वितीयं शीर्णपर्णाशी तृतीयञ्चाम्बुभोजनः। ९०
शतानि सप्त चैवाहं वायुभक्षस्तदाभवम्। एवं वर्षसहस्रन्तु दिव्यमाराधितो मया।
ततस्तुष्टो महादेवः सर्व्वलोकेश्वरः प्रभुः। एकभक्त इति ज्ञात्वा जिज्ञासां कुरुते तदा।
शक्ररूपं स कृत्वा तु सर्व्वैर्देवगणैर्वृतः। सहस्राक्षस्तदा भूत्वा वज्रपाणिर्महायशाः।
सुधावदातं रक्ताक्षं स्तब्धकर्णं मदोत्कटम्। आवेष्टितकरं घोरं चतुर्दंष्ट्रं महागजम्।
समास्थितः स भगवान् दीप्यमानः स्वतेजसा। आजगाम किरीटी तु हारकेयूरभूषितः। ९५
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि। सेव्यमानोऽप्सरोभिश्च दिव्यगन्धर्व्वनादितः।
ततो मामाह देवेन्द्रस्तुष्टस्तेऽहं द्विजोत्तम। वरं वृणीष्व मत्तस्त्वं यत्ते मनसि वर्त्तते।
शक्रस्य तु वचः श्रुत्वा नाहं प्रीतिमनाभवम्। अब्रुवञ्च तदा कृष्ण देवराजमिदं वचः।
नाहं त्वत्तो वरं काङ्क्षे नान्यस्मादपि दैवतात्। महादेवादृते सौम्य सत्यमेतद्ब्रवीमि ते।
सत्यं सत्यं हि नः शक्र वाक्यमेतत्सुनिश्चितं। न यन्महेश्वरं मुक्त्वा कथान्या मम रोचते। १००
पशुपतिवचनाद्भवामि सद्यः कृमिरथ वा तरुरप्यनेकशाखः। अपशुपतिवरप्रसादजा मे त्रिभुवनराज्यविभूतिरप्यनिष्टा।

जन्म श्वपाकमध्येऽपि मेऽस्तु हरचरणवन्दनरतस्य । मा वानीश्वरभक्तो भवानि भवनेऽपि शक्रस्य ।
वाय्वम्बुभुजोऽपि सतो नरस्य दुःखक्षयः कुतस्तस्य । भवति हि सुरासुरगुरौ यस्य न विश्वेश्वरे भक्तिः ।
अलमन्याभिस्तेषां कथाभिरप्यन्यधर्मयुक्ताभिः । येषां न क्षणमपि रुचितो हरचरणस्मरणविच्छेदः ।
हरचरणनिरतमतिना भवितव्यमनार्जवं युगं प्राप्य । संसारभयं न भवति हरभक्तिरसायनं पीतम् । १७५
दिवसं दिवसार्द्धं वा मुहूर्तं वा क्षणं लवं । न ह्यलब्धप्रसादस्य भक्तिर्भवति शङ्करे ।
अपि कीटः पतङ्गो वा भवेयं शङ्कराज्ञया । न तु शक्र त्वया दत्तं त्रैलोक्यमपि कामये ।
श्वापि महेश्वरवचनाद्भवामि स हि नः परः कामः । त्रिदशगणराज्यमपि खलु नेच्छाम्यमहेश्वराज्ञप्तं ।
न नाकपृष्ठं न च देवराज्यं न ब्रह्मलोकं न च निष्कलत्वं । न सर्वकामानखिलान् वृणोमि हरस्य दासत्वमहं वृणोमि ।
यावच्छशाङ्कधवलामलबद्धमौलिर्न प्रीयते पशुपतिर्भगवान्ममेशः । तावज्जरामरणजन्मशताभिघातैर्दुःखानि देहविहितानि समुद्वहामि । १८०
दिवसकरशशाङ्कवह्निदीप्तं त्रिभुवनसारमपारमाद्यमेकं । अजरममरमप्रसाद्य रुद्रं जगति पुमानिह को लभेत शान्तिं ।
यदि नाम जन्म भूयो भवति मदीयैः पुनर्दोषैः । तस्मिंस्तस्मिन् जन्मनि भवे भवेन्मेऽक्षया भक्तिः ।
॥ शक्र उवाच ॥ कः पुनर्भवने हेतुरीशे कारणकारणे । येन शर्वादृतेऽन्यस्मात् प्रसादं नाभिकाङ्क्षसि ।
॥ उपमन्युरुवाच ॥ सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः । नित्यमेकमनेकं च वरं तस्माद्वृणीमहे ।
अनादिमध्यपर्यन्तं ज्ञानैश्वर्यमचिन्तितं । आत्मानं परमं यस्माद्वरं तस्माद्वृणीमहे । १८५
ऐश्वर्यं सकलं यस्मादनुत्पादितमव्ययं । अबीजाद्बीजसम्भूतं वरं तस्माद्वृणीमहे ।
तमसः परमं ज्योतिस्तपस्तद्वृत्तिनां परं । यं ज्ञात्वा नानुशोचन्ति वरं तस्माद्वृणीमहे ।
भूतभावनभावज्ञं सर्वभूताभिभावनं । सर्वगं सर्वदं देवं पूजयामि पुरन्दर ।
हेतुवादैर्विनिर्मुक्तं सांख्ययोगार्थदं परं । यमुपासन्ति तत्त्वज्ञा वरं तस्माद्वृणीमहे ।
मघवन्मघवात्मानं यं वदन्ति सुरेश्वरं । सर्वभूतगुरुं देवं वरं तस्माद्वृणीमहे । १९०
यः पूर्वमसृजद्देवं ब्रह्माणं लोकभावनं । अण्डमाकाशमापूर्य वरं तस्माद्वृणीमहे ।
अग्निरापोऽनिलः पृथ्वी खं बुद्धिश्च मनो महान् । स्रष्टा चैषां भवेद्योऽन्यो ब्रूहि कः परमेश्वरात् ।
मनो मतिरहङ्कारस्तन्मात्राणीन्द्रियाणि च । ब्रूहि चैषां भवेच्छक्र कोऽन्योऽस्ति परमः शिवात् ।
स्रष्टारं भुवनस्येह वदन्तीह पितामहं । आराध्य स तु देवेशमश्नुते महतीं श्रियं ।
भगवत्युत्तमैश्वर्यं ब्रह्मविष्णुपुरोगमं । विद्यते वै महादेवाद्ब्रूहि कः परमेश्वरात् । १९५
दैत्यदानवमुख्यानामाधिपत्यारिमर्दनात् । कोऽन्यः शक्नोति देवेशाद्दितेः सम्पादितुं सुतान् ।
दिक्कालसूर्यतेजांसि ग्रहवाय्विन्दुतारकाः । विद्धि ते ते महादेवाद्ब्रूहि कः परमेश्वरात् ।
अथोत्पत्तौ विनाशे वा यज्ञस्य त्रिपुरस्य च । दैत्यदानवमुख्यानामाधिपत्यारिमर्दनः ।
किं चात्र बहुभिः सूक्तैर्हेतुवादैः पुरन्दर । सहस्रनयनं दृष्ट्वा त्वामेव सुरसत्तम ।

गुह्यमन्त्रं परं यस्य तुष्टमभ्यधिकं शिवः । यस्तच्चक्रमिति ख्यातं सर्व्वलोकेषु शूलिनः ।
दारयेद्यो महीं कृत्स्नां शोषयेद्वा महोदधिम् । संहरेद्वा जगत्कृत्स्नं विसृष्टं शूलपाणिना ।
यौवनाश्वो हतो येन मान्धाता सबलः पुरा । चक्रवर्त्ती महातेजास्त्रिलोकविजयी नृपः । ८६०
महाबलो महावीर्य्यः शक्रतुल्यपराक्रमः । करस्थेनैव गोविन्द लवणस्येह रक्षसः ।
तच्छूलमतितीक्ष्णाग्रं सुभीमं लोमहर्षणम् । त्रिशिखां भ्रुकुटीं कृत्वा तर्ज्जमानमिव स्थितम् ।
विधूमं सार्च्चिषं कृष्ण कालसूर्य्यमिवोदितम् । सर्पहस्तमनिर्द्देश्यं पाशहस्तमिवान्तकम् ।
दृष्टवानस्मि गोविन्द तदस्त्रं रुद्रसन्निधौ । परशुस्तीक्ष्णधारश्च दत्तो रामस्य यः पुरा ।
महादेवेन तुष्टेन क्षत्रियाणां क्षयङ्करः । कार्त्तवीर्य्यो हतो येन चक्रवर्त्ती महामृधे । ८६५
त्रिःसप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता । जामदग्न्येन गोविन्द रामेणाक्लिष्टकर्म्मणा ।
दीप्तधारः सुरौद्रास्यः सर्पकण्ठाग्रवेष्टितः । अभवच्छूलिनोऽभ्याशे दीप्तवह्निशिखोपमः ।
असंख्येयानि चास्त्राणि तस्य दिव्यानि धीमतः । प्राधान्यतो मयैतानि कीर्त्तितानि तवानघ ।
सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः । दिव्यं विमानमास्थाय हंसयुक्तं मनोजवम् ।
वामपार्श्वगतश्चापि तथा नारायणः स्थितः । वैनतेयं समास्थाय शङ्खचक्रगदाधरः । ८७०
स्कन्दो मयूरमास्थाय स्थितो देव्याः समीपतः । शक्तिघण्टे समादाय द्वितीय इव पावकः ।
पुरस्ताच्चैव देवस्य नन्दिं पश्याम्यवस्थितम् । शूलं विष्टभ्य तिष्ठन्तं द्वितीयमिव शङ्करम् ।
स्वायम्भुवाद्या मनवो भृग्वाद्या ऋषयस्तथा । शक्राद्या देवताश्चैव सर्व्व एव समभ्ययुः ।
सर्व्वभूतगणाश्चैव मातरो विविधाश्रयाः । तेऽभिवाद्य महात्मानं परिवार्य्य समन्ततः ।
अस्तुवन् विविधैः स्तोत्रैर्म्महादेवं सुरास्तदा । ब्रह्मा भवं तदा स्तौषीद्रथन्तरमुदीरयन् । ८७५
ज्येष्ठसाम्ना च देवेशं जगौ नारायणस्तदा । गृणन् ब्रह्म परं शक्रः शतरुद्रियमुत्तमम् ।
ब्रह्मा नारायणश्चैव देवराजश्च कौशिकः । अशोभन्त महात्मानस्त्रयस्त्रय इवाग्नयः ।
तेषां मध्यगतो देवो रराज भगवाञ्छिवः । शरदभ्रविनिर्म्मुक्तः परिधिस्थ इवांशुमान् ।
अयुतानि च चन्द्रार्कानपश्यं दिवि केशव । ततोऽहमस्तुवन्देवं विश्वस्य जगतः पतिम् ।
॥ उपमन्युरुवाच ॥ नमो देवाधिदेवाय महादेवाय वै नमः । शक्ररूपाय शक्राय शक्रवेशधराय च । ८८०
नमस्ते वज्रहस्ताय पिङ्गलायारुणाय च । पिनाकपाणये नित्यं शङ्खशूलधराय च ।
नमस्ते कृष्णवासाय कृष्णाकुञ्चितमूर्द्धजे । कृष्णाजिनोत्तरीयाय कृष्णाष्टमिरताय च ।
शुक्लवर्णाय शुक्लाय शुक्लाम्बरधराय च । शुक्लभस्मावलिप्ताय शुक्लकर्म्मरताय च ।
नमोऽस्तु रक्तवर्णाय रक्ताम्बरधराय च । रक्तध्वजपताकाय रक्तस्रगनुलेपिने ।
नमोऽस्तु पीतवर्णाय पीताम्बरधराय च । नमोऽस्तु पीतछत्राय किरीटवरधारिणे । ८८५
अर्द्धहारार्द्धकेयूरअर्द्धकुण्डलकर्णिने । नमः पवनवेगाय नमो देवाय वै नमः ।
सुरेन्द्राय मुनीन्द्राय महेन्द्राय नमोऽस्तु ते । नमः पद्मार्द्धमालाय उत्पलैर्म्मिश्रिताय च ।

॥ श्रीवासुदेव उवाच ॥ एवं दत्त्वा वरान्देवो मम देवी च भारत । अन्तर्हितः क्षणे तस्मिन् सगणो भीमपूर्व्वज ।
एतदत्यद्भुतं पूर्व्वं ब्राह्मणायातितेजसे । उपमन्यौ मया कृत्स्नं व्याख्यातं पार्थिवोत्तम ।
नमस्कृत्वा तु स प्राह देवदेवाय सुव्रत । ७९९
॥ उपमन्युरुवाच ॥ नास्ति शर्व्वसमो देवो नास्ति शर्व्वसमा गतिः । नास्ति शर्व्वसमो दाने नास्ति शर्व्वसमो रणे ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि मेघवाहनोपाख्याने पञ्चदशोऽध्यायः ॥ १५ ॥
॥ उपमन्युरुवाच ॥ ऋषिरासीत्कृते तात तण्डिरित्येव विश्रुतः । दशवर्षसहस्राणि तेन देवः समाधिना ।
आराधितोऽभूद्भक्तेन तस्योदर्कं निशामय । स ददर्श महादेवमस्तौषीच्च स्तवैर्विभुं ।
इति तण्डिस्तपोयोगात्परमात्मानमव्ययं । चिन्तयित्वा महात्मानमिदमाह सुविस्मितः ।
यं पठन्ति सदा सांख्याश्चिन्तयन्ति च योगिनः । परं प्रधानं पुरुषमधिष्ठातारमीश्वरं । ८००
उत्पत्तौ च विनाशे च कारणं यं विदुर्ब्बुधाः । देवासुरमुनीनाञ्च परं यस्मान्न विद्यते ।
अजन्तमहमीशानमनादिनिधनं प्रभुं । अत्यन्तसुखिनन्देवमनघं शरणं व्रजे ।
एवं ब्रुवन्नेव तदा ददर्श तपसां निधिं । तमव्ययमनौपम्यमचिन्त्यं शाश्वतं ध्रुवं ।
निष्कलं सकलं ब्रह्म निर्गुणं गुणगोचरं । योगिनां परमानन्दमक्षरं मोक्षसंज्ञितं ।
मनोरिन्द्राग्निमरुतां विश्वस्य ब्रह्मणो गतिं । अग्राह्यमचलं शुद्धं बुद्धिग्राह्यं मनोमयं । ८०५
दुर्व्विज्ञेयमसंख्येयं दुष्प्रापमकृतात्मभिः । योनिं विश्वस्य जगतस्तमसः परतः परं ।
यः प्राणवन्तमात्मानं ज्योतिर्जीवस्थितं मनः । तन्देवन्दर्शनाकाङ्क्षी बहून्वर्षगणानृषिः ।
तपस्युग्रे स्थितो भूत्वा दृष्ट्वा तुष्टाव चेश्वरं ।
॥ तण्डिरुवाच ॥ पवित्राणां पवित्रस्त्वं गतिर्गतिमतांवर । अत्युग्रं तेजसां तेजस्तपसां परमन्तपः ।
विश्वावसुहिरण्याक्षपुरुहूतनमस्कृत । भूरिकल्याणद विभो परं सत्य नमोऽस्तु ते । ८१०
जातीमरणभीरूणां यतीनां यततां विभो । निर्व्वाणद सहस्रांशो नमोऽस्तु सुखाश्रय ।
ब्रह्मा शतक्रतुर्विष्णुर्विश्वेदेवा महर्षयः । न विदुस्त्वान्तु तत्त्वेन कुतो वेत्स्यामहे वयं ।
त्वत्तः प्रवर्त्तते सर्व्वं त्वयि सर्व्वं प्रतिष्ठितं । कालाख्यः पुरुषाख्यश्च ब्रह्माख्यश्च त्वमेव हि ।
तनवस्ते स्मृतास्तिस्रः पुराणज्ञैः सुरर्षिभिः । अधिपौरुषमध्यात्ममधिभूताधिदैवतं ।
अधिलोकाधिविज्ञानमधियज्ञस्त्वमेव हि । त्वां विदित्वात्मदेहस्थं दुर्व्विदं दैवतैरपि । ८१५
विद्वांसो यान्ति निर्मुक्ताः परं भावमनामयं । अनिच्छतस्तव विभो जन्ममृत्युरनेकशः ।
द्वारं त्वं स्वर्गमोक्षाणामाक्षेप्ता त्वं ददासि च । त्वं वै स्वर्गश्च मोक्षश्च कामः क्रोधस्त्वमेव च ।
सत्त्वं रजस्तमश्चैव अधश्चोर्द्ध्वं त्वमेव हि । ब्रह्मा भवश्च विष्णुश्च स्कन्देन्द्रौ सविता यमः ।
वरुणेन्दू मनुर्द्धाता विधाता त्वं धनेश्वरः । भूर्व्वायुः सलिलोऽग्निश्च खं वाग्बुद्धिः स्थितिर्मतिः ।
कर्म्म सत्यानृते चोभे त्वमेवास्ति च नास्ति च । इन्द्रियाणीन्द्रियार्थाश्च प्रकृतिभ्यः परं ध्रुवं । ८२०
विश्वाविश्वपरो भावश्चिन्त्याचिन्त्यस्त्वमेव हि । यच्चैतत्परमं ब्रह्म यच्च तत्परमं पदं ।

या गतिः सांख्ययोगानां स भवांस्तत्र संशयः । नूनमद्य कृतार्थाः स्म नूनं प्राप्ताः सतां गतिं ।
यां गतिं प्रार्थयन्तीह ज्ञाननिर्म्मलबुद्धयः । अस्मिं मूढाः स्म सुचिरमिमं कालमचेतसः ।
यन्न विद्मः परं देवं शाश्वतं यं विदुर्ब्बुधाः । सोऽयमासादितः साक्षाद्बहुभिर्जन्मभिर्मया ।
भक्तानुग्रहकृद्देवो यं ज्ञात्वामृतमश्नुते । देवासुरमुनीनान्तु यच्च गुह्यं सनातनं । १०६५
गुहायां निहितं ब्रह्म दुर्व्विज्ञेयं सुरैरपि । स एष भगवान्देवः सर्व्वकृत्सर्व्वतोमुखः ।
सर्व्वात्मा सर्व्वदर्शी च सर्व्वगः सर्व्ववेदिता । देहकृद्देहभृद्देही देहभुग्देहिनां गतिः ।
प्राणकृत्प्राणभृत्प्राणी प्राणदः प्राणिनां गतिः । अध्यात्मगतिरिष्टानां ध्यानिनामात्मवेदिनां ।
अपुनर्भवकामानां या गतिः सोऽयमीश्वरः । अयञ्च सर्व्वभूतानां शुभाशुभगतिप्रदः ।
अयञ्च जन्ममरणे विदध्यात्सर्व्वजन्तुषु । अयं च सिद्धिकामानामृषीणां सिद्धिदः प्रभुः । १०७०
भूराद्यान् सर्व्वभुवनानुत्पाद्य स दिवौकसः । दधाति देवस्तनुभिरष्टाभिर्यो बिभर्त्ति च ।
अतः प्रवर्त्तते सर्व्वमस्मिन् सर्व्वं प्रतिष्ठितं । अस्मिंश्च प्रलयं याति अयमेकः सनातनः ।
अयं स सत्यकामानां सत्यलोकः परं सतां । अपवर्गश्च मुक्तानां कैवल्यञ्चात्मवेदिनां ।
अयं ब्रह्मादिभिः सिद्धैर्गुहायां गोपितः प्रभुः । देवासुरमनुष्याणामप्रकाशो भवेदिति ।
तं त्वां देवासुरनरास्तत्त्वेन न विदुर्भवं । मोहिताः खल्वनेनैव हृदिस्थेनाप्रकाशिना । १०७५
ये चैनं प्रतिपद्यन्ते भक्तियोगेन भाविताः । तेषामेवात्मनात्मानं दर्शयत्येष हृच्छयः ।
यं ज्ञात्वा न पुनर्ज्जन्म मरणञ्चापि विद्यते । यं विदित्वा परं वेद्यं वेदितव्यं न विद्यते ।
यं लब्ध्वा परमं लाभं नाधिकं मन्यते बुधः । यां सूक्ष्मां परमां प्राप्तिं गच्छन्नव्ययमक्षयं ।
यं सांख्या गुणतत्त्वज्ञाः सांख्यशास्त्रविशारदाः । सूक्ष्मज्ञानरताः सूक्ष्मं ज्ञात्वा मुच्यन्ति बन्धनैः ।
यञ्च वेदविदो वेद्यं वेदान्ते च प्रतिष्ठितं । प्राणायामपरा नित्यं यं विशन्ति जपन्ति च । १०८०
ओङ्काररथमारुह्य ते विशन्ति महेश्वरं । अयं स देवयानानामादित्यो द्वारमुच्यते ।
अयञ्च पितृयानानां चन्द्रमा द्वारमुच्यते । एष काष्ठा दिशश्चैव संवत्सरयुगादि च ।
दिव्यादिव्यः परो लाभो अयने दक्षिणोत्तरे । एनं प्रजापतिः पूर्व्वमाराध्य बहुभिः स्तवैः ।
प्रजार्थं वरयामास नीललोहितसंज्ञितं । ऋग्भिर्यमनुशासन्ति तत्त्वे कर्म्मणि बह्वृचः ।
यजुर्भिर्यं त्रिधा वेद्यं जुह्वत्यध्वर्य्यवोऽध्वरे । सामभिर्यञ्च गायन्ति सामगाः शुद्धबुद्धयः । १०८५
ऋतं सत्यं परं ब्रह्म स्तुवन्त्याथर्व्वणा द्विजाः । यज्ञस्य परमा योनिः पतिश्चायं परः स्मृतः ।
रात्र्यहः श्रोत्रनयनः पक्षमासशिरोभुजः । ऋतुवीर्य्यस्तपोधैर्य्यो ह्यब्दगुह्योरुपादवान् ।
मृत्युर्य्यमो हुताशश्च कालः संहारवेगवान् । कालस्य परमा योनिः कालश्चायं सनातनः ।
चन्द्रादित्यौ सनक्षत्रौ ग्रहाश्च सह वायुना । ध्रुवः सप्तर्षयश्चैव भुवनाः सप्त एव च ।
प्रधानं महदव्यक्तं विशेषान्तं सवैकृतं । ब्रह्मादिस्तम्बपर्य्यन्तं भूतादिः सदसच्च यत् । १०९०
अष्टौ प्रकृतयश्चैव प्रकृतिभ्यश्च यः परः । अस्य देवस्य यद्भागं कृत्स्नं सम्परिवर्त्तते ।

एतत् परममानन्दं यत्तच्छाश्वतमेव च । एषा गतिर्विरक्तानामेष भावः परः सतां ।
एतत्पदमनुद्विग्नमेतद्ब्रह्म सनातनं । शास्त्रवेदाङ्गविदुषामेतद्ध्यानं पदं परं ।
इयं सा परमा काष्ठा इयं सा परमा कला । इयं सा परमा सिद्धिरियं सा परमा गतिः ।
इयं सा परमा शान्तिरियं सा निर्वृतिः परा । इयं तुष्टिरियं सिद्धिरियं श्रुतिरियं स्मृतिः । १०९५
यं प्राप्य कृतकृत्याः स्म इत्यमन्यन्त योगिनः । अध्यात्मगतिरिष्टानां विदुषां प्राप्तिरव्यया ।
यजतां कामयानानां मखैर्विपुलदक्षिणैः । या गतिर्यज्ञशीलानां सा गतिस्त्वं न संशयः ।
सम्यग्योगजपैः शान्तिनियमैर्देहतापनैः । तप्यतां या गतिर्देव परमा सा गतिर्भवान् ।
कर्म्मन्यासकृतानाञ्च विरक्तानां ततस्ततः । या गतिर्ब्रह्मसदने सा गतिस्त्वं सनातन ।
अपुनर्भवकामानां वैराग्ये वर्त्ततां च या । प्रकृतीनां लयानाञ्च सा गतिस्त्वं सनातन । ११००
ज्ञानविज्ञानयुक्तानां निरुपाख्या निरञ्जना । कैवल्या या गतिर्देव परमा सा गतिर्भवान् ।
वेदशास्त्रपुराणोक्ताः पञ्चैता गतयः स्मृताः । त्वत्प्रसादाद्धि लभ्यन्ते न लभ्यन्तेऽन्यथा विभो ।
इति तण्डिस्तपोराशिस्तुष्टावेशानमात्मना । जगौ च परमं ब्रह्म यत्पुरा लोककृज्जगौ ।
॥ उपमन्युरुवाच ॥ एवं स्तुतो महादेवस्तण्डिना ब्रह्मवादिना । उवाच भगवान् देव उमया सहितः प्रभुः ।
ब्रह्मा शतक्रतुर्व्विष्णुर्व्विश्वेदेवा महर्षयः । न विदुस्त्वामिति ततस्तुष्टः प्रोवाच तं शिवः । ११०५
॥ श्रीभगवानुवाच ॥ अक्षयश्चाव्ययश्चैव भविता दुःखवर्ज्जितः । यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ।
ऋषीणामभिगम्यश्च सूत्रकर्त्ता सुतस्तव । मत्प्रसादाद्द्विजश्रेष्ठ भविष्यति न संशयः ।
कं वा कामं ददाम्यद्य ब्रूहि यद्वत्स काङ्क्षसे । प्राञ्जलिः स उवाचेदं त्वयि भक्तिर्दृढास्तु मे ।
॥ उपमन्युरुवाच ॥ एतान्दत्त्वा वरान्देवो वन्द्यमानः सुरर्षिभिः । स्तूयमानश्च विबुधैस्तत्रैवान्तरधीयत ।
अन्तर्हिते भगवति सानुगे यादवेश्वर । ऋषिराश्रममागम्य ममैतत्प्रोक्तवानिह । १११०
यानि च प्रथितान्यादौ तण्डिराख्यातवान्मम । नामानि मानवश्रेष्ठ तानि त्वं शृणु सिद्धये ।
दश नामसहस्राणि देवेष्वाह पितामहः । सर्व्वस्य शास्त्रेषु तथा दश नामशतानि वै ।
गुह्यानीमानि नामानि तण्डिर्भगवतोऽच्युत । देवप्रसादाद्देवेश पुरा प्राह महात्मनः ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि मेघवाहनोपाख्याने षोडशोऽध्यायः ॥ १६ ॥

॥ वासुदेव उवाच ॥ ततः स प्रयतो भूत्वा मम तात युधिष्ठिर । प्राञ्जलिः प्राह विप्रर्षिर्नामसङ्ग्रहमादितः ।
॥ उपमन्युरुवाच ॥ ब्रह्मप्रोक्तैरृषिप्रोक्तैर्वेदवेदाङ्गसम्भवैः । सर्व्वलोकेषु विख्यातं स्थाणुं स्तोष्यामि नामभिः । १११५
महद्भिर्व्विहितैः सत्यैः सिद्धैः सर्व्वार्थसाधकैः । ऋषिणा तण्डिना भक्त्या कृतैर्व्वेदकृतात्मना ।
यथोक्तैः साधुभिः ख्यातैर्मुनिभिस्तत्त्वदर्शिभिः । प्रवरं प्रथमं स्वर्ग्यं सर्व्वभूतहितं शुभं ।
श्रुतैः सर्व्वत्र जगति ब्रह्मलोकावतारितैः । सत्यैस्तत्परमं ब्रह्म ब्रह्मप्रोक्तं सनातनं ।
वक्ष्ये यदुकुलश्रेष्ठ शृणुष्वावहितो मम । वरयैनं भवं देवं भक्तस्त्वं परमेश्वरं ।
तेन ते श्रावयिष्यामि यत्तद्ब्रह्म सनातनं । न शक्यं विस्तरात्कृत्स्नं वक्तुं सर्व्वस्य केनचित । ११२०

युक्तेनापि विभूतीनामपि वर्षशतैरपि । यस्यादिं मध्यमं नान्तं सुरैरपि न गम्यते ।
कस्तस्य शक्नुयाद्वक्तुं गुणान् कार्त्स्न्येन माधव । किन्तु देवस्य महतः संक्षिप्तार्थपदाक्षरं ।
शक्तितश्चरितं वक्ष्ये प्रसादात्तस्य धीमतः । अप्राप्य तु ततोऽनुज्ञां न शक्यः स्तोतुमीश्वरः ।
यदा तेनाभ्यनुज्ञातः स्तुतो वै स तदा मया । अनादिनिधनस्याहं जगद्योनेर्महात्मनः ।
नाम्नां किञ्चित्समुद्देशं वक्ष्याम्यव्यक्तयोनिनः । वरदस्य वरेण्यस्य विश्वरूपस्य धीमतः । ११३५
शृणु नाम्नां चयं कृष्ण यदुक्तं पद्मयोनिना । दश नाम सहस्राणि यान्याह प्रपितामहः ।
तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतं । गिरेः सारं यथा हेम पुष्पसारं यथा मधु ।
घृतात्सारं यथा मण्डस्तथैतत्सारमुद्धृतं । सर्व्वपापापहमिदं चतुर्व्वेदसमन्वितं ।
प्रयत्नेनाधिगन्तव्यं धार्य्यञ्च प्रयतात्मना । माङ्गल्यं पौष्टिकञ्चैव रक्षोघ्नं पावनं महत् ।
इदं भक्ताय दातव्यं श्रद्दधानास्तिकाय च । नाश्रद्दधानरूपाय नास्तिकायाजितात्मने । ११४०
यश्चाभ्यसूयते देवं कारणात्मानमीश्वरं । स कृष्ण नरकं याति सह पूर्व्वैः सहात्मजैः ।
इदं ध्यानमिदं योगमिदं ध्येयमनुत्तमं । इदं जप्यमिदं ज्ञानं रहस्यमिदमुत्तमं ।
यं ज्ञात्वा अन्तकालेऽपि गच्छेत परमां गतिं । पवित्रं मङ्गलं मेध्यं कल्याणमिदमुत्तमं ।
इदं ब्रह्मा पुरा कृत्वा सर्व्वलोकपितामहः । सर्व्वस्तवानां राजत्वे दिव्यानां समकल्पयत् ।
तदाप्रभृति चैवायमीश्वरस्य महात्मनः । स्तवराज इति ख्यातो जगत्यमरपूजितः । ११४५
ब्रह्मलोकादयं स्वर्गे स्तवराजोऽवतारितः । यतस्तण्डिः पुरा प्राप तेन तण्डिकृतोऽभवत् ।
स्वर्गाच्चैवात्र भूर्लोकं तण्डिना ह्यवतारितः । सर्व्वमङ्गलमाङ्गल्यं सर्व्वपापप्रणाशनं ।
निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवं । ब्रह्मणामपि यद्ब्रह्म पराणामपि यत्परं ।
तेजसामपि यत्तेजस्तपसामपि यत्तपः । शान्तानामपि यः शान्तो द्युतीनामपि या द्युतिः ।
दान्तानामपि यो दान्तो धीमतामपि या च धीः । देवानामपि यो देव ऋषीणामपि यस्त्वृषिः ११५०
यज्ञानामपि यो यज्ञः शिवानामपि यः शिवः । रुद्राणामपि यो रुद्रः प्रभा प्रभवतामपि ।
योगिनामपि यो योगी कारणानाञ्च कारणं । यतो लोकाः सम्भवन्ति न भवन्ति यतः पुनः ।
सर्व्वभूतात्मभूतस्य हरस्यामिततेजसः । अष्टोत्तरसहस्रन्तु नाम्नां शर्व्वस्य मे शृणु ।
यच्छ्रुत्वा मनुजव्याघ्र सर्व्वान् कामानवाप्स्यसि । स्थिरः स्थाणुः प्रभुर्भीमः प्रवरो वरदो वरः ।
सर्व्वात्मा सर्व्वविख्यातः सर्व्वः सर्व्वकरो भवः । जटी चर्म्मी शिखण्डी च सर्व्वाङ्गः सर्व्वभावनः । ११५५
हरश्च हरिणाक्षश्च सर्व्वभूतहरः प्रभुः । प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः ।
श्मशानवासी भगवान् खचरो गोचरोऽर्द्दनः । अभिवाद्यो महाकर्म्मा तपस्वी भूतभावनः ।
उन्मत्तवेशप्रच्छन्नः सर्व्वलोकप्रजापतिः । महारूपो महाकायो वृषरूपो महायशाः ।
महात्मा सर्व्वभूतात्मा विश्वरूपो महाहनुः । लोकपालोऽन्तर्हितात्मा प्रसादो हयगर्द्दभिः ।
पवित्रञ्च महांश्चैव नियमो नियमाश्रितः । सर्व्वकर्म्मा स्वयम्भूत आदिरादिकरो निधिः । ११६०

आकाशनिर्विरूपश्च निपाती ह्यवशः खगः । रौद्ररूपोंऽशुरादित्यो बहुरश्मिः सुवर्चसी ।
वसुवेगो महावेगो मनोवेगो निशाचरः । सर्ववासी श्रियावासी उपदेशकरोऽकरः ।
मुनिरात्मनिरालोकः सम्भग्नश्च सहस्रदः । पक्षी च पक्षरूपश्च अतिदीप्तो विशाम्पतिः ।
उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः । वामदेवश्च वामश्च प्राग्दक्षिणश्च वामनः ।
सिद्धयोगी महर्षिश्च सिद्धार्थः सिद्धसाधकः । भिक्षुश्च भिक्षुरूपश्च विपणो मृदुरव्ययः । ११८५
महासेनो विशाखश्च षष्टिभागो गवाम्पतिः । वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च
वृत्तावृत्तकरस्तालो मधुर्मधुकलोचनः । वाचस्पत्यो वाजसनो नित्यमाश्रमपूजितः ।
ब्रह्मचारी लोकचारी सर्वचारी विचारवित् । ईशान ईश्वरः कालो निशाचारी पिनाकधृक् ।
निमित्तस्थो निमित्तञ्च नन्दिर्नन्दिकरो हरिः । नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्द्धनः ।
भगहारी निहन्ता च कालो ब्रह्मा पितामहः । चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च । ११९०
लिङ्गाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः । बीजाध्यक्षो बीजकर्त्ता अध्यात्मानुगतो बलः ।
इतिहासः सकल्पश्च गौतमोऽथ निशाकरः । दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः कलिः ।
लोककर्त्ता पशुपतिर्महाकर्त्ता ह्यनौषधः । अक्षरं परमं ब्रह्म बलवच्छक्र एव च ।
नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो गतागतः । बहुप्रसादः सुस्वप्नो दर्पणोऽथ त्वमित्रजित् ।
वेदकारो मन्त्रकारो विद्वान् समरमर्द्दनः । महामेघनिवासी च महाघोरो वशीकरः । ११९५
अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः । वृषणः शङ्करो नित्यं वर्चस्वी धूमकेतनः ।
नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः । स्वस्तिदः स्वस्तिभावश्च भागी भागकरो लघुः ।
उत्सङ्गश्च महाङ्गश्च महागर्भपरायणः । कृष्णवर्णः सुवर्णश्च इन्द्रियं सर्वदेहिनाम् ।
महापादो महाहस्तो महाकायो महायशाः । महामूर्द्धा महामात्रो महानेत्रो निशालयः ।
महान्तको महाकर्णो महोष्ठश्च महाहनुः । महानासो महाकम्बुर्महाग्रीवः श्मशानभाक् । १२००
महावक्षा महोरस्को ह्यन्तरात्मा मृगालयः । लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः ।
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः । महानखो महारोमा महाकेशो महाजटः ।
प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः । स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः ।
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः । गण्डली मेरुधामा च देवाधिपतिरेव च ।
अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः । यजुःपादभुजो गुह्यः प्रकाशो जङ्गमस्तथा । १२०५
अमोघार्थः प्रसादश्च अभिगम्यः सुदर्शनः । उपकारः प्रियः सर्वः कनकः काञ्चनच्छविः ।
नाभिर्नन्दिकरो भावः पुष्करस्थपतिः स्थिरः । द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः ।
नक्तं कलिश्च कालश्च मकरः कालपूजितः । सगणो गणकारश्च भूतवाहनसारथिः ।
भस्मशयो भस्मगोप्ता भस्मभूतस्तरुर्गणः । लोकपालस्तथा लोको महात्मा सर्वपूजितः ।
शुक्लस्त्रिशुक्लः सम्पन्नः शुचिर्भूतनिषेवितः । आश्रमस्थः क्रियावस्थो विश्वकर्ममतिर्वरः । १२१०

विश्वेशश्च विश्वबाहुर्मणिविद्धो जटाधरः । बिन्दुर्विसर्गः सुमुखः शरः सर्व्वायुधः सहः ।
निवेदनः सुखाजातः सुगन्धारो महाधनुः । गन्धपाली च भगवानुत्थानः सर्व्वकर्म्मणां ।
मन्थानो बहुलोवायुः सकलः सर्व्वलोचनः । तलस्तालःकरस्थाली ऊर्द्धसंहननो महान् ।
छत्रं सुच्छत्रो विख्यातो लोकः सर्व्वाश्रयः क्रमः । मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्व्वणः ।
हर्य्यक्षः ककुभो वज्री शतजिह्वः सहस्रपात् । सहस्रमूर्द्धा देवेन्द्रः सर्व्वदेवमयो गुरुः । ११७५
सहस्रबाहुः सर्व्वाङ्गः शरण्यः सर्व्वलोककृत् । पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ।
ब्रह्मदण्डविनिर्म्माता शतघ्नीपाशशक्तिमान् । पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ।
गभस्तिर्ब्रह्मकृत् ब्रह्मा ब्रह्मवित् ब्राह्मणो गतिः । अनन्तरूपो नैकात्मा तिग्मतेजाः स्वयम्भुवः ।
ऊर्द्धगात्मा पशुपतिर्व्वातरंहा मनोजवः । चन्दनी पद्मनालाग्रः सुरभ्युत्तरणो नरः ।
कर्णिकारमहास्रग्वी नीलमौलिः पिनाकधृक् । उमापतिरुमाकान्तो जाह्नवीधृगुमाधवः । ११८०
वरो वराहो वरदो वरेशः सुमहास्वनः । महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ।
पीतात्मा परमात्मा च प्रयतात्मा प्रधानधृक् । सर्व्वपार्श्वमुखस्त्र्यक्षो धर्म्मसाधारणो वरः ।
चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषेश्वरः । साध्यर्षिर्व्वसुरादित्यो विवस्वान् सविता मृतः ।
व्यासः सर्गः सुसंक्षेपो विस्तरः पर्य्ययो नरः । ऋतुः संवत्सरो मासः पक्षः संख्यासमापनः ।
कलाः काष्ठा लवा मात्रा मुहूर्त्ताहः क्षपाः क्षणाः । विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्तु निर्गमः । ११८५
सदसद्व्यक्तमव्यक्तं पिता माता पितामहः । स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपं ।
निर्व्वाणं ह्लादनश्चैव ब्रह्मलोकः परा गतिः । देवासुरविनिर्म्माता देवासुरपरायणः ।
देवासुरगुरुर्द्देवो देवासुरनमस्कृतः । देवासुरमहामात्रो देवासुरगणाश्रयः ।
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः । देवातिदेवो देवर्षिर्द्देवासुरवरप्रदः ।
देवासुरेश्वरो विश्वो देवासुरमहेश्वरः । सर्व्वदेवमयोऽचिन्त्यो देवतात्मात्मसम्भवः । ११९०
उद्भित्त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः । ईड्यो हस्तीश्वरो व्याघ्रो देवसिंहो नरर्षभः ।
विबुधोऽग्रवरः सूक्ष्मः सर्व्वदेवस्तपोमयः । सुयुक्तः शोभनो वज्री प्रासानां प्रभवोऽव्ययः ।
गुहः कान्तो निजः सर्गः पवित्रं सर्व्वपावनः । शृङ्गी शृङ्गप्रियो बभ्रूराजराजो निरामयः ।
अभिरामः सुरगणो विरामः सर्व्वसाधनः । ललाटाक्षो विश्वदेवो हरिणो ब्रह्मवर्च्चसः ।
स्थावराणां पतिश्चैव नियमेन्द्रियवर्द्धनः । सिद्धार्थः सिद्धभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः । ११९५
व्रताधिपः परं ब्रह्म भक्तानां परमा गतिः । विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्द्धनो जगत् ।
यथा प्रधानं भगवानिति भक्त्या स्तुतो मया । यं न ब्रह्मादयो देवा विदुस्तत्त्वेन नर्षयः ।
स्तोतव्यमर्च्यं वन्द्यञ्च कः स्तोष्यति जगत्पतिं । भक्त्या त्वेवं पुरस्कृत्य मया यज्ञपतिर्व्विभुः ।
ततोऽभ्यनुज्ञां सम्प्राप्य स्तुतो मतिमताम्वरः । शिवमेभिः स्तुवन्देवं नामभिः पुष्टिवर्द्धनैः ।
नित्ययुक्तः शुचिर्भूतः प्राप्नोत्यात्मानमात्मना । एतद्धि परमं ब्रह्म परं ब्रह्माधिगच्छति । १२००

ऋषयश्चैव देवाश्च स्तुवन्त्येतेन तत्परं । स्तूयमानो महादेवः स्तूयते नियतात्मभिः ।
भक्तानुकम्पी भगवानात्मसंस्थाकरो विभुः । तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ।
आस्तिकाः श्रद्दधानाश्च बहुभिर्जन्मभिः स्तवैः । भक्त्या ह्यनन्यमीशानं परं देवं सनातनं ।
कर्म्मणा मनसा वाचा भावेनामिततेजसः । शयाना जाग्रमाणाश्च व्रजन्नुपविशंस्तथा ।
उन्मिषन्निमिषंश्चैव चिन्तयन्तः पुनः पुनः । शृण्वन्तः श्रावयन्तश्च कथयन्तश्च ते भवं ।    ११७५
स्तुवन्तः स्तूयमानाश्च तुष्यन्ति च रमन्ति च । जन्मकोटिसहस्रेषु नानासंसारयोनिषु ।
जन्तोर्व्विगतपापस्य भवे भक्तिः प्रजायते । उत्पन्ना च भवे भक्तिरनन्या सर्व्वभावतः ।
भाविनः कारणे चास्य सर्व्वयुक्तस्य सर्व्वथा । एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्यते ।
निर्व्विघ्ना निश्चला रुद्रे भक्तिरव्यभिचारिणी । तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणां ।
येन यान्ति परां सिद्धिं तद्भावगतचेतसः । ये सर्व्वभावानुगताः प्रपद्यन्ते महेश्वरं ।    ११८०
प्रपन्नवत्सलो देवः संसारात्तान् समुद्धरेत् । एवमन्ये विकुर्व्वन्ति देवाः संसारमोचनं ।
मनुष्याणामृते देवं नान्या शक्तिस्तपोबलं । इति तेनेन्द्रकल्पेन भगवान् सदसत्पतिः ।
कृत्तिवासाः स्तुतः कृष्ण तण्डिना शुभबुद्धिना । स्तवमेतं भगवतो ब्रह्मा स्वयमधारयत् ।
गीयते च स बुध्येत ब्रह्मा शङ्करसन्निधौ । इदं पुण्यं पवित्रञ्च सर्व्वदा पापनाशनं ।
योगदं मोक्षदञ्चैव स्वर्गदं तोषदन्तथा । एवमेतत्पठन्ते य एकभक्त्या तु शङ्करे ।    ११८५
या गतिः साङ्ख्ययोगानां व्रजन्ते तां गतिं तदा । स्तवमेनं प्रयत्नेन सदा रुद्रस्य सन्निधौ ।
अब्दमेकं चरेद्भक्तः प्राप्नुयादीप्सितं फलं । एतद्रहस्यं परमं ब्रह्मणो हृदि संस्थितं ।
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे । मृत्युः प्रोवाच रुद्रेभ्यो रुद्रेभ्यस्तण्डिमागमत् ।
महता तपसा प्राप्तस्तण्डिना ब्रह्मसद्मनि । तण्डिः प्रोवाच शुक्राय गौतमाय च भार्गवः ।
वैवस्वताय मनवे गौतमः प्राह माधव । नारायणाय साध्याय मनुरिष्टाय धीमते ।    ११९०
यमाय प्राह भगवान्साध्यो नारायणोऽच्युतः । नाचिकेताय भगवानाह वैवस्वतो यमः ।
मार्कण्डेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत । मार्कण्डेयान्मया प्राप्तो नियमेन जनार्द्दन ।
तवाप्यहममित्रघ्न स्तवं दद्यां ह्यविश्रुतं । स्वर्ग्यमारोग्यमायुष्यं धन्यं वेदेन संमितं ।
नास्य विघ्नं विकुर्व्वन्ति दानवा यक्षराक्षसाः । पिशाचा यातुधाना वा गुह्यका भुजगा अपि ।
यः पठेत शुचिः पार्थ ब्रह्मचारी जितेन्द्रियः । अभग्नयोगो वर्षन्तु सोऽश्वमेधफलं लभेत् ।    ११९५
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिक पर्व्वणि महादेवसहस्रनामस्तोत्रे सप्तदशोऽध्यायः ॥ १७ ॥
॥ वैशम्पायन उवाच ॥ महायोगी ततः प्राह कृष्णद्वैपायनो मुनिः । पठस्व पुत्र भद्रन्ते प्रीयतां ते महेश्वरः ।
पुरा पुत्र मया मेरौ तप्यता परमं तपः । पुत्रहेतोर्म्महाराज स्तव एषोऽनुकीर्त्तितः ।
लब्धवानीप्सितान् कामानहं वै पाण्डुनन्दन । तथा त्वमपि सर्व्वाद्धि सर्व्वान् कामानवाप्स्यसि ।
कपिलश्च तथा प्राह साङ्ख्यर्षिर्देवसम्मतः । मया जन्मान्यनेकानि भक्त्या चाराधितो भवः ।

प्रीतश्च भगवान् ज्ञानं ददौ मम भवान्तकः । [illegible] । १२००
आलम्बायन इत्येवं विश्रुतः करुणात्मकः । मया गोकर्णमासाद्य तपस्तप्ता शतं समाः ।
अयोनिजानां दान्तानां धर्म्मज्ञानां सुवर्चसां । अजराणामदुःखानां शतवर्षसहस्रिणां ।
लब्धं पुत्त्रशतं शर्व्वात्पुरा पाण्डुनृपात्मज । वाल्मीकिश्चाह भगवान् युधिष्ठिरमिदं वचः ।
विवादे साग्निमुनिभिर्ब्रह्मघ्नो वै भवानिति । उक्तः क्षणेन चाविष्टस्तेनाधर्म्मेण भारत ।
सोऽहमीशानमनघममोघं शरणं गतः । मुक्तश्चास्मि ततः पापैस्ततो दुःखविनाशनः । १२०५
आह मां त्रिपुरघ्नो वै यशस्तेऽग्र्यं भविष्यति । जामदग्न्यश्च कौन्तेयमाह धर्म्मभृतां वर ।
ऋषिमध्ये स्थितः प्राह ज्वलन्निव दिवाकरः । पितृविप्रवधेनाहमार्त्तो वै पाण्डवाग्रज ।
शुचिर्भूत्वा महादेवं गतोऽस्मि शरणं नृप । नामभिश्चास्तुवं देवं ततस्तुष्टोऽभवद्भवः ।
परशुञ्च ददौ देवो दिव्यान्यस्त्राणि चैव मे । पापञ्च ते न भविता अजेयश्च भविष्यसि ।
न ते प्रभविता मृत्युरजरश्च भविष्यसि । आह मां भगवानेवं शिखण्डी शिवविग्रहः । १२१०
तदवाप्तञ्च मे सर्व्वं प्रसादात्तस्य धीमतः । विश्वामित्रस्तदोवाच क्षत्त्रियोऽहं तदाभवं । *
ब्राह्मणोऽहं भवामीति मया चाराधितो हरः । तत्प्रसादान्मया प्राप्तं ब्राह्मण्यं दुर्लभं महत् । *
असितो देवलश्चैव प्राह पाण्डुसुतं नृपं । शापाच्छक्रस्य कौन्तेय विभो धर्म्मोऽनशन्महान् ।
तन्मे धर्म्मं यशश्चाग्र्यमायुश्चैवाददत्प्रभुः । ऋषिर्गृत्समदो नाम शक्रस्य दयितः सखा ।
प्राहाजमीढं भगवान् बृहस्पतिसमद्युतिः । वसिष्ठो नाम भगवांश्चाक्षुषस्य मनोः सुतः । १२१५
शतक्रतोरचिन्त्यस्य सत्रे वर्षसहस्रके । वर्त्तमानेऽब्रवीद्वाक्यं साम्नि ह्युच्चारिते मया ।
रथन्तरे द्विजश्रेष्ठ न सम्यगिति वर्त्तते । समीक्षस्व पुनर्बुद्ध्या पापं त्यक्त्वा द्विजोत्तम ।
अयज्ञवाहिनं पापमकार्षीस्त्वं सुदुर्म्मते । एवमुक्त्वा महाक्रोधः प्राह रुष्टः पुनर्व्वचः ।
प्रज्ञया रहितो दुःखी नित्यभीतो वनेचरः । दशवर्षसहस्राणि दशाष्टौ च शतानि च ।
नष्टपानीयपवने मृगैरन्यैश्च वर्ज्जिते । अयज्ञीयद्रुमे देशे रुरुसिंहनिषेविते । १२२०
भविता त्वं मृगः क्रूरो महादुःखसमन्वितः । तस्य वाक्यस्य निधने पार्थ जातो ह्यहं मृगः ।
ततो मां शरणं प्राप्तं प्राह योगी महेश्वरः । अजरश्चामरश्चैव भविता दुःखवर्ज्जितः ।
साम्यं समस्तु ते सौख्यं युवयोर्वर्द्धतां क्रतुः । अनुग्रहानेवमेष करोति भगवान् प्रभुः ।
परं धाता विधाता च सुखदुःखे च सर्व्वदा । अचिन्त्य एष भगवान् कर्म्मणा मनसा गिरा ।
न मे तात युधिश्रेष्ठ विद्यया पण्डितः समः । वासुदेवस्तदोवाच पुनर्म्मतिमतांवरः । १२२५
सुवर्णाक्षो महादेवस्तपसा तोषितो मया । ततोऽथ भगवानाह प्रीतो मां वै युधिष्ठिर ।
अर्थात्प्रियतरः कृष्ण मत्प्रसादाद्भविष्यसि । अपराजितश्च युद्धेषु तेजश्चैवानलोपमं ।
एवं सहस्रशश्चान्यान् महादेवो वरं ददौ । मणिमन्थेऽथ शैले वै पुरा संपूजितो मया ।
वर्षायुतसहस्राणि सहस्रशतमेव च । ततः मां भगवान् प्रीत इदं वचनमब्रवीत् ।

वरं वृणीष्व भद्रन्ते वरदोऽस्मि तवानघ । ततः प्रणम्य शिरसा इदं वचनमब्रुवं । १११०
यदि प्रीतो महादेवो भक्त्या परमया विभुः । नित्यकालं तवेशान भक्तिर्भवतु मे स्थिरा ।
एवमस्त्विति भगवांस्तत्रोक्त्वाऽन्तरधीयत ।
॥ जैगीषव्य उवाच ॥ ममाष्टगुणमैश्वर्य्यं दत्तं भगवता पुरा । यत्नेनान्येन बलिना वाराणस्यां युधिष्ठिर ।
॥ गर्ग उवाच ॥ चतुःषष्ट्यङ्गमददत्कालज्ञानं ममाद्भुतं । सरस्वत्यास्तटे तुष्टो मनोयज्ञेन पाण्डव ।
तुल्यं मम सहस्रन्तु सुतानां ब्रह्मवादिनां । आयुश्चैव सपुत्रस्य संवत्सरशतायुतं । १११५
॥ पराशर उवाच ॥ प्रसाद्येह पुरा शर्व्वं मनसाऽचिन्तयं नृप । महातपा महातेजा महायोगी महायशाः ।
वेदव्यासः श्रियावासो ब्रह्मण्यः करुणान्वितः । अप्यसावीप्सितः पुत्रो मम स्याद्वै महेश्वरात् ।
इति मत्वा हृदि मतं प्राह मां सुरसत्तमः । मयि सम्भावना यास्ति फलात् कृष्णो भविष्यति ।
सावर्णस्य मनोः सर्गे सप्तर्षिश्च भविष्यति । वेदानाञ्च स वै व्यस्ता कुरुवंशकरस्तथा ।
इतिहासस्य कर्त्ता च पुत्रस्ते जगतो हितः । भविष्यति महेन्द्रस्य दयितः स महामुनिः । ११२०
अजरश्चामरश्चैव पराशर सुतस्तव । एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।
युधिष्ठिर महायोगी वीर्य्यवानक्षयोऽव्ययः ।
॥ माण्डव्य उवाच ॥ अचौरश्चौरशङ्कायां शूले भिन्नो ह्यहं तदा । तत्रस्थेन स्तुतो देवः प्राह मां वै महेश्वरः ।
मोक्षं प्राप्स्यसि शूलाच्च जीविष्यसि समार्बुदं । रुजा शूलकृता चैव न ते विप्र भविष्यति ।
आधिभिर्व्याधिभिश्चैव वर्ज्जितस्त्वं भविष्यसि । पादाच्चतुर्थात्सम्भूत आत्मा यस्मान्मुने तव । ११२५
त्वं भविष्यस्यनुपमो जन्म वै सफलं कुरु । तीर्थाभिषेकं सकलं त्वमविघ्नेन चाप्स्यसि ।
स्वर्गं चैवाक्षयं विप्र विदधामि तवोर्ज्जितं । एवमुक्त्वा तु भगवान् वरेण्यो वृषवाहनः ।
महेश्वरो महाराज कृत्तिवासा महाद्युतिः । सगणो दैवतश्रेष्ठस्तत्रैवान्तरधीयत ।
॥ गालव उवाच ॥ विश्वामित्राभ्यनुज्ञातो ह्यहं पितरमागतः । अब्रवीन्मां ततो माता दुःखिता रुदती भृशं ।
कौशिकेनाभ्यनुज्ञातं पुत्रं वेदविभूषितं । न तात तरुणं दान्तं पिता त्वां पश्यतेऽनघ । ११३०
श्रुत्वा जनन्या वचनं निराशो गुरुदर्शने । नियतात्मा महादेवमपश्यं सोऽब्रवीच्च मां ।
पिता माता च ते त्वञ्च पुत्र मृत्युविवर्ज्जिताः । भविष्यन्ति विश क्षिप्रं द्रष्टास्यसि पितरं क्षये ।
अनुज्ञातो भगवता गृहं गत्वा युधिष्ठिर । अपश्यं पितरं तात इष्टिं कृत्वा विनिःसृतं ।
उपस्पृश्य गृहीत्वेध्मं कुशांश्च शरणाद्गुरून् । तान् विसृज्य च मां प्राह पिता साश्रुविलोचनः ।
प्रणमन्तं परिष्वज्य मूर्द्ध्न्युपाघ्राय पाण्डव । दिष्ट्या दृष्टोऽसि मे पुत्र कृतविद्य इहागतः । ११३५
॥ वैशम्पायन उवाच ॥ एतान्यत्यद्भुतान्येव कर्म्माण्यथ महात्मनः । प्रोक्तानि मुनिभिः श्रुत्वा विस्मयामास पाण्डवः ।
ततः कृष्णोऽब्रवीद्वाक्यं पुनर्म्मतिमतां वरः । युधिष्ठिरं धर्म्मनिधिं पुरुहूतमिवेश्वरः ।
॥ वासुदेव उवाच ॥ उपमन्युर्म्मयि प्राह तपन्निव दिवाकरः । अशुभैः पापकर्म्माणो ये नराः कलुषीकृताः ।
ईशानं न प्रपद्यन्ते तमोराजसवृत्तयः । ईश्वरं सम्प्रपद्यन्ते द्विजा भावितभावनाः ।

सर्व्वथा वर्त्तमानोऽपि यो भक्तः परमेश्वरे । सदृशोऽरण्यवासानां मुनीनां भावितात्मनां । ११०

ब्रह्मत्वं केशवत्वं वा शक्रत्वं वा सुरैः सह । त्रैलोक्यस्याधिपत्यं वा तुष्टो रुद्रः प्रयच्छति ।

मनसाऽपि शिवं तात ये प्रपद्यन्ति मानवाः । विधूय सर्व्वपापानि देवैः सह वसन्ति ते ।

भित्त्वा भित्त्वा च कूलानि हत्वा सर्व्वमिदं जगत् । यजेद्देवं विरूपाक्षं न स पापेन लिप्यते ।

सर्व्वलक्षणहीनोऽपि युक्तो वा सर्व्वपातकैः । सर्व्वं नुदति तत्पापं भावयञ्छिवमात्मना ।

कीटपक्षिपतङ्गानां तिरश्चामपि केशव । महादेवप्रपन्नानां न भयं विद्यते क्वचित् । ११५

एवमेव महादेवं भक्ता ये मानवा भुवि । न ते संसारवशगा इति मे निश्चिता मतिः ।

ततः कृष्णोऽब्रवीद्वाक्यं धर्म्मपुत्रं युधिष्ठिरं ।

॥ विष्णुरुवाच ॥ आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो वसवोऽथ विश्वे । धाताऽर्य्यमा शुक्रबृहस्पती च रुद्राः ससाध्या वरुणोऽथ गोपः ।

ब्रह्मा शक्रो मारुतो ब्रह्म सत्यं वेदा यज्ञा दक्षिणा वेदवाहाः । सोमो यष्टा यच्च हव्यं हविश्च रक्षा दीक्षा संयमा ये च केचित् ।

स्वाहा वौषट् ब्राह्मणाः सौरभेयी धर्म्मं चाग्र्यं कालचक्रं बलञ्च । यशो दमो बुद्धिमती स्थितिश्च शुभाशुभं ये मुनयश्च सप्त । १२०

अग्र्या बुद्धिर्मनसा दर्शने च स्पर्शाश्चाग्र्याः कर्म्मणां या च सिद्धिः । गणा देवानामूष्मपाः सोमपाश्च लेखाः सुयामास्तुषिता ब्रह्मकायाः ।

आभास्वरा गन्धपा दृष्टिपाश्च वाचा विरुद्धाश्च मनोविरुद्धाः । शुद्धाश्च निर्व्वाणरताश्च देवाः स्पर्शाशना दर्शपा आज्यपाश्च ।

चिन्तयद्योता ये च देवेषु मुख्या ये चाप्यन्ये देवताश्चाजमीढ । सुपर्णगन्धर्व्वपिशाचदानवा यक्षास्तथा चारणपन्नगाश्च ।

स्थूलं सूक्ष्मं मृदु चाप्यसूक्ष्मं दुःखं सुखं दुःखमनन्तरञ्च । सांख्यं योगं तत्पराणां परञ्च सर्व्वाज्जातं विद्धि यत्कीर्त्तितं मे ।

तत्सम्भूता भूतकृतो वरेण्याः सर्व्वे देवा भुवनस्यास्य गोपाः । आविश्येमां धरणीं येऽभ्यरक्षन् पुरातनीं तस्य देवस्य सृष्टिं । १२५

विचिन्वन्तस्तपसा तत्त्ववीजं किञ्चित्तत्त्वं प्राणहेतोर्नतोऽस्मि । ददातु देवः स वरानिहेष्टानभिष्टुतो नः प्रभुरव्ययः सदा ।

इमं स्तवं सन्नियम्येन्द्रियाणि भूत्वा शुचिर्यः पुरुषः पठेत । अभग्नयोगो नियतो मासमेकं सम्प्राप्नुयादश्वमेधे फलं यत् ।

वेदान् कृत्स्नान् ब्राह्मणः प्राप्नुयात्तु जयेन्नृपः पार्थ महीञ्च कृत्स्नां । वैश्यो लाभं प्राप्नुयान्नैपुण्यञ्च शूद्रो गतिं प्रेत्य तथा सुखञ्च ।

स्तवराजमिमं कृत्वा रुद्राय दधिरे मनः । सर्व्वदोषापहं पुण्यं पवित्रञ्च यशस्विनः ।

यावन्त्यस्य शरीरे तु रोमकूपाणि भारत । तावद्वर्षसहस्राणि स्वर्गे वसति मानवः । १३०

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि मेघवाहनोपाख्याने अष्टादशोऽध्यायः ॥ १८ ॥

॥ युधिष्ठिर उवाच ॥ यदिदं सहधर्म्मेति प्रोच्यते भरतर्षभ । पाणिग्रहणकाले तु स्त्रीणामेतत्कथं स्मृतं ।

आर्ष एष भवेद्धर्म्मः प्राजापत्योऽथवासुरः । यदेतत्सहधर्म्मेति पूर्व्वमुक्तं महर्षिभिः ।
सन्देहः सुमहानेष विरुद्ध इति मे मतिः । इह यः सहधर्म्मो वै प्रेत्यायं विहितः क नु ।
स्वर्गो मृतानां भवति सहधर्म्मः पितामह । पूर्व्वमेकस्तु म्रियते क चैकस्तिष्ठते वद ।
नानाधर्म्मफलोपेता नानाकर्म्मनिवासिनः । नानानिरयनिष्ठान्ता मानुषा बहवो यदा । ११८५
अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति । यदाऽनृताः स्त्रियस्तात सहधर्म्मः कुतः स्मृतः ।
अनृताः स्त्रिय इत्येवं वेदेष्वपि हि पठ्यते । धर्म्मोऽयं पूर्व्विका संज्ञा उपचारः क्रियाविधिः ।
गह्वरं प्रतिभात्येतन्मम चिन्तयतोऽनिशं । निःसन्देहमिदं सर्व्वं पितामह यथाश्रुति ।
यदेतद्यादृशञ्चैतद्यथा चैतत्प्रवर्त्तितं । निखिलेन महाप्राज्ञ भवानेतद्ब्रवीतु मे ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । अष्टावक्रस्य संवादं दिशया सह भारत । ११९०
निवेष्टुकामस्तु पुरा अष्टावक्रो महातपाः । ऋषेरथ वदान्यस्य वव्रे कन्यां महात्मनः ।
सुप्रभां नाम वै नाम्ना रूपेणाप्रतिमां भुवि । गुणप्रभावशीलेन चारित्रेण च शोभनां ।
सा तस्य दृष्ट्वैव मनो जहार शुभलोचना । वनराजी यथा चित्रा वसन्ते कुसुमाचिता ।
ऋषिस्तमाह देया मे सुता तुभ्यं हि तच्छृणु । गच्छ तावद्दिशं पुण्यामुत्तरां द्रक्ष्यसे ततः ।
॥ अष्टावक्र उवाच ॥ किं द्रष्टव्यं मया तत्र वक्तुमर्हति मे भवान् । तथेदानीं मया कार्य्यं यथा वक्ष्यति मां भवान् । ११९५
॥ वदान्य उवाच ॥ धनदं समतिक्रम्य हिमवन्तञ्च पर्व्वतं । रुद्रस्यायतनं दृष्ट्वा सिद्धचारणसेवितं ।
संहृष्टैः पार्षदैर्जुष्टं नृत्यद्भिर्विविधाननैः । दिव्याङ्गरागैः पैशाचैर्वन्यैर्नानाविधैः प्रभो ।
पाणितालैः सुतालैश्च शम्यातालैः समैस्तथा । सम्प्रहृष्टैः प्रनृत्यद्भिः शर्व्वस्तत्र निषेव्यते ।
इष्टं किल गिरौ स्थानं तद्दिव्यमिति शुश्रुम । नित्यं सन्निहितो देवस्तथा ते पार्षदाः स्मृताः ।
तत्र देव्या तपस्तप्तं शङ्करार्थं सुदुश्चरं । अतस्तदिष्टं देवस्य तथोमाया इति श्रुतिः । १२००
पूर्व्वे तत्र महापार्श्वे देवस्योत्तरतस्तथा । ऋतवः कालरात्रिश्च ये दिव्या ये च मानुषाः ।
देवस्योपासते सर्व्वे रूपिणः किल तत्र ह । तदतिक्रम्य भवनं त्वया यातव्यमेव हि ।
ततो नीलं वनोद्देशं द्रक्ष्यसे मेघसन्निभं । रमणीयं मनोग्राहि तत्र वै द्रक्ष्यसे स्त्रियं ।
तपस्विनीं महाभागां वृद्धां दीक्षामनुष्ठितां । द्रष्टव्या सा त्वया तत्र सम्पूज्या चैव यत्नतः ।
तां दृष्ट्वा विनिवृत्तस्त्वं ततः पाणिं ग्रहीष्यसि । यद्येष समयः सर्व्वः साध्यतां तत्र गम्यतां । १२०५
॥ अष्टावक्र उवाच ॥ तथाऽस्तु साधयिष्यामि तत्र यास्याम्यसंशयं । यत्र त्वं वदसे साधो भवान् भवतु सत्यवाक् ।
॥ भीष्म उवाच ॥ ततोऽगच्छत्स भगवानुत्तरामुत्तमां दिशं । हिमवन्तं गिरिश्रेष्ठं सिद्धचारणसेवितं ।
स गत्वा द्विजशार्दूलो हिमवन्तं महागिरिं । अभ्यगच्छन्नदीं पुण्यां बाहुदां धर्म्मशालिनीं ।
अशोकविमले तीर्थे स्नात्वा वै तर्प्य देवताः । तत्र वासाय शयने कौश्ये सुखमुवास ह ।
ततो रात्र्यां व्यतीतायां प्रातरुत्थाय स द्विजः । स्नात्वा प्रादुश्चकाराग्निं हुत्वा चैनं प्रधानतः । १२१०
रुद्राणीं रुद्रमासाद्य ह्रदे तत्र समाश्वसत् । विश्रान्तश्च समुत्थाय कैलासमभितो ययौ ।

सोऽपश्यत्काञ्चनं द्वारं दीप्यमानमिव श्रिया । मन्दाकिनीञ्च नलिनीं धनदस्य महात्मनः ।
अथ ते राक्षसाः सर्व्वे येऽभिरक्षन्ति पद्मिनीं । प्रत्युत्थिता भगवन्तं मणिभद्रपुरोगमाः ।
स तान् प्रत्यर्चयामास राक्षसान् भीमविक्रमान् । निवेदयत मां क्षिप्रं धनदायेति चाब्रवीत् ।
ते राक्षसास्तथा राजन् भगवन्तमथाब्रुवन् । असौ वैश्रवणो राजा स्वयमायाति तेऽन्तिकं । १४१५
विदितो भगवानस्य कार्य्यमागमनस्य यत् । पश्यैनं त्वं महाभागं ज्वलन्तमिव तेजसा ।
ततो वैश्रवणोऽभ्येत्य अष्टावक्रमनिन्दितं । विधिवत्कुशलं पृष्ट्वा ततो ब्रह्मर्षिमब्रवीत् ।
सुखं प्राप्तो भवान् कच्चित्किं वा मत्तश्चिकीर्षति । ब्रूहि सर्व्वं करिष्यामि यन्मां वक्ष्यसि वै द्विज ।
भवनं प्रविश त्वं मे यथाकामं द्विजोत्तम । सत्कृतः कृतकार्य्यश्च भवान् यास्यत्यविघ्नतः ।
प्राविशद्भवनं स्वं वै गृहीत्वा तं द्विजोत्तमं । आसनं स्वं ददौ चैव पाद्यमर्घ्यं तथैव च । १४२०
अथोपविष्टयोस्तत्र मणिभद्रपुरोगमाः । निषेदुस्तत्र कौवेरा यक्षगन्धर्व्वकिन्नराः ।
ततस्तेषां निषण्णानां धनदो वाक्यमब्रवीत् । भवच्छन्दं समाज्ञाय नृत्यं प्रवर्त्तताप्सरोगणः ।
आतिथ्यं परमं कार्य्यं शुश्रूषा भवतस्तथा । संवर्त्ततामित्युवाच मुनिर्मधुरया गिरा ।
अथोर्व्वरा मिश्रकेशी रम्भा चैवोर्व्वशी तथा । अलम्बुषा घृताची च चित्रा चित्राङ्गदा रुचिः ।
मनोहरा सुकेशी च सुमुखी हासिनी प्रभा । विद्युता प्रशमी दान्ता विद्योता रतिरेव च । १४२५
एताश्चान्याश्च वै बह्व्यः प्रनृत्ताप्सरसः शुभाः । अवादयंश्च गन्धर्व्वा वाद्यानि विविधानि च ।
अथ प्रवृत्ते गान्धर्व्वे दिव्ये ऋषिरुपाविशत् । दिव्यं संवत्सरं तत्रारमतैव महातपाः ।
ततो वैश्रवणो राजा भगवन्तमुवाच ह । साग्रः संवत्सरो यातो विप्रेह तव पश्यतः ।
हार्य्योऽयं विषयो ब्रह्मन् गान्धर्व्वो नाम नामतः । छन्दतो वर्त्ततां विप्र यथा वदति वा भवान् ।
अतिथिः पूजनीयस्त्वमिदञ्च भवतो गृहं । सर्व्वमाज्ञाप्यतामाशु परवन्तो वयं त्वयि । १४३०
अथ वैश्रवणं प्रीतो भगवान् प्रत्यभाषत । अर्च्चितोऽस्मि यथान्यायं गमिष्यामि धनेश्वर ।
प्रीतोऽस्मि सदृशञ्चैव तव सर्व्वं धनाधिप । तव प्रसादाद्भगवन्महर्षेश्च महात्मनः ।
नियोगादद्य यास्यामि ऋद्धिमानृद्धिमान् भव । अथ निष्क्रम्य भगवान् प्रययावुत्तरामुखः ।
कैलासं मन्दरं हैमं सर्व्वाननुचचार ह । तानतीत्य महाशैलान् कैरातं स्थानमुत्तमं ।
प्रदक्षिणं तथा चक्रे प्रयतः शिरसा नतः । धरणीमवतीर्य्याथ पूतात्मा सोऽभवत्तदा । १४३५
स तं प्रदक्षिणं कृत्वा त्रिः शैलं चोत्तरामुखः । समेन भूमिभागेन ययौ प्रीतिपुरस्कृतः ।
ततोऽपरं वनोद्देशं रमणीयमपश्यत । सर्व्वर्तुभिर्मूलफलैः पक्षिभिश्च समन्वितैः ।
रमणीयैर्व्वनोद्देशैस्तत्र तत्र विभूषितं । तत्राश्रमपदं दिव्यं ददर्श भगवानथ ।
शैलांश्च विविधाकारान् काञ्चनान् रत्नभूषितान् । मणिभूमौ निविष्टांश्च पुष्करिण्यस्तथैव च ।
अन्यान्यपि सुरम्याणि पश्यतः सुबहून्यथ । भृशं तस्य मनो रेमे महर्षेर्भावितात्मनः । १४४०
स तत्र काञ्चनं दिव्यं सर्व्वरत्नमयं गृहं । ददर्शाद्भुतसङ्काशं धनदस्य गृहाद्वरं ।

महान्तो यत्र विविधा मणिकाञ्चनपर्व्वताः । विमानानि च रम्याणि रत्नानि विविधानि च ।
मन्दारपुष्पैः संकीर्णां तथा मन्दाकिनीं नदीं । सर्वप्रभाश्च मणयो वज्रभूमिश्च भूषिता ।
नानाविधैश्च भवनैर्व्विचित्रमणितोरणैः । मुक्ताजालविनिःक्षिप्तैर्मणिरत्नविभूषितैः ।
मनोदृष्टिहरै रम्यैः सर्व्वतः संवृतं शुभैः । ऋषिभिश्चावृतं तत्र आश्रमं तं मनोहरं । १००५
ततस्तस्याभवच्चिन्ता कुत्र वासो भवेदिति । अथ द्वारं समभितो गत्वा स्थित्वा ततोऽब्रवीत् ।
अतिथिं समनुप्राप्तमभिजानन्तु येऽत्र वै । अथ कन्याः परिवृता गृहात्तस्माद्विनिर्गताः ।
नानारूपाः सप्त विभो कन्याः सर्व्वा मनोहराः । यां यामपश्यत् कन्यां वै सा सा तस्य मनोऽहरत् ।
न चाशकद्धारयितुं मनोऽथास्यावसीदति । ततो धृतिः समुत्पन्ना तस्य विप्रस्य धीमतः ।
अथ तं प्रमदाः प्राहुर्भगवान् प्रविशत्विति । स च तासां सुरूपाणां तस्यैव भवनस्य हि । १०१०
कौतूहलसमाविष्टः प्रविवेश गृहं द्विजः । तत्रापश्यज्जरायुक्तामरजोऽम्बरधारिणीं ।
वृद्धां पर्य्यङ्कमासीनां सर्व्वाभरणभूषितां । स्वस्तीति तेन चैवोक्ता सा स्त्री प्रत्यवदत्तदा ।
प्रत्युत्थाय च तं विप्रमास्यतामित्युवाच ह ।
॥ अष्टावक्र उवाच ॥ सर्व्वाः स्वानालयान् यान्तु एका मामुपतिष्ठतु । सुप्राज्ञा या प्रशान्ता या शेषा गच्छन्तु छन्दतः ।
ततः प्रदक्षिणीकृत्य कन्यास्तास्तमृषिं तदा । निरक्रामन्गृहात्तस्मात् सा वृद्धाथ व्यतिष्ठत । १०१५
अथ तां संविशन् प्राह शयने भास्वरे तदा । त्वयाऽपि सुप्यतां भद्रे रजनी ह्यतिवर्त्तते ।
संलापात्तेन विप्रेण तथा सा तत्र भाषिता । द्वितीये शयने दिव्ये संविवेश महाप्रभे ।
अथ सा वेपमानाङ्गी निमित्तं शीतजं तदा । व्यपदिश्य महर्षेर्व्वै शयनं ह्यध्यरोहत ।
स्वागतेनागतां तान्तु भगवानभ्यभाषत । सोपागूहद्भुजाभ्यान्तु ऋषिं प्रीत्या नरर्षभ ।
निर्व्विकारमृषिं चापि काष्ठकुड्योपमं तदा । दुःखिता प्रेक्ष्य सञ्जल्पमकार्षीदृषिणा सह । १०२०
ब्रह्मन्न कामतोऽन्याऽस्ति स्त्रीणां पुरुषतो धृतिः । कामेन मोहिता चाहं त्वां भजन्तीं भजस्व मां ।
प्रहृष्टो भव विप्रर्षे समागच्छ मया सह । उपगूह च मां विप्र कामार्त्ताऽहं भृशं त्वयि ।
एतद्धि तव धर्म्मात्मंस्तपसः पूज्यते फलं । प्रार्थितं दर्शनादेव भजमानां भजस्व मां ।
मम चेदं धनं सर्व्वं यच्चान्यदपि पश्यसि । प्रभुस्त्वं भव सर्व्वस्य मयि चैव न संशयः ।
सर्व्वान् कामान् विधास्यामि रमस्व सहितो मया । रमणीये वने विप्र सर्व्वकामफलप्रदे । १०२५
त्वद्वशाऽहं भविष्यामि रंस्यसे च मया सह । सर्व्वान् कामानुपाश्नानो ये दिव्या ये च मानुषाः ।
नातः परं हि नारीणां विद्यते च कदाचन । यथा पुरुषसंसर्गः परमेतद्धि नः फलं ।
आत्मच्छन्देन वर्त्तन्ते नार्य्यो मन्मथचोदिताः । न च दह्यन्ति गच्छन्त्यः सुतप्तैरपि पांशुभिः ।
॥ अष्टावक्र उवाच ॥ परदारानहं भद्रे न गच्छेयं कदाचन । दूषितं धर्म्मशास्त्रेषु परदाराभिमर्षणं ।
भद्रे निवेष्टुकामं मां विद्धि सत्येन वै शपे । विषयेष्वनभिज्ञोऽहं धर्म्मार्थं किल सन्ततिः । १०३०
एवं लोकान् गमिष्यामि पुत्त्रैरिति न संशयः । भद्रे धर्म्मं विजानीहि ज्ञात्वा चोपरमस्व च ।

॥ स्त्र्युवाच ॥ नानिलोऽग्निर्न वरुणो न चान्ये त्रिदशा द्विज। प्रियाः स्त्रीणां यथा कामो रतिशीला हि योषितः।
सहस्रे किल नारीणां प्राप्येतैका कदाचन। तथा शतसहस्रेषु यदि काचित्पतिव्रता।
नैता जानन्ति पितरं न कुलं न च मातरं। न भ्रातॄन्न च भर्तारं न च पुत्रान्न देवरान्।
लीलायन्त्यः कुलं घ्नन्ति कूलानीव सरिद्वराः। दोषान् सर्वांश्च मत्वाशु प्रजापतिरभाषत। १४७५
॥ भीष्म उवाच ॥ ततः स ऋषिरेकाग्रस्तां स्त्रियं प्रत्यभाषत। आस्यतां रुचिरश्छन्दः किं वा कार्यं ब्रवीहि मे।
सा स्त्री प्रोवाच भगवन् द्रक्ष्यसे देशकालतः। वस तावन्महाप्राज्ञ कृतकृत्यो भविष्यसि।
ब्रह्मर्षिस्तामथोवाच स तथेति युधिष्ठिर। वत्स्येऽहं यावदुत्साहो भवत्या नात्र संशयः।
अथर्षिरभिसंप्रेक्ष्य स्त्रियं तां जरयार्दितां। चिन्तां परमिकां भेजे सन्तप्त इव चाभवत्।
यद्यदङ्गं हि सोऽपश्यत्तस्या विप्रर्षभस्तदा। नारमत्तत्र तत्रास्य दृष्टी रूपपराजिता। १४८०
देवतेयं गृहस्यास्य शापात्किन्नु विरूपिता। अस्याश्च कारणं वेत्तुं न युक्तं सहसा मया।
इति चिन्ताविषक्तस्य तमर्थं ज्ञातुमिच्छतः। व्यगमत्तदहःशेषं मनसा व्याकुलेन तु।
अथ सा स्त्री तदोवाच भगवन् पश्य वै रवेः। रूपं सन्ध्याभ्ररक्तस्य किमुपस्थाप्यतां तव।
स उवाच ततस्तां स्त्रीं स्नानोदकमिहानय। उपासिष्ये ततः सन्ध्यां वाग्यतो नियतेन्द्रियः।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि अष्टावक्रदिक्संवादे ऊनविंशोऽध्यायः ॥ १९ ॥
॥ भीष्म उवाच ॥ अथ सा स्त्री तमुवाच बाढमेवं भवत्विति। दिव्यं तैलमुपादाय स्नानशाटीमुपानयत्। १४८५
अनुज्ञाता च मुनिना सा स्त्री तेन महात्मना। अथास्य तैलेनाङ्गानि सर्व्वाण्येवाभ्यमृक्षत।
शनैश्चोत्सादितस्तत्र स्नानशालामुपागमत्। भद्रासनं ततश्चित्रमृषिरन्वगमन्नवं।
अथोपविष्टश्च यदा तस्मिन् भद्रासने तदा। स्नापयामास शनकैस्तमृषिं सुखहस्तवत्।
दिव्यञ्च विधिवच्चक्रे सोपचारं मुनेस्तदा। स तेन सुसुखोष्णेन तस्या हस्तसुखेन च।
व्यतीतां रजनीं कृत्स्नां नाजानात्स महाव्रतः। तत उत्थाय स मुनिस्तदा परमविस्मितः। १४९०
पूर्व्वस्यां दिशि सूर्य्यञ्च सोऽपश्यदुदितं दिवि। तस्य बुद्धिरियं किन्नु मोहस्तत्त्वमिदं भवेत्।
अथोपास्य सहस्रांशुं किं करोमीत्युवाच तां। सा चामृतरसप्रख्यमृषेरन्नमुपाहरत्।
तस्य स्वादुतयाऽन्नस्य न प्रभूतञ्चकार सः। व्यगमच्चाप्यहःशेषं ततः सन्ध्यागमत्पुनः।
अथ सा स्त्री भगवन्तं सुप्यतामित्यचोदयत्। तत्र वै शयने दिव्ये तस्य तस्याश्च कल्पिते।
पृथक्चैव तथा सुप्तौ सा स्त्री स च मुनिस्तदा। तथार्द्धरात्रे सा स्त्री तु शयनं तदुपागमत्। १४९५
॥ अष्टावक्र उवाच ॥ न भद्रे परदारेषु मनो मे सम्प्रसज्जति। उत्तिष्ठ भद्रे भद्रं ते स्वप वै विरमस्व च।
॥ भीष्म उवाच ॥ सा तदा तेन विप्रेण तथा तेन निवारिता। स्वतन्त्राऽस्मीत्युवाचैनं न धर्म्मच्छलमस्ति ते।
॥ अष्टावक्र उवाच ॥ नास्ति स्वतन्त्रता स्त्रीणामस्वतन्त्रा हि योषितः। प्रजापतिमतं ह्येतन्न स्त्री स्वातन्त्र्यमर्हति।
॥ स्त्र्युवाच ॥ बाधते मैथुनं विप्र मम भक्तिञ्च पश्य वै। अधर्म्मं प्राप्स्यसे विप्र यन्मां त्वं नाभिनन्दसि।
॥ अष्टावक्र उवाच ॥ हरन्ति दोषजातानि नरं जातं यथेच्छकं। प्रभवामि सदा धृत्या भद्रे स्वं शयनं व्रज। १५००

॥ स्त्री उवाच ॥ स्त्रियो मन्यते विप्र यथाहं कर्तुमर्हसि । कृते विधानमानायाः अरण्ये बत मेऽनघ ।
यदि वा दोषजातस्त्वं परदारेषु पश्यसि । आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मे द्विज ।
न दोषो भविता चैव सत्येनैतद्ब्रवीम्यहं । स्वतन्त्रां मां विजानीहि यो धर्मः सोऽस्तु वै मयि ।
त्वय्यावेशितचित्ता च स्वतन्त्राऽस्मि भजस्व मां ।
॥ अष्टावक्र उवाच ॥ स्वतन्त्रा त्वं कथं भद्रे ब्रूहि कारणमत्र वै । नास्ति त्रिलोके स्त्री काचिद्या वै स्वातन्त्र्यमर्हति ।   १५०५
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने । पुत्राश्च स्थाविरे काले नास्ति स्त्रीणां स्वतन्त्रता ।
॥ स्त्री उवाच ॥ कौमारं ब्रह्मचर्यं मे कन्यैवास्मि न संशयः । पत्नीं कुरुष्व मां विप्र श्रद्धां विजहि मा मम ।
॥ अष्टावक्र उवाच ॥ यथा मम तथा तुभ्यं यथा तुभ्यं तथा मम । जिज्ञासेयमृषेस्तस्य विघ्नः सत्यं नु किं भवेत् ।
आश्चर्यं परमं हीदं किन्नु श्रेयो हि मे भवेत् । दिव्याभरणवस्त्रा हि कन्येयं मामुपस्थिता ।
किं न्वस्याः परमं रूपं जीर्णमासीत्कथं पुनः । कन्या रूपमिहाद्यैव किमिहात्रोत्तरं भवेत् ।   १५१०
यथाऽपरं शक्तिधृतेर्न व्युत्थास्ये कथञ्चन । न रोचते हि व्युत्थानं सत्येनासादयाम्यहं ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि अष्टावक्रदिक्संवादे विंशोऽध्यायः ॥ २० ॥
॥ युधिष्ठिर उवाच ॥ न बिभेति कथं सा स्त्री शापाच्च परमद्युतेः । कथं निवृत्तो भगवांस्तद्भवान् प्रब्रवीतु मे ।
॥ भीष्म उवाच ॥ अष्टावक्रोऽन्वपृच्छत्तां रूपं विकुरुषे कथं । न चानृतं ते वक्तव्यं ब्रूहि ब्राह्मणकाम्यया ।
॥ स्त्री उवाच ॥ द्यावापृथिव्योर्यत्रैषा काम्या ब्राह्मणसत्तम । शृणुष्वावहितः सर्व्वं यदिदं सत्यविक्रम ।
जिज्ञासेयं प्रयुक्ता मे स्थिरीकर्त्तुं तवानघ । अव्युत्थानेन ते लोका जिताः सत्यपराक्रम ।   १५१५
उत्तरां मां दिशं विद्धि दृष्टं स्त्रीचापलञ्च ते । स्थविराणामपि स्त्रीणां बाधते मैथुनज्वरः ।
तुष्टः पितामहस्तेऽद्य तथा देवाः सवासवाः । स त्वं येन च कार्य्येण सम्प्राप्तो भगवानिह ।
प्रेषितस्तेन विप्रेण कन्या पित्रा द्विजर्षभ । तवोपदेशं कर्त्तुं वै तच्च सर्व्वं मया कृतं ।
क्षेमी गमिष्यसि गृहं श्रमश्च न भविष्यति । कन्यां प्राप्स्यसि तां विप्र पुत्रिणी च भविष्यति ।
काम्यया पृष्टवांस्त्वं मां ततो व्याहृतमुत्तमं । अनतिक्रमणीयैषा कृत्स्नैर्लोकैस्त्रिभिः सदा ।   १५२०
गच्छस्व सुकृतं कृत्वा किं वान्यच्छ्रोतुमिच्छसि । यावद्ब्रवीमि विप्रर्षे अष्टावक्र यथातथं ।
ऋषिणा प्रसादिता चास्मि तव हेतोर्द्विजर्षभ । तस्य सम्माननार्थं मे त्वयि वाक्यं प्रभाषितं ।
॥ भीष्म उवाच ॥ श्रुत्वा तु वचनं तस्याः स विप्रः प्राञ्जलिः स्थितः । अनुज्ञातस्तया चापि स्वगृहं पुनराव्रजत् ।
गृहमागत्य विश्रान्तः स्वजनं परिपृच्छ्य च । अभ्यगच्छच्च तं विप्रं न्यायतः कुरुनन्दन ।
पृष्टश्च तेन विप्रेण दृष्टं त्वेतन्निदर्शनं । प्राह विप्रं तदा विप्रः सुप्रीतेनान्तरात्मना ।   १५२५
भवता समनुज्ञातः प्रस्थितो गन्धमादनं । तस्य चोत्तरतो देशे दृष्टं मे दैवतं महत् ।
तया चाहमनुज्ञातो भवांश्चापि प्रकीर्त्तितः । श्रावितश्चापि तद्वाक्यं गृहमभ्यागतः प्रभो ।
तमुवाच तदा विप्रः सुतां प्रतिगृहाण मे । नक्षत्रविधियोगेन पात्रं हि परमं भवान् ।
॥ भीष्म उवाच ॥ अष्टावक्रस्तथेत्युक्त्वा प्रतिगृह्य च तां विभो । कन्यां परमधर्म्मात्मा प्रीतिमांश्चाभवत्तदा ।

कन्यां तां प्रतिपद्यैव भार्य्यां परमशोभनां । उवाच मुदितश्चैव स्वाश्रमे विगतज्वरः । ११२०

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि अष्टावक्रदिक्‌संवादे एकविंशोऽध्यायः ॥ २१ ॥

॥ युधिष्ठिर उवाच ॥ किमाहुर्भरतश्रेष्ठ पात्रं विप्राः सनातनाः । ब्राह्मणं लिङ्गिनञ्चैव ब्राह्मणं वाप्यलिङ्गिनं ।

॥ भीष्म उवाच ॥ स्ववृत्तिमभिपन्नाय लिङ्गिने चेतराय च । देयमाहुर्महाराज उभावेतौ तपस्विनौ ।

॥ युधिष्ठिर उवाच ॥ श्रद्धया परया पूतो यः प्रयच्छेद्द्विजातये । हव्यं कव्यं तथा दानं को दोषः स्यात्पितामह ।

॥ भीष्म उवाच ॥ श्रद्धापूतो नरस्तात दुर्द्दान्तोऽपि न संशयः । पूतो भवति सर्व्वत्र किमुत त्वं महाद्युते ।

॥ युधिष्ठिर उवाच ॥ न ब्राह्मणं परीक्षेत दैवेषु सततं नरः । कव्यप्रदाने तु बुधाः परीक्ष्यं ब्राह्मणं विदुः । ११२५

॥ भीष्म उवाच ॥ न ब्राह्मणः साधयते हव्यं दैवात्प्रसिध्यति । देवप्रसादादिज्यन्ते यजमानैर्न संशयः ।

ब्राह्मणान् भरतश्रेष्ठ सततं ब्रह्मवादिनः । मार्कण्डेयः पुरा प्राह इह लोकेषु बुद्धिमान् ।

॥ युधिष्ठिर उवाच ॥ अपूर्व्वोऽप्यथ वा विद्वान् सम्बन्धी वा यथा भवेत् । तपस्वी यज्ञशीलो वा कथं पात्रं भवेत्तु सः ।

॥ भीष्म उवाच ॥ कुलीनः कर्म्मकृद्वैद्यस्तथैवाप्यानृशंस्यवान् । ह्रीमानृजुः सत्यवादी पात्रं पूर्व्वे च ये त्रयः ।

तदिमं शृणु मे पार्थ चतुर्णां तेजसां मतं । पृथिव्याः काश्यपस्याग्नेर्मार्कण्डेयस्य चैव हि । ११३०

॥ पृथिव्युवाच ॥ यथा महार्णवे क्षिप्तः क्षिप्रं लेष्टुर्विनश्यति । तथा दुश्चरितं सर्व्वं त्रिवृत्त्या च निमज्जति ।

॥ काश्यप उवाच ॥ सर्व्वे च वेदाः सह षड्भिरङ्गैः साङ्ख्यं पुराणञ्च कुले च जन्म । नैतानि सर्व्वाणि गतिर्भवन्ति शीलव्यपेतस्य नृप द्विजस्य ।

॥ अग्निरुवाच ॥ अधीयानः पण्डितं मन्यमानो यो विद्यया हन्ति यशः परेषां । ब्रह्मघ्नस्तेऽसौ चरते न सत्यं लोकास्तस्य ह्यन्तवन्तो भवन्ति ।

॥ मार्कण्डेय उवाच ॥ अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतं । नाभिजानामि यद्यस्य सत्यस्यार्द्धमवाप्नुयात् ।

॥ भीष्म उवाच ॥ इत्युक्त्वा ते जग्मुराशु चत्वारोऽमिततेजसः । पृथिवी काश्यपोऽग्निश्च प्रकृष्टायुश्च भार्गवः । ११३५

॥ युधिष्ठिर उवाच ॥ यदिदं ब्राह्मणा लोके व्रतिनो भुञ्जते हविः । दत्तं ब्राह्मणकामाय कथं तत्सुकृतं भवेत् ।

॥ भीष्म उवाच ॥ आदिष्टिनो ये राजेन्द्र ब्राह्मणा वेदपारगाः । भुञ्जते ब्रह्मकामाय व्रतलुप्ता भवन्ति ते ।

॥ युधिष्ठिर उवाच ॥ अनेकान्तं बहुद्वारं धर्म्ममाहुर्मनीषिणः । किं निश्चितं भवेदत्र तन्मे ब्रूहि पितामह ।

॥ भीष्म उवाच ॥ अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा । आर्ज्जवञ्चैव राजेन्द्र निश्चितं धर्म्मलक्षणं ।

ये तु धर्म्मं प्रशंसन्तश्चरन्ति पृथिवीमिमां । अनाचरन्तस्तद्धर्म्मं सङ्करेऽभिरताः प्रभो । ११४०

तेभ्यो हिरण्यं रत्नं वा गामश्वं वा ददाति यः । दशवर्षाणि विष्ठां स भुङ्क्ते निरयमाश्रितः ।

मेदानां पुल्कसानाञ्च तथैवान्तेऽवसायिनां । कृतं कर्म्माकृतं वाऽपि रागमोहेन जल्पतां ।

वैश्वदेवञ्च ये मूढा विप्राय ब्रह्मचारिणे । ददतीह राजेन्द्र ते लोकान् भुञ्जतेऽशुभान् ।

॥ युधिष्ठिर उवाच ॥ किं परं ब्रह्मचर्य्यञ्च किं परं धर्म्मलक्षणं । किञ्च श्रेष्ठतमं शौचं तन्मे ब्रूहि पितामह ।

॥ भीष्म उवाच ॥ ब्रह्मचर्य्यात्परं तात मधुमांसस्य वर्ज्जनं । मर्य्यादायां स्थितो धर्म्मः शमश्चैवास्य लक्षणं । ११४५

॥ युधिष्ठिर उवाच ॥ कस्मिन्काले चरेद्धर्म्मं कस्मिन्कालेऽर्थमाचरेत् । कस्मिन्काले सुखी च स्यात्तन्मे ब्रूहि पितामह ।

॥ भीष्म उवाच ॥ कल्यमर्थं निषेवेत ततो धर्ममनन्तरं । पश्चात्कामं निषेवेत न च गच्छेत्प्रसङ्गितां ।

ब्राह्मणांश्चैव मन्येत गुरूंश्चाप्यभिपूजयेत् । सर्व्वभूतानुलोमश्च मृदुशीलः प्रियंवदः ।

अधिकारे यदनृतं यच्च राजसु पैशुनं । गुरोश्चालीककरणं तुल्यं तद्ब्रह्महत्यया ।

प्रहरेन्न नरेन्द्रेषु न हन्याद्गां तथैव च । भ्रूणहत्यासमञ्चैव उभयं यो निषेवते । ११६०

नाग्निं परित्यजेज्जातु न च वेदान् परित्यजेत् । न च ब्राह्मणमाक्रोशेत् समं तद्ब्रह्महत्यया ।

॥ युधिष्ठिर उवाच ॥ कीदृशाः साधवो विप्राः केभ्यो दत्तं महाफलं । कीदृशानाञ्च भोक्तव्यं तन्मे ब्रूहि पितामह ।

॥ भीष्म उवाच ॥ अक्रोधना धर्म्मपराः सत्यनित्या दमे रताः । तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलं ।

अमानिनः सर्व्वसहा दृढार्था विजितेन्द्रियाः । सर्व्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलं ।

अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः । स्वकर्म्मनिरता ये च तेभ्यो दत्तं महाफलं । ११६५

साङ्गांश्च चतुरो वेदानधीते यो द्विजर्षभः । षड्भ्यः प्रवृत्तः कर्म्मभ्यस्तं पात्रमृषयो विदुः ।

ये त्वेवं गुणजातीयास्तेभ्यो दत्तं महाफलं । सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ।

प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः । तारयेत कुलं सर्व्वमेकोऽपीह द्विजर्षभः ।

गामश्वं वित्तमन्नं वा तद्विधे प्रतिपादयेत् । द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ।

तारयेत्तत्कुलं सर्व्वमेकोऽपीह द्विजोत्तमः । किमङ्ग पुनरेकैनं तस्मात्पात्रं समाचरेत् । ११७०

निशम्य च गुणोपेतं ब्राह्मणं साधुसम्मतं । दूरादानीय सत्कृत्य सर्व्वतश्चाभिपूजयेत् ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि षट्प्राश्निके द्वाविंशोऽध्यायः ॥ २२ ॥

॥ युधिष्ठिर उवाच ॥ श्राद्धकाले च दैवे च पित्र्येऽपि च पितामह । इच्छाम्यहं त्वयाख्यातं विहितं यत्सुरर्षिभिः ।

॥ भीष्म उवाच ॥ दैवं पूर्व्वाह्णिकं कुर्य्यादपराह्णे तु पैतृकं । मङ्गलाचारसम्पन्नः कृतशौचः प्रयत्नवान् ।

मनुष्याणान्तु मध्याह्ने प्रदद्यादुपपत्तिभिः । कालहीनन्तु यद्दानं तं भागं रक्षसां विदुः ।

लङ्घितं चावलीढञ्च कलिपूर्व्वञ्च यत्कृतं । रजस्वलाभिर्दृष्टञ्च तं भागं रक्षसां विदुः । ११७५

अवघुष्टञ्च यद्भुक्तमव्रतेन च भारत । परामृष्टं शुना चैव तं भागं रक्षसां विदुः ।

केशकीटावपतितं क्षुतं श्वभिरवेक्षितं । रुदितञ्चावधूतञ्च तद्भागं रक्षसां विदुः ।

निरोङ्कारेण यद्भुक्तं सशस्त्रेण च भारत । दुरात्मना च यद्भुक्तं तं भागं रक्षसां विदुः ।

परोच्छिष्टञ्च यद्भुक्तं परिभुक्तञ्च यद्भवेत् । दैवे पित्र्ये च सततं तं भागं रक्षसां विदुः ।

मन्त्रहीनं क्रियाहीनं यच्छ्राद्धं परिविष्यते । त्रिभिर्व्वर्णैर्नरश्रेष्ठ तं भागं रक्षसां विदुः । ११८०

आज्याहुतिं विना चैव यत्किञ्चित्परिविष्यते । दुराचारैश्च यद्भुक्तं तं भागं रक्षसां विदुः ।

ये भागा रक्षसां प्राप्तास्त उक्ता भरतर्षभ । अत ऊर्द्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु ।

यावन्तः पतिता विप्रा जडोन्मत्तास्तथैव च । दैवे वाऽप्यथ वा पित्र्ये राजन्नार्हन्ति केतनं ।

श्वित्री क्लीवश्च कुष्ठी च तथा यक्ष्माहतश्च यः । अपस्मारी च यश्चान्धो राजन्नार्हन्ति केतनं ।

चिकित्सका देवलका वृथानियमधारिणः । सोमविक्रयिणश्चैव राजन्नार्हन्ति केतनं । ११८५

गायना नर्त्तकाश्चैव प्लवका वादकास्तथा । कथका योधकाश्चैव राजन्नार्हन्ति केतनं ।
होतारो वृषलानाञ्च वृषलाध्यापकास्तथा । तथा वृषलशिष्याश्च राजन्नार्हन्ति केतनं ।
अनुयोक्ता तु यो विप्रो अनुयुक्तश्च भारत । नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ ।
अग्रणीर्य्यः कृतः पूर्व्वं वर्णावरपरिग्रहः । ब्राह्मणः सर्व्वविद्योऽपि राजन्नार्हति केतनं ।
अनग्नयश्च ये विप्रा मृतनिर्य्यातकाश्च ये । स्तेनाश्च पतिताश्चैव राजन्नार्हन्ति केतनं । ११८०
अपरिज्ञातपूर्व्वाश्च गणपूर्व्वाश्च भारत । पुत्त्रिकापूर्व्वपुत्त्राश्च श्राद्धे नार्हन्ति केतनं ।
ऋणकर्त्ता च यो राजन् यश्च वार्द्धुषिको नरः । प्राणिविक्रयवृत्तिश्च राजन्नार्हन्ति केतनं ।
स्त्रीपूर्व्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ । अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनं ।
श्राद्धे दैवे च निर्द्दिष्टो ब्राह्मणो भरतर्षभ । दातुः प्रतिग्रहीतुश्च शृणुष्वानुग्रहं पुनः ।
चीर्णव्रता गुणैर्युक्ता भवेयुर्येऽपि कर्षकाः । सावित्रीज्ञाः क्रियावन्तस्ते राजन् केतनक्षमाः । ११८५
क्षात्रधर्म्माणमप्याजौ केतयेत्कुलजं द्विजं । न त्वेव वणिजं तात श्राद्धे च परिकल्पयेत् ।
अग्निहोत्री च यो विप्रो ग्रामवासी च यो भवेत् । अस्तेनश्चातिथिज्ञश्च स राजन् केतनक्षमः ।
सावित्रीं जपते यस्तु त्रिकालं भरतर्षभ । भिक्षावृत्तिः क्रियावांश्च स राजन् केतनक्षमः ।
उदितास्तमितो यश्च तथैवास्तमितोदितः । अहिंस्रश्चाल्पदोषश्च स राजन् केतनक्षमः ।
अकल्कको ह्यतर्कश्च ब्राह्मणो भरतर्षभ । संसर्गे भैक्ष्यवृत्तिश्च स राजन् केतनक्षमः । ११९०
अव्रती कितवः स्तेनः प्राणिविक्रयको वणिक् । पश्चाच्च पीतवान् सोमं स राजन् केतनक्षमः ।
अर्ज्जयित्वा धनं पूर्व्वं दारुणैरपि कर्म्मभिः । भवेत्सर्व्वातिथिः पश्चात् स राजन् केतनक्षमः ।
ब्रह्मविक्रयनिर्द्दिष्टं स्त्रिया यच्चार्ज्जितं धनं । अदेयं पितृविप्रेभ्यो यच्च क्लैव्यादुपार्ज्जितं ।
क्रियमाणेऽपवर्गे च यो द्विजो भरतर्षभ । न व्याहरति यद्युक्तं तस्याधर्म्मो गवानृतं ।
श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा । सोमक्षयश्च मांसञ्च यदारण्यं युधिष्ठिर । ११९५
श्राद्धापवर्गे विप्रस्य स्वधा वै मुदिता भवेत् । क्षत्रियस्याप्ययो ब्रूयात्प्रीयन्तां पितरस्त्विति ।
अपवर्गे तु वैश्यस्य श्राद्धकर्म्मणि भारत । अक्षय्यमभिधातव्यं स्वस्ति शूद्रस्य भारत ।
पुण्याहवाचनं दैवं ब्राह्मणस्य विधीयते । एतदेव निरोङ्कारं क्षत्रियस्य विधीयते ।
वैश्यस्य दैवे वक्तव्यं प्रीयन्तां देवता इति । कर्म्मणामानुपूर्व्व्येण विधिपूर्व्वं कृतं शृणु ।
जातकर्म्मादिकाः सर्व्वास्त्रिषु वर्णेषु भारत । ब्रह्मक्षत्रे हि मन्त्रोक्ता वैश्यस्य च युधिष्ठिर । १२००
विप्रस्य रसना मौञ्जी मौर्व्वी राजन्यगामिनी । वाल्वजीत्येव वैश्यस्य धर्म्म एष युधिष्ठिर ।
दातुः प्रतिग्रहीतुश्च धर्म्माधर्म्माविमौ शृणु । ब्राह्मणस्यानृते धर्म्मः प्रोक्तः पातकसंज्ञितः ।
चतुर्गुणः क्षत्रियस्य वैश्यस्याष्टगुणः स्मृतः । नान्यत्र ब्राह्मणोऽश्नीयात्पूर्व्वं विप्रेण केतितः ।
यवीयान् पशुहिंसायां तुल्यधर्म्मो भवेत्स हि । तथा राजन्यवैश्याभ्यां यद्यश्नीयात्तु केतितः ।
यवीयान् पशुहिंसायां भागार्द्धं समवाप्नुयात् । दैवं वाऽप्यथ वा पित्र्यं योऽश्नीयात् ब्राह्मणादिषु । १२०५

यस्मिंस्तस्मिन् कुले जाता बहुपुत्राः शतायुषः । सानुक्रोशा जितक्रोधाः पुरुषाः स्वर्गगामिनः ।

एतदुक्तममुत्रार्थं दैवं पित्र्यञ्च भारत । दानधर्म्मञ्च दानस्य यत्पूर्व्वमृषिभिः कृतं । १८७५

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मे त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ युधिष्ठिर उवाच ॥ इदं मे तत्त्वतो राजन् वक्तुमर्हसि भारत । अहिंसयित्वाऽपि कथं ब्रह्महत्या विधीयते ।

॥ भीष्म उवाच ॥ व्यासमामन्त्र्य राजेन्द्र पुरा यदपृच्छमहं । तत्तेऽहं सम्प्रवक्ष्यामि तदिहैकमनाः शृणु ।

चतुर्थस्त्वं वसिष्ठस्य तत्त्वमाख्याहि मे मुने । अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ।

इति पृष्टो मया राजन् पराशरशरीरजः । अब्रवीन्निपुणो धर्म्मे निःसंशयमनुत्तमं ।

ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिनं । ब्रूयान्नास्तीति यः पश्चात्तं विद्याद् ब्रह्मघातिनं । १८८०

मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत । वृत्तिं हरति दुर्ब्बुद्धिस्तं विद्याद् ब्रह्मघातिनं ।

गोकुलस्य तृषार्त्तस्य जलार्थे वसुधाधिप । उत्पादयति यो विघ्नं तं विद्याद् ब्रह्मघातिनं ।

यः प्रवृत्तां श्रुतिं सम्यक् शास्त्रं वा मुनिभिः कृतं । दूषयत्यनभिज्ञाय तं विद्याद् ब्रह्मघातिनं ।

आत्मजां रूपसम्पन्नां महतीं सदृशे वरे । न प्रयच्छति यः कन्यां तं विद्याद् ब्रह्मघातिनं ।

अधर्म्मनिरतो मूढो मिथ्या यो वै द्विजातिषु । दद्यान्मर्म्मातिगं शोकं तं विद्याद् ब्रह्मघातिनं । १८८५

चक्षुषा विप्रहीनस्य पङ्गुलस्य जडस्य च । हरेत यो वै सर्व्वस्वं तं विद्याद् ब्रह्मघातिनं ।

आश्रमे वा वने वाऽपि ग्रामे वा यदि वा पुरे । अग्निं समुत्सृजेन्मोहात्तं विद्याद् ब्रह्मघातिनं ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि ब्रह्मघ्नकथने चतुर्व्विंशोऽध्यायः ॥ २४ ॥

॥ युधिष्ठिर उवाच ॥ तीर्थानां दर्शनं श्रेयः स्नानञ्च भरतर्षभ । श्रवणञ्च महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः ।

पृथिव्यां यानि तीर्थानि पुण्यानि भरतर्षभ । वक्तुमर्हसि मे तानि श्रोताऽस्मि नियतं प्रभो ।

॥ भीष्म उवाच ॥ इममङ्गिरसा प्रोक्तं तीर्थवंशं महाद्युते । श्रोतुमर्हसि भद्रं ते प्राप्स्यसे धर्म्ममुत्तमं । १८९०

तपोवनगतं विप्रमभिगम्य महामुनिं । पप्रच्छाङ्गिरसं धीरं गौतमः संशितव्रतः ।

अस्ति मे भगवन् कश्चित्तीर्थेभ्यो धर्म्मसंशयः । तत् सर्व्वं श्रोतुमिच्छामि तन्मे शंस महामुने ।

उपस्पृश्य फलं किं स्यात्तेषु तीर्थेषु वै मुने । प्रेत्यभावे महाप्राज्ञ तद्यथाऽस्ति तथा वद ।

॥ अङ्गिरा उवाच ॥ सप्ताहं चन्द्रभागां वै वितस्तामूर्म्मिमालिनीं । विगाह्य वै निराहारो निर्म्मलो मुनिवद्भवेत् ।

काश्मीरमण्डले नद्यो याः पतन्ति महानदं । ता नदीः सिन्धुमासाद्य शीलवान् स्वर्गमाप्नुयात् । १८९५

पुष्करञ्च प्रभासञ्च नैमिषं सागरोदकं । देविकामिन्द्रमार्गञ्च स्वर्णबिन्दुं विगाह्य च ।

विबोध्यते विमानस्थः सोऽप्सरोभिरभिष्टुतः । हिरण्यबिन्दुं विक्षोभ्य प्रयतश्चाभिवाद्य च ।

कुशेशयञ्च देवत्वं धूयते तस्य किल्बिषं । इन्द्रतोयां समासाद्य गन्धमादनसन्निधौ ।

करतोयां कुरङ्गे च त्रिरात्रोपोषितो नरः । अश्वमेधमवाप्नोति विगाह्य प्रयतः शुचिः ।

गङ्गाद्वारे कुशावर्त्ते बिल्वके नीलपर्व्वते । तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत् । १९००

अपां ह्रद उपस्पृश्य वाजिमेधफलं लभेत् । ब्रह्मचारी जितक्रोधः सत्यसन्धस्त्वहिंसकः ।

उर्व्वशीं कृत्तिकायोगे गत्वा चैव समाहितः । लौहित्ये विधिवत्स्नात्वा पुण्डरीकफलं लभेत् ।
रामह्रद उपस्पृश्य विपाशायां कृतोदकः । द्वादशाहं निराहारः कल्मषाद्विप्रमुच्यते ।
महाह्रद उपस्पृश्य शुद्धेन मनसा नरः । एकमासं निराहारो जमदग्निगतिं लभेत् ।
विन्ध्ये सन्ताप्य चात्मानं सत्यसन्धस्त्वहिंसकः । विनयात्तप आस्थाय मासेनैकेन सिध्यति । १७३५
नर्म्मदायामुपस्पृश्य तथा सूर्पारकोदके । एकपक्षं निराहारो राजपुत्रो विधीयते ।
जम्बूमार्गे त्रिभिर्मासैः संयतः सुसमाहितः । अहोरात्रेण चैकेन सिद्धिं समधिगच्छति ।
कोकामुखे विगाह्याथ गत्वा चाण्डालिकाश्रमे । शाकभक्षश्चीरवासाः कुमारीर्विन्दते दश ।
वैवस्वतस्य सदनं न स गच्छेत् कदाचन । यस्य कन्याह्रदे वासो देवलोकं स गच्छति ।
प्रभासे त्वेकरात्रेण अमावास्यां समाहितः । सिध्यते तु महाबाहो यो नरो जायतेऽमरः । १७४०
उज्जानक उपस्पृश्य आर्ष्टिषेणस्य चाश्रमे । पिङ्गायाश्चाश्रमे स्नात्वा सर्व्वपापैः प्रमुच्यते ।
कुल्यायां समुपस्पृश्य जप्त्वा चैवाघमर्षणं । अश्वमेधमवाप्नोति त्रिरात्रोपोषितो नरः ।
पिण्डारक उपस्पृश्य एकरात्रोषितो नरः । अग्निष्टोममवाप्नोति प्रभातां शर्व्वरीं शुचिः ।
तथा ब्रह्मसरो गत्वा धर्म्मारण्योपशोभितं । पुण्डरीकमवाप्नोति उपस्पृश्य नरः शुचिः ।
मैनाके पर्व्वते स्नात्वा तथा सन्ध्यामुपास्य च । कामं जित्वा च वै मासं सर्व्वमेधफलं लभेत् । १७४५
कालोदकं नन्दिकुण्डं तथा चोत्तरमानसं । अभ्येत्य योजनशताद्भ्रूणहा विप्रमुच्यते ।
नन्दीश्वरस्य मूर्त्तिन्तु दृष्ट्वा मुच्येत किल्विषैः । स्वर्गमार्गे नरः स्नात्वा ब्रह्मलोकं स गच्छति ।
विख्यातो हिमवान्पुण्यः शङ्करश्वशुरो गिरिः । आकरः सर्व्वरत्नानां सिद्धचारणसेवितः ।
शरीरमुत्सृजेत्तत्र विधिपूर्व्वमनाशके । अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ।
अभ्यर्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा । ततः सिद्धो दिवं गच्छेद्ब्रह्मलोकं सनातनं । १७५०
कामं क्रोधञ्च लोभञ्च यो जित्वा तीर्थमावसेत् । न तेन किञ्चिन्न प्राप्तं तीर्थाभिगमनाद्भवेत् ।
यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च । मनसा तानि गम्यानि सर्व्वतीर्थसमीक्षया ।
इदं मेध्यमिदं पुण्यमिदं स्वर्ग्यमनुत्तमं । इदं रहस्यं वेदानामाप्लाव्यं पावनं तथा ।
इदं दद्याद्द्विजातीनां साधोरात्महितस्य च । सुहृदाञ्च जपेत्कर्णे शिष्यस्यानुगतस्य च ।
दत्तवान् गौतमस्येदमङ्गिरा वै महातपाः । अङ्गिराः समनुज्ञातः काश्यपेन च धीमता । १७५५
महर्षीणामिदं जप्यं पावनानां तथोत्तमं । जपंश्चाभ्युत्थितः शश्वन्निर्म्मलः स्वर्गमाप्नुयात् ।
इदं यश्चापि शृणुयाद्रहस्यं त्वङ्गिरोमतं । उत्तमे च कुले जन्म लभेज्जातिञ्च संस्मरेत् ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि अङ्गिरसतीर्थयात्रायां पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ वैशम्पायन उवाच ॥ बृहस्पतिसमं बुद्ध्या क्षमया ब्रह्मणः समं । पराक्रमे शक्रसममादित्यसमतेजसं ।
गाङ्गेयमर्ज्जुनेनाजौ निहतं भूरितेजसं । भ्रातृभिः सहितोऽन्यैश्च पर्य्यपृच्छद्युधिष्ठिरः ।
शयानं वीरशयने कालाकाङ्क्षिणमच्युतं । आजग्मुर्भरतश्रेष्ठं द्रष्टुकामा महर्षयः । १७६०

अत्रिर्वसिष्ठोऽथ भृगुः पुलस्त्यः पुलहः क्रतुः । अङ्गिरा गौतमोऽगस्त्यः सुमतिः सुयतात्मवान् ।
विश्वामित्रः स्थूलशिराः संवर्त्तः प्रमतिर्दमः । वृहस्पत्युशनोव्यासाश्च्यवनः काश्यपो ध्रुवः ।
दुर्व्वासा जामदग्निश्च मार्कण्डेयोऽथ गालवः । भरद्वाजोऽथ रैभ्यश्च यवक्रीतस्त्रितस्तथा ।
स्थूलाक्षः शवलाक्षश्च कण्वो मेधातिथिः कृशः । नारदः पर्व्वतश्चैव सुधन्वाऽथैकतो द्विजः ।
नितम्भूर्भुवनो धौम्यः शतानन्दोऽकृतव्रणः । जामदग्न्यस्तथा रामः कचश्चेत्येवमादयः । १७६५
समागता महात्मानो भीष्मं द्रष्टुं महर्षयः । तेषां महात्मनां पूजामागतानां युधिष्ठिरः
भ्रातृभिः सहितश्चक्रे यथावदनुपूर्व्वशः । ते पूजिताः सुखासीनाः कथाश्चक्रुर्महर्षयः ।
भीष्माश्रिताः सुमधुराः सर्व्वेन्द्रियमनोहराः । भीष्मस्तेषां कथाः श्रुत्वा ऋषीणां भावितात्मनां ।
मेने दिविष्ठमात्मानं तुष्ट्या परमया युतः । ततस्ते भीष्ममामन्त्र्य पाण्डवांश्च महर्षयः ।
अन्तर्धानंगताः सर्व्वे सर्व्वेषामेव पश्यतां । तानृषीन् सुमहाभागानन्तर्धानगतानपि । १७७०
पाण्डवास्तुष्टुवुः सर्व्वे प्रणेमुश्च मुहुर्मुहुः । प्रसन्नमनसः सर्व्वे गाङ्गेयं कुरुसत्तमं ।
उपतस्थुर्यथोद्यन्तमादित्यं मन्त्रकोविदाः । प्रभावात्तपसस्तेषामृषीणां वीक्ष्य पाण्डवाः ।
प्रकाशतो दिशः सर्व्वा विस्मयं परमं ययुः । महाभाग्यं परं तेषामृषीणामनुचिन्त्य ते ।
पाण्डवाः सह भीष्मेण कथाश्चक्रुस्तदाश्रयाः ।
॥ वैशम्पायन उवाच ॥ कथान्ते शिरसा पादौ स्पृष्ट्वा भीष्मस्य पाण्डवः । धर्म्यं धर्म्मसुतः प्रश्नं पर्य्यपृच्छत् युधिष्ठिरः । १७७१
॥ युधिष्ठिर उवाच ॥ के देशाः के जनपदाः आश्रमाः के च पर्व्वताः । प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यः पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । शिलोञ्छवृत्तेः संवादं सिद्धस्य च युधिष्ठिर ।
इमां कश्चित्परिक्रम्य पृथिवीं शैलभूषणां । असकृद्द्विपदां श्रेष्ठ श्रेष्ठस्य गृहमेधिनः ।
शिलवृत्तेर्गृहं प्राप्तः स तेन विधिनाऽर्च्चितः । उवास रजनीं तत्र सुमुखः सुखभागृषिः ।
शिलवृत्तिस्तु यत्कृत्यं प्रातस्तत्कृतवाञ्छुचिः । कृतकृत्यमुपातिष्ठत्सिद्धन्तमतिथिन्तदा । १७८०
तौ समेत्य महात्मानौ सुखासीनौ कथाः शुभाः । चक्रतुर्व्वेदसंबद्धास्तच्छेषकृतलक्षणाः ।
शिलवृत्तिः कथान्ते तु सिद्धमामन्त्र्य यत्नतः । प्रश्नं पप्रच्छ मेधावी यन्मां त्वं परिपृच्छसि ।
॥ शिलवृत्तिरुवाच ॥ के देशाः के जनपदा केश्रमाः के च पर्व्वताः । प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तद्वदस्व मे ।
॥ सिद्ध उवाच ॥ ते देशास्ते जनपदास्ते श्रमास्ते च पर्व्वताः । येषां भागीरथी गङ्गा मध्येनेति सरिद्वरा ।
तपसा ब्रह्मचर्य्येण यज्ञैस्त्यागेन वा पुनः । गतिं न लभते जन्तुर्गङ्गां संसेव्य यां लभेत् । १७८५
स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनां । न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते ।
सर्व्वाणि येषां गाङ्गेयैस्तोयैः कार्य्याणि देहिनां । गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति ते जनाः ।
पूर्व्वे वयसि कर्म्माणि कृत्वा पापानि ये नराः । पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिं ।
स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनां । व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ।
यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति । तावद्वर्षसहस्राणि स्वर्गलोके महीयते । १७९०

अपहत्य तमस्तीव्रं यथा भात्युदये रविः। तथाऽपहत्य पाप्मानं भाति गङ्गाजलोक्षितः।
विसोमा इव शर्व्वर्य्यो विपुष्पास्तरवो यथा। तद्वद्देशा दिशश्चैव हीना गङ्गाजलैः शिवैः।
वर्णाश्रमा यथा सर्व्वे धर्म्मज्ञानविवर्ज्जिताः। क्रतवश्च यथा सोमास्तथा गङ्गां विना जगत्।
यथा हीनं नभोऽर्केण भूः शैलैः खञ्च वायुना। तथा देशा दिशश्चैव गङ्गाहीना न संशयः।
त्रिषु लोकेषु ये केचित्प्राणिनः सर्व्व एव ते। तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः। १७९५
यस्तु सूर्य्येण निष्टप्तं गाङ्गेयं पिबते जलं। गवां निर्हारनिर्मुक्ताद्यावकात्तद्विशिष्यते।
इन्दुव्रतसहस्रन्तु यश्चरेत्कायशोधनं। पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ।
तिष्ठेद्युगसहस्रन्तु पादेनैकेन यः पुमान्। मासमेकन्तु गङ्गायां समौ स्यातां न वा समौ।
लम्बेतावाक्शिरा यस्तु युगानामयुतं पुमान्। तिष्ठेद्यथेष्टं यश्चापि गङ्गायां स विशिष्यते।
अग्नौ प्रास्तं प्रधूयेत तथा तूलं द्विजोत्तम। तथा गङ्गावगाढस्य सर्व्वपापं प्रधूयते। १८००
भूतानामिह सर्व्वेषां दुःखोपहतचेतसां। गतिमन्वेषमाणानां न गङ्गासदृशी गतिः।
भवन्ति निर्व्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात्। गङ्गाया दर्शनात्तद्वत्सर्व्वपापैः प्रमुच्यते।
अप्रतिष्ठाश्च ये केचिदधर्म्मशरणाश्च ये। तेषां प्रतिष्ठा गङ्गेह शरणं शर्म्म वर्म्म च।
प्रकृष्टैरशुभैर्ग्रस्ताननेकैः पुरुषाधमान्। पततो नरके गङ्गा संश्रितान् प्रेत्य तारयेत्।
ते संविभक्ता मुनिभिर्नूनं देवैः सवासवैः। येऽभिगच्छन्ति सततं गङ्गां मतिमतांवर। १८०५
विनयाचारहीनाश्च अशिवाश्च नराधमाः। ते भवन्ति शिवा विप्र ये वै गङ्गामुपाश्रिताः।
यथा सुराणाममृतं पितॄणाञ्च यथा स्वधा। सुधा यथा च नागानां तथा गङ्गाजलं नृणां।
उपासन्ते यथा बाला मातरं क्षुधयाऽर्दिताः। श्रेयस्कामास्तथा गङ्गामुपासन्तीह देहिनः।
स्वायम्भुवं यथा स्थानं सर्व्वेषां श्रेष्ठमुच्यते। स्नातानां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते।
यथोपजीविनां धेनुर्देवादीनां धरा स्मृता। तथोपजीविनां गङ्गा सर्व्वप्राणभृतामिह। १८१०
देवाः सोमार्कसंस्थानि यथा सत्रादिभिर्मखैः। अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः।
जाह्नवीपुलिनोत्थाभिः सिकताभिः समुक्षितं। आत्मानं मन्यते लोको दिविष्ठमिव शोभितं।
जाह्नवीतीरसम्भूतां मृदं मूर्द्ध्ना बिभर्त्ति यः। बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय निर्म्मलं।
गङ्गोर्म्मिभिरथो दिग्धः पुरुषं पवनो यदा। स्पृशते सोऽस्य पाप्मानं सर्व्वमेवापकर्षति।
व्यसनैरभितप्तस्य नरस्य विनशिष्यतः। गङ्गादर्शनजा प्रीतिर्व्यसनान्यपकर्षति। १८१५
हंसारावैः कोकरवै रवैरन्यैश्च पक्षिणां। पस्पर्द्ध गङ्गा गन्धर्व्वान् पुलिनैश्च शिलोच्चयान्।
हंसादिभिः सुबहुभिर्विविधैः पक्षिभिर्वृता। गङ्गां गोकुलसम्बाधां दृष्ट्वा स्वर्गोऽपि विस्मृतः।
न सा प्रीतिर्दिविष्ठस्य सर्व्वकामानुपाश्नतः। अभवद्या परा प्रीतिर्गङ्गायाः पुलिने नृणां।
वाङ्मनःकर्म्मजैर्ग्रस्तः पापैरपि पुमानिह। वीक्ष्य गङ्गां भवेत्पूतो अत्र मे नास्ति संशयः।
सप्तावरान् सप्त परान् पितॄंस्तेभ्यश्च ये परे। पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वाऽवगाह्य च। १८२०

श्रुताऽभिलषिता पीता स्पृष्टा दृष्टाऽवगाहिता । गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ।
दर्शनात्स्पर्शनात्पानात्तथा गङ्गेति कीर्त्तनात् । पुनात्यपुण्यान्पुरुषाञ्छतशोऽथ सहस्रशः ।
य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च । स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा ।
न सुतैर्न च वित्तेन कर्म्मणा न च तत्फलं । प्राप्नुयात्पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाप्नुयात् ।
जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव च । समर्था ये न पश्यन्ति गङ्गां पुण्यजलां शिवां । १८८५
भूतभव्यभविष्यज्ञैर्म्महर्षिभिरुपस्थितां । देवैः सेन्द्रैश्च को गङ्गां नोपसेवेत मानवः ।
वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः । विद्यावद्भिः श्रितां गङ्गां पुमान् को नाम नाश्रयेत् ।
उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसंमतः । चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ।
न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः । आदेहपतनाद्गङ्गामुपास्ते यः पुमानिह ।
महापुण्याञ्च गगनात्पतन्तीं वै महेश्वरः । दधार शिरसा गङ्गां तामेव दिवि सेवते । १८९०
अलङ्कृतास्त्रयो लोकाः पथिभिर्व्विमलैस्त्रिभिः । यस्तु तस्या जलं सेवेत्कृतकृत्यः पुमान् भवेत् ।
दिवि ज्योतिर्यथादित्यः पितॄणाञ्चैव चन्द्रमाः । देवेशश्च यथा नृणां गङ्गा च सरितां तथा ।
मात्रा पित्रा सुतैर्द्दारैर्व्वियुक्तस्य धनेन वा । न भवेद्धि तथा दुःखं यथा गङ्गावियोगजं ।
नारण्यैर्नेष्टविषयैर्न सुतैर्न धनागमैः । तथा प्रसादो भवति गङ्गां वीक्ष्य यथा भवेत् ।
पूर्णमिन्दुं यथा दृष्ट्वा नृणां दृष्टिः प्रमोदति । तथा त्रिपथगां दृष्ट्वा नृणां दृष्टिः प्रमोदति । १८९५
तद्भावस्तद्गतमनास्तन्निष्ठस्तत्परायणः । गङ्गां योऽनुगतो भक्त्या स तस्याः प्रियतां व्रजेत् ।
भूस्थैः खस्थैर्द्दिविष्ठैश्च भूतैरुच्चावचैरपि । गङ्गा विगाह्या सततमेतत्कार्य्यतमं सतां ।
विश्वलोकेषु पुण्यत्वाद्गङ्गायाः प्रथितं यशः । यत्पुत्रान् सगरस्येतो भस्माख्याननयद्दिवं ।
वाय्वीरिताभिः सुमनोहराभिर्द्रुताभिरत्यर्थसमुत्थिताभिः । गङ्गोर्म्मिभिर्भानुमतीभिरिद्धाः सहस्ररश्मिप्रतिमा भवन्ति ।
पयस्विनीं घृतिनीमत्युदारां समृद्धिनीं वेगिनीं दुर्व्विगाह्यां । गङ्गां गत्वा यैः शरीरं विसृष्टं गता धीरास्ते विबुधैः समत्वं । १९००
अन्धान् जडान् द्रव्यहीनांश्च गङ्गा यशस्विनी वृहती विश्वरूपा । देवैः सेन्द्रैर्मुनिभिर्म्मानवैश्च निषेविता सर्व्वकामैर्युनक्ति ।
ऊर्ज्जावतीं महापुण्यां मधुमतीं त्रिवर्त्मगां । त्रिलोकगोप्त्रीं ये गङ्गां संश्रितास्ते दिवं गताः ।
यो वत्स्यति द्रक्ष्यति वाऽपि मर्त्यस्तस्मै प्रयच्छन्ति सुखानि देवाः । तद्भाविताः स्पर्शनदर्शनेन इष्टां गतिं तस्य सुरा दिशन्ति ।
दक्षां पृश्निं वृहतीं विप्रकृष्टां शिवामृद्धां भागिनीं सुप्रसन्नां । विभावरीं सर्व्वभूतप्रतिष्ठां गङ्गां गता ये त्रिदिवं गतास्ते ।
ख्यातिर्यस्याः खं दिवं गाञ्च नित्यं पुरा दिशो विदिशश्चावतस्थे । तस्या जलं सेव्य सरिद्वराया मर्त्याः सर्व्वे कृतकृत्या भवन्ति । १९०५
इयं गङ्गेति नियतं प्रतिष्ठा गुहस्य रुक्मस्य च गर्भयोषा । प्रातस्त्रिवर्गा घृतवहा विपाप्मा गङ्गाऽवतीर्णा वियतो विश्वतोया ।
सुताऽवनीध्रस्य हरस्य भार्य्या दिवो भुवश्चापि कृतानुरूपा । भव्या पृथिव्या भागिनी चापि राजन् गङ्गा लोकानां पुण्यदा वै त्रयाणां ।

मधुस्रवा घृतधारा घृतार्च्चिर्महोर्म्मिभिः शोभिता ब्राह्मणैश्च । दिवश्च्युता शिरसात्ता शिवेन गङ्गाऽवनीध्रास्त्रिदिवस्य माता ।

योनिर्व्वरिष्ठा विरजा वितन्वी शय्या विरावा रविसा वशीरा । सिद्धावती पावनी रिष्टमिष्ठा गङ्गोक्षितानां भुवनस्य पन्थाः ।

क्षान्त्या मह्या गोपने धारणे च दीप्त्या कृशानोस्तपनस्य चैव । तुल्या गङ्गा सम्मता ब्राह्मणानां गुहस्य ब्रह्मण्यतया च नित्यं । १८१०

ऋषिष्टुतां विष्णुपदीं पुराणां सुपुण्यतोयां मनसाऽपि लोके । सर्व्वात्मना जाह्नवीं ये प्रपन्नास्ते ब्रह्मणः सदनं सम्प्रयाताः ।

लोकानवेक्ष्य जननीव पुत्रान् सर्व्वात्मना सर्व्वगुणोपपन्नान् । तत्स्थानकं ब्राह्ममभीप्समानैर्गङ्गा सदैवात्मवशैरुपास्या ।

उस्रां पुष्टां शिवतीं विश्वभोज्यामिरावतीं रेवतीं भूधराणां । शिष्टाश्रयाममृतां ब्रह्मकान्तां गङ्गां श्रयेदात्मवान् सिद्धिकामः ।

प्रसाद्य देवान् स विभून् समस्तान् भगीरथस्तपसोग्रेण गङ्गां । गामानयत्तामभिगम्य शश्वत् पुंसां भयं नेह चामुत्र विद्यात् ।

उदाहृतः सर्व्वथा ते गुणानां मयैकदेशः प्रसमीक्ष्य बुद्ध्या । शक्तिर्न मे काचिदिहास्ति वक्तुं गुणान् सर्व्वान् परिमातुं तथैव । १८१५

मेरोः समुद्रस्य च सर्व्वरत्नैः सङ्ख्योपलानामुदकस्य वापि । वक्तुं शक्यं नेह गङ्गाजलानां गुणाख्यानं परिमातुं तथैव ।

तस्मादेतान् परया श्रद्धयोक्तान् गुणान् सर्व्वान् जाह्नवीयान् सदैव । भवेद्वाचा मनसा कर्म्मणैव भक्त्या युक्तः श्रद्धया श्रद्दधानः ।

लोकानिमांस्त्रीन् यशसा वितत्य सिद्धिं प्राप्य महतीं तां दुरापां । गङ्गाकृतानचिरेणैव लोकान् यथेष्टमिष्टान् विहरिष्यसि त्वं ।

तव मम च गुणैर्म्महानुभावा जुषतु मतिं सततं स्वधर्म्मयुक्तैः । अभिगतजनवत्सला हि गङ्गा भजति युनक्ति सुखैश्च भक्तिमन्तं ।

॥ भीष्म उवाच ॥ इति परममतिर्गुणाननेकाञ्छिलरतये त्रिपथानुयोगरूपान् । बहुविधमनुशास्य तथ्यरूपान् गगनतलं द्युतिमान् विवेश विद्वान् । १८२०

शिलवृत्तिस्तु सिद्धस्य वाक्यैः सम्बोधितस्तदा । गङ्गामुपास्य विधिवत् सिद्धिं प्राप सुदुर्लभां ।

तथा त्वमपि कौन्तेय भक्त्या परमया युतः । गङ्गामभ्येहि सततं प्राप्स्यसे सिद्धिमुत्तमां ।

॥ वैशम्पायन उवाच ॥ श्रुत्वेतिहासं भीष्मोक्तं गङ्गायाः स्तवसंयुतं । युधिष्ठिरः परां प्रीतिमगमद्भ्रातृभिः सह ।

इतिहासमिमं पुण्यं शृणुयाद्यः पठेत वा । गङ्गायाः स्तवसंयुक्तं स मुच्येत् सर्व्वकिल्बिषैः ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि गङ्गामाहात्म्यकथने षड्विंशोऽध्यायः ॥ २६ ॥

॥ युधिष्ठिर उवाच ॥ प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च यथा भवान् । गुणैश्च विविधैः सर्व्वैर्व्वयसा च समन्वितः । १८२५

भवान् विशिष्टो बुद्ध्या च प्रज्ञया तपसा तथा । तस्माद्भवन्तं पृच्छामि धर्म्मं धर्म्मभृताम्वर ।

नान्यस्त्वदन्यो लोकेषु प्रष्टव्योऽस्ति नराधिप । क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम ।

ब्राह्मण्यं प्राप्नुयाद्येन तन्मे व्याख्यातुमर्हसि । तपसा वा सुमहता कर्म्मणा वा श्रुतेन वा ।

ब्राह्मण्यमथ चेदिच्छेत्तन्मे ब्रूहि पितामह ।

॥ भीष्म उवाच ॥ ब्राह्मण्यं तात दुष्प्राप्यं वर्णैः क्षत्रादिभिस्त्रिभिः । परं हि सर्व्वभूतानां स्थानमेतद्युधिष्ठिर । १८३०

बह्वीस्तु संसरन् योनीर्जायमानः पुनः पुनः। पर्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। मतङ्गस्य च संवादं गर्द्दभ्याश्च युधिष्ठिर।
द्विजातेः कस्यचित्तात तुल्यवर्णः सुतस्त्वभूत्। मतङ्गो नाम नाम्ना वै सर्व्वैः समुदितो गुणैः।
स यज्ञकारः कौन्तेय पित्रोत्सृष्टः परन्तप। प्रायाद्गर्द्दभयुक्तेन रथेनाप्याशुगामिना।
स बालं गर्द्दभं राजन् वहन्तं मातुरन्तिके। निरविध्यत्प्रतोदेन नासिकायां पुनः पुनः। १८७५
तं तु तीव्रव्रणं दृष्ट्वा गर्द्दभी पुत्रगृद्धिनी। उवाच मा शुचः पुत्र चण्डालस्त्वाधितिष्ठति।
ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मण उच्यते। आचार्य्यः सर्व्वभूतानां शास्ता किं प्रहरिष्यति।
अयन्तु पापप्रकृतिर्ब्बाले न कुरुते दयां। स्वयोनिं मानयत्येष भावो भावं नियच्छति।
एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभीवचः। अवतीर्य्य रथात्तूर्णं रासभीं प्रत्यभाषत।
ब्रूहि रासभि कल्याणि माता मे येन दूषिता। कथं मां वेत्सि चण्डालं क्षिप्रं रासभि शंस मे। १८८०
कथं मां वेत्सि चण्डालं ब्राह्मण्यं येन नश्यते। तत्त्वेनैतन्महाप्राज्ञे ब्रूहि सर्व्वमशेषतः।
॥ गर्द्दभ्युवाच ॥ ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन च। जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत्।
एवमुक्तो मतङ्गस्तु प्रत्युपायाद्गृहं प्रति। तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत्।
मया त्वं यज्ञसंसिद्धौ नियुक्तो गुरुकर्म्मणि। कस्मात् प्रतिनिवृत्तोऽसि कच्चिन्न कुशलं तव।
॥ मतङ्ग उवाच ॥ अयोनिरग्र्ययोनिर्व्वा कथं स कुशली भवेत्। कुशलन्तु कुतस्तस्य यस्येयं जननी पितः। १८८५
ब्राह्मण्यां वृषलाज्जातं पितर्व्वेदयतीव मां। अमानुषी गर्द्दभीयं तस्मात्तप्स्ये तपो महत्।
एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः। ततो गत्वा महारण्यमतप्यत् सुमहत्तपः।
ततः सन्तापयामास विबुधांस्तपसाऽन्वितः। मतङ्गः सुखसंप्रेप्सुः स्थानं सुचरितादपि।
तं तथा तपसा युक्तमुवाच हरिवाहनः। मतङ्ग तप्यसे किं त्वं भोगानुत्सृज्य मानुषान्।
वरं ददामि ते हन्त वृणीष्व त्वं यदिच्छसि। यच्चाप्यवाप्यं हृदि ते सर्व्वं तद्ब्रूहि माचिरं। १८९०
॥ मतङ्ग उवाच ॥ ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः। गच्छेयं तदवाप्येह वर एष वृतो मया।
॥ भीष्म उवाच ॥ एतच्छ्रुत्वा तु वचनं तमुवाच पुरन्दरः। मतङ्ग दुर्लभमिदं विप्रत्वं प्रार्थ्यते त्वया।
ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः। विनशिष्यसि दुर्ब्बुद्धे तदुपारम माचिरं।
श्रेष्ठतां सर्व्वभूतेषु तपोऽर्थं नातिवर्त्तते। तदग्र्यं प्रार्थयानस्त्वमचिरादेव नशिष्यसि।
देवताऽसुरमर्त्त्येषु यत्पवित्रं परं स्मृतं। चण्डालयोनौ जातेन न तत् प्राप्यं कथञ्चन। १८९५
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि इन्द्रमतङ्गसंवादे सप्तविंशोऽध्यायः ॥ २७ ॥
॥ भीष्म उवाच ॥ एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः। अतिष्ठदेकपादेन वर्षाणां शतमच्युत।
तमुवाच ततः शक्रः पुनरेव महायशाः। ब्राह्मण्यं दुर्लभं तात प्रार्थयानो न लप्स्यसे।
मतङ्ग परमं स्थानं प्रार्थयन् विनशिष्यसि। मा कृथाः साहसं पुत्र नैष धर्म्मपथस्तव।
न हि शक्यं त्वया प्राप्तुं ब्राह्मण्यमिह दुर्म्मते। अप्राप्यं प्रार्थयानो हि न चिराद्विनशिष्यसि।

मतङ्ग परमं स्थानं प्रार्थयानोऽकृतात्मना । विनाशमेव तपसा सर्व्वथा न भविष्यसि । १९००

तिर्य्यग्योनिगतः सर्व्वो मानुष्यं यदि गच्छति । स जायते पुल्कसो वा चण्डालो वाऽप्यसंशयः ।

पुल्कसः पापयोनिर्वा यः कश्चिदिह लक्ष्यते । स तस्यामेव सुचिरं मतङ्ग परिवर्त्तते ।

ततो दशशते काले लभते शूद्रतामिति । शूद्रयोनावपि ततो बहुशः परिवर्त्तते ।

ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि । वैश्यतायां चिरं कालं तत्रैव परिवर्त्तते ।

ततः षष्टिगुणे काले राजन्यो नाम जायते । ततः षष्टिगुणे काले लभते ब्रह्मबन्धुतां । १९०५

ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्त्तते । ततस्तु द्विशते काले लभते काण्डपृष्ठतां ।

काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्त्तते । ततस्तु त्रिशते काले लभते जपतामपि ।

तञ्च प्राप्य चिरं कालं तत्रैव परिवर्त्तते । ततश्चतुःशते काले श्रोत्रियो नाम जायते ।

श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्त्तते । तदैवं शोकहर्षौ तु कामद्वेषौ च पुत्रक ।

अतिमानातिवादौ च प्रविशेते द्विजाधमं । तांश्चेज्जयति शत्रून् स तदा प्राप्नोति सद्गतिं । १९१०

अथ ते वै जयन्त्येनं तालाग्रादिव पात्यते । मतङ्ग सम्प्रधार्य्यैवं यदहं त्वामचूचुदं ।

वृणीष्व काममन्यं त्वं ब्राह्मण्यं हि सुदुर्लभं ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि इन्द्रमतङ्गसंवादे अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ भीष्म उवाच ॥ एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः । सहस्रमेकपादेन ततो ध्याने व्यतिष्ठत ।

तं सहस्रावरे काले शक्रो द्रष्टुमुपागमत् । तदेव च पुनर्वाक्यमुवाच बलवृत्रहा ।

॥ मतङ्ग उवाच ॥ इदं वर्षसहस्रं वै ब्रह्मचारी समाहितः । अतिष्ठमेकपादेन ब्राह्मण्यं नाप्नुयां कथं । १९१५

॥ शक्र उवाच ॥ चण्डालयोनौ जातेन नावाप्यं वै कथञ्चन । अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः ।

एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः । अभ्यतिष्ठद्गयां गत्वा सोऽङ्गुष्ठेन शतं समाः ।

सुदुर्व्वहं वहन् योगं कृशो धमनिसन्ततः । त्वगस्थिभूतो धर्म्मात्मा स पपातेति नः श्रुतं ।

तं पतन्तमभिद्रुत्य परिजग्राह वासवः । वराणामीश्वरो दाता सर्व्वभूतहिते रतः ।

॥ शक्र उवाच ॥ मतङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते । ब्राह्मण्यं दुर्ल्लभतरं संवृतं परिपन्थिभिः । १९२०

पूजयन् सुखमाप्नोति दुःखमाप्नोत्यपूजयन् । ब्राह्मणः सर्व्वभूतानां योगक्षेमसमर्पिता ।

ब्राह्मणेभ्योऽनुतृप्यन्ति पितरो देवतास्तथा । ब्राह्मणः सर्व्वभूतानां मतङ्ग पर उच्यते ।

ब्राह्मणः कुरुते यद्धि यथा यद्यच्च वाञ्छति । बह्वीस्तु संविशन् योनीर्जायमानः पुनः पुनः ।

पर्य्याये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति । तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः ।

अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः । १९२५

॥ मतङ्ग उवाच ॥ किं मां तुदसि दुःखार्त्तं मृतं मारयसे च मां । त्वां न शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूषसे ।

ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्व्वर्णैः शतक्रतो । सुदुर्ल्लभं सदाऽवाप्य नानुतिष्ठन्ति मानवाः ।

यः पापेभ्यः पापतमस्तेषामधम एव सः । ब्राह्मण्यं यो न जानीते धनं लब्ध्वेव दुर्ल्लभं ।

दुष्प्रापं खलु विप्रत्वं प्राप्तं दुरनुपालनं । दुःखापहमवाप्यैतन्नानुतिष्ठन्ति मानवाः ।
एकारामो ह्यहं शक्र निर्द्वन्द्वो निष्परिग्रहः । अहिंसादममास्थाय कथं नार्हामि विप्रतां ।
दैवन्तु कथमेतद्वै यदहं मातृदोषतः । एतामवस्थां संप्राप्तो धर्म्मज्ञः सन् पुरन्दर ।
नूनं दैवं न शक्यं हि पौरुषेणातिवर्त्तितुं । यदर्थं यत्नवानेवं न लभे विप्रतां विभो ।
एवं गते तु धर्म्मज्ञ दातुमर्हसि मे वरं । यदि तेऽहमनुग्राह्यः किञ्चिद्वा सुकृतं मम ।
॥ वैशम्पायन उवाच ॥ वृणीष्वेति तदा प्राह ततस्तं बलवृत्रहा । चोदितस्तु महेन्द्रेण मतङ्गः प्राब्रवीदिदं ।
यथाकामविहारी स्यां कामरूपी विहङ्गमः । ब्रह्मक्षत्राविरोधेन पूजाञ्च प्राप्नुयामहं ।
यथा ममाक्षया कीर्त्तिर्भवेच्चापि पुरन्दर । कर्त्तुमर्हसि तद्देव शिरसा त्वां प्रसादये ।
॥ शक्र उवाच ॥ छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि । कीर्त्तिश्च तेऽतुला वत्स त्रिषु लोकेषु यास्यति ।
एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत । प्राणांस्त्यक्त्वा मतङ्गोऽपि संप्राप्तः स्थानमुत्तमं ।
एवमेतत् परं स्थानं ब्राह्मण्यं नाम भारत । तच्च दुष्प्रापमिह वै महेन्द्रवचनं यथा ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि इन्द्रमतङ्गसंवादे एकोनत्रिंशोऽध्यायः ॥ २८ ॥
॥ युधिष्ठिर उवाच ॥ श्रुतं मे महदाख्यानमेतत् कुरुकुलोद्वह । सुदुष्प्रापं यद्ब्रवीषि ब्राह्मण्यं वदताम्वर ।
विश्वामित्रेण च पुरा ब्राह्मण्यं प्राप्तमित्युत । श्रूयते वदसे तच्च दुष्प्रापमिति सत्तम ।
वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः । तदेव तावद्गाङ्गेय श्रोतुमिच्छाम्यहं विभो ।
स केन कर्म्मणा प्राप्तो ब्राह्मण्यं राजसत्तम । वरेण तपसा वाऽपि तन्मे व्याख्यातुमर्हसि ।
॥ भीष्म उवाच ॥ शृणु राजन् यथा राजा वीतहव्यो महायशाः । राजर्षिर्दुर्लभं प्राप्तो ब्राह्मण्यं लोकसत्कृतं ।
मनोर्म्महात्मनस्तात प्रजा धर्म्मेण शासतः । बभूव पुत्रो धर्म्मात्मा शर्य्यातिरिति विश्रुतः ।
तस्यान्ववाये द्वौ राजन् राजानौ सम्बभूवतुः । हैहयस्तालजङ्घश्च वत्सेषु जयताम्वरः ।
हैहयस्य तु राजेन्द्र दशस्त्रीषु भारत । शतं बभूव पुत्राणां शूराणामनिवर्त्तिनां ।
तुल्यरूपप्रभावानां बलिनां युद्धशालिनां । धनुर्वेदे च वेदे च सर्व्वत्रैव कृतश्रमाः ।
काशिष्वपि नृपो राजन् दिवोदासपितामहः । हर्य्यश्व इति विख्यातो बभूव जयताम्वरः ।
स वीतहव्यदायादैरागत्य पुरुषर्षभ । गङ्गायमुनयोर्म्मध्ये संग्रामे विनिपातितः ।
तन्तु हत्वा नरपतिं हैहयास्ते महारथाः । प्रतिजग्मुः पुरीं रम्यां वत्सानामकुतोभयाः ।
हर्य्यश्वस्य च दायादः काशिराजोऽभ्यषिच्यत । सुदेवो देवसङ्काशः साक्षाद्धर्म्म इवापरः ।
स पालयामास महीं धर्म्मात्मा काशिनन्दनः । तैर्व्वीतहव्यैरागत्य युधि सर्व्वैर्विनिर्ज्जितः ।
तमथाजौ विनिर्ज्जित्य प्रतिजग्मुर्यथागतं । सौदेवस्त्वथ काशीशो दिवोदासोऽभ्यषिच्यत ।
दिवोदासस्तु विज्ञाय वीर्य्यं तेषां महात्मनां । वाराणसीं महातेजा निर्म्ममे शक्रशासनात् ।
विप्रक्षत्रियसम्बाधां वैश्यशूद्रसमाकुलां । नैकद्रव्योच्चयवतीं समृद्धविपणापणां ।
गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तम । गोमत्या दक्षिणे कूले शक्रस्येवामरावतीं ।

तत्र तं राजशार्दूलं निविष्टं महीपतिं। आगत्य हैहया भूयः पर्यधावन्त भारत।

स निष्क्रम्य ददौ युद्धं तेभ्यो राजा महाबलः। देवासुरसमं घोरं दिवोदासो महाद्युतिः।

स तु युद्धे महाराज दिनानां दशतीर्दश। हतवाहनभूयिष्ठस्ततो दैन्यमुपागमत्। १९६०

हतयोधस्ततो राजन् क्षीणकोशश्च भूमिपः। दिवोदासः पुरीं त्यक्ता पलायनपरोऽभवत्।

गत्वाश्रमपदं रम्यं भरद्वाजस्य धीमतः। जगाम शरणं राजा कृताञ्जलिररिन्दम।

तमुवाच भरद्वाजो ज्येष्ठः पुत्रो बृहस्पतेः। पुरोधाः शीलसम्पन्नो दिवोदासं महीपतिं।

किमागमनकार्य्यं ते सर्व्वं प्रब्रूहि मे नृप। यत्ते प्रियं तत् करिष्ये न मेऽत्रास्ति विचारणा।

॥ राजोवाच ॥ भगवन् वैतहव्यैर्मे युद्धे वंशः प्रणाशितः। अहमेकः परिद्यूनो भवन्तं शरणं गतः। १९६५

शिष्यस्नेहेन भगवंस्त्वं मां रक्षितुमर्हसि। एकशेषः कृतो वंशो मम तैः पापकर्म्मभिः।

तमुवाच महाभागो भरद्वाजः प्रतापवान्। न भेतव्यं न भेतव्यं सौदेव व्येतु ते भयं।

अहमिष्टिं करिष्यामि पुत्रार्थं ते विशाम्पते। वैतहव्यसहस्राणि येन त्वं प्रहरिष्यसि।

तत इष्टिं चकारर्षिस्तस्य वै पुत्रकामिकीं। अथास्य तनयो जज्ञे प्रतर्द्दन इति श्रुतः।

स जातमात्रो ववृधे समाः सद्यस्त्रयोदश। वेदञ्चाधिजगे कृत्स्नं धनुर्व्वेदञ्च भारत। १९७०

योगेन च समाविष्टो भरद्वाजेन धीमता। तेजो लौक्यं स संगृह्य तस्मिन् देशे समाविशत्।

ततः स कवची धन्वी स्तूयमानः सुरर्षिभिः। बन्दिभिर्वन्द्यमानश्च बभौ सूर्य्य इवोदितः।

स रथी बद्धनिस्त्रिंशो बभौ दीप्त इवानलः। प्रययौ स धनुर्धुन्वन् खड्गी चर्म्मी शरासनी।

तं दृष्ट्वा परमं हर्षं सुदेवतनयो ययौ। मेने च मनसा दग्धान् वैतहव्यान् स पार्थिवः।

ततोऽसौ यौवराज्ये च स्थापयित्वा प्रतर्द्दनं। कृतकृत्यं तदात्मानं स राजा अभ्यनन्दत। १९७५

ततस्तु वैतहव्यानां वधाय स महीपतिः। पुत्रं प्रस्थापयामास प्रतर्द्दनमरिन्दमं।

सरथः स तु सन्तीर्य्य गङ्गामाशु पराक्रमी। प्रययौ वीतहव्यानां पुरीं परपुरञ्जयः।

वैतहव्यास्तु संश्रुत्य रथघोषं समुद्धतं। निर्ययुर्नगराकारै रथैः पररथारुजैः।

निष्क्रम्य ते नरव्याघ्रा दंशिताश्चित्रयोधिनः। प्रतर्द्दनं समाजघ्नुः शरवर्षैरुदायुधैः।

शस्त्रैश्च विविधाकारै रथौघैश्च युधिष्ठिर। अभ्यवर्षन्त राजानं हिमवन्तमिवाम्बुदाः। १९८०

अस्त्रैरस्त्राणि संवार्य्य तेषां राजा प्रतर्द्दनः। जघान तान् महातेजा वज्रानलसमैः शरैः।

कृत्तोत्तमाङ्गास्ते राजन् भल्लैः शतसहस्रशः। अपतन् रुधिरार्द्राङ्गा निकृत्ता इव किंशुकाः।

हतेषु तेषु सर्व्वेषु वीतहव्यः सुतेष्वथ। प्राद्रवन्नगरं हित्वा भृगोराश्रममप्युत।

ययौ भृगुञ्च शरणं वीतहव्यो नराधिपः। अभयञ्च ददौ तस्मै राज्ञे राजन् भृगुस्तदा।

अथानुपदमेवाशु तत्रागच्छत् प्रतर्द्दनः। स प्राप्य चाश्रमपदं दिवोदासात्मजोऽब्रवीत्। १९८५

भो भोः केऽत्राश्रमे सन्ति भृगोः शिष्या महात्मनः। द्रष्टुमिच्छे मुनिमहं तस्याचक्षत मामिति।

स तं विदित्वा तु भृगुर्निश्चक्रामाश्रमात्तदा। पूजयामास च ततो विधिना नृपसत्तमं।

उवाच चैनं राजेन्द्र किं कार्यं ब्रूहि पार्थिव । स चोवाच नृपस्तस्मै यदागमनकारणं ।
॥ राजोवाच ॥ अयं ब्रह्मन्नितो राजा वीतहव्यो विसर्जितः । तस्य पुत्रैर्हि मे कृत्स्नो ब्रह्मन् वंशः प्रणाशितः ।
उत्सादितश्च विषयः काशीनां रत्नसञ्चयः । एतस्य वीर्यदृप्तस्य हतं पुत्रशतं मया । १९९०
अस्येदानीं वधाद्ब्रह्मन् भविष्याम्यनृणः पितुः । तमुवाच कृपाविष्टो भृगुर्धर्मभृतां वरः ।
नेहास्ति क्षत्रियः कश्चित् सर्वे हीमे द्विजातयः । एवन्तु वचनं श्रुत्वा भृगोस्तथ्यं प्रतर्दनः ।
पादावुपस्पृश्य शनैः प्रहृष्टो वाक्यमब्रवीत् । एवमप्यस्मि भगवन् कृतकृत्यो न संशयः ।
स एष राजा वीर्येण स्वजातिं त्याजितो मया । अनुजानीहि मां ब्रह्मन् ध्यायस्व च शिवेन मां ।
त्याजितो हि मया जातिमेष राजा भृगूद्वह । ततस्तेनाभ्यनुज्ञातो ययौ राजा प्रतर्दनः । १९९५
यथागतं महाराज मुक्त्वा विषमिवोरगः । भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः ।
वीतहव्यो महाराज ब्रह्मवादित्वमेव च । तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः ।
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत् । ऋग्वेदे वर्त्तते चाग्र्या श्रुतिर्यस्य महात्मनः ।
यत्र गृत्समदो ब्रह्मन् ब्राह्मणैः स महीयते । स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत् ।
पुत्रो गृत्समदस्यापि सुचेता अभवद्द्विजः । वर्चाः सुतेजसः पुत्रो विहव्यस्तस्य चात्मजः । २०००
विहव्यस्य तु पुत्रस्तु वितत्यस्तस्य चात्मजः । वितत्यस्य सुतः सत्यः सन्तः सत्यस्य चात्मजः ।
श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत्तमः । तमसश्च प्रकाशोऽभूत्तनयो द्विजसत्तमः ।
प्रकाशस्य च वागिन्द्रो बभूव जपतां वरः । तस्यात्मजश्च प्रमतिर्वेदवेदाङ्गपारगः ।
घृताच्यां तस्य पुत्रस्तु रुरुर्नामोदपद्यत । प्रमद्वरायास्तु रुरोः पुत्रः समुदपद्यत ।
शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः । एवं विप्रत्वमगमद्वीतहव्यो नराधिपः । २००५
भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ । तथैव कथितो वंशो मया गार्त्समदस्तव ।
विस्तरेण महाराज किमन्यदनुपृच्छसि ।
इति श्रीमहाभारते अनुशासनपर्वणि आनुशासनिके पर्वणि वीतहव्योपाख्याने त्रिंशोऽध्यायः ॥ ३० ॥
॥ युधिष्ठिर उवाच ॥ के पूज्या वै त्रिलोकेऽस्मिन् मानवा भरतर्षभ । विस्तरेण महाप्राज्ञ न हि तृप्यामि कथ्यतः ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । नारदस्य च संवादं वासुदेवस्य चोभयोः ।
नारदं प्राञ्जलिं दृष्ट्वा पूजयानं द्विजर्षभान् । केशवः परिपप्रच्छ भगवन् कान्नमस्यसि । २०१०
बहुमानपरः केषु भगवन् कान्नमस्यसि । शक्यं चेच्छ्रोतुमिच्छामि ब्रूह्येतद्धर्मवित्तम ।
॥ नारद उवाच ॥ शृणु गोविन्द यानेतान् पूजयाम्यरिमर्दन । त्वत्तोऽन्यः कः पुमाँल्लोके श्रोतुमेतदिहार्हति ।
वरुणं वायुमादित्यं पर्जन्यं जातवेदसं । स्थाणुं स्कन्दं तथा लक्ष्मीं विष्णुं ब्रह्माणमेव च ।
वाचस्पतिं चन्द्रमसमपः पृथ्वीं सरस्वतीं । सततं ये नमस्यन्ति तान्नमस्याम्यहं विभो ।
तपोधनान् वेदविदो नित्यं वेदपरायणान् । महार्हान् वृष्णिशार्दूल सदा संपूजयाम्यहं । २०१५
अभुक्त्वा देवकार्याणि कुर्वते येऽविकत्थनाः । सन्तुष्टाश्च क्षमायुक्तास्तान्नमस्याम्यहं विभो ।

सम्यग्ददन्ति ये चेष्टान् क्षान्ता दान्ता जितेन्द्रियाः। सस्यं धनं क्षितिं गाश्च तान्नमस्यामि यादव।
ये वै तपसि वर्त्तन्ते वने मूलफलाशनाः। असञ्चयाः क्रियावन्तस्तान्नमस्यामि यादव।
ये भृत्यभरणे शक्ताः सततञ्चातिथिव्रताः। भुञ्जते देवशेषाणि तान्नमस्यामि यादव।
ये वेदं प्राप्य दुर्द्धर्षा वाग्मिनो ब्रह्मचारिणः। याजनाध्यापने युक्ता नित्यं तान् पूजयाम्यहं। १०४०
प्रसन्नहृदयाश्चैव सर्व्वसत्त्वेषु नित्यशः। आपृष्ठतापात् स्वाध्याये युक्तांस्तान् पूजयाम्यहं।
गुरुप्रसादे स्वाध्याये यतन्ते ये स्थिरव्रताः। शुश्रूषवोऽनसूयन्तस्तान् नमस्यामि यादव।
सुव्रता मुनयो ये च ब्राह्मणाः सत्यसङ्गराः। वोढारो हव्यकव्यानां तान्नमस्यामि यादव।
भैक्ष्यचर्य्यासु निरताः कृशा गुरुकुलाश्रयाः। निःसुखा निर्धना ये तु तान्नमस्यामि यादव।
निर्म्ममा निष्प्रतिद्वन्द्वा निर्ह्रीका निष्प्रयोजनाः। ये वेदं प्राप्य दुर्द्धर्षा वाग्मिनो ब्रह्मवादिनः। १०४५
अहिंसानिरता ये च ये च सत्यव्रता नराः। दान्ताः शमपराश्चैव तान्नमस्यामि यादव।
देवतातिथिपूजायां युक्ता ये गृहमेधिनः। कपोतवृत्तयो नित्यं तान्नमस्यामि यादव।
येषां त्रिवर्गः कार्य्येषु वर्त्तते नोपहीयते। शिष्टाचारप्रवृत्ताश्च तान्नमस्याम्यहं सदा।
ब्राह्मणाः श्रुतसम्पन्ना ये त्रिवर्गमनुष्ठिताः। अलोलुपाः पुण्यशीलास्तान्नमस्यामि केशव।
अब्भक्षा वायुभक्षाश्च सुधाभक्षाश्च ये सदा। व्रतैश्च विविधैर्युक्तास्तान्नमस्यामि माधव। १०५०
अयोनीनग्नियोनींश्च ब्रह्मयोनींस्तथैव च। सर्व्वभूतात्मयोनींश्च तान्नमस्याम्यहं सदा।
नित्यमेतान्नमस्यामि कृष्ण लोककरानृषीन्। लोकज्येष्ठान् कुलज्येष्ठांस्तमोघ्नान् लोकभास्करान्।
तस्मात्त्वमपि वार्ष्णेय द्विजान् पूजय नित्यदा। पूजिताः पूजनार्हा हि सुखं दास्यन्ति तेऽनघ।
अस्मिंल्लोके सदा ह्येते परत्र च सुखप्रदाः। चरन्ते मान्यमाना वै प्रदास्यन्ति सुखं तव।
ये सर्व्वातिथयो नित्यं गोषु च ब्राह्मणेषु च। नित्यं सत्ये चाभिरता दुर्गाण्यतितरन्ति ते। १०५५
नित्यं शमपरा ये च तथा ये चानसूयकाः। नित्यस्वाध्यायिनो ये च दुर्गाण्यतितरन्ति ते।
सर्व्वान्देवान्नमस्यन्ति ये चैकं वेदमाश्रिताः। श्रद्दधानाश्च दान्ताश्च दुर्गाण्यतितरन्ति ते।
तथैव विप्रप्रवरान्नमस्कृत्य यतव्रताः। भवन्ति ये दानरता दुर्गाण्यतितरन्ति ते।
तपस्विनश्च ये नित्यं कौमारव्रतचारिणः। तपसा भावितात्मानो दुर्गाण्यतितरन्ति ते।
देवतातिथिभृत्यानां पितृणाञ्चार्च्चने रताः। शिष्टान्नभोजिनो ये च दुर्गाण्यतितरन्ति ते। १०६०
अग्निमाधाय विधिवत् प्रयता धारयन्ति ये। प्राप्ताः सोमाहुतिञ्चैव दुर्गाण्यतितरन्ति ते।
मातापित्रोर्गुरुषु च सम्यग्वर्त्तन्ति ये सदा। यथा त्वं वृष्णिशार्दूलेत्युक्त्वैवं विरराम सः।
तस्मात्त्वमपि कौन्तेय पितृदेवद्विजातिथीन्। सम्यक् पूजयसे नित्यं गतिमिष्टामवाप्स्यसि।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि कृष्णनारदसंवादे एकत्रिंशोऽध्यायः॥ ३१॥
॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्व्वशास्त्रविशारद। त्वत्तोऽहं श्रोतुमिच्छामि धर्म्मं भरतसत्तम।
शरणागतं ये रक्षन्ति भूतग्रामं चतुर्व्विधं। किन्तस्य भरतश्रेष्ठ फलं भवति तत्त्वतः। १०६५

॥ भीष्म उवाच ॥ इदं शृणु महाप्राज्ञ धर्मपुत्र महायशः। इतिहासं पुरावृत्तं शरणार्थं महाफलं।
प्रपात्यमानः श्येनेन कपोतः प्रियदर्शनः। वृषदर्भं महाभागं नरेन्द्रं शरणं गतः।
स तं दृष्ट्वा विशुद्धात्मा त्रासादङ्कमुपागतं। आश्वास्याश्वसिहीत्याह न तेऽस्ति भयमण्डज।
भयं ते सुमहत् कस्मात् कुत्र किं वा कृतं त्वया। येन त्वमिह संप्राप्तो विसंज्ञो भ्रान्तचेतनः।
नवनीलोत्पलापीडचारुवर्ण सुदर्शन। दाडिमाशोकपुष्पाक्ष मा त्रसस्वाभयं तव। १९६०
मत्सकाशमनुप्राप्तं न त्वां कश्चित् समुत्सहेत्। मनसा ग्रहणं कर्तुं रक्षाध्यक्षपुरस्कृतं।
काशिराज्यं तदद्यैवं त्वदर्थं जीवितं तथा। त्यजेयं भव विस्रब्धः कपोत न भयं तव।
॥ श्येन उवाच ॥ ममैतद्विहितं भक्ष्यं न राजंस्त्रातुमर्हसि। अतिक्रान्तञ्च प्राप्तञ्च प्रयत्नाच्चोपपादितं।
मांसञ्च रुधिरञ्चास्य मज्जा मेदश्च मे हितं। परितोषकरो ह्येष ममास्याग्रतो भव।
तृष्णा मे बाधतेऽत्युग्रा क्षुधा निर्दहतीव मे। मुञ्चैनं न हि शक्ष्यामि राजन् मन्दयितुं क्षुधां। १९६५
मया ह्यनुसृतो ह्येष मत्पक्षनखविक्षतः। किञ्चिदुच्छ्वासनिःश्वासं न राजन् गोप्तुमर्हसि।
यदि स्वविषये राजन् प्रभुस्त्वं रक्षणे नृणां। खेचरस्य तृषार्त्तस्य न त्वं प्रभुरथोत्तमः।
यदि वैरिषु भृत्येषु स्वजनव्यवहारयोः। विषयेष्विन्द्रियाणाञ्च आकाशे मा पराक्रम।
प्रभुत्वं हि पराक्रम्य सम्यक् पक्षहरेषु ते। यदि त्वमिह धर्मार्थी मामपि द्रष्टुमर्हसि।
॥ भीष्म उवाच ॥ श्रुत्वा श्येनस्य तद्वाक्यं राजर्षिर्विस्मयं गतः। संभाव्य चैनं तद्वाक्यं तदर्थी प्रत्यभाषत। १९७०
॥ राजोवाच ॥ गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा। त्वदर्थमद्य क्रियतां क्षुधाप्रशमनाय ते।
शरणागतं न त्यजेयमिति मे व्रतमाहितं। न मुञ्चति ममाङ्गानि द्विजोऽयं पश्य वै द्विज।
॥ श्येन उवाच ॥ न वराहं न चोक्षाणं न चान्यान् विविधान् द्विजान्। भक्षयामि महाराज किमन्नाद्येन तेन मे
यस्तु मे विहितो भक्ष्यः स्वयं देवैः सनातनः। श्येनाः कपोतान् खादन्ति स्थितिरेषा सनातनी।
उशीनर कपोते तु यदि स्नेहस्तवानघ। ततस्त्वं मे प्रयच्छाद्य स्वमांसं तुलया धृतं। १९७५
॥ राजोवाच ॥ महाननुग्रहो मेऽद्य यस्त्वमेवमिहात्थ मां। बाढमेवं करिष्यामीत्युक्त्वाऽसौ राजसत्तमः।
उत्कृत्योत्कृत्य मांसानि तुलया समतोलयत्। अन्तःपुरे ततस्तस्य स्त्रियो रत्नविभूषिताः।
हाहाभूता विनिष्क्रान्ताः श्रुत्वा परमदुःखिताः। तासां रुदितशब्देन मन्त्रिभृत्यजनस्य च।
बभूव सुमहान्नादो मेघगम्भीरनिस्वनः। निरुद्धं गगनं सर्वं शुभ्रं मेघैः समन्ततः।
मही प्रचलिता चासीत्तस्य सत्येन कर्मणा। स राजा पार्श्वतश्चैव बाहुभ्यामूरुतश्च यत्। १९८०
तानि मांसानि संछिद्य तुलां पूरयतेऽशनैः। तथापि न समस्तेन कपोतेन बभूव ह।
अस्थिभूतो यदा राजा निर्मांसो रुधिरस्रवः। तुलां ततः समारूढः स्वमांसक्षयमुत्सृजन्।
ततः सेन्द्रास्त्रयो लोकास्तं नरेन्द्रमुपस्थिताः। भेर्यश्चाकाशगैस्तत्र वादिता देवदुन्दुभिः।
अमृतेनावसिक्तश्च वृषदर्भो नरेश्वरः। दिव्यैश्च सुसुखैर्माल्यैरभिवृष्टः पुनः पुनः।
देवगन्धर्वसंघातैरप्सरोभिश्च सर्वतः। नृत्तैश्चैवोपगीतश्च पितामह इव प्रभुः। १९८५

हेमप्रासादसम्बाधमणिकाञ्चनतोरणं । स वैदूर्य्यमणिस्तम्भं विमानं समधिष्ठितः ।
स राजर्षिर्गतः स्वर्गं कर्म्मणा तेन शाश्वतं । शरणागतेषु चैव त्वं कुरु सर्व्वं युधिष्ठिर ।
भक्तानामनुरक्तानामाश्रितानाञ्च रक्षिता । दयावान् सर्व्वभूतेषु परत्र सुखमेधते ।
साधुवृत्तो हि यो राजा सद्वृत्तमनुतिष्ठति । किन्न प्राप्तं भवेत्तेन स्वार्ज्जवेनेह कर्म्मणा ।
स राजर्षिर्व्विशुद्धात्मा धीरः सत्यपराक्रमः । काशीनामीश्वरः ख्यातस्त्रिषु लोकेषु कर्म्मणा । २१८०
योऽप्यन्यः कारयेदेवं शरणागतरक्षणं । सोऽपि गच्छेत तामेव गतिं भरतसत्तम ।
इदं वृत्तं हि राजर्षेर्वृषदर्भस्य कीर्त्तयन् । पूतात्मा वै भवेल्लोके शृणुयाच्च नित्यशः ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि श्येनकपोताख्याने द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ युधिष्ठिर उवाच ॥ किं राज्ञः सर्व्वकृत्यानां गरीयः स्यात् पितामह । कुर्व्वन् किं कर्म्म नृपतिरुभौ लोकौ समश्नुते ।
॥ भीष्म उवाच ॥ एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत । ब्राह्मणानामनुष्ठानमत्यन्तं सुखमिच्छता ।
कर्त्तव्यं पार्थिवेन्द्रेण तद्विद्धि भरतर्षभ । श्रोत्रियान् ब्राह्मणान् वृद्धान् नित्यमेवाभिपूजयेत् । २१८५
पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् । सान्त्वेन भोगदानेन नमस्कारैस्तथाऽर्च्चयेत् ।
एतत् कृत्यतमं राज्ञो नित्यमेवोपलक्षयेत् । यथात्मानं यथा पुत्त्रांस्तथैतान् प्रतिपालयेत् ।
ये चाप्येषां पूज्यतमास्तान् दृढं प्रतिपूजयेत् । तेषु शान्तेषु तद्राष्ट्रं सर्व्वमेव विराजते ।
ते पूज्यास्ते नमस्कार्य्या मान्यास्ते पितरो यथा । तेष्वेव यात्रा लोकानां भूतानामिव वासवे ।
अभिचारैरुपायैश्च दहेयुरपि तेजसा । निःशेषं कुपिताः कुर्य्युरुग्राः सत्यपराक्रमाः । २१९०
नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः । कुपिताः समुदीक्षन्ते दावेष्वग्निशिखा इव ।
बिभ्यत्येषां साहसिका गुणास्तेषामतीव हि । कूपा इव तृणच्छन्ना विशुद्धा द्यौरिवापरे ।
प्रसह्यकारिणः केचित् कार्पासमृदवोऽपरे । सन्ति चैषामतिशठास्तथैवान्ये तपस्विनः ।
कृषिगोरक्ष्यमप्येके भैक्षमन्येऽप्यनुष्ठिताः । चौराश्चान्येऽनृताश्चान्ये तथाऽन्ये नटनर्त्तकाः ।
सर्व्वकर्म्मसहाश्चान्ये पार्थिवेष्वितरेषु च । विविधाकारयुक्ताश्च ब्राह्मणा भरतर्षभ । २१९५
नानाकर्म्मसु रक्तानां बहुकर्म्मोपजीविनां । धर्म्मज्ञानां सतां तेषां नित्यमेवानुकीर्त्तयेत् ।
पितृणां देवतानाञ्च मनुष्योरगरक्षसां । पुराऽप्येते महाभागा ब्राह्मणा वै जनाधिप ।
नैते देवैर्न पितृभिर्न गन्धर्व्वैर्न राक्षसैः । नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः ।
अदैवं दैवतं कुर्य्युर्दैवतञ्चाप्यदैवतं । यमिच्छेयुः स राजा स्याद्यं नेष्टः स पराभवेत् ।
परिवादञ्च ये कुर्य्युर्ब्राह्मणानामचेतसः । सत्यं ब्रवीमि ते राजन् विनश्येयुर्न संशयः । २२००
निन्दाप्रशंसाकुशलाः कीर्त्त्यकीर्त्तिपरायणाः । परिकुप्यन्ति ते राजन् सततं द्विषतां द्विजाः ।
ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्द्धते । ब्राह्मणैर्यः पराक्रुष्टः पराभूयात् क्षणाद्धि सः ।
शका यवनकाम्बोजास्तास्ताः क्षत्रियजातयः । वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ।

द्राविडाश्च कलिन्दाश्च पुलिन्दाश्चाप्युशीनराः। कोलिसर्पा माहिषकास्तास्ताः क्षत्रियजातयः।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात्। श्रेयान् पराजयस्तेभ्यो न जयो जयतांवर। २१०५
यस्तु सर्व्वमिदं हन्याद्ब्राह्मणश्च न तत् समं। ब्रह्मवध्या महादोष इत्याहुः परमर्षयः।
परिवादो द्विजातीनां न श्रोतव्यः कथञ्चन। आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा।
न स जातो जनिष्यद्वा पृथिव्यामिह कश्चन। यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत्।
दुर्ग्राह्यो मुष्टिना वायुर्दुःस्पर्शः पाणिना शशी। दुर्द्धरा पृथिवी राजन् दुर्जया ब्राह्मणा भुवि।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि ब्राह्मणप्रशंसायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ भीष्म उवाच ॥ ब्राह्मणानेव सततं भृशं सम्परिपूजयेत्। एते हि सोमराजान ईश्वराः सुखदुःखयोः। २११०
एते भोगैरलङ्कारैरन्यैश्चैव किमिच्छकैः। सदा पूज्या नमस्कारै रक्ष्याश्च पितृवन्नृप।
ततो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात्। जायतां ब्रह्मवर्च्चसी राष्ट्रे वै ब्राह्मणः शुचिः।
महारथश्च राजन्य एष्टव्यः शत्रुतापनः। ब्राह्मणं जातिसम्पन्नं धर्म्मज्ञं संशितव्रतं।
वासयेत गृहे राजन् तस्मात् परमस्ति वै। ब्राह्मणेभ्यो हविर्दत्तं प्रतिगृह्णन्ति देवताः।
पितरः सर्व्वभूतानां नैतेभ्यो विद्यते परं। आदित्यश्चन्द्रमा वायुरापो भूरम्बरं दिशः। २११५
सर्व्वे ब्राह्मणमाविश्य सदान्नमुपभुञ्जते। न तस्याश्नन्ति पितरो यस्य विप्रा न भुञ्जते।
देवाश्चाप्यस्य नाश्नन्ति पापस्य ब्राह्मणद्विषः। ब्राह्मणेषु तु तुष्टेषु प्रीयन्ते पितरः सदा।
तथैव देवता राजन्नात्र कार्य्या विचारणा। तथैव तेऽपि प्रीयन्ते येषां भवति तद्धविः।
न च प्रेत्य विनश्यन्ति गच्छन्ति च परां गतिं। येन येनैव हविषा ब्राह्मणांस्तर्पयेन्नरः।
तेन तेनैव प्रीयन्ते पितरो देवतास्तथा। ब्राह्मणादेव तद्भूतं प्रभवन्ति यतः प्रजाः। २१२०
यतश्चायं प्रभवति प्रेत्य यत्र च गच्छति। वेदैष मार्गं स्वर्गस्य तथैव नरकस्य च।
आगतानागते चोभे ब्राह्मणो द्विपदाम्वरः। ब्राह्मणो भरतश्रेष्ठ स्वधर्म्मश्चैव वेद यः।
ये चैनमनुवर्त्तन्ते ते न यान्ति पराभवं। न ते प्रेत्य विनश्यन्ति गच्छन्ति न पराभवं।
यद्ब्राह्मणमुखात् प्राप्तं प्रतिगृह्णन्ति वै वचः। भूतात्मानो महात्मानस्ते न यान्ति पराभवं।
क्षत्रियाणां प्रतपतां तेजसा च बलेन च। ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च बलानि च। २१२५
भृगवस्तालजङ्घांश्च नीपानाङ्गिरसोऽजयन्। भरद्वाजो वैतहव्यानैलांश्च भरतर्षभ।
चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः। प्रक्षिप्याथ च कुम्भान् वै पारगामिनमारभेत्।
यत्किञ्चित् कथ्यते लोके श्रूयते पठ्यतेऽपि वा। सर्व्वं तद्ब्राह्मणेष्वेव गूढोऽग्निरिव दारुषु।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। संवादं वासुदेवस्य पृथ्व्याश्च भरतर्षभ।
॥ वासुदेव उवाच ॥ मातरं सर्व्वभूतानां पृच्छे त्वां संशयं शुभे। केनस्वित् कर्म्मणा पापं व्यपोहति नरो गृही। २१३०
॥ पृथिवी उवाच ॥ ब्राह्मणानेव सेवेत पवित्रं ह्येतदुत्तमं। ब्राह्मणान् सेवमानस्य रजः सर्व्वं प्रणश्यति।
अतो भूतिरतो कीर्त्तिरतो बुद्धिः प्रजायते। महारथश्च राजन्य एष्टव्यः शत्रुतापनः।

इति मां नारदः प्राह सततं सर्व्वभूतये । ब्राह्मणं जातिसम्पन्नं धर्मज्ञं संशितं शुचिं ।
अपरेषां परेषाञ्च परेभ्यश्चैव ये ऽपरे । ब्राह्मणा यं प्रशंसन्ति स मनुष्यः प्रवर्द्धते ।
अथ यो ब्राह्मणान् क्रुष्टः पराभवति सोऽचिरात् । यथा महार्णवे क्षिप्तो लोष्टलेष्टुर्विनश्यति ।  २११५

तथा दुश्चरितं सर्व्वं पराभावाय कल्पते । पश्य चन्द्रकृतं लक्ष्म समुद्रो लवणोदकः ।
तथा भगसहस्रेण महेन्द्रः परिचिह्नितः । तेषामेव प्रभावेन सहस्रनयनो ह्यसौ ।
शतक्रतुः समभवत् पश्य माधव यादृशं । इच्छन् कीर्त्तिञ्च भूतिञ्च लोकांश्च मधुसूदन ।
ब्राह्मणानुमते तिष्ठेत् पुरुषः शुचिरात्मवान् ।
॥ भीष्म उवाच ॥ इत्येतद्वचनं श्रुत्वा मेदिन्या मधुसूदनः । साधु साध्विति कौरव्य मेदिनीं प्रत्यपूजयत् ।  २१२०

एतां श्रुत्वोपमां पार्थ प्रयतो ब्राह्मणर्षभान् । सततं पूजयेथास्त्वं ततः श्रेयोऽभिपत्स्यसे ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि ब्राह्मणप्रशंसायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ भीष्म उवाच ॥ जन्मनैव महाभागो ब्राह्मणो नाम जायते । नमस्यः सर्व्वभूतानामतिथिः प्रसृताग्रभुक् ।
सर्व्वार्थाः सुहृदस्तात ब्राह्मणाः सुमनोमुखाः । गीर्भिर्मङ्गलयुक्ताभिरनुध्यायन्तु पूजिताः ।
सर्व्वान्नो द्विषतस्तात ब्राह्मणा जातमन्यवः । गीर्भिर्दारुणयुक्ताभिरभिहन्युरपूजिताः ।
अत्र गाथाः पुरा गीताः कीर्त्तयन्ति पुराविदः । सृष्ट्वा द्विजातीन् धाता हि यथा पूर्व्वं समादधत् ।  २१२५

न चान्यदिह कर्त्तव्यं किञ्चिदूर्द्ध्वं यथाविधि । गुप्तो गोपायते ब्रह्म श्रेयो वस्तेन शोभनं ।
स्वमेव कुर्व्वतां कर्म्म श्रीर्वो ब्राह्मी भविष्यति । प्रमाणं सर्व्वभूतानां प्रग्रहाश्च भविष्यथ ।
न शौद्रं कर्म्म कर्त्तव्यं ब्राह्मणेन विपश्चिता । शौद्रं हि कुर्व्वतः कर्म्म धर्म्मः समुपरुध्यते ।
श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी । स्वाध्यायेनैव माहात्म्यं विपुलं प्रतिपत्स्यते ।
हुत्वा चाहवनीयस्थं महाभाग्ये प्रतिष्ठिताः । अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्म्याऽनुकल्पिताः ।  २१३०

श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया । दमस्वाध्यायनिरताः सर्व्वान् कामानवाप्स्यथ ।
यच्चैव मानुषे लोके यच्च देवेषु किञ्चन । सर्व्वन्तु तपसा साध्यं ज्ञानेन नियमेन च ।
इत्येवं ब्रह्मगीतास्ते समाख्याता मयाऽनघ । विप्राणामनुकम्पार्थं तेन प्रोक्तं हि धीमता ।
भूयस्तेषां बलं मन्ये यथा राजन् तपस्विनः । दुरासदाश्च चण्डाश्च रभसाः क्षिप्रकारिणः
सन्त्येषां सिंहसत्त्वाश्च व्याघ्रसत्त्वास्तथाऽपरे । वराहमृगसत्त्वाश्च जलसत्त्वास्तथाऽपरे ।  २१३५

सर्पस्पर्शसमाः केचित्तथाऽन्ये मकरस्पृशः । विभाष्यघातिनः केचित्तथा चक्षुर्हणोऽपरे ।
सन्ति चाशीविषसमाः सन्ति मन्दास्तथाऽपरे । विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर ।
मेकला द्रविडा लाटाः पौण्ड्राः कोन्वशिरास्तथा । शौण्डिका दरदा दर्व्वाश्चौराः शबरबर्व्वराः ।
किराता यवनाश्चैव तास्ताः क्षत्रियजातयः । वृषलत्वमनुप्राप्ता ब्राह्मणानाममर्षणात् ।
ब्राह्मणानां परिभवादसुराः सलिले शयाः । ब्राह्मणानां प्रसादाच्च देवाः स्वर्गनिवासिनः ।  २१४०

अशक्यं स्प्रष्टुमाकाशमचाल्यो हिमवान् गिरिः । अधार्य्या सेतुना गङ्गा दुर्ज्जया ब्राह्मणा भुवि ।

न ब्राह्मणविरोधेन शक्या शास्तुं वसुन्धरा । ब्राह्मणा हि महात्मानो देवानामपि देवताः ।

तान् पूजयस्व सततं दानेन परिचर्य्यया । यदीच्छसि महीं भोक्तुमिमां सागरमेखलां ।

प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ । प्रतिग्रहं ये नेच्छेयुस्तेभ्यो रक्ष्यं त्वया नृप ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि ब्राह्मणप्रशंसायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । शक्रशम्बरसंवादं तन्निबोध युधिष्ठिर ।

शक्रो ह्यज्ञातरूपेण जटी भूत्वा रजोऽरुणः । विरूपं रूपमास्थाय प्रश्नं पप्रच्छ शम्बरं ।

॥ शक्र उवाच ॥ केन शम्बर वृत्तेन स्वजात्यानधितिष्ठसि । श्रेष्ठं त्वां केन मन्यन्ते तन्मे प्रब्रूहि तत्त्वतः ।

॥ शम्बर उवाच ॥ नासूयामि सदा विप्रान् ब्रह्माणमेव च मे मतं । शास्त्राणि वदतो विप्रान् संमन्यामि यथासुखं ।

श्रुत्वा च नावजानामि नापराध्यामि कर्हिचित् । अभ्यर्च्यानुनुपृच्छामि पादौ गृह्णामि धीमतां ।

ते विस्रब्धाः प्रभाषन्ते संपृच्छन्ते च मां सदा । प्रमत्तेष्वप्रमत्तोऽस्मि सदा सुप्तेषु जागृमि ।

ते मां शास्त्रपथे युक्तं ब्रह्मण्यमनसूयकं । समासिञ्चन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ।

यच्च भाषन्ति सन्तुष्टास्तच्च गृह्णामि मेधया । समाधिमात्मनो नित्यमनुलोममचिन्तयं ।

सोऽहं वागग्रसृष्टानां रसानामवलेहकः । स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ।

एतत् पृथिव्याममृतमेतच्चक्षुरनुत्तमं । यद्ब्राह्मणमुखाच्छास्त्रमिह श्रुत्वा प्रवर्त्तते ।

एतत् कारणमाज्ञाय दृष्ट्वा देवासुरं पुरा । युद्धं पिता मे हृष्टात्मा विस्मितः समपद्यत ।

दृष्ट्वा च ब्राह्मणानान्तु महिमानं महात्मनां । पर्य्यपृच्छत् कथममी सिद्धा इति निशाकरं ।

॥ सोम उवाच ॥ ब्राह्मणास्तपसा सर्व्वे सिध्यन्ते वाग्बलाः सदा । भुजवीर्य्या हि राजानो वाग्बलाश्च द्विजातयः ।

प्रवसन् वाप्यधीयीत बह्वीर्दुर्व्वसतीर्व्वसन् । निर्म्मन्युरपि निर्म्मानो यतिः स्यात् समदर्शनः ।

अपि चेज्ज्ञानसम्पन्नः सर्व्वान् वेदान् पितुर्गृहे । श्लाघमान इवाधीयाद्ग्राम्य इत्येव तं विदुः ।

भूमिरेतौ निगिरति सर्पो बिलशयानिव । राजानञ्चाप्ययोद्धारं ब्राह्मणञ्चाप्रवासिनं ।

अभिमानः श्रियं हन्ति पुरुषस्याल्पमेधसः । गर्भेण दुष्यते कन्या गृहवासेन च द्विजः ।

इत्येतन्मे पिता श्रुत्वा सोमादद्भुतदर्शनात् । ब्राह्मणान् पूजयामास तथैवाहं महाव्रतान् ।

॥ भीष्म उवाच ॥ श्रुत्वैतद्वचनं शक्रो दानवेन्द्रमुखाच्च्युतं । द्विजान् संपूजयामास महेन्द्रत्वमवाप च ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि इन्द्रशम्बरसंवादे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ युधिष्ठिर उवाच ॥ अपूर्व्वं वा भवेत् पात्रमथ वाऽपि चिरोषितः । दूरादभ्यागतञ्चापि किं पात्रं स्यात् पितामह ।

॥ भीष्म उवाच ॥ क्रिया भवति केषाञ्चिदुपांशुव्रतमुत्तमं । यो यो याचेत यत्किञ्चित् सर्व्वं दद्याम इत्यपि ।

अपीडयन् भृत्यवर्गमित्येवमनुशुश्रुम । पीडयन् भृत्यवर्गं हि आत्मानमपकर्षति ।

अपूर्व्वं भावयेत् पात्रं यच्चापि स्याच्चिरोषितं । दूरादभ्यागतञ्चापि तत् पात्रञ्च विदुर्बुधाः ।

॥ युधिष्ठिर उवाच ॥ अपीडया च भूतानां धर्म्मस्याहिंसया तथा । पात्रं विद्यात्तु तत्त्वेन यस्मै दत्तं न संतपेत् ।

॥ भीष्म उवाच ॥ अलिङ्गुरोर्हितार्थार्थाः प्रियसम्भिताश्रयाः । सर्वे पूज्याश्च मान्याश्च कुलवन्तोऽनसूयकाः ।
अतोऽन्यथा वर्त्तमानाः सर्वे नार्हन्ति सत्क्रियां । तस्मान्नित्यं परीक्षेत पुरुषान् प्रणिधाय वै । २२८०
अक्रोधः सत्यवचनमहिंसा दम आर्ज्जवं । अद्रोहोऽनतिमानश्च ह्रीस्तितिक्षा दमः शमः ।
यस्मिन्नेतानि दृश्यन्ते न चाकार्य्याणि भारत । स्वभावतो निविष्टानि तत् पात्रं मानमर्हति ।
तथा चिरोषितञ्चापि सम्प्रत्यागतमेव च । अपूर्व्वञ्चैव पूर्व्वञ्च तत् पात्रं मानमर्हति ।
अप्रामाण्यञ्च वेदानां शास्त्राणाञ्चाभिलङ्घनं । अव्यवस्था च सर्व्वत्र एतन्नाशनमात्मनः ।
भवेत् पण्डितमानी यो ब्राह्मणो वेदनिन्दकः । आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकां । २२८१
हेतुवादान् ब्रुवन् सत्सु विजेता हेतुवादिकः । आक्रोष्टा चातिवक्ता च ब्राह्मणानां सदैव हि ।
सर्व्वाभिशङ्की मूढश्च बालः कटुकवागपि । बोद्धव्यस्तादृशस्तात नरं श्वानं हि तं विदुः ।
यथा श्वा भषितुञ्चैव हन्तुञ्चैवावसृज्यते । एवं सम्भाषणार्थाय सर्व्वशास्त्रवधाय च ।
लोकयात्रा च द्रष्टव्या धर्म्मश्चात्महितानि च । एवं नरो वर्त्तमानः शाश्वतीर्व्वर्द्धते समाः ।
ऋणमुन्मुच्य देवानामृषीणाञ्च तथैव च । पितृणामथ विप्राणामतिथीनाञ्च पञ्चमं । २२९०
पर्य्यायेण विशुद्धेन सुविनीतेन कर्म्मणा । एवं गृहस्थः कर्म्माणि कुर्व्वन् धर्म्मान्न हीयते ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि पात्रपरीक्षायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ युधिष्ठिर उवाच ॥ स्त्रीणां स्वभावमिच्छामि श्रोतुं भरतसत्तम । स्त्रियो हि मूलं दोषाणां लघुचित्ता हि ताः स्मृताः ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । नारदस्य च संवादं पुंश्चल्या पञ्चचूडया ।
लोकाननुचरन् धीमान् देवर्षिर्नारदः पुरा । ददर्शाप्सरसं ब्राह्मीं पञ्चचूडामनिन्दितां ।
तां दृष्ट्वा चारुसर्व्वाङ्गीं पप्रच्छाप्सरसं मुनिः । संशयो हृदि मे कश्चित् तन्मे ब्रूहि सुमध्यमे । २२९१
॥ भीष्म उवाच ॥ एवमुक्ताऽथ सा विप्रं प्रत्युवाचाथ नारदं । विषये सति वक्ष्यामि समर्थां मन्यसे च मां ।
॥ नारद उवाच ॥ न त्वामविषये भद्रे नियोक्ष्यामि कथञ्चन । स्त्रीणां स्वभावमिच्छामि त्वत्तः श्रोतुं वरानने ।
॥ भीष्म उवाच ॥ एतच्छ्रुत्वा वचस्तस्य देवर्षेरप्सरोत्तमा । प्रत्युवाच न शक्ष्यामि स्त्री सती निन्दितुं स्त्रियः ।
विदितास्ते स्त्रियो याश्च यादृशाश्च स्वभावतः । न मामर्हसि देवर्षे नियोक्तुं कार्य्य ईदृशे ।
तामुवाच स देवर्षिः सत्यमेव सुमध्यमे । मृषावादे भवेद्दोषः सत्ये दोषो न विद्यते । २२९०
इत्युक्ता सा कृतमतिरभवच्चारुहासिनी । स्त्रीदोषाञ्छाश्वतान् सत्यान् भाषितुं सम्प्रचक्रमे ।
॥ पञ्चचूडोवाच ॥ कुलीना रूपवत्यश्च नाथवत्यश्च योषितः । मर्य्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ।
न स्त्रीभ्यः किञ्चिदन्यद्वै पापीयस्तरमस्ति वै । स्त्रियो मूलञ्च दोषाणां तथा त्वमपि वेत्थ ह ।
समाज्ञातानृद्धिमतः प्रतिरूपान् वशे स्थितान् । पतीनन्तरमासाद्य नालं नार्य्यः प्रतीक्षितुं ।
असद्धर्म्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो । पापीयसो नरान् यद्वै लज्जां त्यक्त्वा भजामहे । २२९९
स्त्रियं हि यः प्रार्थयते सन्निकर्षञ्च गच्छति । ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः ।

अनर्थित्वान्मनुष्याणां भयात् परिजनस्य च । मर्य्यादायाममर्य्यादाः स्त्रियस्तिष्ठन्ति भर्त्तृषु ।

नासां कश्चिदगम्योऽस्ति नासां वयसि निश्चयः । विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ।

न भयान्नाप्यनुक्रोशान्नार्थहेतोः कथञ्चन । न ज्ञातिकुलसम्बन्धात् स्त्रियस्तिष्ठन्ति भर्त्तृषु ।

यौवने वर्त्तमानानां मृष्टाभरणवाससां । नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः । २२१०

याश्च शश्वद्बहुमता रक्ष्यन्ते दयिताः स्त्रियः । अपि ताः सम्प्रसज्जन्ते कुब्जान्धजडवामनैः ।

पङ्गुष्वपि च देवर्षे ये चान्ये कुत्सिता नराः । स्त्रीणामगम्यो लोकेऽस्मिन्नास्ति कश्चिन्महामुने ।

यदि पुंसां गतिर्ब्रह्मन् कथञ्चिन्नोपपद्यते । अप्यन्योन्यं प्रवर्त्तन्ते न हि तिष्ठन्ति भर्त्तृषु ।

अलाभात् पुरुषाणां हि भयात् परिजनस्य हि । वधबन्धभयाच्चापि स्वयं गुप्ता भवन्ति ताः ।

चलस्वभावा दुःसेव्या दुर्ग्राह्या भावतस्तथा । प्राज्ञस्य पुरुषस्येह यथा वाचस्तथा स्त्रियः । २२१५

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्व्वभूतानां न पुंसां वामलोचनाः ।

इदमन्यच्च देवर्षे रहस्यं सर्व्वयोषितां । दृष्ट्वैव पुरुषं हृद्यं योनिः प्रक्लिद्यते स्त्रियाः ।

कामानामपि दातारं कर्त्तारं मनसां प्रियं । रक्षितारं न मृष्यन्ति स्वभर्त्तारमलं स्त्रियः ।

न कामभोगान् विपुलान्नालङ्कारार्थसञ्चयान् । तथैव बहु मन्यन्ते यथा रत्यामनुग्रहः ।

अन्तकः पवनो मृत्युः पातालं वडवामुखं । क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः । २२२०

यतश्च भूतानि महान्ति पञ्च यतश्च लोका विहिता विधात्रा । यतः पुमांसः प्रमदाश्च निर्म्मितास्तदैव दोषाः प्रमदासु
नारद ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि पञ्चचूडानारदसंवादे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ युधिष्ठिर उवाच ॥ इमे वै मानवा लोके स्त्रीषु सज्जन्त्यभीक्ष्णशः । मोहेन परमाविष्टा दैवादिष्टेन पार्थिव ।

स्त्रियश्च पुरुषेष्वेव प्रत्यक्षं लोकसाक्षिकं । अत्र मे संशयस्तीव्रो हृदि सम्परिवर्त्तते ।

कथमासां नराः सङ्गं कुर्व्वते कुरुनन्दन । स्त्रियो वा तेषु रज्यन्ते विरज्यन्ते च ताः पुनः ।

इति ताः पुरुषव्याघ्र कथं शक्याश्च रक्षितुं । प्रमदाः पुरुषेणेह तन्मे व्याख्यातुमर्हसि । २२२५

एता हि रममाणास्तु वञ्चयन्तीह मानवान् । न चासां मुच्यते कश्चित् पुरुषो हस्तमागतः ।

गावो नवतृणानीव गृह्णन्त्येता नवं नवं । शम्बरस्य च या माया या माया नमुचेरपि ।

बलेः कुम्भीनसेश्चैव सर्व्वास्ता योषितो विदुः । हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्ति च ।

अप्रियं प्रियवाक्यैश्च गृह्णते कालयोगतः । उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।

स्त्रीबुद्ध्या न विशिष्येते तास्तु रक्ष्याः कथं नरैः । अनृतं सत्यमित्याहुः सत्यञ्चापि तथानृतं । २२३०

इति यास्ताः कथं वीर संरक्ष्याः पुरुषैरिह । स्त्रीणां बुद्ध्युपनिष्कर्षादर्थशास्त्राणि शत्रुहन् ।

बृहस्पतिप्रभृतिभिर्मन्ये सद्भिः कृतानि वै । सम्पूज्यमानाः पुरुषैर्विकुर्व्वन्ति मनो नृषु ।

अपास्ताश्च तथा राजन् विकुर्व्वन्ति मनः स्त्रियः । इमाः प्रजा महाबाहो धार्म्मिक्य इति नः श्रुतं ।

सत्कृतासत्कृताश्चापि विकुर्व्वन्ति मनः सदा । कस्ताः शक्तो रक्षितुं स्यादिति मे संशयो महान् ।

तथा ब्रूहि महाभाग कुरूणां वंशवर्द्धन । यदि शक्या कुलस्त्रीह रक्षा तासां कदाचन । २२४५
कर्त्तुं वा कृतपूर्व्वा वा तन्मे व्याख्यातुमर्हसि ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि स्त्रीस्वभावकथने अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ भीष्म उवाच ॥ एवमेव महाबाहो नात्र मिथ्याऽस्ति किञ्चन । यथा ब्रवीषि कौरव्य नारीं प्रति जनाधिप ।
अत्र ते वर्णयिष्यामि इतिहासं पुरातनं । यथा रक्षा कृता पूर्व्वं विपुलेन महात्मना ।
प्रमदाश्च यथा सृष्टा ब्रह्मणा भरतर्षभ । यदर्थं तच्च ते तात प्रवक्ष्यामि नराधिप ।
न हि स्त्रीभ्यः परं पुत्र पापीयः किञ्चिदस्ति वै । अग्निर्हि प्रमदा दीप्तो मायाश्च मयजा विभो । २२५०
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः । प्रजा इमा महाबाहो धार्म्मिका इति नः श्रुतं ।
स्वयं गच्छन्ति देवत्वं ततो देवानियाद्भयं । अथाभ्यगच्छन् देवास्ते पितामहमरिन्दम ।
निवेद्य मानसञ्चापि तूष्णीमासन्नधोमुखाः । तेषामन्तर्गतं ज्ञात्वा देवानां स पितामहः ।
मानवानां प्रमोहार्थं कृत्या नार्य्योऽसृजत् प्रभुः । पूर्व्वसर्गे तु कौन्तेय साध्व्यो नार्य्य इहाभवन् ।
असाध्व्यस्तु समुत्पन्नाः कृत्या सर्गात् प्रजापतेः । ताभ्यः कामान् यथाकामं प्रादाद्धि स पितामहः । २२५५
ताः कामलुब्धाः प्रमदाः प्रामथ्नन्त नरान् सदा । क्रोधं कामस्य देवेशः सहायञ्चासृजत् प्रभुः ।
असज्जन्त प्रजाः सर्व्वाः कामक्रोधवशङ्गताः । न च स्त्रीणां क्रिया काचिदिति धर्म्मो व्यवस्थितः ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति श्रुतिः । शय्यासनमलङ्कारमन्नपानमनार्य्यतां ।
दुर्व्वाग्भावं रतिञ्चैव ददौ स्त्रीभ्यः प्रजापतिः । न तासां रक्षणं कर्त्तुं शक्यं पुंसा कथञ्चन ।
अपि विश्वकृता तात कुतस्तु पुरुषैरिह । वाचा च वधबन्धैर्व्वा क्लेशैर्व्वा विविधैस्तथा । २२६०
न शक्या रक्षितुं नार्य्यस्ता हि नित्यमसंयताः । इदन्तु पुरुषव्याघ्र पुरस्तात् श्रुतवानहं ।
यथा रक्षा कृता पूर्व्वं विपुलेन गुरुस्त्रियः । ऋषिरासीन्महाभागो देवशर्म्मेति विश्रुतः ।
तस्य भार्य्या रुचिर्नाम रूपेणासदृशी भुवि । तस्या रूपेण संमत्ता देवगन्धर्व्वदानवाः ।
विशेषेण तु राजेन्द्र वृत्रहा पाकशासनः । नारीणां चरितज्ञश्च देवशर्म्मा महामुनिः ।
यथाशक्ति यथोत्साहं भार्य्यां तामभ्यरक्षत । पुरन्दरञ्च जानीते परस्त्रीकामचारिणं । २२६५
तस्माद्यत्नेन भार्य्याया रक्षणं स चकार ह । स कदाचिदृषिस्तात यज्ञं कर्त्तुमनास्तदा ।
भार्य्यासंरक्षणं कार्य्यं कथं स्यादित्यचिन्तयत् । रक्षाविधानं मनसा स विनिश्चित्य महातपाः ।
आहूय दयितं शिष्यं विपुलं प्राह भार्गवः ।

॥ देवशर्म्मोवाच ॥ यज्ञकारो गमिष्यामि रुचिञ्चेमां सुरेश्वरः । यतः प्रार्थयते नित्यं तां रक्षस्व यथाबलं ।
अप्रमत्तेन ते भाव्यं सदा प्रति पुरन्दरं । स हि रूपाणि कुरुते विविधानि भृगूत्तम । २२७०

॥ भीष्म उवाच ॥ इत्युक्तो विपुलस्तेन तपस्वी नियतेन्द्रियः । सदैवोग्रतपा राजन्नग्न्यर्कसदृशद्युतिः ।
धर्म्मज्ञः सत्यवादी च तथेति प्रत्यभाषत । पुनश्चेदं महाराज पप्रच्छ प्रस्थितं गुरुं ।

॥ विपुल उवाच ॥ कानि रूपाणि शक्रस्य भवन्त्यागच्छतो मुने । वपुस्तेजश्च कीदृग्वै तन्मे व्याख्यातुमर्हसि ।

॥ भीष्म उवाच ॥ ततः स भगवांस्तस्मै विपुलाय महात्मने । आचचक्षे यथातत्त्वं मायां शक्रस्य भारत ।
॥ देवशर्मोवाच ॥ बहुमायः स विप्रर्षे भगवान् पाकशासनः । तांस्तान् विकुरुते भावान् बहूनथ मुहुर्मुहुः । २२७५
किरीटी वज्रभृद्धन्वी मुकुटी बद्धकुण्डलः । भवत्यथ मुहूर्तेन चण्डालसमदर्शनः ।
शिखी जटी चीरवासाः पुनर्भवति पुत्रक । बृहच्छरीरश्च पुनश्चीरवासाः पुनः कृशः ।
गौरं श्यामश्च कृष्णश्च वर्णं विकुरुते पुनः । विरूपो रूपवांश्चैव युवा वृद्धस्तथैव च ।
ब्राह्मणः क्षत्रियश्चैव वैश्यः शूद्रस्तथैव च । प्रतिलोमोऽनुलोमश्च भवत्यथ शतक्रतुः ।
शुकवायसरूपी च हंसकोकिलरूपवान् । सिंहव्याघ्रगजानाञ्च रूपं धारयते पुनः । २२८०
दैवं दैत्यमथो राज्ञां वपुर्धारयते पुनः । अकृशो वायुभग्नाङ्गः शकुनिर्विकृतस्तथा ।
चतुष्पाद्बहुरूपश्च पुनर्भवति बालिशः । मक्षिकामशकादीनां वपुर्धारयतेऽपि च ।
न शक्यमस्य ग्रहणं कर्तुं विपुल केनचित् । अपि विश्वकृता तात येन सृष्टमिदं जगत् ।
पुनरन्तर्हितः शक्रो दृश्यते ज्ञानचक्षुषा । वायुभूतश्च स पुनर्देवराजो भवत्युत ।
एवं रूपाणि सततं कुरुते पाकशासनः । तस्माद्विपुल यत्नेन रक्षेमां तनुमध्यमाम् । २२८५
यथा रुचिं नावलिहेद्देवेन्द्रो भृगुसत्तम । क्रतावुपहिते न्यस्तं हविः श्वेव दुरात्मवान् ।
एवमाख्याय स मुनिर्यज्ञकारोऽगमत्तदा । देवशर्मा महाभागस्ततो भरतसत्तम ।
विपुलस्तु वचः श्रुत्वा गुरोश्चिन्तामुपेयिवान् । रक्षाञ्च परमां चक्रे देवराजान्महाबलात् ।
किन्नु शक्यं मया कर्तुं गुरुदाराभिरक्षणे । मायावी हि सुरेन्द्रोऽसौ दुर्धर्षश्चापि वीर्यवान् ।
नापिधायाश्रमं शक्यो रक्षितुं पाकशासनः । उटजं वा तथा ह्यस्य नानाविधस्वरूपता । २२९०
वायुरूपेण वा शक्रो गुरुपत्नीं प्रधर्षयेत् । तस्मादिमां संप्रविश्य रुचिं स्थास्येऽहमद्य वै ।
अथवा पौरुषेणेयं न शक्या रक्षितुं मया । बहुरूपो हि भगवान् श्रूयते पाकशासनः ।
गात्रेण गात्रैरस्याहं संप्रवेक्ष्ये हि रक्षितुं । यद्युच्छिष्टामिमां पत्नीमद्य पश्यति मे गुरुः ।
शप्स्यत्यसंशयं कोपाद्दिव्यज्ञानो महातपाः । न चेयं रक्षितुं शक्या यथाऽन्या प्रमदा नृभिः ।
मायावी हि सुरेन्द्रोऽसावहो प्राप्तोऽस्मि संशयं । अवश्यकरणीयं हि गुरोरिह हि शासनं । २२९५
यदि त्वेतदहं कुर्यामाश्चर्यं स्यात् कृतं मया । योगेनानुप्रवेशो हि गुरुपत्न्याः कलेवरे ।
असक्तः पद्मपत्रस्थो जलबिन्दुर्यथा चलः । निर्मुक्तस्य रजोरूपान्नापराधो भवेन्मम ।
यथा हि शून्यां पथिकः सभामध्यावसेत् पथि । तथाऽध्यावासयिष्यामि गुरुपत्न्याः कलेवरं ।
एवमेव शरीरेऽस्या निवत्स्यामि समाहितः । इत्येवं धर्ममालोक्य वेदवेदांश्च सर्वशः ।
तपश्च विपुलं दृष्ट्वा गुरोरात्मन एव च । इति निश्चित्य मनसा रक्षां प्रति स भार्गवः । २३००
आस्थितः परमं यत्नं यथा तच्छृणु पार्थिव । गुरुपत्नीं समासीनो विपुलः स महातपाः ।
उपासीनामनिन्द्याङ्गीं यथार्थैः समलोभयत् । नेत्राभ्यां नेत्रयोरस्या रश्मिं संयोज्य रश्मिभिः ।
विवेश विपुलः कायमाकाशं पवनो यथा । लक्षणं लक्षणेनैव वदनं वदनेन च ।

न तु जात्या समा लोके ब्राह्मण्याः क्षत्रिया भवेत्। ब्राह्मण्याः प्रथमः पुत्रो भूयान् स्याद्राजसत्तम।
भूयो भूयोऽपि संहार्य्यः पितृवित्ताद्युधिष्ठिर। यथा न सदृशी जातु ब्राह्मण्याः क्षत्रिया भवेत्।
क्षत्रियायास्तथा वैश्या न जातु सदृशी भवेत्। श्रीश्च राज्यञ्च कोषश्च क्षत्रियाणां युधिष्ठिर।
विहितं दृश्यते राजन् सागरान्ता च मेदिनी। क्षत्रियो हि स्वधर्म्मेण श्रियं प्राप्नोति भूयसीं। २१४०
राजदण्डधरो राजन् रक्षा नान्यत्र क्षत्रियात्। ब्राह्मणा हि महाभागा देवानामपि देवताः।
तेषु राजन् प्रवर्त्तेत पूजया विधिपूर्व्वकं। प्रणीतमृषिभिर्ज्ञात्वा धर्म्मं शाश्वतमव्ययं।
लुप्यमानं स्वधर्म्मेण क्षत्रियो ह्येव रक्षति। दस्युभिर्ह्रियमाणञ्च धनं दारांश्च सर्व्वशः।
सर्व्वेषामेव वर्णानां त्राता भवति पार्थिवः। भूयान् स्यात् क्षत्रियापुत्रो वैश्यापुत्रान्न संशयः।
भूयस्तेनापि हर्त्तव्यः पितृवित्ताद्युधिष्ठिर। २१४५
॥ युधिष्ठिर उवाच ॥ उक्तं ते विधिवद्राजन् ब्राह्मणस्य पितामह। इतरेषान्तु वर्णानां कथं वै नियमो भवेत्।
॥ भीष्म उवाच ॥ क्षत्रियस्यापि भार्य्ये द्वे विहिते कुरुनन्दन। तृतीया च भवेच्छूद्रा न तु दृष्टान्ततः स्मृता।
एष एव क्रमो हि स्यात् क्षत्रियाणां युधिष्ठिर। अष्टधा तु भवेत् कार्य्यं क्षत्रियस्वं जनाधिप।
क्षत्रियाया हरेत् पुत्रश्चतुरोऽंशान् पितुर्धनात्। युद्धावहारिकं यच्च पितुः स्यात् स हरेत्तु तत्।
वैश्यापुत्रस्तु भागांस्त्रीन् शूद्रापुत्रस्तथाऽष्टमं। सोऽपि दत्तं हरेत् पित्रा नादत्तं हर्त्तुमर्हति। २१५०
एकैव हि भवेद्भार्य्या वैश्यस्य कुरुनन्दन। द्वितीया तु भवेच्छूद्रा न तु दृष्टान्ततः स्मृता।
वैश्यस्य वर्त्तमानस्य वैश्यायां भरतर्षभ। शूद्रायाञ्चापि कौन्तेय तयोर्विनियमः स्मृतः।
पञ्चधा तु भवेत् कार्य्यं वैश्यस्वं भरतर्षभ। तयोरपत्ये वक्ष्यामि विभागञ्च जनाधिप।
वैश्यापुत्रेण हर्त्तव्याश्चत्वारोऽंशाः पितुर्धनात्। पञ्चमस्तु स्मृतो भागः शूद्रापुत्राय भारत।
सोऽपि दत्तं हरेत् पित्रा नादत्तं हर्त्तुमर्हति। त्रिभिर्व्वर्णैः सदा जातः शूद्रो देयधनो भवेत्। २१५५
शूद्रस्य स्यात् सवर्णैव भार्य्या नान्या कथञ्चन। समभागाश्च पुत्राः स्युर्यदि पुत्रशतं भवेत्।
जातानां समवर्णायाः पुत्राणामविशेषतः। सर्व्वेषामेव वर्णानां समभागो धनात् स्मृतः।
ज्येष्ठस्य भागो ज्येष्ठः स्यादेकोंऽशो यः प्रधानतः। एष दायविधिः पार्थ पूर्व्वमुक्तः स्वयम्भुवा।
समवर्णासु जातानां विशेषोऽस्त्यपरो नृप। विवाहवैशिष्ट्यकृतः पूर्व्वः पूर्व्वो विशिष्यते।
हरेज्ज्येष्ठः प्रधानांशमेकं तुल्यासु तेष्वपि। मध्यमो मध्यमञ्चैव कनीयांस्तु कनीयसं। २१६०
एवं जातिषु सर्व्वासु सवर्णः श्रेष्ठतां गतः। महर्षिरपि चैतद्वै मारीचः कश्यपोऽब्रवीत्।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि रिक्थविभागकथने सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

॥ युधिष्ठिर उवाच ॥ अर्थाश्रयाद्वा कामाद्वा वर्णानां वाप्यनिश्चयात्। अज्ञानाद्वाऽपि वर्णानां जायते वर्णसङ्करः।
तेषामेतेन विधिना जातानां वर्णसङ्करे। को धर्म्मः कानि कर्म्माणि तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच ॥ चातुर्व्वर्ण्यस्य कर्म्माणि चातुर्व्वर्ण्यञ्च केवलं। असृजत् स हि यज्ञार्थे पूर्व्वमेव प्रजापतिः।
भार्य्याश्चतस्रो विप्रस्य द्वयोरात्मा प्रजायते। आनुपूर्व्याद्द्वयोर्हीनौ मातृजात्यौ प्रसूयतः। २१६५

परं शवाद्ब्राह्मणस्यैष पुत्रः शूद्रापुत्रं पारशवं तमाहुः । शुश्रूषकः स्वस्य कुलस्य स स्यात् स्वचारित्रं नित्यमथो न जह्यात् ।

सर्वानुपायानथ सम्प्रधार्य समुद्धरेत् स्वस्य कुलस्य तन्तुं । ज्येष्ठो यवीयानपि यो द्विजस्य शुश्रूषया दानपरायणः स्यात् ।

तिस्रः क्षत्रियसम्बन्धात् द्वयोरात्माऽस्य जायते । हीनवर्णस्तृतीयायां शूद्र उग्र इति स्मृतिः ।
द्वे चापि भार्ये वैश्यस्य द्वयोरात्माऽस्य जायते । शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते ।
अतोऽविशिष्टस्त्वधमो गुरुदारप्रधर्षकः । बाह्यं वर्णं जनयति चातुर्वर्ण्यविगर्हितं ।　२१७०
विप्रायां क्षत्रियो बाह्यं सूतं स्तोमक्रियापरं । वैश्यो वैदेहकञ्चापि मौद्गल्यमपवर्जितं ।
शूद्रश्चाण्डालमत्युग्रं वध्यघ्नं बाह्यवासिनं । ब्राह्मण्यां सम्प्रजायन्त इत्येते कुलपांसनाः ।
एते मतिमतां श्रेष्ठ वर्णसङ्करजाः प्रभो । बन्दी तु जायते वैश्यान्मागधो वाक्यजीवनः ।
शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात् । शूद्रादायोगवश्चापि वैश्यायां ग्रामधर्मिणः ।
ब्राह्मणैरप्रतिग्राह्यस्तक्षा स्वधनजीवनः । एतेऽपि सदृशान् वर्णान् जनयन्ति स्वयोनिषु ।　२१७५
मातृजात्यां प्रसूयन्ते प्रवरा हीनयोनिषु । यथा चतुर्षु वर्णेषु द्वयोरात्माऽस्य जायते ।
आनन्तर्य्यात् प्रजायन्ते तथा बाह्याः प्रधानतः । ते चापि सदृशं वर्णं जनयन्ति स्वयोनिषु ।
परस्परस्य दारेषु जनयन्ति विगर्हितान् । यथा शूद्रोऽपि ब्राह्मण्यां जन्तुं बाह्यं प्रसूयते ।
एवं बाह्यतराद्बाह्याच्चातुर्वर्ण्यात् प्रजायते । प्रतिलोमन्तु वर्त्तन्ते बाह्यात् बाह्यतरात् पुनः ।
हीनाद्धीनाः प्रसूयन्ते वर्णाः पञ्चदशैव तु । अगम्यागमनाच्चैव जायते वर्णसङ्करः ।　२१८०
बाह्यानामनुजायन्ते सैरन्ध्र्यां मागधेषु च । प्रसाधनोपचारज्ञमदासं दासजीवनं ।
अतश्चायोगवं सूते वागुराबन्धजीवनं । मैरेयकञ्च वैदेहः संप्रसूतेऽथ माधुकं ।
निषादो मद्गुरं सूते दासं नावोपजीवनं । मृतपञ्चापि चाण्डालः श्वपाकमिति विश्रुतं ।
चतुरो मागधी सूते क्रूरान् मायोपजीविनः । मांसं स्वादुकरं क्षौद्रं सौगन्धमिति विश्रुतं ।
वैदेहकाच्च पापिष्ठं क्रूरं मायोपजीविनं । निषादान्मद्रनाभञ्च खरयानप्रयायिनं ।　२१८५
चाण्डालात् पुक्कसञ्चापि खराश्वगजभोजिनं । मृतचैलप्रतिच्छन्नं भिन्नभाजनभोजिनं ।
आयोगवीषु जायन्ते हीनवर्णासु ते त्रयः । क्षुद्रो वैदेहकादन्ध्रो बहिर्ग्रामप्रतिश्रयः ।
कारावरो निषाद्यान्तु चर्मकारात् प्रसूयते । चाण्डालात् पाण्डुसौपाकस्त्वक्सारव्यवहारवान् ।
आहिण्डको निषादेन वैदेह्यां संप्रसूयते । चण्डालेन तु सौपाकश्चण्डालसमवृत्तिमान् ।
निषादी चापि चाण्डालात् पुत्रमन्तेऽवसायिनं । श्मशानगोचरं सूते बाह्यैरपि बहिष्कृतं ।　२१९०
इत्येते सङ्करे जाताः पितृमातृव्यतिक्रमात् । प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ।
चतुर्णामेव वर्णानां धर्मो नान्यस्य विद्यते । वर्णानां धर्महीनेषु सङ्ख्या नास्तीह कस्यचित् ।
यदृच्छयोपसम्पन्नैर्यज्ञसाधुबहिष्कृतैः । बाह्या बाह्यैस्तु जायन्ते यथावृत्ति यथाश्रयं ।

चतुष्पथश्मशानानि शैलांश्चान्यान् वनस्पतीन् । कार्ष्णायसमलङ्कारं परिगृह्य च नित्यशः ।

वसेयुरेते विज्ञाता वर्त्तयन्तः स्वकर्म्मभिः । युञ्जन्तो वाऽप्यलङ्कारांस्तथोपकरणानि च ।  २५९५

गोब्राह्मणार्थ साहाय्यं कुर्व्वाणा वै न संशयः । आनृशंस्यमनुक्रोशः सत्यवाक्यं तथा क्षमा ।

स्वशरीरैरपि त्राणं बाह्यानां सिद्धिकारकं । भवन्ति मनुजव्याघ्र तत्र मे नास्ति संशयः ।

यथोपदेशं परिकीर्त्तितासु नरः प्रजायेत विचार्य्य बुद्धिमान् । निहीनयोनिर्हि सुतोऽवसादयेत्तितीर्षमाणं हि यथोपलो जले ।

अविद्वांसमलं लोके विद्वांसमपि वा पुनः । नयन्ति ह्युत्पथं नार्य्यः कामक्रोधवशानुगं ।

स्वभावश्चैव नारीणां नराणामिह दूषणं । अत्यर्थं न प्रसज्जन्ते प्रमदासु विपश्चितः ।  २६००

॥ युधिष्ठिर उवाच ॥ वर्णापेतमविज्ञातं नरं कलुषयोनिजं । आर्य्यरूपमिवानार्य्यं कथं विद्यामहे वयं ।

॥ भीष्म उवाच ॥ योनिसङ्कलुषे जातं नानाभावसमन्वितं । कर्म्मभिः सज्जनाचीर्णैर्विज्ञेया योनिशुद्धता ।

अनार्य्यत्वमनाचारः क्रूरत्वं निष्क्रियात्मता । पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजं ।

पित्र्यं वा भजते शीलं मातृजं वा तथोभयं । न कथञ्चन सङ्कीर्णः प्रकृतिं स्वां नियच्छति ।

यथैव सदृशो रूपे मातापित्रोर्हि जायते । व्याघ्रश्चित्रैस्तथा योनिं पुरुषः स्वां नियच्छति ।  २६०५

कुले स्रोतसि संछन्ने यस्य स्याद्योनिसङ्करः । संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ।

आर्य्यरूपसमाचारं चरन्तं कृतके पथि । सुवर्णमन्यवर्णं वा स्वशीलं शास्ति निश्चये ।

नानावृत्तेषु भूतेषु नानाकर्म्मरतेषु च । जन्मवृत्तसमं लोके सुश्लिष्टं न विरज्यते ।

शरीरमिह सत्त्वेन न तस्य परिकृष्यते । ज्येष्ठमध्यावरं सत्त्वं तुल्यसत्त्वं प्रमोदते ।

ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् । अपि शूद्रञ्च धर्म्मज्ञं सद्वृत्तमभिपूजयेत् ।  २६१०

आत्मानमाख्याति हि कर्म्मभिर्नरः सुशीलचारित्रकुलैः शुभाशुभैः । प्रनष्टमप्यात्मकुलं तथा नरः पुनः प्रकाशं कुरुते स्वकर्म्मतः ।

योनिष्वेतासु सर्व्वासु सङ्कीर्णास्वितरासु च । यत्रात्मानं न जनयेद्बुधस्तां परिवर्ज्जयेत् ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि वर्णसङ्करकथने अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ युधिष्ठिर उवाच ॥ ब्रूहि तात कुरुश्रेष्ठ वर्णानां त्वं पृथक् पृथक् । कीदृश्यां कीदृशाश्चापि पुत्राः कस्य च के च ते ।

विप्रवादाः सुबहवः श्रूयन्ते पुत्रकारिताः । अत्र नो मुह्यतां राजन् संशयं छेत्तुमर्हसि ।

॥ भीष्म उवाच ॥ आत्मा पुत्रस्तु विज्ञेयस्तस्यानन्तरजश्च यः । नियोगजश्च विज्ञेयः सुतः प्रसृतजस्तथा ।  २६१५

पतितस्य तु भार्य्यायां भर्त्रा सुसमवेतया । तथा दत्तकृतौ पुत्रावध्यूढश्च तथाऽपरः ।

षडपध्वंसजाश्चापि कानीनापसदास्तथा । इत्येते वै समाख्यातास्तान् विजानीहि भारत ।

॥ युधिष्ठिर उवाच ॥ षडपध्वंसजाः के स्युः के वाऽप्यपसदास्तथा । एतत्सर्व्वं यथातत्त्वं व्याख्यातुं मे त्वमर्हसि ।

॥ भीष्म उवाच ॥ त्रिषु वर्णेषु ये पुत्रा ब्राह्मणस्य युधिष्ठिर । वर्णयोश्च द्वयोः स्यातां यौ राजन्यस्य भारत ।

एको द्विवर्ण एवाथ तथाऽत्रैवोपलक्षितः । षडपध्वंसजास्ते हि तथैवापसदाञ्छृणु ।  २६२०

जलौकसां स सत्त्वानां बभूव प्रियदर्शनः । उपाजिघ्रन्त च तदा तस्यौष्ठं हृष्टमानसाः । २६५०
तत्र तस्यासतः कालः समतीतोऽभवन्महान् । ततः कदाचित् समये कस्मिंश्चिन्मत्स्यजीविनः ।
तं देशं समुपाजग्मुर्जालहस्ता महाद्युते । निषादा बहवस्तत्र मत्स्योद्धरणनिश्चयाः ।
व्यायता बलिनः शूराः सलिलेष्वनिवर्तिनः । अभ्याययुश्च तं देशं निश्चिता जालकर्मणि ।
जालं ते योजयामासुर्निःशेषेण जनाधिप । मत्स्योदकं समासाद्य तदा भरतसत्तम ।
ततस्ते बहुभिर्योगैः कैवर्ता मत्स्यकाङ्क्षिणः । गङ्गायमुनयोर्वारि जालैरभ्यकिरंस्ततः । २६५५
जालं सुविततं तेषां नवसूत्रकृतं तथा । विस्तारायामसम्पन्नं यत्तत्र सलिलेऽभवत् ।
ततस्ते सुमहच्चैव बलवच्च सुवर्त्तितं । अवतीर्य्य ततः सर्व्वे जालं चकृषिरे तदा ।
अभीतरूपाः संहृष्टा अन्योन्यवशवर्त्तिनः । बबन्धुस्तत्र मत्स्यांश्च तथाऽन्यान् जलचारिणः ।
तथा मत्स्यैः परिवृतं च्यवनं भृगुनन्दनं । आकर्षयन्महाराज जालेनाथ यदृच्छया ।
नदीशैवालदिग्धाङ्गं हरिश्मश्रुजटाधरं । लग्नैः शङ्खगणैर्गात्रैः कोष्ठैश्चित्रैरिवार्पितं । २६६०
तं जालेनोद्धृतं दृष्ट्वा ते तदा वेदपारगं । सर्व्वे प्राञ्जलयो दाशाः शिरोभिः प्रापतन् भुवि ।
परिखेदपरित्रासाज्जालस्याकर्षणेन च । मत्स्या बभूवुर्व्यापन्नाः स्थलसंकर्षणेन च ।
स मुनिस्तत्तदा दृष्ट्वा मत्स्यानां कदनं कृतं । बभूव कृपयाविष्टो निःश्वसंश्च पुनः पुनः ।
॥ निषादा ऊचुः ॥ अज्ञानाद्यत् कृतं पापं प्रसादं तत्र नः कुरु । करवाम प्रियं किन्ते तन्नो ब्रूहि महामुने ।
इत्युक्तो मत्स्यमध्यस्थश्च्यवनो वाक्यमब्रवीत् । यो मेऽद्य परमः कामस्तं शृणुध्वं समाहिताः । २६६५
प्राणोत्सर्गं विसर्गं वा मत्स्यैर्यास्याम्यहं सह । संवासान्नोत्सहे त्यक्तुं सलिलेऽध्युषितानहं ।
इत्युक्तास्ते निषादास्तु सुभृशं भयकम्पिताः । सर्व्वे विवर्णवदना नहुषाय न्यवेदयन् ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि च्यवनोपाख्याने पञ्चाशत्तमोऽध्यायः ॥ ५० ॥
॥ भीष्म उवाच ॥ नहुषस्तु ततः श्रुत्वा च्यवनं तं तथागतं । त्वरितः प्रययौ तत्र सहामात्यपुरोहितः ।
शौचं कृत्वा यथान्यायं प्राञ्जलिः प्रयतो नृपः । आत्मानमाचचक्षे च च्यवनाय महात्मने ।
अर्चयामास तस्यापि तस्य राज्ञः पुरोहितः । सत्यव्रतं महात्मानं देवकल्पं विशाम्पते । २६७०
॥ नहुष उवाच ॥ करवाणि प्रियं किन्ते तन्मे ब्रूहि द्विजोत्तम । सर्व्वं कर्त्तास्मि भगवन् यद्यपि स्यात् सुदुष्करं ।
॥ च्यवन उवाच ॥ श्रमेण महता युक्ताः कैवर्त्ता मत्स्यजीविनः । मम मूल्यं प्रयच्छैभ्यो मत्स्यानां विक्रयैः सह ।
॥ नहुष उवाच ॥ सहस्रं दीयतां मूल्यं निषादेभ्यः पुरोहित । निष्क्रयार्थं भगवतो यथाह भृगुनन्दनः ।
॥ च्यवन उवाच ॥ सहस्रं नाहमर्हामि किं वा त्वं मन्यसे नृप । सदृशं दीयतां मूल्यं स्वबुद्ध्या निश्चयं कुरु ।
॥ नहुष उवाच ॥ सहस्राणां शतं विप्र निषादेभ्यः प्रदीयतां । स्यादिदं भगवन्मूल्यं किं वाऽन्यन्मन्यसे भवान् । २६७५
॥ च्यवन उवाच ॥ नाहं शतसहस्रेण निमेयः पार्थिवर्षभ । दीयतां सदृशं मूल्यममात्यैः सह चिन्तय ।
॥ नहुष उवाच ॥ कोटिः प्रदीयतां मूल्यं निषादेभ्यः पुरोहित । यदेतदपि नो मूल्यमतो भूयः प्रदीयतां ।
॥ च्यवन उवाच ॥ राजन्नार्हाम्यहं कोटिं भूयो वाऽपि महाद्युते । सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिन्तय ।

॥ नहुष उवाच ॥ अर्द्धं राज्यं समस्तं वा निषादेभ्यः प्रदीयतां । एतन्मूल्यमहं मन्ये किं वाऽन्यन्मन्यसे द्विज ।

॥ च्यवन उवाच ॥ अर्द्धं राज्यं समस्तं वा मूल्यं नार्हामि पार्थिव । सदृशं दीयतां मूल्यमृषिभिः सह चिन्त्यतां । २६८०

॥ भीष्म उवाच ॥ महर्षेर्वचनं श्रुत्वा नहुषो दुःखकर्षितः । स चिन्तयामास तदा सहामात्यपुरोहितः ।

तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः । नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः ।

स समाभाष्य राजानमब्रवीद्द्विजसत्तमः । तोषयिष्याम्यहं क्षिप्रं यथा तुष्टो भविष्यति ।

नाहं मिथ्यावचो ब्रूयां स्वैरेष्वपि कुतोऽन्यथा । भवतो यदहं ब्रूयां तत् कार्य्यमविशङ्कया ।

॥ नहुष उवाच ॥ ब्रवीतु भगवन्मूल्यं महर्षेः सदृशं भृगोः । परित्रायस्व मामस्माद्विषयञ्च कुलञ्च मे । २६८५

हन्याद्धि भगवान् क्रुद्धस्त्रैलोक्यमपि केवलं । किं पुनर्मां तपोहीनं बाहुवीर्य्यपरायणं ।

अगाधेऽम्भसि मग्नस्य सामात्यस्य सहर्त्विजः । प्लवो भव महर्षे त्वं कुरु मूल्यविनिश्चयं ।

॥ भीष्म उवाच ॥ नहुषस्य वचः श्रुत्वा गविजातः प्रतापवान् । उवाच हर्षयन् सर्व्वानमात्यान् पार्थिवञ्च तं ।

अनर्घेया महाराज द्विजा वर्णेषु चोत्तमाः । गावश्च पुरुषव्याघ्र गौर्मूल्यं परिकल्प्यतां ।

नहुषस्तु ततः श्रुत्वा महर्षेर्वचनं नृप । हर्षेण महता युक्तः सहामात्यपुरोहितः । २६९०

अभिगम्य भृगोः पुत्रं च्यवनं संशितव्रतं । इदं प्रोवाच नृपते वाचा सन्तर्पयन्निव ।

॥ नहुष उवाच ॥ उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोऽसि भार्गव । एतन्मूल्यमहं मन्ये तव धर्म्मभृताम्वर ।

॥ च्यवन उवाच ॥ उत्तिष्ठाम्येष राजेन्द्र सम्यक् क्रीतोऽस्मि तेऽनघ । गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युत ।

कीर्त्तनं श्रवणं दानं दर्शनञ्चापि पार्थिव । गवां प्रशस्यते वीर सर्व्वपापहरं शिवं ।

गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते । अन्नमेव सदा गावो देवानां परमं हविः । २६९५

स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ । गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखं ।

अमृतं ह्यव्ययं दिव्यं क्षरन्ति च वहन्ति च । अमृतायतनञ्चैताः सर्व्वलोकनमस्कृताः ।

तेजसा वपुषा चैव गावो वह्निसमा भुवि । गावो हि सुमहत्तेजः प्राणिनाञ्च सुखप्रदाः ।

निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयं । विराजयति तं देशं पापञ्चास्यापकर्षति ।

गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः । गावः कामदुहो देव्यो नान्यत् किञ्चित् परं स्मृतं । २७००

इत्येतद्गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ । गुणैकदेशवचनं शक्यं पारायणं न तु ।

॥ निषादा ऊचुः ॥ दर्शनं कथनञ्चैव सहास्माभिः कृतं मुने । सतां सप्तपदं मित्रं प्रसादं नः कुरु प्रभो ।

हवींषि सर्व्वाणि यथा ह्युपभुङ्क्ते हुताशनः । एवं त्वमपि धर्म्मात्मा पुरुषाग्निः प्रतापवान् ।

प्रसादयामहे विद्वन् भवन्तं प्रणता वयं । अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यतां ।

॥ च्यवन उवाच ॥ कृपणस्य च यच्चक्षुर्मुनेराशीविषस्य च । नरं समूलं दहति कक्षमग्निरिव ज्वलन् । २७०५

प्रतिगृह्णामि वो धेनुं कैवर्त्ता मुक्तकिल्बिषाः । दिवं गच्छत वै क्षिप्रं मत्स्यैः सह जलोद्भवैः ।

॥ भीष्म उवाच ॥ ततस्तस्य प्रभावात्ते महर्षेर्भावितात्मनः । निषादास्तेन वाक्येन सह मत्स्यैर्दिवं ययुः ।

ततः स राजा नहुषो विस्मितः प्रेक्ष्य धीवरान् । आरोहमाणांस्त्रिदिवं मत्स्यांश्च भरतर्षभ ।

ततस्तौ ऋषिवर्यौ च च्यवनश्च समूहतः। वराभ्यामनुरूपाभ्यां छन्दयामासतुर्नृपं।

ततो राजा महावीर्यो नहुषः पृथिवीपतिः। परमित्यब्रवीत् प्रीतस्तदा भरतसत्तम। १७१०

ततो जग्राह धर्मे च स्थितिमिन्द्रनिभो नृपः। तथेति चोदितः प्रीतस्तावृषी प्रत्यपूजयत्।

समाप्तदीक्षश्च्यवनस्ततोऽगच्छत् स्वमाश्रमं। गविजश्च महातेजाः स्वमाश्रमपदं ययौ।

निषादाश्च दिवं जग्मुस्ते च मत्स्या जनाधिप। नहुषोऽपि वरं लब्ध्वा प्रविवेश स्वकं पुरं।

एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि। दर्शने यादृशः स्नेहः संवासे वा युधिष्ठिर।

महाभाग्यं गवाञ्चैव तथा धर्मविनिश्चयं। किम्भूयः कथ्यतां वीर किन्ते हृदि विवक्षितं। १७१५

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि च्यवनोपाख्याने एकपञ्चाशोऽध्यायः॥ ५१॥

॥ युधिष्ठिर उवाच॥ संशयो मे महाप्राज्ञ सुमहान् सागरोपमः। तं मे शृणु महाबाहो श्रुत्वा व्याख्यातुमर्हसि।

कौतूहलं मे सुमहज्जामदग्न्यं प्रति प्रभो। रामं धर्मभृतां श्रेष्ठं तन्मे व्याख्यातुमर्हसि।

कथमेष समुत्पन्नो रामः सत्यपराक्रमः। कथं ब्रह्मर्षिवंशोऽयं क्षत्रधर्मा व्यजायत।

तदस्य सम्भवं राजन्निखिलेनानुकीर्त्तय। कौशिकाच्च कथं वंशात् क्षत्राद्वै ब्राह्मणोऽभवत्।

अहो प्रभावः सुमहानासीद्वै सुमहात्मनः। रामस्य च नरव्याघ्र विश्वामित्रस्य चैव हि। १७२०

कथं पुत्रानतिक्रम्य तेषां नप्तृष्वथाभवत्। एष दोषः सुतान् हित्वा तन्मे व्याख्यातुमर्हसि।

॥ भीष्म उवाच॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। च्यवनस्य च संवादं कुशिकस्य च भारत।

एतं दोषं पुरा दृष्ट्वा भार्गवश्च्यवनस्तदा। आगामिनं महाबुद्धिः स्ववंशे मुनिसत्तमः।

निश्चित्य मनसा सर्व्वं गुणदोषं बलाबलं। दग्धुकामः कुलं सर्व्वं कुशिकानां तपोधनः।

च्यवनः समनुप्राप्य कुशिकं वाक्यमब्रवीत्। वस्तुमिच्छा समुत्पन्ना त्वया सह ममानघ। १७२५

॥ कुशिक उवाच॥ भगवन् सह धर्म्मोऽयं पण्डितैरिह धार्य्यते। प्रदानकाले कन्यानामुच्यते च सदा बुधैः।

यत्तु तावदतिक्रान्तं धर्म्मद्वारं तपोधन। तत् कार्य्यं प्रकरिष्यामि तदनुज्ञातुमर्हसि।

॥ भीष्म उवाच॥ अथासनमुपादाय च्यवनस्य महामुनेः। कुशिको भार्य्यया सार्द्धमाजगाम यतो मुनिः।

प्रगृह्य राजा भृङ्गारं पाद्यमस्मै न्यवेदयत्। कारयामास सर्व्वाश्च क्रियास्तस्य महात्मनः।

ततः स राजा च्यवनं मधुपर्कं यथाविधि। ग्राहयामास चाव्यग्रो महात्मा नियतव्रतः। १७३०

सत्कृत्य तं तथा विप्रमिदं पुनरथाब्रवीत्। भगवन् परवन्तौ स्वो ब्रूहि किं करवावहे।

यदि राज्यं यदि धनं यदि गाः संशितव्रत। यज्ञदानानि च तथा ब्रूहि सर्व्वं ददामि ते।

इदं गृहमिदं राज्यमिदं धर्म्मासनञ्च ते। राजा त्वमसि शाध्युर्वीं भृत्योऽहं च परवांस्त्वयि।

एवमुक्ते ततो वाक्ये च्यवनो भार्गवस्तदा। कुशिकं प्रत्युवाचेदं मुदा परमया पुनः।

न राज्यं कामये राजन्न धनं न च योषितः। न च गा न च वै देशान्न यज्ञं श्रूयतामिदं। १७३५

नियमं किञ्चिदारप्स्ये युवयोर्यदि रोचते। परिचर्य्योऽस्मि यत्ताभ्यां युवाभ्यामविशङ्कया।

एवमुक्ते तदा तेन दम्पती तौ जहर्षतुः। प्रत्यब्रूतां च तमृषिमेवमस्त्विति भारत।

यत्र ते कुशिका हृष्टाः [illegible] । [illegible] दर्शनीयमदर्शयन् ।
इदं क्रिया भगवतो यथाकालमिहोक्तवान् । शयनीयमिदं प्रीतिमानस्तु ते तपोधन ।
अथ सूर्य्योऽतिचक्राम तेषां संवदतां तदा । अथर्षिश्चोदयामास पानमन्नं तथैव च । २७४०
तमपृच्छत्ततो राजा कुशिकः प्रणतस्तदा । किमन्नजातमिष्टन्ते किमुपस्थापयाम्यहं ।
ततः स परया प्रीत्या प्रत्युवाच नराधिपं । औपपत्तिकमाहारं प्रयच्छेति भारत ।
तद्वचः पूजयित्वा तु तथेत्याह च पार्थिवः । यथोपपन्नमाहारं तस्मै प्रादाज्जनाधिप ।
ततः स भुक्त्वा भगवान् दम्पती प्राह धर्म्मवित् । स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो ।
ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः । संविवेश नरेन्द्रस्तु सपत्नीकः स्थितोऽभवत् । २७४५
न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः । संवाहितव्यौ मे पादौ जाग्रतव्यञ्च वोऽनिशं ।
अविशङ्कस्तु कुशिकस्तथेत्येवाह धर्म्मवित् । न प्रबोधयतान्तौ च तं तथा रजनीक्षये ।
यथा तथा महर्षेस्तु शुश्रूषापरतौ तदा । बभूवतुर्महाराज प्रयतावथ दम्पती ।
ततः स भगवान् विप्रः समादिश्य नराधिपं । सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिं ।
स तु राजा निराहारः सभार्य्यः कुरुनन्दन । पर्य्युपासत तं हृष्टश्च्यवनाराधने रतः । २७५०
भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः । अकिञ्चिदुक्त्वा तु गृहान्निश्चक्राम महातपाः ।
तमन्वगच्छतां तौ तु क्षुधितौ श्रमकर्षितौ । भार्य्यापती मुनिश्रेष्ठस्तावेतौ नावलोकयत् ।
तयोस्तु प्रेक्षतोरेव भार्गवाणां कुलोद्वहः । अन्तर्हितोऽभूद्राजेन्द्र ततो राजाऽपतत् क्षितौ ।
स मुहूर्त्तं समाश्वास्य सह देव्या महाद्युतिः । पुनरन्वेषणे यत्नमकरोत् परमं तदा ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि च्यवनोपाख्याने द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ युधिष्ठिर उवाच ॥ तस्मिन्नन्तर्हिते विप्रे राजा किमकरोत्तदा । भार्य्या चास्य महाभागा तन्मे ब्रूहि पितामह । २७५५
॥ भीष्म उवाच ॥ अदृष्ट्वा स महीपालस्तमृषिं सह भार्य्यया । परिश्रान्तो निववृते व्रीडितो नष्टचेतनः ।
स प्रविश्य पुरीं दीनो नाभ्यभाषत किञ्चन । तदेव चिन्तयामास च्यवनस्य विचेष्टितं ।
अथ शून्येन मनसा प्रविश्य स्वगृहं नृपः । ददर्श शयने तस्मिन् शयानं भृगुनन्दनं ।
विस्मितौ तावृषिं दृष्ट्वा तदाश्चर्य्यं विचिन्त्य च । दर्शनात्तस्य तु तदा विश्रान्तौ सम्बभूवतुः ।
यथास्थानन्तु तौ स्थित्वा भूयस्तं संववाहतुः । अथापरेण पार्श्वेन सुष्वाप स महामुनिः । २७६०
तेनैव च स कालेन प्रत्यबुध्यत वीर्य्यवान् । न च तौ चक्रतुः किञ्चिद्विकारं भयशङ्कितौ ।
प्रतिबुद्धस्तु स मुनिस्तौ प्रोवाच विशाम्पते । तैलाभ्यङ्गो दीयतां मे स्नास्येऽहमिति भारत ।
तौ तथेति प्रतिश्रुत्य क्षुधितौ श्रमकर्षितौ । शतपाकेन तैलेन महार्हेणोपतस्थतुः ।
ततः सुखासीनमृषिं वाग्यतौ संववाहतुः । न च पर्य्याप्तमित्याह भार्गवः सुमहातपाः ।
यदा तौ निर्व्विकारौ तु लक्षयामास भार्गवः । तत उत्थाय सहसा स्नानशालां विवेश ह । २७६५
कॢप्तमेव तु तत्रासीत् स्नानीयं पार्थिवोचितं । असत्कृत्य च तत् सर्व्वं तत्रैवान्तरधीयत ।

स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा । नासूयाञ्चक्रतुस्तौ च दम्पती भरतर्षभ ।
अथ स्नातः स भगवान् सिंहासनगतः प्रभुः । दर्शयामास कुशिकं सभार्य्यं कुरुनन्दन ।
स हृष्टवदनो राजा सभार्य्यः कुशिको मुनिं । सिद्धमन्नमिति प्रह्वो निर्व्विकारो न्यवेदयत् ।
आनीयतामिति मुनिस्तञ्चोवाच नराधिपं । स राजा समुपाजह्रे तदन्नं सह भार्य्यया । २७७०
मांसप्रकारान् विविधाञ्छाकानि विविधानि च । रसालापूपकांश्चित्रान्मोदकानथ खाण्डवान् ।
रसान् नानाप्रकारांश्च वन्यञ्च मुनिभोजनं । फलानि च विचित्राणि राजभोज्यानि भूरिशः ।
वदरेङ्गुदकाश्मर्य्यभल्लातकफलानि च । गृहस्थानाञ्च यद्भोज्यं यच्चापि वनवासिनां ।
सर्व्वमाहारयामास राजा शापभयात्ततः । अथ सर्व्वमुपन्यस्तमग्रतश्च्यवनस्य तत् ।
ततः सर्व्वं समानीय तच्च शय्यासनं मुनिः । वस्त्रैः शुभैरवच्छाद्य भोजनोपस्करैः सह । २७७५
सर्व्वमादीपयामास च्यवनो भृगुनन्दनः । न च तौ चक्रतुः क्रोधं दम्पती सुमहामती ।
तयोः सम्प्रेक्षतोरेव पुनरन्तर्हितोऽभवत् । तथैव च स राजर्षिस्तस्थौ तां रजनीं तदा ।
सभार्य्यो वाग्यतः श्रीमान्न कोपं स समाविशत् । नित्यं संस्कृतमन्नन्तु विविधं राजवेश्मनि ।
शयनानि च मुख्यानि परिषेकाश्च पुष्कलाः । वस्त्रञ्च विविधाकारमभवत् समुपार्ज्जितं ।
न शशाक ततो द्रष्टुमन्तरं च्यवनस्तदा । पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपं । २७८०
सभार्य्यो मां रथेनाशु वह यत्र ब्रवीम्यहं । तथेति च प्राह नृपो निर्व्विशङ्कस्तपोधनं ।
क्रीडारथोऽस्तु भगवन्नुत सांग्रामिको रथः । इत्युक्तः स मुनी राज्ञा तेन हृष्टेन तद्वचः ।
च्यवनः प्रत्युवाचेदं हृष्टः परपुरञ्जयं । सज्जीकुरु रथं क्षिप्रं यस्ते सांग्रामिको रथः ।
सायुधः सपताकश्च शक्तीकनकयष्टिमान् । किङ्किणीस्वननिर्घोषो युक्तस्तोरणकल्पनैः ।
जाम्बूनदनिबद्धश्च परमेषुशतान्वितः । ततः स तत्तथेत्युक्त्वा कल्पयित्वा महारथं । २७८५
भार्य्यां वामे धुरि तदा चात्मानं दक्षिणे तदा । त्रिदण्डं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् ।
सर्व्वमेतत्ततो दत्त्वा नृपो वाक्यमथाब्रवीत् । भगवन् क्व रथो यातु ब्रवीतु भृगुनन्दन ।
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः । एवमुक्तस्तु भगवान् प्रत्युवाचाथ तं नृपं ।
इतः प्रभृति यातव्यं पदकं पदकं शनैः । श्रमो मम यथा न स्यात्तथा मे छन्दचारिणौ ।
सुसुखञ्चैव वोढव्यो जनः सर्व्वश्च पश्यतु । नोत्सार्य्याः पथिकाः केचित्तेभ्यो दास्ये वसु ह्यहं । २७९०
ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्ति मां पथि । सर्व्वान्दास्याम्यशेषेण धनं रत्नानि चैव हि ।
क्रियतां निखिलेनैतन्मा विचारय पार्थिव । तस्य तद्वचनं श्रुत्वा राजा भृत्यानथाब्रवीत् ।
यद्यद्ब्रूयान्मुनिस्तत्तत् सर्व्वं देयमशङ्कितैः । ततो रत्नान्यनेकानि स्त्रियो युग्यमजाविकं ।
कृताकृतञ्च कनकं गजेन्द्राश्चाचलोपमाः । अन्वगच्छन्त तमृषिं राजामात्याश्च सर्व्वशः ।
हाहाभूतञ्च तत् सर्व्वमासीन्नगरमार्त्तवत् । तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रतोदितौ । २७९५
पृष्ठे विद्धौ कटे चैव निर्व्विकारौ तमूहतुः । वेपमानौ निराहारौ पञ्चाशद्रात्रिकर्षितौ ।

कथञ्चिदूहतुर्व्वीरौ दम्पती तौ रथोत्तमं । बहुधा कशविद्धौ तौ क्षरन्तौ च क्षतोद्भवं ।
ददृशाते महाराज पुष्पिताविव किंशुकौ । तौ दृष्ट्वा पौरवर्गस्तु भृशं शोकसमाकुलः ।
अभिशापभयत्रस्तो न च किञ्चिदुवाच ह । द्वन्द्वशश्चाब्रुवन् सर्व्वे पश्यध्वं तपसो बलं ।
क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नैव शक्नुमः । अहो भगवतो वीर्य्यं महर्षेर्भावितात्मनः ।
राज्ञश्चापि सभार्य्यस्य धैर्य्यं पश्यत यादृशं । श्रान्तावपि हि कृच्छ्रेण रथमेतं समूहतुः ।
न चैतयोर्व्विकारं वै ददर्श भृगुनन्दनः ।
॥ भीष्म उवाच ॥ ततः स निर्व्विकारौ तु दृष्ट्वा भृगुकुलोद्वहः । वसु विश्राणयामास यथा वैश्रवणस्तथा ।
तत्रापि राजा प्रीतात्मा यथादिष्टमथाकरोत् । ततोऽस्य भगवान् प्रीतो बभूव मुनिसत्तमः ।
अवतीर्य्य रथश्रेष्ठाद्दम्पती तौ मुमोच ह । विमोच्य चैतौ विधिवत्ततो वाक्यमुवाच ह ।
स्निग्धगम्भीरया वाचा भार्गवः सुप्रसन्नया । ददामि वां वरं श्रेष्ठं तं ब्रूतामिति भारत ।
सुकुमारौ च तौ विद्धौ कराभ्यां मुनिसत्तमः । पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ।
अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह । विश्रान्तौ च प्रभावात्ते ऊचतुस्तौ च भार्गवं ।
अथ तौ भगवान् प्राह प्रहृष्टश्च्यवनस्तदा । न वृथा व्याहृतं पूर्व्वं यन्मया तद्भविष्यति ।
रमणीयः समुद्देशो गङ्गातीरमिदं शुभं । किञ्चित्कालं व्रतपरो निवत्स्यामीह पार्थिव ।
गम्यतां स्वपुरं पुत्र विश्रान्तः पुनरेष्यसि । इहस्थं मां सभार्य्यस्त्वं द्रष्टासि श्वो नराधिप ।
न च मन्युस्त्वया कार्य्यः श्रेयस्ते समुपस्थितं । यत् काङ्क्षितं हृदिस्थं ते तत् सर्व्वं हि भविष्यति ।
इत्येवमुक्तः कुशिकः प्रहृष्टेनान्तरात्मना । प्रोवाच मुनिशार्दूलमिदं वचनमर्थवत् ।
न मे मन्युर्महाभाग पूतौ स्वो भगवंस्त्वया । संवृत्तौ यौवनस्थौ स्वो वपुष्मन्तौ बलान्वितौ ।
प्रतोदेन व्रणा ये मे सभार्य्यस्य त्वया कृताः । तान्न पश्यामि गात्रेषु स्वस्थोऽस्मि सह भार्य्यया ।
इमाञ्च देवीं पश्यामि वपुषाऽप्सरसोपमां । श्रिया परमया युक्तां यथा दृष्टा पुरा मया ।
तव प्रसादसंवृत्तमिदं सर्व्वं महामुने । नैतच्चित्रन्तु भगवंस्त्वयि सत्यपराक्रम ।
इत्युक्तः प्रत्युवाचैनं कुशिकं च्यवनस्तदा । आगच्छेथाः सभार्य्यश्च त्वमिहेति नराधिप ।
इत्युक्तः समनुज्ञातो राजर्षिरभिवाद्य तं । प्रययौ वपुषा युक्तो नगरीं देवराजवत् ।
तत एनमुपाजग्मुरमात्याः सपुरोहिताः । बलस्था गणिकायुक्ताः सर्व्वाः प्रकृतयस्तथा ।
तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन् । प्रविवेश पुरं हृष्टः पूज्यमानोऽथ बन्दिभिः ।
ततः प्रविश्य नगरं कृत्वा पूर्व्वाह्णिकीः क्रियाः । भुक्त्वा सभार्य्यो रजनीमुवास स महाद्युतिः ।
ततस्तु तौ नवमभिवीक्ष्य यौवनं परस्परं विगतजराविवामरौ । ननन्दतुः शयनगतौ वपुर्धरौ श्रिया युतौ द्विजवरदत्तया तदा ।
अथाप्यृषिर्भृगुकुलकीर्त्तिवर्द्धनस्तपोधनो वनमभिराममृद्धिमत् । मनीषया बहुविधरत्नभूषितं ससर्ज यन्न पुरि शतक्रतोरपि ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि कुशिकोपाख्याने त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

॥ भीष्म उवाच ॥ ततः स राजा रात्र्यन्ते प्रतिबुद्धो महामनाः। कृतपूर्व्वाह्णिकः प्रायात् सभार्य्यस्तद्वनं प्रति। २८२५

ततो ददर्श नृपतिः प्रासादं सर्व्वकाञ्चनं। मणिस्तम्भसहस्राढ्यं गन्धर्व्वनगरोपमं।

तत्र दिव्यानभिप्रायान् ददर्श कुशिकस्तदा। पर्व्वतान् रूप्यसानूंश्च नलिनीश्च सपङ्कजाः।

तत्र शालाश्च विविधास्तोरणानि च भारत। शाद्वलोपचितां भूमिं यथा काञ्चनकुट्टिमां।

सहकारान् प्रफुल्लांश्च केतकोद्दालकान् धवान्। अशोकान् सह कुन्दांश्च फुल्लांश्चैवातिमुक्तकान्।

चम्पकांस्तिलकान् भव्यान् पनसान् वञ्जुलानपि। पुष्पितान् कर्णिकारांश्च तत्र तत्र ददर्श ह। २८३०

श्यामान् वारणपुष्पांश्च तथाऽष्टापदिका लताः। तत्र तत्र परिकृता ददर्श स महीपतिः।

वृक्षान् पद्मोत्पलधरान् सर्व्वर्त्तुकुसुमांस्तथा। विमानप्रतिमांश्चापि प्रासादाञ्छैलसन्निभान्।

शीतलानि च तोयानि क्वचिदुष्णानि भारत। आसनानि विचित्राणि शयनप्रवराणि च।

पर्य्यङ्कान् रत्नसौवर्णान् परार्द्ध्यास्तरणावृतान्। भक्ष्यभोज्यमनन्तञ्च तत्र तत्रोपकल्पितं।

वाणीवादाञ्छुकांश्चैव सारिकान् भृङ्गराजकान्। कोकिलाञ्छतपत्रांश्च सकोयष्टिककुक्कुभान्। २८३५

मयूरान् कुक्कुटांश्चापि दात्यूहाञ्जीवजीवकान्। चकोरान् वानरान् हंसान् सारसांश्चक्रसाह्वयान्।

समन्ततः प्रमुदितान् ददर्श सुमनोहरान्। क्वचिदप्सरसां संघान् गन्धर्व्वाणाञ्च पार्थिव।

कान्ताभिरपरांस्तत्र परिष्वक्तान् ददर्श ह। न ददर्श च तान् भूयो ददर्श च पुनर्नृपः।

गीतध्वनिं सुमधुरं तथैवाध्यापनध्वनिं। हंसान् सुमधुरांश्चापि तत्र शुश्राव पार्थिवः।

तं दृष्ट्वाऽत्यद्भुतं राजा मनसाऽचिन्तयत्तदा। स्वप्नोऽयं चित्तविभ्रंश उताहो सत्यमेव तु। २८४०

अहो सह शरीरेण प्राप्तोऽस्मि परमाङ्गतिं। उत्तरान् वा कुरून् पुण्यानथवाऽप्यमरावतीं।

किन्त्विदं महदाश्चर्य्यं संपश्यामीत्यचिन्तयन्। एवं संचिन्तयन्नेव ददर्श मुनिपुङ्गवं।

तस्मिन् विमाने सौवर्णे मणिस्तम्भसमाकुले। महार्हे शयने दिव्ये शयानं भृगुनन्दनं।

तमभ्ययात् प्रहर्षेण नरेन्द्रः सह भार्य्यया। अन्तर्हितस्ततो भूयश्च्यवनः शयनञ्च तत्।

ततोऽन्यस्मिन् वने देशे पुनरेव ददर्श तं। कौश्यां वृष्यां समासीनं जपमानं महाव्रतं। २८४५

एवं योगबलाद्विप्रो मोहयामास पार्थिवं। क्षणेन तद्वनञ्चैव ते चैवाप्सरसां गणाः।

गन्धर्व्वाः पादपाश्चैव सर्व्वमन्तरधीयत। निःशब्दमभवच्चापि गङ्गाकूलं पुनर्नृप।

कुशवल्मीकभूयिष्ठं बभूव च यथा पुरा। ततः स राजा कुशिकः सभार्य्यस्तेन कर्म्मणा।

विस्मयं परमं प्राप्य तद्दृष्ट्वा महदद्भुतं। ततः प्रोवाच कुशिको भार्य्यां हर्षसमन्वितः।

पश्य भद्रे यथा भावाश्चित्रा दृष्टाः सुदुर्लभाः। प्रसादाद्भृगुमुख्यस्य किमन्यत्र तपोबलात्। २८५०

तपसा तदवाप्यं हि यत्तु शक्यं मनोरथैः। त्रैलोक्यराज्यादपि हि तप एव विशिष्यते।

तपसा हि सुतप्तेन शक्यो मोक्षस्तपोबलात्। अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः।

इच्छयैष तपोवीर्य्यादन्यान् लोकान् सृजेदपि। ब्राह्मणा एव जायेरन् पुण्यवाग्बुद्धिकर्म्मणः।

उत्सहेदिह कृत्वैव कोऽन्यो वै च्यवनादृते। ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः।

ब्राह्मणस्य प्रभावाद्धि रथे युक्तौ स्वधुर्य्यवत्। इत्येवं चिन्तयानः स विदितश्च्यवनस्य वै। २८११
सम्प्रेक्ष्योवाच नृपतिं क्षिप्रमागम्यतामिति। इत्युक्तः सहभार्य्यस्तु सोऽभ्यगच्छन्महामुनिं।
शिरसा वन्दनीयन्तमवन्दत च पार्थिवः। तस्याशिषः प्रयुज्याथ स मुनिस्तं नराधिपं।
निषीदेत्यब्रवीद्धीमान् सान्त्वयन् पुरुषर्षभ। ततः प्रकृतिमापन्नो भार्गवो नृपतेर्नृप।
उवाच स्नद्गणया वाचा तर्पयन्निव भारत। राजन् सम्यग्जितानीह पञ्च पञ्चस्वयं त्वया।
मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोऽसि तेन वै। सम्यगाराधितः पुत्र त्वया प्रवदतांवर। २८१०
न हि ते वृजिनं किञ्चित् सुसूक्ष्ममपि विद्यते। अनुजानीहि मां राजन् गमिष्यामि यथागतं।
प्रीतोऽस्मि तव राजेन्द्र वरश्च प्रतिगृह्यतां।
॥ कुशिक उवाच ॥ अग्निमध्यगतेनेव भगवन् सन्निधौ मया। वर्त्तितं भृगुशार्दूल यन्न दग्धोऽस्मि तद्बहु।
एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन। यत्प्रीतोऽसि मया ब्रह्मन् कुलं त्रातञ्च मेऽनघ।
एष मेऽनुग्रहो विप्र जीविते च प्रयोजनं। एतद्राज्यफलञ्चैव तपसश्च फलं मम। २८१४
यदि त्वं प्रीतिमान् विप्र मयि वै भृगुनन्दन। अस्ति मे संशयः कश्चित्तन्मे व्याख्यातुमर्हसि।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि कुशिकच्यवनसंवादे चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ च्यवन उवाच ॥ वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि। तं प्रब्रूहि नरश्रेष्ठ सर्व्वं सम्पादयामि ते।
॥ कुशिक उवाच ॥ यदि प्रीतोऽसि भगवंस्ततो मे वद भार्गव। कारणं श्रोतुमिच्छामि मद्गृहे वासकारितं।
शयनञ्चैकपार्श्वेन दिवसानेकविंशतिं। अकिञ्चिदुक्त्वा गमनं बहिश्च मुनिपुङ्गव।
अन्तर्द्धानमकस्माच्च पुनरेव च दर्शनं। पुनश्च शयनं विप्र दिवसानेकविंशतिं। २८२०
तैलाभ्यक्तस्य गमनं भोजनञ्च गृहे मम। समुपानीय विविधं यद्दग्धं जातवेदसा।
निर्याणञ्च रथेनाशु सहसा यत् कृतं त्वया। धनानाञ्च विसर्गश्च वनस्यापि च दर्शनं।
प्रासादानां बहूनाञ्च काञ्चनानां महामुने। मणिविद्रुमपादानां पर्य्यङ्काणाञ्च दर्शनं।
पुनश्चादर्शनं तस्य श्रोतुमिच्छामि कारणं। अतीव ह्यत्र मुह्यामि चिन्तयानो भृगूद्वह।
न चैवात्राधिगच्छामि सर्व्वस्यास्य विनिश्चयं। एतदिच्छामि कार्त्स्न्येन सत्यं श्रोतुं तपोधन। २८२५
॥ च्यवन उवाच ॥ शृणु सर्व्वमशेषेण यदिदं येन हेतुना। न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव।
पितामहस्य वदतः पुरा देवसमागमे। श्रुतवानस्मि यद्राजंस्तन्मे निगदतः शृणु।
ब्रह्मक्षत्रविरोधेन भविता कुलसङ्करः। पौत्रस्ते भविता राजंस्तेजोवीर्य्यसमन्वितः।
ततस्ते कुलनाशार्थमहं त्वां समुपागतः। चिकीर्षन् कुशिकोच्छेदं सन्दिधक्षुः कुलन्तव।
ततोऽहमागम्य पुरे त्वामवोच महीपते। नियमं कञ्चिदारप्स्ये शुश्रूषा क्रियतामिति। २८३०
न च ते दुष्कृतं किञ्चिदहमासादयं गृहे। तेन जीवसि राजर्षे न भवेयास्त्वमन्यथा।
एवं बुद्धिं समास्थाय दिवसानेकविंशतिं। सुप्तोऽस्मि यदि मां कश्चिद्बोधयेदिति पार्थिव।
यदा त्वया सभार्य्येण संसुप्तो न प्रबोधितः। अहन्तदैव ते प्रीतो मनसा राजसत्तम।

कुशिकात्तु तव धर्मात्मन् कन्या सोऽधिगमिष्यति। तद्भावनार्थं भवतो वंशस्य भरतर्षभ।
गाधेर्दुहितरं प्राप्य पौत्रीं तव महातपाः। ब्राह्मणं क्षत्रधर्माणं पुत्रमुत्पादयिष्यति।
क्षत्रियं विप्रकर्माणं बृहस्पतिमिवौजसा। विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्मिकं। १८४५
तपसा महता युक्तं प्रदास्यति महाद्युते। स्त्रियौ तु कारणं तत्र परिवर्त्ते भविष्यतः।
पितामहनियोगाद्वै नान्यथैतद्भविष्यति। तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति।
भविता त्वञ्च सम्बन्धी भृगूणां भावितात्मनां।
॥ भीष्म उवाच ॥ कुशिकस्तु मुनेर्वाक्यं च्यवनस्य महात्मनः। श्रुत्वा हृष्टोऽभवद्राजा वाक्यञ्चेदमुवाच ह।
एवमस्त्विति धर्मात्मा तदा भरतसत्तम। च्यवनस्तु महातेजाः पुनरेव नराधिपं। १८५०
वरार्थञ्चोदयामास तमुवाच स पार्थिवः। बाढमेवं करिष्यामि कामं त्वत्तो महामुने।
ब्रह्मभूतं कुलं मेऽस्तु धर्मे चास्य मनो भवेत्। एवमुक्तस्तथेत्येवं प्रत्युक्त्वा च्यवनो मुनिः।
अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा। एतत्ते कथितं सर्व्वमशेषेण मया नृप।
भृगूणां कुशिकानाञ्च अभिसम्बन्धकारणं। यथोक्तमृषिणा चापि तदा तदभवन्नृप।
जन्म रामस्य च मुनेर्विश्वामित्रस्य चैव हि। १८५५

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि कुशिकच्यवनसंवादे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

॥ युधिष्ठिर उवाच ॥ मुह्यामीव निशम्याद्य चिन्तयानः पुनः पुनः। हीनां पार्थिवसंघातैः श्रीमद्भिः पृथिवीमिमां।
प्राप्य राज्यानि शतशो महीं जित्वा च भारत। कोटिशः पुरुषान् हत्वा परितप्ये पितामह।
का नु तासां वरस्त्रीणां समवस्था भविष्यति। या हीनाः पतिभिः पुत्रैर्मातुलैर्भ्रातृभिस्तथा।
वयं हि तान् कुरून् हत्वा ज्ञातींश्च सुहृदोऽपि वा। अवाक्शीर्षाः पतिष्यामो नरके नात्र संशयः।
शरीरं योक्तुमिच्छामि तपसोग्रेण भारत। उपदिष्टमिहेच्छामि तत्त्वतोऽहं विशाम्पते। १८६०
॥ वैशम्पायन उवाच ॥ युधिष्ठिरस्य तद्वाक्यं श्रुत्वा भीष्मो महामनाः। परीक्ष्य निपुणं बुद्ध्या युधिष्ठिरमभाषत।
रहस्यमद्भुतञ्चैव शृणु वक्ष्यामि धर्म्माय। या गतिः प्राप्यते येन प्रेत्यभावे विशाम्पते।
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः। आयुः प्रकर्षो भोगाश्च लभ्यन्ते तपसा विभो।
ज्ञानविज्ञानमारोग्यं रूपं सम्पत्तथैव च। सौभाग्यञ्चैव तपसा प्राप्यते भरतर्षभ।
धनं प्राप्नोति तपसा मौनेनाज्ञां प्रयच्छति। उपभोगांस्तु दानेन ब्रह्मचर्य्येण जीवितं। १८६५
अहिंसायाः फलं रूपं दीक्षाया जन्म वै कुले। फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनां भवेत्।
पयोभक्षो दिवं याति दानेन द्रविणाधिकः। गुरुशुश्रूषयाऽपि यां नित्यश्राद्धेन सन्ततिः।
गवाढ्यः शाकदीक्षाभिः स्वर्गमाहुस्तृणाशिनां। स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत्।
नित्यस्नायी भवेद्दक्षः सन्ध्ये तु द्वे जपन् द्विजः। मरुं साधयतो राज्यं नाकपृष्ठमनाशके।
शय्यासनानि दानानि योगयुक्ते तपोधने। अग्निप्रवेशे नियतं ब्रह्मलोके महीयते। १८७०
स्थण्डिले शयमानानां गृहाणि शयनानि च। चीरवल्कलवासोभिर्वासांस्याभरणानि च।

रसानां प्रतिसंहारात् सौभाग्यमिह विन्दति । आमिषप्रतिसंहारात् प्रजास्यायुष्मती भवेत् ।

उदवासं वसेद्यस्तु स नराधिपतिर्भवेत् । सत्यवादी नरश्रेष्ठ दैवतैः सह मोदते ।

कीर्त्तिर्भवति दानेन तथारोग्यमहिंसया । द्विजशुश्रूषया राज्यं द्विजत्वञ्चापि पुष्कलं ।

पानीयस्य प्रदानेन कीर्त्तिर्भवति शाश्वती । अन्नस्य तु प्रदानेन तृप्यते कामभोगतः । २८२५

शान्तदः सर्व्वभूतानां सर्व्वशोकैर्विमुच्यते । देवशुश्रूषया राज्यं दिव्यं रूपं नियच्छति ।

दीपालोकप्रदानेन चक्षुष्मान् भवते नरः । प्रेक्षणीयप्रदानेन स्मृतिं मेधाञ्च विन्दति ।

गन्धमाल्यप्रदानेन कीर्त्तिर्भवति पुष्कला । केशश्मश्रु धारयतामग्र्या भवति सन्ततिः ।

उपवासञ्च दीक्षाञ्च अभिषेकञ्च पार्थिव । कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ।

दासीदासमलङ्कारान् क्षेत्राणि च गृहाणि च । ब्रह्मदेयां सुतां दत्त्वा प्राप्नोति मनुजर्षभ । २८३०

क्रतुभिश्चोपवासैश्च त्रिदिवं याति भारत । लभते च शिवं ज्ञानं फलपुष्पप्रदो नरः ।

सुवर्णशृङ्गैस्तु विराजितानां गवां सहस्रस्य नरः प्रदानात् । प्राप्नोति पुण्यं दिवि देवलोकमित्येवमाहुर्द्दिवि देवसङ्घाः ।

प्रयच्छते यः कपिलां सवत्सां कांस्योपदोहां कनकाग्रशृङ्गीं । तैस्तैर्गुणैः कामदुघाऽस्य भूत्वा नरं प्रदातारमुपैति सा गौः ।

यावन्ति रोमाणि भवन्ति धेन्वास्तावत् फलं प्राप्य स गोप्रदानात् । पुत्रांश्च पौत्रांश्च कुलञ्च सर्व्वमासप्तमं तारयते परत्र ।

सदक्षिणां काञ्चनचारुशृङ्गीं कांस्योपदोहां द्रविणोत्तरीयां । धेनुं तिलानां ददतो द्विजाय लोका वसूनां सुलभा भवन्ति । २८३५

स्वकर्मभिर्मानवं सन्निरुद्धं तीव्रान्धकारे नरके पतन्तं । महार्णवे नौरिव वायुयुक्ता दानं गवां तारयते परत्र ।

यो ब्रह्मदेयान्तु ददाति कन्यां भूमिप्रदानञ्च करोति विप्रे । ददाति चान्नं विधिवच्च यश्च स लोकमाप्नोति पुरन्दरस्य ।

नैवेशिकं सर्व्वगुणोपपन्नं ददाति वै यस्तु नरो द्विजाय । स्वाध्यायचारित्रगुणान्विताय तस्यापि लोकाः कुरुषूत्तरेषु ।

धुर्य्यप्रदानेन गवां तथा वै लोकानवाप्नोति नरो वसूनां । स्वर्गाय चाहुस्तु हिरण्यदानं ततो विशिष्टं कनकप्रदानं ।

छत्रप्रदानेन गृहं वरिष्ठं यानं तथोपानहसम्प्रदाने । वस्त्रप्रदानेन फलं सुरूपं गन्धप्रदानात् सुरभिर्नरः स्यात् । २८४०

पुष्पोपगं वाऽथ फलोपगं वा यः पादपं स्पर्शयते द्विजाय । स स्त्रीसमृद्धं बहुरत्नपूर्णं लभत्ययत्नोपगतं गृहञ्च ।

भक्ष्यान्नपानीयरसप्रदाता सर्व्वान् समाप्नोति रसान् प्रकामं । प्रतिश्रयाच्छादनसम्प्रदाता प्राप्नोति तान्येव न संशयोऽत्र ।

स्रग्धूपगन्धान्यनुलेपनानि स्नानानि माल्यानि च मानवो यः । दद्याद्द्विजेभ्यः स भवेदरोगस्तथाभिरूपश्च नरेन्द्र लोके ।

बीजैरशून्यं शयनैरुपेतं दद्याद्गृहं यः पुरुषो द्विजाय । पुण्याभिरामं बहुरत्नपूर्णं लभत्यधिष्ठानवरं स राजन् ।

सुगन्धचित्रास्तरणोपधानं दद्यान्नरो यः शयनं द्विजाय । रूपान्वितां पक्षवतीं मनोज्ञां भार्य्यामयत्नोपगतां लभेत् सः । २८४५

पितामहस्यानुचरो वीरशायी भवेन्नरः । नाधिकं विद्यते यस्मादित्याहुः परमर्षयः ।

॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा प्रीतात्मा कुरुनन्दनः । नाश्रमेऽरोचयद्वासं वीरमार्गाभिकाङ्क्षया ।

ततो युधिष्ठिरः प्राह पाण्डवान् पुरुषर्षभ । पितामहस्य यद्वाक्यं तद्वो रोचत्विति प्रभुः ।

ततस्तु पाण्डवाः सर्व्वे द्रौपदी च यशस्विनी । युधिष्ठिरस्य तद्वाक्यं बाढमित्यभ्यपूजयन् ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

॥ युधिष्ठिर उवाच ॥ आरामाणां तडागानां यत् फलं कुरुपुङ्गव । तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ । २८५०

॥ भीष्म उवाच ॥ सुप्रदर्शा बलवती चित्रा धातुविभूषिता । उपेता सर्व्वभूतैश्च श्रेष्ठा भूमिरिहोच्यते ।
तस्याः क्षेत्रविशेषांश्च तडागानाञ्च बन्धनं । औदकानि च सर्व्वाणि प्रवक्ष्याम्यनुपूर्व्वशः ।
तडागानाञ्च वक्ष्यामि कृतानाञ्चापि ये गुणाः । त्रिषु लोकेषु सर्व्वत्र पूजनीयस्तडागवान् ।
अथवा मित्रसदनं मैत्रं मित्रविवर्द्धनं । कीर्त्तिसञ्जननं श्रेष्ठं तडागानां निवेशनं ।
धर्म्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः । तडागं सुकृतं देशे क्षेत्रमेव महाश्रयं । २८७५
चतुर्व्विधानां भूतानां तडागमुपलक्षयेत् । तडागानि च सर्व्वाणि दिशन्ति श्रियमुत्तमां ।
देवा मनुष्या गन्धर्व्वाः पितरोरगराक्षसाः । स्थावराणि च भूतानि संश्रयन्ति जलाश्रयं ।
तस्मात्तांस्ते प्रवक्ष्यामि तडागे ये गुणाः स्मृताः । या च तत्र फलावाप्तिरृषिभिः समुदाहृता ।
वर्षाकाले तडागे तु सलिलं यस्य तिष्ठति । अग्निहोत्रफलं तस्य फलमाहुर्मनीषिणः ।
शरत्काले तु सलिलं तडागे यस्य तिष्ठति । गोसहस्रस्य स प्रेत्य लभते फलमुत्तमं । २८८०
हेमन्तकाले सलिलं तडागे यस्य तिष्ठति । स वै बहुसुवर्णस्य यज्ञस्य लभते फलं ।
यस्य वै शिशिरे काले तडागे सलिलं भवेत् । तस्याग्निष्टोमयज्ञस्य फलमाहुर्मनीषिणः ।
तडागं सुकृतं यस्य वसन्ते तु महाश्रयं । अतिरात्रस्य यज्ञस्य फलं स समुपाश्नुते ।
निदाघकाले पानीयं तडागे यस्य तिष्ठति । वाजिमेधफलं तस्य फलं वै मुनयो विदुः ।
स कुलं तारयेत् सर्व्वं यस्य खाते जलाशये । गावः पिबन्ति सलिलं साधवश्च नराः सदा । २८८५
तडागे यस्य गावस्तु पिबन्ति तृषिता जलं । मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ।
यत् पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च । तडागदस्य तत् सर्व्वं प्रेत्यानन्त्याय कल्पते ।
दुर्लभं सलिलं तात विशेषेण परत्र वै । पानीयस्य प्रदानेन प्रीतिर्भवति शाश्वती ।
तिलान् ददत पानीयं दीपान् ददत जाग्रत । ज्ञातिभिः सह मोदध्वमेतत् प्रेत्य सुदुर्लभं ।
सर्व्वदानैर्गुरुतरं सर्व्वदानैर्व्विशिष्यते । पानीयं नरशार्दूल तस्माद्दातव्यमेव हि । २८९०
एवमेतत्तडागस्य कीर्त्तितं फलमुत्तमं । अत ऊर्द्ध्वं प्रवक्ष्यामि वृक्षाणामवरोपणं ।
स्थावराणाञ्च भूतानां जातयः षट् प्रकीर्त्तिताः । वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः ।
एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे । कीर्त्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभं ।
लभते नाम लोके च पितृभिश्च महीयते । देवलोके गतस्यापि नाम तस्य न नश्यति ।
अतीतानागते चोभे पितृवंशं च भारत । तारयेद्वृक्षरोपी च तस्माद्वृक्षांश्च रोपयेत् । २८९५
तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः । परलोकगतः स्वर्गं लोकांश्चाप्नोति सोऽव्ययान् ।
पुष्पैः सुरगणान् वृक्षाः फलैश्चापि तथा पितॄन् । छायया चातिथिं तात पूजयन्ति महीरुहाः ।
किन्नरोरगरक्षांसि देवगन्धर्व्वमानवाः । तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान् ।
पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् । वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र तु ।
तस्मात्तडागे सद्वृक्षा रोप्याः श्रेयोऽर्थिना सदा । पुत्रवत् परिपाल्याश्च पुत्रास्ते धर्म्मतः स्मृताः । २९००

तडागकृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः । एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ।
तस्मात्तडागं कुर्व्वीत आरामांश्चैव रोपयेत् । यजेच्च विविधैर्यज्ञैः सत्यञ्च सततं वदेत् ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

॥ युधिष्ठिर उवाच ॥ यानीमानि बहिर्वेद्यां दानानि परिचक्षते । तेभ्यो विशिष्टं किं दानं मतन्ते कुरुपुङ्गव ।
कौतूहलं हि परमं तत्र मे विद्यते प्रभो । दातारं दत्तमन्वेति यद्दानं तत् प्रचक्ष्व मे ।
॥ भीष्म उवाच ॥ अभयं सर्व्वभूतेभ्यो व्यसने चाप्यनुग्रहः । यच्चाभिलषितं दद्यात्तृषितायाभियाचते । २९०५
दत्तं मन्येत यद्दत्त्वा तद्दानं श्रेष्ठमुच्यते । दत्तं दातारमन्वेति यद्दानं भरतर्षभ ।
हिरण्यदानं गोदानं पृथिवीदानमेव च । एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतं ।
एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा । दानानि हि नरं पापान्मोक्षयन्ति न संशयः ।
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ।
प्रियाणि लभते नित्यं प्रियदः प्रियकृत्तथा । प्रियो भवति भूतानामिह चैव परत्र च । २९१०
याचमानमभीमानादनासक्तमकिञ्चनं । यो नार्च्चति यथाशक्ति स नृशंसो युधिष्ठिर ।
अमित्रमपि चेद्दीनं शरणैषिणमागतं । व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ।
कृशाय कृतविद्याय वृत्तिक्षीणाय सीदते । अपहन्यात् क्षुधां यस्तु न तेन पुरुषः समः ।
क्रियानियमितान् साधून् पुत्रदारैश्च कर्षितान् । अयाचमानान् कौन्तेय सर्व्वोपायैर्निमन्त्रयेत् ।
आशिषं ये न देवेषु न च मर्त्त्येषु कुर्व्वते । अर्हन्तो नित्यसन्तुष्टास्तथा लब्धोपजीविनः । २९१५
आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत । तान् युक्तैरुपजिज्ञास्य तथा द्विजवरोत्तमान् ।
कृतैरावसथैर्नित्यं सप्रेष्यैः सपरिच्छदैः । निमन्त्रयेथाः कौरव्य सर्व्वकामसुखावहैः ।
यदि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर । कार्य्यमित्येव मन्वाना धार्म्मिकाः पुण्यकर्म्मिणः ।
विद्यास्नाता व्रतस्नाता ये व्यपाश्रित्य जीविनः । गूढस्वाध्यायतपसो ब्राह्मणाः संशितव्रताः ।
तेषु शुद्धेषु दान्तेषु स्वदारपरितोषिषु । यत् करिष्यसि कल्याणं तत्ते लोके युगायते । २९२०
यथाग्निहोत्रं सुहुतं सायंप्रातर्द्विजातिना । तथा दत्तं द्विजातिभ्यो भवत्यथ यतात्मसु ।
एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः । विशिष्टः सर्व्वयज्ञेभ्यो ददतस्तात वर्त्तताम् ।
निवापदानसलिलस्तादृशेषु युधिष्ठिर । निवसन् पूजयंश्चैव तेभ्योऽनृण्यं निगच्छति ।
त एव नैव कुप्यन्ते न लुभ्यन्ति तृणेष्वपि । त एव नः पूज्यतमा ये चापि प्रियवादिनः ।
एतेन यज्ञमन्यन्ते न प्रवर्त्तन्ति चापरे । पुत्रवत् परिपाल्यास्ते नमस्तेभ्यस्तथाभयं । २९२५
ऋत्विक्पुरोहिताचार्य्या मृदुब्रह्मधरा हि ते । क्षात्रेणापि हि संसृष्टं तेजः शाम्यति वै द्विजे ।
अस्ति मे बलवानस्मि राजाऽस्मीति युधिष्ठिर । ब्राह्मणान् मा स्म पर्य्यश्नीर्वासोभिरशनेन च ।
यच्छोभार्थं बलार्थञ्च वित्तमस्ति तवानघ । तेन ते ब्राह्मणाः पूज्याः स्वधर्म्ममनुतिष्ठता ।
नमस्कार्य्यास्तथा विप्रा वर्त्तमाना यथातथं । यथासुखं यथोत्साहं ललन्तु त्वयि पुत्रवत् ।

को ह्यव्ययप्रवादानां सुहृदामल्पतोषिणां । वृत्तिमर्हत्युपक्षेप्तुं त्वदन्यः कुरुसत्तम । ३०२०
यथा पत्याश्रयो धर्म्मः स्त्रीणां लोके सनातनः । सदैव सा गतिर्नान्या तथाऽस्माकं द्विजातयः ।
यदि नो ब्राह्मणास्तात संत्यजेयुरपूजिताः । पश्यन्तो दारुणं कर्म्म सततं क्षत्रिये स्थितं ।
अवेदानामयज्ञानामलोकानामवर्त्तिनां । कस्तेषां जीवितेनार्थस्त्वां विना ब्राह्मणाश्रयं ।
अत्र ते वर्त्तयिष्यामि यथाधर्म्मं सनातनं । राजन्यो ब्राह्मणान् राजन् पुरा परिचचार ह ।
वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुतिः । दूराच्छूद्रेणोपचर्य्यो ब्राह्मणोऽग्निरिव ज्वलन् । ३०२५
संस्पृश्य परिचर्य्यस्तु वैश्येन क्षत्रियेण च । मृदुभावान् सत्यशीलान् सत्यधर्म्मानुपालकान् ।
आशीविषानिव क्रुद्धांस्तानुपाचरत द्विजान् । अपरेषां परेषाञ्च परेभ्यश्चापि ये परे ।
क्षत्रियाणां प्रतपतां तेजसा च बलेन च । ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च ।
न मे पिता प्रियतरो न त्वं तात तथा प्रियः । न मे पितुः पिता राजन् न चात्मा न च जीवितं ।
त्वत्तश्च मे प्रियतरः पृथिव्यां नास्ति कश्चन । त्वत्तोऽपि मे प्रियतरा ब्राह्मणा भरतर्षभ । ३०३०
ब्रवीमि सत्यमेतच्च यथाऽहं पाण्डुनन्दन । तेन सत्येन गच्छेयं लोकान् यत्र च शान्तनुः ।
पश्येयञ्च सतां लोकान् शुचीन् ब्रह्मपुरस्कृतान् । तत्र मे तात गन्तव्यमह्नाय च चिराय च ।
सोऽहमेतादृशाँल्लोकान् दृष्ट्वा भरतसत्तम । यन्मे कृतं ब्राह्मणेषु न तप्ये तेन पार्थिव ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने ऊनषष्टोऽध्यायः ॥ ५९ ॥

॥ युधिष्ठिर उवाच ॥ यौ च स्यातां चरणेनोपपन्नौ यौ विद्यया सदृशौ जन्मना च । ताभ्यां दानं कतमस्मै विशिष्टमयाचमानाय च याचते च ।

॥ भीष्म उवाच ॥ श्रेयो वै याचतः पार्थ दानमाहुरयाचते । अर्हत्तमो वै धृतिमान् कृपणादधृतात्मनः । ३०३५
क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृतिः । ब्राह्मणो धृतिमान् विद्वान् देवान् प्रीणाति तुष्टिमान् ।
याच्यमाहुरनीशस्य अभिहारञ्च भारत । उद्वेजयन्ति याचन्ति सदा भूतानि दस्युवत् ।
म्रियते याचमानो वै न जातु म्रियते ददत् । ददत् सञ्जीवयत्येनमात्मानञ्च युधिष्ठिर ।
आनृशंस्यं परो धर्म्मो याचते यत् प्रदीयते । अयाचतः सीदमानान् सर्व्वोपायैर्निमन्त्रयेत् ।
यदि वै तादृशा राष्ट्रे वसेयुस्ते द्विजोत्तमाः । भस्मच्छन्नानिवाग्नींस्तान् बुद्ध्येथाः प्रयत्नतः । ३०४०
तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि । अपूज्यमानाः कौरव्य पूजार्हास्तु तथाविधाः ।
पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः । तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परन्तप ।
ददद्बहुविधान् दायानुपागच्छन्नयाचतां । यदग्निहोत्रे सुहुते सायंप्रातर्भवेत् फलं ।
विद्यावेदव्रतवति तद्दानफलमुच्यते । विद्यावेदव्रतस्नातानव्यपाश्रयजीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणान् संशितव्रतान् । कृतैरावसथैर्हृद्यैः सप्रेष्यैः सपरिच्छदैः । ३०४५
निमन्त्रयेथाः कौन्तेय कामैश्चान्यैर्द्विजोत्तमान् । अपि ते प्रतिगृह्णीयुः श्रद्धोपेतं युधिष्ठिर ।
कार्य्यमित्येव मन्वाना धर्म्मज्ञाः सूक्ष्मदर्शिनः । अपि ते ब्राह्मणा भुक्त्वा गताः सोद्धरणान् गृहान् ।

येषां दाराः प्रतीक्षन्ते पर्ज्जन्यमिव कर्षकाः। अन्नानि प्रातः सवने नियता ब्रह्मचारिणः।
ब्राह्मणास्तात भुञ्जानास्त्रेताग्निं प्रीणयन्त्युत। माध्यन्दिनं ते सवनं ददतस्तात वर्त्ततां।
गोहिरण्यानि वासांसि तेनेन्द्रः प्रीयतां तव। तृतीयं सवनं ते वै वैश्वदेवं युधिष्ठिर। २९६०
यद्देवेभ्यः पितृभ्यश्च विप्रेभ्यश्च प्रयच्छति। अहिंसा सर्व्वभूतेभ्यः संविभागश्च भागशः।
दमस्त्यागो धृतिः सत्यं भवत्ववभृथाय ते। एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः।
विशिष्टः सर्व्वयज्ञानां नित्यं तात प्रवर्त्ततां।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने षष्टितमोऽध्यायः ॥ ६० ॥

॥ युधिष्ठिर उवाच ॥ दानं यज्ञक्रिया चेह किंस्वित् प्रेत्य महाफलं। कस्य ज्यायः फलं प्रोक्तं कीदृशेभ्यः कथं कदा।
एतदिच्छामि विज्ञातुं याथातथ्येन भारत। विद्वन् जिज्ञासमानाय दानधर्म्मान् प्रचक्ष्व मे। २९६५
अन्तर्वेद्याञ्च यद्दत्तं श्रद्धया चानृशंस्यतः। किंस्विन्निःश्रेयसं तात तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच ॥ रौद्रं कर्म्म क्षत्रियस्य सततं तात वर्त्तते। तस्य वैतानिकं कर्म्म दानञ्चैवेह पावनं।
न तु पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः। एतस्मात् कारणाद्यज्ञैर्यजेद्राजाप्तदक्षिणैः।
अथ चेत् प्रतिगृह्णीयुर्दद्यादहरहर्नृप। श्रद्धामास्थाय परमां पावनं ह्येतदुत्तमं।
ब्राह्मणांस्तर्पयन् द्रव्यैस्ततो यज्ञे यतव्रतः। मैत्रान् साधून् वेदविदः शीलवृत्ततपोऽन्वितान्। २९७०
यत्ते तेन करिष्यन्ति कृतं तेन भविष्यति। यज्ञान् साधय साधुभ्यः स्वाद्वन्नान् दक्षिणावतः।
इष्टं दत्तञ्च मन्येथा आत्मानं दानकर्म्मणा। पूजयेथा यायजूकांस्तवाप्यंशो भवेद्यथा।
प्रजावतो भरेथाश्च ब्राह्मणान् बहुकारिणः। प्रजावांस्तेन भवति यथा जनयिता तथा।
यावतः साधुधर्म्मान् वै सन्तः सम्वर्द्धयन्त्युत। सर्व्वस्वैश्चापि भर्त्तव्या नरा ये बहुकारिणः।
समृद्धः सम्प्रयच्छ त्वं ब्राह्मणेभ्यो युधिष्ठिर। धेनूरनडुहोऽन्नानि छत्रं वासांस्युपानहौ। २९७५
आज्यानि यजमानेभ्यस्तथान्नाद्यानि भारत। अश्ववन्ति च यानानि वेश्मानि शयनानि च।
एते देया व्युष्टिमन्तो लघूपायाश्च भारत। अजुगुप्सांश्च विज्ञाय ब्राह्मणान् वृत्तिकर्शितान्।
उपच्छन्नं प्रकाशं वा वृत्त्या तान् प्रतिपालयेत्। राजसूयाश्वमेधाभ्यां श्रेयस्तत् क्षत्रियान् प्रति।
एवं पापैर्विनिर्म्मुक्तस्त्वं पूतः स्वर्गमाप्स्यसि। सञ्चयित्वा पुनः कोषं यद्राष्ट्रं पालयिष्यसि।
तेन त्वं ब्रह्मभूयत्वमवाप्स्यसि धनानि च। आत्मनश्च परेषाञ्च वृत्तिं संरक्ष भारत। २९८०
पुत्रवच्चापि भृत्यान् स्वान् प्रजाश्च परिपालय। योगः क्षेमश्च ते नित्यं ब्राह्मणेष्वस्तु भारत।
तदर्थं जीवितं तेऽस्तु मा तेभ्योऽप्रतिपालनं। अनर्थो ब्राह्मणस्यैष यद्वित्तनिचयो महान्।
श्रिया ह्यभीक्ष्णं संवासो दर्पयेत् सम्प्रमोहयेत्। ब्राह्मणेषु प्रमूढेषु धर्म्मो विप्रणशेद्ध्रुवं।
धर्म्मप्रणाशे भूतानामभावः स्यान्न संशयः। योऽरक्षिभ्यः सम्प्रदाय राजा राष्ट्रं विलुम्पति।
यज्ञे राष्ट्राद्धनं तस्मादानयध्वमिति ब्रुवन्। यच्चादाय तदाज्ञप्तं भीतं दत्तं सुदारुणं। २९८५
यजेद्राजा न तं यज्ञं प्रशंसन्त्यस्य साधवः। अपीडिताः सुसंवृद्धा ये ददत्यनुकूलतः।

तादृशेनाभ्युपायेन यद्द्रव्यं मोक्षमाहृतैः। यदा परिनिविर्वेत निश्चितो वै यथाविधि।
तदा राजा महायज्ञैर्यजेत बहुदक्षिणैः। वृद्धबालधनं रक्ष्यमन्धस्य कृपणस्य च।
न खातपूर्व्वं कुर्व्वीत न रुदन्ती धनं हरेत्। हृतं कृपणवित्तं हि राष्ट्रं हन्ति नृपश्रियं।
दद्याच्च महतो भोगान् क्षुद्भयं प्रणुदेत्सतां। येषां स्वादूनि भोज्यानि समवेक्षन्ति बालकाः। ३०९०
नाश्नन्ति विधिवत्तानि किन्नु पापतरं ततः। यदि ते तादृशो राष्ट्रे विद्वान् सीदेत्क्षुधा द्विजः।
भ्रूणहत्याञ्च गच्छेथाः कृत्वा पापमिवोत्तमं। धिक् तस्य जीवितं राज्ञो राष्ट्रे यस्यावसीदति।
द्विजोऽन्यो वा मनुष्योऽपि शिविराह वचो यथा। यस्य स्म विषये राज्ञः स्नातकः सीदति क्षुधा।
अवृद्धिमेति तद्राष्ट्रं विन्दते सहराजकं। क्रोशन्त्यो यस्य वै राष्ट्राद्ध्रियन्ते तरसा स्त्रियः।
क्रोशतां पतिपुत्राणां मृतोऽसौ न च जीवति। अरक्षितारं हर्त्तारं विलोप्तारमनायकं। ३०९५
तं वै राजकलिं हन्युः प्रजाः सन्नह्य निर्घृणं। अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः।
स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः। पापं कुर्व्वन्ति यत् किञ्चित्प्रजा राज्ञा ह्यरक्षिताः।
चतुर्थं तस्य पापस्य राजा विन्दति भारत। अथाहुः सर्व्वमेवेति भूयोऽर्द्धमिति निश्चयः।
चतुर्थं मतमस्माकं मनोः श्रुत्वानुशासनं। शुभं वा यत्र कुर्व्वन्ति प्रजा राज्ञा सुरक्षिताः।
चतुर्थं तस्य पुण्यस्य राजा चाप्नोति भारत। जीवन्तं त्वानुजीवन्तु प्रजाः सर्व्वा युधिष्ठिर। ३१००
पर्ज्जन्यमिव भूतानि महाद्रुममिवाण्डजाः। कुवेरमिव रक्षांसि शतक्रतुमिवामराः।
ज्ञातयस्त्वानुजीवन्तु सुहृदश्च परन्तप।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने एकषष्टोऽध्यायः॥ ६१॥

॥ युधिष्ठिर उवाच॥ इदं देयमिदं देयमितीयं श्रुतिरादरात्। बहुदेयाश्च राजानः किंस्विद्दानमनुत्तमं।
॥ भीष्म उवाच॥ अतिदानानि सर्व्वाणि पृथिवीदानमुच्यते। अचला अक्षया भूमिर्दोग्ध्री कामानिहोत्तमान्।
दोग्ध्री वासांसि रत्नानि पशून् व्रीहियवांस्तथा। भूमिदः सर्व्वभूतेषु शाश्वतीरेधते समाः। ३१०५
यावद्भूमेरायुरिह तावद्भूमिद एधते। न भूमिदानादस्तीह परं किञ्चिद्युधिष्ठिर।
अप्यल्पं प्रददुः सर्व्वे पृथिव्या इति नः श्रुतं। भूमिमेव ददुः सर्व्वे भूमिं ते भुञ्जते जनाः।
स्वकर्म्मैवोपजीवन्ति नरा इह परत्र च। भूमिर्भूतिर्महादेवी दातारं कुरुते प्रियं।
य एतां दक्षिणां दद्यादक्षयां राजसत्तम। पुनर्नरत्वं सम्प्राप्य भवेत् स पृथिवीपतिः।
यथा दानं तथा भोग इति मे धर्म्मनिश्चयः। संग्रामे वा तनुं जह्याद्दद्याच्च पृथिवीमिमां। ३११०
इत्येतत् क्षत्रबन्धूनां वदन्ति परमां श्रियं। पुनाति दत्ता पृथिवी दातारमिति शुश्रुम।
अपि पापसमाचारं ब्रह्मघ्नमपि वानृतं। सैव पापं पावयति सैव पापात् प्रमोचयेत्।
अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः। पृथिवीं नान्यदिच्छन्ति पावनी जननी यथा।
नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनं। दानं वाऽप्यथ वाऽऽदानं नामास्याः प्रथमं प्रियं।
य एतां विदुषे दद्यात् पृथिवीं पृथिवीपतिः। पृथिव्यामेतदिष्टं स राजा राज्यमितो व्रजेत्। ३११५

पुनस्तासौ जनं प्राप्य राजवत् स्यान्न संशयः । तस्मात् प्राप्यैव पृथिवीं दद्यात् विप्राय पार्थिवः ।
नाभूमिपतिना भूमिरधिष्ठेया कथञ्चन । न चापात्रेण वा ग्राह्या दत्तदानेन चाचरेत् ।
ये चान्ये भूमिमिच्छेयुः कुर्य्युरेवं न संशयः । यः साधोर्भूमिमादत्ते न भूमिं विन्दते तु सः ।
भूमिं दत्त्वा तु साधुभ्यो विन्दते भूमिमुत्तमां । प्रेत्य चेह च धर्म्मात्मा सम्प्राप्नोति महद्यशः ।
यस्य विप्रास्तु शंसन्ति साधोर्भूमिं सदैव हि । न तस्य शत्रवो राजन् प्रशंसन्ति वसुन्धरां ।  ३१२०
यत् किञ्चित् पुरुषः पापं कुरुते वृत्तिकर्षितः । अपि गोचर्म्ममात्रेण भूमिदानेन पूयते ।
येऽपि संकीर्णकर्म्माणो राजानो रौद्रकर्म्मिणः । तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमं ।
अल्पान्तरमिदं शश्वत् पुराणा मेनिरे जनाः । यो यजेताश्वमेधेन दद्याद्वा साधवे महीं ।
अपि चेत् सुकृतं कृत्वा शङ्केरन्नपि पण्डिताः । अशक्यमेकमेवैतद्भूमिदानमनुत्तमं ।
सुवर्णं रजतं वस्त्रं मणिमुक्ता वसूनि च । सर्व्वमेतन्महाप्राज्ञो ददाति वसुधां ददत् ।  ३१२५
तपो यज्ञः श्रुतं शीलमलोभः सत्यसन्धता । गुरुदैवतपूजा च एता वर्त्तन्ति भूमिदं ।
भर्त्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः । ब्रह्मलोकगताः सिद्धा नातिक्रामन्ति भूमिदं ।
यथा स्वपुत्रं जननी क्षीरेण भरते सदा । अनुगृह्णाति दातारं तथा सर्व्वरसैर्मही ।
मृत्युर्वै किङ्करो दण्डस्तमो वह्निः सुदारुणः । घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदं ।
पितॄंश्च पितृलोकस्थान् देवलोकाच्च देवताः । सन्तर्पयति शान्तात्मा यो ददाति वसुन्धरां ।  ३१३०
कृशाय म्रियमाणाय वृत्तिम्लानाय सीदते । भूमिं वृत्तिकरीं दत्त्वा सत्री भवति मानवः ।
यथा धावति गौर्व्वत्सं स्रवन्ती वत्सला पयः । एवमेव महाभाग भूमिर्भवति भूमिदं ।
फालकृष्टां महीं दत्त्वा सबीजां सफलामपि । उदीर्णं वापि शरणं तथा भवति कामदः ।
ब्राह्मणं वृत्तसम्पन्नमाहिताग्निं शुचिव्रतं । नरः प्रतिग्राह्य महीं न याति यमसादनं ।
यथा चन्द्रमसो वृद्धिरहन्यहनि जायते । तथा भूमिकृतं दानं शस्ये शस्ये विवर्द्धते ।  ३१३५
अत्र गाथा भूमिगीताः कीर्त्तयन्ति पुराविदः । याः श्रुत्वा जामदग्न्येन दत्ता भूः काश्यपाय वै ।
मामेवादत्त मां दत्त मां दत्त्वा मामवाप्स्यथ । अस्मिंल्लोके परे चैव तद्दत्तं जायते पुनः ।
य इमां व्याहृतिं वेद ब्राह्मणो वेदसंश्रितां । श्राद्धस्य क्रियमाणस्य ब्रह्मभूयं स गच्छति ।
कृत्यानामभिशस्तानामरिष्टशमनं महत् । प्रायश्चित्तं महीं दत्त्वा पुनात्युभयतो दश ।
पुनाति य इदं वेद वेदवादं तथैव च । प्रकृतिः सर्व्वभूतानां भूमिर्व्वैश्वानरी मता ।  ३१४०
अभिषिच्यैव नृपतिं श्रावयेदिममागमं । यथा श्रुत्वा महीं दद्यान्नादद्यात् साधुतश्च तां ।
सोऽयं कृत्स्नो ब्राह्मणार्थो राजार्थश्चाप्यसंशयः । राजा हि धर्म्मकुशलः प्रथमं भूतिलक्षणं ।
अथ येषामधर्म्मज्ञो राजा भवति नास्तिकः । न ते सुखं प्रबुध्यन्ति न सुखं प्राप्नुवन्ति च ।
सदा भवन्ति चोद्विग्नास्तस्य दुश्चरितैर्नराः । योगक्षेमा हि बहवो राष्ट्रं नास्याविशन्ति तत् ।
अथ येषां पुनः प्राज्ञो राजा भवति धार्म्मिकः । सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्वपन्ति च ।  ३१४५

तस्य राज्ञः शुभैरर्थैः कर्म्मभिर्निर्जिता नराः । योगक्षेमेण तृप्ता च विवर्द्धन्ते स्वकर्मभिः ।
स कुलीनः स बन्धुः स पुरुषः स च पुण्यकृत् । स दाता स च विक्रान्तो यो ददाति वसुन्धरां ।
आदित्या इव दीप्यन्ते तेजसा भुवि मानवाः । ददन्ति वसुधां स्फीतां ये वेदविदुषि द्विजे ।
यथा शस्यानि रोहन्ति प्रकीर्णानि महीतले । तथा कामाः प्ररोहन्ति भूमिदानसमार्जिताः ।
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः । शूलपाणिश्च भगवान् प्रतिनन्दन्ति भूमिदं । ३११०
भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्ति च । चतुर्व्विधो हि लोकोऽयं योऽयं भूमिगुणात्मकः ।
एषा माता पिता चैव जगतः पृथिवीपते । नानया सदृशं भूतं किञ्चिदस्ति जनाधिप ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । वृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ।
इष्ट्वा क्रतुशतेनाथ महता दक्षिणावता । मघवा वाग्विदां श्रेष्ठः पप्रच्छेदं वृहस्पतिं ।
॥ मघवा उवाच ॥ भगवन् केन दानेन स्वर्गतः सुखमेधते । यदक्षयं महार्घञ्च तद्ब्रूहि वदताम्वर । ३१११
॥ भीष्म उवाच ॥ इत्युक्तः स सुरेन्द्रेण ततो देवपुरोहितः । वृहस्पतिर्वृहत्तेजाः प्रत्युवाच शतक्रतुं ।
॥ वृहस्पतिरुवाच ॥ सुवर्णदानं गोदानं भूमिदानञ्च वृत्रहन् । ददद्देतान्महाप्राज्ञः सर्व्वपापैः प्रमुच्यते ।
न भूमिदानाद्देवेन्द्र परं किञ्चिदिति प्रभो । विशिष्टमिति मन्यामि यथा प्राहुर्म्मनीषिणः ।
ये शूरा निहता युद्धे स्वर्य्याता रणगृद्धिनः । सर्व्वे ते विबुधश्रेष्ठ नातिक्रामन्ति भूमिदं ।
भर्त्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः । ब्रह्मलोकगता युक्ता नात्युत्क्रामन्ति भूमिदं । ३११०
पञ्चपूर्व्वा हि पुरुषाः षडन्ये वसुधाश्रिताः । एकादश ददद्भूमिं परित्रातीह मानवः ।
रत्नोपकीर्णां वसुधां यो ददाति पुरन्दर । स मुक्तः सर्व्वकलुषैः स्वर्गलोके महीयते ।
महीं स्फीतां ददद्राजन् सर्व्वकामगुणान्वितां । राजाधिराजो भवति तद्धि दानमनुत्तमं ।
सर्व्वकामसमायुक्तां काश्यपीं यः प्रयच्छति । सर्व्वभूतानि मन्यन्ते मां ददातीति वासव ।
सर्व्वकामदुघां धेनुं सर्व्वकामगुणान्वितां । ददाति यः सहस्राक्ष स्वर्गं याति स मानवः । ३११८
मधुसर्पिःप्रवाहिण्यः पयोदधिवहास्तथा । सरितस्तर्पयन्तीह सुरेन्द्र वसुधाप्रदं ।
भूमिप्रदानान्नृपतिर्मुच्यते सर्व्वकिल्बिषात् । न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ।
ददाति यः समुद्रान्तां पृथिवीं शस्त्रनिर्ज्जितां । तं जनाः कथयन्तीह यावद्ब्रजति गौरियं ।
पुण्यामृद्धिरसां भूमिं यो ददाति पुरन्दर । न तस्य लोकाः क्षीयन्ते भूमिदानगुणान्विताः ।
सर्व्वदा पार्थिवेनेह सततं भूमिमिच्छता । भूर्द्देया विधिवच्छक्र पात्रे सुखमभीप्सता । ३१२०
अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये । समुत्सृजति तत् पापं जीर्णां त्वचमिवोरगः ।
सागरान् सरितः शैलान् काननानि च सर्व्वशः । सर्व्वमेतन्नरः शक्र ददाति वसुधां ददत् ।
तडागान्युदपानानि स्रोतांसि च सरांसि च । स्नेहान् सर्व्वरसांश्चैव ददाति वसुधां ददत् ।
ओषधीर्व्वीर्य्यसम्पन्ना नगान् पुष्पफलान्वितान् । काननोपलशैलांश्च ददाति वसुधां ददत् ।
अग्निष्टोमप्रभृतिभिरिष्ट्वा च स्वाप्तदक्षिणैः । न तत् फलमवाप्नोति भूमिदानाद्यदश्नुते । ३१२५

दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन्। पूर्व्वदत्तां हरन् भूमिं नरकायोपगच्छति।
न ददाति प्रतिश्रुत्य दत्त्वाऽपि च हरेत्तु यः। स बद्धो वारुणैः पाशैस्तप्यते मृत्युशासनात्।
आहिताग्निं सदा यज्ञं कृशवृत्तिं प्रियातिथिं। ये भजन्ति द्विजश्रेष्ठं नोपसर्पन्ति ते यमं।
ब्राह्मणेष्वनृणीभूतः पार्थिवः स्यात् पुरन्दर। इतरेषान्तु वर्णानां तारयेत् कृशदुर्ब्बलान्।
नाच्छिन्द्यात् स्पर्शितां भूमिं परेण त्रिदशाधिप। ब्राह्मणस्य सुरश्रेष्ठ कृशवृत्तेः कदाचन। ३१८०
यथाश्रु पतितं तेषां दीनानामथ सीदतां। ब्राह्मणानां हृते क्षेत्रे हन्यात्त्रिपुरुषं कुलं।
भूमिपालं च्युतं राष्ट्राद्यस्तु संस्थापयेन्नरः। तस्य वासः सहस्राक्ष नाकपृष्ठे महीयते।
इक्षुभिः सहितां भूमिं यवगोधूमशालिनीं। गोऽश्ववाहनपूर्णां वा बाहुवीर्य्यादुपार्जितां।
निधिगर्भां ददद्भूमिं सर्व्वरत्नपरिच्छदां। अक्षयान् लभते लोकान् भूमिसत्रं हि तस्य तत्।
विधूय कलुषं सर्व्वं विरजाः सम्मतः सतां। लोके महीयते सद्भिर्यो ददाति वसुन्धरां। ३१८५
यथाऽप्सु पतितः शक्र तैलबिन्दुर्विसर्पति। तथा भूमिकृतं दानं शस्ये शस्ये विवर्द्धते।
ये रणाग्रे महीपालाः शूराः समितिशोभनाः। वध्यन्तेऽभिमुखाः शक्र ब्रह्मलोकं व्रजन्ति ते।
नृत्यगीतपरा नार्य्यो दिव्यमाल्यविभूषिताः। उपतिष्ठन्ति देवेन्द्र तथा भूमिप्रदं दिवि।
मोदते च सुखं स्वर्गे देवगन्धर्व्वपूजितः। यो ददाति महीं सम्यग्विधिनेह द्विजातये।
शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः। उपतिष्ठन्ति देवेन्द्र ब्रह्मलोके धराप्रदं। ३१९०
उपतिष्ठन्ति पुण्यानि सदा भूमिप्रदं नरं। शङ्खं भद्रासनं छत्रं वराश्वा वरवारणं।
भूमिप्रदानात् पुष्पाणि हिरण्यनिचयास्तथा। आज्ञा सदाऽप्रतिहता जयशब्दा वसूनि च।
भूमिदानस्य पुण्यानि फलं स्वर्गः पुरन्दर। हिरण्यपुष्पाश्चौषध्यः कुशकाञ्चनशाद्वलाः।
अमृतप्रसवां भूमिं प्राप्नोति पुरुषो ददत्। नास्ति भूमिसमं दानं नास्ति मातृसमो गुरुः।
नास्ति सत्यसमो धर्म्मो नास्ति दानसमो निधिः। एतदाङ्गिरसात् श्रुत्वा वासवो वसुधामिमां। ३१९५
वसुरत्नसमाकीर्णां ददावङ्गिरसे तदा। य इदं श्रावयेत् श्राद्धे भूमिदानस्य संस्तवं।
न तस्य रक्षसां भागो नासुराणां भवत्युत। अक्षय्यञ्च भवेद्दत्तं पितृभ्यस्तन्न संशयः।
तस्माच्छ्राद्धेष्विदं विद्वान् भुञ्जतः श्रावयेद्द्विजान्। इत्येतत् सर्व्वदानानां श्रेष्ठमुक्तं तवानघ।
मया भरतशार्दूल किं भूयः श्रोतुमिच्छसि।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने भूमिदानप्रशंसायां द्विषष्टोऽध्यायः ॥ ६२ ॥

॥ युधिष्ठिर उवाच ॥ कानि दानानि लोकेऽस्मिन्दातुकामो महीपतिः। गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम। ३२००
केन तुष्यन्ति ते सद्यः किं तुष्टाः प्रदिशन्ति च। शंस मे तन्महाबाहो फलं पुण्यकृतं महत्।
दत्तं किं फलवद्राजन्निह लोके परत्र च। भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद।
॥ भीष्म उवाच ॥ इममर्थं पुरा पृष्टो नारदो देवदर्शनः। यदुक्तवानसौ वाक्यं तन्मे निगदतः शृणु।
॥ नारद उवाच ॥ अन्नमेव प्रशंसन्ति देवा ऋषिगणास्तथा। लोकतन्त्रं हि संज्ञाश्च सर्व्वमन्ने प्रतिष्ठितं।

अन्नेन सदृशं दानं न भूतं न भविष्यति । तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः । ३००५
अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः । अन्नेन धार्य्यते सर्व्वं विश्वं जगदिदं प्रभो ।
अन्नाद्गृहस्था लोकेऽस्मिन् भिक्षवस्तापसास्तथा । अन्नाद्भवन्ति वै प्राणाः प्रत्यक्षं नात्र संशयः ।
कुटुम्बं पीडयित्वा तु ब्राह्मणाय महात्मने । दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ।
ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने । विदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ।
श्रान्तमध्वनि वर्त्तन्तं वृद्धमर्हमुपस्थितं । अर्चयेद्भूतिमन्विच्छन् गृहस्थो गृहमागतं । ३०१०
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः । अन्नदः प्राप्नुते राजन् दिवि चेह च यत् सुखं ।
नावमन्येदभिगतं न प्रणुद्यात् कथञ्चन । अपि श्वपाके शुनि वा न दानं विप्रणश्यति ।
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते । श्रान्तायादृष्टपूर्व्वाय स महद्धर्म्ममाप्नुयात् ।
पितॄन् देवानृषीन् विप्रानतिथींश्च जनाधिप । यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ।
कृत्वाऽतिपातकं कर्म्म यो दद्यादन्नमर्थिने । ब्राह्मणाय विशेषेण न स पापेन मुह्यते । ३०१५
ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महाफलं । अन्नदानं हि शूद्रे च ब्राह्मणे च विशिष्यते ।
न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव च । भिक्षितो ब्राह्मणेनेह दद्यादन्नं प्रयाचितः ।
अन्नदस्यान्नवृक्षाश्च सर्व्वकामफलप्रदाः । भवन्ति चेह चामुत्र नृपतेर्नात्र संशयः ।
आशंसते हि पितरः सुवृष्टिमिव कर्षकाः । अस्माकमपि पुत्रो वा पौत्रो वान्नं प्रदास्यति ।
ब्राह्मणो हि महद्भूतं स्वयं देहीति याचति । अकामो वा सकामो वा दत्त्वा पुण्यमवाप्नुयात् । ३०२०
ब्राह्मणः सर्व्वभूतानामतिथिः प्रसृताग्रभुक् । विप्रा यमधिगच्छन्ति भिक्षमाणा गृहं सदा ।
सत्कृताश्च निवर्त्तन्ते तदतीव प्रवर्द्धते । महाभोगे कुले प्रेत्य जन्म चाप्नोति भारत ।
दत्त्वा त्वन्नं नरो लोके यथास्थानमनुत्तमं । नित्यं मिष्टान्नदायी तु स्वर्गे वसति सत्कृतः ।
अन्ने प्राणा नराणां हि सर्व्वमन्ने प्रतिष्ठितं । अन्नदः पशुमान् पुत्री धनवान् भोगवानपि ।
प्राणवांश्चापि भवति रूपवांश्च तथा नृप । अन्नदः प्राणदो लोके सर्व्वदः प्रोच्यते तु सः । ३०२५
अन्नं हि दत्त्वाऽतिथये ब्राह्मणाय यथाविधि । प्रदाता सुखमाप्नोति दैवतैश्चापि पूज्यते
ब्राह्मणो हि महद्भूतं क्षेत्रभूतं युधिष्ठिर । उप्यते यत्र तद्बीजं तद्धि पुण्यफलं महत् ।
प्रत्यक्षं प्रीतिजननं भोक्तृदातुर्भवत्युत । सर्व्वाण्यन्यानि दानानि परोक्षफलवन्त्युत ।
अन्नाद्धि प्रसवं यान्ति रतिरन्नाद्धि भारत । धर्म्मार्थावन्नतो विद्धि रोगनाशं तथाऽन्नतः ।
अन्नं ह्यमृतमित्याह पुरा कल्पे प्रजापतिः । अन्नं भुवं दिवं खञ्च सर्व्वमन्ने प्रतिष्ठितं । ३०३०
अन्नप्रणाशे भिद्यन्ते शरीरे पञ्च धातवः । बलं बलवतोऽपीह प्रणश्यत्यन्नहानितः ।
आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा । निवर्त्तन्ते नरश्रेष्ठ ब्रह्म चात्र प्रलीयते ।
अन्नतः सर्व्वमेतद्धि यत्किञ्चित् स्थाणुजङ्गमं । त्रिषु लोकेषु धर्म्मार्थमन्नं देयमतो बुधैः ।
अन्नदस्य मनुष्यस्य बलमोजो यशांसि च । कीर्त्तिश्च वर्द्धते शश्वत्त्रिषु लोकेषु पार्थिव ।

मेघेषूर्द्ध्वं सन्निधत्ते प्राणानां पवनः पतिः। तच्च मेघगतं वारि शक्रो वर्षति भारत। ३१३५

आदत्ते च रसान् भौमानादित्यः स्वगभस्तिभिः। वायुरादित्यतस्तांश्च रसान् देवः प्रवर्षति।

तद्यदा मेघतो वारि पतितं भवति क्षितौ। तदा वसुमती देवी स्निग्धा भवति भारत।

ततः शस्यानि रोहन्ति येन वर्त्तयते जगत्। मांसमेदोऽस्थिशुक्राणां प्रादुर्भावस्ततः पुनः।

संभवन्ति ततः शुक्रात् प्राणिनः पृथिवीपते। अग्नीषोमौ हि तच्छुक्रं सृजतः पुष्यतश्च ह।

एवमन्नाद्धि सूर्य्यश्च पवनः शुक्रमेव च। एक एव स्मृतो राशिस्ततो भूतानि जज्ञिरे। ३१४०

प्राणान् ददाति भूतानां तेजश्च भरतर्षभ। गृहमभ्यागतायाथ यो दद्यादन्नमर्थिने।

॥ भीष्म उवाच ॥ नारदेनैवमुक्तोऽहमदामन्नं सदा नृप। अनसूयुस्त्वमप्यन्नं तस्माद्देहि गतज्वरः।

दत्त्वाऽन्नं विधिवद्राजन् विप्रेभ्यस्त्वमपि प्रभो। यथावदनुरूपेभ्यस्ततः स्वर्गमवाप्स्यसि।

अन्नदानाद्धि ये लोकास्तांस्त्वं शृणु जनाधिप। भवनानि प्रकाशन्ते दिवि तेषां महात्मनां।

तारासंस्थानरूपाणि नानास्तम्भान्वितानि च। चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च। ३१४५

तरुणादित्यवर्णानि स्थावराणि चराणि च। अनेकशतभौमानि सान्तर्जलचराणि च।

वैदूर्य्यार्कप्रकाशानि रौप्यरुक्ममयानि च। सर्व्वकामफलाश्चापि वृक्षा भवनसंस्थिताः।

वाप्यो वीथ्यः सभाः कूपा दीर्घिकाश्चैव सर्व्वशः। घोषवन्ति च यानानि युक्तान्यथ सहस्रशः।

भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च। क्षीरं स्रवन्ति सरितस्तथा चैवान्नपर्व्वताः।

प्रासादाः पाण्डुराभ्राभाः शय्याश्च कनकोज्ज्वलाः। तान्यन्नदाः प्रपद्यन्ते तस्मादन्नप्रदो भव। ३१५०

एते लोकाः पुण्यकृतामन्नदानां महात्मनां। तस्मादन्नं प्रयत्नेन दातव्यं मानवैर्भुवि।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने त्रिषष्टोऽध्यायः ॥ ६३ ॥

॥ युधिष्ठिर उवाच ॥ श्रुतं मे भवतो वाक्यमन्नदानस्य यो विधिः। नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे।

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। देवक्याश्चैव संवादं महर्षेर्नारदस्य च।

द्वारकामनुसंप्राप्तं नारदं देवदर्शनं। पप्रच्छेदं वचः प्रश्नं देवकी धर्म्मदर्शनं।

तस्याः संपृच्छमानाया देवर्षिर्नारदस्ततः। आचष्ट विधिवत्सर्व्वं तच्छृणुष्व विशाम्पते। ३१५५

॥ नारद उवाच ॥ कृत्तिकासु महाभागे पायसेन ससर्पिषा। सन्तर्प्य ब्राह्मणान् साधून् लोकानाप्नोत्यनुत्तमान्।

रोहिण्यां प्रसृतैर्म्मार्गैर्म्मांसैरन्नेन सर्पिषा। पयोऽनुपानं दातव्यमनृणार्थं द्विजातये।

दोग्ध्रीं दत्त्वा सवत्साञ्च नक्षत्रे सोमदैवते। गच्छन्ति मानुषाल्लोकात् स्वर्गलोकमनुत्तमं।

आर्द्रायां कृशरं दत्त्वा तैलमिश्रमुपोषितः। नरस्तरति दुर्गाणि क्षुरधारांश्च पर्व्वतान्।

पूपान् पुनर्व्वसौ दत्त्वा तथैवान्नानि शोभने। यशस्वी रूपसम्पन्नो बह्वन्ने जायते कुले। ३१६०

पुष्येण कनकं दत्त्वा कृतं चाकृतमेव च। अनालोकेषु लोकेषु सोमवत् स विराजते।

आश्लेषायान्तु यो रूप्यमृषभं वा प्रयच्छति। स सर्व्वभयनिर्म्मुक्तः सम्भवानधितिष्ठति।

मघासु तिलपूर्णानि वर्द्धमानानि मानवः। प्रदाय पुत्रपशुमानिह प्रेत्य च मोदते।

फल्गुनीपूर्व्वसमये ब्राह्मणानामुपोषितः । भक्ष्यान् फाणितसंयुक्तान् दत्त्वा सौभाग्यमृच्छति ।
घृतक्षीरसमायुक्तं विधिवत् षष्टिकौदनं । उत्तराविषये दत्त्वा स्वर्गलोके महीयते । ३२६५
यद्यत् प्रदीयते दानमुत्तराविषये नरैः । महाफलमनन्तञ्च भवतीति विनिश्चयः ।
हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः । प्राप्नोति परमाल्लोकान् पुण्यकामसमन्वितान् ।
चित्रायां वृषभं दत्त्वा पुण्यगन्धांश्च भारत । चरन्त्यप्सरसां लोके रमन्ते नन्दने तथा ।
स्वात्यामथ धनं दत्त्वा यदिष्टतममात्मनः । प्राप्नोति लोकान् स शुभानिह चैव महद्यशः ।
विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदां । सप्रासङ्गञ्च शकटं सधान्यं वस्त्रसंयुतं । ३२७०
पितॄन् देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते । न च दुर्गाण्यवाप्नोति स्वर्गलोकञ्च गच्छति ।
दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति । नरकादींश्च संक्लेशान्नाप्नोतीति विनिश्चयः ।
अनुराधासु प्रावारं वस्त्रान्नं समुपोषितः । दत्त्वा युगशतञ्चापि नरः स्वर्गे महीयते ।
कालशाकन्तु विप्रेभ्यो दत्त्वा मर्त्त्यः समूलकं । ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टां स गच्छति ।
मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः । पितॄन् प्रीणयते चापि गतिमिष्टाञ्च गच्छति । ३२७५
अथ पूर्व्वास्वाषाढासु दधिपात्राण्युपोष्य वै । कुलवृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे ।
पुरुषो जायते प्रेत्य कुले सुबहुगोधने । उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितं ।
दत्त्वोत्तरास्वाषाढासु सर्व्वान् कामानवाप्नुयात् । दुग्धन्त्वभिजिते योगे दत्त्वा मधुघृतप्लुतं ।
धर्म्मनित्यो मनीषिभ्यः स्वर्गलोके महीयते । श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव वा ।
श्वेतेन याति यानेन सर्व्वलोकानसंवृतान् । गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः । ३२८०
वस्त्ररश्मिधनं सद्यः प्रेत्य राज्यं प्रपद्यते । गन्धाञ्छतभिषायोगे दत्त्वा सागुरुचन्दनान् ।
प्राप्नोत्यप्सरसां सङ्घान् प्रेत्य गन्धांश्च शाश्वतान् । पूर्व्वभाद्रपदा योगे राजमाषान् प्रदाय तु ।
सर्व्वभक्षफलोपेतः स वै प्रेत्य सुखी भवेत् । औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति ।
स पितॄन् प्रीणयति वै प्रेत्य चानन्त्यमश्नुते । कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति ।
सा प्रेत्य कामानादाय दातारमुपतिष्ठति । रथमश्वसमायुक्तं दत्त्वाश्विन्यां नरोत्तमः । ३२८५
हस्त्यश्वरथसम्पन्ने वर्च्चस्वी जायते कुले । भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै ।
गाः सुप्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ।
॥ भीष्म उवाच ॥ इत्येष लक्षणोद्देशः प्रोक्तो नक्षत्रयोगतः । देवक्या नारदेनेह सा स्नुषाभ्योऽब्रवीदिदं ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने चतुःषष्टोऽध्यायः ॥ ६४ ॥
॥ भीष्म उवाच ॥ सर्व्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनं । इत्येवं भगवानत्रिः पितामहसुतोऽब्रवीत् ।
पवित्रमथ चायुष्यं पितॄणामक्षयञ्च तत् । सुवर्णं मनुजेन्द्रेण हरिश्चन्द्रेण कीर्त्तितं । ३२९०
पानीयं परमं दानं दानानां मनुरब्रवीत् । तस्मात् कूपांश्च वापीश्च तडागानि च खानयेत् ।
अर्द्धं पापस्य हरति पुरुषस्येह कर्म्मणः । कूपः प्रवृत्तपानीयः सुप्रवृत्तश्च नित्यशः ।

सर्व्वं तारयते वंशं यस्य खाते जलाशये। गावः पिबन्ति विप्राश्च साधवश्च नराः सदा।
निदाघकाले पानीयं यस्य तिष्ठत्यवारितं। स दुर्गं विषमं कृच्छ्रं न कदाचिदवाप्नुते।
बृहस्पतेर्भगवतः पूष्णश्चैव भगस्य च। अश्विनोश्चैव वह्नेश्च प्रीतिर्भवति सर्पिषा। ३३८५
परमं भेषजं ह्येतद्यज्ञानामेतदुत्तमं। रसानामुत्तमञ्चैतत् फलानाञ्चैतदुत्तमं।
फलकामो यशस्कामः पुष्टिकामश्च नित्यदा। घृतं दद्यात् द्विजातिभ्यः पुरुषः शुचिरात्मवान्।
घृतं मासि आश्वयुजि विप्रेभ्यो यः प्रयच्छति। तस्मै प्रयच्छतो रूपं प्रीतौ देवाविहाश्विनौ।
पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति। गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन।
पिपासया न म्रियते सोपच्छन्दश्च जायते। न प्राप्नुयाच्च व्यसनं करकान् यः प्रयच्छति। ३३९०
प्रयतो ब्राह्मणाग्रेभ्यः श्रद्धया परया युतः। उपस्पर्शनषड्भागं लभते पुरुषः सदा।
यः साधनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति। प्रतापनार्थं राजेन्द्र वृत्तवद्भ्यः सदा नरः।
सिद्ध्यन्त्यर्थाः सदा तस्य कार्य्याणि विविधानि च। उपर्य्युपरि शत्रूणां वपुषा दीप्यते च सः।
भगवांश्चापि सम्प्रीतो वह्निर्भवति नित्यशः। न तं त्यजन्ति पशवः संग्रामे च जयत्यपि।
पुत्त्रान् श्रियञ्च लभते यश्छत्रं सम्प्रयच्छति। न चक्षुर्व्याधिं लभते यज्ञभागमथाश्नुते। ३३९५
निदाघकाले वर्षे वा यश्छत्रं सम्प्रयच्छति। नास्य कश्चिन्मनोदाहः कदाचिदपि जायते।
कृच्छ्रात् स विषमाच्चैव क्षिप्रं मोक्षमवाप्नुते। प्रदानं सर्व्वदानानां शकटस्य विशाम्पते।
एवमाह महाभागः शाण्डिल्यो भगवानृषिः।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने पञ्चषष्टोऽध्यायः ॥ ६५ ॥

॥ युधिष्ठिर उवाच ॥ दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ। यत् फलं तस्य भवति तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच ॥ उपानहौ प्रयच्छेद्यो ब्राह्मणेभ्यः समाहितः। मर्द्दते कण्टकान् सर्व्वान् विषमान्निस्तरत्यपि। ३४००
स शत्रूणामुपरि च सन्तिष्ठति युधिष्ठिर। यानञ्चाश्वतरीयुक्तं तस्य शुभ्रं विशाम्पते।
उपतिष्ठति कौन्तेय रौप्यकाञ्चनभूषितं। शकटं दम्यसंयुक्तं दत्तं भवति चैव हि।
॥ युधिष्ठिर उवाच ॥ यत् फलं तिलदाने च भूमिदाने च कीर्त्तितं। गोदाने चान्नदाने च भूयस्तद्ब्रूहि कौरव।
॥ भीष्म उवाच ॥ शृणुष्व मम कौन्तेय तिलदानस्य यत् फलं। निशम्य च यथान्यायं प्रयच्छ कुरुनन्दन।
पितॄणां परमं भोज्यं तिलाः सृष्टाः स्वयम्भुवा। तिलदानेन वै तस्मात् पितृपक्षः प्रमोदते। ३४०५
माघमासे तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति। सर्व्वसत्त्वसमाकीर्णं नरकं स न पश्यति।
सर्व्वसत्रैश्च यजते यस्तिलैर्यजते पितॄन्। न चाकामेन दातव्यं तिलश्राद्धं कदाचन।
महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः। ततो दिव्यं गता भावं प्रदानेषु तिलाः प्रभो।
पौष्टिका रूपदाश्चैव तथा पापविनाशनाः। तस्मात् सर्व्वप्रदानेभ्यस्तिलदानं विशिष्यते।
आपस्तम्बश्च मेधावी शङ्खश्च लिखितस्तथा। महर्षिर्गौतमश्चापि तिलदानैर्दिवं गताः। ३४१०
तिलहोमरता विप्राः सर्व्वे संयतमैथुनाः। समा गव्येन हविषा प्रवृत्तिषु च संस्थिताः।

सर्व्वेषामतिदानानां तिलदानं विशिष्यते। अक्षयं सर्व्वदानानां तिलदानमिहोच्यते।
उच्छिन्ने तु पुरा हव्ये कुशिकर्षिः परन्तपः। तिलैरग्निमयं हुत्वा प्राप्तवान् गतिमुत्तमां।
इति प्रोक्तं कुरुश्रेष्ठ तिलदानमनुत्तमं। विधानं येन विधिना तिलानामिह शस्यते।
अत ऊर्द्धं निबोधेदं देवानां यष्टुमिच्छतां। समागमं महाराज ब्रह्मणा वै स्वयम्भुवा।
देवाः समेत्य ब्रह्माणं भूमिभागे यियक्षवः। शुभे देशमयाचन्त यजेम इति पार्थिव।
॥ देवा ऊचुः ॥ भगवंस्त्वं प्रभुर्भूमेः सर्व्वस्य त्रिदिवस्य च। यजेमहि महाभाग यज्ञं भवदनुज्ञया।
नाननुज्ञातभूमिर्हि यज्ञस्य फलमश्नुते। त्वं हि सर्व्वस्य जगतः स्थावरस्य चरस्य च।
प्रभुर्भवसि तस्मात्त्वं समनुज्ञातुमर्हसि।
॥ ब्रह्मोवाच ॥ ददानि मेदिनीभागं भवद्भ्योऽहं सुरर्षभाः। यस्मिन्देशे करिष्यध्वं यज्ञान् काश्यपनन्दनाः।
॥ देवा ऊचुः ॥ भगवन् कृतकार्य्याः स्म यक्ष्यामहे स्वाप्तदक्षिणैः। इमन्तु देशं मुनयः पर्य्युपासन्ति सर्व्वदा।
ततोऽगस्त्यश्च कण्वश्च भृगुरत्रिर्वृषाकपिः। असितो देवलश्चैव देवयज्ञमुपागमन्।
ततो देवा महात्मान ईजिरे यज्ञमच्युत। तथा समापयामासुर्यथाकालं सुरर्षभाः।
त इष्टयज्ञास्त्रिदशा हिमवत्यचलोत्तमे। षष्ठमंशं क्रतोस्तस्य भूमिदानं प्रचक्रिरे।
प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतं। न सीदति स कृच्छ्रेषु न च दुर्गाण्यवाप्नुते।
शीतवातातपसहां गृहभूमिं सुसंस्कृतां। प्रदाय सुरलोकस्थः पुण्यान्तेऽपि न चाल्यते।
मुदितो वसति प्राज्ञः शक्रेण सह पार्थिव। प्रतिश्रयप्रदाता च सोऽपि स्वर्गे महीयते।
अध्यापककुले जातः श्रोत्रियो नियतेन्द्रियः। गृहे यस्य वसेत्तुष्टः प्रधानं लोकमश्नुते।
तथा गवार्थे शरणं शीतवर्षसहं दृढं। आसप्तमं तारयति कुलं भरतसत्तम।
क्षेत्रभूमिं ददल्लोके शुभां श्रियमवाप्नुयात्। रत्नभूमिं प्रदद्यात्तु कुलवंशं प्रवर्द्धयेत्।
नचोषरां न निर्द्दग्धां महीं दद्यात् कदाचन। न श्मशानपरीताञ्च न च पापनिषेविताम्।
पारक्ये भूमिदेशे तु पितॄणां निर्व्वपेत्तु यः। तद्भूमिं वापि पितृभिः श्राद्धकर्म्म विहन्यते।
तस्मात् क्रीत्वा महीं दद्यात् स्वल्पामपि विचक्षणः। पिण्डः पितृभ्यो दत्तो वै तस्यां भवति शाश्वतः।
अटवी पर्व्वताश्चैव नद्यस्तीर्थानि यानि च। सर्व्वाण्यस्वामिकान्याहुर्न हि तत्र परिग्रहः।
इत्येतद्भूमिदानस्य फलमुक्तं विशाम्पते। अतः परन्तु गोदानं कीर्त्तयिष्यामि तेऽनघ।
गावोऽधिकास्तपस्विभ्यो यस्मात् सर्व्वेभ्य एव च। तस्मान्महेश्वरो देवस्तपस्ताभिः समास्थितः।
ब्रह्मलोके वसन्त्येताः सोमेन सह भारत। यान्तां ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिं।
पयसा हविषा दध्ना शकृता चाथ चर्म्मणा। अस्थिभिश्चोपकुर्व्वन्ति शृङ्गैर्व्वालैश्च भारत।
नासां शीतातपौ स्यातां सदैताः कर्म्म कुर्व्वते। न वर्षविषयं वापि दुःखमासां भवत्युत।
ब्राह्मणैः सहिता यान्ति तस्मात् पारमकं पदं। एकं गोब्राह्मणं तस्मात् प्रवदन्ति मनीषिणः।
रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः। अतश्चर्म्मण्वती राजन् गोचर्म्मभ्यः प्रवर्त्तिता।

पङ्गुलाश्च विनिर्मुक्ताः प्रदानायोपकल्पिताः । ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ।
निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिवः । गवां सहस्रदः प्रेत्य नरकं न प्रपद्यते ।
सर्व्वत्र विजयञ्चापि लभते मनुजाधिप । अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः ।
तस्माद्ददाति यो धेनुममृतं स प्रयच्छति । अग्नीनामव्ययं ह्येतद्धौम्यं वेदविदो विदुः । ३३५५
तस्माद्ददाति यो धेनुं स हौम्यं सम्प्रयच्छति । स्वर्गो वै मूर्त्तिमानेष वृषभं यो गवां पतिं ।
विप्रे गुणयुते दद्यात् स वै स्वर्गे महीयते । प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ ।
तस्माद्ददाति यो धेनुं प्राणानेष प्रयच्छति । गावः शरण्या भूतानामिति वेदविदो विदुः ।
तस्माद्ददाति यो धेनुं शरणं स प्रयच्छति । न वधार्थं प्रदातव्या न कीनाशे न नास्तिके ।
गोजीविने न दातव्या तथा गौर्भरतर्षभ । ददत् स तादृशानां वै नरो गां पापकर्म्मणां । ३३६०
अक्षयं नरकं यातीत्येवमाहुर्म्मनीषिणः । न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा ।
न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय च । दशगोसहस्रदो हि शक्रेण सह मोदते ।
अक्षयान् लभते लोकान्नरः शतसहस्रदः । इत्येतद्गोप्रदानञ्च तिलदानञ्च कीर्त्तितं ।
तथा भूमिप्रदानञ्च शृणुष्वान्ने च भारत । अन्नदानं प्रदानं हि कौन्तेय परिचक्षते ।
अन्नस्य हि प्रदानेन रन्तिदेवो दिवङ्गतः । श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिपः । ३३६५
स्वायम्भुवं महास्थानं स गच्छति नराधिप । न हिरण्यैर्न वासोभिर्नान्यदानेन भारत ।
प्राप्नुवन्ति नराः श्रेयो यथा ह्यन्नप्रदाः प्रभो । अन्नं वै प्रथमं द्रव्यमन्नं श्रीश्च परा मता ।
अन्नात् प्राणः प्रभवति तेजो वीर्य्यं बलं तथा । सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः ।
न स दुर्गाण्यवाप्नोतीत्येवमाह पराशरः । अर्च्चयित्वा यथान्यायं देवेभ्योऽन्नं निवेदयेत् ।
यदन्ना हि नरा राजंस्तदन्नास्तस्य देवताः । कौमुदे शुक्लपक्षे तु योऽन्नदानं करोत्युत । ३३७०
स सन्तरति दुर्गाणि प्रेत्य चानन्त्यमश्नुते । अभुक्त्वाऽतिथये चान्नं प्रयच्छेद्यः समाहितः ।
स वै ब्रह्मविदो लोकान् प्राप्नुयाद्भरतर्षभ । स कृच्छ्रामापदं प्राप्तश्चान्नदः पुरुषस्तरेत् ।
पापं तरति वै चैव सुकृतञ्चापकर्षति । इत्येतदन्नदानस्य तिलदानस्य चैव च ।
भूमिदानस्य च फलं गोदानस्य च कीर्त्तितं ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने षट्षष्टोऽध्यायः ॥ ६६ ॥

॥ युधिष्ठिर उवाच ॥ श्रुतं दानफलं तात यत्त्वया परिकीर्त्तितं । अन्नदानं विशेषेण प्रशस्तमिह भारत । ३३७५
पानीयदानमेवैतत् कथन्त्विह महाफलं । इत्येतच्छ्रोतुमिच्छामि विस्तरेण पितामह ।
॥ भीष्म उवाच ॥ हन्त ते कथयिष्यामि यथावद्भरतर्षभ । गदतस्तन्ममाद्येह शृणु सत्यपराक्रम ।
पानीयदानात् प्रभृति सर्व्वं वक्ष्यामि तेऽनघ । यदन्नं यच्च पानीयं सम्प्रदायाश्नुते नरः ।
न तस्मात् परमं दानं किञ्चिदस्तीति मे मतिः । अन्नात् प्राणभृतस्तात प्रवर्त्तन्ते हि सर्व्वशः ।
तस्मादन्नं परं लोके सर्व्वलोकेषु कथ्यते । अन्नात् बलञ्च तेजश्च प्राणिनां वर्द्धते सदा । ३३८०

अन्नदानमतस्तस्माच्छ्रेष्ठमाह प्रजापतिः। सावित्र्या ह्यपि कौन्तेय श्रुतं ते वचनं शुभं।
ततश्च यद्यथा चैव देवसत्रे महामते। अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत।
प्राणदानाद्धि परमं न दानमिह विद्यते। श्रुतं हि ते महाबाहो लोमशस्यापि तद्वचः।
प्राणान्दत्त्वा कपोताय यत् प्राप्तं शिबिना पुरा। तां गतिं लभते दत्त्वा द्विजस्यान्नं विशाम्पते।
तस्माद्विशिष्टां गच्छन्ति प्राणदा इति नः श्रुतं। अन्नञ्चापि प्रभवति पानीयात् कुरुसत्तम। [illegible]
नीरजातेन हि विना न किञ्चित् सम्प्रवर्त्तते। नीरजातश्च भगवान् सोमो ग्रहगणेश्वरः।
अमृतञ्च सुधा चैव स्वधा चैवामृतं तथा। अन्नौषध्यो महाराज वीरुधश्च जलोद्भवाः।
यतः प्राणभृतां प्राणाः सम्भवन्ति विशाम्पते। देवानाममृतं ह्यन्नं नागानाञ्च सुधा तथा।
पितॄणाञ्च स्वधा प्रोक्ता पशूनाञ्चापि वीरुधः। अन्नमेव मनुष्याणां प्राणानाहुर्मनीषिणः।
तच्च सर्व्वं नरव्याघ्र पानीयात् सम्प्रवर्त्तते। तस्मात् पानीयदानाद्वै न परं विद्यते क्वचित्। [illegible]
तच्च दद्यान्नरो नित्यं य इच्छेद्भूतिमात्मनः। धन्यं यशस्यमायुष्यं जलदानमिहोच्यते।
शत्रूंश्चाप्यधि कौन्तेय सदा तिष्ठति तोयदः। सर्व्वकामानवाप्नोति कीर्त्तिं चैव हि शाश्वतीं।
प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते। तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते।
अक्षयान् समवाप्नोति लोकानित्यब्रवीन्मनुः।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने सप्तषष्टोऽध्यायः ॥ ६७ ॥

॥ युधिष्ठिर उवाच ॥ तिलानां कीदृशं दानमथ दीपस्य चैव हि। अन्नानां वाससाञ्चैव भूय एव ब्रवीहि मे। [illegible]
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। ब्राह्मणस्य च संवादं यमस्य च युधिष्ठिर।
मध्यदेशे महान् ग्रामो ब्राह्मणानां बभूव ह। गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः।
पर्णशालेति विख्यातो रमणीयो नराधिप। विद्वांसस्तत्र भूयिष्ठा ब्राह्मणाश्चावसंस्तदा।
अथ प्राह यमः कञ्चित् पुरुषं कृष्णवाससं। रक्ताक्षमूर्द्ध्वरोमाणं काकजङ्घाक्षिनासिकं।
गच्छ त्वं ब्राह्मणग्रामं ततो गत्वा तमानय। अगस्त्यं गोत्रतश्चापि नामतश्चापि शर्म्मिणं। [illegible]
शमे निविष्टं विद्वांसमध्यापकमनादृतं। मा चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः।
स हि तादृग्गुणस्तेन तुल्योऽध्ययनजन्मना। अपत्येषु तथा वृत्ते समस्तेनैव धीमता।
तमानय यथोद्दिष्टं पूजा कार्य्या हि तस्य वै। स गत्वा प्रतिकूलं तच्चकार यमशासनं।
तमाक्रम्यानयामास प्रतिषिद्धो यमेन यः। तस्मै यमः समुत्थाय पूजां कृत्वा च वीर्य्यवान्।
प्रोवाच नीयतामेष सोऽन्य आनीयतामिति। एवमुक्ते तु वचने धर्म्मराजेन स द्विजः। [illegible]
उवाच धर्म्मराजानं निर्व्विण्णोऽध्ययनेन वै। यो मे कालो भवेच्छेषस्तं वसेयमिहाच्युत।
॥ यम उवाच ॥ नाहं कालस्य विहितं प्राप्नोमीह कथञ्चन। यो हि धर्म्मं चरति वै तन्तु जानामि केवलं।
गच्छ विप्र त्वमद्यैव आलयं स्वं महाद्युते। ब्रूहि सर्व्वं यथा स्वैरं करवाणि किमच्युत।
॥ ब्राह्मण उवाच ॥ यत्तत्र कृत्वा सुमहत् पुण्यं स्यात्तद्ब्रवीहि मे। सर्व्वस्य हि प्रमाणं त्वं त्रैलोक्यस्यापि सत्तम।

॥ यम उवाच ॥ शृणु तत्त्वेन विप्रर्षे प्रदानविधिमुत्तमं । तिलाः परमकं दानं पुण्यञ्चैवेह शाश्वतं । ३३००
तिलाश्च सम्प्रदातव्या यथाशक्ति द्विजर्षभ । नित्यदानात् सर्व्वकामांस्तिला निर्व्वर्त्तयन्त्युत ।
तिलान् श्राद्धे प्रशंसन्ति दानमेतद्ध्यनुत्तमं । तान् प्रयच्छस्व विप्रेभ्यो विधिदृष्टेन कर्म्मणा ।
वैशाख्यां पौर्णमास्यान्तु तिलान्दद्याद्द्विजातिषु । तिला भक्षयितव्याश्च सदा त्वालभनञ्च तैः ।
कार्य्यं सततमिच्छद्भिः श्रेयः सर्व्वात्मना गृहे । तथापः सर्व्वदा देयाः पेयाश्चैव न संशयः ।
पुष्करिण्यस्तडागानि कूपांश्चैवात्र खानयेत् । एतत् सुदुर्लभतरमिह लोके द्विजोत्तम । ३३०५
आपो नित्यं प्रदेयास्ते पुण्यं ह्येतदनुत्तमं । प्रपाश्च कार्य्या दानार्थं नित्यं ते द्विजसत्तम ।
भुक्तेऽप्यथ प्रदेयन्तु पानीयं वै विशेषतः ।
॥ भीष्म उवाच ॥ इत्युक्ते स तदा तेन यमदूतेन वै गृहान् । नीतश्च कारयामास सर्व्वं तद्यमशासनं ।
नीत्वा तं यमदूतोऽपि गृहीत्वा शर्म्मिणं तदा । ययौ स धर्म्मराजाय न्यवेदयत चापि तं ।
तं धर्म्मराजो धर्म्मज्ञं पूजयित्वा प्रतापवान् । कृत्वा च संविदं तेन विससर्ज्ज यथागतं । ३३१०
तस्यापि च यमः सर्व्वमुपदेशञ्चकार ह । प्रेत्येत्य च ततः सर्व्वं चकारोक्तं यमेन तत् ।
तथा प्रशंसते दीपान् यमः पितृहितेप्सया । तस्माद्दीपप्रदो नित्यं सन्तारयति वै पितॄन् ।
दातव्याः सततं दीपास्तस्माद्भरतसत्तम । देवतानां पितॄणाञ्च चक्षुष्याश्चात्मनो विभो ।
रत्नदानञ्च सुमहत् पुण्यमुक्तं जनाधिप । तानि विक्रीय यजते ब्राह्मणो ह्यभयङ्करं ।
यद्वै ददाति विप्रेभ्यो ब्राह्मणः प्रतिगृह्य वै । उभयोः स्यात्तदक्षय्यं दातुरादातुरेव च । ३३१५
यो ददाति स्थितः स्थित्यां तादृशाय प्रतिग्रहं । उभयोरक्षयं धर्म्मं तं मनुः प्राह धर्म्मवित् ।
वाससां सम्प्रदानेन स्वदारनिरतो नरः । सुवस्त्रश्च सुवेशश्च भवतीत्यनुशुश्रुम ।
गावः सुवर्णञ्च तथा तिलाश्चैवानुवर्णिताः । बहुशः पुरुषव्याघ्र वेदप्रामाण्यदर्शनात् ।
विवाहांश्चैव कुर्व्वीत पुत्रानुत्पादयेत च । पुत्रलाभो हि कौरव्य सर्व्वलाभाद्विशिष्यते ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने अष्टषष्टोऽध्यायः ॥ ६८ ॥

॥ युधिष्ठिर उवाच ॥ भूय एव कुरुश्रेष्ठ दानानां विधिमुत्तमं । कथयस्व महाप्राज्ञ भूमिदानं विशेषतः । ३३२०
पृथिवीं क्षत्रियो दद्यात् ब्राह्मणायेष्टिकर्म्मणे । विधिवत् प्रतिगृह्णीयान्नत्वन्यो दातुमर्हति ।
सर्व्ववर्णैस्तु यच्छक्यं प्रदातुं फलकाङ्क्षिभिः । वेदे वा यत् समाख्यातं तन्मे व्याख्यातुमर्हसि ।
॥ भीष्म उवाच ॥ तुल्यनामानि देयानि त्रीणि तुल्यफलानि च । सर्व्वकामफलानीह गावः पृथ्वी सरस्वती ।
यो ब्रूयाच्चापि शिष्याय धर्म्म्यां ब्राह्मीं सरस्वतीं । पृथिवीगोप्रदानाभ्यां तुल्यं स फलमश्नुते ।
तथैव गाः प्रशंसन्ति न तु देयं ततः परं । सन्निकृष्टफलास्ता हि लघ्वर्थाश्च युधिष्ठिर । ३३२५
मातरः सर्व्वभूतानां गावः सर्व्वसुखप्रदाः । वृद्धिमाकाङ्क्षता नित्यं गावः कार्य्याः प्रदक्षिणाः ।
सन्ताड्या न तु पादेन गवां मध्ये न च व्रजेत् । मङ्गलायतनं देव्यस्तस्मात् पूज्याः सदैव हि ।
प्रचोदनं देवकृतं गवां कर्म्मसु वर्त्ततां । पूर्व्वमेवाक्षरं नान्यदभिधेयं ततः परं ।

प्रचारे वा निपाते वा बुधो नोद्वेजयेत गाः। तृषिता ह्यभिवीक्षन्त्यो नरं हन्युः सबान्धवं ।

पितृसद्मानि सततं देवतायतनानि च। पूयन्ते शकृता यासां पूतं किमधिकं ततः। ३४००

ग्रासमुष्टिं परगवे दद्यात् संवत्सरन्तु यः। अकृत्वा स्वयमाहारं व्रतं तत् सार्व्वकामिकं ।

स हि पुत्रान् यशोऽर्थञ्च श्रियञ्चाप्यधिगच्छति। नाशयत्यशुभञ्चैव दुःस्वप्नञ्चाप्यपोहति।

॥ युधिष्ठिर उवाच ॥ देयाः किंलक्षणा गावः काश्चापि परिवर्ज्जयेत्। कीदृशाय प्रदातव्या न देयाः कीदृशाय च।

॥ भीष्म उवाच ॥ असद्वृत्ताय पापाय लुब्धायानृतवादिने। हव्यकव्यव्यपेताय न देया गौः कथञ्चन।

भिक्षवे बहुपुत्राय श्रोत्रियायाहिताग्नये। दत्त्वा दशगवं दाता लोकानाप्नोत्यनुत्तमान्। ३४०५

यच्चैव धर्म्मं कुरुते तस्य धर्म्मफलञ्च यत्। सर्व्वस्यैवांशभाग्दाता तन्निमित्तं प्रवृत्तयः।

यश्चैनमुत्पादयते यश्चैनं त्रायते भयात्। यश्चास्य कुरुते वृत्तिं सर्व्वे ते पितरस्त्रयः।

कल्मषं गुरुशुश्रूषा हन्ति मानो महद्यशः। अपुत्रतां त्रयः पुत्रा अवृत्तिं दश धेनवः।

वेदान्तनिष्ठस्य बहुश्रुतस्य प्रज्ञानतृप्तस्य जितेन्द्रियस्य। शिष्टस्य दान्तस्य यतस्य चैव भूतेषु नित्यं प्रियवादिनश्च।

यः क्षुद्भयाद्वै न विकर्म्म कुर्य्यान्मृदुश्च शान्तो ह्यतिथिप्रियश्च। वृत्तिं द्विजायातिसृजेत तस्मै यस्तुल्यशीलश्च सपुत्र-
दारः। ३४१०

शुभे पात्रे ये गुणा गोप्रदाने तावान् दोषो ब्राह्मणस्वापहारे। सर्व्वावस्थं ब्राह्मणस्वापहारो दाराश्चैषां दूरतो व-
र्ज्जनीयाः।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने ऊनसप्ततितमोऽध्यायः॥ ६९॥

॥ भीष्म उवाच ॥ अत्रैव कीर्त्त्यते सद्भिर्ब्राह्मणस्वाभिमर्शने। नृगेण सुमहत् कृच्छ्रं यदवाप्तं कुरूद्वह।

निविशन्त्यां पुरा पार्थ द्वारवत्यामिति श्रुतिः। अदृश्यत महाकूपस्तृणवीरुत्समावृतः।

प्रयत्नं तत्र कुर्व्वाणास्तस्मात् कूपाज्जलार्थिनः। श्रमेण महता युक्तास्तस्मिंस्तोये सुसंवृते।

ददृशुस्ते महाकायं कृकलासमवस्थितं। तस्य चोद्धरणे यत्नमकुर्व्वंस्ते सहस्रशः। ३४१५

प्रग्रहैश्चर्म्मपट्टैश्च तं बद्ध्वा पर्व्वतोपमं। नाशक्नुवन् समुद्धर्त्तुं ततो जग्मुर्जनार्द्दनं।

खमावृत्योदपानस्य कृकलासः स्थितो महान्। तस्य नास्ति समुद्धर्त्तेत्यथ कृष्णे न्यवेदयन्।

स वासुदेवेन समुद्धृतश्च पृष्टश्च कार्य्यं निजगाद राजा। नृगस्तदात्मानमथो न्यवेदयत् पुरातनं यज्ञसहस्रयाजिनं।

तथा ब्रुवाणन्तु तमाह माधवः शुभं त्वया कर्म्म कृतं न पापकं। कथं भवान् दुर्गतिमीदृशीं गतो नरेन्द्र तद्ब्रूहि किमेतदी-
दृशं।

शतं सहस्राणि गवां शतं पुनः पुनः शतान्यष्टशतायुतानि। त्वया पुरा दत्तमितीह शुश्रुम नृप द्विजेभ्यः क्व नु तद्गतं
तव। ३४२०

नृगस्ततोऽब्रवीत् कृष्णं ब्राह्मणस्याग्निहोत्रिणः। प्रोषितस्य परिभ्रष्टा गौरेका मम गोधने।

गवां सहस्रे सङ्ख्याता तदा सा पशुपैर्म्मम। सा ब्राह्मणाय मे दत्ता प्रेत्यार्थमभिकाङ्क्षता।

अपश्यत् परिमार्गंश्च तां गां परगृहे द्विजः। ममेयमिति चोवाच ब्राह्मणो यस्य साऽभवत्।

प्राप्ता पुष्टा लोकसंरक्षणेन गावस्तुष्टाः सूर्य्यपादैः पृथिव्यां । अन्यश्चैकः कर्म्मनिर्व्वापभोगात्सत्स्वाह्लादः स च वै दृश्यभाति ।
गुरुं शिष्यो वरयेद्गोप्रदाने स वै गन्ता नियतं स्वर्गमेव । विधिज्ञानां सुमहान् धर्म्म एष विधिं ह्याद्यं विधयः संविशन्ति ।
इदं दानं न्यायलब्धं द्विजेभ्यः पात्रे दत्त्वा प्रापयेथाः परीक्ष्य । त्वय्याशंसन्त्यमरा मानवाश्च वयञ्चापि प्रसृते पुण्यशीले । ३४८०

इत्युक्ताऽहं धर्म्मराजं द्विजर्षिं धर्म्मात्मानं शिरसाऽभिप्रणम्य । अनुज्ञातस्तेन वैवस्वतेन प्रत्यागमं भगवत्पादमूलं ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने एकसप्ततितमोऽध्यायः ॥ ७१ ॥

॥ युधिष्ठिर उवाच ॥ उक्तं ते गोप्रदानं वै नाचिकेतमृषिं प्रति । माहात्म्यमपि चैवोक्तमुद्देशेन गवां प्रभो ।
नृगेण च महद्दुःखमनुभूतं महात्मना । एकापराधादज्ञानात् पितामह महामते ।
द्वारवत्यां यथा चासौ निविशन्त्यां समुद्धृतः । मोक्षहेतुरभूत् कृष्णस्तदप्यवधृतं मया ।
किन्त्वस्ति मम सन्देहो गवां लोकं प्रति प्रभो । तत्त्वतः श्रोतुमिच्छामि गोदा यत्र वसन्त्युत । ३४८५
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । यथाऽपृच्छत् पद्मयोनिमेतदेव शतक्रतुः ।
॥ शक्र उवाच ॥ स्वर्लोकवासिनां लक्ष्मीमभिभूय स्वयाऽर्च्चिषा । गोलोकवासिनः पश्ये व्रजतः संशयोऽत्र मे ।
कीदृशा भगवँल्लोका गवां तद्ब्रूहि मेऽनघ । यानावसन्ति दातार एतदिच्छामि वेदितुं ।
कीदृशाः किंफलाः किंस्वित् परमस्तत्र को गुणः । कथञ्च पुरुषास्तत्र गच्छन्ति विगतज्वराः ।
कियत्कालं प्रदानस्य दाता च फलमश्नुते । कथं बहुविधं दानं स्यादल्पमपि वा कथं । ३४९०
बह्वीनां कीदृशं दानमल्पानां वापि कीदृशं । अदत्त्वा गोप्रदाः सन्ति केन वा तच्च शंस मे ।
कथं वा बहुदाता स्यादल्पदात्रा समः प्रभो । अल्पप्रदाता बहुदः कथंस्विदिह चेश्वर ।
कीदृशी दक्षिणा चैव गोप्रदाने विशिष्यते । एतत्तथ्येन भगवन् मम शंसितुमर्हसि ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने शक्रप्रश्ने द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

॥ पितामह उवाच ॥ योऽयं प्रश्नस्त्वया पृष्टो गोप्रदानाधिकारवान् । नास्य प्रष्टाऽस्ति लोकेऽस्मिंस्त्वत्तोऽन्यो हि शतक्रतो ।
सन्ति नानाविधा लोका यांस्त्वं शक्र न पश्यसि । पश्यामि यानहं लोकानेकपत्न्यश्च याः स्त्रियः । ३४९५
कर्म्मभिश्चापि सुशुभैः सुव्रता ऋषयस्तथा । सशरीरा हि तान् यान्ति ब्राह्मणाः शुभबुद्धयः ।
शरीरन्यासमोक्षेण मनसा निर्म्मलेन च । स्वप्नभूतांश्च तान् लोकान् पश्यन्तीहापि सुव्रताः ।
ते तु लोकाः सहस्राक्ष शृणु यादृग्गुणान्विताः । न तत्र क्रमते कालो न जरा न च पावकः ।
तथा नास्त्यशुभं किञ्चिन्न व्याधिस्तत्र न क्लमः । यद्यच्च गावो मनसा तस्मिन् वाञ्छन्ति वासव ।
तत् सर्व्वं प्राप्नुवन्ति स्म मम प्रत्यक्षदर्शनात् । कामगाः कामचारिण्यः कामात् कामांश्च भुञ्जते । ३५००
वाप्यः सरांसि सरितो विविधानि वनानि च । गृहाणि पर्व्वताश्चैव यावद्द्रव्यञ्च किञ्चन ।
मनोज्ञं सर्व्वभूतेभ्यः सर्व्वं तत्र प्रदृश्यते । ईदृशाद्विपुलाल्लोकान्नास्ति लोकस्तथाविधः ।
तत्र सर्व्वसहाः क्षान्ता वत्सला गुरुवर्त्तिनः । अहङ्कारैर्विरहिता यान्ति शक्र नरोत्तमाः ।

यः सर्व्वमांसानि न भक्षयीत पुमान् सदा भावितो धर्म्मयुक्तः । मातापित्रोरर्च्चिता सत्ययुक्तः शुश्रूषिता ब्राह्मणानामनिन्द्यः ।

अक्रोधनो गोषु तथा द्विजेषु धर्मे रतो गुरुशुश्रूषकश्च । यावज्जीवं सत्यवृत्ते रतश्च दाने रतो यः क्षमी चापराधे । ११६९
मृदुर्दान्तो देवपरायणश्च सर्व्वातिथिश्चापि तथा दयावान् । ईदृग्गुणो मानवः सम्प्रयाति लोकं गवां शाश्वतञ्चाव्ययञ्च ।
न पारदारी पश्यति लोकमेतं न वै गुरुघ्नो न मृषाप्रलापी । सदा प्रवादी ब्राह्मणेष्वात्तवैरो दोषैरेतैर्यश्च युक्तो दुरात्मा ।
न मित्रध्रुङ्नैकृतिकः कृतघ्नः शठोऽनृजुर्धर्मविद्वेषकश्च । न ब्रह्महा मनसाऽपि प्रपश्येद्गवां लोकं पुण्यकृतां निवासं ।

एतत्ते सर्व्वमाख्यातं निपुणेन सुरेश्वर । गोप्रदानरतानान्तु फलं शृणु शतक्रतो ।
दायाद्यलब्धैरर्थैर्यो गाः क्रीत्वा सम्प्रयच्छति । धर्म्मार्ज्जितधनैः क्रीताः स लोकानाप्नुतेऽक्षयान् । ११७०
यो वै द्यूते धनं जित्वा गाः क्रीत्वा सम्प्रयच्छति । स दिव्यमयुतं शक्र वर्षाणां फलमश्नुते ।
दायाद्याः स च वै गावो न्यायपूर्व्वैरुपार्ज्जिताः । प्रदद्यात्ताः प्रदातॄणां सम्भवन्त्यक्षया ध्रुवाः ।
प्रतिगृह्य तु यो दद्याद्गाः संशुद्धेन चेतसा । तस्यापीहाक्षयान् लोकान् ध्रुवान् विद्धि शचीपते ।
जन्मप्रभृति सत्यञ्च यो ब्रूयान्नियतेन्द्रियः । गुरुद्विजसहः क्षान्तस्तस्य गोभिः समा गतिः ।
न जातु ब्राह्मणो वाच्यो यदवाच्यं शचीपते । मनसा गोषु न द्रुह्येद्गोवृत्तिर्गोऽनुकम्पकः । ११७५
सत्ये धर्मे च निरतस्तस्य शक्र फलं शृणु । गोसहस्रेण समिता तस्य धेनुर्भवत्युत ।
क्षत्रियस्य गुणैरेतैरपि तुल्यफलं शृणु । तुल्यापि द्विजतुल्या गौर्भवतीति विनिश्चयः ।
वैश्यस्यैते यदि गुणास्तस्य पञ्चशतं भवेत् । शूद्रस्यापि विनीतस्य चतुर्भागफलं स्मृतं ।

एतच्चैनं योऽनुतिष्ठेत युक्तः सत्ये रतो गुरुशुश्रूषया च । दक्षः क्षान्तो देवतार्थी प्रशान्तः शुचिर्बुद्धो धर्म्मशीलोऽनहंवाक् ।
महत्फलं प्राप्यते स द्विजाय दत्त्वा दोग्ध्रीं विधिनाऽनेन धेनुं । नित्यं दद्यादेकभक्तः सदा च सत्ये स्थितो गुरुशुश्रूषिता च । ११८०
वेदाध्यायी गोषु गोभक्तिमांश्च नित्यं दृष्ट्वा योऽभिनन्देत गाश्च । आ जातितो यश्च गवां नमेत इदं फलं शक्र निबोध तस्य ।
यत्स्यादिष्ट्वा राजसूये फलन्तु यत्स्यादिष्ट्वा बहुना काञ्चनेन । एतत्तुल्यं फलमप्याहुरग्र्यं सर्व्वे सन्तस्त्वृषयो ये च सिद्धाः ।
योऽग्रं भक्तं किञ्चिदप्राश्य दद्याद्गोभ्यो नित्यं गोव्रती सत्यवादी । शान्तोऽलुब्धो गोसहस्रस्य पुण्यं संवत्सरेणाप्नुयात् सत्यशीलः ।

यदेकभक्तमश्नीयाद्दद्यादेकं गवाञ्च यत् । दशवर्षाण्यनन्तानि गोव्रती गोऽनुकम्पकः ।
एकेनैव च भक्तेन यः क्रीत्वा गां प्रयच्छति । यावन्ति तस्या रोमाणि सम्भवन्ति शतक्रतो । ११८५
तावत्प्रदानात् स गवां फलमाप्नोति शाश्वतं । ब्राह्मणस्य फलं हीदं क्षत्रियस्य तु वै शृणु ।
पञ्चवार्षिकमेतत्तु क्षत्रियस्य फलं शृणु । तदर्द्धेन तु वैश्यस्य शूद्रो वैश्यार्द्धतः स्मृतः ।
यश्चात्मविक्रयं कृत्वा गाः क्रीत्वा सम्प्रयच्छति । यावत् सन्दर्शयेद्गा वै स तावत् फलमश्नुते ।
रोम्णि रोम्णि महाभाग लोकाश्चास्याक्षयाः स्मृताः । संग्रामेष्वर्ज्जयित्वा तु यो वै गाः सम्प्रयच्छति ।
आत्मविक्रयतुल्यास्ताः शाश्वता विद्धि कौशिक । अभावे यो गवां दद्यात्तिलधेनुं यतव्रतः । ११९०
दुर्गात् स तारितो धेन्वा क्षीरनद्यां प्रमोदते ।

न त्वेवासां दानमात्रं प्रशस्तं पात्रं कालो गोविशेषो विधिश्च । कालज्ञानं विप्रगवान्तरं हि दुःखं ज्ञातुं पावकादित्यभूतं ।

स्वाध्यायाढ्यं शुद्धयोनिं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञं । गोषु क्षान्तं नातितीक्ष्णं शरण्यं वृत्तिग्लानं तादृशं पात्रमाहुः ।

वृत्तिग्लाने सीदति चातिमात्रं कृष्यर्थे वा होम्यहेतोः प्रसूतेः । गुर्व्वर्थे वा बालसंवृद्धये वा धेनुं दद्याद्देशकाले विशिष्टे ।

अन्तर्जाताः शक्र या ज्ञानलब्धाः प्राणैः क्रीतास्तेजसा यौतकाश्च । कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः प्रशस्ताः । [illegible]

बलान्विताः शीलवयोपपन्नाः सर्व्वाः प्रशंसन्ति सुगन्धवत्यः । यथा हि गङ्गा सरितां वरिष्ठा तथार्ज्जुनीनां कपिला वरिष्ठा ।

तिस्रो रात्रीस्त्वद्भिरुपोष्य भूमौ तृप्ता गावस्तर्पितेभ्यः प्रदेयाः । वत्सैः पुष्टैः क्षीरपैः सुप्रचारास्त्र्यहं दत्त्वा गोरसैर्व्वर्त्तितव्यं ।

दत्त्वा धेनुं सुव्रतां साधुदोहां कल्याणवत्सामपलायिनीञ्च । यावन्ति रोमाणि भवन्ति तस्यास्तावन्ति वर्षाणि भवन्त्यमुत्र ।

तथाऽनड्वाहं ब्राह्मणाय प्रदाय धुर्य्यं युवानं बलिनं विनीतं । हलस्य वोढारमनन्तवीर्य्यं प्राप्नोति लोकान् दशधेनुदस्य ।

कान्तारे ब्राह्मणान् गाश्च यः परित्राति कौशिक । क्षेमेण विप्रमुच्येत तस्य पुण्यफलं शृणु । [illegible]

अश्वमेधक्रतोस्तुल्यं फलं भवति शाश्वतं । मृत्युकाले सहस्राक्ष यां वृत्तिमनुकाङ्क्षते ।

लोकान् बहुविधान् दिव्यान् यच्चास्य हृदि वर्त्तते । तत् सर्व्वं समवाप्नोति कर्म्मणाऽनेन मानवः ।

गोभिश्च समनुज्ञातः सर्व्वत्र च महीयते । यस्त्वेतेनैव कल्पेन गां वनेष्वनुगच्छति ।

तृणगोमयपर्णाशी निस्पृहो नियतः शुचिः । अकामं तेन वस्तव्यं मुदितेन शतक्रतो ।

मम लोके सुरैः सार्द्धं लोके यत्रापि चेच्छति । [illegible]

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

॥ इन्द्र उवाच ॥ जानन् यो गामपहरेद्विक्रीयाद्वार्थकारणात् । एतद्विज्ञातुमिच्छामि का नु तस्य गतिर्भवेत् ।

॥ पितामह उवाच ॥ भक्षार्थं विक्रयार्थं वा येऽपहारं हि कुर्व्वते । दानार्थं ब्राह्मणार्थाय तत्रेदं श्रूयतां फलं ।

विक्रयार्थं हि यो हिंस्याद्भक्षयेद्वा निरङ्कुशः । घातयानं हि पुरुषं येऽनुमन्येयुरर्थिनः ।

घातकः खादको वापि तथा यश्चानुमन्यते । यावन्ति तस्या रोमाणि तावद्वर्षाणि मज्जति ।

ये दोषा यादृशाश्चैव द्विजयज्ञोपघातके । विक्रये चापहारे च ते दोषा वै स्मृताः प्रभो । [illegible]

अपहृत्य तु यो गां वै ब्राह्मणाय प्रयच्छति । यावद्दानफलं तस्यास्तावन्निरयमृच्छति ।

सुवर्णं दक्षिणामाहुर्गोप्रदाने महाद्युते । सुवर्णं परमित्युक्तं दक्षिणार्थमसंशयं ।

गोप्रदानात्तारयेत सप्त पूर्व्वांस्तथाऽपरान् । सुवर्णं दक्षिणां कृत्वा तावद्द्विगुणमुच्यते ।

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा । सुवर्णं पावनं शक्र पावनानां परं स्मृतं ।

कुलानां पावनं प्राहुर्ज्जातरूपं शतक्रतो । एषा मे दक्षिणा प्रोक्ता समासेन महाद्युते । [illegible]

॥ भीष्म उवाच ॥ एतत् पितामहेनोक्तमिन्द्राय भरतर्षभ । इन्द्रो दशरथायाह रामायाह पिता तथा ।

राघवोऽपि प्रियभ्रात्रे लक्ष्मणाय यशस्विने । ऋषिभ्यो लक्ष्मणेनोक्तमरण्ये वसता प्रभो ।

पारम्पर्य्यागतञ्चेदमृषयः संशितव्रताः । दुर्द्धरं धारयामासू राजानश्चैव धार्म्मिकाः ।

उपाध्यायेन गदितं मम चेदं युधिष्ठिर । य इदं ब्राह्मणो नित्यं वदेद्ब्राह्मणसंसदि ।

यज्ञेषु गोमहादानेषु द्वयोरपि समागमे । तत्र लोकाः शिवाख्या दैवतैः सह नित्यदा । ३५१५

इति ब्रह्मा स भगवानुवाच परमेश्वरः ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

॥ युधिष्ठिर उवाच ॥ विश्रम्भितोऽहं भवता धर्म्मान् प्रवदता प्रभो । प्रवक्ष्यामि तु सन्देहं तन्मे ब्रूहि पितामह ।
व्रतानां किं फलं प्रोक्तं कीदृशं वा महाद्युते । नियमानां फलञ्चैव स्वधीतस्य च किं फलं ।
दत्तस्येह फलं किञ्च वेदानां धारणे च किं । अध्यापने फलं किञ्च सर्व्वमिच्छामि वेदितुं ।
अप्रतिग्राहके किञ्च फलं लोके पितामह । तस्य किञ्च फलं दृष्टं श्रुतं यस्तु प्रयच्छति । ३५२०
स्वकर्म्मनिरतानाञ्च शूराणाञ्चापि किं फलं । शौचे च किं फलं प्रोक्तं ब्रह्मचर्य्ये च किं फलं ।
पितृशुश्रूषणे किञ्च मातृशुश्रूषणे तथा । आचार्य्यगुरुशुश्रूषास्वनुक्रोशानुकम्पने ।
एतत् सर्व्वमशेषेण पितामह यथातथं । वेत्तुमिच्छामि धर्म्मज्ञ परं कौतूहलं हि मे ।
॥ भीष्म उवाच ॥ यो व्रतं वै यथोद्दिष्टं तथा सम्प्रतिपद्यते । अखण्डं सम्यगारभ्य तस्य लोकाः सनातनाः ।
नियमानां फलं राजन् प्रत्यक्षमिह दृश्यते । नियमानां क्रतूनाञ्च त्वयाऽवाप्तमिदं फलं । ३५२५
स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च । इह लोके च वा नित्यं ब्रह्मलोके च मोदते ।
दमस्य तु फलं राजन् शृणु त्वं विस्तरेण मे । दान्ताः सर्व्वत्र सुखिनो दान्ताः सर्व्वत्र निर्वृताः ।
यत्रेच्छागामिनो दान्ताः सर्व्वशत्रुनिषूदनाः । प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः ।
युज्यन्ते सर्व्वकामैर्हि दान्ताः सर्व्वत्र पाण्डव । स्वर्गे यथा प्रमोदन्ते तपसा विक्रमेण च ।
दानैर्यज्ञैश्च विविधैस्तथा दान्ताः क्षमान्विताः । दानाद्दमो विशिष्टो हि दानं किञ्चिद्द्विजातये । ३५३०
दाता कुप्यति नो दान्तस्तस्माद्दानात् परं दमः । यस्तु दद्यादकुप्यन् हि तस्य लोकाः सनातनाः ।
क्रोधो हन्ति हि यद्दानं तस्माद्दानात् परं दमः । अदृश्यानि महाराज स्थानान्ययुतशो दिवि ।
ऋषीणां सर्व्वलोकेषु यानि ते यान्ति देवताः । दमेन यानि नृपते गच्छन्ति परमर्षयः ।
कामयाना महत् स्थानं तस्माद्दानात् परं दमः । अध्यापकः परिक्लेशादक्षयं फलमश्नुते ।
विधिवत् पावकं हुत्वा ब्रह्मलोके नराधिप । अधीत्यापि हि यो वेदान् न्यायविद्भ्यः प्रयच्छति । ३५३५
गुरुकर्म्मप्रशंसी तु सोऽपि स्वर्गे महीयते । क्षत्रियोऽध्ययने युक्तो यजने दानकर्म्मणि ।
युद्धे यश्च परित्राता सोऽपि स्वर्गे महीयते । वैश्यः स्वकर्म्मनिरतः प्रदानाल्लभते महत् ।
शूद्रः स्वकर्म्मनिरतः स्वर्गं शुश्रूषयार्च्छति । शूरा बहुविधाः प्रोक्तास्तेषामर्थांस्तु मे शृणु ।
शूरान्वयानां निर्द्दिष्टं फलं शूरस्य चैव हि । यज्ञशूरा दमे शूराः सत्यशूरास्तथाऽपरे ।
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः । सांख्यशूराश्च बहवो योगशूरास्तथाऽपरे । ३५४०
अरण्ये गृहवासे च त्यागे शूरास्तथाऽपरे । इन्द्रियशूरास्तथैवान्ये क्षमाशूरास्तथाऽपरे ।
आर्ज्जवे च तथा शूराः शमे वर्त्तन्ति मानवाः । तैस्तैश्च नियमैः शूरा बहवः सन्ति चापरे ।
वेदाध्ययनशूराश्च शूराश्चाध्यापने रताः । गुरुशुश्रूषया शूराः पितृशुश्रूषयाऽपरे ।

मातृशुश्रूषया शूरा भ्रातृशूरास्तथाऽपरे । सङ्ग्रामे शूरवासे च शूराश्चातिथिपूजने ।

सर्व्वे यान्ति परान् लोकान् स्वकर्म्मफलनिर्जितान् । धारणं सर्व्ववेदानां सर्व्वतीर्थावगाहनं । ३५५०

सत्यञ्च ब्रुवतो नित्यं समं वा स्यान्न वा समं । अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतं ।

अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते । सत्येन सूर्य्यस्तपति सत्येनाग्निः प्रदीप्यते ।

सत्येन मरुतो वान्ति सर्व्वं सत्ये प्रतिष्ठितं । सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास्तथा ।

सत्यमाहुः परो धर्म्मस्तस्मात् सत्यं न लङ्घयेत् । मुनयः सत्यनिरता मुनयः सत्यविक्रमाः ।

मुनयः सत्यशपथास्तस्मात् सत्यं विशिष्यते । सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ । ३५५५

दमः सत्यफलावाप्तिरुक्ता सर्व्वात्मना मया । असंशयं विनीतात्मा स वै स्वर्गे महीयते ।

ब्रह्मचर्य्यस्य च गुणं शृणु त्वं वसुधाधिप । आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह ।

न तस्य किञ्चिदप्राप्यमिति विद्धि नराधिप । बह्व्यः कोट्यस्त्वृषीणाञ्च ब्रह्मलोके वसन्त्युत ।

सत्ये रतानां सततं दान्तानामूर्द्ध्वरेतसां । ब्रह्मचर्य्यं दहेद्राजन् सर्व्वपापान्युपासितं ।

ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते । प्रत्यक्षं हि तथा ह्येतद्ब्राह्मणेषु तपस्विषु । ३५६०

बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षितः । तद्ब्रह्मचर्य्यस्य फलमृषीणामिह दृश्यते ।

मातापित्रोः पूजने यो धर्म्मस्तमपि मे शृणु । शुश्रूषते यः पितरं नचासूयेत् कदाचन ।

मातरं भ्रातरं वाऽपि गुरुमाचार्य्यमेव च । तस्य राजन् फलं विद्धि स्वर्लोके स्थानमर्च्चितं ।

न च पश्येत नरकं गुरुशुश्रूषयात्मवान् ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

॥ युधिष्ठिर उवाच ॥ विधिं गवां परं श्रोतुमिच्छामि नृप तत्त्वतः । येन तान् शाश्वतान् लोकानर्थिनां प्राप्नुयादिह । ३५६५

॥ भीष्म उवाच ॥ न गोदानात्परं किञ्चिद्विद्यते वसुधाधिप । गौर्हि न्यायागता दत्ता सद्यस्तारयते कुलं ।

सतामर्थे सम्यगुत्पादितो यः स वै कॢप्तः सम्यगाभ्यः प्रजाभ्यः । तस्मात् पूर्व्वं ह्यादिकालप्रवृत्तं गोदानार्थं शृणु राजन् विधिं मे ।

पुरा गोषूपनीतासु गोषु सन्दिग्धदर्शिना । मान्धात्रा प्रकृतं प्रश्नं बृहस्पतिरभाषत ।

द्विजातिमतिसत्कृत्य श्वः कालमभिवेद्य च । गोदानार्थे प्रयुञ्जीत रोहिणीं नियतव्रतः ।

आह्वानञ्च प्रयुञ्जीत समङ्गे बहुलेति च । प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् । ३५७०

गौर्मे माता वृषभः पिता मे दिवं शर्म्म जगती मे प्रतिष्ठा । प्रपद्यैवं शर्व्वरीमुष्य गोषु पुनर्व्वाणीमुत्सृजेद्गोप्रदाने ।

स तामेकां निशां गोभिः समसख्यः समव्रतः । ऐकात्म्यगमनात् सद्यः कल्मषाद्विप्रमुच्यते ।

उत्सृष्टवृषवत्सा हि प्रदेया सूर्य्यदर्शने । त्रिदिवं प्रतिपत्तव्यमर्थवादाशिषस्तव ।

ऊर्ज्जस्विन्य ऊर्ज्जमेधाश्च यज्ञे गर्भोऽमृतस्य जगतोऽस्य प्रतिष्ठा । क्षितेरोहः प्रवहः शश्वदेव प्राजापत्याः सर्व्वमित्यर्थवादाः ।

गावो ममैनः प्रणुदन्तु सौर्य्यास्तथा सौम्याः स्वर्गयानाय सन्तु । आत्मानं मे मातृवच्चाश्रयन्तु तथाऽनुक्ताः सन्तु सर्व्वाशिषो मे ।

३५७५

येऽनार्य्याः कर्म्मभिर्दुष्कृतैर्वै नरकस्थाः सोमभे संप्रयुक्ताः। यूयं नित्यं सर्व्वपुण्योपवाह्या दिशध्वं मे गतिमिष्टां प्रपन्नाः।
या वै यूयं सोऽहमद्यैकभावो युष्मान् दत्त्वा चाहमात्मप्रदाता। मनश्च्युता मन एवोपपन्नाः सन्धुक्षध्वं सौम्यरूपोग्ररूपाः।
एवं तस्याग्रे पूर्व्वमर्द्धं वदेत गवां दाता विधिवत् पूर्व्वदृष्टम्। प्रतिब्रूयाच्छेषमर्द्धं द्विजातिः प्रतिगृह्णन् वै गोप्रदाने विधिज्ञः।

गां प्रददानीति वक्तव्यमर्घ्यवस्त्रवसुप्रदः। ऊधस्या भवितव्या च वैष्णवीति च चोदयेत्।

नाम संकीर्त्तयेत्तस्या यथासंख्योत्तरं स वै। फलं षट्त्रिंशदष्टौ च सहस्राणि च विंशतिः। ३६८०

एवमेतान् गुणान् विद्याद्गवादीनां यथाक्रमम्। गोप्रदाता समाप्नोति समस्तानष्टमे क्रमे।

गोदः शीली निर्भयश्चार्घदाता न स्याद्दुःखी वसुदाता च कामम्। उपस्योढा भारते यश्च विद्वान् विख्यातास्ते वैष्णवाश्चन्द्रलोकाः।
गां वै दत्त्वा गोव्रती स्यात्त्रिरात्रं निशाश्चैकां संवसेतेह ताभिः। काम्याष्टम्यां वर्त्तितव्यं त्रिरात्रं रसैर्व्वा गोशकृता प्रस्नवैर्व्वा।
देवव्रती स्याद्वृषभप्रदाने वेदावाप्तिर्गोयुगस्य प्रदाने। तथा गवां विधिमासाद्य यज्वा लोकानग्र्यान् विन्दते नाविधिज्ञः।
कामान् सर्व्वान् पार्थिवानेकसंस्थान् यो वै दद्यात् कामदुघाञ्च धेनुम्। सम्यक् ताः स्युर्हव्यकव्यौघवत्यस्तासामुक्ष्णां ज्यायसां

सम्प्रदानम्। ३६८४

न चाशिष्यायाव्रतायोपकुर्य्यान्नाश्रद्दधानाय न वक्रबुद्धये। गुह्यो ह्ययं सर्व्वलोकस्य धर्म्मो नेमं धर्म्मं यत्र तत्र प्रजल्पेत्।
सन्ति लोके श्रद्दधाना मनुष्याः सन्ति क्षुद्रा राक्षसा मानुषेषु। एषामेतद्दीयमानं ह्यनिष्टं ये नास्तिक्यं चाश्रयन्तेऽल्पपुण्याः।
बार्हस्पत्यं वाक्यमेतन्निशम्य ये राजानो गोप्रदानानि दत्त्वा। लोकान् प्राप्ताः पुण्यशीलाः सुवृत्तास्तान् मे राजन् कीर्त्त्यमानान्

निबोध।

उशीनरो विष्वगश्वो नृगश्च भगीरथो विश्रुतो यौवनाश्वः। मान्धाता वै मुचुकुन्दश्च राजा भूरिद्युम्नो नैषधः सोमकश्च।
पुरूरवा भरतश्चक्रवर्त्ती यस्यान्ववाये भारताः सर्व्व एव। तथा वीरो दाशरथिश्च रामो ये चाप्यन्ये विश्रुताः कीर्त्ति

मन्तः। ३६९०

तथा राजा पृथुकर्म्मा दिलीपो दिवं प्राप्तो गोप्रदानैर्व्विधिज्ञः। यज्ञैर्दानैस्तपसा राजधर्म्मैर्मान्धाताभूद्गोप्रदानैश्च युक्तः।
तस्मात् पार्थ त्वमपीमां मयोक्तां बार्हस्पतीं भारतीं धारयस्व। द्विजाग्र्येभ्यः संप्रयच्छस्व प्रीतो गाः पुण्या वै प्राप्य राज्यं कुरूणाम्।
॥ वैशम्पायन उवाच ॥ तथा सर्व्वं कृतवान् धर्म्मराजो भीष्मेणोक्तो विधिवद्गोप्रदाने। स मान्धातुर्देवदेवोपदिष्टं सम्यक् धर्म्मं

धारयामास राजा।

इति नृप सततं गवां प्रदाने यवशकलान् सह गोमयैः पिबानः। क्षितितलशयनः शिखी यतात्मा वृष इव राजवृषस्तदा बभूव।
नरपतिरभवत् स देवताभ्यः प्रयतमनास्त्वभिसंस्तुवंश्च ताः स्म। नृपतिधुरि च गामयुक्त भूयस्तुरगवरैरगमच्च यत्र तत्र। ३६९५

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने षट्सप्ततमोऽध्यायः ॥ ७६ ॥

॥ वैशम्पायन उवाच ॥ ततो युधिष्ठिरो राजा भूयः शान्तनवं नृपम्। गोदानविस्तरं धीमान् पप्रच्छ विनयान्वितः।
॥ युधिष्ठिर उवाच ॥ गोप्रदानगुणान् सम्यक् पुनर्म्मे ब्रूहि भारत। न हि तृप्याम्यहं वीर शृण्वानोऽमृतमीदृशम्।
॥ वैशम्पायन उवाच ॥ इत्युक्तो धर्म्मराजेन तदा शान्तनवो नृपः। सम्यगाह गुणांस्तस्मै गोप्रदानस्य केवलान्।
॥ भीष्म उवाच ॥ वत्सलां गुणसम्पन्नां तरुणीं वत्ससंयुताम्। दत्त्वेदृशीं गां विप्राय सर्व्वपापैः प्रमुच्यते।

असुर्य्या नाम ते लोका गां दत्त्वा तान्न गच्छति। पीतोदकां जग्धतृणां नष्टक्षीरां निरिन्द्रियाम्। ३७००

जरारोगोपसम्पन्नां जीर्णां वापीमिवाजलां । दत्त्वा तमः प्रविशति द्विजं क्लेशेन योजयेत् ।

रुष्टा दुष्टा व्याधिता दुर्ब्बला वा नो दातव्या याश्च मूल्यैरदत्तैः । क्लेशैर्व्विप्रं योऽफलैः संयुनक्ति तस्यावीर्य्याश्चाफला

श्चैव लोकाः ।

बलान्विताः शीलवयोपपन्नाः सर्व्वे प्रशंसन्ति सुगन्धवत्यः । यथा हि गङ्गा सरितां वरिष्ठा तथार्ज्जुनीनां कपिला वरिष्ठा ।

॥ युधिष्ठिर उवाच ॥ कस्मात् समाने बहुला प्रदाने सद्भिः प्रशस्तं कपिलाप्रदानं । विशेषमिच्छामि महाप्रभाव श्रोतुं

समर्थोऽस्मि भवान् प्रवक्तुं ।

॥ भीष्म उवाच ॥ वृद्धानां ब्रुवतां तात श्रुतं मे यत् पुरातनं । वक्ष्यामि तदशेषेण रोहिण्यो निर्म्मिता यथा ।　　३७०५

प्रजाः सृजेति चादिष्टः पूर्व्वं दक्षः स्वयम्भुवा । असृजद्वृत्तिमेवाग्रे प्रजानां हितकाम्यया ।

यथा ह्यमृतमाश्रित्य वर्त्तयन्ति दिवौकसः । तथा वृत्तिं समाश्रित्य वर्त्तयन्ति प्रजा विभो ।

अचरेभ्यश्च भूतेभ्यश्चराः श्रेष्ठाः सदा नराः । ब्राह्मणाश्च ततः श्रेष्ठास्तेषु यज्ञाः प्रतिष्ठिताः ।

यज्ञैरवाप्यते सोमः स च गोषु प्रतिष्ठितः । ततो देवाः प्रमोदन्ते पूर्व्वं वृत्तिस्ततः प्रजाः ।

प्रजातान्येव भूतानि प्राक्रोशन् वृत्तिकाङ्क्षया । वृत्तिदं चान्वपद्यन्त तृषिताः पितृमातृवत् ।　　३७१०

इतीदं मनसा गत्वा प्रजासर्गार्थमात्मनः । प्रजापतिस्तु भगवानमृतं प्रापिबत्तदा ।

स गतस्तस्य तृप्तिन्तु गन्धं सुरभिमुद्गिरन् । ददर्शोद्गारसंवृत्तां सुरभीं मुखजां सुतां ।

साऽसृजत् सौरभेयीस्तु सुरभिर्लोकमातृकाः । सुवर्णवर्णाः कपिलाः प्रजानां वृत्तिधेनवः ।

तासाममृतवर्णानां क्षरन्तीनां समन्ततः । बभूवामृतजः फेनः स्रवन्तीनामिवोर्म्मिजः ।

स वत्समुखविभ्रष्टो भवस्य तु विर्तिष्ठतः । शिरस्यवापतत् क्रुद्धः स तदैक्षत च प्रभुः ।　　३७१५

ललाटप्रभवेणाक्ष्णा रोहिणीं प्रदहन्निव । तत्तेजस्तु ततो रौद्रं कपिलानां विशाम्पते ।

नानावर्णत्वमनयन्मेघानिव दिवाकरः । यास्तु तस्मादपाक्रम्य सोममेवाभिसंश्रिताः ।

यथोत्पन्नाः स्ववर्णस्थास्ता नीता नान्यवर्णतां । अथ क्रुद्धं महादेवं प्रजापतिरभाषत ।

अमृतेनावसिक्तस्त्वं नोच्छिष्टं विद्यते गवां । यथा ह्यमृतमादाय सोमो विष्यन्दते पुनः ।

तथा क्षीरं क्षरन्त्येता रोहिण्योऽमृतसम्भवं । न दुष्यत्यनिलो नाग्निर्न सुवर्णं न चोदधिः ।　　३७२०

नामृतेनामृतं पीतं वत्सपीता न वत्सला । इमाल्लोँकान् भरिष्यन्ति हविषा प्रस्रवेण च ।

आसामैश्वर्य्यमिच्छन्ति सर्व्वेऽमृतमयं शुभं । वृषभञ्च ददौ तस्मै सह गोभिः प्रजापतिः ।

प्रसादयामास मनस्तेन रुद्रस्य भारत । प्रीतश्चापि महादेवश्चकार वृषभं तदा ।

ध्वजञ्च वाहनञ्चैव तस्मात् स वृषभध्वजः । ततो देवैर्म्महादेवस्तदा पशुपतिः कृतः ।

ईश्वरः स गवां मध्ये वृषभाङ्कः प्रकीर्त्तितः । एवमव्यग्रवर्णानां कपिलानां महौजसां ।　　३७२५

प्रदाने प्रथमः कल्पः सर्व्वासामेव कीर्त्तितः ।

लोकज्येष्ठा लोकवृत्तिः प्रवृत्ता रुद्रोपेताः सोमविष्यन्दभूताः । सौम्याः पुण्याः कामदाः प्राणदाश्च गा वै दत्त्वा सर्व्वकाम

प्रदः स्यात् ।

इमं गवां प्रभवविधानमुत्तमं पठन् सदा शुचिरपि मङ्ग[illegible]वाप्नोति कलिकलुषेण मानवः श्रियं सुतान् धन पशूनवाप्नुयात्सदा।

हव्यं कव्यं तर्पणं शान्तिकर्म्म यानं वासो वृद्धबालस्य तुष्टिः। एतान् [illegible]

॥ वैशम्पायन उवाच ॥ पितामहस्याथ निशम्य वाक्यं राजा सह भ्रातृभि[illegible]नाम् वै दाता राजन्नाप्नुयादे[illegible] ब्राह्मणसत्तमेभ्यः।

तथैव तेभ्योऽपि ददौ द्विजेभ्यो गवां सहस्राणि शतानि चैव। यज्ञान् समुद्दिश्य [illegible]

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने सप्तसप्तत[illegible]ऽध्यायः।

॥ भीष्म उवाच ॥ एतस्मिन्नेव काले तु वशिष्ठमृषिसत्तमं। इक्ष्वाकुवंशजो राजा सौदासो [illegible] ३७३०

सर्व्वलोकचरं सिद्धं ब्रह्मकोशं सनातनं। पुरोहितमभिप्रष्टुमभिवाद्योपचक्रमे। ७८

॥ सौदास उवाच ॥ त्रैलोक्ये भगवन् किंस्वित् पवित्रं कथ्यतेऽनघ। यत् कीर्त्तयन् सदा मर्त्यः प्राप्नुया[illegible]।

॥ भीष्म उवाच ॥ तस्मै प्रोवाच वचनं प्रणताय हितं तदा। गवामुपनिषद्विद्वान् नमस्कृत्य गवां शुचिः। [illegible]न्नेति तव।

गावः सुरभिगन्धिन्यस्तथा गुग्गुलुगन्धयः। गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत्। [illegible]यं।

गावो भूतञ्च भव्यञ्च गावः पुष्टिः सनातनी। गावो लक्ष्म्यास्तथा मूलं गोषु दत्तं न नश्यति। [illegible]भयो

अन्नं हि परमं गावो देवानां परमं हविः। स्वाहाकारवषट्कारौ नित्यं गोषु प्रतिष्ठितौ।

गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः। गावो भविष्यं भूतञ्च गोषु यज्ञाः प्रतिष्ठिताः।

सायम्प्रातश्च सततं होमकाले महाद्युते। गावो ददति वै होम्यमृषिभ्यः पुरुषर्षभ। ३७४०

यानि कानि च दुर्गाणि दुष्कृतानि कृतानि च। तरन्ति चैव पाप्मानं धेनुं ये ददति प्रभो।

एकाञ्च दशगुर्दद्याद्दश दद्याच्च गोशती। शतं सहस्रगुर्दद्यात् सर्व्वे तुल्यफला हि ते।

अनाहिताग्निः शतगुरयज्वा च सहस्रगुः। समृद्धो यश्च कीनाशो नार्घमर्हन्ति ते त्रयः।

कपिलां ये प्रयच्छन्ति सवत्सां कांस्यदोहनां। सुव्रतां वस्त्रसंवीतामुभौ लोकौ जयन्ति ते।

युवानमिन्द्रियोपेतं शतेन शतयूथपं। गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतं। ३७४५

वृषभं ये प्रयच्छन्ति श्रोत्रियाय परन्तप। ऐश्वर्य्यं तेऽधिगच्छन्ति जायमानाः पुनः पुनः।

नाकीर्त्तयित्वा गाः सुप्यात् तासां संस्मृत्य चोत्पतेत्। सायंप्रातर्नमस्येच्च गास्ततः पुष्टिमाप्नुयात्।

गवां मूत्रपुरीषस्य नोद्विजेत कथञ्चन। न चासां मांसमश्नीयाद्गवां पुष्टिं तथाप्नुयात्।

गाश्च सङ्कीर्त्तयेन्नित्यं नावमन्येत तास्तथा। अनिष्टं स्वप्नमालक्ष्य गां नरः सम्प्रकीर्त्तयेत्।

गोमयेन सदा स्नायात् करीषे चापि संविशेत्। श्लेष्ममूत्रपुरीषाणि प्रतिघातञ्च वर्ज्जयेत्। ३७५०

सार्द्रे चर्म्मणि भुञ्जीत निरीक्षेद्वारुणीं दिशं। वाग्यतः सर्पिषा भूमौ गवां पुष्टिं सदाऽश्नुते।

घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत्। घृतं दद्याद्घृतं प्राश्नीयाद्गवां पुष्टिं सदाऽश्नुते।

गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य यः। सर्व्वरत्नमयीं दद्यान्न स शोचेत् कृताकृते।

गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः। सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा।

[...] । गावोऽस्माकं वयं तासां यतो गावस्ततो वयं । ३७१५

गा वै पश्याम्यहं नित्यं गावः प[...] महाभयेषु च नरः कीर्त्तयन्मुच्यते भयात् ।

एवं रात्रौ दिवा चापि स[...] आनुशासनिके पर्व्वणि दानधर्म्मकथने अष्टसप्ततोऽध्यायः ॥ ७८ ॥

इति श्रीमहाभारते [...] [...]त्वा तपस्तप्तं सुदुष्करं । गोभिः पूर्व्वं विसृष्टाभिर्गच्छेम श्रेष्ठतामिति ।

वसिष्ठ उवाच ।

बलान्वित ॥ युधिष्ठिर [...]सां वयमुत्तमाः । भवेम न च लिप्येम दोषेणेति परन्तप ।

समर्थेऽस्मिन् दक्षिणा [...]येत सर्व्वदा । सकृता च पवित्रार्थं कुर्व्वीरन् देवमानुषाः ।

॥ भीष्म उवाच । [...]स्थावराणि चराणि च । प्रदातारश्च लोकांस्तो गच्छेयुरिति मानद । ३७२०

प्रजाः सृजेति चादिष्टा तपस्तोऽन्ते स्वयं प्रभुः । एवं भवत्विति प्रभुर्लोकांस्तारयतेति च ।

यथा ह्यमृतमात्मास्ता भूतभव्यस्य मातरः । प्रातर्नमस्यास्ता गावस्ततः पुष्टिमवाप्नुयात् ।

अचरेभ्यश्च भूतेभ्यो गावो लोकपरायणाः । तस्माद्गावो महाभागाः पवित्रं परमुच्यते ।

यच्चैरप्यभूतानां समतिष्ठन्त मूर्द्धनि । समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीं ।

सुव्रतां वस्त्रसंवीतां ब्रह्मलोके महीयते । लोहितां तुल्यवत्साश्च धेनुं दत्त्वा पयस्विनीं । ३७२५

सुव्रतां वस्त्रसंवीतां सूर्य्यलोके महीयते । समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीं ।

सुव्रतां वस्त्रसंवीतां सोमलोके महीयते । समानवत्सां श्वेतान्तु धेनुं दत्त्वा पयस्विनीं ।

सुव्रतां वस्त्रसंवीतामिन्द्रलोके महीयते । समानवत्सां कृष्णान्तु धेनुं दत्त्वा पयस्विनीं ।

सुव्रतां वस्त्रसंवीतामग्निलोके महीयते । समानवत्सां धूम्राञ्च धेनुं दत्त्वा पयस्विनीं ।

सुव्रतां वस्त्रसंवीतां याम्यलोके महीयते । अपां फेनसवर्णान्तु सवत्सां कांस्यदोहनां । ३७३०

प्रदाय वस्त्रसंवीतां वारुणं लोकमश्नुते । वातरेणुसवर्णान्तु सवत्सां कांस्यदोहनां ।

प्रदाय वस्त्रसंवीतां वायुलोके महीयते । हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनां ।

प्रदाय वस्त्रसंवीतां कौवेरं लोकमश्नुते । पलालधूमवर्णान्तु सवत्सां कांस्यदोहनां ।

प्रदाय वस्त्रसंवीतां पितृलोके महीयते । सवत्सां पीवरीं दत्त्वा दृतिकण्ठामलङ्कृतां ।

वैश्वदेवमसम्बाधं स्थानं श्रेष्ठं प्रपद्यते । समानवत्सां गौरीन्तु धेनुं दत्त्वा पयस्विनीं । ३७३५

सुव्रतां वस्त्रसंवीतां वसूनां लोकमाप्नुयात् । पाण्डुकम्बलवर्णाभां सवत्सां कांस्यदोहनां ।

प्रदाय वस्त्रसंवीतां साध्यानां लोकमाप्नुयात् । वैराटपृष्ठमुक्षाणं सर्व्वरत्नैरलङ्कृतं ।

प्रदाय मरुतां लोकान् स राजन् प्रतिपद्यते । वयोपपन्नं लीलाङ्गं सर्व्वरत्नसमन्वितं ।

गन्धर्व्वाप्सरसां लोकान् दत्त्वा प्राप्नोति मानवः । दृतिकण्ठमनड्वाहं सर्व्वरत्नैरलङ्कृतं ।

दत्त्वा प्रजापतेर्लोकान् विशोकः प्रतिपद्यते । गोप्रदानरतो याति भित्त्वा जलदसञ्चयान् । ३७४०

विमानेनार्कवर्णेन दिवि राजन् विराजते । तन्चारुवेशाः सुश्रोण्यः सहस्रं सुरयोषितः ।

रमयन्ति नरश्रेष्ठ गोप्रदानरतं नरं । वीणानां वल्लकीनाञ्च नूपुराणाञ्च शिञ्जितैः ।

हासैश्च हरिणाक्षीणां सुप्तः स प्रतिबोध्यते ।

यावन्ति रोमाणि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते सः। स्वर्गाच्च्युतश्चापि ततो नृलोके प्रसूयते वै विपुले गृहे सः।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने गोप्रदानिके एकोनाशीतितमोऽध्यायः॥ ७९॥

॥ वशिष्ठ उवाच॥ घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः। घृतनद्यो घृतावर्त्तास्ता मे सन्तु सदा गृहे। ३७८५

घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितं। घृतं सर्व्वेषु गात्रेषु घृतं मे मनसि स्थितं।

गावो ममाग्रतो नित्यं गावः पृष्ठत एव च। गावो मे सर्व्वतश्चैव गवां मध्ये वसाम्यहं।

इत्याचम्य जपेत् सायम्प्रातश्च पुरुषः सदा। यदह्ना कुरुते पापं तस्मात् स परिमुच्यते।

प्रासादा यत्र सौवर्णा वसोर्धारा च यत्र सा। गन्धर्व्वाप्सरसो यत्र तत्र यान्ति सहस्रदाः।

नवनीतपङ्काः क्षीरोदा दधिशैवलसङ्कुलाः। वहन्ति यत्र वै नद्यस्तत्र यान्ति सहस्रदाः। ३७९०

गवां शतसहस्रन्तु यः प्रयच्छेद्यथाविधि। परां वृद्धिमवाप्याथ स्वर्गलोके महीयते।

दश चोभयतः पुत्रान् मातापित्रोः पितामहान्। दधाति सुकृतान् [illegible] नरः।

धेन्वाः प्रमाणेन समप्रमाणां धेनुं तिलानामपि च प्रदाय। पानीयदाता [illegible] यातनां काञ्चिदुपैति तत्र।

पवित्रमग्र्यं जगतः प्रतिष्ठा दिवौकसां मातरोऽथाप्रमेयाः। अन्वालभेद्दक्षिणतो व्रजेच्च दद्याच्च पात्रे प्रसमीक्ष्य कालं।

धेनुं सवत्सां कपिलां भूरिशृङ्गीं कांस्योपदोहां वसनोत्तरीयां। प्रदाय तां गाहति दुर्विगाह्यां याम्यां सभां वीतभयो मनुष्यः। ३७९५

सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः। गावो मामुपतिष्ठन्तामिति नित्यं प्रकीर्त्तयेत्।

नातः पुण्यतरं दानं नातः पुण्यतरं फलं। नातो विशिष्टं लोकेषु भूतं भवितुमर्हति।

त्वचा लोम्नाऽथ शृङ्गैर्वा वालैः क्षीरेण मेदसा। यज्ञं वहति सम्भूय किमस्त्यभ्यधिकं ततः।

यया सर्व्वमिदं व्याप्तं जगत् स्थावरजङ्गमं। तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरं।

गुणवचनसमुच्चयैकदेशो नृवर मयैष गवां प्रकीर्त्तितस्ते। न च परमिह दानमस्ति गोभ्यो भवति न चापि परायणं तथाऽन्यत्। ३८००

॥ भीष्म उवाच॥ वरमिदमिति भूमिदो विचिन्त्य प्रवरमृषेर्व्वचनं ततो महात्मा। व्यसृजत नियतात्मवान् द्विजेभ्यः सुबहु च गोधनमाप्तवांश्च लोकान्।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने गोप्रदानिके अशीतितमोऽध्यायः॥ ८०॥

॥ युधिष्ठिर उवाच॥ पवित्राणां पवित्रं यच्छ्रेष्ठं लोके च यद्भवेत्। पावनं परमञ्चैव तन्मे ब्रूहि पितामह।

॥ भीष्म उवाच॥ गावो महार्थाः पुण्याश्च तारयन्ति च मानवान्। धारयन्ति प्रजाश्चेमा हविषा पयसा तथा।

न हि पुण्यतमं किञ्चिद्गोभ्यो भरतसत्तम। एताः पुण्याः पवित्राश्च त्रिषु लोकेषु सत्तमाः

देवानामुपरिष्टाच्च गावः प्रतिवसन्ति वै। दत्त्वा चैतास्तारयते यान्ति स्वर्गं मनीषिणः। ३८०५

मान्धाता यौवनाश्वश्च ययातिर्नहुषस्तथा। गा वै ददन्तः सततं सहस्रशतसम्मिताः।

गताः परमकं स्थानं देवैरपि सुदुर्लभं। अपि चात्र पुरा गीतं कथयिष्यामि तेऽनघ।

ऋषीणामुत्तमं धीमान् कृष्णद्वैपायनं शुकः। अभिवाद्याह्निककृतः शुचिः प्रयतमानसः।

पितरं परिपप्रच्छ दृष्टलोकपरावरं । को यज्ञः सर्व्वयज्ञानां वरिष्ठो उपलक्ष्यते ।
किञ्च कृत्वा परं स्थानं प्राप्नुवन्ति मनीषिणः । केन देवाः पवित्रेण स्वर्गमश्नन्ति वा विभो । ३८८१
किञ्च यज्ञस्य यज्ञत्वं क्व च यज्ञः प्रतिष्ठितः । देवानामुत्तमं किञ्च किञ्च सत्रमितः परं ।
पवित्राणां पवित्रञ्च यत्तद्ब्रूहि पितर्मम । एतत् श्रुत्वा तु वचनं व्यासः परमधर्म्मवित् ।
पुत्रायाकथयत् सर्व्वं तत्त्वेन भरतर्षभ ।
॥ व्यास उवाच ॥ गावः प्रतिष्ठा भूतानां तथा गावः परायणं । गावः पुण्याः पवित्राश्च गोधनं पावनं तथा ।
पूर्व्वमासन्नशृङ्गा वै गाव इत्यनुशुश्रुम । शृङ्गार्थे समुपासन्त ताः किल प्रभुमव्ययं । ३८८५
ततो ब्रह्मा तु गाः प्रायमुपविष्टाः समीक्ष्य च । ईप्सितं प्रददौ ताभ्यो गोभ्यः प्रत्येकशः प्रभुः ।
तासां शृङ्गाण्यजायन्त यस्या यादृङ्मनोगतं । नानावर्णाः शृङ्गवन्त्यस्ता व्यरोचन्त पुत्रक ।
ब्रह्मणा वरदत्तास्ता हव्यकव्यप्रदाः शुभाः । पुण्याः पवित्राः सुभगा दिव्यसंस्थानलक्षणाः ।
गावस्तेजो महद्दिव्यं गवां दानं प्रशस्यते । ये चैताः संप्रयच्छन्ति साधवो वीतमत्सराः ।
ते वै सुकृतिनः प्रोक्ताः सर्व्वदानप्रदाश्च ते । गवां लोकं तथा पुण्यमाप्नुवन्ति च तेऽनघ । ३८९०
यत्र वृक्षा मधुफला दिव्यपुष्पफलोपगाः । पुष्पाणि च सुगन्धीनि दिव्यानि द्विजसत्तम ।
सर्व्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका । सर्व्वर्त्तुसुखसंस्पर्शा निष्पङ्का नीरजाः शुभाः ।
रक्तोत्पलवनैश्चैव मणिखण्डैर्हिरण्मयैः । तरुणादित्यसङ्काशैर्भान्ति तत्र जलाशयाः ।
महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः । नीलोत्पलविमिश्रैश्च सरोभिर्ब्बहुपङ्कजैः ।
करवीरवनैः फुल्लैः सहस्रावर्त्तसंवृतैः । सन्तानकवनैः फुल्लैर्वृक्षैश्च समलंकृताः । ३८९५
निर्म्मलाभिश्च मुक्ताभिर्म्मणिभिश्च महाप्रभैः । उद्धूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ।
सर्व्वरत्नमयैश्चित्रैरवगाढा द्रुमोत्तमैः । जातरूपमयैश्चान्यैर्हुताशनसमप्रभैः ।
सौवर्णगिरयस्तत्र मणिरत्नशिलोच्चयाः । सर्व्वरत्नमयैर्भान्ति शृङ्गैश्चारुभिरुच्छ्रितैः ।
नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः । दिव्यगन्धरसैः पुष्पैः फलैश्च भरतर्षभ ।
रमन्ते पुण्यकर्म्माणस्तत्र नित्यं युधिष्ठिर । सर्व्वकामसमृद्धार्था निःशोका गतमन्यवः । ३९००
विमानेषु विचित्रेषु रमणीयेषु भारत । मोदन्ते पुण्यकर्म्माणो विहरन्तो यशस्विनः ।
उपक्रीडन्ति तान् राजन् शुभाश्चाप्सरसाङ्गणाः । एतान् लोकानवाप्नोति गान्दत्त्वा वै युधिष्ठिर ।
येषामधिपतिः पूषा मारुतो बलवान् बली । ऐश्वर्य्ये वरुणो राजा ता मामवन्तु युगन्धराः ।
सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः । प्राजापत्यमिति ब्रह्मन् जपेन्नित्यं यतव्रतः ।
गाश्च शुश्रूषते यश्च समन्वेति च सर्व्वशः । तस्मै तुष्टाः प्रयच्छन्ति वरानपि सुदुर्लभान् । ३९०५
द्रुह्येन्न मनसा वाऽपि गोषु नित्यं सुखप्रदः । अर्च्चयेत सदा चैव नमस्कारैश्च पूजयेत् ।
दान्तः प्रीतमना नित्यं गवां व्युष्टिं तथाऽश्नुते । त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं पिबेत् पयः ।
गवामुष्णं पयः पीत्वा त्र्यहमुष्णं घृतं पिबेत् । त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत्त्र्यहं ।

येन देवाः पवित्रेण भुञ्जते लोकमुत्तमं । यत् पवित्रं पवित्राणां तद्घृतं शिरसा वहेत् ।
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् । घृतं प्राशेद्घृतं दद्याद्गवां पुष्टिं तथाऽश्नुते । ३८५०
निर्हृतैश्च यवैर्गोभिर्मासं प्राशितयावकः । ब्रह्महत्यासमं पापं सर्व्वमेतेन शुध्यते ।
पराभवाच्च दैत्यानां देवैः शौचमिदं कृतं । ते देवत्वमपि प्राप्ताः संसिद्धाश्च महाबलाः ।
गावः पवित्राः पुण्याश्च पावनं परमं महत् । ताश्च दत्त्वा द्विजातिभ्यो नरः स्वर्गमुपाश्नुते ।
गवां मध्ये शुचिर्भूत्वा गोमतीं मनसा जपेत् । पूताभिरद्भिराचम्य शुचिर्भवति निर्म्मलः ।
अग्निमध्ये गवां मध्ये ब्राह्मणानाञ्च संसदि । विद्यावेदव्रतस्नाता ब्राह्मणाः पुण्यकर्म्मिणः । ३८५५
अध्यापयेरन् शिष्यान् वै गोमतीं यज्ञसम्मितां । त्रिरात्रोपोषितो भूत्वा गोमतीं लभते वरं ।
पुत्रकामश्च लभते पुत्रं धनमथापि वा । पतिकामा च भर्त्तारं सर्व्वकामांश्च मानवः ।
गावस्तुष्टाः प्रयच्छन्ति सेविता वै न संशयः । एवमेता महाभागा यज्ञियाः सर्व्वकामदाः ।
रोहिण्य इति जानीहि नैताभ्यो विद्यते परं । इत्युक्तः स महातेजाः शुकः पित्रा महात्मना ।
पूजयामास गा नित्यं तस्मात्त्वमपि पूजय । ३८६०

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने गोप्रदानिके एकाशीतोऽध्यायः ॥ ८१ ॥

॥ युधिष्ठिर उवाच ॥ मया गवां पुरीषं वै श्रिया जुष्टमिति श्रुतं । एतदिच्छाम्यहं श्रोतुं संशयोऽत्र पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । गोभिर्नृपेह संवादं श्रिया भरतसत्तम ।
श्रीः कृत्वेह वपुः कान्तं गोमध्येषु विवेश ह । गावोऽथ विस्मितास्तस्या दृष्ट्वा रूपस्य सम्पदं ।
॥ गाव ऊचुः ॥ काऽसि देवि कुतो वा त्वं रूपेणाप्रतिमा भुवि । विस्मिताः स्म महाभागे तव रूपस्य सम्पदा ।
इच्छाम त्वां वयं ज्ञातुं का त्वं क्व च गमिष्यसि । तत्त्वेन वरवर्णाभे सर्व्वमेतद्ब्रवीहि नः । ३८६५
॥ श्रीरुवाच ॥ लोककान्ताऽस्मि भद्रं वः श्रीर्नाम्नाऽहं परिश्रुता । मया दैत्याः परित्यक्ता विनष्टाः शाश्वतीः समाः ।
मयाऽभिपन्ना देवाश्च मोदन्ते शाश्वतीः समाः । इन्द्रो विवस्वान् सोमश्च विष्णुरापोऽग्निरेव च ।
मयाऽभिपन्ना ऋध्यन्ते ऋषयो देवतास्तथा । यांश्चाविशाम्यहं गावस्ते विनश्यन्ति सर्व्वशः ।
धर्म्मश्चार्थश्च कामश्च मया जुष्टाः सुखान्विताः । एवं प्रभावां मां गावो विजानीत सुखप्रदाः ।
इच्छामि चापि युष्मासु वस्तुं सर्व्वासु नित्यदा । आगता प्रार्थये युष्मान् श्रीजुष्टा भवताथ वै । ३८७०
॥ गाव ऊचुः ॥ अध्रुवा चपला च त्वं सामान्या बहुभिः सह । न त्वामिच्छाम भद्रं ते गम्यतां यत्र रंस्यसे ।
वपुष्मत्यो वयं सर्व्वाः किमस्माकं त्वयाऽद्य वै । यथेष्टं गम्यतां तत्र कृतकार्य्या वयं त्वया ।
॥ श्रीरुवाच ॥ किमेतद्वः क्षमं गावो यन्मां नेहाभिनन्दथ । न मां संप्रतिगृह्णीध्वं कस्माद्वै दुर्ल्लभां सतीं ।
सत्यश्च लोकवादोऽयं लोके चरति सुव्रताः । स्वयं प्राप्ते परिभवो भवतीति विनिश्चयः ।
महदुग्रं तपः कृत्वा मां निषेवन्ति मानवाः । देवदानवगन्धर्व्वाः पिशाचोरगराक्षसाः । ३८७५
प्रभाव एष वो गावः प्रतिगृह्णीत मामिह । नावमन्या ह्यहं सौम्यास्त्रैलोक्ये सचराचरे ।
॥ गाव ऊचुः ॥ नावमन्यामहे देवि न त्वां परिभवामहे । अध्रुवा चलचित्ताऽसि ततस्त्वां वर्जयामहे ।

बहुनाऽत्र किमुक्तेन गम्यतां यत्र वाञ्छसि । वपुष्मत्यो वयं सर्व्वाः किमस्माकं त्वयाऽनघे ।
॥ श्रीरुवाच ॥ अवज्ञाता भविष्यामि सर्व्वलोकस्य मानदाः । प्रत्याख्यानेन युष्माकं प्रसादः क्रियतां मम ।
महाभागा भवत्यो वै शरण्याः शरणागतां । परित्रायन्तु मां नित्यं भजमानामनिन्दितां । ४०७०
माननामहमिच्छामि भवत्यः सततं शुभाः । अप्येकाङ्गेऽप्यधो वस्तुमिच्छामि च सुकुत्सिते ।
न वोऽस्ति कुत्सितं किञ्चिदङ्गेष्वालक्ष्यतेऽनघाः । पुण्याः पवित्राः सुभगा ममादेशं प्रयच्छत ।
वसेयं यत्र वो देहे तन्मे व्याख्यातुमर्हथ । एवमुक्तास्तु ता गावः शुभाः करुणवत्सलाः ।
सम्मन्त्र्य सहिताः सर्व्वाः श्रियमूचुर्नराधिप । अवश्यं मानना कार्य्या तवास्माभिर्यशस्विनि ।
शकृन्मूत्रे निवस त्वं पुण्यमेतद्धि नः शुभे । ४०७५
॥ श्रीरुवाच ॥ दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः । एवं भवतु भद्रं वः पूजिताऽस्मि सुखप्रदाः ।
एवं कृत्वा तु समयं श्रीर्गोभिः सह भारत । पश्यन्तीनां ततस्तासां तत्रैवान्तरधीयत ।
एवं गोशकृतः पुत्र माहात्म्यं तेऽनुवर्णितं । माहात्म्यं च गवां भूयः श्रूयतां गदतो मम ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने गोप्रदानिके द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
॥ भीष्म उवाच ॥ ये च गां सम्प्रयच्छन्ति हुतशिष्टाशिनश्च ये । तेषां सत्राणि यज्ञाश्च नित्यमेव युधिष्ठिर ।
ऋते दधिघृतेनेह न यज्ञः सम्प्रवर्त्तते । तेन यज्ञस्य यज्ञत्वमतो मूलञ्च कथ्यते । ४०८०
दानानामपि सर्व्वेषां गवां दानं प्रशस्यते । गावः श्रेष्ठाः पवित्राश्च पावनं ह्येतदुत्तमं ।
पुष्ट्यर्थमेताः सेवेत शान्त्यर्थमपि चैव ह । पयो दधि घृतञ्चासां सर्व्वपापप्रमोचनं ।
गावस्तेजः परं प्रोक्तमिह लोके परत्र च । न गोभ्यः परमं किञ्चित् पवित्रं भरतर्षभ ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । पितामहस्य संवादमिन्द्रस्य च युधिष्ठिर ।
पराभूतेषु दैत्येषु शक्रस्त्रिभुवनेश्वरः । प्रजाः समुदिताः सर्व्वाः सत्यधर्म्मपरायणाः । ४०८५
अथर्षयः सगन्धर्व्वाः किन्नरोरगराक्षसाः । देवासुरसुपर्णाश्च प्रजानां पतयस्तथा ।
पर्य्युपासन्त कौरव्य कदाचिद्वै पितामहं । नारदः पर्व्वतश्चैव विश्वावसुर्हहाहुहूः ।
दिव्यतानेषु गायन्तः पर्य्युपासन्त तं प्रभुं । तत्र दिव्यानि पुष्पाणि प्रावहत् पवनस्तदा ।
आजह्रुरृतवश्चापि सुगन्धीनि पृथक् पृथक् । तस्मिन् देवसमावाये सर्व्वभूतसमागमे ।
दिव्यवादित्रसंघुष्टे दिव्यस्त्रीचारणावृते । इन्द्रः पप्रच्छ देवेशमभिवाद्य प्रणम्य च । ४०९०
देवानां भगवन् कस्माल्लोकेशानां पितामह । उपरिष्टाद्गवां लोक एतदिच्छामि वेदितुं ।
किं तपो ब्रह्मचर्य्यं वा गोभिः कृतमिहेश्वर । देवानामुपरिष्टाच्च वसन्त्यरजसः सुखं ।
ततः प्रोवाच ब्रह्मा तं शक्रं बलनिसूदनं । अवज्ञातास्त्वया नित्यं गावो बलनिसूदन ।
तेन त्वमासां माहात्म्यं न वेत्सि शृणु यत् प्रभो । गवां प्रभावं परमं माहात्म्यञ्च सुरर्षभ ।
यज्ञाङ्गं कथिता गावो यज्ञ एव च वासव । एताभिश्च विना यज्ञो न वर्त्तेत कथञ्चन । ४०९५
धारयन्ति प्रजाश्चैव पयसा हविषा तथा । एतासां तनयाश्चापि कृषियोगमुपासते ।

जनयन्ति च धान्यानि बीजानि विविधानि च। ततो यज्ञाः प्रवर्त्तन्ते हव्यं कव्यञ्च सर्व्वशः।
पयो दधि घृतञ्चैव पुण्याश्चैताः सुराधिप। वहन्ति विविधान् भारान् क्षुत्तृष्णापरिपीडिताः।
मुनींश्च धारयन्तीह प्रजाश्चैवापि कर्म्मणा। वासवाकूटवाहिन्यः कर्म्मणा सुकृतेन च।
उपरिष्टात्ततोऽस्माकं वसन्त्येताः सदैव हि। एतत्ते कारणं शक्र निवासकृतमद्य वै। ३९८०
गवां देवोपरिष्टाद्धि समाख्यातं शतक्रतो। एता हि वरदत्ताश्च वरदाश्चापि वासव।
सुरभ्यः पुण्यकर्म्मिण्यः पावनाः शुभलक्षणाः। यदर्थं गां गताश्चैव सुरभ्यः सुरसत्तम।
तच्च मे शृणु कार्त्स्न्येन वदतो बलसूदन। पुरा देवयुगे तात दैत्येन्द्रेषु महात्मसु।
त्रीन् लोकाननुशासत्सु विष्णौ गर्भत्वमागते। अदित्यास्तप्यमानायास्तपो घोरं सुदुश्चरं।
पुत्त्रार्थममरश्रेष्ठ पादेनैकेन नित्यदा। तान्तु दृष्ट्वा महादेवीं तप्यमानां महत्तपः। ३९८५
दक्षस्य दुहिता देवी सुरभी नाम नामतः। अतप्यत तपो घोरं हृष्टा धर्म्मपरायणा।
कैलासशिखरे रम्ये देवगन्धर्व्वसेविते। व्यतिष्ठदेकपादेन परमं योगमास्थिता।
दशवर्षसहस्राणि दशवर्षशतानि च। सन्तप्तास्तपसा तस्या देवाः सर्षिमहोरगाः।
तत्र गत्वा मया सार्द्धं पर्य्युपासन्त तां शुभां। अथाहमब्रुवं तत्र देवीं तां तपसान्वितां।
किमर्थं तप्यसे देवि तपो घोरमनिन्दिते। प्रीतस्तेऽहं महाभागे तपसाऽनेन शोभने। ३९९०
वरयस्व वरं देवि दाताऽस्मीति पुरन्दर।
॥ सुरभ्युवाच ॥ वरेण भगवन् मह्यं कृतं लोकपितामह। एष एव वरो मेऽद्य यत् प्रीतोऽसि ममानघ।
॥ ब्रह्मोवाच ॥ तामेवं ब्रुवतीं देवीं सुरभीं त्रिदशेश्वर। प्रत्यब्रुवं यद्देवेन्द्र तन्निबोध शचीपते।
अलोभकाम्यया देवि तपसा च शुभानने। प्रसन्नोऽहं वरं तस्मादमरत्वं ददामि ते।
त्रयाणामपि लोकानामुपरिष्टान्निवत्स्यसि। मत्प्रसादाच्च विख्यातो गोलोकः स भविष्यति। ३९९५
मानुषेषु च कुर्व्वाणाः प्रजाः कर्म्म शुभन्तया। निवत्स्यन्ति महाभागे सर्व्वा दुहितरश्च ते।
मनसा चिन्तिता भोगास्तया वै दिव्यमानुषाः। यच्च स्वर्गे सुखं देवि तत्तत् सम्पत्स्यते शुभे।
तस्या लोकाः सहस्राक्ष सर्व्वकामसमन्विताः। न तत्र क्रमते मृत्युर्न जरा न च पावकः।
न दैवं वाऽशुभं किञ्चिद्विद्यते तत्र वासव। तत्र दिव्यान्यरण्यानि दिव्यान्याभरणानि च।
विमानानि सुयुक्तानि कामगानि च वासव। ब्रह्मचर्य्येण तपसा सत्येन च दमेन च। ४०००
दानैश्च विविधैः पुण्यैस्तथा तीर्थानुसेवनात्। तपसा महता चैव सुकृतेन च कर्म्मणा।
शक्यः समासादयितुं गोलोकः पुष्करेक्षण। एतत्ते सर्व्वमाख्यातं मया शक्रानुपृच्छते।
न ते परिभवः कार्य्यो गवामसुरसूदन।
॥ भीष्म उवाच ॥ एवं श्रुत्वा सहस्राक्षः पूजयामास नित्यदा। गाश्चक्रे बहुमानञ्च तासु नित्यं युधिष्ठिर।
एतत्ते सर्व्वमाख्यातं पावनञ्च महाद्युते। पवित्रं परमञ्चापि गवां माहात्म्यमुत्तमं। ४००५
कीर्त्तितं पुरुषव्याघ्र सर्व्वपापप्रमोचनं। य इदं कथयेन्नित्यं ब्राह्मणेभ्यः समाहितः।

स्वयंवरेषु चान्येषु विवाहार्थेषु चैव हि । वाञ्छितानि [illegible] सिद्धयश्चोपतिष्ठते ।
गोषु भक्तश्च लभते यद्यदिच्छति मानवः । स्त्रियोऽपि भक्ता या गोषु ताश्च काममवाप्नुयुः ।
पुत्रार्थी लभते पुत्रं कन्यार्थी तामवाप्नुयात् । धनार्थी लभते वित्तं धर्म्मार्थी धर्म्ममाप्नुयात् ।
विद्यार्थी चाप्नुयाद्विद्यां सुखार्थी प्राप्नुयात् सुखं । न किञ्चिद्दुर्लभञ्चैव गवां भक्तस्य भारत । ३९८०

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मे गवोपनिषदि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

॥ युधिष्ठिर उवाच ॥ उक्तं पितामहेनेदं गवां दानमनुत्तमं । विशेषेण नरेन्द्राणामिह धर्म्ममवेक्षतां ।
राज्यं हि सततं दुःखं दुर्द्धरञ्चाकृतात्मभिः । भूयिष्ठञ्च नरेन्द्राणां विद्यते न शुभा गतिः ।
पूयन्ते तत्र नियतं प्रयच्छन्तो वसुन्धरां । सर्व्वे च कथिता धर्म्मास्त्वया मे कुरुनन्दन ।
एवमेव गवामुक्तं प्रदानं ते नृगेण च । ऋषिणा नाचिकेतेन पूर्व्वमेव निदर्शितं ।
वेदोपनिषदश्चैव सर्व्वकर्म्मसु दक्षिणाः । सर्व्वक्रतुषु चोद्दिष्टं भूमिर्गावोऽथ काञ्चनं । ३९८५
तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै । एतदिच्छाम्यहं श्रोतुं पितामह यथातथं ।
किं सुवर्णं कथं जातं कस्मिन् काले किमात्मकं । किन्दैवं किम्फलञ्चैव कस्माच्च परमुच्यते ।
कस्माद्दानं सुवर्णस्य पूजयन्ति मनीषिणः । कस्माच्च दक्षिणार्थं तद्यज्ञकर्म्मसु शस्यते ।
कस्माच्च पावनं श्रेष्ठं भूमेर्गोभ्यश्च काञ्चनं । परमं दक्षिणार्थे च तद्ब्रवीहि पितामह ।
॥ भीष्म उवाच ॥ शृणु राजन्नवहितो बहुकारणविस्तरं । जातरूपसमुत्पत्तिमनुभूतञ्च यन्मया । ३९९०
पिता मम महातेजाः शान्तनुर्निधनङ्गतः । तस्य दित्सुरहं श्राद्धं गङ्गाद्वारमुपागमं ।
तत्रागम्य पितुः पुत्र श्राद्धकर्म्म समारभं । माता मे जाह्नवी चात्र साहाय्यमकरोत्तदा ।
ततोऽग्रतस्तपःसिद्धानुपवेश्य बहूनृषीन् । तोयप्रदानात् प्रभृति कार्य्याण्यहमथारभं ।
तत् समाप्य यथोद्दिष्टं पूर्व्वकर्म्म समाहितः । दातुं निर्व्वपणं सम्यग्यथावदहमारभं ।
ततस्तं दर्भविन्यासं भित्त्वा सुरुचिराङ्गदः । प्रलम्बाभरणो बाहुरुदतिष्ठद्विशाम्पते । ३९९५
समुत्थितमहं दृष्ट्वा परं विस्मयमागमं । प्रतिग्रहीता साक्षान्मे पितेति भरतर्षभ ।
ततो मे पुनरेवासीत् संज्ञा सञ्चिन्त्य शास्त्रतः । नायं वेदेषु विहितो विधिर्हस्त इति प्रभो ।
पिण्डो देयो नरेणेह ततो मतिरभून्मम । साक्षान्नेह मनुष्यस्य पिण्डं हि पितरः क्वचित् ।
गृह्णन्ति विहितस्त्वेवं पिण्डो देयः कुशेष्विति । ततोऽहं तदनादृत्य पितुर्हस्तनिदर्शनं ।
शास्त्रप्रामाण्यसूक्ष्मन्तु विधिं पिण्डस्य संस्मरन् । ततो दर्भेषु तत् सर्व्वमददं भरतर्षभ । ४०००
शास्त्रमार्गानुसारेण तद्विद्धि मनुजर्षभ । ततः सोऽन्तर्हितो बाहुः पितुर्मम नराधिप ।
ततो मे दर्शयामासुः स्वप्नान्ते पितरस्तथा । प्रीयमाणास्तु मामूचुः प्रीताः स्म भरतर्षभ ।
विज्ञानेन तवानेन यन्न मुह्यसि धर्म्मतः । त्वया हि कुर्व्वता शास्त्रं प्रमाणमिह पार्थिव ।
आत्मा धर्म्मः श्रुतं वेदाः पितरश्चर्षिभिः सह । साक्षात् पितामहो ब्रह्मा गुरवोऽथ प्रजापतिः ।
प्रमाणमुपनीता वै स्थिताश्च न विचालिताः । तदिदं सम्यगारब्धं त्वयाद्य भरतर्षभ । ४००५

विवशा नाशकद्गर्भं वोढुमाज्ञानमेव च। सा तु तेजःपरीताङ्गी कम्पमानेव जाह्नवी। ४०७५
उवाच वचनं विप्र तदा गर्भबलोद्धता। न ते शक्तास्मि भगवंस्तेजसोऽस्य विधारणे।
विमूढास्मि कृताऽनेन न मे स्वास्थ्यं यथा पुरा। विह्वला चास्मि भगवंश्चेतो नष्टञ्च मेऽनघ।
धारणे नास्य शक्ताऽहं गर्भस्य तपताम्बर। उत्स्रक्ष्येऽहमिमं दुःखान्न तु कामात् कथञ्चन।
न तेजसोऽस्ति संस्पर्शो मम देव विभावसो। आपदर्थं हि सम्बन्धः सुसूक्ष्मोऽपि महाद्युते।
यदत्र गुणसम्पन्नमितरद्वा हुताशन। मय्येव तदहं मन्ये धर्माधर्मौ च केवलौ। ४०८०
तामुवाच ततो वह्निर्धार्यतां धार्यतामिति। गर्भो मत्तेजसा युक्तो महागुणफलोदयः।
शक्ता ह्यसि महीं कृत्स्नां वोढुं धारयितुं तथा। न हि ते किञ्चिदप्राप्यमन्यतो धारणादृते।
सा वह्निना वार्यमाणा देवैरपि सरिद्वरा। समुत्ससर्ज तं गर्भं मेरौ गिरिवरे तदा।
समर्था धारणे चापि रुद्रतेजःप्रधर्षिता। नाशकत्तं तदा गर्भं सन्धारयितुमोजसा।
सा समुत्सृज्य तं दुःखाद्दीप्तवैश्वानरप्रभं। दर्शयामास चाग्निस्तां तदा गङ्गां भृगूद्वह। ४०८५
पप्रच्छ सरितां श्रेष्ठां कच्चिद्गर्भः सुखोदयः। कीदृग्वर्णोऽपि वा देवि कीदृग्रूपश्च दृश्यते।
तेजसा केन वा युक्तः सर्वमेतद्ब्रवीहि मे।
॥ गङ्गोवाच ॥ जातरूपः स गर्भो वै तेजसा त्वमिवानघ। सुवर्णो विमलो दीप्तः पर्वतञ्चावभासयत्।
पद्मोत्पलविमिश्राणां ह्रदानामिव शीतलः। गन्धोऽस्य सकदम्बानां तुल्यो वै तपताम्बर।
तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः। यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्वतेषु च। ४०९०
तत् सर्वं काञ्चनीभूतं समन्तात् प्रत्यदृश्यत। पर्यधावत शैलांश्च नदीः प्रस्रवणानि च।
व्यादीपयंस्तेजसा च त्रैलोक्यं सचराचरं। एवंरूपः स भगवान् पुत्रस्ते हव्यवाहन।
सूर्यवैश्वानरसमः कान्त्या सोम इवापरः। एवमुक्त्वा तु सा देवी तत्रैवान्तरधीयत।
पावकश्चापि तेजस्वी कृत्वा कार्य्यं दिवौकसां। जगामेष्टं ततो देशं तदा भार्गवनन्दन।
एतैः कर्मगुणैर्लोके नामाग्नेः परिगीयते। हिरण्यरेता इति वै ऋषिभिर्विबुधैस्तथा। ४०९५
पृथिवी च तदा देवी ख्याता वसुमतीति वै। स तु गर्भो महातेजा गाङ्गेयः पावकोद्भवः।
दिव्यं शरवणं प्राप्य ववृधेऽद्भुतदर्शनः। ददृशुः कृत्तिकास्तं तु बालार्कसदृशद्युतिं।
पुत्रस्नेहाच्च तं बालं पुपुषुः स्तन्यविस्रवैः। ततः स कार्त्तिकेयत्वमवाप परमद्युतिः।
स्कन्नत्वात् स्कन्दताञ्चापि गुहावासाद्गुहोऽभवत्। एवं सुवर्णमुत्पन्नमपत्यं जातवेदसः।
तत्र जाम्बूनदं श्रेष्ठं देवानामपि भूषणं। ततः प्रभृति चाप्येतज्जातरूपमुदाहृतं। ४१००
रत्नानामुत्तमं रत्नं भूषणानां तथोत्तमं। पवित्रञ्च पवित्राणां मङ्गलानाञ्च मङ्गलं।
यत् सुवर्णं स भगवानग्निरीशः प्रजापतिः। पवित्राणां पवित्रं हि कनकं द्विजसत्तम।
अग्नीषोमात्मकञ्चैव जातरूपमुदाहृतं।
॥ वशिष्ठ उवाच ॥ अपि चेदं पुरा राम श्रुतं मे ब्रह्मदर्शनं। पितामहस्य यद्वृत्तं ब्रह्मणः परमात्मनः।

देवस्य महतस्तात वारुणीं बिभ्रतस्तनुं । ऐश्वर्य्यं वारुणे राम रुद्रस्येशस्य वै प्रभोः । ४१०५
आजग्मुर्मुनयः सर्व्वे देवाश्चाग्निपुरोगमाः । यज्ञाङ्गानि च सर्व्वाणि वषट्कारश्च मूर्त्तिमान् ।
मूर्त्तिमन्ति च सामानि यजूंषि च सहस्रशः । ऋग्वेदश्चागमत्तत्र पदक्रमविभूषितः ।
लक्षणानि स्वरास्तोभा निरुक्तं सुरपङ्क्तयः । ओङ्कारश्चावसन्नेत्रे निग्रहप्रग्रहौ तथा ।
वेदाश्च सोपनिषदो विद्या सावित्र्यथापि च । भूतं भव्यं भविष्यच्च दधार भगवान् शिवः ।
संजुहावात्मनात्मानं स्वयमेव तदा प्रभो । यज्ञस्य शोभयामास बहुरूपं पिनाकधृक् । ४११०
द्यौर्नभः पृथिवीं खञ्च तथा चैवैष भूपतिः । सर्व्वविद्येश्वरः श्रीमानेष चापि विभावसुः ।
एष ब्रह्मा शिवो रुद्रो वरुणोऽग्निः प्रजापतिः । कीर्त्यते भगवान् देवः सर्व्वभूतपतिः शिवः ।
तस्य यज्ञः पशुपतेस्तपः क्रतव एव च । दीक्षा दीप्तव्रता देवी दिशश्च सदिगीश्वराः ।
देवपत्न्यश्च कन्याश्च देवानाञ्चैव मातरः । आजग्मुः सहितास्तत्र तदा भृगुकुलोद्वह ।
यज्ञं पशुपतेः प्रीता वरुणस्य महात्मनः । स्वयम्भुवस्तु ता दृष्ट्वा रेतः समपतद्भुवि । ४११
तस्य शुक्रस्य विस्यन्दात् पांशून् संगृह्य भूमितः । प्रास्यत् पूषा कराभ्यां वै तस्मिन्नेव हुताशने ।
ततस्तस्मिन् संप्रवृत्ते सत्रे ज्वलितपावके । ब्रह्मणो जुह्वतस्तत्र प्रादुर्भावो बभूव ह ।
स्कन्नमात्रञ्च तच्छुक्रं स्रुवेण परिगृह्य सः । आज्यवन्मन्त्रतश्चापि सोऽजुहोद्भृगुनन्दन ।
ततस्तु जनयामास भूतग्रामञ्च वीर्य्यवान् । तस्य तत्तेजसस्तस्माज्जज्ञे लोकेषु तैजसं ।
तमसस्तामसा भावा व्यापि सत्त्वं तथोभयं । स गुणस्तेजसो नित्यस्तस्य चाकाशमेव च । ४१२०
सर्व्वभूतेषु च तथा सत्त्वं तेजस्तथोत्तमं । शुक्रे हुतेऽग्नौ तस्मिंस्तु प्रादुरासंस्त्रयः प्रभो ।
पुरुषा वपुषा युक्ताः स्वैः स्वैः प्रसवजैर्गुणैः । भृगित्येव भृगुः पूर्व्वमङ्गारेभ्योऽङ्गिराऽभवत् ।
अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत् । सह ज्वालाभिरुत्पन्नो भृगुस्तस्माद्भृगुः स्मृतः ।
मरीचिभ्यो मरीचिस्तु मारीचः कश्यपो ह्यभूत् । अङ्गारेभ्योऽङ्गिरास्तात वालिखिल्याः कुशोच्चयात् ।
अत्रैवात्रेति च विभो जातमत्रिं वदन्त्यपि । तथा भस्मव्यपोहेभ्यो ब्रह्मर्षिगणसम्मताः । ४१२५
वैखानसाः समुत्पन्नास्तपःश्रुतगुणेप्सवः । अश्रुतोऽस्य समुत्पन्नावश्विनौ रूपसम्मतौ ।
शेषाः प्रजानां पतयः स्रोतोभ्यस्तस्य जज्ञिरे । ऋषयो रोमकूपेभ्यः स्वेदाच्छन्दो बलात्मनः ।
एतस्मात् कारणादाहुरग्निं सर्व्वास्तु देवताः । ऋषयः श्रुतसम्पन्ना वेदप्रामाण्यदर्शनात् ।
यानि दारूणि ते मासा निर्य्यासाः पक्षसंज्ञिताः । अहोरात्रा मुहूर्त्तास्तु पित्तं ज्योतिश्च वारुणं ।
रौद्रं लोहितमित्याहुर्लोहितात् कनकं स्मृतं । तन्मैत्रमिति विज्ञेयं धूमाच्च वसवः स्मृताः । ४१३०
अर्च्चिषो याश्च ते रुद्रास्तथादित्या महाप्रभाः । उद्दिष्टास्ते तथाऽङ्गारा ये धिष्ण्येषु दिवि स्थिताः ।
आदिकर्त्ता च लोकस्य तत्परं ब्रह्म तद्ध्रुवं । सर्व्वकामदमित्याहुस्तद्रहस्यमुवाच ह ।
ततोऽब्रवीन्महादेवो वरुणः पवनात्मकः । मम सत्रमिदं दिव्यमहं गृहपतिस्त्विह ।
त्रीणि पूर्व्वाण्यपत्यानि मम तानि न संशयः । इति जानीत खगमा मम यज्ञफलं हि तत् ।

॥ अग्निरुवाच ॥ मदङ्गेभ्यः प्रसूतानि मदाश्रयकृतानि च । ममैव तान्यपत्यानि वरुणो ह्यवशात्मकः । ॥४१२८

अथाब्रवील्लोकगुरुर्ब्रह्मा लोकपितामहः । ममैव तान्यपत्यानि मम शुक्रं हुतं हि तत् ।

अहं कर्त्ता हि सत्रस्य होता शुक्रस्य चैव ह । यस्य बीजं फलं तस्य शुक्रञ्चेत् कारणं मतं ।

ततोऽब्रुवन् देवगणाः पितामहमुपेत्य वै । कृताञ्जलिपुटाः सर्व्वे शिरोभिरभिवन्द्य च ।

वयञ्च भगवन् सर्व्वे जगच्च सचराचरं । तवैव प्रसवाः सर्व्वे तस्मादग्निर्विभावसुः ।

वरुणश्चेश्वरो देवो लभतां काममीप्सितं । निसर्गाद्ब्रह्मणश्चापि वरुणो यादसाम्पतिः । ॥४१३०

जग्राह वै भृगुं पूर्व्वमपत्यं सूर्य्यवर्च्चसं । ईश्वरोऽङ्गिरसञ्चाग्निरपत्यार्थमकल्पयत् ।

पितामहस्त्वपत्यं वै कविं जग्राह तत्त्ववित् । तदा स वारुणः ख्यातो भृगुः प्रसवकर्म्मकृत् ।

आग्नेयस्त्वङ्गिराः श्रीमान् कविर्ब्राह्मो महायशाः । भार्गवाङ्गिरसौ लोके लोकसन्तानलक्षणौ ।

एते हि प्रसवाः सर्व्वे प्रजानां पतयस्त्रयः । सर्व्वं सन्तानमेतेषामिदमित्युपधारय ।

भृगोस्तु पुत्राः सप्तासन् सर्व्वे तुल्या भृगोर्गुणैः । च्यवनो वज्रशीर्षश्च शुचिरौर्व्वस्तथैव च । ॥४१३५

शुक्रो वरेण्यश्च विभुः सवनश्चेति सप्त ते । भार्गवा वारुणाः सर्व्वे येषां वंशे भवानपि ।

अष्टौ चाङ्गिरसः पुत्रा वारुणास्तेऽप्युदाहृताः । बृहस्पतिरुतथ्यश्च पयस्यः शान्तिरेव च ।

घोरो विरूपः संवर्त्तः सुधन्वा चाष्टमः स्मृतः । एतेऽष्टौ वह्निजाः सर्व्वे ज्ञाननिष्ठा निरामयाः ।

ब्रह्मणस्तु कवेः पुत्रा वारुणास्तेऽप्युदाहृताः । अष्टौ प्रसवजैर्युक्ता गुणैर्ब्रह्मविदः शुभाः ।

कविः काव्यश्च धृष्णुश्च बुद्धिमानुशनास्तथा । भृगुश्च विरजाश्चैव काशी चोग्रश्च धर्म्मवित् । ॥४१४०

अष्टौ कविसुता ह्येते सर्व्वमेभिर्जगत्ततं । प्रजापतय एते हि प्रजाता यैरिह प्रजाः ।

एवमङ्गिरसश्चैव कवेश्च प्रसवान्वयैः । भृगोश्च भृगुशार्दूल वंशजैः सततं जगत् ।

वरुणश्चादितो विप्र जग्राह प्रभुरीश्वरः । कविन्तात भृगुञ्चापि तस्मात्तौ वारुणौ स्मृतौ ।

जग्राहाङ्गिरसं देवः शिखी तस्माद्धुताशनः । तस्मादाङ्गिरसा ज्ञेयाः सर्व्व एव तदन्वयाः ।

ब्रह्मा पितामहः पूर्व्वं देवताभिः प्रसादितः । इमे नः सन्तरिष्यन्ति प्रजाभिर्जगतीश्वराः । ॥४१४५

सर्व्वे प्रजानां पतयः सर्व्वे चापि तपस्विनः । त्वत्प्रसादादिमं लोकं तारयिष्यन्ति साम्प्रतं ।

तथैव वंशकर्त्तारस्तव तेजोविवर्द्धनाः । भवेयुर्व्वेदविदुषः सर्व्वे च कृतिनस्तथा ।

देवपक्षचराः सौम्याः प्राजापत्या महर्षयः । आप्नुवन्ति तपश्चैव ब्रह्मचर्य्यं परन्तथा ।

सर्व्वे हि वयमेते च तवैव प्रसवः प्रभो । देवानां ब्राह्मणानाञ्च त्वं हि कर्त्ता पितामह ।

मरीचिमादितः कृत्वा सर्व्वे चैवाथ भार्गवाः । अपत्यानीति सम्प्रेक्ष्य क्षमयाम पितामह । ॥४१५०

ते त्वनेनैव रूपेण प्रजनिष्यन्ति वै प्रजाः । स्थापयिष्यन्ति चात्मानं युगादिनिधने तथा ।

इत्युक्तः स तदा तैस्तु ब्रह्मा लोकपितामहः । तथेत्येवाब्रवीत् प्रीतस्तेऽपि जग्मुर्यथागतं ।

एवमेतत् पुरावृत्तं तस्य यज्ञे महात्मनः । देवश्रेष्ठस्य लोकादौ वारुणीं बिभ्रतस्तनुं ।

अग्निर्ब्रह्मा पशुपतिः शर्व्वो रुद्रः प्रजापतिः । अग्नेरपत्यमेतद्वै सुवर्णमिति धारणा ।

अग्न्यभावे च कुर्वन्ति वह्निस्थानेषु काञ्चनं । जामदग्न्यः प्रमाणज्ञो वेदश्रुतिनिदर्शनात् । ॥१६५

कुशस्तम्बे जुहोत्यग्निं सुवर्णे तत्र चाहिते । वल्मीकस्य वपायाञ्च कर्णे वाजस्य दक्षिणे ।

शकटोर्व्व्यां परस्याप्सु ब्राह्मणस्य करेऽपि वा । हुते प्रीतिकरीमृद्धिं भगवांस्तत्र मन्यते ।

तस्मादग्निपराः सर्व्वे देवता इति शुश्रुम । ब्रह्मणो हि प्रसूतोऽग्निरग्नेरपि च काञ्चनं ।

तस्मात् ये वै प्रयच्छन्ति सुवर्णं धर्म्मदर्शिनः । देवतास्ते प्रयच्छन्ति समस्ता इति नः श्रुतं ।

तस्य चातमसो लोकान् गच्छतः परमाकृतिं । स्वर्लोके राजराज्ये च सोऽभिषिच्येत भार्गव । ॥१७०

आदित्योदयसम्प्राप्ते विधिमन्त्रपुरस्कृतं । ददाति काञ्चनं यो वै दुःस्वप्नं प्रतिहन्ति सः ।

ददात्युदितमात्रे यस्तस्य पाप्मा विधूयते । मध्याह्ने ददतो रुक्मं हन्ति पापमनागतं ।

ददाति पश्चिमां सन्ध्यां यः सुवर्णं यतव्रतः । ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयाति सः ।

सेन्द्रेषु चैव लोकेषु प्रतिष्ठां विन्दते शुभां । इह लोके यशः प्राप्य शान्तपाप्मा च मोदते ।

ततः सम्पद्यते ऽन्येषु लोकेष्वप्रतिमः सदा । अनावृतगतिश्चैव कामचारो भवत्युत । ॥१७५

न च क्षरति तेभ्यश्च यशश्चैवाप्नुते महत् । सुवर्णमक्षयं दत्त्वा लोकांश्चाप्नोति पुष्कलान् ।

यस्तु संजनयित्वाऽग्निमादित्योदयनं प्रति । दद्याद्वै व्रतमुद्दिश्य सर्व्वकामान् समश्नुते ।

अग्निमित्येव तत् प्राहुः प्रदानं वै सुखावहं । यथेष्टगुणसंवृत्तं प्रवर्त्तकमिति स्मृतं ।

एषा सुवर्णस्योत्पत्तिः कथिता ते मयाऽनघ । कार्त्तिकेयस्य च विभो तद्विद्धि भृगुनन्दन ।

कार्त्तिकेयस्तु संवृद्धः कालेन महता तदा । देवैः सेनापतित्वेन वृतः सेन्द्रैर्भृगूद्वह । ॥१८०

जघान तारकञ्चापि दैत्यमन्यांस्तथाऽसुरान् । त्रिदशेन्द्राज्ञया ब्रह्मन् लोकानां हितकाम्यया ।

सुवर्णदाने च मया कथितास्ते गुणा विभो । तस्मात् सुवर्णं विप्रेभ्यः प्रयच्छ ददतांवर ।

॥ भीष्म उवाच ॥ इत्युक्तः स वसिष्ठेन जामदग्न्यः प्रतापवान् । ददौ सुवर्णं विप्रेभ्यो व्यमुच्यत च किल्बिषात् ।

एतत्ते सर्व्वमाख्यातं सुवर्णस्य महीपते । प्रदानस्य फलञ्चैव जन्म चास्य युधिष्ठिर ।

तस्मात्त्वमपि विप्रेभ्यः प्रयच्छ कनकं बहु । ददत् सुवर्णं नृपते किल्बिषाद्विप्रमोक्ष्यसे । ॥१८५

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने सुवर्णोत्पत्त्युपाख्याने पञ्चाशीतोऽध्यायः ॥८५॥

॥ युधिष्ठिर उवाच ॥ उक्ताः पितामहेनेह सुवर्णस्य विधानतः । विस्तरेण प्रदानस्य ये गुणाः श्रुतिलक्षणाः ।

यत्तु कारणमुत्पत्तेः सुवर्णस्य प्रकीर्त्तितं । स कथं तारकः प्राप्तो निधनं तद्ब्रवीहि मे ।

उक्तः स देवतानां हि अवध्य इति पार्थिव । कथं तस्याभवन्मृत्युर्व्विस्तरेण प्रकीर्त्तय ।

एतदिच्छाम्यहं श्रोतुं त्वत्तः कुरुकुलोद्वह । कार्त्स्न्येन तारकवधं परं कौतूहलं हि मे ।

॥ भीष्म उवाच ॥ विपन्नकृत्या राजेन्द्र देवता ऋषयस्तथा । कृत्तिकाश्चोदयामासुरपत्यभरणाय वै । ॥१९०

न देवतानां काचिद्धि समर्था जातवेदसः । एता हि शक्तास्तं गर्भं सम्भारयितुमोजसा ।

षण्णां तासां ततः प्रीतः पावको गर्भधारणात् । स्वेन तेजोविसर्गेण वीर्य्येण परमेण च ।

तास्तु षट् कृत्तिका गर्भं पुपुषुर्ज्जातवेदसः । षट्सु वर्त्मसु तेजोऽग्नेः सकलं निहितं प्रभो ।

ततस्तां वर्द्धमानस्य कुमारस्य महात्मनः । तेजसाऽभिपरीताङ्ग्यो न क्वचिच्छर्म्म लेभिरे ।
ततस्तेजःपरीताङ्ग्यः सर्व्वाः काल उपस्थिते । समं गर्भं सुषुविरे कृत्तिकास्तं नरर्षभ । ४१९५
ततस्तं षडधिष्ठानं गर्भमेकत्वमागतं । पृथिवी प्रतिजग्राह कार्त्तस्वरसमीपतः ।
स गर्भो दिव्यसंस्थानो दीप्तिमान् पावकप्रभः । दिव्यं शरवणं प्राप्य ववृधे प्रियदर्शनः ।
ददृशुः कृत्तिकास्तन्तु बालमर्कसमद्युतिं । जातस्नेहाश्च सौहार्द्दात् पुपुषुस्तं स्तनस्रवैः ।
अभवत् कार्त्तिकेयः स त्रैलोक्ये सचराचरे । स्कन्नत्वात् स्कन्दतां प्राप्तो गुहावासाद्गुहोऽभवत् ।
ततो देवास्त्रयस्त्रिंशद्दिशश्च सदिगीश्वराः । रुद्रो धाता च विष्णुश्च यमः पूषाऽर्य्यमा भगः । ४२००
अंशो मित्रश्च साध्याश्च वासवो वसवोऽश्विनौ । आपो वायुर्नभश्चन्द्रो नक्षत्राणि ग्रहा रविः ।
पृथग्भूतानि चान्यानि यानि देवार्पणानि वै । आजग्मुस्तेऽद्भुतं द्रष्टुं कुमारं ज्वलनात्मजं ।
ऋषयस्तुष्टुवुश्चैव गन्धर्व्वाश्च जगुस्तथा । षडाननं कुमारन्तु द्विषडक्षं द्विजप्रियं ।
पीनांसं द्वादशभुजं पावकादित्यवर्च्चसं । शयानं शरगुल्मस्थं दृष्ट्वा देवाः सहर्षिभिः ।
लेभिरे परमं हर्षं मेनिरे चासुरं हतं । ततो देवाः प्रियाण्यस्य सर्व्व एव समाहरन् । ४२०५
क्रीडतः क्रीडनीयानि ददुः पक्षिगणांश्च ह । सुपर्णोऽस्य ददौ पुत्रं मयूरं चित्रबर्हिणं ।
राक्षसाश्च ददुस्तस्मै वराहमहिषावुभौ । कुक्कुटञ्चाग्निसङ्काशं प्रददावरुणः स्वयं ।
चन्द्रमाः प्रददौ मेषमादित्यो रुचिरां प्रभां । गवां माता च गा देवी ददौ शतसहस्रशः ।
छागमग्निर्गुणोपेतमिला पुष्पफलं बहु । सुधन्वा शकटञ्चैव रथञ्चामितकूवरं ।
वरुणो वारुणान् दिव्यान् सगजान् प्रददौ शुभान् । सिंहान् सुरेन्द्रो व्याघ्रांश्च द्विपानन्यांश्च पक्षिणः । ४२१०
श्वापदांश्च बहून् घोरान् छत्राणि विविधानि च । राक्षसासुरसङ्घाश्च अनुजग्मुस्तमीश्वरं ।
वर्द्धमानन्तु तं दृष्ट्वा प्रार्थयामास तारकः । उपायैर्बहुभिर्हन्तुं नाशकच्चापि तं विभुं ।
सैनापत्येन तं देवाः पूजयित्वा गुहालयं । शशंसुर्विप्रकारं तं तस्मै तारककारितं ।
स विवृद्धो महावीर्य्यो देवसेनापतिः प्रभुः । जघानामोघया शक्त्या दानवं तारकं गुहः ।
तेन तस्मिन् कुमारेण क्रीडता निहतेऽसुरे । सुरेन्द्रः स्थापितो राज्ये देवानां पुनरीश्वरः । ४२१५
स सेनापतिरेवाथ बभौ स्कन्दः प्रतापवान् । ईशो गोप्ता च देवानां प्रियकृच्छङ्करस्य च ।
हिरण्यमूर्त्तिर्भगवानेष एव च पावकिः । सदा कुमारो देवानां सैनापत्यमवाप्तवान् ।
तस्मात् सुवर्णं मङ्गल्यं रत्नमक्षयमुत्तमं । सहजं कार्त्तिकेयस्य वह्नेस्तेजः परं मतं ।
एवं रामाय कौरव्य वशिष्ठोऽकथयत् पुरा । तस्मात् सुवर्णदानाय प्रयतस्व नराधिप ।
रामः सुवर्णं दत्त्वा हि विमुक्तः सर्व्वकिल्बिषैः । त्रिविष्टपे महत् स्थानमवापासुलभं नरैः । ४२२०

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने तारकवधोपाख्याने षडशीतोऽध्यायः ॥ ८६ ॥

॥ युधिष्ठिर उवाच ॥ चातुर्व्वर्ण्यस्य धर्म्मात्मन् धर्म्माः प्रोक्तास्त्वया तथा । तथैव मे श्राद्धविधिं कृत्स्नं प्रब्रूहि पार्थिव ।
॥ वैशम्पायन उवाच ॥ युधिष्ठिरेणैवमुक्तो भीष्मः शान्तनवस्तदा । इमं श्राद्धविधिं कृत्स्नं वक्तुं समुपचक्रमे ।

॥ भीष्म उवाच ॥ शृणुष्वावहितो राजन् श्राद्धकर्म्मविधिं शुभं । धन्यं यशस्यं पुत्रीयं पितृयज्ञं परन्तप ।
देवासुरमनुष्याणां गन्धर्व्वोरगरक्षसां । पिशाचकिन्नराणाञ्च पूज्या वै पितरः सदा ।
पितॄन् पूज्यादितः पश्चाद्देवतास्तर्पयन्ति वै । तस्मात्तान् सर्व्वयत्नेन पुरुषः पूजयेत् सदा । ॥४१२५
अन्वाहार्य्यं महाराज पितॄणां श्राद्धमुच्यते । तच्चामिषेण विधिना विधिः प्रथमकल्पितः ।
सर्व्वेष्वहस्सु प्रीयन्ते कृते श्राद्धे पितामहाः । प्रवक्ष्यामि तु ते सर्व्वांस्तिथ्यां तिथ्यां गुणागुणान् ।
येष्वहस्सु कृतैः श्राद्धैर्यत् फलं प्राप्यतेऽनघ । तत् सर्व्वं कीर्त्तयिष्यामि यथातत्त्वं निबोध मे ।
पितॄनर्च्च्य प्रतिपदि प्राप्नुयात् स्वगृहे स्त्रियः । अभिरूपप्रजायिन्यो दर्शनीया बहुप्रजाः ।
स्त्रियो द्वितीयां जायन्ते तृतीयायान्तु वाजिनः । चतुर्थ्यां क्षुद्रपशवो भवन्ति बहवो गृहे । ॥४१३०
पञ्चम्यां बहवः पुत्रा जायन्ते कुर्व्वतां नृप । कुर्व्वाणास्तु नराः षष्ठ्यां भवन्ति द्युतिभागिनः ।
कृषिभागी भवेच्छ्राद्धं कुर्व्वाणः सप्तमीं नृप । अष्टम्यान्तु प्रकुर्व्वाणो वाणिज्ये लाभमाप्नुयात् ।
नवम्यां कुर्व्वतः श्राद्धं भवत्येकशफं बहु । विवर्द्धन्ते तु दशमीं गावः श्राद्धानि कुर्व्वतः ।
कुप्यभागी भवेन्मर्त्त्यः कुर्व्वन्नेकादशीं नृप । ब्रह्मवर्च्चस्विनः पुत्रा जायन्ते तस्य वेश्मनि ।
द्वादश्यामीहमानस्य नित्यमेव प्रदृश्यते । रजतं बहुवित्तञ्च सुवर्णञ्च मनोरमं । ॥४१३५
ज्ञातीनान्तु भवेच्छ्रेष्ठः कुर्व्वन् श्राद्धं त्रयोदशीं । अवश्यन्तु युवानोऽस्य प्रमीयन्ते नरा गृहे ।
युद्धभागी भवेन्मर्त्त्यः कुर्व्वन् श्राद्धं चतुर्द्दशीं । अमावास्यान्तु निर्व्वापात् सर्व्वकामानवाप्नुयात् ।
कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीं । श्राद्धकर्म्मणि तिथ्यस्तु प्रशस्ता न तथेतराः ।
यथा चैवापरः पक्षः पूर्व्वपक्षाद्विशिष्यते । तथा श्राद्धस्य पूर्व्वाह्णादपराह्णो विशिष्यते ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि श्राद्धकल्पे सप्ताशीतोऽध्यायः ॥ ८७ ॥

॥ युधिष्ठिर उवाच ॥ किंस्विद्दत्तं पितृभ्यो वै भवत्यक्षयमीश्वर । किं हविश्चिररात्राय किमानन्त्याय कल्पते । ॥४१४०
॥ भीष्म उवाच ॥ हवींषि श्राद्धकल्पे तु यानि श्राद्धविदो विदुः । तानि मे शृणु काम्यानि फलञ्चैव युधिष्ठिर ।
तिलैर्व्रीहियवैर्म्माषैरद्भिर्म्मूलफलैस्तथा । दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृप ।
वर्द्धमानतिलं श्राद्धमक्षयं मनुरब्रवीत् । सर्व्वेष्वेव तु भोज्येषु तिलाः प्राधान्यतः स्मृताः ।
द्वौ मासौ तु भवेत्तृप्तिर्म्मत्स्यैः पितृगणस्य च । त्रीन्मासानाविकेनाहुश्चातुर्म्मास्यं शशेन तु ।
आजेन मासान् प्रीयन्ते पञ्चैव पितरो नृप । वाराहेण तु षण्मासान् सप्त वै शाकुनेन तु । ॥४१४५
मासानष्टौ पार्षतेन रौरवेण नव प्रभो । गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी ।
मांसेनैकादश प्रीतिः पितॄणां माहिषेण तु । गव्येन दत्ते श्राद्धे तु संवत्सरमिहोच्यते ।
यथा गव्यं तथा युक्तं पायसं सर्पिषा सह । वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ।
आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये । कालशाकञ्च लौहञ्चाप्यानन्त्यं छाग उच्यते ।
गाथाश्चाप्यत्र गायन्ति पितृगीता युधिष्ठिर । सनत्कुमारो भगवान् पुरा मय्यभ्यभाषत । ॥४१५०
अपि नः स्वकुले जायाद्यो नो दद्यात् त्रयोदशीं । मघासु सर्पिःसंयुक्तं पायसं दक्षिणायने ।

अजेन वापि लौहेन मघास्वेव यतव्रतः । हस्तिच्छायासु विधिवत् कर्णव्यजनवीजितं ।
एष्टव्या बहवः पुत्रा यद्येको गयां व्रजेत् । यत्रासौ प्रथितो लोकेष्वक्षयकरणो वटः ।
आपो मूलं फलं मांसमन्नं वापि पितृक्षये । यत्किञ्चिन्मधुसंमिश्रं तदानन्त्याय कल्पते ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने श्राद्धकल्पे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

॥ भीष्म उवाच ॥ यमस्तु यानि श्राद्धानि प्रोवाच शशबिन्दवे । तानि मे शृणु काम्यानि नक्षत्रेषु पृथक् पृथक् । ४२११
श्राद्धं यः कृत्तिकायोगे कुर्व्वीत सततं नरः । अग्नीनाधाय सापत्यो यजेत विगतज्वरः ।
अपत्यकामो रोहिण्यां तेजस्कामी मृगोत्तमे । क्रूरकर्म्मा ददच्छ्राद्धमार्द्रायां मानवो भवेत् ।
कृषिभागी भवेन्मर्त्यः कुर्व्वन् श्राद्धं पुनर्व्वसौ । पुष्टिकामोऽथ पुष्येण श्राद्धमीहेत मानवः ।
आश्लेषायां ददच्छ्राद्धं धीरान् पुत्रान् प्रजायते । ज्ञातीनान्तु भवेच्छ्रेष्ठो मघासु श्राद्धमावपन् ।
फल्गुनीषु ददच्छ्राद्धं सुभगः श्राद्धदो भवेत् । अपत्यभागुत्तरासु हस्तेन फलभाग्भवेत् । ४२१६
चित्रायान्तु ददच्छ्राद्धं लभेद्रूपवतः सुतान् । स्वातीयोगे पितॄनर्च्च्य वाणिज्यमुपजीवति ।
बहुपुत्रो विशाखासु पुत्त्रमीहन् भवेन्नरः । अनुराधासु कुर्व्वाणो राजचक्रं प्रवर्त्तयेत् ।
आधिपत्यं व्रजेन्मर्त्यो ज्येष्ठायामपवर्ज्जयन् । नरः कुरुकुलश्रेष्ठ श्रद्धादमपुरःसरः ।
मूले त्वारोग्यमृच्छेत यशोऽषाढासु चोत्तमं । उत्तरासु त्वषाढासु वीतशोकश्चरेन्महीं ।
श्राद्धं त्वभिजिता कुर्व्वन् विद्यां श्रेष्ठामवाप्नुयात् । श्रवणे तु ददच्छ्राद्धं प्रेत्य गच्छेत् सुसद्गतिं । ४२२१
राज्यभागी धनिष्ठायां भवेत नियतं नरः । नक्षत्रे वारुणे कुर्व्वन् भिषक् सिद्धिमवाप्नुयात् ।
पूर्व्वप्रोष्ठपदाः कुर्व्वन् बहून् विन्दत्यजाविकान् । उत्तरासु प्रकुर्व्वाणो विन्दते गाः सहस्रशः ।
बहुकुप्यकृतं वित्तं विन्दते रेवतीं श्रितः । अश्विनीष्वश्वान् विन्देत भरणीष्वायुरुत्तमं ।
इमं श्राद्धविधिं श्रुत्वा शशबिन्दुस्तथाऽकरोत् । अक्लेशेनाजयच्चापि महीं सोऽनुशशास च ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने श्राद्धकल्पे ऊननवतितमोऽध्यायः ॥ ८९ ॥

॥ युधिष्ठिर उवाच ॥ कीदृशेभ्यः प्रदातव्यं भवेच्छ्राद्धं पितामह । द्विजेभ्यः कुरुशार्दूल तन्मे व्याख्यातुमर्हसि । ४२२६
॥ भीष्म उवाच ॥ ब्राह्मणान्न परीक्षेत क्षत्रियो दानधर्म्मवित् । दैवे कर्म्मणि पित्र्ये तु न्याय्यमाहुः परीक्षणं ।
देवताः पूजयन्तीह दैवेनैवेह तेजसा । उपेत्य तस्माद्देवेभ्यः सर्व्वेभ्यो दापयेन्नरः ।
श्राद्धे त्वथ महाराज परीक्षेद्ब्राह्मणान् बुधः । कुलशीलवयोरूपैर्विद्ययाऽभिजनेन च ।
तेषामन्ये पङ्क्तिदूषास्तथाऽन्ये पङ्क्तिपावनाः । अपाङ्क्तेयास्तु ये राजन् कीर्त्तयिष्यामि तान् शृणु ।
कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः । ग्रामप्रेष्यो वार्द्धुषिको गायनः सर्व्वविक्रयी । ४२३१
अगारदाही गरदः कुण्डाशी सोमविक्रयी । सामुद्रिको राजभृत्यस्तैलिकः कूटकारकः ।
पित्रा विवदमानश्च यस्य चोपपतिर्गृहे । अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ।
पर्व्वकारश्च सूची च मित्रध्रुक् पारदारिकः । अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ।
श्वभिश्च यः परिक्रामेद्यः शुना दष्ट एव च । परिवित्तिश्च यश्च स्याद्दुश्चर्म्मा गुरुतल्पगः ।

कुशीलवो देवलको नक्षत्रैश्च जीवति। ईदृशैर्ब्राह्मणैर्भुक्तमपाङ्क्तेयैर्युधिष्ठिर। ४१८०

रक्षांसि गच्छते हव्यमित्याहुर्ब्रह्मवादिनः। श्राद्धं भुक्त्वा त्वधीयीत वृषलीतल्पगश्च यः।

पुरीषे तस्य तं मासं पितरस्तस्य शेरते। सोमविक्रयिणे विष्ठा भिषजे पूयशोणितम्।

नष्टं देवलके दत्तमप्रतिष्ठञ्च वार्द्धुषे। यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत्।

भस्मनीव हुतं द्रव्यं तथा पौनर्भवे द्विजे। ये तु धर्म्मव्यपेतेषु चारित्रापगतेषु च।

हव्यं कव्यं प्रयच्छन्ति तेषां तत् प्रेत्य नश्यति। ज्ञानपूर्व्वन्तु ये तेभ्यः प्रयच्छन्त्यल्पबुद्धयः। ४१८५

पुरीषं भुञ्जते तस्य पितरः प्रेत्य निश्चयः। एतानिमान् विजानीयादपाङ्क्तेयान् द्विजाधमान्

शूद्राणामुपदेशञ्च ये कुर्व्वन्त्यल्पचेतसः। षष्टिं काणः शतं षण्ढः श्वित्री यावत् प्रपश्यति।

पंक्त्यां समुपविष्टायां तावद्दूषयते नृप। यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः।

सोपानत्कश्च यद्भुङ्क्ते सर्व्वं विद्यात्तदासुरं। असूयता च यद्दत्तं यच्च श्रद्धाविवर्ज्जितं।

सर्व्वं तदसुरेन्द्राय ब्रह्मा भागमकल्पयत्। श्वानश्च पंक्तिदूषाश्च नावेक्षेरन् कथञ्चन। ४१९०

तस्मात् परिवृते दद्यात्तिलांश्चान्ववकीरयेत्। तिलैर्विरहितं श्राद्धं कृतं क्रोधवशेन च।

यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः। अपाङ्क्तो यावतः पंक्त्यान् भुञ्जानाननुपश्यति।

तावत् फलाद्भ्रंशयति दातारं तस्य बालिशं। इमे तु भरतश्रेष्ठ विज्ञेयाः पङ्क्तिपावनाः।

ये त्वतस्तान् प्रवक्ष्यामि परीक्षस्वेह तान् द्विजान्। विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व्व एव हि।

सदाचारपराश्चैव विज्ञेयाः सर्व्वपावनाः। पाङ्क्तेयांस्तु प्रवक्ष्यामि ज्ञेयास्ते पङ्क्तिपावनाः। ४१९५

त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्। ब्रह्मदेयानुसन्तानश्छन्दोगो ज्येष्ठसामगः।

मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः। ऋतुकालाभिगामी च धर्म्मपत्नीषु यः सदा।

वेदविद्याव्रतस्नातो विप्रः पंक्तिं पुनात्युत। अथर्व्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः।

सत्यवादी धर्म्मशीलः स्वकर्म्मनिरतश्च यः। ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः।

मखेषु च समन्त्रेषु भवन्त्यवभृथप्लुताः। अक्रोधना अचपलाः क्षान्ता दान्ता जितेन्द्रियाः। ४२००

सर्व्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत्। एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः।

इमे परे महाभागा विज्ञेयाः पङ्क्तिपावनाः। यतयो मोक्षधर्म्मज्ञा योगिनः सुचरितव्रताः।

ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमान्। ये च भाष्यविदः केचिद्ये च व्याकरणे रताः।

अधीयते पुराणं ये धर्म्मशास्त्राण्यथापि च। अधीत्य च यथान्यायं विधिवत्तस्य कारिणः

उपपन्नो गुरुकुले सत्यवादी सहस्रदः। अग्र्याः सर्व्वेषु वेदेषु सर्व्वप्रवचनेषु च। ४२०५

यावदेते प्रपश्यन्ति पंक्त्यास्तावत् पुनन्त्युत। ततो हि पावनात् पंक्त्याः पङ्क्तिपावन उच्यते।

क्रोशादर्द्धतृतीयाच्च पावयेदेक एव हि। ब्रह्मदेयानुसन्तान इति ब्रह्मविदो विदुः।

अनृत्विगनुपाध्यायः स चेदग्रासनं व्रजेत्। ऋत्विग्भिरननुज्ञातः पंक्त्या हरति दुष्कृतं।

अथ चेद्वेदवित् सर्व्वैः पङ्क्तिदोषैर्विवर्ज्जितः। न च स्यात् पतितो राजन् पङ्क्तिपावन एव सः।

तस्मात् सर्व्वप्रयत्नेन परीक्ष्यामन्त्रयेद्द्विजान्। स्वकर्म्मनिरतानन्यान् कुले जातान् बहुश्रुतान्। ४२१०

यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च। न प्रीणाति पितॄन् देवान् स्वर्गञ्च न स गच्छति।

यश्च श्राद्धेन कुरुते सङ्गतानि न देवयानेन पथा स याति। स वै मुक्तः पिप्पलं बन्धनाद्वा स्वर्गाल्लोकाच्च्यवते श्राद्धमित्रः।

तस्मान्मित्रं श्राद्धकृन्नाद्रियेत दद्यान्मित्रेभ्यः संग्रहार्थं धनानि। यं मन्येत नैव शत्रुं न मित्रं तं मध्यस्थं भोजयेद्धव्यकव्ये।

यथोषरे वीजमुप्तं न रोहेन्न वास्योप्ता प्राप्नुयाद्वीजभागं। एवं श्राद्धं भुक्तमनर्हमाणैर्न चेह नामुत्र फलं ददाति।

ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति। तस्मै श्राद्धं न दातव्यं न हि भस्मनि हूयते। ४२१५

सम्भोजनी नाम पिशाचदक्षिणा सा नैव देवान् न पितॄनुपैति। इहैव सा भ्राम्यति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा।

यथाऽग्नौ शान्ते घृतमाजुहोति तन्नैव देवान् न पितॄनुपैति। यथा दत्तं नर्त्तने गायने च याञ्चानृते दक्षिणामावृणोति।

उभौ हिनस्ति न भुनक्ति चैषा या चानृते दक्षिणा दीयते वै। आघातिनी गर्हितैषा पतन्ती तेषां प्रेतान् पातयेद्देवयानात्।

ऋषीणां समये नित्यं ये चरन्ति युधिष्ठिर। निश्चिताः सर्व्वधर्म्मज्ञास्तान् देवा ब्राह्मणान् विदुः।

स्वाध्यायनिष्ठा ऋषयो ज्ञाननिष्ठास्तथैव च। तपोनिष्ठाश्च बोद्धव्याः कर्म्मनिष्ठाश्च भारत। ४२२०

कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भारत। तत्र ये ब्राह्मणान् केचिन्न निन्दन्ति हि ते नराः।

ये तु निन्दन्ति जल्पेषु न तान् श्राद्धेषु भोजयेत्। ब्राह्मणा निन्दिता राजन् हन्युस्त्रैपुरुषं कुलं।

वैखानसानां वचनमृषीणां श्रूयते नृप। दूरादेव परीक्षेत ब्राह्मणान् वेदपारगान्।

प्रियान् वा यदि वा द्वेष्यांस्तेषान्तु श्राद्धमावपेत्। यः सहस्रं सहस्राणां भोजयेदनृतान्नरः।

एकस्तान्मन्त्रवित् प्रीतः सर्व्वानर्हति भारत। ४२२५

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने श्राद्धकल्पे नवतितमोऽध्यायः ९० ॥

॥ युधिष्ठिर उवाच ॥ केन सङ्कल्पितं श्राद्धं कस्मिन् काले किमात्मकं। भृग्वङ्गिरसके काले मुनिना कतरेण वा।

कानि श्राद्धानि वर्ज्ज्यानि कानि मूलफलानि च। धान्यजातश्च का वर्ज्ज्यास्तन्मे ब्रूहि पितामह।

॥ भीष्म उवाच ॥ यथा श्राद्धं सम्प्रवृत्तं यस्मिन् काले यदात्मकं। येन सङ्कल्पितञ्चैव तन्मे शृणु जनाधिप।

स्वायम्भुवोऽत्रिः कौरव्य परमर्षिः प्रतापवान्। तस्य वंशे महाराज दत्तात्रेय इति स्मृतः।

दत्तात्रेयस्य पुत्त्रोऽभून्निमिर्नाम तपोधनः। निमेश्चाप्यभवत् पुत्त्रः श्रीमान्नाम श्रिया वृतः। ४२३०

पूर्णे वर्षसहस्रान्ते स कृत्वा दुष्करं तपः। कालधर्म्मपरीतात्मा निधनं समुपागतः।

निमिस्तु कृत्वा शौचानि विधिदृष्टेन कर्म्मणा। सन्तापमगमत्तीव्रं पुत्त्रशोकपरायणः।

अथ कृत्वापदार्थ्यानि चतुर्द्दश्यां महामतिः। तमेव गणयञ्छोकं विरात्रे प्रत्यबुध्यत।

तस्यासीत् प्रतिबुद्धस्य शोकेन व्यथितात्मनः। मनः संहृत्य विषये बुद्धिर्विस्तारगामिनी।

ततः सञ्चिन्तयामास श्राद्धकल्पं समाहितः। यानि तस्यैव भोज्यानि मूलानि च फलानि च। ४२३५

उक्तानि यानि भक्ष्याणि यानि चेष्टानि तस्य च। तानि सर्व्वाणि मनसा विनिश्चित्य तपोधनः।

अमावास्यां महाप्राज्ञो विप्रानानाय्य पूजितान्। दक्षिणावर्त्तिकाः सर्व्वा वृषीः स्वयमथाकरोत्।

सप्त विप्रांस्ततोऽभ्येत्य युगपत् समुपानयत् । ऋते च लवणं भोज्यं श्यामाकान्नं ददौ प्रभुः ।
दक्षिणाग्रास्ततो दर्भा विष्टरेषु निवेशिताः । पादयोश्चैव विप्राणां ये त्वन्नमुपभुञ्जते ।
कृत्वा च दक्षिणाग्रान् वै दर्भान् स प्रयतः शुचिः । प्रददौ श्रीमतः पिण्डान् नामगोत्रमुदाहरन् । ॥१०
तत् कृत्वा स मुनिश्रेष्ठो धर्मसङ्करमात्मनः । पश्चात्तापेन महता तप्यमानोऽभ्यचिन्तयत् ।
अकृतं मुनिभिः पूर्व्वं किं मयेदमनुष्ठितं । कथं नु शापेन न मां दहेयुर्ब्राह्मणा इति ।
ततः स चिन्तयामास वंशकर्त्तारमात्मनः । ध्यातमात्रस्तथा चात्रिराजगाम तपोधनः ।
अथात्रिस्तं तथा दृष्ट्वा पुत्रशोकेन कर्षितं । भृशमाश्वासयामास वाग्भिरिष्टाभिरव्ययः ।
निमे सङ्कल्पितस्तेऽयं पितृयज्ञस्तपोधन । मा ते भूद्भीः पूर्व्वदृष्टो धर्म्मोऽयं ब्रह्मणा स्वयं । ॥१५
सोऽयं स्वयम्भुविहितो धर्म्मः सङ्कल्पितस्त्वया । ऋते स्वयम्भुवः कोऽन्यः श्राद्धेयं विधिमाहरेत् ।
अथाख्यास्यामि ते पुत्र श्राद्धेयं विधिमुत्तमं । स्वयम्भुविहितं पुत्र तत् कुरुष्व निबोध मे ।
कृत्वाऽग्नौकरणं पूर्व्वं मन्त्रपूर्व्वं तपोधन । ततोऽग्नये च सोमाय वरुणाय च नित्यशः ।
विश्वे देवाश्च ये नित्यं पितृभिः सह गोचराः । तेभ्यः सङ्कल्पिता भागाः स्वयमेव स्वयम्भुवा ।
स्तोतव्या चेह पृथिवी निवापस्येह धारिणी । वैष्णवी काश्यपी चेति तथैवेहाक्षयेति च । ॥२०
उदकानयने चैव स्तोतव्यो वरुणो विभुः । ततोऽग्निश्चैव सोमश्च आप्याय्याविह तेऽनघ ।
देवास्तु पितरो नाम निर्म्मिता ये स्वयम्भुवा । उष्णपा ये महाभागास्तेषां भागः प्रकल्पितः ।
ते श्राद्धेनार्च्यमाना वै विमुच्यन्ते ह किल्बिषात् । सप्तकः पितृवंशस्तु पूर्व्वदृष्टः स्वयम्भुवा ।
विश्वे चाग्निमुखा देवाः सङ्ख्याताः पूर्व्वमेव ते । तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनां ।
बलं धृतिर्व्विपाप्मा च पुण्यकृत् पावनस्तथा । पार्ष्णिक्षेमा समूहश्च दिव्यसानुस्तथैव च । ॥२५
विवस्वान् वीर्य्यवान् ह्रीमान् कीर्त्तिमान् कृत एव च । जितात्मा मुनिवीर्य्यश्च दीप्तरोमा भयङ्करः ।
अनुकर्म्मा प्रतीतश्च प्रदाताऽथांशुमांस्तथा । शैलाभः परमक्रोधी धीरोष्णी भूपतिस्तथा ।
स्रजो वज्री वरी चैव विश्वे देवाः सनातनाः । विद्युद्वर्चाः सोमवर्चाः सूर्य्यश्रीश्चेति नामतः ।
सोमपः सूर्य्यसावित्रो दत्तात्मा पुण्डरीयकः । उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च ।
चमूहरः सुरेशश्च व्योमारिः शङ्करो भवः । ईशः कर्त्ता कृतिर्दक्षो भुवनो दिव्यकर्म्मकृत् । ॥३०
गणितः पञ्चवीर्य्यश्च आदित्यो रश्मिवांस्तथा । सप्तकृत् सोमवर्चाश्च विश्वकृत् कविरेव च ।
अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च । कीर्त्तितास्ते महाभागाः कालस्य गतिगोचराः ।
अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा । हिङ्गुद्रव्येषु शाकेषु पलाण्डुं लशुनं तथा ।
शोभाञ्जनः कोविदारस्तथा गृञ्जनकादयः । कूष्माण्डजात्यलाबुञ्च कृष्णं लवणमेव च ।
ग्राम्यवाराहमांसञ्च यच्चैवाप्रोक्षितं भवेत् । कृष्णाजाजी विडञ्चैव शीतपाकी तथैव च । ॥३५
अङ्कुराद्यास्तथा वर्ज्या इह शृङ्गाटकानि च । वर्ज्जयेल्लवणं सर्व्वं तथा जम्बूफलानि च ।
अवक्षुतावरुदितं तथा श्राद्धेषु वर्ज्जयेत् । निवापे हव्यकव्ये वा गर्हितञ्च सुदर्शनं ।

पितरश्च हि देवाश्च नाभिनन्दन्ति तद्धविः। षण्डाजश्वपचौ वर्ज्यौ निवापे समुपस्थिते।
काषायवासाः कुष्ठी वा पतितो ब्रह्महापि वा। सङ्कीर्णयोनिर्विप्रश्च सम्बन्धी पतितश्च यः।
वर्ज्जनीया बुधैरेते निवापे समुपस्थिते। इत्येवमुक्त्वा भगवान् स्ववंश्यं तमृषिं पुरा। ४२७०
पितामहसभां दिव्यां जगामात्रिस्तपोधनः।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि श्राद्धधर्म्मकथने एकनवतितमोऽध्यायः॥ ९१॥
॥ भीष्म उवाच ॥ तथा निमौ प्रवृत्ते तु सर्व्व एव महर्षयः। पितृयज्ञान् कुर्व्वन्ति विधिदृष्टेन कर्म्मणा।
ऋषयो धर्म्मनित्यास्तु कृत्वा निवपनान्युत। तर्पणञ्चाप्यकुर्व्वन्त तीर्थाम्भोभिर्यतव्रताः।
निवापैर्दीयमानैश्च चातुर्वर्ण्येन भारत। तर्पिताः पितरो देवास्तन्नान्नं जरयन्ति वै।
अजीर्णेनाभिहन्यन्ते ते देवाः पितृभिः सह। सोममेवाभ्यपद्यन्त ह्यन्नाभिप्रपीडिताः। ४२७५
तेऽब्रुवन् सोममासाद्य पितरोऽजीर्णपीडिताः। निवापान्नेन पीड्यामः श्रेयो नोऽत्र विधीयताम्।
तान् सोमः प्रत्युवाचाथ श्रेयश्चेदीप्सितं सुराः। स्वयम्भूसदनं यात स वः श्रेयोऽभिधास्यति।
ते सोमवचनाद्देवाः पितृभिः सह भारत। मेरुशृङ्गे समासीनं पितामहमुपागमन्।
॥ पितर ऊचुः ॥ निवापान्नेन भगवन् भृशं पीड्यामहे वयम्। प्रसादं कुरु नो देव श्रेयो नः संविधीयताम्।
इति तेषां वचः श्रुत्वा स्वयम्भूरिदमब्रवीत्। एष मे पार्श्वतो वह्निर्युष्मच्छ्रेयो विधास्यति। ४२८०
॥ अग्निरुवाच ॥ सहितास्तात भोक्ष्यामो निवापे समुपस्थिते। जरयिष्यथ चाप्यन्नं मया सार्द्धं न संशयः।
एतच्छ्रुत्वा तु पितरस्ततस्ते विज्वराऽभवन्। एतस्मात् कारणाच्चाग्नेः प्राक् तावद्दीयते नृप।
निवप्ते चाग्निपूर्व्वे वै निवापे पुरुषर्षभ। न ब्रह्मराक्षसास्ते वै निवापं धर्षयन्त्युत।
रक्षांसि चापवर्त्तन्ते स्थिते देवे हुताशने। पूर्व्वं पिण्डं पितुर्दद्यात्ततो दद्यात् पितामहे।
प्रपितामहाय च तत एष श्राद्धविधिः स्मृतः। ब्रूयाच्छ्राद्धे च सावित्रीं पिण्डे पिण्डे समाहितः। ४२८५
सोमायेति च वक्तव्यं तथा पितृमतेति च। रजस्वला च या नारी व्यङ्गिता कर्णयोश्च या।
निवापे नोपतिष्ठेत संग्राह्या नान्यवंशजा। जलं प्रतरमाणश्च कीर्त्तयेत पितामहान्।
नदीमासाद्य कुर्व्वीत पितॄणां पिण्डतर्पणम्। पूर्व्वं स्ववंशजानान्तु कृत्वाऽद्भिस्तर्पणं पुनः।
सुहृत्सम्बन्धिवर्गाणां ततो दद्याज्जलाञ्जलिम्। कल्माषगोयुगेनाथ युक्तेन तरतो जलम्।
पितरोऽभिलषन्ते वै नावञ्चाप्यधिरोहिताः। सदा नावि जलं तज्ज्ञाः प्रयच्छन्ति समाहिताः। ४२९०
मासार्द्धे कृष्णपक्षस्य कुर्य्यान्निर्व्वपणानि वै। पुष्टिरायुस्तथा वीर्य्यं श्रीश्चैव पितृभक्तितः।
पितामहः पुलस्त्यश्च वशिष्ठः पुलहस्तथा। अङ्गिराश्च क्रतुश्चैव कश्यपश्च महानृषिः।
एते कुरुकुलश्रेष्ठ महायोगेश्वराः स्मृताः। एते च पितरो राजन्नेष श्राद्धविधिः परः।
प्रेतास्तु पिण्डसम्बन्धान्मुच्यन्ते तेन कर्म्मणा। इत्येषा पुरुषश्रेष्ठ श्राद्धोत्पत्तिर्यथागमम्।
व्याख्याता पूर्व्वनिर्द्दिष्टा दानं वक्ष्याम्यतः परम्। ४२९४
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने श्राद्धकल्पे द्विनवतितमोऽध्यायः॥ ९२॥

॥ युधिष्ठिर उवाच ॥ द्विजातयो व्रतोपेता हविस्ते यदि भुञ्जते। अन्नं ब्राह्मणकामाय कथमेतत् पितामह।

॥ भीष्म उवाच ॥ अवेदोक्तव्रताश्चैव भुञ्जानाः कामकारणे। वेदोक्तेषु तु भुञ्जाना व्रतलुप्ता युधिष्ठिर।

॥ युधिष्ठिर उवाच ॥ यदिदं तप इत्याहुरुपवासं पृथग्जनाः। तपः स्यादेतदेवेह तपोऽन्यद्वापि किं भवेत्।

॥ भीष्म उवाच ॥ मासार्धमासोपवासान् यत्तपो मन्यते जनः। आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित्।

त्यागस्य चापि सम्पत्तिः शिष्यते तप उत्तमं। सदोपवासी च भवेद्ब्रह्मचारी तथैव च। ४४००

मुनिश्च स्यात्सदा विप्रो वेदांश्चैव सदा जपेत्। कुटुम्बिको धर्मकामः सदाऽस्वप्नश्च मानवः।

अमांसाशी सदा च स्यात्पवित्रंश्च सदा पठेत्। ऋतवादी सदा च स्यान्नियतश्च सदा भवेत्।

विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः। अमृताशी सदा च स्यात्पवित्री च सदा भवेत्।

॥ युधिष्ठिर उवाच ॥ कथं सदोपवासी स्याद्ब्रह्मचारी च पार्थिव। विघसाशी कथञ्च स्यात्कथञ्चैवातिथिप्रियः।

॥ भीष्म उवाच ॥ अन्तरा सायमाशञ्च प्रातराशञ्च यो नरः। सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः। ४४०५

भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति चैव ह। ऋतवादी सदा च स्याद्दानशीलस्तु मानवः।

अभक्षयन् वृथामांसममांसाशी भवत्युत। दानं ददत्पवित्री स्यादस्वप्नश्च दिवाऽस्वपन्।

भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा। अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर।

अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः। अभोजनेन तेनास्य जितः स्वर्गो भवत्युत।

देवेभ्यश्च पितृभ्यश्च संश्रितेभ्यस्तथैव च। अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनं। ४४१०

तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणः स्मृताः। उपस्थिता ह्यप्सरोभिर्गन्धर्वैश्च जनाधिप।

देवतातिथिभिः सार्द्धं पितृभिश्चोपभुञ्जते। रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा।

॥ युधिष्ठिर उवाच ॥ ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च। दातृप्रतिग्रहीत्रोर्वै को विशेषः पितामह।

॥ भीष्म उवाच ॥ साधोर्यः प्रतिगृह्णीयात्तथैवासाधुतो द्विजः। गुणवत्यल्पदोषः स्यान्निर्गुणे तु निमज्जति।

अत्राप्युदाहरन्तीममितिहासं पुरातनं। वृषादर्भेश्च संवादं सप्तर्षीणाञ्च भारत। ४४१५

कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः। विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती।

सर्वेषामथ तेषान्तु गण्डाऽभूत्कर्मकारिका। शूद्रः पशुसखश्चैव भर्त्ता चास्या बभूव ह।

ते च सर्वे तपस्यन्तः पुरा चेरुर्महीमिमां। समाधिनोपशिक्षन्तो ब्रह्मलोकं सनातनं।

अथाभवदनावृष्टिर्महती कुरुनन्दन। कृच्छ्रप्राणोऽभवद्यत्र लोकोऽयं वै क्षुधान्वितः।

कस्मिंश्चिच्च पुरा यज्ञे याज्येन शिबिसूनुना। दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रः पुरा किल। ४४२०

अस्मिन् काले तु सोऽल्पायुर्दिष्टान्तमगमत् प्रभुः। ते तं क्षुधाऽभिसन्तप्ताः परिवार्य्योपतस्थिरे।

याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः। अपचन्त तदा स्थाल्यां क्षुधार्त्ताः किल भारत।

निराद्ये मर्त्यलोकेऽस्मिन्नात्मानन्ते परीप्सवः। कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः।

अटमानोऽथ तान्मार्गे पचमानान्महीपतिः। राजा शैब्यो वृषादर्भिः क्लिश्यमानान् ददर्श ह।

॥ वृषादर्भिरुवाच ॥ प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्णतां। मयि यद्विद्यते वित्तं तच्छृणुध्वं तपोधनाः। ४४२५

॥ वसिष्ठ उवाच ॥ वसिष्ठोऽस्मि वरिष्ठोऽस्मि वसे वासगृहेष्वपि । वसिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि मां ।
॥ यातुधान्युवाच ॥ नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरं । नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीं । ४३८८
॥ कश्यप उवाच ॥ कुलं कुलञ्च कुवमः कुवमः कश्यपो द्विजः । काश्यः काशनिकाशत्वादेतन्मे नाम धारय ।
॥ यातुधान्युवाच ॥ यथोदाहृतमेतत्ते मयि नाम महाद्युते । दुर्द्धार्य्यमेतन्मनसा गच्छावतर पद्मिनीं ।
॥ भरद्वाज उवाच ॥ भरेऽसुतान् भरेऽशिष्यान् भरे देवान् भरे द्विजान् । भरे भार्य्यामनव्याजो भरद्वाजोऽस्मि शोभने ।
॥ यातुधान्युवाच ॥ नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरं । नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीं ।
॥ गौतम उवाच ॥ गोतमोऽहमतोधूमोऽदमस्ते समदर्शनात् । गोभिस्तमो मम ध्वस्तं जातमात्रस्य देहतः । ४३९०

विद्धि मां गौतमं कृत्ये यातुधानि निबोध मां ।

॥ यातुधान्युवाच ॥ यथोदाहृतमेतत्ते मयि नाम महामुने । नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीं ।
॥ विश्वामित्र उवाच ॥ विश्वेदेवाश्च मे मित्रं मित्रमस्मि गवान्तथा । विश्वामित्रमिति ख्यातं यातुधानि निबोध मां ।
॥ धातुधान्युवाच ॥ नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरं । नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीं ।
॥ जमदग्निरुवाच ॥ जाजमद्यजजानेऽहं जिजाहीह जिजायिषि । जमदग्निरिति ख्यातमतो मां विद्धि शोभने । ४३९५
॥ यातुधान्युवाच ॥ यथोदाहृतमेतत्ते मयि नाम महामुने । नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीं ।
॥ अरुन्धत्युवाच ॥ धराम् धरित्रीं वसुधां भर्त्तुस्तिष्ठाम्यनन्तरं । मनोऽनुरुन्धती भर्त्तुरिति मां विद्ध्यरुन्धतीं ।
॥ धातुधान्युवाच ॥ नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरं । नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीं ।
॥ गण्डोवाच ॥ वक्त्रैकदेशे गण्डेति धातुमेतं प्रचक्षते । तेनोन्नतेन गण्डेति विद्धि माऽनलसम्भवे ।
॥ यातुधान्युवाच ॥ नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरं । नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीं । ४४००
॥ पशुसख उवाच ॥ पशून् रक्ष्यामि दृष्ट्वाऽहं पशूनाञ्च सखा सदा । गौणं पशुसखेत्येवं विद्धि मामग्निसम्भवे ।
॥ यातुधान्युवाच ॥ नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरं । नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीं ।
॥ शुनःसख उवाच ॥ एभिरुक्तं यथा नाम नाहं वक्तुमिहोत्सहे । शुनःसखसखायं मां यातुधान्युपधारय ।
॥ यातुधान्युवाच ॥ नाम नैरुक्तमेतत्ते वाक्यं सन्दिग्धया गिरा । तस्मात् सकृदिदानीं त्वं ब्रूहि तन्नाम ते द्विज ।
॥ शुनःसख उवाच ॥ सकृदुक्तं मया नाम न गृहीतं त्वया यदि । तस्मात्त्रिदण्डाभिहता गच्छ भस्मेति मा चिरं । ४४०५

सा ब्रह्मदण्डकल्पेन तेन मूर्द्ध्नि हता तदा । कृत्या पपात मेदिन्यां भस्मसाच्च जगाम ह ।
शुनःसखा च हत्वा तां यातुधानीं महाबलां । भुवि त्रिदण्डं विष्टभ्य शाद्वले समुपाविशत् ।
ततस्ते मुनयः सर्व्वे पुष्कराणि बिसानि च । यथाकाममुपादाय समुत्तस्थुर्मुदाऽन्विताः ।
श्रमेण महता कृत्वा ते बिसानि कलापशः । तीरे निक्षिप्य पद्मिन्यास्तर्पणञ्चक्रुरम्भसा ।
अथोत्थाय जलात्तस्मात् सर्व्वे ते समुपागमन् । नापश्यंश्चापि ते तानि बिसानि पुरुषर्षभाः । ४४१०
॥ ऋषय ऊचुः ॥ केन क्षुधापरीतानामस्माकं पापकर्म्मणा । नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणां ।
ते शङ्कमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः । त ऊचुः समयं सर्व्वे कुर्म्म इत्यरिकर्षण ।
त उक्त्वा बाढमित्येवं सर्व्व एव तदा समं । क्षुधार्त्ताः सुपरिश्रान्ताः शपथायोपचक्रमुः ।

॥ अत्रिरुवाच ॥ स गां स्पृशतु पादेन सूर्य्यञ्च प्रतिमेहतु । अनध्यायेष्वधीयीत बिसस्तैन्यं करोति यः ।

॥ वशिष्ठ उवाच ॥ अनध्यायपरो लोके शुनः स परिकर्षतु । परिव्राट् कामवृत्तोऽस्तु बिसस्तैन्यं करोति यः । ॥११५

शरणागतं हन्तु स स्वसुतां चोपजीवतु । अर्थान् काङ्क्षतु कीनाशाद्बिसस्तैन्यं करोति यः ।

॥ काश्यप उवाच ॥ सर्व्वत्र सर्व्वं लपतु न्यासलोपं करोतु च । कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ।

वृथा मांसाशनश्चास्तु वृथादानं करोतु च । यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ।

॥ भरद्वाज उवाच ॥ नृशंसस्त्यक्तधर्म्माऽस्तु स्त्रीषु ज्ञातिषु गोषु च । ब्राह्मणञ्चापि जयतां बिसस्तैन्यं करोति यः ।

उपाध्यायमधः कृत्वा ऋचोऽध्येतु यजूंष्यपि । जुहोतु च स कक्षाग्नौ बिसस्तैन्यं करोति यः । ॥१२०

॥ जमदग्निरुवाच ॥ पुरीषमुत्सृजत्वप्सु हन्तु गाञ्चैव दुह्यतु । अनृतौ मैथुनं यातु बिसस्तैन्यं करोति यः ।

द्वेष्यो भार्य्योपजीवी स्यात् दूरबन्धुश्च वैरवान् । अन्योन्यस्यातिथिश्चास्तु बिसस्तैन्यं करोति यः ।

॥ गौतम उवाच ॥ अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु । विक्रीणातु तथा सोमं बिसस्तैन्यं करोति यः ।

उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः । तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः ।

॥ विश्वामित्र उवाच ॥ जीवतो वै गुरून् भृत्यान् भरन्त्वस्य परे जनाः । अगतिर्ब्बहुपुत्रः स्याद्बिसस्तैन्यं करोति यः । ॥१२५

अशुचिर्ब्रह्मकूटोऽस्तु ऋद्ध्या चैवाप्यहङ्कृतः । कर्षको मत्सरी चास्तु बिसस्तैन्यं करोति यः ।

वर्षाचरोऽस्तु भृतको राज्ञश्चास्तु पुरोहितः । अयाज्यस्य भवत्वृत्विक् बिसस्तैन्यं करोति यः ।

॥ अरुन्धत्युवाच ॥ नित्यं परिभवेच्छ्वश्रूं भर्त्तुर्भवतु दुर्म्मनाः । एका स्वादु समश्नातु बिसस्तैन्यं करोति या ।

ज्ञातीनां गृहमध्यस्था सक्तूनत्तु दिनक्षये । अभोग्या वीरसूरस्तु बिसस्तैन्यं करोति या ।

॥ गण्डोवाच ॥ अनृतं भाषतु सदा बन्धुभिश्च विरुध्यतु । ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या । ॥१३०

साधयित्वा स्वयं प्राशेत् दास्ये जीर्य्यतु चैव ह । विकर्म्मणा प्रमीयेत बिसस्तैन्यं करोति या ।

॥ पशुसख उवाच ॥ दास एव प्रजायेत सप्रसूतिरकिञ्चन । दैवतेष्वनमस्कारो बिसस्तैन्यं करोति यः ।

॥ शुनःसख उवाच ॥ अध्वर्य्यवे दुहितरं वा ददातु छन्दोगे वा चरितब्रह्मचर्य्ये । आथर्व्वणं वेदमधीत्य विप्रः स्नायीत वा यो हरते बिसानि ।

॥ ऋषय ऊचुः ॥ इष्टमेतद्द्विजातीनां योऽयं ते शपथः कृतः । त्वया कृतं बिसस्तैन्यं सर्व्वेषां नः शुनःसख ।

॥ शुनःसख उवाच ॥ न्यस्तमाद्यं न पश्यद्भिर्यदुक्तं कृतकर्म्मभिः । सत्यमेतन्न मिथ्यैतद्बिसस्तैन्यं कृतं मया । ॥१३५

मया ह्यन्तर्हितानीह बिसानीमानि पश्यत । परीक्षार्थं भगवतां कृतमेवं मयाऽनघाः ।

रक्षणार्थञ्च सर्व्वेषां भवतामहमागतः । यातुधानी ह्यतिक्रूरा कृत्येषा वो बधैषिणी ।

वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः । दुष्टा हिंस्यादियं पापा युष्मान् प्रत्यग्निसम्भवा ।

तस्मादस्म्यागतो विप्रा वासवं मां निबोधत । अलोभादक्षया लोकाः प्राप्ता वै सार्व्वकामिकाः ।

उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः । ॥१४०

॥ भीष्म उवाच ॥ ततो महर्षयः प्रीतास्तथेत्युक्ता पुरन्दरं । सहैव त्रिदशेन्द्रेण सर्व्वे जग्मुस्त्रिविष्टपं ।

एवमेते महात्मानो भोगैर्ब्बहुविधैरपि । क्षुधा परमया युक्ताश्छन्द्यमाना महात्मभिः ।

नैव लोभं तदा चक्रुस्ततः स्वर्गमवाप्नुवन् । तस्मात् सर्व्वास्ववस्थासु नरो लोभं विवर्ज्जयेत् ।
एष धर्म्मः परो राजंस्तस्माल्लोभं विवर्ज्जयेत् । इदं नरः सच्चरितं समवायेषु कीर्त्तयन् ।
अर्थभागी च भवति न च दुर्गाण्यवाप्नुते । प्रीयन्ते पितरश्चास्य ऋषयो देवतास्तथा ।　४४०८
यशोधर्म्मार्थभागी च भवति प्रेत्य मानवः ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने विसस्तैन्योपाख्याने त्रिनवतोऽध्यायः ॥ ९३ ॥

॥ भीष्म उवाच ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनं । यद्वृत्तं तीर्थयात्रायां शपथं प्रति तच्छृणु ।
पुष्करार्थं कृतं स्तैन्यं पुरा भरतसत्तम । राजर्षिभिर्म्महाराज तथैव च द्विजर्षिभिः ।
ऋषयः समेताः पश्चिमे वै प्रभासे समागता मन्त्रममन्त्रयन्त । चराम सर्व्वां पृथिवीं पुण्यतीर्थां तत्नः कार्य्यं हन्त गच्छाम सर्व्वे ।
शुक्रोऽङ्गिराश्चैव कविश्च विद्वांस्तथाऽगस्त्यो नारदपर्व्वतौ च । भृगुर्व्वशिष्ठः काश्यपो गौतमश्च विश्वामित्रो जमदग्निश्च
राजन् ।　४४१०
ऋषिस्तथा गालवोऽथाष्टकश्च भरद्वाजोऽरुन्धती बालखिल्याः । शिबिर्दिलीपो नहुषोऽम्बरीषो राजा ययातिर्धुन्धुमारो
ऽथ पूरुः ।
जग्मुः पुरस्कृत्य महानुभावं शतक्रतुं वृत्रहणं नरेन्द्राः । तीर्थानि सर्व्वाणि परिक्रमन्तो माघ्यां ययुः कौशिकीं पुण्यतीर्थां ।
सर्व्वेषु तीर्थेष्ववधूतपापा जग्मुस्ततो ब्रह्मसरः सुपुण्यं । देवस्य तीर्थे जलमग्निकल्पा विगाह्य ते भुक्तबिसप्रसूनाः ।
केचिद्बिसान्यखनंस्तत्र राजन्नन्ये मृणालान्यखनंस्तत्र विप्राः । अथापश्यन् पुष्करं ते ह्रियन्तं ह्रदादगस्त्येन समुद्धृतं तत् ।
तानाह सर्व्वानृषिमुख्यानगस्त्यः केनादत्तं पुष्करं मे सुजातं । युष्मान् शङ्के पुष्करं दीयतां मे न वै भवन्तो हर्त्तुमर्हन्ति
पद्मं ।　४४११
शृणोमि कालो हिंसते धर्म्मवीर्य्यं सोऽयं प्राप्तो वर्त्तते धर्म्मपीडा । पुराऽधर्म्मो वर्त्तते नेह यावत्तावद्गच्छामः सुरलोकं चिराय ।
पुरा वेदान् ब्राह्मणा ग्राममध्ये घुष्टस्वरा वृषलान् श्रावयन्ति । पुरा राजाऽव्यवहारेण धर्म्मान् पश्यत्ययं परलोकं व्रजामि ।
पुराऽवरान् प्रत्यवरान् गरीयसो यावन्नरा नावमंस्यन्ति सर्व्वे । तमोत्तरं यावदिदं न वर्त्तते तावद्व्रजामि परलोकं चिराय ।
पुरा प्रपश्यामि परेण मर्त्त्यान् बलीयसान् दुर्ब्बलान् भुज्यमानान् । तस्माद्यास्यामि परलोकं चिराय न ह्युत्सहे द्रष्टुमिह
जीवलोकं ।
तमाहुरार्त्ता ऋषयो महर्षिं न ते वयं पुष्करं चोरयामः । मिथ्याऽभिषङ्गो भवता न कार्य्यः शपाम तीक्ष्णैः शपथैर्म्महर्षे । ४४१२
ते निश्चितास्तत्र महर्षयस्तु सम्पश्यन्तो धर्म्ममेतं नरेन्द्राः । ततोऽशपन्त शपथान् पर्य्यायेण सहैव ते पार्थिवपुत्त्रपौत्त्रैः ।
॥ भृगुरुवाच ॥ प्रत्याक्रोशेदिहाक्रुष्टस्ताडितः प्रतिताडयेत् । खादेच्च पृष्ठमांसानि यस्ते हरति पुष्करं ।
॥ वशिष्ठ उवाच ॥ अस्वाध्यायपरो लोके श्वानञ्च परिकर्षतु । पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करं ।
॥ कश्यप उवाच ॥ सर्व्वत्र सर्व्वं पणतु न्यासलोपं करोतु च । कूटसाक्षित्वमभ्येतु यस्ते हरति पुष्करं ।
॥ गौतम उवाच ॥ जीवत्वहङ्कृतो बुद्ध्या विषमेणासमेन सः । कर्षको मत्सरी चास्तु यस्ते हरति पुष्करं ।　४४१६
॥ अङ्गिरा उवाच ॥ अशुचिर्ब्रह्मकूटोऽस्तु श्वानञ्च परिकर्षतु । ब्रह्महा निष्कृतिश्चास्तु यस्ते हरति पुष्करं ।
॥ धुन्धुमार उवाच ॥ अकृतज्ञस्तु मित्राणां शूद्रायान्तु प्रजायतु । एकः सम्पन्नमश्नातु यस्ते हरति पुष्करं ।

॥ दिलीप उवाच ॥ उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः । तस्य लोकान् स व्रजतु यस्ते हरति पुष्करं ।

॥ पूरुरुवाच ॥ चिकित्सायां प्रचरतु भार्य्यया चैव पुष्यतु । श्वशुरान्नस्य वृत्तिः स्याद्यस्ते हरति पुष्करं ।

॥ शुक्र उवाच ॥ वृथामांसं समश्नातु दिवा गच्छतु मैथुनं । प्रेष्यो भवतु राज्ञश्च यस्ते हरति पुष्करं । ॥७०

॥ जमदग्निरुवाच ॥ अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत् । श्राद्धे शूद्रस्य चाश्नीयाद्यस्ते हरति पुष्करं ।

॥ शिविरुवाच ॥ अनाहिताग्निर्म्रियतां यज्ञे विघ्नं करोतु च । तपस्विभिर्विरुध्येत यस्ते हरति पुष्करं ।

॥ ययातिरुवाच ॥ अनृतौ व्रती जटी चैव भार्य्यायां स प्रजायतु । निराकरोतु वेदांश्च यस्ते हरति पुष्करं ।

॥ नहुष उवाच ॥ अतिथिर्गृहसंस्थोऽस्तु कामवृत्तस्तु दीक्षितः । विद्यां प्रयच्छतु भृतो यस्ते हरति पुष्करं ।

॥ अम्बरीष उवाच ॥ नृशंसस्त्यक्तधर्म्मोऽस्तु स्त्रीषु ज्ञातिषु गोषु च । निहन्तु ब्राह्मणञ्चापि यस्ते हरति पुष्करं । ॥७५

॥ नारद उवाच ॥ गृहेऽज्ञानी बहिःशास्त्रं पठतां विस्वरं पदं । गरीयसोऽवजानातु यस्ते हरति पुष्करं ।

॥ नाभाग उवाच ॥ अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु । शुल्केन तु ददत्कन्यां यस्ते हरति पुष्करं ।

॥ कविरुवाच ॥ पद्भ्यां स गान्ताडयतु सूर्य्यञ्च प्रतिमेहतु । शरणागतं सन्त्यजतु यस्ते हरति पुष्करं ।

॥ विश्वामित्र उवाच ॥ करोतु भृतकोऽवर्षां राज्ञश्चास्तु पुरोहितः । ऋत्विगस्तु ह्ययाज्यस्य यस्ते हरति पुष्करं ।

॥ पर्व्वत उवाच ॥ ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु । शुनः कर्षतु वृत्त्यर्थे यस्ते हरति पुष्करं । ॥८०

॥ भरद्वाज उवाच ॥ सर्व्वपापसमादानं नृशंसे चानृते च यत् । तत्तस्यास्तु सदा पापं यस्ते हरति पुष्करं ।

॥ अष्टक उवाच ॥ स राजाऽस्त्वकृतप्रज्ञः कामवृत्तश्च पापकृत् । अधर्म्मेणाभिशास्तूर्व्वीं यस्ते हरति पुष्करं ।

॥ गालव उवाच ॥ पापिष्ठेभ्यो ह्यनर्घार्हः स नरोऽस्तु स्वपापकृत् । दत्त्वा दानं कीर्त्तयतु यस्ते हरति पुष्करं ।

॥ अरुन्धत्युवाच ॥ श्वश्र्वापवादं वदतु भर्त्तुर्भवतु दुर्म्मनाः । एका स्वादु समश्नातु या ते हरति पुष्करं ।

॥ बालखिल्या ऊचुः ॥ एकपादेन वृत्त्यर्थं ग्रामद्वारे स तिष्ठतु । धर्म्मज्ञस्त्यक्तधर्म्मोऽस्तु यस्ते हरति पुष्करं । ॥८५

॥ शुनःसख उवाच ॥ अग्निहोत्रमनादृत्य स सुखं स्वपतु द्विजः । परिव्राट् कामवृत्तोऽस्तु यस्ते हरति पुष्करं ।

॥ सुरभिरुवाच ॥ बाल्वजेन निदानेन कांस्यं भवतु दोहनं । दुह्येत परवत्सेन यस्ते हरति पुष्करं ।

॥ भीष्म उवाच ॥ ततस्तु तैः शपथैः शप्यमानैर्नानाविधैर्बहुभिः कौरवेन्द्र । सहस्राक्षो देवराट् सम्प्रहृष्टः समीक्ष्य तं कोप नं विप्रमुख्यं ।

अथाऽब्रवीन्मघवा प्रत्ययं स्वं समाभाष्य तमृषिं जातरोषं । ब्रह्मर्षिदेवर्षिनृपर्षिमध्ये यत्तन्निबोधेह ममाद्य राजन् ।

॥ शक्र उवाच ॥ अध्वर्य्यवे दुहितरं ददातु च्छन्दोगे वा चरितब्रह्मचर्य्ये । आथर्व्वणं वेदमधीत्य विप्रः स्नायीत यः पुष्कर मादद्दाति । ॥९०

सर्व्वान् वेदानधीयीत पुण्यशीलोऽस्तु धार्म्मिकः । ब्रह्मणः सदनं यातु यस्ते हरति पुष्करं ।

॥ अगस्त्य उवाच ॥ आशीर्व्वादस्त्वया प्रोक्तः शपथो बलसूदन । दीयतां पुष्करं मह्यमेष धर्म्मः सनातनः ।

॥ इन्द्र उवाच ॥ न मया भगवन् लोभाद्धृतं पुष्करमद्य वै । धर्म्मांस्तु श्रोतुकामेन हृतं न क्रोद्धुमर्हसि ।

धर्म्मश्रुतिसमुत्कर्षो धर्म्मसेतुरनामयः । आर्षो वै शाश्वतो नित्यमव्ययोऽयं मया श्रुतः ।

तदिदं गृह्यतां विद्वन् पुष्करं द्विजसत्तम । अतिक्रमं मे भगवन् क्षन्तुमर्हस्यनिन्दित । ॥९३

ततस्तौ सत्यसङ्कल्पौ मेरौ काञ्चनपर्वते । रमणीये शिलापृष्ठे सहितौ न्यषीदतां ।
तत्र तौ कथयन्तौ स्म कथा नानाविधाश्रयाः । ब्रह्मर्षिदेवदैत्यानां पुराणानां महात्मनां ।
सुवर्णस्त्वब्रवीद्वाक्यं मनुं स्वायम्भुवं प्रति । हितार्थं सर्वभूतानां प्रश्नं मे वक्तुमर्हसि ।
सुमनोभिर्यदिज्यन्ते दैवतानि प्रजेश्वर । किमेतत् कथमुत्पन्नं फलयोगञ्च शंस मे । ४६८५
॥ मनुरुवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । शुक्रस्य च बलेश्चैव संवादं वै महात्मनोः ।
बलेर्वैरोचनस्येह त्रैलोक्यमनुशासतः । समीपमाजगामाशु शुक्रो भृगुकुलोद्वहः ।
तमर्घ्यादिभिरभ्यर्च्य भार्गवं सोऽसुराधिपः । निषसादासने पश्चाद्विधिवद्भूरिदक्षिणः ।
कथेयमभवत्तत्र त्वया या परिकीर्त्तिता । सुमनोधूपदीपानां सम्प्रदाने फलं प्रति ।
ततः पप्रच्छ दैत्येन्द्रः कवीन्द्रं प्रश्नमुत्तमं । ४६९०
॥ बलिरुवाच ॥ सुमनोधूपदीपानां किं फलं ब्रह्मवित्तम । प्रदानस्य द्विजश्रेष्ठ तद्भवान् वक्तुमर्हति ।
॥ शुक्र उवाच ॥ तपः पूर्वं समुत्पन्नं धर्मस्तस्मादनन्तरं । एतस्मिन्नन्तरे चैव वीरुदोषध्य एव च ।
सोमस्यात्मा च बहुधा सम्भूतः पृथिवीतले । अमृतञ्च विषञ्चैव याश्चान्यास्तुल्यजातयः ।
अमृतं मनसः प्रीतिं सद्यः पुष्टिं ददाति च । मनो ग्लपयते तीव्रं विषं गन्धेन सर्वशः ।
अमृतं मङ्गलं विद्धि महद्विषममङ्गलं । ओषध्यो ह्यमृतं सर्वा विषं तेजोऽग्निसम्भवं । ४६९५
मनो ह्लादयते यस्माच्छ्रियञ्चापि ददाति च । तस्मात् सुमनसः प्रोक्ता नरैः सुकृतकर्मभिः ।
देवताभ्यः सुमनसो यो ददाति नरः शुचिः । तस्य तुष्यन्ति वै देवास्तुष्टाः पुष्टिं ददत्यपि ।
यं यमुद्दिश्य दीयेरन् देवं सुमनसः प्रभो । मङ्गलार्थं स तेनास्य प्रीतो भवति दैत्यप ।
ज्ञेयास्तूग्राश्च सौम्याश्च तेजस्विन्यश्च ताः पृथक् । ओषध्यो बहुवीर्या हि बहुरूपास्तथैव च ।
यज्ञियानाञ्च वृक्षाणामयज्ञीयान्निबोध मे । आसुराणि च माल्यानि दैवतेभ्यो हितानि च । ४७००
रक्षसामुरगाणाञ्च यक्षाणाञ्च तथा प्रियाः । मनुष्याणां पितॄणाञ्च कान्ता यास्त्वनुपूर्वशः ।
वन्या ग्राम्याश्चेह तथा कृष्टोप्ताः पर्वताश्रयाः । अकण्टकाः कण्टकिनो गन्धरूपरसान्विताः ।
द्विविधो हि स्मृतो गन्ध इष्टोऽनिष्टश्च पुष्पजः । इष्टगन्धानि देवानां पुष्पाणीति विभावय ।
अकण्टकानां वृक्षाणां श्वेतप्रायाश्च वर्णतः । तेषां पुष्पाणि देवानामिष्टानि सततं प्रभो ।
जलजानि च माल्यानि पद्मादीनि च यानि च । गन्धर्वनागयक्षेभ्यस्तानि दद्याद्विचक्षणः । ४७०५
ओषध्यो रक्तपुष्पाश्च कटुकाः कण्टकान्विताः । शत्रूणामभिचारार्थमथर्वसु निदर्शिताः ।
तीक्ष्णवीर्यास्तु भूतानां दुरालम्भाः सकण्टकाः । रक्तभूयिष्ठवर्णाश्च कृष्णाश्चैवोपहारयेत् ।
मनोहृदयनन्दिन्यो विमर्दे मधुराश्च याः । चारुरूपाः सुमनसो मानुषाणां स्मृता विभो ।
न तु श्मशानसम्भूता देवतायतनोद्भवाः । सन्नयेत् पुष्टियोगेषु विवाहेषु रहःसु च ।
गिरिसानुरुहाः सौम्या देवानामुपपादयेत् । प्रोक्षिताभ्युक्षिताः सौम्या यथायोग्यं यथास्मृति । ४७१०
गन्धेन देवास्तुष्यन्ति दर्शनाद्यक्षराक्षसाः । नागाः समुपभोगेन त्रिभिरेतैस्तु मानुषाः ।

मनः प्रीणाति देवान् वै ते प्रीता भावयन्त्युत । [illegible] मर्त्यानामोषधिभिर्मनोरमैः ।
प्रीताः प्रीणयन्ति यत्नं भाविता भावयन्ति च । [illegible] सिद्धं [illegible] ।
अतऊर्द्धं प्रवक्ष्यामि धूपदानविधेः फलं । धूपांश्च विविधान् साधूनसाधूंश्च निबोध मे ।
निर्य्यासाः सारिणश्चैव कृत्रिमाश्चैव ते त्रयः । इष्टोऽनिष्टो भवेद्गन्धस्तन्मे विस्तरतः शृणु । ४७१६
निर्य्यासाः सल्लकीवर्ज्या दयितास्ते दिवौकसां । गुग्गुलुः प्रवरस्तेषां सर्व्वेषामिति निश्चयः ।
अगुरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनां । दैत्यानां सल्लकीयश्च काङ्क्षितो यश्च तद्विधः ।
अथ सर्ज्जरसादीनां गन्धैः पार्थिवदारवैः । फाणिता रससंयुक्तैर्मनुष्याणां विधीयते ।
देवदानवभूतानां सद्यस्तुष्टिकरः स्मृतः । येऽन्ये वैहारिकास्तत्र मानुषाणामिति स्मृताः ।
य एवोक्ताः सुमनसां प्रदाने गुणहेतवः । धूपेष्वपि परिज्ञेयास्त एव प्रीतिवर्द्धनाः । ४७२०
दीपदाने प्रवक्ष्यामि फलयोगमनुत्तमं । यथा येन यदा चैव प्रदेया यादृशाश्च ते ।
ज्योतिस्तेजः प्रकाशं वाऽप्यूर्द्धगञ्चापि वर्ण्यते । प्रदानं तेजसां तस्मात्तेजो वर्द्धयते नृणां ।
अन्धन्तमस्तमिस्रञ्च दक्षिणायनमेव च । उत्तरायणमेतस्माज्ज्योतिर्दानं प्रशस्यते ।
यस्मादूर्द्धगमेतत्तु तमसश्चैव भेषजं । तस्मादूर्द्धगतेर्दाता भवेदत्रेति निश्चयः ।
देवास्तेजस्विनो यस्मात् प्रभावन्तः प्रकाशकाः । तामसा राक्षसाश्चैव तस्माद्दीपः प्रदीयते । ४७२५
आलोकदानाच्चक्षुष्मान् प्रभायुक्तो भवेन्नरः । तान् दत्त्वा नोपहिंसेत न हरेन्नोपनाशयेत् ।
दीपहर्त्ता भवेदन्धस्तमोगतिरसुप्रभः । दीपप्रदः स्वर्गलोके दीपमालेव राजते ।
हविषा प्रथमः कल्पो द्वितीयश्चौषधीरसैः । वसामेदोऽस्थिनिर्य्यासैर्न कार्य्यः पुष्टिमिच्छता ।
गिरिप्रपाते गहने चैत्यस्थाने चतुष्पथे । दीपदाता भवेन्नित्यं य इच्छेद्भूतिमात्मनः ।
कुलोद्योतो विशुद्धात्मा प्रकाशत्वञ्च गच्छति । ज्योतिषाञ्चैव सालोक्यं दीपदाता नरः सदा । ४७३०
बलिकर्म्मसु वक्ष्यामि गुणान् कर्म्मफलोदयान् । देवयक्षोरगनृणां भूतानामथ रक्षसां ।
येषां नाग्रभुजो विप्रा देवतातिथिबालकाः । राक्षसानेव तान् विद्धि निर्म्मर्य्यादानमङ्गलान् ।
तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितं । शिरसा प्रयतश्चापि हरेद्बलिमतन्द्रितः ।
गृह्णन्ति देवता नित्यमाशंसन्ति सदा गृहान् । बाह्याश्चागन्तवो येऽन्ये यक्षराक्षसपन्नगाः ।
इतो दत्तेन जीवन्ति देवताः पितरस्तथा । ते प्रीताः प्रीणयन्त्येनमायुषा यशसा धनैः । ४७३५
बलयः सह पुष्पैस्तु देवानामुपहारयेत् । दधिदुग्धमयाः पुण्याः सुगन्धाः प्रियदर्शनाः ।
कार्य्या रुधिरमांसाढ्या बलयो यक्षरक्षसां । सुरासवपुरस्कारा लाजोल्लापिकभूषिताः ।
नागानां दयिता नित्यं पद्मोत्पलविमिश्रिताः । तिलान् गुडसुसम्पन्नान् भूतानामुपहारयेत् ।
अग्रदाताऽग्रभोगी स्याद्बलवीर्य्यसमन्वितः । तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितं ।
ज्वलत्यहरहो वेश्म याश्चास्य गृहदेवताः । ताः पूज्या भूतिकामेन प्रसृताग्रप्रदायिना । ४७४०
इत्येतदसुरेन्द्राय काव्यः प्रोवाच भार्गवः । सुवर्णाय मनुः प्राह सुवर्णो नारदाय च ।

नारदोऽपि मयि प्राह गुणानेतान् महाद्युते। तस्मादेतद्विदित्वैव सर्व्वमाचर पुत्रक ॥

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने सुवर्णमनुसंवादे अष्टनवतितमोऽध्यायः ॥ ९८ ॥

॥ युधिष्ठिर उवाच ॥ श्रुतं मे भरतश्रेष्ठ पुष्पधूपप्रदायिनां। फलं बलिविधाने च तद्भूयो वक्तुमर्हसि।

धूपप्रदानस्य फलं प्रदीपस्य तथैव च। बलयश्च किमर्थं वै क्षिप्यन्ते गृहमेधिभिः।

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। नहुषस्य च संवादमगस्त्यस्य भृगोस्तथा। ४७७५

नहुषो हि महाराज राजर्षिः सुमहातपाः। देवराज्यमनुप्राप्तः सुकृतेनेह कर्म्मणा।

तत्रापि प्रयतो राजन्नहुषस्त्रिदिवे वसन्। मानुषीश्चैव दिव्याश्च कुर्व्वाणो विविधाः क्रियाः।

मानुष्यस्तत्र सर्व्वाः स्म क्रियास्तस्य महात्मनः। प्रवृत्तास्त्रिदिवे राजन् दिव्याश्चैव महात्मनः।

अग्निकार्य्याणि समिधः कुशाः सुमनसस्तथा। बलयश्चान्नलाजाभिर्धूपनं दीपकर्म्म च।

सर्व्वं तस्य गृहे राज्ञः प्रावर्त्तत महात्मनः। जपयज्ञान्मनोयज्ञांस्त्रिदिवेऽपि चकार सः। ४७८०

देवानभ्यर्च्चयच्चापि विधिवत् स सुरेश्वरः। सर्व्वानेव यथान्यायं यथापूर्व्वमरिन्दम।

अथेन्द्रोऽहमिति ज्ञात्वा अहङ्कारं समाविशत्। सर्व्वाश्चैव क्रियास्तस्य पर्य्यहीयन्त भूपते।

स ऋषीन् वाहयामास वरदानमदान्वितः। परिहीनक्रियश्चैव दुर्व्वलत्वमुपेयिवान्।

तस्य वाहयतः कालो मुनिमुख्यांस्तपोधनान्। अहङ्काराभिभूतस्य सुमहानत्यवर्त्तत।

अथ पर्य्यायशः सर्व्वान् वाहनायोपचक्रमे। पर्य्यायश्चाप्यगस्त्यस्य समपद्यत भारत। ४७८५

अथागत्य महातेजा भृगुर्ब्रह्मविदाम्बरः। अगस्त्यमाश्रमस्थं वै समुपेत्येदमब्रवीत्।

एवं वयमसत्कारं देवेन्द्रस्यास्य दुर्म्मतेः। नहुषस्य किमर्थं वै मर्षयाम महामुने।

॥ अगस्त्य उवाच ॥ कथमेष मया शक्यः शप्तुं यस्य महामुने। वरदेन वरो दत्तो भवतो विदितश्च सः।

यो मे दृष्टिपथं गच्छेत् स मे वश्यो भवेदिति। इत्यनेन वरं देवो याचितो गच्छता दिवं।

एवं न दग्धः स मया भवता च न संशयः। अन्येनाप्यृषिमुख्येन न दग्धो न च पातितः। ४७९०

अमृतञ्चैव पानाय दत्तमस्मै पुरा विभो। महात्मना तदर्थञ्च नास्माभिर्व्विनिपात्यते।

प्रायच्छत वरं देवः प्रजानां दुःखकारकं। द्विजेष्वधर्म्मयुक्तानि स करोति नराधमः।

अत्र यत् प्राप्तकालं नस्तद्ब्रूहि वदताम्बर। भवांश्चापि यथा ब्रूयात् कर्त्ताऽस्मि न संशयः।

॥ भृगुरुवाच ॥ पितामहनियोगेन भवन्तं सोऽहमागतः। प्रतिकर्त्तुं बलवति नहुषे दैवमोहिते।

अद्य हि त्वां सुदुर्बुद्धी रथे योक्ष्यति देवराट्। अद्यैनमहमुद्वृत्तं करिष्येऽनिन्द्रमोजसा। ४७९५

अद्येन्द्रं स्थापयिष्यामि पश्यतस्ते शतक्रतुं। सञ्चाल्य पापकर्म्माणमिन्द्रस्थानात् सुदुर्म्मतिं।

अद्य चासौ कुदेवेन्द्रस्त्वां पदा धर्षयिष्यति। दैवोपहतचित्तत्वादात्मनाशाय मन्दधीः।

व्युत्क्रान्तधर्म्मं तमहं धर्षणामर्षितो भृशं। अहिर्भवस्वेति रुषा शप्स्ये पापं द्विजद्रुहं।

तत एनं सुदुर्बुद्धिं धिक्शब्दाभिहतत्विषं। धरण्यां पातयिष्यामि पश्यतस्ते महामुने।

नहुषं पापकर्म्माणमैश्वर्य्यबलमोहितं। यथा च रोचते तुभ्यं तथा कर्त्ताऽस्म्यहं मुने। ४८००

एवमुक्तस्तु भृगुणा मैत्रावरुणिरव्ययः। अगस्त्यः परमप्रीतो बभूव विगतज्वरः।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मे अगस्त्यभृगुसंवादे नवनवतितमोऽध्यायः॥ ९९ ॥

॥ युधिष्ठिर उवाच ॥ कथं वै स विपन्नश्च कथं वै पातितो भुवि। कथञ्चानिन्द्रतां प्राप्तस्तद्भवान् वक्तुमर्हति।

॥ भीष्म उवाच ॥ एवं तयोः संवदतोः क्रियास्तस्य महात्मनः। सर्व्वा एव प्रवर्त्तन्ते या दिव्या याश्च मानुषीः।

तथैव दीपदानानि सर्व्वोपकरणानि वै। बलिकर्म्म च यच्चान्यदुत्सेकाश्च पृथग्विधाः।

सर्व्वे तस्य समुत्पन्ना देवेन्द्रस्य महात्मनः। देवलोके नृलोके च सदाचारा बुधाः स्मृताः। ४६७५

ते चेद्भवन्ति राजेन्द्र ऋध्यन्ते गृहमेधिनः। धूपप्रदानैर्दीपैश्च नमस्कारैस्तथैव च।

यथा सिद्धस्य चान्नस्य ह्यग्रमग्रं प्रदीयते। बलयश्च गृहोद्देशे अतः प्रीयन्ति देवताः।

यथा च गृहिणस्तोषो भवेद्वै बलिकर्म्मभिः। तथा शतगुणा प्रीतिर्देवतानां प्रजायते।

एवं धूपप्रदानञ्च दीपदानञ्च साधवः। प्रयच्छन्ति नमस्कारैर्युक्तमात्मगुणावहं।

स्नानेनाद्भिश्च यत् कर्म्म क्रियते वै विपश्चिता। नमस्कारप्रयुक्तेन तेन प्रीयन्ति देवताः। ४६८०

पितरश्च महाभागा ऋषयश्च तपोधनाः। गृह्याश्च देवताः सर्व्वाः प्रीयन्ते विधिनाऽर्च्चिताः।

इत्येतां बुद्धिमास्थाय नहुषः स नरेश्वरः। सुरेन्द्रत्वं महत् प्राप्य कृतवानेतदद्भुतं।

कस्यचित्त्वथ कालस्य भाग्यक्षय उपस्थिते। सर्व्वमेतदवज्ञाय कृतवानिदमीदृशं।

ततः स परिहीणोऽभूत् सुरेन्द्रो बलिकर्म्मतः। धूपदीपोदकविधिं यथावच्च चकार ह।

ततोऽस्य यज्ञविषयो रक्षोभिः पर्य्यबध्यत। अथागस्त्यमृषिश्रेष्ठं वाहनायाजुहाव ह। ४६८५

द्रुतं सरस्वतीकूलात् स्मयन्निव महाबलः। ततो भृगुर्म्महातेजा मैत्रावरुणिमब्रवीत्।

निमीलयस्व नयने जटां यावद्विशामि ते। स्थाणुभूतस्य तस्याथ जटां प्राविशदच्युतः।

भृगुः स सुमहातेजाः पातनाय नृपस्य च। ततः स देवराट् प्राप्तस्तमृषिं वाहनाय वै।

ततोऽगस्त्यः सुरपतिं वाक्यमाह विशाम्पते। योजयस्वेति मां क्षिप्रं कञ्च देशं वहामि ते।

यत्र वक्ष्यसि तत्र त्वां नयिष्यामि सुराधिप। इत्युक्तो नहुषस्तेन योजयामास तं मुनिं। ४६९०

भृगुस्तस्य जटान्तःस्थो बभूव हृषितो भृशं। न चापि दर्शनं तस्य चकार स भृगुस्तदा।

वरदानप्रभावज्ञो नहुषस्य महात्मनः। न चुकोप तदाऽगस्त्यो युक्तोऽपि नहुषेण वै।

तन्तु राजा प्रतोदेन चोदयामास भारत। न चुकोप स धर्म्मात्मा ततः पादेन देवराट्।

अगस्त्यस्य तदा क्रुद्धो वामेनाभ्यहनच्छिरः। तस्मिञ्छिरस्यभिहते स जटान्तर्गतो भृगुः।

शशाप बलवत् क्रुद्धो नहुषं पापचेतसं। यस्मात् पदाऽहनः क्रोधाच्छिरसीमं महामुनिं। ४६९५

तस्मादाशु महीं गच्छ सर्पो भूत्वा सुदुर्म्मते। इत्युक्तः स तदा तेन सर्पो भूत्वा पपात ह।

अदृष्टेनाथ भृगुणा भूतले भरतर्षभ। भृगुं हि यदि सोऽद्राक्षीन्नहुषः पृथिवीपते।

न स शक्तोऽभविष्यद्वै पातने तस्य तेजसा। स तु तैस्तैः प्रदानैश्च तपोभिर्नियमैस्तथा।

पतितोऽपि महाराज भूतले स्मृतिमानभूत्। प्रसादयामास भृगुं शापान्तो मे भवेदिति।

अभिमानेन भूतानामिमां गतिमुपागतः। अहं वै विपुले जातः कुले धनसमन्विते।

अन्यस्मिन् जन्मनि विभो ज्ञानविज्ञानपारगः। अभवन्तत्र जानानो ह्येतान् दोषान् मदात्सदा। ४८१०

संरब्ध एव भूतानां पृष्ठमांससमश्नवं। सोऽहं तेन च वृत्तेन भोजनेन च तेन वै।

इमामवस्थां सम्प्राप्तः पश्य कालस्य पर्य्ययं। आदीप्तमिव चैलान्तं भ्रमरैरिव चार्दितं।

धावमानं सुसंरब्धं पश्य मां रजसाऽन्वितं। स्वाध्यायैस्तु महत् पापं तरन्ति गृहमेधिनः।

दानैः पृथग्विधैश्चापि यथा प्राज्ञमनीषिणः। तथा पापकृतं विप्रमाश्रमस्थं महीपते।

सर्व्वसङ्गविनिर्मुक्तं छन्दांसि तारयन्त्युत। अहं हि पापयोन्यां वै प्रसूतः क्षत्रियर्षभ। ४८१५

निश्चयं नाधिगच्छामि कथं मुच्येयमित्युत। जातिस्मरत्वञ्च मम केनचित् पूर्व्वकर्म्मणा।

शुभेन येन मोक्षं वै प्राप्तुमिच्छाम्यहं नृप। त्वमिमं सम्प्रपन्नाय संशयं ब्रूहि पृच्छते।

चाण्डालत्वात् कथमहं मुच्येयमिति सत्तम।

॥ राजन्य उवाच ॥ चाण्डाल प्रतिजानीहि येन मोक्षमवाप्स्यसि। ब्राह्मणार्थे त्यजन् प्राणान् गतिमिष्टामवाप्स्यसि।

दत्त्वा शरीरं क्रव्याद्भ्यो रणाग्नौ द्विजहेतुकं। हुत्वा प्राणान् प्रमोक्षस्ते नान्यथा मोक्षमर्हसि। ४८२०

॥ भीष्म उवाच ॥ इत्युक्तः स तदा तेन ब्रह्मस्वार्थे परन्तप। हुत्वा रणमुखे प्राणान् गतिमिष्टामवाप ह।

तस्माद्रक्ष्यं त्वया पुत्र ब्रह्मस्वं भरतर्षभ। यदिच्छसि महाबाहो शाश्वतीं गतिमात्मनः।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि राजन्यचाण्डालसंवादे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

॥ युधिष्ठिर उवाच ॥ एकलोकाः सुकृतिनः सर्व्वे त्वाहो पितामह। उत तत्रापि नानात्वं तन्मे ब्रूहि पितामह।

॥ भीष्म उवाच ॥ कर्म्मभिः पार्थ नानात्वं लोकानां यान्ति मानवाः। पुण्यान् पुण्यकृतो यान्ति पापान् पापकृतो जनाः।

अत्राप्युदाहरन्तीममितिहासं पुरातनं। गौतमस्य मुनेस्तात संवादं वासवस्य च। ४८२५

ब्राह्मणो गौतमः कश्चिन्मृदुर्दान्तो जितेन्द्रियः। महावने हस्तिशिशुं परिद्यूनममातृकं।

तं दृष्ट्वा जीवयामास सानुक्रोशो धृतव्रतः। स तु दीर्घेण कालेन बभूवातिबलो महान्।

तं प्रभिन्नं महानागं प्रस्रुतं पर्व्वतोपमं। धृतराष्ट्रस्य रूपेण शक्रो जग्राह हस्तिनं।

ह्रियमाणन्तु तं दृष्ट्वा गौतमः संशितव्रतः। अभ्यभाषत राजानं धृतराष्ट्रं महातपाः।

मा मे हार्षीर्हस्तिनं पुत्त्रमेनं दुःखात् पुष्टं धृतराष्ट्राकृतज्ञ। मैत्रं सतां साप्तपदं वदन्ति मित्रद्रोहो नैव राजन् स्पृशेत् त्वां। ४८३०

इध्मोदकप्रदातारं शून्यपालं ममाश्रमे। विनीतमाचार्य्यकुले सुयुक्तं गुरुकर्म्मणि।

शिष्टं दान्तं कृतज्ञञ्च प्रियञ्च सततं मम। न मे विक्रोशतो राजन् हर्त्तुमर्हसि कुञ्जरं।

॥ धृतराष्ट्र उवाच ॥ गवां सहस्रं भवते ददामि दासीशतं निष्कशतानि पञ्च। अन्यच्च वित्तं विविधं महर्षे किं ब्राह्मणस्येह गजेन कृत्यं।

॥ गौतम उवाच ॥ तवैव गावो हि भवन्तु राजन् दास्यः सनिष्का विविधञ्च रत्नं। अन्यच्च वित्तं विविधं नरेन्द्र किं ब्राह्मणस्येह धनेन कृत्यं।

॥ धृतराष्ट्र उवाच ॥ ब्राह्मणानां हस्तिभिर्नास्ति कृत्यं राजन्यानां नागकुलानि विप्र । स्वं धर्म्मं चरतो [illegible]
गौतमास्मान्निवर्त्त । ॥५॥

॥ गौतम उवाच ॥ यत्र प्रेतो नन्दति पुण्यकर्म्मा यत्र प्रेतः शोचते पापकर्म्मा । वैवस्वतस्य सदने महात्मनस्तत्र त्वाऽहं हस्तिनं
यातयिष्ये ।

॥ धृतराष्ट्र उवाच ॥ ये निष्क्रिया नास्तिकाः श्रद्दधानाः पापात्मान इन्द्रियार्थे निविष्टाः । यमस्य ते यातनां प्राप्नुवन्ति परं
गन्ता धृतराष्ट्रो न तत्र ।

॥ गौतम उवाच ॥ वैवस्वती संयमनी जनानां यत्रानृतं नोच्यते यत्र सत्यं । यत्राबला बलिनं यातयन्ति तत्र त्वाऽहं हस्तिनं
यातयिष्ये ।

॥ धृतराष्ट्र उवाच ॥ ज्येष्ठां स्वसारं पितरं मातरञ्च यथा शत्रुं मदमत्ताश्चरन्ति । तथाविधानामेष लोको महर्षे परं गन्ता
धृतराष्ट्रो न तत्र ।

॥ गौतम उवाच ॥ मन्दाकिनी वैश्रवणस्य राज्ञो महाभागा भोगिजनप्रवेश्या । गन्धर्व्वयक्षैरप्सरोभिश्च जुष्टा तत्र त्वाऽहं
हस्तिनं यातयिष्ये । ॥१०॥

॥ धृतराष्ट्र उवाच ॥ अतिथिव्रताः सुव्रता ये जना वै प्रतिश्रयं ददति ब्राह्मणेभ्यः । शिष्टाशिनः संविभज्याश्रितांश्च मन्दा
किनीं तेऽपि विभूषयन्ति ।

॥ गौतम उवाच ॥ मेरोरग्रे यद्वनं भाति रम्यं सुपुष्पितं किन्नरीगीतजुष्टं । सुदर्शना यत्र जम्बूर्विशाला तत्र त्वाऽहं हस्तिनं
यातयिष्ये ।

॥ धृतराष्ट्र उवाच ॥ ये ब्राह्मणा मृदवः सत्यशीला बहुश्रुताः सर्व्वभूताभिरामाः । येऽधीयन्ते सेतिहासं पुराणं मध्वाहुत्या
जुह्वति वै द्विजेभ्यः ।

तथाविधानामेष लोके महर्षे परं गन्ता धृतराष्ट्रो न तत्र । यद्विद्यते विदितं स्थानमस्ति तद्ब्रूहि त्वं त्वरितो ह्येष यामि ।

॥ गौतम उवाच ॥ सुपुष्पितं किन्नरराजजुष्टं प्रियं वनं नन्दनं नारदस्य । गन्धर्व्वाणामप्सरसाञ्च सद्म तत्र त्वाऽहं हस्तिनं
यातयिष्ये । ॥१५॥

॥ धृतराष्ट्र उवाच ॥ ये नृत्यगीतकुशला जनाः सदा ह्ययाचमानाः सहिताश्चरन्ति । तथाविधानामेष लोके महर्षे परं गन्ता
धृतराष्ट्रो न तत्र ।

॥ गौतम उवाच ॥ यत्रोत्तराः कुरवो भान्ति रम्या देवैः सार्द्धं मोदमाना नरेन्द्र । यत्राग्नियोनाश्च वसन्ति लोका अब्योनयः
पर्व्वतयोनयश्च ।

यत्र शक्रो वर्षति सर्व्वकामान् यत्र स्त्रियः कामचारा भवन्ति । यत्र चेर्ष्या नास्ति नारीनराणां तत्र त्वाऽहं हस्तिनं यातयिष्ये ।

॥ धृतराष्ट्र उवाच ॥ ये सर्व्वभूतेषु निवृत्तकामा अमांसादा न्यस्तदण्डाश्चरन्ति । न हिंसन्ति स्थावरं जङ्गमञ्च भूतानां ये सर्व्व
भूतात्मभूताः ।

निराशिषो निर्म्ममा वीतरागा लाभालाभे तुल्यनिन्दाप्रशंसाः । तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र । ॥२०॥

गङ्गां गयशिरश्चैव विपाशां स्थूलवालुकां। कृष्णां गङ्गां पञ्चनदं महाह्रदमथापि वा।
गोमतीं कौशिकीं पम्पां महात्मानो धृतव्रताः। सरस्वतीदृषद्वत्यौ यमुनां ये प्रयान्ति च।
तत्र ते दिव्यसंस्थाना दिव्यमाल्यधराः शिवाः। प्रयान्ति पुण्यगन्धाढ्या धृतराष्ट्रो न तत्र वै। ४८८०

॥ गौतम उवाच ॥ यत्र शीतभयं नास्ति न चोष्णभयमण्वपि। न क्षुत्पिपासे न ग्लानिर्न दुःखं न सुखं तथा।
न द्वेष्यो न प्रियः कश्चिन्न बन्धुर्न रिपुस्तथा। न जरामरणे तत्र न पुण्यं न च पातकं।
तस्मिन् विरजसि स्फीते प्रज्ञासत्त्वव्यवस्थिते। स्वयम्भुभवने पुण्ये हस्तिनं मे महाद्युते।

॥ धृतराष्ट्र उवाच ॥ निर्मुक्ताः सर्वसङ्गेभ्यः कृतात्मानो यतव्रताः। अध्यात्मयोगसंस्थाने युक्ताः स्वर्गगतिं गताः।
ते ब्रह्मभवनं पुण्यं प्राप्नुवन्तीह सात्त्विकाः। न तत्र धृतराष्ट्रस्ते शक्यो द्रष्टुं महामुने। ४८८५

॥ गौतम उवाच ॥ रथन्तरं यत्र बृहच्च गीयते यत्र वेदीं पुण्डरीकैः स्तृणोति। यत्रोपयाति हरिभिः सोमवीथीं तत्र त्वाऽहं हस्तिनं यातयिष्ये।

पृच्छामि त्वां वृत्रहणं शतक्रतुं व्यतिक्रमन्तं भुवनानि विश्वा। कच्चिन्न वाचा वृजिनं कदाचिदकार्षन्ते मनसोऽभिषङ्गात्।

॥ शतक्रतुरुवाच ॥ मघवाऽहं लोकपथं प्रजानामन्वागमं परिवादे गजस्य। तस्माद्भवान् प्रणतं माऽनुशास्तु ब्रवीषि यत्तत् करवाणि सर्वं।

॥ गौतम उवाच ॥ श्वेतं करेणुं मम पुत्रनागं यं मेऽहार्षीर्दशवर्षाणि बालं। यो मे वने वसतोऽभूद्द्वितीयस्तमेव मे देहि सुरेन्द्र नागं।

॥ शतक्रतुरुवाच ॥ अयं सुतस्ते द्विजमुख्य नाग आघ्रायते त्वामभिवीक्षमाणः। पादौ च ते नासिकयोपजिघ्रते श्रेयो मम ध्याहि नमश्च तेऽस्तु। ४८९०

॥ गौतम उवाच ॥ शिवं सदैवेह सुरेन्द्र तुभ्यं ध्यायामि पूजाञ्च सदा प्रयुञ्जे। ममापि त्वं शक्र शिवं ददस्व त्वया दत्तं प्रतिगृह्णामि नागं।

॥ शतक्रतुरुवाच ॥ येषां वेदा निहिता वै गुहायां मनीषिणां सत्यवतां महात्मनां। तेषां त्वयैकेन महात्मनाऽस्मि बुद्धस्तस्मात् प्रीतिमांस्तेऽहमद्य।

हन्तैहि ब्राह्मण क्षिप्रं सह पुत्रेण हस्तिना। त्वं हि प्राप्तुं शुभाँल्लोकानह्नाय च चिराय च।
स गौतमं पुरस्कृत्य सह पुत्रेण हस्तिना। दिवमाचक्रमे वज्री सद्भिः सह दुरासदं।
इमं यः शृणुयान्नित्यं यः पठेद्वा जितेन्द्रियः। स याति ब्रह्मणो लोकं ब्राह्मणो गौतमो यथा। ४८९५

इति श्रीमहाभारते अनुशासनपर्वणि आनुशासनिके पर्वणि हस्तिकूटे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

॥ युधिष्ठिर उवाच ॥ दानं बहुविधाकारं शान्तिः सत्यमहिंसितं। स्वदारतुष्टिश्चोक्ता ते फलं दानस्य चैव यत्।
पितामहस्य विदितं किमन्यत्तपसो बलात्। तपसो यत् परं तेऽद्य तन्मे व्याख्यातुमर्हसि।
॥ भीष्म उवाच ॥ तपः प्रचक्षते यावत्तावल्लोका युधिष्ठिर। मतं मम तु कौन्तेय तपो नानशनात् परं।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। भगीरथस्य संवादं ब्रह्मणश्च महात्मनः।
अतीत्य सुरलोकञ्च गवां लोकञ्च भारत। ऋषिलोकञ्च सोऽगच्छद्भगीरथ इति श्रुतं। ४९००

तन्तु दृष्ट्वा वचः प्राह ब्रह्मा राजन् भगीरथं । कथं भगीरथागास्त्वमिमं लोकं दुरासदं ।

न हि देवा न गन्धर्व्वा न मनुष्या भगीरथ । आयान्त्यतप्ततपसः कथं वै त्वमिहागतः ।

॥ भगीरथ उवाच ॥ निष्काणां वै ह्यददं ब्राह्मणेभ्यः शतं सहस्राणि सदैव दानं । ब्राह्मं व्रतं नित्यमास्थाय विद्धि नैवाहं तस्य फलादिहागां ।

दशैकरात्रान् दशपञ्चरात्रानेकादशैकादशकान् क्रतूंश्च । ज्योतिष्टोमानाञ्च शतं यदिष्टं फलेन तेनापि च नागतोऽहं ।

यच्चावसं जाह्नवीतीरनित्यः शतं समास्तप्यमानस्तपोऽहं । अदाञ्च तत्राश्वतरीसहस्रं नारीपुरं न च तेनाहमागां ।   ४८१०

दशायुतानि चाश्वानां गोयुतानि च विंशतिं । पुष्करेषु द्विजातिभ्यः प्रादां शतसहस्रशः ।

सुवर्णचन्द्रोडुपधारिणीनां कन्योत्तमानामददं सहस्रं । षष्टिं सहस्राणि विभूषितानां जाम्बूनदैराभरणैर्न तेन ।

दशार्व्वुदान्यददं गोसवेज्यास्वेकैकशो दश गा लोकनाथ । समानवत्साः पयसा समन्विताः सुवर्णकांस्योपदुहा न तेन ।

आप्तोर्य्यामेषु नियतमेकैकस्मिन् दशाददं । गृष्टीनां क्षीरदात्रीणां रोहिणीनां शतानि च ।

दोग्ध्रीणां वै गवाञ्चापि प्रयुतानि दश त्रि च । प्रादां दशगुणं ब्रह्मन् न तेनाहमुपागतः ।   ४८१५

वाजिनां बाह्लिजातानामयुतान्यददं दश । कर्क्काणां हेममालीनां न च तेनाहमागतः ।

कोटीश्च काञ्चनस्याष्टौ प्रादां ब्रह्मन् दशान्वहं । एकैकस्मिन् क्रतौ तेन फलेनाहं न चागतः ।

वाजिनां श्यामकर्णानां हरितानां पितामह । प्रादां हेमस्रजां ब्रह्मन् कोटीर्दश च सप्त च ।

ईषादन्तान्महाकायान् काञ्चनस्रग्विभूषितान् । पद्मिनो वै सहस्राणि प्रादां दश च सप्त च ।

अलङ्कृतानां देवेश दिव्यैः कनकभूषणैः । रथानां काञ्चनाङ्गानां सहस्राण्यददं दश ।   ४८२०

सप्त चान्यानि युक्तानि वाजिभिः समलङ्कृतैः । दक्षिणावयवाः केचिद्वेदैर्ये सम्प्रकीर्त्तिताः ।

वाजपेयेषु दशसु प्रादां तान्यपि चाप्यहं । शक्रतुल्यप्रभावाणामिज्यया विक्रमेण च ।

सहस्रं निष्ककण्ठानामददं दक्षिणामहं । विजित्य भूपतीन् सर्व्वानर्थैरिष्ट्वा पितामह ।

अष्टभ्यो राजसूयेभ्यो न च तेनाहमागतः । स्रोतश्च यावद्गङ्गायाश्छन्नमासीज्जगत्पते ।

दक्षिणाभिः प्रवृत्ताभिर्मम नागाञ्च तत्कृते । वाजिनान्तु सहस्रे द्वे सुवर्णशतभूषिते ।   ४८२५

वरं ग्रामशतञ्चाहमेकैकस्य त्रिधाऽददं । तपस्वी नियताहारः शममास्थाय वाग्यतः ।

दीर्घकालं हिमवति गङ्गायाश्च दुरुत्सहां । मूर्द्ध्ना धारां महादेवः शिरसा यामधारयत् ।

न तेनाप्यहमागच्छं फलेनेह पितामह ।

शम्याक्षेपैरयजं यच्च देवान् सद्यस्कानामयुतैश्चापि यत्तत् । त्रयोदश द्वादशाहांश्च देव सपौण्डरीकांश्च न तेषां फलेन ।

अष्टौ सहस्राणि ककुद्मिनामहं शुक्लर्षभाणामददं द्विजेभ्यः । एकैकं वै काञ्चनं शृङ्गमेभ्यः पत्नीश्चैषामददं निष्ककण्ठाः ।४८३०।

हिरण्यरत्ननिचयानददं रत्नपर्व्वतान् । धनधान्यैः समृद्धांश्च ग्रामाञ्छतसहस्रशः ।

शतं शतानां गृष्टीनामददञ्चाप्यतन्द्रितः । इष्ट्वाऽनेकैर्महायज्ञैर्ब्राह्मणेभ्यो न तेन च ।

एकादशाहैरयजं सदक्षिणैर्द्विर्द्वादशाहैरश्वमेधैश्च देव । आर्कायणैः षोडशभिश्च ब्रह्मंस्तेषां फलेनेह न चागतोऽस्मि ।

निष्कैककण्ठमददं योजनायतं तद्विस्तीर्णं काञ्चनपादपानां । वनं चूतानां रत्नविभूषितानां न चैव तेषामागतोऽहं फलेन ।

तस्माद्युक्तो ह्यनध्याये नाधीयीत कदाचन। प्रत्यादित्यं प्रत्यनलं प्रतिगाञ्च प्रतिद्विजान्।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः। उभे मूत्रपुरीषे तु दिवा कुर्य्यादुदङ्मुखः। ७०
दक्षिणाभिमुखो रात्रौ तथा ह्यायुर्न्नरिष्यते। त्रीन् कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः।
ब्राह्मणं क्षत्रियं सर्पं सर्व्वे ह्याशीविषास्त्रयः। दहत्याशीविषः क्रुद्धो यावत् पश्यति चक्षुषा।
क्षत्रियोऽपि दहेत् क्रुद्धो यावत् पश्यति तेजसा। ब्राह्मणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च।
तस्मादेतत्त्रयं यत्नादुपसेवेत पण्डितः। गुरुणा चैव निर्ब्बन्धो न कर्त्तव्यः कदाचन।
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर। सम्यङ्मिथ्याप्रवृत्तेऽपि वर्त्तितव्यं गुराविह। ७१
गुरुनिन्दा दहत्यायुर्म्मनुष्याणां न संशयः। दूरादावसथान्मूत्रं दूरात् पादावसेचनं।
उच्छिष्टोत्सर्ज्जनं चैव दूरे कार्य्यं हितैषिणा। रक्तमाल्यं न धार्य्यं स्यात् शुक्लं धार्य्यन्तु पण्डितैः।
वर्ज्जयित्वा तु कमलं तथा कुवलयं प्रभो। रक्तं शिरसि धार्य्यन्तु तथा वानेयमित्यपि।
काञ्चनीयाऽपि माला या न सा दुष्यति कर्हिचित्। स्नातस्य वर्णकं नित्यमार्द्रं दद्याद्विशाम्पते।
विपर्य्ययं न कुर्व्वीत वाससो बुद्धिमान्नरः। तथा नान्यधृतं धार्य्यं न चापदशमेव च। ७२
अन्यदेव भवेद्वासः शयनीये नरोत्तम। अन्यद्रथ्यासु देवानामर्च्चायामन्यदेव हि।
प्रियङ्गुचन्दनाभ्याञ्च विल्वेन तगरेण च। पृथगेवानुलिम्पेत केशरेण च बुद्धिमान्।
उपवासञ्च कुर्व्वीत स्नातः शुचिरलङ्कृतः। पर्व्वकालेषु सर्व्वेषु ब्रह्मचारी सदा भवेत्।
समानमेकपात्रे तु भुञ्जेन्नान्नं जनेश्वर। आलीढया परिहृतं भक्षयीत कदाचन।
तथा नोद्धृतसाराणि प्रेक्षते नाप्रदाय च। न सन्निकृष्टो मेधावी नाशुचिर्न्न च सत्सु च। ७३
प्रतिषिद्धान्न धर्म्मेषु भक्ष्यान् भुञ्जीत पृष्ठतः। पिप्पलञ्च वटञ्चैव शणशाकं तथैव च।
उडुम्बरं न खादेच्च भवार्थी पुरुषोत्तमः। आजं गव्यं तथा मांसं मायूरञ्चैव वर्ज्जयेत्।
वर्ज्जयेच्छुष्कमांसञ्च तथा पर्य्युषितञ्च यत्। न पाणौ लवणं विद्वान् प्राश्नीयान्न च रात्रिषु।
दधिशक्तून्न भुञ्जीत वृथामांसञ्च वर्ज्जयेत्। सायं प्रातश्च भुञ्जीत नान्तराले समाहितः।
बालेन तु न भुञ्जीत परश्राद्धं तथैव च। वाग्यतो नैकवस्त्रश्च नासंविष्टः कदाचन। ७४
भूमौ सदैव नाश्नीयान्नानासीनो न शब्दवत्। तोयपूर्व्वं प्रदायान्नमतिथिभ्यो विशेषतः।
पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः। समानमेकपङ्क्त्यान्तु भोज्यमन्नं नरेश्वर।
विषं हालाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने। पानीयं पायसं शक्तून् दधि सर्पिर्म्मधून्यपि।
निरस्य शेषमेतेषां न प्रदेयन्तु कस्यचित्। भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत्।
दधि चाप्यनुपानं वै कर्त्तव्यञ्च भवार्थिना। आचम्य चैकहस्तेन परिस्राव्यं तथोदकं। ७५
अङ्गुष्ठं चरणस्याथ दक्षिणस्यावसेचयेत्। पाणिं मूर्द्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः।
ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोगकुशलो नरः। अद्भिः प्राणान् समालभ्य नाभिं पाणितले तथा।
स्पृशंश्चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना। अङ्गुष्ठस्यान्तराले च ब्राह्मं तीर्थमुदाहृतं।

कनिष्ठिकायाः पश्चात्तु देवतीर्थमिहोच्यते । अङ्गुष्ठस्य च यन्मध्यं प्रदेशिन्याश्च भारत ।
तेन पित्र्याणि कुर्व्वीत स्पृष्ट्वापो न्यायतस्तथा । परापवादं न ब्रूयान्नाप्रियञ्च कदाचन । [illegible]
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना । पतितैस्तु कथां नेच्छेद्दर्शनञ्च विवर्ज्जयेत् ।
संसर्गं न च गच्छेत तथायुर्व्विन्दते महत् । न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीं ।
न चास्नातां स्त्रियं गच्छेत्तथायुर्व्विन्दते महत् । स्वे स्वे तीर्थे समाचम्य कार्य्ये समुपकल्पिते ।
त्रिः पीत्वापो द्विः प्रमृज्य कृतशौचो भवेन्नरः । इन्द्रियाणि सकृत् स्पृश्य त्रिरभ्युक्ष्य च मानवः ।
कुर्व्वीत पित्र्यं दैवञ्च वेददृष्टेन कर्म्मणा । ब्राह्मणार्थे च यच्छौचं तच्च मे शृणु कौरव । [illegible]
पवित्रञ्च हितञ्चैव भोजनाद्यन्तयोस्तथा । सर्व्वशौचेषु ब्राह्मेण तीर्थेन समुपस्पृशेत् ।
निष्ठीव्य तु तथा क्षुत्वा स्पृश्यापो हि शुचिर्भवेत् । वृद्धो ज्ञातिस्तथा मित्रं दरिद्रो यो भवेदपि ।
गृहे वासयितव्यास्ते धन्यमायुष्यमेव च । गृहे पारावता धन्याः शुकाश्च सहसारिकाः ।
गृहेष्वेते न पापाय तथा वै तैलपायिकाः । उद्दीपकाश्च गृध्राश्च कपोता भ्रमरास्तथा ।
निविशेयुर्यदा तत्र शान्तिमेव तदाचरेत् । अमङ्गल्यानि चैतानि तथाक्रोशा महात्मनां । [illegible]
महात्मनोऽतिगुह्यानि न वक्तव्यानि कर्हिचित् । अगम्याश्च न गच्छेत राज्ञः पत्नीं सखीं तथा ।
वैद्यानां बालवृद्धानां भृत्यानाञ्च युधिष्ठिर । बन्धूनां ब्राह्मणानाञ्च तथा शारणिकस्य च ।
सम्बन्धिनाञ्च राजेन्द्र तथायुर्विन्दते महत् । ब्राह्मणस्थपतिभ्याञ्च निर्म्मितं यन्निवेशनं ।
तदावसेत् सदा प्राज्ञो भवार्थी मनुजेश्वर । सन्ध्यायां न स्वपेद्राजन् विद्यां न च समाचरेत् ।
न भुञ्जीत च मेधावी तथायुर्व्विन्दते महत् । नक्तं न कुर्य्यात्पित्र्याणि भुक्त्वा चैव प्रसाधनं । [illegible]
पानीयस्य क्रिया नक्तं न कार्य्या भूतिमिच्छता । वर्ज्जनीयाश्च वै नित्यं सक्तवो निशि भारत ।
शेषाणि चावदातानि पानीयस्यापि भोजने । सौहित्यं न च कर्त्तव्यं रात्रौ न च समाचरेत् ।
द्विजच्छेदं न कुर्व्वीत भुक्त्वा न च समाचरेत् । महाकुले प्रसूताञ्च प्रशस्तां लक्षणैस्तथा ।
वयस्थाञ्च महाप्राज्ञः कन्यामावोढुमर्हति । अपत्यमुत्पाद्य ततः प्रतिष्ठाप्य कुलं ततः ।
पुत्त्राः प्रदेया ज्ञानेषु कुलधर्म्मेषु भारत । कन्या चोत्पाद्य दातव्या कुलपुत्त्राय धीमते । [illegible]
पुत्त्रा निवेश्याश्च कुलाद्भृत्या लभ्याश्च भारत । शिरःस्नातोऽथ कुर्व्वीत दैवं पित्र्यमथापि वा ।
नक्षत्रे न च कुर्व्वीत यस्मिन् जातो भवेन्नरः । न प्रोष्ठपदयोः कार्य्यं तथाग्नेये च भारत ।
दारुणेषु च सर्व्वेषु प्रत्यरिञ्च विवर्ज्जयेत् । ज्योतिषे यानि चोक्तानि तानि सर्व्वाणि भारत ।
प्राङ्मुखः श्मश्रुकर्म्माणि कारयेत् सुसमाहितः । उदङ्मुखो वा राजेन्द्र तथायुर्व्विन्दते महत् ।
परिवादं न च ब्रूयात्परेषामात्मनस्तथा । परिवादो ह्यधर्म्माय प्रोच्यते भरतर्षभ । [illegible]
वर्ज्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम । समार्षां व्यङ्गिताञ्चैव मातुः सकुलजां तथा ।
वृद्धां प्रव्रजिताञ्चैव तथैव च पतिव्रतां । तथा निकृष्टवर्णाञ्च वर्णोत्कृष्टाञ्च वर्ज्जयेत् ।
पिङ्गलां कुष्ठिनीं नारीं न त्वमावोढुमर्हसि । अपस्मारिकुले जातां निहीनाञ्चैव वर्ज्जयेत् ।

स्त्रियं स्वे च कुले जातां क्षयिणां मनुजेश्वर । लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः ।
मनोज्ञा दर्शनीया च तां भवान् वोढुमर्हसि । महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर । ५०९०
अपरा पतिता चैव न ग्राह्या भूतिमिच्छता । अग्नीनुत्पाद्य यत्नेन क्रियाः सुविहिताश्च याः ।
वेदे च ब्राह्मणैः प्रोक्तास्ताश्च सर्व्वाः समाचरेत् । न चेर्ष्या स्त्रीषु कर्त्तव्या रक्ष्या दाराश्च सर्व्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्ज्जयेत् । अनायुष्यं दिवा स्वप्नं तथाऽभ्युदितशायिता ।
प्रगे निशामाशु तथा ये चोच्छिष्टाः स्वपन्ति वै । पारदार्य्यमनायुष्यं नापितोच्छिष्टता तथा ।
यत्नतो नैव कर्त्तव्यमभ्यासश्चैव भारत । सन्ध्यायां न च भुञ्जीत न स्नायेन्न पठेत्तथा । ५०९५
प्रयतश्च भवेत्तस्यां न च किञ्चित् समाचरेत् । ब्राह्मणान् पूजयेच्चापि तथा स्नात्वा नराधिप ।
देवांश्च प्रणमेत् स्नातो गुरूंश्चाप्यभिवादयेत् । अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत दर्शकः ।
अनर्च्चिते ह्यनायुष्यं गमनं तत्र भारत । न चैकेन परिव्रज्यं न गन्तव्यं तथा निशि ।
अनागतायां सन्ध्यायामागत्य च गृहे वसेत् । मातुः पितुर्गुरूणाञ्च कार्य्यमेवानुशासनं ।
हितं वाऽप्यहितं वाऽपि न विचार्य्यं कथञ्चन । धनुर्व्वेदे च वेदे च यत्नः कार्य्यो नराधिप । ५१००
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्य्यासु चैव ह । यत्नवान् भव राजेन्द्र यत्नवान् सुखमेधते ।
अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च । प्रजापालनयुक्तश्च न क्षतिं लभते क्वचित् ।
युक्तिशास्त्रञ्च ते ज्ञेयं शब्दशास्त्रञ्च भारत । गान्धर्व्वशास्त्रञ्च कलाः परिज्ञेया नराधिप ।
पुराणमितिहासाश्च तथाख्यानानि यानि च । महात्मनाञ्च चरितं श्रोतव्यं नित्यमेव च ।
पत्नीं रजस्वलां या च नाभिगच्छेन्न चाह्वयेत् । स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः । ५१०५
पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान् भवेत् । एतेन विधिना पत्नीमुपागच्छेत पण्डितः ।
ज्ञातिसम्बन्धिमित्राणि पूजनीयानि सर्व्वशः । यष्टव्यञ्च यथाशक्ति यज्ञैर्व्विविधदक्षिणैः ।
अत ऊर्द्ध्वमरण्यञ्च सेवितव्यं नराधिप । एष ते लक्षणोद्देश आयुष्याणां प्रकीर्त्तितः ।
शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्य्यो युधिष्ठिर । आचारो भूतिजनन आचारः कीर्त्तिवर्द्धनः ।
आचाराद्वर्द्धते ह्यायुराचारो हन्त्यलक्षणं । आगमानां हि सर्व्वेषामाचारः श्रेष्ठ उच्यते । ५११०
आचारप्रभवो धर्म्मो धर्म्मादायुर्व्विवर्द्धते । एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
अनुकम्प्य सर्व्ववर्णान् ब्रह्मणा समुदाहृतं ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि आयुष्याख्याने चतुरधिकशततोऽध्यायः ॥ १०४ ॥

॥ युधिष्ठिर उवाच ॥ यथा ज्येष्ठः कनिष्ठेषु वर्त्तेत भरतर्षभ । कनिष्ठाश्च यथा ज्येष्ठे वर्त्तेरंस्तद्ब्रवीहि मे ।
॥ भीष्म उवाच ॥ ज्येष्ठवत्तात वर्त्तस्व ज्येष्ठोऽसि सततं भवान् । गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ।
न गुरावकृतप्रज्ञे शक्यं शिष्येण वर्त्तितुं । गुरोर्हि दीर्घदर्शित्वं यत्तच्छिष्यस्य भारत । ५११५
अन्धः स्यादन्धवेलायां जडः स्यादपि वा बुधः । परिहारेण तद्ब्रूयाद्यस्तेषां स्याद्व्यतिक्रमः ।
प्रत्यक्षं भिन्नहृदया भेदयेयुः कृतं नराः । श्रियाऽभितप्ताः कौन्तेय भेदकामास्तथाऽरयः ।

ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः। हन्ति सर्व्वमपि ज्येष्ठः कुलं यत्र च जायते।
अथ यो विनिकुर्व्वीत ज्येष्ठो भ्राता यवीयसः। अज्येष्ठः स्यादभागश्च नियम्यो राजभिश्च सः।
निकृती हि नरो लोकान् पापान् गच्छत्यसंशयं। विदुलस्येव तत् पुष्पं मोघं जनयितुः स्मृतं। ५५५०
सर्व्वानर्थः कुले यत्र जायते पापपूरुषः। अकीर्त्तिं जनयत्येव कीर्त्तिमन्तर्द्दधाति च।
सर्व्वे चापि विकर्म्मस्था भागं नार्हन्ति सोदराः। नाप्रदाय कनिष्ठेभ्यो ज्येष्ठः कुर्व्वीत यौतकं।
अनुपघ्नन् पितुर्द्दायं जङ्घाश्रमफलोऽध्वगः। स्वयमीहितलब्धन्तु नाकामो दातुमर्हति।
भ्रातॄणामविभक्तानामुत्थानमपि चेत् सह। अपुत्रभागं विषमं पिता दद्यात् कदाचन।
न ज्येष्ठो वावमन्येत दुष्कृतः प्राकृतोऽपि वा। यदि स्त्री यद्यवरजः श्रेयश्चेत्तत्तदाचरेत्। ५५५५
धर्म्मं हि श्रेय इत्याहुरिति धर्म्मविदो जनाः। दशाचार्य्यानुपाध्याय उपाध्यायान् पिता दश।
दश चैव पितॄन्माता सर्व्वां वा पृथिवीमपि। गौरवेणाभिभवति नास्ति मातृसमो गुरुः।
माता गरीयसी यच्च तेनैतां मन्यते जनः। ज्येष्ठो भ्राता पितृसमो मृते पितरि भारत।
स ह्येषां वृत्तिदाता स्यात् स चैतान् प्रतिपालयेत्। कनिष्ठास्तं नमस्येरन् सर्व्वे छन्दानुवर्त्तिनः।
तमेव चोपजीवेरन् यथैव पितरं तथा। शरीरमेतौ सृजतः पिता माता च भारत। ५५६०
आचार्य्यशास्ता या जातिः सा सत्या साऽजराऽमरा। ज्येष्ठा मातृसमा चापि भगिनी भरतर्षभ।
भ्रातुर्भार्य्या च तद्वत् स्यात् यस्या बाल्ये स्तनं पिबेत्।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि ज्येष्ठकनिष्ठधर्म्मकथने पञ्चाधिकशततमोऽध्यायः॥ १०५ ॥

॥ युधिष्ठिर उवाच ॥ सर्व्वेषामेव वर्णानां म्लेच्छानाञ्च पितामह। उपवासे मतिरियं कारणञ्च न विद्महे।
ब्रह्मक्षत्रेण नियमाश्चर्त्तव्या इति नः श्रुतं। उपवासे कथं तेषां कृत्यमस्ति पितामह।
नियमांश्चोपवासांश्च सर्व्वेषां ब्रूहि पार्थिव। आप्नोति कां गतिं तात उपवासपरायणः। ५५६५
उपवासः परं पुण्यमुपवासः परायणं। उपोष्येह नरश्रेष्ठ किं फलं प्रतिपद्यते।
अधर्म्मान्मुच्यते केन धर्म्ममाप्नोति वा कथं। स्वर्गं पुण्यञ्च लभते कथं भरतसत्तम।
उपोष्य चापि किं तेन प्रदेयं स्यान्नराधिप। धर्म्मेण च सुखानर्थान् लभेद्येन ब्रवीहि तं।
॥ वैशम्पायन उवाच ॥ एवं ब्रुवाणं कौन्तेयं धर्म्मज्ञं धर्म्मतत्त्ववित्। धर्म्मपुत्रमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत्।
॥ भीष्म उवाच ॥ इदं खलु मया राजन् श्रुतमासीत् पुरातनं। उपवासविधौ श्रेष्ठा गुणा ये भरतर्षभ। ५५७०
ऋषिमङ्गिरसं पूर्व्वं पृष्टवानस्मि भारत। यथा मां त्वं तथैवाहं पृष्टवांस्तं तपोधनं।
प्रश्नमेतन्मया पृष्टो भगवानग्निसम्भवः। उपवासविधिं पुण्यमाचष्ट भरतर्षभ।
॥ अङ्गिरा उवाच ॥ ब्रह्मक्षत्रे त्रिरात्रञ्च विहितं कुरुनन्दन। द्विस्त्रिरात्रमथैकाहं निर्द्दिष्टं पुरुषर्षभ।
वैश्याः शूद्राश्च यन्मोहादुपवासं प्रचक्रिरे। त्रिरात्रं वा द्विरात्रं वा तयोर्व्युष्टिर्न विद्यते।
चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते। त्रिरात्रं न तु धर्म्मज्ञैर्व्विहितं धर्म्मदर्शिभिः। ५५७५
पञ्चम्यां वाऽपि षष्ठ्याञ्च पौर्णमास्याञ्च भारत। उपोष्य एकभक्तेन नियतात्मा जितेन्द्रियः।

क्षमावान् रूपसम्पन्नः श्रुतवांश्चैव जायते। नानपत्यो भवेत् प्राज्ञो दरिद्रो वा कदाचन।
यजिष्णुः पञ्चमीं षष्ठीं कुले भोजयेद्द्विजान्। अष्टमीमथ कौरव्य कृष्णपक्षे चतुर्द्दशीं।
उपोष्य व्याधिरहितो वीर्य्यवानभिजायते। मार्गशीर्षन्तु यो मासमेकभक्तेन सङ्क्षपेत्।
भोजयेच्च द्विजान् भक्त्या स मुच्येद्व्याधिकिल्बिषैः। सर्व्वकल्याणसम्पूर्णः सर्व्वौषधिसमन्वितः। ५५१०
उपोष्य व्याधिरहितो वीर्य्यवानभिजायते। पौषमासन्तु कौन्तेय भक्तेनैकेन यः क्षपेत्।
सुभगो दर्शनीयश्च यशोभागी च जायते। माघन्तु नियतो मासमेकभक्तेन यः क्षपेत्।
श्रीमत्कुले ज्ञातिमध्ये स महत्त्वं प्रपद्यते। भगदैवतमासन्तु एकभक्तेन यः क्षपेत्।
स्त्रीषु वल्लभतां याति वश्याश्चास्य भवन्ति ताः। चैत्रन्तु नियतो मासमेकभक्तेन यः क्षपेत्।
सुवर्णमणिमुक्ताढ्ये कुले महति जायते। निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः। ५५१५
नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत्। ज्येष्ठामूलन्तु यो मासमेकभक्तेन सङ्क्षपेत्।
ऐश्वर्य्यमतुलं श्रेष्ठं पुमान् स्त्री वा प्रपद्यते। आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते। श्रावणं नियतो मासमेकभक्तेन यः क्षपेत्।
यत्र तत्राभिषेकेण पूज्यते ज्ञातिवर्द्धनः। प्रौष्ठपदन्तु यो मासमेकाहारो भवेन्नरः।
धनाढ्यं स्फीतमचलमैश्वर्य्यं प्रतिपद्यते। तथैवाश्वयुजं मासमेकभक्तेन यः क्षपेत्। ५५२०
मृजावान् वाहनाढ्यश्च बहुपुत्रश्च जायते। कार्त्तिकन्तु नरो मासं यः कुर्य्यादेकभोजनं।
शूरश्च बहुभार्य्यश्च कीर्त्तिमांश्चैव जायते। इति मासा नरव्याघ्र क्षपतां परिकीर्त्तिताः।
तिथीनां नियमा ये तु शृणु तानपि पार्थिव। पक्षे पक्षे गते यस्तु भक्तमश्नाति मानवः।
गवाढ्यो बहुपुत्रश्च दीर्घायुश्च स जायते। मासि मासि त्रिरात्राणि कृत्वा वर्षाणि द्वादश।
गणाधिपत्यं प्राप्नोति निःसपत्नमनाविलं। एते तु नियमाः सर्व्वे कर्त्तव्याः शरदो दश। ५५२५
द्वे चान्ये भरतश्रेष्ठ प्रवृत्तिमनुवर्त्तता। यस्तु प्रातस्तथा सायं भुञ्जानो नान्तरा पिबेत्।
अहिंसानिरतो नित्यं जुह्वानो जातवेदसं। षड्भिः स वर्षैर्नृपते सिध्यते नात्र संशयः।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः। अधिवासे सोऽप्सरसां नृत्यगीतविनादिते।
रमते स्त्रीसहस्राढ्ये सुकृती विरजा नरः। तप्तकाञ्चनवर्णाभं विमानमधिरोहति।
पूर्णं वर्षसहस्रञ्च ब्रह्मलोके महीयते। तत्क्षयादिह चागत्य माहात्म्यं प्रतिपद्यते। ५५३०
यस्तु संवत्सरं पूर्णमेकाहारो भवेन्नरः। अतिरात्रस्य यज्ञस्य स फलं समुपाश्नुते।
दशवर्षसहस्राणि स्वर्गे च स महीयते। तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते।
यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते। अहिंसानिरतो नित्यं सत्यवाग्विजितेन्द्रियः।
वाजपेयस्य यज्ञस्य स फलं समुपाश्नुते। दशवर्षसहस्राणि स्वर्गलोके महीयते।
षष्ठे काले तु कौन्तेय नरः संवत्सरं क्षपन्। अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः। ५५३५
चक्रवाकप्रयुक्तेन विमानेन स गच्छति। चत्वारिंशत्सहस्राणि वर्षाणां दिवि मोदते।

अष्टमेन तु भक्तेन जीवेत् संवत्सरं नृप । गवामयस्य यज्ञस्य फलं प्राप्नोति मानवः ।
हंससारसयुक्तेन विमानेन स गच्छति । पञ्चाशत्तु सहस्राणि वर्षाणां दिवि मोदते ।
पक्षे पक्षे गते राजन् योऽश्नीयाद्वर्षमेव तु । षण्मासानशनं तस्य भगवानङ्गिराऽब्रवीत् ।
षष्टिं वर्षसहस्राणि दिवमावसते स च । वीणानां वल्लकीनाञ्च वेणूनाञ्च विशाम्पते । ५१८०
सुघोषैर्मधुरैः शब्दैः सुप्तः सम्प्रतिबोध्यते । संवत्सरमिहैकन्तु मासि मासि पिबेदपः ।
फलं विश्वजितस्तात प्राप्नोति स नरो नृप । सिंहव्याघ्रप्रयुक्तेन विमानेन स गच्छति ।
सप्ततिञ्च सहस्राणि वर्षाणां दिवि मोदते । मासादूर्द्ध्वं नरव्याघ्र नोपवासो विधीयते ।
विधिं त्वनशनस्याहुः पार्थ धर्मविदो जनाः । अनार्त्तो व्याधिरहितो गच्छेदनशनन्तु यः ।
पदे पदे यज्ञफलं समाप्नोति न संशयः । दिवं हंसप्रयुक्तेन विमानेन स गच्छति । ५१८५
शतं वर्षसहस्राणां मोदते स दिवि प्रभुः । शतमप्सरसः कन्या वेदयन्त्यपि तं नरं ।
आर्त्तो वा व्याधितो वाऽपि गच्छेदनशनन्तु यः । शतं वर्षसहस्राणां मोदते स दिवि प्रभो ।
काञ्चीनूपुरशब्देन सुप्तश्चैव प्रबोध्यते । सहस्रहंससंयुक्तेन विमानेन तु गच्छति ।
स गत्वा स्त्रीशताकीर्णे रमते भरतर्षभ । क्षीणस्याप्यायनं दृष्टं क्षतस्य क्षतरोहणं ।
व्याधितस्यौषधग्रामः क्रुद्धस्य च प्रसादनं । दुःखितस्यार्थमानाभ्यां दुःखानां प्रतिषेधनं । ५१९०
न चैते स्वर्गकामस्य रोचन्ते सुखमेधसः । अतः स कामसंयुक्तो विमाने हेमसन्निभे ।
रमते स्त्रीशताकीर्णे पुरुषोऽलङ्कृतः शुचिः । स्वस्थः सफलसङ्कल्पः सुखी विगतकल्मषः ।
अनश्नन् देहमुत्सृज्य फलं प्राप्नोति मानवः । बालसूर्य्यप्रतीकाशे विमाने हेमवर्च्चसि ।
वैदूर्य्यमुक्ताखचिते वीणामुरजनादिते । पताकादीपिकाकीर्णे दिव्यघण्टानिनादिते ।
स्त्रीसहस्रानुचरिते स नरः सुखमेधते । यावन्ति रोमकूपानि तस्य गात्रेषु पाण्डव । ५१९५
तावन्त्येव सहस्राणि वर्षाणां दिवि मोदते । नास्ति वेदात् परं शास्त्रं नास्ति मातृसमो गुरुः ।
न धर्म्मात् परमो लाभस्तपो नानशनात् परं । ब्राह्मणेभ्यः परं नास्ति पावनं दिवि चेह च ।
उपवासैस्तथा तुल्यं तपःकर्म्म न विद्यते । उपोष्य विधिवद्देवास्त्रिदिवं प्रतिपेदिरे ।
ऋषयश्च परां सिद्धिमुपवासैरवाप्नुवन् । दिव्यं वर्षसहस्राणि विश्वामित्रेण धीमता ।
क्षान्तमेकेन भक्तेन तेन विप्रत्वमागतः । च्यवनो जमदग्निश्च वशिष्ठो गौतमो भृगुः । ५२००
सर्व्व एव दिवं प्राप्ताः क्षमावन्तो महर्षयः । इदमङ्गिरसा पूर्व्वं महर्षिभ्यः प्रदर्शितं ।
यः प्रदर्शयते नित्यं न स दुःखमवाप्नुयात् ।
इदन्तु कौन्तेय यथाक्रमं विधिं प्रवर्त्तितं ह्यङ्गिरसा महर्षिणा । पठेच्च यो वै शृणुयाच्च नित्यदा न विद्यते तस्य नरस्य किल्बिषं ।
विमुच्यते चापि स सर्व्वसङ्करैर्नचास्य दोषैरभिभूयते मनः । वियोनिजानाञ्च विजानते रुतं ध्रुवाञ्च कीर्त्तिं लभते नरोत्तमः ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने उपवासविधौ षडधिकशततमोऽध्यायः ॥ १०६ ॥

॥ युधिष्ठिर उवाच ॥ पितामहेन विधिवद्यज्ञाः प्रोक्ता महात्मना । गुणाश्चैषां यथातथ्यं प्रेत्य चेह च सर्व्वशः ॥ ५१०५

न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं पितामह । बहूपकरणा यज्ञा नानासम्भारविस्तराः ।
पार्थिवै राजपुत्रैर्व्वा शक्याः प्राप्तुं पितामह । नार्थन्यूनैरवगुणैरेकात्मभिरसंहतैः ।
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं सदा भवेत् । तुल्यो यज्ञफलैरेतैस्तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ इदमङ्गिरसा प्रोक्तमुपवासफलात्मकं । विधिं यज्ञफलैस्तुल्यं तन्निबोध युधिष्ठिर ।
यस्तु कल्यं तथा सायं भुञ्जानो नान्तरा पिबेत् । अहिंसानिरतो नित्यं जुह्वानो जातवेदसं । ५११०
षड्भिरेव स वर्षैस्तु सिध्यते नात्र संशयः । तप्तकाञ्चनवर्णञ्च विमानं लभते नरः ।
देवस्त्रीणामधीवासे नृत्यगीतनिनादिते । प्राजापत्ये वसेत् पद्मं वर्षाणामग्निसन्निभे ।
त्रीणि वर्षाणि यः प्राशेत् सततन्त्वेकभोजनं । धर्म्मपत्नीरतो नित्यं अग्निष्टोमफलं लभेत् ।
यज्ञं बहुसुवर्णं वा वासवप्रियमाचरेत् । सत्यवाग्दानशीलश्च ब्रह्मण्यश्चानसूयकः ।
क्षान्तो दान्तो जितक्रोधः स गच्छति परां गतिं । पाण्डुराभ्रप्रतीकाशे विमाने हंसलक्षणे । ५११५
द्वे समाप्ते ततः पद्मे सोऽप्सरोभिर्व्वसेत् सह । द्वितीये दिवसे यस्तु प्राश्नीयादेकभोजनं ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसं । अग्निकार्य्यपरो नित्यं नित्यं कल्यप्रबोधनः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः । हंससारसयुक्तञ्च विमानं लभते नरः ।
इन्द्रलोके च वसते वरस्त्रीभिः समावृतः । तृतीये दिवसे यस्तु प्राश्नीयादेकभोजनं ।
सदा द्वादश मासांस्तु जुह्वानो जातवेदसं । अग्निकार्य्यपरो नित्यं नित्यं कल्यप्रबोधनः । ५१२०
अतिरात्रस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमं । मयूरहंससंयुक्तं विमानं लभते नरः ।
सप्तर्षीणां सदा लोके सोऽप्सरोभिर्व्वसेत् सह । निवर्त्तनञ्च तत्रास्य त्रीणि पद्मानि वै विदुः ।
दिवसे यश्चतुर्थे तु प्राश्नीयादेकभोजनं । सदा द्वादशमासान् वै जुह्वानो जातवेदसं ।
वाजपेयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमं । इन्द्रकन्याधिरूढञ्च विमानं लभते नरः ।
सागरस्य च पर्य्यन्ते वासवं लोकमावसेत् । देवराजस्य च क्रीडां नित्यकालमवेक्षते । ५१२५
दिवसे पञ्चमे यस्तु प्राश्नीयादेकभोजनं । सदा द्वादशमासांस्तु जुह्वानो जातवेदसं ।
अलुब्धः सत्यवादी च ब्रह्मण्यश्चाविहिंसकः । अनसूयुरपापस्थो वाजपेयफलं लभेत् ।
जाम्बूनदमयं दिव्यं विमानं हंसलक्षणं । सूर्य्यमालासमाभासमारोहेत् पाण्डुरं गृहं ।
आवर्त्तनानि चत्वारि तथा पद्मानि द्वादश । शराग्निपरिमाणञ्च तथाऽसौ वसते सुखं ।
दिवसे यस्तु षष्ठे वै मुनिः प्राशेत भोजनं । सदा द्वादशमासान् वै जुह्वानो जातवेदसं । ५१३०
सदा त्रिषवणस्नायी ब्रह्मचार्य्यनसूयकः । गवां मेधस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमं ।
अग्निज्वालासमाभासं हंसबर्हिणसेवितं । शातकुम्भसमायुक्तं साधयेद्यानमुत्तमं ।
तथैवाप्सरसामङ्के प्रसुप्तः प्रबोध्यते । नूपुराणां निनादेन मेखलानाञ्च निस्वनैः ।
कोटीसहस्रं वर्षाणां त्रीणि कोटिशतानि च । पद्मान्यष्टादश तथा पताके द्वे तथैव च ।

अयुतानि च पञ्चाशदृक्षचर्म्मशतस्य च । लोम्नां प्रमाणेन समं ब्रह्मलोके महीयते । ५५३५
दिवसे सप्तमे यस्तु प्राश्नीयादेकभोजनं । सदा द्वादशमासान् वै जुह्वानो जातवेदसं ।
सरस्वतीं गोपयानो ब्रह्मचर्य्यं समाचरेत् । सुमनोवर्णकञ्चैव मधुमांसञ्च वर्जयेत् ।
पुरुषो मरुतां लोकमिन्द्रलोकं स गच्छति । तत्र तत्र च सिद्धार्थो देवकन्याभिरर्च्यते ।
फलं बहुसुवर्णस्य यज्ञस्य लभते नरः । सङ्ख्यामतिगुणां वाऽपि तेषु लोकेषु मोदते ।
यस्तु संवत्सरं क्षान्तो भुङ्क्तेऽहन्यष्टमे नरः । देवकार्य्यपरो नित्यं जुह्वानो जातवेदसं । ५५४०
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमं । पद्मवर्णनिभञ्चैव विमानमधिरोहति ।
कृष्णाः कनकवर्णाश्च नार्य्यः श्यामास्तथाऽपराः । वयोरूपविलासिन्यो लभते नात्र संशयः ।
यस्तु संवत्सरं भुङ्क्ते नवमे नवमेऽहनि । सदा द्वादशमासान् वै जुह्वानो जातवेदसं ।
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमं । पुण्डरीकप्रकाशञ्च विमानं लभते नरः ।
दीप्तसूर्य्याग्नितेजोभिर्दिव्यमालाभिरेव च । नीयते रुद्रकन्याभिः सोऽन्तरीक्षं सनातनं । ५५४५
अष्टादशसहस्राणि वर्षाणां कल्पमेव च । कोटीशतसहस्रञ्च तेषु लोकेषु मोदते ।
यस्तु संवत्सरं भुङ्क्ते दशाहे वै गते गते । सदा द्वादशमासान् वै जुह्वानो जातवेदसं ।
ब्रह्मकन्यानिवासे च सर्व्वभूतमनोहरे । अश्वमेधसहस्रस्य फलं प्राप्नोत्यसंशयं ।
रूपवत्यश्च तं कन्या रमयन्ति सदा नरं । नीलोत्पलनिभैर्व्वर्णै रक्तोत्पलनिभैस्तथा ।
विमानं मण्डलावर्त्तमावर्त्तगहनाकुलं । सागरोर्म्मिप्रतीकाशं स लभेद्यानमुत्तमं । ५५५०
विचित्रमणिमालाभिर्नादितं शङ्खनिस्वनैः । स्फाटिकैर्व्वज्रसारैश्च स्तम्भैः सुकृतवेदितं ।
आरोहति महद्यानं हंससारसनादितं । कोटीशतसहस्रं स देवलोके प्रमोदते ।
एकादशे तु दिवसे यः प्राप्ते प्राशते हविः । सदा द्वादशमासांस्तु जुह्वानो जातवेदसं ।
परस्त्रियं नाभिलषेद्वाचाऽथ मनसाऽपि वा । अनृतञ्च न भाषेत मातापित्रोः कृतेऽपि च ।
अभिगच्छेन्महादेवं विमानस्थं महाबलं । अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमं । ५५५५
स्वायम्भुवञ्च पश्येत विमानं समुपस्थितं । कुमार्य्यः काञ्चनाभासा रूपवत्यो नयन्ति तं ।
रुद्राणां तमधीवासं दिवि दिव्यं मनोहरं । वर्षाण्यपरिमेयानि युगान्ताग्निसमप्रभः ।
कोटीशतसहस्रञ्च दशकोटिशतानि च । रुद्रं नित्यं प्रणमते देवदानवसम्मतः ।
स तस्मै दर्शनं प्राप्तो दिवसे दिवसे भवेत् । दिवसे द्वादशे यस्तु प्राप्ते वै प्राशते हविः ।
सदा द्वादशमासान् वै सर्व्वमेधफलं लभेत् । आदित्यैर्द्वादशैस्तस्य विमानं संविधीयते । ५५६०
मणिमुक्ताप्रवालैश्च महार्हैरुपशोभितं । हंसमालापरिक्षिप्तं नागवीथीसमाकुलं ।
मयूरैश्चक्रवाकैश्च कूजद्भिरुपशोभितं । अट्टैर्महद्भिः संयुक्तं ब्रह्मलोके प्रतिष्ठितं ।
नित्यमावसथं राजन्नरनारीसमाकुलं । ऋषिरेव महाभागस्त्वङ्गिराः प्राह धर्म्मवित् ।
त्रयोदशे तु दिवसे प्राप्ते यः प्राशते हविः । सदा द्वादशमासान् वै देवसत्रफलं लभेत् ।

रुक्मपद्मोदयं नाम विमानं साधयेन्नरः । जातरूपप्रयुक्तन्तु रत्नसञ्चयभूषितं । ५२६५
देवकन्याभिराकीर्णं दिव्याभरणभूषितं । पुण्यगन्धोदयं दिव्यं वायव्यैरुपशोभितं ।
तत्र शङ्कुपताके द्वे युगान्तं कल्पमेव च । अयुतायुतं तथा पद्मं समुद्रञ्च तथा वसेत् ।
गीतगन्धर्व्वघोषैश्च भेरीपणवनिस्वनैः । सदा प्रह्लादितस्ताभिर्द्देवकन्याभिरिज्यते ।
चतुर्द्दशे तु दिवसे यः पूर्णं प्राश्नते हविः । सदा द्वादशमासांस्तु महामेधफलं लभेत् ।
अनिर्द्देश्यवयोरूपा देवकन्याः स्वलङ्कृताः । मृष्टतप्ताङ्गदधरा विमानैरुपयान्ति तं । ५२७०
कलहंसविनिर्घोषैर्नूपुराणाञ्च निस्वनैः । काञ्चीनाञ्च समुत्कर्षैस्तत्र तत्र विबोध्यते ।
देवकन्यानिवासे च तस्मिन् वसति मानवः । जाह्नवीवालुकाकीर्णे पूर्णं संवत्सरं नरः ।
यस्तु पक्षे गते भुङ्क्ते एकभक्तं जितेन्द्रियः । सदा द्वादशमासांस्तु जुह्वानो जातवेदसं ।
राजसूयसहस्रस्य फलं प्राप्नोत्यनुत्तमं । यानमारोहते दिव्यं हंसबर्हिणसेवितं ।
मणिमण्डलकैश्चित्रं जातरूपसमावृतं । दिव्याभरणशोभाभिर्व्वरस्त्रीभिरलङ्कृतं । ५२७५
एकस्तम्भं चतुर्द्वारं सप्तभौमं सुमङ्गलं । वैजयन्तीसहस्रैश्च शोभितं गीतनिस्वनैः ।
दिव्यं दिव्यगुणोपेतं विमानमधिरोहति । मणिमुक्ताप्रवालैश्च भूषितं वैद्युतप्रभं ।
वसेद्युगसहस्रञ्च खड्गकुञ्जरवाहनः । षोडशे दिवसे प्राप्ते यः कुर्य्यादेकभोजनं ।
सदा द्वादशमासान् वै सोमयज्ञफलं लभेत् । सोमकन्यानिवासेषु सोऽध्यावसति नित्यशः ।
सौम्यगन्धानुलिप्तश्च कामचारगतिर्भवेत् । सुदर्शनाभिर्नारीभिर्मधुराभिस्तथैव च । ५२८०
अर्च्यते वै विमानस्थः कामभोगैश्च सेव्यते । फलं पद्मशतप्रख्यं महाकल्पं दशाधिकं ।
आवर्त्तनानि चत्वारि साधयेच्चाप्यसौ नरः । दिवसे सप्तदशमे यः प्राप्ते प्राश्नते हविः ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसं । स्थानं वारुणमैन्द्रञ्च रौद्रञ्चाप्यधिगच्छति ।
मारुतौशनसे चैव ब्रह्मलोकं स गच्छति । तत्र दैवतकन्याभिरासनेनोपचर्य्यते ।
भूर्भुवश्चापि देवर्षिं विश्वरूपमवेक्षते । तत्र देवाधिदेवस्य कुमार्य्यो रमयन्ति तं । ५२८५
द्वात्रिंशद्रूपधारिण्यो मधुराः समलङ्कृताः । चन्द्रादित्यावुभौ यावद्गगणे चरतः प्रभो ।
तावच्चरत्यसौ वीरः सुधामृतरसाशनः । अष्टादशे यो दिवसे प्राश्नीयादेकभोजनं ।
सदा द्वादशमासान् वै सप्त लोकान् स पश्यति । रथैः सनन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते ।
देवकन्याधिरूढैस्तु भ्राजमानैः स्वलङ्कृतैः । व्याघ्रसिंहप्रयुक्तञ्च मेघस्वननिनादितं ।
विमानमुत्तमं दिव्यं सुसुखी ह्यधिरोहति । तत्र कल्पसहस्रं स कन्याभिः सह मोदते । ५२९०
सुधारसञ्च भुञ्जीत अमृतोपममुत्तमं । एकोनविंशतिदिने यो भुङ्क्ते एकभोजनं ।
सदा द्वादशमासान् वै सप्त लोकान् स पश्यति । उत्तमं लभते स्थानमप्सरोगणसेवितं ।
गन्धर्व्वैरुपगीतञ्च विमानं सूर्य्यवर्च्चसं । तत्रामरवरस्त्रीभिर्मोदते विगतज्वरः ।
दिव्याम्बरधरः श्रीमानयुतानां शतं शतं । पूर्णेऽथ विंशे दिवसे यो भुङ्क्ते ह्येकभोजनं ।

सदा द्वादशमासांस्तु सत्यवादी धृतव्रतः । अमांसाशी ब्रह्मचारी सर्व्वभूतहिते रतः । ५४९५
स लोकान् विपुलान् रम्यानादित्यानामुपाश्नुते । गन्धर्व्वैरप्सरोभिश्च दिव्यमाल्यानुलेपनैः ।
विमानैः काञ्चनैर्द्दिव्यैः पृष्ठतश्चानुगम्यते । एकविंशे तु दिवसे यो भुङ्क्ते ह्येकभोजनं ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसं । लोकमौशनसं दिव्यं शक्रलोकञ्च गच्छति ।
अश्विनोर्मरुताञ्चैव सुखेष्वभिरतः सदा । अनभिज्ञश्च दुःखानां विमानवरमास्थितः ।
सेव्यमानो वरस्त्रीभिः क्रीडत्यमरवत् प्रभुः । द्वाविंशे दिवसे प्राप्ते यो भुङ्क्ते ह्येकभोजनं । ५५००
सदा द्वादशमासान् वै जुह्वानो जातवेदसं । अहिंसानिरतो धीमान् सत्यवागनसूयकः ।
लोकान् वसूनामाप्नोति दिवाकरसमप्रभः । कामचारी सुधाहारो विमानवरमास्थितः ।
रमते देवकन्याभिर्द्दिव्याभरणभूषितः । त्रयोविंशे तु दिवसे यः प्राशेदेकभोजनं ।
सदा द्वादशमासांस्तु मिताहारो जितेन्द्रियः । वायोरुशनसश्चैव रुद्रलोकञ्च गच्छति ।
कामचारी कामगमः पूज्यमानोऽप्सरोगणैः । अनेकगुणपर्य्यन्तं विमानवरमास्थितः । ५५०५
रमते देवकन्याभिर्द्दिव्याभरणभूषितः । चतुर्व्विंशे तु दिवसे यः प्राप्ते प्राशते हविः ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसं । आदित्यानामधीवासे मोदमानो वसेच्चिरं ।
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः । विमाने काञ्चने दिव्ये हंसयुक्ते मनोरमे ।
रमते देवकन्यानां सहस्रैरयुतैस्तथा । पञ्चविंशे तु दिवसे यः प्राशेदेकभोजनं ।
सदा द्वादशमासांस्तु पुष्कलं यानमारुहेत् । सिंहव्याघ्रप्रयुक्तैस्तु मेघनिस्वननादितैः । ५५१०
स रथैर्नन्दिघोषैश्च पृष्ठतो ह्यनुगम्यते । देवकन्यासमारूढैः काञ्चनैर्व्विमलैः शुभैः ।
विमानमुत्तमं दिव्यमास्थाय सुमनोहरं । तत्र कल्पसहस्रं वै वसते स्त्रीशतावृते ।
सुधारसञ्चोपजीवन्नमृतोपममुत्तमं । षड्विंशे दिवसे यस्तु प्राश्नीयादेकभोजनं ।
सदा द्वादशमासांस्तु नियतो नियताशनः । जितेन्द्रियो वीतरागो जुह्वानो जातवेदसं ।
सम्प्राप्नोति महाभागः पूज्यमानोऽप्सरोगणैः । सप्तानां मरुतां लोकान् वसूनाञ्चापि सोऽश्नुते । ५५१५
विमानैः स्फाटिकैर्द्दिव्यैः सर्व्वरत्नैरलङ्कृतैः । गन्धर्व्वैरप्सरोभिश्च पूज्यमानः प्रमोदते ।
द्वे युगानां सहस्रे तु दिव्ये दिव्येन तेजसा । सप्तविंशे तु दिवसे यः प्राशेदेकभोजनं ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसं । फलं प्राप्नोति विपुलं देवलोके च पूज्यते ।
अमृताशी वसंस्तत्र स वितृष्णः प्रमोदते । देवर्षिचरितं राजन् राजर्षिभिरनुष्ठितं ।
अध्यावसति दिव्यात्मा विमानवरमास्थितः । स्त्रीभिर्मनोभिरामाभी रममाणो मदोत्कटः । ५५२०
युगकल्पसहस्राणि त्रीण्यावसति वै सुखं । योऽष्टाविंशे तु दिवसे प्राश्नीयादेकभोजनं ।
सदा द्वादशमासांस्तु जितात्मा विजितेन्द्रियः । फलं देवर्षिचरितं विपुलं समुपाश्नुते ।
भोगवांस्तेजसा भाति सहस्रांशुरिवामलः । सुकुमार्य्यश्च नार्य्यस्तं रममाणाः सुवर्चसः ।
पीनस्तनोरुजघना दिव्याभरणभूषिताः । रमयन्ति मनःकान्ता विमाने सूर्य्यसन्निभे ।

सर्व्वकामगमे दिव्ये कल्पायुतशतं समाः । एकोनत्रिंशे दिवसे यः प्राश्नेदेकभोजनं । ५३२५
सदा द्वादशमासान् वै सत्यव्रतपरायणः । तस्य लोकाः शुभा दिव्या देवराजर्षिपूजिताः ।
विमानं सूर्य्यचन्द्राभं दिव्यं समधिगच्छति । जातरूपमयं युक्तं सर्व्वरत्नविभूषितं ।
अप्सरोगणसंपूर्णं गन्धर्व्वैरभिनादितं । तत्र चैनं शुभा नार्य्यो दिव्याभरणभूषिताः ।
मनोभिरामा मधुरा रमयन्ति मदोत्कटाः । भोगवांस्तेजसा युक्तो वैश्वानरसमप्रभः ।
दिव्यो दिव्येन वपुषा भ्राजमान इवामरः । वसूनां मरुताञ्चैव साध्यानामश्विनोस्तथा । ५३३०
रुद्राणाञ्च तथा लोकं ब्रह्मलोकञ्च गच्छति । यस्तु मासे गते भुङ्क्ते एकभक्तं समात्मकः ।
सदा द्वादशमासान्वै ब्रह्मलोकमवाप्नुयात् । सुधारसकृताहारः श्रीमान् सर्व्वमनोहरः ।
तेजसा वपुषा लक्ष्म्या भ्राजते रश्मिवानिव । दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ।
सुखेष्वभिरतो योगी दुःखानामविजानकः । स्वयं प्रभाभिर्नारीभिर्व्विमानस्थो विराजते ।
रुद्रदेवर्षिकन्याभिः सततञ्चाभिपूज्यते । नानारमणरूपाभिर्नानारागाभिरेव च । ५३३५
नानामधुरभाषाभिर्नानारतिभिरेव च । विमाने गगणाकारे सूर्य्यवैदूर्य्यसन्निभे ।
पृष्ठतः सोमसङ्काशे उदक्के चाभ्रसन्निभे । दक्षिणायान्तु रक्ताभे अधस्तान्नीलमण्डले ।
ऊर्द्ध्वं चित्रसमङ्काशे नैको वसति पूजितः । यावद्वर्षसहस्रं वै जम्बुद्वीपे प्रवर्षति ।
तावत् संवत्सरा प्रोक्ता ब्रह्मलोकेऽस्य धीमतः । विप्रुषश्चैव यावन्त्यो निपतन्ति नभस्तलात् ।
वर्षासु वर्षतस्तावन्निवसत्यमरप्रभः । मासोपवासी वर्षैस्तु दशभिः स्वर्गमुत्तमं । ५३४०
महर्षित्वमथासाद्य सशरीरगतिर्भवेत् । मुनिर्द्दान्तो जितक्रोधो जितशिश्नोदरः सदा ।
जुह्वदग्नींश्च नियतः सन्ध्योपासनसेविता । बहुभिर्नियमैरेवं शुचिरश्नाति यो नरः ।
अभ्रावकाशशीलस्तु तस्य भानोरिव त्विषः । दिवं गत्वा शरीरेण स्वेन राजन् यथाऽमरः ।
स्वर्गं पुण्यं यथाकाममुपभुङ्क्ते तथाविधः । एष ते भरतश्रेष्ठ यज्ञानां विधिरुत्तमः ।
आख्यातो ह्यानुपूर्व्व्येण ह्युपवासफलात्मकः । दरिद्रैर्म्मनुजैः पार्थ प्राप्तं यज्ञफलं तथा । ५३४५
उपवासानिमान् कृत्वा गच्छेच्च परमां गतिं । देवद्विजातिपूजायां रतो भरतसत्तम ।
उपवासविधिस्त्वेष विस्तरेण प्रकीर्त्तितः । नियतेषु प्रमत्तेषु शौचवत्सु महात्मसु ।
दम्भद्रोहनिवृत्तेषु कृतबुद्धिषु भारत । अचलेष्वप्रमत्तेषु मा ते भूदत्र संशयः ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि उपवासविधौ सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

॥ युधिष्ठिर उवाच ॥ यद्वरं सर्व्वतीर्थानां तन्मे ब्रूहि पितामह । यच्च चैव परं शौचं तन्मे व्याख्यातुमर्हसि ।
॥ भीष्म उवाच ॥ सर्व्वाणि खलु तीर्थानि गुणवन्ति मनीषिणः । यत्तु तीर्थञ्च शौचञ्च तन्मे शृणु समाहितः । ५३५०
अगाधे विमले शुद्धे सत्यतोये धृतिह्रदे । स्नातव्यं मानसे तीर्थे सत्यमालम्ब्य शाश्वतं ।
तीर्थशौचमनर्थित्वमार्ज्जवं सत्यमार्द्दवं । अहिंसा सर्व्वभूतानामानृशंस्यं दमः शमः ।
निर्म्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः । शुचयस्तीर्थभूतास्ते ये भैक्ष्यमुपभुञ्जते ।

तत्त्वविस्त्वनहंबुद्धिस्तीर्थप्रवरमुच्यते । शौचलक्षणमेतत्ते सर्व्वत्रैवान्ववेक्षणं ।

रजस्तमःसत्यमथो येषां निर्द्धौतमात्मनः । शौचाशौचसमायुक्ताः स्वकार्य्यपरिमार्गिणः । ५५१५

सर्व्वत्यागेष्वभिरताः सर्व्वज्ञाः सर्व्वदर्शिनः । शौचेन वृत्तशौचार्थास्ते तीर्थाः शुचयश्च ते ।

नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते । स स्नातो यो दमस्नातः स बाह्याभ्यन्तरः शुचिः ।

अतीतेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्म्ममाः । शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा ।

प्रज्ञानं शौचमेवेह शरीरस्य विशेषतः । तथा निष्किञ्चनत्वञ्च मनसश्च प्रसन्नता ।

वृत्तशौचं मनःशौचं तीर्थशौचमतः परं । ज्ञानोत्पन्नञ्च यच्छौचं तच्छौचं परमं मतं । ५५२०

मनसा च प्रदीप्तेन ब्रह्मज्ञानजलेन च । स्नाति यो मानसे तीर्थे तत् स्नानं तत्त्वदर्शिनां ।

समारोपितशौचस्तु नित्यं भावसमाहितः । केवलं गुणसम्पन्नः शुचिरेव नरः सदा ।

शरीरस्थानि तीर्थानि प्रोक्तान्येतानि भारत । पृथिव्यां यानि तीर्थानि पुण्यानि शृणु तान्यपि ।

शरीरस्य यथोद्देशाः शुचयः परिकीर्त्तिताः । तथा पृथिव्या भागाश्च पुण्यानि सलिलानि च ।

कीर्त्तनाच्चैव तीर्थस्य स्नानाच्च पितृतर्पणात् । धुनन्ति पापं तीर्थेषु ते प्रयान्ति सुखं दिवं । ५५२५

परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा । अतीव पुण्यभागास्ते सलिलस्य च तेजसा ।

मनसश्च पृथिव्याश्च पुण्यास्तीर्थास्तथाऽपरे । उभयोरेव यः स्नायात् स सिद्धिं शीघ्रमाप्नुयात् ।

यथा बलं क्रियाहीनं क्रिया वा बलवर्जिता । नेह साधयते कार्य्यं समायुक्ता तु सिद्ध्यति ।

एवं शरीरशौचेन तीर्थशौचेन चान्वितः । शुचिः सिद्धिमवाप्नोति द्विविधं शौचमुत्तमं ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि शौचकथने अष्टाधिकशततोऽध्यायः ॥ १०८ ॥

॥ युधिष्ठिर उवाच ॥ सर्व्वेषामुपवासानां यच्छ्रेयः सुमहत् फलं । यच्चाप्यसंशयं लोके तन्मे त्वं वक्तुमर्हसि । ५५३०

॥ भीष्म उवाच ॥ शृणु राजन् यथा गीतं स्वयमेव स्वयम्भुवा । यत् कृत्वा निर्वृतो भूयात् पुरुषो नात्र संशयः ।

द्वादश्यां मार्गशीर्षे तु अहोरात्रेण केशवं । अर्च्याश्वमेधं प्राप्नोति दुष्कृतञ्चास्य नश्यति ।

तथैव पौषमासे तु पूज्यो नारायणेति च । वाजपेयमवाप्नोति सिद्धिञ्च परमां व्रजेत् ।

अहोरात्रेण द्वादश्यां माघमासे तु माधवं । राजसूयमवाप्नोति कुलञ्चैव समुद्धरेत् ।

तथैव फाल्गुने मासे गोविन्देति च पूजयेत् । अतिरात्रमवाप्नोति सोमलोकञ्च गच्छति । ५५३५

अहोरात्रेण द्वादश्यां चैत्रे विष्णुरिति स्मरन् । पौण्डरीकमवाप्नोति देवलोकञ्च गच्छति ।

वैशाखमासे द्वादश्यां पूजयेन्मधुसूदनं । अग्निष्टोममवाप्नोति सोमलोकञ्च गच्छति ।

अहोरात्रेण द्वादश्यां ज्यैष्ठे मासि त्रिविक्रमं । गवां मेधमवाप्नोति अप्सरोभिश्च मोदते ।

आषाढे मासि द्वादश्यां वामनेति च पूजयन् । नरमेधमवाप्नोति अप्सरोभिश्च मोदते ।

अहोरात्रेण द्वादश्यां श्रावणे मासि श्रीधरं । पञ्चयज्ञानवाप्नोति विमानस्थः स मोदते । ५५४०

तथा भाद्रपदे मासि हृषीकेशेति पूजयन् । सौत्रामणिमवाप्नोति पूतात्मा भवतेऽपि च ।

द्वादश्यामाश्विने मासि पद्मनाभेति चार्च्चयेत् । गोसहस्रफलं पुण्यं प्राप्नुयान्नात्र संशयः ।

शूकरो जातमात्रस्तु रोगेण म्रियते नृप । श्वा ततो जायते मूढः कर्म्मणा तेन पार्थिव ।
भूत्वा श्वा पञ्च वर्षाणि ततो जायेत मानवः । परदाराभिमर्षन्तु कृत्वा जायेत वै वृकः ।
श्वा शृगालस्ततो गृध्रो व्यालः कङ्को बकस्तथा । भ्रातुर्भार्य्यान्तु पापात्मा यो धर्षयति मोहितः ।
पुंस्कोकिलत्वमाप्नोति सोऽपि संवत्सरं नृप । सखिभार्य्यां गुरोर्भार्य्यां राजभार्य्यान्तथैव च ।
प्रधर्षयित्वा कामात्मा ततो जायति शूकरः । शूकरः पञ्च वर्षाणि दश वर्षाणि वै वृकः । ५५७५
विडालः पञ्च वर्षाणि दश वर्षाणि कुक्कुटः । पिपीलकस्तु मासांस्त्रीन् कीटः स्यान्मासमेव तु ।
एतानासाद्य संसारान् कृमियोनौ प्रजायते । तत्र जीवति मासांस्तु कृमियोनौ चतुर्द्दश ।
ततोऽधर्म्मक्षयं कृत्वा पुनर्ज्जायति मानवः । उपस्थिते विवाहे तु यज्ञे दानेऽथवा विभो ।
मोहात्करोति यो विघ्नं स मृतो जायते कृमिः । कृमिर्ज्जीवति वर्षाणि दश पञ्च च भारत ।
अधर्म्मस्य क्षयं कृत्वा ततो जायति मानवः । पूर्व्वं दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति । ५५८०
सोऽपि राजन् मृतो जन्तुः कृमियोनौ प्रजायते । तत्र जीवति वर्षाणि त्रयोदश युधिष्ठिर ।
अधर्म्मसङ्क्षये युक्तस्ततो जायति मानुषः । देवकार्य्यमकृत्वा तु पितृकार्य्यमथापि वा ।
अनिर्व्वाप्य समश्नन् वै मृतो जायति वायसः । वायसः शतवर्षाणि ततो जायति कुक्कुटः ।
जायते व्यालकश्चापि मासं तस्मात्तु मानुषः । ज्येष्ठं पितृसमञ्चापि भ्रातरं योऽवमन्यते ।
सोऽपि मृत्युमुपागम्य क्रौञ्चयोनौ प्रजायते । क्रौञ्चो जीवति मासांस्तु दश द्वौ सप्त पञ्च च । ५५८५
ततो निधनमापन्नो मानुषत्वमुपाश्नुते । वृषलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ।
ततः सम्प्राप्य निधनं जायते शूकरः पुनः । शूकरो जातमात्रस्तु रोगेण म्रियते नृप ।
श्वा ततो जायते मूढः कर्म्मणा तेन पार्थिव । श्वा भूत्वा कृतकर्म्माऽसौ जायते मानुषस्ततः ।
तत्रापत्यं समुत्पाद्य मृतो जायेत मूषिकः । कृतघ्नस्तु मृतो राजन् यमस्य विषयं गतः ।
यमस्य पुरुषैः क्रुद्धैर्व्वधं प्राप्नोति दारुणं । दण्डं समुद्गरं शूलमग्निकुम्भञ्च दारुणं । ५५९०
असिपत्रवनं घोरं वालुकां कूटशाल्मलीं । एताश्चान्याश्च बह्वीः स यमस्य विषयं गतः ।
यातनाः प्राप्य तत्रोग्रास्ततो बध्यति भारत । ततो हतः कृतघ्नः स तत्रोग्रैर्भरतर्षभ ।
संसारचक्रमासाद्य कृमियोनौ प्रजायते । कृमिर्भवति वर्षाणि दश पञ्च च भारत ।
ततो गर्भं समासाद्य तत्रैव म्रियते शिशुः । ततो गर्भशतैर्जन्तुर्ब्बहुभिः सम्प्रपद्यते ।
संसारांश्च बहून् गत्वा ततस्तिर्य्यक् प्रजायते । ततो दुःखमनुप्राप्य बहुवर्षगणानिह । ५५९५
अपुनर्भवसंयुक्तस्ततः कूर्म्मः प्रजायते । दधि हृत्वा बकश्चापि प्लवो मत्स्यानसंस्कृतान् ।
चोरयित्वा तु दुर्ब्बुद्धिर्म्मधु दंशः प्रजायते । फलं वा मूलकं हृत्वा अपूपं वा पिपीलिकाः ।
चोरयित्वा तु निष्पावं जायते हलगोलकः । पायसं चोरयित्वा तु तित्तिरित्वमवाप्नुते ।
हृत्वा पिष्टमयं पूपं कुम्भोलूकः प्रजायते । अयो हृत्वा तु दुर्ब्बुद्धिर्व्वायसो जायते नरः ।
कांस्यं हृत्वा तु दुर्ब्बुद्धिर्हारीतो जायते नरः । राजतं भाजनं हृत्वा कपोतः सम्प्रजायते । ५६००

हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते । पत्त्रोर्णं चोरयित्वा तु क्रकरत्वं नियच्छति ।
कौशिकन्तु ततो हृत्वा नरो जायति वर्त्तकः । अंशुकं चोरयित्वा तु शुको जायति मानवः ।
चोरयित्वा दुकूलन्तु मृतो हंसः प्रजायते । क्रौञ्चः कार्पासिकं हृत्वा मृतो जायति मानवः ।
चोरयित्वा नरः पट्टं त्वाविकञ्चैव भारत । क्षौमञ्च वस्त्रमादाय शशो जन्तुः प्रजायते ।
वर्णान् हृत्वा तु पुरुषो मृतो जायति बर्हिणः । हृत्वा रक्तानि वस्त्राणि जायते जीवजीवकः । ५५०५
वर्णकादींस्तथा गन्धांश्चोरयित्वेह मानवः । छुछुन्दरित्वमाप्नोति राजन् लोभपरायणः ।
तत्र जीवति वर्षाणि ततो दश च पञ्च च । अधर्म्मस्य क्षयं कृत्वा ततो जायति मानवः ।
चोरयित्वा पयश्चापि बलाका सम्प्रजायते । यस्तु चोरयते तैलं नरो मोहसमन्वितः ।
सोऽपि राजन्मृतो जन्तुस्तैलपायी प्रजायते । अशस्त्रं पुरुषं हृत्वा सशस्त्रः पुरुषाधमः ।
अर्थार्थी यदि वा वैरी स मृतो जायते खरः । खरो जीवति वर्षे द्वे ततः शस्त्रेण बध्यते । ५५१०
स मृतो मृगयोनौ तु नित्योद्विग्नोऽभिजायते । मृगो बध्यति शस्त्रेण गते संवत्सरे तु सः ।
हतो मृगस्ततो मीनः सोऽपि जालेन बध्यते । मासे चतुर्थे सम्प्राप्ते श्वापदः सम्प्रजायते ।
श्वापदो दश वर्षाणि द्वीपी वर्षाणि पञ्च च । ततस्तु निधनं प्राप्य कालपर्य्यायचोदितः ।
अधर्म्मस्य क्षयं कृत्वा ततो जायति मानुषः । स्त्रियं हत्वा तु दुर्ब्बुद्धिर्यमस्य विषयं गतः ।
बहून् क्लेशान् समासाद्य संसारांश्चैव विंशतिं । ततः पश्चान्महाराज कृमियोनौ प्रजायते । ५५१५
कृमिर्व्विंशतिवर्षाणि भूत्वा जायति मानुषः । भोजनं चोरयित्वा तु मक्षिका जायते नरः ।
मक्षिकासङ्घवशगो बहून् मासान् भवत्युत । ततः पापक्षयं कृत्वा मानुषत्वमवाप्नुते ।
धान्यं हृत्वा तु पुरुषो लोमशः सम्प्रजायते । तथा पिण्याकसंमिश्रमशनं चोरयेन्नरः ।
स जायते बभ्रुसमो दारुणो मूषिको महान् । दशन् वै मानुषं नित्यं पापात्मा स प्रजायते ।
घृतं हृत्वा तु दुर्ब्बुद्धिः काकमद्गुः प्रजायते । मत्स्यमांसमथो हृत्वा काको जायति दुर्म्मतिः । ५५२०
लवणं चोरयित्वा तु चीरिकाकः प्रजायते । विश्वासेन तु निक्षिप्तं यो वै निह्नोति मानवः ।
स गतायुर्नरस्तादृक् मत्स्ययोनौ प्रजायते । मत्स्ययोनिमनुप्राप्य मृतो जायति मानवः ।
मानुषत्वमनुप्राप्य क्षीणायुरुपपद्यते । पापानि तु नरः कृत्वा तिर्य्यग्जायेत भारत ।
न चात्मनः प्रमाणन्ते धर्म्मं जानन्ति किञ्चन । ये पापानि नराः कृत्वा निरस्यन्ति व्रतैः सदा ।
सुखदुःखसमायुक्ता व्याधितास्ते भवन्त्युत । असंवासाः प्रजायन्ते म्लेच्छा अपि न संशयः । ५५२५
नराः पापसमाचारा लोभमोहसमन्विताः । वर्ज्जयन्ति च पापानि जन्मप्रभृति ये नराः ।
अरोगा रूपवन्तश्च धनिनश्च भवन्त्युत । स्त्रियोऽप्येतेन कल्पेन कृत्वा पापमवाप्नुयुः ।
एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः । परस्वहरणे दोषाः सर्व्व एव प्रकीर्त्तिताः ।
एतद्वै लेशमात्रेण कथितं ते मयाऽनघ । अपरान् सत्कथायोगे भूयः श्रोष्यसि भारत ।
एतन्मया महाराज ब्रह्मणो वदतः पुरा । सुरर्षीणां श्रुतं मध्ये पृष्टश्चापि यथातथं । ५५३०

मयाऽपि तच्च कार्त्स्न्येन यथावदनुवर्णितं । एतच्छ्रुत्वा महाराज धर्मे कुरु मनः सदा ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि संसारचक्रसमाप्तौ एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

॥ युधिष्ठिर उवाच ॥ अधर्मस्य गतिर्ब्रह्मन् कथिता मे त्वयाऽनघ । धर्मस्य तु गतिं श्रोतुमिच्छामि वदताम्वर ।

कृत्वा पापानि कर्म्माणि कथं यान्ति शुभां गतिं । कर्म्मणा च कृतेनेह केन यान्ति शुभां गतिं ।

॥ वृहस्पतिरुवाच ॥ कृत्वा पापानि कर्म्माणि अधर्म्मवशमागतः । मनसा विपरीतेन निरयं प्रतिपद्यते ।

मोहादधर्मं यः कृत्वा पुनः समनुतप्यते । मनःसमाधिसंयुक्तो न स सेवेत दुष्कृतं ।

यथा यथा मनस्तस्य दुष्कृतं कर्म्म गर्हते । तथा तथा शरीरन्तु तेनाधर्म्मेण मुच्यते ।

यदि व्याहरते राजन् विप्राणां धर्म्मवादिनां । ततोऽधर्म्मकृतात् क्षिप्रमपराधात् प्रमुच्यते ।

यथा यथा नरः सम्यगधर्म्ममनुभाषते । समाहितेन मनसा विमुच्यति तथा तथा ।

भुजङ्ग इव निर्म्मोकात् पूर्व्वभुक्ताज्जरान्वितात् । दत्त्वा विप्रस्य दानानि विविधानि समाहितः ।

मनःसमाधिसंयुक्तः सुगतिं प्रतिपद्यते । प्रदानानि तु वक्ष्यामि यानि दत्त्वा युधिष्ठिर ।

नरः कृत्वाऽप्यकार्य्याणि ततो धर्म्मेण युज्यते । सर्व्वेषामेव दानानामन्नं श्रेष्ठमुदाहृतं ।

पूर्व्वमन्नं प्रदातव्यमृजुना धर्म्ममिच्छता । प्राणा ह्यन्नं मनुष्याणां तस्माज्जन्तुश्च जायते ।

अन्ने प्रतिष्ठिता लोकास्तस्मादन्नं प्रशस्यते । अन्नमेव प्रशंसन्ति देवर्षिपितृमानवाः ।

अन्नस्य हि प्रदानेन रन्तिदेवो दिवं गतः । न्यायलब्धं प्रदातव्यं द्विजातिभ्योऽन्नमुत्तमं ।

स्वाध्यायसमुपेतेभ्यः प्रहृष्टेनान्तरात्मना । यस्य ह्यन्नमुपाश्नन्ति ब्राह्मणानां शतं दश ।

हृष्टेन मनसा दत्तं न स तिर्य्यग्गतिर्भवेत् । ब्राह्मणानां सहस्राणि दश भोज्य नरर्षभ ।

नरोऽधर्म्मात् प्रमुच्येत योगेष्वभिरतः सदा । भैक्षेणान्नं समाहृत्य विप्रो वेदपुरस्कृतः ।

स्वाध्यायनिरते विप्रे दत्त्वेह सुखमेधते । अहिंसन् ब्राह्मणस्वानि न्यायेन परिपाल्य च ।

क्षत्रियस्तरसा प्राप्तमन्नं यो वै प्रयच्छति । द्विजेभ्यो वेदवृद्धेभ्यः प्रयतः सुसमाहितः ।

तेनापोहति धर्म्मात्मन् दुष्कृतं कर्म्म पाण्डव । षड्भागपरिशुद्धञ्च कृषेर्भागमुपार्ज्जितं ।

वैश्यो ददद्द्विजातिभ्यः पापेभ्यः परिमुच्यते । अवाप्य प्राणसन्देहं कार्कश्येन समार्ज्जितं ।

अन्नं दत्त्वा द्विजातिभ्यः शूद्रः पापात् प्रमुच्यते । औरसेन बलेनान्नमर्ज्जयित्वा विहिंसकः ।

यः प्रयच्छति विप्रेभ्यो न स दुर्गाणि सेवते । न्यायेनैवाप्तमन्नन्तु नरो हर्षसमन्वितः ।

द्विजेभ्यो वेदवृद्धेभ्यो दत्त्वा पापात् प्रमुच्यते । सतां पन्थानमावृत्य सर्व्वपापैः प्रमुच्यते ।

अन्नमूर्ज्जस्करं लोके दत्त्वोर्ज्जस्वी भवेन्नरः । दानवद्भिः कृतः पन्था येन यान्ति मनीषिणः ।

ते हि प्राणस्य दातारस्तेभ्यो धर्म्मः सनातनः । सर्व्वावस्थं मनुष्येण न्यायेनान्नमुपार्ज्जितं ।

कार्य्यं पात्रगतं नित्यमन्नं हि परमा गतिः । अन्नस्य हि प्रदानेन नरो रौद्रं न सेवते ।

तस्मादन्नं प्रदातव्यमन्यायपरिवर्ज्जितं । यतेद्ब्राह्मणपूर्व्वं हि भोक्तुमन्नं गृही सदा ।

अवन्ध्यं दिवसं कुर्य्यादन्नदानेन मानवः । भोजयित्वा दशशतं नरो वेदविदां नृप ।

व्याघ्रविड्वर्हविड्वापि विविधाश्च विशस्तथा। न याति नरकं घोरं संसारांश्च न सेवते। ५५४०
सर्व्वकामसमायुक्तः प्रेत्य चाप्यश्नुते सुखं। एवं खलु समायुक्तो रमते निरुपद्रवः।
रूपवान् कीर्त्तिमांश्चैव धनवांश्चोपपद्यते। एतत्ते सर्व्वमाख्यातमन्नदानफलं महत्।
मूलमेतत्तु धर्म्माणां प्रदानञ्च भारत।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि अन्नदानकथने द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
॥ युधिष्ठिर उवाच ॥ अहिंसा वैदिकं कर्म्म ध्यानमिन्द्रियसंयमः। तपोऽथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति।
॥ बृहस्पतिरुवाच ॥ सर्व्वाण्येतानि धर्म्माणि पृथग्द्वाराणि सर्व्वशः। शृणु संकीर्त्त्यमानानि षडेव भरतर्षभ। ५५४५
हन्त निःश्रेयसं जन्तोरहं वक्ष्याम्यनुत्तमं। अहिंसापाश्रयं धर्म्मं यः साधयति वै नरः।
त्रीन् दोषान् सर्व्वभूतेषु निधाय पुरुषः सदा। कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते।
अहिंसकानि भूतानि दण्डेन विनिहन्ति यः। आत्मनः सुखमिच्छन् स प्रेत्य नैव सुखी भवेत्।
आत्मोपमस्तु भूतेषु यो वै भवति पूरुषः। न्यस्तदण्डो जितक्रोधः स प्रेत्य सुखमेधते।
सर्व्वभूतात्मभूतस्य सर्व्वभूतानि पश्यतः। देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः। ५५५०
न तत्परस्य संदध्यात् प्रतिकूलं यदात्मनः। एष संक्षेपतो धर्म्मः कामादन्यः प्रवर्त्तते।
प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये। आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति।
यथापरः प्रक्रमते परेषु तथाऽपरे प्रक्रमन्ते परस्मिन्। तथैव तेषूपमा जीवलोके यथा धर्म्मो निपुणेनोपदिष्टः।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा तं सुरगुरुर्धर्म्मराजं युधिष्ठिरं। दिवमाचक्रमे धीमान् पश्यतामेव नस्तदा।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने त्रयोदशाधिकशततमोऽध्यायः॥११३॥
॥ वैशम्पायन उवाच ॥ ततो युधिष्ठिरो राजा शरतल्पे पितामहं। पुनरेव महातेजाः पप्रच्छ वदताम्वरः। ५५५५
॥ युधिष्ठिर उवाच ॥ ऋषयो ब्राह्मणा देवाः प्रशंसन्ति महामते। अहिंसालक्षणं धर्म्मं वेदप्रामाण्यदर्शनात्।
कर्म्मणा मनुजः कुर्व्वन् हिंसां पार्थिवसत्तम। वाचा च मनसा चैव कथं दुःखात् प्रमुच्यते।
॥ भीष्म उवाच ॥ चतुर्व्विधेयं निर्द्दिष्टा अहिंसा ब्रह्मवादिभिः। एकैकतोऽपि विभ्रष्टा न भवत्यरिसूदन।
यथा सर्व्वश्चतुष्पाद्वै त्रिभिः पादैर्न तिष्ठति। तथैवेयं महीपाल कारणैः प्रोच्यते त्रिभिः।
यथा नागपदेऽन्यानि पदानि पदगामिनां। सर्व्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे। ५५६०
एवं लोकेष्वहिंसा तु निर्द्दिष्टा धर्म्मतः पुरा। कर्म्मणा लिप्यते जन्तुर्व्वाचा च मनसाऽपि च।
पूर्व्वन्तु मनसा त्यक्त्वा तथा वाचाऽथ कर्म्मणा। न भक्षयति यो मांसं त्रिविधं स विमुच्यते।
त्रिकारणन्तु निर्द्दिष्टं श्रूयते ब्रह्मवादिभिः। मनोवाचि तथाऽस्वादे दोषा ह्येषु प्रतिष्ठिताः।
न भक्षयन्त्यतो मांसं तपोयुक्ता मनीषिणः। दोषांस्तु भक्षणे राजन्मांसस्येह निबोध मे।
पुत्रमांसोपमं राजन् खादते यो विचक्षणः। मांसं मोहसमाविष्टः पुरुषः सोऽधमः स्मृतः। ५५६५
पितृमातृसमायोगे पुत्रत्वं जायते तथा। हिंसां कृत्वाऽवशः पापो भूयिष्ठं जायते तथा।
रसञ्च प्रतिजिह्वाया ज्ञानं प्रज्ञायते यथा। तथा शास्त्रेषु नियतं रागो ह्यास्वादिताद्भवेत्।

संस्कृतासंस्कृताः पक्वा लवणालवणास्तथा । प्रजायन्ते यथा भावास्तथा चित्तं निरुध्यते ।
भेरीमृदङ्गशब्दांश्च तन्त्रीशब्दांश्च पुष्कलान् । निषेविष्यन्ति वै मन्दा मांसभक्षाः कथं नराः ।
अचिन्तितमनिर्द्दिष्टमसङ्कल्पितमेव च । रसं गृध्याभिभूता ये प्रशंसन्ति फलार्थिनः । ५५८०
प्रशंसा ह्येव मांसस्य दोषकर्म्मफलान्विता । जीवितं हि परित्यज्य बहवः साधवो जनाः ।
स्वमांसैः परमांसानि परिपाल्य दिवं गताः । एवमेषा महाराज चतुर्भिः कारणैर्वृता ।
अहिंसा तव निर्द्दिष्टा सर्व्वधर्म्मानुसंहिता ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि मांसवर्ज्जनकथने चतुर्द्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

॥ युधिष्ठिर उवाच ॥ अहिंसा परमो धर्म्म इत्युक्तं बहुशस्त्वया । श्राद्धेषु च भवानाह पितॄनामिषकाङ्क्षिणः ।
मांसैर्व्वहुविधैः प्रोक्तस्त्वया श्राद्धविधिः पुरा । अहत्वा च कुतो मांसमेवमेतद्विरुध्यते । ५५८५
जातो नः संशयो धर्म्मे मांसस्य परिवर्ज्जने । दोषो भक्षयतः कः स्यात् कश्चाभक्षयतो गुणः ।
हत्वा भक्षयतो वाऽपि परेणापि हतस्य वा । हन्याद्वा यः परस्यार्थे क्रीत्वा वा भक्षयेन्नरः ।
एतदिच्छामि तत्त्वेन कथ्यमानं त्वयाऽनघ । निश्चयेन चिकीर्षामि धर्म्ममेतं सनातनं ।
कथमायुरवाप्नोति कथं भवति सत्त्ववान् । कथमव्यङ्गतामेति लक्षण्यो जायते कथं ।
॥ भीष्म उवाच ॥ मांसस्याभक्षणाद्राजन् यो धर्म्मः कुरुनन्दन । तन्मे शृणु यथातत्त्वं यथाऽस्य विधिरुत्तमः । ५५९०
रूपमव्यङ्गतामायुर्ब्बुद्धिं सत्त्वं बलं स्मृतिं । प्राप्तुकामैर्नरैर्हिंसा वर्ज्जिता वै महात्मभिः ।
ऋषीणामत्र संवादो बहुशः कुरुनन्दन । बभूव तेषान्तु मतं यत्तच्छृणु युधिष्ठिर ।
यो यजेताश्वमेधेन मासि मासि यतव्रतः । वर्ज्जयेन्मधुमांसञ्च सममेतद्युधिष्ठिर ।
सप्तर्षयो वालखिल्यास्तथैव च मरीचिपाः । अमांसभक्षणं राजन् प्रशंसन्ति मनीषिणः ।
न भक्षयति यो मांसं न च हन्यान्न घातयेत् । तन्मित्रं सर्व्वभूतानां मनुः स्वायम्भुवोऽब्रवीत् । ५५९५
अधृष्यः सर्व्वभूतानां विश्वास्यः सर्व्वजन्तुषु । साधूनां सम्मतो नित्यं भवेन्मांसं विवर्ज्जयन् ।
स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति । नारदः प्राह धर्म्मात्मा नियतं सोऽवसीदति ।
ददाति यजते चापि तपस्वी च भवत्यपि । मधुमांसनिवृत्त्येति प्राह चैवं बृहस्पतिः ।
मासि मास्यश्वमेधेन यो यजेत शतं समाः । न खादति च यो मांसं सममेतन्मतं मम ।
सदा यजति सत्रेण सदा दानं प्रयच्छति । सदा तपस्वी भवति मधुमांसविवर्ज्जनात् । ५६००
सर्व्वे वेदा न तत् कुर्य्युः सर्व्वे यज्ञाश्च भारत । यो भक्षयित्वा मांसानि पश्चादपि निवर्त्तते ।
दुष्करं हि रसज्ञाने मांसस्य परिवर्ज्जनं । चर्त्तुं व्रतमिदं पुण्यं सर्व्वप्राण्यभयप्रदं ।
सर्व्वभूतेषु यो विद्वान् ददात्यभयदक्षिणां । दाता भवति लोके स प्राणानां नात्र संशयः ।
एवं वै परमं धर्म्मं प्रशंसन्ति मनीषिणः । प्राणा यथात्मनोऽभीष्टा भूतानामपि वै तथा ।
आत्मौपम्येन मन्तव्यं बुद्धिमद्भिः कृतात्मभिः । मृत्युतो भयमस्तीति विदुषां भूतिमिच्छतां । ५६०५
किं पुनर्हन्यमानानां तरसा जीवितार्थिनां । अरोगाणामपापानां पापैर्मांसोपजीविभिः ।

तस्माद्विद्धि महाराज मांसस्य परिवर्ज्जनं। धर्म्मस्यायतनं श्रेष्ठं स्वर्गस्य च सुखस्य च।
अहिंसा परमो धर्म्मस्तथाऽहिंसा परं तपः। अहिंसा परमं सत्यं यतो धर्म्मः प्रवर्त्तते।
न हि मांसं तृणात् काष्ठादुपलाद्वाऽपि जायते। हत्वा जन्तुं ततो मांसं तस्माद्दोषस्तु भक्षणे।
स्वाहास्वधाऽमृतभुजो देवाः सत्यार्ज्जवप्रियाः। क्रव्यादान् राक्षसान् विद्धि जिह्मानृतपरायणान्। ५६९०
कान्तारेष्वथ घोरेषु दुर्गेषु गहनेषु च। रात्रावहनि सन्ध्यासु चत्वरेषु सभासु च।
उद्यतेषु च शस्त्रेषु मृगव्यालभयेषु च। अमांसभक्षणे राजन् भयमन्यैर्न गच्छति।
शरण्यः सर्व्वभूतानां विश्वास्यः सर्व्वजन्तुषु। अनुद्वेगकरो लोके न चाप्युद्विजते सदा। •
यदि चेत् खादको न स्यात् न तदा घातको भवेत्। घातकः खादकार्थाय तद्घातयति वै नरः।
अभक्ष्यमेतदिति वै इति हिंसा निवर्त्तते। खादकार्थमतो हिंसा मृगादीनां प्रवर्त्तते। ५६९५
यस्माद्ग्रसति चैवायुर्हिंसकानां महाद्युते। तस्माद्विवर्ज्जयेन्मांसं य इच्छेद्भूतिमात्मनः।
त्रातारं नाधिगच्छन्ति रौद्राः प्राणिविहिंसकाः। उद्वेजनीया भूतानां यथा व्यालमृगास्तथा।
लोभाद्वा बुद्धिमोहाद्वा बलवीर्य्यार्थमेव च। संसर्गाद्वाऽथ पापानां अधर्म्मो रुचिता नृणां।
स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति। उद्विग्नवासो वसति यत्र तत्राभिजायते।
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत्। मांसस्याभक्षणं प्राहुर्नियताः परमर्षयः। ५७००
इदन्तु खलु कौन्तेय श्रुतमासीत् पुरा मया। मार्कण्डेयस्य वदतो ये दोषा मांसभक्षणे।
यो वै खादति मांसानि प्राणिनां जीवितैषिणां। हतानां वा मृतानां वा यथा हन्ता तथैव सः।
धनेन क्रयिको हन्ति खादकश्चोपभोगतः। घातको वधबन्धाभ्यामित्येष त्रिविधो वधः।
अखादन्ननुमोदंश्च भावदोषेण मानवः। योऽनुमोदति हन्यन्तं सोऽपि दोषेण लिप्यते।
अधृष्यः सर्व्वभूतानामायुष्मान्नीरुजः सुखी। भवत्यभक्षयन्मांसं दयावान् प्राणिनामिह। ५७०५
हिरण्यदानैर्गोदानैर्भूमिदानैश्च सर्व्वशः। मांसस्याभक्षणे धर्म्मो विशिष्ट इति नः श्रुतिः।
अप्रोक्षितं वृथामांसं विधिहीनं न भक्षयेत्। भक्षयन्निरयं याति नरो नास्त्यत्र संशयः।
प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया। अल्पदोषमिदं ज्ञेयं विपरीते तु लिप्यते।
खादकस्य कृते जन्तून् यो हन्यात् पुरुषाधमः। महादोषतरस्तत्र घातको न तु खादकः।
इज्यायज्ञश्रुतिकृतैर्यो मार्गैरबुधोऽधमः। हन्याज्जन्तुं मांसगृध्नुः स वै नरकभाङ्नरः। ५७१०
भक्षयित्वाऽपि यो मांसं पश्चादपि निवर्त्तते। तस्यापि सुमहान् धर्म्मो यः पापाद्विनिवर्त्तते।
आहर्त्ता चानुमन्ता च विशस्ता क्रयविक्रयी। संस्कर्त्ता चोपभोक्ता च घातकाः सर्व्व एव ते।
इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्म्मितं। पुराणमृषिभिर्ज्जुष्टं वेदेषु परिनिष्ठितं।
प्रवृत्तिलक्षणो धर्म्मः प्रजार्थिभिरुदाहृतः। यथोक्तं राजशार्दूल न तु तन्मोक्षकाङ्क्षिणां।
हविर्यत् संस्कृतं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि। वेदोक्तेन प्रमाणेन पितॄणां प्रक्रियासु च। ५७१५
अतोऽन्यथा वृथामांसमभक्ष्यं मनुरब्रवीत्। अस्वर्ग्यमयशस्यञ्च रक्षोवद्भरतर्षभ।

विधिहीनं नरः पूर्वं मांसं राजन्न भक्षयेत् । अप्रोक्षितं वृथामांसं विधिहीनं न भक्षयेत् ।
य इच्छेत् पुरुषोऽत्यन्तमात्मानं निरुपद्रवं । स वर्ज्जयेत मांसानि प्राणिनामिह सर्व्वशः ।
श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः । येनायजन्त यज्वानः पुण्यलोकपरायणाः ।
ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा । अभक्ष्यमिति मांसं च प्राह भक्ष्यमिति प्रभो । ५६१०
आकाशान्मेदिनीं प्राप्तस्ततः स पृथिवीपतिः । एतदेव पुनश्चोक्त्वा विवेश धरणीतलं ।
प्रजानां हितकामेन त्वगस्त्येन महात्मना । आरण्याः सर्व्वदैवत्याः प्रोक्षितास्तपसा मृगाः ।
क्रिया ह्येवं न हीयन्ते पितृदैवतसंश्रिताः । प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः ।
इदन्तु शृणु राजेन्द्र कीर्त्त्यमानं मयाऽनघ । अभक्षणे सर्व्वसुखं मांसस्य मनुजाधिप ।
यस्तु वर्षशतं पूर्णं तपस्तप्येत् सुदारुणं । यश्चैव वर्ज्जयेन्मांसं सममेतन्मतं मम । ५६१५
कौमुदे तु विशेषेण शुक्लपक्षे नराधिप । वर्ज्जयेन्मधुमांसानि धर्म्मो ह्यत्र विधीयते ।
चतुरो वार्षिकान् मासान् यो मांसं परिवर्ज्जयेत । चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशो बलं ।
अथवा मासमेकं वै सर्व्वमांसान्यभक्षयन् । अतीत्य सर्व्वदुःखानि सुखं जीवेन्निरामयः ।
वर्ज्जयन्ति हि मांसानि मासशः पक्षशोऽपि वा । तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ।
मांसन्तु कौमुदं पक्षं वर्ज्जितं पार्थ राजभिः । सर्व्वभूतात्मभूतैर्हि विदितार्थपरावरैः । ५६२०
नाभागेनाम्बरीषेण गयेन च महात्मना । आयुषा चानरण्येन दिलीपरघुपूरुभिः ।
कार्त्तवीर्य्यानिरुद्धाभ्यां नहुषेण ययातिना । नृगेण विष्वगश्वेन तथैव शशबिन्दुना ।
युवनाश्वेन च तथा शिबिनौशीनरेण च । मुचुकुन्देन मान्धात्रा हरिश्चन्द्रेण वा विभो ।
सत्यं वदत मासत्यं सत्यं धर्म्मः सनातनः । हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत् ।
श्येनचित्रेण राजेन्द्र सोमकेन वृकेण च । रैवतेन रन्तिदेवेन वसुना सृञ्जयेन च । ५६२५
एतैश्चान्यैश्च राजेन्द्र कृपेण भरतेन च । दुष्मन्तेन करूषेण रामालर्कनलैस्तथा ।
विरूपाश्वेन निमिना जनकेन च धीमता । ऐलेन पृथुना चैव वीरसेनेन चैव ह ।
इक्ष्वाकुणा शम्भुना च श्वेतेन सगरेण च । अजेन धुन्धुना चैव तथैव च सुबाहुना ।
हर्य्यश्वेन च राजेन्द्र क्षुपेण भरतेन च । एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितं ।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् । ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियान्विताः । ५६३०
उपास्यमाना गन्धर्व्वैः स्त्रीसहस्रसमन्विताः । तदेतदुत्तमं धर्म्ममहिंसाधर्म्मलक्षणं ।
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते । मधु मांसञ्च ये नित्यं वर्ज्जयन्तीह धार्म्मिकाः ।
जन्मप्रभृति मद्यञ्च सर्व्वे ते मुनयः स्मृताः । इमं धर्म्मममांसादं चरेद्वै श्रावयीत वा ।
अपि चेत् सुदुराचारो न जातु निरयं व्रजेत् । पठेद्वा य इदं राजन् शृणुयाद्वाऽप्यभीक्ष्णशः ।
अमांसभक्षणविधिं पवित्रमृषिपूजितं । विमुक्तः सर्व्वपापेभ्यः सर्व्वकामैर्महीयते । ५६३५
विशिष्टतां ज्ञातिषु च लभते नात्र संशयः । आपन्नश्चापदो मुच्येद्बद्धो मुच्येत बन्धनात् ।

मुच्येत्तथातुरो रोगाद्दुःखान्मुच्येत दुःखितः । तिर्य्यग्योनिं न गच्छेच्च रूपवांश्च भवेन्नरः ।
ऋद्धिमान् वै कुरुश्रेष्ठ प्राप्नुयाच्च महद्यशः । एतत्ते कथितं राजन् मांसस्य परिवर्ज्जने ।
प्रवृत्तौ च निवृत्तौ च विधानमृषिनिर्म्मितं ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि मांसभक्षणनिषेधे पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

॥ युधिष्ठिर उवाच ॥ इमे वै मानवा लोके नृशंसा मांसगृद्धिनः । विसृज्य विविधान् भक्ष्यान् महारक्षोगणा इव । ५६८०
अपूपान् विविधाकारान् शाकानि विविधानि च । खाण्डवान् रसयोगांश्च तथेच्छन्ति यथामिषं ।
तत्र मे बुद्धिरत्रैव विमर्शे परिमुह्यते । न मन्ये रसतः किञ्चिन्मांसतोऽस्तीति किञ्चन ।
तदिच्छामि गुणान् श्रोतुं मांसस्याभक्षणे प्रभो । भक्षणे चैव ये दोषास्तांश्चैव भरतर्षभ ।
सर्व्वं तत्त्वेन धर्म्मज्ञ यथावदिह धर्म्मतः । किं वा भक्ष्यमभक्ष्यं वा सर्व्वमेतद्वदस्व मे ।
यथैतद्यादृशञ्चैव गुणा ये चास्य वर्ज्जने । दोषा भक्षयतो येऽपि तन्मे ब्रूहि पितामह । ५६८५
॥ भीष्म उवाच ॥ एवमेतन्महाबाहो यथा वदसि भारत । न मांसात् परमं किञ्चिद्रसतो विद्यते भुवि ।
क्षतक्षीणाभितप्तानां ग्राम्यधर्म्मरतात्मनां । अध्वना कर्षितानाञ्च न मांसाद्विद्यते परं ।
सद्यो वर्द्धयति प्राणान् पुष्टिमग्र्यां दधाति च । न भक्ष्योऽभ्यधिकः कश्चिन्मांसादस्ति परन्तप ।
विवर्ज्जने तु बहवो गुणाः कौरवनन्दन । ये भवन्ति मनुष्याणां तन्मे निगदतः शृणु ।
स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति । नास्ति क्षुद्रतरस्तस्मात् स नृशंसतरो नरः । ५६९०
न हि प्राणात् प्रियतरं लोके किञ्चन विद्यते । तस्माद्दयां नरः कुर्य्याद्यथात्मनि तथा परे ।
शुक्राच्च तात सम्भूतिर्म्मांसस्येह न संशयः । भक्षणे तु महान् दोषो निवृत्त्या पुण्यमुच्यते ।
विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति । यज्ञार्थे पशवः सृष्टा इत्यपि श्रूयते श्रुतिः ।
अतोऽन्यथा प्रवृत्तानां राक्षसो विधिरुच्यते । क्षत्रियाणाञ्च यो दृष्टो विधिस्तमपि मे शृणु ।
वीर्य्येणोपार्ज्जितं मांसं यथा भुञ्जन्न दुष्यति । आरण्याः सर्व्वदैवत्याः सर्व्वशः प्रोक्षिता मृगाः । ५६९५
अगस्त्येन पुरा राजन् मृगया येन पूज्यते । नात्मानमपरित्यज्य मृगया नाम विद्यते ।
समतामुपसङ्गम्य भूतं हन्यति हन्ति वा । अतो राजर्षयः सर्व्वे मृगयां यान्ति भारत ।
न हि लिप्यन्ति पापेन न चैतत् पातकं विदुः । न ह्यतः सदृशं किञ्चिदिह लोके परत्र च ।
यत् सर्व्वेष्विह भूतेषु दया कौरवनन्दन । न भयं विद्यते जातु नरस्येह दयावतः ।
दयावतामिमे लोकाः परे चापि तपस्विनां । अहिंसालक्षणो धर्म्म इति धर्म्मविदो विदुः । ५७००
यदहिंसात्मकं कर्म्म तत् कुर्य्यादात्मवान्नरः । पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते ।
अभयं सर्व्वभूतेभ्यो यो ददाति दयापरः । अभयं सर्व्वभूतानि ददतीत्यनुशुश्रुम ।
क्षतञ्च स्खलितञ्चैव पतितं क्लिष्टमाहतं । सर्व्वभूतानि रक्षन्ति समेषु विषमेषु च ।
नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः । मुच्यते भयकालेषु मोक्षयेद्यो भये परान् ।
प्राणदानात् परं दानं न भूतं न भविष्यति । न ह्यात्मनः प्रियतरं किञ्चिदस्तीह निश्चितं । ५७०५

अनिष्टं सर्व्वभूतानां मरणं नाम भारत । मृत्युकाले हि भूतानां सद्यो जायेत वेपथुः ।
जातिजन्मजरादुःखैर्नित्यं संसारसागरे । जन्तवः परिवर्त्तन्ते मरणादुद्विजन्ति च ।
गर्भवासेषु पच्यन्ते क्षाराम्लकटुकै रसैः । मूत्रश्लेष्मपुरीषाणां स्पर्शैर्भृशदारुणैः ।
जाताश्चाप्यवशास्तत्र छिद्यमानाः पुनः पुनः । पाच्यमानाश्च पच्यन्ते विवशा मांसगृद्धिनः ।
कुम्भीपाकेषु पच्यन्ते तां तां योनिमुपागताः । आक्रम्य मार्य्यमाणाश्च भ्राम्यन्ते वै पुनः पुनः । १०१०
नात्मनोऽस्ति प्रियतमः पृथिवीमनुसृत्य च । तस्मात् प्राणिषु सर्व्वेषु दयावानात्मवान् भवेत् ।
सर्व्वमांसानि यो राजन् यावज्जीवं न भक्षयेत् । स्वर्गे स विपुलं स्थानं प्राप्नुयान्नात्र संशयः ।
ये भक्षयन्ति मांसानि भूतानां जीवितैषिणां । भक्ष्यन्ते तेऽपि भूतैस्तैरिति मे नास्ति संशयः ।
मां स भक्षयते यस्माद्भक्षयिष्ये तमप्यहं । एतन्मांसस्य मांसत्वमनुबुध्यस्व भारत ।
घातको वध्यते नित्यं तथा वध्येत भक्षिता । आक्रोष्टा क्रुध्यते राजन् द्विषन् द्वेष्यत्वमाप्नुयात् । १०११
येन येन शरीरेण यद्यत्कर्म्म करोति यः । तेन तेन शरीरेण तत्तत् फलमुपाश्नुते ।
अहिंसा परमो धर्म्मस्तथाऽहिंसा परो दमः । अहिंसा परमं दानमहिंसा परमं तपः ।
अहिंसा परमो यज्ञस्तथाहिंसा परमं बलं । अहिंसा परमं मित्रमहिंसा परमं सुखं ।
अहिंसा परमं सत्यमहिंसा परमं श्रुतं । सर्व्वयज्ञेषु वा दानं सर्व्वतीर्थेषु चाप्लुतं ।
सर्व्वदानफलञ्चापि नैतत्तुल्यमहिंसया । अहिंस्रस्य तपोऽक्षय्यमहिंस्रो यजते सदा । १०१२
अहिंस्रः सर्व्वभूतानां यथा माता यथा पिता । एतत् फलमहिंसाया भूयश्च कुरुपुङ्गव ।
न हि शक्या गुणा वक्तुमपि वर्षशतैरपि ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि अहिंसाफलकथने षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

॥ युधिष्ठिर उवाच ॥ अकामाश्च सकामाश्च ये हताः स्म महामृधे । कां गतिं प्रतिपन्नास्ते तन्मे ब्रूहि पितामह ।
दुःखं प्राणपरित्यागः पुरुषाणां महामृधे । जानासि त्वं महाप्राज्ञ प्राणत्यागं सुदुष्करं ।
समृद्धे वाऽसमृद्धे वा शुभे वा यदि वाऽशुभे । कारणं तत्र मे ब्रूहि सर्व्वज्ञो ह्यसि मे मतः । १०१३
॥ भीष्म उवाच ॥ समृद्धे वाऽसमृद्धे वा शुभे वा यदि वाऽशुभे । संसारेऽस्मिन् समायाताः प्राणिनः पृथिवीपते ।
निरता येन भावेन तत्र मे शृणु कारणं । सम्यक् चायमनुप्रश्नस्त्वयोक्तश्च युधिष्ठिर ।
अत्र ते वर्त्तयिष्यामि पुरावृत्तमिदं नृप । द्वैपायनस्य संवादं कीटस्य च युधिष्ठिर ।
ब्रह्मभूतश्चरन् विप्रः कृष्णद्वैपायनः पुरा । ददर्श कीटं धावन्तं शीघ्रं शकटवर्त्मनि ।
गतिज्ञः सर्व्वभूतानां भाषाज्ञश्च शरीरिणां । सर्व्वज्ञः स तदा दृष्ट्वा कीटं वचनमब्रवीत् । १०१४
॥ व्यास उवाच ॥ कीट संत्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे । क्व धावसि तदाचक्ष्व कुतस्ते भयमागतं ।
॥ कीट उवाच ॥ शकटस्यास्य महतो घोषं श्रुत्वा भयं मम । आगतं वै महाबुद्धे स्वन एष हि दारुणः ।
श्रूयते न च मां हन्यादिति तस्मादपक्रमे । श्वसतां च शृणोम्येवं गोपुत्राणां प्रतोद्यतां ।
वहतां सुमहाभारं सन्निकर्षे स्वनं प्रभो । नृणाञ्च संवाहयतां श्रूयते विविधः स्वनः ।

शोतुमस्मद्विधेनैवं न शक्यं कीटयोनिना । तस्मादतिक्रमाम्येष भयादस्मात् सुदारुणात् । ५८३५

दुःखं हि मृत्युभूतानां जीवितञ्च सुदुर्लभं । अतो भीतः पलायामि न गच्छेयं नासुखं सुखात् ।

॥ भीष्म उवाच ॥ इत्युक्तः स तु तं प्राह कुतः कीट सुखं तव । मरणं ते सुखं मन्ये तिर्य्यग्योनौ हि वर्त्तसे ।

शब्दं स्पर्शं रसं गन्धं भोगांश्चोच्चावचान् बहून् । नाभिजानासि कीट त्वं श्रेयो मरणमेव ते ।

॥ कीट उवाच ॥ सर्व्वत्र निरतो जीव इहत्रापि सुखं मम । चिन्तयामि महाप्राज्ञ तस्मादिच्छामि जीवितुं ।

इहापि विषयः सर्व्वो यथादेहं प्रवर्त्तितः । मानुषास्तिर्य्यगाश्चैव पृथग्भोगा विशेषतः । ५८४०

अहमासं मनुष्यो वै शूद्रो बहुधनः प्रभो । अब्रह्मण्यो नृशंसश्च कदर्य्यो वृद्धिजीवकः ।

वाक्तीक्ष्णो निकृतिप्रज्ञो द्वेष्टा सर्व्वस्य सर्व्वशः । मिथः कृतोपनिधिना परस्वहरणे रतः ।

भृत्यातिथिजनश्चापि गृहे पर्य्येषितो मया । मात्सर्य्यात् स्वादुकामेन नृशंसेन बुभुक्षता ।

देवार्थं पितृयज्ञार्थमन्नं श्रद्धाकृतं मया । न दत्तमर्थकामेन देयमन्नं पुरा किल ।

गुप्तं शरणमाश्रित्य भयेषु शरणागताः । अकस्मात्ते मया त्यक्ता न त्राता अभयैषिणः । ५८४५

धनं धान्यं प्रियान् दारान् पानं वासस्तथाऽद्भुतं । श्रियं दृष्ट्वा मनुष्याणामसूयामि निरर्थकं ।

ईर्षुः परसुखं दृष्ट्वा अन्यस्य न बुभूषकः । त्रिवर्गहन्ता चान्येषामात्मकामानुवर्त्तकः ।

नृशंसगुणभूयिष्ठं पुरा कर्म्म कृतं मया । स्मृत्वा तदनुतप्येऽहं त्यक्त्वा प्रियमिवात्मजं ।

शुभानां नाभिजानामि कृतानां कर्म्मणां फलं । माता च पूजिता वृद्धा ब्राह्मणश्चार्च्चितो मया ।

सकृज्जातिगुणोपेतः सङ्गत्या गृहमागतः । अतिथिः पूजितो ब्रह्मंस्तेन मां नाजहात् स्मृतिः । ५८५०

कर्म्मणा पुनरेवाहं सुखमागामि लक्षये । तच्छ्रोतुमहमिच्छामि त्वत्तः श्रेयस्तपोधन ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि कीटोपाख्याने सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

॥ व्यास उवाच ॥ शुभेन कर्म्मणा यद्वै तिर्य्यग्योनौ न मुह्यसे । ममैव कीट तत्कर्म्म येन त्वं न प्रमुह्यसे ।

अहं हि दर्शनादेव तारयामि तपोबलात् । तपोबलाद्धि बलवद्बलमन्यन्न विद्यते ।

जानामि पापैः स्वकृतैर्गतं त्वां कीट कीटतां । अवाप्स्यसि पुनर्द्धर्म्मं धर्म्मस्थ यदि मन्यसे ।

कर्म्मभूमिकृतं देवा भुञ्जते तिर्य्यगाश्च ये । धर्म्मोऽपि हि मनुष्येषु कामार्थाश्च तथा गुणाः । ५८५५

वाग्बुद्धिपाणिपादैश्च व्यपेतस्य विपश्चितः । किं ह्रासति मनुष्यस्य मन्दस्यापि हि जीवतः ।

जीवन् हि कुरुते पूजां विप्राग्र्यः शशिसूर्य्ययोः । ब्रुवन्नपि कथां पुण्यां तत्र कीट त्वमेष्यसि ।

गुणभूतानि भूतानि तत्र त्वमुपभोक्ष्यसे । तत्र तेऽहं विधास्यामि ब्रह्मत्वं यत्र वेत्स्यसि ।

स तथेति प्रतिश्रुत्य कीटो वर्त्मन्यतिष्ठत । शकटो महांश्च सुमहानागतश्च यदृच्छया ।

चक्राक्रमेण भिन्नश्च कीटः प्राणान्मुमोच ह । सम्भूतः क्षत्रियकुले प्रसादादमितौजसः । ५८६०

तमृषिं द्रष्टुमगमत् सर्व्वास्वन्यासु योनिषु । श्वाविद्गोधावराहाणां तथैव मृगपक्षिणां ।

श्वपाकशूद्रवैश्यानां क्षत्रियाणाञ्च योनिषु । स कीट एवमाभाष्य ऋषिणा सत्यवादिना ।

प्रतिस्मृत्याऽथ जग्राह पादौ मूर्द्ध्ना कृताञ्जलिः ।

॥ कीट उवाच ॥ इदं तदतुलं स्थानमीप्सितं दशभिर्गुणैः । यदहं प्राप्य कीटत्वमागतो राजपुत्रतां ।
वहन्ति मामतिबलाः कुञ्जरा हेममालिनः । स्यन्दनेषु च काम्बोजा युक्ताः परमवाजिनः । ५६९५
उष्ट्राश्वतरयुक्तानि यानानि च वहन्ति मां । सबान्धवः सहामात्यश्चाश्नामि पिशितौदनं ।
गृहेषु सुनिवातेषु सुखेषु शयनेषु च । वरार्हेषु महाभाग स्वपामि च सुपूजितः ।
सर्व्वेष्वपररात्रेषु सूतमागधवन्दिनः । स्तुवन्ति मां यथा देवा महेन्द्रं प्रियवादिनः ।
प्रसादात् सत्यसन्धस्य भवतोऽमिततेजसः । यदहं कीटतां प्राप्य सम्प्राप्तो राजपुत्रतां ।
नमस्तेऽस्तु महाप्राज्ञ किं करोमि प्रशाधि मां । त्वत्तपोबलनिर्द्दिष्टमिदं ह्यधिगतं मया । ५७००
॥ व्यास उवाच ॥ अर्च्चितोऽहं त्वया राजन् वाग्भिरद्य यदृच्छया । अद्य ते कीटतां प्राप्य स्मृतिर्जाता जुगुप्सिता ।
न तु नाशोऽस्ति पापस्य यत्त्वयोपचितः पुरा । शूद्रेणार्थप्रधानेन नृशंसेनाततायिना ।
मम ते दर्शनं प्राप्तं तच्चैवं सुकृतं त्वया । तिर्य्यग्योनौ स्म जातेन मम चाभ्यर्चनात्तथा
इतस्त्वं राजपुत्रत्वाद्ब्राह्मण्यं समवाप्स्यसि । गोब्राह्मणकृते प्राणान् हुत्वा आत्मं रणाजिरे ।
राजपुत्र सुखं प्राप्य क्रतूंश्चैवाप्तदक्षिणान् । अथ मोदिष्यसे स्वर्गे ब्रह्मभूतोऽव्ययः सुखी । ५७०५
तिर्य्यग्योन्याः शूद्रतामभ्युपैति शूद्रो वैश्यं क्षत्रियत्वञ्च वैश्यः । वृत्तश्लाघी क्षत्रियो ब्राह्मणत्वं स्वर्गं पुण्यं ब्राह्मणः
साधुवृत्तः ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि कीटोपाख्याने अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

॥ भीष्म उवाच ॥ क्षत्रधर्म्ममनुप्राप्तः स्मरन्नेव च वीर्य्यवान् । त्यक्त्वा स कीटतां राजंश्चचार विपुलं तपः ।
तस्य धर्म्मार्थविदुषो दृष्ट्वा तद्विपुलं तपः । आजगाम द्विजश्रेष्ठः कृष्णद्वैपायनस्तदा ।
॥ व्यास उवाच ॥ क्षात्रं देवव्रतं कीट भूतानां परिपालनं । क्षात्रं देवव्रतं ध्यायंस्ततो विप्रत्वमेष्यसि ।
पाहि सर्व्वाः प्रजाः सम्यक् शुभाशुभविदात्मवान् । शुभैः संविभजन् कामैरशुभानाञ्च पावनैः । ५७१०
आत्मवान् भव सुप्रीतः स्वधर्म्माचरणे रतः । क्षात्रीं तनुं समुत्सृज्य ततो विप्रत्वमेष्यसि ।
॥ भीष्म उवाच ॥ सोऽथारण्यमनुप्राप्य पुनरेव युधिष्ठिर । महर्षेर्व्वचनं श्रुत्वा प्रजा धर्म्मेण पाल्य च ।
अचिरेणैव कालेन कीटः पार्थिवसत्तम । प्रजापालनधर्म्मेण प्रेत्य विप्रत्वमागतः ।
ततस्तं ब्राह्मणं दृष्ट्वा पुनरेव महायशाः । आजगाम महाप्राज्ञः कृष्णद्वैपायनस्तदा ।
॥ व्यास उवाच ॥ भो भो ब्रह्मर्षभ श्रीमन् मा व्यथिष्ठाः कथञ्चन । शुभकृच्छुभयोनीषु पापकृत् पापयो-
निषु । ५७१५
उपपद्यति धर्म्मज्ञ यथापापफलोपगं । तस्मात् मृत्युभयात् कीट मा व्यथिष्ठाः कथञ्चन ।
धर्म्मलोपभयं ते स्यात् तस्माद्धर्म्मं चरोत्तमं ।
॥ कीट उवाच ॥ सुखात् सुखतरं प्राप्तो भगवंस्त्वत्कृते ह्यहं । धर्म्ममूलाः श्रियः प्राप्य पाप्मा नष्ट इहाद्य मे ।
॥ भीष्म उवाच ॥ भगवद्वचनात् कीटो ब्राह्मण्यं प्राप्य दुर्लभं । अकरोत् पृथिवीं राजन् यज्ञयूपशताङ्कितां ।
ततः सालोक्यमगमत् ब्रह्मणो ब्रह्मवित्तमः । अवाप च परं कीटः पार्थ ब्रह्म सनातनं । ५७२०

स्वकर्म्मफलनिर्दिष्टं प्राप्स्य ब्रह्मणस्तदा । तेऽपि यस्मात् प्रभावेण च ताः क्षत्रियपुङ्गवाः ।
सम्प्राप्तास्ते गतिं पुण्यां तथाप्ता ब्राह्म पुत्रक ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि कीटोपाख्याने ऊनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

॥ युधिष्ठिर उवाच ॥ विद्या तपश्च दानञ्च किमेतेषां विशिष्यते । पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । मैत्रेयस्य च संवादं कृष्णद्वैपायनस्य च ।
कृष्णद्वैपायनो राजन्नज्ञातचरितं चरन् । वाराणस्यामुपातिष्ठन् मैत्रेयं स्वैरिणीकुले । १७९५
तमुपस्थितमासीनं ज्ञात्वा स मुनिसत्तमः । अर्च्चित्वा भोजयामास मैत्रेयोऽशनमुत्तमं ।
तदन्नमुत्तमं भुक्त्वा गुणवत् सार्व्वकामिकं । प्रतिष्ठमानोऽस्मयत प्रीतः कृष्णो महामनाः ।
तमुत्स्मयन्तं सम्प्रेक्ष्य मैत्रेयः कृष्णमब्रवीत् । कारणं ब्रूहि धर्म्मात्मन् व्यस्मयिष्ठाः कुतश्च ते ।
तपस्विनो धृतिमतः प्रमोदः समुपागतः । एतत्पृच्छामि ते विद्वन्नभिवाद्य प्रणम्य च ।
आत्मनश्च तपोभाग्यं महाभाग्यं तथैव च । पृथगाचरतस्तात पृथगात्मसुखात्मनोः । १८००
अल्पान्तरमहं मन्ये विशिष्टमपि चान्वयात् ।
॥ व्यास उवाच ॥ अतिच्छेदातिवादाभ्यां स्मयोऽयं समुपागतः । असत्यं वेदवचनं कस्माद्वेदोऽनृतं वदेत् ।
त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं व्रतं । न द्रुह्येच्चैव दद्याच्च सत्यञ्चैव परं वदेत् ।
इति वेदोक्तमृषिभिः पुरस्तात् परिकल्पितं । इदानीञ्चैव नः कृत्यं पुरस्ताच्च परिश्रुतं ।
अल्पो हि तादृशो दायो भवत्युत महाफलः । तृषिताय च ते दत्तं हृदयेनानसूयता । १८०५
तृषितस्तृषिताय त्वं दत्त्वैतदशनं मम । अजैषीर्महतो लोकान्महायज्ञैरिव प्रभो ।
ततो दानपवित्रेण प्रीतोऽस्मि तपसैव च । पुण्यस्यैव हि ते गन्धं पुण्यस्यैव च दर्शनं ।
पुण्यश्चैवाभिगन्धस्ते मन्ये कर्म्मविधानजं । अधिकं मार्जनात्तात तथा चैवानुलेपनात् ।
शुभं सर्व्वपवित्रेभ्यो दानमेव परं द्विज । नोचेत् सर्व्वपवित्रेभ्यो दानमेव परं भवेत् ।
यानीमान्युत्तमानीह वेदोक्तानि प्रशंससि । तेषां श्रेष्ठतरं दानमिति मे नास्ति संशयः । १८१०
दानकृद्भिः कृतः पन्था येन यान्ति मनीषिणः । ते हि प्राणस्य दातारस्तेषु धर्म्मः प्रतिष्ठितः ।
यथा वेदाः स्वधीताश्च यथा चेन्द्रियसंयमः । सर्व्वत्यागो यथा चेह तथा दानमनुत्तमं ।
त्वं हि तात सुखादेव सुखमेष्यसि शोभनं । सुखात् सुखतरप्राप्तिमाप्नुते मतिमान्नरः ।
तन्नः प्रत्यक्षमेवेदमुपलब्धमसंशयं । श्रीमन्तमाप्नुवन्त्यर्था दानयज्ञास्तथा सुखं ।
सुखादेव परं दुःखं दुःखादप्यपरं सुखं । दृश्यते हि महाप्राज्ञ नियतं वै स्वभावतः । १८१५
त्रिविधानीह वृत्तानि नरस्याहुर्मनीषिणः । पुण्यमन्यत् पापमन्यन्न पुण्यं न च पातकं ।
न वृत्तं मन्यते तस्य मन्यते नास्य पातकं । तथा स्वकर्म्मनिर्वृत्तं न पुण्यं न च पातकं ।
यज्ञदानतपःशीला नरा वै पुण्यकर्म्मिणः । येऽभिद्रुह्यन्ति भूतानि ते वै पापकृतो जनाः ।
द्रव्याण्याददते चैव दुःखं यान्ति पतन्ति च । अतोऽन्यत् कर्म्म यत् किञ्चिन्न पुण्यं न च पातकं ।

रमस्वैधस्व मोदस्व देहि चैव यजस्व च । न त्वामभिभविष्यन्ति वैद्या न च तपस्विनः । ५८१०

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि मैत्रेयभिक्षायां विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

॥ भीष्म उवाच ॥ एवमुक्तः प्रत्युवाच मैत्रेयः कर्म्मपूजकः । अत्यन्तश्रीमति कुले जातः प्राज्ञो बहुश्रुतः ।
॥ मैत्रेय उवाच ॥ असंशयं महाप्राज्ञ यथैवात्थ तथैव तत् । अनुज्ञातस्तु भवता किञ्चिद्ब्रूयामहं विभो ।
॥ व्यास उवाच ॥ यद्यदिच्छसि मैत्रेय यावद्यावद्यथा तथा । ब्रूहि तत्त्वं महाप्राज्ञ शुश्रूषे वचनं तव ।
॥ मैत्रेय उवाच ॥ निर्द्दोषं निर्म्मलञ्चैव वचनं दानसंहितं । विद्यातपोभ्यां हि भवान् भावितात्मा न संशयः ।
भवतो भावितात्मत्वाल्लाभोऽयं सुमहान्मम । भूयो बुद्ध्याऽनुपश्यामि सुसमिद्धतपा इव । ५८१५
अपि मे दर्शनादेव भवतोऽभ्युदयो भवेत् । मन्ये भवत्प्रसादोऽयं तद्धि कर्म्म स्वभावतः ।
तपः श्रुतञ्च योनिश्चाप्येतद्ब्राह्मण्यकारणं । त्रिभिर्गुणैः समुदितस्ततो भवति वै द्विजः ।
तस्मिंस्तृप्ते च तृप्यन्ते पितरो दैवतानि च । न हि श्रुतवतः किञ्चिदधिकं ब्राह्मणादृते ।
अन्धं स्यात्तम एवेदं न प्रज्ञायेत किञ्चन । चातुर्व्वर्ण्यं न वर्त्तेत धर्म्माधर्म्मावृतानृते ।
यथा हि सुकृते क्षेत्रे फलं विन्दति मानवः । एवं दत्त्वा श्रुतवति फलं दाता समश्नुते । ५८२०
ब्राह्मणश्चेन्न विद्येत श्रुतवृत्तोपसंहितः । प्रतिग्रहीता दानस्य मोघं स्याद्धनिनां धनं ।
अदन्नविद्वान् हन्त्यन्नमद्यमानश्च हन्ति तं । तञ्चान्नं पाति यश्चान्नं स हत्वा हन्यतेऽबुधः ।
प्रभुर्ह्यन्नमदन् विद्वान् पुनर्जनयतीश्वरः । स चान्नाज्जायते तस्मात् सूक्ष्म एतद्व्यतिक्रमः ।
यदेव ददतः पुण्यं तदेव प्रतिगृह्णतः । न ह्येकचक्रं वर्त्तेत इत्येवमृषयो विदुः ।
यत्र वै ब्राह्मणाः सन्ति श्रुतवृत्तोपसंहिताः । तत्र दानफलं पुण्यमिह चामुत्र चाश्नुते । ५८२५
ये योनिशुद्धाः सततं तपस्यभिरता भृशं । दानाध्ययनसम्पन्नास्ते वै पूज्यतमाः सदा ।
तैर्हि सद्भिः कृतः पन्थाश्चेतयानो न मुह्यते । ते हि स्वर्गस्य नेतारो यज्ञवाहाः सनातनाः ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

॥ भीष्म उवाच ॥ एवमुक्तः स भगवान् मैत्रेयं प्रत्यभाषत । दिष्ट्यैव त्वं विजानासि दिष्ट्या ते बुद्धिरीदृशी ।
लोको ह्यार्य्यगुणानेव भूयिष्ठन्तु प्रशंसति । रूपमानवयोमानश्रीमानाश्चाप्यसंशयं ।
दिष्ट्या नाभिभवन्ति त्वां दैवस्तेऽयमनुग्रहः । यत्ते भृशतरं दानाद्वर्त्तयिष्यामि तच्छृणु । ५८३०
यानीहागमशास्त्राणि याश्च काश्चित् प्रवृत्तयः । तानि वेदं पुरस्कृत्य प्रवृत्तानि यथाक्रमं ।
अहं दानं प्रशंसामि भवानपि तपःश्रुते । तपः पवित्रं वेदस्य तपः स्वर्गस्य साधनं ।
तपसा महदाप्नोति विद्यया चेति नः श्रुतं । तपसैव चापनुदेद्यच्चान्यदपि दुष्कृतं ।
यत् यद्धि किञ्चित् सन्धाय पुरुषस्तप्यते तपः । सर्व्वमेतदवाप्नोति विद्यया चेति नः श्रुतं ।
दुरन्वयं दुष्प्रधर्षं दुरापं दुरतिक्रमं । सर्व्वं वै तपसाऽभ्येति तपो हि बलवत्तरं । ५८३५
सुरापोऽसम्मतादायी भ्रूणहा गुरुतल्पगः । तपसा तरते सर्व्वमेनसश्च प्रमुच्यते ।
सर्व्वविद्यस्तु चक्षुष्मानपि यादृशतादृशं । तपस्विनं तथैवाहुस्ताभ्यां कार्य्यं सदा नमः ।

सर्व्वे पूज्याः श्रुतधनास्तथैव च तपस्विनः । दानप्रदाः सुखं प्रेत्य प्राप्नुवन्तीह च श्रियं ।
इमञ्चाप्यमुं लोकञ्च लोकञ्च परतः परं । अन्नदानैः सुकृतिनः प्रतिपद्यन्ति लौकिकाः ।
पूजिताः पूजयन्त्येते मानिता मानयन्ति च । अदाता यत्र यत्रैति सर्व्वतः सम्प्रणुद्यते । ५८१०
अकर्त्ता चैव कर्त्ता च लभते यस्य यादृशं । यदि चोर्द्ध्वं यदाधो वा स्वं लोकमभियास्यति ।
प्राप्स्यसे त्वन्नपानानि यानि वाञ्छसि कानिचित् । मेधाव्यसि कुले जातः श्रुतवाननृशंसवान् ।
कौमारचारी व्रतवान् मैत्रेय निरतो भव । एतद्गृहाण प्रथमं प्रशस्तं गृहमेधिनां ।
यो भर्त्ता वासिता तुष्टा भर्त्तुस्तुष्टा च वासिता । यस्मिन्नेवं कुले सर्व्वं कल्याणं तत्र वर्त्तते ।
अद्भिर्गात्रान्मलमिव तमोऽग्निप्रभया यथा । दानेन तपसा चैव सर्व्वं पापमपोहति । ५८१५
स्वस्ति प्राप्नुहि मैत्रेय गृहान् साधु व्रजाम्यहं । एतन्मनसि कर्त्तव्यं श्रेय एवं भविष्यति ।
तं प्रणम्याथ मैत्रेयः कृत्वा चाभिप्रदक्षिणं । स्वस्ति प्राप्नोतु भगवानित्युवाच कृताञ्जलिः ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि मैत्रेयभिक्षायां द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ युधिष्ठिर उवाच ॥ सत्स्त्रीणां समुदाचारं सर्व्वधर्म्मविदाम्वर । श्रोतुमिच्छाम्यहं त्वत्तस्तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ सर्व्वज्ञां सर्व्वतत्त्वज्ञां देवलोके मनस्विनीं । कैकेयी सुमना नाम शाण्डिलीं पर्य्यपृच्छत ।
केन वृत्तेन कल्याणि समाचारेण केन वा । विधूय सर्व्वपापानि देवलोकं त्वमागता । ५८२०
हुताशनशिखेव त्वं ज्वलमाना स्वतेजसा । सुता ताराधिपस्येव प्रभया दिवमागता ।
अरजांसि च वस्त्राणि धारयन्ती गतक्लमा । विमानस्था शुभे भासि सहस्रगुणमोजसा ।
न त्वमल्पेन तपसा दानेन नियमेन च । इमं लोकमनुप्राप्ता त्वं हि तत्त्वं वदस्व मे ।
इति पृष्टा सुमनया मधुरं चारुहासिनी । शाण्डिली निभृतं वाक्यं सुमनामिदमब्रवीत् ।
नाहं काषायवसना नापि वल्कलधारिणी । न च मुण्डा न जटिला भूत्वा देवत्वमागता । ५८२५
अहितानि च वाक्यानि सर्व्वाणि परुषाणि च । अप्रमत्ता च भर्त्तारं कदाचिन्नाहमब्रुवं ।
देवतानां पितॄणाञ्च ब्राह्मणानाञ्च पूजने । अप्रमत्ता सदा युक्ता श्वश्रूश्वशुरवर्त्तिनी ।
पैशुन्ये न प्रवर्त्तामि न ममैतन्मनोगतं । अद्वारे न च तिष्ठामि चिरं न कथयामि च ।
असद्वा हसितं किञ्चिदहितं वाऽपि कर्म्मणा । रहस्यमरहस्यं वा न प्रवर्त्तामि सर्व्वथा ।
कार्य्यार्थे निर्गतञ्चापि भर्त्तारं गृहमागतं । आसनेनोपसंयोज्य पूजयामि समाहिता । ५८३०
यदन्नं नाभिजानाति यद्भोज्यं नाभिनन्दति । भक्ष्यं वा यदि वा लेह्यं तत् सर्व्वं वर्ज्जयाम्यहं ।
कुटुम्बार्थे समानीतं यत् किञ्चित् कार्य्यमेव तु । प्रातरुत्थाय तत् सर्व्वं कारयामि करोमि च ।
प्रवासं यदि मे याति भर्त्ता कार्य्येण केनचित् । मङ्गलैर्बहुभिर्युक्ता भवामि नियता तदा ।
अञ्जनं रोचनाञ्चैव स्नानं माल्यानुलेपनं । प्रसाधनञ्च निष्क्रान्ते नाभिनन्दामि भर्त्तरि ।
नोत्थापयामि भर्त्तारं सुखसुप्तमहं सदा । आन्तरेष्वपि कार्य्येषु तेन तुष्यति मे मनः । ५८३५
नायासयामि भर्त्तारं कुटुम्बार्थेऽपि सर्व्वदा । गुप्तगुह्या सदा चास्मि सुसंमृष्टनिवेशना ।

इमं धर्म्मपथं नारी पालयन्ती समाहिता । अरुन्धतीव नारीणां स्वर्गलोके महीयते ।

॥ भीष्म उवाच ॥ एतदाख्याय सा देवी सुमनायै तपस्विनी । पतिधर्म्मं महाभागा जगामादर्शनं तदा ।

यश्चेदं पाण्डवाख्यानं पठेत् पर्व्वणि पर्व्वणि । स देवलोकं सम्प्राप्य नन्दने स सुखी वसेत् ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि सुमनासंवादे त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

॥ युधिष्ठिर उवाच ॥ साम्नि चापि प्रदाने च ज्यायः किं भवतो मतं । प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते । ५८८०

॥ भीष्म उवाच ॥ साम्ना प्रसाद्यते कश्चिद्दानेन च तथाऽपरः । पुरुषः प्रकृतिं ज्ञात्वा तयोरेकतरं भजेत् ।

गुणांस्तु शृणु मे राजन् सान्त्वस्य भरतर्षभ । दारुणान्यपि भूतानि सान्त्वेनाराधयेत् यथा ।

अत्राप्युदाहरन्तीममितिहासं पुरातनं । गृहीत्वा रक्षसा मुक्तो द्विजातिः कानने यथा ।

कश्चिद्वाग्बुद्धिसम्पन्नो ब्राह्मणो विजने वने । गृहीतः कृच्छ्रमापन्नो रक्षसा भक्षयिष्यता ।

स बुद्धिश्रुतिसम्पन्नस्तं दृष्ट्वाऽतीव भीषणं । सामैवास्मिन् प्रयुयुजे न मुमोह न विव्यथे । ५८८५

रक्षस्तु वाचा सम्पूज्य प्रश्नं पप्रच्छ तं द्विजं । मोक्ष्यसे ब्रूहि मे प्रश्नं केनास्मि हरिणः कृशः ।

मुहूर्त्तमथ सञ्चिन्त्य ब्राह्मणस्तस्य रक्षसः । आभिर्गाथाभिरव्यग्रः प्रश्नं प्रतिजगाद ह ।

॥ ब्राह्मण उवाच ॥ विदेशस्थो विलोकस्थो विना नूनं सुहृज्जनैः । विषयानतुलान् भुङ्क्षे तेनासि हरिणः कृशः ।

नूनं मित्राणि ते रक्षः साधूपचरितान्यपि । स्वदोषादपरज्यन्ते तेनासि हरिणः कृशः ।

गुणवान्निर्गुणानन्यान् नूनं पश्यसि सत्कृतान् । प्राज्ञोऽप्राज्ञान् विनीतात्मा तेनासि हरिणः कृशः । ५८९०

धनैश्वर्य्याधिकास्तब्धास्त्वद्गुणैः परमावराः । अवजानन्ति नूनं त्वां तेनासि हरिणः कृशः ।

अवृत्त्या क्लिश्यमानोऽपि वृत्त्युपायान् निगर्हयन् । माहात्म्याद्व्यथसे नूनं तेनासि हरिणः कृशः ।

सम्पीड्यात्मानमार्य्यत्वात्त्वया कश्चिदुपस्कृतः । जितं त्वां मन्यते साधो तेनासि हरिणः कृशः ।

क्लिश्यमानान् विमार्गेषु कामक्रोधावृतात्मनः । मन्ये त्वं ध्यायसि जनांस्तेनासि हरिणः कृशः ।

प्रज्ञासम्भावितो नूनमप्रज्ञैरुपसंहितः । ह्रीयमाणोऽसि दुर्वृत्तैस्तेनासि हरिणः कृशः । ५८९५

नूनं मित्रमुखः शत्रुः कश्चिदार्य्यवदाचरन् । वञ्चयित्वा गतस्त्वां वै तेनासि हरिणः कृशः ।

प्रकाशार्थगतिर्नूनं रहस्यकुशलः कृती । तज्ज्ञैर्न पूज्यसे नूनं तेनासि हरिणः कृशः ।

असत्स्वपि निविष्टेषु ब्रुवतो मुक्तसंशयान् । गुणास्तेन विराजन्ते तेनासि हरिणः कृशः ।

धनबुद्धिश्रुतैर्हीनः केवलं तेजसाऽन्वितः । महत् प्रार्थयसे नूनं तेनासि हरिणः कृशः ।

तपः प्रणिहितात्मानं मन्ये त्वाऽरण्यकाङ्क्षिणं । बान्धवा नाभिनन्दन्ति तेनासि हरिणः कृशः । ५९००

इष्टभार्य्यस्य ते नूनं प्रतिवेश्यो महाधनः । युवा सुललितः कामी तेनासि हरिणः कृशः ।

नूनमर्थवतां मध्ये तव वाक्यमनुत्तमं । न भाति कालेऽभिहितं तेनासि हरिणः कृशः ।

दृढपूर्व्वश्रुतं मूर्खं कुपितं हृदयप्रियं । अनुनेतुं न शक्नोषि तेनासि हरिणः कृशः ।

नूनमासञ्जयित्वा त्वां कृते कस्मिंश्चिदीप्सिते । कश्चिदर्थयते नित्यं तेनासि हरिणः कृशः ।

नूनं त्वां स्वगुणैर्युक्तं पूजयानं सुहृत् ध्रुवं । ममाय इति जानीते तेनासि हरिणः कृशः । ५९०५

अन्तर्गतमभिप्रायं नूनं नेच्छसि लज्जया। विविक्तं प्रार्थितुं विद्वान् तेनासि हरिणः कृशः।

नानाबुद्धिरुचीं लोकेमनुष्यानुनमिच्छसि। ग्रहीतुं स्वगुणैः सर्व्वांस्तेनासि हरिणः कृशः।

अविद्वान् भीरुरल्पार्थो विद्याविक्रमदानजं। यशः प्रार्थयसे नूनं तेनासि हरिणः कृशः।

चिराभिलषितं किञ्चित् फलमप्राप्तमेव ते। कृतमन्यैरपहृतं तेनासि हरिणः कृशः।

नूनमात्मकृतं दोषमपश्यन् किञ्चिदात्मनः। अकारणेऽभिशस्तोऽसि तेनासि हरिणः कृशः। ५८१०

सुहृदां दुःखमार्त्तानां न प्रमोक्ष्यसि चार्त्तिकं। व्यसनर्द्धिगुणैर्हीनं तेनासि हरिणः कृशः।

साधून् गृहस्थान् दृष्ट्वा च तथाऽसाधून् वनेचरान्। मुक्तांश्चावसथे सक्तांस्तेनासि हरिणः कृशः।

धर्म्मार्थकामसहितं काले चाभिहितं वचः। न प्रतीयन्ति ते नूनं तेनासि हरिणः कृशः।

दत्तानकुशलैरर्थान् मनीषी सञ्जिजीविषुः। प्राप्य वर्त्तयसे नूनं तेनासि हरिणः कृशः।

पापान् प्रवर्द्धतो दृष्ट्वा कल्याणानवसीदतः। ध्रुवं गर्हयसे नित्यं तेनासि हरिणः कृशः। ५८१५

परस्परविरुद्धानां प्रियं नूनं चिकीर्षसि। सुहृदामुपरोधेन तेनासि हरिणः कृशः।

श्रोत्रियांश्च विकर्म्मस्थान् प्राज्ञांश्चाप्यजितेन्द्रियान्। मन्येऽनुध्यायसि जनांस्तेनासि हरिणः कृशः।

एवं सम्पूजितं रक्षो विप्रं तं प्रत्यपूजयत्। सखायमकरोच्चैनं संयोज्यार्थैर्मुमोच ह।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि हरिणकृशकाख्याने चतुर्व्विंशत्यधिकशततमोऽध्यायः ॥१२४॥

॥ युधिष्ठिर उवाच ॥ जन्म मानुष्यमासाद्य कर्म्मक्षेत्रं सुदुर्लभं। श्रेयोऽर्थिना दरिद्रेण यत् कर्त्तव्यं पितामह।

दानानामुत्तमं यच्च देयं यच्च यथा यदा। मान्यान् पूज्यांश्च गाङ्गेय रहस्यं तन्मम ब्रूहि। ५८२०

॥ वैशम्पायन उवाच ॥ एवं पृष्टो नरेन्द्रेण पाण्डवेन यशस्विना। धर्म्माणां परमं गुह्यं भीष्मः प्रोवाच पार्थिवं।

॥ भीष्म उवाच ॥ शृणुष्वावहितो राजन् धर्म्मगुह्यानि भारत। यथा मे भगवान् व्यासः पुरा कथितवांस्तथा।

देवगुह्यमिदं राजन् यमेनाक्लिष्टकर्म्मणा। नियमस्थेन युक्तेन तपसो महतः फलं।

येन यः प्रीयते देवः प्रीयन्ते पितरस्तथा। ऋषयः प्रमथाः श्रीश्च चित्रगुप्तो दिशां गजाः।

ऋषिधर्म्मः स्मृतो यत्र सरहस्यो महाफलः। महादानफलञ्चैव सर्व्वयज्ञफलं तथा। ५८२५

यश्चैतदेवं जानीयात् ज्ञात्वा वा कुरुतेऽनघ। सदोषो दोषवांश्चेह तैर्गुणैः सह युज्यते।

दशसूनासमं चक्रं दशचक्रसमो ध्वजः। दशध्वजसमा वेश्या दशवेश्यासमो नृपः।

अर्द्धमेतानि सर्व्वाणि नृपतिः कथ्यतेऽधिकः। त्रिवर्गसहितं शास्त्रं पवित्रं पुण्यलक्षणं।

धर्म्मव्याकरणं पुण्यं रहस्यश्रवणं महत्। श्रोतव्यं धर्म्मसंयुक्तं विहितं त्रिदशैः स्वयं।

पितॄणां यत्र गुह्यानि प्रोच्यन्ते श्राद्धकर्म्मणि। देवतानाञ्च सर्व्वेषां रहस्यं कथ्यतेऽखिलं। ५८३०

ऋषिधर्म्मः स्मृतो यत्र सरहस्यो महाफलः। महायज्ञफलञ्चैव सर्व्वदानफलं तथा।

ये पठन्ति सदा मर्त्त्या येषाञ्चैवोपतिष्ठति। श्रुत्वा च स्वयमाचष्टे स्वयं नारायणः प्रभुः।

गवां फलं तीर्थफलं यज्ञानाञ्चैव यत् फलं। एतत् फलमवाप्नोति यो नरोऽतिथिपूजकः

श्रोतारः श्रद्दधानाश्च येषां शुद्धञ्च मानसं। तेषां व्यक्तं जिता लोकाः श्रद्दधानेन साधुना।

मुच्यते किल्बिषाच्चैव न च पापेन लिप्यते । धर्मञ्च लभते नित्यं प्रेत्य लोकगतो नरः । ४८४५

कस्यचित्त्वथ कालस्य देवदूतो यदृच्छया । स्थितो ह्यन्तर्हितो भूत्वा पर्य्यभाषत वासवं ।

यौ तौ कामगुणोपेतावश्विनौ भिषजां वरौ । आज्ञयाऽहं तयोः प्राप्तः स नरान् पितृदैवतान् ।

कस्माद्धि मैथुनं श्राद्धे दातुर्भोक्तुश्च वर्ज्जितं । किमर्थञ्च त्रयः पिण्डाः विभक्ताश्च पृथक् पृथक् ।

प्रथमः कस्य दातव्यो मध्यमः क्व च गच्छति । उत्तरश्च स्मृतः कस्य एतदिच्छामि वेदितुं ।

श्रद्दधानेन दूतेन भाषितं धर्म्मसंहितं । पूर्व्वस्थास्त्रिदशाः सर्व्वे पितरः पूज्य खेचरं । ४८५०

॥ पितर ऊचुः ॥ स्वागतन्तेऽस्तु भद्रन्ते श्रूयतां खेचरोत्तम । गूढार्थः परमः प्रश्नो भवता समुदीरितः ।

श्राद्धं दत्त्वा च भुक्त्वा च पुरुषो यः स्त्रियं व्रजेत् । पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते ।

प्रविभागस्तु पिण्डानां प्रवक्ष्याम्यनुपूर्व्वशः । पिण्डो ह्यधस्ताद्गच्छंस्तु अप आविश्य भावयेत् ।

पिण्डन्तु मध्यमं तत्र पत्नी त्वेका समश्नुते । पिण्डस्तृतीयो यस्तेषां तं दद्याज्जातवेदसि ।

एष श्राद्धविधिः प्रोक्तो यथा धर्म्मो न लुप्यते । पितरस्तस्य तुष्यन्ति प्रहृष्टमनसः सदा । ४८५५

प्रजा विवर्द्धते चास्य अक्षयञ्चोपतिष्ठति ।

॥ देवदूत उवाच ॥ आनुपूर्व्व्येण पिण्डानां प्रविभागः पृथक् पृथक् । पितॄणां त्रिषु सर्व्वेषां निरुक्तं कथितं त्वया ।

एकः समुद्धृतः पिण्डो ह्यधस्तात् कस्य गच्छति । कं वा प्रीणयते देवं कथं तारयते पितॄन् ।

मध्यमन्तु तदा पत्नी भुङ्क्तेऽनुज्ञातमेव हि । किमर्थं पितरस्तस्य कव्यमेव हि भुञ्जते ।

अथ यस्त्वन्तिमः पिण्डो गच्छते जातवेदसं । भवते का गतिस्तस्य कं वा समनुगच्छति । ४८६०

एतदिच्छाम्यहं श्रोतुं पिण्डेषु त्रिषु या गतिः । फलं वृत्तिञ्च मार्गञ्च यश्चैनं प्रतिपद्यते ।

॥ पितर ऊचुः ॥ सुमहानेष प्रश्नो वै यस्त्वया समुदीरितः । रहस्यमद्भुतञ्चापि पृष्टाः स्म गगनेचर ।

एतदेव प्रशंसन्ति देवाश्च मुनयस्तथा । तेऽप्येवं नाभिजानन्ति पितृकार्य्यविनिश्चयं ।

वर्ज्जयित्वा महात्मानं चिरजीविनमुत्तमं । पितृभक्तस्तु यो विप्रो वरलब्धो महायशाः ।

त्रयाणामपि पिण्डानां श्रुत्वा भगवतो गतिं । देवदूतेन यत् पृष्टः श्राद्धस्य विधिनिश्चयः । ४८६५

गतिं त्रयाणां पिण्डानां शृणुष्वावहितो मम । अपो गच्छति यो ह्यत्र शशिनं ह्येव प्रीणयेत् ।

शशी प्रीणयते देवान् पितॄंश्चैव महामते । भुङ्क्ते तु पत्नी यच्चैषामनुज्ञाता तु मध्यमं ।

पुत्त्रकामाय पुत्त्रन्तु प्रयच्छन्ति पितामहाः । हव्यवाहे तु यः पिण्डो दीयते तन्निबोध मे ।

पितरस्तेन तृप्यन्ति प्रीताः कामान् दिशन्ति च । एतत्ते कथितं सर्व्वं त्रिषु पिण्डेषु या गतिः ।

ऋत्विग्भ्यो यजमानस्य पितृत्वमनुगच्छति । तस्मिन्नहनि मन्यन्ते परिहार्य्यं हि मैथुनं । ४८७०

शुचिना तु सदा श्राद्धं भोक्तव्यं खेचरोत्तम । ये मया कथिता दोषास्ते तथा स्युर्न चान्यथा ।

तस्मात् स्नातः शुचिः क्षान्तः श्राद्धं भुञ्जीत वै द्विजः । प्रजा विवर्द्धते चास्य यश्चैनं सम्प्रयच्छति ।

ततो विद्युत्प्रभो नाम ऋषिराह महातपाः । आदित्यतेजसा तस्य तुल्यं रूपं प्रकाशते ।

स च धर्म्मरहस्यानि श्रुत्वा शक्रमथाब्रवीत् । तिर्य्यग्योनिगतान् सर्व्वान् मर्त्या हिंसन्ति मोहिताः ।

कीटान् पिपीलिकान् सर्पान् मेषान् समृगपक्षिणः । किल्बिषं सुबहु प्राप्ताः किंस्विदेषां प्रतिक्रिया ।   ५८६५

ततो देवगणाः सर्वे ऋषयश्च तपोधनाः । पितरश्च महाभागाः पूजयन्ति स्म तं मुनिं ।

॥ शक्र उवाच ॥ कुरुक्षेत्रं गयां गङ्गां प्रभासं पुष्कराणि च । एतानि मनसा ध्यात्वा अवगाहेत्ततो जलं ।

तथा मुच्येत पापेन राहुणा चन्द्रमा यथा । त्र्यहं स्नातः स भवति निराहारश्च वर्त्तते ।

स्पृशते यो गवां पृष्ठं वालधिञ्च नमस्यति । ततो विमुच्यते वाक्यमभ्यभाषत वासवं ।

अयं सूक्ष्मतरो धर्मस्तन्निबोध शतक्रतो । घृष्टा वटकषायेण अनुलिप्तः प्रियङ्गुना ।   ५८७०

क्षीरेण षष्टिकान् भुक्त्वा सर्वपापैः प्रमुच्यते । श्रूयताञ्चापरं गुह्यं रहस्यमृषिचिन्तितं ।

श्रुतं मे भाषमाणस्य स्थाणोः स्थाने बृहस्पतेः । रुद्रेण सह देवेश तन्निबोध शचीपते ।

पर्वतारोहणं कृत्वा एकपादो विभावसुं । निरीक्षेत निराहार ऊर्द्ध्वबाहुः कृताञ्जलिः ।

तपसा महता युक्त उपवासफलं लभेत् । रश्मिभिस्तापितो ह्यर्क्कः सर्वपापमपोहति ।

ग्रीष्मकाले तथा शीते एवं पापमपोहति । ततः पापात् प्रमुक्तस्य द्युतिर्भवति शाश्वती ।   ५८७५

तेजसा सूर्य्यवद्दीप्तो भ्राजते सोमवत् पुनः । मध्ये त्रिदशवर्गस्य देवराजः शतक्रतुः ।

उवाच मधुरं वाक्यं बृहस्पतिमनुत्तमं । धर्मगुह्यन्तु भगवन् मनुष्याणां सुखावहं ।

सरहस्यांश्च यान् दोषांस्तान् यथावदुदीरय ।

॥ बृहस्पतिरुवाच ॥ प्रतिमेहन्ति ये सूर्य्यमनिलं द्विषते च ये । हव्यवाहं प्रदीप्तञ्च समिधं ये न जुह्वति ।

बालवत्सासु ये धेनुं दुहन्ति क्षीरकारणात् । तेषां दोषान् प्रवक्ष्यामि तन्निबोध शचीपते ।   ५८८०

भानुमाननिलश्चैव हव्यवाहश्च वासव । लोकानां मातरश्चैव गावः सृष्टाः स्वयम्भुवा ।

लोकांस्तारयितुं शक्र मर्त्त्येष्वेतेषु देवताः । सर्वे भवन्तः शृण्वन्तु एकैकं धर्म्मनिश्चयं ।

वर्षाणि षडशीतिन्तु दुर्वृत्ताः कुलपांसनाः । स्त्रियः सर्वाश्च दुर्वृत्ताः प्रतिमेहन्ति या रविं ।

अनिलद्वेषिणः शक्र च्यवन्ते गर्भतः प्रजाः । हव्यवाहस्य दीप्तस्य समिधं ये न जुह्वति ।

अग्निकार्य्येषु वै तेषां हव्यं नाश्नाति पावकः । क्षीरन्तु बालवत्सानां ये पिबन्तीह मानवाः ।   ५८८५

न तेषां क्षीरपाः केचिज्जायन्ते कुलवर्द्धनाः । प्रजाक्षयेण युज्यन्ते कुलवंशक्षयेण च ।

एवमेतत् पुरा दृष्टं कुलवृद्धैर्द्विजातिभिः । तस्माद्वर्ज्ज्यानि वर्ज्ज्यानि कार्य्यं कार्य्यञ्च नित्यशः ।

भूतिकामेन मर्त्त्येन सत्यमेतद्ब्रवीमि ते । ततः सर्वे महाभागा देवताः समरुद्गणाः ।

ऋषयश्च महाभागाः पृच्छन्ति स्म पितॄंस्ततः । पितरः केन तुष्यन्ति मर्त्त्यानामल्पचेतसां ।

अक्षयञ्च कथं दानं भवत्येवौर्द्ध्वदैहिकं । आनृण्यं वा कथं मर्त्त्या गच्छेयुः केन कर्म्मणा ।   ५८९०

एतदिच्छामहे श्रोतुं परं कौतूहलं हि नः ।

॥ पितर ऊचुः ॥ न्यायतो वै महाभागाः संशयः समुदाहृतः । श्रूयतां येन तुष्यामो मर्त्त्यानां साधुकर्म्मणां ।

नीलषण्डप्रमोक्षेण अमावास्यां तिलोदकैः । वर्षासु दीपकैश्चैव पितॄणामनृणो भवेत् ।

अक्षयं निर्व्यलीकञ्च दानमेतन्महाफलं । अस्माकं परितोषश्च अक्षयः परिकीर्त्त्यते ।

अश्रद्दधानाश्च ये मर्त्त्या आहरिष्यन्ति सन्ततिं । दुर्गाणि तारयिष्यन्ति नरकात् प्रपितामहान् । ५९९५

पितॄणां भाषितं श्रुत्वा हृष्टरोमा तपोधनः । वृद्धगार्ग्यो महातेजास्तानेवं वाक्यमब्रवीत् ।

के गुणा नीलषण्डस्य प्रमुक्तस्य तपोधनाः । वर्षासु दीपदानेन तथैव च तिलोदकैः ।

॥ पितर ऊचुः ॥ नीलषण्डस्य लाङ्गूलं तोयमभ्युद्धरेद् यदि । षष्टिं वर्षसहस्राणि पितरस्तेन तर्पिताः ।

यस्तु शृङ्गगतं पङ्कं कूलादुद्धृत्य तिष्ठति । पितरस्तेन गच्छन्ति सोमलोकमसंशयं ।

वर्षासु दीपदानेन शशिवच्छोभते नरः । तमोरूपं न तस्यास्ति दीपकं यः प्रयच्छति । ६०००

अमावास्यान्तु ये मर्त्त्याः प्रयच्छन्ति तिलोदकं । पात्रमौदुम्बरं गृह्य मधुमिश्रं तपोधन ।

कृतं भवति तैः श्राद्धं सरहस्यं यथार्थवत् । हृष्टपुष्टमनास्तेषां प्रजा भवति नित्यदा ।

कुलवंशस्य वृद्धिस्तु पिण्डदस्य फलं भवेत् । श्रद्दधानस्तु यः कुर्य्यात् पितॄणामनृणो भवेत् ।

एवमेष समुद्दिष्टः श्राद्धकालक्रमस्तथा । विधिः पात्रं फलञ्चैव यथावदनुकीर्त्तितं ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि श्राद्धधर्मकथने पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

॥ भीष्म उवाच ॥ केन ते भवति प्रीतिः कथं तुष्टिञ्च गच्छसि । इति पृष्टः सुरेन्द्रेण प्रोवाच हरिरीश्वरः । ६००५

॥ विष्णुरुवाच ॥ ब्राह्मणानां परीवादो मम विद्वेषणं महत् । ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ।

नित्याभिवाद्या विप्रेन्द्रा भुक्त्वा पादौ तथात्मनः । तेषां तुष्यामि मर्त्त्यानां यश्चक्रे बलिं हरेत् ।

वामनं ब्राह्मणं दृष्ट्वा वाराहञ्च जलोत्थितं । उद्धृतां धरणीं चैव मूर्द्ध्ना धारयते तु यः ।

न तेषामशुभं किञ्चित् कल्मषं नोपपद्यते । अश्वत्थं रोचनां गाञ्च पूजयेद्यो नरः सदा ।

पूजितञ्च जगत्तेन सदेवासुरमानुषं । तेन रूपेण तेषाञ्च पूजां गृह्णामि तत्त्वतः । ६०१०

पूजा ममैषा नान्यस्य यावल्लोकाः प्रतिष्ठिताः । अन्यथा हि वृथा मर्त्त्याः पूजयन्त्यल्पबुद्धयः ।

नाहं तत् प्रतिगृह्णामि न सा तुष्टिकरी मम ।

॥ इन्द्र उवाच ॥ चक्रं पादौ वराहञ्च ब्राह्मणञ्चापि वामनं । उद्धृतां धरणीं चैव किमर्थं त्वं प्रशंससि ।

भवान् सृजति भूतानि भवान् संहरति प्रजाः । प्रकृतिः सर्व्वभूतानां मर्त्त्यानाञ्च सनातनी ।

॥ भीष्म उवाच ॥ सम्प्रहस्य ततो विष्णुरिदं वचनमब्रवीत् । चक्रेण निहता दैत्याः पद्भ्यां क्रान्ता वसुन्धरा । ६०१५

वाराहं रूपमास्थाय हिरण्याक्षो निपातितः । वामनं रूपमास्थाय जितो राजा मया बलिः ।

परितुष्टो भवाम्येवं मानुषाणां महात्मनां । तस्मिन् ये पूजयिष्यन्ति नास्ति तेषां पराभवः ।

अपि वा ब्राह्मणं दृष्ट्वा ब्रह्मचारिणमागतं । ब्राह्मणायाग्रहुतिं दत्त्वा अमृतं तस्य भोजनं ।

ऐन्द्रीं सन्ध्यामुपासित्वा आदित्याभिमुखः स्थितः । सर्व्वतीर्थेषु स स्नातो मुच्यते सर्व्वकिल्बिषैः ।

एतद्वः कथितं गुह्यं अखिलेन तपोधनाः । संशयं पृच्छमानानां किं भूयः कथयाम्यहं । ६०२०

॥ बलदेव उवाच ॥ श्रूयतां परमं गुह्यं मानुषाणां सुखावहं । अजानन्तो यदबुधाः क्लिश्यन्ते भूतपीडिताः ।

कल्यमुत्थाय यो मर्त्त्यः स्पृशेद्गां वै घृतं दधि । सर्षपञ्च प्रियङ्गुञ्च कल्मषात् प्रतिमुच्यते ।

भूतानि चैव सर्व्वाणि अग्रतः पृष्ठतोऽपि वा । उच्छिष्टञ्चापि छिद्रेषु वर्जयन्ति तपोधनाः ।

॥ देवा ऊचुः ॥ श्रद्दधानोऽनुत्तरं प्राह लोकपूर्व्वमनुत्तमः। उपवासन्तु यः कुर्यात् यदा वाह्न्यर्थयेत् व्रतं।
देवतास्तस्य तुष्यन्ति कामिनश्चापि विभ्यति। अन्यथा हि वृथा मर्त्याः कुर्व्वते अल्पबुद्धयः। ६०१५
उपवासे यथा चापि तावच्चार्थं विधिरुच्यते। बलिं भिक्षां तथाऽर्घ्यञ्च पितॄणाञ्च तिलोदकं।
तावत्पाथेय दानञ्चान्यथाऽफलं भवेत्। गुह्यमेतत् समुद्दिष्टं यथा तुष्यन्ति देवताः।
॥ धर्म्म उवाच॥ राजपौरुषिके विप्रे घाण्टिके परिचारिके। गोरक्षके वाणिजिके तथा कारुकुशीलवे।
मित्रद्रुह्यनधीयाने यश्च स्याद्वृषलीपतिः। एतेषु दैवं पैत्र्यं वा न देयं स्यात् कथञ्चन।
पिण्डदास्तस्य हीयन्ते न च प्रीणाति वै पितॄन्। अतिथिर्य्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते। ६०२०
पितरस्तस्य देवाश्च अग्नयश्च तथैव हि। निराशाः प्रतिगच्छन्ति अतिथेरप्रतिग्रहात्।
स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः। तुल्यदोषो भवत्येभिर्यस्यातिथिरनर्च्चितः।
॥ अग्निरुवाच॥ पादमुद्यम्य यो मर्त्यः स्पृशेद्गाश्च सुदुर्म्मतिः। ब्राह्मणं वा महाभागं दीप्यमानं तथाऽनलं।
तस्य दोषान् प्रवक्ष्यामि तच्छृणुध्वं समाहिताः। दिवं स्पृशत्यशब्दोऽस्य त्रस्यन्ति पितरश्च वै।
वैमनस्यञ्च देवानां कृतं भवति पुष्कलं। पावकश्च महातेजा हव्यं न प्रतिगृह्णाति। ६०२५
आजन्मनां शतञ्चैव नरके पच्यते तु सः। निष्कृतिश्च न तस्यास्ति अनुमन्यन्ति कर्हिचित्।
तस्माद्गावो न पादेन स्प्रष्टव्या वै कदाचन। ब्राह्मणश्च तथा तेजा दीप्यमानस्तथाऽनलः।
श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता। एते दोषा मया प्रोक्तास्त्रिषु यः पादमुत्सृजेत्।
॥ विश्वामित्र उवाच ॥ श्रूयतां परमं गुह्यं रहस्यं धर्म्मसंहितं। परमान्नेन यो दद्यात्पितॄणामौपहारिकं।
गजच्छायायां पूर्व्वस्यां कुतपे दक्षिणामुखः। यदा भाद्रपदे मासि भवते बहुले मघा। ६०३०
श्रूयतां तस्य दानस्य यादृशो गुणविस्तरः। कृतं तेन महत् श्राद्धं वर्षाणीह त्रयोदश।
॥ गाव ऊचुः ॥ बहुले समङ्गे ह्यकुतोभये च क्षेमे च सख्येव हि भूयसी च। यथा पुरा ब्रह्मपुरे सवत्सा शतक्रतोर्व्वज्र धरस्य यज्ञे।
भूयश्च या विष्णुपदे स्थिता या विभावसोश्चापि पथे स्थिता याः। देवाश्च सर्व्वे सह नारदेन प्रकुर्व्वते सर्व्वसहेति नाम।
मन्त्रेणैतेनाभिवन्देत यो वै विमुच्यते पापकृतेन कर्म्मणा। लोकानवाप्नोति पुरन्दरस्य गवां फलं चन्द्रमसो द्युतिञ्च।
एतं हि मन्त्रं त्रिदशाभिजुष्टं पठेत यः पर्व्वसु गोष्ठमध्ये। न तस्य पापं न भयं न शोकः सहस्रनेत्रस्य च याति लोकं। ६०३५
॥ भीष्म उवाच ॥ अथ सप्त महाभागा ऋषयो लोकविश्रुताः। वशिष्ठप्रमुखाः सर्व्वे ब्रह्माणं पद्मसम्भवं।
प्रदक्षिणमभिक्रम्य सर्व्वे प्राञ्जलयः स्थिताः। उवाच वचनं तेषां वशिष्ठो ब्रह्मवित्तमः।
सर्व्वप्राणिहितं प्रश्नं ब्रह्मक्षत्त्रे विशेषतः। द्रव्यहीनाः कथं मर्त्या दरिद्राः साधुवृत्तयः।
प्राप्नुवन्तीह यज्ञस्य फलं केन च कर्म्मणा। एतच्छ्रुत्वा वचस्तेषां ब्रह्मा वचनमब्रवीत्।
॥ ब्रह्मोवाच॥ अहो प्रश्नो महाभागा गूढार्थः परमः शुभः। सूक्ष्मः श्रेयांश्च मर्त्यानां भवद्भिः समुदाहृतः। ६०४०
श्रूयतां सर्व्वमाख्यास्ये निखिलेन तपोधनाः। यथा यज्ञफलं मर्त्यो लभते नात्र संशयः।
पौषमासस्य शुक्ले वै यदा युज्येत रोहिणी। तेन नक्षत्रयोगेन आकाशशयनो भवेत्।

एकवस्त्रः शुचिः स्नातः श्रद्दधानः समाहितः । सोमस्य रक्षणः पीत्वा महायज्ञफलं लभेत् ।
एतद्वः परमं गुह्यं कथितं द्विजसत्तमाः । यन्मां भवन्तः पृच्छन्ति सूक्ष्मतत्त्वार्थदर्शिनः ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने षड्विंशत्यधिकशततोऽध्यायः ॥ १२६ ॥
॥ विभावसुरुवाच ॥ सलिलस्याञ्जलिं पूर्णमक्षतांश्च घृतोत्तराः । सोमस्योत्तिष्ठमानस्य तज्जलञ्चाक्षतांश्च ताम् । ६११
स्थितो ह्यभिमुखो मर्त्यः पौर्णमास्यां बलिं हरेत् । अग्निकार्य्यं कृतं तेन हुताश्चाप्यग्नयस्त्रयः ।
वनस्पतिन्तु यो हन्यात् अमावास्याममबुद्धिमान् । अपि ह्येकेन पत्रेण लिप्यते ब्रह्महत्यया ।
दन्तकाष्ठन्तु यः खादेदमावास्याममबुद्धिमान् । हिंसितश्चन्द्रमास्तेन पितरश्चोद्विजन्ति च ।
हव्यं न तस्य देवाश्च प्रतिगृह्णन्ति पर्व्वसु । कुप्यन्ति पितरस्तस्य कुलवंशोऽस्य हीयते ।
॥ श्रीरुवाच ॥ प्रकीर्णभाजनं यत्र पानभाण्डमथासनं । योषितश्चैव हन्यन्ते कश्मलोपहते गृहे । ६१०
देवताः पितरश्चैव उत्सवे पर्व्वणीषु वा । निराशास्तस्य गच्छन्ति कश्मलोपहतादृहात् ।
॥ अङ्गिरा उवाच ॥ यस्तु संवत्सरं पूर्णं दद्याद्दीपं करञ्जके । सुवर्च्चलामूलहस्तः प्रजास्तस्य विवर्द्धते ।
॥ गार्ग्य उवाच ॥ आतिथ्यं सततं कुर्य्याद्दीपं दद्यात् प्रतिश्रये । वर्ज्जयानो दिवा स्वापं न च मांसानि भक्षयेत् ।
गोब्राह्मणं न हिंस्याच्च पुष्कराणि च कीर्त्तयेत् । एष श्रेष्ठतरो धर्म्मः सरहस्यो महाफलः ।
अपि क्रतुशतैरिष्ट्वा क्षयं गच्छति तद्धविः । न तु क्षीयन्ति ते धर्म्माः श्रद्दधानैः प्रयोजिताः । ६१५
इदञ्च परमं गुह्यं सरहस्यं निबोधत । श्राद्धकल्पे च दैवे च तैर्थिके पर्व्वणीषु च ।
रजस्वला च या नारी श्वित्रिका पुत्रिका च या । एताभिश्चक्षुषा दृष्टं हविर्नाश्नन्ति देवताः ।
पितरश्च न तुष्यन्ति वर्षाण्यस्य त्रयोदश । शुक्लवासाः शुचिर्भूत्वा ब्राह्मणान् स्वस्ति वाचयेत् ।
कीर्त्तयेद्भारतञ्चैव तथा स्यादक्षयं हविः ।
॥ धौम्य उवाच ॥ भिन्नभाण्डञ्च खट्वाञ्च कुक्कुटं शुनकं तथा । अप्रशस्तानि सर्वाणि यश्च वृक्षो गृहे रुहः । ६२०
भिन्नभाण्डे कलिं प्राहुः खट्वायाञ्च धनक्षयः । कुक्कुटे शुनि वा चैव हविर्नाश्नन्ति देवताः ।
वृक्षमूले ध्रुवं सत्त्वं तस्माद्वृक्षं न रोपयेत् ।
॥ जमदग्निरुवाच ॥ यो यजेदश्वमेधेन वाजपेयशतेन च । अवाक्शिरा वा लम्बेत सत्रं वा स्फीतमाहरेत् ।
न चास्य हृदयं शुद्धं नरकं स ध्रुवं व्रजेत् । तुल्यं यज्ञश्च सत्यञ्च हृदयस्य च शुद्धता ।
शुद्धेन मनसा दत्त्वा सक्तुप्रस्थं द्विजातये । ब्रह्मलोकमनुप्राप्तः पर्य्याप्तं तन्निदर्शनं । ६२५
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दैवरहस्ये सप्तविंशत्यधिकशततोऽध्यायः ॥ १२७ ॥
॥ वायुरुवाच ॥ किञ्चिद्धर्म्मं प्रवक्ष्यामि मनुष्याणां सुखावहं । सरहस्याश्च ये दोषास्तान् शृणुध्वं समाहिताः ।
चतुरो वार्षिकान् मासान् यो ददाति तिलोदकं । भोजनञ्च यथाशक्त्या ब्राह्मणे वेदपारगे ।
अग्निकार्य्यञ्च कर्त्तव्यं परमान्नेन भोजनं । दीपकश्चापि कर्त्तव्यः पितॄणां सतिलोदकः ।
एतेन विधिना मर्त्यः श्रद्दधानः समाहितः । पशुबन्धशतस्येह फलं प्राप्नोति पुष्कलं ।
इदञ्चैवं परं गुह्यमप्रशस्तं निबोधत । अग्नेस्तु वृषलो नेता हविर्मूढाश्च योषितः । ६३०

मन्यते धर्म्म एवेति स चाधर्म्मेण लिप्यते। अग्निवत्ताश्च कुप्यन्ति शूद्रयोनिं स गच्छति।
पितरश्च न तुष्यन्ति सह देवैर्व्विशेषतः। प्रायश्चित्तन्तु यत्तत्र ब्रुवतस्तन्निबोध मे।
यत् कृत्वा तु नरः सम्यक् सुखी भवति विज्वरः। गवां मूत्रपुरीषेण पयसा च घृतेन च।
अग्निकार्य्यं त्र्यहं कुर्य्यान्निराहारः समाहितः। ततः संवत्सरे पूर्णे प्रतिगृह्णन्ति देवताः।
हृष्यन्ति पितरश्चास्य श्राद्धकाल उपस्थिते। एष ह्यधर्म्मो धर्म्मश्च सरहस्यः प्रकीर्त्तितः। ६०८५
मर्त्यानां स्वर्गकामानां प्रेत्य स्वर्गसुखावहः।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने अष्टाविंशत्यधिकशततमोऽध्यायः॥ १२८॥

॥ लोमश उवाच ॥ परदारेषु ये सक्ता अकृत्वा दारसंग्रहं। निराशाः पितरस्तेषां श्राद्धकाले भवन्ति ते।
परदाररतिर्यश्च यश्च वन्ध्यामुपासते। ब्रह्मस्वं हरते यश्च समदोषा भवन्ति ते।
असम्भाष्या भवन्त्येते पितॄणां नात्र संशयः। देवताः पितरश्चैषां नाभिनन्दन्ति तद्धविः।
तस्मात् परस्य वै दारान् त्यजेद्वन्ध्याञ्च योषितं। ब्रह्मस्वं हि न हर्त्तव्यमात्मनो हितमिच्छता। ६०९०
श्रूयताञ्चापरं गुह्यं रहस्यं धर्म्मसंहितं। श्रद्दधानेन कर्त्तव्यं गुरूणां वचनं सदा।
द्वादश्यां पौर्णमास्याञ्च मासि मासि घृताक्षतं। ब्राह्मणेभ्यः प्रयच्छेत तस्य पुण्यं निबोधत।
सोमश्च वर्द्धते तेन समुद्रश्च महोदधिः। अश्वमेधचतुर्भागं फलं सृजति वासवः।
दानेनैतेन तेजस्वी वीर्य्यवांश्च भवेन्नरः। प्रीतश्च भगवान् सोम इष्टान् कामान् प्रयच्छति।
श्रूयताञ्चापरो धर्म्मः सरहस्यो महाफलः। इमं कलियुगं प्राप्य मानुषाणां सुखावहः। ६०९५
कल्यमुत्थाय यो मर्त्यः स्नातः शुक्लेन वाससा। तिलपात्रं प्रयच्छेत ब्राह्मणेभ्यः समाहितः।
तिलोदकञ्च यो दद्यात् पितॄणां मधुना सह। दीपकं कृशरं चैव श्रूयतां तस्य यत् फलं।
तिलपात्रे फलं प्राह भगवान् पाकशासनः। गोप्रदानञ्च यः कुर्य्याद्भूमिदानञ्च शाश्वतं।
अग्निष्टोमञ्च यो यज्ञं यजेत बहुदक्षिणं। तिलपात्रं सहैतेन समं मन्यन्ति देवताः।
तिलोदकं सदा श्राद्धे मन्यन्ते पितरोऽक्षयं। दीपे च कृशरे चैव प्रीयन्तेऽस्य पितामहाः। ६१००
स्वर्गे च पितृलोके च पितृदेवाभिपूजितं। एवमेतन्मयोद्दिष्टमृषिदृष्टं पुरातनं।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि लोमशरहस्ये ऊनत्रिंशदधिकशततमोऽध्यायः॥ १२९॥

॥ भीष्म उवाच ॥ ततस्त्वृषिगणाः सर्व्वे पितरश्च सदेवताः। अरुन्धतीं तपोवृद्धामपृच्छन्त समाहिताः।
॥ अरुन्धत्युवाच ॥ तपोवृद्धिर्मया प्राप्ता भवतां स्मरणेन वै। भवताञ्च प्रसादेन धर्म्मान् वक्ष्यामि शाश्वतान्।
सगुह्यान् सरहस्यांश्च तान् शृणुध्वमशेषतः। श्रद्दधाने प्रयोक्तव्या यस्य शुद्धं तथा मनः।
अश्रद्दधानो मानी च ब्रह्महा गुरुतल्पगः। असम्भाष्या हि चत्वारो नैषां धर्म्मं प्रकाशयेत्। ६१०५
अहन्यहनि यो दद्यात् कपिलां द्वादशीः समाः। मासि मासि च सत्रेण यो यजेत सदा नरः।
गवां शतसहस्रञ्च यो दद्याज्ज्येष्ठपुष्करे। न तद्धर्म्मफलं तुल्यमतिथिर्यस्य तुष्यति।
श्रूयताञ्चापरो धर्म्मो मनुष्याणां सुखावहः। श्रद्दधानेन कर्त्तव्यः सरहस्यो महाफलः।

गजेन्द्रकुसुमाकीर्णं नीलवस्त्रानुलेपनं । निर्वपेत्तत्तु वल्मीके वर्षे याते दिवाकरे ।
एवं तुष्टास्ततः सर्व्वे मधस्ताद्भारपीडिताः । सर्वं तं नागकुमारी धारयन्तो वसुन्धरां ।
एवं मन्यामहे सर्व्वे भारार्त्ता निरपेक्षिणः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा यथुशोषिताः ।
एवं संवत्सरं कृत्वा दानं बहुफलं भवेत् । वल्मीके बलिमादाय नयो बहुफलं भवेत् । ६१७०
ये च नागा महावीर्य्यास्त्रिषु लोकेषु विश्रुताः । कृतातिथ्या भवेयुस्ते शते वर्षाणि तत्त्वतः ।
दिग्गजानाञ्च तच्छ्रुत्वा देवताः पितरस्तथा । ऋषयश्च महाभागाः पूजयन्ति स्म रेणुकं ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दिग्गजरहस्ये द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
॥ महेश्वर उवाच ॥ सारमुद्धृत्य युष्माभिः साधुधर्म्म उदाहृतः । धर्म्मगुह्यमिदं मत्तः शृणुध्वं सर्व्व एव च
येषां धर्म्माश्रिता बुद्धिः श्रद्दधानाश्च ये नराः । तेषां स्यादुपदेष्टव्यः सरहस्यो महाफलः ।
निरुद्वेगस्तु यो दद्यान्मासमेकं गवाह्निकं । एकभक्तं तथाऽश्नीयात् श्रूयतां तस्य यत् फलं । ६१७५
इमा गावो महाभागाः पवित्रं परमं स्मृताः । त्रीन् लोकान् धारयन्ति स्म सदेवासुरमानुषान् ।
तासु चैव महापुण्यं शुश्रूषा च महाफलं । अहन्यहनि धर्म्मेण युज्यते वै गवाह्निके ।
मया ह्येता ह्यनुज्ञाताः पूर्व्वमासन् कृते युगे । ततोऽहमनुनीतो वै ब्रह्मणा पद्मयोनिना ।
तस्माद्व्रजस्थानगतस्तिष्ठत्युपरि मे वृषः । रमेऽहं सह गोभिश्च तस्मात् पूज्याः सदैव ताः ।
महाप्रभावा वरदा वरान् दद्युरुपासिताः । ता गावोऽस्यानुमन्यन्ते सर्व्वकर्म्मसु यत् फलं । ६१८०
तस्य तत्र चतुर्भागो यो ददाति गवाह्निकं ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि महादेवरहस्ये त्रयस्त्रिंशदधिकशततमोऽध्यायः । १३३ ॥
॥ स्कन्द उवाच ॥ ममाप्यनुमतो धर्म्मस्तं शृणुध्वं समाहिताः । नीलषण्डस्य शृङ्गाभ्यां गृहीत्वा मृत्तिकान्तु यः ।
अभिषेकं त्र्यहं कुर्य्यात्तस्य धर्म्मं निबोधत । शोधयेदशुभं सर्व्वमाधिपत्यं परत्र च ।
यावच्च जायते मर्त्यस्तावत् शूरो भविष्यति । इदञ्चाप्यपरं गुह्यं सरहस्यं निबोधत ।
प्रगृह्यौदुम्बरं पात्रं पक्वान्नं मधुना सह । सोमस्योत्तिष्ठमानस्य पौर्णमास्यां बलिं हरेत् । ६१८५
तस्य धर्म्मफलं नित्यं श्रद्दधाना निबोधत । साध्या रुद्रास्तथादित्या विश्वेदेवास्तथाऽश्विनौ ।
मरुतो वसवश्चैव प्रतिगृह्णन्ति तं बलिं । सोमश्च वर्द्धते तेन समुद्रश्च महोदधिः ।
एष धर्म्मो मयोद्दिष्टः सरहस्यः सुखावहः ।
॥ विष्णुरुवाच ॥ धर्म्मगुह्यानि सर्व्वाणि देवतानां महात्मनां । ऋषीणाञ्चैव गुह्यानि यः पठेदाह्निकं सदा ।
शृणुयाद्वाऽनसूयश्च श्रद्दधानः समाहितः । नास्य विघ्नः प्रभवति भयञ्चास्य न विद्यते । ६१९०
ये च धर्म्माः शुभाः पुण्याः सरहस्या उदाहृताः । तेषां धर्म्मफलं तस्य यः पठेद्विजितेन्द्रियः ।
नास्य पापं प्रभवति न च पापेन लिप्यते । पठेद्वा श्रावयित्वाऽपि श्रुत्वा च लभते फलं ।
भुञ्जते पितरो देवा हव्यं कव्यमथाक्षयं । श्रावयंश्चापि विप्रेन्द्रान् पर्व्वसु प्रयतो नरः ।
ऋषीणां देवतानाञ्च पितॄणाञ्चैव नित्यदा । भवत्यभिमतः श्रीमान् धर्म्मेषु प्रयतः सदा ।

कन्याऽपि याचकं कंस अथवापानवर्ज्जितं। एवमन्यैर्गुणैरन्नं कर्म्मणापि प्रमुच्यते। ५८९९

॥ भीष्म उवाच ॥ एतद्गुह्यरहस्यं वै देवतानां नराधिप। अथोद्दिष्टं मया मोक्षं धर्म्मदेवतसत्कृतं।

पृथिवी रत्नसम्पूर्णा ज्ञानमेवमनुत्तमं। इदमेव ततः श्राव्यमिति मन्येत धर्म्मवित्।

नाश्रद्दधानाय न नास्तिकाय न नष्टधर्म्माय न निर्घृणाय। न हेतुदुष्टाय गुरुद्विषे वा नानात्मभूताय निवेदयेतत्।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि देवरहस्ये चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

॥ युधिष्ठिर उवाच ॥ के भोज्या ब्राह्मणस्येह के भोज्याः क्षत्रियस्य च। तथा वैश्यस्य के भोज्याः के च शूद्रस्य भारत।

॥ भीष्म उवाच ॥ ब्राह्मणा ब्राह्मणस्येह भोज्या ये चैव क्षत्रियाः। वैश्याश्चापि तथा भोज्याः शूद्राश्च परिवर्ज्जिताः। ५९००

ब्राह्मणाः क्षत्रिया वैश्या भोज्या वै क्षत्रियस्य च। वर्ज्जनीयास्तु वै शूद्राः सर्व्वभक्षा विकर्म्मिणः।

वैश्यास्तु भोज्या विप्राणां क्षत्रियाणां तथैव च। नित्याग्नयो विविक्ताश्च चातुर्म्मास्यरताश्च ये।

शूद्राणामथ यो भुङ्क्ते स भुङ्क्ते पृथिवीमलं। मलं नृणां स पिबति मलं भुङ्क्ते जनस्य च।

शूद्राणां यस्तथा भुङ्क्ते स भुङ्क्ते पृथिवीमलं। पृथिवीमलमश्नन्ति ये द्विजाः शूद्रभोजिनः।

शूद्रस्य कर्म्मनिष्ठायां विकर्म्मस्थोऽपि पच्यते। ब्राह्मणः क्षत्रियो वैश्यो विकर्म्मस्थश्च पच्यते। ५९०५

स्वाध्यायनिरता विप्रास्तथा स्वस्त्ययने नृणां। रक्षणे क्षत्रियं प्राहुर्वैश्यं पुष्ट्यर्थमेव च।

करोति कर्म्म यद्वैश्यस्तद्गत्वा ह्युपजीवति। कृषिगोरक्ष्यवाणिज्यमकुत्सा वैश्यकर्म्मणि।

शूद्रकर्म्म तु यः कुर्य्यादवहाय स्वकर्म्म च। स विज्ञेयो यथा शूद्रो न च भोज्यः कथञ्चन।

चिकित्सकः काण्डपृष्ठः पुराध्यक्षः पुरोहितः। सांवत्सरो वृथाध्यायी सर्व्वे ते शूद्रसम्मिताः।

शूद्रकर्म्मस्वथैतेषु यो भुङ्क्ते निरपत्रपः। अभोज्यभोजनं भुक्त्वा भयं प्राप्नोति दारुणं। ५९१०

कुलं वीर्य्यञ्च तेजश्च तिर्य्यग्योनित्वमेव च। स प्रयाति यथा श्वा वै निष्क्रियो धर्म्मवर्ज्जितः।

भुङ्क्ते चिकित्सकस्यान्नं तदन्नञ्च पुरीषवत्। पुंश्चल्यन्नञ्च मूत्रं स्यात् कारुकान्नञ्च शोणितं।

विद्योपजीविनोऽन्नञ्च यो भुङ्क्ते साधुसम्मतः। तदप्यन्नं यथा शौद्रं तत् साधुः परिवर्ज्जयेत्।

वचनीयस्य यो भुङ्क्ते तमाहुः शोणितं ह्रदं। पिशुनं भोजनं भुङ्क्ते ब्रह्महत्यासमं विदुः।

असत्कृतमवज्ञातं न भोक्तव्यं कदाचन। व्याधिं कुलक्षयञ्चैव क्षिप्रं प्राप्नोति ब्राह्मणः। ५९१५

नगरीरक्षिणो भुङ्क्ते श्वपचप्रवणो भवेत्। गोघ्ने च ब्राह्मणघ्ने च सुरापे गुरुतल्पगे।

भुक्त्वाऽन्नं जायते विप्रो रक्षसां कुलवर्द्धनः। न्यासापहारिणो भुक्त्वा कृतघ्ने क्लीववर्त्तिनि।

जायते शबरावासे मध्यदेशबहिष्कृते। अभोज्याश्चैव भोज्याश्च मया प्रोक्ता यथाविधि।

किमन्यदद्य कौन्तेय मत्तस्त्वं श्रोतुमिच्छसि।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि भोज्याभोज्यान्नकथने पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

॥ युधिष्ठिर उवाच ॥ उक्तास्तु भवता भोज्यास्तथाऽभोज्यास्तु सर्व्वशः। अथ मे प्रश्नसन्देहस्तन्मे वद पितामह। ५९२०

ब्राह्मणानां विशेषेण हव्यकव्यप्रतिग्रहे। नानाविधेषु भोज्येषु प्रायश्चित्तानि शंस मे।

दिव्यं शतशलाकञ्च यज्ञार्थं काञ्चनं शुभं। छत्रं देवावृधो दत्त्वा ब्राह्मणायास्थितो दिवं।
भगवानम्बरीषश्च ब्राह्मणायामितौजसे। प्रदाय सकलं राष्ट्रं सुरलोकमवाप्तवान्।
सावित्रः कुण्डले दिव्ये यानञ्च जनमेजयः। ब्राह्मणाय च गा दत्त्वा गतो लोकाननुत्तमान्।
वृषादर्भिश्च राजर्षी रत्नानि विविधानि च। रम्यांश्चावसथान्दत्त्वा द्विजेभ्यो दिवमागतः।
निमी राष्ट्रञ्च वैदर्भिः कन्यां दत्त्वा महात्मने। अगस्त्याय गतः स्वर्गं सपुत्रपशुबान्धवः। ६२५५
जामदग्न्यश्च विप्राय भूमिं दत्त्वा महायशाः। रामोऽक्षयांस्तथा लोकान् जगाम मनसोऽधिकान्।
अवर्षति च पर्ज्जन्ये सर्व्वभूतानि देवराट्। वसिष्ठो जीवयामास येन यातोऽक्षयां गतिं।
रामो दाशरथिश्चैव हुत्वा यज्ञेषु वै वसु। स गतो ह्यक्षयान् लोकान् यस्य लोके महद्यशः।
कक्षसेनश्च राजर्षिर्वसिष्ठाय महात्मने। न्यासं यथावत् संन्यस्य जगाम सुमहायशाः।
करन्धमस्य पौत्रस्तु मरुत्तो विक्षितः सुतः। कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम सः। ६२६०
ब्रह्मदत्तश्च पाञ्चाल्यो राजधर्म्मभृताम्बरः। निधिं शङ्खमनुज्ञाप्य जगाम परमां गतिं।
राजा मित्रसहश्चैव वसिष्ठाय महात्मने। मदयन्तीं प्रियां भार्य्यां दत्त्वा च त्रिदिवं गतः।
मनोः पुत्रश्च सुद्युम्नो लिखिताय महात्मने। दण्डमुद्धृत्य धर्म्मेण गतो लोकाननुत्तमान्।
सहस्रचित्यो राजर्षिः प्राणानिष्टान् महायशाः। ब्राह्मणार्थं परित्यज्य गतो लोकाननुत्तमान्।
सर्व्वकामैश्च सम्पूर्णं दत्त्वा वेश्म हिरण्मयं। मौद्गल्याय गतः स्वर्गं शतद्युम्नो महीपतिः। ६२६५
भक्ष्यभोज्यस्य च कृतान् राशयः पर्व्वतोपमान्। शाण्डिल्याय पुरा दत्त्वा सुमन्युर्दिवमास्थितः।
नाम्ना च द्युतिमान्नाम शाल्वराजो महाद्युतिः। दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान्।
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमां। हिरण्यहस्ताय गतो लोकान् देवैरधिष्ठितान्।
लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः। ऋष्यशृङ्गाय विपुलैः सर्व्वैः कामैरयुज्यत।
कौत्साय दत्त्वा कन्यान्तु हंसीं नाम यशस्विनीं। गतोऽक्षयानतो लोकान् राजर्षिश्च भगीरथः। ६२७०
दत्त्वा शतसहस्रन्तु गवां राजा भगीरथः। सवत्सानां कोहलाय गतो लोकाननुत्तमान्।
एते चान्ये च बहवो दानेन तपसा च ह। युधिष्ठिर गताः स्वर्गं निवर्त्तन्ते पुनः पुनः।
तेषां प्रतिष्ठिता कीर्त्तिर्यावत् स्थास्यति मेदिनी। गृहस्थैर्दानतपसा यैर्लोका वै विनिर्ज्जिताः।
शिष्टानां चरितं ह्येतत् कीर्त्तितं मे युधिष्ठिर। दानयज्ञप्रजासर्गैरेते हि दिवमास्थिताः।
दत्त्वा तु सततं तेऽस्तु कौरवाणां धुरन्धर। दानयज्ञक्रियायुक्ता बुद्धिर्धर्म्मोपचायिनी। ६२७५
यत्र ते नृपशार्दूल सन्देहो वै भविष्यति। श्वः प्रभाते हि वक्ष्यामि सन्ध्या हि समुपस्थिता।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानफलकथने सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

॥ युधिष्ठिर उवाच ॥ श्रुतं मे भवतस्तात सत्यव्रतपराक्रम। दानधर्म्मेण महता ये प्राप्तास्त्रिदिवं नृपाः।
इमांस्तु श्रोतुमिच्छामि धर्म्मान् धर्म्मभृतां वर। दानं कतिविधं देयं किन्तस्य च फलं लभेत्।
कथं केभ्यश्च धर्म्म्यञ्च दानं दातव्यमिष्यते। कैः कारणैः कतिविधं श्रोतुमिच्छामि तत्त्वतः।

॥ भीष्म उवाच ॥ शृणु तत्त्वेन कौन्तेय दानं प्रति ममानघ। यथा दानं प्रदातव्यं सर्व्ववर्णेषु भारत ।     ९९८०

धर्म्मादर्थाद्भयात् कामात् कारुण्यादिति भारत। दानं पञ्चविधं ज्ञेयं कारणैर्यैर्निबोध तत्।

इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखं। इति दानं प्रदातव्यं ब्राह्मणेभ्योऽनसूयता।

ददाति वा दास्यति वा मह्यं दत्तमनेन वा। इत्यर्थिभ्यो निशम्यैवं सर्व्वं दातव्यमर्थिने।

नास्याहं न मदीयोऽयं पापं कुर्य्याद्विमानितः। इति दद्याद्भयादेव दृढं मूढाय पण्डितः।

प्रियो मेऽयं प्रियोऽस्याहमिति सम्प्रेक्ष्य बुद्धिमान्। वयस्यायैवमक्लिष्टं दानं दद्यादतन्द्रितः।     ९९८५

दीनश्च याचते चायमल्पेनापि हि तुष्यति। इति दद्याद्दरिद्राय कारुण्यादिति सर्व्वथा।

इति पञ्चविधं दानं पुण्यकीर्त्तिविवर्द्धनं। यथाशक्त्या प्रदातव्यमेवमाह प्रजापतिः।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दानधर्म्मकथने अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्व्वशास्त्रविशारद। आगमैर्बहुभिः स्फीतो भवान् नः प्रवरे कुले।

त्वत्तो धर्म्मार्थसंयुक्तमायत्याञ्च सुखोदयं। आश्चर्य्यभूतं लोकस्य श्रोतुमिच्छाम्यरिन्दम।

अयञ्च कालः सम्प्राप्तो दुर्लभो ज्ञातिबान्धवैः। शास्ता च न हि नः कश्चित्त्वामृते पुरुषर्षभ।     ९९९०

यदि तेऽहमनुग्राह्यो भ्रातृभिः सहितोऽनघ। वक्तुमर्हसि नः प्रश्नं यन्त्वां पृच्छामि पार्थिव।

अयं नारायणः श्रीमान् सर्व्वपार्थिवसम्मतः। भवन्तं बहुमानेन प्रश्रयेण च सेवते।

अस्य चैव समक्षं त्वं पार्थिवानाञ्च सर्व्वशः। भ्रातॄणाञ्च प्रियार्थं मे स्नेहाद्भाषितुमर्हसि।

॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा स्नेहादागतसम्भ्रमः। भीष्मो भागीरथीपुत्र इदं वचनमब्रवीत्।

॥ भीष्म उवाच ॥ अहं ते कथयिष्यामि कथामतिमनोहरां। अस्य विष्णोः पुरा राजन् प्रभावो यो मया श्रुतः।     ९९९५

यश्च गोवृषभाङ्कस्य प्रभावस्तञ्च मे शृणु। रुद्राण्याः संशयो यश्च दम्पत्योस्तञ्च मे शृणु।

व्रतं चचार धर्म्मात्मा कृष्णो द्वादशवार्षिकं। दीक्षितञ्चागतौ द्रष्टुमुभौ नारदपर्व्वतौ।

कृष्णद्वैपायनश्चैव धौम्यश्च जपतां वरः। देवलः काश्यपश्चैव हस्तिकाश्यप एव च।

अपरे ऋषयः सन्तो दीक्षादमसमन्विताः। शिष्यैरनुगताः सिद्धैर्देवकल्पैस्तपोधनैः।

तेषामतिथिसत्कारमर्च्चनीयं कुलोचितं। देवकीतनयः प्रीतो देवतुल्यमकल्पयत्।     १००००

हरितेषु सुवर्णेषु बर्हिष्केषु नवेषु च। उपोपविविशुः प्रीता विष्टरेषु महर्षयः।

कथाश्चक्रुस्ततस्ते तु मधुरा धर्म्मसंहिताः। राजर्षीणां सुराणाञ्च ये वसन्ति तपोधनाः।

ततो नारायणं तेजो व्रतचर्य्येन्धनोत्थितं। वक्त्रान्निःसृत्य कृष्णस्य वह्निरद्भुतकर्म्मणः।

सोऽग्निर्ददाह तं शैलं सद्रुमं सलताक्षुपं। सपक्षिमृगसङ्घातं सश्वापदसरीसृपं।

मृगैश्च विविधाकारैर्हाहाभूतमचेतनं। शिखरं तस्य शैलस्य मथितं दीनदर्शनं।     १०००५

स तु वह्निर्महाज्वालो दग्ध्वा सर्व्वमशेषतः। विष्णोः समीपमागम्य पादौ शिष्यवदस्पृशत्।

ततो विष्णुर्गिरिं दृष्ट्वा निर्द्दग्धमरिकर्षणः। सौम्यदृष्टिनिपातैस्तं पुनः प्रकृतिमानयत्।

तथैव स गिरिर्भूयः सुपुष्पितलताद्रुमः। सपक्षिगणसंघुष्टः सश्वापदसरीसृपः।

॥ भीष्म उवाच ॥ ततो नारायणसुहृन्नारदो भगवानृषिः । शङ्करस्योमया सार्द्धं संवादं प्रत्यभाषत ।
॥ नारद उवाच ॥ तपश्चचार धर्म्मात्मा वृषभाङ्कः सुरेश्वरः । पुण्ये गिरौ हिमवति सिद्धचारणसेविते ।
नानौषधियुते रम्ये नानापुष्पसमाकुले । अप्सरोगणसङ्कीर्णे भूतसङ्घनिषेविते । ६३४०
तत्र देवो मुदा युक्तो भूतसङ्घशतैर्वृतः । नानारूपैर्विरूपैश्च दिव्यैरद्भुतदर्शनैः ।
सिंहव्याघ्रगजप्रख्यैः सर्व्वजातिसमन्वितैः । क्रोष्टुकद्वीपिवदनैरृक्षर्षभमुखैस्तथा ।
उलूकवदनैर्भीमैर्वृकश्येनमुखैस्तथा । नानावर्णैर्मृगमुखैः सर्व्वजातिसमन्वितैः ।
किन्नरैर्यक्षगन्धर्व्वै रक्षोभूतगणैस्तथा । दिव्यपुष्पसमाकीर्णं दिव्यज्वालासमाकुलं ।
दिव्यचन्दनसंयुक्तं दिव्यधूपेन धूपितं । तत्सदो वृषभाङ्कस्य दिव्यवादित्रनादितं । ४५
मृदङ्गपणवोद्घुष्टं शङ्खभेरीनिनादितं । नृत्यद्भिर्भूतसङ्घैश्च बर्हिणैश्च समन्वितं ।
प्रनृत्ताप्सरसं दिव्यं देवर्षिगणसेवितं । दृष्टिकान्तमनिर्द्देश्यं दिव्यमद्भुतदर्शनं ।
स गिरिस्तपसा तस्य गिरीशस्य व्यरोचत । स्वाध्यायपरमैर्विप्रैर्ब्रह्मघोषनिनादितः ।
षट्पदैरुपगीतैश्च माधवाप्रतिमो गिरिः । तन्महोत्सवसङ्काशं भीमरूपधरं ततः ।
दृष्ट्वा मुनिगणस्यासीत् परा प्रीतिर्जनार्द्दन । मुनयश्च महाभागाः सिद्धाश्चैवोर्द्धरेतसः । ६३५०
मरुतो वसवः साध्या विश्वेदेवाः सवासवाः । यक्षा नागाः पिशाचाश्च लोकपाला हुताशनाः ।
वाताः सर्व्वे महाभूतास्तत्रैवासन् समागताः । ऋतवः सर्व्वपुष्पैश्च व्यकिरन्त महाद्भुतैः ।
ओषध्यो ज्वलमानाश्च द्योतयन्ति स्म तद्वनं । विहगाश्च महाभागा प्रानृत्यन् व्यनदंश्च च ।
गिरिपृष्ठेषु रम्येषु व्याहरन्तो जनप्रियाः । तत्र देवो गिरितटे दिव्यधातुविभूषिते ।
पर्य्यङ्क इव विभ्राजन्नुपविष्टो महामनाः । व्याघ्रचर्म्माम्बरधरः सिंहचर्म्मोत्तरच्छदः । ६३५५
व्यालयज्ञोपवीती च लोहिताङ्गदभूषणः । हरिश्मश्रुर्जटी भीमो भयकर्त्ता सुरद्विषां ।
अभयः सर्व्वभूतानां भक्तानां वृषभध्वजः । दृष्ट्वा महर्षयः सर्व्वे शिरोभिरवनीं गताः ।
विमुक्ताः सर्व्वपापेभ्यः क्षान्ता विगतकल्मषाः । तस्य भूतपतेः स्थानं भीमरूपधरं बभौ ।
अप्रधृष्यतरञ्चैव महोरगसमाकुलं । क्षणेनैवाभवत् सर्व्वमद्भुतं मधुसूदन ।
तत्सदो वृषभाङ्कस्य भीमरूपधरं बभौ । तमभ्ययाच्छैलसुता भूतस्त्रीगणसंवृता । ६३६०
हरतुल्याम्बरधरा समानव्रतधारिणी । बिभ्रती कलशं रौक्मं सर्व्वतीर्थजलोद्भवं ।
गिरिस्रवाभिः सर्व्वाभिः पृष्ठतोऽनुगता शुभा । पुष्पवृष्ट्याऽभिवर्षन्ती गन्धैर्बहुविधैस्तथा ।
सेवन्ती हिमवत्पार्श्वं हरपार्श्वमुपागमत् । ततः स्मयन्ती पाणिभ्यां नर्म्मार्थं चारुदर्शना ।
हरनेत्रे शुभे देवी सहसा सा समावृणोत् । संवृताभ्यान्तु नेत्राभ्यां तमोभूतमचेतनं ।
निर्होमं निर्व्वषट्कारं जगत् सहसा ऽभवत् । जनश्च विमनाः सर्व्वो भयत्राससमन्वितः । ६३६५
निमीलिते भूतपतौ नष्टसूर्य्य इवाभवत् । ततो वितिमिरो लोकः क्षणेन समपद्यत ।
ज्वाला च महती दीप्ता ललाटात्तस्य निःसृता । तृतीयञ्चास्य सम्भूतं नेत्रमादित्यसन्निभं ।

युगान्ताग्निसदृशं दीप्तं येनासौ मथितो गिरिः । ततो गिरिसुता दृष्ट्वा दीप्ताग्निसदृशेक्षणं ।
हरं प्रणम्य शिरसा ददर्शायतलोचना । दह्यमाने वने तस्मिन् ससालसरलद्रुमे ।
सचन्दनवने रम्ये दिव्यौषधिविदीपिते । मृगयूथैर्द्रुतैर्भीतैर्हरपार्श्वमुपागतैः । ६३७०
शरणञ्चाप्यविन्दद्भिस्तत् सदः सङ्कुलं बभौ । ततो नभःस्पृशज्ज्वालो विद्युल्लोलाग्निरुल्बणः ।
द्वादशादित्यसदृशो युगान्ताग्निरिवापरः । क्षणेन तेन निर्दग्धो हिमवानभवन्नगः ।
सधातुशिखराभोगो दीप्तदग्धवनौषधिः । तं दृष्ट्वा मथितं शैलं शैलराजसुता ततः ।
भगवन्तं प्रपन्ना वै साञ्जलिप्रग्रहा स्थिता । उमां शर्व्वस्तदा दृष्ट्वा स्त्रीभावगतमार्दवां ।
पितुर्दैन्यमनिच्छन्तीं प्रीत्याऽपश्यत्तदा गिरिं । क्षणेन हिमवान् सर्व्वः प्रकृतिस्थः सुदर्शनः । ६३७५
प्रहृष्टविहगश्चैव सुपुष्पितवनद्रुमः । प्रकृतिस्थं गिरिं दृष्ट्वा प्रीता देवं महेश्वरं ।
उवाच सर्व्वलोकानां पतिं पतिमनिन्दिता ।
॥ उमोवाच ॥ भगवन् सर्व्वभूतेश शूलपाणे महाव्रत । संशयो मे महान् जातस्तन्मे व्याख्यातुमर्हसि ।
किमर्थं ते ललाटे वै तृतीयं नेत्रमुत्थितं । किमर्थञ्च गिरिर्दग्धः सपक्षिगणकाननः ।
किमर्थञ्च पुनर्देव प्रकृतिस्थस्त्वया कृतः । तथैव द्रुमसंछन्नः कृतोऽयं ते पिता मम । ६३८०
॥ महेश्वर उवाच ॥ नेत्रे मे संवृते देवि त्वया बाल्यादनिन्दिते । नष्टालोकस्तदा लोकः क्षणेन समपद्यत ।
नष्टादित्ये तथा लोके तमोभूते नगात्मजे । तृतीयं लोचनं दीप्तं सृष्टं मे रक्षता प्रजाः ।
तस्य चाक्ष्णो महत्तेजो येनायं मथितो गिरिः । त्वत्प्रियार्थञ्च मे देवि प्रकृतिस्थः पुनः कृतः ।
॥ उमोवाच ॥ भगवन् केन ते वक्त्रं चन्द्रवत् प्रियदर्शनं । पूर्व्वं तथैव श्रीकान्तमुत्तरं पश्चिमं तथा ।
दक्षिणञ्च मुखं रौद्रं केनोर्द्धं कपिला जटाः । केन कण्ठश्च ते नीलो बर्हिवर्णनिभः कृतः । ६३८५
हस्ते देव पिनाकन्ते सततं केन तिष्ठति । जटिलो ब्रह्मचारी च किमर्थमसि नित्यदा ।
एतन्मे संशयं सर्व्वं वक्तुमर्हसि वै प्रभो । सधर्म्मचारिणी चाहं भक्ता चेति वृषध्वज ।
॥ भीष्म उवाच ॥ एवमुक्तः स भगवाञ्छैलपुत्त्र्या पिनाकधृक् । तस्या धृत्या च बुद्ध्या च प्रीतिमानभवत् प्रभुः ।
ततस्तामब्रवीद्देवः सुभगे श्रूयतामिति । हेतुभिर्य्यैर्ममैतानि रूपाणि रुचिरानने ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि उमामहेश्वरसंवादे चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
॥ श्रीभगवानुवाच ॥ तिलोत्तमा नाम पुरा ब्रह्मणा योषिदुत्तमा । तिलं तिलं समुद्धृत्य रत्नानां निर्म्मिता शुभा । ६३९०
साऽभ्यगच्छत मां देवि रूपेणाप्रतिमा भुवि । प्रदक्षिणं लोभयन्ती मां शुभे रुचिरानना ।
यतो यतः सा सुदती मामुपाधावदन्तिके । ततस्ततो मुखं चारु मम देवि विनिर्गतं ।
तां दिदृक्षुरहं योगाच्चतुर्मूर्त्तित्वमागतः । चतुर्मुखश्च संवृत्तो दर्शयन् योगमुत्तमं ।
पूर्व्वेण वदनेनाहमिन्द्रत्वमनुशास्मि च । उत्तरेण त्वया सार्द्धं रमाम्यहमनिन्दिते ।
पश्चिमं मे मुखं सौम्यं सर्व्वप्राणिसुखावहं । दक्षिणं भीमसङ्काशं रौद्रं संहरति प्रजाः । ६३९५
जटिलो ब्रह्मचारी च लोकानां हितकाम्यया । देवकार्य्यार्थसिद्ध्यर्थं पिनाकं मे करे स्थितं ।

इन्द्रेण च पुरा वज्रं क्षिप्तं श्रीकाङ्क्षिणा मम । दग्ध्वा कण्ठं तु तद्यातं तेन श्रीकण्ठता मम ।

॥ उमोवाच ॥ वाहनेष्वत्र सर्व्वेषु श्रीमत्स्वन्येषु सत्तम । कथञ्च वृषभो देव वाहनत्वमुपागतः ।

॥ महेश्वर उवाच ॥ सुरभीमसृजद्ब्रह्मा देवधेनुं पयोमुचं । सा सृष्टा बहुधा जाता क्षरमाणा पयोऽमृतं ।

तस्या वत्समुखोत्सृष्टः फेनो मद्गात्रमागतः । ततो दग्धा मया गावो नानावर्णत्वमागताः । ६०००

ततोऽहं लोकगुरुणा शमं नीतोऽर्थवेदिना । वृषञ्चेमं ध्वजार्थं मे ददौ वाहनमेव च ।

॥ उमोवाच ॥ निवासा बहुरूपास्ते दिवि सर्व्वगुणान्विताः । तांश्च सन्त्यज्य भगवन् श्मशाने रमसे कथं ।

केशास्थिकलिले भीमे कपालघटसंकुले । गृध्रगोमायुबहुले चिताग्निशतसंकुले ।

अशुचौ मांसकलिले वसाशोणितकर्द्दमे । विकीर्णान्त्रास्थिनिचये शिवानादनिनादिते ।

॥ महेश्वर उवाच ॥ मेध्यान्वेषी महीं कृत्स्नां विचराम्यनिशं सदा । न च मेध्यतरं किञ्चित् श्मशानादिह लक्ष्यते । ६००५

तेन मे सर्व्ववासानां श्मशाने रमते मनः । न्यग्रोधशाखासंछन्ने निर्भुग्नस्रग्विभूषिते ।

तत्र चैव रमन्तीमे भूतसङ्घाः शुचिस्मिते । न च भूतगणैर्देवि विनाऽहं वस्तुमुत्सहे ।

एष वासो हि मे मेध्यः स्वर्गीयश्च मतः शुभे । पुण्यः परमकश्चैव मेध्यकामैरुपास्यते ।

॥ उमोवाच ॥ भगवन् सर्व्वभूतेश सर्व्वधर्म्मभृताम्वर । पिनाकपाणे वरद संशयो मे महानयं ।

अयं मुनिगणः सर्व्वस्तपस्तेप इति प्रभो । तपोऽन्वेषकरो लोके भ्रमते विविधाकृतिः । ६०१०

अस्य चैवर्षिसङ्घस्य मम च प्रियकाम्यया । एतन्ममेह सन्देहं वक्तुमर्हस्यरिन्दम ।

धर्म्मः किंलक्षणः प्रोक्तः कथं वा चरितुं नरैः । शक्यो धर्म्ममविन्दद्भिर्द्धर्म्मज्ञ वद मे प्रभो ।

॥ नारद उवाच ॥ ततो मुनिगणः सर्व्वस्तां देवीं प्रत्यपूजयत् । वाग्भिर्ऋग्भूषिताभिश्च स्तवैश्चार्थविशारदैः ।

॥ महेश्वर उवाच ॥ अहिंसा सत्यवचनं सर्व्वभूतानुकम्पनं । शमो दानं यथाशक्ति गार्हस्थ्यो धर्म्म उत्तमः ।

परदारेष्वसंसर्गो न्यासस्त्रीपरिरक्षणं । अदत्तादानविरमो मधुमांसस्य वर्ज्जनं । ६०१५

एष पञ्चविधो धर्म्मो बहुशाखः सुखोदयः । देहिभिर्द्धर्म्मपरमैश्चर्त्तव्यो देहसम्भवः ।

॥ उमोवाच ॥ भगवन् संशयः पृष्टस्तन्मे संछेत्तुमर्हसि । चातुर्व्वर्ण्यस्य यो धर्म्मः स्वे स्वे धर्म्मे गुणावहः ।

ब्राह्मणे कीदृशो धर्म्मः क्षत्रिये कीदृशो भवेत् । वैश्ये किंलक्षणो धर्म्मः शूद्रे किंलक्षणो भवेत् ।

॥ भगवानुवाच ॥ न्याय्यतस्ते महाभागे संशयः समुदीरितः । भूमिदेवा महाभागाः सदा लोके द्विजातयः ।

उपवासः सदा धर्म्मो ब्राह्मणस्य न संशयः । स हि धर्म्मार्थसम्पन्नो ब्रह्मभूयाय कल्पते । ६०२०

तस्य धर्म्मक्रिया देवि ब्रह्मचर्य्या च न्यायतः । व्रतोपनयने चैव द्विजो येनोपपद्यते ।

गुरुदैवतपूजार्थं स्वाध्यायाभ्यसनात्मकः । देहिभिर्द्धर्म्मपरमैश्चर्त्तव्यो धर्म्मसम्भवः ।

॥ उमोवाच ॥ भगवन् संशयो मेऽस्ति तन्मे व्याख्यातुमर्हसि । चातुर्व्वर्ण्यस्य धर्म्मं वै नैपुण्येन प्रकीर्त्तय ।

॥ महेश्वर उवाच ॥ रहस्यश्रवणं धर्म्मो वेदव्रतनिषेवणं । अग्निकार्य्यं तथा धर्म्मो गुरुकार्य्यप्रसाधनं ।

भैक्षचर्य्या परो धर्म्मो नित्ययज्ञोपवीतिता । नित्यस्वाध्यायिता धर्म्मो ब्रह्मचर्य्याश्रमस्तथा । ६०२५

गुरुणा चाभ्यनुज्ञातः समावर्त्तेत वै द्विजः । विन्देतानन्तरं भार्य्यामनुरूपां यथाविधि ।

शुश्रूषार्थं धर्म्मस्तथा सत्यसंसेवनं । धर्म्मो नित्योपवासित्वं ब्रह्मचर्य्यं तथैव च ।
आहिताग्निरधीयानो जुह्वानः संयतेन्द्रियः । विघसाशी यताहारो सत्यवाक् संयतः शुचिः ।
अतिथिव्रतता धर्म्मो धर्म्मस्त्रेताग्निधारणं । इष्टीश्च पशुबन्धांश्च विधिपूर्व्वान् समाचरेत् ।
यज्ञश्च परमो धर्म्मस्तथाऽहिंसाऽथ देहिषु । अपूर्व्वभोजनं धर्म्मो विघसाशित्वमेव च ।  [illegible]
भुक्ते परिजने पश्चात् भोजनं धर्म्म उच्यते । ब्राह्मणस्य गृहस्थस्य श्रोत्रियस्य विशेषतः ।
दम्पत्योः समशीलत्वं धर्म्मः स्याद्गृहमेधिनः । गृह्याणाञ्चैव देवानां नित्यपुष्पबलिक्रिया ।
नित्यं परिलेपनं धर्म्मस्तथा नित्योपवासिता । सुसंमृष्टोपलिप्ते च साज्यधूमो भवेद्गृहे ।
एष द्विजजने धर्म्मो गार्हस्थ्यो लोकधारणः । द्विजातीनां सतां नित्यं सदैवैष प्रवर्त्तते ।
यस्तु क्षत्रगतो देवि त्वया धर्म्म उदीरितः । तमहं ते प्रवक्ष्यामि तन्मे शृणु समाहिता ।  [illegible]
क्षत्रियस्य स्मृतो धर्म्मः प्रजापालनमादितः । निर्द्दिष्टफलभोक्ता हि राजा धर्म्मेण युज्यते ।
प्रजाः पालयते यो हि धर्म्मेण मनुजाधिपः । तस्य धर्म्मार्ज्जिता लोकाः प्रजापालनसञ्चिताः ।
तस्य राज्ञः परो धर्म्मो दमः स्वाध्याय एव च । अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च ।
यज्ञोपवीतधरणं यज्ञो धर्म्मक्रियास्तथा । भृत्यानां भरणं धर्म्मः कृते कर्म्मण्यमोघता ।
सम्यग्दण्डे स्थितिर्द्धर्म्मो धर्म्मो वेदक्रतुक्रिया । व्यवहारस्थितिर्द्धर्म्मः सत्यवाक्यरतिस्तथा ।  [illegible]
आर्त्तहस्तप्रदो राजा प्रेत्य चेह महीयते । गोब्राह्मणार्थे विक्रान्तः संग्रामे निधनं गतः ।
अश्वमेधजिताल्लोकानाप्नोति त्रिदिवालये । वैश्यस्य सततं धर्म्मः पाशुपाल्यं कृषिस्तथा ।
अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च । वाणिज्यं सत्पथस्थानमातिथ्यं प्रशमो दमः ।
विप्राणां स्वागतं त्यागो वैश्यधर्म्मः सनातनः । तिलान् गन्धान् रसांश्चैव विक्रीणीयान्नचैव हि ।
वणिक्पथमुपासीनो वैश्यः सत्पथमाश्रितः । सर्व्वातिथ्यं त्रिवर्गस्य यथाशक्ति यथार्हतः ।  [illegible]
शूद्रधर्म्मः परो नित्यं शुश्रूषा च द्विजातिषु । स शूद्रः संशिततपाः सत्यवादी जितेन्द्रियः ।
शुश्रूषुरतिथिं प्राप्तं तपः सञ्चिनुते महत् । नित्यं स हि शुभाचारो देवताद्विजपूजकः ।
शूद्रो धर्म्मफलैरिष्टैः सम्प्रयुज्येत बुद्धिमान् । एतत्ते सर्व्वमाख्यातं चातुर्व्वर्ण्यस्य शोभने ।
एकैकस्येह सुभगे किमन्यत् श्रोतुमिच्छसि ।
॥ उमोवाच ॥ उक्तस्त्वया पृथग्धर्म्मश्चातुर्व्वर्ण्यहितः शुभः । सर्व्वव्यापी तु यो धर्म्मो भगवंस्तद्ब्रवीहि मे ।  [illegible]
॥ महेश्वर उवाच ॥ ब्राह्मणा लोकसारेण सृष्टा धात्रा गुणार्थिना । लोकांस्तारयितुं कृत्स्नान्मर्त्त्येषु क्षितिदेवताः ।
तेषामपि प्रवक्ष्यामि धर्म्मकर्म्मफलोदयं । ब्राह्मणेषु हि यो धर्म्मः स धर्म्मः परमो मतः ।
इमे ते लोकधर्म्मार्थं त्रयः सृष्टाः स्वयम्भुवा । पृथिव्यां सर्ज्जने नित्यं सृष्टांस्तानपि मे शृणु ।
वेदोक्तः परमो धर्म्मः स्मृतिशास्त्रगतोऽपरः । शिष्टाचीर्णोऽपरः प्रोक्तस्त्रयो धर्म्माः सनातनाः ।
त्रैविद्यो ब्राह्मणो विद्वान् न चाध्ययनजीवकः । त्रिकर्म्मा त्रिपरिक्रान्तो मैत्र एष स्मृतो द्विजः ।  [illegible]
षडिमानि तु कर्म्माणि प्रोवाच भुवनेश्वरः । वृत्त्यर्थं ब्राह्मणानां वै शृणु धर्म्मान् सनातनान् ।

यजनं याजनञ्चैव तथा दानप्रतिग्रहौ । अध्यापनञ्चाध्ययनं षट्कर्म्मा धर्म्मभाग्द्विजः ।
नित्यस्वाध्यायिता धर्म्मो धर्म्मो यज्ञः सनातनः । दानं प्रशस्यते चास्य यथाशक्ति यथाविधि ।
शमस्तु परमो धर्म्मः प्रवृत्तः सत्सु नित्यशः । गृहस्थानां विशुद्धानां धर्म्मस्य निचयो महान् ।
पञ्चयज्ञविशुद्धात्मा सत्यवागनसूयकः । दाता ब्राह्मणसत्कर्त्ता सुसंमृष्टनिवेशनः । ६५६०
अमानी च सदाऽजिह्मः स्निग्धवाणीप्रदस्तथा । अतिथ्यभ्यागतरतिः शेषान्नकृतभोजनः ।
पाद्यमर्घ्यं यथान्यायमासनं शयनन्तथा । दीपं प्रतिश्रयञ्चैव यो ददाति स धार्म्मिकः ।
प्रातरुत्थाय चाचम्य भोजनेनोपमन्त्र्य च । सत्कृत्यानुव्रजेद्यस्तु तस्य धर्म्मः सनातनः ।
सर्व्वातिथ्यं त्रिवर्गस्य यथाशक्ति निशानिशं । शूद्रधर्म्मः समाख्यातस्त्रिवर्गपरिचारणं ।
प्रवृत्तिलक्षणो धर्म्मो गृहस्थेषु विधीयते । तमहं वर्त्तयिष्यामि सर्व्वभूतहितं शुभं । ६५६५
दातव्यमसकृच्छक्त्या यष्टव्यमसकृत्तथा । पुष्टिकर्म्मविधानञ्च कर्त्तव्यं भूतिमिच्छता ।
धर्म्मेणार्थः समाहार्य्यो धर्म्मलब्धं त्रिधा धनं । कर्त्तव्यं धर्म्मपरमं मानवेन प्रयत्नतः ।
एकेनांशेन धर्म्मार्थो कर्त्तव्यो भूतिमिच्छता । एकेनांशेन कामार्थ एकमंशं विवर्द्धयेत् ।
निवृत्तिलक्षणस्त्वन्यो धर्म्मो मोक्षाय तिष्ठति । तस्य वृत्तिं प्रवक्ष्यामि शृणु मे देवि तत्त्वतः ।
सर्व्वभूतदयाधर्म्मो न चैकग्रामवासिता । आशापाशविमोक्षश्च शस्यते मोक्षकाङ्क्षिणां । ६५७०
न कुट्यां नोदके सङ्गो न वाससि न चासने । न त्रिदण्डे न शयने नाग्नौ न शरणालये ।
अध्यात्मगतिचित्तो यस्तन्मनास्तत्परायणः । युक्तो योगं प्रति सदा प्रतिसङ्ख्यानमेव च ।
वृक्षमूलपरो नित्यं शून्यागारनिवेशनः । नदीपुलिनशायी च नदीतीररतिश्च यः ।
विमुक्तः सर्व्वसङ्गेषु स्नेहबन्धेषु च द्विजः । आत्मन्येवात्मनो भावं समासज्येत वै द्विजः ।
स्थाणुभूतो निराहारो मोक्षदृष्टेन कर्म्मणा । परिव्रजति यो युक्तस्तस्य धर्म्मः सनातनः । ६५७५
न चैकत्र चिरासक्तो न चैकग्रामगोचरः । मुक्तो ह्यटति निर्म्मुक्तो न चैकपुलिने शयः ।
एष मोक्षविदां धर्म्मो वेदोक्तः सत्पथः सतां । यो मार्गमनुयातीमं पदं तस्य न विद्यते ।
चतुर्व्विधा भिक्षवस्ते कुटीचकबहूदकौ । हंसः परमहंसश्च यो यः पश्चात् स उत्तमः ।
अतः परतरं नास्ति नावरन्नतिरोगतः । अदुःखमसुखं सौम्यमजरामरमव्ययं ।
॥ उमोवाच ॥ गार्हस्थ्यो मोक्षधर्म्मश्च सज्जनाचरितस्त्वया । भाषितो लोकसंवादे मार्गः श्रेयस्करो महान् । ६५८०
ऋषिधर्म्मन्तु धर्म्मज्ञ श्रोतुमिच्छाम्यतः परं । स्पृहा भवति मे नित्यं तपोवननिवासिषु ।
आज्यधूमो भवेद्गन्धो रुणद्धीव तपोवनं । तं दृष्ट्वा मे मनः प्रीतं महेश्वर सदा भवेत् ।
एतन्मे संशयं देव मुनिधर्म्मकृतं विभो । सर्व्वधर्म्मार्थतत्त्वज्ञ देवदेव वदस्व मे ।
निखिलेन मया पृष्टं महादेव यथातथं ।
॥ श्रीभगवानुवाच ॥ हन्त तेऽहं प्रवक्ष्यामि मुनिधर्म्ममनुत्तमं । यं कृत्वा मुनयो यान्ति सिद्धिं स्वतपसा शुभे । ६५८५
फेनपानामृषीणां यो धर्म्मो धर्म्मविदां सतां । तन्मे शृणु महाभागे धर्म्मज्ञे धर्म्ममादितः ।

उञ्छन्ति सततं ये ते शाकं येनोत्करं शुभं । अशृतं सुक्तायोलमध्वरसस्कृतं दधि ।
एष तेषां विमुक्तानां फेनपानां तपोधने । धर्म्मचर्य्याकृतो मार्गो वालिखिल्यगणे शृणु ।
वालिखिल्यास्तपःसिद्धा मुनयः सूर्य्यमण्डले । उञ्छमुत्तिष्ठन्ति धर्म्मज्ञाः शाकुनीं वृत्तिमास्थिताः ।
मृगनिर्म्मोकवसनाश्चीरवल्कलवाससः । निर्द्वन्द्वाः सत्पथं प्राप्ता वालिखिल्यास्तपोधनाः । ६४६०
अङ्गुष्ठपर्व्वमात्रा ये भूत्वा स्वे स्वे व्यवस्थिताः । तपश्चरणमीहन्ते तेषां धर्म्मफलं महत् ।
ते सुरैः समतां यान्ति सुरकार्य्यार्थसिद्धये । द्योतयन्ति दिशः सर्व्वास्तपसा दग्धकिल्बिषाः ।
ये त्वन्ये शुद्धमनसो दयाधर्म्मपरायणाः । सन्तश्चक्रचराः पुण्याः सोमलोकचराश्च ये ।
पितृलोकसमीपस्थास्त उञ्छन्ति यथाविधि । संप्रक्षालाश्मकुट्टाश्च दन्तोलूखलिकाश्च ये ।
सोमपानाञ्च देवानामूष्मपाणां तथैव च । उञ्छन्ति ये समीपस्थाः सदारा नियतेन्द्रियाः । ६४६५
तेषामग्निपरिस्पन्दः पितृदेवार्च्चनन्तथा । यज्ञानाञ्चैव पञ्चानां यजनं धर्म्म उच्यते ।
एष चक्रचरैर्देवि देवलोकचरैर्द्विजैः । ऋषिधर्म्मः सदा चीर्णो योऽन्यस्तमपि मे शृणु ।
सर्व्वेष्वेवर्षिधर्म्मेषु ज्ञेयोऽऽत्मा संयतेन्द्रियैः । कामक्रोधौ ततः पश्चाज्जेतव्याविति मे मतिः ।
अग्निहोत्रपरिस्पन्दो धर्म्मशय्या समास्तरं । सोमयज्ञाभ्यनुज्ञानं पञ्चमी यज्ञदक्षिणा ।
नित्यं यज्ञक्रिया धर्म्मः पितृदेवार्च्चने रतिः । सर्व्वातिथ्यञ्च कर्त्तव्यमन्नेनोञ्छार्ज्जितेन वै । ६४७०
निवृत्तिरुपभोगेषु गोरसानां शमे रतिः । स्थण्डिले शयने योगः शाकपर्णनिषेवणं ।
फलमूलाशनं वायुरापः शैवलभक्षणं । ऋषीणां नियमा ह्येते यैर्जयन्त्यजितां गतिं ।
विधूमे सन्नमुषले व्यङ्गारे भुक्तवज्जने । अतीतपात्रसञ्चारे काले विगतभैक्षुके ।
अतिथिं काङ्क्षमाणो वै शेषान्नकृतभोजनः । सत्यधर्म्मरतः शान्तो मुनिर्धर्म्मेण युज्यते ।
न स्तम्भी न च मानी यो नाप्रमत्तो न विस्मितः । मित्रामित्रसमो मैत्रो यः स धर्म्मविदुत्तमः । ६४७५

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि उमामहेश्वरसंवादे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१॥

॥ उमोवाच ॥ देशेषु रमणीयेषु नदीनां निर्झरेषु च । स्रवन्तीनां निकुञ्जेषु पर्व्वतेषु वनेषु च ।
देशेषु च पवित्रेषु फलवत्सु समाहिताः । मूलवत्सु च मेध्येषु वसन्ति नियतव्रताः ।
तेषामपि विधिं पुण्यं श्रोतुमिच्छामि शङ्कर । वानप्रस्थेषु देवेश स्वशरीरोपजीविषु ।
॥ महेश्वर उवाच ॥ वानप्रस्थेषु यो धर्म्मस्तं शृणु समाहिता । श्रुत्वा चैकमना देवि धर्म्मबुद्धिपरा भव ।
संसिद्धैर्नियमैः सद्भिर्व्वनवासमुपागतैः । वानप्रस्थैरिदं कर्म्म कर्त्तव्यं शृणु यादृशं । ६४८०
त्रिकालमभिषेकश्च पितृदेवार्च्चनं तथा । अग्निहोत्रपरिस्पन्द इष्टिहोमविधिस्तथा ।
नीवारग्रहणञ्चैव फलमूलनिषेवणं । इङ्गुदैरण्डतैलानां स्नेहार्थञ्च निषेवणं ।
योगचर्य्याकृतैः सिद्धैः कामक्रोधविवर्ज्जितैः । वीरशय्यामुपासद्भिर्व्वीरस्थानोपसेविभिः ।
युक्तैर्योगविधौ सद्भिर्ग्रीष्मे पञ्चतपैस्तथा । मण्डूकयोगनियतैर्यथान्यायं निषेविभिः ।
वीरासनगतैर्नित्यं स्थण्डिले शयनैस्तथा । शीततोयाग्नियोगश्च चर्य्यो धर्म्मबुद्धिभिः । ६४८५

अब्भक्षैर्व्वायुभक्षैश्च शैवलोत्तरभोजनैः । अश्मकुट्टैस्तथा दान्तैः संप्रक्षालैस्तथाऽपरैः ।
चीरवल्कलसंवीतैर्मृगचर्म्मनिवासिभिः । कार्य्या यात्रा यथाकालं यथाधर्म्मं यथाविधि ।
वननित्यैर्वनचरैर्वनस्थैर्वनगोचरैः । वनं गुरुमिवासाद्य वस्तव्यं वनजीविभिः ।
तेषां होमक्रिया धर्म्मः पञ्चयज्ञनिषेवणं । भागञ्च पञ्चयज्ञस्य वेदोक्तस्यानुपालनं ।
अष्टमी यज्ञपरता चातुर्म्मास्यनिषेवणं । पौर्णमासादयो यज्ञा नित्ययज्ञस्तथैव च । ६५१०
विमुक्तदारसंयोगैर्विमुक्ताः सर्व्वसङ्करैः । विमुक्ताः सर्व्वपापैश्च चरन्ति मुनयो वने ।
स्रुग्भाण्डपरमा नित्यं त्रेताग्निशरणाः सदा । सन्तः सत्पथनित्या ये ते यान्ति परमां गतिं ।
ब्रह्मलोकं महापुण्यं सोमलोकञ्च शाश्वतं । गच्छन्ति मुनयः सिद्धाः सत्यधर्म्मव्यपाश्रयाः ।
एष धर्म्मो मया देवि वानप्रस्थाश्रितः शुभे । विस्तरेणाथ सम्पन्नो यथास्थूलमुदाहृतः ।
॥ उमोवाच ॥ भगवन् सर्व्वभूतेश सर्व्वभूतनमस्कृत । यो धर्म्मो मुनिसंघस्य सिद्धिवादेषु तं वद । ६५१५
सिद्धिवादेषु संसिद्धास्तथा वननिवासिनः । स्वैरिणो दारसंयुक्तास्तेषां धर्म्मः कथं स्मृतः ।
॥ महादेव उवाच ॥ स्वैरिणस्तापसा देवि सर्व्वे दारविहारिणः । तेषां मौण्ड्यं कषायश्च वासो रात्रिश्च कारणं ।
त्रिकालमभिषेकश्च होत्रं चर्षिकृतं महत् । समाधिः सत्पथस्थानं यथोद्दिष्टं निषेवणं ।
ये च ते पूर्व्वकथिता धर्म्मास्ते वनवासिनां । यदि सेवन्ति धर्म्मांस्तानाप्नुवन्ति तपःफलं ।
ये च दम्पतिधर्म्माणः स्वदारनियतेन्द्रियाः । चरन्ति विधिदृष्टान्तदृतुकालाभिगामिनः । ६५२०
तेषामृषिकृतो धर्म्मो धर्म्मिणामुपपद्यते । न कामकारात् कामोऽन्यः संसेव्यो धर्म्मदर्शिभिः ।
सर्व्वभूतेषु यः सम्यक् ददात्यभयदक्षिणां । हिंसादोषविमुक्तात्मा स वै धर्म्मेण युज्यते ।
सर्व्वभूतानुकम्पी यः सर्व्वभूतार्ज्जवव्रतः । सर्व्वभूतात्मभूतश्च स वै धर्म्मेण युज्यते ।
सर्व्ववेदेषु वा स्नानं सर्व्वभूतेषु चार्ज्जवं । उभे एते समे स्यातामार्ज्जवं वा विशिष्यते ।
आर्ज्जवं धर्म्ममित्याहुरधर्म्मो जिह्म उच्यते । आर्ज्जवेनेह संयुक्तो नरो धर्म्मेण युज्यते । ६५२५
आर्ज्जवे तु रतो नित्यं वसत्यमरसन्निधौ । तस्मादार्ज्जवयुक्तः स्याद्य इच्छेद्धर्म्ममात्मनः ।
क्षान्तो दान्तो जितक्रोधो धर्म्मभूतो विहिंसकः । धर्म्मे रतमना नित्यं नरो धर्म्मेण युज्यते ।
व्यपेततन्द्रिर्धर्म्मात्मा शक्त्या सत्पथमाश्रितः । चारित्रपरमो बुद्धो ब्रह्मभूयाय कल्पते ।
॥ उमोवाच ॥ आश्रमाभिरता देव तापसा ये तपोधनाः । दीप्तिमन्तः कया चैव चर्य्ययाऽथ भवन्ति ते ।
राजानो राजपुत्राश्च निर्द्धना ये महाधनाः । कर्म्मणा केन भगवन् प्राप्नुवन्ति महाफलं । ६५३०
नित्यं स्थानमुपागम्य दिव्यचन्दनभूषिताः । केन वा कर्म्मणा देव भवन्ति वनगोचराः ।
एतन्मे संशयं देव तपश्चर्य्याश्रितं शुभं । शंस सर्व्वमशेषेण त्र्यक्ष त्रिपुरनाशन ।
॥ देव उवाच ॥ उपवासव्रतैर्दान्ता अहिंस्राः सत्यवादिनः । संसिद्धाः प्रेत्य गन्धर्व्वैः सह मोदन्त्यनामयाः ।
मण्डूकयोगशयनो यथान्यायं यथाविधि । दीक्षां चरति धर्म्मात्मा स नागैः सह मोदते ।
शस्पं मृगगणोत्सृष्टं यो मृगैः सह सेवते । दीक्षितो वै समायुक्तः स गच्छत्यमरावतीं । ६५३५

शैवलं शीर्णपर्णं वा तद्व्रतो यो निषेवते । शीतयोगवहो नित्यं स गच्छेत् परमां गतिं ।
वायुभक्षोऽम्बुभक्षो वा फलमूलाशनोऽपि वा । यक्षेष्वैश्वर्यमाधाय मोदतेऽप्सरसां गणैः ।
अग्नियोगवहो ग्रीष्मे विधिदृष्टेन कर्म्मणा । चीर्त्वा द्वादशवर्षाणि राजा भवति पार्थिवः ।
आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकं । मरुं संसाध्य यत्नेन राजा भवति पार्थिवः ।
स्थण्डिले शुद्धमाकाशं परिगृह्य समन्ततः । प्रविश्य च मुदा युक्तो दीक्षां द्वादशवार्षिकीं । ६६८०
देहं चानशने त्यक्त्वा स स्वर्गे सुखमेधते । स्थण्डिलस्य फलान्याहुर्यानानि शयनानि च ।
गृहाणि च महार्हाणि चन्द्रशुभ्राणि भामिनि । आत्मानमुपजीवन् यो नियतो नियताशनः ।
देहं वानशने त्यक्त्वा स स्वर्गं समुपाश्नुते । आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीं ।
त्यक्त्वा महार्णवे देहं वारुणं लोकमश्नुते । आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीं ।
अश्मना चरणौ भित्त्वा गुह्यकेषु स मोदते । साधयित्वात्मनात्मानं निर्द्वन्द्वो निष्परिग्रहः । ६६८५
चीर्त्वा द्वादशवर्षाणि दीक्षामेतां मनोगतां । स्वर्गलोकमवाप्नोति देवैश्च सह मोदते ।
आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीं । हुत्वाग्नौ देहमुत्सृज्य वह्निलोके महीयते ।
यस्तु देवि यथान्यायं दीक्षितो नियतो द्विजः । आत्मन्यात्मानमाधाय निर्म्ममो धर्म्मलालसः ।
चीर्त्वा द्वादशवर्षाणि दीक्षामेतां मनोगतां । अरणीसहितं स्कन्धे बद्ध्वा गच्छत्यनावृतः ।
वीराध्वानं गतो नित्यं वीरासनगतिस्तथा । वीरस्थायी च सततं स वीरगतिमाप्नुयात् । ६६९०
स शक्रलोकगो नित्यं सर्व्वकामपुरस्कृतः । दिव्यपुष्पसमाकीर्णो दिव्यचन्दनभूषितः ।
सुखं वसति धर्म्मात्मा दिवि देवगणैः सह । वीरलोकगतो वीरो वीरयोगवहः सदा ।
सत्त्वस्थः सर्व्वमुत्सृज्य दीक्षितो नियतः शुचिः । वीराध्वानं प्रपद्येद्यस्तस्य लोकाः सनातनाः ।
कामगेन विमानेन स वै चरति छन्दतः । शक्रलोकगतः श्रीमान् मोदते च निरामयः ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि उमामहेश्वरसंवादे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

॥ उमोवाच ॥ भगवन् भगनेत्रघ्न पूष्णो दन्तविनाशन । दक्षक्रतुहर त्र्यक्ष संशयो मे महानयं । ६६९६
चातुर्वर्ण्यं भगवता पूर्व्वं सृष्टं स्वयम्भुवा । केन कर्म्मविपाकेन वैश्यो गच्छति शूद्रतां ।
वैश्यो वा क्षत्रियः केन द्विजो वा क्षत्रियो भवेत् । प्रतिलोमः कथं देव शक्यो धर्म्मो निवर्त्तितुं ।
केन वा कर्म्मणा विप्रः शूद्रयोनौ प्रजायते । क्षत्रियः शूद्रतामेति केन वा कर्म्मणा विभो ।
एतन्मे संशयं देव वद भूतपतेऽनघ । त्रयो वर्णाः प्रकृत्येह कथं ब्राह्मण्यमाप्नुयुः ।
॥ देव उवाच ॥ ब्राह्मण्यं देवि दुष्प्राप्यं निसर्गाद्ब्राह्मणः शुभे । क्षत्रियो वैश्यशूद्रौ वा निसर्गादिति मे मतिः । ६७००
कर्म्मणा दुष्कृतेनेह स्थानाद्भ्रश्यति वै द्विजः । ज्येष्ठं वर्णमनुप्राप्य तस्माद्रक्षेत वै द्विजः ।
स्थितो ब्राह्मणधर्म्मेण ब्राह्मण्यमुपजीवति । क्षत्रियो वाथ वैश्यो वा ब्रह्मभूयं स गच्छति ।
यस्तु विप्रत्वमुत्सृज्य क्षात्रं धर्म्मं निषेवते । ब्राह्मण्यात् स परिभ्रष्टः क्षत्रयोनौ प्रजायते ।
वैश्यकर्म्म च यो विप्रो लोभमोहव्यपाश्रयः । ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा ।

स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात्। स्वधर्म्मात् प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुते। ६५७५
तथाधो निरयं प्राप्तो वर्णभ्रंशो बहिष्कृतः। ब्रह्मलोकात् परिभ्रष्टः शूद्रः समुपजायते।
क्षत्रियो वा महाभागो वैश्यो वा धर्म्मचारिणि। तानि कर्म्माण्युपादाय शूद्रकर्म्म निषेवते।
स्वस्थानात् स परिभ्रष्टो वर्णसङ्करतां गतः। ब्राह्मणः क्षत्रियो वैश्यः शूद्रत्वं याति तादृशः।
यस्तु शूद्रः स्वधर्म्मेण ज्ञानविज्ञानवान् शुचिः। धर्म्मज्ञो धर्म्मनिरतः स धर्म्मफलमश्नुते।
इदञ्चैवापरं देवि ब्रह्मणा समुदाहृतं। अध्यात्मं नैष्ठिकं सद्भिर्धर्म्मकामैर्निषेव्यते। ६५८०
उग्रान्नं गर्हितं देवि गणान्नं श्राद्धसूतकं। घुष्टान्नं नैव भोक्तव्यं शूद्रान्नं नैव कर्हिचित्।
शूद्रान्नं गर्हितं देवि सदा देवैर्म्महात्मभिः। पितामहमुखोत्सृष्टं प्रमाणमिति मे मतिः
शूद्रान्नेनावशेषेण जठरे म्रियते द्विजः। आहिताग्निस्तथा यज्वा स शूद्रगतिभाग्भवेत्।
तेन शूद्रान्नशेषेण ब्रह्मस्थानादपाकृतः। ब्राह्मणः शूद्रतामेति नास्ति तत्र विचारणा।
यस्यान्नेनावशेषेण जठरे म्रियते द्विजः। तां तां योनिं व्रजेद्विप्रो यस्यान्नमुपजीवति। ६५८५
ब्राह्मणत्वं शुभं प्राप्य दुर्ल्लभं योऽवमन्यते। अभोज्यान्यानि वाऽश्नाति स द्विजत्वात् पतेत वै।
सुरापो ब्रह्महा शूद्रश्चौरो भग्नव्रतोऽशुचिः। स्वाध्यायवर्ज्जितः पापो लुब्धो नैकृतिकः शठः।
अव्रती वृषलीभर्त्ता कुण्डाशी सोमविक्रयी। निहीनसेवी विप्रो हि पतते ब्रह्मयोनितः।
गुरुतल्पी गुरुद्वेषी गुरुकुत्सारतिश्च यः। ब्रह्मविच्चापि पतति ब्राह्मणो ब्रह्मवित्तम।
एभिस्तु कर्म्मभिर्द्देवि शुभैराचरितैस्तथा। शूद्रो ब्राह्मणतां याति वैश्यः क्षत्रियतां व्रजेत्। ६५९०
शूद्रकर्म्माणि सर्व्वाणि यथान्यायं यथाविधि। शुश्रूषां परिचर्य्याञ्च ज्येष्ठे वर्णे प्रयत्नतः।
कुर्य्यादविमनाः शूद्रः सततं सत्पथे स्थितः। देवद्विजातिसत्कर्त्ता सर्व्वातिथ्यकृतव्रतः।
ऋतुकालाभिगामी च नियतो नियताशनः। चौक्षश्चौक्षजनान्वेषी शेषान्नकृतभोजनः।
वृथामांसं न भुञ्जीत शूद्रो वैश्यत्वमर्हति। ऋतवागनहंवादी निर्द्वन्द्वः शमकोविदः।
यजते चैव यज्ञैश्च स्वाध्यायपरमः शुचिः। दान्तो ब्राह्मणसत्कर्त्ता सर्व्ववर्णानुसूयकः। ६५९५
गृहस्थव्रतमातिष्ठन् द्विकालकृतभोजनः। शेषाशी नियताहारो निष्कामो निरहंवदः।
अग्निहोत्रमुपासंश्च जुह्वानोऽथ यथाविधि। सर्व्वातिथ्यमुपातिष्ठन् शेषान्नकृतभोजनः।
त्रेताग्निमन्त्रविहितो वैश्यो भवति वै द्विजः। स वैश्यः क्षत्रियकुले शुचिर्महति जायते।
स वैश्यः क्षत्रियो जातो जन्मप्रभृति संस्कृतः। उपनीतो व्रतपरो द्विजो भवति सत्कृतः।
ददाति यजते यज्ञैः समृद्धैराप्तदक्षिणैः। अधीत्य स्वर्गमन्विच्छंस्त्रेताग्निशरणः सदा। ६६००
आर्त्तहस्तप्रदो नित्यं प्रजा धर्म्मेण पालयन्। सत्यः सत्यानि कुरुते नित्यं यः सुखदर्शनः।
धर्म्मदण्डेन निर्द्दण्डो धर्म्मकार्य्यानुशासकः। यन्त्रितः कार्य्यकरणैः षड्भागकृतलक्षणः।
ग्राम्यधर्म्मान्न सेवेत स्वच्छन्देनार्थकोविदः। ऋतुकाले तु धर्म्मात्मा पत्नीमुपशयेत् सदा।
सदोपवासी नियतः स्वाध्यायनिरतः शुचिः। बर्हिष्कान्तरिते नित्यं शयानोऽग्निगृहे सदा।

कर्म्मातिथ्यं निवृत्तिश्च कुर्व्वाणः सुमनाः सदा । शूद्राद्याच्यान्नमाप्नोति नित्यं विचरतीति श्रुतम् । ६६०५
सर्व्वांशो यदि वा कामात् किञ्चिदुच्छिष्टमश्नुते । विशुद्धो निर्म्मितेने वाचनं कुरुते च यः ।
सुवेषानि यथान्यायमनुपाल्य भैक्ष्यमेव च । नित्याध्ययनसिद्धोक्तः सुक्षान्तो वै यथाविधि ।
गोब्राह्मणहितार्थाय रणे चाभिमुखो हतः । त्रेताग्निमन्त्रपूतं वा समाविश्य द्विजो भवेत् ।
ज्ञानविज्ञानसम्पन्नः संस्कृतो वेदपारगः । विप्रो भवति धर्म्मात्मा क्षत्रियः स्वेन कर्म्मणा ।
एतैः कर्म्मफलैर्देवि न्यूनजातिकुलोद्भवः । शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः । ६६१०
ब्राह्मणो वाऽप्यसद्वृत्तः सर्व्वसङ्करभोजनः । ब्राह्मण्यं समनुत्सृज्य शूद्रो भवति तादृशः ।
कर्म्मभिः शुचिभिर्देवि शुद्धात्मा विजितेन्द्रियः । शूद्रोऽपि द्विजवत् सेव्य इति ब्रह्मानुशासनम् ।
स्वभावं कर्म्म च शुभं यत्र शूद्रेऽपि तिष्ठति । विशिष्टः स द्विजातेर्व्वै विज्ञेय इति मे मतिः ।
न योनिर्नापि संस्कारो न श्रुतं न च सन्ततिः । कारणानि द्विजत्वस्य वृत्तमेव तु कारणं ।
सर्व्वोऽयं ब्राह्मणो लोके वृत्तेन च विधीयते । वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति । ६६१५
ब्रह्मस्वभावः कल्याणि समः सर्व्वत्र मे मतिः । निर्गुणं निर्म्मलं ब्रह्म यत्र तिष्ठति स द्विजः ।
एते योनिफला देवि स्थानभागनिदर्शकाः । स्वयञ्च वरदेनोक्ता ब्रह्मणा सृजता प्रजाः ।
ब्राह्मणोऽपि महत् क्षेत्रं लोके चरति पादवत् । यत्तत्र बीजं वपति सा कृषिः प्रेत्य भाविनि ।
विघसाशिना सदा भाव्यं सत्पथालम्बिना तथा । ब्राह्मं मार्गमनुक्रम्य वर्त्तितव्यं बुभूषता ।
संहिताध्यायिना भाव्यं गृहे वै गृहमेधिना । नित्यं स्वाध्याययुक्तेन न चाध्ययनजीविना । ६६२०
एवम्भूतो हि यो विप्रः सततं सत्पथे स्थितः । आहिताग्निरधीयानो ब्रह्मभूयाय कल्पते ।
ब्राह्मण्यमेव सम्प्राप्य रक्षितव्यं यतात्मना । योनिप्रतिग्रहादानैः कर्म्मभिश्च शुचिस्मिते ।
एतत्ते गुह्यमाख्यातं यथा शूद्रो भवेद्द्विजः । ब्राह्मणो वा च्युतो धर्म्माद्यथा शूद्रत्वमाप्नुते ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि उमामहेश्वरसंवादे जातिकथने त्रिचत्वारिंशदधिक शतोऽध्यायः ॥ १४३ ॥

॥ उमोवाच ॥ भगवन् सर्व्वभूतेश सुरासुरनमस्कृत । धर्म्माधर्म्मौ नृणां देव ब्रूहि मे संशयं विभो ।
कर्म्मणा मनसा वाचा त्रिविधं हि नरः सदा । बध्यते बन्धनैः पाशैर्मुच्यतेऽप्यथ वा पुनः । ६६२५
केन शीलेन वै देव कर्म्मणा कीदृशेन वा । समाचारैर्गुणैर्व्वाक्यैः स्वर्गं यान्तीह मानवाः ।
॥ देवदेव उवाच ॥ देवि धर्म्मार्थतत्त्वज्ञे धर्म्मनित्ये दमे रते । सर्व्वप्राणिहितः प्रश्नः श्रूयतां बुद्धिवर्द्धनः ।
सत्यधर्म्मरताः सन्तः सर्व्वलिङ्गविवर्ज्जिताः । धर्म्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ।
नाधर्म्मेण न धर्म्मेण बध्यन्ते छिन्नसंशयाः । प्रलयोत्पत्तितत्त्वज्ञाः सर्व्वज्ञाः सर्व्वदर्शिनः ।
वीतरागा विमुच्यन्ते पुरुषाः कर्म्मबन्धनैः । कर्म्मणा मनसा वाचा ये न हिंसन्ति किञ्चन । ६६३०
ये न सज्जन्ति कस्मिंश्चित्ते न बध्यन्ति कर्म्मभिः । प्राणातिपाताद्विरताः शीलवन्तो दयान्विताः ।
तुल्यद्वेष्यप्रिया दान्ता मुच्यन्ते कर्म्मबन्धनैः । सर्व्वभूतदयावन्तो विश्वास्याः सर्व्वजन्तुषु ।

त्यक्तहिंसाः समाचारास्ते नराः स्वर्गगामिनः । परस्वे निर्ममा नित्यं परदारविवर्ज्जकाः ।
धर्म्मलब्धान्नभोक्तारस्ते नराः स्वर्गगामिनः । मातृवत् स्वसृवच्चैव नित्यं दुहितृवच्च ये ।
परदारेषु वर्त्तन्ते ते नराः स्वर्गगामिनः । स्तैन्यान्निवृत्ताः सततं सन्तुष्टाः स्वधनेन च । ६५९५
स्वभाग्यान्युपजीवन्ति ते नराः स्वर्गगामिनः । परदारेषु ये नित्यं चारित्रावृतलोचनाः ।
यतेन्द्रियाः शीलपरास्ते नराः स्वर्गगामिनः । एष देवकृतो मार्गः सेवितव्यः सदा बुधैः ।
अकषायकृतश्चैव मार्गः सेव्यः सदा बुधैः । स्वदारनिरता ये च ऋतुकालाभिगामिनः ।
अग्राम्यसुखभोक्तारस्ते नराः स्वर्गगामिनः । दानधर्म्मतपोयुक्तः शीलशौचदयात्मकः ।
वृत्त्यर्थं धर्म्महेतोर्व्वा सेवितव्यः सदा बुधैः । स्वर्गवासमभीप्सद्भिर्न सेव्यस्तत उत्तरः । ६६००
॥ उमोवाच ॥ वाचा तु बध्यते येन मुच्यतेऽप्यथ वा पुनः । तानि कर्म्माणि मे देव वद भूतपतेऽनघ ।
॥ महेश्वर उवाच ॥ आत्महेतोः परार्थे वा नर्म्महास्याश्रयात्तथा । ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः ।
वृत्त्यर्थं धर्म्महेतोर्व्वा कामकारात्तथैव च । अनृतं ये न भाषन्ते ते नराः स्वर्गगामिनः ।
श्लक्ष्णां वाणीं निराबाधां मधुरां दोषवर्ज्जितां । स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः ।
परुषं ये न भाषन्ते कटुकं निष्ठुरं तथा । अपैशुन्यरताः सन्तस्ते नराः स्वर्गगामिनः । ६६०५
पिशुनां ये न भाषन्ते मित्रभेदकरीं गिरं । ऋतं मैत्रन्तु भाषन्ते ते नराः स्वर्गगामिनः ।
ये वर्ज्जयन्ति परुषं परद्रोहञ्च मानवाः । सर्व्वभूतसमा दान्तास्ते नराः स्वर्गगामिनः ।
असत्प्रलापाद्विरता विरुद्धपरिवर्ज्जकाः । सौम्यप्रलापिनो ये च ते नराः स्वर्गगामिनः ।
न कोपाद्व्याहरन्ते ये वाचं हृदयदारिणीं । सान्त्वं वदन्ति क्रुद्धाऽपि ते नराः स्वर्गगामिनः ।
एष वाणीकृतो देवि धर्म्मः सेव्यः सदा नरैः । शुभः सत्यगुणो नित्यं वर्ज्जनीयं मृषा बुधैः । ६६१०
॥ उमोवाच ॥ मनसा बध्यते येन कर्म्मणा पुरुषः सदा । तन्मे ब्रूहि महाभाग देवदेव पिनाकधृक् ।
॥ महेश्वर उवाच ॥ मानसेनेह धर्म्मेण संयुक्ताः पुरुषाः सदा । स्वर्गं गच्छन्ति कल्याणि तन्मे कीर्त्तयतः शृणु ।
दुष्प्रणीतेन मनसा दुष्प्रणीतान्तराकृतिः । मनो बध्यति येनेह शृणु वाक्यं शुभानने ।
अरण्ये विजने न्यस्तं परस्वं दृश्यते यदा । मनसाऽपि न हिंसन्ति ते नराः स्वर्गगामिनः ।
ग्रामे गृहे वा यद्द्रव्यं पारक्यं विजने स्थितं । नाभिनन्दन्ति वै नित्यं ते नराः स्वर्गगामिनः । ६६१५
तथैव परदारान् ये कामवृत्तान् रहोगतान् । मनसाऽपि न हिंसन्ति ते नराः स्वर्गगामिनः ।
शत्रुं मित्रञ्च ये नित्यं तुल्येन मनसा नराः । भजन्ति मैत्राः सङ्गम्य ते नराः स्वर्गगामिनः ।
श्रुतवन्तो दयावन्तः शुचयः सत्यसङ्गराः । स्वैरर्थैः परिसन्तुष्टास्ते नराः स्वर्गगामिनः ।
अवैरा ये त्वनायासा मैत्रीचित्तगताः सदा । सर्व्वभूतदयावन्तस्ते नराः स्वर्गगामिनः ।
श्रद्धावन्तो दयावन्तश्चोक्षाश्चोक्षजनप्रियाः । धर्म्माधर्म्मविदो नित्यं ते नराः स्वर्गगामिनः । ६६२०
शुभानामशुभानाञ्च कर्म्मणां फलसञ्चये । विपाकज्ञाश्च ये देवि ते नराः स्वर्गगामिनः ।
न्यायोपेता गुणोपेता देवद्विजपराः सदा । समुत्थानमनुप्राप्तास्ते नराः स्वर्गगामिनः ।

शुभैः कर्म्मफलैर्देवि मयैतैः परिकीर्त्तिताः । धर्म्माधर्म्मपरा भूयः किं श्रोतुं त्वमिहेच्छसि ॥

॥ उमोवाच ॥ महान्मे संशयः कश्चिन्मर्त्त्यान् प्रति महेश्वर । तस्मात्त्वं नैपुणेनाद्य मम व्याख्यातुमर्हसि ॥

केनायुर्लभते दीर्घं कर्म्मणा पुरुषः प्रभो । तपसा वाऽपि देवेश केनायुर्लभते महत् ॥ ६६६५

क्षीणायुः केन भवति कर्म्मणा भुवि मानवः । विपाकं कर्म्मणो देव वक्तुमर्हस्यनिन्दित ॥

अपरे च महाभागा मन्दभाग्यास्तथा परे । अकुलीनास्तथा चान्ये कुलीनाश्च तथाऽपरे ॥

दुर्द्दर्शाः केचिदाभान्ति नराः काष्ठमया इव । प्रियदर्शास्तथा चान्ये दर्शनादेव मानवाः ॥

दुष्प्रज्ञाः केचिदाभान्ति केचिदाभान्ति पण्डिताः । महाप्रज्ञास्तथैवान्ये ज्ञानविज्ञानभाविनः ॥

अल्पाबाधास्तथा केचिन्महाबाधास्तथाऽपरे । दृश्यन्ते पुरुषा देव तन्मे शंसितुमर्हसि ॥ ६६७०

॥ देवदेव उवाच ॥ हन्त तेऽहं प्रवक्ष्यामि देवि कर्म्मफलोदयम् । मर्त्त्यलोके नरः सर्व्वो येन स्वं फलमश्नुते ॥

प्राणातिपाते यो रौद्रो दण्डहस्तोद्यतस्तथा । नित्यमुद्यतशस्त्रश्च हन्ति भूतगणान्नरः ॥

निर्द्दयः सर्व्वभूतानां नित्यमुद्वेगकारकः । अपि कीटपिपीलानामशरण्यः सुनिर्घृणः ॥

एवम्भूतो नरो देवि निरयं प्रतिपद्यते । विपरीतस्तु धर्म्मात्मा रूपवानभिजायते ॥

निरयं याति हिंसात्मा याति स्वर्गमहिंसकः । यातनां निरये रौद्रीं स कृच्छ्रां लभते नरः ॥ ६६७५

यः कश्चिन्निरयात्तस्मात् समुत्तरति कर्हिचित् । मानुष्यं लभते चापि हीनायुस्तत्र जायते ॥

पापेन कर्म्मणा देवि बद्धो हिंसारतिर्नरः । अप्रियः सर्व्वभूतानां हीनायुरुपजायते ॥

यस्तु शुक्लाभिजातीयः प्राणिघातविवर्ज्जकः । निक्षिप्तदण्डो निर्द्दण्डो न हिंसति कदाचन ॥

न घातयति नो हन्ति घ्नन्तं नैवानुमोदते । सर्व्वभूतेषु सस्नेहो यथात्मनि तथा परे ॥

ईदृशः पुरुषोत्कर्षो देवि देवत्वमश्नुते । उपपन्नान् सुखान् भोगानुपाश्नाति मुदा युतः ॥ ६६८०

अथ चेन्मानुषे लोके कदाचिदुपपद्यते । तत्र दीर्घायुरुत्पन्नः स नरः सुखमेधते ॥

एष दीर्घायुषां मार्गः सुवृत्तानां सुकर्म्मिणाम् । प्राणिहिंसाविमोक्षेण ब्रह्मणा समुदीरितः ॥

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि उमामहेश्वरसंवादे चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥१४४॥

॥ उमोवाच ॥ किंशीलः किंसमाचारः पुरुषः कैश्च कर्म्मभिः । स्वर्गं समभिपद्येत सम्प्रदानेन केन वा ॥

॥ महेश्वर उवाच ॥ दाता ब्राह्मणसत्कर्त्ता दीनान्धकृपणादिषु । भक्ष्यभोज्यान्नपानानां वाससाञ्च प्रदायकः ॥

प्रतिश्रयान् सभाः कूपान् प्रपाः पुष्करिणीस्तथा । नैत्यकानि च सर्व्वाणि किमिच्छकमतीव च ॥ ६६८५

आसनं शयनं यानं धनं रत्नं गृहांस्तथा । भक्ष्यजातानि सर्व्वाणि गाः क्षेत्राणि च योषितः ॥

सुप्रतीतमना नित्यं यः प्रयच्छति मानवः । एवम्भूतो नरो देवि देवलोकेऽभिजायते ॥

तत्रोष्य सुचिरं कालं भुक्त्वा भोगाननुत्तमान् । सहाप्सरोभिर्मुदितो रमते नन्दनादिषु ॥

तस्मात् स्वर्गाच्च्युतो लोकान्मानुषेषूपजायते । महाभोगे कुले देवि धनधान्यसमन्विते ॥

तत्र कामगुणैः सर्व्वैः समुपेतो मुदा युतः । महाभोगो महाकोशो धनी भवति मानवः ॥ ६६९०

एते देवि महाभागाः प्राणिनो दानशीलिनः । ब्रह्मणा वै पुरा प्रोक्ताः सर्व्वस्य प्रियदर्शनाः ॥

अपरे मानवा देवि प्रदानकृपणा द्विजैः । याचिता न प्रयच्छन्ति विद्यमानेऽप्यबुद्धयः ।
दीनान्धकृपणान् दृष्ट्वा भिक्षुकानतिथीनपि । याच्यमाना निवर्त्तन्ते जिह्वालोभसमन्विताः ।
न धनानि न वासांसि न भोगांश्च न काञ्चनम् । न गावो नान्नविकृतिं प्रयच्छन्ति कदाचन ।
अप्रवृत्तास्तु ये लुब्धा नास्तिका दानवर्ज्जिताः । एवम्भूता नरा देवि निरयं यान्त्यबुद्धयः । ६९५
ते वै मनुष्यतां यान्ति यदा कालस्य पर्य्यये । धनरिक्ते कुले जन्म लभन्ते स्वल्पबुद्धयः ।
क्षुत्पिपासापरीताश्च सर्व्वलोकबहिष्कृताः । निराशाः सर्व्वभोगेभ्यो जीवन्त्यधमजीविकाः ।
अल्पभोगे कुले जाताः अल्पभोगरता नराः । अनेन कर्म्मणा देवि भवन्त्यधनिनो नराः ।
अपरे स्तम्भिनो नित्यं मानिनो पापतो नराः । आसनार्हस्य ये पीठं न प्रयच्छन्त्यचेतसः ।
मार्गार्हस्य च ये मार्गं न ददत्यल्पमेधसः । पाद्यार्हस्य च ये पाद्यं न ददत्यल्पबुद्धयः । ७००
अर्घार्हांश्च सत्कारैर्नार्च्चयन्ति यथाविधि । अर्घ्यमाचमनीयं वा न यच्छन्त्यबुधा नराः ।
गुरुञ्चाभिगतं प्रेम्णा गुरुवन्न बुभूषते । अभिमानप्रवृत्तेन लोभेन समवस्थिताः ।
मान्यांश्चाप्यवमन्यन्ते वृद्धान् परिभवन्ति च । एवंविधा नरा देवि सर्व्वे निरयगामिनः ।
ते वै यदि नरास्तस्मान्निरयादुत्तरन्ति वै । वर्षपूगैस्ततो जन्म लभन्ते कुत्सिते कुले ।
श्वपाकपुल्कसादीनां कुत्सितानामचेतसां । कुलेषु तेषु जायन्ते गुरुवृद्धापचायिनः । ७०५
न स्तम्भी न च मानी यो देवताद्विजपूजकः । लोकपूज्यो नमस्कर्त्ता प्रश्रितो मधुरं वचः ।
सर्व्ववर्णप्रियकरः सर्व्वभूतहितः सदा । अद्वेषी सुमुखः श्लक्ष्णः स्निग्धवाणीप्रदः सदा ।
स्वागतेनैव सर्व्वेषां भूतानामविहिंसकः । यथार्हसत्क्रियापूर्व्वमर्च्चयन्नवतिष्ठति ।
मार्गार्हाय ददन्मार्गं गुरुं गुरुवदर्च्चयन् । अतिथिप्रग्रहरतस्तथाऽभ्यागतपूजकः ।
एवम्भूतो नरो देवि स्वर्गतिं प्रतिपद्यते । ततो मानुषतां प्राप्य विशिष्टकुलजो भवेत् । ७१०
तत्रासौ विपुलैर्भोगैः सर्व्वरत्नसमन्वितैः । यथार्हदाता चार्हेषु धर्म्मचर्य्यापरो भवेत् ।
सम्मतः सर्व्वभूतानां सर्व्वभूतनमस्कृतः । स्वकर्म्मफलमाप्नोति स्वयमेव नरः सदा ।
उदात्तकुलजातीय उदात्ताभिजनः सदा । एष धर्म्मो मया प्रोक्तो विधात्रा स्वयमीरितः ।
यस्तु रौद्रसमाचारः सर्व्वसत्त्वभयङ्करः । हस्ताभ्यां यदि वा पद्भ्यां रज्ज्वा दण्डेन वा पुनः ।
लोष्टैः स्तम्भैरुपायैर्व्वा जन्तून् बाधति शोभने । हिंसार्थं निकृतिप्रज्ञः प्रोद्वेजयति चैव हि । ७१५
उपक्रामति जन्तूंश्च उद्वेगजननः सदा । एवंशीलसमाचारो निरयं प्रतिपद्यते ।
स वै मनुष्यतां गच्छेद्यदि कालस्य पर्य्ययात् । बह्वाबाधपरिक्लिष्टे जायते सोऽधमे कुले ।
लोकद्वेष्योऽधमः पुंसां स्वयं कर्म्मफलैः कृतैः । एष देवि मनुष्येषु बोद्धव्यो ज्ञातिबन्धुषु ।
अपरः सर्व्वभूतानि दयावाननुपश्यति । मैत्रदृष्टिः पितृसमो निर्व्वैरो नियतेन्द्रियः ।
नोद्वेजयति भूतानि न विहिंसयते तथा । हस्तपादैः सुनियतैर्व्विश्वास्यः सर्व्वजन्तुषु । ७२०
न रज्ज्वा न च दण्डेन न लोष्टैर्नायुधेन च । उद्वेजयति भूतानि श्लक्ष्णकर्म्मा दयापरः ।

एवंशीलसमाचारः स्वर्गे समुपजायते। तथाविधे भवने दिव्ये मुदा वसति देववत्।

स चेत् कर्म्मक्षयान्मर्त्यो मनुष्येषूपजायते। अल्पबाधो निरातङ्कः स जातः सुखमेधते।

सुखभागी निराबाधो निरुद्वेगः सदा नरः। एष देवि सतां मार्गो बाधा यत्र न विद्यते।

॥ उमोवाच ॥ इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः। ज्ञानविज्ञानसम्पन्नाः प्रज्ञावन्तोऽर्थकोविदाः। ६७२५

दुष्प्रज्ञाश्चापरे देव ज्ञानविज्ञानवर्ज्जिताः। केन कर्म्मविपाकेन प्रज्ञावान् पुरुषो भवेत्।

अल्पप्रज्ञो विरूपाक्ष कथं भवति मानवः। एतन्मे संशयं छिन्धि सर्व्वधर्म्मभृताम्बर।

जात्यन्धाश्चापरे देव रोगार्त्ताश्चापरे तथा। नराः क्लीवाश्च दृश्यन्ते कारणं ब्रूहि तत्र वै।

॥ महेश्वर उवाच ॥ ब्राह्मणान् वेदविदुषः सिद्धान् धर्म्मविदस्तथा। परिपृच्छन्त्यहरहः कुशलाः कुशलं तथा।

वर्ज्जयन्त्यशुभं कर्म्म सेवमानाः शुभं सदा। लभन्ते स्वर्गतिं नित्यमिह लोके तथा सुखं। ६७३०

स चेन्मानुषतां याति मेधावी तत्र जायते। श्रुतं प्रज्ञानुगं यस्य कल्याणमुपजायते।

परदारेषु ये मूढाश्चक्षुर्दुष्टं प्रयुञ्जते। तेन दुष्टस्वभावेन जात्यन्धास्ते भवन्ति हि।

मनसा च प्रदुष्टेन नग्नां पश्यन्ति ये स्त्रियं। रोगार्त्तास्ते भवन्तीह नरा दुष्कृतकारिणः।

ये तु मूढा दुराचारा वियोनौ मैथुने रताः। पुरुषेषु च दुष्प्रज्ञाः क्लीवत्वमुपयान्ति ते।

पशूंश्च ये घातयन्ति ये चैव गुरुतल्पगाः। प्रकीर्णमैथुना ये च क्लीवा जायन्ति ते नराः। ६७३५

॥ उमोवाच ॥ सावद्यं किन्नु वै कर्म्म निरवद्यन्तथैव च। श्रेयः कुर्व्वन्नवाप्नोति मानवो देवसत्तम।

॥ महेश्वर उवाच ॥ श्रेयांसि मार्गमन्विच्छन् सदा यः पृच्छति द्विजान्। धर्म्मान्वेषी गुणाकाङ्क्षी स स्वर्गं समुपाश्नुते।

यदि मानुषतां देवि कदाचित् परिगच्छति। मेधावी धारणायुक्तः प्राज्ञस्तत्राभिजायते।

एष देवि सतां धर्म्मो मन्तव्यो भूतिकारकः। नृणां हितार्थाय मया तव वै समुदाहृतः।

॥ उमोवाच ॥ अपरे स्वल्पविज्ञाना धर्म्मविद्वेषिणो नराः। ब्राह्मणान् वेदविदुषो नेच्छन्ति परिसर्पितुं। ६७४०

व्रतवन्तो नराः केचित् श्रद्धादमपरायणाः। अव्रता भ्रष्टनियमास्तथाऽन्ये राक्षसोपमाः।

यज्वानश्च तथैवान्ये निर्होमाश्च तथाऽपरे। केन कर्म्मविपाकेन भवन्तीह वदस्व मे।

॥ महेश्वर उवाच ॥ आगमाल्लोकधर्म्माणां मर्य्यादाः पूर्व्वनिर्म्मिताः। प्रामाण्येनानुवर्त्तन्तो दृश्यन्ते च दृढव्रताः।

अधर्म्मं धर्म्ममित्याहुर्ये च मोहवशं गताः। अव्रता नष्टमर्य्यादास्ते प्रोक्ता ब्रह्मराक्षसाः।

ते चेत् कालकृतोद्योगात् सम्भवन्तीह मानुषाः। निर्होमा निर्व्वषट्कारास्ते भवन्ति नराधमाः। ६७४५

एष देवि मया सर्व्वः संशयच्छेदनाय वै। कुशलाकुशलो नृणां व्याख्यातो धर्म्मसागरः।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि उमामहेश्वरसंवादे पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥१४५॥

॥ नारद उवाच ॥ एवमुक्त्वा महादेवः श्रोतुकामः स्वयं प्रभुः। अनुकूलां प्रियां भार्य्यां पार्श्वस्थां समभाषत।

॥ महादेव उवाच ॥ परावरज्ञे धर्म्मज्ञे तपोवननिवासिनि। साध्वि सुभ्रु सुकेशान्ते हिमवत्पर्व्वतात्मजे।

दक्षे शमदमोपेते निर्म्ममे धर्म्मचारिणि। पृच्छामि त्वां वरारोहे पृष्टा वद ममेप्सितं।

सावित्री ब्रह्मणः साध्वी कौशिकस्य शची सती। मार्कण्डेयस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य च। ६७५०

वरुणस्य तथा गौरी सूर्य्यस्य च सुवर्चला । रोहिणी शशिनः साध्वी स्वाहा चैव विभावसोः ।
अदितिः कश्यपस्याथ सर्व्वास्ताः पतिदेवताः । पृष्टाश्चोपासिताश्चैव तास्त्वया देवि नित्यशः ।
तेन त्वां परिपृच्छामि धर्म्मज्ञे धर्म्मवादिनि । स्त्रीधर्म्मं श्रोतुमिच्छामि त्वयोदाहृतमादितः ।
सहधर्म्मचरी मे त्वं समशीला समव्रता । समानसारवीर्य्या च तपस्तीव्रं कृतञ्च ते ।
त्वया ह्युक्तो विशेषेण गुणवान् स भविष्यति । लोके चैव तथा देवि प्रमाणत्वमुपैष्यति । ६७५५
स्त्रियश्चैव विशेषेण स्त्रीजनस्य गतिः परा । गौर्गां गच्छति सुश्रोणि लोकेष्वेषा स्थितिः सदा ।
मम चार्द्धं शरीरस्य तव चार्द्धेन निर्म्मितं । सुरकार्य्यकरी च त्वं लोकसन्तानकारिणि ।
तव सर्व्वः सुविदितः स्त्रीधर्म्मः शाश्वतः शुभे । तस्मादशेषं तं ब्रूहि स्त्रीधर्म्मं विस्तरेण मे ।
॥ उमोवाच ॥ भगवन् सर्व्वभूतेश भूतभव्यभवोद्भव । त्वत्प्रभावादियं देव वाक् चैव प्रतिभाति मे ।
इमास्तु नद्यो देवेश सर्व्वतीर्थोदकैर्युताः । उपस्पर्शनहेतोस्त्वा समुपयान्ति समीपतः । ६७६०
एताभिः सह संमन्त्र्य प्रवक्ष्याम्यनुपूर्व्वशः । प्रभवन् योऽनहंवादी स वै पुरुष उच्यते ।
स्त्री च भूतेश सततं स्त्रियमेवानुधावति । मया सम्मानिताश्चैव भविष्यन्ति सरिद्वराः ।
एषा सरस्वती पुण्या नदीनामुत्तमा नदी । प्रथमा सर्व्वसरितां नदी सागरगामिनी ।
विपाशा च वितस्ता च चन्द्रभागा इरावती । शतद्रुर्देविका सिन्धुः कौशिकी गोमती तथा ।
तथा देवनदी चेयं सर्व्वतीर्थाभिसंवृता । गगनाद्गां गता देवी गङ्गा सर्व्वसरिद्वरा । ६७६५
इत्युक्त्वा देवदेवस्य पत्नी धर्म्मभृतां वरा । स्मितपूर्व्वमथाभाष्य सर्व्वास्ताः सरितस्तथा ।
अपृच्छद्देवमहिषी स्त्रीधर्म्मं धर्म्मवत्सला । स्त्रीधर्म्मकुशलास्ता वै गङ्गाद्याः सरिताम्वराः ।
॥ उमोवाच ॥ अयं भगवता प्रोक्तः प्रश्नः स्त्रीधर्म्मसंश्रितः । तन्तु संमन्त्र्य युष्माभिर्वक्तुमिच्छामि शङ्करं ।
न चैकसाध्यं पश्यामि विज्ञानं भुवि कस्यचित् । दिवि वा सागरगमास्तेन वो मानयाम्यहं ।
एवं सर्व्वाः सरिच्छ्रेष्ठाः पृष्टाः पुण्यतमाः शिवाः । ततो देवनदी गङ्गा नियुक्ता प्रतिपूज्य च । ६७७०
बह्वीभिर्बुद्धिभिः स्फीता स्त्रीधर्म्मज्ञा शुचिस्मिता । शैलराजसुतां देवीं पुण्या पापभयापहा ।
बुद्ध्या विनयसम्पन्ना सर्व्वधर्म्मविशारदा । सस्मितं बहुबुद्ध्याढ्या गङ्गा वचनमब्रवीत् ।
धन्याऽस्म्यनुगृहीताऽस्मि देवि धर्म्मपरायणे । या त्वं सर्व्वजगन्मान्या नदीं मानयसेऽनघे ।
प्रभवन् पृच्छते यो हि सम्मानयति वा पुनः । नूनं मन्ये स धर्म्मात्मा पण्डिताख्यां स गच्छति ।
ज्ञानविज्ञानसम्पन्नानूहापोहविशारदान् । प्रवक्तॄन् पृच्छते योऽन्यान् स वै नापदमृच्छति । ६७७५
अन्यथा बहुबुद्ध्याढ्यो वाक्यं वदति संसदि । अन्यथैव ह्यहंवादी दुर्ब्बलं वदते वचः ।
दिव्यज्ञाने दिवि श्रेष्ठे दिव्यैः पुण्यैः सदोत्थिते । त्वमेवार्हसि नो देवि स्त्रीधर्म्माननुभाषितुं ।
॥ भीष्म उवाच ॥ ततः साराधिता देवी गङ्गया बहुभिर्गुणैः । प्राह सर्व्वमशेषेण स्त्रीधर्म्मं सुरसुन्दरी ।
स्त्रीधर्म्मो मां प्रति यथा प्रतिभाति यथाविधि । तमहं कीर्त्तयिष्यामि तथैव प्रथितो भव ।
स्त्रीधर्म्मः पूर्व्व एवायं विवाहे बन्धुभिः कृतः । सह धर्म्मचरी भर्त्तुर्भवत्यग्निसमीपतः । ६७८०

सुस्वभावा सुवचना सुवृत्ता सुखदर्शना । पुत्रवक्त्रमिवाभीक्ष्णं भर्त्तुर्वदनमीक्षती ।
या साध्वी नियताचारा सा भवेद्धर्म्मचारिणी । श्रुत्वा दम्पतिधर्म्मं वै सह धर्म्मकृतं शुभं ।
या भवेद्धर्म्मपरमा नारी भर्त्तृसमव्रता । देववत् सततं साध्वी भर्त्तारमनुपश्यति ।
शुश्रूषां परिचर्य्याञ्च देवतुल्यं प्रकुर्व्वती । वश्या भावेन सुमनाः सुव्रता सुखदर्शना ।
अनन्यचित्ता सुमुखी सा नारी धर्म्मचारिणी । परुषाण्यपि चोक्ता या दृष्टा वा क्रूरचक्षुषा । १०७५
सुप्रसन्नमुखी भर्त्तुर्या नारी सा पतिव्रता । न चन्द्रसूर्य्यौ न तरुं पुन्नाम्नो या निरीक्षते ।
भर्त्तृवर्ज्जं वरारोहा सा भवेद्धर्म्मचारिणी । दरिद्रं व्याधितं दीनमध्वना परिकर्षितं ।
पतिं पुत्रमिवोपास्ते सा नारी धर्म्मचारिणी । या नारी प्रयता दक्षा या नारी पुत्रिणी भवेत् ।
पतिप्रिया पतिप्राणा सा नारी धर्म्मभागिनी । शुश्रूषां परिचर्य्याञ्च करोत्यविमनाः सदा ।
सुप्रीता च विनीता च सा नारी धर्म्मभागिनी । विभर्त्त्यन्नप्रदानेन कुटुम्बञ्चैव नित्यदा । १०८०
न कामेषु न भोगेषु नैश्वर्य्ये न सुखे तथा । स्पृहा यस्या यथा पत्यौ सा नारी धर्म्मभागिनी ।
कल्योत्थानरतिर्नित्यं गुरुशुश्रूषणे रता । सुसंमृष्टक्षया चैव गोशकृत्कृतलेपना ।
अग्निकार्य्यपरा नित्यं सदा पुष्पबलिप्रदा । देवतातिथिभृत्यानां निरुप्य पतिना सह ।
शेषान्नमुपभुञ्जाना यथान्यायं यथाविधि । तुष्टपुष्टजना नित्यं नारी धर्म्मेण युज्यते ।
श्वश्रूश्वशुरयोः पादौ तोषयन्ती गुणान्विता । मातापितृपरा नित्यं या नारी सा तपोधना । १०८५
ब्राह्मणान्दुर्ब्बलानाथान् दीनान्धकृपणांस्तथा । बिभर्त्त्यन्नेन या नारी सा पतिव्रतभागिनी ।
व्रतं चरति या नित्यं दुश्चरं लघुसत्त्वया । पतिचित्ता पतिहिता सा पतिव्रतभागिनी ।
पुण्यमेतत्तपश्चैव स्वर्गश्चैव सनातनः । या नारी भर्त्तृपरमा भवेद्भर्त्तृव्रता सती ।
पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः । पत्या गतिः समा नास्ति दैवतं वा यथा पतिः ।
पतिप्रसादात् स्वर्गो वा तुल्यो नार्य्या न वा भवेत् । अहं स्वर्गं न हीच्छेयं त्वय्यप्रीते महेश्वरे । १०९०
यद्यकार्य्यमधर्म्मं वा यदि वा प्राणनाशनं । पतिर्ब्रूयाद्दरिद्रो वा व्याधितो वा कथञ्चन ।
आपन्नो रिपुसंस्थो वा ब्रह्मशापार्द्दितोऽपि वा । आपद्धर्म्माननुप्रेक्ष्य तत्कार्य्यमविशङ्कया ।
एष देव मया प्रोक्तः स्त्रीधर्म्मो वचनात्तव । या त्वेवं भाविनी नारी सा पतिव्रतभागिनी ।
॥ भीष्म उवाच ॥ इत्युक्तः स तु देवेश प्रतिपूज्य गिरेः सुतां । लोकान् विसर्ज्जयामास सर्व्वैरनुचरैः सह ।
ततो ययुर्भूतगणाः सरितश्च यथागतं । गन्धर्व्वाप्सरसश्चैव प्रणम्य शिरसा भवं । १०९५
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि उमामहेश्वरसंवादे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥
॥ ऋषय ऊचुः ॥ पिनाकिन् भगनेत्रघ्न सर्व्वलोकनमस्कृत । माहात्म्यं वासुदेवस्य श्रोतुमिच्छामि शङ्कर ।
॥ महेश्वर उवाच ॥ पितामहादपि वरः शाश्वतः पुरुषो हरिः । कृष्णो जाम्बूनदाभासो व्यभ्रे सूर्य्य इवोदितः ।
दशबाहुर्महातेजा देवतारिनिसूदनः । श्रीवत्साङ्को हृषीकेशः सर्व्वदैवतपूजितः ।

ब्रह्मा तस्योदरभवस्तथा चाहं शिरोभवः। शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुरासुराः।
ऋषयो देहसम्भूतास्तथा लोकाश्च शाश्वताः। पितामहगृहं साक्षात् सर्व्वदेवगृहञ्च सः। ६८१०
सोऽस्याः पृथिव्याः कृत्स्नायाः स्रष्टा त्रिभुवनेश्वरः। संहर्त्ता चैव भूतानां स्थावरस्य चरस्य च।
स हि देववरः साक्षाद्देवनाथः परन्तपः। सर्व्वज्ञः स हि संश्लिष्टः सर्व्वगः सर्व्वतोमुखः।
परमात्मा हृषीकेशः सर्व्वव्यापी महेश्वरः। न तस्मात् परमं भूतं त्रिषु लोकेषु किञ्चन।
सनातनो वै मधुहा गोविन्द इति विश्रुतः। स सर्व्वान् पार्थिवान् सङ्ख्ये घातयिष्यति मानदः।
सुरकार्य्यार्थमुत्पन्नो मानुषं वपुरास्थितः। न हि देवगणाः शक्तास्त्रिविक्रमविनाकृताः। ६८१५
भुवने देवकार्य्याणि कर्त्तुं नायकवर्ज्जिताः। नायकः सर्व्वभूतानां सर्व्वदेवनमस्कृतः।
एतस्य देवनाथस्य देवकार्य्यरतस्य च। ब्रह्मभूतस्य सततं ब्रह्मर्षिशरणस्य च।
ब्रह्मा वसति गर्भस्थः शरीरे सुखसंस्थितः। शर्व्वः सुखं संश्रितश्च शरीरे सुखसंस्थितः।
सर्व्वाः सुखं संश्रितास्तु शरीरे तस्य देवताः। स देवः पुण्डरीकाक्षः श्रीगर्भः श्रीसहोषितः।
शार्ङ्गचक्रायुधः खड्गी सर्व्वनागरिपुध्वजः। उत्तमेन च शीलेन शौचेन च दमेन च। ६८२०
पराक्रमेण वीर्य्येण वपुषा दर्शनेन च। आरोहेण प्रमाणेन धैर्य्येणार्ज्जवसम्पदा।
आनृशंस्येन रूपेण बलेन च समन्वितः। अस्त्रैः समुदितः सर्व्वैर्दिव्यैरद्भुतदर्शनैः।
योगमायः सहस्राक्षो निरवद्यो महामनाः। वीरो मित्रजनश्लाघी ज्ञातिबन्धुजनप्रियः।
क्षमावांश्चानहंवादी ब्रह्मण्यो ब्रह्मनायकः। भयहर्त्ता भयार्त्तानां मित्राणां नन्दिवर्द्धनः।
शरण्यः सर्व्वभूतानां दीनानां पालने रतः। श्रुतवानर्थसम्पन्नः सर्व्वभूतनमस्कृतः। ६८२५
समाश्रितानां वरदः शत्रूणामपि धर्म्मवित्। नीतिज्ञो नीतिसम्पन्नो ब्रह्मवादी जितेन्द्रियः।
भवार्थमिह देवानां बुद्ध्या परमया युतः। प्राजापत्ये शुभे मार्गे मानवे धर्म्मसंहिते।
समुत्पत्स्यति गोविन्दो मनोर्व्वंशे महात्मनः। अङ्गो नाम मनोः पुत्र अन्तर्द्धामा ततः परं।
अन्तर्द्धाम्नो हविर्द्धामा प्रजापतिरनिन्दितः। प्राचीनबर्हिर्भविता हविर्द्धाम्नः सुतो महान्।
तस्य प्रचेतःप्रमुखा भविष्यन्ति दशात्मजाः। प्राचेतसस्तथा दक्षो भवितेह प्रजापतिः। ६८३०
दाक्षायण्यास्तथादित्यो मनुरादित्यतस्तथा। मनोश्च वंशज इला सुद्युम्नश्च भविष्यति।
बुधात् पुरूरवाश्चापि तस्मादायुर्भविष्यति। नहुषो भविता तस्माद्ययातिस्तस्य चात्मजः।
यदुस्तस्मान्महासत्त्वः क्रोष्टा तस्माद्भविष्यति। क्रोष्टुश्चैव महान् पुत्रो वृजिनीवान् भविष्यति।
वृजिनीवतश्च भविता उषद्गुरपराजितः। उषद्गोर्भविता पुत्रः शूरश्चित्ररथस्तथा।
तस्य त्ववरजः पुत्रः शूरो नाम भविष्यति। तेषां विख्यातवीर्य्याणां चारित्रगुणशालिनां। ६८३५
यज्वनां सुविशुद्धानां वंशे ब्राह्मणसम्मते। स शूरः क्षत्रियश्रेष्ठो महावीर्य्यो महायशाः।
स्ववंशविस्तरकरं जनयिष्यति मानदः। वसुदेव इति ख्यातं पुत्रमानकदुन्दुभिं।

तस्य पुत्रश्चतुर्ब्बाहुर्व्वासुदेवो भविष्यति। दाता ब्राह्मणसत्कर्त्ता ब्रह्मभूतो द्विजप्रियः।
राज्ञो मागधसंरुद्धान् मोक्षयिष्यति यादवः। जरासन्धञ्च राजानं निर्जित्य गिरिगह्वरे।
सर्व्वपार्थिवरत्नाढ्यो भविष्यति स वीर्य्यवान्। पृथिव्यामप्रतिहतो वीर्य्येण च भविष्यति। ६८८०
विक्रमेण च सम्पन्नः सर्व्वपार्थिवपार्थिवः। शूरसेनेषु संभूतो द्वारकायां वसन् प्रभुः।
पालयिष्यति गां देवीं विजित्य नयवित् सदा। तं भवन्तः समासाद्य वाङ्माल्यैरर्हणैर्वरैः।
अर्च्चयन्तु यथान्यायं ब्रह्माणमिव शाश्वतं। यो हि मां द्रष्टुमिच्छेत ब्रह्माणञ्च पितामहं।
द्रष्टव्यस्तेन भगवान् वासुदेवः प्रतापवान्। दृष्टे तस्मिन्नहं दृष्टो न मेऽस्त्यत्र विचारणा।
पितामहो वा देवेश इति वित्त तपोधनाः। स यस्य पुण्डरीकाक्षः प्रीतियुक्तो भविष्यति। ६८८५
तस्य देवगणः प्रीतो ब्रह्मपूर्व्वो भविष्यति। यश्च तं मानवो लोके संश्रयिष्यति केशवं।
तस्य कीर्त्तिर्जयश्चैव स्वर्गश्चैव भविष्यति। धर्म्माणां देशिकः साक्षात् स भविष्यति धर्म्मभाक्।
धर्म्मविद्भिः सदैवासौ नमस्कार्य्यः सदोद्यतैः। धर्म्म एव परो हि स्यात्तस्मिन्नभ्यर्च्चिते विभौ।
स हि देवो महातेजाः प्रजाहितचिकीर्षया। धर्म्मार्थं पुरुषव्याघ्र ऋषिकोटीः ससर्ज्ज ह।
ताः सृष्टास्तेन विधिना पर्व्वते गन्धमादने। सनत्कुमारप्रमुखास्तिष्ठन्ति तपसाऽन्विताः। ६८९०
तस्मात् स वाग्मी धर्म्मज्ञो नमस्यो द्विजपुङ्गवाः। दिवि श्रेष्ठो हि भगवान् हरिर्नारायणः प्रभुः।
वन्दितो हि स वन्देत मानितो मानयीत च। अर्च्चितश्चार्च्चयेन्नित्यं पूजितः प्रतिपूजयेत्।
दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत्। अर्च्चितश्चार्च्चयेन्नित्यं स देवो द्विजसत्तमाः।
एतत्तस्यानवद्यस्य विष्णोर्वै परमं व्रतं। आदिदेवस्य महतः सज्जनाचरितं सदा।
भुवनेऽभ्यर्च्चितो नित्यं देवैरपि सनातनः। अभयेनानुरूपेण युज्यन्ते तमनुव्रताः। ६८९५
कर्म्मणा मनसा वाचा स नमस्यो द्विजैः सदा। यत्नवद्भिरुपस्थाय द्रष्टव्यो देवकीसुतः।
एष वोऽभिहितो मार्गो मया वै मुनिसत्तमाः। तं दृष्ट्वा सर्व्वशो देवा दृष्टाः स्युः सुरसत्तमाः।
महावराहं तं देवं सर्व्वलोकपितामहं। अहञ्चैव नमस्यामि नित्यमेव जगत्पतिं।
तत्र च त्रितयं दृष्टं भविष्यति न संशयः। समस्ता हि वयं देवास्तस्य देहे वसामहे।
तस्य चैवाग्रजो भ्राता सिताद्रिनिचयप्रभः। हली बल इति ख्यातो भविष्यति धराधरः। ६९००
त्रिशिरास्तस्य देवस्य शातकुम्भमयो द्रुमः। ध्वजस्तृणेन्द्रो देवस्य भविष्यति रथाश्रितः।
शिरो नागैर्महाभोगैः परिकीर्णं महात्मभिः। भविष्यति महाबाहोः सर्व्वलोकेश्वरस्य च।
चिन्तितानि समेष्यन्ति शस्त्राण्यस्त्राणि चैव ह। अनन्तश्च स एवोक्तो भगवान् हरिरव्ययः।
समादिष्टश्च विबुधैर्द्रष्टुं त्वमिति प्रभो। सुपर्णो यस्य वीर्य्येण कश्यपस्यात्मजो बली।
अन्तं नैवाशकद्द्रष्टुं देवस्य परमात्मनः। समवर्त्तति भोगेन परिरभ्य वसुन्धरां। ६९०५
स च शेषो विचरते परया वै मुदा युतः। स एव विष्णुः सोऽनन्तो भगवान् वसुधाधरः।
यो रामः स हृषीकेशो योऽच्युतः स धराधरः। तावुभौ पुरुषव्याघ्रौ दिव्यौ दिव्यपराक्रमौ।

द्रष्टव्यो माननीयश्च चक्रशार्ङ्गधारिणः । एष वोऽनुग्रहः प्रोक्तो मया पुण्यतपोधनाः ।
यद्भवन्तो यदुश्रेष्ठं पूजयेयुः प्रयत्नतः ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि विष्णुमाहात्म्यकथने चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

॥ नारद उवाच ॥ अथ व्योम्नि महान् शब्दः सविद्युत्स्तनयित्नुमान् । मेघैश्च गगनं नीलैः संरुद्धमभवद्घनैः । ६८००
प्रावृषीव च पर्ज्जन्यो ववृषे निर्म्मलं पयः । तमश्चैवाभवद्घोरं दिशश्च न चकाशिरे ।
ततो देवगिरौ तस्मिन् रम्ये पुण्ये सनातने । न शर्व्वं भूतसंघं वा ददृशुर्मुनयस्तदा ।
व्यभ्रञ्च गगनं सद्यः क्षणेन समपद्यत । तीर्थयात्रां ततो विप्रा जग्मुश्चान्ये यथागतं ।
तदद्भुतमचिन्त्यञ्च दृष्ट्वा ते विस्मिताभवन् । शङ्करस्योमया सार्द्धं संवादं तत्कृताश्रयं ।
स भवान् पुरुषव्याघ्र ब्रह्मभूतः सनातनः । यदर्थमनुशिष्टाः स्मो गिरिपृष्ठे महात्मना । ६८०५
द्वितीयं त्वद्भुतमिदं त्वत्तेजःकृतमद्य वै । दृष्ट्वा हि विस्मिताः कृष्ण सा च नः स्मृतिरागता ।
एतत्ते देवदेवस्य माहात्म्यं कथितं विभो । कपर्द्दिनो गिरीशस्य महाबाहो जनार्द्दन ।
इत्युक्तः स तदा कृष्णस्तपोवननिवासिभिः । मानयामास तान् सर्व्वानृषीन् देवकिनन्दनः ।
अथर्षयः संप्रहृष्टाः पुनस्ते कृष्णमब्रुवन् । पुनः पुनर्द्दर्शयास्मान् सदैव मधुसूदन ।
न हि नः सा रतिः स्वर्गे या च त्वद्दर्शने विभो । तदृतञ्च महाबाहो यदाह भगवान् भवः । ६८१०
एतत्ते सर्व्वमाख्यातं रहस्यमरिकर्षण । त्वमेव ह्यर्थतत्त्वज्ञः पृष्टोऽस्मान् पृच्छसे यदा ।
तदस्माभिरिदं गुह्यं त्वत्प्रियार्थमुदाहृतं । न च तेऽविदितं किञ्चित्त्रिषु लोकेषु विद्यते ।
जन्म चैव प्रसूतिश्च यच्चान्यत् कारणं विभो । वयन्तु बहुचापल्यादशक्ता गुह्यधारणे ।
ततः स्थिते त्वयि विभो लघुत्वात् प्रलपामहे । न हि किञ्चित्तदाश्चर्य्यं यन्न वेत्ति भवानिह ।
दिवि वा भुवि वा देव सर्व्वं हि विदितं तव । साधयाम वयं कृष्ण बुद्धिं पुष्टिमवाप्नुहि । ६८१५
पुत्रस्ते सदृशस्तात विशिष्टो वा भविष्यति । महाप्रभावसंयुक्तो दीप्तिकीर्त्तिकरः प्रभुः ।
॥ भीष्म उवाच ॥ ततः प्रणम्य देवेशं यादवं पुरुषर्षभं । प्रदक्षिणमुपावृत्य प्रजग्मुस्ते महर्षयः ।
सोऽयं नारायणः श्रीमान् दीप्त्या परमया युतः । व्रतं यथावत्तच्चीर्त्वा द्वारकां पुनरागमत् ।
पूर्णे च दशमे मासि पुत्रोऽस्य परमाद्भुतः । रुक्मिण्यां सम्मतो जज्ञे शूरो वंशधरः प्रभो ।
स कामः सर्व्वभूतानां सर्व्वभावगतो नृप । सुराणामसुराणाञ्च चरत्यन्तर्गतः सदा । ६८२०
सोऽयं पुरुषशार्दूलो मेघवर्णश्चतुर्भुजः । संश्रितः पाण्डवान् प्रेम्णा भवन्तश्चैनमाश्रिताः ।
कीर्त्तिर्लक्ष्मीर्धृतिश्चैव स्वर्गमार्गस्तथैव च । यत्रैष संस्थितस्तत्र देवो विष्णुस्त्रिविक्रमः ।
सेन्द्रा देवास्त्रयस्त्रिंशदेष नात्र विचारणा । आदिदेवो महादेवः सर्व्वभूतप्रतिश्रयः ।
अनादिनिधनोऽव्यक्तो महात्मा मधुसूदनः । अयं जातो महातेजाः सुराणामर्थसिद्धये ।
सुदुस्तरार्थतत्त्वस्य वक्ता कर्त्ता च माधवः । तव पार्थ जयः कृत्स्नस्तव कीर्त्तिस्तथाऽतुला । ६८२५
तवेयं पृथिवी कृत्स्ना नारायणसमाश्रयात् । अयं नाथस्तवाचिन्त्यो यस्य नारायणो गतिः ।

स भवांस्त्वमुपाध्यर्य्य रणाग्रे हतवान्नृपान्। लब्धवानेव भवता युगान्ताग्निसमेन वै।
दुर्य्योधनस्तु शोच्योऽसौ सपुत्रभ्रातृबान्धवः। कृतवान् योऽबुधः कोपाद्धरिगाण्डीवविग्रहं।
दैतेया दानवेन्द्राश्च महाकाया महाबलाः। चक्राग्नौ क्षयमापन्ना दावाग्नौ शलभा इव।
प्रतियोद्धुं न शक्यो हि मानुषैरिह संयुगे। विहीनैः पुरुषव्याघ्र सत्त्वशक्तिबलादिभिः। ६९००
जयो योगी युगान्ताग्निः सव्यसाची रणाग्रगः। तेजसा हतवान् सर्व्वं सुयोधनबलं नृप।
यत्तु गोवृषभाङ्केन मुनिभिः समुदाहृतं। पुराणं हिमवत्पृष्ठे तन्मे निगदतः शृणु।
यादृशस्य भवेत्पुष्टिस्तेजोवीर्य्यपराक्रमैः। प्रभावः सन्नतिश्चैव कृष्णे तन्निगुणं विभो।
कः शक्नोत्यन्यथा कर्त्तुं तद्यदि स्यात्तथा शृणु। यत्र कृष्णो हि भगवांस्तत्र पुष्टिरनुत्तमा।
वयन्त्विहाल्पमतयः परतन्त्राः सुविक्लवाः। ज्ञानपूर्व्वं प्रपन्नाः स्मो मृत्योः पन्थानमव्ययं। ६९०५
भवांस्त्वार्ज्जवपरः पूर्व्वं कृत्वा प्रतिश्रयं। राजवृत्तं न लभते प्रतिज्ञापालने रतः।
तथैवात्मवधं लोके राजंस्त्वं बहु मन्यसे। न हि प्रतिज्ञा या दत्ता तां प्रहातुमरिन्दम।
कालेनायं जनः सर्व्वो निहतो रणमूर्द्धनि। वयञ्च कालेन हताः कालो हि परमेश्वरः।
न हि कालेन कालज्ञः स्पृष्टः शोचितुमर्हसि। कालो लोहितरक्ताक्षः कृष्णो दण्डधरो हरिः।
तस्मात् कुन्तीसुत ज्ञातीन्नेह शोचितुमर्हसि। व्यपेतमन्युर्नित्यं त्वं भव कौरवनन्दन। ६९१०
माधवस्यास्य माहात्म्यं श्रुतं यत् कथितं मया। तदेव तावत् पर्य्याप्तं सज्जनस्य निदर्शनं।
व्यासस्य वचनं श्रुत्वा नारदस्य च धीमतः। स्वयञ्चैव महाराज कृष्णस्यार्हतमस्य वै।
प्रभावस्त्वृषिपूगस्य कथितः सुमहान्मया। महेश्वरस्य संवादं शैलपुत्र्याश्च भारत।
धारयिष्यति यश्चैनं महापुरुषसम्भवं। शृणुयात् कथयेद्राजन् स वै श्रेयो लभेत् परं।
भविता रस्य तस्याथ सर्व्वे कामा यथेप्सिताः। प्रेत्य स्वर्गञ्च लभते नरो नास्त्यत्र संशयः। ६९१५
न्याय्यः श्रेयोऽभिकामेन प्रतिपत्तुं जनार्द्दनः। एष एवाक्षयो विप्रैः स्तुतो राजन् जनार्द्दनः।
महेश्वरमुखात्सृष्टा ये च धर्म्मगुणाः स्मृताः। ते त्वया मनसा धार्य्याः कुरुराज दिवानिशं।
एवं ते वर्त्तमानस्य सम्यग्दण्डधरस्य च। प्रजापालनदक्षस्य स्वर्गलोको भविष्यति।
धर्म्मेणापि सदा राजन् प्रजा रक्षितुमर्हसि। यस्तस्य विपुलो दण्डः सम्यग्धर्म्मः स कीर्त्तितः।
य एष कथितो राजन् मया सज्जनसन्निधौ। शङ्करस्योमया सार्द्धं संवादो धर्म्मसंहितः। ६९२०
श्रुत्वा वा श्रोतुकामो वाऽप्यर्च्चयेद्वृषभध्वजं। विशुद्धेनेह भावेन य इच्छेद्भूतिमात्मनः।
एष तस्यानवद्यस्य नारदस्य महात्मनः। सन्देशो देवपूजार्थं तत्तथा कुरु पाण्डव।
एतदत्यद्भुतं वृत्तं पुण्ये हिमवति प्रभो। वासुदेवस्य कौन्तेय स्थाणोश्चैव स्वभावजं।
दशवर्षसहस्राणि बदर्य्यामेष शाश्वतः। तपश्चचार विपुलं सह गाण्डीवधन्वना।
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनञ्जयौ। विदितौ नारदादेतौ मम व्यासाच्च पार्थिव। ६९२५
बाल एव महाबाहुश्चकार कदनं महत्। कंसस्य पुण्डरीकाक्षो ज्ञातित्राणार्थकारणात्।

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः । अनुकूलः शतावर्त्तः पद्मी पद्मनिभेक्षणः ।
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् । महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ।
अतुलः शरभो भीमः समयज्ञो हविर्हरिः । सर्व्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ।
विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः । महीधरो महाभागो वेगवानमिताशनः ।
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः । करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः । ६९९०
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः । परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ।
रामो विरामो विरजो मार्गो नेयो नयो नयः । वीरः शक्तिमतां श्रेष्ठो धर्म्मो धर्म्मविदुत्तमः ।
वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः । हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ।
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः । उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ।
विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययं । अर्थोऽनर्थो महाकोशो महाभोगो महाधनः । ६९९५
अनिर्व्विण्णः स्थविष्ठो भूर्धर्म्मयूपो महामखः । नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ।
यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः । सर्व्वदर्शी विमुक्तात्मा सर्व्वज्ञो ज्ञानमुत्तमं ।
सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् । मनोहरो जितक्रोधो वीरबाहुर्विदारणः ।
स्वापनः स्ववशो व्यापी नैकात्मा नैककर्म्मकृत् । वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ।
धर्म्मगुब्धर्म्मकृद्धर्म्मी सदसत्क्षरमक्षरं । अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः । ७०००
गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः । आदिदेवो महादेवो देवेशो देवभृद्गुरुः ।
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः । शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ।
सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः । विनयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः ।
जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः । अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ।
अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः । आनन्दो नन्दनो नन्दः सत्यधर्म्मा त्रिविक्रमः । ७००५
महर्षिः कपिलाचार्य्यः कृतज्ञो मेदिनीपतिः । त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ।
महावराहो गोविन्दः सुषेणः कनकाङ्गदी । गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ।
वेधाः स्वाङ्गो जितः कृष्णो दृढः सङ्कर्षणोऽच्युतः । वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ।
भगवान् भगहा नन्दी वनमाली हलायुधः । आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ।
सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः । दिवस्पृक् सर्व्वदृग्व्यासो वाचस्पतिरयोनिजः । ७०१०
त्रिसामा सामगः साम निर्व्वाणं भेषजं भिषक् । संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणं ।
शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः । गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ।
अनिवर्त्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः । श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ।
श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः । श्रीधरः श्रीकरः श्रेयः श्रीमांल्लोकत्रयाश्रयः ।
स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः । विजितात्मा विधेयात्मा सत्कीर्त्तिश्छिन्नसंशयः । ७०१५

उदीर्णः सर्व्वतश्चक्षुरनीशः शाश्वतः स्थिरः । भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ।
अर्च्चिष्मानर्च्चितः कुम्भो विशुद्धात्मा विशोधनः । अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ।
कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः । त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ।
कामदेवः कामपालः कामी कान्तः कृतागमः । अनिर्द्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ।
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्द्धनः । ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः । ७०१०
महाक्रमो महाकर्म्मा महातेजा महोरगः । महाक्रतुर्म्महायज्वा महायज्ञो महाहविः ।
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः । पूर्णः पूरयिता पुण्यः पुण्यकीर्त्तिरनामयः ।
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः । वसुप्रदो वासुदेवो वसुर्व्वसुमना हविः ।
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः । शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ।
भूतावासो वासुदेवः सर्व्वासुनिलयोऽनलः । दर्पहा दर्पदो दृप्तो दुर्द्धरोऽथापराजितः । ७०१५
विश्वमूर्त्तिर्म्महामूर्त्तिर्दीप्तमूर्त्तिरमूर्त्तिमान् । अनेकमूर्त्तिरव्यक्तः शतमूर्त्तिः शताननः ।
एको नैकः सवः कः किं यत्तत्पदमनुत्तमं । लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ।
सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी । वीरहा विषमः शून्यो घृताशीरचलश्चलः ।
अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् । सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ।
तेजोवृषो द्युतिधरः सर्व्वशस्त्रभृताम्वरः । प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः । ७०२०
चतुर्म्मूर्त्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः । चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ।
समावर्त्तो निवृत्तात्मा दुर्ज्जयो दुरतिक्रमः । दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ।
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्द्धनः । इन्द्रकर्म्मा महाकर्म्मा कृतकर्म्मा कृतागमः ।
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः । अर्को वाजसनः शृङ्गी जयन्तः सर्व्वविज्जयी ।
सुवर्णबिन्दुरक्षोभ्यः सर्व्ववागीश्वरेश्वरः । महाह्रदो महागर्त्तो महाभूतो महानिधिः । ७०२५
कुमुदः कुन्दरः कुन्दः पर्ज्जन्यः पवनोऽनिलः । अमृतांशोऽमृतवपुः सर्व्वज्ञः सर्व्वतोमुखः ।
सुलभः सुव्रतः सिद्धः शत्रुजित् शत्रुतापनः । न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिसूदनः ।
सहस्रार्च्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः । अमूर्त्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ।
अणुर्बृहत् कृशः स्थूलो गुणभृन्निर्गुणो महान् । अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्द्धनः ।
भारभृत् कथितो योगी योगीशः सर्व्वकामदः । आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः । ७०३०
धनुर्द्धरो धनुर्व्वेदो दण्डो दमयिता दमः । अपराजितः सर्व्वसहो नियन्ता नियमो यमः ।
सत्त्ववान् सात्त्विकः सत्यः सत्यधर्म्मपरायणः । अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्द्धनः ।
विहायसगतिर्ज्ज्योतिः सुरुचिर्हुतभुग्विभुः । रविर्व्विरोचनः सूर्य्यः सविता रविलोचनः ।
अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः । अनिर्व्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ।
सनात्सनातनतमः कपिलः कपिरव्ययः । स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः । ७०३५

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः। शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः।
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणाम्वरः। विद्वत्तमो वीतभयः पुण्यश्रवणकीर्त्तनः।
उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः। वीरहा रक्षणः शान्तो जीवनः पर्य्यवस्थितः।
अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः। चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः।
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः। जननो जनजन्मादिर्भीमो भीमपराक्रमः। ७०५०
आधारनिलयो धाता पुष्पहासः प्रजागरः। ऊर्द्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः
प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः। तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः।
भूर्भुवः स्वस्तरुस्तारः सविता प्रपितामहः। यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः।
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः। यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च।
आत्मयोनिः स्वयञ्जातो वैखानः सामगायनः। देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः। ७०५५
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः। रथाङ्गपाणिरक्षोभ्यः सर्व्वप्रहरणायुधः।
इतीदं कीर्त्तनीयस्य केशवस्य महात्मनः। नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्त्तितं।
य इदं शृणुयान्नित्यं यश्चापि परिकीर्त्तयेत्। नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः।
वेदान्तगो ब्राह्मणः स्यात् क्षत्त्रियो विजयी भवेत्। वैश्यो धनसमृद्धः स्यात् शूद्रः सुखमवाप्नुयात्।
धर्म्मार्थी प्राप्नुयाद्धर्म्ममर्थार्थी चार्थमाप्नुयात्। कामानवाप्नुयात् कामी प्रजार्थी चाप्नुयात् प्रजाः। ७०६०
भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः। सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्त्तयेत्।
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च। अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमं।
न भयं क्वचिदाप्नोति वीर्य्यं तेजश्च विन्दति। भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः।
रोगार्त्तो मुच्यते रोगात् बद्धो मुच्येत बन्धनात्। भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः।
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमं। स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः। ७०६५
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः। सर्व्वपापविशुद्धात्मा याति ब्रह्म सनातनं।
न वासुदेवभक्तानामशुभं विद्यते क्वचित्। जन्ममृत्युजराव्याधिभयं नाप्युपजायते।
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः। युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्त्तिभिः।
न क्रोधो न च मात्सर्य्यं न लोभो नाशुभा मतिः। भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे।
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्म्महोदधिः। वासुदेवस्य वीर्य्येण विधृतानि महात्मनः। ७०७०
ससुरासुरगन्धर्व्वं सयक्षोरगराक्षसं। जगद्वशे वर्त्ततेदं कृष्णस्य सचराचरं।
इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः। वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च।
सर्व्वागमानामाचारः प्रथमः परिकल्प्यते। आचारप्रभवो धर्म्मो धर्म्मस्य प्रभुरच्युतः।
ऋषयः पितरो देवा महाभूतानि धातवः। जङ्गमाजङ्गमञ्चेदं जगन्नारायणोद्भवं।
योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादिकर्म्म च। वेदाः शास्त्राणि विज्ञानमेतत् सर्व्वं जनार्द्दनात्। ७०७५

एको विष्णुर्म्महद्भूतं पृथग्भूतान्यनेकशः। त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः।
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्त्तितं। पठेद् य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च।
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययं। भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवं।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि विष्णोर्द्दिव्यसहस्रनामकथने ऊनपञ्चाशदधिकशततमोऽध्यायः। १४९।

॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्व्वशास्त्रविशारद। किं जप्यं जपतो नित्यं भवेद्धर्म्मफलं महत्।
प्रस्थाने वा प्रवेशे वा प्रवृत्ते वाऽपि कर्म्मणि। दैवे वा श्राद्धकाले वा किं जप्यं कर्म्मसाधनं। ७०८०
शान्तिकं पौष्टिकं रक्षा शत्रुघ्नं भयनाशनं। जप्यं यद्ब्रह्मसमितं तद्भवान् वक्तुमर्हति।
॥ भीष्म उवाच ॥ व्यासप्रोक्तमिमं मन्त्रं शृणुष्वैकमना नृप। सावित्र्या विहितं दिव्यं सद्यः पापविमोचनं।
शृणु मन्त्रविधिं कृत्स्नं प्रोच्यमानं मयाऽनघ। यं श्रुत्वा पाण्डवश्रेष्ठ सर्व्वपापैः प्रमुच्यते।
रात्रावहनि धर्म्मज्ञ जपन् पापैर्न लिप्यते। तत्तेऽहं संप्रवक्ष्यामि शृणुष्वैकमना नृप।
आयुष्मान् भवते चैव यं श्रुत्वा पार्थिवात्मज। पुरुषस्तु सुसिद्धार्थः प्रेत्य चेह च मोदते। ७०८५
सेवितं सततं राजन् पुरा राजर्षिसत्तमैः। क्षत्रधर्म्मपरैर्नित्यं सत्यव्रतपरायणैः।
इदमाह्निकमव्यग्रं कुर्व्वद्भिर्नियतैः सदा। नृपैर्भरतशार्दूल प्राप्यते श्रीरनुत्तमा।

नमो वसिष्ठाय महाव्रताय पराशरं वेदनिधिं प्रणम्य। नमोऽस्त्वनन्ताय महोरगाय नमोऽस्तु सिद्धेभ्य इहाक्षयेभ्यः।
नमस्त्वृषिभ्यः परमं परेषां देवेषु देवं वरदं वराणां। सहस्रशीर्षाय नमः शिवाय सहस्रनामाय जनार्द्दनाय।

अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः। ऋतश्च पितृरूपश्च त्र्यम्बकश्च महेश्वरः। ७०९०
वृषाकपिश्च शम्भुश्च हवनोऽथेश्वरस्तथा। एकादशैते प्रथिता रुद्रास्त्रिभुवनेश्वराः।
शतमेतत् समाम्नातं शतरुद्रे महात्मनां। अंशो भगश्च मित्रश्च वरुणश्च जलेश्वरः।
तथा धाताऽर्य्यमा चैव जयन्तो भास्करस्तथा। त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते।
इत्येते द्वादशादित्याः काश्यपेया इति श्रुतिः। धरो ध्रुवश्च सोमश्च सावित्रो ऽथानिलो ऽनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः। नासत्यश्चापि दस्रश्च स्मृतौ द्वावश्विनावपि। ७०९५
मार्त्तण्डस्यात्मजावेतौ संज्ञानासाविनिर्गतौ। अतः परं प्रवक्ष्यामि लोकानां कर्म्मसाक्षिणः।
अपि यज्ञस्य वेत्तारो दत्तस्य सुकृतस्य च। अदृश्याः सर्व्वभूतेषु पश्यन्ति त्रिदशेश्वराः।
शुभाशुभानि सर्व्वाणि मृत्युः कालश्च सर्व्वशः। विश्वेदेवाः पितृगणा मूर्त्तिमन्तस्तपोधनाः।
मुनयश्चैव सिद्धाश्च तपोमोक्षपरायणाः। शुचिस्मिताः कीर्त्तयतां प्रयच्छन्ति शुभं नृणां
प्रजापतिसृतानेतान् लोकान् दिव्येन तेजसा। वसन्ति सर्व्वलोकेषु प्रयताः सर्व्वकर्म्मसु। ७१००
प्राणानामीश्वरानेतान् कीर्त्तयन् प्रयतो नरः। धर्म्मार्थकामैर्विपुलैर्युज्यते सह नित्यशः।
लोकांश्च लभते पुण्यान् विश्वेश्वरकृतान् शुभान्। एते देवास्त्रयस्त्रिंशत् सर्व्वभूतगणेश्वराः।
नन्दीश्वरो महाकायो ग्रामणीर्वृषभध्वजः। ईश्वराः सर्व्वलोकानां गणेश्वरविनायकाः।
सौम्या रौद्रा गणाश्चैव योगभूतगणास्तथा। ज्योतींषि सरितो व्योम सुपर्णः पतगेश्वरः।

पृथिव्यां तपसा सिद्धाः स्थावराश्च चराचराः । हिमवान् गिरयः सर्व्वे चत्वारश्च महार्णवाः । ७१०५

भवस्यानुचराश्चैव हरतुल्यपराक्रमाः । विष्णुर्देवोऽथ जिष्णुश्च स्कन्दश्चाम्बिकया सह ।

कीर्त्तयन् प्रयतः सर्व्वान् सर्व्वपापैः प्रमुच्यते । अत ऊर्द्धं प्रवक्ष्यामि मानवानृषिसत्तमान् ।

यवक्रीतश्च रैभ्यश्च अर्व्वावसुपरावसू । औशीजश्चैव कक्षीवान् बलश्चाङ्गिरसः सुतः ।

ऋषिर्मेधातिथिः पुत्रः कण्वो वर्हिषदस्तथा । ब्रह्मतेजोमयाः सर्व्वे कीर्त्तिता लोकभावनाः ।

लभन्ते हि सुखं सर्व्वे रुद्रानलवसुप्रभाः । भुवि कृत्वा शुभं कर्म्म मोदन्ते दिवि दैवतैः । ७११०

महेन्द्रगुरवः सप्त प्राचीं वै दिशमाश्रिताः । प्रयतः कीर्त्तयन्नेतान् शक्रलोके महीयते ।

उन्मुचुः प्रमुचुश्चैव स्वस्त्यात्रेयश्च वीर्य्यवान् । दृढव्यश्चोर्द्ध्वबाहुश्च तृणसोमाङ्गिरास्तथा ।

मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान् । धर्म्मराजर्त्विजः सप्त दक्षिणां दिशमाश्रिताः ।

दृढेयुश्च ऋतेयुश्च परिव्याधश्च कीर्त्तिमान् । एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ।

अत्रेः पुत्रश्च धर्म्मात्मा ऋषिः सारस्वतस्तथा । वरुणस्यर्त्विजः सप्त पश्चिमां दिशमाश्रिताः । ७११५

अत्रिर्वसिष्ठो भगवान् काश्यपश्च महानृषिः । गौतमः स भरद्वाजो विश्वामित्रोऽथ कौशिकः ।

ऋचीकतनयश्चोग्रो जमदग्निः प्रतापवान् । धनेश्वरस्य गुरवः सप्तैते उत्तराश्रिताः ।

अपरे मुनयः सप्त दिक्षु सर्व्वास्वधिष्ठिताः । कीर्त्तिस्वस्तिकरा नृणां कीर्त्तिता लोकभावनाः ।

धर्म्मः कामश्च कालश्च वसवो वासुकिरेव च । अनन्तः कपिलश्चैव सप्तैते धरणीधराः ।

शान्तिस्वस्तिकरा लोके दिशां पालाः प्रकीर्त्तिताः । यस्यां यस्यां दिशि ह्येते तन्मुखः शरणं व्रजेत् । ७१२०

रामो व्यासस्तथा द्रौणिरश्वत्थामा च लोमशः । इत्येते मुनयो दिव्या एकैकः सप्त सप्तधा ।

स्रष्टारः सर्व्वभूतानां कीर्त्तिता लोकपावनाः । संवर्त्तो मेरुसावर्णो मार्कण्डेयश्च धार्म्मिकः ।

साङ्ख्ययोगो नारदश्च दुर्व्वासाश्च महानृषिः । अत्यन्ततपसो दान्तास्त्रिषु लोकेषु विश्रुताः ।

अपरे रुद्रसङ्काशाः कीर्त्तिताः ब्रह्मलौकिकाः । अपुत्रो लभते पुत्रं दरिद्रो लभते धनं ।

तथा धर्म्मार्थकामेषु सिद्धिञ्च लभते नरः । पृथुं वैन्यं नृपवरं पृथ्वी यस्याभवत् सुता । ७१२५

प्रजापतिं सार्व्वभौमं कीर्त्तयेद्वसुधाधिपं । आदित्यवंशप्रभवं महेन्द्रसमविक्रमं ।

पुरूरवसमैलञ्च त्रिषु लोकेषु विश्रुतं । बुधस्य दयितं पुत्रं कीर्त्तयेद्वसुधाधिपं ।

त्रिलोके विश्रुतं वीरं भरतञ्च प्रकीर्त्तयेत् । गवामयेन यज्ञेन येनेष्टं वै कृते युगे ।

रन्तिदेवं महादेवं कीर्त्तयेत् परमद्युतिं । विश्वजित्तपसोपेतं लक्षण्यं लोकसत्कृतं ।

तथा श्वेतञ्च राजर्षिं कीर्त्तयेत् परमद्युतिं । सगरस्यात्मजा येन प्लाविता स्तारितास्तथा । ७१३०

हुताशनसमानेतान् महारूपान् महौजसः । उग्रकायान् महासत्त्वान् कीर्त्तयेत् कीर्त्तिवर्द्धनान् ।

देवानृषिगणांश्चैव नृपांश्च जगतीश्वरान् । साङ्ख्यं योगञ्च परमं हव्यं कव्यन्तथैव च ।

कीर्त्तितं परमं ब्रह्म सर्व्वश्रुतिपरायणं । मङ्गल्यं सर्व्वभूतानां पवित्रं बहुकीर्त्तितं ।

व्याधिप्रशमनं श्रेष्ठं पौष्टिकं सर्व्वकर्म्मणां । प्रयतः कीर्त्तयेदेतान् कल्यं सायञ्च भारत ।

एते वै पान्ति वर्षन्ति भान्ति वान्ति सृजन्ति च। एते विनायका: श्रेष्ठा दक्षा: क्षान्ता जितेन्द्रिया:। ७१२५
नराणामशुभं सर्व्वं व्यपोहन्ति प्रकीर्त्तिता:। साक्षिभूता महात्मान: पापस्य सुकृतस्य च।
एतान् वै कल्यमुत्थाय कीर्त्तयन् शुभमश्नुते। नाग्निचौरभयं तस्य न मार्गप्रतिरोधनं।
एतान् कीर्त्तयतां नित्यं दु:स्वप्नो नश्यते नृणां। मुच्यते सर्व्वपापेभ्य: स्वस्तिमांश्च गृहं व्रजेत्।
दीक्षाकालेषु सर्व्वेषु य: पठेन्नियतो द्विज:। न्यायवानात्मनिरत: क्षान्तो दान्तोऽनसूयक:।
रोगार्त्तो व्याधियुक्तो वा पठन् पापात् प्रमुच्यते। वास्तुमध्ये तु पठत: कुले स्वस्त्ययनं भवेत्। ७१३०
क्षेत्रमध्ये तु पठत: सर्व्वं सस्यं प्ररोहति। गच्छत: क्षेममध्वानं ग्रामान्तरगत: पठन्।
आत्मनश्च सुतानाञ्च दाराणाञ्च धनस्य च। बीजानामोषधीनाञ्च रक्षामेतां प्रयोजयेत्।
एतान् संग्रामकाले तु पठत: क्षत्रियस्य च। गच्छन्ति रिपवो नाशं क्षेमञ्च परिवर्त्तते।
एतान् दैवे च पित्र्ये च पठत: पुत्रपौत्रिकं हि। भुञ्जते पितरो हव्यं कव्यञ्च त्रिदिवौकस:।
न व्याधिश्वापदभयं न द्विपाच्च न तस्करात्। कश्मलं लघुतां याति पाप्मना च प्रमुच्यते। ७१३५
यानपात्रे च याने च प्रवासे राजवेश्मनि। परां सिद्धिमवाप्नोति सावित्रीं ह्युत्तमां पठन्।
नाग्निर्दहति काष्ठानि सावित्री यत्र पठ्यते। न तत्र बालो म्रियते न च तिष्ठन्ति पन्नगा:।
न च राजभयं तेषां न पिशाचान्न राक्षसात्। नाग्न्यम्बुपवनव्यालाद्भयं तस्योपजायते।
चतुर्णामपि वर्णानामाश्रमस्य विशेषत:। करोति सततं शान्तिं सावित्रीमुत्तमां पठन्।
न तेषां विद्यते दु:खं गच्छन्ति परमां गतिं। ये शृण्वन्ति सदा ब्रह्म सावित्रीगुणकीर्त्तनं। ७१४०
गवां मध्ये तु पठतो गावोऽस्य बहुवत्सला:। प्रस्थाने वा प्रवासे वा सर्व्वावस्थां गत: पठेत्।
जपतां जुह्वताञ्चैव नित्यञ्च प्रयतात्मनां। ऋषीणां परमं जप्यं गुह्यमेतन्नराधिप।
याथातथ्येन सिद्धस्य इतिहासं पुरातनं पराशरमतं दिव्यं शक्राय कथितं पुरा।
तदेतत्ते समाख्यातं तथ्यं ब्रह्म सनातनं। हृदयं सर्व्वभूतानां श्रुतिरेषा सनातनी।
सोमादित्यान्वया: सर्व्वे राघवा: कुरवस्तथा। पठन्ति शुचयो नित्यं सावित्रीं परमां गतिं। ७१४५
अभ्यासे नित्यं देवानां सप्तर्षीणां ध्रुवस्य च। मोक्षणं सर्व्वकृच्छ्राणां मोचयत्यशुभात् सदा।
वृद्धै: काश्यपगौतमप्रभृतिभिर्भृग्वङ्गिरोऽत्र्यादिभि: शुक्रागस्त्यबृहस्पतिप्रभृतिभिर्ब्रह्मर्षिभि: सेवितं।
भारद्वाजमतं ऋचीकतनयै: प्राप्तं वशिष्ठात् पुन: सावित्रीमधिगम्य शक्रवसुभि: कृत्स्ना जिता दानवा:।
यो गोशतं कनकशृङ्गमयं ददाति विप्राय वेदविदुषे च बहुश्रुताय। दिव्याञ्च भारतकथां कथयेच्च नित्यं पुण्यं फलं भवति तस्य च तस्य चैव।
धर्म्मो विवर्द्धति भृगो: परिकीर्त्तनेन वीर्य्यं विवर्द्धति वशिष्ठनमो नतेन। संग्रामजिद्भवति चैव रघुं नमस्यन् स्यादश्विनौ च परिकीर्त्तयतो न रोग:। ७१५०
एषा ते कथिता राजन् सावित्री ब्रह्म शाश्वती। विवक्षुरसि यच्चान्यत् तत्ते वक्ष्यामि भारत।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि सावित्रीव्रतकथने पञ्चाशदधिकशततमोऽध्याय: ॥ १५० ॥

॥ युधिष्ठिर उवाच ॥ के पूज्याः के नमस्कार्य्याः कथं वर्त्तेत केषु च । किमाचारः कीदृशेषु पितामह न रिष्यते ।

॥ भीष्म उवाच ॥ ब्राह्मणानां परिभवः सादयेदपि देवताः । ब्राह्मणानां नमस्कर्त्ता युधिष्ठिर न रिष्यते ।

ते पूज्यास्ते नमस्कार्य्या वर्त्तेथास्तेषु पुत्रवत् । ते हि लोकानिमान् सर्व्वान् धारयन्ति मनीषिणः ।

ब्राह्मणाः सर्व्वलोकानां महान्तो धर्म्मसेतवः । धनत्यागाभिरामाश्च वाक्संयमरताश्च ये । ७१९५

रमणीयाश्च भूतानां निधानञ्च धृतव्रताः । प्रणेतारश्च लोकानां शास्त्राणाञ्च यशस्विनः ।

तपो येषां धनं नित्यं वाक् चैव विपुलं बलं । प्रभवश्चैव धर्म्माणां धर्म्मज्ञाः सूक्ष्मदर्शिनः ।

धर्म्मकामाः स्थिता धर्म्मे सुकृते धर्म्मसेतवः । यान् समाश्रित्य जीवन्ति प्रजाः सर्व्वाश्चतुर्व्विधाः ।

पन्थानः सर्व्वनेतारो यज्ञवाहाः सनातनाः । पितृपैतामहीं गुर्व्वीमुद्वहन्ति धुरं सदा ।

धुरि ये नावसीदन्ति विषमे सद्गवा इव । पितृदेवातिथिमुखा हव्यकव्याग्रभोजिनः । ७२००

भोजनादेव लोकांस्त्रींस्त्रायन्ते महतो भयात् । दीपः सर्व्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि ।

सर्व्वशिक्षाश्रुतिधना निपुणा मोक्षदर्शिनः । गतिज्ञाः सर्व्वभूतानामध्यात्मगतिचिन्तकाः ।

आदिमध्यावसानानां ज्ञातारश्छिन्नसंशयाः । परावरविशेषज्ञा गन्तारः परमां गतिं ।

विमुक्ता धूतपाप्मानो निर्द्वन्द्वा निष्परिग्रहाः । मानार्हा मानिता नित्यं ज्ञानविद्भिर्महात्मभिः ।

चन्दने मलपङ्के च भोजनेऽभोजने समाः । वासो येषां दुकूलञ्च शाणक्षौमाजिनानि च । ७२०५

तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि । शोषयेयुश्च गात्राणि स्वाध्यायैः संयतेन्द्रियाः ।

अदैवं दैवतं कुर्य्युर्द्दैवतं वाप्यदैवतं । लोकानन्यान् सृजेयुस्ते लोकपालांश्च कोपिताः ।

अपेयः सागरो येषामपि शापान्महात्मनां । येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति ।

देवानामपि ये देवाः कारणं कारणस्य च । प्रमाणस्य प्रमाणञ्च कस्तानभिभवेद्बुधः ।

येषां वृद्धश्च बालश्च सर्व्वः सम्मानमर्हति । तपोविद्याविशेषात्तु मानयन्ति परस्परं । ७२१०

अविद्वान् ब्राह्मणो देवः पात्रं वै पावनं महत् । विद्वान् भूयस्तरो देवः पूर्णसागरसन्निभः ।

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् । प्रणीतश्चाप्रणीतश्च यथाऽग्निर्द्दैवतं महत् ।

श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति । हविर्य्यज्ञे च विधिवद्गृह एव विशोभते ।

एवं यद्यप्यनिष्टेषु वर्त्तते सर्व्वकर्म्मसु । सर्व्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत्परं ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि ब्राह्मणप्रशंसायां एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

॥ युधिष्ठिर उवाच ॥ कान्तु ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा नराधिप । कं वा कर्म्मोदयं मत्वा तानर्चसि महामते । ७२१५

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । पवनस्य च संवादमर्ज्जुनस्य च भारत ।

सहस्रभुजभृत् श्रीमान् कार्त्तवीर्य्योऽभवत् प्रभुः । अस्य लोकस्य सर्व्वस्य माहिष्मत्यां महाबलः ।

स तु रत्नाकरवतीं सद्वीपां सागराम्बरां । शशास पृथिवीं सर्व्वां हैहयः सत्यविक्रमः ।

स्ववित्तं तेन दत्तन्तु दत्तात्रेयाय कारणे । क्षत्रधर्म्मं पुरस्कृत्य विनयं श्रुतमेव च ।

आराधयामास च तं कृतवीर्य्यात्मजो मुनिं । न्यमन्त्रयत सन्तुष्टो द्विजश्चैनं वरैस्त्रिभिः । ७२२०

सहस्रबाहुर्भूयां वै चमूमध्ये गृहेऽन्यथा ।
मम बाहुसहस्रन्तु पश्यन्तां सैनिका रणे । विक्रमेण महीं कृत्स्नां जयेयं संशितव्रतः ।
ताञ्च धर्म्मेण सम्प्राप्य पालयेयमतन्द्रितः । चतुर्थं तु वरं याचे त्वामहं द्विजसत्तम ।
तं ममानुग्रहकृते दातुमर्हस्यनिन्दित । अनुशासन्तु मां सन्तो मिथ्यावृत्तं तदाश्रयं ।
इत्युक्तः स द्विजः प्राह तथास्त्विति नराधिपं । एवं समभवंस्तस्य वरास्ते दीप्ततेजसः । ७०९८
ततः स रथमास्थाय ज्वलनार्कसमद्युतिः । अब्रवीद्वीर्य्यसम्मोहात् को न्वस्ति सदृशो मम ।
धैर्य्ये वीर्य्ये यशःशौर्य्ये विक्रमेणौजसाऽपि वा । तद्वाक्यान्तेऽन्तरीक्षे वै वागुवाचाशरीरिणी ।
न त्वं मूढ विजानीषे ब्राह्मणं क्षत्रियाद्वरं । सहितो ब्राह्मणेनेह क्षत्रियः शास्ति वै प्रजाः ।
॥ अर्ज्जुन उवाच ॥ कुर्य्यां भूतानि तुष्टोऽहं क्रुद्धो नाशं तथा नये । कर्म्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः ।
पूर्व्वो ब्रह्मोत्तरो वादो द्वितीयः क्षत्रियोत्तरः । त्वयोक्तौ हेतुयुक्तौ तौ विशेषस्तत्र दृश्यते । ७१००
ब्राह्मणाः संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितं । श्रिता ब्रह्मोपधा विप्राः खादन्ति क्षत्रियान् भुवि ।
क्षत्रियेष्वाश्रितो धर्म्मः प्रजानां परिपालनं । क्षत्राद्वृत्तिर्ब्राह्मणानां तैः कथं ब्राह्मणो वरः ।
सर्व्वभूतप्रधानांस्तान् भैक्ष्यवृत्तीनहं सदा । आत्मसम्भावितान् विप्रान् स्थापयाम्यात्मनो वशे ।
कथितं त्वनया सत्यं गायत्र्या कन्यया दिवि । विजेष्याम्यवशान् सर्व्वान् ब्राह्मणांश्चर्म्मवाससः ।
न च मां च्यावयेद्राष्ट्रात्त्रिषु लोकेषु कश्चन । देवो वा मानुषो वाऽपि तस्माज्ज्येष्ठो द्विजादहं । ७१०५
अद्य ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरं । न हि मे संयुगे कश्चित् सोढुमुत्सहते बलं ।
अर्ज्जुनस्य वचः श्रुत्वा वित्रस्ताऽभून्निशाचरी । अथैनमन्तरिक्षस्थस्ततो वायुरभाषत ।
त्यजैनं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु । एतेषां कुर्व्वतः पापं राष्ट्रक्षोभो भविष्यति ।
अथ वा त्वां महीपाल शमयिष्यन्ति वै द्विजाः । निरसिष्यन्ति ते राष्ट्राद्धतोत्साहं महाबलाः ।
तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः । वायुर्व्वै देवदूतोऽस्मि हितं त्वां प्रब्रवीम्यहं । ७११०
॥ अर्ज्जुन उवाच ॥ अहो त्वयाऽद्य विप्रेषु भक्तिरागः प्रदर्शितः । यादृशं पृथिवीभूतं तादृशं ब्रूहि वै द्विजं ।
वायोर्व्वा सदृशं किञ्चिद् ब्रूहि त्वं ब्राह्मणोत्तमं । अपां वै सदृशो वह्निः सूर्य्यस्य नभसोऽपि वा ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि पवनार्ज्जुनसंवादे द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥
॥ वायुरुवाच ॥ शृणु मूढ गुणान् कांश्चिद्ब्राह्मणानां महात्मनां । ये त्वया कीर्त्तिता राजंस्तेभ्योऽथ ब्राह्मणो वरः ।
त्यक्त्वा महीत्वं भूमिस्तु स्पर्द्धयाऽङ्गनृपस्य ह । नाशं जगाम तां विप्रो व्यष्टम्भयत कश्यपः ।
अजेया ब्राह्मणा राजन् दिवि चेह च नित्यदा । अपिबत्तेजसा ह्यापः स्वयमेवाङ्गिराः पुरा । ७११५
स ताः पिबन् क्षीरमिव नातृप्यत महामनाः । अपूरयन्महौघेन महीं सर्व्वाञ्च पार्थिव ।
तस्मिन्नहञ्च क्रुद्धे वै जगत्त्यक्त्वा ततो गतः । व्यतिष्ठमग्निहोत्रे च चिरमङ्गिरसो भयात् ।
अथ शप्तश्च भगवान् गौतमेन पुरन्दरः । अहल्यां कामयानो वै धर्म्मार्थञ्च न हिंसितः ।
यथा समुद्रो नृपते पूर्व्वं मृष्टश्च वारिणा । ब्राह्मणैरभिशप्तः सन् बभूव लवणोदकः ।

सुवर्णवर्णो निर्द्धूमः सम्भृतोर्द्ध्वशिखः कविः । क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्जितः । ७११०

मरुतश्चूर्णितान् पश्य येऽहासन्त महोदधिं । सुवर्णधारिणा नित्यमवशप्तान् द्विजातिना ।

समो न त्वं द्विजातिभ्यः श्रेयो विद्धि नराधिप । गर्भस्थान् ब्राह्मणान् सम्यङ्नमस्यति किल प्रभुः ।

दण्डकानां महद्राज्यं ब्राह्मणेन विनाशितं । तालजङ्घं महाक्षत्रमौर्व्वेणैकेन नाशितं ।

त्वया च विपुलं राज्यं बलं धर्म्मः श्रुतं तथा । दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभं ।

अग्निं त्वं यजसे नित्यं कस्माद्ब्राह्मणमर्ज्जुन । स हि सर्व्वस्य लोकस्य हव्यवाट् किं न वेत्सि तं । ७११५

अथवा ब्राह्मणश्रेष्ठमनुभूतानुपालकं । कर्त्तारं जीवलोकस्य कस्माज्जानन् विमुह्यसे ।

तथा प्रजापतिर्ब्रह्मा अव्यक्तः प्रभुरव्ययः । येनेदं निखिलं विश्वं जनितं स्थावरं चरं ।

अण्डजातन्तु ब्रह्माणं केचिदिच्छन्त्यपण्डिताः । अण्डाद्भिन्नादभुः शैला दिशोऽम्भः पृथिवी दिवं ।

द्रष्टव्यं नैतदेवं हि कथं जायेदजो हि सः । स्मृतमाकाशमण्डन्तु तस्माज्जातः पितामहः ।

तिष्ठेत् कथमिति ब्रूहि न किञ्चिद्धि तदा भवेत् । अहङ्कार इति प्रोक्तः सर्व्वतेजोगतः प्रभुः । ७१२०

तस्मादण्डादुत्थितो ब्रह्मा स राजन् लोकभावनः । इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि पवनार्ज्जुनसंवादे द्विपञ्चाशदधिकशततोऽध्यायः ॥ १५२ ॥

॥ वायुरुवाच ॥ इमां भूमिं द्विजातिभ्यो दित्सुर्वै दक्षिणां पुरा । अङ्गो नाम नृपो राजंस्ततश्चिन्तां मही ययौ ।

धारणीं सर्व्वभूतानामयं प्राप्य वरो नृपः । कथमिच्छति मां दातुं द्विजेभ्यो ब्रह्मणः सुतां ।

साऽहं त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः पदं । अयं सराष्ट्रो नृपतिर्म्माभूदिति ततोऽगमत् ।

ततस्तां कश्यपो दृष्ट्वा व्रजन्तीं पृथिवीं तदा । प्रविवेश महीं सद्यो मुक्त्वात्मानं समाहितः । ७१२५

रुद्धा सा सर्व्वतो जज्ञे तृणौषधिसमन्विता । धर्म्मोत्तरा नष्टभया भूमिरासीत्ततो नृप ।

एवं वर्षसहस्राणि दिव्यानि सततं नृप । त्रिंशतः कश्यपो राजन् भूमिरासीदतन्द्रिता ।

अथागम्य महाराज नमस्कृत्य च कश्यपं । पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः ।

एष राजन्नीदृशो वै ब्राह्मणः कश्यपोऽभवत् । अन्यं प्रब्रूहि वा त्वञ्च कश्यपात् क्षत्रियं वरं ।

तूष्णीं बभूव नृपतिः पवनस्त्वब्रवीत् पुनः । शृणु राजन्नुतथ्यस्य जातस्याङ्गिरसे कुले । ७१३०

भद्रा सोमस्य दुहिता रूपेण परमा मता । यस्यास्तुल्यं पतिं सोम उतथ्यं समपश्यत ।

सा च तीव्रं तपस्तेपे महाभागा यशस्विनी । उतथ्यार्थे तु चार्व्वङ्गी परं नियममास्थिता ।

तत आहूय सोतथ्यं ददावत्रिर्यशस्विनीं । भार्य्यार्थे स तु जग्राह विधिवद्भूरिदक्षिणः ।

तान्त्वकामयत श्रीमान् वरुणः पूर्व्वमेव ह । स चागम्य वनप्रस्थं यमुनायां जहार तां ।

जलेश्वरस्तु हृत्वा तामनयत् स्वपुरं प्रति । परमाद्भुतसङ्काशं षट्सहस्रशतं ह्रदं । ७१३५

न हि रम्यतरं किञ्चित् तस्मादन्यत् पुरोत्तमं । प्रासादैरप्सरोभिश्च दिव्यैः कामैश्च शोभितं ।

तत्र देवस्तया सार्द्धं रेमे राजन् जलेश्वरः । अथाख्यातमुतथ्याय ततः पत्न्यवमर्द्दनं ।

तच्छ्रुत्वा नारदात् सर्व्वमुतथ्यो नारदं तदा । प्रोवाच गच्छ ब्रूहि त्वं वरुणं परुषं वचः ।

महाभाग्यासुत्र मे भार्य्यां कस्मात्त्वं हृतवानसि। लोकपालोऽसि लोकानां न लोकस्य विलुम्पकः।
सोमेन दत्ता मे भार्य्या त्वया चापहृताद्य वै। इत्युक्तो वचनात्तस्य नारदेन जलेश्वरः। ७२१०
मुञ्च भार्य्यामुतथ्यस्य कस्मात्त्वं हृतवानसि। इति श्रुत्वा वचस्तस्य ततस्तं वरुणोऽब्रवीत्।
ममैषा सुप्रिया भीरुर्नैनामुत्स्रष्टुमुत्सहे। इत्युक्तो वरुणेनाथ नारदः प्राप्य वै मुनिं।
उतथ्यमब्रवीद्वाक्यं नातिहृष्टमना इव। गले गृहीत्वा क्षिप्तोऽस्मि वरुणेन महामुने।
न प्रयच्छति ते भार्य्यां यत्ते कार्य्यं कुरुष्व तत्। नारदस्य वचः श्रुत्वा क्रुद्धः प्राज्वलदङ्गिराः।
अपिबत्तेजसा वारि विष्टभ्य सुमहातपाः। पीयमाने तु सर्व्वस्मिंस्तोये वै सलिलेश्वरः। ७२१५
सुहृद्भिः क्षिप्यमाणोऽपि नैवामुञ्चत तां तदा। ततः क्रुद्धोऽब्रवीद्भूमिमुतथ्यो ब्राह्मणोत्तमः।
दर्शयस्व स्थलं भद्रे षट्सहस्रशतं ह्रदं। ततस्तदीरिणं जातं समुद्रश्चापसर्पितः।
तस्माद्देशान्नदीञ्चैव प्रोवाचासौ द्विजोत्तमः। अदृश्या गच्छ भीरु त्वं सरस्वति मरुं प्रति।
अपुण्य एष भवतु देशस्त्यक्तस्त्वया शुभे। तस्मिन् संशोषिते देशे भद्रामादाय वारिपः।
अददात् शरणं गत्वा भार्य्यामाङ्गिरसाय वै। प्रतिगृह्य तु तां भार्य्यामुतथ्यः सुमनाऽभवत्। ७२२०
मुमोच च जगद्दुःखाद्वरुणञ्चैव हैहय। ततः स लब्ध्वा तां भार्य्यां वरुणं प्राह धर्म्मवित्।
उतथ्यः सुमहातेजा यत्तत् शृणु नराधिप। ममैषा तपसा प्राप्ता क्रोशतस्ते जलाधिप।
इत्युक्त्वा तामुपादाय स्वमेव भवनं ययौ। एष राजन्नीदृशो वै उतथ्यो ब्राह्मणोत्तमः।
ब्रवीम्यहं ब्रूहि वा त्वमुतथ्यात् क्षत्रियं वरं।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि पवनार्जुनसंवादे चतुःपञ्चाशदधिकशततमोऽध्यायः ॥१५४॥

॥ भीष्म उवाच ॥ इत्युक्तः स नृपस्तूष्णीमासीद्वायुस्ततोऽब्रवीत्। शृणु राजन्नगस्त्यस्य माहात्म्यं ब्राह्मणस्य ह। ७२२५
असुरैर्निर्ज्जिता देवा निरुत्साहाश्च ते कृताः। यज्ञाश्चैषां हृताः सर्व्वे पितृणाञ्च स्वधा तथा।
कर्म्मेज्या मानवानाञ्च दानवैर्हैहयर्षभ। भ्रष्टैश्वर्य्यास्ततो देवाश्चेरुः पृथ्वीमिति श्रुतिः।
ततः कदाचित्ते राजन् दीप्तमादित्यवर्च्चसं। ददृशुस्तेजसा युक्तमगस्त्यं विपुलव्रतं।
अभिवाद्य तु तं देवाः पृष्ट्वा कुशलमेव च। इदमूचुर्म्महात्मानं वाक्यं काले जनाधिप।
दानवैर्युधि भग्नाः स्म तथैश्वर्य्याच्च भ्रंशिताः। तदस्मान्नो भयात्तीव्रात्त्राहि त्वं मुनिपुङ्गव। ७२३०
इत्युक्तः स तदा देवैरगस्त्यः कुपितोऽभवत्। प्रजज्वाल च तेजस्वी कालाग्निरिव संक्षये।
तेन दीप्तांशुजालेन निर्दग्धा दानवास्तदा। अन्तरीक्षं महाराज निपेतुस्ते सहस्रशः।
दह्यमानास्तु दैत्यास्ते तदाऽगस्त्यस्य तेजसा। उभौ लोकौ परित्यज्य ययुः काष्ठान्तु दक्षिणां।
बलिस्तु यजते यज्ञमश्वमेधं महीं गतः। येऽन्येऽधःस्था महीस्थाश्च तेन दग्धा महासुराः।
ततो लोकाः पुनः प्राप्ताः सुरैः शान्तभयैर्नृप। अथैनमब्रुवन् देवा भूमिष्ठानसुरान् जहि। ७२३५
इत्युक्तः प्राह वै देवान् शक्तोऽस्मि महीगतान्। दग्धुं तपो हि क्षीयेन्मे न शक्ष्यामीति पार्थिव।
एवं दग्धा भगवता दानवाः स्वेन तेजसा। अगस्त्येन तदा राजन् तपसा भावितात्मना।

इदं श्रेष्ठमगस्त्यस्य हि कथितं ते मयाऽनघ। ब्रवीम्यहं ब्रूहि वा त्वमगस्त्यात् क्षत्रियं वरं।
॥ भीष्म उवाच ॥ इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत्। शृणु राजन् वशिष्ठस्य मुख्यं कर्म यशस्विनः।
आदित्याः सत्रमासन्त सरो वैखानसं प्रति। वशिष्ठं मनसा गत्वा ज्ञात्वा तत्रास्य गौरवं। ७१८०
यजमानांस्तु तान् दृष्ट्वा सर्व्वान् दीक्षानुकर्षितान्। हन्तुमैच्छन्त शैलाभाः खलिनो नाम दानवाः।
अदूरात्तु ततस्तेषां ब्रह्मदत्तवरं सरः। हता हता वै तत्रैते जीवन्त्याप्लुत्य दानवाः।
ते प्रगृह्य महाघोरान् पर्व्वतान् परिघान् द्रुमान्। विक्षोभयन्तः सलिलमुत्थितं शतयोजनं।
अभ्यद्रवन्त देवांस्ते सहस्राणि दशैव हि। ततस्तैरर्द्दिता देवाः शरणं वासवं ययुः।
स च तैर्व्यथितः शक्रो वशिष्ठं शरणं ययौ। ततोऽभयं ददौ तेभ्यो वशिष्ठो भगवानृषिः। ७१८५
तदा तान् दुःखितान् ज्ञात्वा आनृशंस्यपरो मुनिः। अयत्नेनादहत् सर्व्वान् खलिनः स्वेन तेजसा।
कैलासं प्रस्थितां चैव नदीं गङ्गां महातपाः। आनयत्तत् सरो दिव्यं तया भिन्नञ्च तत्सरः।
सरो भिन्नं तया नद्या सरयूः सा ततोऽभवत्। हताश्च खलिनो यत्र स देशः खलिनोऽभवत्।
एवं सेन्द्रा वशिष्ठेन रक्षितास्त्रिदिवौकसः। ब्रह्मदत्तवराश्चैव हता दैत्या महात्मना।
एतत् कर्म्म वशिष्ठस्य कथितं हि मयाऽनघ। ब्रवीम्यहं ब्रूहि वा त्वं वशिष्ठात् क्षत्रियं वरं। ७१९०
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि पवनार्ज्जुनसंवादे पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥
॥ भीष्म उवाच ॥ इत्युक्तस्त्वर्ज्जुनस्तूष्णीमभूद्वायुस्ततोऽब्रवीत्। शृणु मे हैहयश्रेष्ठ कर्म्मात्रेः सुमहात्मनः।
घोरे तमस्ययुध्यन्त सहिता देवदानवाः। अविध्यत शरैस्तत्र स्वर्भानुः सोमभास्करौ।
अथ ते तमसा ग्रस्ता निहन्यन्ते स्म दानवैः। देवा नृपतिशार्दूल सहैव बलिभिस्तदा।
असुरैर्व्वध्यमानास्ते क्षीणप्राणा दिवौकसः। अपश्यन्त तपस्यन्तमत्रिं विप्रं तपोधनं।
अथैनमब्रुवन् देवाः शान्तक्रोधं जितेन्द्रियं। असुरैरिषुभिर्व्विद्धौ चन्द्रादित्याविमावुभौ। ७१९५
वयं वध्यामहे चापि शत्रुभिस्तमसा वृते। नाधिगच्छाम शान्तिञ्च भयात्त्रायस्व नः प्रभो।
॥ ऋषिरुवाच ॥ कथं रक्ष्यामि भवतस्तेऽब्रुवंश्चन्द्रमा भव। तिमिरघ्नश्च सविता दस्युहन्ता च नो भव।
एवमुक्तस्तदाऽत्रिर्व्वै तमोनुदभवच्छशी। अपश्यत् सौम्यभावाच्च सोमवत् प्रियदर्शनः।
दृष्ट्वा नातिप्रभं सोमं तथा सूर्य्यञ्च पार्थिव। प्रकाशमकरोदत्रिस्तपसा स्वेन संयुगे।
जगद्वितिमिरञ्चापि प्रकाशमकरोत्तदा। व्यजयच्छत्रुसङ्घांश्च देवानां स्वेन तेजसा। ७२००
अत्रिणा दह्यमानांस्तान् दृष्ट्वा देवा महासुरान्। पराक्रमैस्तेऽपि तदा व्यत्यघ्नन्नत्रिरक्षिताः।
उद्भासितश्च सविता देवास्त्राता हतासुराः। अत्रिणा त्वथ सामर्थ्यं कृतमुत्तमतेजसा।
द्विजेनाग्निद्वितीयेन जपता चर्म्मवाससा। फलभक्षेण राजर्षे पश्य कर्म्मात्रिणा कृतं।
तस्यापि विस्तरेणोक्तं कर्म्मात्रेः सुमहात्मनः। ब्रवीम्यहं ब्रूहि वा त्वमत्रितः क्षत्रियं वरं।
इत्युक्तस्त्वर्ज्जुनस्तूष्णीमभूद्वायुस्ततोऽब्रवीत्। शृणु राजन् महत् कर्म्म च्यवनस्य महात्मनः। ७२०५
अश्विनोः प्रतिसंश्रुत्य च्यवनः पाकशासनं। प्रोवाच सहितो देवैः सोमपावश्विनौ कुरु।

॥ इन्द्र उवाच ॥ अस्माभिर्निन्दितावेतौ भवेतां सोमपौ कथं । देवैर्न संमितावेतौ तस्मान्मैवं वदस्व नः ।
अश्विभ्यां सह नेच्छाम सोमं पातुं महाव्रत । यदन्यद्वक्ष्यसे विप्र तत् करिष्याम ते वचः ।
॥ च्यवन उवाच ॥ पिबेतामश्विनौ सोमं भवद्भिः सहिताबुभौ । उभावेतावपि सुरौ सूर्य्यपुत्रौ सुरेश्वर ।
क्रियतां मद्वचो देवा यथा वै समुदाहृतं । एतद्वः कुर्व्वतां श्रेयो भवेन्नैतदकुर्व्वतां । ७११०
॥ इन्द्र उवाच ॥ अश्विभ्यां सह सोमं वै न पास्यामि द्विजोत्तम । पिबन्त्वन्ये यथाकामं नाहं पातुमिहोत्सहे ।
॥ च्यवन उवाच ॥ न चेत् करिष्यसि वचो मयोक्तं बलसूदन । मया प्रमथितः सद्यः सोमं पास्यसि वै मखे ।
॥ वायुरुवाच ॥ ततः कर्म्म समारब्धं हिताय सहसाऽश्विनोः । च्यवनेन ततो मन्त्रैरभिभूताः सुराऽभवन् ।
तत्तु कर्म्म समारब्धं दृष्ट्वेन्द्रः क्रोधमूर्च्छितः । उद्यम्य विपुलं शैलं च्यवनं समुपाद्रवत् ।
तथा वज्रेण भगवानमर्षाकुललोचनः । तमापतन्तं दृष्ट्वैव च्यवनस्तपसाऽन्वितः । ७११५
अद्भिः सिक्त्वाऽस्तम्भयत्तं सवज्रं सहपर्व्वतं । अथेन्द्रस्य महाघोरं सोऽसृजच्छत्रुमेव हि ।
मदं नामाहुतिमयं व्यादितास्यं महामुनिः । तस्य दन्तसहस्रन्तु बभूव शतयोजनं ।
द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः । हनुस्तस्याभवद्भूमावेका चास्याभवद्दिवं ।
जिह्वामूलस्थितास्तस्य सर्व्वे देवाः सवासवाः । तिमेरास्यमनुप्राप्ता यथा मत्स्या महार्णवे ।
ते संमन्त्र्य ततो देवा मदस्यास्य समीपगाः । अब्रुवन् सहिताः शक्रं प्रणमास्मै द्विजातये । ७१२०
अश्विभ्यां सह सोमञ्च पिबाम विगतज्वराः । ततः स प्रणतः शक्रश्चकार च्यवनस्य तत् ।
च्यवनः कृतवानेतावश्विनौ सोमपायिनौ । ततः प्रत्याहरत् कर्म्म मदञ्च व्यभजन्मुनिः ।
अक्षेषु मृगयायाञ्च पाने स्त्रीषु च वीर्य्यवान् । एतैर्दोषैर्नरा राजन् क्षयं यान्ति न संशयः ।
तस्मादेतान्नरो नित्यं दूरतः परिवर्ज्जयेत् । एतत्ते च्यवनस्यापि कर्म्म राजन् प्रकीर्त्तितं ।
ब्रवीम्यहं ब्रूहि वा त्वं क्षत्रियं ब्राह्मणादरं । ७१२२

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि पवनार्ज्जुनसंवादे षट्पञ्चाशदधिकशतोऽध्यायः ॥ १५६ ॥

॥ भीष्म उवाच ॥ तूष्णीमासीदर्ज्जुनस्तु पवनस्त्वब्रवीत् पुनः । शृणु मे ब्राह्मणेष्वेव मुख्यं कर्म्म जनाधिप ।
मदस्यास्यमनुप्राप्ता यदा सेन्द्रा दिवौकसः । तदैव च्यवनेनेह हृता तेषां वसुन्धरा ।
उभौ लोकौ हृतौ मत्वा ते देवा दुःखिता भृशं । शोकार्त्ताश्च महात्मानो ब्रह्माणं शरणं ययुः ।
॥ देवा ऊचुः ॥ मदास्यव्यतिषिक्तानामस्माकं लोकपूजित । च्यवनेन हृता भूमिः कपैश्चैव दिवं प्रभो ।
॥ ब्रह्मोवाच ॥ गच्छध्वं शरणं विप्रानाशु सेन्द्रा दिवौकसः । प्रसाद्य तानुभौ लोकाववाप्स्यथ यथा पुरा । ७१२५
ते ययुः शरणं विप्रानूचुस्ते कान् जयामहे । इत्युक्तास्ते द्विजान् प्राहुर्ज्जयतेह कपानिति ।
भूगतान् हि विजेतारो वयमित्यब्रुवन् द्विजाः । ततः कर्म्म समारब्धं ब्राह्मणैः कपनाशनं ।
तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनीकपैः । भूगतान् ब्राह्मणानाह धनीकपवचो यथा ।
भवद्भिः सदृशाः सर्व्वे कपाः किमिह वर्त्तते । सर्व्वे वेदविदः प्राज्ञाः सर्व्वे च क्रतुयाजिनः ।
सर्व्वे सत्यव्रताश्चैव सर्व्वे तुल्या महर्षिभिः । श्रीश्चैव रमते तेषु धारयन्ति श्रियञ्च ते । ७१३०

वृथा दाराञ्च गच्छन्ति वृथा मांसं न भुञ्जते । दीप्तमग्निं जुह्वते च गुरूणां वचने स्थिताः ।
सर्व्वे च नियतात्मानो बालानां संविभागिनः । उपेत्य शनकैर्यान्ति न सेवन्ति रजस्वलां ।
स्वर्गतिञ्चैव गच्छन्ति तथैव शुभकर्म्मिणः । अभुक्तवत्सु नाश्नन्ति गर्भिणीवृद्धकादिषु ।
पूर्व्वाह्णेषु न दीव्यन्ति दिवा चैव न शेरते । एतैश्चान्यैश्च बहुभिर्गुणैर्युक्तान् कथं कपान् ।
विजेष्यथ निवर्त्तध्वं निवृत्तानां शुभं हि वः । ७१००
॥ ब्राह्मणा ऊचुः ॥ कपान् वयं विजेष्यामो ये देवास्ते वयं स्मृताः । तस्माद्वध्याः कपास्माकं धनिन्या हि यथागतं ।
धनी गत्वा कपानाह न वो विप्राः प्रियङ्कराः । गृहीत्वा ऽस्त्राण्यतो विप्रान् कपाः सर्व्वे समाद्रवन् ।
समुदग्रध्वजान् दृष्ट्वा कपान् सर्व्वे द्विजातयः । व्यसृजन् ज्वलितानग्नीन् कपानां प्राणनाशनान् ।
ब्रह्मसृष्टा हव्यभुजः कपान् हत्वा सनातनाः । नभसीव यथा ऽभ्राणि व्यराजन्त नराधिप ।
हत्वा वै दानवान् देवाः सर्व्वे संभूय संयुगे । तेनाभ्यजानन् हि तदा ब्राह्मणैर्निहतान् कपान् । ७१०५
अथागम्य महातेजा नारदोऽकथयद्विभो । यथा हता महाभागैस्तेजसा ब्राह्मणैः कपाः ।
नारदस्य वचः श्रुत्वा प्रीताः सर्व्वे दिवौकसः । प्रशशंसुर्द्विजांश्चापि ब्राह्मणांश्च यशस्विनः ।
तेषां तेजस्तथा वीर्य्यं देवानां ववृधे ततः । अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितं ।
इत्युक्तवचनं वायुमर्ज्जुनः प्रत्युवाच ह । प्रतिपूज्य महाबाहो यत्तच्छृणु नराधिप ।
॥ अर्ज्जुन उवाच ॥ जीवाम्यहं ब्राह्मणार्थं सर्व्वथा सततं प्रभो । ब्रह्मण्यो ब्राह्मणेभ्यश्च प्रणमामि च नित्यशः । ७११०
दत्तात्रेयप्रसादाच्च मया प्राप्तमिदं बलं । लोके च परमा कीर्त्तिर्धर्म्मश्च चरितो महान् ।
अहो ब्राह्मणकर्म्माणि मया मारुत तत्त्वतः । त्वया प्रोक्तानि कार्त्स्न्येन श्रुतानि प्रयतेन च ।
॥ वायुरुवाच ॥ ब्राह्मणान् क्षात्त्रधर्म्मेण पालयस्वेन्द्रियाणि च । भृगुभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि पवनार्ज्जुनसंवादे सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥
॥ युधिष्ठिर उवाच ॥ ब्राह्मणानर्च्चसे राजन् सततं संशितव्रतान् । कन्तु कर्म्मोदयं दृष्ट्वा तानर्च्चसि जनाधिप ।
कां वा ब्राह्मणपूजायां दृष्ट्वा व्युष्टिं महाव्रत । तानर्च्चसि महाबाहो सर्व्वमेतद्वदस्व मे । ७११५
॥ भीष्म उवाच ॥ एष ते केशवः सर्व्वमाख्यास्यति महामतिः । व्युष्टिं ब्राह्मणपूजायां दृष्टव्युष्टिर्महाव्रतः ।
बलं श्रोत्रे वाङ्मनश्चक्षुषी च ज्ञानं तथा नविशुद्धं ममाद्य । देहन्यासो नातिचिरान्मतो मे न चातितूर्णं सविता प्रयाति ।
उक्ता धर्म्मा ये पुराणे महान्तो राजन् विप्राणां क्षत्त्रियाणां विशाञ्च । तथा शूद्राणां धर्म्ममुपासते च शेषं कृष्णादुपशिक्षस्व पार्थ ।
अहं ह्येनं वेद्मि तत्त्वेन कृष्णं योऽयं हि यच्चास्य बलं पुराणं । अमेयात्मा केशवः कौरवेन्द्र सोऽयं धर्म्मं वक्ष्यति संशयेषु ।
कृष्णः पृथ्वीमसृजत् खं दिवञ्च कृष्णस्य देहान्मेदिनी सम्बभूव । वराहोऽयं भीमबलः पुराणः सपर्व्वतान् व्यसृजद्वै दिशश्च । ७१२०
अस्य चाधोऽथान्तरीक्षं दिवञ्च दिशश्चतस्रो विदिशश्चतस्रः । सृष्टिस्तथैवेयमनुप्रसूता स निर्म्ममे विश्वमिदं पुराणं ।
अस्य नाभ्यां पुष्करं संप्रसूतं यत्रोत्पन्नः स्वयमेवामितौजाः । येन च्छिन्नं यत्तमः पार्थ घोरं यत्तत्तिष्ठत्यर्णवं तर्ज्जयानं ।

कृते युगे धर्म्म आसीत् समग्रस्त्रेताकाले ज्ञानमनुप्रपन्नः। बलन्त्वासीद्द्वापरे पार्थ कृष्णः कलौ त्वधर्म्मः क्षितिमेवाजगाम।
स एव पूर्व्वं निजघान दैत्यान् स पूर्व्वदेवश्च बभूव सम्राट्। स भूतानां भावनो भूतभव्यः स विश्वस्यास्य जगतश्चाभिगोप्ता।
यदा धर्म्मो ग्लाति वंशे सुराणां तदा कृष्णो जायते मानुषेषु। धर्म्मे स्थित्वा स तु वै भावितात्मा परांश्च लोकानपरांश्च
याति। ७२६८

त्याज्यांस्त्यक्त्वा चासुराणां वधाय कार्य्याकार्य्ये कारणञ्चैव पार्थ। कृतं करिष्यन् क्रियते च देवो राहुं सोमं विद्धि च शक्रमेनं।
स विश्वकर्म्मा स हि विश्वरूपः स विश्वभृद्विश्वसृग्विश्वजिच्च। स शूलभृच्छोणितभृत् करालस्तं कर्म्मभिर्व्विदितं वै स्तुवन्ति।
तं गन्धर्व्वाणामप्सरसाञ्च नित्यमुपतिष्ठन्ते विबुधानां शतानि। तं राक्षसाश्च परिसंवदन्ति रायस्पोषः स विजिगीषुरेकः।
तमध्वरे शंसितारस्तुवन्ति रथन्तरे सामगाश्च स्तुवन्ति। तं ब्राह्मणा ब्रह्ममन्त्रैः स्तुवन्ति तस्मै हविरध्वर्य्यवः कल्पयन्ति।
तं घोषार्थे गीर्भिरिन्द्राः स्तुवन्ति स चापीशो भारतैकः पशूनां। स पौराणीं ब्रह्मगुहां प्रविष्टो महीसत्रं भारताग्रे
ददर्श। ७२७०

स चैव गामुद्दधाराग्र्यकर्म्मा विक्षोभ्य दैत्यानसुरांश्च सर्व्वान्। तस्य भक्ष्यान् विविधान् वेदयन्ति तमेवाजौ वाहनं वेदयन्ति।
तस्यान्तरीक्षं पृथिवी दिवञ्च सर्व्वं वशे तिष्ठति शाश्वतस्य। स कुम्भरेतः ससृजे सुराणां यत्रोत्पन्नमृषिमाहुर्व्वसिष्ठं।
स मातरिश्वा विभुरश्ववाजी स रश्मिवान् सविता चादिदेवः। तेनासुरा विजिताः सर्व्व एव तद्विक्रान्तैर्व्विजितानीह त्रीणि।
स देवानां मानुषाणां पितॄणां तमेवाहुर्यज्ञविदां वितानं। स एव कालं विभजन्नुदेति तस्योत्तरं दक्षिणञ्चायने द्वे।
तस्यैवोर्द्ध्वं तिर्य्यगधश्चरन्ति गभस्तयो मेदिनीं भासयन्तः। तं ब्राह्मणा वेदविदो जुषन्ति तस्यादित्यो भामुपयुज्य
भाति। ७२७१

स मासि मास्यध्वरकृद्विधत्ते तमध्वरं वेदविदः पठन्ति। स एवोक्तश्चक्रमिदं त्रिनाभि सप्ताश्वयुक्तं वहते वै त्रिधाम।
महातेजाः सर्व्वगः सर्व्वसिंहः कृष्णो लोकान् धारयते यथैकः। ईशं तमोघ्नं तमेव वीर कृष्णं सदा पार्थ कर्त्तारमेहि।
स एकदा कक्षगतो महात्मा तुष्टो विभुः खाण्डवे धूमकेतुः। स राक्षसानुरगांश्चावजित्य सर्व्वत्रगः सर्व्वमग्नौ जुहोति।
स एव पार्थाय श्वेतमश्वं प्रायच्छत् स एवाश्वानथ सर्व्वांश्चकार। स बन्धुरस्तस्य रथस्त्रिचक्रस्त्रिवृच्छिराश्चतुरस्त्रिनाभिः।
स विहायो व्यदधात् पञ्चनाभिः स निर्म्ममे गां दिवमन्तरीक्षं। सोऽरण्यानि व्यसृजत् पर्व्वतांश्च हृषीकेशोऽमितदीप्ता-
ग्नितेजाः। ७२७२

अस्त्रञ्च यद्वै भविता जिघांसन् शक्रं वज्रं प्रहरन्तं निरास। स महेन्द्रः स्तूयते वै महाध्वरे विप्रैरेको ऋक्सहस्रैः पुराणैः।
दुर्व्वासा वै तेन नान्येन शक्यो गृहे राजन् वासयितुं महौजाः। तमेवाहुर्ऋषिमेकं पुराणं स विश्वकृद्विदधात्यात्म-
भावात्।
देवानां यो वेदयतेऽधिदेवो विधींश्च यश्चाश्रयते पुराणान्। कामे वेदे लौकिके यत् फलञ्च विष्वक्सेनः सर्व्वमेतत्
प्रतीहि।
ज्योतींषि शुक्लानि हि सर्व्वलोके त्रयो लोका लोकपालास्त्रयश्च। त्रयोऽग्नयो व्याहृतयश्च तिस्रः सर्व्वे देवा देवकीपुत्र एव।
संवत्सरः स ऋतुः सोऽर्द्धमासः सोऽहोरात्रः स कला वै स काष्ठा। मात्रा मुहूर्त्ताश्च लवाः क्षणाश्च विष्वक्सेनः सर्व्वमेतत्
प्रतीहि। ७२७३

चन्द्रादित्यौ ग्रहनक्षत्रताराः सर्व्वाणि दर्शान्यथ पौर्णमासं। नक्षत्रयोगा ऋतवश्च पार्थ विष्वक्सेनात् सर्व्वमेतत् प्रसूतं।
रुद्रादित्या वसवोऽथाश्विनौ च साध्याश्च विश्वे मरुतां गणाश्च। प्रजापतिर्देवमाता दितिश्च सर्व्वे कृष्णादृषयश्चैव सप्त।
वायुर्भूत्वा विक्षिपते च विश्वमग्निर्भूत्वा दहते विश्वरूपः। आपो भूत्वा मज्जयते च सर्व्वं ब्रह्मा भूत्वा सृजते सर्व्वसङ्घान्।
वेद्यञ्च यद्वेदयते च वेदं विधिश्च यश्चाश्रयते विधेयं। धर्म्मे च वेदे च बले च सर्व्वं चराचरं केशवं त्वं प्रतीहि।
ज्योतिर्भूतः परमोऽसौ पुरस्तात् प्रकाशते यत् प्रभया विश्वरूपः। अपः सृष्ट्वा सर्व्वभूतात्मयोनिः पुराऽकरोत् सर्व्वमेवाथ विश्वं। ६९९०
ऋतूनुत्पातान् विविधान्यद्भुतानि मेघान् विद्युत्सर्व्वमैरावतञ्च। सर्व्वं कृष्णात् स्थावरं जङ्गमञ्च विश्वात्मानं विष्णुमेनं प्रतीहि।
विश्वावासं निर्गुणं वासुदेवं सङ्कर्षणं जीवभूतं वदन्ति। ततः प्रद्युम्नमनिरुद्धं चतुर्थमाज्ञापयत्यात्मयोनिर्महात्मा।
स पञ्चधा पञ्चजनोपपन्नं सञ्चोदयन् विश्वमिदं सिसृक्षुः। ततश्चकारावनिमारुतौ च खं ज्योतिरापश्च तथैव पार्थ।
स स्थावरं जङ्गमञ्चैवमेतच्चतुर्विधं लोकमिमञ्च कृत्वा। ततो भूमिं व्यदधात् पञ्चबीजां द्यौः पृथिव्यां धास्यति भूरिवारि।
तेन विश्वं कृतमेतद्धि राजन् स जीवयत्यात्मनैवात्मयोनिः। ततो देवानसुरान्मानवांश्च लोकानृषींश्चापि पितॄन् प्रजाश्च। ६९९५
समासेन विधिवत् प्राणिलोकान् सर्व्वान् सदा भूतपतिः सिसृक्षुः। शुभाशुभं स्थावरं जङ्गमञ्च विष्वक्सेनात् सर्व्वमेतत् प्रतीहि।
यद्वर्त्तते यच्च भविष्यतीह सर्व्वं ह्येतत् केशवं त्वं प्रतीहि। मृत्युश्चैव प्राणिनामन्तकाले साक्षात् कृष्णः शाश्वतो धर्म्मवाहः।
भूतं यच्चेह न विद्म किञ्चिद्विष्वक्सेनः सर्व्वमेतत् प्रतीहि।
यत् प्रशस्तञ्च लोकेषु पुण्यं यच्च शुभाशुभं। तत् सर्व्वं केशवोऽचिन्त्यो विपरीतमतः परं।
एतादृशः केशवोऽतश्च भूयो नारायणः परमश्चाव्ययश्च। मध्यश्चान्तस्य जगतस्तस्थुषश्च बुभूषतां प्रभवश्चाव्ययश्च। ७०००
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि भगवन्माहात्म्यकथने अष्टपञ्चाशदधिकशततमोऽध्यायः ॥१५८॥
॥ युधिष्ठिर उवाच ॥ ब्रूहि ब्राह्मणपूजायां व्युष्टिं त्वं मधुसूदन। वेत्ता त्वमस्य चार्थस्य वेद त्वां हि पितामहः।
॥ वासुदेव उवाच ॥ शृणुष्वावहितो राजन् द्विजानां भरतर्षभ। यथातत्त्वेन वदतो गुणान् वै कुरुसत्तम।
द्वारवत्यां समासीनं पुरा मां कुरुनन्दन। प्रद्युम्नः परिपप्रच्छ ब्राह्मणैः परिकोपितः।
किं फलं ब्राह्मणेष्वस्ति पूजायां मधुसूदन। ईश्वरत्वं कुतस्तेषामिहैव च परत्र च।
सदा द्विजातीन् सम्पूज्य किं फलं तत्र मानद। एतद्ब्रूहि स्फुटं सर्व्वं सुमहान् संशयोऽत्र मे। ७००५
इत्युक्ते वचने तस्मिन् प्रद्युम्नेन तदा त्वहं। प्रत्यब्रुवं महाराज यत्तच्छृणु समाहितः।
व्युष्टिं ब्राह्मणपूजायां रौक्मिणेय निबोध मे। त्रिवर्गे चापवर्गे च यशःश्रीरोगशान्तिषु।
देवतापितृपूजासु सन्तोष्याश्चैव नो द्विजाः। एते हि सोमराजान ईश्वराः सुखदुःखयोः।
अस्मिन् लोके रौक्मिणेय तथाऽमुष्मिन् पुत्रक। ब्राह्मणप्रभवं सौम्यं न मेऽत्रास्ति विचारणा।
ब्राह्मणप्रतिपूजायामायुः कीर्त्तिर्यशो बलं। लोका लोकेश्वराश्चैव सर्व्वे ब्राह्मणपूजकाः। ७०१०

तत् कथं वै नार्हेयमीश्वरोऽस्मीति पुत्रक। मा ते मन्युर्महाबाहो भवत्वत्र द्विजान् प्रति।
ब्राह्मणा हि महद्भूतमस्मिँल्लोके परत्र च। भस्म कुर्य्युर्जगदिदं क्रुद्धाः प्रत्यक्षदर्शिनः।
अन्यानपि सृजेयुश्च लोकान् लोकेश्वरांस्तथा। कथं तेषु न वर्त्तेरन् सम्यग्ज्ञानात् सुतेजसः।
अवसन्मे गृहे तात ब्राह्मणो हरिपिङ्गलः। चीरवासा बिल्वदण्डी दीर्घश्मश्रुः कृशो महान्।
दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि। सर्व्वान् सञ्चरते लोकान् ये दिव्या ये च मानुषाः। ७३१५
इमां गाथां गायमानश्चत्वरेषु सभासु च। दुर्व्वाससं वासयेत् को ब्राह्मणं सत्कृतं गृहे।
रोषणः सर्व्वभूतानां सूक्ष्मेऽप्यपकृते कृते। परिभाषाञ्च मे श्रुत्वा को नु दद्यात् प्रतिश्रयं।
यो मां कश्चिद्वासयीत न स मां कोपयेदिति। यस्मान्नाद्रियते कश्चित्ततोऽहं समवासयं।
स स्म भुङ्क्ते सहस्राणां बहूनामन्नमेकदा। एकदा स्माल्पकं भुङ्क्ते न चैवैति पुनर्गृहान्।
अकस्माच्च प्रहसति तथाऽकस्मात् प्ररोदिति। न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा। ७३२०
अथ स्वावसथं गत्वा स शय्यास्तरणानि च। कन्याश्चालङ्कृता दग्ध्वा ततो व्यपगतः पुनः।
अथ मामब्रवीद्भूयः स मुनिः संशितव्रतः। कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः।
तदैव तु मया तस्य चित्तज्ञेन गृहे जनः। सर्व्वाण्यन्नानि पानानि भक्ष्याश्चोच्चावचास्तथा।
भवन्तु सत्कृतानीह पूर्व्वमेव प्रचोदितः। ततोऽहं ज्वलमानं वै पायसं प्रत्यवेदयं।
तं भुक्त्वैव तु स क्षिप्रं ततो वचनमब्रवीत्। क्षिप्रमङ्गानि लिम्पस्व पायसेनेति स स्म ह। ७३२५
अविमृश्यैव च ततः कृतवानस्मि तत्तथा। तेनोच्छिष्टेन गात्राणि शिरश्चैवाभ्यमृक्षयं।
स ददर्श तदाभ्याशे मातरं ते शुभाननां। तामपि स्मयमानः स पायसेनाभ्यलेपयत्।
मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत्। तमारुह्य रथञ्चैव निर्य्ययौ स गृहान्मम।
अग्निवर्णो ज्वलन् धीमान् स द्विजो रथधुर्य्यवत्। प्रतोदेनातुदद्बालां रुक्मिणीं मम पश्यतः।
न च मे स्तोकमप्यासीद्दुःखमीर्ष्याकृतं तदा। तथा स राजमार्गेण महता निर्य्ययौ बहिः। ७३३०
तद्दृष्ट्वा महदाश्चर्य्यं दाशार्हा जातमन्यवः। तत्राजल्पन्मिथः केचित् समाभाष्य परस्परं।
ब्राह्मणा एव जायेरन् नान्यो वर्णः कथञ्चन। को ह्येनं रथमास्थाय जीवेदन्यः पुमानिह।
आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरो द्विजः। ब्रह्माशीविषदग्धस्य नास्ति कश्चिच्चिकित्सकः।
तस्मिन् व्रजति दुर्द्धर्षे प्रास्खलद्रुक्मिणी पथि। तन्नामर्षयत श्रीमांस्ततस्तूर्णमचोदयत्।
ततः परमसंक्रुद्धो रथात् प्रस्कन्द्य स द्विजः। पदातिरुत्पथेनैव प्राद्रवद्दक्षिणामुखः। ७३३५
तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमं। तथैव पायसा दिग्धः प्रसीद भगवन्निति।
ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह। जितः क्रोधस्त्वया कृष्ण प्रकृत्यैव महाभुज।
न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत। प्रीतोऽस्मि तव गोविन्द वृणु कामान् यथेप्सितान्।
प्रसन्नस्य च मे तात पश्य व्युष्टिं यथाविधि। यावदेव मनुष्याणामन्ने भावो भविष्यति।
यथैवान्ने तथा तेषां त्वयि भावो भविष्यति। यावच्च पुण्या लोकेषु त्वयि कीर्त्तिर्भविष्यति। ७३४०

त्रिषु लोकेषु तावच्च वैशिष्ट्यं प्रतिपत्स्यसे। सुप्रियः सर्व्वलोकस्य भविष्यसि जनार्द्दन।
यत्ते भिन्नञ्च दग्धञ्च यच्च किञ्चिद्विनाशितं। सर्व्वं तथैव द्रष्टाऽसि विशिष्टं वा जनार्द्दन।
यावदेतत् प्रलिप्तन्ते गात्रेषु मधुसूदन। अतो मृत्युभयं नास्ति यावदिच्छसि चाच्युत।
न तु पादतले लिप्ते कस्मात्ते पुत्त्रकाद्य वै। नैतन्मे प्रियमित्येव स मां प्रीतोऽभवत्तदा।
इत्युक्तोऽहं शरीरं स्वं ददर्श श्रीसमायुतं। रुक्मिणीञ्चाब्रवीत् प्रीतः सर्व्वस्त्रीणां वरं यशः। [illegible]
कीर्त्तिञ्चानुत्तमां लोके समवाप्स्यसि शोभने। न त्वां जरा वा रोगाश्च वैवर्ण्यञ्चापि भाविनि।
स्प्रक्ष्यन्ति पुण्यगन्धा च कृष्णमाराधयिष्यसि। षोडशानां सहस्राणां वधूनां केशवस्य च।
वरिष्ठा च सलोक्या च केशवस्य भविष्यसि। तव मातरमित्युक्त्वा ततो मां पुनरब्रवीत्।
प्रस्थितः स महातेजा दुर्व्वासाऽग्निरिव ज्वलन्। एष वै ते बुद्धिरस्तु ब्राह्मणान् प्रति केशव।
इत्युक्त्वा स तदा विप्रस्तत्रैवान्तरधीयत। तस्मिन्नन्तर्हिते चाहमुपांशुव्रतमाचरं। [illegible]
यत् किञ्चिद्ब्राह्मणो ब्रूयात् सर्व्वं कुर्य्यामिति प्रभो। एतद्व्रतमहं कृत्वा मात्रा ते सह पुत्त्रक।
ततः परमहृष्टात्मा प्राविशं गृहमेव च। प्रविष्टे स्वगृहे सर्व्वमथ पश्यामि तं नवं।
यद्भिन्नं यच्च वै दग्धं तेन विप्रेण पुत्त्रक। ततोऽहं विस्मयं प्राप्तः सर्व्वं दृष्ट्वा नवं दृढं।
अपूजयञ्च मनसा रौक्मिणेय सदा द्विजान्। इत्यहं रौक्मिणेयस्य पृच्छतो भरतर्षभ।
माहात्म्यं द्विजमुख्यस्य सर्व्वमाख्यातवांस्तदा। तथा त्वमपि कौन्तेय ब्राह्मणान् सततं प्रभो। [illegible]
पूजयस्व महाभागान् धनैर्गोभिश्च नित्यदा। एवं व्युष्टिमहं प्राप्तो ब्राह्मणानां प्रसादजां।
यच्च मामाह भीष्मस्तु तत् सत्यं भरतर्षभ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दुर्व्वासोभिक्षोपाख्याने ऊनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

॥ युधिष्ठिर उवाच ॥ दुर्व्वाससः प्रसादात्ते यत्तदा मधुसूदन। अवाप्तमिह विज्ञानं तन्मे व्याख्यातुमर्हसि।
महाभाग्यञ्च यत्तस्य नामानि च महात्मनः। तत्त्वतो ज्ञातुमिच्छामि सर्व्वं मतिमतां वर।
॥ वासुदेव उवाच ॥ हन्त ते कीर्त्तयिष्यामि नमस्कृत्वा कपर्द्दिने। यदवाप्तं मया राजन् श्रेयो यच्चार्ज्जितं यशः। [illegible]
प्रयतः प्रातरुत्थाय यदधीये विशाम्पते। प्राञ्जलिः शतरुद्रीयं तन्मे निगदतः शृणु।
प्रजापतिस्तत् ससृजे तपसोऽन्ते महातपाः। शङ्करस्त्वसृजत्तात प्रजाः स्थावरजङ्गमाः।
नास्ति किञ्चित् परं भूतं महादेवाद्विशाम्पते। इह त्रिष्वपि लोकेषु भूतानां प्रभवो हि सः।
न चैवोत्सहते स्थातुं कश्चिदग्रे महात्मनः। नहि भूतं समं तेन त्रिषु लोकेषु विद्यते।
गन्धेनापि हि संग्रामे तस्य क्रुद्धस्य शत्रवः। विसंज्ञा हतभूयिष्ठा वेपन्ते च पतन्ति च। [illegible]
घोरञ्च निनदं तस्य पर्ज्जन्यनिनदोपमं। श्रुत्वा विशीर्य्येद्धृदयं देवानामपि संयुगे।
यांश्च घोरेण रूपेण पश्येत् क्रुद्धः पिनाकधृक्। न सुरा नासुरा लोके न गन्धर्व्वा न पन्नगाः
कुपिते सुखमेधन्ते तस्मिन्नपि गुहागताः। प्रजापतेस्तु दक्षस्य यजतो वितते क्रतौ।

विव्याध कुपितो यज्ञं निर्भयश्चाभवत् तदा । धनुषो बाणमुत्सृज्य सघोषं विननाद च ।
तेन शर्म्म कुतः शान्तिं विषादं लेभिरे सुराः । विद्रुते च सहसा यज्ञे कुपिते च महेश्वरे । ७३७०
तेन ज्यातलघोषेण सर्व्वे लोकाः समाकुलाः । बभूवुरवशाः पार्थ विषेदुश्च सुरासुराः ।
आपश्चुक्षुभिरे चैव चकम्पे च वसुन्धरा । व्यद्रवन् गिरयश्चापि द्यौः पफाल च सर्व्वशः ।
अन्धेन तमसा लोकाः प्रावृता न चकाशिरे । प्रणष्टा ज्योतिषां भाश्च सह सूर्य्येण भारत ।
भृशं भीतास्ततः शान्तिं चक्रुः स्वस्त्ययनानि च । ऋषयः सर्व्वभूतानामात्मनश्च हितैषिणः ।
ततः सोऽभ्यद्रवद्देवान् रुद्रो रौद्रपराक्रमः । भगस्य नयने क्रुद्धः प्रहारेण व्यशातयत् । ७३७५
पूषाणञ्चाभिदुद्राव पादेन च रुषान्वितः । पुरोडाशं भक्षयतो दशनांश्च व्यशातयत् ।
ततः प्रणेमुर्देवास्ते वेपमानास्तु शङ्करं । पुनश्च सन्दधे रुद्रो दीप्तं सुनिशितं शरं ।
रुद्रस्य विक्रमं दृष्ट्वा भीता देवाः सहर्षिभिः । ततः प्रसादयामासुः सर्व्वे ते विबुधोत्तमाः ।
जेपुश्च शतरुद्रीयं देवाः कृत्वाऽञ्जलिं तदा । संस्तूयमानस्त्रिदशैः प्रससाद महेश्वरः ।
रुद्रस्य भागं यज्ञे च विशिष्टं ते त्वकल्पयन् । भयेन त्रिदशा राजन् शरणञ्च प्रपेदिरे । ७३८०
तेन चैव हि तुष्टेन स यज्ञः सन्धितोऽभवत् । यद्यच्चापहृतं तत्र तत्तथैव स जीवयत् ।
असुराणां पुराण्यासंस्त्रीणि वीर्य्यवतां दिवि । आयसं राजतञ्चैव सौवर्णमपि चापरं ।
नाशकत्तानि मघवा भेत्तुं सर्व्वायुधैरपि । अथ सर्व्वे महारुद्रं जग्मुः शरणमर्द्दिताः ।
तत ऊचुर्महात्मानो देवाः सर्व्वे समागताः । रुद्र रौद्रा भविष्यन्ति पशवः सर्व्वकर्म्मसु ।
जहि दैत्यान् सह पुरैर्ल्लोकांस्त्रायस्व मानद । स तथोक्तस्तथेत्युक्त्वा कृत्वा विष्णुं शरोत्तमं । ७३८५
शल्यमग्निं तथा कृत्वा पुङ्खं वैवस्वतं यमं । वेदान् कृत्वा धनुः सर्व्वान् ज्याञ्च सावित्रीमुत्तमां ।
ब्रह्माणं सारथिं कृत्वा विनियुज्य च सर्व्वशः । त्रिपर्व्वणा त्रिशल्येन कालेन तानि बिभेद सः ।
शरेणादित्यवर्णेन कालाग्निसमतेजसा । तेऽसुराः सपुरास्तत्र दग्धा रुद्रेण भारत ।
तञ्चैवाङ्कगतं दृष्ट्वा बालं पञ्चशिखं पुनः । उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत्तदा ।
असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः । स वज्रं स्तम्भयामास तं बाहुं परिघोपमं । ७३९०
न संबुबुधिरे चैव देवास्तं भुवनेश्वरं । सप्रजापतयः सर्व्वे तस्मिन् मुमुहुरीश्वरे ।
ततो ध्यात्वा तु भगवान् ब्रह्मा तममितौजसं । अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तमुमापतिं ।
ततः प्रसादयामासुरुमां रुद्रञ्च ते सुराः । बभूव स तदा बाहुर्बलहन्तुर्यथा पुरा ।
स चापि ब्राह्मणो भूत्वा दुर्व्वासा नाम वीर्य्यवान् । द्वारवत्यां मम पुरे चिरं कालमुपावसत् ।
विप्रकारान् प्रयुङ्क्ते स्म सुबहून्मम वेश्मनि । तानुदारतया चाहं चक्षमे चातिदुःसहान् । ७३९५
स वै रुद्रः स च शिवः सोऽग्निः सर्व्वः स सर्व्वजित् । स चैवेन्द्रश्च वायुश्च सोऽश्विनौ स च विद्युतः ।
स चन्द्रमाः स चेशानः स सूर्य्यो वरुणश्च सः । स कालः सोऽन्तको मृत्युः स तमो रात्र्यहानि च ।
मासार्द्धमासा ऋतवः सन्ध्ये संवत्सरश्च सः । स धाता स विधाता च विश्वकर्म्मा स सर्व्ववित् ।

नव चक्षि यथाचैव द्विजोऽथ विदिशस्तथा । विश्वमूर्त्तिरमेयात्मा भगवानमरद्युतिः ।

एकधा च द्विधा चैव बहुधा च स एव हि । तथा शतसहस्रधा चैव तथा शतसहस्रशः । ७५००

ईदृशः स महादेवो भूयः स भगवानजः । न हि सर्व्वा गुणा वक्तुमपि वर्षशतैरपि ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि ईश्वरप्रशंसायां [illegible]धिकशततमोऽध्यायः ॥ १६० ॥

॥ वासुदेव उवाच ॥ युधिष्ठिर महाबाहो महाभाग्यं महात्मनः । रुद्राय बहुरूपाय बहुनाम्ने निबोध मे ।

वदन्त्यग्निं महादेवं तथा स्थाणुं महेश्वरं । एकाक्षं त्र्यम्बकञ्चैव विश्वरूपं शिवन्तथा ।

द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः । घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः ।

उग्रा घोरा तनुर्यास्य सोऽग्निर्विद्युत् स भास्करः । शिवा सौम्या च या तस्य धर्मस्त्वापोऽथ चन्द्रमाः । ७५०५

आत्मनोऽर्द्धन्तु तस्याग्निः सोमोऽर्द्धं पुनरुच्यते । ब्रह्मचर्य्यं चरत्येका शिवा यास्य तनुस्तथा ।

यास्य घोरतमा मूर्त्तिर्जगत् संहरते तदा । ईश्वरत्वान्महत्त्वाच्च महेश्वर इति स्मृतः ।

यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् । मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ।

देवानां सुमहान् यच्च यच्चास्य विषयो महान् । यच्च विश्वं महत् पाति महादेवस्ततः स्मृतः ।

धूम्ररूपञ्च यत्तस्य धूर्ज्जटीत्यत उच्यते । समेधयति यन्नित्यं सर्व्वान् वै सर्व्वकर्म्मभिः । ७५१०

मनुष्याञ्छिवमन्विच्छंस्तस्मादेष शिवः स्मृतः । दहत्यूर्द्ध्वं स्थितो यच्च प्राणान् नॄणां स्थिरश्च यत् ।

स्थिरलिङ्गश्च यन्नित्यं तस्मात् स्थाणुरिति स्मृतः । यदस्य बहुधा रूपं भूतं भव्यं भवत्तदा ।

स्थावरं जङ्गमञ्चैव बहुरूपस्ततः स्मृतः । विश्वेदेवाश्च यत्तस्मिन् विश्वरूपस्ततः स्मृतः ।

सहस्राक्षोऽयुताक्षो वा सर्व्वतोऽक्षिमयोऽपि च । चक्षुषः प्रभवस्तेजो नास्त्यन्तोऽथास्य चक्षुषां ।

सर्व्वथा यत् पशून् पाति तैश्च यद्रमते सह । तेषामधिपतिर्यच्च तस्मात् पशुपतिः स्मृतः । ७५१५

नित्येन ब्रह्मचर्य्येण लिङ्गमस्य यदा स्थितं । महयन्त्यस्य लोकाश्च प्रियं ह्येतन्महात्मनः ।

विग्रहं पूजयेद्यो वै लिङ्गं वाऽपि महात्मनः । लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते ।

ऋषयश्चापि देवाश्च गन्धर्व्वाप्सरसस्तथा । लिङ्गमेवार्च्चयन्ति स्म यत्तदूर्द्ध्वं समास्थितं ।

पूज्यमाने सदा तस्मिन् मोदते स महेश्वरः । सुखं ददाति प्रीतात्मा भक्तानां भक्तवत्सलः ।

एष एव श्मशानेषु देवो वसति निर्द्दहन् । यजन्ते ये जनास्तत्र वीरस्थाननिषेविणः । ७५२०

विषमस्थः शरीरेषु स मृत्युः प्राणिनामिह । स च वायुः शरीरेषु प्राणोऽपानः शरीरिणां ।

तस्य रूपाणि घोराणि दीप्तानि च बहूनि च । लोके यान्यस्य पूज्यन्ते विप्रास्तानि विदुर्बुधाः ।

नामधेयानि देवेषु बहून्यस्य यथार्थवत् । निरुच्यन्ते महत्त्वाच्च कर्म्मभिश्चरितैस्तथा ।

वेदे चास्य विदुर्विप्राः शतरुद्रियमुत्तमं । व्यासेनोक्तञ्च यच्चापि उपस्थाने महात्मनः ।

प्रदाता सर्व्वलोकानां विश्वं वाऽप्युच्यते महत् । ज्येष्ठभूतं वदन्त्येनं ब्राह्मणा ऋषयोऽपरे । ७५२५

प्रथमो ह्येष देवानां मुखादग्निमजीजनत् । ग्रहैर्बहुविधैः प्राणान् संरुद्धानुत्सृजत्यपि ।

विमुञ्चति न पुण्यात्मा शरण्यः शरणागतान् । आयुरारोग्यमैश्वर्य्यं वित्तं कामांश्च पुष्कलान् ।

स ददाति मनुष्येभ्यः स एवाक्षिपते पुनः। शक्रादिषु च देवेषु तस्यैश्वर्य्यमिहोच्यते।
स एव व्याप्नुते नित्यं त्रैलोक्यस्य शुभाशुभे। ऐश्वर्य्याच्चैव कामानामीश्वरः पुनरुच्यते।
महेश्वरश्च लोकानां महतामीश्वरश्च सः। बहुभिर्विविधैरूपैर्विश्वं व्याप्तमिदं जगत्। ७५१०
तस्य देवस्य यद्वक्त्रं समुद्रे तद्वडामुखं।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि ईश्वरप्रशंसायां द्विषष्ट्यधिकशततमोऽध्यायः॥ १६१॥

॥ वैशम्पायन उवाच॥ इत्युक्तवति वाक्यन्तु कृष्णे देवकिनन्दने। भीष्मं शान्तनवं भूयः पर्य्यपृच्छद्युधिष्ठिरः।
निर्णये वा महाबुद्धे सर्व्वधर्म्मविदां वर। प्रत्यक्षमागमो वेति किन्तयोः कारणं भवेत्।
॥ भीष्म उवाच॥ नास्त्यत्र संशयः कश्चिदिति मे वर्त्तते मतिः। शृणु वक्ष्यामि ते प्राज्ञ सम्यक् त्वमनुपृच्छसि।
संशयः सुगमस्तत्र निर्णयस्तत्र दुर्गमः। दृष्टं श्रुतमनन्तं हि यत्र संशयदर्शनं। ७५१५
प्रत्यक्षं कारणं दृष्ट्वा हैतुकाः प्राज्ञमानिनः। नास्तीत्येवं व्यवस्यन्ति सत्यं संशयमेव च।
तदयुक्तं व्यवस्यन्ति बालाः पण्डितमानिनः। अथ चेन्मन्यसे चैकं कारणं किं भवेदिति।
शक्यं दीर्घेण कालेन युक्तेनातन्द्रितेन च। प्राणयात्रामनेकस्य कल्पमानेन भारत।
तत्परेणैव नान्येन शक्यं ह्येतस्य दर्शनं। हेतूनामन्तमासाद्य विपुलं ज्ञानमुत्तमं।
ज्योतिः सर्व्वस्य लोकस्य विपुलं प्रतिपद्यते। न त्वेव गमनं राजन् हेतुतो गमनन्तथा। ७५२०
अग्राह्यमनिबद्धञ्च वाचा सम्परिवर्ज्जयेत्।
॥ युधिष्ठिर उवाच॥ प्रत्यक्षं लोकतः सिद्धिर्लोकश्चागमपूर्व्वकः। शिष्टाचारो बहुविधस्तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच॥ धर्म्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः। संस्था च तैरपि कृता कालेन परिभिद्यते।
अधर्म्मा धर्म्मरूपेण तृणैः कूप इवावृतः। ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर।
अवृत्ता ये तु भिन्दन्ति श्रुतित्यागपरायणाः। धर्म्मविद्वेषिणो मन्दा इत्युक्तेषु संशयः। ७५२५
अतृप्यन्तस्तु साधूनां य एवागमबुद्धयः। परमित्येव सन्तुष्टास्तानुपास्स्व च पृच्छ च।
कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ। धर्म्म इत्येव सम्बुद्धास्तानुपास्स्व च पृच्छ च।
न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायकर्म्म च। आचारः कारणञ्चैव धर्म्मश्चैकस्त्रयं पुनः।
॥ युधिष्ठिर उवाच॥ पुनरेव हि मे बुद्धिः संशये परिमुह्यते। अपारे मार्गमाणस्य परं तीरमपश्यतः।
वेदः प्रत्यक्षमाचारः प्रमाणन्तु त्रयं यदि। पृथक्त्वं लभ्यते चैषां धर्म्मश्चैकस्त्रयं कथं। ७५३०
॥ भीष्म उवाच॥ धर्म्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः। यद्येवं मन्यसे राजंस्त्रिधा धर्म्मविचारणा।
एक एवेति जानीहि त्रिधा धर्म्मस्य दर्शनं। पृथक्त्वेन च मे बुद्धिस्त्रयाणामपि वै तथा।
उक्तो मार्गस्त्रयाणान्तु तत्तथैव समाचर। जिज्ञासा न तु कर्त्तव्या धर्म्मस्य परितर्कणात्।
सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः। अन्धो जड इवाशङ्को यद्ब्रवीमि तदाचर।
अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयं। अजातशत्रो सेवस्व धर्म्म एष सनातनः। ७५३५
ब्राह्मणेषु च वृत्तिर्य्या पितृपैतामहोचिता। तामन्वेहि महाबाहो धर्म्मस्यैते हि देशिकाः।

प्रमाणमप्रमाणं वै यः कुर्य्यादबुधो जनः । न स प्रमाणतामर्हो विवादजननो हि सः ।
ब्राह्मणानेव सेवस्व सत्कृत्य बहुमन्य च । एतेष्वेव त्विमे लोकाः कृत्स्ना इव विबोध तान् ।
॥ युधिष्ठिर उवाच ॥ ये च धर्म्ममसूयन्त ये चैनं पर्य्युपासते । ब्रवीतु मे भवानेतत् क्व ते गच्छन्ति तादृशाः ।
॥ भीष्म उवाच ॥ रजसा तमसा चैव समवस्तीर्णचेतसः । नरकं प्रतिपद्यन्ते धर्म्मविद्वेषिणो जनाः । ७४९०
ये तु धर्म्मं महाराज सततं पर्य्युपासते । सत्यार्ज्जवपराः सन्तस्ते वै स्वर्गभुजो नराः ।
धर्म्म एव गतिस्तेषामाचार्य्योपासनाद्भवेत् । देवलोकं प्रपद्यन्ते ये धर्म्मं पर्य्युपासते ।
मनुष्या यदि वा देवाः शरीरमुपताप्य वै । धर्म्मिणः सुखमेधन्ते लोभद्वेषविवर्ज्जिताः ।
प्रथमं ब्राह्मणाः पुत्र धर्म्ममाहुर्मनीषिणः । धर्म्मिणः पर्य्युपासन्ते फलं पक्वमिवाशया ।
॥ युधिष्ठिर उवाच ॥ असतां कीदृशं रूपं साधवः किञ्च कुर्व्वते । ब्रवीतु मे भवानेतत् सन्तोऽसन्तश्च कीदृशाः । ७४९५
॥ भीष्म उवाच ॥ दुराचाराश्च दुर्द्धर्षा दुर्मुखाश्चाप्यसाधवः । साधवः शीलसम्पन्नाः शिष्टाचारस्य लक्षणं ।
राजमार्गे गवां मध्ये धान्यमध्ये च धर्म्मिणः । नोपसेवन्ति राजेन्द्र सर्गं मूत्रपुरीषयोः ।
पञ्चानामशनं दत्त्वा शेषमश्नन्ति साधवः । न जल्पन्ति च भुञ्जाना न निद्रान्त्यार्द्रपाणयः ।
चित्रभानुमनड्वाहं देवं गोष्ठं चतुष्पथं । ब्राह्मणं धार्म्मिकं वृद्धं ये कुर्व्वन्ति प्रदक्षिणं ।
वृद्धानां भारतप्तानां स्त्रीणां चक्रधरस्य च । ब्राह्मणानां गवां राज्ञां पन्थानं ददते च ये । ७५००
अतिथीनाञ्च सर्व्वेषां प्रेष्याणां स्वजनस्य च । तथा शरणकामानां गोप्ता स्यात् स्वागतप्रदः ।
सायं प्रातर्म्मनुष्याणामशनं देवनिर्म्मितं । नान्तरा भोजनं दृष्टमुपवासविधिर्हि सः ।
होमकाले यथा वह्निः कालमेव प्रतीक्षते । ऋतुकाले तथा नारी ऋतुमेव प्रतीक्षते ।
नान्यदा गच्छते यस्तु ब्रह्मचर्य्यन्तु तत् स्मृतं । अमृतं ब्राह्मणा गाव इत्येतत्त्रयमेकतः ।
तस्माद्गोब्राह्मणं नित्यमर्च्चयेत यथाविधि । यजुषा संस्कृतं मांसमुपभुञ्जन्न दुष्यति । ७५०५
पृष्ठमांसं वृथामांसं पुत्त्रमांसञ्च तत्समं । स्वदेशे परदेशे वाऽप्यतिथिं नोपवासयेत् ।
कर्म्म वै सफलं कृत्वा गुरूणां प्रतिपादयेत् । गुरुभ्य आसनं देयमभिवाद्याभिपूज्य च ।
गुरूनभ्यर्च्य वर्द्धन्ते आयुषा यशसा श्रिया । वृद्धानातिवदेज्जातु न च सम्प्रेषयेदिति ।
नासीनः स्यात् स्थितेष्वेवमायुरस्य न रिष्यते । न नग्नामीक्षते नारीं न नग्नान् पुरुषानपि ।
मैथुनं सततं गुप्तमाहारञ्च समाचरेत् । तीर्थानां गुरवस्तीर्थं चोक्षाणां हृदयं शुचि । ७५१०
दर्शनानां परं ज्ञानं सन्तोषः परमं सुखं । सायं प्रातश्च वृद्धानां शृणुयात् पुष्कला गिरः ।
श्रुतमाप्नोति हि नरः सततं वृद्धसेवया । स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ।
यच्छेद्वाङ्मनसी नित्यमिन्द्रियाणि तथैव च । संस्कृतं पायसञ्चैव यावकं कृशरं हविः ।
अष्टकाः पितृदैवत्या गृहाणामभिपूजनं । श्मश्रुकर्म्मणि मङ्गल्यं क्षुतानामभिनन्दनं ।
व्याधितानाञ्च सर्व्वेषामायुषामभिनन्दनं । न जातु त्वमिति ब्रूयादापन्नोऽपि महत्तरं । ७५१५
त्वंकारो वा वधो वेति विद्वत्सु न विशिष्यते । अवराणां समानानां शिष्याणाञ्च समाचरेत् ।

पापमाच्छते नित्यं हृदयं पापकर्म्मिणः। ज्ञानपूर्व्वं विनश्यन्ति गूहमाना महाजने।
ज्ञानपूर्व्वं कृतं कर्म्म च्छादयन्ते ह्यसाधवः। न मां मनुष्याः पश्यन्ति न मां पश्यन्ति देवताः।
पापेनापिहितः पापः पापमेवाभिजायते। यथा वार्द्धुषिको वृद्धिं देहभेदे प्रतीक्षते।
धर्म्मेणापिहितं पापं धर्म्ममेवाभिवर्द्धयेत्। यथा लवणमम्भोभिराप्लुतं प्रविलीयते। ७४९०
प्रायश्चित्तहतं पापं तथा सद्यः प्रणश्यति। तस्मात् पापं न गूहेत गूहमानं विवर्द्धते।
कृत्वा तु साधुष्वाख्येयं ते तत् प्रशमयन्त्युत। आशया सञ्चितं द्रव्यं कालेनैवोपभुज्यते।
अन्ये चैतत् प्रपद्यन्ते वियोगे तस्य देहिनः। मानसं सर्व्वभूतानां धर्म्ममाहुर्म्मनीषिणः।
तस्मात् सर्व्वाणि भूतानि धर्म्ममेव समासते। एक एव चरेद्धर्म्मं न धर्म्मध्वजिको भवेत्।
धर्म्मवाणिजका ह्येते ये धर्म्ममुपभुञ्जते। अर्च्चेद्देवानदम्भेन सेवेतामायया गुरुं। ७४९५
निधिं निदध्यात् पारत्र्यं यात्रार्थं दानशब्दितं।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि धर्म्मकथने द्विषष्ट्यधिकशततोऽध्यायः॥ १६२॥
॥ युधिष्ठिर उवाच॥ नाभागधेयः प्राप्नोति धनं सुबलवानपि। भागधेयान्वितस्त्वर्थं कृशो बालश्च विन्दति।
नालाभकाले लभते प्रयत्नेऽपि कृते सति। लाभकाले प्रयत्नेन लभते विपुलं धनं।
कृतयत्नाफलाश्चैव दृश्यन्ते शतशो नराः। अयत्नेनैधमानाश्च दृश्यन्ते बहवो जनाः।
यदि यत्ने भवेन्मर्त्यः सद्यः फलमवाप्नुयात्। न विद्वान् विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत्। ७५००
नालभ्यं चाप्यलभ्येत नृणां भरतसत्तम। प्रयत्नं कृतवन्तोऽपि दृश्यन्ते ह्यफला नराः।
मार्गन्यायशतैरर्थानमार्गश्चापरः सुखी। अकार्य्यमसकृत् कृत्वा दृश्यन्ते ह्यधना नराः।
धनयुक्ताः स्वकर्म्मस्था दृश्यन्ते चापरेऽधनाः। अधीत्य नीतिशास्त्राणि नीतियुक्तो न दृश्यते।
अनभिज्ञश्च साचिव्यं गमितः केन हेतुना। विद्यायुक्तो ह्यविद्यश्च धनवान् दुर्गतिस्तथा।
यदि विद्यामुपाश्रित्य नरः सुखमवाप्नुयात्। न विद्वान् विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत्। ७५०५
यथा पिपासां जयते पुरुषः प्राप्य वै जलं। दृष्टार्थो विद्यया ह्येवं न विद्यां प्रजहेन्नरः।
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि। तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति।
॥ भीष्म उवाच॥ ईहमानः समारम्भान् यदि नासादयेद्धनं। उग्रं तपः समारोहेन्न ह्यनुप्तं प्ररोहति।
दानेन भोगी भवति मेधावी वृद्धसेवया। अहिंसया च दीर्घायुरिति प्राहुर्म्मनीषिणः।
तस्माद्दद्यान्न याचेत पूजयेद्धार्म्मिकानपि। सुभाषी प्रियकृच्छुद्धः सर्व्वसत्त्वाविहिंसकः। ७५१०
यदा प्रमाणं प्रसवः स्वभावश्च सुखासुखे। दंशकीटपिपीलानां स्थिरो भव युधिष्ठिर।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि नीतिकथने त्रिषष्ट्यधिकशततोऽध्यायः॥ १६३॥
॥ भीष्म उवाच॥ कार्य्यते यच्च क्रियते सच्चासच्च कृताकृतं। तत्राश्वसीत सत्कृत्वा असत्कृत्वा न विश्वसेत्।
काल एव सर्व्वकाले निग्रहानुग्रहौ ददत्। बुद्धिमाविश्य भूतानां धर्म्माधर्म्मौ प्रवर्त्तते।
यदा त्वस्य भवेद्बुद्धिर्धर्म्मार्थस्य प्रदर्शनात्। तदाश्वसीत धर्म्मात्मा दृढबुद्धिर्न विश्वसेत्।

एतावन्मात्रमेतद्धि भूतानां प्राज्ञलक्षणं । कालयुक्तो प्युभयविच्छेषं युक्तं समाचरेत् ।
यथाऽप्युपस्थितैश्वर्य्याः पूजायन्ते न राजसाः । एवमेवात्मनात्मानं पूजयन्तीह धार्म्मिकाः ।
न ह्यधर्म्मतया धर्म्मं दद्यात् कालः कथञ्चन । तस्माद्विशुद्धमात्मानं जानीयाद्धर्म्मचारिणं ।
स्प्रष्टुमप्यसमर्थो हि ज्वलन्तमिव पावकं । अधर्म्मः सततो धर्म्मं कालेन परिरक्षितं ।
कार्य्यावेतौ हि धर्म्मेण धर्म्मो हि विजयावहः । त्रयाणामपि लोकानामालोकः कारणं भवेत् ।
न तु कश्चिन्नयेत् प्राज्ञो गृहीत्वैव करे नरं । उच्यमानस्तु धर्म्मेण सर्व्वलोकभयावहे ।
शूद्रोऽहं नाधिकारो मे चातुराश्रम्यसेवने । इति विज्ञाननपरे नात्मन्युपदधामुत ।
विशेषेण च वक्ष्यामि चातुर्व्वर्ण्यस्य तत्त्वतः । पञ्चभूतशरीराणां सर्व्वेषां सदृशात्मनां ।
लोकधर्म्मे च धर्म्मे च विशेषकरणं कृतं । यथैकत्वं पुनर्य्यान्ति प्राणिनस्तत्र विस्तरः ।
अध्रुवो हि कथं लोकः स्मृतो धर्म्मः कथं ध्रुवः । यत्र कालो ध्रुवस्तात तत्र धर्म्मः सनातनः ।
सर्व्वेषां तुल्यदेहानां सर्व्वेषां सदृशात्मनां । कालो धर्म्मेण संयुक्तः शेष एव स्वयं गुरुः ।
एवं सति न दोषोऽस्ति भूतानां धर्म्मसेवने । तिर्य्यग्योनावपि सतो लोक एव मतो गुरुः ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि धर्म्मकथने चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

॥ वैशम्पायन उवाच ॥ शरतल्पगतं भीष्मं पाण्डवोऽथ कुरूद्वहः । युधिष्ठिरो हितं प्रेप्सुरपृच्छत् कल्मषापहं ।
॥ युधिष्ठिर उवाच ॥ किं श्रेयः पुरुषस्येह किं कुर्व्वन् सुखमेधते । विपाप्मा तु भवेत् केन किं वा कल्मषनाशनं ।
॥ वैशम्पायन उवाच ॥ तस्मै शुश्रूषमाणाय नृपः शान्तनवस्तदा । दैवतं वंशमाचष्ट यथान्यायं पुरुषर्षभ ।
॥ भीष्म उवाच ॥ अयं दैवतवंशो वै ऋषिवंशसमन्वितः । त्रिसन्ध्यं पठितः पुत्र कल्मषापहरः परः ।
यदह्ना कुरुते पापमिन्द्रियैः पुरुषश्चरन् । बुद्धिपूर्व्वमबुद्धिर्व्वा रात्रौ यच्चापि सन्ध्ययोः ।
मुच्यते सर्व्वपापेभ्यः कीर्त्तयन् वै शुचिः सदा । नान्धो न बधिरः काले कुरुते स्वस्तिमान् सदा ।
तिर्य्यग्योनिं न गच्छेच्च नरकं सङ्कराणि च । न च दुःखभयं तस्य मरणे स न मुह्यते ।
देवासुरगुरुर्द्देवः सर्व्वभूतनमस्कृतः । अचिन्त्योऽथाप्यनिर्द्देश्यः सर्व्वप्राणो ह्ययोनिजः ।
पितामहो जगन्नाथः सावित्री ब्रह्मणः सती । वेदभूरथ कर्त्ता च विष्णुर्नारायणः प्रभुः ।
उमापतिर्विरूपाक्षः स्कन्दः सेनापतिस्तथा । विशाखो हुतभुग्वायुश्चन्द्रादित्यौ प्रभाकरौ ।
शक्रः शचीपतिर्द्देवो यमो धूमोर्णया सह । वरुणः सह गौर्य्या च सह ऋद्ध्या च धनेश्वरः ।
सौम्या गौः सुरभिर्द्देवी विश्रवाश्च महानृषिः । संकल्पः सागरो गङ्गा स्रवन्त्योऽथ मरुद्गणाः ।
वालखिल्यास्तपःसिद्धाः कृष्णद्वैपायनस्तथा । नारदः पर्व्वतश्चैव विश्वावसुर्हहाहुहूः ।
तुम्बुरुश्चित्रसेनश्च देवदूतश्च विश्रुतः । देवकन्या महाभागा दिव्याश्चाप्सरसाङ्गणाः ।
उर्व्वशी मेनका रम्भा मिश्रकेशी ह्यलम्बुषा । विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा ।
आदित्या वसवो रुद्राः साश्विनः पितरोऽपि च । धर्म्मः श्रुतं तपो दीक्षा व्यवसायः पितामहः ।
शर्व्वर्य्यो दिवसाश्चैव मारीचः कश्यपस्तथा । शुक्रो बृहस्पतिर्भौमो बुधो राहुः शनैश्चरः ।

नहुषश्चाम्बुतश्चैव नागाः पक्षाः सवल्मराः। वैनतेयाः समुद्राश्च कद्रुजाः पन्नगास्तथा।
शतद्रुश्च विपाशा च चन्द्रभागा सरस्वती। सिन्धुश्च देविका चैव प्रभासं पुष्कराणि च। ७६४५
गङ्गा महानदी वेणा कावेरी नर्म्मदा तथा। कुलम्पुना विशल्या च करतोयाऽम्बुवाहिनी।
सरयूर्गण्डकी चैव लोहितश्च महानदः। ताम्रारुणा वेत्रवती पर्णाशा गौतमी तु या।
गोदावरी च वेणा च कृष्णवेणा तथाऽद्रिजा। दृषद्वती च कावेरी चक्षुर्मन्दाकिनी तथा।
प्रयागञ्च प्रभासञ्च पुण्यं नैमिषमेव च। तच्च विश्वेश्वरस्थानं यत्रतद्धि विमलं सरः।
पुण्यतीर्थञ्च कलिलं कुरुक्षेत्रं प्रकीर्त्तितं। सिन्धूत्तमन्तपोदानं जम्बूमार्गमथापि च। ७६५०
हिरण्वती वितस्ता च तथा प्लक्षवती नदी। वेदस्मृतिर्वेदवती मालवाऽथाश्ववत्यपि।
भूमिभागास्तथा पुण्या गङ्गाद्वारमथापि च। ऋषिकुल्यास्तथा मेध्या नदी चित्रवहा तथा।
चर्म्मण्वती नदी पुण्या कौशिकी यमुना तथा। नदी भीमरथी चैव बाहुदा च महानदी।
माहेन्द्रवाणी त्रिदिवा नीलिका च सरस्वती। नन्दा चापरनन्दा च तथा तीर्थमहाह्रदः।
गया च फल्गुतीर्थञ्च धर्म्मारण्यं सुरैर्वृतं। तथा देवनदी पुण्या सरश्च ब्रह्मनिर्म्मितं। ७६५५
पुण्यं त्रिलोकविख्यातं सर्व्वपापहरं शिवं। हिमवान् पर्व्वतश्चैव दिव्यौषधिसमन्वितः।
विन्ध्यो धातुविचित्राङ्गस्तीर्थवानौषधान्वितः। मेरुर्म्महेन्द्रो मलयः श्वेतश्च रजतान्वितः।
शृङ्गवान्मन्दरो नीलो निषधो दर्दुरस्तथा। चित्रकूटोऽञ्जनाभश्च पर्व्वतो गन्धमादनः।
पुण्यः सोमगिरिश्चैव तथैवान्ये महीधराः। दिशश्च विदिशश्चैव क्षितिः सर्व्वे महीरुहाः।
विश्वेदेवा नभश्चैव नक्षत्राणि ग्रहास्तथा। पान्तु नः सततं देवाः कीर्त्तिताकीर्त्तिता मया। ७६६०
कीर्त्तयानो नरो ह्येतान् मुच्यते सर्व्वकिल्बिषैः। स्तुवंश्च प्रतिनन्दंश्च मुच्यते सर्व्वतो भयात्।
सर्व्वसङ्करपापेभ्यो देवतास्तवनन्दकः। देवतानन्तरं विप्रांस्तपःसिद्धांस्तपोधिकान्।
कीर्त्तितान् कीर्त्तयिष्यामि सर्व्वपापप्रमोचनान्। यवक्रीतोऽथ रैभ्यश्च कक्षीवानौशिजस्तथा।
भृग्वङ्गिरास्तथा कण्वो मेधातिथिरथ प्रभुः। वर्हो च गुणसम्पन्नः प्राचीं दिशमुपाश्रिताः।
भद्रां दिशं महाभागा उन्मुचुः प्रमुचुस्तथा। मुमुचुश्च महाभागः स्वस्त्यात्रेयश्च वीर्य्यवान्। ७६६५
मित्रावरुणयोः पुत्त्रस्तथाऽगस्त्यः प्रतापवान्। दृढायुश्चोर्द्ध्वबाहुश्च विश्रुतावृषिसत्तमौ।
पश्चिमां दिशमाश्रित्य य एधन्ते निबोध तान्। उषङ्गुः सह सोदर्य्यैः परिव्याधश्च वीर्य्यवान्।
ऋषिर्दीर्घतमाश्चैव गौतमः काश्यपस्तथा। एकतश्च द्वितश्चैव त्रितश्चैव महानृषिः।
अत्रेः पुत्त्रश्च धर्म्मात्मा तथा सारस्वतः प्रभुः। उत्तरां दिशमाश्रित्य य एधन्ते निबोध तान्।
अत्रिर्वशिष्ठः शक्तिश्च पाराशर्य्यश्च वीर्य्यवान्। विश्वामित्रो भरद्वाजो जमदग्निस्तथैव च। ७६७०
ऋचीकपुत्त्रो रामश्च ऋषिरौद्दालकिस्तथा। श्वेतकेतुः कोहलश्च विपुलो देवलस्तथा।
देवशर्म्मा च धौम्यश्च हस्तिकाश्यप एव च। लोमशो नाचिकेतश्च लोमहर्षण एव च।
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा। एष वै समवायश्च ऋषिदेवसमन्वितः।

आद्यः प्रकीर्त्तितो राजन् सर्व्वपापप्रमोचनः । नृगो ययातिर्नहुषो यदुः पूरुश्च वीर्य्यवान् ।
सागरो धुन्धुमाराऽथ दिलीपश्च प्रतापवान् । कृशाश्वो यौवनाश्वश्च चित्राश्वः सत्यवांस्तथा । ७६७५
दुष्मन्तो भरतश्चैव चक्रवर्त्ती महामनाः । यवनो जनकश्चैव तथा दृढरथो नृपः ।
रघुर्नरवरश्चैव तथा दशरथो नृपः । रामो राक्षसहा वीरः शशविन्दुर्भगीरथः ।
हरिश्चन्द्रो मरुत्तश्च तथा दृढरथो नृपः । महोदयो ह्यलर्कश्च ऐलश्चैव नराधिपः ।
करन्धमो नरश्रेष्ठः कध्मोरश्च नराधिपः । दक्षोऽम्बरीषः कुकुरो रैवतश्च महायशाः । कुरुः संवरणश्चैव मान्धाता सत्यविक्रमः ।
मुचुकुन्दश्च राजर्षिर्जह्नुर्जाह्नविसेवितः । आदिराजः पृथुर्वैन्यो मित्रभानुः प्रियङ्करः । ७६८०
त्रसद्दस्युस्तथा राजा श्वेतो राजर्षिसत्तमः । महाभिषश्च विख्यातो निमीराजा तथाऽष्टकः ।
आयुः क्षुपश्च राजर्षिः कक्षेयुश्च नराधिप । प्रतर्द्दनो दिवोदासः सुदासः कोशलेश्वरः ।
ऐलो नलश्च राजर्षिर्मनुश्चैव प्रजापतिः । हविध्रश्च पृषध्रश्च प्रतीपः शान्तनुस्तथा ।
अजः प्राचीनवर्हिश्च तथेक्ष्वाकुर्महायशाः । अनरण्यो नरपतिर्जानुजङ्घस्तथैव च ।
कक्षसेनश्च राजर्षिर्ये चान्ये नानुकीर्त्तिताः । कल्यमुत्थाय यो नित्यं सन्ध्ये द्वेऽस्तमयोदये । ७६८५
पठेच्छुचिरनावृत्तः स धर्म्मफलभाग्भवेत् । देवा देवर्षयश्चैव स्तुता राजर्षयस्तथा ।
पुष्टिमायुर्यशः स्वर्गं विधास्यन्ति ममेश्वराः । मा विघ्नं मा च मे पापं मा च मे परिपन्थिनः ।
ध्रुवो जयो मे नित्यं स्यात् परत्र च शुभा गतिः ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि वंशानुकीर्त्तने पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
॥ जनमेजय उवाच ॥ शरतल्पगते भीष्मे कौरवाणां धुरन्धरे । शयाने वीरशयने पाण्डवैः समुपस्थिते ।
युधिष्ठिरो महाप्राज्ञो मम पूर्व्वपितामहः । धर्म्माणामागमं श्रुत्वा विदित्वा सर्व्वसंशयान् । ७६९०
दानानाञ्च विधिं श्रुत्वा छिन्नधर्म्मार्थसंशयः । यदन्यदकरोद्विप्र तन्मे शंसितुमर्हसि ।
॥ वैशम्पायन उवाच ॥ अभूत्मुहूर्त्तं स्तिमितं सर्व्वं तद्राजमण्डलं । तूष्णीम्भूते ततस्तस्मिन् पटे चित्रमिवार्पितं ।
मुहूर्त्तमिव च ध्यात्वा व्यासः सत्यवतीसुतः । नृपं शयानं गाङ्गेयमिदमाह वचस्तदा ।
राजन् प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः । सहितो भ्रातृभिः सर्व्वैः पार्थिवैश्चानुयायिभिः ।
उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता । तमिमं पुरयानाय समनुज्ञातुमर्हसि । ७६९५
एवमुक्तो भगवता व्यासेन पृथिवीपतिः । युधिष्ठिरं सहामात्यमनुजज्ञे नदीसुतः ।
उवाच चैनं मधुरं नृपं शान्तनवो नृपः । प्रविशस्व पुरीं राजन् व्येतु ते मानसो ज्वरः ।
यजस्व विविधैर्यज्ञैर्बह्वन्नैः स्वाप्तदक्षिणैः । ययातिरिव राजेन्द्र श्रद्धादमपुरःसरः ।
क्षत्रधर्म्मरतः पार्थ पितॄन् देवांश्च तर्पय । श्रेयसा योक्ष्यसे चैव व्येतु ते मानसो ज्वरः ।
रञ्जयस्व प्रजाः सर्व्वाः प्रकृतीः परिसान्त्वय । सुहृदः फलसत्कारैरर्च्चयस्व यथार्हतः । ७७००
अनु त्वां तात जीवन्तु मित्राणि सुहृदस्तथा । चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः ।
आगन्तव्यञ्च भवता समये मम पार्थिव । विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे ।

तथेत्युक्त्वा तु कौन्तेयः सोऽभिवाद्य पितामहं। प्रययौ सपरीवारो नगरं नागसाह्वयं।
धृतराष्ट्रं पुरस्कृत्य गान्धारीञ्च पतिव्रतां। सहितैर्ऋषिभिः सर्व्वैर्भ्रातृभिः केशवेन च।
पौरजानपदैश्चैव मन्त्रिभिश्चैव पार्थिव। प्रविवेश कुरुश्रेष्ठः पुरं वारणसाह्वयं। ७७०५

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि भीष्मानुज्ञायां षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥ समाप्तञ्चेदमानुशासनिकं पर्व्व ॥

---

## ॥ अथ स्वर्गारोहणिकं पर्व्व ॥

॥ वैशम्पायन उवाच ॥ ततः कुन्तीसुतो राजा पौरजानपदं जनं। पूजयित्वा यथान्यायमनुजज्ञे गृहान् प्रति।
सान्त्वयामास नारीश्च हतवीरा हतेश्वराः। विपुलैरर्थदानैश्च तदा पाण्डुसुतो नृपः।
सोऽभिषिक्तो महाप्राज्ञः प्राप्य राज्यं युधिष्ठिरः। अवस्थाप्य नरश्रेष्ठः सर्व्वाः स्वप्रकृतीस्तदा।
द्विजेभ्यो बलमुख्येभ्यो नैगमेभ्यश्च सर्व्वशः। प्रतिगृह्याशिषो मुख्यास्तथा धर्म्मभृताम्वरः।
उषित्वा शर्व्वरीः श्रीमान् पञ्चाशन्नगरोत्तमे। समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः। ७७१०
स निर्ययौ गजपुराद्याजकैः परिवारितः। दृष्ट्वा निवृत्तमादित्यं प्रवृत्तञ्चोत्तरायणं।
घृतं माल्यञ्च गन्धांश्च क्षौमाणि च युधिष्ठिरः। चन्दनागुरुमुख्यानि तथा कालीयकान्यपि।
प्रस्थाप्य पूर्व्वं कौन्तेयो भीष्मसंस्करणाय वै। माल्यानि च महार्हाणि रत्नानि विविधानि च।
धृतराष्ट्रं पुरस्कृत्य गान्धारीञ्च यशस्विनीं। मातरञ्च पृथां धीमान् भ्रातॄंश्च पुरुषर्षभ।
जनार्द्दनेनानुगतो विदुरेण च धीमता। युयुत्सुना च कौरव्यो युयुधानेन वा विभो। ७७१५
महता राजयोग्येन परिवारेण संवृतः। स्तूयमानो महातेजा भीष्मस्याग्नीननुव्रजन्।
निश्चक्राम पुरात्तस्माद्यथा देवपतिस्तथा। आससाद कुरुक्षेत्रे ततः शान्तनवं नृपः।
उपास्यमानं व्यासेन पाराशर्य्येण धीमता। नारदेन च राजर्षे देवलेनासितेन च।
हतशिष्टैर्नृपैश्चान्यैर्नानादेशसमागतैः। रक्षिभिश्च महात्मानं रक्ष्यमाणं समन्ततः।
शयानं वीरशयने ददर्श नृपतिस्तथा। ततो रथादवतीर्य्य भ्रातृभिः सह धर्म्मराट्। ७७२०
अभिवाद्याथ कौरव्यं पितामहमरिन्दमं। द्वैपायनादीन् विप्रांश्च तैश्च प्रत्यभिनन्दितः।
ऋत्विग्भिर्ब्रह्मकल्पैश्च भ्रातृभिश्च सहाच्युतः। आसाद्य शरतल्पस्थमृषिभिः परिवारितं।
अब्रवीद्भरतश्रेष्ठं धर्म्मराजो युधिष्ठिरः। भ्रातृभिः सह कौरव्य शयानं निम्नगासुतं।
युधिष्ठिरोऽहं नृपते नमस्ते जाह्नवीसुत। शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते।
प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो। आचार्य्या ब्राह्मणाश्चैव ऋत्विजो भ्रातरश्च मे। ७७२५
पुत्रश्च ते महातेजा धृतराष्ट्रो जनेश्वरः। उपस्थितः सहामात्यो वासुदेवश्च वीर्य्यवान्।
हतशिष्टाश्च राजानः सर्व्वे च कुरुजाङ्गलाः। तान् पश्य कुरुशार्द्दूल समुन्मीलय लोचने।

यच्चेह किञ्चित् कर्त्तव्यं तत्सर्व्वं प्रापितं मया । यथोक्तं भवता काले सर्व्वमेव च तत् कृतं ।

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता । ददर्श भरतान् सर्व्वान् स्थितान् परिवार्य्य तं ।

ततश्च बलवान् भीष्मः प्रगृह्य विपुलं भुजं । उद्यन्मेघस्वरो वाग्मी काले वचनमब्रवीत् । ७७१०

दिष्ट्या प्राप्तोऽसि कौन्तेय सहामात्यो युधिष्ठिर । परिवृत्तो हि भगवान् सहस्रांशुर्दिवाकरः ।

अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः । शरेषु निशिताग्रेषु यथा वर्षशतं तथा ।

माघोऽयं समनुप्राप्तो मासः पुण्यो युधिष्ठिर । त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति ।

एवमुक्त्वा तु गाङ्गेयो धर्म्मपुत्रं युधिष्ठिरं । धृतराष्ट्रमथामन्त्र्य काले वचनमब्रवीत् ।

॥ भीष्म उवाच ॥ राजन् विदितधर्म्मोऽसि सुनिर्णीतार्थसंशयः । बहुश्रुता हि ते विप्रा बहवः पर्य्युपासिताः । ७७१५

वेदशास्त्राणि सूक्ष्माणि धर्म्मांश्च मनुजेश्वर । वेदांश्च चतुरः सर्व्वान्निखिलेनानुबुध्यसे ।

न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा । श्रुतं देवरहस्यन्ते कृष्णद्वैपायनादपि ।

यथा पाण्डोः सुता राजंस्तथैव तव धर्म्मतः । तान् पालय स्थितो धर्म्मे गुरुशुश्रूषणे रतान् ।

धर्म्मराजो हि शुद्धात्मा निदेशे स्थास्यते तव । आनृशंस्यपरं ह्येनं जानामि गुरुवत्सलं ।

तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः । ईर्ष्याभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि । ७७२०

॥ वैशम्पायन उवाच ॥ एतावदुक्त्वा वचनं धृतराष्ट्रं मनीषिणं । वासुदेवं महाबाहुमभ्यभाषत कौरवः ।

॥ भीष्म उवाच ॥ भगवन् देवदेवेश सुरासुरनमस्कृत । त्रिविक्रम नमस्तेऽस्तु शङ्खचक्रगदाधर ।

वासुदेवो हिरण्यात्मा पुरुषः सविता विराट् । जीवभूतो ऽनुरूपस्त्वं परमात्मा सनातनः ।

त्वद्भक्तस्त्वद्गतमनाः सदारक्षापरिग्रहः । त्रायस्व पुण्डरीकाक्ष पुरुषोत्तम नित्यशः ।

अनुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम । रक्ष्याश्च ते पाण्डवेया भवान् येषां परायणं । ७७२५

उक्तवानस्मि दुर्बुद्धिं मन्दं दुर्य्योधनं पुरा । यतः कृष्णस्ततो धर्म्मो यतो धर्म्मस्ततो जयः ।

वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः । सन्धानस्य परः कालस्तवेति च पुनः पुनः ।

न च मे तद्वचो मूढः कृतवान् स तु मन्दधीः । घातयित्वेह पृथिवीं ततः स निधनं गतः ।

त्वान्तु जानाम्यहं देवं पुराणमृषिसत्तमं । नरेण सहितं देव बदर्य्यां सुचिरोषितं ।

यथा मे नारदः प्राह व्यासश्च सुमहातपाः । नरनारायणावेतौ सम्भूतौ मनुजेष्विति । ७७३०

स मां त्वमनुजानीहि कृष्ण मोक्ष्ये कलेवरं । त्वयाऽहं समनुज्ञातो गच्छेयं परमां गतिं ।

॥ वासुदेव उवाच ॥ अनुजानामि भीष्म त्वां वसून् प्राप्नुहि पार्थिव । न तेऽस्ति वृजिनं किञ्चिदिह लोके महाद्युते

पितृभक्तोऽसि राजर्षे मार्कण्डेय इवापरः । तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः ।

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत् । धृतराष्ट्रमुखांश्चापि सर्व्वांश्च सुहृदस्तथा ।

प्राणानुत्स्रष्टुमिच्छामि तत्रानुज्ञातुमर्हथ । सत्येषु यतितव्यं वः सत्यं हि परमं बलं । ७७३५

आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः । ब्रह्मण्यैर्धर्म्मशीलैश्च तपोनित्यैश्च भारताः ।

इत्युक्त्वा सुहृदः सर्व्वान् सम्परिष्वज्य चैव हि । पुनरेवाब्रवीद्धीमान् युधिष्ठिरमिदं वचः ।

ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः। आचार्य्या ऋत्विजश्चैव पूजनीया जनाधिप।

इति श्रीमहाभारते अनुशासनपर्व्वणि स्वर्गारोहणिके पर्व्वणि भीष्मप्रार्थनायां सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा सुहृदः सर्व्वान् भीष्मः शान्तनवस्तदा। तूष्णीं बभूव कौरव्य स मुहूर्त्तमरिन्दम।

धारयामास चात्मानं धारणासु यथाक्रमं। तस्योर्द्ध्वमगमन् प्राणाः सन्निरुद्धा महात्मनः। ७७१०

यद्यन्मुञ्चति गात्राणां स शान्तनुसुतस्तदा। तत्तद्विशल्यं भवति योगयुक्तस्य वै क्रमात्।

इदमाश्चर्य्यमासीच्च मध्ये तेषां महात्मनां। सहितैर्मुनिभिः सर्व्वैस्तथा व्यासादिभिर्नृप।

क्षणेन प्रेक्षतां तेषां विशल्यः सोऽभवत्तदा। तद्दृष्ट्वा विस्मिताः सर्व्वे वासुदेवपुरोगमाः।

सहितैर्मुनिभिः सर्व्वैस्तथा व्यासादिभिर्नृप। सन्निरुद्धस्तु तेनात्मा सर्व्वेष्वायतनेषु च।

जगाम भित्त्वा मूर्द्धानं दिवमभ्युत्पपात च। देवदुन्दुभिनादश्च पुष्पवर्षैः सहाभवन्। ७७१५

सिद्धा ब्रह्मर्षयश्चैव साधु साध्विति हर्षिताः। महोल्केव च भीष्मस्य मूर्द्धदेशाज्जनाधिप।

निःसृत्याकाशमाविश्य क्षणेनान्तरधीयत। एवं स राजशार्दूल नृपः शान्तनवस्तदा।

समयुज्यत कालेन भरतानां कुलोद्वहः। ततस्त्वादाय दारूणि गन्धांश्च विविधान् बहून्।

चितां चक्रुर्महात्मानः पाण्डवा विदुरस्तथा। युयुत्सुश्चापि कौरव्यं प्रेक्षकास्त्वितरेऽभवन्।

युधिष्ठिरस्तु गाङ्गेयं विदुरश्च महामतिः। छादयामासतुरुभौ क्षौमैर्माल्यैश्च कौरवं। ७७२०

धारयामास तस्याथ युयुत्सुश्छत्रमुत्तमं। चामरव्यजने शुभ्रे भीमसेनार्ज्जुनावुभौ।

उष्णीषे पर्य्यगृह्णीतां माद्रीपुत्रावुभावपि। युधिष्ठिरश्च सहितो धृतराष्ट्रश्च पादतः।

स्त्रियः कौरवनाथस्य भीष्मं कुरुकुलोद्वहं। तालवृन्तान्युपादाय पर्य्यवीजन्त सर्व्वतः।

ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः। यजनं बहुशश्चाग्नौ जगुः सामानि सामगाः।

ततश्चन्दनकाष्ठैश्च तथा कालीयकैरपि। कालागुरुप्रभृतिभिर्गन्धैश्चोच्चावचैरपि। ७७२५

समवच्छाद्य गाङ्गेयं संप्रज्वाल्य हुताशनं। अपसव्यमकुर्व्वन्त धृतराष्ट्रमुखाश्चितां।

संस्कृत्य च कुरुश्रेष्ठं गाङ्गेयं कुरुसत्तमाः। जग्मुर्भागीरथीं पुण्यामृषिजुष्टां कुरूद्वहाः।

अनुगम्यमाना व्यासेन नारदेनासितेन च। कृष्णेन भरतस्त्रीभिर्ये च पौराः समागताः।

उदकञ्चक्रिरे चैव गाङ्गेयस्य महात्मनः। विधिवद्भरतश्रेष्ठ स च सर्व्वो जनस्तदा।

ततो भागीरथी देवी तनयस्योदके कृते। उत्थाय सलिलात्तस्माद्रुदती शोकविह्वला। ७७३०

परिदेवयती तत्र कौरवानभ्यभाषत। निबोधत यथा वृत्तमुच्यमानं मयाऽनघाः।

राजवृत्तेन सम्पन्नः प्रज्ञयाऽभिजनेन च। सत्कर्त्ता कुरुवृद्धानां पितृभक्तो महाव्रतः।

जामदग्न्येन रामेण यः पुरा न पराजितः। दिव्यैरस्त्रैर्महावीर्य्यः स हतोऽद्य शिखण्डिना।

अश्मसारमयं नूनं हृदयं मम पार्थिवाः। अपश्यन्त्याः प्रियं पुत्रं यत्र दीर्य्यति मेऽद्य वै।

समेतं पार्थिवं क्षत्रं काशिपुर्य्यां स्वयंवरे। विजित्यैकरथेनेह कन्यास्तायं जहार च। ७७३५

यस्य नास्ति बले तुल्यः पृथिव्यामपि कश्चन। हतं शिखण्डिना श्रुत्वा न विदीर्य्यति मे मनः।

जामदग्न्यः कुरुक्षेत्रे युधि येन महात्मना । पीडितो नातियत्नेन स हतोऽद्य शिखण्डिना ।
एवंविधं बहु तदा विलपन्तीं महानदीं । आश्वासयामास तदा गङ्गां दामोदरो विभुः ।
समाश्वसिहि भद्रे त्वं मा शुचः प्रियदर्शने । गतः स परमं लोकं तव पुत्रो न संशयः ।
वसुरेष महातेजाः शापदोषेण शोभने । मानुषत्वमनुप्राप्तो नैनं शोचितुमर्हसि । ७७९०
स एष क्षत्रधर्म्मेण युध्यमानो रणाजिरे । धनञ्जयेन निहतो नैव देवि शिखण्डिना ।
भीष्मं हि कुरुशार्दूलमुद्यतेषुं महारणे । न शक्तः संयुगे हन्तुं साक्षादपि शतक्रतुः ।
स्वच्छन्दतस्तव सुतो गतः स्वर्गं शुभानने । न शक्ता विनिहन्तुं वै रणे तं सर्व्वदेवताः ।
तस्मान्मा देवि गङ्गे त्वं शोचस्व कुरुनन्दनं । वसुरेष गतो देवि पुत्रस्ते विज्वरा भव ।
॥ वैशम्पायन उवाच ॥ इत्युक्ता सा तु कृष्णेन व्यासेन च सरिद्वरा । त्यक्त्वा शोकं महाराज प्रकृतिं प्राप जाह्नवी । ७७९१
सत्कृत्य ते तां सरितं तदा कृष्णमुखा नृप । अनुज्ञातास्तया सर्व्वे न्यवर्त्तन्त जनाधिप ।
इति श्रीमहाभारते अनुशासनपर्व्वणि स्वर्गारोहणिके पर्व्वणि भीष्मस्वर्गारोहणे अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

॥ समाप्तञ्चेदमनुशासनपर्व्व ॥

॥ अत्र व्यासोक्ताध्यायश्लोकसंख्यान्यूनाधिक्यं लिपिकरप्रमादात्सन्देहार्थं ॥

---

# श्रीमहाभारतं

## ॥ अथ आश्वमेधिकपर्व्वं ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

॥ वैशम्पायन उवाच ॥ कृतोदकन्तु राजानं धृतराष्ट्रं युधिष्ठिरः। पुरस्कृत्य महाबाहुरुत्ततारकुलेन्द्रियः।
उत्तीर्य्य तु महाबाहुर्बाष्पव्याकुललोचनः। पपात तीरे गङ्गाया व्याधविद्ध इव द्विपः।
तं सीदमानं जग्राह भीमः कृष्णेन चोदितः। मैवमित्यब्रवीच्चैनं कृष्णः परबलार्द्दनः।
तमार्त्तं पतितं भूमौ श्वसन्तञ्च पुनः पुनः। ददृशुः पार्थिवा राजन् धर्म्मपुत्रं युधिष्ठिरं।
तं दृष्ट्वा दीनमनसं गतसत्त्वं नरेश्वरं। भूयः शोकसमाविष्टाः पाण्डवाः समुपाविशन्।
राजा तु धृतराष्ट्रस्तं पुत्रशोकाभिपीडितः। वाक्यमाह महाबुद्धिः प्रज्ञाचक्षुर्युधिष्ठिरं।
उत्तिष्ठ कुरुशार्द्दूल कुरु कार्य्यमनन्तरं। क्षत्रधर्म्मेण कौन्तेय जितेयमवनिस्त्वया।
तां भुङ्क्ष्व भ्रातृभिः सार्द्धं सुहृद्भिश्च नरेश्वर। न शोचितव्यं पश्यामि त्वया धर्म्मभृतां वर।
शोचितव्यं मया चैव गान्धार्य्या च महीपते। ययोः पुत्रशतं नष्टं स्वप्नलब्धं यथा धनं।
अश्रुत्वा हितकामस्य विदुरस्य महात्मनः। वाक्यानि सुमहार्थानि परितप्यामि दुर्म्मतिः।
उक्तवान् विदुरो यन्मां धर्म्मात्मा दिव्यदर्शनः। दुर्य्योधनापराधेन कुलं ते विनशिष्यति।
स्वस्ति चेदिच्छसे राजन् कुलस्य कुरु मे वचः। वध्यतामेष दुष्टात्मा मन्दो राजा सुयोधनः।
कर्णश्च शकुनिश्चैव नैनं पश्यन्तु कर्हिचित्। द्यूतसम्पातमप्येषामप्रमादेन वारय।
अभिषेचय राजानं धर्म्मपुत्रं युधिष्ठिरं। स पालयिष्यति वशी धर्म्मेण पृथिवीमिमां।
अथ नेच्छसि राजानं धर्म्मात्मानं युधिष्ठिरं। मेढीभूतः स्वयं राज्यं प्रतिगृह्णीष्व पार्थिव।
समं सर्व्वेषु भूतेषु वर्त्तमानं नराधिप। अनुजीवन्तु सर्व्वे त्वां ज्ञातयो ज्ञातिभिः सह।
एवं ब्रुवति कौन्तेय विदुरे दीर्घदर्शिनि। दुर्य्योधनमहं पापमन्ववर्त्तं वृथामतिः।
अश्रुत्वा तस्य धीरस्य वाक्यानि मधुराण्यहं। फलं प्राप्य महद्दुःखं निमग्नः शोकसागरे।
वृद्धौ ते हि पितरौ पश्य नौ दुःखितौ नृप। न शोचितव्यं भवता पश्यामीह जनाधिप।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधपर्व्वणि प्रथमोऽध्यायः॥ १॥

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु राज्ञा स धृतराष्ट्रेण धीमता। तूष्णीं बभूव मेधावी तमुवाचाथ केशवः।

अतीव मनसा शोकः क्रियमाणो जनाधिप। सन्तापयति वै तस्य पूर्व्वप्रेतान् पितामहान्।
यजस्व विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः। देवांस्तर्पय सोमेन स्वधया च पितॄनपि।
अतिथीनन्नपानेन कामैरन्यैरकिञ्चनान्। विदितं वेदितव्यं ते कर्त्तव्यमपि ते कृतं।
श्रुताश्च राजधर्म्मास्ते भीष्माद्भागीरथीसुतात्। कृष्णद्वैपायनाच्चैव नारदाद्विदुरात्तथा।
नेमामर्हसि मूढानां वृत्तिं त्वमनुवर्त्तितुं। पितृपैतामहं वृत्तमास्थाय धुरमुद्वह। २५
युक्तं हि यशसा क्षत्रं स्वर्गं प्राप्तुमसंशयं। न हि कश्चिद्धि शूराणां निहतोऽत्र पराङ्मुखः।
त्यज शोकं महाराज भवितव्यं हि तत्तथा। न शक्यास्ते पुनर्द्रष्टुं त्वया येऽस्मिन् रणे हताः।
एतावदुक्त्वा गोविन्दो धर्म्मराजं युधिष्ठिरं। विरराम महातेजास्तमुवाच युधिष्ठिरः।
॥ युधिष्ठिर उवाच ॥ गोविन्द मयि या प्रीतिस्तव सा विदिता मम। सौहृदेन तथा प्रेम्णा सदा मय्यनुकम्पसे।
प्रियं मम स्यात् सुमहत् कृतं चक्रगदाधर। श्रीमन् प्रीतेन मनसा सर्व्वं यादवनन्दन। ३०
यदि मामनुजानीयाद्भवान् गन्तुं तपोवनं। न हि शान्तिं प्रपश्यामि घातयित्वा पितामहं।
कर्णञ्च पुरुषव्याघ्रं संग्रामेष्वपलायिनं। कर्म्मणा येन मुच्येयमस्मात् क्रूरादरिन्दम।
कर्म्मणा तद्विधत्स्वेह येन शुध्यति मे मनः। तमेवंवादिनं पार्थं व्यासः प्रोवाच धर्म्मवित्।
सान्त्वयन् सुमहातेजाः शुभं वचनमर्थवत्। अकृता ते मतिस्तात पुनर्बाल्येन मुह्यसे।
किमाकाशे वयं तात प्रलपाम मुहुर्मुहुः। विदिताः क्षत्रधर्म्मास्ते येषां युद्धेन जीविका। ३५
यथा प्रवृत्तो नृपतिर्नाधिबन्धेन युज्यते। मोक्षधर्म्माश्च निखिला याथातथ्येन ते श्रुताः।
असकृच्चापि सन्देहाश्छिन्नास्ते कामजा मया। अश्रद्दधानो दुर्म्मेधा लुप्तस्मृतिरसि ध्रुवं।
मैवं भव न ते युक्तमिदमज्ञानमीदृशं। प्रायश्चित्तानि सर्व्वाणि विदितानि च तेऽनघ।
राजधर्म्माश्च ते सर्व्वे दानधर्म्माश्च ते श्रुताः। स कथं सर्व्वधर्म्मज्ञः सर्व्वागमविशारदः।
परिमुह्यसि भूयस्त्वमज्ञानादिव भारत। ४०
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि द्वितीयोऽध्यायः॥ २ ॥
॥ व्यास उवाच ॥ युधिष्ठिर तव प्रज्ञा न सम्यगिति मे मतिः। न हि कश्चित् स्वयं मर्त्यः स्ववशः कुरुते क्रियां।
ईश्वरेण नियुक्तोऽयं साध्वसाधु च मानवः। करोति पुरुषः कर्म्म तत्र का परिदेवना।
आत्मानं मन्यसे चाथ पापकर्म्माणमन्ततः। शृणु तत्र यथा पापमपकृष्येत भारत।
तपोभिः क्रतुभिश्चैव दानेन च युधिष्ठिर। तरन्ति नित्यं पुरुषा ये स्म पापानि कुर्व्वते।
यज्ञेन तपसा चैव दानेन च युधिष्ठिर। पूयन्ते नरशार्दूल नरा दुष्कृतकारिणः। ५
असुराश्च सुराश्चैव पुण्यहेतोर्मखक्रियां। प्रयतन्ते महात्मानस्तस्माद्यज्ञाः परायणं।
यज्ञैरेव महात्मानो बभूवुरधिकाः सुराः। ततो देवाः क्रियावन्तो दानवानभ्यधर्षयन्।
राजसूयाश्वमेधौ च सर्व्वमेधञ्च भारत। नरमेधञ्च नृपते त्वमाहर युधिष्ठिर।
यजस्व वाजिमेधेन विधिवद्दक्षिणावता। बहुकामान्नवित्तेन रामो दाशरथिर्यथा

यथा च भरतो राजा दौष्मन्तिः पृथिवीपतिः । शाकुन्तलो महावीर्यस्तव पूर्व्वपितामहः । ८०

॥ युधिष्ठिर उवाच ॥ असंशयं वाजिमेधः पावयेत् पृथिवीमपि । अभिप्रायस्तु मे कश्चित्तं त्वं श्रोतुमिहार्हसि ।

इमं ज्ञातिवधं कृत्वा सुमहान्तं द्विजोत्तम । दानमल्पं न शक्नोमि दातुं वित्तञ्च नास्ति मे ।

न च बालानिमान्दीनानुत्सहे वसु याचितुं । तथैवार्द्रव्रणान् कृच्छ्रे वर्त्तमानान्नृपात्मजान् ।

स्वयं विनाश्य पृथिवीं यज्ञार्थे द्विजसत्तम । करमाहारयिष्यामि कथं शोकपरायणः ।

दुर्य्योधनापराधेन वसुधा वसुधाधिपाः । प्रनष्टा योजयित्वाऽस्मानकीर्त्त्या मुनिसत्तम । ८५

दुर्य्योधनेन पृथिवी क्षयिता वित्तकारणात् । कोशश्चापि विशीर्णोऽस्य धार्त्तराष्ट्रस्य दुर्म्मतेः ।

पृथिवी दक्षिणा चात्र विधिः प्रथमकल्पितः । विद्वद्भिः परिदृष्टोऽयं शिष्टो विधिविपर्य्ययः ।

न च प्रतिनिधिं कर्त्तुं चिकीर्षामि तपोधन । अत्र मे भगवन् सम्यक् साचिव्यं कर्त्तुमर्हसि ।

एवमुक्तस्तु पार्थेन कृष्णद्वैपायनस्तदा । मुहूर्त्तमनुसंचिन्त्य धर्म्मराजानमब्रवीत् ।

॥ व्यास उवाच ॥ कोशश्चापि विशीर्णोऽयं परिपूर्णो भविष्यति । विद्यते द्रविणं पार्थ गिरौ हिमवति स्थितं । ९०

उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महात्मनः । तदानयस्व कौन्तेय पर्य्याप्तं तद्भविष्यति ।

॥ युधिष्ठिर उवाच ॥ कथं यज्ञे मरुत्तस्य द्रविणं तत्समाचितं । कस्मिंश्च काले स नृपो बभूव वदतांवर ।

॥ व्यास उवाच ॥ यदि शुश्रूषसे पार्थ शृणु कारन्धमं नृपं । यस्मिन् काले महावीर्य्यः स राजासीन्महाधनः ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि संवर्त्तमरुत्तीये तृतीयोऽध्यायः ॥ ३ ॥

॥ युधिष्ठिर उवाच ॥ शुश्रूषे तस्य धर्म्मज्ञ राजर्षेः परिकीर्त्तनं । द्वैपायन मरुत्तस्य कथां प्रब्रूहि मेऽनघ ।

॥ व्यास उवाच ॥ आसीत् कृतयुगे तात मनुर्द्दण्डधरः प्रभुः । तस्य पुत्रो महाबाहुः प्रसन्धिरिति विश्रुतः । ९५

प्रसन्धेरभवत् पुत्रः क्षुप इत्यभिविश्रुतः । क्षुपस्य पुत्रस्त्विक्ष्वाकुर्म्महीपालोऽभवत् प्रभुः ।

तस्य पुत्रशतं राजन्नासीत् परमधार्म्मिकं । तांस्तु सर्व्वान्महीपालानिक्ष्वाकुरकरोत् प्रभुः ।

तेषां ज्येष्ठस्तु विंशोऽभूत् प्रतिमानं धनुष्मतां । विंशस्य पुत्रः कल्याणो विविंशो नाम भारत ।

विविंशस्य सुता राजन् बभूवुर्द्दश पञ्च च । सर्व्वे धनुषि विक्रान्ता ब्रह्मण्याः सत्यवादिनः ।

दानधर्म्मरताः शान्ताः सततं प्रियवादिनः । तेषां ज्येष्ठः खनीनेत्रः स तान् सर्व्वानपीडयत् । १००

खनीनेत्रस्तु विक्रान्तो जित्वा राज्यमकण्टकं । नाशक्नोद्रक्षितुं राज्यं नान्वरज्यन्त तं प्रजाः ।

तमपास्य च तद्राज्ये तस्य पुत्रं सुवर्च्चसं । अभ्यषिञ्चन्त राजेन्द्र मुदिताश्चाभवंस्तदा ।

स पितुर्व्विक्रियां दृष्ट्वा राज्यान्निरसनं तथा । नियतो वर्त्तयामास प्रजाहितचिकीर्षया ।

ब्रह्मण्यः सत्यवादी च शुचिः शमदमान्वितः । प्रजास्तञ्चान्वरज्यन्त धर्म्मनित्यं मनस्विनं ।

तस्य धर्म्मप्रवृत्तस्य व्यशीर्य्यत् कोशवाहनं । तं क्षीणकोशं सामन्ताः समन्तात् पर्य्यपीडयन् । १०५

स पीड्यमानो बहुभिः क्षीणकोशाश्ववाहनः । आर्त्तिमार्च्छत् परां राजा सह भृत्यैः पुरेण च ।

न चैनमभिहन्तुं ते शक्नुवन्ति बलक्षये । सम्यग्वृत्तो हि राजा स धर्म्मनित्यो युधिष्ठिर ।

यदा च परमामार्त्तिं गतोऽसौ सपुरो नृपः । ततः प्रदध्मौ स करं प्रादुरासीत्ततो बलं ।

ततस्तानजयत् सर्व्वान् प्रत्यमित्रान्नराधिपान्। एतस्मात् कारणाद्राजन् विश्रुतः स करन्धमः।
तस्य कारन्धमः पुत्रस्त्रेतायुगमुखेऽभवत्। इन्द्रादनवरः श्रीमान् देवैरपि सुदुर्जयः। २०
तस्य सर्व्वे महीपाला वर्त्तन्ते स्म वशे तदा। स हि सम्राडभूत्तेषां वृत्तेन च बलेन च।
अविक्षिन्नाम धर्म्मात्मा शौर्य्येणेन्द्रसमोऽभवत्। यज्ञशीलो धर्म्मरतिर्धृतिमान् संयतेन्द्रियः।
तेजसादित्यसदृशः क्षमया पृथिवीसमः। बृहस्पतिसमो बुद्ध्या हिमवानिव सुस्थिरः।
कर्म्मणा मनसा वाचा दमेन प्रशमेन च। मनांस्याराधयामास प्रजानां स महीपतिः।
य ईजे हयमेधानां शतेन विधिवत् प्रभुः। याजयामास यं विद्वान् स्वयमेवाङ्गिराः प्रभुः। २५
तस्य पुत्रोऽतिचक्राम पितरं गुणवत्तया। मरुत्तो नाम धर्म्मज्ञश्चक्रवर्त्ती महायशाः।
नागायुतसमप्राणः साक्षाद्विष्णुरिवापरः। स यक्ष्यमाणो धर्म्मात्मा शातकुम्भमयान्युत।
कारयामास शुभ्राणि भाजनानि सहस्रशः। मेरुं पर्व्वतमासाद्य हिमवत्पार्श्व उत्तरे।
काञ्चनः सुमहान् पादस्तत्र कर्म्म चकार सः। ततः कुण्डानि पात्रीश्च पिठराण्यासनानि च।
चक्रुः सुवर्णकर्त्तारो येषां संख्या न विद्यते। तस्यैव तु समीपे स यज्ञवाटो बभूव ह। ३०
ईजे तत्र स धर्म्मात्मा विधिवत् पृथिवीपतिः। मरुत्तः सहितैः सर्व्वैः प्रजापालैर्नराधिपः।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि संवर्त्तमरुत्तीये चतुर्थोऽध्यायः ॥ ४ ॥

॥ युधिष्ठिर उवाच ॥ कथंवीर्य्यः समभवद्राजा स वदतां वर। कथञ्च जातरूपेण समयुज्यत स द्विज।
क्व च तत् साम्प्रतं द्रव्यं भगवन्नवतिष्ठते। कथञ्च शक्यमस्माभिस्तदवाप्तुं तपोधन।

॥ व्यास उवाच ॥ असुराश्चैव देवाश्च दक्षस्यासन् प्रजापतेः। अपत्यं बहुलं तात तेऽस्पर्द्धन्त परस्परं।
तथैवाङ्गिरसः पुत्रौ व्रततुल्यौ बभूवतुः। बृहस्पतिर्बृहत्तेजाः संवर्त्तश्च तपोधनः। ३५
तावतिस्पर्द्धिनौ राजन् पृथगास्तां परस्परं। बृहस्पतिः स संवर्त्तं बाधते स्म पुनः पुनः।
स बाध्यमानः सततं भ्रात्रा ज्येष्ठेन भारत। अर्थानुत्सृज्य दिग्वासा वनवासमरोचयत्।
वासवोऽप्यसुरान् सर्व्वान्निर्ज्जित्य च निपात्य च। इन्द्रत्वं प्राप्य लोकेषु ततो वव्रे पुरोहितं।
पुत्रमङ्गिरसो ज्येष्ठं विप्रश्रेष्ठं बृहस्पतिं। याज्यस्त्वङ्गिरसः पूर्व्वमासीद्राजा करन्धमः।
वीर्य्येणाप्रतिमो लोके वृत्तेन च बलेन च। शतक्रतुरिवौजस्वी धर्म्मात्मा संशितव्रतः। ४०
वाहनं यस्य योधाश्च मित्राणि विविधानि च। शयनानि च मुख्यानि महार्हाणि च सर्व्वशः।
ध्यानादेवाभवद्राजन्मुखवातेन सर्व्वशः। स गुणैः पार्थिवान् सर्व्वान् वशे चक्रे नराधिपः।
संजीव्य कालमिष्टञ्च सशरीरो दिवं गतः। बभूव तस्य पुत्रोऽपि ययातिरिव धर्म्मवित्।
अविक्षिन्नाम शत्रुघ्नः स वशे कृतवान्महीं। विक्रमेण गुणैश्चैव पितेवासीत् स पार्थिवः।
तस्य वासवतुल्योऽभून्मरुत्तो नाम वीर्य्यवान्। पुत्रस्तमनुरक्ताऽभूत् पृथिवी सागराम्बरा। ४५
स्पर्द्धते स स्म सततं देवराजेन नित्यदा। वासवोऽपि मरुत्तेन स्पर्द्धते पाण्डुनन्दन।
शुचिः स गुणवानासीन्मरुत्तः पृथिवीपतिः। यतमानोऽपि यं शक्रो न विशेषयति स्म ह।

तेऽब्रुवन् विप्रियाय समाहूय बृहस्पतिं । उवाचेदं वचो देवैः सहितो हरिवाहनः ।
बृहस्पते मरुत्तस्य माकार्षीस्त्वं कथञ्चन । दैवं कर्म्माथ वा पित्र्यं कर्त्ताऽसि मम चेत् प्रियं ।
अहं हि त्रिषु लोकेषु सुराणाञ्च बृहस्पते । इन्द्रत्वं प्राप्तवानेको मरुत्तस्तु महीपतिः । ११०
कथं ह्यमर्त्त्यं ब्रह्मंस्त्वं याजयित्वा सुराधिपं । याजयेर्मृत्युसंयुक्तं मरुत्तमविशङ्कया ।
मां वा वृणीष्व भद्रन्ते मरुत्तं वा महीपतिं । परित्यज्य मरुत्तं वा यथाजोषं भजस्व मां ।
एवमुक्तस्तु कौरव्य देवराज्ञा बृहस्पतिः । मुहूर्त्तमिव सञ्चिन्त्य देवराजानमब्रवीत् ।
त्वं भूतानामधिपतिस्त्वयि लोकाः प्रतिष्ठिताः । नमुचेर्विश्वरूपस्य निहन्ता त्वं बलस्य च ।
त्वमाजहर्थ दैत्यानामेको वीरश्रियं परां । त्वं बिभर्षि भुवं द्याञ्च सदैव बलसूदन । ११५
पौरोहित्यं कथं कृत्वा तव देवगणेश्वर । याजयेयमहं मर्त्त्यं मरुत्तं पाकशासन ।
समाश्वसिहि देवेन्द्र नाहं मर्त्त्यस्य कर्हिचित् । ग्रहीष्यामि स्रुवं यज्ञे शृणु चेदं वचो मम ।
हिरण्यरेता नोष्णः स्यात् परिवर्त्तेत मेदिनी । भासन्तु न रविः कुर्य्यान्न तु सत्यं चलेन्मयि ।
॥ वैशम्पायन उवाच ॥ बृहस्पतिवचः श्रुत्वा शक्रो विगतमत्सरः । प्रशस्यैनं विवेशाथ स्वमेव भवनं तदा ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि संवर्त्तमरुत्तीये पञ्चमोऽध्यायः ॥ ५ ॥
॥ व्यास उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । बृहस्पतेश्च संवादं मरुत्तस्य च धीमतः । १२०
देवराजस्य समयं कृतमाङ्गिरसेन च । श्रुत्वा मरुत्तो नृपतिर्यज्ञमाहारयत् परं ।
सङ्कल्प्य मनसा यज्ञं करन्धमसुतात्मजः । बृहस्पतिमुपागम्य वाग्मी वचनमब्रवीत् ।
भगवन् यन्मया पूर्व्वमभिगम्य तपोधन । कृतोऽभिसन्धिर्यज्ञस्य भवतो वचनाद्गुरो ।
तमहं यष्टुमिच्छामि सम्भाराः संभृताश्च मे । याज्योऽस्मि भवतः साधो तत्प्राप्नुहि विधत्स्व च ।
॥ बृहस्पतिरुवाच ॥ न कामये याजयितुं त्वामहं पृथिवीपते । वृतोऽस्मि देवराजेन प्रतिज्ञातञ्च तस्य मे । १२५
॥ मरुत्त उवाच ॥ पित्र्यमस्मि तव क्षेत्रं बहुमन्ये च ते भृशं । नवास्मि याज्यतां प्राप्तो भजमानं भजस्व मां ।
॥ बृहस्पतिरुवाच ॥ अमर्त्त्यं याजयित्वाऽहं याजयिष्ये कथं नरं । मरुत्त गच्छ वा मा वा निवृत्तोऽस्म्यद्य याजनात् ।
न त्वां याजयिताऽस्म्यद्य वृणु त्वं यमिहेच्छसि । उपाध्यायं महाबाहो यस्ते यज्ञं करिष्यति ।
॥ व्यास उवाच ॥ एवमुक्तस्तु नृपतिर्मरुत्तो व्रीडितोऽभवत् । प्रत्यागच्छन् सुसंविग्नो ददर्श पथि नारदं ।
देवर्षिणा समागम्य नारदेन स पार्थिवः । विधिवत् प्राञ्जलिस्तस्थावथैनं नारदोऽब्रवीत् । १३०
राजर्षे नातिहृष्टोऽसि कच्चित् क्षेमं तवानघ । क्व गतोऽसि कुतश्चेदमप्रीतस्थानमागतं ।
श्रोतव्यञ्चेन्मया राजन् ब्रूहि मे पार्थिवर्षभ । व्यपनेष्यामि ते मन्युं सर्व्वयत्नैर्नराधिप ।
एवमुक्तो मरुत्तस्तु नारदेन महर्षिणा । विप्रलम्भमुपाध्यायात् सर्व्वमेव न्यवेदयत् ।
॥ मरुत्त उवाच ॥ गतोऽस्म्याङ्गिरसः पुत्रं देवाचार्य्यं बृहस्पतिं । यज्ञार्थमृत्विजं द्रष्टुं न च मां सोऽभ्यनन्दत ।
प्रत्याख्यातश्च तेनाहं जीवितुं नाद्य कामये । परित्यक्तश्च गुरुणा दूषितश्चास्मि नारद । १३५
॥ व्यास उवाच ॥ एवमुक्तस्तु राज्ञा स नारदः प्रत्यभाषत । आविक्षितं महाराज वाचा सञ्जीवयन्निव ।

॥ नारद उवाच ॥ राजन्नङ्गिरसः पुत्रः संवर्त्तो नाम धार्म्मिकः । चंक्रमीति दिशः सर्वा दिग्वासा मोहयन् प्रजाः ।

तं गच्छ यदि याज्यं त्वां न वाञ्छति बृहस्पतिः । प्रसन्नस्त्वां महातेजाः संवर्त्तो याजयिष्यति ।

॥ मरुत्त उवाच । संजीवितोऽहं भवता वाक्येनानेन नारद । पश्येयं क्व नु संवर्त्तं शंस मे वदताम्वर ।

कथञ्च तस्मै वर्त्तेयं कथं मां न परित्यजेत् । प्रत्याख्यातश्च तेनापि नाहं जीवितुमुत्सहे । १४०

॥ नारद उवाच ॥ उन्मत्तवेशं बिभ्रत्स चंक्रमीति यथासुखं । वाराणसीं महाराज दर्शनेप्सुर्महेश्वरं ।

तस्या द्वारं समासाद्य न्यसेथाः कुणपं क्वचित् । तं दृष्ट्वा यो निवर्त्तेत स संवर्त्तो महीपते ।

तं पृष्ठतोऽनुगच्छेथा यत्र गच्छेत्स वीर्य्यवान् । तमेकान्ते समासाद्य प्राञ्जलिः शरणं व्रजेः ।

पृच्छेत्त्वां यदि केनाहं तवाख्यात इति स्म च । ब्रूयास्त्वं नारदेनेति संवर्त्तं कथितोऽपि मे ।

स चेत्त्वामनुयुञ्जीत ममानुगमनेच्छया । शंसेथा वह्निमारूढमामपि त्वमशङ्कया । १४५

॥ व्यास उवाच ॥ स तथेति प्रतिश्रुत्य पूजयित्वा च नारदं । अभ्यनुज्ञाय राजर्षिर्ययौ वाराणसीं पुरीं ।

तत्र गत्वा यथोक्तं स पुर्य्या द्वारि महायशाः । कुणपं स्थापयामास नारदस्य वचः स्मरन् ।

यौगपद्येन विप्रश्च पुरीद्वारमथाविशत् । ततः स कुणपं दृष्ट्वा सहसा संन्यवर्त्तत ।

स तं निवृत्तमालोक्य प्राञ्जलिः पृष्ठतोऽन्वगात् । आविक्षितो महीपालः संवर्त्तमुपशिक्षितुं ।

स च तं विजने दृष्ट्वा पांशुभिः कर्द्दमेन च । श्लेष्मणा चापि राजानं ष्ठीवनेश्च समाकिरत् । १५०

स तथा बाध्यमानोऽपि संवर्त्तेन महीपतिः । अन्वगादेव तमृषिं प्राञ्जलिः संप्रसादयन् ।

ततो निवर्त्त्य संवर्त्तः परिश्रान्त उपाविशत् । शीतलच्छायमासाद्य न्यग्रोधं बहुशाखिनं ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि संवर्त्तमरुत्तीये षष्ठोऽध्यायः ॥ ६ ॥

॥ संवर्त्त उवाच ॥ कथमस्मि त्वया ज्ञातः केन वा कथितोऽस्मि ते । एतदाचक्ष्व मे तत्त्वमिच्छसे चेन्मम प्रियं ।

सत्यं ते ब्रुवतः सर्व्वे संपत्स्यन्ते मनोरथाः । मिथ्या तु ब्रुवतो मूर्द्धा शतधा ते स्फुटिष्यति ।

॥ मरुत्त उवाच । नारदेन भवान्मह्यमाख्यातो ह्यटता पथि । गुरुपुत्रो ममेति त्वं ततो मे प्रीतिरुत्तमा । १५५

॥ संवर्त्त उवाच ॥ सत्यमेतद्भवानाह स मां जानाति सत्रिणं । कथयस्व तदेतन्मे क्व नु संप्रति नारदः ।

॥ मरुत्त उवाच ॥ भवन्तं कथयित्वा स मम देवर्षिसत्तमः । ततो मामभ्यनुज्ञाय प्रविष्टो हव्यवाहनं ।

॥ व्यास उवाच ॥ श्रुत्वा तु पार्थिवस्यैतत्संवर्त्तः परमां मुदं गतः । एतावदहमप्येवं शक्नुयामिति सोऽब्रवीत् ।

ततो मरुत्तमुन्मत्तो वाचा निर्भर्त्सयन्निव । रूक्षया ब्राह्मणो राजन् पुनः पुनरथाब्रवीत् ।

वातप्रधानेन मया स्वचित्तवशवर्त्तिना । एवं विकृतरूपेण कथं याजितुमिच्छसि । १६०

भ्राता मम समर्थश्च वासवेन च सत्कृतः । वर्त्तते याजने चैव तेन कर्म्माणि कारय ।

गार्हस्थ्यञ्चैव याज्याश्च सर्व्वा गृह्याश्च देवताः । पूर्व्वजेन ममाक्षिप्तं शरीरं वर्ज्जितं त्विदं ।

नाहं तेनाननुज्ञातस्त्वामाविक्षित कर्हिचित् । याजयेयं कथञ्चिद्वै स हि पूज्यतमो मम ।

स त्वं बृहस्पतिं गच्छ तमनुज्ञाप्य चाव्रज । ततोऽहं याजयिष्ये त्वां यदि यष्टुमिहेच्छसि ।

॥ मरुत्त उवाच ॥ बृहस्पतिं गतः पूर्व्वमहं संवर्त्त तच्छृणु। न मां कामयते याज्यमसौ वासवकाम्यया। १६५

अमरं याज्यमासाद्य याजयिष्ये न मानुषं। शक्रेण प्रतिषिद्धोऽहं मरुत्तं मा स्म याजय।

स्पर्द्धते च मया विप्र सदा वै स तु पार्थिवः। एवमस्त्विति चाप्युक्तो भ्राता ते बलवृत्रहा।

स मामभिगतं प्रेम्णा याजनाय न बुभूषति। देवराजं समाश्रित्य तद्विद्धि मुनिपुङ्गव।

सोऽहमिच्छामि भवता सर्व्वस्वेनापि याजितुं। कामये समतिक्रान्तुं वासवं त्वत्कृतैर्गुणैः।

न हि मे वर्त्तते बुद्धिर्गन्तुं भ्रातन् बृहस्पतिं। प्रत्याख्यातश्च तेनास्मि तथाऽनपकृते सति। १७०

॥ संवर्त्त उवाच ॥ चिकीर्षसि यथाकामं सर्व्वमेतत्त्वयि ध्रुवं। यदि सर्व्वानभिप्रायान् कर्त्ताऽसि मम पार्थिव।

याज्यमानं मया हि त्वां बृहस्पतिपुरन्दरौ। द्विषेतां समभिक्रुद्धावेतदेकं समर्थये।

स्थैर्य्यमत्र कथं मे स्यात् स त्वं निःसंशयं कुरु।। कुपितस्त्वां न चेदानीं भस्म कुर्य्यां सबान्धवं।

॥ मरुत्त उवाच ॥ यावत्तपेत् सहस्रांशुस्तिष्ठेरंश्चापि पर्व्वताः। तावल्लोकान् न लभेयं त्यजेयं सङ्गतं यदि।

मा चापि शुभबुद्धित्वं लभेयमिति कर्हिचित्। विषयैः सङ्गतं चास्तु त्यजेयं सङ्गतं यदि। १७५

॥ संवर्त्त उवाच ॥ आविक्षित शुभा बुद्धिः श्रूयतां तव कर्म्मसु। याजनं हि ममाप्येवं वर्त्तते हृदि पार्थिव।

अभिधास्ये च ते राजन्नक्षय्यं द्रव्यमुत्तमं। येन देवान् सगन्धर्व्वान् शक्रञ्चाभिभविष्यसि।

न तु मे वर्त्तते बुद्धिर्धने याज्येषु वा पुनः। विप्रियन्तु करिष्यामि भ्रातुश्चेन्द्रस्य चोभयोः।

गमयिष्यामि शक्रेण समतामपि ते ध्रुवं। प्रियञ्च ते करिष्यामि सत्यमेतद्ब्रवीमि ते।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि संवर्त्तमरुत्तीये सप्तमोऽध्यायः ॥ ७ ॥

॥ संवर्त्त उवाच ॥ गिरेर्हिमवतः पृष्ठे मुञ्जवान्नाम पर्व्वतः। तप्यते यत्र भगवांस्तपो नित्यमुमापतिः। १८०

वनस्पतीनां मूलेषु शृङ्गेषु विषमेषु च। गुहासु शैलराजस्य रमते स यथासुखं।

उमासहायो भगवान् यत्र नित्यं महेश्वरः। आस्ते शूली महातेजा नानाभूतगणावृतः।

तत्र रुद्राश्च साध्याश्च विश्वेऽथ वसवस्तथा। यमश्च वरुणश्चैव कुबेरश्च सहानुगः।

भूतानि च पिशाचाश्च नासत्यावश्विनौ तथा। गन्धर्व्वाप्सरसश्चैव यक्षा देवर्षयस्तथा।

आदित्या मरुतश्चैव यातुधानाश्च सर्व्वशः। उपासन्ते महात्मानं बहुरूपमुमापतिं। १८५

रमते भगवांस्तत्र कुबेरानुचरैः सह। विकृतैर्विकृताकारैः क्रीडद्भिः पृथिवीपते।

श्रिया ज्वलन् दृश्यते वै बालादित्यसमद्युतिः। न रूपं शक्यते तस्य संस्थानं वा कथञ्चन।

तेजस्तपश्च वीर्य्यञ्च निर्द्देष्टुं जयताम्बर। नोष्णं न शिशिरं तत्र न वायुर्न च भास्करः।

न जरा क्षुत्पिपासे वा न मृत्युर्न भयं नृप। तस्य शैलस्य पार्श्वेषु सर्व्वेषु जयतां वर।

धातवो जातरूपस्य रश्मयः सवितुर्यथा। रक्ष्यन्ते तु कुबेरस्य सहायैरुद्यतायुधैः। १९०

चिकीर्षद्भिः कुबेरस्य प्रियं राजन्महात्मनः। तस्मै भगवते कृत्वा नमः शर्व्वाय वेधसे।

रुद्राय शितिकण्ठाय सुरूपाय सुवर्च्चसे। कपर्द्दिने करालाय हर्य्यक्ष्णे वरदाय च।

त्र्यक्ष्णे पूष्णो दन्तभिदे वामनाय शिवाय च। याम्यायाव्यक्तरूपाय सद्वृत्ते शङ्कराय च।

सेनान्ये हरिकेशाय स्थाणवे पुरुषाय च । हरिनेत्राय मुण्डाय कृशायोत्तारणाय च ।

भास्कराय सुतीर्थाय देवदेवाय रंहसे । उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे । १९५

गिरिशाय प्रशान्ताय यतये चीरवाससे । बिल्वदण्डाय सिद्धाय सर्व्वदण्डधराय च ।

मृगव्याधाय महते धन्विनेऽथ भवाय च । वराय सोमवक्त्राय सिद्धमन्त्राय चक्षुषे ।

हिरण्यबाहवे राजन्नुग्राय पतये दिशां । लेलिहानाय गोष्ठाय सिद्धमन्त्राय वृष्णये ।

पशूनां पतये चैव भूतानां पतये नमः । वृषाय मातृभक्ताय सेनान्ये मध्यमाय च ।

स्रुवहस्ताय मतये धन्विने भार्गवाय च । अजाय कृष्णनेत्राय विरूपाक्षाय चैव ह । २००

तीक्ष्णदंष्ट्राय तीक्ष्णाय वैश्वानरमुखाय च । महाद्युतयेऽनङ्गाय सर्व्वाय पतये दिशां ।

विलोहिताय दीप्ताय दीप्ताक्षाय महौजसे । कपालमालिने नित्यं सुवर्णमुकुटाय च ।

महादेवाय कृष्णाय त्र्यम्बकायानघाय च । क्रोधनायनृशंसाय मृदवे बाहुशालिने ।

तथा उग्राय पतये पश्चिहस्तिवाससे । दण्डिने तप्ततपसे तथैवाक्रूरकर्म्मणे ।

सहस्रशिरसे चैव सहस्रचरणाय च । नमः स्वधास्वरूपाय बहुरूपाय दंष्ट्रिणे । २०५

वसुरेतः सुवपुषे अनन्ताय महात्मने । पिनाकिनं महादेवं महायोगिनमव्ययं ।

त्रिशूलहस्तं वरदं त्र्यम्बकं भुवनेश्वरं । त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसं ।

प्रभवं सर्व्वभूतानां धारणं धरणीधरं । ईशानं शङ्करं सर्व्वं शिवं विश्वेश्वरं भवं ।

उमापतिं पशुपतिं विश्वरूपं महेश्वरं । विरूपाक्षं दशभुजं दिव्यगोवृषभध्वजं ।

उग्रं स्थाणुं शिवं रौद्रं शर्व्वं गौरीशमीश्वरं । शितिकण्ठमजं शुक्रं पृथुं पृथुहरं वरं । २१०

विश्वरूपं विरूपाक्षं बहुरूपमुमापतिं । प्रणम्य शिरसा देवमनङ्गाङ्गहरं हरं ।

शरण्यं शरणं याहि महादेवं चतुर्मुखं । एवं कृत्वा नमस्तस्मै महादेवाय रंहसे ।

महात्मने क्षितिपते तत्सुवर्णमवाप्स्यसि । सुवर्णमाहरिष्यन्तस्तत्र गच्छन्तु ते नराः ।

इत्युक्तः स वचस्तेन चक्रे कारन्धमात्मजः । ततोऽतिमानुषं सर्व्वं चक्रे यज्ञस्य संविधिं ।

सौवर्णानि च भाण्डानि संचक्रुस्तत्र शिल्पिनः । बृहस्पतिस्तु तां श्रुत्वा मरुत्तस्य महीपतेः । २१५

समृद्धिमतिदेवेभ्यः सन्तापमकरोद्भृशं । स तप्यमानो वैवर्ण्यं कृशत्वं चागमत् परं ।

भविष्यति हि मे शत्रुः संवर्त्तो वसुमानिति । तं श्रुत्वा भृशसन्तप्तं देवराजो बृहस्पतिं ।

अभिगम्यामरवृतः प्रोवाचेदं वचस्तदा ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि संवर्त्तमरुत्तीये अष्टमोऽध्यायः ॥ ८ ॥

॥ इन्द्र उवाच ॥ कच्चित् सुखं स्वपिषि त्वं बृहस्पते कच्चिन्मनोज्ञाः परिचारकास्ते । कच्चिद्देवानां सुखकामोऽसि विप्र कच्चिद्देवास्त्वां परिपालयन्ति ।

॥ बृहस्पतिरुवाच ॥ सुखं स्वपे शयने देवराज तथा मनोज्ञाः परिचारका मे । तथा देवानां सुखकामोऽस्मि नित्यं देवाश्च मां सुभृशं पालयन्ति । २२०

॥ इन्द्र उवाच ॥ कुतो दुःखं मानसं देहजं वा पाण्डुर्विवर्णश्च कुतस्त्वमद्य । आचक्ष्व मे ब्राह्मण यावदेतान्निहन्मि सर्वांस्तव दुःखकर्त्तॄन् ।

॥ बृहस्पतिरुवाच ॥ मरुत्तमाहुर्मघवन् यक्ष्यमाणं महायज्ञेनोत्तमदक्षिणेन । संवर्त्तो याजयतीति मे श्रुतं तदिच्छामि न स तं याजयेत ।

॥ इन्द्र उवाच ॥ सर्व्वान् कामाननुयातोऽसि विप्र यस्त्वं देवानां मन्त्रवित्सुपुरोधाः । उभौ च ते जरामृत्यू व्यतीतौ किं संवर्त्तस्तव कर्त्ताऽद्य विप्र ।

॥ बृहस्पतिरुवाच ॥ देवैः सह त्वमसुरान् प्रणुद्य जिघांससे चाप्युत सानुबन्धान् । यं यं समृद्धं पश्यसि तत्र तत्र दुःखं सपत्नेषु समृद्धिभावः ।

अतोऽस्मि देवेन्द्र विवर्णरूपः सपत्नो मे वर्द्धते तं निशम्य । सर्व्वोपायैर्मघवन् संनियच्छ संवर्त्तं वा पार्थिवं वा मरुत्तं । १०॥

॥ इन्द्र उवाच ॥ एहि गच्छ प्रहितो जातवेदो बृहस्पतिं परिदातुं मरुत्ते । अयं वै त्वां याजयिता बृहस्पतिस्तथाऽमरञ्चैव करिष्यतीति ।

॥ अग्निरुवाच ॥ अहं गच्छामि भगवन् दूतोऽद्य बृहस्पतिं परिदातुं मरुत्ते । वाचं सत्यां पुरुहूतस्य कर्त्तुं बृहस्पतेश्चापचितिं चिकीर्षुः ।

॥ व्यास उवाच ॥ ततः प्रायाद्धूमकेतुर्महात्मा वनानि सर्व्वाणि वीरुधश्चावमृद्नन् । कामाद्धिमान्ते परिवर्त्तमानः काष्ठातिगो मातरिश्वेव नर्द्दन् ।

॥ मरुत्त उवाच ॥ आश्चर्य्यमद्य पश्यामि रूपिणं वह्निमागतं । आसनं सलिलं पाद्यं गाञ्चोपानय वै मुने ।

॥ अग्निरुवाच ॥ आसनं सलिलं पाद्यं प्रतिनन्दामि तेऽनघ । इन्द्रेण तु समादिष्टं विद्धि मां दूतमागतं । १५॥

॥ मरुत्त उवाच ॥ कच्चिच्छ्रीमान् देवराजः सुखी च कच्चिच्चास्मान् प्रीयते धूमकेतो । कच्चिद्देवा अस्य वशे यथावत् प्रब्रूहि त्वं मम कार्त्स्न्येन देव ।

॥ अग्निरुवाच ॥ शक्रो भृशं सुसुखी पार्थिवेन्द्र प्रीतिञ्चेच्छत्यजरां वै त्वया सः । देवाश्च सर्व्वे वशगास्तस्य राजन् सन्देशं त्वं शृणु मे देवराज्ञः ।

यदर्थं मां प्राहिणोत्त्वत्सकाशं बृहस्पतिं परिदातुं मरुत्ते । अयं गुरुर्याजयतां नृप त्वां मर्त्यं सन्तममरं त्वां करोतु ।

॥ मरुत्त उवाच ॥ संवर्त्तोऽयं याजयिता द्विजो मां बृहस्पतेरञ्जलिरेष तस्य । न चैवासौ याजयित्वा महेन्द्रं मर्त्यं सन्तं याजयन्नद्य शोभेत् ।

॥ अग्निरुवाच ॥ ये वै लोका देवलोके महान्तः सम्प्राप्स्यसे तान् देवराजप्रसादात् । त्वाञ्चेदसौ याजयेद्वै बृहस्पतिर्नूनं स्वर्गं त्वं जयेः कीर्त्तियुक्तः । २०॥

तथा लोका मानुषा ये च दिव्याः प्रजापतेश्चापि ये वै महान्तः । ते ते जिता देवराज्यञ्च कृत्स्नं बृहस्पतिर्य्याजयेच्चेन्नरेन्द्र ।

॥ संवर्त्त उवाच ॥ मा स्मैवं त्वं पुनरागाः कथञ्चित् बृहस्पतिं परिदातुं मरुत्ते । मा त्वां धक्ष्ये चक्षुषा दारुणेन संक्रुद्धोऽहं पावक त्वं निबोध ।

॥ व्यास उवाच ॥ ततो देवानगमद्धूमकेतुर्दाहाद्भीतो व्यथितोऽश्वत्थपर्णवत् । तं वै दृष्ट्वा प्राह शक्रो महात्मा बृहस्पतेः सन्निधौ हव्यवाहं ।

॥ इन्द्र उवाच ॥ जानामि ते गुरुमेनं तपोधनं बृहस्पतेरनुजं तीव्रतेजसं। यस्याह्वानादागतोऽहं नरेन्द्र प्रीतिर्मेऽद्य त्वयि मन्युः प्रनष्टः।

॥ संवर्त्त उवाच॥ यदि प्रीतस्त्वमसि वै देवराज तस्मात् स्वयं शाधि यज्ञे विधानं। स्वयं भागान् कुरु सर्व्वान् सुरेन्द्र जाना त्वयं सर्व्वलोकस्य देव। २८०

॥ व्यास उवाच ॥ एवमुक्तस्त्वाङ्गिरसेन शक्रः समादिदेश स्वयमेव देवान्। सभाः क्रियन्तामावसथाश्च मुख्याः सहस्रशश्चित्रभूताः समृद्धाः।

कॢप्ताः स्थूणाः कुरुतारोहणानि गन्धर्व्वाणामप्सरसाञ्चैव शीघ्रं। यत्र नृत्येरन्नप्सरसः समस्ताः स्वर्गोपमः क्रियतां यज्ञवाटः।

इत्युक्तास्ते चक्रुराशु प्रतीता दिवौकसः शक्रवाक्यान्नरेन्द्र। ततोवाक्यं प्राह राजानमिन्द्रः प्रीतो राजन् पूज्यमानो मरुत्तं।

एष त्वयाऽहमिह राजन् समेत्य ये चाप्यन्ये तव पूर्व्वे नरेन्द्र। सर्व्वाश्चान्या देवताः प्रीयमाणा हविस्तुभ्यं प्रतिगृह्णन्तु राजन्।

आग्नेयं वै लोहितमालभन्तां वैश्वदेवं बहुरूपं हि राजन्। नीलं चोक्षाणं मेध्यमप्यालभन्तां चलच्छिश्नं मत्प्रदिष्टं द्विजाग्र्याः। २८५

ततो यज्ञो ववृधे तस्य राजन् यत्र देवाः स्वयमन्नानि जह्रुः। यस्मिन् शक्रो ब्राह्मणैः पूज्यमानः सदस्योऽभूद्धरिमान् देवराजः।

ततः संवर्त्तश्चैत्यगतो महात्मा यथा वह्निः प्रज्वलितो द्वितीयः। हवींष्युच्चैराह्वयन् देवसंघान् जुहावाग्नौ मन्त्रवत् सुप्रतीतः।

ततः पीत्वा बलभित् सोममग्र्यं ये चाप्यन्ये सोमपा देवसंघाः। सर्व्वेऽनुज्ञाताः प्रययुः पार्थिवेन यथाजोषं तर्पिताः प्रीतिमन्तः।

ततो राजा जातरूपस्य राशीन् पदे पदे कारयामास हृष्टः। द्विजातिभ्यो विसृजन् भूरिवित्तं रराज वित्तेश इवारिहन्ता।

ततो वित्तं विविधं सन्निधाय यथोत्साहं कारयित्वा च कोशं। अनुज्ञातो गुरुणा सन्निवृत्य शशास गामखिलां सागरान्तां। २९०

एवं गुणः स बभूवेह राजा यस्य क्रतौ तत् सुवर्णं प्रभूतं। तत्त्वं समादाय नरेन्द्र वित्तं यजस्व देवांस्तर्पयानो विधानैः।

॥ वैशम्पायन उवाच ॥ ततो राजा पाण्डवो हृष्टरूपः श्रुत्वा वाक्यं सत्यवत्याः सुतस्य। मनश्चक्रे तेन वित्तेन यष्टुं ततोऽमात्यैर्मन्त्रयामास भूयः।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि संवर्त्तमरुत्तीये दशमोऽध्यायः॥ १०॥

॥ वैशम्पायन उवाच ॥ इत्युक्ते नृपतौ तस्मिन् व्यासेनाद्भुतकर्म्मणा। वासुदेवो महातेजास्ततो वचनमाददे।

तं नृपं दीनमनसं निहतज्ञातिबान्धवं। उपप्लुतमिवादित्यं सधूममिव पावकं।

निर्व्विण्णमनसं पार्थं ज्ञात्वा वृष्णिकुलोद्वहः। आश्वासयन् धर्म्मसुतं प्रवक्तुमुपचक्रमे। २९१

॥ वासुदेव उवाच ॥ सर्व्वं जिह्मं मृत्युपदमार्ज्जवं ब्रह्मणः पदं। एतावान् ज्ञानविषयः प्रलापः किं करिष्यति।

नैव ते निष्ठितं कर्म्म नैव ते शत्रवो जिताः। कथं शत्रुं शरीरस्थमात्मनो नावबुध्यसे।

अत्र ते वर्णयिष्यामि यथाधर्म्मं यथाश्रुतं। इन्द्रस्य सह वृत्रेण यथा युद्धमवर्त्तत।

वृत्रेण पृथिवी व्याप्ता पुरा किल नराधिप। स दृष्ट्वा पृथिवीं व्याप्तां गन्धस्य विषये हृते।

धराहरणदुर्गन्धो विषयः समपद्यत। शतक्रतुश्चुकोपाथ गन्धस्य विषये हृते। ३००
वृत्रस्य स ततः क्रुद्धो घोरं वज्रमवासृजत्। स वध्यमानो वज्रेण सुभृशं भूरितेजसा।
विवेश सहसा तोयं जग्राह विषयं ततः। अप्सु वृत्रगृहीतासु रसे च विषये हृते।
शतक्रतुरतिक्रुद्धस्तासु वज्रमवासृजत्। स वध्यमानो वज्रेण तस्मिन्नमिततेजसा।
विवेश सहसा ज्योतिर्जग्राह विषयं ततः। व्याप्ते ज्योतिषि वृत्रेण रूपेऽथ विषये हृते।
शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत्। स वध्यमानो वज्रेण तस्मिन्नमिततेजसा। ३०५
विवेश सहसा वायुं जग्राह विषयं ततः। व्याप्ते वायौ तु वृत्रेण स्पर्शेऽथ विषये हृते।
शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत्। स वध्यमानो वज्रेण तस्मिन्नमिततेजसा।
आकाशमभिदुद्राव जग्राह विषयं ततः। आकाशे वृत्रभूतेऽथ शब्दे च विषये हृते।
शतक्रतुरभिक्रुद्धस्तत्र वज्रमवासृजत्। स वध्यमानो वज्रेण तस्मिन्नमिततेजसा।
विवेश सहसा शक्रं जग्राह विषयं ततः। तस्य वृत्रगृहीतस्य मोहः समभवन्महान्। ३१०
रथन्तरेण तं तात वशिष्ठः प्रत्यबोधयत्। ततो वृत्रं शरीरस्थं जघान भरतर्षभ।
शतक्रतुरदृश्येन वज्रेणेतीह नः श्रुतं। इदं धर्म्मरहस्यं वै शक्रेणोक्तं महर्षिषु।
ऋषिभिश्च मम प्रोक्तं तन्निबोध नराधिप।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि कृष्णधर्म्मसंवादे एकादशोऽध्यायः॥ ११॥

॥ वासुदेव उवाच ॥ द्विविधो जायते व्याधिः शारीरो मानसस्तथा। परस्परं तयोर्जन्म निर्द्वन्द्वं नोपपद्यते।
शरीरे जायते व्याधिः शारीरः स निगद्यते। मनसो जायते व्याधिर्मानसः स निगद्यते। ३१५
शीतोष्णे चैव वायुश्च गुणा राजन् शरीरजाः। तेषां गुणानां साम्यञ्च तदाहुः स्वस्थलक्षणं।
उष्णेन बाध्यते शीतं शीतेनोष्णञ्च बाध्यते। सत्त्वं रजस्तमश्चेति त्रय आत्मगुणाः स्मृताः।
तेषां गुणानां साम्यञ्च तदाहुः स्वस्थलक्षणं। तेषामन्यतमोत्सेके विधानमुपदिश्यते।
हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते। कश्चिद्दुःखे वर्त्तमानः सुखस्य स्मर्त्तुमिच्छति।
कश्चित् सुखे वर्त्तमानो दुःखस्य स्मर्त्तुमिच्छति। स त्वं न दुःखी दुःखस्य न सुखी सुखस्य वा। ३२०
स्मर्त्तुमिच्छसि कौन्तेय किमन्यद्दुःखविभ्रमात्। अथवा ते स्वभावोऽयं येन पार्थावकृष्यसे।
दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलां। मिषतां पाण्डुपुत्राणां न तस्य स्मर्त्तुमर्हसि।
प्रव्राजनञ्च नगरादजिनैश्च विवासनं। महारण्यनिवासश्च न तस्य स्मर्त्तुमर्हसि।
जटासुरात् परिक्लेशश्चित्रसेनेन चाहवः। सैन्धवाच्च परिक्लेशो न तस्य स्मर्त्तुमर्हसि।
पुनरज्ञातचर्य्यायां कीचकेन पदा वधः। याज्ञसेन्यास्तदा पार्थ न तस्य स्मर्त्तुमर्हसि। ३२५
यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिन्दम। मनसैकेन योद्धव्यं तत्ते युद्धमुपस्थितं।
तस्मादभ्युपगन्तव्यं युद्धाय भरतर्षभ। परमव्यक्तरूपस्य पारं युक्त्वा स्वकर्म्मभिः।
यत्र नैव शरैः कार्य्यं न भृत्यैर्न च बन्धुभिः। आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितं।

तस्मिन्ननिर्ज्जिते युद्धे कामवस्थां गमिष्यसि । एतज्ज्ञात्वा तु कौन्तेय कृतकृत्यो भविष्यसि ।
एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिं । पितृपैतामहे वृत्ते शाधि राज्यं यथोचितं । ३३०
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि कृष्णधर्म्मसंवादे द्वादशोऽध्यायः ॥ १२ ॥

॥ वासुदेव उवाच ॥ न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत । शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ।
बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृध्यतः । यो धर्म्मो यत् सुखं चैव द्विषतामस्तु तत्तथा ।
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतं । ममेति च भवेन्मृत्युर्न ममेति च शाश्वतं ।
ब्रह्ममृत्यू ततो राजन्नात्मन्येव व्यवस्थितौ । अदृश्यमानौ भूतानि योधयेतामसंशयं ।
अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत । भित्त्वा शरीरं भूतानामहिंसां प्रतिपद्यते । ३३५
लब्ध्वापि पृथिवीं कृत्स्नां सहस्थावरजङ्गमां । ममत्वं यस्य नैव स्यात् किं तया स करिष्यति ।
अथवा वसतः पार्थ वने वन्येन जीवतः । ममता यस्य द्रव्येषु मृत्योरास्ये स वर्त्तते ।
बाह्यान्तराणां शत्रूणां स्वभावं पश्य भारत । यो न पश्यति तद्भूतं मुच्यते स महाभयात् ।

कामात्मानं न प्रशंसन्ति लोके नेहाकामा काचिदस्ति प्रवृत्तिः । सर्व्वे कामा मनसोऽङ्गप्रभूता यान् पण्डितः संहरते विचिन्त्य ।
भूयो भूयो जन्मनोऽभ्यासयोगात् योगी योगं मारमार्गं विचिन्त्य । दानञ्च वेदाध्ययनं तपश्च काम्यानि कर्म्माणि च वैदिकानि । ३४०

व्रतं यज्ञं नियमान् ध्यानयोगान् कामेन यो नारभते विदित्वा । यद्यच्चायं कामयते स धर्म्मो नयो धर्म्मो नियमस्तस्य मूलं ।
अत्र गाथाः कामगीताः कीर्त्तयन्ति पुराविदः । शृणु संकीर्त्त्यमानास्ता निखिलेन युधिष्ठिर ।
नाहं शक्योऽनुपायेन हन्तुं भूतेन केनचित् । यो मां प्रयतते हन्तुं ज्ञात्वा प्रहरणे बलं ।
तस्य तस्मिन् प्रहरणे पुनः प्रादुर्भवाम्यहं । यो मां प्रयतते हन्तुं यज्ञैर्विविधदक्षिणैः ।
जङ्गमेष्विव धर्म्मात्मा पुनः प्रादुर्भवाम्यहं । यो मां प्रयतते हन्तुं वेदैर्वेदान्तसाधनैः । ३४५
स्थावरेष्विव धर्म्मात्मा तस्य प्रादुर्भवाम्यहं । यो मां प्रयतते हन्तुं धृत्या सत्यपराक्रमः ।
भावो भवामि तस्याहं स च मां नावबुध्यते । यो मां प्रयतते हन्तुं तपसा संशितव्रतः ।
ततस्तपसि तस्याथ पुनः प्रादुर्भवाम्यहं । यो मां प्रयतते हन्तुं मोक्षमास्थाय पण्डितः ।
तस्य मोक्षरतिस्थस्य नृत्यामि च हसामि च । अवध्यः सर्व्वभूतानामहमेकः सनातनः ।
तस्मात्त्वमपि तं कामं यज्ञैर्विविधदक्षिणैः । धर्म्मं कुरु महाराज तत्र ते स भविष्यति । ३५०
यजस्व वाजिमेधेन विधिवद्दक्षिणावता । अन्यैश्च विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः ।
मा ते व्यथाऽस्तु निहतान् बन्धून् वीक्ष्य पुनः पुनः । न शक्यास्ते पुनर्द्रष्टुं ये हतास्मिन् रणाजिरे ।
स त्वमिष्ट्वा महायज्ञैः समृद्धैराप्तदक्षिणैः । लोके कीर्त्तिं परां प्राप्य गतिमग्र्यां गमिष्यसि ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि कृष्णधर्म्मसंवादे त्रयोदशोऽध्यायः ॥ १३ ॥

॥ वैशम्पायन उवाच ॥ एवं बहुविधैर्वाक्यैर्मुनिभिस्तैस्तपोधनैः । समाश्वस्यत राजर्षिर्हतबन्धुर्युधिष्ठिरः ।
सोऽनुनीतो भगवता विष्टरश्रवसा स्वयं । द्वैपायनेन कृष्णेन देवस्थानेन वा विभुः । ३५५

नारदेनाथ भीमेन नकुलेन च पार्थिवः। कृष्णया सहदेवेन विजयेन च धीमता।
अन्यैश्च पुरवास्तव्यैर्भृत्यैः शास्त्रदृष्टिभिः। व्यजहात् शोकजं दुःखं सन्तापश्चैव मानसं।
अर्च्चयामास देवांश्च ब्राह्मणांश्च युधिष्ठिरः। कृत्वाऽथ प्रेतकार्य्याणि बन्धूनां स पुनर्नृपः।
अन्वशासच्च धर्म्मात्मा पृथिवीं सागराम्बरां। प्रशान्तचेताः कौरव्यः स्वराज्यं प्राप्य केवलं।
व्यासञ्च नारदञ्चैव तांश्चान्यानब्रवीन्नृपः। आश्वासितोऽहं प्राग्वृद्धैर्भवद्भिर्मुनिपुङ्गवैः। ३९०
न सूक्ष्ममपि मे किञ्चिद्व्यलीकमिह विद्यते। अर्थश्च सुमहान् प्राप्तो येन यक्ष्यामि देवताः।
पुरस्कृत्याद्य भवतः समानेष्यामहे मखं। हिमवन्तं त्वया गुप्ता गमिष्यामः पितामह।
बह्वाश्चर्य्यो हि देशः स श्रूयते द्विजसत्तम। तथा भगवता चित्रं कल्याणं बहुभाषितं।
देवर्षिणा नारदेन देवस्थानेन चैव हि। नाभागधेयः पुरुषः कश्चिदेवंविधान् गुरून्।
लभते व्यसनं प्राप्य सुहृदः साधुसम्मतान्। एवमुक्तास्तु ते राज्ञा सर्व्व एव महर्षयः। ३९५
अभ्यनुज्ञाप्य राजानं तथा तौ कृष्णफाल्गुनौ। पश्यतामेव सर्व्वेषां तत्रैवादर्शनं ययुः।
ततो धर्म्मसुतो राजा तत्रैवोपाविशत् प्रभुः। एवं नातिमहान् कालः स तेषामभ्यवर्त्तत।
कुर्व्वतां शौचकार्य्याणि भीष्मस्य निधने तदा। महादानानि विप्रेभ्यो ददतामौर्द्धदेहिकं।
भीष्मकर्णपुरोगाणां कुरूणां कुरुसत्तमः। सहितो धृतराष्ट्रेण स ददौ चौर्द्धदेहिकं।
ततो दत्त्वा बहुधनं विप्रेभ्यः पाण्डवर्षभः। धृतराष्ट्रं पुरस्कृत्य प्रविवेश गजाह्वयं। ४००
स समाश्वास्य पितरं प्रज्ञाचक्षुषमीश्वरं। अन्वशाद्वै स धर्म्मात्मा पृथिवीं भ्रातृभिः सह।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिके पर्व्वणि चतुर्द्दशोऽध्यायः ॥ १४ ॥

॥ जनमेजय उवाच ॥ विजिते पाण्डवेयैस्तु प्रशान्ते च द्विजोत्तम। राष्ट्रे किं चक्रतुर्व्वीरौ वासुदेवधनञ्जयौ।
॥ वैशम्पायन उवाच ॥ विजिते पाण्डवेये तु प्रशान्ते च विशाम्पते। राष्ट्रे बभूवतुर्हृष्टौ वासुदेवधनञ्जयौ।
विजह्राते मुदा युक्तौ दिवि देवेश्वराविव। तौ वनेषु विचित्रेषु सरस्सु गिरिसानुषु।
तीर्थेषु चैव पुण्येषु पल्वलेषु नदीषु च। चंक्रम्यमाणौ संहृष्टावश्विनाविव नन्दने। ४०५
इन्द्रप्रस्थे महात्मानौ रेमतुः कृष्णपाण्डवौ। प्रविश्य तां सभां रम्यां विजह्रातेऽमराविव।
तत्र युद्धकथाश्चित्राः परिक्लेशांश्च पार्थिव। कथायोगे कथायोगे कथयामासतुः सदा।
ऋषीणां देवतानाञ्च वंशांस्तावाहतुस्तदा। प्रीयमाणौ महात्मानौ पुराणावृषिसत्तमौ।
मधुरास्तु कथाश्चित्राश्चित्रार्थपदनिश्चयाः। निश्चयज्ञः स पार्थाय कथयामास केशवः।
पुत्रशोकाभिसन्तप्तं ज्ञातीनाञ्च सहस्रशः। कथाभिः शमयामास पार्थं शौरिर्जनार्द्दनः। ४१०
स समाश्वास्य विधिवद्विधानज्ञो महातपाः। अपहृत्यात्मनो भारं विशश्रामेव सात्वतः।
ततः कथान्ते गोविन्दो गुडाकेशमुवाच ह। सान्त्वयन् श्लक्ष्णया वाचा हेतुयुक्तमिदं वचः।
॥ वासुदेव उवाच ॥ विजितेयं धरा कृत्स्ना सव्यसाचिन् परन्तप। त्वद्बाहुबलमाश्रित्य राज्ञा धर्म्मसुतेन च।
असपत्नां महीं भुङ्क्ते धर्म्मराजो युधिष्ठिरः। भीमसेनप्रभावेण यमयोश्च नरोत्तम।

धर्म्मेण राज्ञा धर्म्मज्ञ प्राप्तं राज्यमकण्टकं । धर्म्मेण निहतः सङ्ख्ये च राजा सुयोधनः । ३८५
अधर्म्मरुचयो लुब्धाः सदा चाप्रियवादिनः । धार्त्तराष्ट्रा दुरात्मानः सानुबन्धा निपातिताः ।
प्रशान्तामखिलां पार्थ पृथिवीं पृथिवीपतिः । भुङ्क्ते धर्म्मसुतो राजा त्वया गुप्तः कुरूद्वह ।
रमे चाहं त्वया सार्द्धमरण्येष्वपि पाण्डव । किमु यत्र जनोऽयं वै पृथा चामित्रकर्षण ।
यत्र धर्म्मसुतो राजा यत्र भीमो महाबलः । यत्र माद्रवतीपुत्त्रौ रतिस्तत्र परा मम ।
तथैव स्वर्गकल्पेषु सभोद्देशेषु भारत । रमणीयेषु पुण्येषु सहितस्य त्वयाऽनघ । ३९०
कालो महांस्त्वतीतो मे शूरसूनुमपश्यतः । बलदेवञ्च कौरव्य तथाऽन्यान् वृष्णिपुङ्गवान् ।
सोऽहं गन्तुमभीप्सामि पुरीं द्वारवतीं प्रति । रोचतां गमनं मह्यं तवापि पुरुषर्षभ ।
उक्तो बहुविधं राजा तत्र तत्र युधिष्ठिरः । सह भीष्मेण यद्युक्तमस्माभिः शोककारिते ।
शिष्टो युधिष्ठिरोऽस्माभिः शास्ता सन्नपि पण्डितः । तेन तद्वचनं सम्यक् गृहीतं सुमहात्मना ।
धर्म्मपुत्त्रे हि धर्म्मज्ञे कृतज्ञे सत्यवादिनि । सत्यं धर्म्मो मतिश्चाग्र्या स्थितिश्च सततं स्थिरा । ३९५
तत्र गत्वा महात्मानं यदि ते रोचतेऽर्ज्जुन । अस्मद्गमनसंयुक्तं वचो ब्रूहि जनाधिपं ।
न हि तस्याप्रियं कुर्य्यां प्राणत्यागेऽप्युपस्थिते । कुतो गन्तुं महाबाहो पुरीं द्वारवतीं प्रति ।
सर्व्वन्त्विदमहं पार्थ त्वत्प्रीतिहितकाम्यया । ब्रवीमि सत्यं कौरव्य न मिथ्यैतत् कथञ्चन ।
प्रयोजनञ्च निर्वृत्तमिह वासे ममार्ज्जुन । धार्त्तराष्ट्रो हतो राजा सबलः सपदानुगः ।
पृथिवी च वशे पार्थ धर्म्मपुत्त्रस्य धीमतः । स्थिता समुद्रवलया सशैलवनकानना । ४००
चिता रत्नैर्बहुविधैः कुरुराजस्य पाण्डव । धर्म्मेण राजा धर्म्मज्ञः पातु सर्व्वां वसुन्धरां ।
उपास्यमानो मुनिभिः सिद्धैश्चापि महात्मभिः । स्तूयमानश्च सततं बन्दिभिर्भरतर्षभ ।
तं मया सह गत्वाऽद्य राजानं कुरुवर्द्धनं । आपृच्छ कुरुशार्दूल गमनं द्वारकां प्रति ।
इदं शरीरं वसु यच्च मे गृहे निवेदितं पार्थ युधिष्ठिरे नृपे । प्रियश्च मान्यश्च हि मे युधिष्ठिरः सदा कुरूणामधिपो महामतिः ।
प्रयोजनञ्चापि निवासकारणे न विद्यते मे त्वदृते नृपात्मज । स्थिता हि पृथ्वी तव पार्थ शासने गुरोः सुवृत्तस्य युधिष्ठिरस्य च । ४०५
इतीदमुक्तः स तदा महात्मना जनार्द्दनेनामितविक्रमोऽर्ज्जुनः । तथेति दुःखादिव वाक्यमैरयज्जनार्द्दनं सम्प्रतिपूज्य पार्थिवः ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अश्वमेधिकपर्व्वणि पञ्चदशोऽध्यायः ॥ समाप्तञ्च अश्वमेधिकं पर्व्व ॥ १५ ॥

---

## ॥ अथ अनुगीतापर्व्व ॥

॥ जनमेजय उवाच ॥ सभायां वसतोस्तत्र निहत्यारीन्महात्मनोः । केशवार्ज्जुनयोः का नु कथा समभवत् द्विज ।
॥ वैशम्पायन उवाच ॥ कृष्णेन सहितः पार्थः स्वराज्यं प्राप्य केवलं । तस्यां सभायां दिव्यायां विजहार मुदा युतः ।
तत्र कञ्चित् सभोद्देशं स्वर्गोद्देशसमं नृप । यदृच्छया तौ मुदितौ जग्मतुः स्वजनावृतौ ।
ततः प्रतीतः कृष्णेन सहितः पाण्डवोऽर्ज्जुनः । निरीक्ष्य तां सभां रम्यामिदं वचनमब्रवीत् । ४१०

विदितं मे महाबाहो संग्रामे समुपस्थिते। माहात्म्यं देवकीमातस्तच्च ते रूपमैश्वरं।
यत्तद्भगवता प्रोक्तं पुरा केशव सौहृदात्। तत् सर्वं पुरुषव्याघ्र नष्टं मे भ्रष्टचेतसः।
मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः। भवांस्तु द्वारकां गन्ता न चिरादिव माधव।
॥ वैशम्पायन उवाच॥ एवमुक्तस्ततः कृष्णः फाल्गुनं प्रत्यभाषत। परिष्वज्य महातेजा वचनं वदतांवरः।
॥ वासुदेव उवाच॥ श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनं। धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान्। ४७५
अबुद्ध्या नाग्रहीर्यस्त्वं तन्मे सुमहदप्रियं। न च साऽद्य पुनर्भूयः स्मृतिर्मे सम्भविष्यति।
नूनमश्रद्दधानोऽसि दुर्मेधा ह्यसि पाण्डव। न च शक्यं पुनर्वक्तुमशेषेण धनञ्जय।
स हि धर्मः सुपर्य्याप्तो ब्रह्मणः पदवेदने। न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः।
परं हि ब्रह्म कथितं योगयुक्तेन तन्मया। इतिहासन्तु वक्ष्यामि तस्मिन्नर्थे पुरातनं।
यथा तां बुद्धिमास्थाय गतिमग्र्यां गमिष्यसि। शृणु धर्मभृतां श्रेष्ठ गदितं सर्व्वमेव मे। ४८०
आगच्छद्ब्राह्मणः कश्चित् स्वर्गलोकादरिन्दम। ब्रह्मलोकाच्च दुर्द्धर्षः सोऽस्माभिः पूजितोऽभवत्।
अस्माभिः परिपृष्टश्च यदाह भरतर्षभ। दिव्येन विधिना पार्थ तच्छृणुष्वाविचारयन्।
॥ ब्राह्मण उवाच॥ मोक्षधर्मं समाश्रित्य कृष्ण यन्मानुपृच्छसि। भूतानामनुकम्पार्थं यन्मोहच्छेदनं विभो।
तत्तेऽहं सम्प्रवक्ष्यामि यथावन्मधुसूदन। शृणुष्वावहितो भूत्वा गदतो मम माधव।
कश्चिद्विप्रस्तपोयुक्तः काश्यपो धर्म्मवित्तमः। आससाद द्विजं कञ्चिद्धर्म्माणामागतागमं। ४८५
गतागतेषु बहुशो ज्ञानविज्ञानपारगं। लोकतत्त्वार्थकुशलं ज्ञातारं सुखदुःखयोः।
जातीमरणतत्त्वज्ञं कोविदं पुण्यपापयोः। द्रष्टारमुच्चनीचानां कर्म्मभिर्देहिनां गतिं।
चरन्तं मुक्तवत् सिद्धं प्रशान्तं संयतेन्द्रियं। दीप्यमानं श्रिया ब्राह्म्या क्रममाणञ्च सर्व्वशः
अन्तर्द्धानगतिज्ञञ्च श्रुत्वा तत्त्वेन काश्यपः। तथैवान्तर्हितैः सिद्धैर्यान्तं चक्रधरैः सह।
सम्भाषमाणमेकान्ते समासीनञ्च तैः सह। यदृच्छया च गच्छन्तमसक्तं पवनं यथा। ४९०
तं समासाद्य मेधावी स तदा द्विजसत्तमः। चरणौ धर्म्मकामोऽस्य तपस्वी सुसमाहितः।
प्रतिपेदे यथान्यायं दृष्ट्वा तन्महदद्भुतं। विस्मितश्चाद्भुतं दृष्ट्वा काश्यपस्तं द्विजोत्तमं।
परिचारेण महता गुरुं तं पर्य्यतोषयत्। उपपन्नञ्च तत्सर्व्वं श्रुतचारित्रसंयुतं।
भावेनातोषयच्चैनं गुरुवृत्त्या परन्तप। तस्मै तुष्टः स शिष्याय प्रसन्नो वाक्यमब्रवीत्।
सिद्धिं परामभिप्रेक्ष्य शृणु तन्मे जनार्द्दन। ४९५
॥ सिद्ध उवाच॥ विविधैः कर्म्मभिस्तात पुण्ययोगैश्च केवलैः। गच्छन्तीह गतिं मर्त्या देवलोके च संस्थितिं।
न क्वचित् सुखमत्यन्तं न क्वचिच्छाश्वती स्थितिः। स्थानाच्च महतो भ्रंशो दुःखलब्धात् पुनः पुनः।
अशुभा गतयः प्राप्ताः कष्टा मे पापसेवनात्। काममन्युपरीतेन तृष्णया मोहितेन च।
पुनः पुनश्च मरणं जन्म चैव पुनः पुनः। आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः।
मातरो विविधा दृष्टाः पितरश्च पृथग्विधाः। सुखानि च विचित्राणि दुःखानि च मयाऽनघ। ५००

प्रियैर्विवासो बहुशः संवासश्चाप्रियैः सह । धननाशश्च संप्राप्तो लब्ध्वा दुःखेन तद्धनं ।
अवमानाः सुकष्टाश्च राजतः स्वजनात्तथा । शारीरा मानसाश्चापि वेदना भृशदारुणाः ।
प्राप्ता विमाननाश्चोग्रा वधबन्धाश्च दारुणाः । पतनं निरये चैव यातनाश्च यमक्षये ।
जरा रोगाश्च सततं व्यसनानि च भूरिशः । लोकेऽस्मिन्ननुभूतानि द्वन्द्वजानि भृशं मया ।
ततः कदाचिन्निर्वेदान्निराकारामितेन च । लोकतन्त्रं परित्यक्तं दुःखार्त्तेन भृशं मया ।
लोकेऽस्मिन्ननुभूयाहमिमं मार्गमनुष्ठितः । ततः सिद्धिरियं प्राप्ता प्रसादादात्मनो मया ।
नाहं पुनरिहागन्ता लोकानालोकयाम्यहं । आ सिद्धेरा प्रजासर्गादात्मनोऽपि गतीः शुभाः ।
उपलब्धा द्विजश्रेष्ठ तथेयं सिद्धिरुत्तमा । इतः परं गमिष्यामि ततः परतरं पुनः ।
ब्रह्मणः पदमव्यक्तं मा ते भूदत्र संशयः । नाहं पुनरिहागन्ता मर्त्यलोकं परन्तप ।
प्रीतोऽस्मि ते महाप्राज्ञ ब्रूहि किं करवाणि ते । यदीप्सुरुपपन्नस्त्वं तस्य कालोऽयमागतः ।
अभिजाने च तदहं यदर्थं मामुपागतः । अचिरात्तु गमिष्यामि तेनाहं त्वामचूचुदं ।
भृशं प्रीतोऽस्मि भवतश्चारित्रेण विचक्षण । परिपृच्छस्व कल्याणं भाषेयं तत्तवेप्सितं ।
बहु मन्ये च ते बुद्धिं भृशं सम्पूजयामि च । येनाहं भवता बुद्धो मेधावी ह्यसि काश्यप ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि षोडशोऽध्यायः ॥ १६ ॥

॥ वासुदेव उवाच ॥ ततस्तस्योपसंगृह्य पादौ प्रश्नान् सुदुर्वचान् । पप्रच्छ तांश्च धर्मान् स प्राह धर्मभृतांवरः ।
॥ काश्यप उवाच ॥ कथं शरीरं च्यवते कथञ्चैवोपपद्यते । कथं कष्टाच्च संसारात् संसरन् परिमुच्यते ।
आत्मा च प्रकृतिं मुक्त्वा तच्छरीरं विमुञ्चति । शरीरतश्च निर्मुक्तः कथमन्यत् प्रपद्यते ।
कथं शुभाशुभे चायं कर्म्मणी स्वकृते नरः । उपभुङ्क्ते क्व वा कर्म्म विदेहस्यावतिष्ठते ।
॥ ब्राह्मण उवाच ॥ एवं सञ्चोदितः सिद्धः प्रश्नांस्तान्प्रत्यभाषत । आनुपूर्व्येण वार्ष्णेय तन्मे निगदतः शृणु ।
॥ सिद्ध उवाच ॥ आयुःकीर्त्तिकराणीह यानि कृत्यानि सेवते । शरीरग्रहणे यस्मिंस्तेषु क्षीणेषु सर्व्वशः ।
आयुःक्षयपरीतात्मा विपरीतानि सेवते । बुद्धिर्व्यावर्त्तते चास्य विनाशे प्रत्युपस्थिते ।
सत्त्वं बलञ्च कालञ्च विदित्वा चात्मनस्तथा । अतिवेलमुपाश्नाति स्वविरुद्धान्यनात्मवान् ।
यदाऽयमतिकष्टानि सर्व्वाण्युपनिषेवते । अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन ।
दुष्टान्नामिषपानञ्च यदन्योन्यविरोधि च । गुरु चाप्यमितं भुङ्क्ते नातिजीर्णेऽपि वा पुनः ।
व्यायाममतिमात्रञ्च व्यवायञ्चोपसेवते । सततं कर्म्मलोभाद्वा प्राप्तं वेगं विधारयेत् ।
रसाभियुक्तमन्नं वा दिवास्वप्नञ्च सेवते । अपक्वानागते काले स्वयं दोषान् प्रकोपयेत् ।
स्वदोषकोपनाद्रोगं लभते मरणान्तिकं । अपि वोद्बन्धनादीनि परीतानि व्यवस्यति ।
तस्य तैः कारणैर्जन्तोः शरीरं च्यवते तदा । जीवितं प्रोच्यमानं तद्यथावदुपधारय ।
ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः । शरीरमनुपर्य्येत्य सर्व्वान् प्राणान् रुणद्धि वै ।
अत्यर्थं बलवानूष्मा शरीरे परिकोपितः । भिनत्ति जीवस्थानानि कर्म्माणि विद्धि तत्त्वतः ।

ततः सवेदनो जीवः सद्यः प्रच्यवते क्षरात्। शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्म्मसु। ४७१
वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम। जातीमरणसंविग्नाः सततं सर्व्वजन्तवः।
दृश्यन्ते सन्त्यजन्तश्च शरीराणि द्विजर्षभ। गर्भसंक्रमणे चापि मर्म्मणामतिसर्पणे।
तादृशीमेव लभते वेदनां मानवः पुनः। भिन्नसन्धिरथ क्लेदमद्भिः स लभते नरः।
यथा पञ्चसु भूतेषु संश्रितत्वं निगच्छति। शैत्यात् प्रकुपितः काये तीव्रवायुसमीरितः।
यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः। स गच्छत्यूर्द्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणं। ४७५
शरीरञ्च जहात्येवं निरुच्छ्वासश्च दृश्यते। स निरूष्मा निरुच्छ्वासो निःश्रीको गतचेतनः।
ब्रह्मणा सम्परित्यक्तो मृत इत्युच्यते नरः। स्रोतोभिर्य्यैर्व्विजानाति इन्द्रियार्थान् शरीरभृत्।
तैरेव न विजानाति प्राणानाहारसम्भवान्। तत्रैव कुरुते काये यः स जीवः सनातनः।
तथा यद्यद्भवेद्युक्तं सन्निपाते क्वचित् क्वचित्। तत्तन्मर्म्म विजानीहि शास्त्रदृष्टं हि तत्तथा।
तेषु मर्म्मसु भिन्नेषु ततः स समुदीरयन्। आविश्य हृदयं जन्तोः सत्त्वञ्चाशु रुणद्धि वै। ४८०
ततः सचेतनो जन्तुर्नाभिजानाति किञ्चन। तमसा संवृतज्ञानः संवृतेष्वेव मर्म्मसु।
स जीवो निरधिष्ठानश्चाव्यते मातरिश्वना। ततः स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणं।
निष्क्रामन् कम्पयत्याशु तच्छरीरमचेतनं। स जीवः प्रच्युतः कायात् कर्म्मभिः स्वैः समावृतः।
अङ्कितः स्वैः शुभैः पुण्यैः पापैर्व्वाऽप्युपपद्यते। ब्राह्मणा ज्ञानसम्पन्ना यथावच्छ्रुतनिश्चयाः।
इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः। यथाऽन्धकारे खद्योतं लीयमानं ततस्ततः। ४८५
चक्षुष्मन्तः प्रपश्यन्ति तथा च ज्ञानचक्षुषः। पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा।
च्यवन्तं जायमानञ्च योनिञ्चानुप्रवेशितं। तस्य स्थानानि दृष्टानि त्रिविधानीह शास्त्रतः।
कर्म्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः। ततः शुभाशुभं कृत्वा लभन्ते सर्व्वदेहिनः।
इहैवोच्चावचान् भोगान् प्राप्नुवन्ति स्वकर्म्मभिः। इहैवाशुभकर्म्माणः कर्म्मभिर्निरयं गताः।
अवाग्गतिरियं कष्टा यत्र पच्यन्ति मानवाः। तस्मात् सुदुर्लभो मोक्षो रक्ष्यश्चात्मा ततो भृशं। ४९०
ऊर्द्ध्वन्तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः। कीर्त्यमानानि तानीह तत्त्वतः सन्निबोध मे।
तच्छ्रुत्वा नैष्ठिकीं बुद्धिं बुध्येथाः कर्म्मनिश्चयं। तारारूपाणि सर्व्वाणि यच्चैतच्चन्द्रमण्डलं।
यच्च विभ्राजते लोके स्वभासा सूर्य्यमण्डलं। स्थानान्येतानि जानीहि जनानां पुण्यकर्म्मणां।
कर्म्मक्षयाच्च ते सर्व्वे च्यवन्ते वै पुनः पुनः। तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः।
न च तत्रापि सन्तोषो दृष्ट्वा दीप्ततरां श्रियं। इत्येता गतयः सर्व्वाः पृथक् ते समुदीरिताः। ४९५
उपपत्तिन्तु वक्ष्यामि गर्भस्याहमतः परं। तथा तन्मे निगदतः शृणुष्वावहितो द्विज।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ब्राह्मण उवाच ॥ शुभानामशुभानाञ्च नेह नाशोऽस्ति कर्म्मणां। प्राप्य प्राप्यानु पच्यन्ते क्षेत्रं क्षेत्रं तथा तथा।
यथा प्रसूयमानस्तु फली दद्यात् फलं बहु। तथा स्याद्विपुलं पुण्यं शुद्धेन मनसा कृतं।

पापस्यापि तथैव स्यात् पापेन मनसा कृतं । पुरोधाय मनो हीह कर्म्मण्यात्मा प्रवर्त्तते ।
यथा कर्म्मसमाविष्टः काममन्युसमावृतः । नरो गर्भं प्रविशति तच्चापि शृणु चोत्तरं । १००
शुक्रं शोणितसंसृष्टं स्त्रिया गर्भाशयं गतं । क्षेत्रं कर्म्मजमाप्नोति शुभं वा यदि वाऽशुभं ।
सौक्ष्म्यादव्यक्तभावाच्च न स क्वचन सज्जति । संप्राप्य ब्रह्मणः कायं तस्मात्तद्ब्रह्म शाश्वतं ।
तद्बीजं सर्व्वभूतानां तेन जीवन्ति जन्तवः । स जीवः सर्व्वगात्राणि गर्भस्याविश्य भागशः ।
दधाति चेतसा सद्यः प्राणस्थानेष्ववस्थितः । ततः स्पन्दयतेऽङ्गानि स गर्भश्चेतनान्वितः ।
यथा लोहस्य निस्यन्दो निषिक्तो बिम्बविग्रहं । उपैति तद्वज्जानीहि गर्भे जीवप्रवेशनं । १०५
लोहपिण्डं यथा वह्निः प्रविश्य ह्यतितापयेत् । तथा त्वमपि जानीहि गर्भे जीवोपपादनं ।
यथा च दीपः शरणे दीप्यमानः प्रकाशते । एवमेव शरीराणि प्रकाशयति चेतना ।
यद्यच्च कुरुते कर्म्म शुभं वा यदि वाऽशुभं । पूर्व्वदेहकृतं सर्व्वमवश्यमुपभुज्यते ।
ततस्तु क्षीयते चैव पुनश्चान्यत् प्रचीयते । यावत्तन्मोक्षयोगस्थं धर्म्मं नैवावबुध्यते ।
तत्र कर्म्म प्रवक्ष्यामि सुखी भवति येन वै । आवर्त्तमानो जातीषु यथाऽन्योन्यासु सत्तम । ११०
दानं व्रतं ब्रह्मचर्य्यं यथोक्तं ब्रह्मधारणं । दमः प्रशान्तता चैव भूतानां चानुकम्पनं ।
संयमश्चानृशंस्यञ्च परस्वादानवर्ज्जनं । व्यलीकानामकरणं भूतानां मनसा भुवि ।
मातापित्रोश्च शुश्रूषा देवतातिथिपूजनं । गुरुपूजा घृणा शौचं नित्यमिन्द्रियसंयमः ।
प्रवर्त्तनं शोभनस्य तत् सतां वृत्तमुच्यते । ततो धर्म्मः प्रभवति यः प्रजाः पाति शाश्वतीः ।
एवं सत्सु सदा पश्येत् तत्राप्येषा ध्रुवा स्थितिः । आचारो धर्म्ममाचष्टे यस्मिन् शान्ता व्यवस्थिताः । ११५
तेषु तत् कर्म्म निक्षिप्तं यः स धर्म्मः सनातनः । यस्तं समभिपद्येत न स दुर्गतिमाप्नुयात् ।
अतो नियम्यते लोकः प्रच्यवन् धर्म्मवर्त्मसु । यस्तु योगी च मुक्तश्च स एतेभ्यो विशिष्यते ।
वर्त्तमानस्य धर्म्मेण शुभं यत्र यथा तथा । संसारतारणं ह्यस्य कालेन महता भवेत् ।
एवं पूर्व्वकृतं कर्म्म नित्यं जन्तुः प्रवर्त्तते । सर्व्वं तत् कारणं येन विकृतोऽयमिहागतः ।
शरीरग्रहणं चास्य केन पूर्व्वं प्रकल्पितं । इत्येवं संशयो लोके तच्च वक्ष्याम्यशेषतः । १२०
शरीरमात्मनः कृत्वा सर्व्वलोकपितामहः । त्रैलोक्यमसृजद्ब्रह्मा कृत्स्नं स्थावरजङ्गमं ।
ततः प्रधानमसृजत् प्रकृतिं स शरीरिणां । यया सर्व्वमिदं व्याप्तं यां लोके परमां विदुः ।
इदं तत्क्षरमित्युक्तं परं त्वमृतमक्षरं । त्रयाणां मिथुनं सर्व्वमेकैकस्य पृथक् पृथक् ।
असृजत् सर्व्वभूतानि पूर्व्वसृष्टः प्रजापतिः । स्थावराणि च भूतानि इत्येषा पौर्व्विकी श्रुतिः ।
तस्य कालपरीमाणमकरोत् स पितामहः । भूतेषु परिवृत्तिञ्च पुनरावृत्तिमेव च । १२५
यथाऽत्र कश्चिन्मेधावी दृष्टात्मा पूर्व्वजन्मनि । यत् प्रवक्ष्यामि तत् सर्व्वं यथावदुपपद्यते ।
सुखदुःखे यथा सम्यगनित्ये यः प्रपश्यति । कायं चाऽमेध्यसंघातं विनाशं कर्म्मसंहितं ।
यच्च किञ्चित् सुखं तच्च दुःखं सर्व्वमिति स्मरन् । संसारसागरं घोरं तरिष्यति सुदुस्तरं ।

जरामरणरोगैश्च समाविष्टः प्रधानवित् । चेतनावत्सु चैतन्यं समं भूतेषु पश्यति ।
निर्विद्यते ततः कृत्स्नं मार्गमाणः परं पदं । तस्योपदेशं वक्ष्यामि याथातथ्येन सत्तम ।      ५१०
शाश्वतस्याव्ययस्याथ यदस्य ज्ञानमुत्तमं । प्रोच्यमानं मया विप्र निबोधेदमशेषतः ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अष्टादशोऽध्यायः ॥ १८ ॥

॥ ब्राह्मण उवाच ॥ यः स्यादेकायने लीनस्तूष्णीं किञ्चिदचिन्तयन् । पूर्व्वं पूर्व्वं परित्यज्य स तीर्णो बन्धनाद्भवेत् ।
सर्व्वमित्रः सर्व्वसहः शमे रक्तो जितेन्द्रियः । व्यपेतभयमन्युश्च आत्मवान्मुच्यते नरः ।
आत्मवत्सर्व्वभूतेषु यश्चरेन्नियतः शुचिः । अमानी निरभीमानः सर्व्वतो मुक्त एव सः ।
जीवितं मरणञ्चोभे सुखदुःखे तथैव च । लाभालाभे प्रियद्वेष्ये यः समः स च मुच्यते ।      ५१५
न कस्यचित् स्पृहयते नावजानाति किञ्चन । निर्द्वन्द्वो वीतरागात्मा सर्व्वथा मुक्त एव सः ।
अनमित्रश्च निर्ब्बन्धुरनपत्यश्च यः क्वचित् । त्यक्तधर्म्मार्थकामश्च निराकाङ्क्षी च मुच्यते ।
नैव धर्म्मी न चाधर्म्मी पूर्व्वोपचितहायकः । धातुक्षयप्रशान्तात्मा निर्द्वन्द्वः स विमुच्यते ।
अकर्म्मवान् विकाङ्क्षश्च पश्येज्जगदशाश्वतं । अश्वत्थसदृशं नित्यं जन्ममृत्युजरायुतं ।
वैराग्यबुद्धिः सततमात्मदोषव्यपेक्षकः । आत्मबन्धविनिर्म्मोक्षं स करोत्यचिरादिव ।      ५२०
अगन्धमरसस्पर्शमशब्दमपरिग्रहं । अरूपमनभिज्ञेयं दृष्ट्वात्मानं विमुच्यते ।
पञ्चभूतगुणैर्हीनममूर्त्तिमदहेतुकं । अगुणं गुणभोक्तारं यः पश्यति स मुच्यते ।
विहाय सर्व्वसंकल्पान् बुद्ध्या शारीरमानसान् । शनैर्निर्व्वाणमाप्नोति निरिन्धन इवानलः ।
सर्व्वसंस्कारनिर्म्मुक्तो निर्द्वन्द्वो निष्परिग्रहः । तपसा इन्द्रियग्रामं यश्चरेन्मुक्त एव सः ।
विमुक्तः सर्व्वसंस्कारैस्ततो ब्रह्म सनातनं । परमाप्नोति संशान्तमचलं नित्यमक्षरं ।      ५२५
अतः परं प्रवक्ष्यामि योगशास्त्रमनुत्तमं । युञ्जन्तः सिद्धमात्मानं यथा पश्यन्ति योगिनः ।
तस्योपदेशं वक्ष्यामि यथावत्तन्निबोध मे । यैर्द्वारैश्चारयन्नित्यं पश्यत्यात्मानमात्मनि ।
इन्द्रियाणि तु संहृत्य मन आत्मनि धारयेत् । तीव्रं तप्त्वा तपः पूर्व्वं मोक्षयोगं समाचरेत् ।
तपस्वी सततं युक्तो योगशास्त्रमथाचरेत् । मनीषी मनसा विप्रः पश्यन्नात्मानमात्मनि ।
स चेच्छक्नोत्ययं साधुर्योक्तुमात्मानमात्मनि । तत एकान्तशीलः स पश्यत्यात्मानमात्मनि ।      ५३०
संयतः सततं युक्त आत्मवान् विजितेन्द्रियः । तथा य आत्मनात्मानं संप्रयुक्तः प्रपश्यति ।
यथा हि पुरुषः स्वप्ने दृष्ट्वा पश्यत्यसाविति । तथा रूपमिवात्मानं साधुयुक्तः प्रपश्यति ।
इषीकाञ्च यथा मुञ्जात् कश्चिन्निष्कृष्य दर्शयेत् । योगी निष्कृष्य चात्मानं तथा पश्यति देहतः ।
मुञ्जं शरीरमित्याहुरिषीकामात्मनि श्रितां । एतन्निदर्शनं प्रोक्तं योगविद्भिरनुत्तमं ।
यदा हि युक्तमात्मानं सम्यक् पश्यति देहभृत् । न तस्येहेश्वरः कश्चित्त्रैलोक्यस्यापि यः प्रभुः ।      ५३५
अन्यान्याश्चापि तनवो यथेष्टं प्रतिपद्यते । विनिवृत्य जरामृत्युं न शोचति न हृष्यति ।
देवानामपि देवत्वं युक्तः कारयते वशी । ब्रह्म चाव्ययमाप्नोति हित्वा देहमशाश्वतं ।

विनश्यत्सु च भूतेषु न भयं तस्य जायते। क्लिश्यमानेषु भूतेषु न स क्लिश्यति केनचित्।
दुःखशोकभयैर्घोरैः सङ्गस्नेहसमुद्भवैः। न विचाल्यति युक्तात्मा निस्पृहः शान्तमानसः।
नैनं शस्त्राणि वध्यन्ते न मृत्युश्चास्य विद्यते। नातः सुखतरं कश्चिल्लोके क्वचन दृश्यते। ५९०
सम्यग्युक्तः स आत्मानमात्मन्येव प्रतिष्ठते। विनिवृत्तजरादुःखं सुखं स्वपिति चापि सः।
देहान् यथेष्टमभ्येति हित्वेमां मानुषीं तनुं। निर्वेदस्तु न कर्त्तव्यो भुञ्जानेन कथञ्चन।
सम्यग्युक्तो यदात्मानमात्मन्येव प्रपश्यति। तदैव न स्पृहयति साक्षादपि शतक्रतोः।
योगमेकान्तशीलस्तु यथा विन्दति तच्छृणु। दृष्टपूर्व्वां दिशं चिन्त्य यस्मिन् संनिवसेत्पुरे।
पुरस्याभ्यन्तरे तस्य मनः स्थाप्यं न बाह्यतः। पुरस्याभ्यन्तरे तिष्ठन् यस्मिन्नावसथे वसेत्। ५९५
तस्मिन्नावसथे धार्य्यं सबाह्याभ्यन्तरं मनः। प्रचिन्त्यावसथे कृत्स्नं यस्मिन् काले स तिष्ठति।
यस्मिन् काले मनस्तस्य न कथञ्चन बाह्यतः। संनियम्येन्द्रियग्रामं निर्घोषे निर्ज्जने वने।
कायमभ्यन्तरं कृत्स्नमेकाग्रः परिचिन्तयेत्। दन्तांस्तालु च जिह्वां च गलं ग्रीवां तथैव च।
हृदयं चिन्तयेच्चापि तथा हृदयबन्धनं। इत्युक्तः स मया शिष्यो मेधावी मधुसूदन।
पप्रच्छ पुनरेवेमं मोक्षधर्म्मं सुदुर्व्वचं। भुक्तं भुक्तमिदं कोष्ठे कथमन्नं विपच्यते। ६००
कथं रसत्वं व्रजति शोणितत्वं कथं पुनः। तथा मांसञ्च मेदश्च स्नाय्वस्थीनि च पोषति।
कथमेतानि सर्व्वाणि शरीराणि शरीरिणां। वर्द्धन्ते वर्द्धमानस्य वर्द्धते च कथं बलं।
विरोधानां निर्गमनं मलानाञ्च पृथक् पृथक्। कुतो वाऽयं प्रश्वसिति उच्छ्वसित्यपि वा पुनः।
कञ्च देशमधिष्ठाय तिष्ठत्यात्मायमात्मनि। जीवः कायं वहति चेष्टमानः कलेवरं।
किं वर्णं कीदृशञ्चैव निवेशयति वै पुनः। याथातथ्येन भगवन् वक्तुमर्हसि मेऽनघ। ६०५
इति संपरिपृष्टोऽहं तेन विप्रेण माधव। प्रत्यब्रुवं महाबाहो यथाश्रुतमरिन्दम।
यथा स्वकोष्ठे प्रक्षिप्य भाण्डं भाण्डमना भवेत्। तथा स्वकाये प्रक्षिप्य मनो द्वारैरनिश्चलैः।
आत्मानं तत्र मार्गेत प्रमादं परिवर्ज्जयेत्। एवं सततमुद्युक्तः प्रीतात्मा न चिरादिव।
आसादयति तद्ब्रह्म यद्दृष्ट्वा स्यात् प्रधानवित्। न त्वसौ चक्षुषा ग्राह्यो न च सर्व्वैरपीन्द्रियैः।
मनसैव प्रदीपेन महानात्मा प्रदृश्यते। सर्व्वतः पाणिपादान्तः सर्व्वतोऽक्षिशिरोमुखः। ६१०
सर्व्वतः श्रुतिमान् लोके सर्व्वमावृत्य तिष्ठति। जीवो निष्क्रान्तमात्मानं शरीरात् संप्रपश्यति।
स तमुत्सृज्य देहं स्वं धारयन् ब्रह्म केवलं। आत्मानमालोकयति मनसा प्रहसन्निव।
तदेवमाश्रयं कृत्वा मोक्षं याति ततो मयि। इदं सर्व्वं रहस्यं ते मया प्रोक्तं द्विजोत्तम।
आपृच्छे साधयिष्यामि गच्छ विप्र यथासुखं। इत्युक्तः स तदा कृष्ण मया शिष्यो महातपाः।
अगच्छत यथाकामं ब्राह्मणः संशितव्रतः। ६१५
॥ वासुदेव उवाच ॥ इत्युक्त्वा स तदा पार्थ मां वाक्यं द्विजसत्तमः। मोक्षधर्म्माश्रितः सम्यक् तत्रैवान्तरधीयत।
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा। तदाऽपि हि रथस्थस्त्वं श्रुतवानेतदेव हि।

नैतत् पार्थ सुविज्ञेयं व्यामिश्रेणेति मे मतिः । नरेणाकृतसंज्ञेन विदग्धेनाकृतात्मना ।
सुरहस्यमिदं प्रोक्तं देवानां भरतर्षभ । कच्चिन्नेदं श्रुतं पार्थ मनुष्येणेह कर्हिचित् ।
न ह्येतच्छ्रोतुमर्होऽन्यो मनुष्यस्त्वामृतेऽनघ । नैतदद्य सुविज्ञेयं व्यामिश्रेणान्तरात्मना । ५९०
क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः । न चैतदिष्टं देवानां मर्त्त्यरूपनिवर्त्तनं ।
परा हि सा गतिः पार्थ यत्तद्ब्रह्म सनातनं । यत्रामृतत्वं प्राप्नोति त्यक्त्वा देहं सदा सुखी ।
इमं धर्म्मं समास्थाय येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिं ।
किं पुनर्ब्राह्मणाः पार्थ क्षत्रिया वा बहुश्रुताः । स्वधर्म्मरतयो नित्यं ब्रह्मलोकपरायणाः ।
हेतुमच्चैतदुद्दिष्टमुपायश्चास्य साधने । सिद्धिः फलञ्च मोक्षश्च दुःखस्य च विनिर्णयः । ५९५
नातः परं सुखं त्वन्यत् किञ्चित् स्याद्भरतर्षभ । बुद्धिमान् श्रद्दधानश्च पराक्रान्तश्च पाण्डव ।
यः परित्यज्यते मर्त्यो लोकसारमसारवत् । एतैरुपायैः स क्षिप्रं परां गतिमवाप्नुते ।
एतावदेव वक्तव्यं नातो भूयोऽस्ति किञ्चन । षण्मासं नित्ययुक्तस्य योगः पार्थ प्रवर्त्तते ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ऊनविंशोऽध्यायः ॥ १९ ॥

॥ वासुदेव उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । दम्पत्योः पार्थ संवादो योऽभवद्भरतर्षभ ।
ब्राह्मणी ब्राह्मणं कञ्चिज्ज्ञानविज्ञानपारगं । दृष्ट्वा विविक्त आसीनं भार्य्या भर्त्तारमब्रवीत् । ६००
कं नु लोकं गमिष्यामि त्वामहं पतिमाश्रिता । न्यस्तकर्म्माणमासीनं कीनाशमविचक्षणं ।
भार्य्याः पतिकृतान् लोकानाप्नुवन्तीति नः श्रुतं । त्वामहं पतिमासाद्य कां गमिष्यामि वै गतिं ।
एवमुक्तः स शान्तात्मा तामुवाच हसन्निव । सुभगे नाभ्यसूयामि वाक्यस्यास्य तवानघे ।
ग्राह्यं दृश्यञ्च सत्यं वा यदिदं कर्म्म विद्यते । एतदेव व्यवस्यन्ति कर्म्म कर्म्मेति कर्म्मिणः ।
मोहमेव नियच्छन्ति कर्म्मणा ज्ञानवर्ज्जिताः । नैष्कर्म्म्यं न च लोकेऽस्मिन् मुहूर्त्तमपि लभ्यते । ६०५
कर्म्मणा मनसा वाचा शुभं वा यदि वाऽशुभं । जन्मादिमूर्त्तिभेदानां कर्म्म भूतेषु वर्त्तते ।
रक्षोभिर्वध्यमानेषु दृश्यद्रव्येषु वर्त्मसु । आत्मस्थमात्मना तेन दृष्टमायतनं मया ।
यत्र तद्ब्रह्म निर्द्वन्द्वं यत्र सोमः सहाग्निना । व्यवायं कुरुते नित्यं धीरो भूतानि धारयन् ।
यत्र ब्रह्मादयो युक्तास्तदक्षरमुपासते । विद्वांसः सुव्रता यत्र शान्तात्मानो जितेन्द्रियाः ।
घ्राणेन न तदाघ्रेयं नास्वाद्यञ्चैव जिह्वया । स्पर्शनेन तदस्पृश्यं मनसा त्ववगम्यते । ६१०
चक्षुषामविषह्यञ्च यत्किञ्चिच्छ्रवणात् परं । अगन्धमरसस्पर्शमरूपाशब्दमव्ययं ।
यतः प्रवर्त्तते तन्त्रं यत्र च प्रतितिष्ठति । प्राणोऽपानः समानश्च व्यानश्चोदान एव च ।
तत एव प्रवर्त्तन्ते तदेव प्रविशन्ति च । समानव्यानयोर्मध्ये प्राणापानौ विचेरतुः ।
तस्मिन् सुप्ते प्रलीयेते समानो व्यान एव च । अपानप्राणयोर्मध्ये उदानो व्याप्य तिष्ठति ।
तस्माच्छयानं पुरुषं प्राणापानौ न मुञ्चतः । प्राणानामायतत्वेन तमुदानं प्रचक्षते । ६१५
तस्मात्तपो व्यवस्यन्ति तद्गतं ब्रह्मवादिनः । तेषामन्योन्यभक्षाणां सर्व्वेषां देहचारिणां ।

अग्निर्वैश्वानरो मध्ये सप्तधा दीप्यतेऽन्तरा । घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रञ्च पञ्चमं ।
मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः । घ्रेयं दृश्यञ्च पेयञ्च स्पृश्यं श्रव्यं तथैव च ।
मन्तव्यमथ बोद्धव्यं ताः सप्त समिधो मम । घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते भवन्ति परमर्त्विजः । घ्रेये पेये च दृश्ये च स्पृश्ये श्रव्ये तथैव च । ६१०
मन्तव्येऽप्यथ बोद्धव्ये सुभगे पश्य सर्व्वदा । हवींष्यग्निषु होतारः सप्तधा सप्त सप्तसु ।
सम्यक् प्रक्षिप्य विद्वांसो जनयन्ति स्वयोनिषु । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं ।
मनो बुद्धिश्च सप्तैता योनिरित्येव शब्दिताः । हविर्भूता गुणाः सर्व्वे प्रविशन्त्यग्निजं गुणं ।
अन्तर्वासमुषित्वा च जायते स्वासु योनिषु । तत्रैव च निरुध्यन्ते प्रलये भूतभावने ।
ततः संजायते गन्धस्ततः संजायते रसः । ततः संजायते रूपं ततः स्पर्शोऽभिजायते । ६१५
ततः संजायते शब्दः संशयस्तत्र जायते । ततः संजायते निष्ठा जन्मैतत् सप्तधा विदुः ।
अनेनैव प्रकारेण प्रगृहीतं पुरातनैः । पूर्णाहुतिभिरापूर्णास्तिभिः पूर्य्यन्ति तेजसा ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां विंशतितमोऽध्यायः ॥ २० ॥
॥ ब्राह्मण उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । निबोध दशहोतॄणां विधानमथ यादृशं ।
श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चरणौ करौ । उपस्थं पायुरिति वा होतॄणि दश भामिनि ।
शब्दस्पर्शौ रूपरसौ गन्धो वाक्यं क्रिया गतिः । रेतोमूत्रपुरीषाणां त्यागो दश हवींषि च । ६२०
दिशो वायूरविश्चन्द्रः पृथ्व्यग्नी विष्णुरेव च । इन्द्रः प्रजापतिर्मित्रमग्नयो दश भामिनि ।
दशेन्द्रियाणि होतॄणि हवींषि दश भाविनि । विषया नाम समिधो हूयन्ते तु दशाग्निषु ।
चित्तं स्रुवञ्च वित्तञ्च पवित्रं ज्ञानमुत्तमं । सुविभक्तमिदं सर्व्वं जगदासीदिति श्रुतं ।
सर्व्वमेवाथ विज्ञेयं चित्तं ज्ञानमवेक्षते । रेतःशरीरभृत्काये विज्ञाता तु शरीरभृत् ।
शरीरभृद्गार्हपत्यस्तस्मादन्यः प्रणीयते । मनश्चाहवनीयस्तु तस्मिन् प्रक्षिप्यते हविः । ६२५
ततो वाचस्पतिर्जज्ञे तं मनः पर्य्यवेक्षते । रूपं भवति वै वर्णं समनुद्रवते मनः ।
॥ ब्राह्मण्युवाच ॥ कस्माद्वागभवत्पूर्व्वं कस्मात् पश्चान्मनोऽभवत् । मनसा चिन्तितं वाक्यं यदा समभिपद्यते ।
केन विज्ञानरूपेण मतिश्चित्तं समाश्रिता । समुन्नीता नाध्यगच्छत् को वै तां प्रतिबाधते ।
॥ ब्राह्मण उवाच ॥ तामपानः पतिर्भूत्वा तस्मात् प्रेष्यत्यपानतां । तां गतिं मनसः प्राहुर्मनस्तस्मादपेक्षते ।
प्रश्नन्तु वाङ्मनसोर्म्मां यस्मात्त्वमनुपृच्छसि । तस्मात्ते वर्त्तयिष्यामि तयोरेव समाह्वयं । ६३०
उभे वाङ्मनसी गत्वा भूतात्मानमपृच्छतां । आवयोः श्रेष्ठमाचक्ष्व छिन्धि नौ संशयं विभो ।
मन इत्येव भगवांस्तदा प्राह सरस्वती । अहं वै कामधुक् तुभ्यमिति तं प्राह वागथ ।
॥ ब्राह्मण उवाच ॥ स्थावरं जङ्गमञ्चैव विद्ध्युभे मनसी मम । स्थावरं मत्सकाशे वै जङ्गमं विषये तव ।
यस्तु ते विषयं गच्छेन्मन्त्रो वर्णः स्वरोऽपि वा । तन्मनो जङ्गमं नाम तस्मादासीद्गरीयसी ।
तस्मादपि समाधिस्ते स्वयमभ्येत्य शोभने । तस्मादुच्छ्वासमासाद्य प्रवक्ष्यामि सरस्वतीं । ६३५

प्राणापानान्तरे देवी वाग्वै नित्यं स्म तिष्ठति । प्रेर्य्यमाणा महाभागे विना प्राणमपानती ।
प्रजापतिमुपाधावत् प्रसीद भगवन्निति । ततः प्राणः प्रादुरभूद्वाचमाप्याययन् पुनः ।
तस्मादुच्छ्वासमासाद्य न वाग्वदति कर्हिचित् । घोषिणी जातनिर्घोषा नित्यमेव प्रवर्त्तते ।
तयोरपि च घोषिण्या निर्घोषैव गरीयसी । गौरिव प्रस्रवत्यर्थान् रसमुत्तमशालिनी ।
सततं स्यन्दते ह्येषा शाश्वतं ब्रह्मवादिनी । दिव्यादिव्यप्रभावेण भारती गौः शुचिस्मिते । ६१०
एतयोरन्तरं पश्य सूक्ष्मयोः स्यन्दमानयोः ।
॥ ब्राह्मण्युवाच ॥ अनुत्पन्नेषु वाक्येषु चोद्यमाना विवक्षया । किं नु पूर्व्वं तदा देवी व्याजहार सरस्वती ।
॥ ब्राह्मण उवाच ॥ प्राणेन या सम्भवते शरीरे प्राणादपानं प्रतिपद्यते च । उदानभूता च विसृज्य देहं व्यानेन सर्व्वं दिवमावृणोति ।
ततः समाने प्रतितिष्ठतीह इत्येव पूर्व्वं प्रजजल्प वाणी । तस्मान्मनः स्थावरत्वाद्विशिष्टं तथा देवी जङ्गमत्वाद्विशिष्टा ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां एकविंशोऽध्यायः ॥ २१ ॥
॥ ब्राह्मण उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । सुभगे सप्तहोतॄणां विधानमिह यादृशं । ६१५
घ्राणं चक्षुश्च जिह्वा च त्वक् श्रोत्रञ्चैव पञ्चमं । मनो बुद्धिश्च सप्तैते होतारः पृथगाश्रिताः ।
सूक्ष्मेऽवकाशे तिष्ठन्तो न पश्यन्तीतरेतरं । एतान् वै सप्त होतॄंस्त्वं स्वभावाद्विद्धि शोभने ।
॥ ब्राह्मण्युवाच ॥ सूक्ष्मेऽवकाशे सन्तस्ते कथं नान्योन्यदर्शिनः । कथं स्वभावा भगवन्नेतदाचक्ष्व मे प्रभो ।
॥ ब्राह्मण उवाच ॥ गुणाज्ञानमविज्ञानं गुणज्ञानमभिज्ञता । परस्परं गुणानेते नाभिजानन्ति कर्हिचित् ।
जिह्वा चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च । न गन्धानधिगच्छन्ति घ्राणस्तानधिगच्छति । ६२०
घ्राणं चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च । न रसानधिगच्छन्ति जिह्वा तानधिगच्छति ।
घ्राणं जिह्वा तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च । न रूपाण्यधिगच्छन्ति चक्षुस्तानधिगच्छति ।
घ्राणं जिह्वा ततश्चक्षुः श्रोत्रं बुद्धिर्मनस्तथा । न स्पर्शानधिगच्छन्ति त्वक्च तानधिगच्छति ।
घ्राणं जिह्वा च चक्षुश्च त्वङ्मनो बुद्धिरेव च । न शब्दानधिगच्छन्ति श्रोत्रं तानधिगच्छति ।
घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं बुद्धिरेव च । संशयं नाधिगच्छन्ति मनस्तमधिगच्छति । ६२५
घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं मन एव च । न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । इन्द्रियाणाञ्च संवादं मनसश्चैव भामिनि ।
॥ मन उवाच ॥ न घ्राति मामृते घ्राणं रसं जिह्वा न वेत्ति च । रूपं चक्षुर्न गृह्णाति त्वक् स्पर्शं नावबुध्यते ।
न श्रोत्रं बुध्यते शब्दं मया हीनं कथञ्चन । प्रवरं सर्व्वभूतानामहमस्मि सनातनं ।
अगाराणीव शून्यानि शान्तार्च्चिष इवाग्नयः । इन्द्रियाणि न भासन्ते मया हीनानि नित्यशः । ६३०
काष्ठानीवार्द्रशुष्काणि यतमानैरपीन्द्रियैः । गुणार्थान्नाधिगच्छन्ति मामृते सर्व्वजन्तवः ।
॥ इन्द्रियाण्यूचुः ॥ एवमेतद्भवेत् सत्यं यथैतन्मन्यते भवान् । ऋतेऽस्मानस्मदर्थांस्तु भोगान् भुङ्क्ते भवान् यदि ।
यद्यस्मासु प्रलीनेषु तर्पणं प्राणधारणं । भोगान् भुङ्क्ते भवान् सत्यं यथैतन्मन्यते तथा ।

अथवाऽस्मासु लीनेषु तिष्ठत्सु विषयेषु च । यदि सङ्कल्पमात्रेण भुङ्क्ते भोगान् यथार्थवत् ।

अथ चेन्मन्यसे सिद्धिमस्मदर्थेषु नित्यदा । घ्राणेन रूपमादत्स्व रसानादत्स्व चक्षुषा । १७५

श्रोत्रेण गन्धानादत्स्व स्पर्शानादत्स्व जिह्वया । त्वचा च शब्दानादत्स्व बुद्ध्या स्पर्शमथापि च ।

बलवन्तो ह्यनियमा नियमा दुर्बलीयसां । भोगानपूर्व्वानादत्स्व नोच्छिष्टं भोक्तुमर्हसि ।

यथा हि शिष्यः शास्तारं श्रुत्यर्थमभिधावति । ततः श्रुतिमुपादाय श्रुत्यर्थमुपतिष्ठति ।

विषयानेवमस्माभिर्दर्शितानभिमन्यसे । अनागतानतीतांश्च स्वप्ने जागरणे तथा ।

वैमनस्यं गतानाञ्च जन्तूनामल्पचेतसां । अस्मदर्थे कृते कार्य्ये दृश्यते प्राणधारणं । १८०

बहूनपि हि सङ्कल्पान् मत्वा स्वप्नानुपास्य च । बुभुक्षया पीड्यमानो विषयानेव धावति ।

अगारमद्वारमिव प्रविश्य संकल्पभोगान् विषये निबद्धान् । प्राणक्षये शान्तिमुपैति नित्यं दारुक्षयेऽग्निर्ज्वलितो यथैव ।

कामं तु नः स्वेषु गुणेषु सङ्गः कामश्च नान्योन्यगुणोपलब्धिः । अस्मान् विना नास्ति तवोपलब्धिस्त्वामृते त्वां न भजेत् प्रहर्षः

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां द्वाविंशोऽध्यायः ॥ २२ ॥

॥ ब्राह्मण उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । सुभगे पञ्चहोतॄणां विधानमिह यादृशं ।

प्राणापानावुदानश्च समानो व्यान एव च । पञ्चहोतॄंस्तथैतान् वै परं भावं विदुर्बुधाः । १८५

॥ ब्राह्मण्युवाच ॥ स्वभावात् सप्त होतार इति मे पूर्व्विका मतिः । यथा वै पञ्च होतारः परो भावस्तदुच्यतां ।

॥ ब्राह्मण उवाच ॥ प्राणेन संभृतो वायुरपानो जायते ततः । अपाने संभृतो वायुस्ततो व्यानः प्रवर्त्तते ।

व्यानेन संभृतो वायुस्ततोदानः प्रवर्त्तते । उदाने संभृतो वायुः समानो नाम जायते ।

तेऽपृच्छन्त पुरा सन्तः पूर्व्वजातं पितामहं । यो नो ज्येष्ठस्तमाचक्ष्व स नः श्रेष्ठो भविष्यति ।

॥ ब्रह्मोवाच ॥ यस्मिन् प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे । यस्मिन् प्रचीर्णे च पुनश्चरन्ति स वै श्रेष्ठो गच्छत यत्र कामः । १९०

॥ प्राण उवाच ॥ मयि प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे । मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनं ।

॥ ब्राह्मण उवाच ॥ प्राणः प्रालीयत ततः पुनश्च प्रचचार ह । समानश्चाप्युदानश्च वचो भूतो पुनः शुभे ।

न त्वं सर्व्वमिदं व्याप्य तिष्ठसीह यथा वयं । न त्वं श्रेष्ठो हि नः प्राण अपानो हि वशे तव ।

प्रचचार पुनः प्राणस्तमपानोऽभ्यभाषत ।

॥ अपान उवाच ॥ मयि प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे । मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनं । १९५

॥ ब्राह्मण उवाच ॥ व्यानश्च तमुदानश्च भाषमाणमथोचतुः । अपान न त्वं श्रेष्ठोऽसि प्राणो हि वशगस्तव ।

अपानः प्रचचाराथ व्यानस्तं पुनरब्रवीत् । श्रेष्ठोऽहमस्मि सर्व्वेषां श्रूयतां येन हेतुना ।

मयि प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे । मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनं ।

॥ ब्राह्मण उवाच ॥ प्रालीयत ततो व्यानः पुनश्च प्रचचार ह । प्राणापानावुदानश्च समानश्च तमब्रुवन् ।

न त्वं श्रेष्ठोऽसि नो व्यान समानस्तु वशे तव। प्रचचार पुनर्व्यानः समानः पुनरब्रवीत्। ७००
श्रेष्ठोऽहमस्मि सर्व्वेषां श्रूयतां येन हेतुना।
मयि प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे। मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनं।
समानः प्रचचाराथ उदानस्तमुवाच ह। श्रेष्ठोऽहमस्मि सर्व्वेषां श्रूयतां येन हेतुना।
मयि प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे। मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनं।
ततः प्राणीयतोदानः पुनश्च प्रचचार ह। प्राणापानौ समानश्च व्यानश्चैव तमब्रुवन्। ७०५
उदान न त्वं श्रेष्ठोऽसि व्यान एव वशे तव।
॥ ब्राह्मण उवाच ॥ ततस्तानब्रवीद्ब्रह्मा समवेतान् प्रजापतिः। सर्व्वे श्रेष्ठा न वा श्रेष्ठाः सर्व्वे चान्योन्यधर्म्मिणः।
सर्व्वे स्वविषये श्रेष्ठाः सर्व्वे चान्योन्यधर्म्मिणः। इति तानब्रवीत् सर्व्वान् समवेतान् प्रजापतिः।
एकः स्थिरश्चास्थिरश्च विशेषात् पञ्च वायवः। एक एव ममैवात्मा बहुधाऽप्युपचीयते।
परस्परस्य सुहृदो भावयन्तः परस्परं। स्वस्ति व्रजत भद्रं वो धारयध्वं परस्परं। ७१०
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां त्रयोविंशोऽध्यायः॥ २३ ॥
॥ ब्राह्मण उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। नारदस्य च संवादमृषेर्देवमतस्य च।
॥ देवमत उवाच ॥ जन्तोः संजायमानस्य किं नु पूर्व्वं प्रवर्त्तते। प्राणोऽपानः समानो वा व्यानो वोदान एव च।
॥ नारद उवाच ॥ येनायं सृज्यते जन्तुस्ततोऽन्यः पूर्व्वमेति तं। प्राणद्वन्द्वं हि विज्ञेयं तिर्य्यगूर्द्ध्वमधश्च यत्।
॥ देवमत उवाच ॥ केनायं सृज्यते जन्तुः कश्चान्यः पूर्व्वमेति तं। प्राणद्वन्द्वञ्च मे ब्रूहि तिर्य्यगूर्द्ध्वमधश्च यत्।
॥ नारद उवाच ॥ संकल्पाज्जायते हर्षः शब्दादपि च जायते। रसात्संजायते चापि रूपादपि च जायते। ७१५
शुक्राच्छोणितसंसृष्टात्पूर्व्वं प्राणः प्रवर्त्तते। प्राणेन विकृते शुक्रे ततोऽपानः प्रवर्त्तते।
शुक्रात्संजायते चापि रसादपि च जायते। एतद्रूपमुदानस्य हर्षो मिथुनमन्तरा।
कामात्संजायते शुक्रं कामात्संजायते रजः। समानव्यानजनिते सामान्ये शुक्रशोणिते।
प्राणापानाविदं द्वन्द्वमवाक् चोर्द्ध्वञ्च गच्छतः। व्यानः समानश्चैवोभौ तिर्य्यग्द्वन्द्वत्वमुच्यते।
अग्निर्वै देवताः सर्व्वा इति देवस्य शासनं। संजायते ब्राह्मणस्य ज्ञानं बुद्धिसमन्वितं। ७२०
तस्य धूमस्तमो रूपं रजो भस्म सुतेजसः। सर्व्वं संजायते तस्य यत्र प्रक्षिप्यते हविः।
सत्त्वात्समानो व्यानश्च इति यज्ञविदो विदुः। प्राणापानावाज्यभागौ तयोर्म्मध्ये हुताशनः।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः। निर्द्वन्द्वमिति यच्चैतत्तन्मे निगदतः शृणु।
अहोरात्रमिदं द्वन्द्वं तयोर्म्मध्ये हुताशनः। एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः।
सच्चासच्चैव तद्द्वन्द्वं तयोर्म्मध्ये हुताशनः। एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः। ७२५
ऊर्द्ध्वं समानो व्यानश्च व्यस्यते कर्म्म तेन तत्। तृतीयन्तु समानेन पुनरेव व्यवस्यते।
शान्त्यर्थं व्यानमेकञ्च शान्तिर्ब्रह्म सनातनं। एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां चतुर्व्विंशोऽध्यायः॥ २४ ॥

॥ ब्राह्मण उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । चातुर्होत्रविधानस्य विधानमिह यादृशं ।
तस्य सर्व्वस्य विधिवद्विधानमुपदिश्यते । शृणु मे गदतो भद्रे रहस्यमिदमद्भुतं ।
करणं कर्म्म कर्त्ता च मोक्ष इत्येव भाविनि । चत्वार एते होतारो यैरिदं जगदावृतं । ७३०
हेतूनां साधनञ्चैव शृणु सर्व्वमशेषतः । घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रञ्च पञ्चमं ।
मनो बुद्धिश्च सप्तैते विज्ञेया गुणहेतवः । गन्धो रसश्च रूपञ्च शब्दः स्पर्शश्च पञ्चमः ।
मन्तव्यमथ बोद्धव्यं सप्तैते कर्म्महेतवः । घ्राता भक्षयिता द्रष्टा वक्ता श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते विज्ञेयाः कर्तृहेतवः । स्वगुणं भक्षयन्त्येते गुणवन्तः शुभाशुभं ।
अहञ्च निर्गुणोऽनन्तः सप्तैते मोक्षहेतवः । विदुषां बुध्यमानानां स्वं स्वं स्थानं यथाविधि । ७३५
गुणास्ते देवताभूताः सततं भुञ्जते हविः । अदन् विद्वान् यथाऽन्नानि ममत्वेनोपपद्यते ।
आत्मार्थे पाचयन्नन्नं ममत्वेनोपहन्यते । अभक्ष्यभक्षणञ्चैव मद्यपानं निहन्ति तं ।
स चान्नं हन्ति तच्चान्नं स हत्वा हन्यते पुनः । हन्ता ह्यन्नमिदं विद्वान् पुनर्जनयतीश्वरः ।
न चान्नाज्जायते तस्मिन् सूक्ष्मो नाम व्यतिक्रमः । मनसा मन्यते यच्च यच्च वाचा निगद्यते ।
श्रोत्रेण श्रूयते यच्च चक्षुषा यच्च दृश्यते । स्पर्शेन स्पृश्यते यच्च घ्राणेन घ्रायते च यत् । ७४०
मनःषष्ठानि संयम्य हवींष्येतानि सर्व्वशः । गुणवत्पावको मह्यं दीप्यतेऽन्तःशरीरगः ।
योगयज्ञः प्रवृत्तो मे ज्ञानवह्निप्रदोद्भवः । प्राणस्तोत्रोऽपानशस्त्रः सर्व्वत्यागसुदक्षिणः ।
कर्त्ताऽनुमन्ता ब्रह्मात्मा ततोऽध्वर्य्युकृतस्तुतिः । ऋतं प्रशास्ता तच्छस्त्रमपवर्गोऽस्य दक्षिणा ।
ऋचश्चाप्यत्र शंसन्ति नारायणविदो जनाः । नारायणाय देवाय यदविन्दन् पशून् पुरा ।
तत्र सामानि गायन्ति तत्र चाहुर्निदर्शनं । देवं नारायणं भीरु सर्व्वात्मानं निबोध तं । ७४५
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ ब्राह्मण उवाच ॥ एकः शास्ता न द्वितीयोऽस्ति शास्ता यो हृच्छयस्तमहमनुब्रवीमि । तेनैव युक्तः प्रवणादिवोदकं यथा नियुक्तोऽस्मि तथा वहामि ।
एको गुरुर्नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि । तेनानुशिष्टा गुरुणा सदैव लोकद्विष्टाः पन्नगाः सर्व्व एव ।
एको बन्धुर्नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि । तेनानुशिष्टा बान्धवा बन्धुमन्तः सप्तर्षयः पार्थ दिवि प्रभान्ति ।
एकः श्रोता नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि । तस्मिन् गुरौ गुरुवासं निरुष्य शक्रो गतः सर्व्वलोकामरत्वं ।
एको द्वेष्टा नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि । तेनानुशिष्टा गुरुणा सदैव लोकद्विष्टाः पन्नगाः सर्व्व एव । ७५०
अत्राप्युदाहरन्तीममितिहासं पुरातनं । प्रजापतौ पन्नगानां देवर्षीणाञ्च संविदं ।
देवर्षयश्च नागाश्चाप्यसुराश्च प्रजापतिं । पर्य्यपृच्छन्नुपासीनाः श्रेयो नः प्रोच्यतामिति ।
तेषां प्रोवाच भगवान् श्रेयः समनुपृच्छतां । ओमित्येकाक्षरं ब्रह्म ते श्रुत्वा प्राद्रवन् दिशः ।
तेषां प्रद्रवमाणानामुपदेशार्थमात्मनः । सर्पाणां दंशने भावः प्रवृत्तः पूर्व्वमेव तु ।
असुराणां प्रवृत्तस्तु दम्भभावः स्वभावजः । दानं देवा व्यवसिता दममेव महर्षयः । ७५५

एकं ग्रामाग्रमासाद्य शब्देनैकेन संस्कृताः । स स व्यवसिताः सर्व्वे सर्पदेवर्षिदानवाः ।
शृणोत्यर्थं प्रोच्यमानं गृह्णाति च यथातथं । पृच्छतस्तदतो भूयो गुरुरन्यो न विद्यते ।
तस्य चानुमते कर्म्म ततः पश्चात् प्रवर्त्तते । गुरुर्बोद्धा च श्रोता च द्वेष्टा च हृदि निःसृतः ।
पापेन विचरन् लोके पापचारी भवत्ययं । शुभेन विचरन् लोके शुभचारी भवत्युत ।
कामचारी तु कामेन य इन्द्रियसुखे रतः । ब्रह्मचारी सदैवैष य इन्द्रियजये रतः । ६९०
अपेतव्रतकर्म्मा तु केवलं ब्रह्मणि स्थितः । ब्रह्मभूतश्चरन् लोके ब्रह्मचारी भवत्ययं ।
ब्रह्मैव समिधस्तस्य ब्रह्माग्निर्ब्रह्मसम्भवः । आपो ब्रह्म गुरुर्ब्रह्म स ब्रह्मणि समाहितः ।
एतदेतादृशं सूक्ष्मं ब्रह्मचर्य्यं विदुर्ब्बुधाः । विदित्वा चान्वपद्यन्त क्षेत्रज्ञेनानुदर्शिताः ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां षड्विंशोऽध्यायः ॥२६॥
॥ ब्राह्मण उवाच ॥ संकल्पदंशमशकं शोकहर्षहिमातपं । मोहान्धकारतिमिरं लोभव्याधिसरीसृपं ।
विषयैकात्ययाध्वानं कामक्रोधविरोधकं । तदतीत्य महादुर्गं प्रविष्टोऽस्मि महद्वनं । ६९५
॥ ब्राह्मण्युवाच ॥ क्व तद्वनं महाप्राज्ञ के वृक्षाः सरितश्च काः । गिरयः पर्व्वताश्चैव कियत्यध्वनि तद्वनं ।
॥ ब्राह्मण उवाच ॥ नैतदस्ति पृथग्भावः किञ्चिदन्यत्ततः सुखं । नैतदस्त्यपृथग्भावः किञ्चिद्दुःखतरं ततः ।
तस्माद्ध्रस्वतरं नास्ति न ततोऽस्ति महत्तरं । नास्ति तस्मात् सूक्ष्मतरं नास्त्यन्यत् तत्समं सुखं ।
न तत्राविश्य शोचन्ति न प्रहृष्यन्ति च द्विजाः । न च बिभ्यति केषाञ्चित्तेभ्यो बिभ्यति केचन ।
तस्मिन् वने सप्त महाद्रुमाश्च फलानि सप्तातिथयश्च सप्त । सप्ताश्रमाः सप्त समाधयश्च दीक्षाश्च सप्तैतदरण्यरूपं । ७००
पञ्चवर्णानि दिव्यानि पुष्पाणि च फलानि च । सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनं ।
सुवर्णानि द्विवर्णानि पुष्पाणि च फलानि च । सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनं ।
सुरभीणि द्विवर्णानि पुष्पाणि च फलानि च । सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनं ।
सुरभीण्येकवर्णानि पुष्पाणि च फलानि च । सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनं ।
बहून्यव्यक्तवर्णानि पुष्पाणि च फलानि च । विसृजन्तौ महावृक्षौ तद्वनं व्याप्य तिष्ठतः । ७०५
एको वह्निः सुमना ब्राह्मणोऽत्र पञ्चेन्द्रियाणि समिधश्चात्र सन्ति । तेभ्यो मोक्षाः सप्त फलन्ति दीक्षागुणाः फलान्यतिथयः फलाशाः ।
आतिथ्यं प्रतिगृह्णन्ति तत्र तत्र महर्षयः । अर्च्चितेषु प्रलीनेषु तेष्वन्यद्रोचते वनं ।
प्रज्ञावृक्षं मोक्षफलं शान्तिच्छायासमन्वितं । ज्ञानाश्रयं तृप्तितोयमन्तःक्षेत्रज्ञभास्करं ।
येऽधिगच्छन्ति तं सन्तस्तेषां नास्ति भयं पुनः । ऊर्द्ध्वं चाधश्च तिर्य्यक् च तस्य नान्तोऽधिगम्यते ।
सप्त स्त्रियस्तत्र वसन्ति सद्यस्त्ववाङ्मुखा भानुमत्यो जनित्र्यः । ऊर्द्ध्वं रसानाददते प्रजाभ्यः सर्व्वान् यथा सत्यमनित्यता च । ७१०
तत्रैव प्रतितिष्ठन्ति पुनस्तत्रोपयन्ति च । सप्त सप्तर्षयः सिद्धा वसिष्ठप्रमुखैः सह ।
यशो वर्च्चो भगश्चैव विजयः सिद्धितेजसौ । एवमेवानुवर्त्तन्ते सप्त ज्योतींषि भास्करं ।
गिरयः पर्व्वताश्चैव सन्ति तत्र समासतः । नद्यश्च सरितो वारि वहन्त्यो ब्रह्मसम्भवं ।

नदीनां सङ्गमश्चैव वैताने समुपह्वरे । स्वात्मतृप्ता यतो यान्ति साक्षाद्देव पितामहं ।

क्षमात्मानः सुव्रताश्च तपसा दग्धकिल्बिषाः । आत्मन्यात्मानमाविश्य ब्रह्माणं समुपासते । ७८५

ग्राममन्यत्र शंसन्ति विद्यारण्यं विदो जनाः । तदरण्यमभिप्रेत्य यथाधीरमजायत ।

एतदीदृशं पुण्यमरण्यं ब्राह्मणा विदुः । विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनानुदर्शिता ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां सप्तविंशोऽध्यायः ॥ २७ ॥

॥ ब्राह्मण उवाच ॥ गन्धान्न जिघ्रामि रसान्न वेद्मि रूपं न पश्यामि न च स्पृशामि । न चापि शब्दान् विविधान् शृणोमि न चापि सङ्कल्पमुपैमि कञ्चित् ।

अर्थानिष्टान् कामयते स्वभावः सर्व्वान् द्वेष्यान् प्रद्विषते स्वभावः । कामद्वेषावुद्भवतः स्वभावात् प्राणापानौ जन्तुदेहान्निवेश्य ।

तेभ्यश्चान्यांस्तेषु नित्यांश्च भावान् भूतात्मानं लक्षयेरन् शरीरे । तस्मिंस्तिष्ठन्नास्मि शक्यः कथञ्चित् कामक्रोधाभ्यां जरया मृत्युना च । ७९०

अकामयानस्य च सर्व्वकामा न विद्विषाणस्य च सर्व्वदोषान् । न मे स्वभावेषु भवन्ति लेपास्तोयस्य बिन्दोरिव पुष्करेषु ।

नित्यस्य चैतस्य भवन्ति नित्या निरीक्ष्यमाणस्य बहुस्वभावाः । न सज्जते कर्म्मसु भोगजालं दिवीव सूर्य्यस्य मयूखजालं

अत्राप्युदाहरन्तीममितिहासं पुरातनं । अध्वर्य्युयतिसंवादं तन्निबोध यशस्विनि ।

प्रोक्ष्यमाणं पशुं दृष्ट्वा यज्ञकर्म्मण्यथाब्रवीत् । यतिरध्वर्य्युमासीनो हिंसेयमिति कुत्सयन् ।

तमध्वर्य्युः प्रत्युवाच नायं छागो विनश्यति । श्रेयसा योक्ष्यते जन्तुर्यदि श्रुतिरियं तथा । ७९५

यो ह्यस्य पार्थिवो भागः पृथिवीं स गमिष्यति । यदस्य वारिजं किञ्चिदपस्तत् सम्प्रवेक्ष्यति ।

सूर्य्यं चक्षुर्दिशः श्रोत्रं प्राणोऽस्य दिवमेव च । आगमे वर्त्तमानस्य न मे दोषोऽस्ति कश्चन ।

॥ यतिरुवाच ॥ प्राणैर्व्वियोगे छागस्य यदि श्रेयः प्रपश्यसि । छागार्थे वर्त्तते यज्ञो भवतः किं प्रयोजनं ।

अनु त्वां मन्यतां भ्राता पिता माता सखेति च । मन्त्रयस्वैनमुन्नीय परवन्तं विशेषतः ।

एवमेवानुमन्येरंस्तान् भवान् द्रष्टुमर्हति । तेषामनुमतं श्रुत्वा शक्या कर्त्तुं विचारणा । ८००

प्राणा अप्यस्य छागस्य प्रापितास्ते स्वयोनिषु । शरीरं केवलं शिष्टं निश्चेष्टमिति मे मतिः ।

इन्धनस्य तु तुल्येन शरीरेण विचेतसा । हिंसानिर्व्वेष्टुकामानामिन्धनं पशुसंज्ञितं ।

अहिंसा सर्व्वधर्म्माणामिति वृद्धानुशासनं । यदहिंस्रं भवेत् कर्म्म तत्कार्य्यमिति विद्महे ।

अहिंसेति प्रतिज्ञेयं यदि वक्ष्याम्यतः परं । शक्यं बहुविधं कर्त्तुं भवता कार्य्यदूषणं ।

अहिंसा सर्व्वभूतानां नित्यमस्मासु रोचते । प्रत्यक्षतः साधयामो न परोक्षमुपास्महे । ८०५

॥ अध्वर्य्युरुवाच ॥ भूमेर्गन्धगुणान् भुङ्क्षे पिबस्यापोमयान् रसान् । ज्योतिषां पश्यसे रूपं स्पृशस्यनिलजान् गुणान् ।

शृणोष्याकाशजान् शब्दान् मनसा मन्यसे मतिं । सर्व्वाण्येतानि भूतानि प्राणा इति च मन्यसे ।

प्राणादाने निवृत्तोऽसि हिंसायां वर्त्तते भवान् । नास्ति चेष्टा विना हिंसां किं वा त्वं मन्यसे द्विज ।

॥ यतिरुवाच ॥ अक्षरञ्च क्षरञ्चैव द्वैधीभावोऽयमात्मनः । अक्षरं तत्र सद्भावः स्वभावः क्षर उच्यते ।

प्राणा जिह्वा मनः सत्त्वं सत्त्वो रजसा सह । भावैरेतैर्विमुक्तस्य निर्द्वन्द्वस्य निराशिषः । ८१०

समस्य सर्व्वभूतेषु निर्म्ममस्य जितात्मनः । समन्तात् परिमुक्तस्य न भयं विद्यते क्वचित् ।

॥ अध्वर्य्युरुवाच ॥ सद्भिरेवेह संवासः कार्य्यो मतिमतां वर । भवतो हि मतं श्रुत्वा प्रतिभाति मतिर्मम ।

भगवन् भगवद्बुद्ध्या प्रतिपन्नो ब्रवीम्यहं ।

॥ अध्वर्य्युरुवाच ॥ व्रतं मन्त्रकृतं कर्त्तुं नापराधोऽस्ति मे द्विज ।

॥ ब्राह्मण उवाच ॥ उपपत्त्या यतिस्तूष्णीं वर्त्तमानस्ततः परं । अध्वर्य्युरपि निर्म्मोहः प्रचचार महामखे । ८१५

एवमेतादृशं मोक्षं सुसूक्ष्मं ब्राह्मणा विदुः । विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनार्थदर्शिना ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ ब्राह्मण उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । कार्त्तवीर्य्यस्य संवादं समुद्रस्य च भामिनि ।

कार्त्तवीर्य्यार्ज्जुनो नाम राजा बाहुसहस्रवान् । येन सागरपर्य्यन्ता धनुषा निर्ज्जिता मही ।

स कदाचित् समुद्रान्ते विचरन् बलदर्पितः । अवाकिरच्छरशतैः समुद्रमिति नः श्रुतं ।

तं समुद्रो नमस्कृत्य कृताञ्जलिरुवाच ह । मा मुञ्च वीर नाराचान् ब्रूहि किं करवाणि ते । ८२०

मदाश्रयाणि भूतानि त्वद्विसृष्टैर्महेषुभिः । वध्यन्ते राजशार्दूल तेभ्यो देह्यभयं विभो ।

॥ अर्ज्जुन उवाच ॥ मत्समो यदि संग्रामे शरासनधरः क्वचित् । विद्यते तं समाचक्ष्व यः समासीत मां मृधे ।

॥ समुद्र उवाच ॥ महर्षिर्जमदग्निस्ते यदि राजन् परिश्रुतः । तस्य पुत्रस्तवातिथ्यं यथावत् कर्त्तुमर्हति ।

ततः स राजा प्रययौ क्रोधेन महता वृतः । स तमाश्रममागम्य राममेवान्वपद्यत ।

स रामप्रतिकूलानि चकार सह बन्धुभिः । आयासं जनयामास रामस्य च महात्मनः । ८२५

ततस्तेजः प्रजज्वाल रामस्यामिततेजसः । प्रदहन् रिपुसैन्यानि तदा कमललोचने ।

ततः परशुमादाय स तं बाहुसहस्रिणं । चिच्छेद सहसा रामो बहुशाखमिव द्रुमं ।

तं हतं पतितं दृष्ट्वा समेताः सर्व्वबान्धवाः । असीनादाय शक्तीश्च भार्गवं पर्य्यधावयन् ।

रामोऽपि धनुरादाय रथमारुह्य सत्वरः । विसृजन् शरवर्षाणि व्यधमत् पार्थिवं बलं ।

ततस्तु क्षत्रियाः केचिज्जामदग्न्यभयार्द्दिताः । विविशुर्गिरिदुर्गाणि मृगाः सिंहार्द्दिता इव । ८३०

तेषां स्वविहितं कर्म्म तद्भयान्नानुतिष्ठतां । प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ।

एवं ते द्रविडाभीराः पुण्ड्राश्च शवरैः सह । वृषलत्वं परिगता व्युत्थानात् क्षत्रधर्म्मिणः ।

ततश्च हतवीरासु क्षत्रियासु पुनः पुनः । द्विजैरुत्पादितं क्षत्रं जामदग्न्यो न्यकृन्तत ।

एकविंशतिमेधान्ते रामं वागशरीरिणी । दिव्या प्रोवाच मधुरा सर्व्वलोकपरिश्रुता ।

राम राम निवर्त्तस्व कं गुणं तात पश्यसि । क्षत्रबन्धूनिमान् प्राणैर्विप्रयोज्य पुनः पुनः । ८३५

तथैव तं महात्मानमृचीकप्रमुखास्तदा । पितामहा महाभाग निवर्त्तस्वेत्यथाब्रुवन् ।

पितुर्वधममृष्यंस्तु रामः प्रोवाच तानृषीन् । नार्हन्तीह भवन्तो मां निवारयितुमित्युत ।

॥ पितर ऊचुः ॥ नाहं ते क्षत्रबन्धूनां निहतेषु जयतां वर । नैव युक्तं त्वया कर्तुं ब्राह्मणेन सता नृपान् ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां ऊनत्रिंशोऽध्यायः ॥ २९ ॥

॥ पितर ऊचुः ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । श्रुत्वा च तत्तथा कार्य्यं भवता द्विजसत्तम ।

अलर्को नाम राजर्षिरभवत् सुमहातपाः । धर्म्मज्ञः सत्यवादी च महात्मा सुदृढव्रतः । ८४०

स सागरान्तां धनुषा विनिर्जित्य महीमिमां । कृत्वा सुदुष्करं कर्म्म मनः सूक्ष्मे समादधे ।

स्थितस्य वृक्षमूलेषु तस्य चिन्ता बभूव ह । उत्सृज्य सुमहत् कर्म्म सूक्ष्मं प्रति महामते ।

॥ अलर्क उवाच ॥ मनसो मे बलं जातं मनो जित्वा ध्रुवो जयः । अन्यत्र बाणान् धास्यामि शत्रुभिः परिवारितः ।

यदिदं चापलात् कर्म्म सर्व्वान् मर्त्त्यांश्चिकीर्षति । मनः प्रति सुतीक्ष्णाग्रानहं मोक्ष्यामि सायकान् ।

॥ मन उवाच ॥ नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन । तवैव मर्म्म भेत्स्यन्ति भिन्नमर्म्मा मरिष्यसि । ८४५

अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि । तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ।

॥ अलर्क उवाच । आघ्राय सुबहून् गन्धांस्तानेव प्रतिगृध्यति । तस्मात् घ्राणं प्रति शरान् प्रतिमोक्ष्याम्यहं शितान् ।

॥ घ्राण उवाच ॥ नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन । तवैव मर्म्म भेत्स्यन्ति भिन्नमर्म्मा मरिष्यसि ।

अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि । तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ।

॥ अलर्क उवाच ॥ इयं स्वादून् रसान् भुक्त्वा तानेव प्रतिगृध्यति । तस्माज्जिह्वां प्रति शरान् प्रतिमोक्ष्याम्यहं शितान् । ८५०

॥ जिह्वोवाच ॥ नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन । तवैव मर्म्म भेत्स्यन्ति भिन्नमर्म्मा मरिष्यसि ।

अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि । तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ।

॥ अलर्क उवाच ॥ स्पृष्ट्वा त्वग्विविधान् स्पर्शान् तानेव प्रतिगृध्यति । तस्मात्त्वचं पाटयिष्ये विविधैः कङ्कपत्रिभिः ।

॥ त्वगुवाच ॥ नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन । तवैव मर्म्म भेत्स्यन्ति भिन्नमर्म्मा मरिष्यसि ।

अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि । तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् । ८५५

॥ अलर्क उवाच ॥ श्रुत्वा तु विविधान् शब्दांस्तानेव प्रतिगृध्यति । तस्माच्छ्रोत्रं प्रति शरान् प्रतिमुञ्चाम्यहं शितान् ।

॥ श्रोत्र उवाच ॥ नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन । तवैव मर्म्म भेत्स्यन्ति ततो हास्यसि जीवितं ।

अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि । तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ।

॥ अलर्क उवाच ॥ दृष्ट्वा रूपाणि बहुशस्तान्येव प्रतिगृध्यति । तस्माच्चक्षुर्हनिष्यामि निशितैः सायकैरहं ।

॥ चक्षुरुवाच ॥ नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन । तवैव मर्म्म भेत्स्यन्ति भिन्नमर्म्मा मरिष्यसि । ८६०

अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि । तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ।

॥ अलर्क उवाच ॥ इयं निष्ठा बहुविधा प्रज्ञया त्वध्यवस्यति । तस्माद्बुद्धिं प्रति शरान् प्रतिमोक्ष्याम्यहं शितान् ।

॥ बुद्धिरुवाच ॥ नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन । तवैव मर्म्म भेत्स्यन्ति भिन्नमर्म्मा मरिष्यसि ।

अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।

॥ ब्राह्मण उवाच ॥ ततोऽलर्कस्तपो घोरं तत्रैवास्थाय दुष्करं । नाध्यगच्छत्परं शक्त्या बाणमेतेषु सप्तसु । ८६४

सुखमाहितचेतास्तु स ततोऽचिन्तयत् प्रभुः । स विचिन्त्य चिरं कालमलर्को द्विजसत्तम: ।
नाध्यगच्छत्परं श्रेयो योगान्मतिमतां वरः । स एकाग्रं मनः कृत्वा निश्चलो योगमास्थितः ।
इन्द्रियाणि जघानाशु बाणेनैकेन वीर्य्यवान् । योगेनात्मानमाविश्य सिद्धिं परमिकां गतः ।
विस्मितश्चापि राजर्षिरिमां गाथां जगाद ह । अहो कष्टं यदस्माभिः सर्व्वं बाह्यमनुष्ठितं ।
भोगतृष्णासमायुक्तैः पूर्व्वं राज्यमुपासितं । इति पश्चान्मया ज्ञातं योगान्नास्ति परं सुखं । ८१०
इति त्वमनुजानीहि राम मा क्षत्रियान् जहि । तपो घोरमुपातिष्ठ ततः श्रेयोऽभिपत्स्यसे ।
इत्युक्तः स तपो घोरं जामदग्न्यः पितामहैः । आस्थितः सुमहाभागो ययौ सिद्धिञ्च दुर्गमां ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां त्रिंशोऽध्यायः ॥ ३० ॥
॥ ब्राह्मण उवाच ॥ त्रयो वै रिपवो लोके नवधा गुणतः स्मृताः । प्रहर्षः प्रीतिरानन्दस्त्रयस्ते सात्त्विका गुणाः ।
तृष्णा क्रोधोऽभिसंरम्भो राजसास्ते गुणाः स्मृताः । श्रमस्तन्द्रा च मोहश्च त्रयस्ते तामसा गुणाः ।
एतान्निकृत्य धृतिमान् बाणसंघैरतन्द्रितः । जेतुं परानुत्सहते प्रशान्तात्मा जितेन्द्रियः । ८११
अत्र गाथाः कीर्त्तयन्ति पुराकल्पविदो जनाः । अम्बरीषेण या गीता राज्ञा पूर्व्वं प्रशाम्यता ।
समुदीर्णेषु दोषेषु बाध्यमानेषु साधुषु । जग्राह तरसा राज्यमम्बरीषो महायशाः ।
स निगृह्यात्मनो दोषान् साधून् समभिपूज्य च । जगाम महतीं सिद्धिं गाथाश्चेमा जगाद ह ।
भूयिष्ठं विजिता दोषा निहताः सर्व्वशत्रवः । एको दोषो वरिष्ठश्च वध्यः स न हतो मया ।
यत्प्रयुक्तो जन्तुरयं वैतृष्ण्यं नाधिगच्छति । तृष्णार्त्त इव निम्नानि धावमानो न बुध्यते । ८१२
अकार्य्यमपि येनेह प्रयुक्तः सेवते नरः । तं लोभमसिभिस्तीक्ष्णैर्निकृन्तत निकृन्तत ।
लोभाद्धि जायते तृष्णा ततश्चिन्ता प्रवर्त्तते । स लिप्समानो लभते भूयिष्ठं राजसान् गुणान् ।
तदवाप्तौ तु लभते भूयिष्ठं तामसान् गुणान् ।
स तैर्गुणैः संहतदेहबन्धनः पुनः पुनर्जायति कर्म्म चेहते । जन्मक्षये भिन्नविकीर्णदेहो मृत्युं पुनर्गच्छति जन्मनैव ।
तस्मादेनं सम्यगवेक्ष्य लोभं निगृह्य धृत्यात्मनि राज्यमिच्छेत् । एतद्राज्यं नान्यदस्तीह राज्यमात्मैव राजा विदितो यथावत् । ८१३
इति राज्ञाऽम्बरीषेण गाथा गीता यशस्विना । आधिराज्यं पुरस्कृत्य लोभमेकं निकृन्तता ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायामेकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ ब्राह्मण उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । ब्राह्मणस्य च संवादं जनकस्य च भाविनि ।
ब्राह्मणं जनको राजा सन्नं कस्मिंश्चिदागसि । विषये मे न वस्तव्यमिति शिष्ट्यर्थमब्रवीत् ।
इत्युक्तः प्रत्युवाचाथ ब्राह्मणो राजसत्तमं । आचक्ष्व विषयं राजन् यावांस्तव वशे स्थितः ।
सोऽन्यस्य विषये राज्ञो वस्तुमिच्छाम्यहं विभो । वचस्ते कर्त्तुमिच्छामि यथाशास्त्रं महीपते । ८१४
इत्युक्तस्तु तदा राजा ब्राह्मणेन यशस्विना । मुहुरुष्णं विनिश्वस्य न किञ्चित्प्रत्यभाषत ।

तमासीनं ध्यायमानं राजानममितौजसं । कश्मलं सहसाऽगच्छद्भानुमन्तमिव ग्रहः ।
समाश्वास्य ततो राजा विगते कश्मले तदा । ततो मुहूर्त्तादिव तं ब्राह्मणं वाक्यमब्रवीत् ।
॥ जनक उवाच ॥ पितृपैतामहे राज्ये वश्ये जनपदे सति । विषयं नाधिगच्छामि विचिन्वन् पृथिवीमहं ।
नाधिगच्छं यदा पृथ्व्यां मिथिला मार्गिता मया । नाध्यगच्छं तदा तस्यां स्वप्रजा मार्गिता मया । ८८५
नाध्यगच्छं यदा तस्यां तदा मे कश्मलोऽभवत् । ततो मे कश्मलस्यान्ते मतिः पुनरुपस्थिता ।
तदा न विषयं मन्ये सर्व्वो वा विषयो मम । आत्माऽपि चायं न मम सर्व्वा वा पृथिवी मम ।
यथा मम तथाऽन्येषामिति मन्ये द्विजोत्तम । उष्यतां यावदुत्साहो भुज्यतां यावदिष्यते ।
॥ ब्राह्मण उवाच ॥ पितृपैतामहे राज्ये वश्ये जनपदे सति । ब्रूहि कां गतिमास्थाय ममत्वं वर्ज्जितं त्वया ।
कां वै बुद्धिं समाश्रित्य सर्व्वो वै विषयस्तव । नावैषि विषयं येन सर्व्वो वा विषयस्तव । ८९०
॥ जनक उवाच ॥ अन्तवन्त इहावस्था विदिताः सर्व्वकर्म्मसु । नाध्यगच्छमहं तस्मान्ममेदमिति यद्भवेत् ।
कस्येदमिति कस्य स्वमिति वेदवचस्तथा । नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत् ।
एतां बुद्धिं समाश्रित्य ममत्वं वर्ज्जितं मया । शृणु बुद्धिञ्च यां ज्ञात्वा सर्व्वत्र विषयो मम ।
नाहमात्मार्थमिच्छामि गन्धान् घ्राणगतानपि । तस्मान्मे निर्ज्जिता भूमिर्वशे तिष्ठति नित्यदा ।
नाहमात्मार्थमिच्छामि रसानास्येऽपि वर्त्ततः । आपो मे निर्ज्जितास्तस्माद्वशे तिष्ठन्ति नित्यदा । ८९५
नाहमात्मार्थमिच्छामि रूपं ज्योतिश्च चक्षुषः । तस्मान्मे निर्ज्जितं ज्योतिर्वशे तिष्ठति नित्यदा ।
नाहमात्मार्थमिच्छामि स्पर्शान्स्त्वचि गताश्च ये । तस्मान्मे निर्ज्जितो वायुर्वशे तिष्ठति नित्यदा ।
नाहमात्मार्थमिच्छामि शब्दान् श्रोत्रगतानपि । तस्मान्मे निर्ज्जिताः शब्दा वशे तिष्ठन्ति नित्यदा ।
नाहमात्मार्थमिच्छामि मनो नित्यं मनोऽन्तरे । मनो मे निर्ज्जितं तस्माद्वशे तिष्ठति सर्व्वदा ।
देवेभ्यश्च पितृभ्यश्च भूतेभ्योऽतिथिभिः सह । इत्यर्थं सर्व्व एवेति समारम्भा भवन्ति वै । ९००
ततः प्रहस्य जनकं ब्राह्मणः पुनरब्रवीत् । त्वज्जिज्ञासार्थमद्येह विद्धि मां धर्म्ममागतं ।
त्वमस्य ब्रह्मलाभस्य दुर्व्वारस्यानिवर्त्तिनः । सत्त्वनेमिनिरुद्धस्य चक्रस्यैकः प्रवर्त्तकः ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ब्राह्मण उवाच ॥ नाहं तथा भीरु चरामि लोके यथा त्वं मां तर्कयसे स्वबुद्ध्या । विप्रोऽस्मि मुक्तोऽस्मि वनेचरोऽस्मि गृहस्थधर्म्मा व्रतवांस्तथाऽस्मि ।
नाहमस्मि यथा मां त्वं पश्यसे च शुभाशुभे । मया व्याप्तमिदं सर्व्वं यत्किञ्चिज्जगतीगतं ।
ये केचिज्जन्तवो लोके जङ्गमाः स्थावराश्च ह । तेषां मामन्तकं विद्धि दारूणामिव पावकं । ९०५
राज्यं पृथिव्यां सर्व्वस्यामथवाऽपि त्रिविष्टपे । तथा बुद्धिरियं वेत्ति बुद्धिरेव धनं मम ।
एकः पन्था ब्राह्मणानां येन गच्छन्ति तद्विदः । गृहेषु वनवासेषु गुरुवासेषु भिक्षुषु ।
लिङ्गैर्ब्बहुभिरव्यग्रैरेका बुद्धिरुपास्यते । नानालिङ्गाश्रमस्थानां येषां बुद्धिः शमात्मिका ।

ते भावमेकमायान्ति सरितः सागरं यथा । युक्त्याऽयं गम्यते भावः शरीरेण न गम्यते ।
आद्यन्तवन्ति सर्व्वाणि शरीरं कर्म्मबन्धनं । तस्मात्ते सुभगे नास्ति परलोककृतं भयं । ९१०
तद्भावभावनिरता ममैवात्मानमेष्यसि ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ब्राह्मण्युवाच ॥ नेदमल्पात्मना शक्यं वेदितुं नाकृतात्मना । बहु चाल्पञ्च संक्षिप्तं विप्लुतञ्च मतं मम ।
उपायं तं मम ब्रूहि येनैषा लभ्यते मतिः । तन्मन्ये कारणं त्वत्तो यत एषा प्रवर्त्तते ।
॥ ब्राह्मण उवाच ॥ अरणीं ब्राह्मणीं विद्धि गुरुरस्योत्तरारणिः । तपःश्रुतेऽभिमथ्नीतो ज्ञानाग्निर्जायते ततः ।
॥ ब्राह्मण्युवाच ॥ यदिदं ब्रह्मणो लिङ्गं क्षेत्रज्ञ इति संज्ञितं । ग्रहीतुं येन यच्छक्यं लक्षणं तस्य तत् क्व नु । ९१५
॥ ब्राह्मण उवाच ॥ अलिङ्गो निर्गुणश्चैव कारणं नास्य लक्ष्यते । उपायमेव वक्ष्यामि येन गृह्येत वा न वा ।
सम्यगुपायो दृष्टश्च भ्रमरैरिव लक्ष्यते । कर्म्मबुद्धिरबुद्धित्वाज्ज्ञानलिङ्गैरिवाश्रितं ।
इदं कार्य्यमिदं नेति न मोक्षेषूपदिश्यते । पश्यतः शृण्वतो बुद्धिरात्मनो येषु जायते ।
यावन्त इह शक्येरंस्तावतोंऽशान् प्रकल्पयेत् । व्यक्तानव्यक्तरूपांश्च शतशोऽथ सहस्रशः ।
सर्व्वान्नानार्थयुक्तांश्च सर्व्वान् प्रत्यक्षहेतुकान् । यतः परं न विद्येत ततोऽभ्यासे भविष्यति । ९२०
॥ श्रीभगवानुवाच ॥ ततस्तु तस्या ब्राह्मण्या मतिः क्षेत्रज्ञसंक्षये । क्षेत्रज्ञानेन परतः क्षेत्रज्ञेभ्यः प्रवर्त्तते ।
॥ अर्ज्जुन उवाच ॥ क्व नु सा ब्राह्मणी कृष्ण क्व चासौ ब्राह्मणर्षभः । याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत ।
॥ श्रीभगवानुवाच ॥ मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीं । क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनञ्जय ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ अर्ज्जुन उवाच ॥ ब्रह्म यत्परमं ज्ञेयं तन्मे व्याख्यातुमर्हसि । भवतो हि प्रसादेन सूक्ष्मे मे रमते मतिः ।
॥ वासुदेव उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह । ९२५
कश्चिद्ब्राह्मणमासीनमाचार्य्यं संशितव्रतं । शिष्यः पप्रच्छ मेधावी किं स्विच्छ्रेयः परन्तप ।
भगवन्तं प्रपन्नोऽहं निःश्रेयसपरायणः । याचे त्वां शिरसा विप्र यद्ब्रूयां ब्रूहि तन्मम ।
तमेवंवादिनं पार्थ शिष्यं गुरुरुवाच ह । सर्व्वन्तु ते प्रवक्ष्यामि यत्र वै संशयो द्विज ।
इत्युक्तः स गुरुश्रेष्ठ गुरुणा गुरुवत्सलः । प्राञ्जलिः परिपप्रच्छ यत्तच्छृणु महामते ।
॥ शिष्य उवाच ॥ कुतश्चाहं कुतश्च त्वं तत्सत्यं ब्रूहि यत्परं । कुतो जातानि भूतानि स्थावराणि चराणि च । ९३०
केन जीवन्ति भूतानि तेषामायुश्च किं परं । किं सत्यं किं तपो विप्र के गुणाः सद्भिरीरिताः ।
के पन्थानः शिवाश्च स्युः किं सुखं किञ्च दुष्कृतं । एतान्मे भगवन् प्रश्नान् याथातथ्येन सुव्रत ।
वक्तुमर्हसि विप्रर्षे यथावदिह तत्त्वतः । त्वदन्यः कश्चन प्रश्नानेतान् वक्तुमिहार्हति ।
ब्रूहि धर्म्मविदां श्रेष्ठ परं कौतूहलं मम । मोक्षधर्म्मार्थकुशलो भवान् लोकेषु गीयते ।
सर्व्वसंशयसञ्छेत्ता त्वदन्यो न च विद्यते । संसारभीरवश्चैव मोक्षकामास्तथा वयं । ९३५
॥ वासुदेव उवाच ॥ तस्मै सम्प्रतिपन्नाय यथावत् परिपृच्छते । शिष्याय गुणयुक्ताय शान्ताय प्रियवर्त्तिने ।

छायाभूताय दान्ताय यतये ब्रह्मचारिणे । तान् प्रश्नानब्रवीत् पार्थ मेधावी स धृतव्रतः ।
गुरुं कुरुकुलश्रेष्ठ सम्यक् सर्व्वानरिन्दम ।
॥ गुरुरुवाच ॥ ब्रह्मप्रोक्तमिदं सर्व्वमृषिप्रवरसेवितं । वेदविद्यां समाश्रित्य तत्त्वभूतार्थभावनं ।
ज्ञानन्त्वेव परं ब्रह्म संन्यासं तप उत्तमं । यस्तु वेद निराबाधं ज्ञानतत्त्वं विनिश्चयात् । ९१०
सर्व्वभूतस्थमात्मानं स सर्व्वगतिरिष्यते । यो विद्वान् सहवासञ्च विवासञ्चैव पश्यति ।
तथैवैकत्वनानात्वे स दुःखात् परिमुच्यते । यो न कामयते किञ्चिन्न किञ्चिदभिमन्यते ।
इहलोकस्थ एवैष ब्रह्मभूयाय कल्पते । प्रधानगुणतत्त्वज्ञः सर्व्वभूतविधानवित् ।
निर्म्ममो निरहङ्कारो मुच्यते नात्र संशयः । अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः । महाभूतविशेषश्च विशेषप्रतिशाखवान् । ९१५
सदापर्णः सदापुष्पः सदाशुभफलोदयः । आजीवः सर्व्वभूतानां ब्रह्मबीजः सनातनः ।
एतज्ज्ञात्वा च तत्त्वानि ज्ञानेन परमासिना । छित्त्वा चामरतां प्राप्य जहाति मृत्युजन्मनी ।
भूतभव्यभविष्यादिधर्म्मकामार्थनिश्चयं । सिद्धसङ्घपरिज्ञातं पुराकल्पं सनातनं ।
प्रवक्ष्येऽहं महाप्राज्ञ पदमुत्तममद्य ते । बुद्ध्वा यदिह संसिद्धा भवन्तीह मनीषिणः ।
उपगम्यर्षयः पूर्व्वं जिज्ञासन्तः परस्परं । प्रजापतिभरद्वाजौ गौतमो भार्गवस्तथा । ९२०
वशिष्ठः काश्यपश्चैव विश्वामित्रोऽत्रिरेव च । मार्गान् सर्व्वान् परिक्रम्य परिश्रान्ताः स्वकर्म्मभिः ।
ऋषिमाङ्गिरसं वृद्धं पुरस्कृत्य तु ते द्विजाः । ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषं ।
तं प्रणम्य महात्मानं सुखासीनं महर्षयः । पप्रच्छुर्व्विनयोपेता नैःश्रेयसमिदं परं ।
कथं कर्म्म क्रियात् साधु कथं मुच्येत किल्विषात् । के नो मार्गाः शिवाश्च स्युः किं सत्यं किञ्च दुष्कृतं ।
कौ चोभौ कर्म्मणां मार्गौ प्राप्नुयुर्द्दक्षिणोत्तरौ । प्रलयञ्चापवर्गञ्च भूतानां प्रभवाप्ययौ । ९२५
इत्युक्तः स मुनिश्रेष्ठैर्यदाह प्रपितामहः । तत्तेऽहं सम्प्रवक्ष्यामि शृणु शिष्य यथागमं ।
॥ ब्रह्मोवाच ॥ सत्याद्भूतानि जातानि स्थावराणि चराणि च । तपसा तानि जीवन्ति इति तद्वित्त सुव्रताः ।
स्वां योनिं समतिक्रम्य वर्त्तन्ते स्वेन कर्म्मणा । सत्यं हि गुणसंयुक्तं नियतं पञ्चलक्षणं ।
ब्रह्म सत्यं तपः सत्यं सत्यञ्चैव प्रजापतिः । सत्याद्भूतानि जातानि सत्यं भूतमिदं जगत् ।
तस्मात् सत्याश्रया विप्रा नित्यं योगपरायणाः । अतीतक्रोधसन्तापा नियता धर्म्मसेतवः । ९३०
अन्योन्यनियतान् वैद्यान् धर्म्मसेतुप्रवर्त्तकान् । तानहं सम्प्रवक्ष्यामि शाश्वतान् लोकभावनान् ।
चातुर्व्विद्यं तथा वर्णं चातुराश्रमिकान् पृथक् । धर्म्ममेकं चतुष्पादं नित्यमाहुर्म्मनीषिणः ।
पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः । नियतं ब्रह्मभावाय गतं पूर्व्वं मनीषिभिः ।
गदन्तन्तं मयाऽद्येह पन्थानं दुर्व्विदं परं । निबोधत महाभागा निखिलेन परं पदं ।
ब्रह्मचारिकमेवाहुराश्रमं प्रथमं पदं । गार्हस्थ्यन्तु द्वितीयं स्याद्वानप्रस्थमतः परं । ९३५
ततः परन्तु विज्ञेयमध्यात्मं परमं पदं । ज्योतिराकाशमादित्यो वायुरिन्द्रः प्रजापतिः ।

नोपैति यावदध्यात्मं तावदेतान्न पश्यति । तस्योपायं प्रवक्ष्यामि पुरस्तात् तं निबोधत ।
फलमूलानिलभुजां मुनीनां वसतां वने । वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते ।
सर्व्वेषामेव वर्णानां गार्हस्थ्यं तद्विधीयते । श्रद्धालक्षणमित्येवं धर्म्मं धीराः प्रचक्षते ।
इत्येते देवयाना वः पन्थानः परिकीर्त्तिताः । सद्भिरध्यासिता धीरैः कर्म्मभिर्धर्म्मसेतवः । ९८०
एतेषां पृथगध्यास्ते यो धर्म्मं संशितव्रतः । कालात् पश्यति भूतानां सदैव प्रभवाप्ययौ ।
अतस्तत्त्वानि वक्ष्यामि याथातथ्येन हेतुना । विषयस्थानि सर्व्वाणि वर्त्तमानानि भागशः ।
महानात्मा तथा व्यक्तमहङ्कारस्तथैव च । इन्द्रियाणि दशैकञ्च महाभूतानि पञ्च च ।
विशेषाः पञ्च भूतानामिति सर्गः सनातनः । चतुर्व्विंशतिरेका च तत्त्वसंख्या प्रकीर्त्तिता ।
तत्त्वानामथ यो वेद सर्व्वेषां प्रभवाप्ययौ । स धीरः सर्व्वभूतेषु न मोहमधिगच्छति । ९८५
तत्त्वानि यो वेदयते यथातथं गुणांश्च सर्व्वानखिलाश्च देवताः । विधूतपाप्मा प्रतिमुच्य बन्धनं स सर्व्वलोकानमलान् समश्नुते ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ ब्रह्मोवाच ॥ तदव्यक्तमनुद्रिक्तं सर्व्वव्यापि ध्रुवं स्थिरं । नवद्वारं पुरं विद्यात्त्रिगुणं पञ्चधातुकं ।
एकादशपरिक्षेपं मनो व्याकरणात्मकं । बुद्धिस्वामिकमित्येतत् परमेकादशं भवेत् ।
त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनः पुनः । प्रणाड्यस्तिस्र एवैताः प्रवर्त्तन्ते गुणात्मिकाः ।
तमो रजस्तथा सत्त्वं गुणानेतान् प्रचक्षते । अन्योन्यमिथुनाः सर्व्वे तथाऽन्योन्यानुजीविनः । ९९०
अन्योन्यापाश्रयाश्चापि तथाऽन्योन्यानुवर्त्तिनः । अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्चधातवः ।
तमसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः । रजसश्चापि सत्त्वं स्यात् सत्त्वस्य मिथुनं तमः ।
नियम्यते तमो यत्र रजस्तत्र प्रवर्त्तते । नियम्यते रजो यत्र सत्त्वं तत्र प्रवर्त्तते ।
नैशात्मकं तमो विद्यात्त्रिगुणं मोहसंज्ञितं । अधर्म्मलक्षणञ्चैव नियतं पापकर्म्मसु ।
प्रवृत्त्यात्मकमेवाहू रजः पर्य्यायकारकं । प्रवृत्तं सर्व्वभूतेषु दृश्यमुत्पत्तिलक्षणं । ९९५
प्रकाशं सर्व्वभूतेषु लाघवं श्रद्दधानता । सात्त्विकं रूपमेवन्तु लाघवं साधुसम्मितं ।
एतेषां गुणतत्त्वानि वक्ष्यन्ते तत्त्वहेतुभिः । समासव्याससंयुक्तानि तत्त्वतस्तान्निबोधत ।
सम्मोहोऽज्ञानमत्यागः कर्म्मणामविनिर्णयः । स्वप्नः स्तम्भो भयं लोभः शोकः सुकृतदूषणं ।
अस्मृतिश्चाविपाकश्च नास्तिक्यं भिन्नवृत्तिता । निर्व्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता ।
अकृते कृतमानित्वमज्ञाने ज्ञानमानिता । अमैत्री विकृताभावो ह्यश्रद्धा मूढभावना । १०००
अनार्ज्जवमसंज्ञत्वं कर्म्म पापमचेतना । गुरुत्वं सन्नभावत्वमवशित्वमवाग्गतिः ।
सर्व्व एते गुणा वृत्तास्तामसाः सम्प्रकीर्त्तिताः । ये चान्ये विहिता भावा लोकेऽस्मिन् भावसंज्ञिताः ।
तत्र तत्र नियम्यन्ते सर्व्वे ते तामसा गुणाः । परिवादकथा नित्यं नित्यं ब्राह्मणनिन्दकाः ।
अत्यागश्चाभिमानश्च मोहो मन्युस्तथाऽक्षमा । मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते ।
वृथारम्भा हि ये केचिद्वृथादानानि यानि च । वृथाभक्षणमित्येतत्तामसं वृत्तमिष्यते । १००५

अतिवादोऽतितिक्षा च मात्सर्य्यमतिमानिता । अश्रद्दधानता चैव तामसं वृत्तमिष्यते ।
एवंविधाश्च ये केचिल्लोकेऽस्मिन् पापकर्म्मिणः । मनुष्या भिन्नमर्य्यादास्ते सर्व्वे तामसाः स्मृताः ।
तेषां योनीः प्रवक्ष्यामि नियताः पापकर्म्मिणां । अवाङ्निरयभावाय तिर्य्यङ्निरयगामिनः ।
स्थावराणि च भूतानि पशवो वाहनानि च । क्रव्यादा दन्दशूकाश्च कृमिकीटविहङ्गमाः ।
अण्डजा जन्तवश्चैव सर्व्वे चापि चतुष्पदाः । उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः । १०१०
मग्नास्तमसि दुर्वृत्ताः स्वकर्म्मकृतलक्षणाः । अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः ।
तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परं । यथा ते सुकृतान् लोकान् लभन्ते पुण्यकर्म्मिणः ।
अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्म्मिणः । स्वकर्म्मनिरतानाञ्च ब्राह्मणानां शुभैषिणां ।
संस्कारेणोर्द्ध्वमायान्ति यतमानाः सलोकतां । स्वर्गं गच्छन्ति देवानामित्येषा वैदिकी श्रुतिः ।
अन्यथा प्रतिपन्नास्ते विबुद्धाः स्वेषु कर्म्मसु । पुनरावृत्तिधर्म्माणस्ते भवन्तीह मानुषाः । १०१५
पापयोनिं समापन्नाश्चाण्डाला मूकचूचुकाः । वर्णान् पर्य्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरं ।
शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः । स्रोतोमध्ये समागम्य वर्त्तन्ते तामसे गुणे ।
अभिष्वङ्गस्तु कामेषु महामोह इति स्मृतः । ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः ।
तमो मोहो महामोहस्तामिस्रः क्रोधसंज्ञितः । मरणं त्वन्धतामिस्रस्तामिस्रः क्रोध उच्यते ।
वर्णतो गुणतश्चैव योनितश्चैव तत्त्वतः । सर्व्वमेतत्तमो विप्राः कीर्त्तितं वो यथाविधि । १०२०
को न्वेतद्बुध्यते साधु को न्वेतत् साधु पश्यति । अतत्त्वे तत्त्वदर्शी यस्तमसस्तत्त्वलक्षणं ।
तमोगुणा बहुविधाः प्रकीर्त्तिता यथावदुक्तञ्च तमः परावरं । नरो हि यो वेद गुणानिमान् सदा स तामसैः सर्व्वगुणैः प्रमुच्यते ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

। ब्रह्मोवाच ॥ रजो हि वः प्रवक्ष्यामि याथातथ्येन सत्तमाः । निबोधत महाभागा गुणवृत्तञ्च राजसं ।
संघातो रूपमायासः सुखदुःखे हिमातपौ । ऐश्वर्य्यं विग्रहः सन्धिर्हेतुवादोऽरतिः क्षमा ।
बलं शौर्य्यं मदो रोषो व्यायामकलहावपि । ईर्ष्येप्सा पैशुनं युद्धं ममत्वं परिपालनं । १०२५
वधबन्धपरिक्लेशाः क्रयो विक्रय एव च । निकृन्त छिन्धि भिन्धीति परमर्म्मावकर्त्तनं ।
उग्रं दारुणमाक्रोशः परच्छिद्रानुशासनं । लोकचिन्ताऽनुचिन्ता च मत्सरः परिपालनं ।
मृषावादो मृषादानं विकल्पः परिभाषणं । निन्दा स्तुतिः प्रशंसा च प्रतापः परिधर्षणं ।
परिचर्य्याऽनुशुश्रूषा सेवा तृष्णा व्यपाश्रयः । व्यूहो नयः प्रमादश्च परिवादः परिग्रहः ।
संस्कारा ये च लोकेषु प्रवर्त्तन्ते पृथक् पृथक् । नृषु नारीषु भूतेषु द्रव्येषु शरणेषु च । १०३०
सन्तापोऽप्रत्ययश्चैव व्रतानि नियमाश्च ये । आशीर्युक्तानि कर्म्माणि पौर्त्तानि विविधानि च ।
स्वाहाकारो नमस्कारः स्वधाकारो वषट्क्रिया । याजनाध्यापने चोभे यजनाध्ययने अपि ।
दानं प्रतिग्रहश्चैव प्रायश्चित्तानि मङ्गलं । इदं मे स्यादिदं मे स्यात् स्नेहो गुणसमुद्भवः ।

अभिद्रोहस्तथा माया निकृतिर्मान एव च। स्तैन्यं हिंसा जुगुप्सा च परितापः प्रजागरः।
दम्भो दर्पोऽथ रागश्च भक्तिः प्रीतिः प्रमोदनं। द्यूतञ्च जनवादश्च सम्बन्धाः स्त्रीकृताश्च ये। १०२५
नृत्यवादित्रगीतानां प्रसङ्गा ये च केचन। सर्व्व एते गुणा विप्रा राजसाः संप्रकीर्त्तिताः।
भूतभव्यभविष्याणां भावानां भुवि भावनाः। त्रिवर्गो निरता नित्यं धर्म्मोऽर्थः काम इत्यपि।
कामवृत्ताः प्रमोदन्ते सर्व्वकामसमृद्धिभिः। अर्व्वाक्स्रोतस इत्येते मनुष्या रजसावृताः।
अस्मिन् लोके प्रमोदन्ते जायमानाः पुनः पुनः। प्रेत्य भाविकमीहन्ते ऐहलौकिकमेव च।
ददति प्रतिगृह्णन्ति तर्पयन्त्यथ जुह्वति। १०३०
रजोगुणा वो बहुधाऽनुकीर्त्तिता यथावदुक्तं गुणवृत्तमेव च। नरोऽपि यो वेद गुणानिमान् सदा स राजसैः सर्व्वगुणैर्विमुच्यते।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे सप्तत्रिंशोऽध्यायः॥ ३७॥
॥ ब्रह्मोवाच॥ अतः परं प्रवक्ष्यामि तृतीयं गुणमुत्तमं। सर्व्वभूतहितं लोके सतां धर्म्ममनिन्दितं।
आनन्दः प्रीतिरुद्रेकः प्राकाश्यं सुखमेव च। अकार्पण्यमसंरम्भः सन्तोषः श्रद्दधानता।
क्षमा धृतिरहिंसा च समता सत्यमार्ज्जवं। अक्रोधश्चानसूया च शौचं दाक्ष्यं पराक्रमः।
मुधा ज्ञानं मुधा वृत्तं मुधा सेवा मुधा श्रमः। एवं यो युक्तधर्म्मः स्यात् सोऽमुत्रात्यन्तमश्नुते। १०३५
निर्म्ममो निरहङ्कारो निराशीः सर्व्वतः समः। अकामहत इत्येव सतां धर्म्मः सनातनः।
विश्रम्भो ह्रीस्तितिक्षा च त्यागः शौचमतन्द्रिता। आनृशंस्यमसंमोहो दया भूतेष्वपैशुनं।
हर्षस्तुष्टिर्विस्मयश्च विनयः साधुवृत्तिता। शान्तिकर्म्मणि शुद्धिश्च शुभा बुद्धिर्विमोचनं।
उपेक्षा ब्रह्मचर्य्यञ्च परित्यागश्च सर्व्वशः। निर्म्ममत्वमनाशीष्ट्वमपरिक्षतधर्म्मता।
मुधा दानं मुधा यज्ञो मुधाऽधीतं मुधा व्रतं। मुधा प्रतिग्रहश्चैव मुधा धर्म्मो मुधा तपः। १०४०
एवंवृत्तास्तु ये केचिल्लोकेऽस्मिन् सत्त्वसंश्रयाः। ब्राह्मणा ब्रह्मयोनिस्थास्ते धीराः साधुदर्शिनः।
हित्वा सर्व्वाणि पापानि निःशोका ह्यथ मानवाः। दिवं प्राप्य तु ते धीराः कुर्व्वते वै ततस्तनूः।
ईशित्वञ्च वशित्वञ्च लघुत्वं मनसश्च ते। विकुर्व्वते महात्मानो देवास्त्रिदिवगा इव।
ऊर्द्ध्वस्रोतस इत्येते देवा वैकारिकाः स्मृताः। विकुर्व्वन्तः प्रकृत्या वै दिवं प्राप्तास्ततस्ततः।
यद्यदिच्छन्ति तत् सर्व्वं लभन्ते विभजन्ति च। इत्येतत् सात्त्विकं वृत्तं कथितं वो द्विजर्षभाः। १०४५
एतद्विज्ञाय विधिवल्लभन्ते यद्यदिच्छति।
प्रकीर्त्तिताः सत्त्वगुणा विशेषतो यथावदुक्तं गुणवृत्तमेव च। नरस्तु यो वेद गुणानिमान् सदा गुणान् स भुङ्क्ते न गुणैः स युज्यते।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे अष्टत्रिंशोऽध्यायः॥ ३८॥
॥ ब्रह्मोवाच॥ नैव शक्या गुणा वक्तुं पृथक्त्वेनैव सर्व्वशः। अविच्छिन्नानि दृश्यन्ते रजः सत्त्वं तमस्तथा।
अन्योन्यमथ रज्यन्ते ह्यन्योन्यञ्चार्थजीविनः। अन्योन्याश्रयाः सर्व्वे तथाऽन्योन्यानुवर्त्तिनः।
यावत् सत्त्वं रजस्तावद्वर्त्तते नात्र संशयः। यावत्तमश्च सत्त्वञ्च रजस्तावदिहोच्यते। १०५०
संहत्य कुर्व्वते यात्रां सहिताः संघचारिणः। संघातवृत्तयो ह्येते वर्त्तन्ते हेत्वहेतुभिः।

उद्रेकव्यतिरिक्तानां तेषामन्योन्यवर्त्तिनां । वक्ष्यते तद्यथा न्यूनं व्यतिरिक्तञ्च सर्व्वशः ।
व्यतिरिक्तं तमो यत्र तिर्य्यग्भावगतं भवेत् । अल्पं तत्र रजो ज्ञेयं सत्त्वमल्पतमं तथा ।
उद्रिक्तञ्च रजो यत्र मध्यस्रोतोगतं भवेत् । अल्पं तत्र तमो ज्ञेयं सत्त्वं चाल्पतरं तथा ।
उद्रिक्तञ्च यदा सत्त्वं मूर्द्धि स्रोतोगतं भवेत् । अल्पं तत्र तमो ज्ञेयं रजश्चाल्पतरं तथा । ९९५
सत्त्वं वैकारिकी योनिरिन्द्रियाणां प्रकाशिका । न हि सत्त्वात् परो धर्म्मः कश्चिदन्यो विधीयते ।
ऊर्द्धं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणसंयुक्ता यान्त्यधस्तामसा जनाः ।
तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमं । इत्येवं त्रिषु वर्णेषु विवर्त्तन्ते गुणास्त्रयः ।
दूरादपि हि दृश्यन्ते सहिताः संघचारिणः । तमः सत्त्वं रजश्चैव पृथक्त्वे नानुशुश्रुम ।
दृष्ट्वा त्वादित्यमुद्यन्तं कुचराणां भयं भवेत् । अध्वगाः परितप्येयुरुष्णतो दुःखभागिनः । १०००
आदित्यः सत्त्वमुद्रिक्तं कुचरास्तु तथा तमः । परितापोऽध्वगानाञ्च राजसो गुण उच्यते ।
प्राकाश्यं सत्त्वमादित्यः सन्तापो राजसो गुणः । उपप्लवस्तु विज्ञेयस्तामसस्तस्य पर्व्वसु ।
एवं ज्योतिःषु सर्व्वेषु निवर्त्तन्ते गुणास्त्रयः । पर्य्यायेण च वर्त्तन्ते तत्र तत्र तथा तथा ।
स्थावरेषु तु भावेषु तिर्य्यग्भावगतं तमः । राजसास्तु विवर्त्तन्ते स्नेहभावस्तु सात्त्विकः ।
अहस्त्रिधा तु विज्ञेयं त्रिधा रात्रिर्व्विधीयते । मासार्द्धमासवर्षाणि ऋतवः सन्धयस्तथा । १००५
त्रिधा दानानि दीयन्ते त्रिधा यज्ञः प्रवर्त्तते । त्रिधा लोकास्त्रिधा देवास्त्रिधा विद्यास्त्रिधा गतिः ।
भूतं भव्यं भविष्यञ्च धर्म्मोऽर्थः काम एव च । प्राणापानावुदानश्चाप्येत एव त्रयो गुणाः ।
पर्य्यायेण प्रवर्त्तन्ते तत्र तत्र तथा तथा । यत्किञ्चिदिह लोकेऽस्मिन् सर्व्वमेते त्रयो गुणाः ।
त्रयो गुणाः प्रवर्त्तन्ते ह्यव्यक्ता नित्यमेव तु । सत्त्वं रजस्तमश्चैव गुणसर्गः सनातनः ।
तमोऽव्यक्तं शिवो धाम रजो योनिः सनातनः । प्रकृतिर्व्विकारः प्रलयः प्रधानं प्रभवाप्ययौ । १०१०
अनुद्रिक्तमनूनं वाऽप्यकम्पमचलं ध्रुवं । सदसच्चैव तत्सर्व्वमव्यक्तं त्रिगुणं स्मृतं ।
ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः ।
अव्यक्तनामानि गुणांश्च तत्त्वतो यो वेद सर्व्वाणि गतीश्च केवलाः । विमुक्तदेहः प्रविभागतत्त्ववित् स मुच्यते सर्व्वगुणैर्निरामयः
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ब्रह्मोवाच ॥ अव्यक्तात् पूर्व्वमुत्पन्नो महानात्मा महामतिः । आदिर्गुणानां सर्व्वेषां प्रथमः सर्ग उच्यते ।
महानात्मा मतिर्व्विष्णुर्जिष्णुः शम्भुश्च वीर्य्यवान् । बुद्धिः प्रज्ञोपलब्धिश्च तथा ख्यातिर्धृतिः स्मृतिः । १०१५
पर्य्यायवाचकैः शब्दैर्महानात्मा विभाव्यते । तं जानन् ब्राह्मणो विद्वान् प्रमोहं नाधिगच्छति ।
सर्व्वतः पाणिपादश्च सर्व्वतोऽक्षिशिरोमुखः । सर्व्वतः श्रुतिमान् लोके सर्व्वं व्याप्य स तिष्ठति ।
महाप्रभावः पुरुषः सर्व्वस्य हृदि निश्रितः । अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ।
तत्र बुद्धिविदो लोके सद्भावनिरताश्च ये । ध्यानिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः ।
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः । प्रसन्नमनसो धीरा निर्म्ममा निरहङ्कृताः । १०२०

विमुक्ताः सर्व्व एवैते महत्त्वमुपयान्त्युत । आत्मनो महतो वेद यः पुण्यां गतिमुत्तमां ।
अहङ्कारात् प्रसूतानि महाभूतानि पञ्च वै । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं ।
तेषु भूतानि युध्यन्ते महाभूतेषु पञ्चसु । ते शब्दस्पर्शरूपेषु रसगन्धक्रियासु च ।
महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते । सर्व्वप्राणभृतां धीरा महदुत्पद्यते भयं ।
स धीरः सर्व्वलोकेषु न मोहमधिगच्छति । विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुः । १०९५
एवं हि यो वेद गुहाशयं प्रभुं परं पुराणं पुरुषं विश्वरूपं । हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीत्य तिष्ठति ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ ब्रह्मोवाच ॥ य उत्पन्नो महान् पूर्व्वमहङ्कारः स उच्यते । अहमित्येव सम्भूतो द्वितीयः सर्ग उच्यते ।
अहङ्कारश्च भूतादिर्व्वैकारिक इति स्मृतः । तेजसश्चेतना धातुः प्रजासर्गः प्रजायते ।
देवानां प्रभवो देवो मनसश्च त्रिलोककृत् । अहमित्येव तत् सर्व्वमभिमन्ता स उच्यते ।
अध्यात्मज्ञानतृप्तानां मुनीनां भावितात्मनां । स्वाध्यायक्रतुसिद्धानामेष लोकः सनातनः । ११००
अहङ्कारेणाहरतो गुणानिमान् भूतादिरेवं सृजते स भूतकृत् । वैकारिकः सर्व्वमिदं विचेष्टते स्वतेजसा रञ्जयते जगत्तथा ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ब्रह्मोवाच ॥ अहङ्कारात् प्रसूतानि महाभूतानि पञ्च वै । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं ।
तेषु भूतानि मुह्यन्ति महाभूतेषु पञ्चसु । शब्दस्पर्शनरूपेषु रसगन्धक्रियासु च ।
महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते । सर्व्वप्राणभृतां धीरा महदभ्युद्यते भयं ।
यद्यस्माज्जायते भूतं तत्र तत् प्रविलीयते । लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरं । ११०५
ततः प्रलीने सर्व्वस्मिन् भूते स्थावरजङ्गमे । स्मृतिमन्तस्तदा धीरा न लीयन्ते कदाचन ।
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः । क्रियाकारणनित्याः स्युरनित्या मोहसंज्ञिताः ।
लोभप्रजनसम्भूता निर्व्विशेषा ह्यकिञ्चनाः । मांसशोणितसङ्घाता अन्योन्यस्योपजीविनः ।
बहिरात्मान इत्येते दीनाः कृपणवृत्तयः । प्राणापानावुदानश्च समानो व्यान एव च ।
अन्तरात्मनि चाप्येते नियताः पञ्च वायवः । वाङ्मनोबुद्धिभिः सार्द्धमिदमष्टात्मकं जगत् । १११०
त्वग्घ्राणश्रोत्रचक्षूंषि रसना वाक् च संयता । विशुद्धञ्च मनो यस्य बुद्धिश्चाव्यभिचारिणी ।
अष्टौ यस्याग्नयो ह्येते न दहन्ते मनः सदा । स तद्ब्रह्म शुभं याति तस्माद्भूयो न विद्यते ।
एकादश च यान्याहुरिन्द्रियाणि विशेषतः । अहङ्कारात् प्रसूतानि तानि वक्ष्याम्यहं द्विजाः ।
श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी । पादौ पायुरुपस्थश्च हस्तौ वाक् दशमी भवेत् ।
इन्द्रियग्राम इत्येष मन एकादशं भवेत् । एतं ग्रामं जयेत् पूर्व्वं ततो ब्रह्म प्रकाशते । १११५
बुद्धीन्द्रियाणि पञ्चाहुः पञ्च कर्म्मेन्द्रियाणि च । श्रोत्रादीन्यपि पञ्चाहुर्बुद्धियुक्तानि तत्त्वतः ।
अविशेषाणि चान्यानि कर्म्मयुक्तानि यानि तु । उभयत्र मनो ज्ञेयं बुद्धिस्तु द्वादशी भवेत् ।

इत्युक्तानीन्द्रियाण्यात्मन्येकादश यथाक्रमं । मन्यन्ते कृतमित्येवं विदित्वा तानि पण्डिताः ।
अतः परं प्रवक्ष्यामि सर्वं विविधमिन्द्रियं । आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममुच्यते ।
अधिभूतं तथा शब्दो दिशस्तत्राधिदैवतं । द्वितीयं मारुतो भूतं त्वगध्यात्मञ्च विश्रुता ।
स्प्रष्टव्यमधिभूतञ्च विद्युत्तत्राधिदैवतं । तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते ।
अधिभूतं ततो रूपं सूर्य्यस्तत्राधिदैवतं । चतुर्थमापो विज्ञेयं जिह्वा चाध्यात्ममुच्यते ।
अधिभूतं रसश्चात्र सोमस्तत्राधिदैवतं । पृथिवी पञ्चमं भूतं घ्राणश्चाध्यात्ममुच्यते ।
अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतं । एषु पञ्चसु भूतेषु त्रिषु यश्च विधिः स्मृतः ।
अतः परं प्रवक्ष्यामि सर्वं विविधमिन्द्रियं । पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
अधिभूतन्तु गन्तव्यं विष्णुस्तत्राधिदैवतं । अवाग्गतिरपानश्च पायुरध्यात्ममुच्यते ।
अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतं । प्रजनः सर्व्वभूतानामुपस्थोऽध्यात्ममुच्यते ।
अधिभूतं तथा शुक्रं दैवतञ्च प्रजापतिः । हस्तावध्यात्ममित्याहुरध्यात्मविदुषो जनाः ।
अधिभूतञ्च कर्म्माणि शक्रस्तत्राधिदैवतं । वैश्वदेवी ततः पूर्व्वा वागध्यात्ममिहोच्यते ।
वक्तव्यमधिभूतञ्च वह्निस्तत्राधिदैवतं । अध्यात्मं मन इत्याहुः पञ्चभूतात्मचारकं ।
अधिभूतञ्च संकल्पश्चन्द्रमाश्चाधिदैवतं । अहङ्कारस्तथाऽध्यात्मं सर्व्वसंसारकारकं ।
अभिमानोऽधिभूतञ्च रुद्रस्तत्राधिदैवतं । अध्यात्मं बुद्धिरित्याहुः षडिन्द्रियविचारिणी ।
अधिभूतन्तु मन्तव्यं ब्रह्मा तत्राधिदैवतं । त्रीणि स्थानानि भूतानां चतुर्थं नोपपद्यते ।
स्थलमापस्तथाकाशं जन्म चापि चतुर्व्विधं । अण्डजोद्भिज्जसंस्वेदजरायुजमथापि च ।
चतुर्द्धा जन्म इत्येतद्भूतग्रामस्य लक्षणं । अपराण्यथ भूतानि खेचराणि तथैव च ।
अण्डजानि विजानीयात् सर्व्वांश्चैव सरीसृपान् । स्वेदजाः क्रिमयः प्रोक्ता जन्तवश्च यथाक्रमं ।
जन्म द्वितीयमित्येतज्जघन्यतरमुच्यते । भित्त्वा तु पृथिवीं यानि जायन्ते कालपर्य्ययात् ।
उद्भिज्जानि च तान्याहुर्भूतानि द्विजसत्तमाः । द्विपादबहुपादानि तिर्य्यग्गतिमतीनि च ।
जरायुजानि भूतानि विकृतान्यपि सत्तमाः । द्विविधा खलु विज्ञेया ब्रह्मयोनिः सनातनी ।
तपः कर्म्म च तत् पुण्यमित्येष विदुषां नयः । विविधं कर्म्म विज्ञेयमिज्या दानञ्च तन्मखे ।
जातस्याध्ययनं पुण्यमिति वृद्धानुशासनं । एतद्यो वेत्ति विधिवद्युक्तः स स्याद्द्विजर्षभाः ।
विमुक्तः सर्व्वपापेभ्य इति चैव निबोधत । आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममुच्यते ।
अधिभूतं तथा शब्दो दिशस्तत्राधिदैवतं । द्वितीयं मारुतं भूतं त्वगध्यात्मञ्च विश्रुतं ।
स्प्रष्टव्यमधिभूतन्तु विद्युत्तत्राधिदैवतं । तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममिष्यते ।
अधिभूतं ततो रूपं सूर्य्यस्तत्राधिदैवतं । चतुर्थमापो विज्ञेयं जिह्वा चाध्यात्ममिष्यते ।
चन्द्रोऽधिभूतं विज्ञेयमापस्तत्राधिदैवतं । यथावदध्यात्मविधिरेष वः कीर्त्तितो मया ।
ज्ञानमस्य हि धर्म्मज्ञाः प्राप्तं ज्ञानवतामिह । इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च ।

सर्व्वाण्येतानि सन्धाय मनसा संप्रधारयेत् । क्षीणे मनसि सर्व्वस्मिन् न जन्मसुखमिष्यते ।
ज्ञानसम्पन्नसत्त्वानां तत् सुखं विदुषां मतं । अतः परं प्रवक्ष्यामि सूक्ष्मभावकरीं गिरं ।
निवृत्तिं सर्व्वभूतेषु मृदुना दारुणेन च । गुणागुणमनासङ्गमेकचर्य्यमनन्तरं । ११६०
एतद्ब्राह्मणतो वृत्तमाहुरेकपदं सुखं । विद्वान् कूर्म्म इवाङ्गानि कामान् संहृत्य सर्व्वशः ।
विरजाः सर्व्वतो मुक्तो यो नरः स सुखी सदा । कामानात्मनि संयम्य क्षीणतृष्णः समाहितः ।
सर्व्वभूतसुहृन्मैत्रो ब्रह्मभूयाय कल्पते । इन्द्रियाणां निरोधेन सर्व्वेषां विषयैषिणां ।
मुनेर्जनपदत्यागादध्यात्माग्निः समिध्यते । यथाग्निरिन्धनैरिद्धो महाज्योतिः प्रकाशते ।
तथेन्द्रियनिरोधेन महानात्मा प्रकाशते । यदा पश्यति भूतानि प्रसन्नात्मात्मनो हृदि । ११६५
स्वयं ज्योतिस्तदा सूक्ष्मात् सूक्ष्मं प्राप्नोत्यनुत्तमं । अग्नी रूपं पयः स्रोतो वायुः स्पर्शनमेव च ।
मही पङ्कधरं घोरमाकाशं श्रवणं तथा । रोगशोकसमाविष्टं पञ्चस्रोतःसमावृतं ।
पञ्चभूतसमायुक्तं नवद्वारं द्विदैवतं । रजस्वलमथादृश्यं त्रिगुणञ्च त्रिधातुकं ।
संसर्गाभिरतं मूढं शरीरमिति धारणा । दुश्चरं सर्व्वलोकेऽस्मिन् सत्त्वं प्रतिसमाश्रितं ।
एतदेव हि लोकेऽस्मिन् कालचक्रं प्रवर्त्तते । एतन्महार्णवं घोरमगाधं मोहसंज्ञितं । ११७०
विक्षिपेत् संक्षिपेच्चैव बोधयेत् सामरं जगत् । कामं क्रोधं भयं लोभमभिद्रोहमथानृतं ।
इन्द्रियाणां निरोधेन स तांस्त्यजति दुस्त्यजान् । यस्यैते निर्ज्जिता लोके त्रिगुणाः पञ्चधातवः ।
व्योम्नि तस्य परिस्थानमनन्तमथ लभ्यते । पञ्चेन्द्रियमहाकूलां मनोवेगमहोदकां ।
नदीं मोहह्रदां तीर्त्वा कामक्रोधावुभौ जयेत् । स सर्व्वदोषनिर्मुक्तस्ततः पश्यति तत्परं ।
मनो मनसि सन्धाय पश्यन्नात्मानमात्मनि । सर्व्ववित् सर्व्वभूतेषु विन्दत्यात्मानमात्मनि । ११७५
एकधा बहुधा चैव विकुर्व्वाणस्ततस्ततः । ध्रुवं पश्यति रूपाणि दीपाद्दीपशतं यथा ।
स वै विष्णुश्च मित्रश्च वरुणोऽग्निः प्रजापतिः । स हि धाता विधाता च स प्रभुः सर्व्वतोमुखः ।
हृदयं सर्व्वभूतानां महानात्मा प्रकाशते ।
तं विप्रसंघाश्च सुरासुराश्च यक्षाः पिशाचाः पितरो वयांसि । रक्षोगणा भूतगणाश्च सर्व्वे महर्षयश्चैव सदा स्तुवन्ति ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे द्वाचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ब्रह्मोवाच ॥ मनुष्याणान्तु राजन्यः क्षत्रियो मध्यमो गुणः । कुञ्जरो वाहनानाञ्च सिंहश्चारण्यवासिनां । ११८०
अविः पशूनां सर्व्वेषामहिस्तु बिलवासिनां । गवां गोवृषभश्चैव स्त्रीणां पुरुष एव च ।
न्यग्रोधो जम्बुवृक्षश्च पिप्पलः शाल्मलिस्तथा । शिंशपा मेषशृङ्गश्च तथा कीचकवेणवः ।
एते द्रुमाणां राजानो लोकेऽस्मिन्नात्र संशयः । हिमवान् पारिपात्रश्च सह्यो विन्ध्यस्त्रिकूटवान् ।
श्वेतो नीलश्च भासश्च काष्ठवांश्चैव पर्व्वतः । गुरुस्कन्धो महेन्द्रश्च माल्यवान् पर्व्वतस्तथा ।
एते पर्व्वतराजानो गणानां मरुतां तथा । सूर्य्यो ग्रहाणामधिपो नक्षत्राणाञ्च चन्द्रमाः । ११८५
यमः पितॄणामधिपः सरितामथ सागरः । अम्भसां वरुणो राजा मरुतामिन्द्र उच्यते ।

अर्को ऽधिपतिर्ग्रहाणां ज्योतिषामिन्दुरुच्यते । अग्निर्भूतपतिर्नित्यं ब्राह्मणानां बृहस्पतिः ।
ओषधीनां पतिः सोमो विष्णुर्बलवतां वरः । त्वष्टा ऽधिराजो रूपाणां पशूनामीश्वरः शिवः ।
दीक्षितानां तथा यज्ञो देवानामधिपस्तथा । दिशामुदीची विप्राणां सोमो राजा प्रतापवान् ।
कुबेरः सर्व्वरत्नानां देवतानां पुरन्दरः । एष भूताधिपः सर्गः प्रजानाञ्च प्रजापतिः ।
११८०
सर्व्वेषामेव भूतानामहं ब्रह्ममयो महान् । भूतं परतरं मत्तो विष्णोर्व्वाऽपि न विद्यते ।
राजाधिराजः सर्व्वेषां विष्णुर्ब्रह्ममयो महान् । ईश्वरं विजानीध्वं कर्त्तारमकृतं हरिं ।
नरकिन्नरयक्षाणां गन्धर्व्वोरगरक्षसां । देवदानवनागानां सर्व्वेषामीश्वरो हि सः ।
भगदेवानुयातानां सर्व्वासां वामलोचना । माहेश्वरी महादेवी प्रोच्यते पार्व्वती हि सा ।
उमां देवीं विजानीध्वं नारीणामुत्तमां शुभां । रतीनां वसुमत्यस्तु स्त्रीणामप्सरसस्तथा ।
११८५
धर्म्मकामाश्च राजानो ब्राह्मणा धर्म्मसेतवः । तस्माद्राजा द्विजातीनां प्रयतेतेह रक्षणे ।
राज्ञां हि विषये येषामवसीदन्ति साधवः । हीनास्ते स्वगुणैः सर्व्वैः प्रेत्य चोन्मार्गगामिनः ।
राज्ञां हि विषये येषां साधवः परिरक्षिताः । तेऽस्मिन् लोके प्रमोदन्ते सुखं प्रेत्य च भुञ्जते ।
प्राप्नुवन्ति महात्मान इति वित्त द्विजर्षभाः । अत ऊर्द्ध्वं प्रवक्ष्यामि नियतं धर्म्मलक्षणं ।
अहिंसा परमो धर्म्मो हिंसा चाधर्म्मलक्षणा । प्रकाशलक्षणा देवा मनुष्याः कर्म्मलक्षणाः ।
११९०
शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः । ज्योतिषां लक्षणं रूपमापश्च रसलक्षणाः ।
धारिणी सर्व्वभूतानां पृथिवी गन्धलक्षणा । स्वरव्यञ्जनसंस्कारा भारती शब्दलक्षणा ।
मनसो लक्षणं चिन्ता चिन्तोक्ता बुद्धिलक्षणा । मनसा चिन्तितानर्थान् बुद्ध्या चेह व्यवस्यति ।
बुद्धिर्हि व्यवसायेन लक्ष्यते नात्र संशयः । लक्षणं मनसो ध्यानमव्यक्तं साधुलक्षणं ।
प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणं । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ।
११९५
संन्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिं । अतीतो द्वन्द्वमभ्येति तमोमृत्युजरातिगः ।
धर्म्मलक्षणसंयुक्तमुक्तं वो विधिवन्मया । गुणानां ग्रहणं सम्यक् वक्ष्याम्यहमतः परं ।
पार्थिवो यस्तु गन्धो वै घ्राणेन स हि गृह्यते । घ्राणस्थश्च तथा वायुर्गन्धज्ञाने विधीयते ।
अपां धातुरसो नित्यं जिह्वया स तु गृह्यते । जिह्वास्थश्च तथा सोमो रसज्ञाने विधीयते ।
ज्योतिषश्च गुणो रूपं चक्षुषा तच्च गृह्यते । चक्षुःस्थश्च सदादित्यो रूपज्ञाने विधीयते ।
१२००
वायव्यस्तु सदा स्पर्शस्त्वचा प्रज्ञायते च सः । त्वक्स्थश्चैव सदा वायुः स्पर्शने स विधीयते ।
आकाशस्य गुणो घोषः श्रोत्रेण च स गृह्यते । श्रोत्रस्थाश्च दिशः सर्व्वाः शब्दज्ञाने प्रकीर्त्तिताः ।
मनसश्च गुणश्चिन्ता प्रज्ञया सा तु गृह्यते । हृदिस्थचेतनाधातुर्मनोज्ञाने विधीयते ।
बुद्धिरध्यवसायेन ज्ञानेन च महांस्तथा । निश्चित्य ग्रहणं व्यक्तमव्यक्तं नात्र संशयः ।
अलिङ्गग्रहणो नित्यः क्षेत्रज्ञो निर्गुणात्मकः । तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ।
१२०५
अव्यक्तं क्षेत्रलिङ्गस्थं गुणानां प्रभवाप्ययं । सदा पश्याम्यहं लीनं विजानामि शृणोमि च ।

पुरुषस्तदविजानीते तस्मात् क्षेत्रज्ञ उच्यते। गतागतं तथा कृत्स्नं क्षेत्रज्ञः परिपश्यति।
आदिमध्यावसानान्तं सृज्यमानमचेतनं। न गुणा विदुरात्मानं सृज्यमानाः पुनः पुनः।
न च तं विन्दते कश्चित् क्षेत्रज्ञस्त्वेव विन्दति। गुणानां गुणभूतानां यत् परं परमं महत्।
तस्माद्गुणांश्च सत्त्वञ्च परित्यज्येह धर्म्मवित्। क्षीणदोषो गुणातीतः क्षेत्रज्ञं प्रविशत्यथ। ११९०
निर्द्वन्द्वो निर्नमस्कारो निःस्वाहाकार एव च। अचलश्चानिकेतश्च क्षेत्रज्ञः स परो विभुः।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे त्रिचत्वारिंशोऽध्यायः॥ ४३॥
॥ ब्रह्मोवाच॥ यदादिमध्यपर्यन्तं ग्रहणोपायमेव च। नामलक्षणसंयुक्तं सर्व्वं वक्ष्यामि तत्त्वतः।
अहः पूर्व्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः। श्रवणादीनि ऋक्षाणि ऋतवः शिशिरादयः।
भूमिरादिस्तु गन्धानां रसानामाप एव च। रूपाणां ज्योतिरादित्यः स्पर्शानां वायुरुच्यते।
शब्दस्यादिस्तथाकाशमेष भूतकृतो गुणः। अतः परं प्रवक्ष्यामि भूतानामादिमुत्तमं। ११९५
आदित्यो ज्योतिषामादिरग्निर्भूतादिरुच्यते। सावित्री सर्व्वविद्यानां देवतानां प्रजापतिः।
ओङ्कारः सर्व्ववेदानां वचसां प्राण एव च। यद्यस्मिन् नियतं लोके सर्व्वं सावित्रिरुच्यते।
गायत्री छन्दसामादिः प्रजानां सर्ग उच्यते। गावश्चतुष्पदामादिर्मनुष्याणां द्विजातयः।
श्येनः पतत्रिणामादिर्यज्ञानां हुतमुत्तमं। सरीसृपाणां सर्व्वेषां ज्येष्ठः सर्पो द्विजोत्तमाः।
कृतमादिर्युगानाञ्च सर्व्वेषां नात्र संशयः। हिरण्यं सर्व्वरत्नानामोषधीनां यवास्तथा। १२००
सर्व्वेषां भक्ष्यभोज्यानामन्नं परममुच्यते। द्रवाणाञ्चैव सर्व्वेषां पेयानामाप उत्तमाः।
स्थावराणान्तु भूतानां सर्व्वेषामविशेषतः। ब्रह्मक्षेत्रं सदा पुण्यं प्लक्षः प्रथमतः स्मृतः।
अहं प्रजापतीनाञ्च सर्व्वेषां नात्र संशयः। मम विष्णुरचिन्त्यात्मा स्वयम्भूरिति स स्मृतः।
पर्व्वतानां महामेरुः सर्व्वेषामग्रजः स्मृतः। दिशाञ्च प्रदिशाञ्चोर्द्ध्वं दिक् पूर्व्वा प्रथमा तथा।
तथा त्रिपथगा गङ्गा नदीनामग्रजा स्मृता। तथा सरोदपानानां सर्व्वेषां सागरोऽग्रजः। १२०५
देवदानवभूतानां पिशाचोरगरक्षसां। नरकिन्नरयक्षाणां सर्व्वेषामीश्वरः प्रभुः।
आदिर्व्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान्। भूतं परतरं यस्मात्त्रैलोक्ये नेह विद्यते।
आश्रमाणाञ्च सर्व्वेषां गार्हस्थ्यं नात्र संशयः। लोकानामादिरव्यक्तं सर्व्वस्यान्तस्तदेव च।
अहान्यस्तमयान्तानि उदयान्ता च शर्व्वरी। सुखस्यान्तं सदा दुःखं दुःखस्यान्तं सदा सुखं।
सर्व्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः। संयोगाश्च वियोगान्ता मरणान्तञ्च जीवितं। १२१०
सर्व्वं कृतं विनाशान्तं जातस्य मरणं ध्रुवं। अशाश्वतं हि लोकेऽस्मिन् सदा स्थावरजङ्गमं।
इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये। सर्व्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते।
तस्माज्ज्ञानेन शुद्धेन प्रशान्तात्मा जितेन्द्रियः। निर्म्ममो निरहङ्कारो मुच्यते सर्व्वपाप्मभिः।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे चतुश्चत्वारिंशोऽध्यायः॥ ४४॥
॥ ब्रह्मोवाच॥ बुद्धिसारं मनःस्तम्भमिन्द्रियग्रामबन्धनं। महाभूतपरिस्कन्दं निवेशपरिवेशनं।

जराशोकसमाविष्टं व्याधिव्यसनसम्भवं । देशकालविचारीदं श्रमव्यायामनिस्वनं । १२७०
अहोरात्रपरिक्षेपं शीतोष्णपरिमण्डलं । सुखदुःखान्तसंक्लेशं क्षुत्पिपासावकीलकं ।
छायातपविलेखञ्च निमेषोन्मेषविह्वलं । घोरमोहजलाकीर्णं वर्त्तमानमचेतनं ।
मासार्द्धमासगणितं विषमं लोकसञ्चरं । तमोनिचयपङ्कञ्च रजोवेगप्रवर्त्तकं ।
महाहङ्कारदीप्तञ्च गुणसञ्जातवर्त्तनं । अरतिग्रहणानीकं शोकसङ्घातवर्त्तनं ।
क्रियाकारणसंयुक्तं रागविस्तारमायतं । लोभेप्सापरिविक्षोभं विचित्राज्ञानसम्भवं । १२७५
भयमोहपरीवारं भूतसंमोहकारकं । आनन्दप्रीतिचारञ्च कामक्रोधपरिग्रहं ।
महदादिविशेषान्तमसक्तप्रभवाव्ययं । मनोजवं मनःकान्तं कालचक्रं प्रवर्त्तते ।
एतद्द्वन्द्वसमायुक्तं कालचक्रमचेतनं । विसृजेत् संक्षिपेच्चापि बोधयेत् सामरं जगत् ।
कालचक्रप्रवृत्तिञ्च निवृत्तिञ्चैव तत्त्वतः । यस्तु वेद नरो नित्यं न स भूतेषु मुह्यति ।
विमुक्तः सर्व्वसंस्कारैः सर्व्वद्वन्द्वविवर्ज्जितः । विमुक्तः सर्व्वपापेभ्यः प्राप्नोति परमां गतिं । १२८०
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः । चत्वार आश्रमाः प्रोक्ताः सर्व्वे गार्हस्थ्यमूलकाः ।
यः कश्चिदिह लोकेऽस्मिन्नागमः परिकीर्त्तितः तस्यान्तगमनं श्रेयः कीर्त्तिरेषा सनातनी ।
संस्कारैः संस्कृतः पूर्व्वं यथावच्चरितव्रतः । जातौ गुणविशिष्टायां समावर्त्तेत तत्त्ववित् ।
स्वदारनिरतो नित्यं शिष्टाचारो जितेन्द्रियः । पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेदिह ।
देवतातिथिशिष्टाशी निरतो वेदकर्म्मसु । इज्याप्रदानयुक्तश्च यथाशक्ति यथासुखं । १२८५
न पाणिपादचपलो न नेत्रचपलो मुनिः । न च वागङ्गचपल इति शिष्टस्य गोचरः ।
नित्यं यज्ञोपवीती स्यात् शुक्लवासाः शुचिव्रतः । नियतो यमदानाभ्यां सदा शिष्टैश्च संविशेत् ।
जितशिश्नोदरो मैत्रः शिष्टाचारसमन्वितः । वैणवीं धारयेद्यष्टिं सोदकञ्च कमण्डलुं ।
अधीत्याध्यापनं कुर्य्यात्तथा यजनयाजने । दानं प्रतिग्रहं वापि षड्गुणां वृत्तिमाचरेत् ।
त्रीणि कर्म्माणि जानीत ब्राह्मणानान्तु जीविका । याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः । १२९०
अथ शेषाणि चान्यानि त्रीणि कर्म्माणि यानि तु । दानमध्ययनं यज्ञो धर्म्मयुक्तानि तानि तु ।
तेष्वप्रमादं कुर्व्वीत त्रिषु कर्म्मसु धर्म्मवित् । दान्तो मैत्रः क्षमायुक्तः सर्व्वभूतसमो मुनिः ।
सर्व्वमेतद्यथाशक्ति विप्रो निर्व्वर्त्तयन् शुचिः । एवं युक्तो जयेत् स्वर्गं गृहस्थः संशितव्रतः ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ब्रह्मोवाच ॥ एवमेतेन मार्गेण पूर्व्वोक्तेन यथाविधि । अधीतवान् यथाशक्ति तथैव ब्रह्मचर्य्यवान् ।
स्वधर्म्मनिरतो विद्वान् सर्व्वेन्द्रिययतो मुनिः । गुरोः प्रियहिते युक्तः सत्यधर्म्मपरः शुचिः । १२९५
गुरुणा समनुज्ञातो भुञ्जीतान्नमकुत्सयन् । हविष्यभैक्ष्यभुक् चापि स्थानासनविहारवान् ।
द्विकालमग्निं जुह्वानः शुचिर्भूत्वा समाहितः । धारयीत सदा दण्डं वैल्वं पालाशमेव वा ।
क्षौमं कार्पासिकञ्चापि मृगाजिनमथापि वा । सर्व्वं काषायरक्तं वा वासो वापि द्विजस्य च ।

मेखला च भवेन्मौञ्जी जटी नित्योदकस्तथा । यज्ञोपवीती स्वाध्यायी अलुब्धो नियतव्रतः ।
पूताभिश्च तथैवाद्भिः सदा दैवततर्पणं । भावेन नियतः कुर्व्वन् ब्रह्मचारी प्रशस्यते । १२६५
एवं युक्तो जयेल्लोकान् वानप्रस्थो जितेन्द्रियः । न संसरति जातीषु परमं स्थानमाश्रितः ।
संस्कृतः सर्व्वसंस्कारैस्तथैव ब्रह्मचर्य्यवान् । ग्रामान्निष्क्रम्य चारण्ये मुनिः प्रव्रजितो वसेत् ।
चर्म्मवल्कलसंवासी स्वयं प्रातरुपस्पृशेत् । अरण्यगोचरो नित्यं न ग्रामं प्रविशेत् पुनः ।
अर्च्चयन्नतिथीन् काले दद्याच्चापि प्रतिश्रयं । फलपत्रावरैर्मूलैः श्यामाकेन च वर्त्तयन् ।
प्रवृत्तमुदकं वायुं सर्व्वं वानेयमाश्रयेत् । प्राश्नीयादानुपूर्व्व्येण यथादीक्षमतन्द्रितः । १२७०
स मूलफलभिक्षाभिरर्च्चेदतिथिमागतं । यद्भक्ष्यं स्यात्ततो दद्याद्भिक्षां नित्यमतन्द्रितः ।
देवतातिथिपूर्व्वञ्च सदा भुञ्जीत वाग्यतः । अस्पर्द्धितमनाश्चैव स्वल्पाशी दैवताश्रयः ।
दान्तो मैत्रः क्षमायुक्तः केशान् श्मश्रु च धारयन् । जुह्वन् स्वाध्यायशीलश्च सत्यधर्म्मपरायणः ।
त्यक्तदेहः सदा दक्षो वननित्यः समाहितः । एवं युक्तो जयेत् स्वर्गं वानप्रस्थो जितेन्द्रियः ।
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ वा पुनः । य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत् । १२७५
अभयं सर्व्वभूतेभ्यो दत्त्वा नैष्कर्म्म्यमाचरेत् । सर्व्वभूतसुखो मैत्रः सर्व्वेन्द्रिययतो मुनिः ।
अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया । कृत्वा प्राह्णे चरेद्भैक्ष्यं विधूमे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भैक्ष्यं लिप्सेत मोक्षवित् । लाभेन च न हृष्येत नालाभे विमना भवेत् ।
यात्रार्थी कालमाकाङ्क्षन् चरेद्भैक्ष्यं समाहितः । लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ।
अभिपूजितलाभाद्धि विजुगुप्सेत भिक्षुकः । भुक्तान्यन्नानि तिक्तानि कषायकटुकानि च । १२८०
नास्वादयीत भुञ्जानो रसांश्च मधुरांस्तथा । यात्रामात्रञ्च भुञ्जीत केवलं प्राणधारणं ।
असंरोधेन भूतानां वृत्तिं लिप्सेत मोक्षवित् । न चान्यमन्नं लिप्सेत भिक्षमाणः कथञ्चन ।
न सन्निकाशयेद्धर्म्मं विविक्ते चारजाश्चरेत् । शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा ।
प्रतिश्रयार्थं सेवेत पार्व्वतीं वा पुनर्गुहां । ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ।
अध्वा सूर्य्येण निर्द्दिष्टः कीटवच्च चरेन्महीं । दयार्थं चैव भूतानां समीक्ष्य पृथिवीं चरेत् । १२८५
सञ्चयांश्च न कुर्व्वीत स्नेहवासञ्च वर्ज्जयेत् । पूताभिरद्भिर्नित्यं वै कार्य्यं कुर्व्वीत मोक्षवित् ।
उपस्पृशेदुद्धृताभिरद्भिश्च पुरुषः सदा । अहिंसा ब्रह्मचर्य्यञ्च सत्यमार्ज्जवमेव च ।
अक्रोधश्चानसूया च दमो नित्यमपैशुनं । अष्टस्वेतेषु युक्तः स्याद्व्रतेषु नियतेन्द्रियः ।
अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् । जोषयेत सदा भोज्यं ग्रासमागतमस्पृहः ।
यात्रामात्रञ्च भुञ्जीत केवलं प्राणयात्रिकं । धर्म्मलब्धं तथाश्नीयान्न काममनुवर्त्तयेत् । १२९०
ग्रासादाच्छादनाच्चान्यन्न गृह्णीयात् कथञ्चन । यावदाहारयेत्तावत् प्रतिगृह्णीत नाधिकं ।
परेभ्यो न प्रतिग्राह्यं न च देयं कदाचन । दैन्यभावाच्च भूतानां संविभज्य सदा बुधः ।
नाददीत परस्वानि न गृह्णीयादयाचितः । न किञ्चिद्विषयं भुक्त्वा स्पृहयेत्तस्य वै पुनः ।

यो विद्वान् सहसंवासं विवासञ्चैव पश्यति । तथैवैकत्वनानात्वे स दुःखात् प्रतिमुच्यते ।
यो न कामयते किञ्चिन्न किञ्चिदवमन्यते । इहलोकस्थ एवैष ब्रह्मभूयाय कल्पते ।
प्रधानगुणतत्त्वज्ञः सर्व्वभूतविधानवित् । निर्ममो निरहङ्कारो मुच्यते नात्र संशयः । १२२५
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च । निर्गुणं नित्यमद्वन्द्वं प्रशमेनैव गच्छति ।
हित्वा गुणमयं सर्व्वं कर्म्म जन्तुः शुभाशुभं । उभे सत्यानृते हित्वा मुच्यते नात्र संशयः ।
अव्यक्तयोनिप्रभवो बुद्धिस्कन्धमयो महान् । महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः ।
महाभूतविशाखश्च विशेषप्रतिशाखवान् । सदापर्णः सदापुष्पः शुभाशुभफलोदयः ।
आजीव्यः सर्व्वभूतानां ब्रह्मवृक्षः सनातनः । एवं छित्त्वा च भित्त्वा च तत्त्वज्ञानासिना बुधः । १२३०
हित्वा सङ्गमयान् पाशान् मृत्युजन्मजरोदयान् । निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ।
द्वाविमौ पक्षिणौ नित्यौ सखायौ चाप्यचेतनौ । एताभ्यान्तु परो योऽन्यश्चेतनावान् स उच्यते ।
अचेतनः सत्त्वसङ्घातविमुक्तः सत्त्वात् परं चेतयतेऽन्तरात्मा । स क्षेत्रवित् सर्व्वसंख्यातबुद्धिर्गुणातिगो मुच्यते सर्व्वपापैः ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

॥ ब्रह्मोवाच ॥ केचिद्ब्रह्ममयं वृक्षं केचिद्ब्रह्मवनं महत् । केचित्तु ब्रह्म चाव्यक्तं केचित् परमनामयं ।
मन्यन्ते सर्व्वमप्येतदव्यक्तप्रभवाव्ययं । उच्छ्वासमात्रमपि चेद्योऽन्तकाले समो भवेत् । १२३५
आत्मानमुपसंगम्य सोऽमृतत्वाय कल्पते । निमेषमात्रमपि चेत् संयम्यात्मानमात्मनि ।
गच्छत्यात्मप्रसादेन विदुषां प्राप्तिमव्ययां । प्राणायामैरथ प्राणान् संयम्य च पुनः पुनः ।
दशद्वादशभिर्व्वापि चतुर्व्विंशात्परं ततः । एवं पूर्व्वं प्रसन्नात्मा लभते यद्यदिच्छति ।
अव्यक्तात् सत्त्वमुद्रिक्तममृतत्वाय कल्पते । सत्त्वात् परतरं नान्यत् प्रशंसन्तीह तद्विदः ।
अनुमानाद्विजानीमः पुरुषं सत्त्वसंश्रयं । न शक्यमन्यथा गन्तुं पुरुषं द्विजसत्तमाः । १२४०
क्षमा धृतिरहिंसा च समता सत्यमार्ज्जवं । ज्ञानं त्यागोऽथ संन्यासः सात्त्विकं वृत्तमिष्यते ।
एतेनैवानुमानेन मन्यन्ते वै मनीषिणः । सत्त्वञ्च पुरुषश्चैव तत्र नास्ति विचारणा ।
आहुरेके च विद्वांसो ये ज्ञाने परिनिष्ठिताः । क्षेत्रज्ञसत्त्वयोरैक्यमित्येतन्नोपपद्यते ।
पृथग्भूतं ततः सत्त्वमित्येतदविचारितं । पृथग्भावश्च विज्ञेयः सहजश्चापि तत्त्वतः ।
तथैवैकत्वनानात्वमिष्यते विदुषां नयः । मशकोदुम्बरे चैक्यं पृथक्त्वमपि दृश्यते । १२४५
मत्स्यो यथाऽन्यः स्यादप्सु सम्प्रयोगस्तथा तयोः । सम्बन्धस्तोयबिन्दूनां पर्णे कोकनदस्य च ।
॥ गुरुरुवाच ॥ इत्युक्तवन्तस्ते विप्रास्तदा लोकपितामहं । पुनः संशयमापन्नाः पप्रच्छुर्द्विजसत्तमाः ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ ऋषय ऊचुः ॥ को वा स्विदिह धर्म्माणामनुष्ठेयतमो मतः । व्याहतामिव पश्यामो धर्म्मस्य विविधां गतिं ।
ऊर्द्ध्वं देहाद्वदन्त्येके नैतदस्तीति चापरे । केचित् संशयितं सर्व्वं निःसंशयमथापरे ।

अनित्यं नित्यमित्येके नास्त्यस्तीत्यपि चापरे । एकरूपं द्विधेत्येके व्यामिश्रमिति चापरे । १३५०
मन्यन्ते ब्राह्मणा एव ब्रह्मज्ञास्तत्त्ववादिनः । एकमेके पृथक् चान्ये बहुत्वमपि चापरे ।
देशकालावुभौ केचित् नैतदस्तीति चापरे । जटाजिनधराश्चान्ये मुण्डाः केचिदसंवृताः ।
अस्नानं केचिदिच्छन्ति स्नानमप्यपरे जनाः । मन्यन्ते ब्राह्मणा देवा ब्रह्मज्ञास्तत्त्वदर्शिनः ।
आहारं केचिदिच्छन्ति केचिच्चानशने रताः । कर्म्म केचित् प्रशंसन्ति प्रशान्तिञ्चापरे जनाः ।
देशकालावुभौ केचिन्नैतदस्तीति चापरे । केचिन्मोक्षं प्रशंसन्ति केचिद्भोगान् पृथग्विधान् । १३५५
धनानि केचिदिच्छन्ति निर्द्धनत्वमथापरे । उपास्य साधनन्त्वेके नैतदस्तीति चापरे ।
अहिंसानिरताश्चान्ये केचिद्धिंसापरायणाः । पुण्येन यशसा चान्ये नैतदस्तीति चापरे ।
सद्भावनिरताश्चान्ये केचित्संशयिते स्थिताः । दुःखादन्ये सुखादन्ये ध्यानमित्यपरे जनाः ।
यज्ञमित्यपरे विप्राः प्रदानमिति चापरे । तपस्त्वन्ये प्रशंसन्ति स्वाध्यायमपरे जनाः ।
ज्ञानं संन्यासमित्येके स्वभावं भूतचिन्तकाः । सर्व्वमेके प्रशंसन्ति न सर्व्वमिति चापरे । १३६०
एवं व्युत्थापिते धर्म्मे बहुधा विप्रवोधिते । निश्चयं नाधिगच्छामः संमूढाः सुरसत्तम ।
इदं श्रेय इदं श्रेय इत्येवं व्युत्थितो जनः । यो हि यस्मिन् रतो धर्म्मे स तं पूजयते सदा ।
तेन नोऽविहिता प्रज्ञा मनश्च बहुलीकृतं । एतदाख्यातुमिच्छामः श्रेयः किमिति सत्तम ।
अतः परन्तु यद्गुह्यं तद्भवान् वक्तुमर्हति । सत्त्वक्षेत्रज्ञयोश्चापि सम्बन्धः केन हेतुना ।
एवमुक्तः स तैर्व्विप्रैर्भगवान् लोकभावनः । तेभ्यः शशंस धर्म्मात्मा याथातथ्येन बुद्धिमान् । १३६५
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे ऊनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ ब्रह्मोवाच ॥ हन्त वः संप्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः । गुरुणा शिष्यमासाद्य यदुक्तं तन्निबोधत ।
समस्तमिह तत् श्रुत्वा सम्यगेवावधार्य्यतां । अहिंसा सर्व्वभूतानामेतत् कृत्यतमं मतं ।
एतत्पदमनुद्विग्नं वरिष्ठं धर्म्मलक्षणं । ज्ञानं निःश्रेय इत्याहुर्वृद्धा निश्चितदर्शिनः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्व्वकिल्बिषैः । हिंसापराश्च ये केचिद्ये च नास्तिकवृत्तयः ।
लोभमोहसमायुक्तास्ते वै निरयगामिनः । आशीर्युक्तानि कर्म्माणि कुर्व्वते ये त्वतन्द्रिताः । १३७०
तेऽस्मिन् लोके प्रमोदन्ते जायमानाः पुनः पुनः । कुर्व्वते ये तु कर्म्माणि श्रद्दधाना विपश्चितः ।
अनाशीर्योगसंयुक्तास्ते धीराः साधुदर्शिनः । अतः परं प्रवक्ष्यामि सत्त्वक्षेत्रज्ञयोर्यथा ।
संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः । विषयो विषयित्वञ्च सम्बन्धोऽयमिहोच्यते ।
विषयी पुरुषो नित्यं सत्त्वञ्च विषयः स्मृतः । व्याख्यातं पूर्व्वकल्पेन मशकोदुम्बरं यथा ।
भुज्यमानं न जानीते नित्यं सत्त्वमचेतनं । यस्त्वेवं तं विजानीते यो भुङ्क्ते यश्च भुज्यते । १३७५
नित्यं द्वन्द्वसमायुक्तं सत्त्वमाहुर्मनीषिणः । निर्द्वन्द्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः
समः संज्ञानुगश्चैव स सर्व्वत्र व्यवस्थितः । उपभुङ्क्ते सदा सत्त्वमपः पुष्करपर्णवत् ।
सर्व्वैरपि गुणैर्व्विद्वान् व्यतिषक्तो न लिप्यते । जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः ।

एवमेवाप्यसंयुक्तः पुरुषः स्यात् संशयः । उद्यमात्मकमभूत् सत्त्वं पुरुषश्चेति निश्चयः ।
यथा द्रव्यञ्च कर्त्ता च संयोगोऽप्यनयोस्तथा । यथा प्रदीपमादाय कश्चित्तमसि गच्छति । १३८०
तथा सत्त्वप्रदीपेन गच्छन्ति परमैषिणः । यावद्द्रव्यगुणास्तावत् प्रदीपः संप्रकाशते ।
क्षीणे द्रव्ये गुणे ज्योतिरन्तर्द्धानाय गच्छति । व्यक्तः सत्त्वगुणस्त्वेवं पुरुषोऽव्यक्त इष्यते ।
एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः । सहस्रेणापि दुर्म्मेधा न बुद्धिमधिगच्छति ।
चतुर्थेनाप्यथांशेन बुद्धिमान् सुखमेधते । एवं धर्म्मस्य विज्ञेयं संसाधनमुपायतः ।
उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते । यथाऽध्वानमपाथेयः प्रपन्नो मनुजः क्वचित् । १३८५
क्लेशेन याति महता विनश्यत्यन्तराऽपि च । तथा कर्म्मसु विज्ञेयं फलं भवति वा न वा ।
पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनं । यथा च दीर्घमध्वानं पद्भ्यामेव प्रपद्यते ।
अदृष्टपूर्व्वं सहसा तत्त्वदर्शनवर्ज्जितः । तमेव च यथाऽध्वानं रथेनेहाशुगामिना ।
गच्छत्यश्वप्रयुक्तेन तथा बुद्धिमतां गतिः । ऊर्द्ध्वं पर्व्वतमारुह्य नान्ववेक्षेत भूतलं ।
रथेन रथिनं पश्यन् क्लिश्यमानमचेतनं । यावद्रथपथस्तावद्रथेन स तु गच्छति । १३९०
क्षीणे रथपथे विद्वान् रथमुत्सृज्य गच्छति । एवं गच्छति मेधावी तत्त्वयोगविधानवित् ।
परिज्ञाय गुणज्ञश्च उत्तरादुत्तरोत्तरं । यथाऽर्णवं महाघोरमप्लवः संप्रगाहते ।
बाहुभ्यामेव संमोहाद्वधं वाञ्छत्यसंशयं । नावा चापि तथा प्राज्ञो विभागज्ञः खरित्रया ।
अक्लान्तः सलिलं गच्छेच्छीघ्रं सन्तरते ह्रदं । तीर्णो गच्छेत् परं पारं नावमुत्सृज्य निर्म्ममः ।
व्याख्यातं पूर्व्वकल्पेन यथा रथपदातिनोः । स्नेहात् संमोहमापन्नो नावि दाशो यथा तथा । १३९५
ममत्वेनाभिभूतः संस्तत्रैव परिवर्त्तते । नावं न शक्यमारुह्य स्थले विपरिवर्त्तितुं ।
तथैव रथमारुह्य नाप्सु चर्य्या विधीयते । एवं कर्म्मकृतं चित्रं विषयस्थं पृथक् पृथक् ।
यथा कर्म्म कृतं लोके तथैतानुपपद्यते । यन्नैव गन्धि नो रस्यं न रूपस्पर्शशब्दवत् ।
मन्यन्ते मुनयो बुद्ध्या तत् प्रधानं प्रचक्षते । तत्र प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ।
महत् प्रधानभूतस्य गुणोऽहङ्कार एव च । अहङ्कारात्तु सम्भूतो महाभूतकृतो गुणः । १४००
पृथक्त्वेन हि भूतानां विषया वै गुणाः स्मृताः । बीजधर्म्मं तथा व्यक्तं प्रसवात्मकमेव च ।
बीजधर्म्मा महानात्मा प्रसवश्चेति नः श्रुतं । बीजधर्म्मस्त्वहङ्कारः प्रसवश्च पुनः पुनः ।
बीजप्रसवधर्म्माणि महाभूतानि पञ्च वै । बीजधर्म्मिण इत्याहुः प्रसवञ्च प्रकुर्व्वते ।
विशेषाः पञ्चभूतानां तेषां चित्तं विशेषणं । तत्रैकगुणमाकाशं द्विगुणो वायुरुच्यते ।
त्रिगुणं ज्योतिरित्याहुरापश्चापि चतुर्गुणाः । पृथ्वी पञ्चगुणा ज्ञेया चरस्थावरसंकुला । १४०५
सर्व्वभूतकरी देवी शुभाशुभनिदर्शिनी । शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
एते पञ्च गुणा भूमेर्विज्ञेया द्विजसत्तमाः । पार्थिवश्च सदा गन्धो गन्धश्च बहुधा स्मृतः ।
तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून् गुणान् । इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा ।

निहारी धैवतः स्निग्धो रूक्षो विशद एव च । एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ।
शब्दः स्पर्शस्तथा रूपं द्रवश्चापां गुणाः स्मृताः । रसज्ञानन्तु वक्ष्यामि रसस्तु बहुधा स्मृतः । १४१०
मधुरोऽम्लः कटुस्तिक्तः कषायो लवणस्तथा । एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ।
शब्दः स्पर्शस्तथा रूपं त्रिगुणं ज्योतिरुच्यते । ज्योतिषश्च गुणो रूपं रूपञ्च बहुधा स्मृतं ।
शुक्लं कृष्णं तथा रक्तं नीलं पीतारुणन्तथा । ह्रस्वं दीर्घं कृशं स्थूलं चतुरस्रन्तु वृत्तवत् ।
एवं द्वादशविस्तारं तेजसो रूपमुच्यते । विज्ञेयं ब्राह्मणैर्वृद्धैर्धर्मज्ञैः सत्यवादिभिः ।
शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरुच्यते । वायोश्चापि गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः । १४१५
रूक्षः शीतस्तथैवोष्णः स्निग्धो विशद एव च । कठिनश्चिक्कणः श्लक्ष्णः पिच्छलो दारुणो मृदुः ।
एवं द्वादशविस्तारो वायव्यो गुण एव च । विधिवद्ब्राह्मणैः सिद्धैर्धर्मज्ञैस्तत्त्वदर्शिभिः ।
तत्रैकगुणमाकाशं शब्द इत्येव च स्मृतः । तस्य शब्दस्य वक्ष्यामि विस्तरेण बहून् गुणान् ।
षड्जर्षभः सगान्धारो मध्यमः पञ्चमस्तथा । अतः परन्तु विज्ञेयो निषादो धैवतस्तथा ।
इष्टश्चानिष्टशब्दश्च संहतः प्रविभागवान् । एवं दशविधो ज्ञेयः शब्द आकाशसम्भवः । १४२०
आकाशमुत्तमं भूतमहङ्कारस्ततः परः । अहङ्कारात् परा बुद्धिर्बुद्धेरात्मा तथा परः ।
तस्मात्तु परमव्यक्तमव्यक्तात् पुरुषः परः । परापरज्ञो भूतानां विधिज्ञः सर्व्वकर्म्मणां ।
सर्व्वभूतात्मभूतात्मा गच्छत्यात्मानमव्ययं ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥
॥ ब्रह्मोवाच ॥ भूतानामथ पञ्चानां यथैषामीश्वरो मनः । नियमे च विसर्गे च भूतात्मा मन एव च ।
अधिष्ठाता मनो नित्यं भूतानां महतां तथा । बुद्धिरैश्वर्य्यमाचष्टे क्षेत्रज्ञश्च स उच्यते । १४२५
इन्द्रियाणि मनो युङ्क्ते सदश्वानिव सारथिः । इन्द्रियाणि मनो बुद्धिः क्षेत्रज्ञे युज्यते सदा ।
महदश्वसमायुक्तं बुद्धिसंयमनं रथं । समारुह्य स भूतात्मा समन्तात् परिधावति ।
इन्द्रियग्रामसंयुक्तो मनःसारथिरेव च । बुद्धिसंयमनो नित्यं महान् ब्रह्ममयो रथः ।
एवं यो वेत्ति विद्वान् वै सदा ब्रह्ममयं रथं । स धीरः सर्व्वभूतेषु न मोहमधिगच्छति ।
अव्यक्तादिविशेषान्तं त्रसस्थावरजङ्गमं । सूर्य्यचन्द्रप्रभालोकं ग्रहनक्षत्रमण्डितं । १४३०
नदीपर्व्वतजालैश्च सर्व्वतः परिभूषितं । विविधाभिस्तथा चाद्भिः सततं समलङ्कृतं ।
आजीवं सर्व्वभूतानां सर्व्वप्राणभृतां गतिः । एतद्ब्रह्म परं नित्यं तस्मिंश्चरति क्षेत्रवित् ।
लोकेऽस्मिन् यानि सत्त्वानि स्थावराणि चराणि च । तान्येवाग्रे प्रलीयन्ते पश्चाद्भूतकृता गुणाः ।
गुणेभ्यः पञ्चभूतानि एष भूतसमुच्छ्रयः । देवा मनुष्या गन्धर्व्वाः पिशाचासुरराक्षसाः ।
सर्व्वे स्वभावतः सृष्टा न क्रियाभ्यो न कारणात् । एते विश्वसृजो विप्रा जायन्तीह पुनः पुनः । १४३५
तेभ्यः प्रसूतास्तेष्वेव महाभूतेषु पञ्चसु । प्रलीयन्ते यथाकालमूर्म्मयः सागरे यथा ।
विश्वसृग्भ्यस्तु भूतेभ्यो महाभूतस्तु सर्व्वशः । भूतेभ्यश्चापि पञ्चभ्यो मुक्तो गच्छेत् परां गतिं ।

प्रजापतिरिदं सर्व्वं मनसैवासृजत् प्रभुः । तथैव देवानृषयस्तपसा प्रतिपेदिरे ।
तपसश्चानुपूर्व्व्येण फलमूलाशिनस्तथा । त्रैलोक्यं तपसा सिद्धाः पश्यन्तीह समाहिताः ।
औषधान्यगदादीनि नानाविद्याश्च सर्व्वशः । तपसैव प्रसिध्यन्ति तपोमूलं हि साधनं । १५७०
यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयं । तत् सर्व्वं तपसा साध्यं तपो हि दुरतिक्रमं ।
सुरापो ब्रह्महा स्तेयी भ्रूणहा गुरुतल्पगः । तपसैव सुतप्तेन मुच्यते किल्विषात्ततः ।
मनुष्याः पितरो देवाः पशवो मृगपक्षिणः । यानि चान्यानि भूतानि त्रसानि स्थावराणि च ।
तपःपरायणा नित्यं सिध्यन्ते तपसा सदा । तथैव तपसा देवा महामाया दिवं गताः ।
आशीर्युक्तानि कर्म्माणि कुर्व्वते ये त्वतन्द्रिताः । अहङ्कारसमायुक्तास्ते सकाशे प्रजापतेः । १५७५
ध्यानयोगेन शुद्धेन निर्म्ममा निरहङ्कृताः । प्राप्नुवन्ति महात्मानो महान्तं लोकमुत्तमं ।
ध्यानयोगमुपागम्य प्रसन्नमतयः सदा । सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तमाः ।
ध्यानयोगादुपागम्य निर्म्ममा निरहङ्कृताः । अव्यक्तं प्रविशन्तीह महतां लोकमुत्तमं ।
अव्यक्तादेव सम्भूतः समसंज्ञां गतः पुनः । तमोरजोभ्यां निर्म्मुक्तः सत्त्वमास्थाय केवलं ।
विमुक्तः सर्व्वपापेभ्यः सर्व्वं सृजति निष्कलं । क्षेत्रज्ञ इति तं विद्याद्यस्तं वेद स वेदवित् । १५८०
चित्तं चित्तादुपागम्य मुनिरासीत संयतः । यच्चित्तस्तन्मनो वश्यं गुह्यमेतत् सनातनं ।
अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतं । निबोधत तथा हीदं गुणैर्लक्षणमित्युत ।
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतं । ममेति च भवेन्मृत्युर्न ममेति च शाश्वतं ।
कर्म्म केचित् प्रशंसन्ति मन्दबुद्धिरता नराः । ये तु वृद्धा महात्मानो न प्रशंसन्ति कर्म्म ते ।
कर्म्मणा जायते जन्तुर्मूर्त्तिमान् षोडशात्मकः । पुरुषं ग्रसते विद्या तद्ग्राह्यममृताशिनां । १५८५
तस्मात् कर्म्मसु निःस्नेहा ये केचित् पारदर्शिनः । विद्यामयोऽयं पुरुषो न तु कर्म्ममयः स्मृतः ।
य एवममृतं नित्यमग्राह्यं शश्वदक्षरं । वश्यात्मानमसंश्लिष्टं यो वेद न मृतो भवेत् ।
अपूर्व्वमकृतं नित्यं य एनमपराजितं । य एवं विन्देदात्मानमग्राह्यममृताशनं ।
अग्राह्यो मृतो भवति स एभिः कारणैर्ध्रुवः । आयोज्य सर्व्वसंस्कारान् संयम्यात्मानमात्मनि ।
स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते । प्रसादे चैव सत्त्वस्य प्रसादं समवाप्नुयात् । १५९०
लक्षणं हि प्रसादस्य यथा स्यात् स्वप्नदर्शनं । गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः ।
प्रवृत्तयश्च याः सर्व्वाः पश्यन्ति परिणामजाः । एषा गतिर्विरक्तानामेष धर्म्मः सनातनः ।
एषा ज्ञानवतां प्राप्तिरेतद्वृत्तमनिन्दितं । समेन सर्व्वभूतेषु निस्पृहेण निराशिषा ।
शक्या गतिरियं गन्तुं सर्व्वत्र समदर्शिना । एतद्वः सर्व्वमाख्यातं मया विप्रर्षिसत्तमाः ।
एवमाचरत क्षिप्रं ततः सिद्धिमवाप्स्यथ । १५९४
॥ गुरुरुवाच ॥ इत्युक्तास्ते तु मुनयो गुरुणा ब्रह्मणा तथा । कृतवन्तो महात्मानस्ततो लोकमवाप्नुवन् ।
त्वमप्येतन्महाभाग यथोक्तं ब्रह्मणो वचः । सम्यगाचर शुद्धात्मंस्ततः सिद्धिमवाप्स्यसि ।

॥ वासुदेव उवाच ॥ इत्युक्तः स तदा शिष्यो गुरुणा धर्म्ममुत्तमं । चकार सर्व्वं कौन्तेय ततो मोक्षमवाप्तवान् ।

कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह । तत् पदं समनुप्राप्तो यत्र गत्वा न शोचति ।

॥ अर्ज्जुन उवाच ॥ को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्द्दन । श्रोतव्यञ्चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो । १५५०

॥ वासुदेव उवाच ॥ अहं गुरुर्म्महाबाहो मनः शिष्यञ्च विद्धि मे । त्वत्प्रीत्या गुह्यमेतच्च कथितन्ते धनञ्जय ।

मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह । अध्यात्ममेतत् श्रुत्वा त्वं सम्यगाचर सुव्रत ।

ततस्त्वं सम्यगाचीर्णे धर्म्मेऽस्मिन्नरिकर्षण । सर्व्वपापविनिर्म्मुक्तो मोक्षं प्राप्स्यसि केवलं ।

पूर्व्वमप्येतदेवोक्तं युद्धकाले उपस्थिते । मया तव महाबाहो तस्मादत्र मनः कुरु ।

मया तु भरतश्रेष्ठ चिरदृष्टः पिता प्रभुः । तमहं द्रष्टुमिच्छामि संमते तव फाल्गुन । १५५५

॥ वैशम्पायन उवाच ॥ इत्युक्तवचनं कृष्णं प्रत्युवाच धनञ्जयः । गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै ।

समेत्य तत्र राजानं धर्म्मात्मानं युधिष्ठिरं । समनुज्ञाप्य राजानं स्वां पुरीं यातुमर्हसि ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे एकपञ्चाशोऽध्यायः ॥ ५१ ॥

॥ वैशम्पायन उवाच ॥ ततोऽभ्यनोदयत् कृष्णो युज्यतामिति दारुकं । मुहूर्त्तादिव चाचष्ट युक्तमित्येव दारुकः ।

तथैव चानुयात्राणि चोदयामास पाण्डवः । सज्जयध्वं प्रयास्यामो नगरं गजसाह्वयं ।

इत्युक्ताः सैनिकास्ते तु सज्जीभूता विशाम्पते । आचख्युः सज्जमित्येव पार्थायामिततेजसे । १५६०

ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ । विकुर्व्वाणौ कथाश्चित्राः प्रीयमाणौ विशाम्पते ।

रथस्थन्तु महातेजा वासुदेवं धनञ्जयः । पुनरेवाब्रवीद्वाक्यमिदं भरतसत्तम ।

त्वत्प्रसादाज्जयः प्राप्तो राज्ञा वृष्णिकुलोद्वह । निहताः शत्रवश्चापि प्राप्तं राज्यमकण्टकं ।

नाथवन्तश्च भवता पाण्डवा मधुसूदन । भवन्तं प्लवमासाद्य तीर्णाः स्म कुरुसागरं ।

विश्वकर्म्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसत्तम । तथा त्वामभिजानामि यथा चाहं भवान्मतः । १५६५

त्वत्तेजःसम्भवो नित्यं भूतात्मा मधुसूदन । रतिः क्रीडामयी तुभ्यं माया ते रोदसी विभो ।

त्वयि सर्व्वमिदं विश्वं यदिदं स्थाणुजङ्गमं । त्वं हि सर्व्वं विकुरुषे भूतग्रामं चतुर्विधं ।

पृथिवीञ्चान्तरीक्षञ्च द्याञ्चैव मधुसूदन । हसितं तेऽमला ज्योत्स्ना ऋतवश्चेन्द्रियाणि च ।

प्राणो वायुः सततगः क्रोधो मृत्युः सनातनः । प्रसादे चापि पद्मा श्रीर्नित्यं त्वयि महामते ।

रतिस्तुष्टिर्धृतिः क्षान्तिर्म्मतिः कान्तिश्चराचरं । त्वमेवेह युगान्तेषु निधनं प्रोच्यसेऽनघ । १५७०

सुदीर्घेणापि कालेन न ते शक्या गुणा मया । आत्मा च परमात्मा च नमस्ते नलिनेक्षण ।

विदितो मे सुदुर्द्धर्ष नारदाद्देवलात्तथा । कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात् ।

त्वयि सर्व्वं समासक्तं त्वमेवैको जनेश्वरः । यच्चानुग्रहसंयुक्तमेतदुक्तं त्वयाऽनघ ।

एतत् सर्व्वमहं सर्व्वमाचरिष्ये जनार्द्दन । इदञ्चाद्भुतमत्यर्थं कृतमस्मत्प्रियेप्सया ।

यत् पापो निहतः संख्ये कौरव्यो धृतराष्ट्रजः । त्वया दग्धं हि तत् सैन्यं मया विजितमाहवे । १५७५

भवता तत् कृतं कर्म्म येनावाप्तो जयो मया । दुर्य्योधनस्य संग्रामे तव बुद्धिपराक्रमैः ।

कर्णस्य च वधोपायो यथावत् सम्प्रदर्शितः । सैन्धवस्य च पापस्य भूरिश्रवस एव च ।
त्वया च प्रीयमाणेन तथा देवकिनन्दन । यदुक्तवांस्तत् करिष्यामि न हि मेऽत्र विचारणा ।
राजानञ्च समासाद्य धर्म्मात्मानं युधिष्ठिरं । चोदयिष्यामि धर्म्मज्ञ गमनार्थं तवानघ ।
रुचितं हि ममैतत्ते द्वारकागमनं प्रभो । अचिरादेव द्रष्टा त्वं मातुलं मे जनार्द्दन । १५००
बलदेवञ्च दुर्द्धर्षं तथान्यान् वृष्णिपुङ्गवान् । एवं सम्भाषमाणौ तौ प्राप्तौ वारणसाह्वयं ।
तथा विविशतुश्चोभौ सम्प्रहृष्टनराकुलं । तौ गत्वा धृतराष्ट्रस्य गृहं शक्रगृहोपमं ।
ददृशाते महाराज धृतराष्ट्रं जनेश्वरं । विदुरञ्च महाबुद्धिं राजानञ्च युधिष्ठिरं ।
भीमसेनञ्च दुर्द्धर्षं माद्रीपुत्रौ च पाण्डवौ । धृतराष्ट्रमुपासीनं युयुत्सुञ्चापराजितं ।
गान्धारीञ्च महाप्रज्ञां पृथां कृष्णाञ्च भामिनीं । सुभद्राद्याश्च ताः सर्व्वा भरतानां स्त्रियस्तथा । १५०५
ददृशाते स्त्रियः सर्व्वा गान्धारीपरिचारिकाः । ततः समेत्य राजानं धृतराष्ट्रमरिन्दमौ ।
निवेद्य नामधेये स्वे तस्य पादावगृह्णतां । गान्धार्य्याश्च पृथायाश्च धर्म्मराजस्य चैव हि ।
भीमस्य च महात्मानौ तथा पादावगृह्णतां । क्षत्तारञ्चापि संस्वज्य पृष्ट्वा कुशलमव्ययं ।
तैः सार्द्धं नृपतिं वृद्धं ततस्तौ पर्य्युपासतां । ततो निशि महाराजो धृतराष्ट्रः कुरूद्वहान् ।
जनार्द्दनञ्च मेधावी व्यसर्ज्जयत वै गृहान् । तेऽनुज्ञाता नृपतिना ययुः स्वं स्वं निवेशनं । १५१०
धनञ्जयगृहानेव ययौ कृष्णस्तु वीर्य्यवान् । तत्रार्च्चितो यथान्यायं सर्व्वकामैरुपस्थितः ।
कृष्णः सुष्वाप मेधावी धनञ्जयसहायवान् । प्रभातायान्तु शर्व्वर्य्यां कृत्वा पौर्व्वाह्णिकीं क्रियां ।
धर्म्मराजस्य भवनं जग्मतुः परमार्च्चितौ । यत्रास्ते स सहामात्यो धर्म्मराजो महाबलः ।
तौ प्रविश्य महात्मानौ तद्गृहं परमार्च्चितं । धर्म्मराजं ददृशतुर्देवराजमिवाश्विनौ ।
समासाद्य तु राजानं वार्ष्णेयकुरुपुङ्गवौ । निषेदतुरनुज्ञातौ प्रीयमाणेन तेन तौ । १५१५
ततः स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ । प्रोवाच वदतां श्रेष्ठो वचनं राजसत्तमः ।
॥ युधिष्ठिर उवाच ॥ विवक्षू हि युवां मन्ये वीरौ यदुकुरूद्वहौ । ब्रूतं कर्त्तास्मि सर्व्वं वां न चिरान्मा विचार्य्यतां ।
इत्युक्तः फाल्गुनस्तत्र धर्म्मराजानमब्रवीत् । विनीतवदुपागम्य वाक्यं वाक्यविशारदः ।
अयं चिरोषितो राजन् वासुदेवः प्रतापवान् । भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ।
स गच्छेदभ्यनुज्ञातो भवता यदि मन्यते । आनर्त्तनगरीं वीर तदनुज्ञातुमर्हसि । १५२०
॥ युधिष्ठिर उवाच ॥ पुण्डरीकाक्ष भद्रन्ते गच्छ त्वं मधुसूदन । पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं प्रभो ।
रोचते मे महाबाहो गमनं तव केशव । मातुलश्चिरदृष्टो मे त्वया देवी च देवकी ।
समेत्य मातुलं गत्वा बलदेवञ्च मानद । पूजयेथा महाप्राज्ञ मद्वाक्येन यथार्हतः ।
स्मरेथाश्चापि मां नित्यं भीमञ्च बलिनां वरं । फाल्गुनं सहदेवञ्च नकुलञ्चैव मानद ।
आनर्त्तानवलोक्य त्वं पितरञ्च महाभुज । वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ । १५२५
स गच्छ रत्नान्यादाय विविधानि वसूनि च । यच्चाप्यन्यन्मनोज्ञन्ते तदप्यादत्स्व सात्वत ।

इयञ्च वसुधा कृत्स्ना प्रसादात्तव केशव । अस्मानुपागता वीर निहताश्चापि शत्रवः ।

एवं ब्रुवति कौरव्ये धर्म्मराजे युधिष्ठिरे । वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ।

तवैव रत्नानि धनञ्च केवलं धरा तु कृत्स्ना तु महाभुजाऽद्य वै । यदस्ति चान्यद्द्रविणं गृहे मम त्वमेव तस्येश्वर नित्यमी

श्वरः ।

तथेत्यथोक्तः प्रतिपूजितस्तदा गदाग्रजो धर्म्मसुतेन वीर्य्यवान् । पितृष्वसारं त्ववदद्यथाविधि सम्पूजितश्चाप्यगमत्

प्रदक्षिणं । १५२०

तया स सम्यक् प्रतिनन्दितस्ततस्तथैव सर्व्वैर्विदुरादिभिस्तथा । विनिर्ययौ नागपुराद्गदाग्रजो रथेन दिव्येन चतुर्भुजः स्वयं ।

रथे सुभद्रामधिरोप्य भाविनीं युधिष्ठिरस्यानुमते जनार्द्दनः । पितृष्वसुश्चापि तथा महाभुजो विनिर्ययौ पौरजनाभि

संवृतः ।

तमन्वयाद्वानरवर्य्यकेतनः ससात्यकिर्माद्रवतीसुतावपि । अगाधबुद्धिर्विदुरश्च माधवं स्वयञ्च भीमो गजराजविक्रमः ।

निवर्त्तयित्वा कुरुराष्ट्रवर्द्धनांस्ततः स सर्व्वान् विदुरञ्च वीर्य्यवान् । जनार्द्दनो दारुकमाह सत्वरः प्रचोदयाश्वानिति सात्यकिं

तथा ।

ततो ययौ शत्रुगणप्रमर्द्दनः शिनिप्रवीरानुगतो जनार्द्दनः । यथा निहत्यारिगणान् शतक्रतुर्दिवं तथानर्त्तपुरीं प्रताप

वान् । १५२५

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि कृष्णप्रयाणे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

॥ वैशम्पायन उवाच ॥ तथा प्रयान्तं वार्ष्णेयं द्वारकां भरतर्षभः । परिष्वज्य न्यवर्त्तन्त सानुयात्राः परन्तपाः ।

पुनः पुनश्च वार्ष्णेयं पर्य्यष्वजत फाल्गुनः । आचक्षुर्विषयाच्चैनं स ददर्श पुनः पुनः ।

कृच्छ्रेणैव तु तां पार्थो गोविन्दे विनिवेशितां । संजहार ततो दृष्टिं कृष्णश्चाप्यपराजितः ।

तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनः । बहून्यद्भुतकर्म्माणि तानि मे गदतः शृणु ।

वायुर्वेगेन महता रथस्य पुरतो ववौ । कुर्व्वन्निःशर्करं मार्गं विरजस्कमकण्टकं । १५३०

ववर्ष वासवश्चैव तोयं शुचि सुगन्धि च । दिव्यानि चैव पुष्पाणि पुरतः शार्ङ्गधन्वनः ।

स प्रयातो महाबाहुः समेषु मरुधन्वसु । ददर्शाथ मुनिश्रेष्ठमुतङ्कममितौजसं ।

स तं संपूज्य तेजस्वी मुनिं पृथुललोचनः । पूजितस्तेन च तदा पर्य्यपृच्छदनामयं ।

स पृष्टः कुशलन्तेन संपूज्य मधुसूदनं । उतङ्को ब्राह्मणश्रेष्ठस्ततः पप्रच्छ माधवं ।

कच्चित् शौरे त्वया गत्वा कुरुपाण्डवसद्म तत् । कृतं सौभ्रात्रमचलं तन्मे व्याख्यातुमर्हसि । १५३५

अपि सन्धाय तान् वीरानुपावृत्तोऽसि केशव । सम्बन्धिनः सुदयितान् सततं वृष्णिपुङ्गव ।

कच्चित् पाण्डुसुताः पञ्च धृतराष्ट्रस्य चात्मजाः । लोकेषु विहरिष्यन्ति त्वया सह परन्तप ।

स्वराष्ट्रेषु च राजानः कच्चित् प्राप्स्यन्ति वै सुखं । कौरवेषु प्रशान्तेषु त्वया नाथेन केशव ।

या मे संभावना तात त्वयि नित्यमवर्त्तत । अपि सा सफला तात कृता ते भरतान् प्रति ।

॥ श्रीभगवानुवाच ॥ कृतो यत्नो मया पूर्व्वं सौभ्रात्रे कौरवान् प्रति । नाशक्यन्त यदा साम्ये ते स्थापयितुमञ्जसा । १५४०

ततस्ते निधनं प्राप्ताः सर्वे ससुतबान्धवाः । न दिष्टमभ्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा ।

महर्षे विदितं भूयः सर्व्वमेतत्तवानघ । तेऽत्यक्रामन्मतिं मह्यं भीष्मस्य विदुरस्य च ।

ततो यमक्षयं जग्मुः समासाद्येतरेतरं । पञ्चैव पाण्डवाः शिष्टा हतामित्रा हतात्मजाः ।

धार्त्तराष्ट्राश्च निहताः सर्व्वे ससुतबान्धवाः । इत्युक्तवचने कृष्णे भृशं क्रोधसमन्वितः ।

उतङ्क इत्युवाचैनं रोषादुत्फुल्ललोचनः । ११११

॥ उतङ्क उवाच ॥ यस्मात् शक्तेन ते कृष्ण न त्राताः कुरुपुङ्गवाः । सम्बन्धिनः प्रियास्तस्मात् शप्स्येऽहं त्वामसंशयं ।

न च ते प्रसभं यस्मात्ते निगृह्य निवारिताः । तस्मान्मन्युपरीतस्त्वां शप्स्यामि मधुसूदन ।

त्वया शक्तेन हि सता मिथ्याचारेण माधव । ते परीताः कुरुश्रेष्ठा नश्यन्तः स्म ह्युपेक्षिताः ।

॥ वासुदेव उवाच ॥ शृणु मे विस्तरेणेदं यद्वक्ष्ये भृगुनन्दन । गृहाणानुनयञ्चापि तपस्वी ह्यसि भार्गव ।

श्रुत्वा च मे तदध्यात्मं मुञ्चेथाः शापमद्य वै । न च मां तपसाऽल्पेन शक्तोऽभिभवितुं पुमान् । ११२०

न च ते तपसो नाशमिच्छामि तपतां वर । तपस्ते सुमहद्दीप्तं गुरवश्चापि तोषिताः ।

कौमारं ब्रह्मचर्य्यन्ते जानामि द्विजसत्तम । दुःखार्ज्जितस्य तपसस्तस्मान्नेच्छामि ते व्ययं ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि उतङ्कोपाख्याने त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

॥ उतङ्क उवाच ॥ ब्रूहि केशव तत्त्वेन त्वमध्यात्ममनिन्दितं । श्रुत्वा श्रेयोऽभिधास्यामि शापं वा ते जनार्द्दन ।

॥ वासुदेव उवाच ॥ तमो रजश्च सत्त्वञ्च विद्धि भावान्मदाश्रयान् । तथा रुद्रान् वसून् वाऽपि विद्धि मत्प्रभवान् द्विज ।

मयि सर्व्वाणि भूतानि सर्व्वभूतेषु चाप्यहं । स्थित इत्यभिजानीहि मा तेऽभूदत्र संशयः । ११२५

तथा दैत्यगणान् सर्व्वान् यक्षगन्धर्व्वराक्षसान् । नागानप्सरसश्चैव विद्धि मत्प्रभवान् द्विज ।

सदसच्चैव यत् प्राहुरव्यक्तं व्यक्तमेव च । अक्षरञ्च क्षरञ्चैव सर्व्वमेतन्मदात्मकं ।

ये चाश्रमेषु वै धर्म्माश्चतुर्द्धा विदिता मुने । वैदिकानि च सर्व्वाणि विद्धि सर्व्वं मदात्मकं ।

असच्च सदसच्चैव यद्विश्वं सदसत्परं । मत्तः परतरं नास्ति देवदेवात् सनातनात् ।

ओङ्कारप्रभवान् वेदान् विद्धि मां त्वं भृगूद्वह । यूपं सोमं चरुं होमं त्रिदशाप्यायनं मखे । ११३०

होतारमपि हव्यञ्च विद्धि मां भृगुनन्दन । अध्वर्य्युः कल्पकश्चापि हविः परमसंस्कृतं ।

उद्गाता चापि मां स्तौति गीतघोषैर्महाध्वरे । प्रायश्चित्तेषु मां ब्रह्मन् शान्तिमङ्गलवाचकाः ।

स्तुवन्ति विश्वकर्म्माणं सततं द्विजसत्तम । मम विद्धि सुतं धर्म्ममग्रजं द्विजसत्तम ।

मानसं दयितं विप्र सर्व्वभूतदयात्मकं । तत्राहं वर्त्तमानैश्च निवृत्तैश्चैव मानवैः ।

बह्वीः संसरमाणो वै योनीर्व्वर्त्तामि सत्तम । धर्म्मसंरक्षणार्थाय धर्म्मसंस्थापनाय च । ११३५

तैस्तैर्व्वेशैश्च रूपैश्च त्रिषु लोकेषु भार्गव । अहं विष्णुरहं ब्रह्मा शक्रोऽथ प्रभवाव्ययः ।

भूतग्रामस्य सर्व्वस्य स्रष्टा संहार एव च । अधर्म्मे वर्त्तमानानां सर्व्वेषामहमच्युतः ।

धर्म्मस्य सेतुं बध्नामि चलिते चलिते युगे । तास्ता योनीः प्रविश्याहं प्रजानां हितकाम्यया ।

यदा त्वहं देवयोनौ वर्त्तामि भृगुनन्दन । तदाऽहं देववत् सर्व्वमाचरामि न संशयः ।

यदा गन्धर्वयोनौ वा वर्त्तामि भृगुनन्दन । तदा गन्धर्ववत् सर्वमाचरामि न संशयः । १६८०

नागयोनौ यदा चैव तदा वर्त्तामि नागवत् । यक्षराक्षसयोन्योश्च यथावद्विचराम्यहं ।

मानुष्ये वर्त्तमाने तु कृपणं याचिता मया । न च ते जातसंमोहा वचो ऽगृह्णन्त मोहिताः ।

भयञ्च महदुद्दिश्य त्रासिताः कुरवो मया । क्रुद्धेन भूत्वा च पुनर्यथावदनुदर्शिताः ।

ते ऽधर्मेणेह संयुक्ताः परीताः कालधर्मणा । धर्मेण निहता युद्धे गताः स्वर्गं न संशयः ।

लोकेषु पाण्डवाश्चैव गताः ख्यातिं द्विजोत्तम । एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि । १६८५

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि उतङ्कोपाख्याने चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

॥ उतङ्क उवाच ॥ अभिजानामि जगतः कर्त्तारं त्वां जनार्दन । नूनं भवत्प्रसादोऽयमिति मे नास्ति संशयः ।

चित्तञ्च सुप्रसन्नं मे त्वद्भावगतमच्युत । विनिवृत्तञ्च मे शापादिति विद्धि परन्तप ।

यदि त्वनुग्रहं कञ्चित्त्वत्तोऽर्हामि जनार्दन । द्रष्टुमिच्छामि ते रूपमैश्वरं तन्निदर्शय ।

॥ वैशम्पायन उवाच ॥ ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः । शाश्वतं वैष्णवं धीमान् ददृशे यद्धनञ्जयः ।

स ददर्श महात्मानं विश्वरूपं महाभुजं । सहस्रसूर्यप्रतिमं दीप्तिमत्पावकोपमं । १६९०

सर्वमाकाशमावृत्य तिष्ठन्तं सर्वतोमुखं । तं दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतं ।

विस्मयञ्च ययौ विप्रस्तं दृष्ट्वा परमेश्वरं ।

॥ उतङ्क उवाच ॥ विश्वकर्म्मन्नमस्ते ऽस्तु विश्वात्मन् विश्वसम्भव । पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः ।

द्यावापृथिव्योर्यन्मध्यं जठरेण तवावृतं । भुजाभ्यामावृताश्चाशास्त्वमिदं सर्वमच्युत ।

संहरस्व पुनर्देव रूपमक्षय्यमुत्तमं । पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छामि शाश्वतं । १६९५

॥ वैशम्पायन उवाच ॥ तमुवाच प्रसन्नात्मा गोविन्दो जनमेजय । वरं वृणीष्वेति तदा तमुतङ्कोऽब्रवीदिदं

पर्य्याप्त एष एवाद्य वरस्त्वत्तो महाद्युते । यत्ते रूपमिदं कृष्ण पश्यामि पुरुषोत्तम ।

तमब्रवीत् पुनः कृष्णो मा त्वमत्र विचारय । अवश्यमेतत् कर्त्तव्यममोघं दर्शनं मम ।

॥ उतङ्क उवाच ॥ अवश्यकरणीयञ्च यद्येतन्मन्यसे विभो । तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभं ।

ततः संहृत्य तत्तेजः प्रोवाचोतङ्कमीश्वरः । एष्टव्ये सति चिन्त्यो ऽहमित्युक्त्वा द्वारकां ययौ । १७००

ततः कदाचिद्भगवानुतङ्कस्तोयकाङ्क्षया । तृषितः परिचक्राम मरौ सस्मार चाच्युतं ।

ततो दिग्वाससं धीमान्मातङ्गं मलपङ्किनं । अपश्यत मरौ तस्मिन् श्वयूथपरिवारितं ।

भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणं । तस्याधः स्रोतसो ऽपश्यत् वारि भूरि द्विजोत्तमः ।

स्मरन्नेव च तं प्राह मातङ्गः प्रहसन्निव । एह्युतङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह ।

कृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाश्रितं । इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दत । १७०५

चिक्षेप च स तं धीमान् वाग्भिरुग्राभिरच्युतं । पुनः पुनश्च मातङ्गः पिबस्वेति तमब्रवीत् ।

न चापिबत् स सक्रोधः क्षुभितेनान्तरात्मना । स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना ।

श्वभिः सह महाराज तत्रैवान्तरधीयत । उतङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः ।

तेन प्रत्याख्यमात्मानं क्रोधेनाभिपरीतात्मना । अथ तेनैव मार्गेण शङ्खचक्रगदाधरः ।
आजगाम महाबुद्धिरुत्तङ्कश्चैनमब्रवीत् । न युक्तं तादृशं दातुं त्वया पुरुषसत्तम । १६१०
सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो । इत्युक्तवचनं तत्तु महाबुद्धिर्जनार्दनः ।
उत्तङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत् । यादृशेनेह रूपेण योग्यं दातुं धृतेन वै ।
तादृशं खलु ते दत्तं त्वं च तन्नावबुध्यथाः । मया त्वदर्थमुक्तो वै वज्रपाणिः पुरन्दरः ।
उत्तङ्कायामृतं देहि तोयरूपमिति प्रभुः । स मामुवाच देवेन्द्रो न मर्त्योऽमर्त्यतां व्रजेत् ।
अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन । अमृतं देयमित्येव मयोक्तः स शचीपतिः । १६१५
स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् । यदि देयमवश्यं वै मातङ्गोऽहं महामते ।
भूत्वाऽमृतं प्रदास्यामि भार्गवाय महात्मने । यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै ।
प्रदातुमेष गच्छामि भार्गवस्यामृतं विभो । प्रत्याख्यातस्त्वहं तेन दास्यामि न कथञ्चन ।
स तथा समयं कृत्वा तेन रूपेण वासवः । उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत् ।
चाण्डालरूपी भगवान् सुमहांस्ते व्यतिक्रमः । यत्तु शक्यं मया कर्तुं भूय एव तवेप्सितं । १६२०
तोयेप्सां तव दुर्धर्षां करिष्ये सफलामहं । येष्वहःसु च ते ब्रह्मन् सलिलेच्छा भविष्यति ।
तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः । रसवच्च प्रदास्यन्ति तोयं ते भृगुनन्दन ।
उत्तङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते । इत्युक्तः प्रीतिमान् विप्रः कृष्णेन स बभूव ह ।
अद्याप्युत्तङ्कमेघाश्च मरौ वर्षन्ति भारत ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि उत्तङ्कोपाख्याने पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ जनमेजय उवाच ॥ उत्तङ्कः केन तपसा संयुक्तो वै महामनाः । यः शापं दातुकामोऽभूद्विष्णवे प्रभविष्णवे । १६२५
॥ वैशम्पायन उवाच ॥ उत्तङ्को महता युक्तस्तपसा जनमेजय । गुरुभक्तः स तेजस्वी नान्यत् किञ्चिदपूजयत् ।
सर्व्वेषामृषिपुत्राणामेष चासीन्मनोरथः । औत्तङ्कीं गुरुवृत्तिं वै प्राप्नुयामेति भारत ।
गौतमस्य तु शिष्याणां बहूनां जनमेजय । उत्तङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा ।
स तस्य दमशौचाभ्यां विक्रान्तेन च कर्म्मणा । सम्यक् चैवोपचारेण गौतमः प्रीतिमानभूत् ।
अथ शिष्यसहस्राणि समनुज्ञातवानृषिः । उत्तङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत । १६३०
तं क्रमेण जरा तात प्रतिपेदे महामुनिं । न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः ।
ततः कदाचिद्राजेन्द्र काष्ठान्यानयितुं ययौ । उत्तङ्कः काष्ठभारञ्च महान्तं समुपानयत् ।
स तद्भाराभिभूतात्मा काष्ठभारमरिन्दम । निष्पिपेष क्षितौ राजन् परिश्रान्तो बुभुक्षितः ।
तस्य काष्ठे विलग्नाऽभूज्जटा रूप्यसमप्रभा । ततः काष्ठैः सह तदा पपात धरणीतले ।
ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भारत । दृष्ट्वा तां वयसोऽवस्थां रुरोदार्त्तस्वरस्तदा । १६३५
ततो गुरुसुता तस्य पद्मपत्रनिभानना । जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना ।
पितुर्निदेशाद्धर्म्मज्ञा शिरसाऽवनता तदा । तस्या निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः ।

न हि तानश्रुपातांस्तु शक्ता धारयितुं मही। गौतमस्त्वब्रवीद्विप्रमुतङ्कं प्रीतमानसः।
कस्मात्तात तवाद्येह शोकोत्तरमिदं मनः। स धीरं ब्रूहि विप्रर्षे श्रोतुमिच्छामि तत्त्वतः।
॥ उतङ्क उवाच ॥ भवद्गतेन मनसा भवत्प्रियचिकीर्षया। भवद्भक्तिगतेनेह भवद्भावानुगेन च।
जरेयं नावबुद्धा मे नाभिज्ञातं सुखञ्च मे। शतवर्षोषितं मां हि न त्वमभ्यनुजानिथाः।
भवता त्वभ्यनुज्ञाताः शिष्याः प्रत्यवरा मम। उपपन्ना द्विजश्रेष्ठाः शतशोऽथ सहस्रशः।
॥ गौतम उवाच ॥ त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव। व्यतिक्रामन्महाकालो नावबुद्धो द्विजर्षभ।
किन्त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव। अनुज्ञां प्रतिगृह्य त्वं स्वगृहान् गच्छ मा चिरं।
॥ उतङ्क उवाच ॥ गुर्व्वर्थं कं प्रयच्छामि ब्रूहि त्वं द्विजसत्तम। तमुपाहृत्य गच्छेयमनुज्ञातस्त्वया विभो।
॥ गौतम उवाच ॥ दक्षिणा परितोषो वै गुरूणां सद्भिरुच्यते। तव ह्याचरतो ब्रह्मन् तुष्टोऽहं वै न संशयः।
इत्थञ्च परितुष्टं मां विजानीहि भृगूद्वह। युवा षोडशवर्षो हि यदद्य भविता भवान्।
ददानि पत्नीं कन्याञ्च स्वां ते दुहितरं द्विज। एतामृते हि नान्या त्वत्तेजोऽर्हति सेवितुं।
ततस्तां प्रतिजग्राह युवा भूत्वा यशस्विनीं। गुरुणा चाभ्यनुज्ञातो गुरुपत्नीमथाब्रवीत्।
किं भवत्यै प्रयच्छामि गुर्व्वर्थं विनियुङ्क्ष्व मां। प्रियं हितञ्च काङ्क्षामि प्राणैरपि धनैरपि।
यद्दुर्लभं हि लोकेऽस्मिन् रत्नमत्यद्भुतं महत्। तदानयेयं तपसा न हि मेऽत्रास्ति संशयः।
॥ अहल्योवाच ॥ परितुष्टाऽस्मि ते विप्र नित्यं भक्त्याऽनयाऽनघ। पर्य्याप्तमेतद्भद्रन्ते गच्छ तात यथेप्सितं।
॥ वैशम्पायन उवाच ॥ उतङ्कस्तु महाराज पुनरेवाब्रवीद्वचः। आज्ञापयस्व मां मातः कर्त्तव्यं हि तव प्रियं।
॥ अहल्योवाच ॥ सौदासपत्नीविधृते दिव्ये ये मणिकुण्डले। ते समानय भद्रन्ते गुर्व्वर्थः सुकृतो भवेत्।
स तथेति प्रतिश्रुत्य जगाम जनमेजय। गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा।
स जगाम ततः शीघ्रमुतङ्को ब्राह्मणर्षभः। सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले।
गौतमस्त्वब्रवीत् पत्नीमुतङ्को नाद्य दृश्यते। इति पृष्टा तमाचष्ट कुण्डलार्थं गतञ्च सा।
ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतं। शप्तः स पार्थिवो नूनं ब्राह्मणं तं वधिष्यति।
॥ अहल्योवाच ॥ अजानन्त्या नियुक्तः स भगवन् ब्राह्मणो मया। भवत्प्रसादान्न भयं किञ्चित्तस्य भविष्यति।
इत्युक्तः प्राह तां पत्नीमेवमस्त्विति गौतमः। उतङ्कोऽपि वने शून्ये राजानं तं ददर्श ह।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि उतङ्कोपाख्याने षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ वैशम्पायन उवाच ॥ स तं दृष्ट्वा तथाभूतं राजानं घोरदर्शनं। दीर्घश्मश्रुधरं नॄणां शोणितेन समुक्षितं।
चकार न व्यथां विप्रो राजा त्वेनमथाब्रवीत्। प्रत्युत्थाय महातेजा भयकर्त्ता यमोपमः।
दिष्ट्या त्वमसि कल्याण षष्ठे काले ममान्तिकं। भक्ष्यं मृगयमाणस्य सम्प्राप्तो द्विजसत्तम।
॥ उतङ्क उवाच ॥ राजन् गुर्व्वर्थिनं विद्धि चरन्तं मामिहागतं। न च गुर्व्वर्थमुद्युक्तं हिंस्यमाहुर्मनीषिणः।
॥ राजोवाच ॥ षष्ठे काले ममाहारो विहितो द्विजसत्तम। न शक्यस्त्वं समुत्स्रष्टुं क्षुधितेन मयाऽद्य वै।
॥ उतङ्क उवाच ॥ एवमस्तु महाराज समयः क्रियतान्तु मे। गुर्व्वर्थमभिनिर्व्वर्त्त्य पुनरेष्यामि ते वशं।

संश्रुतश्च मया योऽर्थो गुरवे राजसत्तम । त्वदधीनः स राजेन्द्र तं त्वां भिक्षे नरेश्वर ।
ददासि विप्रमुख्येभ्यस्त्वं हि रत्नानि नित्यदा । दाता च त्वं नरव्याघ्र पात्रभूतः क्षिताविह ।
पात्रं प्रतिग्रहे चापि विद्धि मां नृपसत्तम । उपाकृत्य गुरोरर्थं त्वदायत्तमरिन्दम ।
समयेनेह राजेन्द्र पुनरेष्यामि ते वशं । सत्यं ते प्रतिजानामि नात्र मिथ्या कथञ्चन ।  १६७०
अनृतं नोक्तपूर्व्वं मे स्वैरेष्वपि कुतोऽन्यथा ।
॥ सौदास उवाच ॥ यदि मत्तस्त्वदायत्तो गुर्व्वर्थः कृत एव सः । यदि चास्मि प्रतिग्राह्यः साम्प्रतं तद्वदस्व मे ।
॥ उतङ्क उवाच ॥ प्रतिग्राह्यो मतो मे त्वं सदैव पुरुषर्षभ । सोऽहं त्वामनुसंप्राप्तो भिक्षितुं मणिकुण्डले ।
॥ सौदास उवाच ॥ पत्न्यास्ते मम विप्रर्षे उचिते मणिकुण्डले । वरयार्थं त्वमन्यं वै तत्ते दास्यामि सुव्रत ।
॥ उतङ्क उवाच ॥ अलन्ते व्यपदेशेन प्रमाणा यदि ते वयं । प्रयच्छ कुण्डले मह्यं सत्यवाग्भव पार्थिव ।  १६७५
॥ वैशम्पायन उवाच ॥ इत्युक्तस्त्वब्रवीद्राजा तमुतङ्कं पुनर्व्वचः । गच्छ मद्वचनाद्देवीं ब्रूहि देहीति सत्तम ।
सैवमुक्ता त्वया नूनं मद्वाक्येन शुचिस्मिता । प्रदास्यति द्विजश्रेष्ठ कुण्डले ते न संशयः ।
॥ उतङ्क उवाच ॥ क्व पत्नी भवतः शक्या मया द्रष्टुं नरेश्वर । स्वयञ्चापि भवान् पत्नीं किमर्थं नोपसर्पति ।
॥ सौदास उवाच ॥ तां द्रक्ष्यति भवानद्य कस्मिंश्चिद्वननिर्झरे । षष्ठे काले न हि मया सा शक्या द्रष्टुमद्य वै ।
॥ सौदास उवाच ॥ उतङ्कस्तु तथोक्तः स जगाम भरतर्षभ । मदयन्तीञ्च दृष्ट्वा सो ज्ञापयत् स्वं प्रयोजनं ।  १६८०
सौदासवचनं श्रुत्वा ततः सा पृथुलोचना । प्रत्युवाच महाबुद्धिमुतङ्कं जनमेजय ।
एवमेतद्ब्रह्मन्नानृतं वदसेऽनघ । अभिज्ञानन्तु किञ्चित्त्वं समानयितुमर्हसि ।
इमे हि दिव्ये मणिकुण्डले मे देवाश्च यक्षाश्च महर्षयश्च । तैस्तैरुपायैरपहर्त्तुकामाश्छिद्रेषु नित्यं परितर्कयन्ति ।
निक्षिप्तमेतद्भुवि पन्नगास्तु रत्नं समासाद्य परामृषेयुः । यक्षास्तथोच्छिष्टधृतं सुराश्च निद्रावशाद्वा परिधर्षयेयुः ।
छिद्रेष्वेतेष्विमे नित्यं ह्रियेते द्विजसत्तम । देवराक्षसनागानामप्रमत्तेन धार्य्यते ।  १६८५
स्यन्देते हि दिवा रुक्मं रात्रौ च द्विजसत्तम । नक्तं नक्षत्रताराणां प्रभामाक्षिप्य वर्त्तते ।
एते ह्यामुच्य भगवन् क्षुत्पिपासाभयं कुतः । विषाग्निश्वापदेभ्यश्च भयं जातु न विद्यते ।
ह्रस्वेन चैते आमुक्ते भवतो ह्रस्वके तदा । अनुरूपेण चामुक्ते जायेते तत्प्रमाणके ।
एवंविधे ममैते वै कुण्डले परमार्च्चिते । त्रिषु लोकेषु विज्ञाते तदभिज्ञानमानय ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि उतङ्कोपाख्याने सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ वैशम्पायन उवाच ॥ स मित्रसहमासाद्य अभिज्ञानमयाचत । तस्मै ददावभिज्ञानं स चेक्ष्वाकुवरस्तदा ।  १६९०
॥ सौदास उवाच ॥ न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः । एतन्मे मतमाज्ञाय प्रयच्छ मणिकुण्डले ।
इत्युक्तस्तामुतङ्कस्तु भर्त्तुर्वाक्यमथाब्रवीत् । श्रुत्वा च सा तदा प्रादात्ततस्ते मणिकुण्डले ।
अवाप्य कुण्डले ते तु राजानं पुनरब्रवीत् । किमेतद्गुह्यवचनं श्रोतुमिच्छामि पार्थिव ।
॥ सौदास उवाच ॥ प्रजानिसर्गाद्विप्रान् वै क्षत्रियाः पूजयन्ति हि । विप्रेभ्यश्चापि बहवो दोषाः प्रादुर्भवन्ति वै ।
सोऽहं द्विजेभ्यः प्रणतो विप्राद्दोषमवाप्तवान् । गतिमन्यां न पश्यामि मदयन्तीसहायवान् ।  १६९५

न चान्यामपि पश्यामि गतिं गतिमतांवर । स्वर्गद्वारस्य गमने स्थाने चेह द्विजोत्तम ।
न हि राज्ञा विशेषेण विरुद्धेन द्विजातिभिः । शक्यं हि लोके स्थातुं वै प्रेत्य वा सुखमेधितुं ।
तदिष्टे ते मया दत्ते एते स्वे मणिकुण्डले । यः कृतस्तेऽद्य समयः सफलं तं कुरुष्व मे ।
॥ उतङ्क उवाच ॥ राजंस्तथेह कर्त्तास्मि पुनरेष्यामि ते वशं । प्रश्नञ्च किञ्चित् प्रष्टुं त्वां निवृत्तोऽस्मि परन्तप ।
॥ सौदास उवाच ॥ ब्रूहि विप्र यथाकामं प्रतिवक्तास्मि ते वचः । छेत्तास्मि संशयं तेऽद्य न मेऽत्रास्ति विचारणा । १७००
॥ उतङ्क उवाच ॥ प्राहुर्वाक्संयतं विप्रं धर्म्मनैपुणदर्शिनः । मित्रेषु यश्च विषमस्तेन इत्येव तं विदुः ।
स भवान् मित्रतामद्य संप्राप्तो मम पार्थिव । स मे बुद्धिं प्रयच्छ त्वं सम्मतां पुरुषर्षभ ।
अवाप्तार्थोऽहमद्येह भवांश्च पुरुषादकः । भवत्सकाशमागन्तुं क्षमं मम न वेति वै ।
॥ सौदास उवाच ॥ क्षमं चेदिह वक्तव्यं तव द्विजवरोत्तम । मत्समीपं द्विजश्रेष्ठ नागन्तव्यं कथञ्चन ।
एवं तव प्रपश्यामि श्रेयो भृगुकुलोद्वह । आगच्छतो हि ते विप्र भवेन्मृत्युर्न संशयः । १७०५
॥ वैशम्पायन उवाच ॥ इत्युक्तः स तदा राज्ञा क्षमं बुद्धिमता हितं । अनुज्ञाप्य स राजानमहल्यां प्रति जग्मिवान् ।
गृहीत्वा कुण्डले दिव्ये गुरुपत्न्याः प्रियङ्करः । जवेन महता प्रायात् गौतमस्याश्रमं प्रति ।
यथा तयो रक्षणञ्च मदयन्त्याऽभिभाषितं । तथा ते कुण्डले बद्ध्वा तदा कृष्णाजिनेऽनयत् ।
स कस्मिंश्चित् क्षुधाविष्टः फलभारसमन्वितं । बिल्वं ददर्श विप्रर्षिरारुरोह च तं ततः ।
शाखामासज्य तस्यैव कृष्णाजिनमरिन्दम । पातयामास बिल्वानि तदा स द्विजपुङ्गवः । १७१०
अथ पातयमानस्य बिल्वापहृतचक्षुषः । न्यपतंस्तानि बिल्वानि तस्मिन्नेवाजिने विभो ।
यस्मिंस्ते कुण्डले बद्धे तदा द्विजवरेण वै । बिल्वप्रहारैस्तस्याथ व्यशीर्य्यद्बन्धनं ततः ।
सकुण्डलं तदजिनं पपात सहसा तरोः । विशीर्णबन्धने तस्मिन् गते कृष्णाजिने महीं ।
अपश्यद्भुजगः कश्चित्ते तत्र मणिकुण्डले । ऐरावतकुलेत्पन्नः शीघ्रो भूत्वा तदा हि सः ।
विदश्यास्येन वल्मीकं विवेशाथ स कुण्डले । ह्रियमाणे तु दृष्ट्वा स कुण्डले भुजगेन ह । १७१५
पपात वृक्षात् सोद्वेगो दुःखात् परमकोपनः । स दण्डकाष्ठमादाय वल्मीकमखनत्तदा ।
अहानि त्रिंशदव्यग्रः पञ्च चान्यानि भारत । क्रोधामर्षाभिसन्तप्तस्तदा ब्राह्मणसत्तमः ।
तस्य वेगमसह्यन्तमसहन्ती वसुन्धरा । दण्डकाष्ठाभिनुन्नाङ्गी चचाल भृशमाकुला ।
ततः खनत एवाथ विप्रर्षेर्धरणीतलं । नागलोकस्य पन्थानं कर्त्तुकामस्य निश्चयात् ।
रथेन हरियुक्तेन तं देशमुपजग्मिवान् । वज्रपाणिर्महातेजास्तं ददर्श द्विजोत्तमं । १७२०
॥ वैशम्पायन उवाच ॥ स तु तं ब्राह्मणो भूत्वा तस्य दुःखेन दुःखितः । उतङ्कमब्रवीद्वाक्यं नैतच्छक्यं त्वयेति वै ।
इतो हि नागलोको वै योजनानि सहस्रशः । न दण्डकाष्ठसाध्यञ्च मन्ये कार्य्यमिदं तव ।
॥ उतङ्क उवाच ॥ नागलोके यदि ब्रह्मन्न शक्ये कुण्डले मया । प्राप्तुं प्राणान् विमोक्ष्यामि पश्यतस्ते द्विजोत्तम ।
॥ वैशम्पायन उवाच ॥ यदा स नाशकत्तस्य निश्चयं कर्त्तुमन्यथा । वज्रपाणिस्तदा दण्डं वज्रास्त्रेण युयोज ह ।
ततो वज्रप्रहारैस्तैर्दार्य्यमाणा वसुन्धरा । नागलोकस्य पन्थानमकरोज्जनमेजय । १७२५

स तेन मार्गेण तदा नागलोकं विवेश ह। ददर्श नागलोकञ्च योजनानि सहस्रशः।
प्राकारनिचयैर्दिव्यैर्मणिमुक्ताभ्यलङ्कृतैः। उपपन्नं महाभाग शातकुम्भमयैस्तथा।
वापीः स्फटिकसोपाना नदीश्च विमलोदकाः। ददर्श वृक्षांश्च बहून् नानाद्विजगणायुतान्।
तस्य लोकस्य च द्वारं स ददर्श भृगूद्वह। पञ्चयोजनविस्तारमायतं शतयोजनम्।
नागलोकमुतङ्कस्तु प्रेक्ष्य दीनोऽभवत्तदा। निराशश्चाभवत्तत्र कुण्डलाहरणे पुनः। १७३०
तत्र प्रोवाच तुरगस्तं कृष्णश्वेतवालधिः। ताम्रास्यनेत्रः कौरव्य प्रज्वलन्निव तेजसा।
धमस्वापानमेतन्मे ततस्त्वं प्रविलप्स्यसे। ऐरावतसुतेनेह तवानीते हि कुण्डले।
मा जुगुप्सां कृथाः पुत्र त्वमत्रार्थे कथञ्चन। त्वयैतद्धि समाचीर्णं गौतमस्याश्रमे तदा।
॥ उतङ्क उवाच ॥ कथं भवन्तं जानीयामुपाध्यायाश्रमं प्रति। यन्मया चीर्णपूर्व्वं हि श्रोतुमिच्छामि तद्ध्यहं।
॥ अश्व उवाच ॥ गुरोर्गुरुं मां जानीहि ज्वलन्तं जातवेदसं। त्वया ह्यहं सदा विप्र गुरोरर्थेऽभिपूजितः। १७३५
विधिवत् सततं विप्र शुचिना भृगुनन्दन। तस्मात् श्रेयो विधास्यामि तवैव कुरु मा चिरं।
इत्युक्तस्तु तथाऽकार्षीदुतङ्कश्चित्रभानुना। घृतार्च्चिः प्रीतिमांश्चापि प्रजज्वाल दिधक्षया।
ततोऽस्य रोमकूपेभ्यो ध्मायमानस्य भारत। घनः प्रादुरभूद्धूमो नागलोकभयावहः।
तेन धूमेन महता वर्द्धमानेन भारत। नागलोके महाराज न प्राज्ञायत किञ्चन।
हाहाकृतमभूत्सर्व्वमैरावतनिवेशनं। वासुकिप्रमुखानाञ्च नागानां जनमेजय। १७४०
न प्रकाशन्त वेश्मानि धूमरुद्धानि भारत। नीहारसंवृतानीव वनानि गिरयस्तथा।
ते धूमरक्तनयना वह्नितेजोऽभितापिताः। आजग्मुर्निश्चयं ज्ञातुं भार्गवस्य महात्मनः।
श्रुत्वा च निश्चयं तस्य महर्षेरतितेजसः। सम्भ्रान्तनयनाः सर्व्वे पूजाञ्चक्रुर्यथाविधि।
सर्व्वे प्राञ्जलयो नागा वृद्धबालपुरोगमाः। शिरोभिः प्रणिपत्योचुः प्रसीद भगवन्निति।
प्रसाद्य ब्राह्मणं ते तु पाद्यमर्घ्यं निवेद्य च। प्रायच्छन् कुण्डले दिव्ये पन्नगाः परमार्च्चिते। १७४५
ततः स पूजितो नागैस्तत्रोतङ्कः प्रतापवान्। अग्निं प्रदक्षिणं कृत्वा जगाम गुरुसद्म तत्।
स गत्वा त्वरितो राजन् गौतमस्य निवेशनं। प्रायच्छत् कुण्डले दिव्ये गुरुपत्न्यास्तदाऽनघ।
वासुकिप्रमुखानाञ्च नागानां जनमेजय। सर्व्वं शशंस गुरवे यथावद्द्विजसत्तमः।
एवं महात्मना तेन त्रीन् लोकान् जनमेजय। परिक्रम्याहृते दिव्ये ततस्ते मणिकुण्डले।
एवंप्रभावः स मुनिरुतङ्को भरतर्षभ। परेण तपसा युक्तो यन्मां त्वं परिपृच्छसि। १७५०

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि उतङ्कोपाख्याने अष्टपञ्चाशोऽध्यायः ॥ ५८॥

॥ जनमेजय उवाच ॥ उतङ्काय वरं दत्त्वा गोविन्दो द्विजसत्तम। अत ऊर्द्ध्वं महाबाहुः किञ्चकार महायशाः।
॥ वैशम्पायन उवाच ॥ दत्त्वा वरमुतङ्काय प्रायात् सात्यकिना सह। द्वारकामेव गोविन्दः शीघ्रवेगैर्महाहयैः।
सरांसि सरितश्चैव वनानि च गिरींस्तथा। अतिक्रम्याससादाथ रम्यां द्वारवतीं पुरीं।
वर्त्तमाने महाराज महे रैवतकस्य च। उपायात् पुण्डरीकाक्षो युयुधानानुगस्तदा।

अलङ्कृतस्तु स गिरिर्नानारूपैर्विचित्रितैः । बभौ रत्नमयैः कोषैः संवृतः पुरुषर्षभ । १७४५
काञ्चनस्रग्भिरग्र्याभिः सुमनोभिस्तथैव च । वासोभिश्च महाशैलः कल्पवृक्षैस्तथैव च ।
दीपवृक्षैश्च सौवर्णैरभीक्ष्णमुपशोभितः । गुहानिर्झरदेशेषु दिवाभूतो बभूव ह ।
पताकाभिर्विचित्राभिः सघण्टाभिः समन्ततः । पुम्भिः स्त्रीभिश्च संघुष्टः प्रगीत इव चाभवत् ।
अतीव प्रेक्षणीयोऽभून्मेरुर्मुनिगणैरिव । मत्तानां हृष्टरूपाणां स्त्रीणां पुंसाञ्च भारत ।
गायतां पर्व्वतेन्द्रस्य दिवस्पृगिव निःस्वनः । प्रमत्तमत्तसम्मत्तक्ष्वेडितोत्कृष्टसङ्कुलः । १७५०
तथा किलकिलाशब्दैर्भूधरोऽभून्मनोहरः । विपणापणवान् रम्यो भक्ष्यभोज्यविहारवान् ।
वस्त्रमाल्योत्करयुतो वीणावेणुमृदङ्गवान् । सुरामैरेयमिश्रेण भक्ष्यभोज्येन चैव ह ।
दीनान्धकृपणादिभ्यो दीयमानेन चानिशं । बभौ परमकल्याणो महस्तस्य महागिरेः ।
पुण्यावसथवान् वीर पुण्यकृद्भिर्निषेवितः । विहारो वृष्णिवीराणां महे रैवतकस्य ह ।
स नगो वेश्मसंकीर्णो देवलोक इवाबभौ । तदा च कृष्णसान्निध्यमासाद्य भरतर्षभ । १७५५
शक्रसद्मप्रतीकाशो बभूव स हि शैलराट् । ततः संपूज्यमानः स विवेश भवनं शुभं ।
गोविन्दः सात्यकिश्चैव जगाम भवनं स्वकं । विवेश च प्रहृष्टात्मा चिरकालप्रवासतः ।
कृत्वा नसुकरं कर्म्म दानवेष्विव वासवः । उपयातन्तु वार्ष्णेयं भोजवृष्ण्यन्धकास्तथा ।
अभ्यगच्छन्महात्मानं देवा इव शतक्रतुं । स तानभ्यर्च्च्य मेधावी पृष्ट्वा च कुशलं तदा ।
अभ्यवादयदप्रीतः पितरं मातरन्तथा । ताभ्यां स सम्परिष्वक्तः सान्त्वितश्च महाभुजः । १७६०
उपोपविष्टः सर्व्वैस्तैर्वृष्णिभिः परिवारितः । स विश्रान्तो महातेजाः कृतपादावनेजनः ।
कथयामास तत् सर्व्वं पृष्टः पित्रा महाहवं ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि कृष्णस्य द्वारकाप्रवेशे ऊनषष्टोऽध्यायः ॥ ५९ ॥

॥ वसुदेव उवाच ॥ श्रुतवानस्मि वार्ष्णेय संग्रामं परमाद्भुतं । नराणां वदतां तत्र कथं वा तेषु नित्यशः ।
त्वन्तु प्रत्यक्षदर्शी च रूपज्ञश्च महाभुजः । तस्मात् प्रब्रूहि संग्रामं याथातथ्येन मेऽनघ ।
यथा तदभवद्युद्धं पाण्डवानां महात्मनां । भीष्मकर्णकृपद्रोणशल्यादिभिरनुत्तमं । १७६५
अन्येषां क्षत्रियाणाञ्च कृतास्त्राणामनेकशः । नानादेशकृतिमतां नानादेशनिवासिनां ।
॥ वैशम्पायन उवाच ॥ इत्युक्तः पुण्डरीकाक्षः पित्रा मातुस्तदन्तिके । शशंस कुरुवीराणां संग्रामे निधनं यथा ।
॥ वासुदेव उवाच ॥ अत्यद्भुतानि कर्म्माणि क्षत्रियाणां महात्मनां । बहुलत्वान्न संख्यातुं शक्यान्यब्दशतैरपि ।
प्राधान्यतस्तु गदतः समासेनैव मे शृणु । कर्म्माणि पृथिवीशानां यथावदमरद्युते ।
भीष्मः सेनापतिरभूदेकादशचमूपतिः । कौरव्यः कौरवेन्द्राणां देवानामिव वासवः । १७७०
शिखण्डी पाण्डुपुत्राणां नेता सप्तचमूपतिः । बभूव रक्षितो धीमान् श्रीमता सव्यसाचिना ।
तेषां तदभवद्युद्धं दशाहानि महात्मनां । कुरूणां पाण्डवानाञ्च सुमहल्लोमहर्षणं ।
ततः शिखण्डी गाङ्गेयं युध्यमानं महाहवे । जघान बहुभिर्बाणैः सह गाण्डीवधन्वना ।

अकरोत् स ततः कालं शरतल्पगतो मुनिः । अयनं दक्षिणं हित्वा संप्राप्ते चोत्तरायणे ।
ततः सेनापतिरभूद्द्रोणोऽस्त्रविदुषां वरः । प्रवीरः कौरवेन्द्रस्य काव्यो दैत्यपतेरिव । १७८५
अक्षौहिणीभिः शिष्टाभिर्नवभिर्द्विजसत्तमः । संवृतः समरश्लाघी गुप्तः कृपवृषादिभिः ।
धृष्टद्युम्नस्त्वभून्नेता पाण्डवानां महास्त्रवित् । गुप्तो भीमेन मेधावी मित्रेण वरुणो यथा ।
स च सेनापरिवृतो द्रोणप्रेप्सुर्महामनाः । पितुर्निकारान् संस्मृत्य रणे कर्माकरोन्महत् ।
तस्मिंस्ते पृथिवीपाला द्रोणपार्षतसङ्गरे । नानादिगागता वीराः प्रायशो निधनं गताः ।
दिनानि पञ्च तद्युद्धमभूत् परमदारुणं । ततो द्रोणः परिश्रान्तो धृष्टद्युम्नवशं गतः । १७९०
ततः सेनापतिरभूत् कर्णो दौर्य्योधने बले । अक्षौहिणीभिः शिष्टाभिर्वृतः पञ्चभिराहवे ।
तिस्रस्तु पाण्डुपुत्राणां चम्वो बीभत्सुपालिताः । हतप्रवीरभूयिष्ठा बभूवुः समरस्थिताः ।
ततः पार्थं समासाद्य पतङ्ग इव पावकं । पञ्चत्वमगमत् सौतिर्द्वितीयेऽहनि दारुणः ।
हते कर्णे तु कौरव्या निरुत्साहा हतौजसः । अक्षौहिणीभिस्तिसृभिर्मद्रेशं पर्य्यवारयन् ।
हतवाहनभूयिष्ठाः पाण्डवापि युधिष्ठिरं । अक्षौहिण्या निरुत्साहाः शिष्टया पर्य्यवारयन् । १७९५
अवधीन्मद्रराजानं कुरुराजो युधिष्ठिरः । तस्मिंस्तथाऽर्द्धदिवसे कृत्वा कर्म सुदुष्करं ।
हते शल्ये च शकुनिं सहदेवो महामनाः । आहर्त्तारं कलेरस्य जघानामितविक्रमः ।
निहते शकुनौ राजा धार्त्तराष्ट्रः सुदुर्म्मनाः । अपाक्रामद्गदापाणिर्हतभूयिष्ठसैनिकः ।
तमन्वधावन् संक्रुद्धो भीमसेनः प्रतापवान् । ह्रदे द्वैपायने चापि सलिलस्थं ददर्श तं ।
हतशिष्टेन सैन्येन समन्तात् परिवार्य्य तं । अथोपविविशुर्हृष्टा ह्रदस्थं पञ्च पाण्डवाः । १८००
विगाह्य सलिलं त्वाशु वाग्बाणैर्भृशविक्षतः । उत्थाय स गदापाणिर्युद्धाय समुपस्थितः ।
ततः स निहतो राजा धार्त्तराष्ट्रो महारणे । भीमसेनेन विक्रम्य पश्यतां पृथिवीक्षितां ।
ततस्तत्पाण्डवं सैन्यं प्रसुप्तं शिबिरे निशि । निहतं द्रोणपुत्रेण पितुर्वधममृष्यता ।
हतपुत्रा हतबला हतमित्रा मया सह । युयुधानसहायेन पञ्च शिष्टास्तु पाण्डवाः ।
सहैव कृपभोजाभ्यां द्रौणिर्युद्धादमुच्यत । युयुत्सुश्चापि कौरव्यो मुक्तः पाण्डवसंश्रयात् । १८०५
निहते कौरवेन्द्रे तु सानुबन्धे सुयोधने । विदुरः सञ्जयश्चैव धर्म्मराजमुपस्थितौ ।
एवं तदभवद्युद्धमहान्यष्टादश प्रभो । यत्र ते पृथिवीपाला निहताः स्वर्गमावसन् ।
॥ वैशम्पायन उवाच ॥ शृण्वतान्तु महाराज कथां तां लोमहर्षणां । दुःखशोकपरिक्लेशा वृष्णीनामभवंस्तदा ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि वासुदेववाक्ये षष्टितमोऽध्यायः ॥ ६० ॥
॥ वैशम्पायन उवाच ॥ कथयन्नेव तु तदा वासुदेवः प्रतापवान् । महाभारतयुद्धं तत् कथान्ते पितुरग्रतः ।
अभिमन्योर्वधं वीर सोऽत्यक्रामन्महामतिः । अप्रियं वसुदेवस्य माभूदिति महामतिः । १८१०
मा दौहित्रवधं श्रुत्वा वसुदेवो महात्ययं । दुःखशोकाभिसन्तप्तो भवेदिति महामतिः ।
सुभद्रा तु तमुत्क्रान्तमात्मजस्य वधं रणे । आचक्ष्व कृष्ण सौभद्रवधमित्यपतद्भुवि ।

तामपश्यन्निपतितां वसुदेवः क्षितौ तदा । दृष्ट्वैव च पपातोर्व्व्यां सोऽपि दुःखेन मूर्च्छितः ।
ततः स दौहित्रवधदुःखशोकसमाहतः । वसुदेवो महाराज कृष्णं वाक्यमथाब्रवीत् ।
ननु त्वं पुण्डरीकाक्ष सत्यवाग्भुवि विश्रुतः । यद्दौहित्रवधं मेऽद्य न ख्यापयसि शत्रुहन् । १८०५
तद्भागिनेयनिधनं तत्त्वेनाचक्ष्व मे प्रभो । सदृशस्तव कथं शत्रुभिर्निहतो रणे ।
दुर्म्मरं बत वार्ष्णेय कालेऽप्राप्ते नृभिः सह । यत्र मे हृदयं दुःखात् शतधा न विदीर्य्यते ।
किमब्रवीत्त्वां संग्रामे सुभद्रां मातरं प्रति । मां चापि पुण्डरीकाक्ष चपलाक्षः प्रियो मम ।
आहवं पृष्ठतः कृत्वा कच्चिन्न निहतः परैः । कच्चिन्मुखं न गोविन्द तेनाजौ विकृतं कृतं ।
स हि कृष्ण महातेजाः श्लाघन्निव ममाग्रतः । बालभावेन विजयमात्मनोऽकथयत् प्रभुः । १८१०
कच्चिन्न निकृतो बालो द्रोणकर्णकृपादिभिः । धरण्यां निहतः शेते तन्ममाचक्ष्व केशव ।
स हि द्रोणञ्च भीष्मञ्च कर्णञ्च बलिनां वरं । स्पर्द्धते स्म रणे नित्यं दुहितुः पुत्रको मम ।
एवंविधं बहु तदा विलपन्तं सुदुःखितं । पितरं दुःखिततरो गोविन्दो वाक्यमब्रवीत् ।
न तेन विकृतं वक्त्रं कृतं संग्राममूर्द्धनि । न पृष्ठतः कृतश्चापि संग्रामस्तेन दुस्तरः ।
निहत्य पृथिवीपालान् सहस्रशतसंघशः । खेदितो द्रोणकर्णाभ्यां दौःशासनिवशं गतः । १८१५
एको ह्येकेन सततं युध्यमानो यदि प्रभो । न स शक्येत संग्रामे निहन्तुमपि वज्रिणा ।
समाहूते च संग्रामात् पार्थे संशप्तकैस्तदा । पर्य्यवार्य्यत संक्रुद्धैः स द्रोणादिभिराहवे ।
ततः शत्रुवधं कृत्वा सुमहान्तं रणे पितः । दौहित्रस्तव वार्ष्णेय दौःशासनिवशं गतः ।
नूनञ्च स गतः स्वर्गं जहि शोकं महामते । न हि व्यसनमासाद्य सीदन्ति कृतबुद्धयः ।
द्रोणकर्णप्रभृतयो येन प्रतिसमासिताः । रणे महेन्द्रप्रतिमाः स कथं नाप्नुयाद्दिवं । १८२०
स शोकं जहि दुर्द्धर्ष मा च मन्युवशं गमः । शस्त्रपूतां हि स गतिं गतः परपुरञ्जयः ।
तस्मिंस्तु निहते वीरे सुभद्रेयं स्वसा मम । दुःखार्त्ताऽथो पृथां प्राप्य कुररीव ननाद ह ।
द्रौपदीञ्च समासाद्य पर्य्यपृच्छत दुःखिता । आर्य्ये क्व दारकाः सर्व्वे द्रष्टुमिच्छामि तानहं ।
तस्यास्तु वचनं श्रुत्वा सर्व्वास्ताः कुरुयोषितः । भुजाभ्यां परिगृह्यैनां चुक्रुशुः परमार्त्तवत् ।
उत्तराञ्चाब्रवीद्भद्रे भर्त्ता स क्व नु ते गतः । क्षिप्रमागमनं मह्यं तस्य त्वं वेदयस्व ह । १८२५
ननु नामास्य वैराटि श्रुत्वा मम गिरं सदा । भवनान्निष्पतत्याशु कस्मान्नाभ्येति ते पतिः ।
अभिमन्यो कुशलिनो मातुलास्ते महारथाः । कुशलञ्चाब्रुवन् सर्व्वे त्वां युयुत्सुमिहागतं ।
आचक्ष्व मेऽद्य संग्रामं यथापूर्व्वमरिन्दम । कस्मादेवं विलपतीं नाद्येह प्रतिभाषसे ।
एवमादि तु वार्ष्णेय्यास्तस्यास्तत् परिदेवितं । श्रुत्वा पृथा सुदुःखार्त्ता शनैर्वाक्यमथाब्रवीत् ।
सुभद्रे वासुदेवेन यथा सात्यकिना रणे । पित्रा च लालितो बालः स हतः कालधर्म्मणा । १८३०
ईदृशो मर्त्यधर्म्मोऽयं मा शुचो यदुनन्दिनि । पुत्रो हि तव दुर्द्धर्षः सम्प्राप्तः परमां गतिं ।
कुले महति जाताऽसि क्षत्रियाणां महात्मनां । मा शुचश्चपलाक्षं त्वं पद्मपत्रनिभेक्षणे ।

उत्तरां समवेक्षस्व गुर्विणीं मा शुचः शुभे । पुत्रमेषा हि तस्याशु जनयिष्यति भाविनी ।
एवमाश्वासयित्वैनां कुन्ती यदुकुलोद्वह । विहाय शोकं दुर्द्धर्षं श्राद्धमस्य ह्यकल्पयत् ।
समनुज्ञाप्य धर्म्मज्ञा राजानं भीममेव च । यमौ यमोपमौ चैव ददौ दानान्यनेकशः । १८०१
ततः प्रदाय बह्वीर्गा ब्राह्मणाय यदूद्वह । समाहृष्यतु वार्ष्णेयी वैराटीमब्रवीदिदं ।
वैराटि नेह सन्तापस्त्वया कार्य्यो यशस्विनि । भर्त्तारं प्रति सुश्रोणि गर्भस्थं रक्ष वै शिशुं ।
एवमुक्त्वा ततः कुन्ती विरराम महाद्युते । तामनुज्ञाप्य चैवेमां सुभद्रां समुपानयं ।
एवं स निधनं प्राप्तो दौहित्रस्तव मानद । सन्तापं त्यज दुर्द्धर्ष मा च शोके मनः कृथाः ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि एकषष्टोऽध्यायः ॥ ६१ ॥

॥ वैशम्पायन उवाच ॥ एतत् श्रुत्वा तु पुत्रस्य वचः शूरात्मजस्तदा । विहाय शोकं धर्म्मात्मा ददौ श्राद्धमनुत्तमं । १८०६
तथैव वासुदेवश्च स्वस्रीयस्य महात्मनः । दयितस्य पितुर्नित्यमकरोदौर्द्ध्वदेहिकं ।
षष्टिं शतसहस्राणि ब्राह्मणानां महौजसां । विधिवद्भोजयामास भोज्यं सर्व्वगुणान्वितं ।
आच्छाद्य च महाबाहुर्धनतृष्णामपानुदत् । ब्राह्मणानां तदा कृष्णस्तदभूल्लोमहर्षणं ।
सुवर्णञ्चैव गाश्चैव शयनाच्छादनानि च । दीयमानं तदा विप्रा वर्द्धतामिति चाब्रुवन् ।
वासुदेवोऽथ दाशार्हो बलदेवः ससात्यकिः । अभिमन्योस्तदा श्राद्धमकुर्व्वन् सत्यकस्तदा । १८११
अतीव दुःखसन्तप्ता न शमं चोपलेभिरे । तथैव पाण्डवा वीरा नगरे नागसाह्वये ।
नोपागच्छन्त वै शान्तिमभिमन्युविनाकृताः । सुबहूनि च राजेन्द्र दिवसानि विराटजा ।
नाभुङ्क्त पतिदुःखार्त्ता तदाऽभूत् करुणं महत् । कुक्षिस्थ एव तस्याथ गर्भो वै सम्प्रलीयते ।
आजगाम ततो व्यासो ज्ञात्वा दिव्येन चक्षुषा । समागम्याब्रवीद्धीमान् पृथां पृथुललोचनां ।
उत्तराञ्च महातेजाः शोकः संत्यज्यतामयं । भविष्यति महातेजाः पुत्रस्तव यशस्विनि । १८२०
प्रभावाद्वासुदेवस्य मम व्याहरणादपि । पाण्डवानामयञ्चान्ते पालयिष्यति मेदिनीं ।
धनञ्जयञ्च सम्प्रेक्ष्य धर्म्मराजस्य शृण्वतः । व्यासो वाक्यमुवाचेदं हर्षयन्निव भारत ।
पौत्रस्तव महाभागो जनिष्यति महामनाः । पृथ्वीं सागरपर्य्यन्तां पालयिष्यति धर्म्मतः ।
तस्माच्छोकं कुरुश्रेष्ठ जहि त्वमरिकर्षण । विचार्य्यमत्र न हि ते सत्यमेतद्भविष्यति ।
यच्चापि वृष्णिवीरेण कृष्णेन कुरुनन्दन । पुरोक्तं तत्तथा भावि मा तेऽत्रास्तु विचारणा । १८२५
विबुधानां गतो लोकानक्षयानात्मनिर्ज्जितान् । न स शोच्यस्त्वया वीरो न चान्यैः कुरुभिस्तथा ।
एवं पितामहेनोक्तो धर्म्मात्मा स धनञ्जयः । त्यक्त्वा शोकं महाराज हृष्टरूपोऽभवत्तदा ।
पिताऽपि तव धर्म्मज्ञ गर्भे तस्मिन्महामते । अवर्द्धत यथाकामं शुक्लपक्षे यथा शशी ।
ततः सञ्चोदयामास व्यासो धर्म्मात्मजं नृपं । अश्वमेधं प्रति तदा ततः सोऽन्तर्हितोऽभवत् ।
धर्म्मराजोऽपि मेधावी श्रुत्वा व्यासस्य तद्वचः । वित्तस्यानयने तात चकार गमने मतिं । १८३०
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि द्विषष्टोऽध्यायः ॥ ६२ ॥

॥ जनमेजय उवाच ॥ श्रुत्वैतद् वचनं ब्रह्मन् व्यासेनोक्तं महात्मना । अश्वमेधं प्रति तदा किं भूयः प्रचकार ह ।

रत्नञ्च यन्मरुत्तेन निहितं वसुधातले । तदवाप कथञ्चेति तन्मे ब्रूहि द्विजोत्तम ।

॥ वैशम्पायन उवाच ॥ श्रुत्वा द्वैपायनवचो धर्म्मराजो युधिष्ठिरः । भ्रातॄन् सर्व्वान् समानाय्य काले वचनमब्रवीत् ।

अर्ज्जुनं भीमसेनञ्च माद्रीपुत्रौ यमावपि । श्रुतं वो वचनं वीराः सौहृदाद् यन्महात्मना ।

कुरूणां हितकामेन प्रोक्तं कृष्णेन धीमता । तपोवृद्धेन महता सुहृदां भूतिमिच्छता । १८१५

गुरुणा धर्म्मशीलेन व्यासेनाद्भुतकर्म्मणा । भीष्मेण च महाप्राज्ञ गोविन्देन च धीमता ।

संस्मृत्य तदहं सम्यक् कर्त्तुमिच्छामि पाण्डवाः । आयत्याञ्च तदात्वे च सर्व्वेषां तद्धि नो हितं ।

अनुबन्धे च कल्याणं यद्वचो ब्रह्मवादिनः । इयं हि वसुधा सर्व्वा क्षीणरत्ना कुरूद्वहाः ।

तच्चाचष्ट तदा व्यासो मरुत्तस्य धनं नृपाः । यद्येतद्वो बहुमतं मन्यध्वं वा क्षमं यदि ।

तथा यथाह धर्म्मेण कथं वा भीम मन्यसे । इत्युक्तवाक्ये नृपतौ तदा कुरुकुलोद्वह । १८२०

भीमसेनो नृपश्रेष्ठं प्राञ्जलिर्व्वाक्यमब्रवीत् । रोचते मे महाबाहो यदिदं भाषितं त्वया ।

व्यासाख्यातस्य वित्तस्य समुपानयनं प्रति । यदि तत् प्राप्नुयामेह धनमाविक्षितं प्रभो ।

कृतमेव महाराज भवेदिति मतिर्म्मम । ते वयं प्रणिपातेन गिरिशस्य महात्मनः ।

तदानयाम भद्रन्ते समभ्यर्च्य कपर्द्दिनं । तद्वित्तं देवदेवेशं तस्यैवानुचरांश्च तान् ।

प्रसाद्यार्थमवाप्स्यामो नूनं वाग्बुद्धिकर्म्मभिः । रक्षन्ते ये च तद्द्रव्यं किङ्करा रौद्रदर्शनाः । १८२५

ते च वश्या भविष्यन्ति प्रसन्ने वृषभध्वजे । श्रुत्वैवं वदतस्तस्य वाक्यं भीमस्य भारत ।

प्रीतो धर्म्मात्मजो राजा बभूवातीव भारत । अर्ज्जुनप्रमुखाश्चापि तथेत्येवाब्रुवन् वचः ।

कृत्वा तु पाण्डवाः सर्व्वे रत्नाहरणनिश्चयं । सेनामाज्ञापयामासुर्नक्षत्रेऽहनि च ध्रुवे ।

ततो ययुः पाण्डुसुता ब्राह्मणान् स्वस्ति वाच्य च । अर्च्चयित्वा सुरश्रेष्ठं पूर्व्वमेव महेश्वरं ।

मोदकैः पायसेनाथ मांसापूपैस्तथैव च । आशास्य च महात्मानं प्रययुर्म्मुदिता भृशं । १८३०

तेषां प्रयास्यतां तत्र मङ्गलानि शुभान्यथ । प्राहुः प्रहृष्टमनसो द्विजाग्र्या नागराश्च ते ।

ततः प्रदक्षिणीकृत्य शिरोभिः प्रणिपत्य च । ब्राह्मणानग्निसहितान् प्रययुः पाण्डुनन्दनाः ।

समनुज्ञाप्य राजानं पुत्रशोकसमाहतं । धृतराष्ट्रं सभार्य्यं वै पृथाञ्च पृथुलोचनां ।

मूले निक्षिप्य कौरव्यं युयुत्सुं धृतराष्ट्रजं । संपूज्यमानाः पौरैश्च ब्राह्मणैश्च मनीषिभिः ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि द्विषष्टोऽध्यायः ॥ ६२ ॥

॥ वैशम्पायन उवाच ॥ ततस्ते प्रययुर्हृष्टाः प्रहृष्टनरवाहनाः । रथघोषेण महता पूरयन्तो वसुन्धरां । १८३५

संस्तूयमानाः स्तुतिभिः सूतमागधवन्दिभिः । स्वेन सैन्येन संवीता यथादित्याः स्वरश्मिभिः ।

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि । बभौ युधिष्ठिरस्तत्र पौर्णमास्यामिवोडुराट् ।

जयाशिषः प्रहृष्टानां नराणां पथि पाण्डवाः । प्रत्यगृह्णाद्यथान्यायं यथावत् पुरुषर्षभः ।

तथैव सैनिका राजन् राजानमनुयान्ति ये । तेषां हलहलाशब्दो दिवं स्तब्ध्वा व्यतिष्ठत ।

वनानि सरितश्चैव वृक्षांश्चोपवनानि च । ...गिरिश्चाप्यन्वपद्यत । १९००
तस्मिन् देशे च राजेन्द्र यत्र तद्द्रव्यमुत्तमं । चक्रे निवेशनं राजा पाण्डवः सह सैनिकैः ।
शिवे देशे समे चैव तदा भरतसत्तम । अग्रतो ब्राह्मणान् कृत्वा तपोविद्यादमान्वितान् ।
पुरोहितञ्च कौरव्य वेदवेदाङ्गपारगं । प्राग्निवेशाच्च राजानो ब्राह्मणाः सपुरोधसः ।
कृत्वा शान्तिं यथान्यायं सर्व्वशः पर्य्यवारयन् । कृत्वा तु मध्ये राजानममात्यांश्च यथाविधि ।
षट्पदं नवसंस्थानं निवेशं चक्रिरे द्विजाः । मत्तानां वारणेन्द्राणां निवेशञ्च यथाविधि । १९०५
कारयित्वा स राजेन्द्रो ब्राह्मणानिदमब्रवीत् । अस्मिन् कार्य्ये द्विजश्रेष्ठा नक्षत्रे दिवसे शुभे ।
यथा भवन्तो मन्यन्ते कर्तुमर्हन्ति तत्तथा । न नः कालात्ययो वै स्यादिहैव परिलम्बतां ।
इति निश्चित्य विप्रेन्द्राः क्रियतां यदनन्तरं । श्रुत्वैतद्वचनं राज्ञो ब्राह्मणाः सपुरोधसः ।
इदमूचुर्व्वचो हृष्टा धर्म्मराजप्रियेप्सवः ।

अद्यैव नक्षत्रमहश्च पुण्यं यतामहे श्रेष्ठतमक्रियासु । अम्भोभिरद्येह वसाम राजन् उपोष्यताञ्चापि भवद्भिरद्य । १९१०
श्रुत्वा तु तेषां द्विजसत्तमानां कृतोपवासा रजनीं नरेन्द्राः । ऊषुः प्रतीताः कुशसंस्तरेषु यथाऽध्वरे प्रज्वलिता हुताशाः ।
ततो निशा सा व्यगमन्महात्मनां संशृण्वतां विप्रसमीरिता गिरः । ततः प्रभाते विमले द्विजर्षभा वचोऽब्रुवन् धर्म्मसुतं नराधिपं ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि सुवर्णकोषसंप्राप्तौ चतुःषष्टोऽध्यायः ॥ ६४ ॥

॥ ब्राह्मणा ऊचुः ॥ क्रियतामुपहारोऽद्य त्र्यम्बकस्य महात्मनः । कृत्वोपहारं नृपते ततः स्वार्थे यतामहे
श्रुत्वा तु वचनं तेषां ब्राह्मणानां युधिष्ठिरः । गिरीशस्य यथान्यायमुपहारमुपाहरत् ।
आज्येन तर्पयित्वाऽग्निं विधिवत् संस्कृतेन च । मन्त्रसिद्धं चरुं कृत्वा पुरोधाः स ययौ तदा । १९१५
स गृहीत्वा सुमनसो मन्त्रपूता जनाधिप । मोदकैः पायसेनाथ मांसैश्चोपाहरद्बलिं ।
सुमनोभिश्च चित्राभिर्लाजैरुच्चावचैरपि । सर्व्वं स्विष्टतमं कृत्वा विधिवद्वेदपारगः ।
किङ्कराणां ततः पश्चाच्चकार बलिमुत्तमं । यक्षेन्द्राय कुबेराय मणिभद्राय चैव हि ।
तथाऽन्येषाञ्च यक्षाणां भूतानां पतयश्च ये । कृसरेण च मांसेन निवापैस्तिलसंयुतैः ।
ओदनं कुम्भशः कृत्वा पुरोधाः समुपाहरत् । ब्राह्मणेभ्यः सहस्राणि गवां दत्त्वा तु भूमिपः । १९२०
नक्तञ्चराणां भूतानां व्यादिदेश बलिं तदा । धूपगन्धनिरुद्धं तत् सुमनोभिश्च संवृतं ।
शुशुभे स्थानमत्यर्थं देवदेवस्य पार्थिव । कृत्वा पूजाञ्च रुद्रस्य गणानाञ्चैव सर्व्वशः ।
ययौ व्यासं पुरस्कृत्य नृपो रत्ननिधिं प्रति । पूजयित्वा धनाध्यक्षं प्रणिपत्याभिवाद्य च ।
सुमनोभिर्विचित्राभिरपूपैः कृसरेण च । शङ्खादींश्च निधीन् सर्व्वान् निधिपालांश्च सर्व्वशः ।
अर्च्चयित्वा द्विजाग्र्यान् स स्वस्तिवाच्य च वीर्य्यवान् । तेषां पुण्याहघोषेण तेजसा समवस्थितः १९२५
प्रीतिमान् स कुरुश्रेष्ठः खानयामास तद्धनं । ततः पात्रीः सकरकाः बहुरूपा मनोरमाः ।
भृङ्गाराणि कटाहानि कलसान् वर्द्धमानकान् । बहूनि च विचित्राणि भाजनानि सहस्रशः
उद्धारयामास तदा धर्म्मराजो युधिष्ठिरः । तेषां रक्षणमप्यासीन्महान् करपुटस्तदा ।

तद्भूष भाजनं राजन् तुलार्द्धमभवन्नृप । वाहनं पाण्डुपुत्रस्य तत्रासीत्तु विशाम्पते ।
षष्टिरुष्ट्रसहस्राणि शतानि द्विगुणा हयाः । वारणाश्च महाराज सहस्रशतसम्मिताः । १९१०
शकटानि रथाश्चैव तावदेव करेणवः । खराणां पुरुषाणाञ्च परिसंख्या न विद्यते ।
एतद्वित्तं तदभवद्यदुद्दध्रे युधिष्ठिरः । षोडशाष्टौ चतुर्विंशत् सहस्रं भारलक्षणं ।
एतेष्वादाय तद्द्रव्यं पुनरभ्यर्च्य पाण्डवः । महादेवं प्रतिययौ पुरं नागाह्वयं प्रति ।
द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितं । गोयुते गोयुते चैव न्यवसत् पुरुषर्षभः ।
सा पुराभिमुखी राजन् जगाम महती चमूः । कृच्छ्राद्द्रविणभारार्त्ता हर्षयन्ती कुरूद्वहान् । १९१५

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि सुवर्णकोषसंप्राप्तौ पञ्चषष्टोऽध्यायः ॥ ६५ ॥

॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु वासुदेवोऽपि वीर्य्यवान् । उपायाद्वृष्णिभिः सार्द्धं पुरं वारणसाह्वयं ।
समयं वाजिमेधस्य विदित्वा पुरुषर्षभः । यथोक्तो धर्म्मपुत्रेण प्रव्रजन् स्वपुरीं प्रति ।
रौक्मिणेयेन सहितो युयुधानेन चैव हि । चारुदेष्णेन साम्बेन गदेन कृतवर्म्मणा ।
सारणेन च वीरेण निशठेनोल्मुकेन च । बलदेवं पुरस्कृत्य सुभद्रासहितस्तदा ।
द्रौपदीमुत्तराञ्चैव पृथाञ्चाप्यवलोककः । समाश्वासयितुञ्चापि क्षत्रिया निहतेश्वराः । १९२०
तानागतान् समीक्ष्यैव धृतराष्ट्रो महामतिः । प्रत्यगृह्णाद्यथान्यायं विदुरश्च महामनाः ।
तत्रैव न्यवसत् कृष्णः स्वर्च्चितः पुरुषोत्तमः । विदुरेण महातेजास्तथैव च युयुत्सुना ।
वसत्सु वृष्णिवीरेषु तत्राथ जनमेजय । जज्ञे तव पिता राजन् परिक्षित् परवीरहा ।
स तु राजा महाराज ब्रह्मास्त्रेणावपीडितः । शवो बभूव निश्चेष्टो हर्षशोकविवर्द्धनः ।
हृष्टानां सिंहनादेन जनानां तत्र निःस्वनः । प्रविश्य प्रदिशः सर्व्वाः पुनरेव व्युपारमत् । १९२५
ततः सोऽतित्वरः कृष्णो विवेशान्तःपुरं तदा । युयुधानद्वितीयो वै व्यथितेन्द्रियमानसः ।
ततस्त्वरितमायान्तीं ददर्श स्वां पितृष्वसां । क्रोशन्तीमभिधावेति वासुदेवं पुनः पुनः ।
पृष्ठतो द्रौपदीञ्चैव सुभद्राञ्च यशस्विनीं । सविक्रोशं सकरुणं बान्धवानां स्त्रियो नृप ।
ततः कृष्णं समासाद्य कुन्ती भोजसुता तदा । प्रोवाच राजशार्दूल बाष्पगद्गदया गिरा ।
वासुदेव महाबाहो सुप्रजा देवकी त्वया । त्वन्नो गतिः प्रतिष्ठा च त्वदायत्तमिदं कुलं । १९३०
यदुप्रवीर योऽयं ते स्वस्रीयस्यात्मजः प्रभो । अश्वत्थाम्ना हतो जातस्तमुज्जीवय केशव ।
त्वया ह्येतत् प्रतिज्ञातमैषीके यदुनन्दन । अहं संजीवयिष्यामि मृतं जातमिति प्रभो ।
सोऽयं जातो मृतस्तात पश्यैनं पुरुषर्षभ । उत्तराञ्च सुभद्राञ्च द्रौपदीं माञ्च माधव ।
धर्म्मपुत्रञ्च भीमञ्च फाल्गुनं नकुलन्तथा । सहदेवञ्च दुर्द्धर्ष सर्व्वान्नस्त्रातुमर्हसि ।
अस्मिन् प्राणाः समायत्ताः पाण्डवानां ममैव च । पाण्डोश्च पिण्डो दाशार्ह तथैव श्वशुरस्य मे । १९३५
अभिमन्योश्च भद्रन्ते प्रियस्य सदृशस्य च । प्रियमुत्पादयाद्य त्वं प्रेतस्यापि जनार्द्दन ।
उत्तरा हि पुरोक्तं वै कथयत्यरिसूदन । अभिमन्योर्व्वचः कृष्ण प्रियत्वात्तन्न संशयः ।

अब्रवीत् किल दाशार्ह वैराटीमर्ज्जुनिस्तदा । मातुलस्य कुलं भद्रे तव पुत्रो गमिष्यति ।
गत्वा वृष्ण्यन्धककुलं धनुर्व्वेदं ग्रहीष्यति । अस्त्राणि च विचित्राणि नीतिशास्त्रञ्च केवलं ।
इत्येतत् प्रणयात्तात सौभद्रः परवीरहा । कथयामास दुर्द्धर्षस्तथा चैतन्न संशयः । १९९०
तास्त्वां वयं प्रणम्येह याचामो मधुसूदन । कुलस्यास्य हितार्थं त्वं कुरु कल्याणमुत्तमं ।
एवमुक्त्वा तु वार्ष्णेयं पृथा पृथुललोचना । उच्छ्रित्य बाहू दुःखार्त्ता ताश्चान्याः प्रापतन् भुवि ।
अब्रुवंश्च महाराज सर्व्वाः साश्रुविलोचनाः । स्वस्रीयो वासुदेवस्य मृतो जात इति प्रभो ।
एवमुक्ते ततः कुन्तीं पर्य्यगृह्णाज्जनार्द्दनः । भूमौ निपतितां चैनां सान्त्वयामास भारत ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि परिक्षिज्जन्मकथने षट्षष्टोऽध्यायः ॥ ६६ ॥
॥ वैशम्पायन उवाच ॥ उत्थितायां पृथायान्तु सुभद्रा भ्रातरं तदा । दृष्ट्वा चुक्रोश दुःखार्त्ता वचनञ्चेदमब्रवीत् । १९९५
पुण्डरीकाक्ष पश्य त्वं पौत्रं पार्थस्य धीमतः । परिक्षीणेषु कुरुषु परिक्षीणं गतायुषं ।
इषीका द्रोणपुत्रेण भीमसेनार्थमुद्यता । सोत्तरायां निपतिता विजये मयि चैव ह ।
सेयं विदीर्णे हृदये मयि तिष्ठति केशव । यन्न पश्यामि दुर्द्धर्ष मत्पुत्रन्तु तं प्रभो ।
किन्नु वक्ष्यति धर्म्मात्मा धर्म्मराजो युधिष्ठिरः । भीमसेनार्ज्जुनौ चापि माद्रवत्याः सुतौ च तौ ।
श्रुत्वाऽभिमन्योस्तनयं जातञ्च मृतमेव च । मुषिता इव वार्ष्णेय द्रोणपुत्रेण पाण्डवाः । २०००
अभिमन्युः प्रियः कृष्ण भ्रातॄणां नात्र संशयः । ते श्रुत्वा किन्नु वक्ष्यन्ति द्रोणपुत्रास्त्रनिर्ज्जिताः ।
भवितातः परं दुःखं किन्नदन्यज्जनार्द्दन । अभिमन्योः सुतात् कृष्ण मृताज्जातादरिन्दम ।
साऽहं प्रसादये कृष्ण त्वामद्य शिरसा नता । पृथेयं द्रौपदी चैव ताः पश्य पुरुषोत्तम ।
यदा द्रोणसुतो गर्भान् पाण्डूनां हन्ति माधव । तदा किल त्वया द्रौणिः क्रुद्धेनोक्तोऽरिमर्द्दन ।
अकामं त्वां करिष्यामि ब्रह्मबन्धो नराधम । अहं सञ्जीवयिष्यामि किरीटितनयात्मजं । २००५
इत्येतद्वचनं श्रुत्वा जानानाऽहं बलन्तव । प्रसादये त्वां दुर्द्धर्ष जीवतामभिमन्युजः ।
यद्येतत्त्वं प्रतिश्रुत्य न करोषि वचः शुभं । सफलं वृष्णिशार्द्दूल मृतां मामवधारय ।
अभिमन्योः सुतो वीर न सञ्जीवति यद्ययं । जीवति त्वयि दुर्द्धर्ष किं करिष्याम्यहं त्वया ।
सञ्जीवयैनं दुर्द्धर्ष मृतं त्वमभिमन्युजं । सदृशाक्षसुतं वीर सस्यं वर्षन्निवाम्बुदः ।
त्वं हि केशव धर्म्मात्मा सत्यवान् सत्यविक्रमः । स तां वाचमृतां कर्त्तुमर्हसि त्वमरिन्दम । २०१०
इच्छन्नपि हि लोकांस्त्रीन् जीवयेथा मृतानिमान् । किं पुनर्द्दयितं जातं स्वस्रीयस्यात्मजं मृतं ।
प्रभावज्ञाऽस्मि ते कृष्ण तस्मात्त्वां याचयाम्यहं । कुरुष्व पाण्डुपुत्राणामिमं परमनुग्रहं ।
स्वसेति वा महाबाहो हतपुत्रेति वा पुनः । प्रपन्ना मामियञ्चेति दयां कर्त्तुमिहार्हसि ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि परिक्षिज्जन्मकथने सप्तषष्टोऽध्यायः ॥ ६७ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु राजेन्द्र केशिहा दुःखमूर्च्छितः । तथेति व्याजहारोच्चैर्ह्लादयन्निव तं जनं ।
वाक्येनैतेन हि तदा तं जनं पुरुषर्षभः । ह्लादयामास स विभुर्घर्म्मार्त्तं सलिलैरिव । २०१५

ततः स प्राविशत्तूर्णं जन्मवेश्म पितुस्तव । अर्च्चितं पुरुषव्याघ्र सितैर्माल्यैर्यथाविधि ।
अपां कुम्भैः सुपूर्णैश्च विन्यस्तैः सर्व्वतो दिशं । घृतेन तिन्दुकालातैः सर्षपैश्च महाभुज ।
अस्त्रैश्च विमलैर्न्यस्तैः पावकैश्च समन्ततः । वृद्धाभिश्चाभिरामाभिः परिचारार्थमाहृतं ।
दक्षैश्च परितो धीरभिषग्भिः कुशलैस्तथा । ददर्श च स तेजस्वी रक्षोघ्नान्यपि सर्व्वशः ।
द्रव्याणि स्थापितानि स्म विधिवत् कुशलैर्ज्जनैः । तथा युक्तञ्च तद्दृष्ट्वा जन्मवेश्म पितुस्तव । १९९०
हृष्टोऽभवत् हृषीकेशः साधु साध्विति चाब्रवीत् । तथा ब्रुवति वार्ष्णेये प्रहृष्टवदने तथा ।
द्रौपदी त्वरिता गत्वा वैराटीं वाक्यमब्रवीत् । अयमायाति ते भद्रे श्वशुरो मधुसूदनः ।
पुराणर्षिरचिन्त्यात्मा समीपमपराजितः । साऽपि वाष्पकलां वाचं निगृह्याश्रूणि चैव च ।
सुसंवीताऽभवद्देवी देववत् कृष्णमीयुषी । सा तथा दूयमानेन हृदयेन तपस्विनी ।
दृष्ट्वा गोविन्दमायान्तं कृपणं पर्य्यदेवयत् । पुण्डरीकाक्ष पश्यावां बालेन हि विनाकृतौ । १९९५
अभिमन्युञ्च माञ्चैव हतौ तुल्यं जनार्द्दन । वार्ष्णेय मधुहन् वीर शिरसा त्वां प्रसादये ।
द्रोणपुत्रास्त्रनिर्द्दग्धं जीवयैनं ममात्मजं । यदि स्म धर्म्मराजा वा भीमसेनेन वा पुनः ।
त्वया वा पुण्डरीकाक्ष वाक्यमुक्तमिदं भवेत् । अजानतीमिषीकेयं जनित्रीं हन्त्विति प्रभो ।
अहमेव विनष्टा स्यां नैतदेव गतं भवेत् । गर्भस्थस्यास्य बालस्य ब्रह्मास्त्रेण निपातनं ।
कृत्वा नृशंसं दुर्ब्बुद्धिर्द्रौणिः किं फलमश्नुते । सा त्वां प्रसाद्य शिरसा याचे शत्रुनिवर्हणं । २०००
प्राणांस्त्यक्ष्यामि गोविन्द नायं सञ्जीवते यदि । अस्मिन् हि बहवः साधो ये ममासन् मनोरथाः ।
ते द्रोणपुत्रेण हताः किन्नु जीवामि केशव । आसीन्मम मतिः कृष्ण पूर्णोत्सङ्गा जनार्द्दन ।
अभिवादयिष्ये त्वां कृष्ण तदिदं वितथीकृतं । चपलाक्षस्य दायादे मृतेऽस्मिन् पुरुषर्षभ ।
विफला मे कृता कृष्ण हृदि सर्व्वे मनोरथाः । चपलाक्षः किलातीव प्रियस्ते मधुसूदन ।
सुतं पश्य त्वमस्यैनं ब्रह्मास्त्रेण निपातितं । कृतघ्नोऽयं नृशंसोऽयं यथाऽस्य जनकस्तथा । २००५
यः पाण्डवीं श्रियं त्यक्त्वा गतोऽद्य यमसादनं । मया चैतत् प्रतिज्ञातं रणमूर्द्धनि केशव ।
अभिमन्यौ हते वीर त्वामेष्याम्यचिरादिव । तच्च नाकरवं कृष्ण नृशंसा जीवितप्रिया ।
इदानीं मां गतां तत्र किन्नु वक्ष्यति फाल्गुनिः ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि परिक्षिज्जन्मकथने अष्टषष्टोऽध्यायः ॥ ६८ ॥

॥ वैशम्पायन उवाच ॥ सैवं विलप्य करुणं सोन्मादेव तपस्विनी । उत्तरा न्यपतद्भूमौ कृपणा पुत्रगृद्धिनी ।
तान्तु दृष्ट्वा निपतितां हतपुत्रपरिच्छदां । चुक्रोश कुन्ती दुःखार्त्ता सर्व्वाश्च भरतस्त्रियः । २०१०
मुहूर्त्तमिव राजेन्द्र पाण्डवानां निवेशनं । अप्रेक्षणीयमभवदार्त्तस्वरविनादितं ।
मुहूर्त्तमिव राजेन्द्र पुत्रशोकाभिपीड़िता । कश्मलाभिहता वीर वैराटी त्वभवत्तदा ।
प्रतिलभ्य तु सा संज्ञामुत्तरा भरतर्षभ । अङ्कमारोप्य तं पुत्रमिदं वचनमब्रवीत् ।
धर्म्मज्ञस्य सुतः सन् त्वमधर्म्मं नावबुध्यसे । यस्त्वं वृष्णिप्रवीरस्य कुरुषे नाभिवादनं ।

पुत्र गत्वा मम वचो ब्रूयास्त्वं पितरन्त्विदं । दुर्म्मरं प्राणिनां वीर कालेऽप्राप्ते कथञ्चन ।    १९९५
याऽहं त्वया विनाऽद्येह पत्या पुत्रेण चैव च । मर्त्तव्ये सति जीवामि हतस्वस्तिरकिञ्चना ।
अथवा धर्म्मराजेनाऽहमनुज्ञाता महाभुज । भक्षयिष्ये विषं घोरं प्रवेक्ष्ये वा हुताशनं ।
अथवा दुर्म्मरं तात यदिदं मे सहस्रधा । पतिपुत्रविहीनाया हृदयं न विदीर्य्यते ।
उत्तिष्ठ पुत्र पश्येमां दुःखितां प्रपितामहीं । आर्त्तामुपप्लुतां दीनां निमग्नां शोकसागरे ।
आर्य्याञ्च पश्य पाञ्चालीं सात्वतीञ्च तपस्विनीं । माञ्च पश्य सुदुःखार्त्तां व्याधविद्धां मृगीमिव ।    २०००
उत्तिष्ठ पश्य वदनं लोकनाथस्य धीमतः । पुण्डरीकपलाशाक्षं पुरेव चपलेक्षणं ।
एवं विप्रलपन्तीन्तां दृष्ट्वा निपतितां पुनः । उत्तरां तां स्त्रियः सर्व्वाः पुनरुत्थापयंस्ततः ।
उत्थाय च पुनर्द्धैर्य्यात्तदा मत्स्यपतेः सुता । प्राञ्जलिः पुण्डरीकाक्षं भुव्येवाभ्यवादयत् ।
श्रुत्वा स तस्या विपुलं विलापं पुरुषर्षभः । उपस्पृश्य ततः कृष्णो ब्रह्मास्त्रं प्रत्यसंहरत् ।
प्रतिजज्ञे च दाशार्हस्तस्य जीवितमच्युतः । अब्रवीच्च विशुद्धात्मा सर्व्वं विश्रावयन् जगत् ।    २००५
न ब्रवीम्युत्तरे मिथ्या सत्यमेतद्भविष्यति । एष सञ्जीवयाम्येनं पश्यतां सर्व्वदेहिनां ।
नोक्तपूर्व्वं मया मिथ्या स्वैरेष्वपि कदाचन । न च युद्धात् परावृत्तस्तथा सञ्जीवतामयं ।
यथा मे दयितो धर्म्मो ब्राह्मणाश्च विशेषतः । अभिमन्योः सुतो जातो मृतो जीवत्वयं तथा ।
यथाऽहं नाभिजानामि विजयेन कदाचन । विरोधन्तेन सत्येन मृतो जीवत्वयं शिशुः ।
यथा सत्यञ्च धर्म्मश्च मयि नित्यं प्रतिष्ठितौ । तथा मृतः शिशुरयं जीवतामभिमन्युजः ।    २०१०
यथा कंसश्च केशी च धर्म्मेण निहतौ मया । तेन सत्येन बालोऽयं पुनः सञ्जीवतामयं ।
इत्युक्तो वासुदेवेन स बालो भरतर्षभ । शनैः शनैर्म्महाराज प्रास्पन्दत सचेतनः ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि परिक्षितः कृष्णात् सञ्जीवने ऊनसप्ततितमोऽध्यायः ॥ ६९ ॥

॥ वैशम्पायन उवाच ॥ ब्रह्मास्त्रन्तु तदा राजन् कृष्णेन प्रतिसंहृतं । तदा तद्वेश्म त्वत्पित्रा तेजसाऽभिविदीपितं ।
ततो रक्षांसि सर्व्वाणि नेशुस्त्यक्त्वा गृहन्तु तत् । अन्तरिक्षे च वागासीत् साधु केशव साध्विति ।
तदस्त्रं ज्वलितञ्चापि पितामहमगात्तदा । ततः प्राणान् पुनर्लेभे पिता तव नरेश्वर ।    २०१५
व्यचेष्टत च बालोऽसौ यथोत्साहं यथाबलं । बभूवुर्म्मुदिता राजंस्ततस्ता भरतस्त्रियः ।
ब्राह्मणान् वाचयामासुर्गोविन्दस्यैव शासनात् । ततस्ता मुदिताः सर्व्वाः प्रशशंसुर्ज्जनार्द्दनं ।
स्त्रियो भरतसिंहानां नावं लब्ध्वेव पारगाः । कुन्ती द्रुपदपुत्री च सुभद्रा चोत्तरा तथा ।
स्त्रियश्चान्या नृसिंहानां बभूवुर्हृष्टमानसाः । तत्र मल्ला नटा झल्ला ग्रन्थिकाः सौखशायिकाः ।
सूतमागधसङ्घाश्चाप्यस्तुवंस्तं जनार्द्दनं । कुरुवंशस्तवाख्याभिराशीर्भिर्भरतर्षभ ।    २०२०
उत्थाय तु यथाकालमुत्तरा यदुनन्दनं । अभ्यवादयत प्रीता सह पुत्रेण भारत ।
तस्मै कृष्णो ददौ प्रीतो बहु रत्नं विशेषतः । तथाऽन्ये वृष्णिशार्द्दूला नाम चास्याकरोत् प्रभुः ।
पितुस्तव महाराज सत्यसन्धो जनार्द्दनः । परिक्षीणे कुले यस्माज्जातोऽयमभिमन्युजः ।

परिक्षिदिति नामास्य भवत्वित्यब्रवीत्तदा । सोऽयमर्जुन यथाकालं पिता तव जनाधिप ।
मनःप्रह्लादनश्चासीत् सर्व्वलोकस्य भारत । मामकानस्तु ते वीर पिता भवति भारत ।
अथाजग्मुः समक्षलं रत्नमादाय पाण्डवाः । तान् समीपगतान् श्रुत्वा निर्ययुर्वृष्णिपुङ्गवाः
अलञ्चक्रुश्च माल्यौघैः पुरुषा नागसाह्वयं । पताकाभिर्विचित्राभिर्ध्वजैश्च विविधैरपि ।
वेश्मानि समलञ्चक्रुः पौराश्चापि जनेश्वर । देवतायतनानाञ्च पूजाः सुविविधास्तथा ।
सन्दिदेशाथ विदुरः पाण्डुपुत्त्रप्रियेप्सया । राजमार्गाश्च तत्रासन् सुमनोभिरलङ्कृताः ।
शुशुभे तत् पुरञ्चापि समुद्रौघनिभस्वनं । नर्त्तकैश्चापि नृत्यद्भिर्गायकानाञ्च निःस्वनैः ।
आसीद्वैश्रवणस्येव निवासस्तत् पुरन्तदा । वन्दिभिश्च नरै राजन् स्त्रीसहायैश्च सर्व्वशः ।
तत्र तत्र विविक्तेषु समन्तादुपशोभितं । पताकाः धूयमानाश्च समन्तान्मातरिश्वना ।
अदर्शयन्निव तदा कुरून् वै दक्षिणोत्तरान् । अघोषयंस्तदा चापि पुरुषा राजधूर्गताः ।
सर्व्वरात्रविहारोऽद्य रत्नाभरणलक्षणः ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि पाण्डवागमने सप्ततितमोऽध्यायः ॥ ७० ॥

॥ वैशम्पायन उवाच ॥ तान् समीपगतान् श्रुत्वा पाण्डवान् शत्रुकर्शनः । वासुदेवः सहामात्यः प्रययौ ससुहृज्जनः ।
ते समेत्य यथान्यायं प्रत्युद्याता दिदृक्षया । ते समेत्य यथान्यायं पाण्डवा वृष्णिभिः सह ।
विविशुः सहिता राजन् पुरं वारणसाह्वयं । महतस्तस्य सैन्यस्य खुरनेमिस्वनेन ह ।
द्यावापृथिव्यौ खञ्चैव सर्व्वमासीत् समावृतं । ते कोशमग्रतः कृत्वा विविशुः स्वपुरन्तदा ।
पाण्डवाः प्रीतमनसः सामात्याः ससुहृज्जनाः । ते समेत्य यथान्यायं धृतराष्ट्रं जनाधिप ।
कीर्त्तयन्तः स्वनामानि तस्य पादौ ववन्दिरे । धृतराष्ट्रादनु च ते गान्धारीं सुबलात्मजां ।
कुन्तीञ्च राजशार्दूल तदा भरतसत्तम । विदुरं पूजयित्वा च वैश्यापुत्त्रं समेत्य च ।
पूज्यमानाः स्म ते वीरा व्यरोचन्त विशाम्पते । ततस्तत्परमाश्चर्य्यं विचित्रं महदद्भुतं ।
शुश्रुवुस्ते तदा वीराः पितुस्ते जन्म भारत । तदुपश्रुत्य तत् कर्म्म वासुदेवस्य धीमतः ।
पूजार्हं पूजयामासुः कृष्णं देवकिनन्दनं । ततः कतिपयाहस्य व्यासः सत्यवतीसुतः ।
आजगाम महातेजा नगरं नागसाह्वयं । तस्य सर्व्वे यथान्यायं पूजाञ्चक्रुः कुरूद्वहाः ।
सह वृष्ण्यन्धकव्याघ्रैरुपासाञ्चक्रिरे तदा । तत्र नानाविधाकाराः कथाः समभिकीर्त्य वै ।
युधिष्ठिरो धर्म्मसुतो व्यासं वचनमब्रवीत् । भवत्प्रसादाद्भगवन् यदिदं रत्नमाहृतं ।
उपयोक्तुं तदिच्छामि वाजिमेधे महाक्रतौ । तमनुज्ञातुमिच्छामि भवता मुनिसत्तम ।
त्वदधीना वयं सर्व्वे कृष्णस्य च महात्मनः ।

॥ व्यास उवाच ॥ अनुजानामि राजंस्त्वां क्रियतां यदनन्तरं । यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
अश्वमेधो हि राजेन्द्र पावनः सर्व्वपाप्मनां । तेनेष्ट्वा त्वं विपाप्मा वै भविता नात्र संशयः ।

॥ वैशम्पायन उवाच ॥ इत्युक्तः स तु धर्म्मात्मा कुरुराजो युधिष्ठिरः । अश्वमेधस्य कौरव्य चकाराहरणे मतिं ।

समनुज्ञाप्य तत् सर्व्वं कृष्णद्वैपायनं नृप । वासुदेवमथाभ्येत्य वाग्मी वचनमब्रवीत् ।
देवकी सुप्रजा देवी त्वया पुरुषसत्तम । यद्ब्रूयां त्वां महाबाहो तत्कृथास्त्वमिहाच्युत ।
त्वत्प्रभावार्ज्जितान् भोगानश्नीम यदुनन्दन । पराक्रमेण बुद्ध्या च त्वयेयं निर्ज्जिता मही । २०७५
दीक्षयस्व त्वमात्मानं त्वं हि नः परमो गुरुः । त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहं ।
त्वं हि यज्ञोऽक्षरः सर्व्वस्त्वं धर्म्मस्त्वं प्रजापतिः । त्वं गतिः सर्व्वभूतानामिति मे निश्चिता मतिः ।
॥ वासुदेव उवाच ॥ त्वमेवैतन्महाबाहो वक्तुमर्हस्यरिन्दम । त्वं गतिः सर्व्वभूतानामिति मे निश्चिता मतिः ।
त्वञ्चाद्य कुरुवीराणां धर्म्मेण हि विराजसे । गुणीभूताः स्म ते राजंस्त्वं नो राजा गुरुर्म्मतः ।
यजस्व मदनुज्ञातः प्राप्य एव क्रतुस्त्वया । युनक्तु नो भवान् कार्य्ये यत्र वाञ्छसि भारत । २०८०
सत्यं ते प्रतिजानामि सर्व्वं कर्त्तास्मि तेऽनघ । भीमसेनार्ज्जुनौ चैव तथा माद्रवतीसुतौ ।
इष्टवन्तो भविष्यन्ति त्वयीष्टवति पार्थिव ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि व्यासागमने एकसप्ततोऽध्यायः ॥ ७१ ॥

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु कृष्णेन धर्म्मपुत्त्रो युधिष्ठिरः । व्यासमामन्त्र्य मेधावी ततो वचनमब्रवीत् ।
यदा कालं भवान् वेत्ति हयमेधस्य तत्त्वतः । दीक्षयस्व तदा मां त्वं त्वय्यायत्तो हि मे क्रतुः ।
॥ व्यास उवाच ॥ अहं पैलोऽथ कौन्तेय याज्ञवल्क्यस्तथैव च । विधानं यद्यथाकालं तत् कर्त्तारो न संशयः । २०८५
चैत्र्यां हि पौर्णमास्यान्तु तव दीक्षा भविष्यति । सम्भाराः सम्भ्रियन्ताञ्च यज्ञार्थं पुरुषर्षभ ।
अश्वविद्याविदश्चैव सूता विप्राश्च तद्विदः । मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये ।
तमुत्सृज्य यथाशास्त्रं पृथिवीं सागराम्बरां । स पर्य्येतु यशो दीप्तं तव पार्थिव दर्शयन् ।
॥ वैशम्पायन उवाच ॥ इत्युक्तः स तथेत्युक्त्वा पाण्डवः पृथिवीपतिः । चकार सर्व्वं राजेन्द्र यथोक्तं ब्रह्मवादिना ।
सम्भाराश्चैव राजेन्द्र सर्व्वे सङ्कल्पिताऽभवन् । स सम्भारान् समाहृत्य नृपो धर्म्मसुतस्तदा । २०९०
न्यवेदयदमेयात्मा कृष्णद्वैपायनाय वै । ततोऽब्रवीन्महातेजा व्यासो धर्म्मात्मजं नृपं ।
यथाकालं यथायोगं सज्जाः स्म तव दीक्षणे । स्फ्यश्च कूर्च्चश्च सौवर्णो यच्चान्यदपि कौरव ।
तत्र योग्यं भवेत् किञ्चिद्रौक्मं तत् क्रियतामिति । अश्वश्चोत्सृज्यतामद्य पृथ्व्यामथ यथाक्रमं ।
सुगुप्तं चरताञ्चापि यथाशास्त्रं यथाविधि ।
॥ युधिष्ठिर उवाच ॥ अयमश्वो यथा ब्रह्मन्नुत्सृष्टः पृथिवीमिमां । चरिष्यति यथाकामं तत्र वै संविधीयतां । २०९५
पृथिवीं पर्य्यटन्तं हि तुरगं कामचारिणं । कः पालयेदिति मुने तद्भवान् वक्तुमर्हति ।
॥ वैशम्पायन उवाच ॥ इत्युक्तः स तु राजेन्द्र कृष्णद्वैपायनोऽब्रवीत् । भीमसेनादवरजः श्रेष्ठः सर्व्वधनुष्मतां ।
जिष्णुः सहिष्णुर्धृष्णुश्च स एनं पालयिष्यति । शक्तः स हि महीं जेतुं निवातकवचान्तकः ।
तस्मिन् ह्यस्त्राणि दिव्यानि दिव्यं संहननं तथा । दिव्यं धनुश्चेषुधी च स एनमनुयास्यति ।
स हि धर्म्मार्थकुशलः सर्व्वविद्याविशारदः । यथाशास्त्रं नृपश्रेष्ठ चारयिष्यति ते हयं । २१००
राजपुत्त्रो महाबाहुः श्यामो राजीवलोचनः । अभिमन्योः पिता वीरः स एनं पालयिष्यति ।

भीमसेनोऽपि तेजस्वी कौन्तेयोऽमितविक्रमः । समर्थो रक्षितुं राष्ट्रं नकुलश्च विशाम्पते ।
सहदेवस्तु कौरव्य समाधास्यति बुद्धिमान् । कुटुम्बतन्त्रं विधिवत् सर्व्वमेव महायशाः ।
तत्तु सर्व्वं यथान्यायमुक्तः कुरुकुलोद्वहः । चकार फाल्गुनश्चापि सन्दिदेश हयान् प्रति ।
॥ युधिष्ठिर उवाच ॥ एह्यर्ज्जुन त्वया वीर हयोऽयं परिपाल्यतां । त्वमर्हो रक्षितुं ह्येनं नान्यः कश्चन मानवः । १०
ये चापि त्वां महाबाहो प्रत्युद्यान्ति नराधिपाः । तैर्विग्रहो यथा न स्यात्तथा कार्य्यं त्वयाऽनघ ।
आख्यातव्यश्च भवता यज्ञोऽयं मम सर्व्वशः । पार्थिवेभ्यो महाबाहो समये गम्यतामिति ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा स धर्म्मात्मा भ्रातरं सव्यसाचिनं । भीमञ्च नकुलञ्चैव पुरगुप्तौ समादधत् ।
कुटुम्बतन्त्रे च तदा सहदेवं युधां पतिं । अनुमान्य महीपालं धृतराष्ट्रं युधिष्ठिरः ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वरक्षार्थमर्ज्जुननियोगे द्विसप्ततोऽध्यायः ॥ ७२ ॥
॥ वैशम्पायन उवाच ॥ दीक्षाकाले तु सम्प्राप्ते ततस्ते सुमहर्त्विजः विधिवद्दीक्षयामासुरश्वमेधाय पार्थिवं । [illegible]
कृत्वा स पशुबन्धांश्च दीक्षितः पाण्डुनन्दनः । धर्म्मराजो महातेजाः सहर्त्विग्भिर्व्यरोचत ।
हयश्च हयमेधार्थं स्वयञ्च ब्रह्मवादिना । उत्सृष्टः शास्त्रविधिना व्यासेनामिततेजसा ।
स राजा धर्म्मराट् राजन् दीक्षितो विबभौ तदा । हेममाली रुक्मकण्ठः प्रदीप्त इव पावकः ।
कृष्णाजिनी दण्डपाणिः क्षौमवासाः स धर्म्मजः । विबभौ द्युतिमान् भूयः प्रजापतिरिवाध्वरे ।
तथैवास्यर्त्विजः सर्व्वे तुल्यवेशा विशाम्पते । बभूवुरर्ज्जुनश्चापि प्रदीप्त इव पावकः । [illegible]
श्वेताश्वः कृष्णसारं तं ससाराश्वं धनञ्जयः । स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चेहीति भारत ।
तथाऽपरे मनुष्येन्द्र पुरुषा वाक्यमब्रुवन् । तेनं पश्याम सम्मर्द्दे धनुरेतत् प्रदृश्यते ।
एतद्धि भीमनिर्ह्रादं विश्रुतं गाण्डिवं धनुः । ब्राह्मणाश्च महीपाल बहवो वेदपारगाः ।
विधिवत् पृथिवीपाल धर्म्मराजस्य शासनात् । क्षिपन् गाण्डिवं राजन् बद्धगोधाङ्गुलित्रवान् ।
तमश्वं पृथिवीपाल मुदा युक्तः ससार च । आकुमारं तदा राजन्नागमत्तत्पुरं विभो । [illegible]
द्रष्टुकामं कुरुश्रेष्ठं प्रयास्यन्तं धनञ्जयं । तेषामन्योन्यसंमर्द्दादूष्मेव समजायत ।
दिदृक्षूणां हयन्तञ्च तञ्चैव हयसारिणं । ततः शब्दो महाराज दिशः खं प्रतिपूरयन् ।
बभूव प्रेक्षतां नृणां कुन्तीपुत्रं धनञ्जयं । एष गच्छति कौन्तेय तुरगश्चैव दीप्तिमान् ।
यमन्वेति महाबाहुः संस्पृशन् धनुरुत्तमं । एवं शुश्राव वदतां गिरो जिष्णुरुदारधीः ।
स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चेहीति भारत । अथापरे मनुष्येन्द्र पुरुषा वाक्यमब्रुवन् । [illegible]
नैनं पश्याम संमर्द्दे धनुरेतत् प्रदृश्यते । एतद्धि भीमनिर्ह्रादं विश्रुतं गाण्डिवं धनुः ।
स्वस्ति गच्छत्वरिष्टो वै पन्था ममकुतोभयं । निवृत्तमेनं द्रक्ष्यामः पुनरेष्यति च ध्रुवं ।
एवमाद्या मनुष्याणां स्त्रीणाञ्च भरतर्षभ । शुश्राव मधुरा वाचः पुनः पुनरुदारधीः ।
याज्ञवल्क्यस्य शिष्यश्च कुशलो यज्ञकर्म्मणि । प्रायात् पार्थेन सहितः शान्त्यर्थं वेदपारगः ।
ब्राह्मणाश्च महीपाल बहवो वेदपारगाः । अनुजग्मुर्महात्मानं क्षत्रियाश्च विशाम्पते । [illegible]

विधिवत् पृथिवीपाल धर्म्मराजस्य शासनात्। पाण्डवैः पृथिवीमश्वो निर्जितामस्त्रतेजसा।
चचार स महाराज यथादेशञ्च सत्तम। तत्र युद्धानि वृत्तानि यान्यासन् पाण्डवस्य ह।
तानि वक्ष्यामि ते वीर विचित्राणि महान्ति च। स हयः पृथिवीं राजन् प्रदक्षिणमवर्त्तत।
ससारोत्तरतः पूर्व्वं तन्निबोध महीपते। अवमृद्नन् स राष्ट्राणि पार्थिवानां हयोत्तमः।
शनैस्तदा परिययौ श्वेताश्वश्च महारथः। तत्र सङ्गणना नास्ति राज्ञामयुतशस्तदा। २१३५
येऽयुध्यन्त महाराज क्षत्रिया हतबान्धवाः। किराता यवना राजन् बहवोऽपि धनुर्द्धराः।
म्लेच्छाश्चान्ये बहुविधाः पूर्व्वं ये निकृता रणे। आर्य्याश्च पृथिवीपालाः प्रहृष्टनरवाहनाः।
समीयुः पाण्डुपुत्रेण बहवो युद्धदुर्म्मदाः। एवं वृत्तानि युद्धानि तत्र तत्र महीपते।
अर्ज्जुनस्य महीपालैर्नानादेशसमागतैः। यानि तूभयतो राजन् प्रतप्तानि महान्ति च।
तानि युद्धानि वक्ष्यामि कौन्तेयस्य तवानघ। २१४०
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे त्रिसप्ततितमोऽध्यायः॥ ७३ ॥
॥ वैशम्पायन उवाच॥ त्रिगर्त्तैरभवद्युद्धं कृतवैरैः किरीटिनः। महारथसमाज्ञातैर्हतानां पुत्रनप्तृभिः।
ते समाज्ञाय संप्राप्तं यज्ञियं तुरगोत्तमं। विषयान्ते ततो वीरा दंशिताः पर्य्यवारयन्।
रथिनो बद्धतूणीराः सदश्वैः समलङ्कृतैः। परिवार्य्य हयं राजन् ग्रहीतुं संप्रचक्रमुः।
ततः किरीटी सञ्चिन्त्य तेषां तत्र चिकीर्षितं। वारयामास तान् वीरान् सान्त्वपूर्व्वमरिन्दम।
तदनादृत्य ते सर्व्वे शरैरभ्यहनंस्तदा। तमोरजोभ्यां संच्छन्नांस्तान् किरीटी न्यवारयत्। २१४५
तानब्रवीत्ततो जिष्णुः प्रहसन्निव भारत। निवर्त्तध्वमधर्म्मज्ञाः श्रेयो जीवितमेव च।
स हि वीरः प्रयास्यन् वै धर्म्मराजेन वारितः। हतबान्धवा न ते पार्थ हन्तव्याः पार्थिवा इति।
स तदा तद्वचः श्रुत्वा धर्म्मराजस्य धीमतः। तान्निवर्त्तध्वमित्याह न न्यवर्त्तन्त चापि ते।
ततस्त्रिगर्त्तराजानं सूर्य्यवर्म्माणमाहवे। विजित्य शरजालेन प्रजहास धनञ्जयः।
ततस्ते रथघोषेण रथनेमिस्वनेन च। पूरयन्तो दिशः सर्व्वा धनञ्जयमुपाद्रवन्। २१५०
सूर्य्यवर्म्मा ततः पार्थं शराणां नतपर्व्वणां। शतान्यमुञ्चद्राजेन्द्र लघ्वस्त्रमभिदर्शयन्।
तथैवान्ये महेष्वासा ये च तस्यानुयायिनः। मुमुचुः शरवर्षाणि धनञ्जयवधैषिणः।
स तान् ज्यामुखनिर्म्मुक्तैर्बहुभिः सुबहून् शरान्। चिच्छेद पाण्डवो राजंस्ते भूमौ न्यपतंस्तदा।
केतुधर्म्मा तु तेजस्वी तस्यैवावरजो युवा। युयुधे भ्रातुरर्थाय पाण्डवेन यशस्विना।
तमापतन्तं सम्प्रेक्ष्य केतुधर्म्मा महाहवे। अभ्यघ्नन्निशितैर्बाणैर्बीभत्सुः परवीरहा। २१५५
केतुधर्म्मण्यभिहते धृतवर्म्मा महारथः। रथेनाशु समुत्पत्य शरैर्जिष्णुमवाकिरत्।
तस्य तां शीघ्रतामीक्ष्य तुतोषातीव वीर्य्यवान्। गुडाकेशो महातेजा बालस्य धृतवर्म्मणः।
न सन्दधानं ददृशे नाददानञ्च तन्तदा। किरन्तमेव स शरान् ददृशे पाकशासनिः।
स तु तं पूजयामास धृतवर्म्माणमाहवे। मनसा समुहूर्त्तं वै रणे समभिहर्षयन्।

तं पन्नगमिव क्रुद्धं कुरुवीरः स्वयन्त्रिव । प्रीतिपूर्वं महाबाहुः प्राणैर्न व्यपरोपयत् । २१६०
स तथा रक्ष्यमाणो वै पार्थेनामिततेजसा । धृतवर्म्मा शरं दीप्तं मुमोच विजये तदा ।
स तेन विजयस्तूर्णमासीद्विद्धः करे भृशं । मुमोच गाण्डिवं मोहात्तत्पपाताथ भूतले ।
धनुषः पततस्तस्य सव्यसाचिकराद्विभो । बभूव सदृशं रूपं शक्रचापस्य भारत ।
तस्मिन्निपतिते दिव्ये महाधनुषि पार्थिव । जहास सस्वनं हासं धृतवर्म्मा महाहवे ।
ततो रोषार्दितो जिष्णुः प्रमृज्य रुधिरं करात् । धनुरादत्त तद्दिव्यं शरवर्षैर्ववर्ष च । २१६५
ततो हलहलाशब्दो दिवस्पृगभवत्तदा । नानाविधानां भूतानां तत्कर्माणि प्रशंसतां ।
ततः संप्रेक्ष्य संक्रुद्धं कालान्तकयमोपमं । जिष्णुं त्रैगर्त्तका योधाः परीताः पर्य्यवारयन् ।
अभिसृत्य परीप्सार्थं ततस्ते धृतवर्म्मणः । परिवव्रुर्गुडाकेशं तत्राक्रुध्यद्धनञ्जयः ।
ततो योधान् जघानाशु तेषां स दश चाष्ट च । महेन्द्रवज्रप्रतिमैरायसैर्भूरिभिः शरैः ।
तान् संप्रभग्नान् संप्रेक्ष्य त्वरमाणो धनञ्जयः । शरैराशीविषाकारैर्जघान स्वनवद्धसन् । २१७०
ते भग्नमनसः सर्व्वे त्रैगर्त्तकमहारथाः । दिशोऽभिदुद्रुवू राजन् धनञ्जयशरार्द्दिताः ।
तमूचुः पुरुषव्याघ्रं संशप्तकनिषूदनं । तवास्म किङ्कराः सर्व्वे सर्व्वे वै वशगास्तव ।
आज्ञापयस्व नः पार्थ प्रह्वान् प्रेष्यानवस्थितान् । करिष्यामः प्रियं सर्व्वं तव कौरवनन्दन ।
एतदाज्ञाय वचनं सर्व्वांस्तानब्रवीत्तदा । जीवितं रक्षत नृपाः शासनं प्रतिगृह्यतां ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे चतुःसप्ततोऽध्यायः ॥ ७४ ॥

॥ वैशम्पायन उवाच ॥ प्राग्ज्योतिषमथाभ्येत्य व्यचरत् स हयोत्तमः । भगदत्तात्मजस्तत्र निर्ययौ रणकर्क्कशः । २१७५
स हयं पाण्डुपुत्रस्य विषयान्तमुपागतं । युयुधे भरतश्रेष्ठ वज्रदत्तो महीपतिः ।
सोऽभिनिर्य्याय नगराद्भगदत्तसुतो नृपः । अश्वमायान्तमुन्मथ्य नगराभिमुखो ययौ ।
तमालक्ष्य महाबाहुः कुरूणामृषभस्तदा । गाण्डीवं विक्षिपंस्तूर्णं सहसा समुपाद्रवत् ।
ततो गाण्डीवनिर्मुक्तैरिषुभिर्मोहितो नृपः । हयमुत्सृज्य तं वीरस्ततः पार्थमुपाद्रवत् ।
पुनः प्रविश्य नगरं दंशितः स नृपोत्तमः । आरुह्य नागप्रवरं निर्ययौ रणकर्क्कशः । २१८०
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि । दोधूयता चामरेण श्वेतेन च महारथः ।
ततः पार्थं समासाद्य पाण्डवानां महारथं । आह्वयामास बीभत्सुं बाल्यान्मोहाच्च संयुगे ।
स वारणं नगप्रख्यं प्रभिन्नकरटामुखं । प्रेषयामास संक्रुद्धः श्वेताश्वं प्रति पार्थिवः ।
विक्षरन्तं महामेघं परवारणवारणं । शास्त्रवत्कल्पितं संख्ये त्रिवर्षं युद्धदुर्द्धरं ।
प्रचोद्यमानः स गजस्तेन राज्ञा महाबलः । तदाऽङ्कुशेन विबभावुत्पतिष्यन्निवाम्बरं । २१८५
तमापतन्तं सम्प्रेक्ष्य क्रुद्धो राजन् धनञ्जयः । भूमिष्ठो वारणगतं योधयामास भारत ।
वज्रदत्तस्ततः क्रुद्धो मुमोचाशु धनञ्जये । तोमरानग्निसङ्काशान् शलभानिव वेगितान् ।
अर्जुनस्तानसंप्राप्तान् गाण्डीवप्रभवैः शरैः । द्विधा त्रिधा च चिच्छेद ख एव खगमैस्तदा ।

स तान्दृष्ट्वा तथा छिन्नांस्तोमरान् भगदत्तजः। इषूनसक्तांस्त्वरितः प्राहिणोत् पाण्डवं प्रति।
ततोऽर्जुनस्तूर्णतरं रुक्मपुङ्खानजिह्मगान्। प्रेषयामास संक्रुद्धो भगदत्तात्मजं प्रति। २१९०
स तैर्विद्धो महातेजा वज्रदत्तो महामृधे। भृशाहतः पपातोर्व्यां न त्वेनमजहात् स्मृतिः।
ततः स पुनरारुह्य वारणप्रवरं रणे। अव्यग्रः प्रेषयामास जयार्थी विजयं प्रति।
तस्मै बाणांस्ततो जिष्णुर्निर्मुक्ताशीविषोपमान्। प्रेषयामास संक्रुद्धो ज्वलितज्वलनोपमान्।
स तैर्विद्धो महानागो विस्रवन् रुधिरं बभौ। गैरिकाक्तमिवाम्भोऽद्रिर्बहुप्रस्रवणं तदा।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे वज्रदत्तयुद्धे पञ्चसप्ततोऽध्यायः ॥ ७५ ॥
॥ वैशम्पायन उवाच ॥ एवं त्रिरात्रमभवत्तद्युद्धं भरतर्षभ। अर्जुनस्य नरेन्द्रेण वृत्रेणेव शतक्रतोः। २१९५
ततश्चतुर्थे दिवसे वज्रदत्तो महाबलः। जहास सस्वनं हासं वाक्यञ्चेदमथाब्रवीत्।
अर्जुनार्जुन तिष्ठस्व न मे जीवन् विमोक्ष्यसे। त्वां निहत्य करिष्यामि पितुस्तोयं यथाविधि।
त्वया वृद्धो मम पिता भगदत्तः पितुः सखा। हतो वृद्धोपचायित्वात् शिशुं मामद्य योधय।
इत्येवमुक्त्वा संक्रुद्धो वज्रदत्तो नराधिपः। प्रेषयामास कौरव्य वारणं पाण्डवं प्रति।
संप्रेष्यमाणो नागेन्द्रो वज्रदत्तेन धीमता। उत्पतिष्यन्निवाकाशमभिदुद्राव पाण्डवं। २२००
अग्रहस्तप्रमुक्तेन शीकरेण स नागराट्। समौक्षत गुडाकेशं शैलं नीलमिवाम्बुदः।
स तेन प्रेषितो राजा मेघवद्विनदन्मुहुः। मुखाडम्बरसंह्रादैरभ्यद्रवत फाल्गुनं।
स नृत्यन्निव नागेन्द्रो वज्रदत्तप्रचोदितः। आससाद द्रुतं राजन् कौरवाणां महारथं।
तमायान्तमथालक्ष्य वज्रदत्तस्य वारणं। गाण्डीवमाश्रित्य बली न व्यकम्पत शत्रुहा।
चुक्रोध बलवच्चापि पाण्डवस्तस्य भूपते। कार्य्यविघ्नमनुस्मृत्य पूर्व्ववैरञ्च भारत। २२०५
ततस्तं वारणं क्रुद्धः शरजालेन पाण्डवः। निवारयामास तदा वेलेव मकरालयं।
स नागप्रवरः श्रीमानर्ज्जुनेन निवारितः। तस्थौ शरैर्विभिन्नाङ्गः श्वाविच्छललितो यथा।
निवारितं गजं दृष्ट्वा भगदत्तसुतो नृपः। उत्ससर्ज्ज शितान् बाणानर्ज्जुनं क्रोधमूर्च्छितः।
अर्ज्जुनस्तु महाबाहुः शरैररिनिघातिभिः। वारयामास तान् बाणांस्तदद्भुतमिवाभवत्।
ततः पुनरभिक्रुद्धो राजा प्राग्ज्योतिषाधिपः। प्रेषयामास नागेन्द्रं बलवत् पर्व्वतोपमं। २२१०
समापतन्तं संप्रेक्ष्य बलवत् पाकशासनिः। नाराचमग्निसङ्काशं प्राहिणोद्वारणं प्रति।
स तेन वारणो राजन् मर्म्मस्वभिहतो भृशं। पपात सहसा भूमौ वज्ररुग्ण इवाचलः।
स पतञ्छुशुभे नागो धनञ्जयशराहतः। विशन्निव महाशैलो महीं वज्रप्रपीडितः।
तस्मिन्निपतिते नागे वज्रदत्तस्य पाण्डवः। तन्न भेतव्यमित्याह ततो भूमिगतं नृप।
अब्रवीद्धि महातेजाः प्रस्थितं मां युधिष्ठिरः। राजानस्ते न हन्तव्या धनञ्जय कथञ्चन। २२१५
सर्व्वमेतन्नरव्याघ्र भवत्वेतावता कृतं। योधाश्चापि न हन्तव्या धनञ्जय रणे त्वया।
वक्तव्याश्चापि राजानः सर्व्वे सह सुहृज्जनैः। युधिष्ठिरस्याश्वमेधो भवद्भिरनुभूयतां।

इति भ्रातृवचः श्रुत्वा न हन्मि त्वां नराधिप। उत्तिष्ठ न भयं तेऽस्ति स्वस्तिमान् गच्छ पार्थिव।
आगच्छेथा महाराज परां चैत्रीमुपस्थितां। यदाऽश्वमेधो भविता धर्म्मराजस्य धीमतः।
एवमुक्तः स राजा तु भगदत्तात्मजस्तदा। तथेत्येवाब्रवीद्वाक्यं पाण्डवेनाभिनिर्ज्जितः। २११०

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे वज्रदत्तपराजये षट्सप्ततितमोऽध्यायः॥ ७६॥

॥ वैशम्पायन उवाच॥ सैन्धवैरभवद्युद्धं ततस्तस्य किरीटिनः। हतशेषैर्महाराज हतानाञ्च सुतैरपि।
तेऽवतीर्णमुपश्रुत्य विषयं श्वेतवाहनं। प्रत्युद्ययुरमृष्यन्तो राजानः पाण्डवर्षभं।
अश्वञ्च तं परामृश्य विषयान्ते विषोपमाः। न भयं चक्रिरे पार्थाद्भीमसेनादनन्तरात्।
ते विदूराद्धनुष्पाणिं यज्ञियस्य हयस्य च। बीभत्सुं प्रत्यपद्यन्त पदातिनमवस्थितं।
ततस्ते तं महावीर्य्या राजानः पर्य्यवारयन्। जिगीषन्तो नरव्याघ्रं पूर्व्वं विनिकृता युधि। २११५
ते नामान्यपि गोत्राणि कर्म्माणि विविधानि च। कीर्त्तयन्तस्तदा पार्थं शरवर्षैरवाकिरन्।
ते किरन्तः शरव्रातान् वारणप्रतिवारणान्। रणे जयमभीप्सन्तः कौन्तेयं पर्य्यवारयन्।
ते समीक्ष्य च तं कृष्णमुग्रकर्म्माणमाहवे। सर्व्वे युयुधिरे वीरा रथस्थास्तं पदातिनं।
ते तमाजघ्निरे वीरं निवातकवचान्तकं। संशप्तकनिहन्तारं हन्तारं सैन्धवस्य च।
ततो रथसहस्रेण हयानामयुतेन च। कोष्ठकीकृत्य बीभत्सुं प्रहृष्टमनसोऽभवन्। २१२०
तं स्मरन्तो वधं वीराः सिन्धुराजस्य चाहवे। जयद्रथस्य कौरव्य समरे सव्यसाचिना।
ततः पर्ज्जन्यवत् सर्व्वे शरवृष्टीरवासृजन्। तैः कीर्णः शुशुभे पार्थो रविर्मेघान्तरे यथा।
स शरैः समवच्छन्नश्चकाशे पाण्डवर्षभः। पञ्जरान्तरसञ्चारी शकुन्त इव भारत।
ततो हाहाकृतं सर्व्वं कौन्तेये शरपीडिते। त्रैलोक्यमभवद्राजन् रविरासीच्च निष्प्रभः।
ततो ववौ महाराज मारुतो लोमहर्षणः। राहुरग्रसदादित्यं युगपत् सोममेव च। २१२५
उल्काश्च जघ्निरे सूर्य्यं व्यकीर्य्यन्त समन्ततः। वेपथुश्चाभवद्राजन् कैलासस्य महागिरेः।
मुमुचुः श्वासमत्युष्णं दुःखशोकसमन्विताः। सप्तर्षयो जातभयास्तथा देवर्षयोऽपि च।
ततः खात्तु विनिर्भिद्य मण्डलं शशिनोऽपतत्। विपरीता दिशश्चापि सर्व्वा धूमाकुलास्तथा।
रासभारुणसङ्काशा धनुष्मन्तः सविद्युतः। आवृत्य गगनं मेघा मुमुचुर्मांसशोणितं।
एवमासीत्तदा वीरे शरवर्षेण संवृते। फाल्गुने भरतश्रेष्ठ तदद्भुतमिवाभवत्। २१३०
तस्य तेनावकीर्णस्य शरजालेन सर्व्वतः। मोहात् पपात गाण्डीवमावापश्च करादपि।
तस्मिन्मोहमनुप्राप्ते शरजालं महत्तदा। सैन्धवा मुमुचुस्तूर्णं गतसत्त्वे महारथे।
ततो मोहसमापन्नं ज्ञात्वा पार्थं दिवौकसः। सर्व्वे वित्रस्तमनसस्तस्य शान्तिकृतोऽभवन्।
ततो देवर्षयः सर्व्वे तथा सप्तर्षयोऽपि च। ब्रह्मर्षयश्च विजयं जेपुः पार्थस्य धीमतः।
ततः प्रदीपिते देवैः पार्थतेजसि पार्थिव। तस्थावचलवद्धीमान् संग्रामे परमास्त्रवित्। २१३५
विचकर्ष धनुर्दिव्यं ततः कौरवनन्दनः। यन्त्रस्येवेह शब्दोऽभून्महांस्तस्य पुनः पुनः।

ततः स शरवर्षाणि प्रत्यमित्रान् प्रति प्रभुः । ववर्ष धनुषा पार्थो वर्षाणीव पुरन्दरः ।
ततस्ते सैन्धवा योधाः सर्व्व एव सराजकाः । नादृश्यन्त शरैः कीर्णाः शलभैरिव पादपाः ।
तस्य शब्देन वित्रेसुर्भयार्त्ताश्च विदुद्रुवुः । मुमुचुश्चाश्रु शोकार्त्ताः शुशुचुश्चापि सैन्धवाः ।
तांस्तु सर्व्वान्नरव्याघ्रः सैन्धवान् व्यचरद्बली । अलातचक्रवद्राजन् शरजालैः समार्पयत् । २२१०
तदिन्द्रजालप्रतिमं बाणजालममित्रहा । विसृज्य दिक्षु सर्व्वासु महेन्द्र इव वज्रभृत् ।
मेघजालनिभं सैन्यं विदार्य्य शरवृष्टिभिः । विबभौ कौरवश्रेष्ठः शरदीव दिवाकरः ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे सप्तसप्ततोऽध्यायः ॥ ७७ ॥

॥ वैशम्पायन उवाच ॥ ततो गाण्डीवभृच्छूरो युद्धाय समुपस्थितः । विबभौ युधि दुर्द्धर्षो हिमवानचलो यथा ।
ततस्ते सैन्धवा योधाः पुनरेव व्यवस्थिताः । व्यमुञ्चन्त सुसंरब्धाः शरवर्षाणि भारत ।
तान् प्रहस्य महाबाहुः पुनरेव व्यवस्थितान् । ततः प्रोवाच कौन्तेयो मुमूर्षून् श्लक्ष्णया गिरा । २२१५
युध्यध्वं परया शक्त्या यतध्वञ्च जये मम । कुरुध्वं सर्व्वकार्य्याणि महद्वो भयमागतं ।
एष योत्स्यामि सर्व्वांस्तु निवार्य्य शरवागुरां । तिष्ठध्वं युद्धमनसो दर्पं शमयितास्मि वः ।
एतावदुक्त्वा कौरव्यो रोषाद्गाण्डीवभृत्तदा । ततोऽथ वचनं स्मृत्वा भ्रातुर्ज्येष्ठस्य भारत ।
न हन्तव्या रणे तात क्षत्रिया विजिगीषवः । जेतव्याश्चेति यत् प्रोक्तं धर्म्मराज्ञा महात्मना ।
चिन्तयामास स तदा फाल्गुनः पुरुषर्षभः । इत्युक्तोऽहं नरेन्द्रेण न हन्तव्या नृपा इति । २२२०
कथं तन्न मृषा तत् स्याद्धर्म्मराजवचः शुभं । न हन्येरंश्च राजानो राज्ञश्चाज्ञा कृता भवेत् ।
इति सञ्चिन्त्य स तदा फाल्गुनः पुरुषर्षभः । प्रोवाच वाक्यं धर्म्मज्ञः सैन्धवान् युद्धदुर्म्मदान् ।
श्रेयो वदामि युष्माकं न हिंसेयमवस्थितान् । यश्च वक्ष्यति संग्रामे तवास्मीति पराजितः ।
एतच्छ्रुत्वा वचो मह्यं कुरुध्वं हितमात्मनः । ततोऽन्यथा कृच्छ्रगता भविष्यथ मयार्द्दिताः ।
एवमुक्त्वा तु तान् वीरान् युयुधे कुरुपुङ्गवः । अर्ज्जुनोऽतीव संक्रुद्धः संक्रुद्धैर्विजिगीषुभिः । २२२५
शतं शतसहस्राणि शराणां नतपर्व्वणां । मुमुचुः सैन्धवा राजंस्तदा गाण्डीवधन्वनि ।
शरानापततः क्रूरानाशीविषविषोपमान् । चिच्छेद निशितैर्बाणैरन्तरा स धनञ्जयः ।
छित्त्वा च तानाशु चैव कङ्कपत्रान् शिलाशितान् । एकैकमेषां समरे बिभेद निशितैः शरैः ।
ततः प्रासांश्च शक्तीश्च पुनरेव धनञ्जयं । जयद्रथं हतं स्मृत्वा चिक्षिपुः सैन्धवा नृपाः ।
तेषां किरीटी सङ्कल्पं मोघञ्चक्रे महाबलः । सर्व्वांस्तानन्तरा छित्त्वा तदा चुक्रोश पाण्डवः । २२३०
तथैवापततां तेषां योधानां जयकाङ्क्षिणां । शिरांसि पातयामास भल्लैः सन्नतपर्व्वभिः ।
तेषां प्रद्रवताञ्चापि पुनरेवाभिधावतां । निवर्त्तताञ्च शब्दोऽभूत् पूर्णस्येव महोदधेः ।
ते वध्यमानास्तु तदा पार्थेनामिततेजसा । यथाप्राणं यथोत्साहं योधयामासुरर्ज्जुनं ।
ततस्ते फाल्गुनेनाजौ शरैः सन्नतपर्व्वभिः । कृता विसंज्ञा भूयिष्ठाः क्लान्तवाहनसैनिकाः ।
तांस्तु सर्व्वान् परिम्लानान् विदित्वा धृतराष्ट्रजा । दुःशला बालमादाय नप्तारं प्रययौ तदा । २२३५

सुरथस्य सुतं वीरं रथेनाथागमत्तदा । सान्त्वार्थं सर्व्वयोधानामभ्यगच्छत पाण्डवं ।
सा धनञ्जयमासाद्य रुरोदार्त्तस्वरं तदा । धनञ्जयोऽपि तां दृष्ट्वा धनुर्विससृजे प्रभुः ।
समुत्सृज्य धनुः पार्थो विधिवद्भगिनीं तदा । प्राह किं करवाणीति सा च तं प्रत्युवाच ह
एष ते भरतश्रेष्ठ स्वस्रीयस्यात्मजः शिशुः । अभिवादयते पार्थ तं पश्य पुरुषर्षभ ।
इत्युक्तस्तस्य पितरं स पप्रच्छार्ज्जुनस्तदा । क्वासाविति ततो राजन् दुःशला वाक्यमब्रवीत् ।
पितृशोकाभिसन्तप्तो विषादार्त्तोऽस्य वै पिता । पञ्चत्वमगमद्वीरो यथा तन्मे निशामय ।
स पूर्व्वं पितरं श्रुत्वा हतं युद्धे त्वयाऽनघ । त्वामागतञ्च संश्रुत्य युद्धाय हयसारिणं ।
पितुश्च मृत्युदुःखार्त्तो जहात् प्राणान् धनञ्जय । प्राप्तो वीभत्सुरित्येव नाम श्रुत्वैव तेऽनघ ।
विषादार्त्तः पपातोर्व्व्यां ममार च ममात्मजः । तं दृष्ट्वा पतितं तत्र ततस्तस्यात्मजं प्रभो ।
गृहीत्वा समनुप्राप्ता त्वामद्य शरणैषिणी । इत्युक्त्वार्त्तस्वरं सा तु मुमोच धृतराष्ट्रजा ।
दीना दीनं स्थितं पार्थमब्रवीच्चाप्यधोमुखं । स्वसारं समवेक्षस्व स्वस्रीयात्मजमेव च ।
कर्त्तुमर्हसि धर्म्मज्ञ दयां कुरुकुलोद्वह । विस्मृत्य कुरुराजानं तञ्च मन्दं जयद्रथं ।
अभिमन्योर्यथा जातः परिक्षित् परवीरहा । तथाऽयं सुरथाज्जातो मम पौत्रो महाभुजः ।
तमादाय नरव्याघ्र सम्प्राप्ताऽस्मि तवान्तिकं । शमार्थं सर्व्वयोधानां शृणु चेदं वचो मम ।
आगतोऽयं महाबाहो तस्य मन्दस्य पुत्रकः । प्रसादमस्य बालस्य तस्मात्त्वं कर्त्तुमर्हसि ।
एष प्रसाद्य शिरसा प्रशमार्थमरिन्दम । याचते त्वां महाबाहो शमं गच्छ धनञ्जय ।
बालस्य हतबन्धोश्च पार्थ किञ्चिदजानतः । प्रसादं कुरु धर्म्मज्ञ मा मन्युवशमन्वगाः ।
तमनार्य्यं नृशंसञ्च विस्मृत्यास्य पितामहं । आगस्कारिणमत्यर्थं प्रसादं कर्त्तुमर्हसि ।
एवं ब्रुवन्त्यां करुणं दुःशलायां धनञ्जयः । संस्मृत्य देवीं गान्धारीं धृतराष्ट्रञ्च पार्थिवं ।
उवाच दुःखशोकार्त्तः क्षत्रधर्म्मं व्यगर्हयन् । यत्कृते बान्धवाः सर्व्वे मया नीता यमक्षयं ।
इत्युक्त्वा बहुसान्त्वादि प्रसादमकरोज्जयः । परिष्वज्य च तां प्रीतो विससर्ज्ज गृहान् प्रति ।
दुःशला चापि तान् योधान् निवार्य्य महतो रणात् । संपूज्य पार्थं प्रययौ गृहानेव शुभानना ।
एवं निर्ज्जित्य तान् वीरान् सैन्धवान् स धनञ्जयः । अन्वधावत धावन्तं तं हयं कामचारिणं ।
ततो मृगमिवाकाशे यथा देवः पिनाकधृक् । ससार तं तथा वीरो विधिवद्यज्ञियं हयं ।
स च वाजी यथेष्टेन तांस्तान्देशान् यथाक्रमं । विचचार यथाकामं कर्म्म पार्थस्य वर्द्धयन् ।
क्रमेण स हयस्त्वेवं विचरन् पुरुषर्षभ । मणिपूरपतेर्द्देशमुपायात् सहपाण्डवः ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसरणे सैन्धवपराजये अष्टसप्ततोऽध्यायः ॥ ७८ ॥
॥ वैशम्पायन उवाच । श्रुत्वा तु नृपतिः प्राप्तं पितरं बभ्रुवाहनः । निर्य्ययौ विनयेनाथ ब्राह्मणार्घ्यपुरःसरः ।
मणिपूरेश्वरन्त्वेवमुपायातं धनञ्जयः । नाभ्यनन्दत् स मेधावी क्षत्रधर्म्ममनुस्मरन् ।
उवाच च स धर्म्मात्मा समन्युः फाल्गुनस्तदा । प्रक्रियेयं न ते युक्ता बहिस्त्वं क्षत्रधर्म्मतः ।

संरक्ष्यमाणं तुरगं यौधिष्ठिरमुपागतं । यज्ञियं विषयान्ते मां नायोत्सीः किन्नु पुत्रक । २२०५

धिक् त्वामस्तु सुदुर्बुद्धे क्षत्रधर्म्मबहिष्कृतं । यो मां युद्धाय सम्प्राप्तं साम्नैव प्रत्यगृह्णथाः ।

न त्वया पुरुषार्थो हि कश्चिदस्तीह जीवता । यस्त्वं स्त्रीवद्युधा प्राप्तं मां साम्ना प्रत्यगृह्णथाः ।

यद्यहं न्यस्तशस्त्रस्त्वामागच्छेयं सुदुर्म्मते । प्रक्रियेयं भवेद्युक्ता तावत्तव नराधम ।

तमेवमुक्तं भर्त्रा तु विदित्वा पन्नगात्मजा । अमृष्यमाणा भित्त्वोर्व्वीमुलूपी समुपागमत् ।

सा ददर्श ततः पुत्रं विमृशन्तमधोमुखं । सन्तर्ज्यमानमसकृत् पित्रा युद्धार्थिना प्रभो । २२१०

ततः सा चारुसर्व्वाङ्गी समुपेत्योरगात्मजा । उलूपी प्राह वचनं धर्म्म्यं धर्म्मविशारदं ।

उलूपीं मां निबोध त्वं मातरं पन्नगात्मजां । कुरुष्व वचनं पुत्र धर्म्मस्ते भविता परः ।

युध्यस्वैनं कुरुश्रेष्ठं पितरं युद्धदुर्म्मदं । एवमेव हि ते प्रीतो भविष्यति न संशयः ।

एवं दुर्म्मर्षितो राजा स मात्रा बभ्रुवाहनः । मनश्चक्रे महातेजा युद्धाय भरतर्षभ ।

सन्नह्य काञ्चनं वर्म्म शिरस्त्राणञ्च भानुमत् । तूणीरशतसम्बाधमारुरोह रथोत्तमं । २२१५

सर्व्वोपकरणोपेतं युक्तमश्वैर्म्मनोजवैः । सचक्रोपस्करं श्रीमान् हेमभाण्डपरिष्कृतं ।

परमार्च्चितमुच्छ्रित्य ध्वजं सिंहं हिरण्मयं । प्रययौ पार्थमुद्दिश्य स राजा बभ्रुवाहनः ।

ततोऽभ्येत्य हयं वीरो यज्ञियं पार्थरक्षितं । ग्राहयामास पुरुषैर्हयशिक्षाविशारदैः ।

गृहीतं वाजिनं दृष्ट्वा प्रीतात्मा स धनञ्जयः । पुत्रं रथस्थं भूमिष्ठः स न्यवारयदाहवे ।

स तत्र राजा तं वीरं शरसङ्घैरनेकशः । अर्द्दयामास निशितैराशीविषविषोपमैः । २२२०

तयोः समभवद्युद्धं पितुः पुत्रस्य चातुलं । देवासुररणप्रख्यमुभयोः प्रीयमाणयोः ।

किरीटिनं प्रविव्याध शरेणानतपर्व्वणा । जत्रुदेशे नरव्याघ्रं प्रहसन् बभ्रुवाहनः ।

सोऽभ्यगात् सह पुङ्खेन वल्मीकमिव पन्नगः । विनिर्भिद्य च कौन्तेयं प्रविवेश महीतलं ।

स गाढवेदनो धीमानालम्ब्य धनुरुत्तमं । दिव्यं तेजः समाविश्य प्रमीत इव सोऽभवत् ।

स संज्ञामुपलभ्याथ प्रशस्य पुरुषर्षभः । पुत्रं शक्रात्मजो वाक्यमिदमाह महाद्युतिः । २२२५

साधु साधु महाबाहो वत्स चित्राङ्गदात्मज । सदृशं कर्म्म ते दृष्ट्वा प्रीतिमानस्मि पुत्रक ।

विमुञ्चाम्येष ते बाणान् पुत्र युद्धे स्थिरो भव । इत्येवमुक्त्वा नाराचैरभ्यवर्षदमित्रहा ।

तान् स गाण्डीवनिर्म्मुक्तान् वज्राशनिसमप्रभान् । नाराचानच्छिनद्राजा भल्लैः सर्व्वांस्त्रिधा द्विधा ।

तस्य पार्थः शरैर्द्दिव्यैर्ध्वजं हेमपरिष्कृतं । सुवर्णतालप्रतिमं क्षुरेणापाहरद्रथात् ।

हयांश्चास्य महाकायान् महावेगानरिन्दम । चकार राजन्निर्ज्जीवान् प्रहसन्निव पाण्डवः । २२३०

स रथादवतीर्य्याथ राजा परमकोपनः । पदातिः पितरं क्रुद्धो योधयामास पाण्डवं ।

सम्प्रीयमाणः पार्थानामृषभः पुत्रविक्रमात् । नात्यर्थं पीडयामास पुत्रं वज्रधरात्मजः ।

स मन्यमानो विमुखं पितरं बभ्रुवाहनः । शरैराशीविषाकारैः पुनरेवार्द्दयद्बली ।

ततः स बाल्यात् पितरं विव्याध हृदि पत्रिणा । निशितेन सुपुङ्खेन बलवद्बभ्रुवाहनः ।

विवेश पाण्डवं राजन् मर्म भित्त्वाऽतिदुःखकृत् । स तेनातिभृशं विद्धः पुत्रेण कुरुनन्दनः । ॥२२३५॥
महीं जगाम मोहार्त्तस्ततो राजन् धनञ्जयः । तस्मिन्निपतिते वीरे कौरवाणां धुरन्धरे ।
सोऽपि मोहं जगामाथ ततश्चित्राङ्गदासुतः । व्यायम्य संयुगे राजा दृष्ट्वा च पितरं हतं ।
पूर्व्वमेव स बाणौघैर्गाढविद्धोऽर्ज्जुनेन च । पपात सोऽपि धरणीमालिङ्ग्य रणमूर्द्धनि ।
भर्त्तारं निहतं दृष्ट्वा पुत्रञ्च पतितं भुवि । चित्राङ्गदा परित्रस्ता प्रविवेश रणाजिरे ।
शोकसन्तप्तहृदया रुदती वेपती भृशं । मणिपूरपतेर्म्माता ददर्श निहतं पतिं । ॥२२४०॥
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे अर्ज्जुनपराजये ऊनाशीतोऽध्यायः ॥ ७९ ॥
॥ वैशम्पायन उवाच ॥ ततो बहुतरं भूरि विलप्य कमलेक्षणा । मुमोह दुःखसन्तप्ता पपात च महीतले ।
प्रतिलभ्य च सा संज्ञां देवी दिव्यवपुर्द्धरा । उलूपीं पन्नगसुतां दृष्ट्वेदं वाक्यमब्रवीत् ।
उलूपि पश्य भर्त्तारं शयानं निहतं रणे । त्वत्कृते मम पुत्रेण बालेन समितिञ्जयं ।
ननु त्वमार्य्यधर्म्मज्ञा ननु चासि पतिव्रता । यत्त्वत्कृतेऽयं पतितः पतिस्ते निहतो रणे ।
किन्तु सर्व्वापराधोऽयं यदि तेऽद्य धनञ्जयः । क्षमस्व याच्यमाना वै जीवयस्व धनञ्जयं । ॥२२४५॥
ननु त्वमार्य्ये धर्म्मज्ञा त्रैलोक्यविदिता शुभे । यद्घातयित्वा पुत्रेण भर्त्तारं नानुशोचसि ।
नाहं शोचामि तनयं हतं पन्नगनन्दिनि । पतिमेव तु शोचामि यस्यातिथ्यमिदं कृतं ।
इत्युक्त्वा सा तदा देवीमुलूपीं पन्नगात्मजां । भर्त्तारमभिगम्येदमित्युवाच यशस्विनी ।
उत्तिष्ठ कुरुमुख्यस्य प्रियमुख्योऽसि मे प्रिय । अयमश्वो महाबाहो मया ते परिमोचितः ।
ननु त्वया नाम विभो धर्म्मराजस्य यज्ञियः । अयमश्वोऽनुसर्त्तव्यः स शेषे किं महीतले । ॥२२५०॥
त्वयि प्राणा ममायत्ताः कुरूणां कुरुनन्दन । स कस्मात् प्राणदोऽन्येषां प्राणान् सन्त्यक्तवानसि ।
॥ चित्राङ्गदोवाच ॥ उलूपि साधु पश्येमं पतिं निपतितं भुवि । पुत्रञ्चेमं समुत्साह्य घातयित्वा न शोचसि ।
कामं स्वपितु बालोऽयं भूमौ मृत्युवशं गतः । लोहिताक्षो गुडाकेशो विजयः साधु जीवतु ।
नापराधोऽस्ति सुभगे नराणां बहुभार्य्यता । प्रमदानां भवत्येष मा ते भूद्बुद्धिरीदृशी ।
सख्यञ्चैतत् कृतं धात्रा शश्वदव्ययमेव तु । सख्यं समभिजानीहि सत्यं सङ्गतमस्तु ते । ॥२२५५॥
पुत्रेण घातयित्वेमं पतिं यदि न मेऽद्य वै । जीवन्तं दर्शयस्यद्य परित्यक्ष्यामि जीवितं ।
साऽहं दुःखान्विता देवि पतिपुत्रविनाकृता । इहैव प्रायमासिष्ये प्रेक्षन्त्यास्ते न संशयः ।
इत्युक्त्वा पन्नगसुतां सपत्नीं चैत्रवाहनी । ततः प्रायमुपासीना तूष्णीमासीज्जनाधिप ।
॥ वैशम्पायन उवाच ॥ ततो विलप्य विरता भर्त्तुः पादौ प्रगृह्य सा । उपविष्टाऽभवद्दीना सोच्छ्वासं पुत्रमिच्छती ।
ततः संज्ञां पुनर्लब्ध्वा स राजा बभ्रुवाहनः । मातरं तामथालोक्य रणभूमावथाब्रवीत् । ॥२२६०॥
इतो दुःखतरं किन्नु यन्मे माता सुखैधिता । भूमौ निपतितं वीरमनुशेते मृतं पतिं ।
निहन्तारं रणेऽरीणां सर्व्वशस्त्रभृतां वरं । मया विनिहतं सङ्ख्ये प्रेक्षते दुर्म्मरं बत ।
अहोऽस्या हृदयं देव्या दृढं यन्न विदीर्य्यते । व्यूढोरस्कं महाबाहुं प्रेक्षन्त्या निहतं पतिं ।

दुर्म्मरं पुरुषेणेह मन्ये ह्यध्यन्यनागते। यत्र नाहं न मे माता विप्रयुज्येत जीवितात्।
हा हा धिक् कुरुवीरस्य सन्नाहं काञ्चनं भुवि। व्यपविद्धं हतस्येह मया पुत्रेण पश्यत। २३६५
भो भो पश्यत मे वीरं पितरं ब्राह्मणा भुवि। शयानं वीरशयने मया पुत्रेण पातितं।
ब्राह्मणाः कुरुमुख्यस्य ये मुक्ता हयसारिणः। कुर्व्वन्ति शान्तिं कामस्य रणे योऽयं मया हतः।
व्यादिशन्तु च किं विप्राः प्रायश्चित्तमिहाद्य मे। आनृशंसस्य पापस्य पितृहन्तू रणाजिरे।
दुश्चरा द्वादशसमा हत्वा पितरमद्य वै। ममेह सुनृशंसस्य संवीतस्यास्य चर्म्मणा।
शिरःकपाले चास्यैव युञ्जतः पितुरद्य मे। प्रायश्चित्तं हि नास्त्यन्यद्धत्वाऽद्य पितरं मम। २३७०
पश्य नागोत्तमसुते भर्त्तारं निहतं मया। कृतं प्रियं मया तेऽद्य निहत्य समरेऽर्ज्जुनं।
सोऽहमद्य गमिष्यामि गतिं पितृनिषेवितां। न शक्नोम्यात्मनात्मानमहं धारयितुं शुभे।
सा त्वं मयि मृते मातस्तथा गाण्डीवधन्वनि। भव प्रीतिमती देवि सत्येनात्मानमालभे।
इत्युक्त्वा स ततो राजा दुःखशोकसमाहतः। उपस्पृश्य महाराज दुःखाद्वचनमब्रवीत्।
शृण्वन्तु सर्व्वभूतानि स्थावराणि चराणि च। त्वञ्च मातर्यथा सत्यं ब्रवीमि भुजगोत्तमे। २३७५
यदि नोत्तिष्ठति जयः पिता मे नरसत्तमः। अस्मिन्नेव रणोद्देशे शोषयिष्ये कलेवरं।
न हि मे पितरं हत्वा निष्कृतिर्व्विद्यते क्वचित्। नरकं प्रतिपत्स्यामि ध्रुवं गुरुवधार्द्दितः।
वीरं हि क्षत्रियं हत्वा गोशतेन प्रमुच्यते। पितरन्तु निहत्यैवं दुर्लभा निष्कृतिर्म्मम।
एष एको महातेजाः पाण्डुपुत्रो धनञ्जयः। पिता च मम धर्म्मात्मा तस्य मे निष्कृतिः कुतः।
इत्येवमुक्त्वा नृपते धनञ्जयसुतो नृपः। उपस्पृश्याभवत्तूष्णीं प्रायोपेतो महामतिः। २३८०
॥ वैशम्पायन उवाच ॥ प्रायोपविष्टे नृपतौ मणिपूरेश्वरे तदा। पितृशोकसमाविष्टे सह मात्रा परन्तपे।
उलूपी चिन्तयामास तदा सञ्जीवनं मणिं। स चोपातिष्ठत तदा पन्नगानां परायणं।
तं गृहीत्वा तु कौरव्य नागराजपतेः सुता। मनःप्रह्लादिनीं वाचं सैनिकानामथाब्रवीत्।
उत्तिष्ठ मा शुचः पुत्र नैव जिष्णुस्त्वया जितः। अजेयः पुरुषैरेष तथा देवैः सवासवैः।
मया तु मोहनी नाम मायैषा संप्रदर्शिता। प्रियार्थं पुरुषेन्द्रस्य पितुस्तेऽद्य यशस्विनः। २३८५
जिज्ञासुर्ह्येष पुत्रस्य बलस्य तव कौरव। संग्रामे युध्यतो राजन्नागतः परवीरहा।
तस्मादसि मया पुत्र युद्धाय परिचोदितः। मा पापमात्मनः पुत्र शङ्केथा ह्यण्वपि प्रभो।
ऋषिरेष महानात्मा पुराणः शाश्वतोऽक्षरः। नैनं शक्तो हि संग्रामे जेतुं शक्रोऽपि पुत्रक।
अयन्तु मे मणिर्द्दिव्यः समानीतो विशाम्पते। मृतान् मृतान् पन्नगेन्द्रान् यो जीवयति नित्यद।
एवमस्योरसि त्वञ्च स्थापयस्व पितुः प्रभो। सञ्जीवितं तदा पार्थं स त्वं द्रष्टासि पाण्डवं। २३९०
इत्युक्तः स्थापयामास तस्योरसि मणिं तदा। पार्थस्यामिततेजाः स पितुः स्नेहादपापकृत्।
तस्मिन्न्यस्ते मणौ वीरो जिष्णुरुज्जीवितः प्रभुः। चिरसुप्त इवोत्तस्थौ मृष्टलोहितलोचनः।
तमुत्थितं महात्मानं लब्धसंज्ञं मनस्विनं। समीक्ष्य पितरं बाल्यो ववन्दे बभ्रुवाहनः।

उत्थिते पुरुषव्याघ्रे पुनर्लब्धजीविते प्रभो । दिव्याः सुमनसः पुण्या ववृषे पाकशासनः ।

अनाहता दुन्दुभयो विनेदुर्मेघनिस्वनाः । साधु साध्विति चाकाशे बभूव सुमहान् स्वनः । २२९५

उत्थाय च महाबाहुः पर्य्याश्वस्तो धनञ्जयः । बभ्रुवाहनमालिङ्ग्य समाजिघ्रत मूर्द्धनि ।

ददर्श चापि दूरेऽस्य मातरं शोककर्षितां । उलूप्या सह तिष्ठन्तीं ततोऽपृच्छद्धनञ्जयः ।

किमिदं लक्ष्यते सर्व्वं शोकविस्मयहर्षवत् । रणाजिरममित्रघ्न यदि जानासि शंस मे ।

जननी च किमर्थन्ते रणभूमिमुपागता । नागेन्द्रदुहिता चेयमुलूपी किमिहागता ।

जानाम्यहमिदं युद्धं त्वया मद्वचनात् कृतं । स्त्रीणामागमने हेतुमहमिच्छामि वेदितुं । २३००

तमुवाच तथा पृष्टो मणिपूरपतिस्तदा । प्रसाद्य शिरसा विद्वानुलूपी पृच्छ्यतामियं ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे अर्ज्जुनप्रत्युज्जीवने अशीतितमोऽध्यायः ॥ ८० ॥

॥ अर्ज्जुन उवाच ॥ किमागमनकृत्यन्ते कौरव्यकुलनन्दिनि । मणिपूरपतेर्मातुस्तथैव च रणाजिरे ।

कच्चित् कुशलकामाऽसि राज्ञोऽस्य भुजगात्मजे । मम वा चपलापाङ्गि कच्चित्त्वं शुभमिच्छसि ।

कच्चित्ते पृथुलश्रोणि नाप्रियं प्रियदर्शने । अकार्षमहमज्ञानादयं वा बभ्रुवाहनः ।

कच्चित्तु राजपुत्री ते सपत्नी चैत्रवाहनी । चित्राङ्गदा वरारोहा नापराध्यति किञ्चन । २३०५

तमुवाचोरगपतेर्दुहिता प्रहसन्निव । न मे त्वमपराद्धोऽसि न हि मे बभ्रुवाहनः ।

न जनित्री तथाऽस्येयं मम या प्रेष्यवत् स्थिता । श्रूयतां यद्यथा चेदं मया सर्व्वं विचेष्टितं ।

न मे कोपस्त्वया कार्य्यः शिरसा त्वां प्रसादये । त्वत्प्रियार्थं हि कौरव्य कृतमेतन्मया विभो ।

यत्तच्छृणु महाबाहो निखिलेन धनञ्जय । महाभारतयुद्धे यत् त्वया शान्तनवो नृपः ।

अधर्म्मेण हतः पार्थ तस्यैषा निष्कृतिः कृता । न हि भीष्मस्त्वया वीर युध्यमानो हि पातितः । २३१०

शिखण्डिना तु संयुक्तस्तमाश्रित्य हतस्त्वया । तस्य शान्तिमकृत्वा त्वं त्यजेथा यदि जीवितं ।

कर्म्मणा तेन पापेन पतेथा निरये ध्रुवं । एषा तु विहिता शान्तिः पुत्राद्यां प्राप्तवानसि ।

वसुभिर्व्वसुधापाल गङ्गया च महामते । पुरा हि श्रुतमेतत्ते वसुभिः कथितं मया ।

गङ्गायास्तीरमाश्रित्य हते शान्तनवे नृप । आप्लुत्य देवा वसवः समेत्य च महानदीं ।

इदमूचुर्व्वचो घोरं भागीरथ्या मते तदा । एष शान्तनवो भीष्मो निहतः सव्यसाचिना । २३१५

अयुध्यमानः संग्रामे संसक्तोऽन्येन भामिनि । तदनेनाभिषङ्गेण वयमद्य धनञ्जयं ।

शापेन योजयामेति तथाऽस्त्विति च साऽब्रवीत् । तदहं पितुरावेद्य प्रविश्य व्यथितेन्द्रिया ।

अभवं स च तच्छ्रुत्वा विषादमगमत् परं । पिता तु मे वसून् गत्वा त्वदर्थं समयाचत ।

पुनः पुनः प्रसाद्यैनांस्त एनमिदमब्रुवन् । पुत्रस्तस्य महाभाग मणिपूरेश्वरो युवा ।

स एनं रणमध्यस्थः शरैः पातयिता भुवि । एवं कृते स नागेन्द्र मुक्तशापो भविष्यति । २३२०

गच्छेति वसुभिश्चोक्तो मम चेदं शशंस सः । तच्छ्रुत्वा त्वं मया तस्मात् शापादसि विमोचितः ।

न हि त्वां देवराजोऽपि समरेषु पराजयेत् । आत्मा पुत्रः स्मृतस्तस्मात्तेनेहासि पराजितः ।

नहि दोषो मम मतः कथं वा मन्यसे विभो । इत्येवमुक्तो विजयः प्रसन्नात्माऽब्रवीदिदं ।
सर्व्वं मे सुप्रियं देवि यदेतत् कृतवत्यसि । इत्युक्त्वा सोऽब्रवीत् पुत्रं मणिपूरपतिं जयः ।
चित्राङ्गदायाः शृण्वन्त्याः कौरव्यदुहितुस्तदा । युधिष्ठिरस्याश्वमेधः परां चैत्रीं भविष्यति ।  २४४५
तत्रागच्छेः सहामात्यो मातृभ्यां सहितो नृप । इत्येवमुक्तः पार्थेन स राजा बभ्रुवाहनः ।
उवाच पितरं धीमानिदमस्राविलेक्षणः । उपयास्यामि धर्म्मज्ञ भवतः शासनादहं ।
अश्वमेधे महायज्ञे द्विजातिपरिवेषकः । मम त्वनुग्रहार्थाय प्रविशस्व पुरं स्वकं ।
भार्य्याभ्यां सह धर्म्मज्ञ मा भूत्तेऽत्र विचारणा । उषित्वेह निशामेकां सुखं स्वभवने प्रभो ।
पुनरश्वानुगमनं कर्त्ताऽसि जयतां वर । इत्युक्तः स तु पुत्रेण तदा वानरकेतनः ।  २४५०
स्मयन् प्रोवाच कौन्तेयस्तदा चित्राङ्गदासुतं । विदितं ते महाबाहो यथा दीक्षां चराम्यहं ।
न स तावत् प्रवेक्ष्यामि पुरं ते पृथुलोचन । यथाकामं व्रजत्येष यज्ञियोऽश्वो नरर्षभ ।
स्वस्ति तेऽस्तु गमिष्यामि न स्थानं विद्यते मम । स तत्र विधिवत्तेन पूजितः पाकशासनिः ।
भार्य्याभ्यामभ्यनुज्ञातः प्रायाद्भरतसत्तम ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे एकाशीतितमोऽध्यायः ॥ ८१ ॥
॥ वैशम्पायन उवाच ॥ स तु वाजी समुद्रान्तां पर्य्येत्य वसुधामिमां । निवृत्तोऽभिमुखो राजन् येन वारणसाह्वयं ।  २४५५
अनुगच्छंश्च तुरगं निवृत्तोऽथ किरीटभृत् । यदृच्छया समापेदे पुरं राजगृहं तदा ।
तमभ्याशगतं दृष्ट्वा सहदेवात्मजः प्रभो । क्षत्रधर्म्मे स्थितो वीरः समरायाजुहाव ह ।
ततः पुरात् स निष्क्रम्य रथी धन्वी शरी तली । मेघसन्धिः पदातिन्तं धनञ्जयमुपाद्रवत् ।
आसाद्य च महातेजा मेघसन्धिर्द्धनञ्जयं । बालभावान्महाराज प्रोवाचेदं न कौशलात् ।
किमयं चार्य्यते वाजी स्त्रीमध्य इव भारत । हयमेनं हरिष्यामि प्रयतस्व विमोक्षणे ।  २४६०
अदत्तानुनयो युद्धे यदि त्वं पितृभिर्म्मम । करिष्यामि तवातिथ्यं प्रहर प्रहरामि च ।
इत्युक्तः प्रत्युवाचैनं प्रहसन्निव पाण्डवः । विघ्नकर्त्ता मया वार्य्य इति मे व्रतमाहितं ।
भ्रात्रा ज्येष्ठेन नृपते तवापि विदितं ध्रुवं । प्रहरस्व यथाशक्ति न मन्युर्विद्यते मम ।
इत्युक्तः प्राहरत् पूर्व्वं पाण्डवं मगधेश्वरः । किरञ्छरसहस्राणि वर्षाणीव सहस्रदृक् ।
ततो गाण्डीवभृच्छूरो गाण्डीवप्रहितैः शरैः । चकार मोघांस्तान् बाणान् सयत्नान् भरतर्षभ ।  २४६५
स मोघं तस्य बाणौघं कृत्वा वानरकेतनः । शरान्मुमोच ज्वलितान् दीप्तास्यानिव पन्नगान् ।
ध्वजे पताकादण्डेषु रथयन्त्रहयेषु च । अन्येषु च रथाङ्गेषु न शरीरे न सारथौ ।
संरक्ष्यमाणः पार्थेन शरीरे सव्यसाचिना । मन्यमानः स्ववीर्य्यं तन्मागधः प्राहिणोत् शरान् ।
ततो गाण्डीवधन्वा तु मागधेन भृशाहतः । बभौ वसन्तसमये पलाशः पुष्पितो यथा ।
अवध्यमानः सोऽभ्यघ्नन्मागधः पाण्डवर्षभं । तेन तस्थौ स कौरव्य लोकवीरस्य दर्शने ।  २४७०
सव्यसाची तु संक्रुद्धो विकृष्य बलवद्धनुः । हयांश्चकार निर्ज्जीवान् सारथेश्च शिरोऽहरत् ।

धनुश्चास्य महच्चित्रं क्षुरेण प्रचकर्त्त ह । हस्तावापं पताकाञ्च ध्वजञ्चास्य न्यपातयत् ।
स राजा व्यथितो व्यश्वो विधनुर्हतसारथिः । गदामादाय कौन्तेयमभिदुद्राव वेगवान् ।
तस्यापतत एवाशु गदां हेमपरिष्कृतां । शरैश्चकर्त्त बहुधा बहुभिर्गृध्रवाजितैः ।
सा गदा शकलीभूता विशीर्णमणिबन्धना । व्याली विमुच्यमानेव पपात धरणीतले । २३९५
विरथं विधनुष्कञ्च गदया परिवर्ज्जितं । नैच्छत्ताडयितुं धीमानर्ज्जुनः समराग्रणीः ।
तत एनं विमनसं क्षत्रधर्म्मे समास्थितं । सान्त्वपूर्व्वमिदं वाक्यमब्रवीत् कपिकेतनः ।
पर्य्याप्तः क्षत्रधर्म्मोऽयं दर्शितः पुत्र गम्यतां । बह्वेतत् समरे कर्म्म तव बालस्य पार्थिव ।
युधिष्ठिरस्य सन्देशो न हन्तव्या नृपा इति । तेन जीवसि राजंस्त्वमपराद्धोऽपि मे रणे ।
इति मत्वा तदात्मानं प्रत्यादिष्टं स्म मागधः । तथ्यमित्यभिगम्यैनं प्राञ्जलिः प्रत्यपूजयत् । २४००
पराजितोऽस्मि भद्रन्ते नाहं योद्धुमिहोत्सहे । यद्यत् कृत्यं मया तेऽद्य तद्ब्रूहि कृतमेव तु ।
तमर्ज्जुनः समाश्वास्य पुनरेवेदमब्रवीत् । आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः ।
इत्युक्तः स तथेत्युक्त्वा पूजयामास तं हयं । फाल्गुनञ्च युधिश्रेष्ठं विधिवत् सहदेवजः ।
ततो यथेष्टमगमत् पुनरेव स केशरी । ततः समुद्रतीरेण वङ्गान् पुण्ड्रान् सकोशलान् ।
तत्र तत्र च भूरीणि म्लेच्छसैन्यान्यनेकशः । विजिग्ये धनुषा राजन् गाण्डीवेन धनञ्जयः । २४०५
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे मागधपराजये द्व्यशीतोऽध्यायः ॥ ८२ ॥
॥ वैशम्पायन उवाच ॥ मागधेनार्च्चितो राजन् पाण्डवः श्वेतवाहनः । दक्षिणां दिशमास्थाय चारयामास तं हयं ।
ततः स पुनरावर्त्त्य हयः कामचरो बली । आससाद पुरीं रम्यां चेदीनां शुक्तिमाह्वयां ।
शरभेणार्च्चितस्तत्र शिशुपालसुतेन सः । युद्धपूर्व्वं तदा तेन पूजया च महाबलः ।
ततोऽर्च्चितो ययौ राजंस्तदा स तुरगोत्तमः । काशीनन्ध्रान् कोशलांश्च किरातानथ तङ्गणान् ।
पूजां तत्र यथान्यायं प्रतिगृह्य धनञ्जयः । पुनरावृत्य कौन्तेयो दशार्णानगमत्तदा । २४१०
तत्र चित्राङ्गदो नाम बलवानरिमर्द्दनः । तेन युद्धमभूत्तस्य विजयस्यातिभैरवं ।
तञ्चापि वशमानीय किरीटी पुरुषर्षभः । निषादराज्ञो विषयमेकलव्यस्य जग्मिवान् ।
एकलव्यसुतश्चैनं युद्धेन जगृहे तदा । ततश्चक्रे निषादैः स संग्रामं लोमहर्षणं ।
ततस्तमपि कौन्तेयः समरेष्वपराजितः । जिगाय युधि दुर्द्धर्षो यज्ञविघ्नार्थमागतं ।
स तं जित्वा महाराज नैषादिं पाकशासनिः । अर्च्चितः प्रययौ भूयो दक्षिणं सलिलार्णवं । २४१५
तत्रापि द्रविडैरन्ध्रै रौद्रैर्माहिषकैरपि । तथा कोल्वगिरेयैश्च युद्धमासीत् किरीटिनः ।
तांश्चापि विजयो जित्वा नातितीव्रेण कर्म्मणा । तुरगस्य वशेनाथ सुराष्ट्रानभितो ययौ ।
गोकर्णमथ चासाद्य प्रभासमपि जग्मिवान् । ततो द्वारवतीं रम्यां वृष्णिवीराभिपालितां ।
आससाद हयः श्रीमान् कुरुराजस्य यज्ञियः । तमुन्मथ्य हयश्रेष्ठं यादवानां कुमारकाः ।
प्रययुस्तांस्तदा राजन्नुग्रसेनो न्यवारयत् । ततः पुराद्विनिष्क्रम्य वृष्ण्यन्धकपतिस्तदा । २४२०

सहितो वसुदेवेन मातुलेन किरीटिनः । तौ समेत्य कुरुश्रेष्ठं विधिवत् प्रीतिपूर्व्वकं ।
परया भारतश्रेष्ठं पूजया समवस्थितौ । ततस्ताभ्यामनुज्ञातो ययौ येन हयो गतः ।
ततः स पश्चिमं देशं समुद्रस्य तदा हयः । क्रमेण व्यचरत् स्फीतस्ततः पञ्चनदं ययौ ।
तस्मादपि स कौरव्यं गान्धारविषयं हयः । विचचार यथाकामं कौन्तेयानुगतस्तदा ।
ततो गान्धारराजेन युद्धमासीत् किरीटिनः । घोरं शकुनिपुत्रेण पूर्व्ववैरानुसारिणा । २३८६
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे द्व्यशीतोऽध्यायः ॥ ८२ ॥
॥ वैशम्पायन उवाच ॥ शकुनेस्तनयो वीरो गान्धाराणां महारथः । प्रत्युद्ययौ गुडाकेशं सैन्येन महता वृतः ।
हस्त्यश्वरथयुक्तेन पताकाध्वजमालिना । अमृष्यमाणास्ते योधा नृपस्य शकुनेर्व्वधं ।
अभ्ययुः सहिताः पार्थं प्रगृहीतशरासनाः । स तानुवाच धर्म्मात्मा वीभत्सुरपराजितः ।
युधिष्ठिरस्य वचनं न च ते जगृहुर्हितं । वार्य्यमाणापि पार्थेन सान्त्वपूर्व्वममर्षिताः ।
परिवार्य्य हयं जग्मुस्ततश्चुक्रोध पाण्डवः । ततः शिरांसि दीप्ताग्रैस्तेषां चिच्छेद पाण्डवः । २३९०
क्षुरैर्गाण्डीवनिर्मुक्तैर्नातियत्नादिवार्ज्जुनः । ते वध्यमानाः पार्थेन हयमुत्सृज्य संभ्रमात् ।
न्यवर्त्तन्त महाराज शरवर्षार्द्दिता भृशं । निरुध्यमानस्तैश्चापि गान्धारैः पाण्डुनन्दनः ।
आदिश्यादिश्य तेजस्वी शिरांस्येषां न्यपातयत् । वध्यमानेषु तेष्वाजौ गान्धारेषु समन्ततः ।
स राजा शकुनेः पुत्रः पाण्डवं प्रत्यवारयत् । तं युध्यमानं राजानं क्षत्त्रधर्म्मे व्यवस्थितं ।
पार्थोऽब्रवीन्न मे वध्या राजानो राजशासनात् । अलं युद्धेन ते वीर न तेऽस्त्यद्य पराजयः । २३९५
इत्युक्तस्तदनादृत्य वाक्यमज्ञानमोहितः । स शक्रसमकर्म्माणं समवाकिरदाशुगैः ।
तस्य पार्थः शिरस्त्राणमर्द्धचन्द्रेण पत्रिणा । अपाहरदसंभ्रान्तो जयद्रथशिरो यथा ।
तं दृष्ट्वा विस्मयं जग्मुर्गान्धाराः सर्व्व एव ते । इच्छता तेन न हतो राजेत्यपि च तं विदुः ।
गान्धारराजपुत्रस्तु पलायनकृतक्षणः । ययौ तैरेव सहितस्त्रस्तैः क्षुद्रमृगैरिव ।
तेषान्तु तरसा पार्थस्तत्रैव परिधावतां । प्रजहारोत्तमाङ्गानि भल्लैः सन्नतपर्व्वभिः । २४००
उच्छ्रितांस्तु भुजान् केचिन्नाबुध्यन्त शरैर्हतान् । शरैर्गाण्डीवनिर्मुक्तैः पृथुभिः पार्थचोदितैः
संभ्रान्तनरनागाश्वमपतद्विद्रुतं बलं । हतविध्वस्तभूयिष्ठमावर्त्तत मुहुर्मुहुः ।
नाभ्यदृश्यन्त वीरस्य केचिदग्र्येऽग्र्यकर्म्मणः । रिपवः पात्यमाना वै ये सहेयुर्म्महाशरं ।
ततो गान्धारराजस्य मन्त्रिवृद्धपुरःसरा । जननी निर्ययौ भीता पुरस्कृत्यार्घमुत्तमं ।
सा न्यवारयदव्यग्रं तं पुत्रं युद्धदुर्म्मदं । प्रसादयामास च तं जिष्णुमक्लिष्टकारिणं । २४०५
तां पूजयित्वा वीभत्सुः प्रसादमकरोत् प्रभुः । शकुनेश्चापि तनयं सान्त्वयन्निदमब्रवीत् ।
न मे प्रियं महाबाहो यत्ते बुद्धिरियं कृता । प्रतियोद्धुममित्रघ्न भ्रातैव त्वं ममानघ ।
गान्धारीं मातरं स्मृत्वा धृतराष्ट्रकृतेन च । तेन जीवसि राजंस्त्वं निहतास्त्वनुगास्तव ।

मैवं भूः शाम्यतां वैरं मा ते भूद्बुद्धिरीदृशी । न शक्यास्ते पराजेतुं भीमसेनेन नृपश्च नः ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे चतुरशीतितमोऽध्यायः ॥ ८४ ॥
॥ वैशम्पायन उवाच ॥ इत्युक्त्वाऽनुययौ पार्थो हयं कामविचारिणं । न्यवर्त्तत ततो वाजी येन नागाह्वयं पुरं । २४९०
तं निवृत्तन्तु शुश्राव चारेणैव युधिष्ठिरः । श्रुत्वाऽर्ज्जुनं कुशलिनं स च हृष्टमनाऽभवत् ।
विजयस्य च तत् कर्म्म गान्धारविषये तदा । श्रुत्वा चान्येषु देशेषु स सुप्रीतोऽभवत्तदा ।
एतस्मिन्नेव काले तु द्वादशीं माघपाक्षिकीं । इष्टं गृहीत्वा नक्षत्रं धर्म्मराजो युधिष्ठिरः ।
समानीय महातेजाः सर्व्वान् भ्रातॄन् महीपतिः । भीमञ्च नकुलञ्चैव सहदेवञ्च कौरव ।
प्रोवाचेदं वचः काले तदा धर्म्मभृतां वरः । आमन्त्र्य वदतां श्रेष्ठो भीमं प्रहरतां वरं । २४९५
आयाति भीमसेनोऽसौ सहाश्वेन तवानुजः । यथा मे पुरुषाः प्राहुर्ये धनञ्जयचारिणः ।
उपस्थितश्च कालोऽयमभितो वर्त्तते हयः । माघी च पौर्णमासीयं मासः शेषो वृकोदर ।
तत् प्रस्थापयन्तु विद्वांसो ब्राह्मणा वेदपारगाः । वाजिमेधार्थसिद्ध्यर्थं देशं पश्यन्तु यज्ञियं ।
इत्युक्तः स तु तच्चक्रे भीमो नृपतिशासनं । हृष्टः श्रुत्वा गुडाकेशमायातं पुरुषर्षभं ।
ततो ययौ भीमसेनः प्राज्ञैः स्थपतिभिः सह । ब्राह्मणानग्रतः कृत्वा कुशलान् यज्ञकर्म्मणि । २५००
तं स शालचयं श्रीमत् संप्रतोलीसुघट्टितं । मापयामास कौरव्यो यज्ञवाटं यथाविधि ।
प्रासादशतसम्बाधं मणिप्रवरकुट्टिमं । कारयामास विधिवद्धेमरत्नविभूषितं ।
स्तम्भान् कनकचित्रांश्च तोरणानि बृहन्ति च । यज्ञायतनदेशेषु दत्त्वा शुद्धञ्च काञ्चनं ।
अन्तःपुराणां राज्ञाञ्च नानादेशसमीयुषां । कारयामास धर्म्मात्मा तत्र तत्र यथाविधि ।
ब्राह्मणानाञ्च वेश्मानि नानादेशसमीयुषां । कारयामास कौन्तेयो विधिवत्तान्यनेकशः । २५०५
तथा संप्रेषयामास दूतान् नृपतिशासनात् । भीमसेनो महाबाहो राज्ञामक्लिष्टकर्म्मणां ।
ते प्रियार्थं कुरुपतेराययुर्नृपसत्तमाः । रत्नान्यनेकान्यादाय स्त्रियोऽश्वानायुधानि च ।
तेषां निविशतान्तेषु शिबिरेषु महात्मनां । नर्द्दतः सागरस्येव दिवस्पृगभवत् स्वनः ।
तेषामभ्यागतानाञ्च स राजा कुरुवर्द्धनः । व्यादिदेशान्नपानानि शय्याश्चाप्यतिमानुषाः ।
वाहनानाञ्च विविधाः शालाः शालीक्षुगोरसैः । उपेता भरतश्रेष्ठो व्यादिदेश स धर्म्मराट् । २५१०
तथा तस्मिन् महायज्ञे धर्म्मराजस्य धीमतः । समाजग्मुर्मुनिगणा बहवो ब्रह्मवादिनः ।
ये च द्विजातिप्रवरास्तत्रासन् पृथिवीपते । समाजग्मुः सशिष्यांस्तान् प्रतिजग्राह कौरवः ।
सर्व्वांश्चताननुययौ यावदावसथान् प्रति । स्वयमेव महातेजा दम्भं त्यक्त्वा युधिष्ठिरः ।
ततः कृत्वा स्थपतयः शिल्पिनोऽन्ये च ये तदा । कृत्स्नं यज्ञविधिं राज्ञे धर्म्मराजे न्यवेदयन् ।
तच्छ्रुत्वा धर्म्मराजस्तु कृतं सर्व्वमतन्द्रितः । हृष्टरूपोऽभवद्राजा सह भ्रातृभिराहृतः । २५१५
॥ वैशम्पायन उवाच ॥ तस्मिन् यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः । हेतुवादान् बहूनाहुः परस्परजिगीषवः ।

ददृशुर्न्नृपतयो यज्ञस्य विधिमुत्तमं । देवेन्द्रस्येव विहितं भीमसेनेन भारत ।
ददृशुस्तोरणान्यत्र शातकुम्भमयानि ते । शय्यासनविहारांश्च सुबहून् रत्नसञ्चयान् ।
घटान् पात्रीः कटाहानि कलसान् वर्द्धमानकान् । न हि किञ्चिदसौवर्णमपश्यन् वसुधाधिपाः ।
यूपांश्च शास्त्रपठितान्दारवान् हेमभूषितान् । उपकॢप्तान् यथाकालं विधिवद्भूरिवर्च्चसः ।     २५४०
स्थलजा जलजा ये च पशवः केचन प्रभो । सर्व्वानेव समानीतानपश्यंस्तत्र ते नृपाः ।
गाश्चैव महिषीश्चैव तथा वृद्धस्त्रियोऽपि च । औदकानि च सत्त्वानि श्वापदानि वयांसि च ।
जरायुजाण्डजातानि स्वेदजान्युद्भिदानि च । पर्व्वतानूपजातानि भूतानि ददृशुश्च ते ।
एवं प्रमुदितं सर्व्वं पशुगोधनधान्यतः । यज्ञवाटं नृपा दृष्ट्वा परं विस्मयमागताः ।
ब्राह्मणानां विशाञ्चैव बहुमृष्टान्नमृद्धिमत् । पूर्णे शतसहस्रे तु विप्राणां तत्र भुञ्जतां ।     २५४५
दुन्दुभिर्म्मेघनिर्घोषो मुहुर्म्मुहुरताड्यत । विननादासकृच्चापि दिवसे दिवसे गते ।
एवं स ववृते यज्ञो धर्म्मराजस्य धीमतः । अन्नस्य सुबहून् राजन्नुत्सर्गान् पर्व्वतोपमान् ।
दधिकुल्याश्च ददृशुः सर्पिषश्च ह्रदान् जनाः । जम्बुद्वीपो हि सकलो नानाजनपदायुतः ।
राजन्नदृश्यतैकस्थो राज्ञस्तस्य महामखे । तत्र जातीसहस्राणि पुरुषाणां ततस्ततः ।
गृहीत्वा भाजनान् जग्मुर्ब्बहूनि भरतर्षभ । स्रग्विणश्चापि ते सर्व्वे सुमृष्टमणिकुण्डलाः ।     २५५०
पर्य्यवेषन् द्विजातींस्तान् शतशोऽथ सहस्रशः । विविधान्यन्नपानानि पुरुषा येऽनुयायिनः
ते वै नृपोपभोज्यानि ब्राह्मणेभ्यो ददुश्च ह ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि युधिष्ठिरयज्ञे पञ्चाशीतोऽध्यायः ॥ ८५ ॥
॥ वैशम्पायन उवाच ॥ समागतान् वेदविदो राज्ञश्च पृथिवीश्वरान् । दृष्ट्वा युधिष्ठिरो राजा भीमसेनमभाषत ।
उपायाता नरव्याघ्र य एते पृथिवीश्वराः । एतेषां क्रियतां पूजा पूजार्हा हि नराधिपाः ।
इत्युक्तः स तथा चक्रे नरेन्द्रेण यशस्विना । भीमसेनो महातेजा यमाभ्यां सह पाण्डवः ।     २५५५
अथाभ्यगच्छद्गोविन्दो वृष्णिभिः सह धर्म्मजं । बलदेवं पुरस्कृत्य सर्व्वप्राणभृतांवरः ।
युयुधानेन सहितः प्रद्युम्नेन गदेन च । निशठेनाथ साम्बेन तथैव कृतवर्म्मणा ।
तेषामपि परां पूजां चक्रे भीमो महारथः । विविशुस्ते च वेश्मानि रत्नवन्ति च सर्व्वशः ।
युधिष्ठिरसमीपे तु कथान्ते मधुसूदनः । अर्ज्जुनं कथयामास बहुसंग्रामकर्षितं ।
स तं पप्रच्छ कौन्तेयः पुनः पुनररिन्दमं । धर्म्मजः शक्रजं जिष्णुं समाचष्ट जगत्पतिः ।     २५६०
आगमद्द्वारकावासी समाप्तः पुरुषो नृप । योऽद्राक्षीत् पाण्डवश्रेष्ठं बहुसंग्रामकर्षितं ।
समीपे च महाबाहुमाचष्ट च मम प्रभो । कुरु कार्य्याणि कौन्तेय हयमेधार्थसिद्धये ।
इत्युक्तः प्रत्युवाचैनं धर्म्मराजो युधिष्ठिरः । दिष्ट्या स कुशली जिष्णुरुपायाति च माधव ।
यदिदं सन्दिदेशास्मिन् पाण्डवानां बलाग्रणीः । तदाख्यातुमिहेच्छामि भवता यदुनन्दन ।
इत्युक्तो धर्म्मराजेन वृष्ण्यन्धकपतिस्तदा । प्रोवाचेदं वचो वाग्मी धर्म्मात्मानं युधिष्ठिरं ।     २५६५

इदमाह महाराज पार्थवाक्यं नरेश्वरः । वाच्यो युधिष्ठिरः कृष्ण काले वाक्यमिदं मम ।
आगमिष्यन्ति राजानः सर्व्वे वै कौरवर्षभ । प्राप्तानां महतां पूजा कार्य्या ह्येतत् क्षमं हि नः ।
इत्येतद्वचनाद्राजा विज्ञाप्यो मम मानद । यथा चात्ययिकं न स्यादर्घ्याहरणेऽभवत् ।
कर्त्तुमर्हति तद्राजा भवांश्चाप्यनुमन्यतां । राजद्वेषान्न नश्येयुरिमा राजन् पुनः प्रजाः ।
इदमन्यच्च कौन्तेय वचः स पुरुषोऽब्रवीत् । धनञ्जयस्य नृपते तन्मे निगदतः शृणु । २५६०
उपयास्यति यज्ञं नो मणिपूरपतिर्नृपः । पुत्त्रो मम महातेजा दयितो बभ्रुवाहनः ।
तं भवान् मदपेक्षार्थं विधिवत् प्रतिपूजयेत् । स तु भक्तोऽनुरक्तश्च मम नित्यमिति प्रभो ।
इत्येतद्वचनं श्रुत्वा धर्मराजो युधिष्ठिरः । अभिनन्द्यास्य तद्वाक्यमिदं वचनमब्रवीत् ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि युधिष्ठिराश्वमेधे षडशीतितमोऽध्यायः ॥ ८६ ॥
॥ युधिष्ठिर उवाच ॥ श्रुतं प्रियमिदं कृष्ण यत्त्वमर्हसि भाषितुं । तन्मेऽमृतरसं पुण्यं मनो ह्लादयति प्रभो ।
बहूनि किल युद्धानि विजयस्य नराधिपैः । पुनरासन् हृषीकेश तत्र तत्र च मे श्रुतं । २५६५
किं निमित्तं स नित्यं हि पार्थः सुखविवर्ज्जितः । अतीव विजयो धीमानिति मे दूयते मनः ।
सञ्चिन्तयामि कौन्तेयं रहो जिष्णुं जनार्द्दन । अतीव दुःखभागी स सततं पाण्डुनन्दनः ।
किन्नु तस्य शरीरेऽस्ति सर्व्वलक्षणपूजिते । अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते ।
अतीवासुखभोगी स सततं कुन्तिनन्दनः । न हि पश्यामि बीभत्सोर्निन्द्यं गात्रेषु किञ्चन ।
श्रोतव्यञ्चेन्मयैतद्वै तन्मे व्याख्यातुमर्हसि । इत्युक्तः स हृषीकेशो ध्यात्वा सुमहदन्तरं । २५७०
राजानं भोजराजन्यवर्द्धनो विष्णुरब्रवीत् । न ह्यस्य नृपते किञ्चित् संश्लिष्टमुपलक्षये ।
ऋते पुरुषसिंहस्य पिण्डिकेऽस्याधिके यतः । स ताभ्यां पुरुषव्याघ्रो नित्यमध्वसु वर्त्तते ।
न चान्यदनुपश्यामि येनासौ दुःखभाजनं । इत्युक्तः पुरुषश्रेष्ठस्तदा कृष्णेन धीमता ।
प्रोवाच वृष्णिशार्द्दूलमेवमेतदिति प्रभो । कृष्णा तु द्रौपदी कृष्णं तिर्य्यक् सासूयमैक्षत ।
प्रतिजग्राह तस्यास्तं प्रणयञ्चापि केशिहा । सख्युः सखा हृषीकेशः साक्षादिव धनञ्जयः । २५७५
तत्र भीमादयस्ते तु कुरवो याजकाश्च ये । रेमुः श्रुत्वा विचित्रार्थां धनञ्जयकथां शुभां ।
तेषां कथयतामेव पुरुषोऽर्ज्जुनसंकथां । उपायाद्वचनाद्दूतो विजयस्य महात्मनः ।
सोऽभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान् । उपायातं नरव्याघ्रं फाल्गुनं प्रत्यवेदयत् ।
तच्छ्रुत्वा नृपतिस्तस्य हर्षवाष्पाकुलेक्षणः । प्रियाख्याननिमित्तं वै ददौ बहुधनं तदा ।
ततो द्वितीयदिवसे महान् शब्दो व्यवर्द्धत । आगच्छति नरव्याघ्रे कौरवाणां धुरन्धरे । २५८०
ततो रेणुः समुद्भूतो विबभौ तस्य वाजिनः । अभितो वर्त्तमानस्य यथोच्चैःश्रवसस्तथा ।
तत्र हर्षकरीर्व्वाचो नराणां शुश्रुवेऽर्ज्जुनः । दिष्ट्यासि पार्थ कुशली धन्यो राजा युधिष्ठिरः ।
कोऽन्यो हि पृथिवीं कृत्स्नां जित्वा हि युधि पार्थिवान् । चारयित्वा हयश्रेष्ठमुपायाच्चैव तेऽर्ज्जुनात् ।
ये व्यतीता महात्मानो राजानः सगरादयः । तेषामपीदृशं कर्म्म न कदाचन शुश्रुम ।

नैतदन्ये करिष्यन्ति भवितारो नराधिपाः । यत्त्वं कुरुकुलश्रेष्ठ दुष्करं कृतवानसि । २५९८
इत्येवं वदतां तेषां नृणां कर्णसुखा गिरः । शृण्वन् विवेश धर्म्मात्मा फाल्गुनो यज्ञसंस्तरं ।
ततो राजा सहामात्यः कृष्णश्च यदुनन्दनः । धृतराष्ट्रं पुरस्कृत्य तं प्रत्युद्ययुस्तदा ।
सोऽभिवाद्य पितुः पादौ धर्म्मराजस्य धीमतः । भीमादींश्चापि संपूज्य पर्य्यष्वजत केशवं ।
तैः समेत्यार्चितस्तांश्च प्रत्यर्च्याथ यथाविधि । विशश्राम महाबाहुस्तीरं लब्ध्वेव पारगः ।
एतस्मिन्नेव काले तु स राजा बभ्रुवाहनः । मातृभ्यां सहितो धीमान् कुरूनेव जगाम ह । २६००
तत्र वृद्धान् यथावत् स कुरूनन्यांश्च पार्थिवान् । अभिवाद्य महाबाहुस्तैश्चापि प्रतिनन्दितः ।
प्रविवेश पितामह्याः कुन्त्या भवनमुत्तमं ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीता पर्व्वणि बभ्रुवाहनागमने सप्ताशीतोऽध्यायः ॥ ८७ ॥

॥ वैशम्पायन उवाच ॥ स प्रविश्य महाबाहुः पाण्डवानां निवेशनं । पितामहीमभ्यवन्दत् साम्ना परमवल्गुना ।
ततश्चित्राङ्गदा देवी कौरव्यस्यात्मजाऽपि च । पृथां कृष्णाञ्च सहिते विनयेनोपजग्मतुः ।
सुभद्राञ्च यथान्यायं याश्चान्याः कुरुयोषितः । ददौ कुन्ती ततस्ताभ्यां रत्नानि विविधानि च । २६०५
द्रौपदी च सुभद्रा च याश्चाप्यन्याः स्त्रियः । ऊषतुस्तत्र ते देव्यौ महार्हशयनासने ।
सुपूजिते स्वयं कुन्त्या पार्थस्य हितकाम्यया । स च राजा महातेजाः पूजितो बभ्रुवाहनः ।
धृतराष्ट्रं महीपालमुपतस्थे यथाविधि । युधिष्ठिरञ्च राजानं भीमादींश्चापि पाण्डवान् ।
उपगम्य महातेजा विनयेनाभ्यवादयत् । स तैः प्रेम्णा परिष्वक्तः पूजितश्च यथाविधि ।
धनञ्चास्मै ददुर्भूरि प्रीयमाणा महारथाः । तथैव च महीपालः कृष्णं चक्रगदाधरं । २६१०
प्रद्युम्न इव गोविन्दं विनयेनोपतस्थिवान् । तस्मै कृष्णो ददौ राज्ञे महार्हमतिपूजितं ।
रथं हेमपरिष्कारं दिव्याश्वयुजमुत्तमं । धर्म्मराजश्च भीमश्च फाल्गुनश्च यमौ तथा ।
पृथक् पृथक् च ते चैनं मानार्हाभ्यामयोजयन् । ततस्तृतीयदिवसे सत्यवत्यात्मजो मुनिः ।
युधिष्ठिरं समभ्येत्य वाग्मी वचनमब्रवीत् । अद्यप्रभृति कौन्तेय यजस्व समयो हि ते ।
मुहूर्त्तो यज्ञियः प्राप्तश्चोदयन्तीह याजकाः । अहीनो नाम राजेन्द्र क्रतुस्तेऽयञ्च कल्प्यतां । २६१५
बहुत्वात् काञ्चनाख्यस्य ख्यातो बहुसुवर्णकः । एवमत्र महाराज दक्षिणां त्रिगुणां कुरु ।
त्रित्वं व्रजतु ते राजन् ब्राह्मणा ह्यत्र कारणं । त्रीनश्वमेधानत्र त्वं संप्राप्य बहुदक्षिणान् ।
ज्ञातिवध्याकृतं पापं प्रहास्यसि नराधिप । पवित्रं परमं ह्येतत् पावनानामनुत्तमं ।
यदश्वमेधावभृथं प्राप्स्यसे कुरुनन्दन । इत्युक्तः स तु तेजस्वी व्यासेनामिततेजसा ।
दीक्षां विवेश धर्म्मात्मा वाजिमेधाप्तये ततः । ततो यज्ञं महाबाहुर्व्वाजिमेधं महाक्रतुं । २६२०
बह्वन्नदक्षिणं राजा सर्व्वकामगुणान्वितं । तत्र वेदविदो राजंश्चक्रुः कर्म्माणि याजकाः ।
परिक्रमन्तः सर्व्वज्ञा विधिवत् साधुशिक्षितं । न तेषां स्खलितं किञ्चिदासीच्चाप्यकृतं तथा ।
क्रममुक्तञ्च युक्तञ्च चक्रुस्तत्र द्विजर्षभाः । कृत्वा प्रवर्ग्यं धर्म्मज्ञा यथावद्द्विजसत्तमाः ।

चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः । अभिषूय ततो राजन् सोमं सोमपसत्तमाः ।
सवनान्यानुपूर्व्व्येण चक्रुः शास्त्रानुसारिणः । न तत्र कृपणः कश्चिन्न दरिद्रो बभूव ह । २६२५
क्षुधितो दुःखितो वाऽपि प्राकृतो वाऽपि मानवः । भोजनं भोजनार्थिभ्यो दापयामास नित्यदा ।
भीमसेनो महातेजाः सततं राजशासनात् । संस्तारे कुशलाश्चापि सर्व्वकार्य्याणि याजकाः ।
दिवसे दिवसे चक्रुर्यथाशास्त्रानुदर्शनात् । नाषडङ्गविदत्रासीत् सदस्यस्तस्य धीमतः ।
नाव्रतो नानुपाध्यायो न च वादाविचक्षणः । ततो यूपोच्छ्रये प्राप्ते षड्बैल्वान् भरतर्षभ ।
खादिरान् बिल्वसमितांस्तावतः सर्व्ववर्णिनः । देवदारुमयौ द्वौ तु यूपौ कुरुपतेर्मखे । २६३०
श्लेष्मातकमयञ्चैकं याजकाः समकल्पयन् । शोभार्थञ्चापरान् यूपान् काञ्चनान् भरतर्षभ ।
स भीमः कारयामास धर्म्मराजस्य शासनात् । ते व्यराजन्त राजर्षे वासोभिरुपशोभिताः ।
महेन्द्रानुगता देवा यथा सप्तर्षिभिर्दिवि । इष्टकाः काञ्चनीश्चात्र चयनार्थं कृता ऽभवन् ।
शुशुभे चयनं तत्र दक्षस्येव प्रजापतेः । चतुश्चित्यस्य तस्यासीदष्टादशकरात्मकः ।
स रुक्मपक्षो निचितस्त्रिकोणो गरुडाकृतिः । ततो नियुक्ताः पशवो यथाशास्त्रं मनीषिभिः । २६३५
तं तं देवं समुद्दिश्य पक्षिणस्तु यथाविधि । ऋषभाः शास्त्रपठितास्तथा जलचराश्च ये ।
सर्व्वांस्तानभ्ययुञ्जंस्ते तत्राग्निचयकर्म्मणि । यूपेषु नियता चासीत् पशूनां त्रिशती तथा ।
अश्वरत्नोत्तरा यज्ञे कौन्तेयस्य महात्मनः । स यज्ञः शुशुभे तस्य साक्षाद्देवर्षिसङ्कुलः ।
गन्धर्व्वगणसङ्गीतः प्रनृत्योऽप्सरसां गणैः । स किम्पुरुषसङ्कीर्णः किन्नरैरुपशोभितः ।
सिद्धविप्रनिवासैश्च समन्तादभिसंवृतः । तस्मिन् सदसि नित्यास्तु व्यासशिष्या द्विजर्षभाः । २६४०
सर्व्वशास्त्रप्रणेतारः कुशला यज्ञसंस्तरे । नारदश्च बभूवात्र तुम्बुरुश्च महाद्युतिः ।
विश्वावसुश्चित्रसेनस्तथाऽन्ये गीतकोविदाः । रमयन्ति स्म तान् विप्रान् यज्ञकर्म्मान्तरेषु वै ।
गन्धर्व्वा गीतकुशला नृत्येषु च विशारदाः ।

इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि अश्वमेधे अष्टाशीतोऽध्यायः ॥ ८८ ॥

॥ वैशम्पायन उवाच ॥ श्रपयित्वा पशूनन्यान् विधिवद्द्विजसत्तमाः । तं तुरङ्गं यथाशास्त्रमालभन्त द्विजातयः ।
ततः संज्ञाप्य तुरगं विधिवद्याजकास्तदा । उपसंवेशयन् राजंस्ततस्तां द्रुपदात्मजां । २६४५
कलाभिस्तिसृभी राजन् यथाविधि मनस्विनीं । उद्धृत्य तु वपां तस्य यथाशास्त्रं द्विजातयः ।
श्रपयामासुरव्यग्रा विधिवद्भरतर्षभ । तं वपाधूमगन्धन्तु धर्म्मराजः सहानुजैः ।
उपाजिघ्रद्यथाशास्त्रं सर्व्वपापापहन्तदा । शिष्टान्यङ्गानि यान्यासंस्तस्याश्वस्य नराधिप ।
तान्यग्नौ जुहुवुर्धीराः समस्ताः षोडशर्त्विजः । संज्ञाप्यैवं तस्य राजन् यज्ञं शक्रतेजसः ।
व्यासः सशिष्यो भगवान् वर्द्धयामास तं नृपं । ततो युधिष्ठिरः प्रादाद्ब्राह्मणेभ्यो यथाविधि । २६५०
कोटीः सहस्रं निष्काणां व्यासाय तु वसुन्धरां । प्रतिगृह्य धरां राजन् व्यासः सत्यवतीसुतः ।
अब्रवीद्भरतश्रेष्ठं धर्म्मराजं युधिष्ठिरं । वसुधा भवतस्त्वेषा संन्यस्ता राजसत्तम ।

निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिनः। युधिष्ठिरस्तु तान् विप्रान् प्रत्युवाच महामनाः।
भ्रातृभिः सहितो धीमान्मध्ये राज्ञां महात्मनां। अश्वमेधे महायज्ञे पृथिवी दक्षिणा कृता।
अर्ज्जुनेन जिता चेयं ऋत्विग्भ्यः प्रापिता मया। वनं प्रवेक्ष्ये विप्राग्र्या विभजध्वं महीमिमां। २६५५
चतुर्द्धा पृथिवीं कृत्वा चातुर्होत्रप्रमाणतः। नाहमादातुमिच्छामि ब्रह्मस्वं द्विजसत्तमाः।
इदं नित्यं मनो विप्रा भ्रातॄणाञ्चैव मे सदा। इत्युक्तवति तस्मिंस्तु भ्रातरो द्रौपदी च सा।
एवमेतदिति प्राहुस्तदाभूल्लोमहर्षणं। ततोऽन्तरीक्षे वागासीत् साधु साध्विति भारत।
तथैव द्विजसङ्घानां शंसतां विबभौ स्वनः। द्वैपायनस्तथा कृष्णः पुनरेव युधिष्ठिरं।
प्रोवाच मध्ये विप्राणामिदं सम्पूजयन्मुनिः। दत्तैषा भवता मह्यं तान्ते प्रतिददाम्यहं। २६६०
हिरण्यं दीयतामेभ्यो ब्राह्मणेभ्यो धराऽस्तु ते। ततोऽब्रवीद्वासुदेवो धर्म्मराजं युधिष्ठिरं।
यथाह भगवान् व्यासस्तथा त्वं कर्त्तुमर्हसि। इत्युक्तः स कुरुश्रेष्ठः प्रीतात्मा भ्रातृभिः सह।
कोटिकोटीकृतां प्रादात् दक्षिणां त्रिगुणां क्रतोः। न करिष्यति तल्लोके कश्चिदन्यो नराधिपः।
यत् कृतं कुरुराजेन मरुत्तस्यानुकुर्व्वता। प्रतिगृह्य तु तद्रत्नं कृष्णद्वैपायनो मुनिः।
ऋत्विग्भ्यः प्रददौ विद्वांश्चतुर्द्धा व्यभजंश्च ते। धरण्या निष्क्रयं दत्त्वा तद्धिरण्यं युधिष्ठिरः। २६६५
धूतपापो जितस्वर्गो मुमुदे भ्रातृभिः सह। ऋत्विजस्तमपर्य्यन्तं सुवर्णनिचयं तदा।
व्यभजन्त द्विजातिभ्यो यथोत्साहं यथासुखं। यज्ञवाटे च यत् किञ्चिद्धिरण्यं सविभूषणं।
तोरणानि च यूपांश्च घटाः पात्रीस्तथेष्टकाः। युधिष्ठिराभ्यनुज्ञाताः सर्व्वं तद्व्यभजन् द्विजाः।
अनन्तरं द्विजातिभ्यः क्षत्रिया जह्रिरे वसु। तथा विट्शूद्रसङ्घाश्च तथाऽन्ये म्लेच्छजातयः।
ततस्ते ब्राह्मणाः सर्व्वे मुदिता जग्मुरालयान्। तर्पिता वसुना तेन धर्म्मराजेन धीमता। २६७०
स्वमंशं भगवान् व्यासः कुन्त्यै प्रादाद्धि मानतः। प्रददौ तस्य महतो हिरण्यस्य महाद्युतिः।
श्वशुरात् प्रीतिदायन्तं प्राप्य सा प्रीतमानसा। चकार पुण्यकन्तेन सुमहत् सङ्घशः पृथा।
गत्वा त्ववभृथं राजा विपाप्मा भ्रातृभिः सह। सभाज्यमानः शुशुभे महेन्द्रस्त्रिदशैरिव।
पाण्डवाश्च महीपालैः समेतैरभिसंवृताः। अशोभन्त महाराज ग्रहास्तारागणैरिव।
राजभ्योऽपि ततः प्रादाद्रत्नानि विविधानि च। गजानश्वानलङ्कारान् स्त्रियो वासांसि काञ्चनं। २६७५
तद्धनौघमपर्य्यन्तं पार्थः पार्थिवमण्डले। विसृजन् शुशुभे राजन् यथा वैश्रवणस्तथा।
आनीय च तथा वीरं राजानं बभ्रुवाहनं। प्रदाय विपुलं वित्तं गृहान् प्रास्थापयत्तदा।
दुःशलायाश्च तं पौत्रं बालकं भरतर्षभः। स्वराज्येऽथ पितुर्धीमान् स्वसुः प्रीत्या न्यवेशयत्।
नृपतींश्चैव तान् सर्व्वान् सुविभक्तान् सुपूजितान्। प्रस्थापयामास वशी कुरुराजो युधिष्ठिरः।
गोविन्दञ्च महात्मानं बलदेवं महाबलं। तथाऽन्यान् वृष्णिवीरांश्च प्रद्युम्नाद्यान् सहस्रशः। २६८०
पूजयित्वा महाराज यथाविधि महाद्युतिः। भ्रातृभिः सहितो राजा प्रास्थापयदरिन्दमः।
एवं बभूव यज्ञः स धर्म्मराजस्य धीमतः। बह्वन्नधनरत्नौघः सुरामैरेयसागरः।

धर्म्मक्षेत्रे कुरुक्षेत्रे धर्म्मज्ञैर्बहुभिर्वृते। उञ्छवृत्तिर्द्विजः कश्चित् कापोतिरभवत्तदा।
सभार्य्यः सह पुत्रेण सस्नुषस्तपसि स्थितः। बभूव शुक्लवृत्तः स धर्म्मात्मा नियतेन्द्रियः।
षष्ठे काले सदा विप्रो भुङ्क्ते तैः सह सुव्रतः। षष्ठे काले कदाचित्तु तस्याहारो न विद्यते।
भुङ्क्तेऽन्यस्मिन् कदाचित् स षष्ठे काले द्विजोत्तमः। कदाचिद्धर्म्मिणस्तस्य दुर्भिक्षे सति दारुणे। २८१५
नाविद्यत तदा विप्राः सञ्चयस्तन्निबोधत। क्षीणौषधिसमावेशे द्रव्यहीनोऽभवत्तदा।
काले कालेऽस्य सम्प्राप्ते नैव विद्येत भोजनं। क्षुधापरिगताः सर्व्वे प्रातिष्ठन्त तदा तु ते।
उञ्छंस्तदा शुक्लपक्षे मध्यं तपति भास्करे। उष्णार्त्तश्च क्षुधार्त्तश्च स विप्रस्तपसि स्थितः।
उञ्छमप्राप्तवानेव ब्राह्मणः क्षुच्छ्रमान्वितः। स तथैव क्षुधाविष्टः सार्द्धं परिजनेन च।
क्षपयामास तं कालं कृच्छ्रप्राणो द्विजोत्तमः। अथ षष्ठे गते काले यवप्रस्थमुपार्ज्जयत्। २८२०
यवप्रस्थन्तु ते सक्तूनकुर्व्वन्त तपस्विनः। कृतजप्याह्निकास्ते तु हुत्वा वह्निं यथाविधि।
कुडवं कुडवं सर्व्वे व्यभजन्त तपस्विनः। अथागच्छद्द्विजः कश्चिदतिथिर्भुञ्जतां तदा।
ते तं दृष्ट्वाऽतिथिं प्राप्तं प्रहृष्टमनसोऽभवन्। तेऽभिवाद्य सुखप्रश्नं दृष्ट्वा तमतिथिं तदा।
विशुद्धमनसो दान्ताः श्रद्धादमसमन्विताः। अनसूयवो जितक्रोधाः साधवो वीतमत्सराः।
त्यक्तमानमदक्रोधा धर्म्मज्ञा द्विजसत्तमाः। सब्रह्मचर्य्यं गोत्रन्ते तस्याख्याता परस्परं। २८२५
कुटीं प्रवेशयामासुः क्षुधार्त्तमतिथिं तदा। इदमर्घ्यञ्च पाद्यञ्च वृषी चेयं तवानघ।
शुचयः सक्तवश्चेमे नियमोपार्ज्जिताः प्रभो। प्रतिगृह्णीष्व भद्रन्ते मया दत्ता द्विजर्षभ।
इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः। भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः।
स उञ्छवृत्तिस्तं प्रेक्ष्य क्षुधापरिगतं द्विजं। आहारं चिन्तयामास कथं तुष्टो भवेदिति।
तस्य भार्य्याऽब्रवीद्वाक्यं मद्भागो दीयतामिति। गच्छत्वेष यथाकामं परितुष्टो द्विजोत्तमः। २८३०
इति ब्रुवन्तीं तां साध्वीं भार्य्यां स द्विजसत्तमः। क्षुधापरिगतां ज्ञात्वा तान् सक्तून्नाभ्यनन्दत।
आत्मानुमानतो विद्वान् स तु विप्रर्षभस्तदा। जानन् वृद्धां क्षुधार्त्ताञ्च श्रान्तां ग्लानां तपस्विनीं।
त्वगस्थिभूतां वेपन्तीं ततो भार्य्यामुवाच ह। अपि कीटपतङ्गानां मृगाणाञ्चैव शोभने।
स्त्रियो रक्ष्याश्च पोष्याश्च न त्वेवं वक्तुमर्हसि। अनुकम्प्यो नरः पत्न्या पुष्टो रक्षित एव च।
धर्म्मकामार्थकार्य्याणि शुश्रूषा कुलसन्ततिः। दाराधीनो धर्म्मश्च पितॄणामात्मनस्तथा। २८३५
न वेत्ति कर्म्मतो भार्य्यारक्षणे योऽक्षमः पुमान्। अयशो महदाप्नोति नरकांश्चैव गच्छति।
प्रपतेद्यशसो दीप्तात् स च लोकान्न चाप्नुयात्। इत्युक्ता सा ततः प्राह धर्म्मार्थौ नौ समौ द्विज।
सक्तुप्रस्थचतुर्भागं गृहाणेमं प्रसीद मे। सत्यं रतिश्च धर्म्मश्च स्वर्गश्च गुणनिर्ज्जितः।
स्त्रीणां पतिसमाधानं काङ्क्षितञ्च द्विजर्षभ। ऋतुर्म्मातुः पितुर्व्वीजं दैवतं परमं पतिः।
भर्त्तुः प्रसादान्नारीणां रतिपुत्रफलं तथा। पालनाद्धि पतिस्त्वं मे भर्त्ताऽसि भरणाच्च मे। २८४०
पुत्रप्रदानाद्वरदस्तस्मात् सक्तून् प्रयच्छ मे। जरापरिगतो वृद्धः क्षुधार्त्तो दुर्ब्बलो भृशं।

उपवासपरिश्रान्तो यदा त्वमपि कर्षितः । इत्युक्तः स तथा सक्तून् प्रस्थशेषं वचोऽब्रवीत् ।
द्विज सक्तूनिमान् भूयः प्रतिगृह्णीष्व सत्तम । स तान् प्रसह्य भुक्त्वा च न तुष्टिमगमद्द्विजः ।
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ।
॥ पुत्र उवाच ॥ सक्तूनिमान् प्रगृह्य त्वं देहि विप्राय सत्तम । इत्येव सुकृतं मन्ये तस्मादेतत् करोम्यहं । २७४५
भवान् हि परिपाल्यो मे सर्वदेव प्रयत्नतः । साधूनां काङ्क्षितं यस्मात् पितुर्वृद्धस्य पालनं ।
पुत्रार्थो विहितो ह्येष वार्द्धके परिपालनं । श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु शाश्वती ।
प्राणधारणमात्रेण शक्यं कर्तुं तपस्त्वया । प्राणो हि परमो धर्मः स्थितो देहेषु देहिनां ।
॥ पितोवाच ॥ अपि वर्षसहस्री त्वं बाल एव मतो मम । उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवेत् सुतात् ।
बालानां क्षुद्बलवती जानाम्येतदहं प्रभो । वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक । २७५०
जीर्णेन वयसा पुत्र न मां क्षुद्बाधतेऽपि च । दीर्घकालं तपस्तप्तं न मे मरणतो भयं ।
॥ पुत्र उवाच ॥ अपत्यमस्मि ते पुत्रस्त्राणात् पुत्र इति श्रुतिः । आत्मा पुत्रः स्मृतस्तस्मात् त्राह्यात्मानमिहात्मना ।
॥ पितोवाच ॥ रूपेण सदृशस्त्वं मे शीलेन च दमेन च । परीक्षितश्च बहुधा सक्तूनादद्मि ते सुत ।
इत्युक्त्वादाय तान् सक्तून् प्रीतात्मा द्विजसत्तमः । प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ।
भुक्त्वा तानपि सक्तून् स नैव तुष्टो बभूव ह । उञ्छवृत्तिस्तु धर्मात्मा व्रीडामनुजगाम ह । २७५५
तं वै वधूः स्थिता साध्वी ब्राह्मणप्रियकाम्यया । सक्तूनादाय संहृष्टा श्वशुरं वाक्यमब्रवीत् ।
सन्तानात्तव सन्तानं मम विप्र भविष्यति । सक्तूनिमानतिथये गृहीत्वा संप्रयच्छ मे ।
तव प्रसादान्निर्वृत्ता मम लोकाः किलाक्षयाः । पौत्रेण तानवाप्नोति यत्र गत्वा न शोचति ।
धर्माद्या हि यथा त्रेता वह्निस्त्रेता तथैव च । तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः ।
पितॄन् ऋणात्तारयति पुत्र इत्यनुशुश्रुम । पुत्रपौत्रैश्च नियतं साधुलोकानुपाश्नुते । २७६०
॥ श्वशुर उवाच ॥ वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै । कर्षितां सुव्रताचारे क्षुधा विह्वलचेतसं ।
कथं सक्तून् ग्रहीष्यामि भूत्वा धर्मोपघातकः । कल्याणवृत्ते कल्याणि नैवं त्वं वक्तुमर्हसि ।
षष्ठे काले व्रतवतीं शीलशौचतपोऽन्वितां । कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं शुभे ।
बाला क्षुधार्त्ता नारी च रक्ष्या त्वं सततं मया । उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी ।
॥ स्नुषोवाच ॥ गुरोर्मम गुरुस्त्वं वै यतो दैवतदैवतं । देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे प्रभो । २७६५
देहः प्राणाश्च धर्मश्च शुश्रूषार्थमिदं गुरोः । तव विप्र प्रसादेन लोकान् प्राप्स्याम्यहं शुभान् ।
अवेक्ष्या इति कृत्वाऽहं दृढभक्तेति वा द्विज । चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि ।
॥ श्वशुर उवाच ॥ अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे । या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे ।
तस्मात् सक्तून् ग्रहीष्यामि वधु नार्हसि वञ्चनां । गणयित्वा महाभागे त्वं हि धर्मभृतां वरे ।
इत्युक्त्वा तानुपादाय सक्तून् प्रादाद्द्विजातये । ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः । २७७०
प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभं । वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः ।

शुद्धेन तव दानेन न्यायोपात्तेन धर्म्मतः। यथाशक्ति विसृष्टेन प्रीतोऽस्मि द्विजसत्तम।
अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः। गगनात् पुष्पवर्षञ्च पश्येदं पतितं भुवि।
सुरर्षिदेवगन्धर्व्वा ये च देवपुरःसराः। स्तुवन्तो देवदूताश्च स्थिता दानेन विस्मिताः।
ब्रह्मर्षयो विमानस्था ब्रह्मलोकचराश्च ये। काङ्क्षन्ते दर्शनं तुभ्यं दिवं व्रज द्विजर्षभ। २७७५
पितृलोकगताः सर्व्वे तारिताः पितरस्त्वया। अनागताश्च बहवः सुबहूनि युगान्युत।
ब्रह्मचर्य्येण दानेन यज्ञेन तपसा तथा। असङ्करेण धर्म्मेण तस्माद्गच्छ दिवं द्विज।
श्रद्धया परया यस्त्वं तपश्चरसि सुव्रत। तस्माद्देवास्तव दानेन प्रीता ब्राह्मणसत्तम।
सर्व्वमेतद्धि यस्मात्ते दत्तं शुद्धेन चेतसा। कृच्छ्रकाले ततः स्वर्गो विजितः कर्म्मणा त्वया।
क्षुधा निर्णुदति प्रज्ञां धर्म्यां बुद्धिं व्यपोहति। क्षुधापरिगतज्ञानो धृतिं त्यजति चैव ह। २७८०
बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवं। यदा दानरुचिः स्याद्वै तदा धर्म्मो न सीदति।
अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च। धर्म्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया।
द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परं। कालः परतरो दानात् श्रद्धा चैव ततः परा।
स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते। स्वर्गार्गलं लोभबीजं रागगुप्तं दुरासदं।
तन्तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रियाः। ब्राह्मणास्तपसा युक्ता यथाशक्तिप्रदायिनः। २७८५
सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च। दद्यादपश्च यः शक्त्या सर्व्वे तुल्यफलाः स्मृताः।
रन्तिदेवो हि नृपतिरपः प्रादादकिञ्चनः। शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः।
न धर्म्मः प्रीयते तात दानैर्दत्तैर्महाफलैः। न्यायलब्धैर्यथा सूक्ष्मैः श्रद्धापूतैः स तुष्यति।
गोप्रदानसहस्राणि द्विजेभ्योऽदान्नृगो नृपः। एकां दत्त्वा स पारक्यां नरकं समपद्यत।
आत्ममांसप्रदानेन शिबिरौशीनरो नृपः। प्राप्य पुण्यकृतान् लोकान् मोदते दिवि सुव्रतः। २७९०
विभवो न नृणां पुण्यं स्वशक्त्या स्वर्जितं सतां। न यज्ञैर्व्विविधैर्व्विप्र यथान्यायेन सञ्चितैः।
क्रोधाद्दानफलं हन्ति लोभात् स्वर्गं न गच्छति। न्यायवृत्तिर्हि तपसा दानवित् स्वर्गमश्नुते।
न राजसूयैर्ब्बहुभिरिष्ट्वा विपुलदक्षिणैः। न चाश्वमेधैर्ब्बहुभिः फलं सममिदं तव।
सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाऽक्षयः। विरजो ब्रह्मसदनं गच्छ विप्र यथासुखं।
सर्व्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितं। आरोहत यथाकामं धर्म्मोऽस्मि द्विज पश्य मां। २७९५
तारितो हि त्वया देहो लोके कीर्त्तिः स्थिरा च ते। सभार्य्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज।
इत्युक्तवाक्ये धर्म्मे तु यानमारुह्य स द्विजः। सदारः ससुतश्चैव सस्नुषश्च दिवं गतः।
तस्मिन् विप्रे गते स्वर्गं ससुते सस्नुषे तदा। भार्य्याचतुर्थे धर्म्मज्ञे ततोऽहं निःसृतो बिलात्।
ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च। दिव्यपुष्पविमर्द्दाच्च साधोर्द्दानलवैश्च तैः।
विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतं। तस्य सत्याभिसन्धस्य सक्तुदानेन चैव ह। २८००
शरीरार्द्धञ्च मे विप्राः शातकुम्भमयं कृतं। पश्यतेदं सुविपुलं तपसा तस्य धीमतः।

कथमेवंविधं स्याद्वै पार्श्वमन्यदिति द्विजाः । तपोवनानि यज्ञांश्च हृष्टोऽभ्येमि पुनः पुनः ।
यज्ञं त्विममहं श्रुत्वा कुरुराजस्य धीमतः । आशया परया प्राप्तो न चाहं काञ्चनीकृतः ।
ततो मयोक्तं तद्वाक्यं प्रहस्य ब्राह्मणर्षभाः । सक्तुप्रस्थेन यज्ञोऽयं सम्मितो नेति सर्व्वथा ।
सक्तुप्रस्थलवैस्तैर्हि तदाऽहं काञ्चनीकृतः । न हि यज्ञो महानेष सदृशस्तैर्मतो मम । २८०५
इत्युक्त्वा नकुलः सर्व्वान् यज्ञे द्विजवरांस्तदा । जगामादर्शनं तेषां विप्रास्ते च ययुर्गृहान् ।
॥ वैशम्पायन उवाच ॥ एतत्ते सर्व्वमाख्यातं मया परपुरञ्जय । यदाश्चर्य्यमभूत्तत्र वाजिमेधे महाक्रतौ ।
न विस्मयस्ते नृपते यज्ञे कार्य्यः कथञ्चन । ऋषिकोटिसहस्राणि तपोभिर्ये दिवं गताः ।
अद्रोहः सर्व्वभूतेषु सन्तोषः शीलमार्ज्जवं । तपो दमश्च सत्यञ्च प्रदानञ्चेति सम्मितं ।
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि नकुलाख्याने नवतितमोऽध्यायः ॥ ९० ॥
॥ जनमेजय उवाच ॥ यज्ञे सक्ता नृपतयस्तपःसक्ता महर्षयः । शान्तिव्यवस्थिता विप्राः शमो दम इति प्रभो । २८१०
तस्माद्यज्ञफलैस्तुल्यं न किञ्चिदिह दृश्यते । इति मे वर्त्तते बुद्धिस्तथा चैतदसंशयं ।
यज्ञैरिष्ट्वा तु बहवो राजानो द्विजसत्तम । इह कीर्त्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्नुयुः ।
देवराजः सहस्राक्षः क्रतुभिर्भूरिदक्षिणैः । देवराज्यं महातेजाः प्राप्तवानखिलं विभुः ।
यदा युधिष्ठिरो राजा भीमार्ज्जुनपुरःसरः । सदृशो देवराजेन समृद्ध्या विक्रमेण च ।
अथ कस्मात् स नकुलो गर्हयामास तं क्रतुं । अश्वमेधं महायज्ञं राजसिंहस्य महात्मनः । २८१५
॥ वैशम्पायन उवाच ॥ यज्ञस्य विधिमग्र्यं वै फलञ्चापि नराधिप । गदतः शृणु मे राजन् यथावदिह भारत ।
पुरा शक्रस्य यजतः सर्व्व ऊचुर्महर्षयः । ऋत्विक्षु कर्म्मव्यग्रेषु वितते यज्ञकर्म्मणि ।
हूयमाने तथा वह्नौ होत्रे गुणसमन्विते । देवेष्वाहूयमानेषु स्थितेषु परमर्षिषु ।
सुप्रतीतैस्तथा विप्रैः स्वागमैः सुस्वरैर्नृप । अश्रान्तैश्चापि लघुभिरध्वर्य्युवृषभैस्तथा ।
आलम्भसमये तस्मिन् गृहीतेषु पशुष्वथ । महर्षयो महाराज बभूवुः कृपयान्विताः । २८२०
ततो दीनान् पशून् दृष्ट्वा ऋषयस्ते तपोधनाः । ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः
अपरिज्ञानमेतत्ते महान्तं धर्म्ममिच्छतः । न हि यज्ञे पशुगणा विधिदृष्टाः पुरन्दर ।
धर्म्मोपघातकस्त्वेष समारम्भस्तव प्रभो । नायं धर्म्मकृतो यज्ञो न हिंसा धर्म्म उच्यते ।
आगमेनैव ते यज्ञं कुर्व्वन्तु यदि चेच्छसि । विधिदृष्टेन यज्ञेन धर्म्मस्ते सुमहान् भवेत् ।
यज बीजैः सहस्राक्ष त्रिवर्षपरमोषितैः । एष धर्म्मो महान् शक्र महागुणफलोदयः । २८२५
शतक्रतुस्तु तद्वाक्यमृषिभिस्तत्त्वदर्शिभिः । उक्तं न प्रतिजग्राह मानान्मोहवशं गतः ।
तेषां विवादः सुमहान् शक्रयज्ञे तपस्विनां । जङ्गमैः स्थावरैर्व्वाऽपि यष्टव्यमिति भारत ।
ते तु खिन्ना विवादेन ऋषयस्तत्त्वदर्शिनः । ततः सन्धाय शक्रेण पप्रच्छुर्नृपतिं वसुं ।
महाभाग कथं यज्ञेष्वागमो नृपसत्तम । यष्टव्यं पशुभिर्मुख्यैरथो बीजै रसैरिति ।
तच्छ्रुत्वा तु वसुस्तेषामविचार्य्य बलाबलं । यथोपनीतैर्यष्टव्यमिति प्रोवाच पार्थिवः । २८३०

एवमुक्त्वा स नृपतिः प्रविवेश रसातलं । उक्त्वाऽथ वितथं प्रश्नं चेदीनामीश्वरः प्रभुः ।
तस्मान्न वाच्यं ह्येकेन बहुज्ञेनापि संशये । प्रजापतिमपाहाय स्वयम्भुवमृते प्रभुं ।
तेन दत्तानि दानानि पापेनाशुद्धबुद्धिना । तानि सर्व्वाण्यनादृत्य नश्यन्ति विपुलान्यपि
तस्याधर्म्मप्रवृत्तस्य हिंसकस्य दुरात्मनः । दानेन कीर्त्तिर्भवति न प्रेत्येह च दुर्म्मतेः ।
अन्यायोपगतं द्रव्यमभीक्ष्णं यो ह्यपण्डितः । धर्म्माभिकाङ्क्षी यजते न स धर्म्मफलं लभेत् । २८३५
धर्म्मवैतंसिको यस्तु पापात्मा पुरुषाधमः । ददाति दानं विप्रेभ्यो लोकविश्वासकारकं ।
पापेन कर्म्मणा विप्रो धनं प्राप्य निरङ्कुशः । रागमोहान्वितः सोऽन्ते कलुषां गतिमश्नुते ।
अपि सञ्चयबुद्धिर्हि लोभमोहवशङ्गतः । उद्वेजयति भूतानि पापेनाशुद्धबुद्धिना ।
एवं लब्ध्वा धनं मोहाद्यो हि दद्याद्यजेत वा । न तस्य स फलं प्रेत्य भुङ्क्ते पापधनागमात् ।
उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः । दानं विभवतो दत्त्वा नराः स्वर्यान्ति धार्म्मिकाः । २८४०
एष धर्म्मो महायोगो दानं भूतदया तथा । ब्रह्मचर्य्यं तथा सत्यमनुक्रोशो धृतिः क्षमा ।
सनातनस्य धर्म्मस्य मूलमेतत् सनातनं । श्रूयन्ते हि पुरावृत्ता विश्वामित्रादयो नृपाः ।
विश्वामित्रोऽसितश्चैव जनकश्च महीपतिः । कक्षसेनार्ष्टिषेणौ च सिन्धुद्वीपश्च पार्थिवः ।
एते चान्ये च बहवः सिद्धिं परमिकां गताः । नृपाः सत्येन दानेन न्यायलब्धैस्तपोधनाः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाश्रितास्तपः । दानधर्म्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत । २८४५
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि एकनवतोऽध्यायः ॥ ९१ ॥
॥ जनमेजय उवाच ॥ धर्म्मागतेन त्यागेन भगवन् स्वर्गमस्ति चेत् । एतन्मे सर्व्वमाचक्ष्व कुशलो ह्यसि भाषितुं ।
तस्योञ्छवृत्तेर्यद्वृत्तं सक्तुदाने फलं महत् । कथितन्तु मम ब्रह्मंस्तथ्यमेतदसंशयं ।
कथं हि सर्व्वयज्ञेषु निश्चयः परमो भवेत् । एतदर्हसि मे वक्तुं निखिलेन द्विजर्षभ ।
॥ वैशम्पायन उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । अगस्त्यस्य महायज्ञे पुरावृत्तमरिन्दम ।
पुराऽगस्त्यो महातेजा दीक्षां द्वादशवार्षिकीं । प्रविवेश महाराज सर्व्वभूतहिते रतः । २८५०
अत्राग्निकल्पा होतार आसन् सत्रे महात्मनः । मूलाहारा फलाहाराः साश्मकुट्टा मरीचिपाः ।
परिपृष्टिका वैघसिकाः सम्प्रक्षालास्तथैव च । यतयो भिक्षवश्चात्र बभूवुः पर्य्यवस्थिताः ।
सर्व्वे प्रत्यक्षधर्म्माणो जितक्रोधा जितेन्द्रियाः । दमे स्थिताश्च सर्व्वे ते हिंसादम्भविवर्ज्जिताः ।
वृत्ते शुद्धे स्थिता नित्यमिन्द्रियैश्चाप्यबाधिताः । उपासते तं यज्ञं यजन्तस्ते महर्षयः ।
यथाशक्त्या भगवता तदन्नं समुपार्ज्जितं । तस्मिन् सत्रे तु यद्वृत्तं यद्योग्यञ्च तदाऽभवत् । २८५५
तथा ह्यनेकैर्मुनिभिर्महान्तः क्रतवः कृताः । एवंविधे त्वगस्त्यस्य वर्त्तमाने तथाऽध्वरे ।
न ववर्ष सहस्राक्षस्तदा भरतसत्तम । ततः कर्म्मान्तरे राजन्नगस्त्यस्य महात्मनः ।
कथेयमभिनिर्वृत्ता मुनीनां भावितात्मनां । अगस्त्यो यजमानोऽसौ ददात्यन्नं विमत्सरः ।
न च वर्षति पर्ज्जन्यः कथमन्नं भविष्यति । सत्रञ्चेदं महद्विप्रा मुनेर्द्वादशवार्षिकं ।

न वर्षिष्यति देवश्च वर्षाण्येतानि द्वादश । एतच्छ्रुत्वा वचः शिष्यस्य महर्षेरथ धीमतः । २८७०

अगस्त्यस्यातितपसः कर्म्मसन्दर्शनं पुनः । इत्येवमुक्ते वचने ततोऽगस्त्यः प्रतापवान् ।

प्रोवाच वाक्यं स तदा प्रसाद्य शिरसा मुनीन् । यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।

चिन्तायज्ञं करिष्यामि विधिरेष सनातनः । यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।

स्पर्शयज्ञं करिष्यामि विधिरेष सनातनः । यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।

व्यायामेनाहरिष्यामि यज्ञानन्यानतिव्रतान् । बीजयज्ञो मयाऽयं वै बहुवर्षसमाचितः । २८७५

बीजैर्हि तं करिष्यामि नात्र विघ्नो भविष्यति । नेदं शक्यं वृथा कर्त्तुं मम सत्रं कथञ्चन ।

वर्षिष्यतीह वा देवो न वा देवो भविष्यति । अथवाऽभ्यर्थनामिन्द्रो न करिष्यति कामतः ।

स्वयमिन्द्रो भविष्यामि जीवयिष्यामि च प्रजाः । यो यदाहारजातश्च स तथैव भविष्यति ।

विशेषश्चैव कर्त्ताऽस्मि पुनः पुनरतीव हि । अद्येह स्वर्णमभ्येतु यच्चान्यद्वसु किञ्चन ।

त्रिषु लोकेषु यच्चास्ति तदिहागम्यतां स्वयं । दिव्याश्चाप्सरसां सङ्घा गन्धर्व्वाश्च सकिन्नराः । २८८०

विश्वावसुश्च ये चान्ये तेऽप्युपासन्तु मे सखं । उत्तरेभ्यः कुरुभ्यश्च यत्किञ्चिद्वसु विद्यते ।

सर्व्वं तदिह यज्ञेषु स्वयमेवोपतिष्ठतु । स्वर्गः स्वर्गसदश्चैव धर्म्मश्च स्वयमेव तु ।

इत्युक्ते सर्व्वमेवैतदभवत्तपसा मुनेः । तस्य दीप्ताग्निमनसस्त्वगस्त्यस्यातितेजसः ।

ततस्ते मुनयो दृष्ट्वा ददृशुस्तपसो बलं । विस्मिता वचनं प्राहुरिदं सर्व्वे महार्थवत् ।

॥ ऋषय ऊचुः ॥ प्रीताः स्मस्तव वाक्येन न त्विच्छाम तपोव्ययं । तैरेव यज्ञैस्तुष्टाः स्म न्यायेनेच्छामहे वयं । २८८५

यज्ञं दीक्षां तथा होमान् यच्चान्यन्मृगयामहे । न्यायेनोपार्ज्जिताहाराः स्वकर्म्माभिरता वयं ।

वेदांश्च ब्रह्मचर्य्येण न्यायतः प्रार्थयामहे । न्यायेनोत्तरकालञ्च गृहेभ्यो निःसृता वयं ।

धर्म्मदृष्टैर्व्विधिद्वारैस्तपस्तप्स्यामहे वयं । भवतः सम्यगिष्टा तु बुद्धिर्हिंसाविवर्ज्जिता ।

एतामहिंसां यज्ञेषु ब्रूयास्त्वं सततं प्रभो । प्रीतास्ततो भविष्यामो वयन्तु द्विजसत्तम ।

विसर्ज्जिताः समाप्तौ च सत्रादस्माद्व्रजामहे । तथा कथयतां तेषां देवराजः पुरन्दरः । २८९०

ववर्ष सुमहातेजा दृष्ट्वा तस्य तपोबलं । आसमाप्तेश्च यज्ञस्य तस्यामितपराक्रमः ।

निकामवर्षी पर्ज्जन्यो बभूव जनमेजय । प्रसादयामास च तमगस्त्यं त्रिदशेश्वरः ।

स्वयमभ्येत्य राजर्षे पुरस्कृत्य बृहस्पतिं । ततो यज्ञसमाप्तौ तान् विससर्ज्ज महामुनीन् ।

अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ।

॥ जनमेजय उवाच ॥ कोऽसौ नकुलरूपेण शिरसा काञ्चनेन वै । प्राह मानुषवद्वाचमेतत् पृष्टो वदस्व मे । २८९६

॥ वैशम्पायन उवाच ॥ एतत् पूर्व्वं न पृष्टोऽहं न चास्माभिः प्रभाषितं । श्रूयतां नकुलो योऽसौ यथा वाक् तस्य मानुषी ।

श्राद्धं सङ्कल्पयामास जमदग्निः पुरा किल । होमधेनुस्तमागाच्च स्वयमेव दुदोह तां ।

तत्पयः स्थापयामास नवे भाण्डे दृढे शुचौ । तच्च क्रोधस्वरूपेण पिठरं धर्म्म आविशत् ।

जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्य्यादिप्रिये कृते । इति सञ्चिन्त्य धर्म्मः स धर्षयामास तत् पयः ।

तमाज्ञाय मुनिः क्रोधं नैवास्य स चुकोप ह । स तु क्रोधस्ततो राजन् ब्राह्मणीं मूर्त्तिमास्थितः । २८९०
जिते तस्मिन् भृगुश्रेष्ठमभ्यभाषदमर्षणः । जितोऽस्मीति भृगुश्रेष्ठ भृगवो ह्यतिरोषणाः ।
लोके मिथ्याप्रवादोऽयं यत्त्वयाऽस्मि विनिर्जितः । वशे स्थितोऽहं त्वय्यद्य क्षमावति महात्मनि ।
बिभेमि तपसः साधो प्रसादं कुरु मे प्रभो ।
॥ जमदग्निरुवाच ॥ साक्षाद्दृष्टोऽसि मे क्रोध गच्छ त्वं विगतज्वरः । न त्वया ऽपकृतं मेऽद्य न च मे मन्युरस्ति वै ।
यान् समुद्दिश्य सङ्कल्पः पयसोऽस्य कृतो मया । पितरस्ते महाभागास्तेभ्यो बुध्यस्व गम्यताम् । २८९५
इत्युक्तो जातसन्त्रासस्तत्रैवान्तरधीयत । पितॄणामभिषङ्गाच्च नकुलत्वमुपागतः ।
स तान् प्रसादयामास शापस्यान्तो भवेदिति । तैश्चाप्युक्तः क्षिपन् धर्म्मं शापस्यान्तमवाप्स्यसि ।
तैश्चोक्तो यज्ञियान् देशान् धर्म्मारण्यं तथैव च । जुगुप्समानो धावन् स तं यज्ञं समुपाद्रवत् ।
धर्म्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः । मुक्तः शापात्ततः क्रोधो धर्म्मो ह्यासीद्युधिष्ठिरः ।
एवमेतत्तदा वृत्तं यज्ञे तस्य महात्मनः । पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा । २९००
इति श्रीमहाभारते आश्वमेधिके पर्व्वणि अनुगीतापर्व्वणि नकुलोपाख्याने द्विनवतोऽध्यायः ॥ ९२ ॥

॥ समाप्तमिदमाश्वमेधिकपर्व्व ॥

॥ अत्र व्यासोक्ताश्वमेधिकश्लोकसंख्यान्यूनाधिक्यदोषो लिपिकरप्रमादाज्ज्ञेयः ॥

---

# श्रीमहाभारतं

॥ अथ आश्रमवासिकपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

॥ जनमेजय उवाच ॥ प्राप्य राज्यं महात्मानः पाण्डवा मे पितामहाः। कथमासन्महाराजे धृतराष्ट्रे महात्मनि।
स तु राजा हतामात्यो हतपुत्रो निराश्रयः। कथमासीद्धतैश्वर्य्यो गान्धारी च यशस्विनी।
कियन्तञ्चैव कालन्ते मम पूर्व्वपितामहाः। स्थिता राज्ये महात्मानस्तन्मे व्याख्यातुमर्हसि।
॥ वैशम्पायन उवाच ॥ प्राप्य राज्यं महात्मानः पाण्डवा हतशत्रवः। धृतराष्ट्रं पुरस्कृत्य पृथिवीं पर्य्यपालयन्।
धृतराष्ट्रमुपातिष्ठद्विदुरः सञ्जयस्तथा। वैश्यापुत्रश्च मेधावी युयुत्सुः कुरुसत्तम। ५
पाण्डवाः सर्व्वकार्य्याणि संपृच्छन्ति स्म तं नृपं। चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पञ्च च।
सदा हि गत्वा ते वीराः पर्य्युपासन्त तं नृपं। पादाभिवादनं कृत्वा धर्म्मराजमते स्थिताः।
ते मूर्द्ध्नि समुपाघ्राताः सर्व्वकार्य्याणि चक्रिरे। कुन्तिभोजसुता चैव गान्धारीमन्ववर्त्तत।
द्रौपदी च सुभद्रा च याश्चान्याः पाण्डवस्त्रियः। समां वृत्तिमवर्त्तन्त तयोः श्वश्र्वोर्यथाविधि।
शयनानि महार्हाणि वासांस्याभरणानि च। राजार्हाणि च सर्व्वाणि भक्ष्यभोज्यान्यनेकशः। १०
युधिष्ठिरो महाराज धृतराष्ट्रेऽभ्युपाहरत्। तथैव कुन्ती गान्धार्य्यां गुरुवृत्तिमवर्त्तत।
विदुरः सञ्जयश्चैव युयुत्सुश्चैव कौरव। उपासते स्म तं वृद्धं हतपुत्रं जनाधिपं।
स्यालो द्रोणस्य यश्चासीद्दयितो ब्राह्मणो महान्। स च तस्मिन् महेष्वासः कृपः समभवत्तदा।
व्यासश्च भगवान्नित्यमासाञ्चक्रे नृपेण ह। कथाः कुर्व्वन् पुराणर्षिर्देवर्षिपितृरक्षसां।
धर्म्मयुक्तानि कार्य्याणि व्यवहारान्वितानि च। धृतराष्ट्राभ्यनुज्ञातो विदुरस्तान्यकारयत्। १५
सामन्तेभ्यः प्रियाण्यस्य कार्य्याणि सुबहून्यपि। प्राप्यन्तेऽर्थैः सुलघुभिः प्रभावाद्विदुरस्य वै।
अकरोद्बन्धमोक्षञ्च वध्यानां मोक्षणं तथा। न च धर्म्मसुतो राजा कदाचित् किञ्चिदब्रवीत्।
विहारयात्रासु पुनः कुरुराजो युधिष्ठिरः। सर्व्वान् कामान् महातेजाः प्रददावम्बिकासुते।
आरालिकाः सूपकारा रागखाण्डविकास्तथा। उपातिष्ठन्त राजानं धृतराष्ट्रं यथा पुरा।
वासांसि च महार्हाणि माल्यानि विविधानि च। उपाजहुर्यथान्यायं धृतराष्ट्रस्य पाण्डवाः। २०

मैरेयमत्स्यमांसानि पानकानि मधूनि च । चित्रान् भक्ष्यविकारांश्च चक्रुस्तस्य यथा पुरा ।
ये चापि पृथिवीपालाः समाजग्मुस्ततस्ततः । उपातिष्ठन्त ते सर्व्वे कौरवेन्द्रं यथा पुरा ।
कुन्ती च द्रौपदी चैव सात्वती च यशस्विनी । उलूपी नागकन्या च देवी चित्राङ्गदा तथा ।
धृष्टकेतोश्च भगिनी जरासन्धसुता तथा । एताश्चान्याश्च बह्व्यो वै योषितः पुरुषर्षभ ।
किङ्कराः पर्य्युपातिष्ठन् सर्व्वाः सुबलजां तदा । यथा पुत्रवियुक्तोऽयं न किञ्चिद्दुःखमाप्नुयात् । २५
इति तानन्वशाद्भ्रातॄन् नित्यमेव युधिष्ठिरः । एवन्ते धर्म्मराजस्य श्रुत्वा वचनमर्थवत् ।
सविशेषमवर्त्तन्त भीममेकं तदा विना । न हि तत्तस्य वीरस्य हृदयादपसर्पति ।
धृतराष्ट्रस्य दुर्बुद्ध्या यद्वृत्तं द्यूतकारितं ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि प्रथमोऽध्यायः ॥ १ ॥
॥ वैशम्पायन उवाच ॥ एवं संपूजितो राजा पाण्डवैरम्बिकासुतः । विजहार यथा पूर्व्वमृषिभिः पर्य्युपासितः ।
ब्रह्मदेयाग्रहारांश्च प्रददौ स कुरूद्वहः । तच्च कुन्तीसुतो राजा सर्व्वमेवान्वपद्यत । १०
आनृशंस्यपरो राजा प्रीयमाणो युधिष्ठिरः । उवाच स तदा भ्रातॄनमात्यांश्च महीपतिः ।
मया चैव भवद्भिश्च मान्य एष नराधिपः । निदेशे धृतराष्ट्रस्य यस्तिष्ठति स मे सुहृत् ।
विपरीतश्च मे शत्रुर्निरस्यश्च भवेन्नरः । पितृवृत्तेषु चाहःसु पुत्राणां श्राद्धकर्म्मणि ।
सुहृदाञ्चैव सर्व्वेषां यावदस्य चिकीर्षितं । ततः स राजा कौरव्यो धृतराष्ट्रो महामनाः ।
ब्राह्मणेभ्यो यथार्हेभ्यो ददौ वित्तान्यनेकशः । धर्म्मराजश्च भीमश्च सव्यसाची यमावपि । १५
तत्सर्व्वमन्ववर्त्तन्त तस्य प्रियचिकीर्षया । कथं नु राजा वृद्धः स पुत्रपौत्रवधार्द्दितः ।
शोकमस्मत्कृतं प्राप्य न म्रियेतेति चिन्त्यते । यावद्धि कुरुवीरस्य जीवपुत्रस्य वै सुखं ।
बभूव तदवाप्नोतु भोगांश्चेति व्यवस्थिताः । ततस्ते सहिताः पञ्च भ्रातरः पाण्डुनन्दनाः ।
तथाशीलाः समातस्थुर्धृतराष्ट्रस्य शासने । धृतराष्ट्रश्च तान् सर्व्वान् विनीतान्नियमे स्थितान् ।
शिष्यवृत्तिं समापन्नान् गुरुवत् प्रत्यपद्यत । गान्धारी चैव पुत्राणां विविधैः श्राद्धकर्म्मभिः । २०
आनृण्यमगमत् कामान् विप्रेभ्यः प्रतिपाद्य सा । एवं धर्म्मभृतां श्रेष्ठो धर्म्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितो धीमान् पूजयामास तं नृपं ।
॥ वैशम्पायन उवाच ॥ स राजा सुमहातेजा वृद्धः कुरुकुलोद्वहः । न ददर्श तदा किञ्चिदप्रियं पाण्डुनन्दने ।
वर्त्तमानेषु सद्वृत्तिं पाण्डवेषु महात्मसु । प्रीतिमानभवद्राजा धृतराष्ट्रोऽम्बिकासुतः ।
सौबलेयी च गान्धारी पुत्रशोकमपास्य तं । सदैव प्रीतिमत्यासीत्तनयेषु निजेष्विव । २५
प्रियाण्येव तु कौरव्यो नाप्रियाणि कुरूद्वहः । वैचित्रवीर्य्ये नृपतौ समाचरत वीर्य्यवान् ।
यद्यद्ब्रूते च किञ्चित् स धृतराष्ट्रो जनाधिपः । गुरु वा लघु वा कार्य्यं गान्धारी च तपस्विनी ।
तं स राजा महाराज पाण्डवानां धुरन्धरः । पूजयित्वा वचस्तत्तदकार्षीत् परवीरहा ।
तेन तस्याभवत् प्रीतो वृत्तेन स नराधिपः । अन्वतप्यच्च संस्मृत्य पुत्रं तं मन्दचेतसं ।

सदा च प्रातरुत्थाय कृतजप्यः शुचिर्नृपः । आशास्ते पाण्डुपुत्राणां समरेष्वपराजयं । ७०
ब्राह्मणान् स्वस्ति वाच्याथ हुत्वा चैव हुताशनं । आयूंषि पाण्डुपुत्राणामाशंसत नराधिपः ।
न तां प्रीतिं परामाप पुत्रेभ्यः स कुरूद्वहः । यां प्रीतिं पाण्डुपुत्रेभ्यः सदाऽवाप तदा नृपः ।
ब्राह्मणानां यथा वृत्तः क्षत्रियाणां यथाविधः । तथा विट्शूद्रसंघानामभवत् स प्रियस्तदा ।
यच्च किञ्चित्तदा पापं धृतराष्ट्रसुतैः कृतं । अकृत्वा हृदि तत् पापं तं नृपं सोऽन्ववर्त्तत ।
यश्च कश्चिन्नरः किञ्चिदप्रियं चाम्बिकासुते । कुरुते द्वेष्यतामेति स कौन्तेयस्य धीमतः । ७५
न राज्ञो धृतराष्ट्रस्य न च दुर्य्योधनस्य वै । उवाच दुष्कृतं कश्चिद्युधिष्ठिरभयान्नरः ।
धृत्या तुष्टो नरेन्द्रस्य गान्धारी विदुरस्तथा । शौचेन चाजातशत्रोर्न तु भीमस्य शत्रुहन् ।
अन्ववर्त्तत तद्वापि निश्चितो धर्म्मजो नृपं । धृतराष्ट्रश्च संप्रेक्ष्य सदा भवति दुर्म्मनाः ।
राजानमनुवर्त्तन्तं धर्म्मपुत्रममित्रहा । अन्ववर्त्तत कौरव्यो हृदयेन पराजितः ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि द्वितीयोऽध्यायः ॥ २ ॥
॥ वैशम्पायन उवाच ॥ युधिष्ठिरस्य नृपतेर्दुर्य्योधनपितुस्तथा । नान्तरं ददृशू राष्ट्रे पुरुषाः प्रणयं प्रति । ८०
यदा तु कौरवो राजा पुत्रं सस्मार दुर्म्मतिं । तदा भीमं हृदा राजन्नपध्याति स पार्थिवः ।
तथैव भीमसेनोऽपि धृतराष्ट्रं जनाधिपं । नामर्षयत राजेन्द्र सदैव दुष्टवद्धृदा ।
अप्रकाशान्यप्रियाणि चकारास्य वृकोदरः । आज्ञां प्रत्यहरच्चापि कृतकैः पुरुषैः सदा ।
स्मरन् दुर्म्मन्त्रितं तस्य वृत्तान्यप्यस्य कानिचित् । अथ भीमः सुहृन्मध्ये बाहुशब्दं तदाऽकरोत् ।
संश्रवे धृतराष्ट्रस्य गान्धार्य्याश्चाप्यमर्षणः । स्मृत्वा दुर्य्योधनं शत्रुं कर्णदुःशासनावपि । ८५
प्रोवाचेदं सुसंरब्धो भीमः स परुषं वचः । अन्धस्य नृपतेः पुत्रा मया परिघबाहुना ।
नीता लोकममुं सर्व्वे नानाशस्त्रात्तयोधिनः । इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ ।
ययोरन्तरमासाद्य धार्त्तराष्ट्राः क्षयं गताः । ताविमौ चन्दनेनाक्तौ चन्दनार्हौ च मे भुजौ ।
याभ्यां दुर्य्योधनो नीतः क्षयं ससुतबान्धवः । एताश्चान्याश्च विविधाः शल्यभूता नराधिपः ।
वृकोदरस्य ता वाचः श्रुत्वा निर्व्वेदमागमत् । सा च बुद्धिमती देवी कालपर्य्यायवेदिनी । ९०
गान्धारी सर्व्वधर्म्मज्ञा तान्यलीकानि शुश्रुवे । ततः पञ्चदशे वर्षे समतीते नराधिपः ।
राजा निर्व्वेदमापेदे भीमवाग्बाणपीडितः । नावबुध्यत तद्राजा कुन्तीपुत्रो युधिष्ठिरः ।
श्वेताश्वो वाऽथ कुन्ती वा द्रौपदी वा यशस्विनी । माद्रीपुत्रौ च धर्म्मज्ञौ चित्तं तस्यान्ववर्त्ततां ।
राज्ञस्तु चित्तं रक्षन्तौ नोचतुः किञ्चिदप्रियं । ततः सम्मानयामास धृतराष्ट्रः सुहृज्जनं ।
वाष्पसन्दिग्धमत्यर्थमिदमाह च तान् भृशं । ९५
॥ धृतराष्ट्र उवाच ॥ विदितं भवतामेतद्यथा वृत्तः कुरुक्षयः । ममापराधात्तत् सर्व्वमनुज्ञातञ्च कौरवैः ।
योऽहं दुष्टमतिं मन्दो ज्ञातीनां भयवर्द्धनं । दुर्य्योधनं कौरवाणामाधिपत्येऽभ्यषेचयं ।
यच्चाहं वासुदेवस्य नाश्रौषं वाक्यमर्थवत् । वध्यतां साध्वयं पापः सामात्य इति दुर्म्मतिः ।

पुत्त्रशोकाभिभूतश्च स्थितमुक्तो मनीषिभिः। विदुरेणाथ भीष्मेण द्रोणेन च कृपेण च।
पदे पदे भगवता व्यासेन च महात्मना। सञ्जयेनाथ गान्धार्य्या तदिदं तप्यते च मां। ८०
यदहं पाण्डुपुत्त्रेषु गुणवत्सु महात्मसु। न दत्तवान् श्रियं दीप्तां पितृपैतामहीमिमां।
विनाशं पश्यमानो हि सर्व्वराज्ञां गदाग्रजः। एतत् श्रेयस्तु परममनन्यत जनार्द्दनः।
सोऽहमेतान्यलीकानि निवृत्तान्यात्मनस्तदा। हृदये शल्यभूतानि धारयामि सहस्रशः।
विशेषतस्तु पश्यामि वर्षे पञ्चदशेऽद्य वै। अस्य पापस्य शुद्ध्यर्थं नियतोऽस्मि सुदुर्म्मतिः।
चतुर्थे नियते काले कदाचिदपि चाष्टमे। तृष्णाविनयनं भुञ्जे गान्धारी वेद तन्मम। ८५
करोत्याहारमिति मां सर्व्वः परिजनः सदा। युधिष्ठिरभयाद्वेत्ति भृशं तप्यति पाण्डवः।
भूमौ शये जप्यपरो दर्भेष्वजिनसंवृतः। नियमव्यपदेशेन गान्धारी च यशस्विनी।
हतं शतन्तु पुत्त्राणां ययोर्युद्धेऽपलायिनां। नानुतप्यामि तच्चाहं क्षत्त्रधर्म्ममिमं विदुः।
इत्युक्त्वा धर्म्मराजानमभ्यभाषत कौरवः। भद्रन्ते यादवीमातर्व्वचश्चेदं निबोध मे।
सुखमस्म्युषितः पुत्त्र त्वया सुपरिपालितः। महादानानि दत्तानि श्राद्धानि च पुनः पुनः। ९०
प्रकृष्टञ्च मया पुत्त्र पुण्यं चीर्णं यथाबलं। गान्धारी हतपुत्त्रेयं धैर्य्येणोदीक्षते च मां।
द्रौपद्या ह्यपकर्त्तारस्तव चैश्वर्य्यहारिणः। समतीता नृशंसास्ते स्वधर्म्मेण हता युधि।
न तेषु प्रतिकर्त्तव्यं पश्यामि कुरुनन्दन। सर्व्वे शस्त्रकृताल्लोँकान् गतास्तेऽभिमुखं हताः।
आत्मनस्तु हितं पुत्त्रं प्रतिकर्त्तव्यमद्य वै। गान्धार्य्याश्चैव राजेन्द्र तदनुज्ञातुमर्हसि।
त्वन्तु धर्म्मभृतां श्रेष्ठः सततं धर्म्मवत्सलः। राजा गुरुः प्राणभृतां तस्मादेतद्ब्रवीम्यहं। ९५
अनुज्ञातस्त्वया वीर संश्रयेयं वनान्यहं। चीरवल्कलभृद्राजन् गान्धार्य्या सहितोऽनया।
तवाशिषः प्रयुञ्जानो भविष्यामि वनेचरः। उचितं नः कुले तात सर्व्वेषां भरतर्षभ।
पुत्त्रेष्वैश्वर्य्यमाधाय वयसोऽन्ते वनं नृप। तत्राहं वायुभक्षो वा निराहारोऽपि वा वसन्।
पत्न्या सहानया वीर चरिष्यामि तपः परं। त्वञ्चापि फलभाक् तात तपसः पार्थिवो ह्यसि।
फलभाजो हि राजानः कल्याणस्येतरस्य वा। १००
॥ युधिष्ठिर उवाच ॥ न मां प्रीणयते राज्यं त्वय्येवं दुःखिते नृप। धिङ्मामस्तु सुदुर्ब्बुद्धिं राज्यसक्तं प्रमादिनं।
योऽहं भवन्तं दुःखार्त्तमुपवासकृशं भृशं। जिताहारं क्षितिशयं न विन्दे भ्रातृभिः सह।
अहोऽस्मि वञ्चितो मूढो भवता गूढबुद्धिना। विश्वासयित्वा पूर्व्वं मां यदिदं दुःखमश्नुथाः।
किं मे राज्येन भोगैर्व्वा किं यज्ञैः किं सुखेन वा। यस्य मे त्वं महीपाल दुःखान्येतान्यवाप्नवान्।
पीडितञ्चापि जानामि राज्यमात्मानमेव च। अनेन वचसा तुभ्यं दुःखितस्य जनेश्वर। १०५
भवान् पिता भवान्माता भवान्नः परमो गुरुः। भवता विप्रहीणा हि क नु तिष्ठामहे वयं।
औरसो भवतः पुत्त्रो युयुत्सुर्नृपसत्तम। अस्तु राजा महाराज यमन्यं मन्यसे भवान्।
अहं वनं गमिष्यामि भवान् राज्यं प्रशास्तु। न मामयशसा दग्धं भूयस्त्वं दग्धुमर्हसि।

नाहं राजा भवान् राजा भवतः परवानहं । कथं गुरुं त्वां धर्म्मज्ञमनुज्ञातुमिहोत्सहे ।
न मन्युर्हृदि नः कश्चित् सुयोधनकृतेऽनघ । भवितव्यं तथा तद्धि वयञ्चान्ये च मोहिताः । १०
वयं पुत्रा हि भवतो यथा दुर्य्योधनादयः । गान्धारी चैव कुन्ती च निर्विशेषा मतिर्मम ।
स मां त्वं यदि राजेन्द्र परित्यज्य गमिष्यसि । पृष्ठतस्त्वाऽनुयास्यामि सत्यमात्मानमालभे ।
इयं हि वसुसंपूर्णा मही सागरमेखला । भवता विप्रहीनस्य न मे प्रीतिकरी भवेत् ।
भवदीयमिदं सर्व्वं शिरसा त्वां प्रसादये । त्वदधीनाः स्म राजेन्द्र व्येतु ते मानसो ज्वरः ।
भवितव्यमनुप्राप्तो मन्ये त्वं वसुधाधिप । दिष्ट्या शुश्रूषमाणस्त्वां मोक्षिष्ये मनसो ज्वरं । ११
॥ धृतराष्ट्र उवाच ॥ तापस्ये मे मनस्तात वर्त्तते कुरुनन्दन । उचितञ्च कुलेऽस्माकमरण्यगमनं प्रभो ।
चिरमस्म्युषितः पुत्र चिरं शुश्रूषितस्त्वया । वृद्धं मामप्यनुज्ञातुमर्हसि त्वं नराधिप ।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा धर्म्मराजानं वेपमानः कृताञ्जलिः । उवाच वचनं राजा धृतराष्ट्रोऽम्बिकासुतः ।
सञ्जयञ्च महात्मानं कृपञ्चापि महारथं । अनुनेतुमिहेच्छामि भवद्भिर्वसुधाधिपं ।
ग्लायते मे मनो हीदं मुखञ्च परिशुष्यति । वयसा च प्रकृष्टेन वाग्व्यायामेन चैव ह । १२
इत्युक्त्वा स तु धर्म्मात्मा वृद्धो राजा कुरूद्वहः । गान्धारीं शिश्रिये धीमान् सहसैव गतासुवत् ।
तन्तु दृष्ट्वा समासीनं विसंज्ञमिव कौरवं । आर्त्तिं राजाऽगमत्तीव्रां कौन्तेयः परवीरहा ।
॥ युधिष्ठिर उवाच ॥ यस्य नागसहस्रेण शतसंख्येन वै बलं । सोऽयं नारीं व्यपाश्रित्य शेते राजा गतासुवत् ।
आयसी प्रतिमा येन भीमसेनस्य सा पुरा । चूर्णीकृता बलवता सोऽबलामाश्रितः स्त्रियं ।
धिगस्तु मामधर्म्मज्ञं धिग्बुद्धिं धिक् च मे श्रुतं । यत्कृते पृथिवीपालः शेतेऽयमतथोचितः । १३
अहमप्युपवत्स्यामि यथैवायं गुरुर्म्मम । यदि राजा न भुङ्क्तेऽयं गान्धारी च यशस्विनी ।
॥ वैशम्पायन उवाच ॥ ततोऽस्य पाणिना राजन् जलशीतेन पाण्डवः । उरो मुखञ्च शनकैः पर्य्यमार्ज्जत धर्म्मवित् ।
तेन रत्नौषधिमता पुण्येन च सुगन्धिना । पाणिस्पर्शेन राज्ञः स राजा संज्ञामवाप ह ।
॥ धृतराष्ट्र उवाच ॥ स्पृश मां पाणिना भूयः परिष्वज च पाण्डव । जीवामीव हि संस्पर्शात्तव राजीवलोचन ।
मूर्द्धानञ्च तवाघ्रातुमिच्छामि मनुजाधिप । पाणिभ्याञ्च परिस्प्रष्टुं प्रीणनं हि महन्मम । १४
अष्टमो ह्यद्य कालोऽयमाहारस्य कृतोऽस्य मे । येनाहं कुरुशार्दूल शक्नोमि न विचेष्टितुं ।
व्यायामश्चायमत्यर्थं कृतस्त्वामभियाचता । ततो ग्लानमनास्तात नष्टसंज्ञ इवाभवं ।
तवामृतरसप्रख्यं हस्तस्पर्शमिमं प्रभो । लब्ध्वा सञ्जीवितोऽस्मीति मन्ये कुरुकुलोद्वह ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु कौन्तेयः पित्रा ज्येष्ठेन भारत । पस्पर्श सर्व्वगात्रेषु सौहार्द्दात्तं शनैस्तदा ।
उपलभ्य ततः प्राणान् धृतराष्ट्रो महीपतिः । बाहुभ्यां संपरिष्वज्य मूर्द्ध्न्याजिघ्रत पाण्डवं । १५
विदुरादयश्च ते सर्व्वे रुरुदुर्दुःखिता भृशं । अतिदुःखाच्च राजानं नोचुः किञ्चन पाण्डवं ।
गान्धारी त्वेव धर्म्मज्ञा मनसोद्वहती भृशं । दुःखान्यधारयद्राजन्नैवमित्येव चाब्रवीत् ।
इतरास्तु स्त्रियः सर्व्वाः कुन्त्या सह सुदुःखिताः । नेत्रैरागतविक्लेदैः परिवार्य्य स्थिताऽभवन् ।

अथाब्रवीत् पुनर्व्वाक्यं धृतराष्ट्रो युधिष्ठिरं। अनुजानीहि मां राजंस्तपसे भरतर्षभ।
ग्लायते मे मनस्तात भूयो भूयः प्रजल्पतः। न मामतः परं पुत्र परिक्लेष्टुमिहार्हसि। ९०
तस्मिंस्तु कौरवेन्द्रे तं तथा ब्रुवति पाण्डवं। सर्व्वेषामेव योधानामार्त्तनादोऽभवन्महान्।
दृष्ट्वा कृशं विवर्णञ्च राजानमतथोचितं। उपवासपरिश्रान्तं त्वगस्थिपरिवारणं।
धर्म्मपुत्रः स्वपितरं परिष्वज्य महाप्रभुं। शोकजं वाष्पमुत्सृज्य पुनर्व्वचनमब्रवीत्।
न कामये नरश्रेष्ठ जीवितं पृथिवीं तथा। यथा तव प्रियं राजंश्चिकीर्षामि परन्तप।
यदि चाहमनुग्राह्यो भवतो दयितोऽपि वा। क्रियतां तावदाहारस्ततो वेत्स्याम्यहं परं। ९५
ततोऽब्रवीन्महातेजा धृतराष्ट्रो युधिष्ठिरं। अनुज्ञातस्त्वया पुत्र भुञ्जीयामिति कामये।
इति ब्रुवति राजेन्द्रे धृतराष्ट्रे युधिष्ठिरं। ऋषिः सत्यवतीपुत्रो व्यासोऽभ्येत्य वचोऽब्रवीत्।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि तृतीयोऽध्यायः ॥ ३ ॥
॥ व्यास उवाच ॥ युधिष्ठिर महाबाहो यथाह कुरुनन्दन। धृतराष्ट्रो महातेजास्तत् कुरुष्वाविचारयन्।
अयं हि वृद्धो नृपतिर्हतपुत्रो विशेषतः। नेदं कृच्छ्रं विषहितुं सहेदिति मतिर्म्मम।
गान्धारी च महाभागा प्राज्ञा करुणवेदिनी। पुत्रशोकं महाराज धैर्य्येणोद्वहते भृशं। १००
अहमप्येतदेव त्वां ब्रवीमि कुरु मे वचः। अनुज्ञां लभतां राजा मा वृथेह मरिष्यति।
राजर्षीणां पुराणानामनुयातु गतिं नृपः। राजर्षीणां हि सर्व्वेषामन्ते वनमुपाश्रयः।
॥ वैशम्पायन उवाच ॥ इत्युक्तः स तदा राजा व्यासेनाद्भुतकर्म्मणा। प्रत्युवाच महातेजा धर्म्मराजो महामुनिं।
भगवानेव नो मान्यो भगवानेव नो गुरुः। भगवानस्य राज्यस्य कुलस्य च परायणं।
अहं तु पुत्रो भगवान् पिता राजा गुरुश्च मे। निदेशवर्त्ती च पितुः पुत्रो भवति धर्म्मतः। १०५
॥ वैशम्पायन उवाच ॥ इत्युक्तः स तु तं प्राह व्यासो वेदविदाम्वरः। युधिष्ठिरं महातेजाः पुनरेव महाकविः।
एवमेतन्महाबाहो यथा वदसि भारत। राजाऽयं वृद्धतां प्राप्तः प्रमाणे परमे स्थितः।
सोऽयं मयाऽभ्यनुज्ञातस्त्वया च पृथिवीपतिः। करोतु स्वमभिप्रायं माऽस्य विघ्नकरो भव।
एष एव परो धर्म्मो राजर्षीणां युधिष्ठिर। समरे वा भवेन्मृत्युर्वने वा विधिपूर्व्वकं।
पित्रा तु तव राजेन्द्र पाण्डुना पृथिवीक्षिता। शिष्यवृत्तेन राजाऽयं गुरुवत् पर्य्युपासितः। ११०
क्रतुभिर्दक्षिणावद्भिरन्नपर्व्वतशोभितैः। महद्भिरिष्टं गोर्भुक्ता प्रजाश्च परिपालिताः।
पुत्रसंस्थञ्च विपुलं राज्यं विप्रोषिते त्वयि। त्रयोदश समा भुक्तं दत्तञ्च विविधं वसु।
त्वया चायं नरव्याघ्र गुरुशुश्रूषयाऽनघ। आराधितः सभृत्येन गान्धारी च यशस्विनी।
अनुजानीहि पितरं समयोऽस्य तपोविधौ। न मन्युर्व्विद्यते चास्य सुसूक्ष्मोऽपि युधिष्ठिर।
॥ वैशम्पायन उवाच ॥ एतावदुक्त्वा वचनमनुमान्य च पार्थिवं। तथाऽस्त्विति च तेनोक्तः कौन्तेयेन ययौ वनं। ११५
गते भगवति व्यासे राजा पाण्डुसुतस्तदा। प्रोवाच पितरं वृद्धं मन्दं मन्दमिवानतः।
यदाह भगवान् व्यासो यच्चापि भवतो मतं। यथाह च महेष्वासः कृपो विदुर एव च।

तस्य प्रमोक्षे यत्नञ्च कुर्य्याः सोपाय मन्त्रवित्। प्रकृतीनाञ्च राजेन्द्र राजा दीनान् विभावयेत्।
क्रमेण युगपत् सर्व्वं व्यवसायं महाबलः। पीडितं स्तम्भनञ्चैव कोषभङ्गस्तथैव च।
कार्य्यं यत्नेन शत्रूणां स्वराज्यं रक्षता स्वयं। न च हिंस्यो ऽभ्युपगतः सामन्तो वृद्धिमिच्छता।
कौन्तेय तं न हिंसेया यो मह्यीं विजिगीषते। गणानां भेदने योगं गच्छेयाः सह मन्त्रिभिः।
साधुसंग्रहणाच्चैव पापनिग्रहणात्तथा। दुर्ब्बलाश्चापि सततं नावेष्टव्या बलीयसा। २१०
तिष्ठेया राजशार्दूल वैतसीं वृत्तिमास्थितः। यद्येनमभियायाच्च बलवान्दुर्ब्बलं नृपः।
सामादिभिरुपायैस्तं क्रमेण विनिवर्त्तयेः। अशक्नुवंश्च युद्धाय निष्पतेत् सह मन्त्रिभिः।
कोषेण पौरैर्द्दण्डेन ये चास्य प्रियकारिणः। असम्भवे तु सर्व्वस्य यथामुख्येन निष्पतेत्
क्रमेणानेन मुक्तिः स्यात् शरीरमिति केवलं।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ धृतराष्ट्र उवाच ॥ सन्धिविग्रहमप्यत्र पश्येथा राजसत्तम। द्वियोनिं त्रिविधोपायं बहुकल्पं युधिष्ठिर। २१५
कौरव्य पर्य्युपासीथास्थित्वा द्वैविध्यमात्मनः। तुष्टपुष्टबलः शत्रुरात्मवानिति च स्मरेत्।
पर्य्युपासनकाले तु विपरीतं विधीयते। आमर्द्दकाले राजेन्द्र व्यपसर्पेत्ततः परं।
व्यसनं भेदनञ्चैव शत्रूणां कारयेत्ततः। कर्षणं भीषणञ्चैव युद्धे चैव बहुक्षयं।
प्रयास्यमानो नृपतिस्त्रिविधां परिचिन्तयेत्। आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः।
उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत। उपपन्नो नृपो यायाद्विपरीतञ्च वर्ज्जयेत्। २२०
आददीत बलं राजा मौलं मित्रबलं तथा। अटवीबलं भृतञ्चैव तथा श्रेणीबलं प्रभो।
तत्र मित्रबलं राजन् मौलञ्च विशिष्यते। श्रेणीबलं भृतञ्चैव तुल्ये एवेति मे मतिः।
तथा चारबलञ्चैव परस्परसमं नृप। विज्ञेयं बहुकालेषु राज्ञा काल उपस्थिते।
आपदश्चापि बोद्धव्या बहुरूपा नराधिप। भवन्ति राज्ञां कौरव्य याताः पृथगतः शृणु।
विकल्पा बहुधा राजन्नापदां पाण्डुनन्दन। सामादिभिरुपन्यस्य गणयेत्तान्नृपः सदा। २२५
यात्रां गच्छेद्बलैर्युक्तो राजा षड्भिः परन्तप। युक्तश्च कालदेशाभ्यां बलैरात्मगुणैस्तथा।
हृष्टपुष्टबलो गच्छेद्राजा वृद्ध्युदये रतः। अल्पकस्त्वाप्ययो यायादनृतावपि पाण्डव।
तृणाश्मानं वाजिरथप्रवाहां ध्वजद्रुमैः संवृतकूलरोधसं। पदातिनागैर्ब्बहुकर्द्दमां नदीं सपत्ननाशे नृपतिः प्रयोजयेत्।
अथोपपत्त्या शकटं पद्मवज्रञ्च भारत। उशना वेद यच्छास्त्रं तत्रैतद्विहितं विभो।
चारयित्वा परबलं कृत्वा स्वबलदर्शनं। स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च। २३०
बलं प्रसादयेद्राजा निक्षिपेद्बलिनो नरान्। ज्ञात्वा स्वविषयं तत्र सामादिभिरुपक्रमेत्।
सर्व्वथैव महाराज शरीरं धारयेदिह। प्रेत्य चेह च कर्त्तव्यमात्मनिःश्रेयसं परं।
एवमेतन्महाराज राजा सम्यक् समाचरन्। प्रेत्य स्वर्गमवाप्नोति प्रजा धर्म्मेण पालयन्।
एवं त्वया कुरुश्रेष्ठ वर्त्तितव्यं प्रजाहितं। उभयोर्लोकयोस्तात प्राप्तये नित्यमेव हि।

भीष्मेण सर्व्वमुक्तोऽसि कृष्णेन विदुरेण च। ममाप्यवश्यं वक्तव्यः प्रीत्या ते नृपसत्तम। १८५
एतत् सर्व्वं यथान्यायं कुर्व्वीथा भूरिदक्षिण। प्रियस्तथा प्रजानां त्वं स्वर्गे सुखमवाप्स्यसि।
अश्वमेधसहस्रेण योजयेत् पृथिवीपतिः। पालयेद्वाऽपि धर्म्मेण प्रजास्तुल्यफलं भवेत्।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि सप्तमोऽध्यायः॥ ७॥
॥ युधिष्ठिर उवाच॥ एवमेतत् करिष्यामि यथात्थ पृथिवीपते। भूयश्चैवानुशास्योऽहं भवता पार्थिवर्षभ।
भीष्मे स्वर्गमनुप्राप्ते गते च मधुसूदने। विदुरे सञ्जये चैव कोऽन्यो मां वक्तुमर्हति।
यत्तु मामनुशास्तीह भवानद्य हिते स्थितः। कर्त्ताऽस्मि तन्महीपाल निर्वृतो भव पार्थिव। १९०
एवमुक्तः स राजर्षिर्धर्म्मराजेन धीमता। कौन्तेयं समनुज्ञातुमियेष भरतर्षभ।
पुत्र संशाम्यतां तावन्ममापि बलवान् श्रमः। इत्युक्त्वा प्राविशद्राजा गान्धार्य्या भवनं तदा।
तमासनगतं देवी गान्धारी धर्म्मचारिणी। उवाच काले कालज्ञा प्रजापतिसमं पतिं।
अनुज्ञातः स्वयं तेन व्यासेन त्वं महर्षिणा। युधिष्ठिरस्यानुमते कदाऽरण्यं गमिष्यसि।
॥ धृतराष्ट्र उवाच॥ गान्धार्य्यहमनुज्ञातः स्वयं पित्रा महात्मना। युधिष्ठिरस्यानुमते गन्ताऽस्मि न चिराद्वनं। १९५
अहं हि तावत् सर्व्वेषां तेषां दुर्द्यूतदेविनां। पुत्राणां दातुमिच्छामि प्रेतभावानुगं वसु।
सर्व्वप्रकृतिसान्निध्यं कारयित्वा स्ववेश्मनि।
॥ वैशम्पायन उवाच॥ इत्युक्त्वा धर्म्मराजाय प्रेषयामास वै तदा। स च तद्वचनात् सर्व्वं समानिन्ये महीपतेः।
ततः प्रतीतमनसो ब्राह्मणाः कुरुजाङ्गलाः। क्षत्रियाश्चैव वैश्याश्च शूद्राश्चैव समाययुः।
ततो निष्क्रम्य नृपतिस्तस्मादन्तःपुरात्तदा। ददृशे तं जनं सर्व्वं सर्व्वाश्च प्रकृतीस्तथा। २००
समवेतांश्च तान् सर्व्वान् पौरान् जानपदांस्तथा। तानागतानभिप्रेक्ष्य समस्तांश्च सुहृज्जनं।
ब्राह्मणांश्च महीपाल नानादेशसमागतान्। उवाच मतिमान् राजा धृतराष्ट्रोऽम्बिकासुतः।
भवन्तः कुरवश्चैव चिरकालं सहोषिताः। परस्परस्य सुहृदः परस्परहिते रताः।
यदिदानीमहं ब्रूयामस्मिन् काल उपस्थिते। तथा भवद्भिः कर्त्तव्यमविचार्य्य वचो मम।
अरण्यगमने बुद्धिर्गान्धारीसहितस्य मे। व्यासस्यानुमते राज्ञस्तथा कुन्तीसुतस्य मे। २०५
भवन्तोऽप्यनुजानन्तु मा च वोऽभूद्विचारणा। अस्माकं भवतां चैव येयं प्रीतिर्हि शाश्वती।
न च साऽन्येषु देशेषु राज्ञामिति मतिर्मम। श्रान्तोऽस्मि वयसाऽनेन तथा पुत्रविनाकृतः।
उपवासकृशश्चास्मि गान्धारीसहितोऽनघाः। युधिष्ठिरगते राज्ये प्राप्तश्चास्मि सुखं महत्।
मन्ये दुर्य्योधनैश्वर्य्याद्विशिष्टमिति सत्तमाः। मम चान्धस्य वृद्धस्य हतपुत्रस्य का गतिः।
ऋते वनं महाभागास्तन्माऽनुज्ञातुमर्हथ। तस्य तद्वचनं श्रुत्वा सर्व्वे ते कुरुजाङ्गलाः। २१०
बाष्पसन्दिग्धया वाचा रुरुदुर्भरतर्षभ। तानविब्रुवतः किञ्चित् सर्व्वान् शोकपरायणान्।
पुनरेव महातेजा धृतराष्ट्रोऽब्रवीदिदं।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि अष्टमोऽध्यायः॥ ८॥

॥ धृतराष्ट्र उवाच ॥ शान्तनुः पालयामास यथावद्वसुधामिमां । तथा विचित्रवीर्य्यश्च भीष्मेण परिपालितः ।
पालयामास वस्तात विदितार्थो न संशयः । यथा च पाण्डुर्भ्राता मे दयितो भवतामभूत् ।
स चापि पालयामास यथावत्तच्च वेत्थ ह । मया च भवतां सम्यक् शुश्रूषा या कृताऽनघाः ।
असम्यग्वा महाभागास्तत् क्षन्तव्यमतन्द्रितैः । यच्च दुर्य्योधनेनेदं भुक्तं राज्यमकण्टकं ।
अपि तत्र न वो मन्दो दुर्बुद्धिरपराद्धवान् । तस्यापराधाद्दुर्बुद्धेरभिमानान्महीक्षितां ।
विमर्द्दः सुमहानासीदनयान्मत्कृतादथ । तन्मया साधु वाऽपीदं यदि वाऽसाधु वै कृतं ।
तद्वो हृदि न कर्त्तव्यं मया बद्धोऽयमञ्जलिः । वृद्धोऽयं हतपुत्रोऽयं दुःखितोऽयं नराधिपः ।
पूर्व्वराज्ञाञ्च पुत्रोऽयमिति कृत्वा तु जानथ । इयञ्च कृपणा वृद्धा हतपुत्रा तपस्विनी ।
गान्धारी पुत्रशोकार्त्ता युष्मान् याचति वै मया । हतपुत्राविमौ वृद्धौ विदित्वा दुःखितौ तथा ।
अनुजानीत भद्रं वो व्रजामः शरणञ्च वः । अयञ्च कौरवो राजा कुन्तीपुत्रो युधिष्ठिरः ।
सर्व्वैर्भवद्भिर्द्रष्टव्यः समेषु विषमेषु च । न जातु विषमञ्चैव गमिष्यति कदाचन ।
चत्वारः सचिवा यस्य भ्रातरो विपुलौजसः । लोकपालसमा ह्येते सर्व्वधर्म्मार्थदर्शिनः ।
ब्रह्मेव भगवानेष सर्व्वभूतजगत्पतिः । युधिष्ठिरो महातेजा भवतः पालयिष्यति ।
अवश्यमेव वक्तव्यमिति कृत्वा ब्रवीमि वः । एष न्यासो मया दत्तः सर्व्वेषां वो युधिष्ठिरः ।
भवन्तोऽस्य च वीरस्य न्यासभूताः कृता मया । यदेव तैः कृतं किञ्चिद्व्यलीकं वः सुतैर्मम ।
यदन्येन मदीयेन तदनुज्ञातुमर्हथ । भवद्भिर्न हि मे मन्युः कृतपूर्व्वः कथञ्चन ।
अत्यन्तगुरुभक्तानामेषोऽञ्जलिरिदं नमः । तेषामस्थिरबुद्धीनां लुब्धानां कामचारिणां ।
कृते याचेऽद्य वः सर्व्वान् गान्धारीसहितोऽनघाः । इत्युक्तास्ते ततः सर्व्वे पौरजानपदा जनाः ।
नोचुर्वाष्पकलाः किञ्चिद्वीक्षाञ्चक्रुः परस्परं ।

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि नवमोऽध्यायः ॥ ९ ॥

॥ वैशम्पायन उवाच ॥ एवमुक्तास्तु ते तेन पौरजानपदा जनाः । वृद्धेन राज्ञा कौरव्य नष्टसंज्ञा इवाभवन् ।
तूष्णीम्भूतांस्ततस्तांस्तु वाष्पकण्ठान्महीपतिः । धृतराष्ट्रो महीपालः पुनरेवाभ्यभाषत ।
वृद्धञ्च हतपुत्रञ्च धर्म्मपत्न्या सहानया । विलपन्तं बहुविधं कृपणञ्चैव सत्तमाः ।
पिता स्वयमनुज्ञातं कृष्णद्वैपायनेन वै । वनवासाय धर्म्मज्ञा धर्म्मज्ञेन नृपेण च ।
सोऽहं पुनः पुनश्चैव शिरसाऽवनतोऽनघाः । गान्धार्य्या सहितं तन्मां समनुज्ञातुमर्हथ ।
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा कुरुराजस्य वाक्यानि करुणानि ते । रुरुदुः सर्व्वशो राजन् समेताः कुरुजाङ्गलाः ।
उत्तरीयैः करैश्चापि संछाद्य वदनानि ते । रुरुदुः शोकसन्तप्ता मुहूर्त्तं पितृमातृवत् ।
हृदयैः शून्यभूतैस्ते धृतराष्ट्रप्रवासजं । दुःखं सन्धारयन्तो हि नष्टसंज्ञा इवाभवन् ।
ते विनीय तमायासं धृतराष्ट्रवियोगजं । शनैः शनैस्तदाऽन्योन्यमब्रुवन् सम्मतान्युत ।
ततः सन्धाय ते सर्व्वे वाक्यान्यथ समासतः । एकस्मिन् ब्राह्मणे राजन् निवेश्योचुर्नराधिप ।

ततः स्वाचरणो विप्रः सम्मतोऽर्थविशारदः । साम्बाख्यो बह्वृचो राजन् वक्तुं समुपचक्रमे ।
अनुमान्य महाराजं तत् सदः संप्रसाद्य च । विप्रः प्रगल्भो मेधावी स राजानमुवाच ह ।
राजन् वाक्यं जनस्यास्य मयि सर्व्वं समर्पितं । वक्ष्यामि तदहं वीर तज्जुषस्व नराधिप ।
यथा वदसि राजेन्द्र सर्व्वमेतत्तथा विभो । नात्र मिथ्या वचः किञ्चित् सुहृत्त्वं नः परस्परं । १९५
न जात्वस्य च वंशस्य राज्ञां कश्चित् कदाचन । राजासीद् यः प्रजापालः प्रजानामप्रियोऽभवत् ।
पितृवद्भ्रातृवच्चैव भवन्तः पालयन्ति नः । न च दुर्य्योधनः किञ्चिदयुक्तं कृतवान्नृप ।
यथा ब्रवीति धर्म्मात्मा मुनिः सत्यवतीसुतः । तथा कुरु महाराज स हि नः परमो गुरुः ।
त्यक्ता वयन्तु भवता दुःखशोकपरायणाः । भविष्यामश्चिरं राजन् भवद्गुणशतैर्युताः ।
यथा शान्तनुना गुप्ता राज्ञा चित्राङ्गदेन च । भीष्मवीर्य्योपगूढेन पित्रा तव च पार्थिव । २००
भवद्वीक्षणाच्चैव पाण्डुना पृथिवीक्षिता । तथा दुर्य्योधनेनापि राज्ञा सुपरिपालिताः ।
न स्वल्पमपि पुत्रस्ते व्यलीकं कृतवान्नृप । पितरीव सुविश्वस्तास्तस्मिन्नपि नराधिपे ।
वयमास्म यथा सम्यग्भवतो विदितं तथा । तथा वर्षसहस्राणि कुन्तीपुत्रेण धीमता ।
पाल्यमाना धृतिमता सुखं विन्दामहे नृप । राजर्षीणां पुराणानां भवतां पुण्यकर्म्मणां ।
कुरुसम्वरणादीनां भरतस्य च धीमतः । वृत्तं समनुयात्येष धर्म्मात्मा भूरिदक्षिणः । २०५
नात्र वाच्यं महाराज सुसूक्ष्ममपि विद्यते । उषिताः स्म सुखं नित्यं भवता परिपालिताः ।
सुसूक्ष्मञ्च व्यलीकन्ते सपुत्रस्य न विद्यते । यत्तु ज्ञातिविमर्द्देऽस्मिन्नात्थ दुर्य्योधनं प्रति ।
भवन्तमनुनेष्यामि तत्रापि कुरुनन्दन ।
॥ ब्राह्मण उवाच ॥ न तु दुर्य्योधनकृतं न तु तद्भवता कृतं । न कर्णसौबलाभ्याञ्च कुरवो यत् क्षयं गताः ।
दैवतन्तु विजानीमो यन्न शक्यं प्रबाधितुं । दैवं पुरुषकारेण न शक्यमपि बाधितुं । २१०
अक्षौहिण्यो महाराज दशाष्टौ च समागताः । अष्टादशाहेन हताः कुरुभिर्योधपुङ्गवैः ।
भीष्मद्रोणकृपाद्यैश्च कर्णेन च महात्मना । युयुधानेन वीरेण धृष्टद्युम्नेन चैव ह ।
चतुर्भिः पाण्डुपुत्रैश्च भीमार्ज्जुनयमैस्तथा । न च क्षयोऽयं नृपते ऋते दैवबलादभूत् ।
अवश्यमेव संग्रामे क्षत्रियेण विशेषतः । कर्त्तव्यं निधनं काले मर्त्तव्यं क्षत्रबन्धुना ।
तैरियं पुरुषव्याघ्रैर्विद्याबाहुबलान्वितैः । पृथिवी निहता सर्व्वा सहया सरथद्विपा । २१५
न स राज्ञां वधे सूनुः कारणं ते महात्मनां । न भवान्न च ते भृत्या न कर्णो न च सौबलः ।
यद्विशस्ताः कुरुश्रेष्ठा राजानश्च सहस्रशः । सर्व्वं दैवकृतं विद्धि कोऽत्र किं वक्तुमर्हति ।
गुरुर्म्मतो भवानस्य कृत्स्नस्य जगतः प्रभुः । धर्म्मात्मानमतस्तुभ्यमनुजानीमहे सुतं ।
लभतां वीरलोकान् स ससहायो नराधिपः । द्विजाग्र्यैः समनुज्ञातस्त्रिदिवे मोदतां सुखं ।
प्राप्स्यते च भवान् पुण्यं धर्म्मे च परमां स्थितिं । वेदधर्म्मांश्च कृत्स्नेन सम्यक् च भव सुव्रतः । २२०
दृष्टापदानमपि नः पाण्डवान् प्रति मा कृथा । समर्थास्त्रिदिवस्यापि पालने किं पुनः क्षितेः ।

अनुवर्त्स्यन्ति वा धीमन् समेषु विषमेषु च । प्रजाः कुरुकुलश्रेष्ठ पाण्डवान् शीलभूषणान् ।
ब्रह्मदेयाग्रहारांश्च परिवर्हांश्च पार्थिवः । पूर्व्वराजाभिपन्नांश्च पालयत्येव पाण्डवः ।
दीर्घदर्शी मृदुर्दान्तः सदा वैश्रवणो यथा । अक्षुद्रसचिवश्चायं कुन्तीपुत्रो महामनाः ।
अप्यमित्रे दयावांश्च शुचिश्च भरतर्षभः । ऋजुः पश्यति मेधावी पुत्रवत् पाति नः सदा । २७५
विप्रियञ्च जनस्यास्य संसर्गाद्धर्म्मजस्य वै । न करिष्यन्ति राजर्षे तथा भीमार्जुनादयः ।
मन्दा मृदुषु कौरव्य तीक्ष्णेष्वाशीविषोपमाः । वीर्य्यवन्तो महात्मानः पौराणाञ्च हिते रताः ।
न कुन्ती न च पाञ्चाली न चोलूपी न सात्वती । अस्मिन् जने करिष्यन्ति प्रतिकूलानि कर्हिचित् ।
भवत्कृतमिमं स्नेहं युधिष्ठिरविवर्द्धितं । न पृष्ठतः करिष्यन्ति पौरजानपदा जनाः ।
अधर्म्मिष्ठानपि सतः कुन्तीपुत्रा महारथाः । मानवान् पालयिष्यन्ति भूत्वा धर्म्मपरायणाः । २८०
स राजन्मानसं दुःखमपनीय युधिष्ठिरात् । कुरु कार्य्याणि धर्म्म्याणि नमस्ते पुरुषर्षभ ।
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं धर्म्म्यमनुमान्य गुणोत्तरं । साधु साध्विति सर्व्वः स जनः प्रतिजगृहे तदा ।
धृतराष्ट्रश्च तद्वाक्यमभिपूज्य पुनः पुनः । विसर्ज्जयामास तदा प्रकृतीस्तु शनैः शनैः ।
स तैः संपूजितो राजा शिवेनावेक्षितस्तथा । प्राञ्जलिः पूजयामास तं जनं भरतर्षभ ।
ततो विवेश भवनं गान्धार्य्या सहितो निजं । व्युष्टायाञ्चैव शर्व्वर्य्यां यच्चकार निबोध तत् । २८५
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि दशमोऽध्यायः ॥ १० ॥
॥ वैशम्पायन उवाच ॥ ततो रजन्यां व्युष्टायां धृतराष्ट्रोऽम्बिकासुतः । विदुरं प्रेषयामास युधिष्ठिरनिवेशनं ।
स गत्वा राजवचनादुवाचाच्युतमीश्वरं । युधिष्ठिरं महातेजाः सर्व्वबुद्धिमतां वरं ।
धृतराष्ट्रो महाराजो वनवासाय दीक्षितः । गमिष्यति वनं राजन्नागतां कार्त्तिकीमिमां ।
स त्वां कुरुकुलश्रेष्ठ किञ्चिदर्थमभीप्सति । श्राद्धमिच्छति दातुं स गाङ्गेयस्य महात्मनः ।
द्रोणस्य सोमदत्तस्य वाह्लीकस्य च धीमतः । पुत्राणाञ्चैव सर्व्वेषां ये चान्ये सुहृदो हताः । २९०
यदि चाप्यनुजानासि सैन्धवापसदस्य च । एतच्छ्रुत्वा च वचनं विदुरस्य युधिष्ठिरः ।
हृष्टः सम्पूजयामास गुडाकेशश्च पाण्डवः । न तु भीमो दृढक्रोधस्तद्वचो जगृहे तदा ।
विदुरस्य महातेजा दुर्योधनकृतं स्मरन् । अभिप्रायं विदित्वा तु भीमसेनस्य फाल्गुनः ।
किरीटी किञ्चिदानम्य तमुवाच नरर्षभं । भीम राजा पिता वृद्धो वनवासाय दीक्षितः ।
दातुमिच्छति सर्व्वेषां सुहृदामौर्द्धदेहिकं । भवता निर्जितं वित्तं दातुमिच्छति कौरवः । २९५
भीष्मादीनां महाबाहो तदनुज्ञातुमर्हसि । दिष्ट्या त्वद्य महाबाहो धृतराष्ट्रः प्रयाचते ।
याचितो यः पुराऽस्माभिः पश्य कालस्य पर्य्ययं । योऽसौ पृथिव्याः कृत्स्नाया भर्त्ता भूत्वा नराधिपः ।
परैर्व्विनिहतामात्यो वनं गन्तुमभीप्सति । मा तेऽन्यत् पुरुषव्याघ्र दानाद्भवतु दर्शनं ।
अयशस्यमतोऽन्यत् स्यादधर्म्यञ्च महाभुज । राजानमुपतिष्ठस्व ज्येष्ठं भ्रातरमीश्वरं ।
अर्हस्त्वमसि दातुं वै नादातुं भरतर्षभ । एवं ब्रुवाणं बीभत्सुं धर्म्मराजोऽप्यपूजयत् । ३००

भीमसेनस्तु सक्रोधः प्रोवाचेदं वचस्तदा । वयं भीष्मस्य दास्यामः प्रेतकार्य्यस्य फाल्गुन ।
सोमदत्तस्य नृपतेर्भूरिश्रवस एव च । बाह्लीकस्य च राजर्षेर्द्रोणस्य च महात्मनः ।
अन्येषाञ्चैव सर्व्वेषां कुन्ती कर्णाय दास्यति । श्राद्धानि पुरुषव्याघ्र मा मादात् कौरवो नृपः ।
इति मे वर्त्तते बुद्धिर्मा नो नन्दन्तु शत्रवः । कष्टात् कष्टतरं यान्तु सर्व्वे दुर्य्योधनादयः ।
यैरियं पृथिवी कृत्स्ना घातिता कुलपांसनैः । कुतस्त्वमसि विस्मृत्य वैरं द्वादशवार्षिकं । ३२५
अज्ञातवासं गहनं द्रौपदीशोकवर्द्धनं । क्व तदा धृतराष्ट्रस्य स्नेहोऽस्मानभवत्तदा ।
कृष्णाजिनोपसंवीतो हृताभरणभूषणः । सार्द्धं पाञ्चालपुत्र्या त्वं राजानमुपजग्मिवान् ।
क्व तदा द्रोणभीष्मौ तौ सोमदत्तोऽपि वा भवेत् । यत्र त्रयोदश समा वने वन्येन जीवथ ।
न तदा त्वां पिता ज्येष्ठः पितृत्वेनाभिवीक्षते । किन्त्वेतद्विस्मृतं पार्थ यदेष कुलपांसनः ।
दुर्ब्बुद्धिर्व्विदुरं प्राह द्यूते किं जितमित्युत । तमेवंवादिनं राजा कुन्तीपुत्रो युधिष्ठिरः । ३३०
उवाच वचनं धीमान् जोषमास्वेति भर्त्सयन् ।

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि एकादशोऽध्यायः ॥ ११ ॥

॥ अर्ज्जुन उवाच ॥ भीम ज्येष्ठो गुरुर्मे त्वं नातोऽन्यद्वक्तुमुत्सहे । धृतराष्ट्रस्तु राजर्षिः सर्व्वथा मानमर्हति ।
न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतान्यपि । असंभिन्नार्य्यमर्य्यादाः साधवः पुरुषोत्तमाः ।
इति तस्य वचः श्रुत्वा फाल्गुनस्य महात्मनः । विदुरं प्राह धर्म्मात्मा कुन्तीपुत्रो युधिष्ठिरः ।
इदं मद्वचनात् क्षत्तः कौरवं ब्रूहि पार्थिवं । यावदिच्छति पुत्राणां श्राद्धं तावद्ददाम्यहं । ३३५
भीष्मादीनाञ्च सर्व्वेषां सुहृदामुपकारिणां । मम कोषादिति विभो मा भूद्भीमः सुदुर्म्मनाः ।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा धर्म्मराजस्तमर्ज्जुनं प्रत्यपूजयत् । भीमसेनः कटाक्षेण वीक्षाञ्चक्रे धनञ्जयं ।
ततः स विदुरं धीमान् वाक्यमाह युधिष्ठिरः । भीमसेने न कोपं स नृपतिः कर्त्तुमर्हति ।
परिक्लिष्टो हि भीमोऽयं हिमवृष्ट्यातपादिभिः । दुःखैर्ब्बहुविधैर्धीमानरण्ये विदितं तव ।
किन्तु मद्वचनाद्ब्रूहि राजानं भरतर्षभ । यद्यदिच्छसि यावच्च गृह्यतां मद्गृहादिति । ३४०
यन्मात्सर्य्यमयं भीमः करोति भृशदुःखितः । न तन्मनसि कर्त्तव्यमिति वाच्यः स पार्थिवः ।
यन्ममास्ति धनं किञ्चिदर्ज्जुनस्य च वेश्मनि । तस्य स्वामी महाराज इति वाच्यः स पार्थिवः ।
ददातु राजा विप्रेभ्यो यथेष्टं क्रियतां व्ययं । पुत्राणां सुहृदाञ्चैव गच्छत्वानृण्यमद्य सः ।
इदञ्चापि शरीरं मे तवायत्तं जनाधिप । धनानि चेति विद्धि त्वं न मे तत्रास्ति संशयः ।

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि द्वादशोऽध्यायः ॥ १२ ॥

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु राज्ञा स विदुरो बुद्धिमत्तमः । धृतराष्ट्रमुपेत्यैवं वाक्यमाह महार्थवत् । ३४५
उक्तो युधिष्ठिरो राजा भवद्वचनमादितः । स च संश्रुत्य वाक्यन्ते प्रशशंस महाद्युतिः ।
बीभत्सुश्च महातेजा निवेदयति ते गृहान् । वसु तस्य गृहे यच्च प्राणानपि च केवलान् ।

धर्म्मराजस्य पुत्रस्ते राज्यं प्राणान् धनानि च । अनुज्ञातानि राजर्षे यच्चान्यदपि किञ्चन ।
भीमस्तु सर्व्वदुःखानि संस्मृत्य बहुलान्युत । कृच्छ्रादिव महाबाहुरनुमन्ता विनिःश्वसन् ।
स राजन् धर्म्मशीलेन राज्ञा बीभत्सुना तथा । अनुनीतो महाबाहुः सौहृदे स्थापितोऽपि च । ३००
न च मन्युस्त्वया कार्य्य इति त्वां प्राह धर्म्मराट् । संस्मृत्य भीमस्तु वैरं यदन्यायवदाचरत् ।
एवंप्रायो हि धर्म्मोऽयं क्षत्रियाणां नराधिप । युद्धे क्षत्रियधर्म्मे च निरतोऽयं वृकोदरः ।
वृकोदरकृते चाहमर्ज्जुनश्च पुनः पुनः । प्रसीद याचे नृपते भवान् प्रभुरिहास्ति यत् ।
तद्ददातु भवान् वित्तं यावदिच्छसि पार्थिव । त्वमीश्वरोऽस्य राज्यस्य प्राणानामपि भारत ।
ब्रह्मदेयाग्रहारांश्च पुत्राणामौर्द्ध्वदेहिकं । इतो रत्नानि गाश्चैव दासीदासमजाविकं । ३०५
आनयित्वा कुरुश्रेष्ठो ब्राह्मणेभ्यः प्रयच्छतु । दीनान्धकृपणेभ्यश्च तत्र तत्र नृप त्वया ।
बह्वन्नरसपानाढ्याः सभा विदुर कारय । गवां निपानान्यन्यच्च विविधं पुण्यकं कुरु ।
इति मामब्रवीद्राजा पार्थश्चैव धनञ्जयः । यदत्रानन्तरं कार्य्यं तद्भवान् वक्तुमर्हति ।
इत्युक्ते विदुरेणाथ धृतराष्ट्रोऽभिनन्द्य तान् । मनश्चक्रे महादाने कार्त्तिक्यां जनमेजय ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
॥ वैशम्पायन उवाच ॥ विदुरेणैवमुक्तस्तु धृतराष्ट्रो जनाधिपः । प्रीतिमानभवद्राजन् राज्ञो जिष्णोश्च कर्म्मणि । ३१०
ततोऽभिरूपान् भीष्माय ब्राह्मणानृषिसत्तमान् । पुत्रार्थे सुहृदश्चैव स समीक्ष्य सहस्रशः ।
कारयित्वाऽन्नपानानि यानान्याच्छादनानि च । सुवर्णमणिरत्नानि दासीदासमजाविकं ।
कम्बलानि च रत्नानि ग्रामान् क्षेत्राण्यजाविकं । सालङ्कारान् गजानश्वान् कन्याश्चैव वरस्त्रियः ।
उद्दिश्योद्दिश्य सर्व्वेभ्यो ददौ स नृपसत्तमः । द्रोणं संकीर्त्य भीष्मञ्च सोमदत्तञ्च वाह्लिकं ।
दुर्य्योधनञ्च राजानं पुत्रांश्चैव पृथक् पृथक् । जयद्रथपुरोगांश्च सुहृदश्चापि सर्व्वशः । ३१५
स श्राद्धयज्ञो ववृते बहुशो धनदक्षिणः । अनेकधनरत्नौघो युधिष्ठिरमते तदा ।
अनिशं यत्र पुरुषा गणका लेखकास्तथा । युधिष्ठिरस्य वचनादपृच्छन्त स्म तं नृपं ।
आज्ञापय किमेतेभ्यः प्रदेयं दीयतामिति । तदुपस्थितमेवात्र वचनान्ते ददुस्तदा ।
शतदेये दशशतं सहस्रे चायुतं तथा । दीयते वचनाद्राज्ञः कुन्तीपुत्रस्य धीमतः ।
एवं स वसुधाराभिर्वर्षमाणो नृपाम्बुदः । तर्पयामास विप्रांस्तान् वर्षन् शस्यमिवाम्बुदः । ३२०
ततोऽनन्तरमेवात्र सर्व्ववर्णान्महामते । अन्नपानरसौघेन प्लावयामास पार्थिवः ।
सवस्त्रधनरत्नौघो मृदङ्गनिनदो महान् । गवाश्वमकरावर्त्तो नानारत्नमहाकरः ।
ग्रामाग्रहारद्वीपाढ्यो मणिहेमजलार्णवः । जगत् संप्लावयामास धृतराष्ट्रोडुपोद्धतः ।
एवं स पुत्रपौत्राणां पितॄणामात्मनस्तथा । गान्धार्य्याश्च महाराज प्रददावौर्द्ध्वदेहिकं ।
परिश्रान्तो यदासीत् स ददद्दानान्यनेकशः । निवर्त्तयामास तदा दानयज्ञं नराधिपः । ३२५

एवं स राजा कौरव्यश्चक्रे दानमहाक्रतुं । नटनर्त्तकलास्याढ्यं बह्वन्नरसदक्षिणं ।

दशाहमेवं दानानि दत्त्वा राजाऽम्बिकासुतः । बभूव पुत्रपौत्राणामनृणो भरतर्षभ ।

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि चतुर्द्दशोऽध्यायः ॥ १४ ॥

॥ वैशम्पायन उवाच ॥ ततः प्रभाते राजा स धृतराष्ट्रोऽम्बिकासुतः । आहूय पाण्डवान् वीरान् वनवासे कृतक्षणः ।

गान्धारीसहितो धीमानभ्यनन्दद्यथाविधि । कार्त्तिक्यां कारयित्वेष्टिं ब्राह्मणैर्वेदपारगैः ।

अग्निहोत्रं पुरस्कृत्य वल्कलाजिनसंवृतः । वधूजनवृतो राजा निर्ययौ भवनात्ततः । १०

ततः स्त्रियः कौरवपाण्डवानां याश्चापराः कौरवराजवंश्याः । तासां नादः प्रादुरासीत्तदानीं वैचित्रवीर्य्ये नृपतौ प्रयाति ।

ततो लाजैः सुमनोभिश्च राजा विचित्राभिस्तद्गृहं पूजयित्वा । सम्पूज्य भृत्यांश्च जनं च सर्व्वं ततः समुत्सृज्य ययौ नरेन्द्रः ।

ततो राजा प्राञ्जलिर्वेपमानो युधिष्ठिरः सस्वरं बाष्पकण्ठः । विमुच्योच्चैर्महानादं हि साधो क्व यास्यसीत्यपतत्तात भूमौ ।

तथाऽर्जुनस्तीव्रदुःखाभितप्तो मुहुर्मुहुर्निःश्वसन् भारताग्र्यः । युधिष्ठिरं नैवमित्येवमुक्त्वा निगृह्याथो दीनवत् सीदमानः ।

वृकोदरः फाल्गुनश्चैव वीरो माद्रीपुत्रौ विदुरः सञ्जयश्च । वैश्यापुत्रः सहितो गौतमेन धौम्यो विप्राश्चान्वयुर्बाष्पकण्ठाः । १५

कुन्ती गान्धारीं बद्धनेत्रां व्रजन्तीं स्कन्धासक्तं हस्तमथोद्वहन्ती । राजा गान्धार्य्याः स्कन्धदेशेऽवसज्य पाणिं ययौ धृतराष्ट्रः प्रतीतः ।

तथा कृष्णा द्रौपदी सात्वती च बालापत्या चोत्तरा कौरवी च । चित्राङ्गदा याश्च काश्चित् स्त्रियोऽन्याः सार्द्धं राज्ञा प्रस्थितास्ता वधूभिः ।

तासां नादो रुदतीनां तदासीत् राजन् दुःखात् कुररीणामिवोच्चैः । ततो निष्पेतुर्ब्राह्मणक्षत्रियाणां विट्शूद्राणाञ्चैव भार्य्याः समन्तात् ।

तन्निर्य्याणे दुःखितः पौरवर्गो गजाह्वये चैव बभूव राजन् । यथा पूर्व्वं गच्छतां पाण्डवानां द्यूते राजन् कौरवाणां सभायाः ।

या नापश्यंश्चन्द्रमसं न सूर्य्यं रामाः कदाचिदपि तस्मिन् नरेन्द्र । महावनं गच्छति कौरवेन्द्रे शोकेनार्त्ता राजमार्गं प्रपेदुः । २०

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

॥ वैशम्पायन उवाच ॥ ततः प्रासादहर्म्म्येषु वसुधायाञ्च पार्थिव । नारीणाञ्च नराणाञ्च निःस्वनः सुमहानभूत् ।

स राजा राजमार्गेण नृनारीसङ्कुलेन च । कथञ्चिन्निर्ययौ धीमान् वेपमानः कृताञ्जलिः ।

स वर्द्धमानद्वारेण निर्ययौ गजसाह्वयात् । विसर्ज्जयामास च तं जनौघं स मुहुर्मुहुः ।

वनं गन्तुञ्च विदुरो राज्ञा सह कृतक्षणः । सञ्जयश्च महामात्रः सूतो गावल्गणिस्तथा ।

कृपं निवर्त्तयामास युयुत्सुञ्च महारथं । धृतराष्ट्रो महीपालः परिदाय युधिष्ठिरे । ५

निवृत्ते पौरवर्गे च राजा सान्तःपुरस्तदा । धृतराष्ट्राभ्यनुज्ञातो निवर्त्तितुमियेष च ।

सोऽब्रवीन्मातरं कुन्तीं वनं तमनुगच्छतीं । अहं राजानमन्विष्ये भवती विनिवर्त्ततां ।

वधूपरिवृता राज्ञि नगरं गन्तुमर्हसि । राजा यात्वेष धर्म्मात्मा तापस्ये कृतनिश्चयः ।

इत्युक्ता धर्म्मराजेन बाष्पव्याकुललोचना । जगामैव तदा कुन्ती गान्धारीं परिगृह्य च ।

॥ कुन्त्युवाच ॥ सहदेवे महाराज मा प्रमादं कृथाः क्वचित् । एष मामनुरक्तो हि राजंस्त्वामेव सर्व्वदा । ४८०

कर्णं स्मरेथाः सततं संग्रामेष्वपलायिनं । अवकीर्णो हि समरे वीरो दुष्प्रज्ञया तदा ।

आयसं हृदयं नूनं मन्दाया मम पुत्रक । यत् सूर्य्यजमपश्यन्त्याः शतधेदं न दीर्य्यते ।

एवं गते तु किं शक्यं मया कर्त्तुमरिन्दम । मम दोषोऽयमत्यर्थं ख्यापितो यन्न सूर्य्यजः ।

तन्निमित्तं महाबाहो दानं दद्यास्त्वमुत्तमं । सदैव भ्रातृभिः सार्द्धं सूर्य्यजस्यारिमर्द्दन ।

द्रौपद्याश्च प्रिये नित्यं स्थातव्यमरिकर्षण । भीमसेनोऽर्ज्जुनश्चैव नकुलश्च कुरूद्वह । ४८५

समाधेयास्त्वया राजंस्त्वय्यद्य कुलधूर्गता । श्वश्रूश्वशुरयोः पादान् शुश्रूषन्ती वनेऽप्यहं ।

गान्धारीसहिता वत्स्ये तापसी मलपङ्किनी ।

॥ वैशम्पायन उवाच ॥ एवमुक्तः स धर्म्मात्मा भ्रातृभिः सहितो वशी । विषादमगमत्तीव्रं न च किञ्चिदुवाच ह ।

मुहूर्त्तमिव तु ध्यात्वा धर्म्मराजो युधिष्ठिरः । उवाच मातरं दीनश्चिन्ताशोकपरायणः ।

किमिदन्ते व्यवसितं नैवं त्वं वक्तुमर्हसि । न त्वामभ्यनुजानामि प्रसादं कर्त्तुमर्हसि । ४९०

पुरोद्यतान् पुरा ह्यस्मानुत्साह्य प्रियदर्शने । विदुलाया वचोभिस्त्वं नास्मान् सन्त्यक्तुमर्हसि ।

निहत्य पृथिवीपालान् राज्यं प्राप्तमिदं मया । तव प्रज्ञामुपश्रुत्य वासुदेवान्नरर्षभात् ।

क्व सा बुद्धिरियं चाद्य भवत्या यत् श्रुतं मया । क्षत्रधर्म्मे स्थितिं चोक्त्वा तस्याश्च्यवितुमिच्छसि ।

अस्मानुत्सृज्य राज्यञ्च स्नुषाञ्चैवां यशस्विनि । कथं वत्स्यसि दुर्गेषु वनेष्वद्य प्रसीद मे ।

इति वाष्पकला वाचः कुन्ती पुत्रस्य शृण्वती । सा जगामाश्रुपूर्णाक्षी भीमस्तामिदमब्रवीत् । ४९५

यदा राज्यमिदं कुन्ति भोक्तव्यं पुत्रनिर्ज्जितं । प्राप्तव्या राजधर्म्माश्च तदेयन्ते कुतो मतिः ।

किं वयं कारिताः पूर्व्वं भवत्या पृथिवीक्षयं । कस्य हेतोः परित्यज्य वनं गन्तुमभीप्ससि ।

वनाच्चापि किमानीता भवत्या बालका वयं । दुःखशोकसमाविष्टौ माद्रीपुत्राविमौ तथा ।

प्रसीद मातर्म्मा गास्त्वं वनमद्य यशस्विनि । श्रियं यौधिष्ठिरीं मातर्भुङ्क्ष्व तावद्बलार्ज्जितां ।

इति सा निश्चितैवाथ वनवासाय भाविनी । लालप्यतां बहुविधं पुत्राणां नाकरोद्वचः । ५००

द्रौपदी चान्वयात् श्वश्रूं विषण्णवदना तदा । वनवासाय गच्छन्तीं रुदती भद्रया सह ।

सा पुत्रान् रुदतः सर्व्वान् मुहुर्म्मुहुरवेक्षती । जगामैव महाप्राज्ञा वनाय कृतनिश्चया ।

अन्वयुः पाण्डवास्तान्तु सभृत्यान्तःपुरास्तथा । ततः प्रमृज्य साऽश्रूणि पुत्रान् वचनमब्रवीत् ।

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि षोडशोऽध्यायः ॥ १६ ॥

॥ कुन्त्युवाच ॥ एवमेतन्महाबाहो यथा वदसि पाण्डव । कृतमुद्धर्षणं पूर्व्वं मया वः सीदतां नृपाः ।

द्यूतापहृतराज्यानां पतितानां सुखादपि । ज्ञातिभिः परिभूतानां कृतमुद्धर्षणं मया । ५०५

कथं पाण्डोर्न नश्येत सन्ततिः पुरुषर्षभाः । यशश्च वो न नश्येत इति चोद्धर्षणं कृतं ।

यूयमिन्द्रसमाः सर्व्वे देवतुल्यपराक्रमाः । मा परेषां मुखप्रेक्षाः स्थेत्येवं तत् कृतं मया ।

कथं धर्म्मभृतां श्रेष्ठो राजा त्वं वासवोपमः । पुनर्व्वने न दुःखी स्यादिति चोद्धर्षणं कृतं ।

नागायुतसमप्राणः ख्यातविक्रमपौरुषः। नायं भीमोऽत्ययं गच्छेदिति चोद्धर्षणं कृतं।
भीमसेनादवरजस्तथाऽयं वासवोपमः। विजयो नावसीदेत इति चोद्धर्षणं कृतं। ४८०
नकुलः सहदेवश्च तथेमौ गुरुवर्त्तिनौ। क्षुधा कथं न सीदेतामिति चोद्धर्षणं कृतं।
इयञ्च बृहती श्यामा तथाऽत्यायतलोचना। वृथा सभातले क्लिष्टा मा भूदिति च तत् कृतं।
प्रेक्षतामेव वो भीम वेपन्तीं कदलीमिव। स्त्रीधर्म्मिणीमरिष्टाङ्गीं तथा द्यूतपराजितां।
दुःशासनो यदा मौर्ख्याद्दासीवत् पर्य्यकर्षत। तदैव विदितं मह्यं पराभूतमिदं कुलं।
निषण्णाः कुरवश्चैव तदा मे श्वशुरादयः। यदैव नाथमिच्छन्ती व्यलपत् कुररी यथा। ४८५
केशपक्षे परामृष्टा पापेन हतबुद्धिना। यदा दुःशासनेनैषा तदा मुह्याम्यहं नृप।
युष्मत्तेजोविवृद्ध्यर्थं मया ह्युद्धर्षणं कृतं। तदानीं विदुलावाक्यैरिति तद्वित्त पुत्रकाः।
कथं न राजवंशोऽयं नश्येत् प्राप्य सुता मम। पाण्डोरिति मया पुत्रास्तस्मादुद्धर्षणं कृतं।
न तस्य पुत्राः पौत्रा वा कुरवस्ते च पार्थिवाः। लभन्ते सुकृतान् लोकान् यस्माद्वंशः प्रणश्यति।
भुक्तं राज्यफलं पुत्रा भर्त्तुर्मे विपुलं पुरा। महादानानि दत्तानि पीतः सोमो यथाविधि। ४९०
नाहमात्मफलार्थं वै वासुदेवमचूचुदं। विदुलायाः प्रलापैस्तैः पालनार्थञ्च तत् कृतं।
नाहं राज्यफलं पुत्राः कामये पुत्रनिर्ज्जितं। पतिलोकानहं पुण्यान् कामये तपसा विभो।
श्वश्रूश्वशुरयोः कृत्वा शुश्रूषां वनवासिनोः। तपसा शोषयिष्यामि युधिष्ठिर कलेवरं।
निवर्त्तस्व कुरुश्रेष्ठ भीमसेनादिभिः सह। धर्म्मे ते धीयतां बुद्धिर्मनस्ते महदस्तु च।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि सप्तदशोऽध्यायः॥ १७॥

॥ वैशम्पायन उवाच॥ कुन्त्यास्तु वचनं श्रुत्वा पाण्डवा राजसत्तम। व्रीडिताः संन्यवर्त्तन्त पाञ्चाल्या सहिताऽनघाः। ४९५
ततः शब्दो महानेव सर्व्वेषामभवत्तदा। अन्तःपुराणां रुदतां दृष्ट्वा कुन्तीं तथा गतां।
प्रदक्षिणमथावृत्य राजानं पाण्डवास्तदा। अभिवाद्य न्यवर्त्तन्त पृथां तामनिवर्त्त्य वै।
ततोऽब्रवीन्महातेजा धृतराष्ट्रोऽम्बिकासुतः। गान्धारीं विदुरञ्चैव समाभाष्यावगृह्य च।
युधिष्ठिरस्य जननी देवी साधु निवर्त्त्यतां। यथा युधिष्ठिरः प्राह तत् सर्व्वं सत्यमेव हि।
पुत्रैश्वर्य्यं महदिदमपास्य च महाफलं। का नु गच्छेद्वनं दुर्गं पुत्रानुत्सृज्य मूढवत्। ५००
राज्यस्थया तपस्तप्तुं दानव्रतकृतं महत्। अनया शक्यमेवाद्य श्रूयताञ्च वचो मम।
गान्धारि परितुष्टोऽस्मि वध्वाः शुश्रूषणेन वै। तस्मात्त्वमेनां धर्म्मज्ञे समनुज्ञातुमर्हसि।
इत्युक्ता सौबलेयी तु राज्ञा कुन्तीमुवाच ह। तत् सर्व्वं राजवचनं स्वञ्च वाक्यं विशेषवत्।
न च सा वनवासाय देवीं कृतमतिं तदा। शक्नोत्यावर्त्तयितुं कुन्तीं धर्म्मपरां सतीं।
तस्यास्तान्तु स्थितिं ज्ञात्वा व्यवसायं कुरुस्त्रियः। निवृत्तांश्च कुरुश्रेष्ठान् दृष्ट्वा प्ररुरुदुस्तदा। ५०५
उपावृत्तेषु पार्थेषु सर्व्वास्वेव वधूषु च। ययौ राजा महाप्राज्ञो धृतराष्ट्रो वनं तदा।
पाण्डवाश्चातिदीनास्ते दुःखशोकपरायणाः। यानैः स्त्रीसहिताः सर्व्वे पुरं प्रविविशुस्तदा।

तदहृष्टमनानन्दं गतोत्सवमिवाभवत् । नगरं हास्तिनपुरं सस्त्रीवृद्धकुमारकं ।
सर्व्वे चासन्निरुत्साहाः पाण्डवा जातमन्यवः । कुन्त्या हीनाः सुदुःखार्त्ता वत्सा इव विना कृताः ।
धृतराष्ट्रस्तु तेनाह्ना गत्वा सुमहदन्तरं । ततो भागीरथीतीरे निवासमकरोत् प्रभुः । १०
प्रादुष्कृता यथान्यायमग्नयो वेदपारगैः । व्यराजन्त द्विजश्रेष्ठैस्तत्र तत्र तपोवने ।
प्रादुष्कृताग्निरभवत्स च वृद्धो नराधिपः । स राजाऽग्नीन् पर्य्युपास्य हुत्वा च विधिवत्तदा ।
सन्ध्यागतं सहस्रांशुमुपातिष्ठत भारत । विदुरः सञ्जयश्चैव राज्ञः शय्यां कुशैस्ततः ।
चक्रतुः कुरुवीरस्य गान्धार्य्याश्चाविदूरतः । गान्धार्य्याः सन्निकर्षे तु निषसाद कुशे सुखं ।
युधिष्ठिरस्य जननी कुन्ती साधुव्रते स्थिता । तेषां संश्रवणे चापि निषेदुर्विदुरादयः । १५
याजकाश्च यथोद्देशं द्विजा ये चानुयायिनः । प्राधीतद्विजमुख्या सा संप्रज्वलितपावका ।
बभूव तेषां रजनी ब्राह्मी प्रीतिविवर्द्धिनी । ततो रात्र्यां व्यतीतायां कृतपूर्व्वाह्णिकक्रियाः ।
हुत्वाग्निं विधिवत् सर्व्वे प्रययुस्ते यथाक्रमं । उदङ्मुखा निरीक्षन्त उपवासपरायणाः ।
स तेषामतिदुःखोऽभून्निवासः प्रथमेऽहनि । शोचतां शोच्यमानानां पौरजानपदैर्जनैः ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि अष्टादशोऽध्यायः ॥ १८ ॥

॥ वैशम्पायन उवाच ॥ ततो भागीरथीतीरे मेध्ये पुण्यजनोचिते । निवासमकरोद्राजा विदुरस्य मते स्थितः । १
तत्रैनं पर्य्युपातिष्ठन् ब्राह्मणा वनवासिनः । क्षत्रविट्शूद्रसंघाश्च बहवो भरतर्षभ ।
स तैः परिवृतो राजा कथाभिः परिनन्द्य तान् । अनुजज्ञे सशिष्यान् वै विधिवत् प्रतिपूज्य च ।
सायाह्ने स महीपालस्ततो गङ्गामुपेत्य च । चकार विधिवत् शौचं गान्धारी च यशस्विनी ।
ते चैवान्ये पृथक् सर्व्वे तीर्थेष्वाप्लुत्य भारत । चक्रुः सर्व्वाः क्रियास्तत्र पुरुषा विदुरादयः ।
कृतशौचं ततो वृद्धं श्वशुरं कुन्तिभोजजा । गान्धारीञ्च पृथा राजन् गङ्गातीरमुपानयत् । ५
राज्ञस्तु याजकैस्तत्र कृतो वेदीपरिस्तरः । जुहाव तत्र वह्निं स नृपतिः सत्यसङ्गरः ।
ततो भागीरथीतीरात् कुरुक्षेत्रं जगाम सः । सानुगो नृपतिर्वृद्धो नियतः संयतेन्द्रियः ।
तत्राश्रमपदं धीमानभिगम्य स पार्थिवः । आससादाथ राजर्षिं शतयूपं मनीषिणं ।
स हि राजा महानासीत् केकयेषु परन्तप । स पुत्रं मनुजैश्वर्य्ये निवेश्य वनमाविशत् ।
तेनासौ सहितो राजा ययौ व्यासाश्रमं प्रति । तत्रैनं विधिवद्राजा प्रत्यगृह्णात् कुरूद्वहं । १०
स दीक्षां तत्र संप्राप्य राजा कौरवनन्दनः । शतयूपाश्रमे तस्मिन्निवासमकरोत्तदा ।
तस्मै सर्व्वं विधिं राज्ञे राजा चख्यौ महामतिः । आरण्यकं महाराज व्यासस्यानुमते तदा ।
एवं स तपसा राजा धृतराष्ट्रो महामनाः । योजयामास चात्मानं तांश्चाप्यनुचरांस्तदा ।
तथैव देवी गान्धारी वल्कलाजिनधारिणी । कुन्त्या सह महाराज समानव्रतचारिणी ।
कर्म्मणा मनसा वाचा चक्षुषा चैव ते नृप । संनियम्येन्द्रियग्राममास्थिते परमं तपः । १५
त्वगस्थिभूतः परिशुष्कमांसो जटाजिनी वल्कलसंवृताङ्गः । स पार्थिवस्तत्र तपश्चचार महर्षिवत्तीव्रमपेतदोषः ।

उक्ता च धर्म्मार्थविदग्र्यबुद्धिः स सञ्जयस्तं नृपतिं सदारं। उपाचरद्धीरतरो जितात्मा तदा कृशो वल्कलचीरवासाः।

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि ऊनविंशोऽध्यायः॥ १९॥

॥ वैशम्पायन उवाच ॥ ततस्तत्र मुनिश्रेष्ठा राजानं द्रष्टुमभ्ययुः। नारदः पर्व्वतश्चैव देवलश्च महातपाः।
द्वैपायनः सशिष्यश्च सिद्धाश्चान्ये मनीषिणः। शतयूपश्च राजर्षिर्वृद्धः परमधार्म्मिकः।
तेषां कुन्ती महाराज पूजाञ्चक्रे यथाविधि। ते चापि तुतुषुस्तस्यास्तापसाः परिचर्य्यया। ५४०
तत्र धर्म्याः कथास्तात चक्रुस्ते परमर्षयः। रमयन्तो महात्मानं धृतराष्ट्रं जनाधिपं।
कथान्तरे तु कस्मिंश्चिद्देवर्षिर्नारदस्ततः। कथामिमामकथयत् सर्व्वप्रत्यक्षदर्शिवान्।
॥ नारद उवाच ॥ केकयाधिपतिः श्रीमान् राजासीदकुतोभयः। सहस्रचित्य इत्युक्तः शतयूपपितामहः।
स्वपुत्रे राज्यमासज्य ज्येष्ठे परमधार्म्मिके। सहस्रचित्यो धर्म्मात्मा प्रविवेश वनं नृपः।
स गत्वा तपसः पारं दीप्तस्य वसुधाधिपः। पुरन्दरस्य संस्थानं प्रतिपेदे महाद्युतिः। ५४५
दृष्टपूर्व्वः सुबहुशो राजन् संपतता मया। महेन्द्रसदने राजा तपसा दग्धकिल्बिषः।
तथा शैलालयो राजा भगदत्तपितामहः। तपोबलेनैव नृपो महेन्द्रसदनं गतः।
तथा पृषध्रो राजासीद्राजन् वज्रधरोपमः। स चापि तपसा दान्तो नाकपृष्ठमितो नृपः।
अस्मिन्नरण्ये नृपते मान्धातुरपि चात्मजः। पुरुकुत्सो नृपः सिद्धिं महतीं समवाप्तवान्।
भार्य्या समभवद्यस्य नर्म्मदा सरितां वरा। सोऽस्मिन्नरण्ये नृपतिस्तपस्तप्त्वा दिवं गतः। ५५०
शशलोमा स राजासीद्राजन् परमधार्म्मिकः। सम्यगस्मिन् वने तप्त्वा ततो दिवमवाप्तवान्।
द्वैपायनप्रसादाच्च त्वमपीदं तपोवनं। राजन्नवाप्य दुष्प्रापां गतिमग्र्यां गमिष्यसि।
त्वञ्चापि राजशार्दूल तपसोऽन्ते श्रिया वृतः। गान्धारीसहितो गन्ता गतिं तेषां महात्मनां।
पाण्डुः स्मरति ते नित्यं बलहन्तुः समीपगः। त्वां सदैव महाराज श्रेयसा स च योक्ष्यति।
तव शुश्रूषया चैव गान्धार्य्याश्च यशस्विनी। भर्त्तुः सलोकतामेषा गमिष्यति वधूस्तव। ५५५
युधिष्ठिरस्य जननी स हि धर्म्मः सनातनः। वयमेतत् प्रपश्यामो नृपते दिव्यचक्षुषा।
प्रवेक्ष्यति महात्मानं विदुरश्च युधिष्ठिरं। सञ्जयस्त्वदनुध्यानादितः स्वर्गमवाप्स्यति।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा कौरवेन्द्रो महात्मा सार्द्धं पत्न्या प्रीतिमान् सम्बभूव। विद्वान् वाक्यं नारदस्य प्रशस्य चक्रे पूजां
चातुलां नारदस्य।

ततः सर्व्वे नारदं विप्रसंघाः संपूजयामासुरतीव राजन्। राज्ञः प्रीत्या धृतराष्ट्रस्य ते वै पुनः पुनः संप्रहृष्टास्तदानीं।

॥ वैशम्पायन उवाच ॥ नारदस्य तु तद्वाक्यं प्रशशंसुर्द्विजसत्तमाः। शतयूपस्तु राजर्षिर्नारदं वाक्यमब्रवीत्। ५६०
अहो भगवता श्रद्धा कुरुराजस्य वर्द्धिता। सर्व्वस्य च जनस्यास्य मम चैव महाद्युते।
अस्ति काचिद्विवक्षा तु तां मे निगदतः शृणु। धृतराष्ट्रं प्रति नृपं देवर्षे लोकपूजित।
सर्व्ववृत्तान्ततत्त्वज्ञो भवान् दिव्येन चक्षुषा। युक्तः पश्यसि विप्रर्षे गतिर्या विविधा नृणां।
उक्तवान्नृपतीनां त्वं महेन्द्रस्य सलोकतां। न त्वस्य नृपतेर्लोकाः कथितास्ते महामुने।

स्वागमनमप्यस्य नृपतेः श्रोतुमिच्छाम्यहं विभो । ततः कौतूहला चेति तन्ममाख्याहि तत्त्वतः ।
इत्युक्तो नारदस्तेन वाक्यं सर्व्वमनोऽनुगं । व्याजहार सभामध्ये दिव्यदर्शी महातपाः ।
॥ नारद उवाच ॥ यदृच्छया शक्रसदो गत्वा शक्रं शचीपतिं । दृष्टवानस्मि राजर्षे तत्र पाण्डुं नराधिपं ।
तत्रेयं धृतराष्ट्रस्य कथा समभवन्नृप । तपसो दुष्करस्यास्य यदयं तप्यते तपः ।
तत्राहमिदमश्रौषं शक्रस्य वदतः स्वयं । वर्षाणि त्रीणि शिष्टानि राज्ञोऽस्य परमायुषः ।
ततः कुवेरभवनं गान्धारीसहितो नृपः । प्रयाता धृतराष्ट्रोऽयं राजराजाभिसत्कृतः ।
कामगेन विमानेन दिव्याभरणभूषितः । ऋषिपुत्रो महाभागस्तपसा दग्धकिल्बिषः ।
सञ्चरिष्यति लोकांश्च देवगन्धर्व्वरक्षसां । स्वच्छन्देनेति धर्म्मात्मा यन्मां त्वमनुपृच्छसि ।
देवगुह्यमिदं प्रीत्या मया वः कथितं महत् । भवन्तो हि श्रुतधनास्तपसा दग्धकिल्बिषाः ।
॥ वैशम्पायन उवाच ॥ इति ते तस्य तच्छ्रुत्वा देवर्षेर्मधुरं वचः । सर्व्वे सुमनसः प्रीता बभूवुः स च पार्थिवः ।
एवं कथाभिरन्वास्य धृतराष्ट्रं मनीषिणः । विप्रजग्मुर्यथाकामं ते सिद्धगतिमास्थिताः ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि विंशतितमोऽध्यायः ॥ २० ॥
॥ वैशम्पायन उवाच ॥ वनं गते कौरवेन्द्रे दुःखशोकसमन्विताः । बभूवुः पाण्डवा राजन् मातृशोकेन चान्विताः ।
तथा पौरजनः सर्व्वः शोचन्नास्ते जनाधिपं । कुर्व्वाणाश्च कथास्तत्र ब्राह्मणा नृपतिं प्रति ।
कथं नु राजा वृद्धः स वने वसति निर्ज्जने । गान्धारी च महाभागा सा च कुन्ती पृथा कथं ।
सुखार्हः स हि राजर्षिरसुखी तद्वनं महत् । किमवस्थः समासाद्य प्रज्ञाचक्षुर्हतात्मजः ।
सुदुष्करं कृतवती कुन्ती पुत्रानपश्यती । राजश्रियं परित्यज्य वनवासमरोचयत् ।
विदुरः किमवस्थश्च भ्रातुः शुश्रूषुरात्मवान् । स च गावल्गणिर्धीमान् भर्तृपिण्डानुपालकः ।
आकुमारञ्च पौरास्ते चिन्ताशोकसमाहताः । तत्र तत्र कथाश्चक्रुः समासाद्य परस्परं ।
पाण्डवाश्चैव ते सर्व्वे भृशं शोकपरायणाः शोचन्तो मातरं वृद्धामूषुर्नातिचिरं पुरे ।
तथैव वृद्धं पितरं हतपुत्रं जनेश्वरं । गान्धारीञ्च महाभागां विदुरञ्च महामतिं ।
नैषां बभूव सम्प्रीतिस्तान् विचिन्तयतां तदा । न राज्ये न च नारीषु न वेदाध्ययनेषु च ।
परं निर्व्वेदमगमंश्चिन्तयन्तो नराधिपं । तञ्च ज्ञातिवधं घोरं संस्मरन्तः पुनः पुनः ।
अभिमन्योश्च बालस्य विनाशं रणमूर्द्धनि । कर्णस्य च महाबाहोः संग्रामेष्वपलायिनः ।
तथैव द्रौपदेयानामन्येषां सुहृदामपि । बधं संस्मृत्य ते वीरा नातिप्रमनसोऽभवन् ।
हतप्रवीरां पृथिवीं हतरत्नाञ्च भारत । सदैव चिन्तयन्तस्ते न शमं चोपलेभिरे ।
द्रौपदी हतपुत्रा च सुभद्रा चैव भाविनी । नातिप्रीतियुते देव्यौ तदास्तामप्रहृष्टवत् ।
वैराट्यास्तनयं दृष्ट्वा पितरं ते परिक्षितं । धारयन्ति स्म ते प्राणांस्तव पूर्व्वपितामहाः ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ वैशम्पायन उवाच ॥ एवं ते पुरुषव्याघ्राः पाण्डवा मातृनन्दनाः । स्मरन्तो मातरं वीरा बभूवुर्भृशदुःखिताः ।

ये राज्यकार्य्येषु पुरा व्यासक्ता नित्यशोऽभवन्। ते राजकार्य्याणि तदा नाकार्षुः सर्व्वतः पुरे।
आविष्टा इव शोकेन नाभ्यनन्दन्त किञ्चन। सम्भाष्यमाणा अपि ते न किञ्चित् प्रत्यपूजयन्।
ते स्म वीरा दुराधर्षा गाम्भीर्य्ये सागरोपमाः। शोकोपहतविज्ञाना नष्टसंज्ञा इवाभवन्। ६९५
अचिन्तयंश्च जननीं ततस्ते पाण्डुनन्दनाः। कथं नु वृद्धमिथुनं वहत्यतिकृशा पृथा।
कथं च स महीपालो हतपुत्रो निराश्रयः। पत्न्या सह वसत्येको वने श्वापदसेविते।
सा च देवी महाभागा गान्धारी हतबान्धवा। पतिमन्धं कथं वृद्धमन्वेति विजने वने।
एवं तेषां कथयतामौत्सुक्यमभवत्तदा। गमने चाभवद्बुद्धिर्धृतराष्ट्रदिदृक्षया।
सहदेवस्तु राजानं प्रणिपत्येदमब्रवीत्। अहो मे भवतो दृष्टं हृदयं गमनं प्रति। ७००
न हि त्वां गौरवेणाहमशकं वक्तुमञ्जसा। गमनं प्रति राजेन्द्र तदिदं समुपस्थितं।
दिष्ट्या द्रक्ष्यामि तां कुन्तीं वर्त्तयन्तीं तपस्विनीं। जटिलां तापसीं वृद्धां कुशकाशपरिक्षतां।
प्रासादहर्म्यसंवृद्धामत्यन्तसुखभागिनीं। कदा नु जननीं श्रान्तां द्रक्ष्यामि भृशदुःखितां।
अनित्याः खलु मर्त्त्यानां गतयो भरतर्षभ। कुन्ती राजसुता यत्र वसत्यसुखिता वने।
सहदेववचः श्रुत्वा द्रौपदी योषितांवरा। उवाच देवी राजानमभिपूज्याभिनन्द्य च। ७०५
कदा द्रक्ष्यामि तां देवीं यदि जीवति सा पृथा। जीवन्त्या ह्यद्य मे प्रीतिर्भविष्यति जनाधिप।
एषा तेऽस्तु मतिर्नित्यं धर्म्मे ते रमतां मनः। योऽद्य त्वमस्मान् राजेन्द्र श्रेयसा योजयिष्यसि।
अग्रपादस्थितं चेमं विद्धि राजन् वधूजनं। काङ्क्षन्तं दर्शनं कुन्त्या गान्धार्य्याः श्वशुरस्य च।
इत्युक्तः स नृपो देव्या द्रौपद्या भरतर्षभ। सेनाध्यक्षान् समानाय्य सर्व्वानिदमुवाच ह।
निर्यातयत मे सेनां प्रभूतरथकुञ्जरां। द्रक्ष्यामि वनसंस्थञ्च धृतराष्ट्रं महीपतिं। ७१०
स्त्र्यध्यक्षांश्चाब्रवीद्राजा यानानि विविधानि मे। सज्जीक्रियन्तां सर्व्वाणि शिविकाश्च सहस्रशः।
शकटापणवेशाश्च कोषः शिल्पिन एव च। निर्यान्तु कोषपालाश्च कुरुक्षेत्राश्रमं प्रति।
यश्च पौरजनः कश्चिद्द्रष्टुमिच्छति पार्थिवं। अनावृतः सुविहितः स च यातु सुरक्षितः।
सूदाः पौरोगवाश्चैव सर्व्वश्चैव महानसं। विविधं भक्ष्यभोज्यञ्च शकटैरुह्यतां मम।
प्रयाणं घुष्यताञ्चैव श्वोभूत इति मा चिरं। क्रियन्तां पथि चाप्यद्य वेश्मानि विविधानि च। ७१५
एवमाज्ञापयामास भ्रातृभिः सह पाण्डवः। श्वोभूते निर्ययौ राजन् सस्त्रीवृद्धपुरःसरः।
स बहिर्दिवसानेव जनौघं परिपालयन्। न्यवसन्नृपतिः पञ्च ततोऽगच्छद्वनं प्रति।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि द्वाविंशोऽध्यायः॥ २२॥
॥ वैशम्पायन उवाच॥ आज्ञापयामास ततः सेनां भरतसत्तम। अर्ज्जुनप्रमुखैर्गुप्तां लोकपालोपमैर्नरैः।
योगो योग इति प्रीत्या ततः शब्दो महानभूत्। क्रोशतां सादिनां तत्र युज्यतामिति भारत।
केचिद्यानैर्नरा जग्मुः केचिदश्वैर्महाजवैः। काञ्चनैश्च रथैः केचिज्ज्वलितज्वलनोपमैः। ७२०
गजेन्द्रैश्च तथैवान्ये केचिदुष्ट्रैर्नराधिप। पदातिनस्तथैवान्ये नखरप्रासयोधिनः।

पौरजानपदाश्चैव यानैर्बहुविधैस्तथा । अन्वयुः कुरुराजानं धृतराष्ट्रदिदृक्षवः ।
स चापि राजवचनादाचार्य्यो गौतमः कृपः । सेनामादाय सेनानीः प्रययावाश्रमं प्रति ।
ततो द्विजैः परिवृतः कुरुराजो युधिष्ठिरः । संस्तूयमानो बहुभिः सूतमागधवन्दिभिः ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि । रथानीकेन महता निर्ज्जगाम कुरूद्वहः ।
गजैश्चाचलसङ्काशैर्भीमकर्म्मा वृकोदरः । सज्जयन्त्रायुधोपेतैः प्रययौ पवनात्मजः ।
माद्रीपुत्रावपि तथा हयारोहौ सुसंवृतौ । जग्मतुः शीघ्रगमनौ सन्नद्धकवचध्वजौ ।
अर्ज्जुनश्च महातेजा रथेनादित्यवर्चसा । वशी श्वेतैर्हयैर्युक्तैर्दिव्येनान्वगमन्नृपं ।
द्रौपदीप्रमुखाश्चापि स्त्रीसङ्घाः शिविकायुताः । स्त्र्यध्यक्षगुप्ताः प्रययुर्विसृजन्तोऽमितं वसु ।
समृद्धनरनागाश्वं वेणुवीणानुनादितं । शुशुभे पाण्डवं सैन्यं तत्तदा भरतर्षभ ।
नदीतीरेषु रम्येषु सरःसु च विशाम्पते । वासान् कृत्वा क्रमेणाथ जग्मुस्ते कुरुपुङ्गवाः ।
युयुत्सुश्च महातेजा धौम्यश्चैव पुरोहितः । युधिष्ठिरस्य वचनात् पुरगुप्तिं प्रचक्रतुः ।
ततो युधिष्ठिरो राजा कुरुक्षेत्रमवातरत् । क्रमेणोत्तीर्य्य यमुनां नदीं परमपावनीं ।
स ददर्शाश्रमं दूराद्राजर्षेस्तस्य धीमतः । शतयूपस्य कौरव्य धृतराष्ट्रस्य चैव ह ।
ततः प्रमुदितः सर्व्वो जनस्तद्वनमञ्जसा । विवेश सुमहानादैरापूर्य्य भरतर्षभ ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ वैशम्पायन उवाच ॥ ततस्ते पाण्डवा दूरादवतीर्य्य पदातयः । अभिजग्मुर्नरपतेराश्रमं विनयानताः ।
स च योधजनः सर्व्वो ये च राष्ट्रनिवासिनः । स्त्रियश्च कुरुमुख्यानां पद्भिरेवान्वयुस्तदा ।
आश्रमन्ते ततो जग्मुर्धृतराष्ट्रस्य पाण्डवाः । शून्यं मृगगणाकीर्णं कदलीवनशोभितं ।
ततस्तत्र समाजग्मुस्तापसा नियतव्रताः । पाण्डवानागतान् द्रष्टुं कौतूहलसमन्विताः ।
तानपृच्छत्ततो राजा क्वासौ कौरववंशभृत् । पिता ज्येष्ठो गतोऽस्माकमिति बाष्पपरिप्लुतः ।
ते तमूचुस्ततो वाक्यं यमुनामवगाहितुं । पुष्पाणामुदकुम्भस्य चार्थे गत इति प्रभो ।
तैराख्यातेन मार्गेण ततस्ते जग्मुरञ्जसा । ददृशुश्चापि दूरे तान् सर्व्वानथ पदातयः ।
ततस्ते सत्वरा जग्मुः पितुर्दर्शनकाङ्क्षिणः । सहदेवस्तु वेगेन प्राधावद्यत्र सा पृथा ।
सस्वरं रुरुदे धीमान्मातुः पादावुपस्पृशन् । सा च बाष्पाकुलमुखी ददर्श दयितं सुतं ।
बाहुभ्यां सम्परिष्वज्य समुन्नाम्य च पुत्रकं । गान्धार्य्याः कथयामास सहदेवमुपस्थितं ।
अनन्तरञ्च राजानं भीमसेनमथार्ज्जुनं । नकुलञ्च पृथा दृष्ट्वा त्वरमाणोपचक्रमे ।
सा ह्यग्रे गच्छति तयोर्द्दम्पत्योर्हतपुत्रयोः । कर्षन्ती तौ ततस्ते तां दृष्ट्वा संन्यपतन् भुवि ।
राजा तान् स्वरयोगेन स्पर्शेन च महामनाः । प्रत्यभिज्ञाय मेधावी समाश्वासयत प्रभुः ।
ततस्ते बाष्पमुत्सृज्य गान्धारीसहितं नृपं । उपतस्थुर्महात्मानो मातरञ्च यथाविधि ।
सर्व्वेषान्तोयकलशान् जगृहुस्ते स्वयन्तदा । पाण्डवा लब्धसंज्ञास्ते मात्रा चाश्वासिताः पुनः ।

तथा गान्धारी नृपश्रेष्ठा सोऽवरोधजनस्तदा । पौरजानपदाश्चैव ददृशुस्तं जनाधिपं ।
निवेदयामास तदा जनस्तं नामगोत्रतः । युधिष्ठिरो नरपतिः स चैनं प्रत्यपूजयत् ।
स तैः परिवृतो मेने हर्षवाष्पाविलेक्षणः । राजात्मानं गृहगतं पुरेव गजसाह्वये ।
अभिवादितो वधूभिश्च कृष्णाद्याभिः स पार्थिवः । गान्धार्या सहितो धीमान् कुन्त्या च प्रत्यनन्दत ।
ततश्चाश्रममागच्छत् सिद्धचारणसेवितं । दिदृक्षुभिः समाकीर्णं नभस्तारागणैरिव । ६६५

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि चतुर्व्विंशोऽध्यायः । २४ ॥

॥ वैशम्पायन उवाच ॥ स तैः सह नरव्याघ्रैर्भ्रातृभिर्भरतर्षभ । राजा रुचिरपद्माक्षैरासाञ्चक्रे तदाश्रमे ।
तापसैश्च महाभागैर्नानादेशसमागतैः । द्रष्टुं कुरुपतेः पुत्रान् पाण्डवान् पृथुवक्षसः ।
तेऽब्रुवन् ज्ञातुमिच्छामः कतमोऽत्र युधिष्ठिरः । भीमार्ज्जुनौ यमौ चैव द्रौपदी च यशस्विनी ।
तानाचख्यौ तदा सूतः सर्व्वांस्तानभिनामतः । सञ्जयो द्रौपदीञ्चैव सर्व्वाश्चान्याः कुरुस्त्रियः ।

॥ सञ्जय उवाच ॥ य एष जाम्बूनदशुद्धगौरतनुर्महासिंह इव प्रवृद्धः । प्रचण्डघोणः पृथुदीर्घनेत्रस्ताम्रायताक्षः कुरुराज एषः । ६७०

अयं पुनर्म्मत्तगजेन्द्रगामी प्रतप्तचामीकरशुद्धगौरः । पृथ्वायतांसः पृथुदीर्घबाहुर्वृकोदरः पश्यत पश्यतेमं ।
यस्त्वेष पार्श्वेऽस्य महाधनुष्मान् श्यामो युवा वारणयूथपाभः । सिंहोन्नतांसो गजखेलगामी पद्मायताक्षोऽर्ज्जुन एष वीरः ।
कुन्तीसमीपे पुरुषोत्तमौ तु यमाविमौ विष्णुमहेन्द्रकल्पौ । मनुष्यलोके सकले समोऽस्ति ययोर्न रूपेण न बले न शीले ।
इयं पुनः पद्मदलायताक्षी मध्यं वयः किञ्चिदिव स्पृशन्ती । नीलोत्पलाभा सुरदेवतेव कृष्णा स्थिता मूर्त्तिमतीव लक्ष्मीः ।
अस्यास्तु पार्श्वे कनकोत्तमाभा यैषा प्रभा मूर्त्तिमतीव सौमी । मध्ये स्थिता सा भगिनी द्विजाग्र्याश्चक्रायुधस्याप्रतिमस्य तस्य । ६७५

इयञ्च जाम्बूनदशुद्धगौरी पार्थस्य भार्य्या भुजगेन्द्रकन्या । चित्राङ्गदा चैव नरेन्द्रकन्या यैषा सवर्णाऽर्द्रमधूकपुष्पैः ।
इयं स्वसा राजचमूपतेश्च प्रवृद्धनीलोत्पलदामवर्णा । पस्पर्द्ध कृष्णेन सदा नृपो यो वृकोदरस्यैष परिग्रहोऽग्र्यः ।
इयञ्च राज्ञो मगधाधिपस्य सुता जरासन्ध इति श्रुतस्य । यवीयसो माद्रवतीसुतस्य भार्य्या मता चम्पकदामगौरी ।
इन्दीवरश्यामतनुः स्थिता तु यैषा पुरासीन्न महीतले च । भार्य्या मता माद्रवतीसुतस्य ज्येष्ठस्य सेयं कमलायताक्षी ।
इयन्तु निष्टप्तसुवर्णगौरी राज्ञो विराटस्य सुता सपुत्रा । भार्य्याऽभिमन्योर्निहतो रणे यो द्रोणादिभिस्तैर्व्विरथो रथस्थैः । ६८०

एतास्तु सीमन्तशिरोरुहा याः शुक्लोत्तरीया नरराजपत्न्यः । राज्ञोऽस्य वृद्धस्य परःशताख्याः स्नुषा नृवीरा हतपुत्रनाथाः ।
एता यथामुख्यमुदाहृता वो ब्राह्मण्यभावादृजुबुद्धिसत्त्वाः । सर्व्वा भवद्भिः परिपृच्छ्यते या नरेन्द्रपत्न्यः सुविशुद्धसत्त्वाः ।

॥ वैशम्पायन उवाच ॥ एवं स राजा कुरुवृद्धवर्य्यः समागतस्तैर्नरदेवपुत्रैः । पप्रच्छ सर्व्वं कुशलं तदानीं गतेषु सर्व्वेष्वथ तापसेषु ।
योधेषु चाप्याश्रममण्डलं तं मुक्त्वा निविष्टेषु विमुच्य पत्रं । स्त्रीवृद्धबाले च सुसन्निविष्टे यथार्हतस्तान् कुशलान्यपृच्छत् ।

इतिश्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ धृतराष्ट्र उवाच ॥ युधिष्ठिर महाबाहो कच्चित्त्वं कुशली ह्यसि । सहितो भ्रातृभिः सर्वैः पौरजानपदैस्तथा । ६७५
ये च त्वामनुजीवन्ति कच्चित्तेऽपि निरामयाः । सचिवा भृत्यवर्गाश्च गुरवश्चैव ते नृप ।
कच्चित्तेऽपि निरातङ्का वसन्ति विषये तव । कच्चिद्वर्तसि पौराणीं वृत्तिं राजर्षिसेवितां ।
कच्चिन्न्यायाननुच्छिद्य कोशस्तेऽभिप्रपूर्यते । अरिमध्यस्थमित्रेषु वर्तसे चानुरूपतः ।
ब्राह्मणानग्रहारैर्वा यथावदनुपश्यसि । कच्चित्ते परितुष्यन्ति शीलेन भरतर्षभ ।
शत्रवोऽपि कुतः पौरा भृत्या वा स्वजनोऽपि वा । कच्चिद्यजसि राजेन्द्र श्रद्धावान् पितृदेवताः । ६८०
अतिथींश्चान्नपानेन कच्चिदर्चसि भारत । कच्चिच्च विषये विप्राः स्वकर्मनिरतास्तव ।
क्षत्रिया वैश्यवर्गा वा शूद्रा वाऽपि कुटुम्बिनः । कच्चित् स्त्रीबालवृद्धं ते न शोचति न याचते ।
जामयः पूजिताः कच्चित्तव गेहे नरर्षभ । कच्चिद्राजर्षिवंशोऽयं त्वामासाद्य महीपतिं ।
यथोचितं महाराज यशसा नावसीदति ।
॥ वैशम्पायन उवाच ॥ इत्येवं वादिनं तं स न्यायवित् प्रत्यभाषत । कुशलप्रश्नसंयुक्तं कुशलो वाक्यकर्मणि । ६८५
॥ युधिष्ठिर उवाच ॥ कच्चित्ते वर्द्धते राजंस्तपो दमशमश्च ते । अपि मे जननी चेयं शुश्रूषुर्विगतक्लमा ।
अथास्याः सफलो राजन् वनवासो भविष्यति । इयञ्च माता ज्येष्ठा मे शीतवाताध्वकर्शिता ।
घोरेण तपसा युक्ता देवी कच्चिन्न शोचति । हतान् पुत्रान्महावीर्यान् क्षत्रधर्मपरायणान् ।
नापध्यायति वा कच्चिदस्मान् पापकृतः सदा । क्व चासौ विदुरो राजन्नैनं पश्यामहे वयं ।
सञ्जयः कुशली चायं कच्चिन्नु तपसि स्थितः । ६९०
॥ वैशम्पायन उवाच ॥ इत्युक्तः प्रत्युवाचेदं धृतराष्ट्रो जनाधिपं । कुशली विदुरः पुत्र तपो घोरं समाश्रितः ।
वायुभक्षो निराहारः कृशो धमनिसन्ततः । कदाचिद्दृश्यते विप्रैः शून्येऽस्मिन् कानने क्वचित् ।
इत्येवं ब्रुवतस्तस्य जटी वीटामुखः कृशः । दिग्वासा मलदिग्धाङ्गो वनरेणुसमुक्षितः ।
दूरादालक्षितः क्षत्ता तत्राख्यातो महीपतेः । निवर्तमानः सहसा राजन् दृष्ट्वाश्रमं प्रति ।
तमन्वधावन्नृपतिरेक एव युधिष्ठिरः । प्रविशन्तं वनं घोरं लक्ष्यालक्ष्यं क्वचित् क्वचित् । ६९५
भो भो विदुर राजाऽहं दयितस्ते युधिष्ठिरः । इति ब्रुवन्नरपतिस्तं यत्नादभ्यधावत ।
ततो विविक्त एकान्ते तस्थौ बुद्धिमतां वरः । विदुरो वृक्षमाश्रित्य कञ्चित्तत्र वनान्तरे ।
तं राजा क्षीणभूयिष्ठमाकृतीमात्रसूचितं । अभिजज्ञे महाबुद्धिं महाबुद्धिर्युधिष्ठिरः ।
युधिष्ठिरोऽहमस्मीति वाक्यमुक्त्वाऽग्रतः स्थितः । विदुरस्य श्रवे राजा तञ्च प्रत्यभिपूजयत् ।
ततः सोऽनिमिषो भूत्वा राजानं समुदैक्षत । संयोज्य विदुरस्तस्मिन् दृष्टिं दृष्ट्या समाहितः । ७००
विवेश विदुरो धीमान् गात्रैर्गात्राणि चैव ह । प्राणान् प्राणेषु च दधदिन्द्रियाणीन्द्रियेषु च ।
स योगबलमास्थाय विवेश नृपतेस्तनुं । विदुरो धर्मराजस्य तेजसा प्रज्वलन्निव ।
विदुरस्य शरीरन्तु तथैव स्तब्धलोचनं । वृक्षाश्रितं तदा राजा ददर्श गतचेतनं ।
बलवन्तं तथात्मानं मेने बहुगुणं तदा । धर्मराजो महातेजास्तच्च सस्मार पाण्डवः ।

पौराणमात्मनः सर्व्वं विद्यावान् स विभाव्यते । योगधर्म्मं महातेजा व्यासेन कथितं यथा । ७०५
धर्म्मराजश्च तत्रैनं सञ्चस्कारयिषुस्तदा । दग्धुकामोऽभवद्विद्वानथ वागभ्यभाषत ।
भो भो राजन्न दग्धव्यमेतद्विदुरसंज्ञकं । कलेवरमिहैवं ते धर्म्म एष सनातनः ।
लोकाः सान्तानिका नाम भविष्यन्त्यस्य भारत । यतिधर्म्ममवाप्तोऽसौ नैव शोच्यः परन्तप ।
इत्युक्तो धर्म्मराजः स विनिवृत्य ततः पुनः । राज्ञो वैचित्रवीर्य्यस्य तत् सर्व्वं प्रत्यवेदयत् ।
ततः स राजा द्युतिमान् स च सर्व्वो जनस्तदा । भीमसेनादयश्चैव परं विस्मयमागताः । ७१०
तच्छ्रुत्वा प्रीतिमान् राजा भूत्वा धर्म्मजमब्रवीत् । आपो मूलं फलञ्चैव ममेदं प्रतिगृह्यतां ।
यद्दयो हि नरो राजंस्तदर्य्योऽस्यातिथिः स्मृतः । इत्युक्तः स तथेत्येवं प्राह धर्म्मात्मजो नृपं ।
फलं मूलञ्च बुभुजे राज्ञा दत्तं महाभुजः । ततस्ते वृक्षमूलेषु कृतवासपरिग्रहाः ।
तां रात्रिमवसन् सर्व्वे फलमूलजलाशनाः ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ वैशम्पायन उवाच ॥ ततस्तु राजन्नेतेषामाश्रमे पुण्यकर्म्मणां । शिवा नक्षत्रसम्पन्ना सा व्यतीताऽथ शर्व्वरी । ७१५
ततस्तत्र कथाश्चासंस्तेषां धर्म्मार्थलक्षणाः । विचित्रपदसञ्चारा नानाश्रुतिभिरन्विताः ।
पाण्डवास्त्वभितो मातुर्धरण्यां सुषुपुस्तदा । उत्सृज्य सुमहार्हाणि शयनानि नराधिप ।
यदाहारोऽभवद्राजा धृतराष्ट्रो महामनाः । तदाहारा नृवीरास्ते न्यवसंस्तां निशां तदा ।
व्यतीतायान्तु शर्व्वर्य्यां कृतपौर्व्वाह्णिकक्रियः । भ्रातृभिः सहितो राजा ददर्शाश्रममण्डलं ।
सान्तःपुरपरीवारः सभृत्यः सपुरोहितः । यथासुखं यथोद्देशं धृतराष्ट्राभ्यनुज्ञया । ७२०
ददर्श तत्र वेदीश्च संप्रज्वलितपावकाः । कृताभिषेकैर्मुनिभिर्हुताग्निभिरुपस्थिताः ।
वानेयपुष्पनिकरैराज्यधूमोद्गमैरपि । ब्राह्मेण वपुषा युक्ता युक्ता मुनिगणस्य ताः ।
मृगयूथैरनुद्विग्नैस्तत्र तत्र समाश्रितैः । अशङ्कितैः पक्षिगणैः प्रगीतैरिव च प्रभो ।
केकाभिर्नीलकण्ठानां दात्यूहानाञ्च कूजितैः । कोकिलानां कुहुरवैः सुखैः श्रुतिमनोहरैः ।
प्राधीतद्विजघोषैश्च क्वचित् क्वचिदलङ्कृतं । फलमूलसमाहारैर्महद्भिश्चोपशोभितं । ७२५
ततः स राजा प्रददौ तापसार्थमुपाहृतान् । कलसान् काञ्चनान् राजंस्तथैवौडुम्बरानपि ।
अजिनानि प्रवेणीश्च स्रुक्स्रुवञ्च महीपतिः । कमण्डलूंश्च स्थालीश्च पिठराणि च भारत ।
भाजनानि च लौहानि पात्रीश्च विविधा नृप । यद्यदिच्छति यावच्च यच्चान्यदपि भाजनं ।
एवं स राजा धर्म्मात्मा परीत्याश्रममण्डलं । वसु विश्राण्य तत् सर्व्वं पुनरायान्महीपतिः ।
कृताह्निकञ्च राजानं धृतराष्ट्रं महीपतिं । ददर्शासीनमव्यग्रं गान्धारीसहितं तदा । ७३०
मातरञ्चाविदूरस्थां शिष्यवत् प्रणतां स्थितां । कुन्तीं ददर्श धर्म्मात्मा शिष्टाचारसमन्वितां ।
स तमभ्यर्च्य राजानं नाम संश्राव्य चात्मनः । निषीदेत्यभ्यनुज्ञातो वृष्यामुपविवेश ह ।
भीमसेनादयश्चैव पाण्डवा भरतर्षभ । अभिवाद्योपसंगृह्य निषेदुः पार्थिवाज्ञया ।

स तैः परिवृतो राजा शुशुभेऽतीव कौरवः । बिभ्रद्ब्राह्मीं श्रियं दीप्तां देवैरिव बृहस्पतिः ।
तथा तेषूपविष्टेषु समाजग्मुर्महर्षयः । शतयूपप्रभृतयः कुरुक्षेत्रनिवासिनः । ७३५
व्यासश्च भगवान् विप्रो देवर्षिगणसेवितः । वृतः शिष्यैर्महातेजा दर्शयामास पार्थिवं ।
ततः स राजा कौरव्यः कुन्तीपुत्रश्च वीर्य्यवान् । भीमसेनादयश्चैव प्रत्युत्थायाभ्यवादयन् ।
समागतस्ततो व्यासः शतयूपादिभिर्वृतः । धृतराष्ट्रं महीपालमास्यतामित्यभाषत ।
वरन्तु विष्टरं कार्श्यं कृष्णाजिनकुशोत्तरं । प्रतिपेदे तदा व्यासस्तदर्थमुपकल्पितं ।
ते च सर्व्वे द्विजश्रेष्ठा विष्टरेषु समन्ततः । द्वैपायनाभ्यनुज्ञाता निषेदुर्विपुलौजसः । ७४०
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
॥ वैशम्पायन उवाच ॥ ततः समुपविष्टेषु पाण्डवेषु महात्मसु । व्यासः सत्यवतीपुत्र इदं वचनमब्रवीत् ।
धृतराष्ट्र महाबाहो कच्चित्ते वर्द्धते तपः । कच्चिन्मनस्ते प्रीणाति वनवासे नराधिप ।
कच्चिद्धृदि न ते शोको राजन् पुत्रविनाशजः । कच्चिज्ज्ञानानि सर्व्वाणि सुप्रसन्नानि तेऽनघ ।
कच्चिद्बुद्धिं दृढां कृत्वा चरस्यारण्यकं विधिं । कच्चिद्वधूश्च गान्धारी न शोकेनाभिभूयते ।
महाप्राज्ञा बुद्धिमती देवी धर्म्मार्थदर्शिनी । आगमापायतत्त्वज्ञा कच्चिदेषा न शोचति । ७४५
कच्चित् कुन्ती च राजंस्त्वां शुश्रूषत्यनहङ्कृता । या परित्यज्य स्वं पुत्रं गुरुशुश्रूषणे रता ।
कच्चिद्धर्म्मसुतो राजा महात्मा सुमहामनाः । भीमार्ज्जुनयमाश्चैव कच्चिदेतेऽपि सान्त्विताः ।
कच्चिन्नन्दसि दृष्ट्वैतान् कच्चित्ते निर्म्मलं मनः । कच्चिच्च शुद्धभावोऽसि जातज्ञानो नराधिप ।
एतद्धि त्रितयं श्रेष्ठं सर्व्वभूतेषु भारत । निर्वैरता महाराज सत्यमक्रोध एव च ।
कच्चित्ते न च मोहोऽस्ति वनवासेन भारत । स्ववशे वन्यमन्नं वा उपवासोऽपि वा भवेत् । ७५०
विदितञ्चापि राजेन्द्र विदुरस्य महात्मनः । गमनं विधिनाऽनेन धर्म्मस्य सुमहात्मनः ।
माण्डव्यशापाद्धि स वै धर्म्मो विदुरतां गतः । महाबुद्धिर्महायोगी महात्मा सुमहामनाः ।
बृहस्पतिर्वा देवेषु शुक्रो वाऽप्यसुरेषु च । न तथा बुद्धिसम्पन्नो यथा स पुरुषर्षभः ।
तपोबलव्ययं कृत्वा सुचिरात् सम्भृतं तदा । माण्डव्येनर्षिणा धर्म्मो ह्यभिभूतः सनातनः ।
नियोगाद्ब्रह्मणः पूर्व्वं मया स्वेन बलेन च । वैचित्रवीर्य्यके क्षेत्रे जातः स सुमहामतिः । ७५५
भ्राता तव महाराज देवदेवः सनातनः । धारणान्मनसा ध्यानाद्यं धर्म्मं कवयो विदुः ।
सत्येन संवर्द्धयति यो दमेन शमेन च । अहिंसया च दानेन तप्यमानः सनातनः ।
येन योगबलाज्जातः कुरुराजो युधिष्ठिरः । धर्म्म इत्येव नृपते प्राज्ञेनामितबुद्धिना ।
यथा वह्निर्यथा वायुर्यथापः पृथिवी यथा । यथाकाशं तथा धर्म्म इह चामुत्र च स्थितः ।
सर्व्वगश्चैव राजेन्द्र सर्व्वं व्याप्य चराचरं । दृश्यते देवदेवैः स सिद्धैर्निर्म्मुक्तकल्मषैः । ७६०
यो हि धर्म्मः स विदुरो विदुरो यः स पाण्डवः । स एष राजन् दृश्यस्ते पाण्डवः प्रेष्यवत् स्थितः ।
प्रविष्टः सुमहात्मानं भ्राता ते बुद्धिसत्तमः । दृष्ट्वा महात्मा कौन्तेयं महायोगबलान्वितः ।

त्वाञ्चापि श्रेयसा योक्ष्ये न चिराद्भरतर्षभ । संशयच्छेदनार्थाय प्राप्तं मां विद्धि पुत्रक ।
न कृतं यैः पुरा कैश्चित् कर्म्म लोके महर्षिभिः । आश्चर्य्यभूतं तपसः फलं तद्दर्शयामि वः ।
किमिच्छसि महीपाल मत्तः प्राप्तुमभीप्सितं । द्रष्टुं स्प्रष्टुमथ श्रोतुं तत् कर्त्ताऽस्मि तवानघ । ८६५

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि आश्रमवासपर्व्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥ समाप्तञ्चेदमाश्रमवासपर्व्व ॥

## ॥ अथ पुत्रदर्शनपर्व्व ॥

॥ जनमेजय उवाच ॥ वनवासं गते विप्र धृतराष्ट्रे महीपतौ । सभार्य्ये नृपशार्दूले वध्वा कुन्त्या समन्विते ।
विदुरे चापि संसिद्धे धर्म्मराजं व्यपाश्रिते । वसत्सु पाण्डुपुत्रेषु सर्व्वेष्वाश्रममण्डले ।
यत्तदाश्चर्य्यमिति वै करिष्यामीत्युवाच ह । व्यासः परमतेजस्वी महर्षिस्तद्वदस्व मे ।
वनवासे च कौरव्यः कियन्तं कालमच्युतः । युधिष्ठिरो नरपतिर्न्यवसत् सजनस्तदा ।
किमाहाराश्च ते तत्र ससैन्या न्यवसन् प्रभो । सान्तःपुरा महात्मान इति तद्ब्रूहि मेऽनघ । ८७०
॥ वैशम्पायन उवाच ॥ तेऽनुज्ञातास्तदा राजन् कुरुराजेन पाण्डवाः । विविधान्यन्नपानानि विश्राम्यानुभवन्ति ते ।
मासमेकं विजह्रुस्ते ससैन्यान्तःपुरा वने । अथ तत्रागमद्व्यासो यथोक्तं ते मयाऽनघ ।
तथा च तेषां सर्व्वेषां कथाभिर्नृपसन्निधौ । व्यासमन्वासतां राजन्नाजग्मुर्मुनयोऽपरे ।
नारदः पर्व्वतश्चैव देवलश्च महातपाः । विश्वावसुस्तुम्बुरुश्च चित्रसेनश्च भारत ।
तेषामपि यथान्यायं पूजाञ्चक्रे महातपाः । धृतराष्ट्राभ्यनुज्ञातः कुरुराजो युधिष्ठिरः । ८७५
निषेदुस्ते ततः सर्व्वे पूजां प्राप्य युधिष्ठिरात् । आसनेष्वथ पुण्येषु वर्हिष्केषु वरेषु च ।
तेषु तत्रोपविष्टेषु स तु राजा महामतिः । पाण्डुपुत्रैः परिवृतो निषसाद कुरूद्वह ।
गान्धारी चैव कुन्ती च द्रौपदी सात्वती तथा । स्त्रियश्चान्यास्तथाऽन्याभिः सहोपविविशुस्ततः ।
तेषां तत्र कथा दिव्या धर्म्मिष्ठाश्चाभवन्नृप । ऋषीणाञ्च पुराणानां देवासुरविमिश्रिताः ।
ततः कथान्ते व्यासस्तं प्रज्ञाचक्षुषमीश्वरं । प्रोवाच वदतां श्रेष्ठः पुनरेव स तद्वचः । ८८०
प्रीयमाणो महातेजाः सर्व्ववेदविदाम्वरः । विदितं मम राजेन्द्र यत्ते हृदि विवक्षितं ।
दह्यमानस्य शोकेन तव पुत्रकृतेन वै । गान्धार्य्याश्चैव यद्दुःखं हृदि तिष्ठति नित्यदा ।
कुन्त्याश्च यन्महाराज द्रौपद्याश्च हृदि स्थितं । यच्च धारयते तीव्रं दुःखं पुत्रविनाशजं ।
सुभद्रा कृष्णभगिनी तच्चापि विदितं मम । श्रुत्वा समागममिदं सर्व्वेषां वस्ततो नृप ।
संशयच्छेदनार्थाय प्राप्तः कौरवनन्दन । इमे च देवगन्धर्व्वाः सर्व्वे चेमे महर्षयः । ८८५
पश्यन्तु तपसो वीर्य्यमद्य मे चिरसम्भृतं । तदुच्यतां महाराज कं कामं प्रददामि ते ।
प्रवणोऽस्मि वरं दातुं पश्य मे तपसः फलं । एवमुक्तः स राजेन्द्रो व्यासेनामितबुद्धिना ।
मुहूर्त्तमिव सञ्चिन्त्य वचनायोपचक्रमे । धन्योऽस्म्यनुगृहीतश्च सफलं जीवितञ्च मे ।
यन्मे समागमोऽद्येह भवद्भिः सह साधुभिः । अद्य चाप्यवगच्छामि गतिमिष्टामिहात्मनः ।

ब्रह्मकल्पैर्भवद्भिर्यत् समेतोऽहं तपोधनाः। दर्शनादेव भवतां पूतोऽहं नात्र संशयः। ८००
विद्यते न भयञ्चापि परलोकान्ममानघाः। किन्तु तस्य सुदुर्बुद्धेर्मन्दस्यापनयैर्भृशं।
दूयते मे मनो नित्यं स्मरतः पुत्रगृद्धिनः। अपापाः पाण्डवा येन निकृताः पापबुद्धिना।
घातिता पृथिवी येन सहया सनरद्विपा। राजानश्च महात्मानो नानाजनपदेश्वराः।
आगम्य मम पुत्रार्थे सर्व्वे मृत्युवशं गताः। ये ते पितॄंश्च दारांश्च प्राणांश्च मनसः प्रियान्।
परित्यज्य गताः शूराः प्रेतराजनिवेशनं। का नु तेषां गतिर्ब्रह्मन् मित्रार्थे ये हता मृधे। ८०५
तथैव पुत्रपौत्राणां मम ये निहता युधि। दूयते मे मनोऽभीक्ष्णं घातयित्वा महाबलं।
भीष्मं शान्तनवं वृद्धं द्रोणञ्च द्विजसत्तमं। मम पुत्रेण मूढेन पापेन सुहृद्द्विषा।
क्षयं नीतं कुलं दीप्तं पृथिवीराज्यमिच्छता। एतत् सर्व्वमनुस्मृत्य दह्यमानो दिवानिशं।
न शान्तिमधिगच्छामि दुःखशोकसमाहतः। इति मे चिन्तयानस्य पितः शान्तिर्न विद्यते।
॥ वैशम्पायन उवाच ॥ ॥ तच्छ्रुत्वा विविधं तस्य राजर्षेः परिदेवितं। पुनर्नवीकृतः शोको गान्धार्य्या जनमेजय, ८१०
कुन्त्या द्रुपदपुत्र्याश्च सुभद्रायास्तथैव च। तासाञ्च नरनारीणां वधूनां कौरवस्य च।
पुत्रशोकसमाविष्टा गान्धारी त्विदमब्रवीत्। श्वशुरं बद्धनयना देवी प्राञ्जलिरुत्थिता।
षोडशेमानि वर्षाणि गतानि मुनिपुङ्गव। अस्य राज्ञो हतान् पुत्रान् शोचतो न शमो विभो।
पुत्रशोकसमाविष्टो निश्वसन् ह्येष भूमिपः। न शेते वसतीः सर्व्वा धृतराष्ट्रो महामुने।
लोकानन्यान् समर्थोऽसि स्रष्टुं सर्व्वं तपोबलात्। किमु लोकान्तरगतान् राज्ञो दर्शयितुं सुतान्। ८१५
इयञ्च द्रौपदी कृष्णा हतज्ञातिसुता भृशं। शोचत्यतीव सर्व्वासां स्नुषाणां दयिता कृशा।
तथा कृष्णस्य भगिनी सुभद्रा भद्रभाषिणी। सौभद्रवधसन्तप्ता भृशं शोचति भाविनी।
इयञ्च भूरिश्रवसो भार्य्या परमसंमता। भर्त्तृव्यसनशोकार्त्ता भृशं शोचति भाविनी।
यस्यास्तु श्वशुरो धीमान् वाह्लिकः स कुरूद्वहः। निहतः सोमदत्तश्च पित्रा सह महारणे।
श्रीमतोऽस्य महाबुद्धेः संग्रामेष्वपलायिनः। पुत्रस्य ते पुत्रशतं निहतं यद्रणाजिरे। ८२०
तस्य भार्य्याशतमिदं दुःखशोकसमाहतं। पुनः पुनर्वर्द्धयानं शोकं राज्ञो ममैव च।
तेनारम्भेण महता मामुपास्ते महामुने। ये च शूरा महात्मानः श्वशुरा मे महारथाः।
सोमदत्तप्रभृतयः का नु तेषां गतिः प्रभो। तव प्रसादाद्भगवन् विशोकोऽयं महीपतिः।
यथा स्याद्भविता चाहं कुन्ती चेयं वधूस्तव। इत्युक्तवत्यां गान्धार्य्यां कुन्ती व्रतकृशानना।
प्रच्छन्नजातं पुत्रन्तु सस्मारादित्यसन्निभं। तामृषिर्व्वरदो व्यासो दूरश्रवणदर्शनः। ८२५
अपश्यद्दुःखितां देवीं मातरं सव्यसाचिनः। तामुवाच ततो व्यासो यत्ते कार्य्यं विवक्षितं।
तद्ब्रूहि त्वं महाभागे यत्ते मनसि वर्त्तते। श्वशुराय ततः कुन्ती प्रणम्य शिरसा तदा।
उवाच वाक्यं सव्रीडा विवृण्वाना पुरातनं।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्रदर्शनपर्व्वणि ऊनविंशोऽध्यायः ॥ २८ ॥

॥ कुन्त्युवाच ॥ भगवन् श्वशुरो मेऽसि दैवतस्यापि दैवतं । स मे देवातिदेवस्त्वं शृणु सत्यां गिरं मम ।
तपस्वी कोपनो विप्रो दुर्व्वासा नाम मे पितुः । भिक्षामुपागतो भोक्तुं तमहं पर्यतोषयं । ८९०
शौचेन त्वागसस्त्यागैः शुद्धेन मनसा तथा । कोपस्थानेष्वपि महत्स्वकुप्यं न कदाचन ।
सुप्रीतो वरदो मेऽभूत् कृतकृत्यो महामुनिः । अवश्यन्ते ग्रहीतव्यमिति मां सोऽब्रवीद्वचः ।
ततः शापभयाद्विप्रमवोचं पुनरेव तं । एवमस्त्विति च प्राह पुनरेव स मे द्विजः ।
धर्म्मस्य जननी भद्रे भवित्री त्वं शुभानने । वशे स्थास्यन्ति ते देवा यांस्त्वमावाहयिष्यसि ।
इत्युक्त्वाऽन्तर्हितो विप्रस्ततोऽहं विस्मिता ऽभवं । न च सर्व्वास्ववस्थासु स्मृतिर्मे विप्रणश्यति । ८९५
अथ हर्म्म्यतलस्थाऽहं रविमुद्यन्तमीक्षती । संस्मृत्य तदृषेर्व्वाक्यं स्पृहयन्ती दिवाकरं ।
स्थिताऽहं बालभावेन तत्र दोषमबुध्यती । अथ देवः सहस्रांशुर्मत्समीपगतो ऽभवत् ।
द्विधा कृत्वात्मनो देहं भूमौ च गगनेऽपि च । ततापि लोकानेकेन द्वितीयेनागमत् स मां ।
स मामुवाच वेपन्तीं वरं मत्तो वृणीष्व ह । गम्यतामिति तञ्चाहं प्रणम्य शिरसा ऽवदं ।
स मामुवाच तिग्मांशुर्वृथाह्वानं न मे क्षमं । धक्ष्यामि त्वाञ्च विप्रञ्च येन दत्तो वरस्तव । ९००
तमहं रक्षती विप्रं शापादनपकारिणं । पुत्रो मे त्वत्समो देव भवेदिति ततोऽब्रुवं ।
ततो मां तेजसाविश्य मोहयित्वा च भानुमान् । उवाच भविता पुत्रस्तवेत्यभ्यगमद्दिवं ।
ततोऽहमन्तर्भवने पितुर्वृत्तान्तरक्षिणी । गूढोत्पन्नं सुतं बालं जले कर्णमवासृजं ।
नूनं तस्यैव देवस्य प्रसादात् पुनरेव तु । कन्याऽहमभवं विप्र यथा प्राह स मामृषिः ।
स मया मूढया पुत्रो ज्ञायमानोऽप्युपेक्षितः । तन्मां दहति विप्रर्षे यथा सुविदितं तव । ९०५
यदि पापमपापं वा तदेतद्विवृतं मया । तं द्रष्टुमिच्छां भगवन् व्यपनेतुं त्वमर्हसि ।
यच्चास्य राज्ञो विदितं हृदिस्थं भवतोऽनघ । तच्चायं लभतां काममद्यैव मुनिसत्तम ।
इत्युक्तः प्रत्युवाचेदं व्यासो वेदविदां वरः । साधु सर्व्वमिदं भाव्यमेवमेतद्यथात्थ मां ।
अपराधश्च ते नास्ति कन्याभावं गता ह्यसि । देवाश्चैश्वर्य्यवन्तो वै शरीराण्याविशन्ति वै ।
सन्ति देवनिकायाश्च सङ्कल्पाज्जनयन्ति ये । वाचा दृष्ट्या तथा स्पर्शात् संघर्षेणेति पञ्चधा । ९१०
मनुष्यधर्म्मो वर्त्तन्यात्र मोहो न विद्यते । इति कुन्ति विजानीहि व्येतु ते मानसो ज्वरः ।
सर्व्वं बलवतां पथ्यं सर्व्वं बलवतां शुचि । सर्व्वं बलवतां धर्म्मः सर्व्वं बलवतां स्वकं ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्रदर्शनपर्व्वणि त्रिंशत्तमोऽध्यायः ॥ ३० ॥

॥ व्यास उवाच ॥ भद्रे द्रक्ष्यसि गान्धारि पुत्रान् भ्रातॄन् सखींस्तथा । वधूश्च पतिभिः सार्द्धं निशि सुप्तोत्थितानिव ।
कर्णं द्रक्ष्यति कुन्ती च सौभद्रञ्चापि यादवी । द्रौपदी पञ्च पुत्रांश्च पितॄन् भ्रातॄंस्तथैव च ।
पूर्व्वमेवैष हृदये व्यवसायोऽभवन्मम । यदाऽस्मि चोदितो राज्ञा भवत्या पृथयैव च । ९१५
न ते शोच्या महात्मानः सर्व्व एव नरर्षभाः । क्षत्रधर्म्मपराः सन्तस्तथा हि निधनं गताः ।
भवितव्यमवश्यन्तत् सुरकार्य्यमनिन्दिते । अवतेरुस्ततः सर्व्वे देवभागा महीतलं ।

गन्धर्व्वाप्सरसश्चैव पिशाचा गुह्यराक्षसाः । तथा पुण्यजनाश्चैव सिद्धा देवर्षयोऽपि च ।
देवाश्च दानवाश्चैव तथा देवर्षयोऽमलाः । तच ते निधनं प्राप्ताः कुरुक्षेत्रे रणाजिरे ।
गन्धर्व्वराजो यो धीमान् धृतराष्ट्र इति श्रुतः । स एव मानुषे लोके धृतराष्ट्रः पतिस्तव । ८५०
पाण्डुं मरुद्गणाद्विद्धि विशिष्टतममच्युतं । धर्म्मस्यांशोऽभवत् क्षत्ता राजा चैव युधिष्ठिरः ।
कलिं दुर्य्योधनं विद्धि शकुनिं द्वापरन्तथा । दुःशासनादीन् विद्धि त्वं राक्षसान् शुभदर्शने ।
मरुद्गणाद्भीमसेनं बलवन्तमरिन्दमं । विद्धि त्वन्तु नरमृषिमिमं पार्थं धनञ्जयं ।
नारायणं हृषीकेशमश्विनौ यमजौ तथा । द्विधा कृत्वात्मनो देहमादित्यं तपताम्बरं ।
लोकांश्च तापयानं वै विद्धि कर्णञ्च शोभने । यः स वै पार्थ उद्भूतः संघर्षजननस्तथा । ८५५
यश्च पाण्डवदायादो हतः षड्भिर्महारथैः । स सोम इह सौभद्रो योगादेवाभवद्द्विधा ।
द्रौपद्या सह संभूतं धृष्टद्युम्नञ्च पावकात् । अग्नेर्भागं शुभं विद्धि राक्षसन्तु शिखण्डिनं ।
द्रोणं वृहस्पतेर्भागं विद्धि द्रौणिञ्च रुद्रजं । भीष्मञ्च विद्धि गाङ्गेयं वसुं मानुषतां गतं ।
एवमेते महाप्राज्ञे देवा मानुष्यमेत्य हि । ततः पुनर्गताः स्वर्गं कृते कर्म्मणि शोभने ।
यच्च वै हृदि सर्व्वेषां दुःखमेतच्चिरं स्थितं । तदद्य व्यपनेष्यामि परलोककृताद्भयात् । ८६०
सर्व्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति । तत्र द्रक्ष्यथ तान् सर्व्वान् ये हताऽस्मिन् रणाजिरे ।
॥ वैशम्पायन उवाच ॥ इति व्यासस्य वचनं श्रुत्वा सर्व्वो जनस्तदा । महता सिंहनादेन गङ्गामभिमुखो ययौ ।
धृतराष्ट्रश्च सामात्यः प्रययौ सह पाण्डवैः । सहितो मुनिशार्दूलैर्गन्धर्व्वैश्च समागतैः ।
ततो गङ्गां समासाद्य क्रमेण स जनार्णवः । निवासमकरोत् सर्व्वो यथाप्रीति यथासुखं ।
राजा च पाण्डवैः सार्द्धमिष्टे देशे महामनाः । निवासमकरोद्धीमान् सस्त्रीवृद्धपुरःसरः । ८६५
जगाम तदहश्चापि तेषां वर्षशतं यथा । निशां प्रतीक्षमाणानां दिदृक्षूणां मृतान्नृपान् ।
अथ पुण्यं गिरिवरमस्तमभ्यगमद्रविः । ततः कृताभिषेकास्ते नैशं कर्म्म समाचरन् ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्रदर्शनपर्व्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ वैशम्पायन उवाच ॥ ततो निशायां प्राप्तायां कृतसायाह्निकक्रियाः । व्यासमभ्यगमन् सर्व्वे ये तत्रासन् समागताः ।
धृतराष्ट्रस्तु धर्म्मात्मा पाण्डवैः सहितस्तदा । शुचिरेकमनाः सार्द्धमृषिभिस्तैरुपाविशत् ।
गान्धार्य्या सह नार्य्यस्तु सहिताः समुपाविशन् । पौरजानपदश्चापि जनः सर्व्वो यथावयः । ८७०
ततो व्यासो महातेजाः पुण्यं भागीरथीजलं । अवगाह्याजुहावाथ सर्व्वान् लोकान्महामुनिः ।
पाण्डवानाञ्च ये योधाः कौरवाणाञ्च सर्व्वशः । राजानश्च महाभागा नानादेशनिवासिनः ।
ततः स तुमुलः शब्दो जलान्ते जनमेजय । प्रादुरासीद्यथा पूर्व्वं कुरुपाण्डवसेनयोः ।
ततस्ते पार्थिवाः सर्व्वे भीष्मद्रोणपुरोगमाः । ससैन्याः सलिलात्तस्मात् समुत्तस्थुः सहस्रशः ।
विराटद्रुपदौ चैव सहपुत्रौ ससैनिकौ । द्रौपदेयाश्च सौभद्रो राक्षसश्च घटोत्कचः । ८७५
कर्णदुर्य्योधनौ चैव शकुनिश्च महारथः । दुःशासनादयश्चैव धार्त्तराष्ट्रा महाबलाः ।

जरासन्धिर्भगदत्तो जलसन्धश्च वीर्य्यवान् । भूरिश्रवाः शलः शल्यो वृषसेनश्च सानुजः ।
लक्ष्मणो राजपुत्त्रश्च धृष्टद्युम्नस्य चात्मजः । शिखण्डिपुत्त्राः सर्व्वे च धृष्टकेतुश्च सानुजः ।
अचलो वृषकश्चैव राक्षसश्चाप्यलायुधः । बाह्लिकः सोमदत्तश्च चेकितानश्च पार्थिवः ।
एते चान्ये च बहवो बहुत्वाद्ये न कीर्त्तिताः । सर्व्वे भासुरदेहास्ते समुत्तस्थुर्ज्जलात्ततः । ८८०
यस्य वीरस्य यो वेशो यो ध्वजो यच्च वाहनं । तेन तेन व्यदृश्यन्त समुपेता नराधिपाः ।
दिव्याम्बरधराः सर्व्वे सर्व्वे भ्राजिष्णुकुण्डलाः । निर्व्वैरा निरहङ्कारा विगतक्रोधमत्सराः ।
गन्धर्व्वैरुपगीयन्तः स्तूयमानाश्च वन्दिभिः । दिव्यमाल्याम्बरधरा वृताश्चाप्सरसां गणैः ।
धृतराष्ट्रस्य च तदा दिव्यं चक्षुर्न्नराधिप । मुनिः सत्यवतीपुत्त्रः प्रीतः प्रादात्तपोबलात् ।
दिव्यज्ञानबलोपेता गान्धारी च यशस्विनी । ददर्श पुत्त्रांस्तान् सर्व्वान् ये चान्येऽपि मृधे हताः । ८८५
तदद्भुतमचिन्त्यञ्च सुमहल्लोमहर्षणं । विस्मितः स जनः सर्व्वो ददर्शानिमिषेक्षणः ।
तदुत्सवमहोदग्रं हृष्टनारीनराकुलं । आश्चर्य्यभूतं ददृशे चित्रं पटगतं यथा ।
धृतराष्ट्रस्तु तान् सर्व्वान् पश्यन् दिव्येन चक्षुषा । मुमुदे भरतश्रेष्ठ प्रसादात्तस्य वै मुनेः ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्त्रदर्शनपर्व्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ वैशम्पायन उवाच ॥ ततस्ते भरतश्रेष्ठाः समाजग्मुः परस्परं । विगतक्रोधमात्सर्य्याः सर्व्वे विगतकल्मषाः ।
विधिं परममास्थाय ब्रह्मर्षिविहितं शुभं । संहृष्टमनसः सर्व्वे देवलोक इवामराः । ८९०
पुत्त्रः पित्रा च मात्रा च भार्य्याश्च पतिभिः सह । भ्राता भ्रात्रा सखा चैव सख्या राजन् समागताः ।
पाण्डवास्तु महेष्वासं कर्णं सौभद्रमेव च । संप्रहर्षात् समाजग्मुर्द्रौपदेयांश्च सर्व्वशः ।
ततस्ते प्रीयमाणा वै कर्णेन सह पाण्डवाः । समेत्य पृथिवीपाल सौहृदे च स्थिताऽभवन् ।
परस्परं समागम्य योधास्ते भरतर्षभ । मुनेः प्रसादात्ते ह्येवं क्षत्त्रिया नष्टमन्यवः ।
असौहृदं परित्यज्य सौहृदे पर्य्यवस्थिताः । एवं समागताः सर्व्वे कुरुभिर्ब्बान्धवैः सह । ८९५
पुत्त्रैश्च पुरुषव्याघ्राः कुरवोऽन्ये च पार्थिवाः । तां रात्रिमखिलामेवं विहृत्य प्रीतमानसाः ।
मेनिरे परितोषेण नृपाः स्वर्गसदो यथा । नात्र शोको भयं त्रासो नारतिर्न्नायशोऽभवत् ।
परस्परं समागम्य योधानां भरतर्षभ । समागतास्ताः पितृभिर्भ्रातृभिः पतिभिः सुतैः ।
मुदं परमिकां प्राप्य नार्य्यो दुःखमथात्यजन् । एकां रात्रिं विहृत्यैव ते वीरास्ताश्च योषितः ।
आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतं । ततो विसर्ज्जयामास लोकांस्तान् मुनिपुङ्गवः । ९००
क्षणेनान्तर्हिताश्चैव प्रेक्षतामेव तेऽभवन् । अवगाह्य महात्मानः पुण्यां भागीरथीं नदीं ।
सरथाः सध्वजाश्चैव स्वानि वेश्मानि भेजिरे । देवलोकं ययुः केचित् केचिद्ब्रह्मसदस्तथा ।
केचिच्च वारुणं लोकं केचित् कौवेरमाप्नुवन् । ततो वैवस्वतं लोकं केचिच्चैवाप्नुवन्नृपाः ।
राक्षसानां पिशाचानां केचिच्चाप्युत्तरान् कुरून् । विचित्रगतयश्चान्ये यानवाप्यामरैः सह ।
आजग्मुस्ते महात्मानः सवाहाः सपदानुगाः । गतेषु तेषु सर्व्वेषु सलिलस्थो महामुनिः । ९०५

धर्मशीलो महातेजाः कुरूणां हितकृत्तथा । ततः प्रोवाच ताः सर्वाः क्षत्रिया नितम्बिनीः ।

या याः पतिकृतांल्लोकानिच्छन्ति परमस्त्रियः । ता जाह्नवीजलं क्षिप्रमवगाहन्त्वतन्द्रिताः ।

ततस्तस्य वचः श्रुत्वा श्रद्दधाना वराङ्गनाः । श्वशुरं समनुज्ञाप्य विविशुर्जाह्नवीजलं ।

विमुक्ता मानुषैर्देहैस्ततस्ता भर्तृभिः सह । समाजग्मुस्तदा साध्व्यः सर्वा एव विशाम्पते ।

एवं क्रमेण सर्वास्ताः शीलवत्यः पतिव्रताः । प्रविश्य क्षत्रिया मुक्ता जग्मुर्भर्तृसलोकतां । ८१०

दिव्यरूपसमायुक्ता दिव्याभरणभूषिताः । दिव्यमाल्याम्बरधरा यथासां पतयस्तथा ।

ताः शीलगुणसम्पन्ना विमानस्था गतक्लमाः । सर्वाः सर्वगुणोपेताः स्वस्थानं प्रतिपेदिरे ।

यस्य यस्य तु यः कामस्तस्मिन् काले बभूव ह । तं तं विसृष्टवान् व्यासो वरदो धर्मवत्सलः ।

तच्छ्रुत्वा नरदेवानां पुनरागमनं नराः । जहृषुर्मुदिताश्चासन्नानादेशगता अपि ।

प्रियैः समागमन्तेषां यः सम्यक् शृणुयान्नरः । प्रियाणि लभते नित्यमिह च प्रेत्य चैव च । ८१५

इष्टबान्धवसंयोगमनायासमनामयं । य एतत् श्रावयेद्विद्वान् विदुषो धर्मवित्तमः ।

स यशः प्राप्नुयाल्लोके परत्र च शुभां गतिं । स्वाध्याययुक्ता मनुजास्तपोयुक्ताश्च भारत ।

साध्वाचारा दमोपेता दाननिर्धूतकल्मषाः । ऋजवः शुचयः शान्ता हिंसानृतविवर्जिताः ।

आस्तिकाः श्रद्दधानाश्च धृतिमन्तश्च मानवाः । श्रुत्वाश्चर्यमिदं पर्व ह्यवाप्स्यन्ति परां गतिं ।

इति श्रीमहाभारते आश्रमवासिके पर्वणि पुत्रदर्शनपर्वणि स्त्रीणां पतिसमागमे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ सौतिरुवाच ॥ एतच्छ्रुत्वा नृपो विद्वान् हृष्टोऽभूज्जनमेजयः । पितामहानां सर्वेषां गमनागमनं तदा । ८२०

अब्रवीच्च मुदा युक्तः पुनरागमनं प्रति । कथं नु त्यक्तदेहानां पुनस्तद्रूपदर्शनं ।

इत्युक्तः स द्विजश्रेष्ठो व्यासशिष्यः प्रतापवान् । प्रोवाच वदतां श्रेष्ठस्तं नृपं जनमेजयं ।

॥ वैशम्पायन उवाच ॥ अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः । कर्मजानि शरीराणि तथैवाकृतयो नृप ।

महाभूतानि नित्यानि भूताधिपतिसंश्रयात् । तेषाञ्च नित्यं संवासो न विनाशो वियुज्यतां ।

अनायासकृतं कर्म सत्यश्रेष्ठः फलागमः । आत्मा चैभिः समायुक्तः सुखदुःखमुपाश्नुते । ८२५

अविनाश्यस्तथा युक्तः क्षेत्रज्ञ इति निश्चयः । भूतानामात्मको भावो यथासौ न वियुज्यते ।

यावन्न क्षीयते कर्म तावत्तस्य स्वरूपता । संक्षीणकर्मा नरो लोके रूपान्यत्वं नियच्छति ।

नानाभावास्तथैकत्वं शरीरं प्राप्य संहताः । भवन्ति ते तथा नित्याः पृथग्भावं विजानतां ।

अश्वमेधे श्रुतिश्चेयमश्वसंज्ञपनं प्रति । लोकान्तरगता नित्यं प्राणा नित्यं शरीरिणां ।

अहं हितं वदाम्येतत् प्रियञ्चेत्तव पार्थिव । देवयाना हि पन्थानः श्रुतास्ते यज्ञसंस्तरे । ८३०

सुकृतो यत्र यज्ञस्ते तत्र देवा हितास्तव । यदा समन्विता देवाः पशूनां गमनेश्वराः ।

गतिमन्तश्च तेनेष्टा नान्ये नित्या भवन्त्युत । नित्येऽस्मिन् पञ्चके वर्गे नित्ये चात्मनि पूरुषः ।

अस्य नानासमायोगं यः पश्यति वृथामतिः । वियोगे शोचतेऽत्यर्थं स बाल इति मे मतिः ।

वियोगे दोषदर्शी यः संयोगं परिवर्जयेत् । असङ्गे सङ्गमो नास्ति दुःखं भुवि वियोगजं ।

परापरज्ञस्तपरो नाभिमानादुदीरितः । अपरज्ञः परां बुद्धिं ज्ञात्वा मोक्षाद्विमुच्यते । ९३५

अदर्शनादपि ततः पुनश्चादर्शनं गतः । नाहं तं वेद्मि नासौ मां न च मेऽस्ति विरागता ।

येन येन शरीरेण करोत्ययमनीश्वरः । तेन तेन शरीरेण तदवश्यमुपाश्नुते ।

मानसं मनसाप्नोति शारीरञ्च शरीरवान् ।

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्रदर्शनपर्व्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ वैशम्पायन उवाच ॥ अदृष्ट्वा तु नृपः पुत्रान् दर्शनं प्रतिलब्धवान् । ऋषेः प्रसादात् पुत्राणां स्वरूपाणां कुरूद्वह ।

स राजा राजधर्म्मांश्च ब्रह्मोपनिषदन्तदा । अवाप्तवान्नरश्रेष्ठो बुद्धिनिश्चयमेव च । ९४०

विदुरश्च महाप्राज्ञो ययौ सिद्धिं तपोबलात् । धृतराष्ट्रः समासाद्य व्यासञ्चैव तपस्विनं ।

॥ जनमेजय उवाच ॥ ममापि वरदो व्यासो दर्शयेत् पितरं यदि । तद्रूपवेशवयसं श्रद्दध्यां सर्व्वमेव ते ।

प्रियं मे स्यात् कृतार्थश्च स्यामहं कृतनिश्चयः । प्रसादादृषिमुख्यस्य मम कामः समृध्यतां ।

॥ सौतिरुवाच ॥ इत्युक्तवचने तस्मिन्नृपे व्यासः प्रतापवान् । प्रसादमकरोद्धीमानानयच्च परिक्षितं ।

ततस्तद्रूपवयसमागतं नृपतिं दिवः । श्रीमन्तं पितरं राजा ददर्श जनमेजयः । ९४५

शमीकञ्च महात्मानं पुत्रन्तञ्चास्य शृङ्गिणं । अमात्या ये बभूवुश्च राज्ञस्तांश्च ददर्श ह ।

ततः सोऽवभृथे राजा मुदितो जनमेजयः । पितरं स्नापयामास स्वयं सस्नौ च पार्थिवः ।

स्नात्वा स नृपतिर्विप्रमास्तीकमिदमब्रवीत् । यायावरकुलोत्पन्नं जरत्कारुसुतं तदा ।

आस्तीक विविधाश्चर्य्यो यज्ञोऽयमिति मे मतिः । यदद्यायं पिता प्राप्तो मम शोकप्रणाशनः ।

॥ आस्तीक उवाच ॥ ऋषिर्द्वैपायनो यत्र पुराणस्तपसो निधिः । यज्ञे कुरुकुलश्रेष्ठ तस्य लोकावुभौ जितौ । ९५०

श्रुतं विचित्रमाख्यानं त्वया पाण्डवनन्दन । सर्पाश्च भस्मसान्नीता गताश्च पदवीं पितुः ।

कथञ्चित्तक्षको मुक्तः सत्यत्वात्तव पार्थिव । ऋषयः पूजिताः सर्व्वे गतिर्दृष्टा महात्मनः ।

प्राप्तः सुविपुलो धर्म्मः श्रुत्वा पापविनाशनं । विमुक्तो हृदयग्रन्थिरुदारजनदर्शनात् ।

ये च पक्षधरा धर्म्मे सद्वृत्तरुचयश्च ये । यान् दृष्ट्वा हीयते पापं तेभ्यः कार्य्या नमस्क्रिया ।

॥ सौतिरुवाच ॥ एतच्छ्रुत्वा द्विजश्रेष्ठात् स राजा जनमेजयः । पूजयामास तमृषिमनुमान्य पुनः पुनः । ९५५

पप्रच्छ तमृषिञ्चापि वैशम्पायनमच्युतं । कथावशेषं धर्म्मज्ञो वनवासस्य सत्तम ।

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्रदर्शनपर्व्वणि जनमेजयस्य पितृदर्शने पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ जनमेजय उवाच ॥ दृष्ट्वा पुत्रांस्तथा पौत्रान् सानुबन्धान् जनाधिपः । धृतराष्ट्रः किमकरोद्राजा चैव युधिष्ठिरः ।

॥ वैशम्पायन उवाच ॥ तद्दृष्ट्वा महदाश्चर्य्यं पुत्राणां दर्शनं नृपः । वीतशोकः स राजर्षिः पुनराश्रममागमत् ।

इतरस्तु जनः सर्व्वस्ते चैव परमर्षयः । प्रतिजग्मुर्य्यथाकामं धृतराष्ट्राभ्यनुज्ञया ।

पाण्डवास्तु महात्मानो लघुभूयिष्ठसैनिकाः । पुनर्ज्जग्मुर्महात्मानं सदारास्तं महीपतिं । ९६०

तमाश्रमपदं धीमान् ब्रह्मर्षिर्लोकपूजितः । मुनिः सत्यवतीपुत्रो धृतराष्ट्रमभाषत ।

धृतराष्ट्र महाबाहो शृणु कौरवनन्दन । श्रुतं ते ज्ञानवृद्धानामृषीणां पुण्यकर्म्मणां ।
ऋद्धाभिजनवृद्धानां वेदवेदाङ्गवेदिनां । धर्म्मज्ञानां पुराणज्ञा वदतां विविधाः कथाः ।
मास्म शोके मनः कार्षीर्दिष्टे न व्यथते बुधः । श्रुतं देवरहस्यं ते नारदाद्देवदर्शनात् ।
गतास्ते क्षत्रधर्म्मेण शस्त्रपूतां गतिं शुभां । यथा दृष्टास्त्वया पुत्रास्तथा कामविहारिणः । ८५
युधिष्ठिरस्त्वयं धीमान् भवन्तमनुरुध्यते । सहितो भ्रातृभिः सर्व्वैः सदारः ससुहृज्जनः ।
विसर्ज्जयैनं यात्वेष स्वराज्यमनुशासतां । मासः समधिकस्तेषामतीतो वसतां वने ।
एतद्धि नित्यं यत्नेन पदं रक्ष्यं नराधिप । बहुप्रत्यर्थिकं ह्येतद्राज्यं नाम कुरूद्वह ।
इत्युक्तः कौरवो राजा व्यासेनातुलतेजसा । युधिष्ठिरमथाहूय वाग्मी वचनमब्रवीत् ।
अजातशत्रो भद्रन्ते शृणु मे भ्रातृभिः सह । त्वत्प्रसादान्महीपाल शोको नास्मान् प्रबाधते । ९०
रमे चाहं त्वया पुत्र पुरेव गजसाह्वये । नाथेनानुगतो विद्वन् प्रियेषु परिवर्त्तिना ।
प्राप्तं पुत्रफलं त्वत्तः प्रीतिर्मे परमा त्वयि । न मे मन्युर्म्महाबाहो गम्यतां पुत्र माचिरं ।
भवन्तञ्चेह सम्प्रेक्ष्य तपो मे परिहीयते । तपोयुक्तं शरीरञ्च त्वां दृष्ट्वा धारितं मया ।
मातरौ ते तथैवेमे शीर्णपर्णकृताशने । मम तुल्यव्रते पुत्र न चिरं वर्त्तयिष्यतः ।
दुर्य्योधनप्रभृतयो दृष्टा लोकान्तरं गताः । व्यासस्य तपसो वीर्य्याद्भवतश्च समागमात् । ९५
प्रयोजनं चिरं वृत्तं जीवितस्य ममानघ । उग्रं तपः समास्थास्ये त्वमनुज्ञातुमर्हसि ।
त्वय्यद्य पिण्डः कीर्त्तिश्च कुलञ्चेदं प्रतिष्ठितं । श्वो वाद्य वा महाबाहो गम्यतां पुत्र माचिरं ।
राजनीतिः सुबहुशः श्रुता ते भरतर्षभ । सन्देष्टव्यं न पश्यामि कृतं मे भवता प्रभो ।
॥ वैशम्पायन उवाच ॥ इत्युक्तवचनन्तन्तु नृपो राजानमब्रवीत् । न मामर्हसि धर्म्मज्ञ परित्यक्तुमनागसं ।
कामं गच्छन्तु मे सर्व्वे भ्रातरोऽनुचरास्तथा । भवन्तमहमन्विष्ये मातरौ च यतव्रतः । १००
तमुवाचाथ गान्धारी मैवं पुत्र शृणुष्व च । त्वय्यधीनं कुरुकुलं पिण्डश्च श्वशुरस्य मे ।
गम्यतां पुत्र पर्य्याप्तमेतावत् पूजिता वयं । राजा यदाह तत् कार्य्यं त्वया पुत्र पितुर्व्वचः ।
॥ वैशम्पायन उवाच ॥ इत्युक्तः स तु गान्धार्य्या कुन्तीमिदमभाषत । स्नेहवाष्पाकुले नेत्रे प्रमृज्य रुदतीं वचः ।
विसर्ज्जयति मां राजा गान्धारी च यशस्विनी । भवत्यां बद्धचित्तस्तु कथं यास्यामि दुःखितः ।
न चोत्सहे तपोविघ्नं कर्त्तुं ते धर्म्मचारिणि । तपसो हि परं नास्ति तपसा विन्दते महत् । १०५
ममापि न तथा राज्ञि राज्ये बुद्धिर्यथा पुरा । तपस्येवानुरक्तं मे मनः सर्व्वात्मना तथा ।
शून्येयञ्च मही कृत्स्ना न मे प्रीतिकरी शुभे । बान्धवा नः परिक्षीणा बलं नो न यथा पुरा ।
पाञ्चालाः सुभृशं क्षीणाः कथामात्रावशेषिताः । न तेषां कुलकर्त्तारं कञ्चित् पश्याम्यहं शुभे ।
सर्व्वे हि भस्मसान्नीतास्ते द्रोणेन रणाजिरे । अवशिष्टाश्च निहता द्रोणपुत्रेण वै निशि ।
चेदयश्चैव मत्स्याश्च दृष्टपूर्व्वास्तथैव नः । केवलं वृष्णिचक्रञ्च वासुदेवपरिग्रहात् । ११०
यद्दृष्ट्वा स्थातुमिच्छामि धर्म्मार्थं नार्थहेतुतः । शिवेन पश्य नः सर्व्वान् दुर्लभं तव दर्शनं ।

अविशङ्कश्च राजा वि तीर्थं चारयन्ते नवः । हतपुत्रो महाबाहुः कष्टंवो पृथ्वीपतिः ।
युधिष्ठिरमुवाचेदं वाष्पव्याकुललोचनः । नोत्सहेऽहं परित्यक्तुं मातरं भरतर्षभ ।
प्रतियातु भवान् क्षिप्रं तपश्चर्य्यार्थं स्थितो । इहैव योजयिष्यामि तपसेदं कलेवरं ।
पादशुश्रूषणे रक्ता राज्ञो गान्धार्य्यास्तथाऽनघाः । तमुवाच ततः कुन्ती परिष्वज्य महाभुजं । ९९५
गम्यतां पुत्र मैवं त्वं वोचः कुरु वचो मम । आगमा वः शिवाः सन्तु स्वस्था भवत पुत्रकाः ।
उपरोधो भवेदेवमस्माकं तपसः कृते । त्वत्स्नेहपाशबद्धा च हीयेयं तपसः परात् ।
तस्मात् पुत्रक गच्छ त्वं शिष्टमल्पञ्च नः प्रभो । एवं संस्तम्भितं वाक्यैः कुन्त्या बहुविधैर्मनः ।
सहदेवस्य राजेन्द्र राज्ञश्चैव विशेषतः । ते मात्रा समनुज्ञाता राज्ञा च मुनिपुङ्गवाः ।
अभिवाद्य कुरुश्रेष्ठमामन्त्रयितुमारभन् । १०००
॥ युधिष्ठिर उवाच ॥ राज्यं प्रति गमिष्यामः शिवेन प्रतिनन्दिताः । अनुज्ञातास्त्वया राजन् गमिष्यामो विकल्मषाः ।
एवमुक्तः स राजर्षिर्धर्मराज्ञा महात्मना । अनुजज्ञे स कौरव्यमभिनन्द्य युधिष्ठिरं ।
भीमञ्च बलिनां श्रेष्ठं सान्त्वयामास पार्थिवः । स चास्य सम्यङ्मेधावी प्रत्यपद्यत वीर्य्यवान् ।
अर्ज्जुनञ्च समाश्लिष्य यमौ च पुरुषर्षभौ । अनुजज्ञे स कौरव्यः परिष्वज्याभिनन्द्य च ।
गान्धार्य्या चाभ्यनुज्ञाताः कृतपादाभिवादनाः । जनन्या समुपाघ्राताः परिष्वक्तास्त ते नृपं । १००५
चक्रुः प्रदक्षिणं सर्व्वे वत्सा इव निवारणे । पुनः पुनर्निरीक्षन्तः प्रचक्रुस्ते प्रदक्षिणं ।
द्रौपदीप्रमुखाश्चैव सर्व्वाः कौरवयोषितः । न्यायतः श्वशुरे वृत्तिं प्रयुज्य प्रययुस्ततः ।
श्वश्रूभ्यां समनुज्ञाताः परिष्वज्याभिनन्दिताः । सन्दिष्टाश्चेतिकर्त्तव्यं प्रययुर्भर्तृभिः सह ।
ततः प्रजज्ञे निनदः सूतानां युज्यतामिति । उष्ट्राणां क्रोशताञ्चापि हयानां हेषतामपि ।
ततो युधिष्ठिरो राजा सदारः सहसैनिकः । नगरं हस्तिनपुरं पुनरायात् सबान्धवः । १०१०
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्रदर्शनपर्व्वणि युधिष्ठिरप्रत्यागमने षट्त्रिंशोऽध्यायः ॥ ३६ ॥
समाप्तञ्चेदं पुत्रदर्शनपर्व्व ॥

## ॥ अथ नारदागमनपर्व्व ॥

॥ वैशम्पायन उवाच ॥ द्विवर्षोपनिवृत्तेषु पाण्डवेषु यदृच्छया । देवर्षिर्नारदो राजन्नाजगाम युधिष्ठिरं ।
तमभ्यर्च्य महाबाहुः कुरुराजो युधिष्ठिरः । आसीनं परिविश्वस्तं प्रोवाच वदतां वरः ।
चिरस्य नानुपश्यामि भगवन्तमुपस्थितं । कच्चित्ते कुशलं विप्र शुभं वा प्रत्युपस्थितं ।
के देशाः परिदृष्टास्ते किञ्च कार्य्यं करोमि ते । तद्ब्रूहि द्विजमुख्यस्त्वं त्वं ह्यस्माकं परा गतिः ।
॥ नारद उवाच ॥ चिरदृष्टोऽसि मेत्येवमागतोऽहं तपोवनात् । परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप । १०१५
॥ युधिष्ठिर उवाच ॥ वदन्ति पुरुषा मेऽद्य गङ्गातीरनिवासिनः । धृतराष्ट्रं महात्मानमास्थितं परमं तपः ।
परिदृष्टस्त्वया तत्र कुशली स कुरूद्वहः । गान्धारी च पृथा चैव सूतपुत्रश्च सञ्जयः ।

यथा च नृपतिर्दग्धो दैवीं तं चेति पाण्डव । न शोचितव्यं राजेन्द्र ततः स पृथिवीपतिः ।
प्राप्तवानग्निसंयोगं गान्धारी जननी च ते ।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा च सर्व्वेषां पाण्डवानां महात्मनां । निर्य्याणं धृतराष्ट्रस्य शोकः समभवन्महान् । १०५०
अन्तःपुराणाञ्च तदा महानार्त्तस्वरोऽभवत् । पौराणाञ्च महाराज श्रुत्वा राज्ञस्तदा गतिं ।
अहो धिगिति राजा तु विक्रुश्य भृशदुःखितः । ऊर्द्ध्वबाहुः स्मरन् मातुः प्ररुरोद युधिष्ठिरः ।
भीमसेनपुरोगाश्च भ्रातरः सर्व्व एव ते । अन्तःपुरेषु च तदा सुमहान् रुदितस्वनः ।
प्रादुरासीन्महाराज पृथां श्रुत्वा तथागतां । तञ्च वृद्धं तथा दग्धं हतपुत्रं नराधिपं ।
अन्वशोचन्त ते सर्व्वे गान्धारीञ्च तपस्विनीं । तस्मिन्नुपरते शब्दे मुहूर्त्तादिव भारत । १०५५
निगृह्य बाष्पं धैर्य्येण धर्म्मराजोऽब्रवीदिदं ।

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि नारदागमनपर्व्वणि वनाग्निना धृतराष्ट्रादिदाहे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ युधिष्ठिर उवाच ॥ तथा महात्मनस्तस्य तपस्युग्रे च वर्त्ततः । अनाथस्येव च वने तिष्ठत्स्वस्मासु बन्धुषु ।
दुर्व्विज्ञेया गतिर्ब्रह्मन् पुरुषाणां मतिर्मम । यत्र वैचित्रवीर्य्योऽसौ दग्ध एवं वनाग्निना ।
यस्य पुत्रशतं श्रीमदभवद्बाहुशालिनः । नागायुतबलो राजा स दग्धो हि वनाग्निना ।
यं पुरा पर्य्यवीजन्त तालवृन्तैर्व्वरस्त्रियः । तं गृध्राः पर्य्यवीजन्त दावाग्निपरिकालितं । १०६०
सूतमागधसंघैश्च शयानो यः प्रबोध्यते । धरण्यां स नृपः शेते पापस्य मम कर्म्मभिः ।
न च शोचामि गान्धारीं हतपुत्रां यशस्विनीं । पतिलोकमनुप्राप्तां तथा भर्त्तृव्रते स्थितां ।
पृथामेव च शोचामि या पुत्त्रैश्वर्य्यमृद्धिमत् । उत्सृज्य सुमहद्दीप्तं वनवासमरोचयत् ।
धिग्राज्यमिदमस्माकं धिग्बलं धिक् पराक्रमं । क्षत्रधर्म्मञ्च धिग्यस्मान्मृता जीवामहे वयं ।
सुसूक्ष्मा किल कालस्य गतिर्द्विजवरोत्तम । यत् समुत्सृज्य राज्यं सा वनवासमरोचयत् । १०६५
युधिष्ठिरस्य जननी भीमस्य विजयस्य च । अनाथवत् कथं दग्धा इति मुह्यामि चिन्तयन् ।
वृथा सन्तर्पितो वह्निः खाण्डवे सव्यसाचिना । उपकारमजानन् स कृतघ्न इति मे मतिः ।
यत्रादहत् स भगवान्मातरं सव्यसाचिनः । कृत्वा यो ब्राह्मणच्छद्म भिक्षार्थी समुपागतः ।
धिगग्निं धिक् च पार्थस्य विश्रुतां सत्यसन्धतां । इदं कष्टतरं चान्यद्भगवन् प्रतिभाति मे ।
वृथाग्निना समायोगो यदभूत् पृथिवीपतेः । तथा तपस्विनस्तस्य राजर्षेः कौरवस्य ह । १०७०
कथमेवंविधो मृत्युः प्रशास्य पृथिवीमिमां । तिष्ठत्सु मन्त्रपूतेषु तस्याग्निषु महावने ।
तथाऽग्निना समायुक्तो निष्ठां प्राप्तः पिता मम । मन्ये पृथा वेपमाना कृशा धमनिसन्तता ।
हा तात धर्म्मराजेति समाक्रन्दन्महाभये । भीम पर्य्याप्नुहि भयादिति चैवाभिभाषती ।
समन्ततः परिक्षिप्ता माताऽसुम्मे दवाग्निना । सहदेवः प्रियस्तस्याः पुत्त्रेभ्योऽधिक एव तु ।
न चैनां मोक्षयामास वीरो माद्रवतीसुतः । तच्छ्रुत्वा रुरुदुः सर्व्वे समालिङ्ग्य परस्परं । १०७५

पाण्डवाः पञ्च दुःखार्त्ता भूतानीव युगक्षये । तेषान्तु पुरुषेन्द्राणां रुदतां रुदितस्वनः ।
प्रासादाभोगसंरुद्धो अन्वरौत्सीत् स रोदसी ।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि नारदागमनपर्व्वणि युधिष्ठिरविलापे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥
॥ नारद उवाच ॥ नासौ वृथाग्निना दग्धो यथा तत्र श्रुतं मया । वैचित्रवीर्य्यो नृपतिस्तत्ते वक्ष्यामि भारत ।
वनं प्रविशताऽनेन वायुभक्षेण धीमता । अग्नयः कारयित्वेष्टिमुत्सृष्टा इति नः श्रुतं ।
याजकास्तु ततस्तस्य तानग्नीन्निर्ज्जने वने । समुत्सृज्य यथाकामं जग्मुर्भरतसत्तम । १०८०
स विवृद्धस्तदा वह्निर्वने तस्मिन्नभूत् किल । तेन तद्वनमादीप्तमिति ते तापसाऽब्रुवन् ।
स राजा जाह्नवीकच्छे यथा ते कथितं मया । तेनाग्निना समायुक्तः स्वेनैव भरतर्षभ ।
एवमावेदयामासुर्मुनयस्ते ममानघ । ये ते भागीरथीतीरे मया दृष्टा युधिष्ठिर ।
एवं स्वेनाग्निना राजा समायुक्तो महीपते । मा शोचिथास्त्वं नृपतिं गतः स परमां गतिं ।
गुरुशुश्रूषया चैव जननी ते जनाधिप । प्राप्ता सुमहतीं सिद्धिमिति ते नात्र संशयः । १०८५
कर्त्तुमर्हसि राजेन्द्र तेषां त्वमुदकक्रियां । भ्रातृभिः सहितः सर्व्वैरेतदत्र विधीयतां ।
॥ वैशम्पायन उवाच ॥ ततः स पृथिवीपालः पाण्डवानां धुरन्धरः । निर्य्ययौ सहसोदर्य्यः सदारश्च नरर्षभः ।
पौरजानपदाश्चैव राजभक्तिपुरस्कृताः । गङ्गां प्रजग्मुरभितो वाससैकेन संवृताः ।
ततोऽवगाह्य सलिलं सर्व्वे ते नरपुङ्गवाः । युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने ।
गान्धार्य्याश्च पृथायाश्च विधिवन्नामगोत्रतः । शौचं निर्वर्त्तयन्तस्ते तत्रोषुर्नगराद्बहिः । १०९०
प्रेषयामास स नरान् विधिज्ञानाप्तकारिणः । गङ्गाद्वारं नरश्रेष्ठो यत्र दग्धोऽभवन्नृपः ।
तत्रैव तेषां कृत्यानि गङ्गाद्वारेऽन्वशात्तदा । कर्त्तव्यानीति पुरुषान् दत्तदेयान्महीपतिः ।
द्वादशेऽहनि तेभ्यः स कृतशौचो नराधिपः । ददौ श्राद्धानि विधिवद्दक्षिणावन्ति पाण्डवः ।
धृतराष्ट्रं समुद्दिश्य ददौ स पृथिवीपतिः । सुवर्णं रजतं गाश्च शय्याश्च सुमहाधनाः ।
गान्धार्य्याश्चैव तेजस्वी पृथायाश्च पृथक् पृथक् । संकीर्त्य नामनी राजा ददौ दानमनुत्तमं । १०९५
यो यदिच्छति यावच्च तावत् स लभते नरः । शयनं भोजनं यानं मणिरत्नमयो धनं ।
यानमाच्छादनं भोगान् दासीश्च समलङ्कृताः । ददौ राजा समुद्दिश्य तयोर्म्मात्रोर्महीपतिः ।
ततः स पृथिवीपालो दत्त्वा श्राद्धान्यनेकशः । प्रविवेश पुरं राजा नगरं वारणाह्वयं ।
ते चापि राजवचनात् पुरुषा ये गताऽभवन् । सङ्कल्प्य तेषां कुल्यानि पुनः प्रत्यागमंस्ततः ।
माल्यैर्गन्धैश्च विविधैरर्च्चयित्वा यथाविधि । कुल्यानि तेषां संयोज्य तदा चख्युर्महीपतेः । ११००
समाश्वास्य तु राजानं धर्म्मात्मानं युधिष्ठिरं । नारदोऽप्यगमद्राजन् परमर्षिर्यथेप्सितं ।
एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः । वनवासे तथा त्रीणि नगरे दश पञ्च च ।
हतपुत्रस्य संग्रामे दानानि ददतः सदा । ज्ञातिसम्बन्धिमित्राणां भ्रातॄणां स्वजनस्य च ।

युधिष्ठिरस्तु नृपतिर्नातिप्रीतमनास्तदा । धारयामास तद्राज्यं निहतज्ञातिबान्धवः ।
यथाश्रमवासिके तु पर्व्वण्यपि समाहितः । गन्धमाल्यादियुक्तश्च हविष्यं भोजयेद्द्विजान् । ११०५

इति श्रीमहाभारते आश्रमवासिके पर्व्वणि नारदागमनपर्व्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ समाप्तञ्चेदं आश्रमवासिकं पर्व्व ॥

अत्र व्यासोक्ताध्यायश्लोकसंख्यान्यूनाधिक्यन्तेलिपिकरप्रमादात्तद्दोष्यं ॥



# श्रीमहाभारतं

## ॥ अथ मौसलपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ।

॥ वैशम्पायन उवाच ॥ षट्त्रिंशे त्वथ संप्राप्ते वर्षे कौरवनन्दनः । ददर्श विपरीतानि निमित्तानि युधिष्ठिरः ।
ववुर्वातास्तु निर्घाता रूक्षाः शर्करवर्षिणः । अपसव्यानि शकुना मण्डलानि प्रचक्रिरे ।
प्रत्यगूहुर्महानद्यो दिशो नीहारसंवृताः । उल्काश्चाङ्गारवर्षिण्यः प्रापतन् गगनाद्भुवि ।
आदित्यो रजसा राजन् समवच्छन्नमण्डलः । विरश्मिरुदये नित्यं कबन्धैः समदृश्यत ।
परिवेषाश्च दृश्यन्ते दारुणाश्चन्द्रसूर्ययोः । त्रिवर्णाः श्यामरूक्षान्तास्तथा भस्मारुणप्रभाः । ५
एते चान्ये च बहव उत्पाता भयशंसिनः । दृश्यन्ते बहवो राजन् हृदयोद्वेगकारकाः ।
कस्यचित्त्वथ कालस्य कुरुराजो युधिष्ठिरः । शुश्राव वृष्णिचक्रस्य मौसले कदनं कृतं ।
विमुक्तं वासुदेवञ्च श्रुत्वा रामञ्च पाण्डवः । समानीयाब्रवीद्भ्रातॄन् किं करिष्याम इत्युत ।
परस्परं समासाद्य ब्रह्मदण्डबलात्कृतान् । वृष्णीन् विनष्टांस्ते श्रुत्वा व्यथिताः पाण्डवाऽभवन् ।
निधनं वासुदेवस्य समुद्रस्येव शोषणं । वीरा न श्रद्दधुस्तस्य विनाशं शार्ङ्गधन्वनः । १०
मौसलं ते समाश्रित्य दुःखशोकसमन्विताः । विषण्णा हतसङ्कल्पाः पाण्डवाः समुपाविशन् ।
॥ जनमेजय उवाच ॥ कथं विनष्टा भगवन्नन्धका वृष्णिभिः सह । पश्यतो वासुदेवस्य भोजाश्चैव महारथाः ।
॥ वैशम्पायन उवाच ॥ षट्त्रिंशेऽथ ततो वर्षे वृष्णीनामनयो महान् । अन्योन्यं मुसलैस्ते तु निजघ्नुः कालचोदिताः ।
॥ जनमेजय उवाच ॥ केनानुशप्तास्ते वीराः क्षयं वृष्ण्यन्धका गताः । भोजाश्च द्विजवर्य त्वं विस्तरेण वदस्व मे ।
॥ वैशम्पायन उवाच ॥ विश्वामित्रञ्च कण्वञ्च नारदञ्च तपोधनं । सारणप्रमुखा वीरा ददृशुर्द्वारकां गताम् । १५
ते तान् साम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा । अब्रुवन्नुपसङ्गम्य दैवदण्डनिपीडिताः ।
इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः । ऋषयः साधु जानीत किमियं जनयिष्यति ।
इत्युक्तास्ते तदा राजन् विप्रलम्भप्रधर्षिताः । प्रत्यब्रुवंस्तान्मुनयो यत्तच्छृणु नराधिप ।
वृष्ण्यन्धकविनाशाय मुसलं घोरमायसं । वासुदेवस्य दायादः साम्बोऽयं जनयिष्यति ।
येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः । उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्दनौ । २०

समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः । जरा कृष्णं महात्मानं शयानं भुवि भेत्स्यति ।
इत्यब्रुवंस्ततो राजन् प्रलब्धास्तैर्दुरात्मभिः । मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परं ।
तथोक्त्वा मुनयस्ते तु ततः केशवमभ्ययुः । अथाब्रवीत्तदा वृष्णीन् श्रुत्वैवं मधुसूदनः ।
अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् । एवमुक्त्वा हृषीकेशः प्रविवेश पुरं तदा ।
कृतान्तमन्यथा नैच्छत् कर्त्तुं स जगतः प्रभुः । श्वोभूतेऽथ ततः शाम्बो मुषलं तदसूत वै । १५
येन वृष्ण्यन्धककुले पुरुषा भस्मसात्कृताः । वृष्ण्यन्धकविनाशाय किङ्करप्रतिमं महत् ।
असूत शापजं घोरं तच्च राज्ञे न्यवेदयन् । विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् ।
तच्चूर्णं सागरे चापि प्राक्षिपन् पुरुषा नृप । अघोषयंश्च नगरे वचनादाहुकस्य ते ।
जनार्द्दनस्य रामस्य बभ्रोश्चैव महात्मनः । अद्यप्रभृति सर्व्वेषु वृष्ण्यन्धककुलेष्विह ।
सुरासवो न कर्त्तव्यः सर्व्वैर्नगरवासिभिः । यश्च नोऽविदितं कुर्य्यात् पेयं कश्चिन्नरः क्वचित् । २०
जीवन् स शूलमारोहेत् स्वयं कृत्वा सबान्धवः । ततो राजभयात् सर्व्वे नियमञ्चक्रिरे तदा ।
नराः शासनमाज्ञाय रामस्याक्लिष्टकर्म्मणः ।

इति श्रीमहाभारते मौसलपर्व्वणि मुषलोत्पत्तौ प्रथमोऽध्यायः । १ ॥

॥ वैशम्पायन उवाच ॥ एवं प्रयतमानानां वृष्णीनामन्धकैः सह । कालो गृहाणि सर्व्वेषां परिचक्राम नित्यशः ।
करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः । गृहाण्यवेक्ष्य वृष्णीनां नादृश्यत क्वचित् क्वचित् ।
तमघ्नन्त महेष्वासाः शरैः शतसहस्रशः । न चाशक्यत वेद्धुं स सर्व्वभूतात्ययस्तदा । २५
उत्पेदिरे महावाता दारुणाश्च दिने दिने । वृष्ण्यन्धकविनाशाय बहवो लोमहर्षणाः ।
विवृद्धमूषिका रथ्या विभिन्नमणिकास्तथा । केशा नखाश्च सुप्तानामद्यन्ते मूषिकैर्निशि ।
चीचीकूचीति वाशन्ति सारिका वृष्णिवेश्मसु । नोपशाम्यति शब्दश्च स दिवारात्रमेव हि ।
अन्वकुर्व्वन्नुलूकानां सारसा विरुतं तथा । अजाः शिवानां विरुतमन्वकुर्व्वत भारत ।
पाण्डुरा रक्तपादाश्च विहगाः कालचोदिताः । वृष्ण्यन्धकानां गेहेषु कपोता व्यचरंस्तदा । ३०
व्यजायन्त खरा गोषु करभाऽश्वतरीषु च । शुनीष्वपि बिडालाश्च मूषिका नकुलीषु च ।
नापत्रपन्त पापानि कुर्व्वन्तो वृष्णयस्तदा । प्राद्विषन् ब्राह्मणांश्चापि पितॄन् देवांस्तथैव च ।
गुरूंश्चाप्यवमन्यन्त न तु रामजनार्द्दनौ । पत्न्यः पतीन् व्युच्चरन्त पत्नीश्च पतयस्तथा ।
विभावसुः प्रज्वलितो वामं विपरिवर्त्तते । नीललोहितमञ्जिष्ठा विसृजन्नर्च्चिषः पृथक् ।
उदयास्तमने नित्यं पुर्य्यां तस्यां दिवाकरः । व्यदृश्यताकृतः पुंभिः कबन्धैः परिवारितः । ३५
महानसेषु सिद्धेषु संस्कृतेऽतीव भारत । आहार्य्यमाणे कृमयो व्यदृश्यन्त सहस्रशः ।
पुण्याहे वाच्यमाने तु जपत्सु च महात्मसु । अभिधावन्तः श्रूयन्ते न चादृश्यत कश्चन ।
परस्परञ्च नक्षत्रं हन्यमानं पुनः पुनः । ग्रहैरपश्यन् सर्व्वे ते नात्मनस्तु कथञ्चन ।
नदन्तं पाञ्चजन्यञ्च वृष्ण्यन्धकनिवेशने । समन्तात् प्रत्यवाशन्त रासभा दारुणस्वराः ।

एवं पश्यन् हृषीकेशः सम्प्राप्तं कालपर्य्ययं। त्रयोदश्याममावास्यां तान् दृष्ट्वा प्राब्रवीदिदं। १५
चतुर्द्दशी पञ्चदशी कृतेयं राहुणा पुनः। प्राप्ते वै भारते युद्धे प्राप्ता चाद्य क्षयाय नः।
विमृशन्नेव कालन्तं परिचिन्त्य जनार्द्दनः। मेने प्राप्तं स षट्त्रिंशं वर्षं वै केशिसूदनः।
पुत्रशोकाभिसन्तप्ता गान्धारी हतबान्धवा। यदनुव्याजहारार्त्ता तदिदं समुपागतम्।
इदञ्च तदनुप्राप्तमब्रवीद्यद्युधिष्ठिरः। पुरा व्यूढेष्वनीकेषु दृष्ट्वोत्पातान् सुदारुणान्।
इत्युक्त्वा वासुदेवस्तु चिकीर्षुः सत्यमेव तत्। आज्ञापयामास तदा तीर्थयात्रामरिन्दमः। २०
अघोषयन्त पुरुषास्तत्र केशवशासनात्। तीर्थयात्रा समुद्रे वः कार्य्येति पुरुषर्षभाः।
इति श्रीमहाभारते मौषलपर्व्वणि द्वितीयोऽध्यायः॥ २ ॥

॥ वैशम्पायन उवाच ॥ काली स्त्री पाण्डुरैर्द्दन्तैः प्रविश्य हसती निशि। स्त्रियः स्वप्नेषु मुष्णन्ती द्वारकां परिधावति।
अग्निहोत्रनिकेतेषु वास्तुमध्येषु वेश्मसु। वृष्ण्यन्धकानखादन्त स्वप्ने गृध्रा भयानकाः।
अलङ्काराश्च छत्रञ्च ध्वजाश्च कवचानि च। ह्रियमाणान्यदृश्यन्त रक्षोभिः सुभयानकैः।
तच्चाग्निदत्तं कृष्णस्य वज्रनाभमयोमयं। दिवमाचक्रमे चक्रं वृष्णीनां पश्यतां तदा। ५
युक्तं रथं दिव्यमादित्यवर्णं ह्रयान् हरन् पश्यतो दारुकस्य। ते सागरस्योपरिष्टादवर्त्तन् मनोजवाश्चतुरो वाजि मुख्याः।
तालः सुपर्णश्च महाध्वजौ तौ सुपूजितौ रामजनार्द्दनाभ्यां। उच्चैर्जह्रुरप्सरसो दिवानिशं वाचश्चोचुर्गम्यतां तीर्थयात्रा।
ततो जिगमिषन्तस्ते वृष्ण्यन्धकमहारथाः। सान्तःपुरास्तदा तीर्थयात्रामैच्छन्नरर्षभाः।
ततो भोज्यञ्च भक्ष्यञ्च पेयञ्चान्धकवृष्णयः। बहु नानाविधं चक्रुर्मद्यं मांसमनेकशः।
ततः सैनिकवर्गाश्च निर्ययुर्नगराद्बहिः। यानैरश्वैर्गजैश्चैव श्रीमन्तस्तिग्मतेजसः। १०
ततः प्रभासे न्यवसन् यथोद्दिष्टं यथागृहं। प्रभूतभक्ष्यपेयास्ते सदारा यादवास्तदा।
निविष्टांस्तान्निशम्याथ समुद्रान्ते स योगवित्। जगामामन्त्र्य तान् वीरानुद्धवोऽर्थविशारदः।
तं प्रस्थितं महात्मानमभिवाद्य कृताञ्जलिः। जानन् विनाशं वृष्णीनां नैच्छद्वारयितुं हरिः।
ततः कालपरीतास्ते वृष्ण्यन्धकमहारथाः। अपश्यन्नुद्धवं यान्तं तेजसावृत्य रोदसी।
ब्राह्मणार्थेषु यत् सिद्धमन्नं तेषां महात्मनां। तद्वानरेभ्यः प्रददुः सुरागन्धसमन्वितं। १५
ततस्तूर्य्यशताकीर्णं नटनर्त्तकसङ्कुलं। प्रावर्त्तत महापानं प्रभासे तिग्मतेजसां।
कृष्णस्य सन्निधौ रामः सहितः कृतवर्म्मणा। अपिबद्युयुधानश्च गदो बभ्रुस्तथैव च।
ततः परिषदो मध्ये युयुधानो मदोत्कटः। अब्रवीत् कृतवर्म्माणमवहस्यावमन्य च।
कः क्षत्रियो हन्यमानः सुप्तान् हन्यान्मृतानिव। न तन्मृष्यन्ति हार्द्दिक्य यादवा यत्त्वया कृतं।
इत्युक्ते युयुधानेन पूजयामास तद्वचः। प्रद्युम्नो रथिनां श्रेष्ठो हार्द्दिक्यमवमन्य च। २०
ततः परमसंक्रुद्धः कृतवर्म्मा तदब्रवीत्। निर्द्दिशन्निव सावज्ञं तदा सव्येन पाणिना।
भूरिश्रवाश्छिन्नबाहुर्युद्धे प्रायगतस्त्वया। वधेन सुनृशंसेन कथं वीरेण पातितः।

इति तस्य वचः श्रुत्वा केशवः परवीरहा । तिर्य्यक् सरोषया दृष्ट्या वीक्षाञ्चक्रे स मन्युमान् ।
मणिः स्यमन्तकश्चैव यः स सत्राजितोऽभवत् । तां कथां स्मारयामास सात्यकिर्मधुसूदनं ।
तच्छ्रुत्वा केशवस्याङ्कमगमद्रुदती तदा । सत्यभामा प्रकुपिता कोपयन्ती जनार्द्दनं । ३०
तत उत्थाय सक्रोधः सात्यकिर्वाक्यमब्रवीत् । पञ्चानां द्रौपदेयानां धृष्टद्युम्नशिखण्डिनोः ।
एष गच्छामि पदवीं सत्येन च तथा शपे । सौप्तिके ये च निहताः सुप्ता येन दुरात्मना ।
द्रोणपुत्त्रसहायेन पापेन कृतवर्म्मणा । समाप्तमायुरस्याद्य यशश्चैव सुमध्यमे ।
इत्येवमुक्त्वा खड्गेन केशवस्य समीपतः । अभिद्रुत्य शिरः क्रोधाच्चिच्छेद कृतवर्म्मणः ।
तथाऽन्यानपि निघ्नन्तं युयुधानं समन्ततः । अभ्यधावद्धृषीकेशो विनिवारयितुं तदा । ३५
एकीभूतास्ततः सर्व्वे कालपर्य्यायचोदिताः । भोजान्धका महाराज शैनेयं पर्य्यवारयन् ।
तान्दृष्ट्वा पततस्तूर्णमभिक्रुद्धाञ्जनार्द्दनः । न चुक्रोध महातेजा जानन् कालस्य पर्य्ययं ।
ते तु पानमदाविष्टाश्चोदिताः कालधर्म्मणा । युयुधानमथाभ्यघ्नन्नुच्छिष्टैर्भाजनैस्तदा ।
हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः । तदन्तरमुपाधावन्मोक्षयिष्यन् शिनेः सुतं ।
स भोजैः सह संयुक्तः सात्यकिश्चान्धकैः सह । व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ । ४०
बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः । हतं दृष्ट्वा तु शैनेयं पुत्त्रञ्च यदुनन्दनः ।
एरकाणां तदा मुष्टिं कोपाज्जग्राह केशवः । तदभून्मुषलं घोरं वज्रकल्पमयोमयं ।
जघान कृष्णस्तांस्तेन ये ये प्रमुखतोऽभवन् । ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा ।
जघ्नुरन्योन्यमाक्रन्दे मुषलैः कालचोदिताः । यस्तेषामेरकां कश्चिज्जग्राह कुपितो नृप ।
वज्रभूतेव सा राजन्नदृश्यत तदा विभो । तृणञ्च मुषलीभूतमपि तत्र व्यदृश्यत । ४५
ब्रह्मदण्डकृतं सर्व्वमिति तद्विद्धि पार्थिव । आविध्याविध्य ते राजन् प्रक्षिपन्ति स्म यत्तृणं ।
तद्वज्रभूतं मुषलं व्यदृश्यत तदा दृढं । अवधीत् पितरं पुत्त्रः पिता पुत्त्रञ्च भारत ।
मत्ताः परिपतन्ति स्म योधयन्तः परस्परं । पतङ्गा इव चाग्नौ ते निपेतुः कुकुरान्धकाः ।
नासीत् पलायने बुद्धिर्वध्यमानस्य कस्यचित् । तञ्चापश्यन्महाबाहुर्जानन् कालस्य पर्य्ययं ।
मुषलं समवष्टभ्य तस्थौ स मधुसूदनः । साम्बञ्च निहतं दृष्ट्वा चारुदेष्णञ्च माधवः । ५०
प्रद्युम्नञ्चानिरुद्धञ्च ततश्चुक्रोध माधवः । गदं वीक्ष्य शयानञ्च भृशं कोपसमन्वितः ।
स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः । तं निघ्नन्तं महातेजा बभ्रुः परपुरञ्जयः ।
दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत् । भगवन्निहताः सर्व्वे त्वया भूयिष्ठशो नराः ।
रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः ।

इति श्रीमहाभारते मौसलपर्व्वणि तृतीयोऽध्यायः ॥ ३ ॥

॥ वैशम्पायन उवाच ॥ ततो ययुर्दारुकः केशवश्च बभ्रुश्च रामस्य पदं पतन्तः । अथापश्यन् राममनन्तवीर्य्यं वृक्षे स्थितं चिन्तयानं विविक्ते । १ ॥

ततो देवैर्ऋषिभिश्चापि कृष्णः समागतस्तेजसैव राजन्। गन्धर्व्वमुख्यैरप्सरोभिर्व्वराभिः सिद्धैः साध्यैश्चानतैः पूज्यमानः ।
तं वै देवाः प्रत्यनन्दन्त राजन् मुनिश्रेष्ठा वाग्भिरानर्च्चुरीशं । तं गन्धर्व्वाश्चापि तस्थुः स्तुवन्तः प्रीत्या चैनं पुरुहूतोऽभ्य-
नन्दत् ।

इति श्रीमहाभारते मौसलपर्व्वणि चतुर्थोऽध्यायः ॥ ४ ॥

॥ वैशम्पायन उवाच ॥ दारुकोऽपि कुरून् गत्वा दृष्ट्वा पार्थान् महारथान् । आचष्ट मौसले वृष्णीनन्योन्येनोपसंहृतान् ।
श्रुत्वा विनष्टान् वार्ष्णेयान् सभोजान्धककौकुरान् । पाण्डवाः शोकसन्तप्ता वित्रस्तमनसोऽभवन् ।
ततोऽर्ज्जुनस्तानामन्त्र्य केशवस्य प्रियः सखा । प्रययौ मातुलं द्रष्टुं नेदमस्तीति चाब्रवीत् । १३५
स वृष्णिनिलयं गत्वा दारुकेण सह प्रभो । ददर्श द्वारकां वीरो मृतनाथामिव स्त्रियं ।
याः स्म ता लोकनाथेन नाथवत्यः पुराऽभवन् । तास्त्वनाथास्तदा नाथं पार्थं दृष्ट्वा विचुक्रुशुः ।
षोडश स्त्रीसहस्राणि वासुदेवपरिग्रहः । तासामासीन्महानादो दृष्ट्वैवार्ज्जुनमागतं ।
तास्तु दृष्ट्वैव कौरव्यो वाष्पेणापिहितेक्षणः । हीनाः कृष्णेन पुत्रैश्च नाशकत् सोऽभिवीक्षितुं ।
स तां वृष्ण्यन्धकजलां हयमीनां रथोडुपां । वादित्ररथघोषौघां वेश्मतीर्थमहाग्रहां । १४०
रत्नशैवलसंघाटां वज्रप्राकारमालिनीं । रथ्यास्रोतोजलावर्त्तां चत्वरस्तिमितह्रदां ।
रामकृष्णमहाग्राहां द्वारकां सरितं तदा । कालपाशग्रहां भीमां नदीं वैतरणीमिव ।
ददर्श वासविर्धीमान् विहीनां वृष्णिपुङ्गवैः । गतश्रियं निरानन्दां पद्मिनीं शिशिरे यथा ।
तां दृष्ट्वा द्वारकां पार्थस्ताश्च कृष्णस्य योषितः । सस्वनं वाष्पमुत्सृज्य निपपात महीतले ।
सात्राजिती ततः सत्या रुक्मिणी च विशाम्पते । अभिपत्य प्ररुरुदुः परिवार्य्य धनञ्जयं । १४५
ततस्तं काञ्चने पीठे समुत्थाप्योपवेश्य च । अब्रुवन्त्यो महात्मानं परिवार्य्योपतस्थिरे ।
ततः संस्तूय गोविन्दं कथयित्वा च पाण्डवः । आश्वास्य ताः स्त्रियश्चापि मातुलं द्रष्टुमभ्यगात् ।

इति श्रीमहाभारते मौसलपर्व्वणि पञ्चमोऽध्यायः ॥ ५ ॥

॥ वैशम्पायन उवाच ॥ तं शयानं महात्मानं वीरमानकदुन्दुभिं । पुत्रशोकेन सन्तप्तं ददर्श कुरुपुङ्गवः ।
तस्याश्रुपरिपूर्णाक्षो व्यूढोरस्को महाभुजः । आर्त्तस्यार्त्ततरः पार्थः पादौ जग्राह भारत ।
तस्य मूर्द्धानमाघ्रातुमियेषानकदुन्दुभिः । स्वस्रीयस्य महाबाहुर्न शशाक च शत्रुहन् । १५०
समालिङ्ग्यार्ज्जुनं वृद्धः स भुजाभ्यां महाभुजः । रुदन् पुत्रान् स्मरन् सर्व्वान् विललाप सुविह्वलः ।
भ्रातॄन् पुत्रांश्च पौत्रांश्च दौहित्रांश्च सखीनपि ।

॥ वसुदेव उवाच ॥ यैर्जिता भूमिपालाश्च दैत्याश्च शतशोऽर्ज्जुन । तान्दृष्ट्वा नेह पश्यामि जीवाम्यर्ज्जुन दुर्म्मरः ।
यौ तावर्ज्जुन शिष्यौ ते प्रियौ बहुमतौ सदा । तयोरपनयात् पार्थ वृष्णयो निधनं गताः ।
यौ तौ वृष्णिप्रवीराणां द्वावेवातिरथौ मतौ । प्रद्युम्नो युयुधानश्च कथयन् कत्थसे च यौ । १५५
तौ तदा कुरुशार्दूल कृष्णस्य प्रियभाजनौ । तावुभौ वृष्णिनाशस्य मुखमास्तां धनञ्जय ।
न तु गर्हामि शैनेयं हार्दिक्यञ्चाहमर्ज्जुन । अक्रूरं रौक्मिणेयं वा शापो ह्येवात्र कारणं ।

केशिनं यस्तु कंसञ्च विक्रम्य जगतः प्रभुः । विदेहावकरोत् पार्थ चैद्यञ्च बलगर्व्वितं ।
नैषादिमेकलव्यञ्च चक्रे कालिङ्गमागधान् । गान्धारान् काशिराजञ्च मरुभूमौ च पार्थिवान् ।
प्राच्यांश्च दाक्षिणात्यांश्च पार्व्वतीयांस्तथा नृपान् । सोऽभ्युपेक्षितवानेतमनयं मधुसूदनः । १०
त्वं हितं नारदश्चैव मुनयश्च सनातनं । गोविन्दमनघं देवमभिजानीध्वमच्युतं ।
प्रत्यपश्यच्च स विभुर्ज्ञातिक्षयमधोक्षजः । समुपेक्षितवान्नित्यं स्वयं स मम पुत्रकः ।
गान्धार्य्या वचनं यत्तदृषीणाञ्च परन्तप । तन्नूनमन्यथा कर्त्तुं नैच्छत् स जगतः प्रभुः ।
प्रत्यक्षं भवतश्चापि तव पौत्रः परन्तप । अश्वत्थाम्ना हतश्चापि जीवितस्तस्य तेजसा ।
इमांस्तु नैच्छत् स्वान् ज्ञातीन् रक्षितुं स सखा तव । ततः पुत्रांश्च पौत्रांश्च भ्रातॄनथ सखीनपि । १५
शयानान्निहतान्दृष्ट्वा ततो मामब्रवीदिदं । संप्राप्तोऽद्यायमस्यान्तः कुलस्य भरतर्षभ ।
आगमिष्यति वीभत्सुरिमां द्वारवतीं पुरीं । आख्येयं तस्य यद्वृत्तं वृष्णीनां वैशसं महत् ।
स तु श्रुत्वा महातेजा यदूनां निधनं प्रभो । आगन्ता क्षिप्रमेवेह न मेऽस्त्यत्र विचारणा ।
योऽहं तमर्ज्जुनं विद्धि योऽर्ज्जुनः सोऽहमेव तु । यद्ब्रूयात्तत्तथा कार्य्यमिति बुध्यस्व भारत ।
स स्त्रीषु प्राप्तकालासु पाण्डवो बालकेषु च । प्रतिपत्स्यति वीभत्सुर्भवतश्चौर्द्ध्वदैहिकं । २०
इमाञ्च नगरीं सद्यः प्रतियाते धनञ्जये प्राकाराट्टालकोपेतां समुद्रः प्लावयिष्यति ।
अहं देशे तु कस्मिंश्चित् पुण्ये नियममास्थितः । कालं कर्त्ता सद्य एव रामेण सह धीमता ।
एवमुक्त्वा हृषीकेशो मामचिन्त्यपराक्रमः । हित्वा मां बालकैः सार्द्धं दिशं कामप्यगात् प्रभुः ।
सोऽहन्तौ च महात्मानौ चिन्तयन् भ्रातरौ तव । घोरं ज्ञातिवधञ्चैव न भुञ्जे शोककर्षितः ।
न भोक्ष्ये न च जीविष्ये दिष्ट्या प्राप्तोऽसि पाण्डव । यदुक्तं पार्थ कृष्णेन तत् सर्व्वमखिलं कुरु । २५
एतत्ते पार्थ राज्यञ्च स्त्रियो रत्नानि चैव हि । इष्टान् प्राणानहं हीमांस्त्यक्ष्यामि रिपुसूदन ।
इति श्रीमहाभारते मौसलपर्व्वणि षष्ठोऽध्यायः ॥ ६ ॥

॥ वैशम्पायन उवाच ॥ एवमुक्तः स वीभत्सुर्मातुलेन परन्तपः । दुर्म्मना दीनमनसं वसुदेवमुवाच ह ।
नाहं वृष्णिप्रवीरेण मधुभिश्चैव मातुल । विहीनां पृथिवीं द्रष्टुं शक्ष्यामीह कथञ्चन ।
राजा च भीमसेनश्च सहदेवश्च पाण्डवः । नकुलो याज्ञसेनी च षडेकमनसो वयं ।
राज्ञः संक्रमणे चापि कालोऽयं वर्त्तते ध्रुवं । तमिमं विद्धि संप्राप्तं कालं कालविदाम्बर । ३०
सर्व्वथा वृष्णिदारांस्तु बालं वृद्धं तथैव च । नयिष्ये परिगृह्याहमिन्द्रप्रस्थमरिन्दम ।
इत्युक्त्वा दारुकमिदं वाक्यमाह धनञ्जयः । अमात्यान् वृष्णिवीराणां द्रष्टुमिच्छामि मा चिरं ।
इत्येवमुक्त्वा वचनं सुधर्म्मां यादवीं सभां । प्रविवेशार्ज्जुनः शूरः शोचमानो महारथान् ।
तमासनगतं तत्र सर्व्वाः प्रकृतयस्तथा । ब्राह्मणा नैगमास्तत्र परिवार्य्योपतस्थिरे ।
तान्दीनमनसः सर्व्वान् निभृतान् गतचेतसः । उवाचेदं वचः काले पार्थो दीनतरस्तथा । ३५
शक्रप्रस्थमहं नेष्ये वृष्ण्यन्धकजनं स्वयं । इदन्तु नगरं सर्व्वं समुद्रः प्लावयिष्यति ।

सज्जीकुरुत यानानि रत्नानि विविधानि च । वज्रोऽयं भवतां राजा शक्रप्रस्थे भविष्यति ।
सप्तमे दिवसे चैव रवौ विमल उद्गते । बहिर्व्वत्स्यामहे सर्व्वे सज्जीभवत मा चिरं ।
इत्युक्तास्तेन ते सर्व्वे पार्थेनाक्लिष्टकर्म्मणा । सज्जमाशु ततश्चक्रुः स्वसिद्ध्यर्थं समुत्सुकाः ।
तां रात्रिमवसत् पार्थः केशवस्य निवेशने । महता शोकमोहेन सहसाऽभिपरिप्लुतः । १९०
श्वोभूतेऽथ ततः शौरिर्व्वसुदेवः प्रतापवान् । युक्त्वात्मानं महातेजा जगाम गतिमुत्तमां ।
ततः शब्दो महानासीत् वसुदेवनिवेशने । दारुणः क्रोशतीनाञ्च रुदतीनाञ्च योषितां ।
प्रकीर्णमूर्द्धजाः सर्व्वा विमुक्ताभरणस्रजः । उरांसि पाणिभिर्घ्नन्त्यो व्यलपन् करुणं स्त्रियः ।
तं देवकी च भद्रा च रोहिणी मदिरा तथा । अन्वारोहन्त च तदा भर्त्तारं योषितांवराः ।
ततः शौरिं नृयुक्तेन बहुमाल्येन भारत । यानेन महता पार्थो बहिर्निष्क्रामयत्तदा । १९५
तमन्वयुस्तत्र तत्र दुःखशोकसमाहताः । द्वारकावासिनः सर्व्वे पौरजानपदा हिताः ।
तस्याश्वमेधिकं छत्रं दीप्यमानाश्च पावकाः । पुरस्तात्तस्य यानस्य याजकाश्च ततो ययुः ।
अनुजग्मुश्च तं वीरं देव्यस्ता वै स्वलङ्कृताः । स्त्रीसहस्रैः परिवृता वधूभिश्च सहस्रशः ।
यस्तु देशः प्रियस्तस्य जीवतोऽभून्महात्मनः । तत्रैनमुपसङ्कल्प्य पितृमेधं प्रचक्रिरे ।
तं चिताग्निगतं वीरं शूरपुत्रं वराङ्गनाः । ततोऽन्वारुरुहुः पत्न्यश्चतस्रः पतिलोकगाः । २००
तं वै चतसृभिः स्त्रीभिरन्वितं पाण्डुनन्दनः । अदाहयच्चन्दनैश्च गन्धैरुच्चावचैरपि ।
ततः प्रादुरभूच्छब्दः समिद्धस्य विभावसोः । सामगानाञ्च निर्घोषो नराणां रुदतामपि ।
ततो वज्रप्रधानास्ते वृष्ण्यन्धककुमारकाः । सर्व्वे चैवोदकं चक्रुः स्त्रियश्चैव महात्मनः ।
अलुप्तधर्म्मस्तं धर्म्मं कारयित्वा स फाल्गुनः । जगाम वृष्णयो यत्र विनष्टा भरतर्षभ ।
स तान्दृष्ट्वा निपतितान् कदने भृशदुःखितः । बभूवातीव कौरव्यः प्राप्तकालं चकार च । २०५
यथाप्रधानतश्चैव चक्रे सर्व्वास्तदा क्रियाः । ये हता ब्रह्मशापेन मुसलैरेरकोद्भवैः ।
ततः शरीरे रामस्य वासुदेवस्य चोभयोः । अन्विष्य दाहयामास पुरुषैराप्तकारिभिः ।
स तेषां विधिवत् कृत्वा प्रेतकार्य्याणि पाण्डवः । सप्तमे दिवसे प्रायाद्रथमारुह्य सत्वरः ।
अश्वयुक्तै रथैश्चापि गोखरोष्ट्रयुतैरपि । स्त्रियस्ता वृष्णिवीराणां रुदन्त्यः शोककर्शिताः ।
अनुजग्मुर्महात्मानं पाण्डुपुत्रं धनञ्जयं । भृत्यास्त्वन्धकवृष्णीनां सादिनो रथिनश्च ये । २१०
वीरहीनं वृद्धबालं पौरजानपदास्तथा । ययुस्ते परिवार्य्याथ कलत्रं पार्थशासनात् ।
कुञ्जरैश्च गजारोहा ययुः शैलनिभैस्तथा । सपादरक्षैः संयुक्ताः सान्तरायुधिका ययुः ।
पुत्राश्चान्धकवृष्णीनां सर्व्वे पार्थमनुव्रताः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महाधनाः ।
दश षट् च सहस्राणि वासुदेवावरोधनं । पुरस्कृत्य ययुर्व्वज्रं पौत्रं कृष्णस्य धीमतः ।
बहूनि च सहस्राणि प्रयुतान्यर्ब्बुदानि च । भोजवृष्ण्यन्धकस्त्रीणां हतनाथा विनिर्ययुः । २१५
तत्सागरसमप्रख्यं वृष्णिचक्रं महर्द्धिमत् । उवाच रथिनां श्रेष्ठः पार्थः परपुरञ्जयः ।

निर्य्याते तु जने तस्मिन् सागरो मकरालयः । द्वारकां रत्नसम्पूर्णां जलेनाप्लावयत्तदा ।
यद्यद्धि पुरुषव्याघ्रो भूमेस्तस्या व्यमुञ्चत । तत्तत् संप्लावयामास सलिलेन स सागरः ।
तदद्भुतमभिप्रेक्ष्य द्वारकावासिनो जनाः । तूर्णात्तूर्णतरं जग्मुरहो दैवमिति ब्रुवन् ।
काननेषु च रम्येषु पर्व्वतेषु नदीषु च । निवसन्नानयामास वृष्णिदारान् धनञ्जयः । २२०
स पञ्चनदमासाद्य धीमानतिसमृद्धिमत् । देशे गोपशुधान्याढ्ये निवासमकरोत् प्रभुः ।
ततो लोभः समभवद्दस्यूनां निहतेश्वराः । दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत ।
ततस्ते पापकर्म्माणो लोभोपहतचेतसः । आभीरा मन्त्रयामासुः समेत्याशुभदर्शिनः ।
अयमेकोऽर्ज्जुनो धन्वी वृद्धबालं हतेश्वरं । नयत्यस्मानतिक्रम्य योधाश्चेमे हतौजसः ।
ततो यष्टिप्रहरणा दस्यवस्ते सहस्रशः । अभ्यधावन्त वृष्णीनां तं जनं लोप्त्रहारिणः । २२५
महता सिंहनादेन द्रावयन्तः पृथग्जनं । अभिपेतुर्धनार्थं ते कालपर्य्यायचोदिताः ।
ततो निवृत्तः कौन्तेयः सहसा सपदानुगः । उवाच तान्महाबाहुरर्ज्जुनः प्रहसन्निव ।
निवर्त्तध्वमधर्म्मज्ञा यदि जीवितुमिच्छथ । इदानीं शरनिर्भिन्नाः शोचध्वं निहता मया ।
तथोक्तास्तेन वीरेण कदर्थीकृत्य तद्वचः । अभिपेतुर्ज्जनं मूढा वार्य्यमाणाः पुनः पुनः ।
ततोऽर्ज्जुनो धनुर्दिव्यं गाण्डीवमजरं महत् । आरोपयितुमारेभे यत्नादिव कथञ्चन । २३०
चकार सज्यं कृच्छ्रेण संभ्रमे तुमुले सति । चिन्तयामास चास्त्राणि न च सस्मार तान्यपि ।
वैकृत्यन्तन्महद्दृष्ट्वा भुजवीर्य्ये तथा युधि । दिव्यानां महदस्त्राणां विनाशाद्व्रीडितोऽभवत् ।
वृष्णियोधाश्च ते सर्व्वे गजाश्वरथयोधिनः । न शेकुरावर्त्तयितुं ह्रियमाणञ्च तं जनं ।
कलत्रस्य बहुत्वाद्धि सम्पतत्सु ततस्ततः । प्रयत्नमकरोत् पार्थो जनस्य परिरक्षणे ।
मिषतां सर्व्वयोधानां ततस्ताः प्रमदोत्तमाः । समन्ततोऽवकृष्यन्त कामाच्चान्याः प्रवव्रजुः । २३५
ततो गाण्डीवनिर्म्मुक्तैः शरैः पार्थो धनञ्जयः । जघान दस्यून् सोद्वेगो वृष्णिभृत्यैः सह प्रभुः ।
क्षणेन तस्य ते राजन् क्षयं जग्मुरजिह्मगाः । अक्षया हि पुरा भूत्वा क्षीणाः क्षतजभोजनाः ।
स शरक्षयमासाद्य दुःखशोकसमाहतः । धनुष्कोट्या तदा दस्यूनवधीत् पाकशासनिः ।
प्रेक्षतस्त्वेव पार्थस्य वृष्ण्यन्धकवरस्त्रियः । जग्मुरादाय ते म्लेच्छाः समन्ताज्जनमेजय ।
धनञ्जयस्तु दैवं तन्मनसाऽचिन्तयत् प्रभुः । दुःखशोकसमाविष्टो निःश्वासपरमोऽभवत् । २४०
अस्त्राणाञ्च प्रणाशेन बाहुवीर्य्यस्य सङ्क्षयात् । धनुषश्चाविधेयत्वाच्छराणां सङ्क्षयेण च ।
बभूव विमनाः पार्थो दैवमित्यनुचिन्तयन् । न्यवर्त्तत ततो राजन्नेदमस्तीति चाब्रवीत् ।
ततः स शेषमादाय कलत्रस्य महामतिः । हृतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत् ।
एवं कलत्रमानीय वृष्णीनां हृतशेषितं । न्यवेशयत कौरव्यस्तत्र तत्र धनञ्जयः ।
हार्द्दिक्यतनयं पार्थो नगरं मार्त्तिकावतं । भोजराजकलत्रञ्च हृतशेषं नरोत्तमः । २४५
ततो बालांश्च वृद्धांश्च स्त्रियश्चादाय पाण्डवः । वीरैर्व्विहीनान् सर्व्वांस्तानिन्द्रप्रस्थे न्यवेशयत् ।

यौयुधानिं सरस्वत्यां पुत्रं सात्यकिनः प्रियं । न्यवेशयत धर्म्मात्मा वृद्धबालपुरस्कृतं ।
इन्द्रप्रस्थे ददौ राज्यं वज्राय परवीरहा । वज्रेणाक्रूरदारास्तु वार्य्यमाणाः प्रवव्रजुः ।
रुक्मिणी त्वथ गान्धारी शैब्या हैमवतीत्यपि । देवी जाम्बवती चैव विविशुर्ज्जातवेदसं ।
सत्यभामा तथैवान्या देव्यः कृष्णस्य सम्मताः । वनं प्रविविशू राजंस्तापस्ये कृतनिश्चयाः । २४०
फलमूलादिभोजिन्यो हरिध्यानैकतत्पराः । हिमवन्तमतिक्रम्य कलापग्राममाविशन् ।
द्वारकावासिनो ये तु पुरुषाः पार्थमन्वयुः । यथार्हं संविभज्यैनान् वज्रे पर्य्यददज्जयः ।
स तत् कृत्वा प्राप्तकालं वाष्पेणापिहितोऽर्ज्जुनः । कृष्णद्वैपायनं व्यासं ददर्शासीनमाश्रमे ।
इति श्रीमहाभारते मौसलपर्व्वणि सप्तमोऽध्यायः ॥७॥

॥ वैशम्पायन उवाच ॥ प्रविशन्नर्ज्जुनो राजन्नाश्रमं सत्यवादिनः । ददर्शासीनमेकान्ते मुनिं सत्यवतीसुतं ।
स तमासाद्य धर्म्मज्ञमुपतस्थे महाव्रतं । अर्ज्जुनोऽस्मीति नामास्मै निवेद्याभ्यवदत्ततः । २४५
स्वागतन्तेऽस्त्विति प्राह मुनिः सत्यवतीसुतः । आस्यतामिति चोवाच प्रसन्नात्मा महामुनिः ।
तमप्रतीतमनसं निश्वसन्तं पुनः पुनः । निर्व्विण्णमनसं दृष्ट्वा पार्थं व्यासोऽब्रवीदिदं ।
नखकेशदशाकुम्भवारिणा किं समुक्षितः । आवीरजानुगमनं ब्राह्मणो वा हतस्त्वया ।
युद्धे पराजितो वाऽसि गतश्रीरिव लक्ष्यसे । न त्वां प्रभिन्नं जानामि किमिदं भरतर्षभ ।
श्रोतव्यञ्चेन्मया पार्थ क्षिप्रमाख्यातुमर्हसि । २५०

॥ अर्ज्जुन उवाच ॥ यः स मेघवपुः श्रीमान् बृहत्पङ्कजलोचनः । स कृष्णः सह रामेण त्यक्त्वा देहं दिवं गतः ।
मौसले वृष्णिवीराणां विनाशो ब्रह्मशापजः । बभूव वीरान्तकरः प्रभासे लोमहर्षणः ।
ये ते शूरा महात्मानः सिंहदर्पा महाबलाः । भोजवृष्ण्यन्धका ब्रह्मन्नन्योन्यं तैर्हतं युधि ।
गदापरिघशक्तीनां सहाः परिघबाहवः । त एरकाभिर्निहताः पश्य कालस्य पर्य्ययं ।
हतं पञ्चशतं तेषां सहस्रं बाहुशालिनां । निधनं समनुप्राप्तं समासाद्येतरेतरं । २५५
पुनः पुनर्न मृष्यामि विनाशममितौजसां । चिन्तयानो यदूनाञ्च कृष्णस्य च यशस्विनः ।
शोषणं सागरस्येव पर्व्वतस्येव चालनं । नभसः पतनञ्चैव शैत्यमग्नेस्तथैव च ।
अश्रद्धेयमहं मन्ये विनाशं शार्ङ्गधन्वनः । न चेह स्थातुमिच्छामि लोके कृष्णविनाकृतः ।
इतः कष्टतरञ्चान्यच्छृणु तद्वै तपोधन । मनो मे दीर्य्यते येन चिन्तयानस्य वै मुहुः ।
पश्यतो वृष्णिदाराश्च मम ब्रह्मन् सहस्रशः । आभीरैरनुसृत्याजौ हृताः पञ्चनदालयैः । २६०
तत्राहं धनुरादाय नाशकं तस्य पूरणे । यथा पुरा च मे वीर्य्यं भुजयोर्न तथाऽभवत् ।
अस्त्राणि मे प्रनष्टानि विविधानि महामुने । शराश्च क्षयमापन्नाः क्षणेनैव समन्ततः ।
पुरुषश्चाप्रमेयात्मा शङ्खचक्रगदाधरः । चतुर्भुजः पीतवासाः श्यामः पद्मदलेक्षणः ।
यश्च याति पुरस्तान्मे रथस्य सुमहाद्युतिः । प्रदहन् रिपुसैन्यानि न पश्याम्यहमच्युतं ।
येन पूर्व्वं प्रदग्धानि शत्रुसैन्यानि तेजसा । शरैर्गाण्डीवनिर्मुक्तैरहं पश्चाद्व्यनाशयं । २६५

समपश्यन् विषीदामि घूर्णामीव च सत्तम । परिनिर्विण्णचेताश्च शान्तिं नोपलभेऽपि च ।
विना जनार्द्दनं वीरं नाहं जीवितुमुत्सहे । श्रुत्वैव हि गतं विष्णुं ममापि मुमुहुर्द्दिशः ।
प्रनष्टज्ञातिवीर्य्यस्य शून्यस्य परिधावतः। उपदेष्टुं मम श्रेयो भवानर्हति सत्तम ।
॥ व्यास उवाच ॥ ब्रह्मशापविनिर्द्दग्धा वृष्ण्यन्धकमहारथाः । विनष्टाः कुरुशार्द्दूल न तान् शोचितुमर्हसि ।
भवितव्यं तथा तच्च दिष्टमेतन्महात्मनां । उपेक्षितञ्च कृष्णेन शक्तेनापि व्यपोहितुं । १०
त्रैलोक्यमपि गोविन्दः कृत्स्नं स्थावरजङ्गमं । प्रसहेदन्यथा कर्त्तुं कुतः शापं महात्मनां ।
रथस्य पुरतो याति यः स चक्रगदाधरः । तव स्नेहात् पुराणर्षिर्वासुदेवश्चतुर्भुजः ।
कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः । मोक्षयित्वा तनुं प्राप्तः कृष्णः स्वस्थानमुत्तमं ।
त्वयापीह महत् कर्म्म देवानां पुरुषर्षभ । कृतं भीमसहायेन यमाभ्याञ्च महाभुज ।
कृतकृत्यांश्च वो मन्ये संसिद्धान् कुरुपुङ्गव । गमनं प्राप्तकालञ्च इदं श्रेयस्करं विभो । १५
एवं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत । भवन्ति भवकालेषु विपद्यन्ते विपर्य्यये ।
कालमूलमिदं सर्व्वं जगद्बीजं धनञ्जय । काल एव समाधत्ते पुनरेव यदृच्छया ।
स एव बलवान् भूत्वा पुनर्भवति दुर्ब्बलः । स एवेशश्च भूत्वेह परैराज्ञाप्यते पुनः ।
कृतकृत्यानि चास्त्राणि गतान्यद्य यथागतं । पुनरेष्यन्ति ते हस्तं यदा कालो भविष्यति ।
कालो गन्तुं गतिं मुख्यां भवतामपि भारत । एतत् श्रेयो हि वो मन्ये परं भरतसत्तम । २०
॥ वैशम्पायन उवाच ॥ एतद्वचनमाज्ञाय व्यासस्यामिततेजसः । अनुज्ञातो ययौ पार्थो नगरं नागसाह्वयं ।
प्रविश्य च पुरीं वीरः समासाद्य युधिष्ठिरं । आचष्ट तद्यथा वृत्तं वृष्ण्यन्धककुलं प्रति ।
इति श्रीमहाभारते मौसलपर्व्वणि अष्टमोऽध्यायः ॥ ८ ॥

॥ समाप्तञ्चेदं मौसल पर्व्व ॥

अत्र व्यासोक्ताध्यायश्लोकसंख्यान्यूनाधिक्यन्तु लिपिकरप्रमादाद्दोषः ॥

# श्रीमहाभारतं

## ॥ अथ महाप्रस्थानिकपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

॥ जनमेजय उवाच ॥ एवं वृष्ण्यन्धककुले श्रुत्वा मौसलमाहवं। पाण्डवाः किमकुर्व्वन्त तथा कृष्णे दिवङ्गते।
॥ वैशम्पायन उवाच ॥ श्रुत्वैवं कौरवो राजा वृष्णीनां कदनं महत्। प्रस्थाने मतिमाधाय वाक्यमर्ज्जुनमब्रवीत्।
कालः पचति भूतानि सर्व्वाण्येव महामते। कालपाशमहं मन्ये त्वमपि द्रष्टुमर्हसि।
इत्युक्तः स तु कौन्तेयः कालः काल इति ब्रुवन्। अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य धीमतः।
अर्ज्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा। अन्वपद्यत तद्वाक्यं यदुक्तं सव्यसाचिना। ५
ततो युयुत्सुमानाय्य प्रव्रजन् धर्म्मकाम्यया। राज्यं परिददौ सर्व्वं वैश्यापुत्रे युधिष्ठिरः।
अभिषिच्य स्वराज्ये च राजानञ्च परिक्षितं। दुःखार्त्तश्चाब्रवीद्राजा सुभद्रां पाण्डवाग्रजः।
एष पुत्रस्य ते पुत्रः कुरुराजो भविष्यति। यदूनां परिशेषश्च वज्रो राजा कृतश्च ह।
परिक्षिद्धास्तिनपुरे शक्रप्रस्थे च यादवः। वज्रो राजा त्वया रक्ष्यो मा चाधर्म्मे मनः कृथाः।
इत्युक्त्वा धर्म्मराजः स वासुदेवस्य धीमतः। मातुलस्य च वृद्धस्य रामादीनां तथैव च। १०
मातृभिः सह धर्म्मात्मा कृत्वोदकमतन्द्रितः। श्राद्धान्युद्दिश्य सर्व्वेषां चकार विधिवत्तदा।
द्वैपायनं नारदञ्च मार्कण्डेयं तपोधनं। भारद्वाजं याज्ञवल्क्यं हरिमुद्दिश्य यत्नवान्।
अभोजयत् स्वादु भोज्यं कीर्त्तयित्वा च शार्ङ्गिणं। ददौ रत्नानि वासांसि ग्रामानश्वान् रथांस्तदा।
स्त्रियश्च द्विजमुख्येभ्यस्तदा शतसहस्रशः। कृपमभ्यर्च्च्य च गुरुमथ पौरपुरस्कृतं।
शिष्यं परिक्षितं तस्मै ददौ भरतसत्तम। ततस्तु प्रकृतीः सर्व्वाः समानाय्य युधिष्ठिरः। १५
सर्व्वमाचष्ट राजर्षिश्चिकीर्षितमथात्मनः। ते श्रुत्वैव वचस्तस्य पौरजानपदा जनाः।
भृशमुद्विग्नमनसो नाभ्यनन्दन्त तद्वचः। नैवं कर्त्तव्यमिति ते तदोचुस्तं नराधिपं।
न च राजा तथाऽकार्षीत् कालपर्य्यायधर्म्मवित्। ततोऽनुमान्य धर्म्मात्मा पौरजानपदं जनं।
गमनाय मतिञ्चक्रे भ्रातरश्चास्य ते तदा। ततः स राजा कौरव्यो धर्म्मपुत्रो युधिष्ठिरः।
उत्सृज्याभरणान्यङ्गाज्जगृहे वल्कलान्युत। भीमार्ज्जुनयमाश्चैव द्रौपदी च यशस्विनी। २०

तथैव जटकाः सर्व्वे वल्कलानि नराधिप । विधिवत् कारयित्वेष्टिं नैष्ठिकीं भरतर्षभ ।
समुत्सृज्याप्सु सर्व्वेऽग्नीन् प्रतस्थुर्नरपुङ्गवाः । ततः प्ररुरुदुः सर्व्वाः स्त्रियो दृष्ट्वा नरोत्तमान् ।
प्रस्थितान् द्रौपदीषष्ठान् पुरा द्यूतजितान् यथा । हर्षोऽभवच्च सर्व्वेषां भ्रातॄणां गमनं प्रति ।
युधिष्ठिरमतं ज्ञात्वा वृष्णिक्षयमवेक्ष्य च । भ्रातरः पञ्च कृष्णा च षष्ठी श्वा चैव सप्तमः ।
आत्मना सप्तमो राजा निर्ययौ गजसाह्वयात् । पौरैरनुगतो दूरं सर्व्वैरन्तःपुरैस्तथा । १५
न चैनमशकत् कश्चिन्निवर्त्तस्वेति भाषितुं । न्यवर्त्तन्त ततः सर्व्वे नरा नगरवासिनः ।
कृपप्रभृतयश्चैव युयुत्सुं पर्य्यवारयन् । विवेश गङ्गां कौरव्य उलूपी भुजगात्मजा ।
चित्राङ्गदा ययौ चापि मणिपूरपुरं प्रति । शिष्टाः परिक्षितं त्वन्या मातरः पर्य्यवारयन् ।
पाण्डवाश्च महात्मानो द्रौपदी च यशस्विनी । कृतोपवासाः कौरव्य प्रययुः प्राङ्मुखास्ततः ।
योगयुक्ता महात्मानस्त्यागधर्म्ममुपेयुषः । अभिजग्मुर्बहून् देशान् सरितः सागरांस्तथा । २०
युधिष्ठिरो ययावग्रे भीमस्तु तदनन्तरं । अर्ज्जुनस्तस्य चान्वेव यमौ चापि यथाक्रमं ।
पृष्ठतस्तु वरारोहा श्यामा पद्मदलेक्षणा । द्रौपदी योषितां श्रेष्ठा ययौ भरतसत्तम ।
श्वा चैवानुययावेकः प्रस्थितान् पाण्डवान् वनं । क्रमेण ते ययुर्व्वीरा लौहित्यं सलिलार्णवं ।
गाण्डीवन्तु धनुर्द्दिव्यं न मुमोच धनञ्जयः । रत्नलोभान्महाराज ते चाक्षय्ये महेषुधी ।
अग्निं ते ददृशुस्तत्र स्थितं शैलमिवाग्रतः । मार्गमावृत्य तिष्ठन्तं साक्षात् पुरुषविग्रहं । २५
ततो देवः स सप्तार्च्चिः पाण्डवानिदमब्रवीत् । भो भोः पाण्डुसुता वीराः पावकं मां निबोधत ।
युधिष्ठिर महाबाहो भीमसेन परन्तप । अर्ज्जुनाश्विसुतौ वीरौ निबोधत वचो मम ।
अहमग्निः कुरुश्रेष्ठा मया दग्धञ्च खाण्डवं । अर्ज्जुनस्य प्रभावेण तथा नारायणस्य च ।
अयं वः फाल्गुनो भ्राता गाण्डीवं परमायुधं । परित्यज्य वने यातु नानेनार्थोऽस्ति कश्चन ।
चक्ररत्नन्तु यत् कृष्णे स्थितमासीन्महात्मनि । गतं तच्च पुनर्हस्ते काले नैष्यति तस्य ह । ३०
वरुणादाहृतं पूर्व्वं मयैतत् पार्थकारणात् । गाण्डीवं धनुषां श्रेष्ठं वरुणायैव दीयतां ।
ततस्ते भ्रातरः सर्व्वे धनञ्जयमचोदयन् । स जले प्राक्षिपच्चैतत्तथाऽक्षये महेषुधी ।
ततोऽग्निर्भरतश्रेष्ठ तत्रैवान्तरधीयत । ययुश्च पाण्डवा वीरास्ततस्ते दक्षिणामुखाः ।
ततस्ते तूत्तरेणैव तीरेण लवणाम्भसः । जग्मुर्भरतशार्दूल दिशं दक्षिणपश्चिमां ।
ततः पुनः समावृत्ताः पश्चिमां दिशमेव ते । ददृशुर्द्वारकाञ्चापि सागरेण परिप्लुतां । ३५
उदीचीं पुनरावृत्य ययुर्भरतसत्तमाः । प्रादक्षिण्यं चिकीर्षन्तः पृथिव्या योगधर्म्मिणः ।
इति श्रीमहाभारते महाप्रस्थानिके पर्व्वणि प्रथमोऽध्यायः ॥ १ ॥
॥ वैशम्पायन उवाच ॥ ततस्ते नियतात्मान उदीचीं दिशमास्थिताः । ददृशुर्योगयुक्ताश्च हिमवन्तं महागिरिं ।
तञ्चाप्यतिक्रमन्तस्ते ददृशुर्व्वालुकार्णवं । अवैक्षन्त महाशैलं मेरुं शिखरि[illegible]णां वरं ।
तेषान्तु गच्छतां शीघ्रं सर्व्वेषां योगधर्म्मिणां । याज्ञसेनी भ्रष्टयोगा निपपात महीतले ।

तान्तु प्रपतितां दृष्ट्वा भीमसेनो महाबलः । उवाच धर्म्मराजानं याज्ञसेनीमवेक्ष्य ह । ५०
नाधर्म्मश्चरितः कश्चिद्राजपुत्त्र्या परन्तप । कारणं किन्नु तद्ब्रूहि यत्कृष्णा पतिता भुवि ।
॥ युधिष्ठिर उवाच ॥ पक्षपातो महानस्या विशेषेण धनञ्जये । तस्यैतत् फलमद्यैषा भुङ्क्ते पुरुषसत्तम ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वाऽनवेक्ष्यैनां ययौ भरतसत्तमः । समाधाय मनो धीमान् धर्म्मात्मा पुरुषर्षभः ।
सहदेवस्ततो विद्वान् निपपात महीतले । तञ्चापि पतितं दृष्ट्वा भीमो राजानमब्रवीत् ।
योऽयमस्मासु सर्व्वेषु शुश्रूषुरनहङ्कृतः । सोऽयं माद्रवतीपुत्त्रः कस्मान्निपतितो भुवि । ५५
॥ युधिष्ठिर उवाच ॥ आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कञ्चन । तेन दोषेण पतितस्तस्मादेष नृपात्मजः ।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा तं समुत्सृज्य सहदेवं ययौ तदा । भ्रातृभिः सह कौन्तेयः शुना चैव युधिष्ठिरः ।
कृष्णां निपतितां दृष्ट्वा सहदेवञ्च पाण्डवं । आर्त्तो बन्धुप्रियः शूरो नकुलो निपपात ह ।
तस्मिन्निपतिते वीरे नकुले चारुदर्शने । पुनरेव तदा भीमो राजानमिदमब्रवीत् ।
योऽयमक्षतधर्म्मात्मा भ्राता वचनकारकः । रूपेणाप्रतिमो लोके नकुलः पतितो भुवि । ६०
इत्युक्तो भीमसेनेन प्रत्युवाच युधिष्ठिरः । नकुलं प्रति धर्म्मात्मा सर्व्वबुद्धिमतां वरः ।
रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनं । अधिकश्चाहमेवैक इत्यस्य मनसि स्थितं ।
नकुलः पतितस्तस्मादागच्छ त्वं वृकोदर । यस्य यद्विहितं वीर सोऽवश्यं तदुपाश्नुते ।
तांस्तु प्रपतितान्दृष्ट्वा पाण्डवः श्वेतवाहनः । पपात शोकसन्तप्तस्ततोऽनु परवीरहा ।
तस्मिंस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि । म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत् । ६५
अनृतं न स्मराम्यस्य स्वैरेष्वपि महात्मनः । अथ कस्य विकारोऽयं येनायं पतितो भुवि ।
॥ युधिष्ठिर उवाच ॥ एकाह्ना निर्द्दहेयं वै शत्रूनित्यर्ज्जुनोऽब्रवीत् न च तत् कृतवानेष शूरमानी ततोऽपतत् ।
अवमेने धनुर्ग्राहानेष सर्व्वांश्च फाल्गुनः । तथा चैतन्न तु तथा कर्त्तव्यं भूतिमिच्छता ।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह । पतितश्चाब्रवीद्भीमो धर्म्मराजं युधिष्ठिरं ।
भो भो राजन्नवेक्षस्व पतितोऽहं प्रियस्तव । किं निमित्तञ्च पतनं ब्रूहि मे यदि वेत्थ ह । ७०
॥ युधिष्ठिर उवाच ॥ अतिभुक्तञ्च भवता प्राणेन च विकत्थसे । अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ ।
इत्युक्त्वा तं महाबाहुर्जगामानवलोकयन् । श्वाप्येकोऽनुययौ यस्ते बहुशः कीर्त्तितो मया ।
इति श्रीमहाभारते महाप्रस्थानिके पर्व्वणि द्रौपद्यादिपतने द्वितीयोऽध्यायः ॥ २ ॥
॥ वैशम्पायन उवाच ॥ ततः संनादयन् शक्रो दिवं भूमिञ्च सर्व्वशः । रथेनोपाययौ पार्थमारोहेत्यब्रवीच्च तं ।
स भ्रातॄन् पतितान् दृष्ट्वा धर्म्मराजो युधिष्ठिरः । अब्रवीच्छोकसन्तप्तः सहस्राक्षमिदं वचः ।
भ्रातरः पतिता मेऽत्र गच्छेयुस्ते मया सह । न विना भ्रातृभिः स्वर्गमिच्छे गन्तुं सुरेश्वर । ७५
सुकुमारी सुखार्हा च राजपुत्त्री पुरन्दर । साऽस्माभिः सह गच्छेत तद्भवाननुमन्यतां ।
॥ शक्र उवाच ॥ भ्रातॄन् द्रक्ष्यसि स्वर्गे त्वमग्रतस्त्रिदिवं गतान् । कृष्णया सहितान् सर्व्वान्मा शुचो भरतर्षभ ।
निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ । अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ।

॥ युधिष्ठिर उवाच ॥ अयं श्वा भूतभव्येश भक्तो मां नित्यमेव च । स गच्छेत मया सार्द्धमानृशंस्या हि मे मतिः ।

॥ शक्र उवाच ॥ अमर्त्यत्वं मत्समत्वञ्च राजन् श्रियञ्च कृत्स्नां महतीञ्चैव सिद्धिं । संप्राप्तोऽद्य स्वर्गसुखानि च त्वं त्यज श्वानं नात्र नृशंसमस्ति । ८०

॥ युधिष्ठिर उवाच ॥ अनार्य्यमार्य्येण सहस्रनेत्र शक्यं कर्त्तुं दुष्करमेतदार्य्य । मा मे श्रिया सङ्गमनं तयाऽस्तु यस्याः कृते भक्तजनं त्यजेयं ।

॥ इन्द्र उवाच ॥ स्वर्गे लोके श्ववतां नास्ति धिष्ण्यमिष्टापूर्त्तं क्रोधवशा हरन्ति । ततो विचार्य्य क्रियतां धर्म्मराज त्यज श्वानं नात्र नृशंसमस्ति ।

॥ युधिष्ठिर उवाच ॥ भक्तत्यागं प्राहुरत्यन्तपापं तुल्यं लोके ब्रह्मवध्याकृतेन । तस्मान्नाहं जातु कथञ्चनाद्य त्यक्ष्याम्येनं स्वसुखार्थी महेन्द्र ।

भीतं भक्तं नान्यदस्तीति चार्त्तं प्राप्तं क्षीणं रक्षणे प्राणलिप्सुं । प्राणत्यागादप्यहं नैव मोक्तुं यतेयं वै नित्यमेतद्व्रतं मे ।

॥ इन्द्र उवाच ॥ शुना दृष्टं क्रोधवशा हरन्ति यद्दत्तमिष्टं विवृतमथो हुतञ्च । तस्मात् शुनस्त्यागमिमं कुरुष्व शुनस्त्यागात् प्राप्स्यसे देवलोकं । ८५

त्यक्त्वा भ्रातॄन् दयिताञ्चापि कृष्णां प्राप्तो लोकः कर्म्मणा स्वेन वीर । श्वानञ्चैनं न त्यजसे कथन्नु त्यागं कृत्स्नं चास्थितो मुह्यसे ऽद्य ।

॥ युधिष्ठिर उवाच ॥ न विद्यते सन्धिरथापि विग्रहो मृतैर्म्मर्त्यैरिति लोकेषु निष्ठा । न ते मया जीवयितुं हि शक्यास्तस्मात्त्यागस्तेषु कृतो न जीवतां ।

भीतिप्रदानं शरणागतस्य स्त्रिया वधो ब्राह्मणस्वापहारः । मित्रद्रोहस्तानि चत्वारि शक्र भक्तत्यागश्चैव समो मतो मे ।

॥ वैशम्पायन उवाच ॥ तद्धर्म्मराजस्य वचो निशम्य धर्म्मस्वरूपी भगवानुवाच । युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः ।

॥ धर्म्म उवाच ॥ अभिजातोऽसि राजेन्द्र पितुर्वृत्तेन मेधया । अनुक्रोशेन चानेन सर्व्वभूतेषु भारत । ९०

पुरा द्वैतवने चासि मया पुत्र परीक्षितः । पानीयार्थे पराक्रान्ता यत्र ते भ्रातरो हताः ।

भीमार्ज्जुनौ परित्यज्य यत्र त्वं भ्रातरावुभौ । मात्रोः साम्यमभीप्सन् वै नकुलं जीवमिच्छसि ।

अयं श्वा भक्त इत्येव त्यक्तो देवरथस्त्वया । तस्मात् स्वर्गे न ते तुल्यः कश्चिदस्ति नराधिप ।

अतस्तवाक्षया लोकाः स्वशरीरेण भारत । प्राप्तोऽसि भरतश्रेष्ठ दिव्यां गतिमनुत्तमां ।

॥ वैशम्पायन उवाच ॥ ततो धर्म्मश्च शक्रश्च मरुतश्चाश्विनावपि । देवा देवर्षयश्चैव रथमारोप्य पाण्डवं । ९५

प्रययुः स्वैर्विमानैस्ते सिद्धाः कामविहारिणः । सर्व्वे विरजसः पुण्याः पुण्यवाग्बुद्धिकर्म्मिणः ।

स तं रथं समास्थाय राजा कुरुकुलोद्वहः । ऊर्द्ध्वमाचक्रमे शीघ्रं तेजसावृत्य रोदसी ।

ततो देवनिकायस्थो नारदः सर्व्वलोकवित् । उवाचोच्चैस्तदा वाक्यं बृहद्वादी बृहत्तपाः ।

येऽपि राजर्षयः सर्व्वे ते चापि समुपस्थिताः । कीर्त्तिं प्रच्छाद्य तेषां वै कुरुराजोऽधितिष्ठति ।

लोकानावृत्य यशसा तेजसा वृत्तसम्पदा । स्वशरीरेण संप्राप्तं नान्यं शुश्रुम पाण्डवात् । १००

नारदस्य वचः श्रुत्वा राजा वचनमब्रवीत् । देवानामन्त्र्य धर्मात्मा स्वपक्षांश्चैव पार्थिवान् ।
शुभं वा यदि वा पापं भ्रातृणां स्थानमद्य मे । तदेव प्राप्तुमिच्छामि लोकानन्यान्न कामये ।
राज्ञस्तु वचनं श्रुत्वा देवराजः पुरन्दरः । आनृशंस्यसमायुक्तं प्रत्युवाच युधिष्ठिरं ।
स्थानेऽस्मिन् वस राजेन्द्र कर्म्मभिर्निर्जितैः शुभैः । किं त्वं मानुष्यकं स्नेहमद्यापि परिकर्षसि ।
सिद्धिं प्राप्तोऽसि परमां यथा नान्यः पुमान् क्वचित् । नैव ते भ्रातरः स्थानं संप्राप्ताः कुरुनन्दन । १५
अद्यापि मानुषो भावः स्पृशते त्वां नराधिप । स्वर्गोऽयं पश्य देवर्षीन् सिद्धांश्च त्रिदिवालयान् ।
युधिष्ठिरस्तु देवेन्द्रमेवंवादिनमीश्वरं । पुनरेवाब्रवीद्धीमानिदं वचनमर्थवत् ।
तैर्विना नोत्सहे वस्तुमिह दैत्यनिवर्हण । गन्तुमिच्छामि तत्राहं यत्र मे भ्रातरो गताः ।
यत्र सा बृहती श्यामा बुद्धिसत्त्वगुणान्विता । द्रौपदी योषितां श्रेष्ठा यत्र चैव गता मम ।
इति श्रीमहाभारते महाप्रस्थानिके पर्व्वणि युधिष्ठिरस्वर्गारोहे तृतीयोऽध्यायः ॥ ३ ॥

॥ समाप्तञ्चेदं महाप्रस्थानिकपर्व्व ॥

अत्र व्यासोक्ताध्यायश्लोकसंख्यान्यूनाधिक्ये लिपिकरप्रमादात्तद्बोध्यं ॥



# श्रीमहाभारतं

## ॥ अथ स्वर्गारोहणपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

॥ जनमेजय उवाच ॥ स्वर्गं त्रिविष्टपं प्राप्य मम पूर्व्वपितामहाः। पाण्डवा धार्त्तराष्ट्राश्च कानि स्थानानि भेजिरे।
एतदिच्छाम्यहं श्रोतुं सर्व्वविच्चासि मे मतः। महर्षिणाऽभ्यनुज्ञातो व्यासेनाद्भुतकर्म्मणा॥
॥ वैशम्पायन उवाच ॥ स्वर्गं त्रिविष्टपं प्राप्य तव पूर्व्वपितामहाः। युधिष्ठिरप्रभृतयो यदकुर्व्वन्त तच्छृणु।
स्वर्गं त्रिविष्टपं प्राप्य धर्म्मराजो युधिष्ठिरः। दुर्य्योधनं श्रिया जुष्टं ददर्शासीनमासने।
भ्राजमानमिवादित्यं वीरलक्ष्म्याऽभिसंवृतं। देवैर्भ्राजिष्णुभिः साध्यैः सहितं पुण्यकर्म्मभिः। ५
ततो युधिष्ठिरो दृष्ट्वा दुर्य्योधनममर्षितः। सहसा सन्निवृत्तोऽभूत् श्रियं दृष्ट्वा सुयोधने।
ब्रुवन्नुच्चैर्वचस्तान् वै नाहं दुर्य्योधनेन वै। सहितः कामये लोकान् लुब्धेनादीर्घदर्शिना।
यत्कृते पृथिवी सर्व्वा सुहृदो बान्धवास्तथा। हताऽस्माभिः प्रसह्याजौ क्लिष्टैः पूर्व्वं महावने।
द्रौपदी च सभामध्ये पाञ्चाली धर्म्मचारिणी। पर्य्याकृष्टाऽनवद्याङ्गी पत्नी नो गुरुसन्निधौ।
अस्ति देवा न मे कामः सुयोधनमुदीक्षितुं। तत्राहं गन्तुमिच्छामि यत्र ते भ्रातरो मम। १०
नैवमित्यब्रवीत्तन्तु नारदः प्रहसन्निव। स्वर्गे निवासे राजेन्द्र विरुद्धञ्चापि नश्यति।
युधिष्ठिर महाबाहो मैवं वोचः कथञ्चन। दुर्य्योधनं प्रति नृपं शृणु चेदं वचो मम।
एष दुर्य्योधनो राजा पूज्यते त्रिदशैः सह। सद्भिश्च राजप्रवरैर्य इमे स्वर्गवासिनः।
वीरलोकगतिं प्राप्तो युद्धे हुत्वात्मनस्तनुं। यूयं सर्व्वे सुरसमाः सदैवानेन हिंसिताः।
स एष क्षत्त्रधर्म्मेण स्थानमेतदवाप्तवान्। भये महति योऽभीतो बभूव पृथिवीपतिः। १५
न तन्मनसि कर्त्तव्यं पुत्त्र यद्द्यूतकारितं। द्रौपद्याश्च परिक्लेशं न चिन्तयितुमर्हसि।
ये चान्येऽपि परिक्लेशा युष्माकं ज्ञातिकारिताः। संग्रामेष्वथ वाऽन्यत्र न तान् संस्मर्त्तुमर्हसि।
समागच्छ यथान्यायं राज्ञा दुर्य्योधनेन वै। स्वर्गोऽयं नेह वैराणि भवन्ति मनुजाधिप।
नारदेनैवमुक्तस्तु कुरुराजो युधिष्ठिरः। भ्रातॄन् पप्रच्छ मेधावी वाक्यमेतदुवाच ह।
यदि दुर्य्योधनस्यैते वीरलोकाः सनातनाः। अधर्म्मज्ञस्य पापस्य पृथिवीसुहृदद्रुहः। २०

यत्कृते पृथिवी नष्टा सहया सनरद्विपा। वयञ्च मन्युना दग्धा वैरं प्रतिचिकीर्षवः।
ये ते वीरा महात्मानो भ्रातरो मे महाव्रताः। सत्यप्रतिज्ञा लोकस्य शूरा वै सत्यवादिनः।
तेषामिदानीं के लोका द्रष्टुमिच्छामि तानहं। कर्णञ्चैव महात्मानं कौन्तेयं सत्यसङ्गरं।
धृष्टद्युम्नं सात्यकिञ्च धृष्टद्युम्नस्य चात्मजान्। ये च शस्त्रैर्वधं प्राप्ताः क्षत्रधर्म्मेण पार्थिवाः।
क्व नु ते पार्थिवा ब्रह्मन्नेतान् पश्यामि नारद। विराटद्रुपदौ चैव धृष्टकेतुमुखांश्च तान्। २५
शिखण्डिनञ्च पाञ्चाल्यं द्रौपदेयांश्च सर्व्वशः। अभिमन्युञ्च दुर्द्धर्षं द्रष्टुमिच्छामि नारद।
इति श्रीमहाभारते स्वर्गारोहणिकपर्व्वणि प्रथमोऽध्यायः॥ १॥

॥ युधिष्ठिर उवाच॥ नेह पश्यामि विबुधा राधेयममितौजसं। भ्रातरौ च महात्मानौ युधामन्यूत्तमौजसौ।
जुहुवुर्ये शरीराणि रणवह्नौ महारथाः। राजानो राजपुत्राश्च ये मदर्थे हता रणे।
क्व ते महारथाः सर्व्वे शार्दूलसमविक्रमाः। तैरप्ययं जितो लोकः कच्चित् पुरुषसत्तमैः।
यदि लोकानिमान् प्राप्तास्ते च सर्व्वे महारथाः। स्थितं वित्त हि मां देवाः सहितं तैर्महात्मभिः। १०
कच्चिन्न तैरवाप्तोऽयं नृपैर्लोकोऽक्षयः शुभः। न तैरहं विना रंस्ये भ्रातृभिर्ज्ञातिभिस्तथा।
मातुर्हि वचनं श्रुत्वा तदा सलिलकर्म्मणि। कर्णस्य क्रियतां तोयमिति तप्यामि तेन वै।
इदञ्च परितप्यामि पुनः पुनरहं सुराः। यन्मातुः सदृशौ पादौ तस्याहममितात्मनः।
दृष्ट्वैव तौ नानुगतः कर्णं परबलार्द्दनं। न ह्यस्मान् कर्णसहितान् जयेच्छक्रोऽपि संयुगे।
तमहं यत्र तत्रस्थं द्रष्टुमिच्छामि सूर्य्यजं। अविज्ञातो मया योऽसौ घातितः सव्यसाचिना। १५
भीमञ्च भीमविक्रान्तं प्राणेभ्योऽपि प्रियं मम। अर्ज्जुनञ्चेन्द्रसदृशं यमौ चैव यमोपमौ।
द्रष्टुमिच्छामि तां चाहं पाञ्चालीं धर्म्मचारिणीं। न चेह स्थातुमिच्छामि सत्यमेतद्ब्रवीमि वः।
किं मे भ्रातृविहीनस्य स्वर्गेण सुरसत्तमाः। यत्र ते मम स स्वर्गो नायं स्वर्गो मतो मम।
॥ देवा ऊचुः॥ यदि वै तत्र ते श्रद्धा गम्यतां पुत्र मा चिरं। प्रिये हि तव वर्त्तामो देवराजस्य शासनात्।
॥ वैशम्पायन उवाच॥ इत्युक्त्वा तं ततो देवा देवदूतमुपादिशन्। युधिष्ठिरस्य सुहृदो दर्शयेति परन्तप। २०
ततः कुन्तीसुतो राजा देवदूतश्च जग्मतुः। सहितौ राजशार्दूल यत्र ते पुरुषर्षभाः।
अग्रतो देवदूतस्तु ययौ राजा च पृष्ठतः। पन्थानमशुभं दुर्गं सेवितं पापकर्म्मभिः।
तमसा संवृतं घोरं केशशैवलशाद्वलं। युक्तं पापकृतां गन्धैर्मांसशोणितकर्द्दमं।
दंशोत्पातकभल्लूकमक्षिकामशकावृतं। इतश्चेतश्च कुणपैः समन्तात् परिवारितं।
अस्थिकेशसमाकीर्णं कृमिकीटसमाकुलं। ज्वलनेन प्रदीप्तेन समन्तात् परिवेष्टितं। २५
अयोमुखैश्च काकाद्यैर्गृध्रैश्च समभिद्रुतं। सूचीमुखैस्तथा प्रेतैर्विन्ध्यशैलोपमैर्वृतं।
मेदोरुधिरयुक्तैश्च छिन्नबाहूरुपाणिभिः। निकृत्तोदरपादैश्च तत्र तत्र प्रवेरितैः।
स तत्कुणपदुर्गन्धमशिवं लोमहर्षणं। जगाम राजा धर्म्मात्मा मध्ये बहु विचिन्तयन्।
ददर्शोष्णोदकैः पूर्णां नदीञ्चापि सुदुर्गमां। असिपत्रवनञ्चैव निशितक्षुरसंवृतं।

करम्भवालुकां तप्तामायसीश्च शिलाः पृथक् । लोहकुम्भांश्च तैलस्य क्वाथ्यमानाः समन्ततः । ५०
कूटशाल्मलिकञ्चापि दुःस्पर्शं तीक्ष्णकण्टकं । ददर्श चापि कौन्तेयो यातनाः पापकर्म्मिणां ।
स तं दुर्गं समालक्ष्य देवदूतमुवाच ह । कियदध्वानमस्माभिर्गन्तव्यमिममीदृशं ।
क्व च ते भ्रातरो मह्यं तन्ममाख्यातुमर्हसि । देशोऽयं कश्च देवानामेतदिच्छामि वेदितुं ।
स सन्निववृते श्रुत्वा धर्म्मराजस्य भाषितं । देवदूतो ऽब्रवीच्चैनमेतावद्गमनं तव ।
निवर्त्तितव्यो हि मया तथा ऽस्म्युक्तो दिवौकसैः । यदि श्रान्तोऽसि राजेन्द्र त्वमथागन्तुमर्हसि । ५५
युधिष्ठिरस्तु निर्व्विण्णस्तेन गन्धेन मूर्च्छितः । निवर्त्तने धृतमना पर्य्यावर्त्तत भारत ।
स सन्निवृत्तो धर्म्मात्मा दुःखशोकसमाहतः । शुश्राव तत्र वदतां दीना वाचः समन्ततः ।
भो भो धर्म्मज राजर्षे पुण्याभिजन पाण्डव । अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्त्तकं ।
आयाति त्वयि दुर्द्धर्षे वाति पुण्यः समीरणः । तव गन्धानुगस्तात येनास्मान् सुखमागमत् ।
ते वयं पार्थ दीर्घस्य कालस्य पुरुषर्षभ । सुखमासादयिष्यामस्त्वां दृष्ट्वा राजसत्तम । ६०
संतिष्ठस्व महाबाहो मुहूर्त्तमपि भारत । त्वयि तिष्ठति कौरव्य यातनाऽस्मान् बाधते ।
एवं बहुविधा वाचः कृपणा वेदनावतां । तस्मिन् देशे स शुश्राव समन्ताद्वदतां नृप ।
तेषान्तु वचनं श्रुत्वा दयावान् दीनभाषिणां । अहो कृच्छ्रमिति प्राह तस्थौ स च युधिष्ठिरः ।
स ता गिरः पुरस्तादै श्रुतपूर्व्वाः पुनः पुनः । ग्लानानां दुःखितानाञ्च नाभ्यजानत पाण्डवः ।
अबुध्यमानस्ता वाचो धर्म्मपुत्रो युधिष्ठिरः । उवाच के भवन्तो वै किमर्थमिह तिष्ठत । ६५
इत्युक्तास्ते ततः सर्व्वे समन्तादवभाषिरे । कर्णोऽहं भीमसेनोऽहमर्ज्जुनोऽहमिति प्रभो ।
नकुलः सहदेवश्च धृष्टद्युम्नोऽहमित्युत । द्रौपदी द्रौपदेयाश्च इत्येवन्ते विचुक्रुशुः ।
ता वाचः स तदा श्रुत्वा तद्देशसदृशीर्नृप । ततो विममृशे राजा किं न्विदं दैवकारितं ।
किन्नु तत् कलुषं कर्म्म कृतमेभिर्म्महात्मभिः । कर्णेन द्रौपदेयैर्व्वा पाञ्चाल्या वा सुमध्यया ।
य इमे पापगन्धेऽस्मिन् देशे सन्ति सुदारुणे । नाहं जानामि सर्व्वेषां दुष्कृतं पुण्यकर्म्मणां । ७०
किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः । तथा श्रिया युतः पापैः सह सर्व्वैः पदानुगैः ।
महेन्द्र इव लक्ष्मीवानास्ते परमपूजितः । कस्येदानीं विकारोऽयं य इमे नरकं गताः ।
सर्व्वधर्म्मविदः शूराः सत्यागमपरायणाः । क्षत्रधर्म्मपराः सन्तो यज्वानो भूरिदक्षिणाः ।
किन्नु सुप्तोऽस्मि जागर्म्मि चेतयामि न चेतये । अहो चित्तविकारोऽयं स्याद्वा मे चित्तविभ्रमः ।
एवं बहुविधं राजा विममर्श युधिष्ठिरः । दुःखशोकसमाविष्टश्चिन्ताव्याकुलितेन्द्रियः । ७५
क्रोधमाहारयच्चैव तीव्रं धर्म्मसुतो नृपः । देवांश्च गर्हयामास धर्म्मञ्चैव युधिष्ठिरः ।
स तीव्रगन्धसन्तप्तो देवदूतमुवाच ह । गम्यतां तत्र येषां त्वं दूतस्तेषामुपान्तिकं ।
न ह्यहं तत्र यास्यामि स्थितोऽस्मीति निवेद्यतां । मत्संश्रयादिमे दूताः सुखिनो भ्रातरो हि मे ।
इत्युक्तः स तदा दूतः पाण्डुपुत्रेण धीमता । जगाम तत्र यत्रास्ते देवराजः शतक्रतुः ।

निवेदयामास च तद्धर्म्मराजचिकीर्षितं । तथोक्तं धर्म्मपुत्त्रेण सर्व्वमेव जनाधिप । ८०

इति श्रीमहाभारते स्वर्गारोहणिकपर्व्वणि युधिष्ठिरस्य नरकदर्शने द्वितीयोऽध्यायः ॥ २ ॥

॥ वैशम्पायन उवाच ॥ स्थिते मुहूर्त्तं पार्थे तु धर्म्मराजे युधिष्ठिरे । आजग्मुस्तत्र कौरव्य देवाः शक्रपुरोगमाः ।
स च विग्रहवान् धर्म्मो राजानं प्रसमीक्षितुं । तत्राजगाम यत्रासौ कुरुराजो युधिष्ठिरः ।
तेषु भासुरदेहेषु पुण्याभिजनकर्म्मसु । समागतेषु देवेषु व्यगमत्तत्तमो नृप ।
नादृश्यन्त च तास्तत्र यातनाः पापकर्म्मिणां । नदी वैतरणी चैव कूटशाल्मलिना सह ।
लोहकुम्भ्यः शिलाश्चैव नादृश्यन्त भयानकाः । विकृतानि शरीराणि यानि तत्र समन्ततः । ८५
ददर्श राजा कौरव्यस्तान्यदृश्यानि चाभवन् । ततो वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ।
ववौ देवसमीपस्थः शीतलोऽतीव भारत । मरुतः सह शक्रेण वसवश्चाश्विनौ सह ।
साध्या रुद्रास्तथादित्या ये चान्येऽपि दिवौकसः । सर्व्वे तत्र समाजग्मुः सिद्धाश्च परमर्षयः ।
यत्र राजा महातेजा धर्म्मपुत्त्रः स्थितोऽभवत् । ततः शक्रः सुरपतिः श्रिया परमया युतः ।
युधिष्ठिरमुवाचेदं सान्त्वपूर्व्वमिदं वचः । युधिष्ठिर महाबाहो प्रीता देवगणास्तव । ९०
एह्येहि पुरुषव्याघ्र कृतमेतावता विभो । सिद्धिः प्राप्ता महाबाहो लोकाश्चाप्यक्षयास्तव ।
न च मन्युस्त्वया कार्य्यः शृणु चेदं वचो मम । अवश्यं नरकस्तात द्रष्टव्यः सर्व्वराजभिः ।
शुभानामशुभानाञ्च द्वौ राशी पुरुषर्षभ । यः पूर्व्वं सुकृतं भुङ्क्ते पश्चान्निरयमेव सः ।
पूर्व्वं नरकभाग्यस्तु पश्चात् स्वर्गमुपैति सः । भूयिष्ठं पापकर्म्मा यः स पूर्व्वं स्वर्गमश्नुते ।
तेन त्वमेवं गमितो मया श्रेयोऽर्थिना नृप । व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति । ९५
व्याजेनैव ततो राजन् दर्शितो नरकस्तव । यथैव त्वं तथा भीमस्तथा पार्थो यमौ तथा ।
द्रौपदी च तथा कृष्णा व्याजेन नरकं गताः । आगच्छ नरशार्दूल मुक्तास्ते चैव कल्मषात् ।
स्वपक्षाश्चैव ये तुभ्यं पार्थिवा निहता रणे । सर्व्वे स्वर्गमनुप्राप्तास्तान् पश्य भरतर्षभ ।
कर्णश्चैव महेष्वासः सर्व्वशस्त्रभृतां वरः । स गतः परमां सिद्धिं यदर्थं परितप्यसे ।
तं पश्य पुरुषव्याघ्रमादित्यतनयं विभो । स्वस्थानस्थं महाबाहो जहि शोकं नरर्षभ । १००
भ्रातॄंश्चान्यांस्तथा पश्य स्वपक्षांश्चैव पार्थिवान् । स्वं स्वं स्थानमनुप्राप्तान् व्येतु ते मानसो ज्वरः ।
कृच्छ्रं पूर्व्वञ्चानुभूय इतः प्रभृति कौरव । विहरस्व मया सार्द्धं गतशोको निरामयः ।
कर्म्मणां तात पुण्यानां जितानां तपसा स्वयं । दानानाञ्च महाबाहो फलं प्राप्नुहि पार्थिव ।
अद्य त्वां देवगन्धर्व्वा दिव्याश्चाप्सरसो दिवि । उपसेवन्तु कल्याणं विरजोऽम्बरभूषणाः ।
राजसूयजितान् लोकानश्वमेधाभिवर्द्धितान् । प्राप्नुहि त्वं महाबाहो तपसश्च महाफलं । १०५
उपर्य्युपरि राज्ञां हि तव लोका युधिष्ठिर । हरिश्चन्द्रसमाः पार्थ येषु त्वं विहरिष्यसि ।
मान्धाता यत्र राजर्षिर्यत्र राजा भगीरथः । दौष्मन्तिर्यत्र भरतस्तत्र त्वं विहरिष्यसि ।
एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी । आकाशगङ्गा राजेन्द्र तत्राप्लुत्य गमिष्यसि ।

अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति । गतशोको निरायासो मुक्तवैरो भविष्यसि ।
एवं ब्रुवति देवेन्द्रे कौरवेन्द्रं युधिष्ठिरं । धर्म्मो विग्रहवान् साक्षादुवाच सुतमात्मनः । ११०
भो भो राजन्महाप्राज्ञ प्रीतोऽस्मि तव पुत्रक । मद्भक्त्या सत्यवाक्येन क्षमया च दमेन च ।
एषा तृतीया जिज्ञासा तव राजन् कृता मया । न शक्यसे चालयितुं स्वभावात् पार्थ हेतुनः ।
पूर्व्वं परीक्षितो हि त्वं प्रश्नाद्द्वैतवने मया । अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि ।
सोदर्य्येषु विनष्टेषु द्रौपद्यां तत्र भारत । श्वरूपधारिणा पुत्र पुनस्त्वं मे परीक्षितः ।
इदं तृतीयं भ्रातॄणामर्थे यत् स्थातुमिच्छसि । विशुद्धोऽसि महाभाग सुखी विगतकल्मषः । ११५
न च ते भ्रातरः पार्थ नरकार्हा विशाम्पते । मायैषा देवराजेन महेन्द्रेण प्रयोजिता ।
अवश्यं नरकास्तात द्रष्टव्याः सर्व्वराजभिः । ततस्त्वया प्राप्तमिदं मुहूर्त्तं दुःखमुत्तमं ।
न सव्यसाची भीमो वा यमौ वा पुरुषर्षभौ । कर्णो वा सत्यवाक् शूरो नरकार्हाश्चिरं नृप ।
न कृष्णा राजपुत्री च नरकार्हा युधिष्ठिर । एह्येहि भरतश्रेष्ठ पश्य गङ्गां त्रिलोकगां ।
एवमुक्तः स राजर्षिस्तव पूर्व्वपितामहः । जगाम सह धर्म्मेण सर्व्वैश्च त्रिदिवालयैः । १२०
गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्तुतां । अवगाह्य ततो राजा तनुं तत्याज मानुषीं ।
ततो दिव्यवपुर्भूत्वा धर्म्मराजो युधिष्ठिरः । निर्वैरो गतसन्तापो जले तस्मिन् समाप्लुतः ।
ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः । धर्म्मेण सहितो धीमान् स्तूयमानो महर्षिभिः ।
यत्र ते पुरुषव्याघ्राः शूरा विगतमन्यवः । पाण्डवा धार्त्तराष्ट्राश्च स्वानि स्थानानि भेजिरे ।
इति श्रीमहाभारते स्वर्गारोहणिकपर्व्वणि युधिष्ठिरतनुत्यागे तृतीयोऽध्यायः ॥ ३ ॥
॥ वैशम्पायन उवाच ॥ ततो युधिष्ठिरो राजा देवैः सर्षिमरुद्गणैः । स्तूयमानो ययौ तत्र यत्र ते कुरुपुङ्गवाः । १२५
ददर्श तत्र गोविन्दं ब्राह्मेण वपुषाऽन्वितं । तेनैव दृष्टपूर्व्वेण सादृश्येनैव सूचितं ।
दीप्यमानं स्ववपुषा दिव्यैरस्त्रैरुपस्थितं । चक्रप्रभृतिभिर्घोरैर्दिव्यैः पुरुषविग्रहैः ।
उपास्यमानं वीरेण फाल्गुनेन सुवर्च्चसा । तथा स्वरूपं कौन्तेयो ददर्श मधुसूदनं ।
तावुभौ पुरुषव्याघ्रौ समुद्वीक्ष्य युधिष्ठिरं । यथावत् प्रतिपेदाते पूजया देवपूजितौ ।
अपरस्मिन्नथोद्देशे कर्णं शस्त्रभृतां वरं । द्वादशादित्यसदृशं ददर्श कुरुनन्दनः । १३०
अथापरस्मिन्नुद्देशे मरुद्गणवृतं विभुं । भीमसेनमथापश्यत्तेनैव वपुषाऽन्वितं ।
वायोर्मूर्त्तिमतः पार्श्वे दिव्यमूर्त्तिसमन्वितं । श्रिया परमया युक्तं सिद्धिं परमिकां गतं ।
अश्विनोस्तु तथा स्थाने दीप्यमानौ स्वतेजसा । नकुलं सहदेवञ्च ददर्श कुरुनन्दनः ।
तथा ददर्श पाञ्चालीं कमलोत्पलमालिनीं । वपुषा स्वर्गमाक्रम्य तिष्ठन्तीमर्कवर्च्चसं ।
अथैनां सहसा राजा प्रष्टुमैच्छद्युधिष्ठिरः । ततोऽस्य भगवानिन्द्रः कथयामास देवराट् । १३५
श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता । अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर ।
रत्यर्थं भवतां ह्येषा निर्म्मिता शूलपाणिना । द्रुपदस्य कुले जाता भवद्भिश्चोपजीविता ।

एते पञ्च महाभागा गन्धर्व्वाः पावकप्रभाः । द्रौपदेयास्तनया राजन् युष्माकममितौजसः ।
पश्य गन्धर्व्वराजानं धृतराष्ट्रं मनीषिणं । एनञ्च त्वं विजानीहि भ्रातरं पूर्व्वजं पितुः ।
अयन्ते पूर्व्वजो भ्राता कौन्तेयः पावकद्युतिः । सूर्य्यपुत्त्रोऽग्रजः श्रेष्ठो राधेय इति विश्रुतः । १४०
आदित्यसहितो याति पश्यैनं पुरुषर्षभं । साध्यानामथ देवानां विश्वेषां मरुतामपि ।
गणेषु पश्य राजेन्द्र वृष्ण्यन्धकमहारथान् । सात्यकिप्रमुखान् वीरान् भोजांश्चैव महाबलान् ।
सोमेन सहितं पश्य सौभद्रमपराजितं । अभिमन्युं महेष्वासं निशाकरसमद्युतिं ।
एष पाण्डुर्म्महेष्वासः कुन्त्या माद्र्या च सङ्गतः । विमानेन सदाऽभ्येति पिता तव ममान्तिकं ।
वसुभिः सहितं पश्य भीष्मं शान्तनवं नृपं । द्रोणं बृहस्पतेः पार्श्वे गुरुमेनं निशामय । १४५
एते चान्ये महीपाला योधास्तव च पाण्डव । गन्धर्व्वसहिता यान्ति यक्षपुण्यजनैस्तथा ।
गुह्यकानां गतिञ्चापि केचित् प्राप्ता नराधिपाः । त्यक्त्वा देहं जितस्वर्गाः पुण्यवाग्बुद्धिकर्म्मभिः ।
इति श्रीमहाभारते स्वर्गारोहणिकपर्व्वणि चतुर्थोऽध्यायः ॥ ४ ॥
॥ जनमेजय उवाच ॥ भीष्मद्रोणौ महात्मानौ धृतराष्ट्रश्च पार्थिवः । विराटद्रुपदौ चोभौ शङ्खश्चैवोत्तरस्तथा ।
धृष्टकेतुर्जयत्सेनो राजा चैव सत्यजित् । दुर्य्योधनसुताश्चैव शकुनिश्चैव सौबलः ।
कर्णपुत्त्राश्च विक्रान्ता राजा चैव जयद्रथः । घटोत्कचादयश्चैव ये चान्ये नानुकीर्त्तिताः । १५०
ये चान्ये कीर्त्तिता वीरा राजानो दीप्तमूर्त्तयः । स्वर्गे कालं कियन्तं ते तस्थुस्तदपि शंस मे ।
आहोस्वित् शाश्वतं स्थानं तेषां तत्र द्विजोत्तम । अन्ते वा कर्म्मणः कान्ते गतिं प्राप्ता नरर्षभाः ।
एतदिच्छाम्यहं श्रोतुं प्रोच्यमानं द्विजोत्तम । तपसा हि प्रदीप्तेन सर्व्वं त्वमनुपश्यसि ।
॥ सौतिरुवाच ॥ इत्युक्तः स तु विप्रर्षिरनुज्ञातो महात्मना । व्यासेन तस्य नृपतेराख्यातुमुपचक्रमे ।
॥ वैशम्पायन उवाच ॥ न शक्यं कर्म्मणामन्ते सर्व्वेण मनुजाधिप । प्रकृतिं किन्नु सम्यक् ते पृच्छैषा संप्रयोजिता । १५५
शृणु गुह्यमिदं राजन् देवानां भरतर्षभ । यदुवाच महातेजा दिव्यचक्षुः प्रतापवान् ।
मुनिः पुराणः कौरव्य पाराशर्य्यो महाव्रतः । अगाधबुद्धिः सर्व्वज्ञो गतिज्ञः सर्व्वकर्म्मणां ।
वसूनेव महातेजा भीष्मः प्राप महाद्युतिः । अष्टावेव हि दृश्यन्ते वसवो भरतर्षभ ।
बृहस्पतिं विवेशाथ द्रोणो ह्यङ्गिरसां वरं । कृतवर्म्मा तु हार्द्दिक्यः प्रविवेश मरुद्गणान् ।
सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतं । धृतराष्ट्रो धनेशस्य लोकान् प्राप दुरासदान् । १६०
धृतराष्ट्रेण सहिता गान्धारी च यशस्विनी । पत्नीभ्यां सहितः पाण्डुर्म्महेन्द्रसदनं ययौ ।
विराटद्रुपदौ चोभौ धृष्टकेतुश्च पार्थिवः । निशठाक्रूरसाम्बाश्च भानुः कम्पो विदूरथः ।
भूरिश्रवाः शलश्चैव भूरिश्च पृथिवीपतिः । कंसश्चैवोग्रसेनश्च वसुदेवस्तथैव च ।
उत्तरश्च सह भ्रात्रा शङ्खेन नरपुङ्गवः । विश्वेषां देवतानान्ते विविशुर्नरपुङ्गवाः ।
वर्च्चा नाम महातेजाः सोमपुत्त्रः प्रतापवान् । सोऽभिमन्युर्नृसिंहस्य फाल्गुनस्य सुतोऽभवत् । १६५
स युद्ध्वा क्षत्रधर्म्मेण यथा नान्यः पुमान् क्वचित् । विवेश सोमं धर्म्मात्मा कर्म्मणोऽन्ते महारथः ।

आविवेश रविं कर्णो निहतः पुरुषर्षभ । द्वापरं शकुनिः प्राप धृष्टद्युम्नस्तु पावकं ।
धृतराष्ट्रात्मजाः सर्वे यातुधाना बलोत्कटाः । ऋद्धिमन्तो महात्मानः शस्त्रपूता दिवं गताः ।
धर्म्ममेवाविशत् क्षत्ता राजा चैव युधिष्ठिरः । अनन्तो भगवान् देव प्रविवेश रसातलं ।
पितामहनियोगाद्धि यो योगाद्गामधारयत् । यः स नारायणो नाम देवदेवः सनातनः । १०
तस्यांशो वासुदेवस्तु कर्म्मणोऽन्ते विवेश ह । षोडश स्त्रीसहस्राणि वासुदेवपरिग्रहः ।
अमज्जंस्ताः सरस्वत्यां कालेन जनमेजय । तत्र त्यक्त्वा शरीराणि दिवमारुरुहुः पुनः ।
ताश्चैवाप्सरसो भूत्वा वासुदेवमुपागमन् । हतास्तस्मिन्महायुद्धे ये वीरास्तु महारथाः ।
घटोत्कचादयश्चैव देवान् यक्षांश्च भेजिरे । दुर्य्योधनसहायाश्च राक्षसाः परिकीर्त्तिताः ।
प्राप्तास्ते क्रमशो राजन् सर्व्वे लोकाननुत्तमान् । भवनञ्च महेन्द्रस्य कुवेरस्य च धीमतः । १५
वरुणस्य तथा लोकान् विविशुः पुरुषर्षभाः । एतत्ते सर्व्वमाख्यातं विस्तरेण महाद्युते ।
कुरूणाञ्चरितं कृत्स्नं पाण्डवानाञ्च भारत ।
॥ सौतिरुवाच ॥ एतच्छ्रुत्वा द्विजश्रेष्ठाः स राजा जनमेजयः । विस्मितोऽभवदत्यर्थं यज्ञकर्म्मान्तरेष्वथ ।
ततः समापयामासुः कर्म्म तत्तस्य याजकाः । आस्तीकश्चाभवत् प्रीतः परिमोक्ष्य भुजङ्गमान् ।
ततो द्विजातीन् सर्व्वांस्तान् दक्षिणाभिरतोषयत् । पूजिताश्चापि ते राज्ञा ततो जग्मुर्यथागतं । २०
विसर्ज्जयित्वा विप्रांस्तान् राजापि जनमेजयः । ततस्तक्षशिलायाः स पुनरायाद्गजाह्वयं ।
एतत्ते सर्व्वमाख्यातं वैशम्पायनकीर्त्तितं । व्यासाज्ञया समाख्यातं सर्पसत्रे नृपस्य हि ।
पुण्योऽयमितिहासाख्यः पवित्रञ्चेदमुत्तमं । कृष्णेन मुनिना विप्र निर्म्मितं सत्यवादिना ।
सर्व्वज्ञेन विधिज्ञेन धर्म्मज्ञानवता सता । अतीन्द्रियेण शुचिना तपसा भावितात्मना ।
ऐश्वर्य्ये वर्त्तता चैव साङ्ख्ययोगवता तथा । नैकतन्त्रविबुद्धेन दृष्ट्वा दिव्येन चक्षुषा । २५
कीर्त्तिं प्रथयता लोके पाण्डवानां महात्मनां । अन्येषां क्षत्रियाणाञ्च भूरिद्रविणतेजसां ।
यश्चेदं श्रावयेद्विद्वान् सदा पर्व्वणि पर्व्वणि । धूतपाप्मा जितस्वर्गो ब्रह्मभूयाय कल्पते ।
कार्ष्णं वेदमिमं सर्व्वं शृणुयाद्यः समाहितः । ब्रह्महत्यादिपापानां कोटिस्तस्य विनश्यति ।
यश्चेदं श्रावयेत् श्राद्धे ब्राह्मणान् पादमन्ततः । अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ।
अह्ना यदेनः कुरुते इन्द्रियैर्म्मनसापि वा । महाभारतमाख्याय पश्चात् सन्ध्यां प्रमुच्यते । ३०
यद्रात्रौ कुरुते पापं ब्राह्मणः स्त्रीगणैर्वृतः । महाभारतमाख्याय पूर्व्वां सन्ध्यां प्रमुच्यते ।
महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते । निरुक्तमस्य यो वेद सर्व्वपापैः प्रमुच्यते ।
धर्म्मे चार्थे च कामे च मोक्षे च भरतर्षभ । यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ।
जयो नामेतिहासोऽयं श्रोतव्यो मोक्षमिच्छता । ब्राह्मणेन च राज्ञा च गर्भिण्या चैव योषिता ।
स्वर्गकामो लभेत् स्वर्गं जयकामो लभेज्जयं । गर्भिणी लभते पुत्रं कन्यां वा बहुभागिनीं । ३५
अनागतश्च मोक्षश्च कृष्णद्वैपायनः प्रभुः । सन्दर्भं भारतस्यास्य कृतवान् धर्म्मकाम्यया ।

षष्टिं शतसहस्राणि चकारान्यां स संहितां। त्रिंशच्छतसहस्राणि देवलोके प्रतिष्ठितं।

पित्र्ये पञ्चदश प्रोक्तं यक्षलोके चतुर्द्दश। एकं शतसहस्रन्तु मानुषेषु प्रभाषितं।

नारदोऽश्रावयद्देवानसितो देवलः पितॄन्। रक्षोयक्षाञ्छुको मर्त्त्यान् वैशम्पायन एव तु।

इतिहासमिमं पुण्यं महार्थं वेदसम्मितं। श्रावयेद्यस्तु वर्णांस्त्रीन् कृत्वा ब्राह्मणमग्रतः। २००

स नरः सर्व्वकामांश्च कीर्त्तिं प्राप्येह शौनक। गच्छेत् परमिकां सिद्धिमत्र मे नास्ति संशयः।

भारताध्ययनात् पुण्यादपि पादमधीयतः। श्रद्धया परया भक्त्या श्राव्यते चापि येन तु।

य इमां संहितां पुण्यां पुत्त्रमध्यापयत् शुकं। मातापितृसहस्राणि पुत्त्रदारशतानि च।

संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे। हर्षस्थानसहस्राणि भयस्थानशतानि च।

दिवसे दिवसे मूढमाविशन्ति न पण्डितं। ऊर्द्धबाहुर्व्विरौम्येष न च कश्चिच्छृणोति मे। २०५

धर्म्माद् अर्थश्च कामश्च स किमर्थं न सेव्यते।

न जातु कामान्न भयान्न लोभाद्धर्म्मं त्यजेज्जीवितस्यापि हेतोः। नित्यो धर्म्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः।

इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत्। स भारतफलं प्राप्य परं ब्रह्माधिगच्छति।

यथा समुद्रो भगवान् यथा च हिमवान् गिरिः। ख्यातावुभौ रत्ननिधी तथा भारतमुच्यते।

इदं भारतमाख्यानं यः पठेत् सुसमाहितः। स गच्छेत् परमां सिद्धिमिति मे नास्ति संशयः। २१०

द्वैपायनोष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथ पापहरं शिवञ्च। यो भारतं समधिगच्छति वाच्यमानं किं तस्य पुष्करजलै रभिषेचनेन।

इति श्रीमहाभारते स्वर्गारोहणिकपर्व्वणि पञ्चमोऽध्यायः॥ ५॥

॥ जनमेजय उवाच ॥ भगवन् केन विधिना श्रोतव्यं भारतं बुधैः। फलं किं के च देवाश्च पूज्या वै पारणेष्विह।

देयं समाप्ते भगवन् किञ्च पर्व्वणि पर्व्वणि। वाचकः कीदृशश्चात्र एष्टव्यस्तद्ब्रवीहि मे।

॥ वैशम्पायन उवाच ॥ शृणु राजन् विधिमिमं फलं यच्चापि भारतात्। श्रुताद्भवति राजेन्द्र यत्त्वं मामनुपृच्छसि।

दिवि देवा महीपाल क्रीडार्थमवनिं गताः। आदित्या वस्विनौ देवौ लोकपाला महर्षयः। २१५

गुह्यकाश्च सगन्धर्व्वा नागा विद्याधरास्तथा। सिद्धा धर्म्माः स्वयम्भूश्च मुनिभिः कात्यायनः।

गिरयः सागरा नद्यस्तथैवाप्सरसां गणाः। ग्रहाः संवत्सराश्चैव अयना ऋतवस्तथा।

स्थावरं जङ्गमञ्चैव जगत् सर्व्वं सुरासुरं। भारते भरतश्रेष्ठ एकस्थमिह दृश्यते।

तेषां श्रुत्वा प्रतिष्ठानं नामकर्म्मानुकीर्त्तनात्। कृत्वाऽपि पातकं घोरं सद्यो मुच्येत मानवः।

इतिहासमिमं श्रुत्वा यथावदनुपूर्व्वशः। संयतात्मा शुचिर्भूत्वा पारं गत्वा च भारते। २२०

तेषां श्राद्धानि देयानि श्रुत्वा भारतभारतं। ब्राह्मणेभ्यो यथाशक्त्या भक्त्या च भरतर्षभ।

महादानानि देयानि रत्नानि विविधानि च। गावः कांस्योपदोहाश्च कन्याश्चैव स्वलङ्कृताः।

सर्व्वकामगुणोपेता यानानि विविधानि च। भवनानि विचित्राणि भूमिर्व्वासांसि काञ्चनं।

वाहनानि च गेहानि तथा मत्ताश्च वारणाः । शयनं शिबिकाश्चैव स्यन्दनाश्च स्वलङ्कृताः ।
यद्यद्गृहे वरं किञ्चिद्यदस्ति महदिमहद्वसु । तत्तद्देयं द्विजातिभ्य आत्मा दाराश्च सूनवः । २२५
श्रद्धया परया दत्तं क्रमशस्तस्य पारगः । शक्तितः सुमना हृष्टः शुश्रूषुरविकल्पकः ।
सत्यार्जवरतो दान्तः शुचिः शौचसमन्वितः । श्रद्दधानो जितक्रोधो यथा सिद्ध्यति तच्छृणु ।
शुचिः शीलान्विताचारः शुक्लवासा जितेन्द्रियः । संस्कृतः सर्व्वशास्त्रज्ञः श्रद्दधानोऽनसूयकः ।
रूपवान् सुभगो दान्तः सत्यवादी जितेन्द्रियः । दानमानगृहीतश्च कार्य्यो भवति वाचकः ।
अविलम्बमनायस्तमद्रुतं धीरमूर्ज्जितं । असंसक्ताक्षरपदं स्वरभावसमन्वितं । २३०
त्रिषष्टिवर्णसंयुक्तमष्टस्थानसमीरितं । वाचयेद्वाचकः स्वस्थः स्वासीनः सुसमाहितः ।
नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ।
ईदृशाद्वाचकाद्राजन् श्रुत्वा भारतभारतं । नियमस्थः शुचिः श्रोता शृण्वन् स फलमश्नुते ।
पारणं प्रथमं प्राप्य द्विजान् कामैश्च तर्पयेत् । अग्निष्टोमस्य यज्ञस्य फलं वै लभते नरः ।
अप्सरोगणसंकीर्णं विमानं लभते महत् । प्रहृष्टः स तु देवैश्च दिवं याति समाहितः । २३५
द्वितीयं पारणं प्राप्य सोऽतिरात्रफलं लभेत् । सर्व्वरत्नमयं दिव्यं विमानमधिरोहति ।
दिव्यमाल्याम्बरधरो दिव्यगन्धविभूषितः । दिव्यगन्धधरो नित्यं देवलोके महीयते ।
तृतीयं पारणं प्राप्य द्वादशाहफलं लभेत् । वसत्यमरसङ्काशो वर्षाण्ययुतशो दिवि ।
चतुर्थे वाजपेयस्य पञ्चमे द्विगुणं फलं । उदितादित्यसङ्काशं ज्वलन्तमनलोपमं ।
विमानं विबुधैः सार्द्धमारुह्य दिवि गच्छति । वर्षायुतानि भवने शक्रस्य दिवि मोदते । २४०
षष्ठे द्विगुणमस्तीति सप्तमे त्रिगुणं फलं । कैलासशिखराकारं वैदूर्य्यमणिवेदिकं ।
परिक्षिप्तञ्च बहुधा मणिविद्रुमभूषितं । विमानं समधिष्ठाय कामगं साप्सरोगणं ।
सर्व्वान् लोकान् विचरते द्वितीय इव भास्करः । अष्टमे राजसूयस्य पारणे लभते फलं ।
चन्द्रोदयनिभं रम्यं विमानमधिरोहति । चन्द्ररश्मिप्रतीकाशैर्हयैर्युक्तं मनोजवैः ।
सेव्यमानं वरस्त्रीणां चन्द्रात् कान्ततरैर्मुखैः । मेखलानां निनादेन नूपुराणाञ्च निःस्वनैः । २४५
अङ्के परमनारीणां सुखसुप्तो विबुध्यते । नवमे क्रतुराजस्य वाजिमेधस्य भारत ।
काञ्चनस्तम्भनिर्य्यूहं वैदूर्य्यकृतवेदिकं । जाम्बूनदमयैर्दिव्यैर्गवाक्षैः सर्व्वतो वृतं ।
सेवितञ्चाप्सरःसङ्घैर्गन्धर्व्वैर्दिविचारिभिः । विमानं समधिष्ठाय श्रिया परमया ज्वलन् ।
दिव्यमाल्याम्बरधरो दिव्यचन्दनभूषितः । मोदते दैवतैः सार्द्धं दिवि देव इवापरः ।
दशमं पारणं प्राप्य द्विजातीनभिवन्द्य च । किङ्किणीजालनिर्घोषं पताकाध्वजशोभितं । २५०
रत्नवेदिकसम्बाधं वैदूर्य्यमणितोरणं । हेमजालपरिक्षिप्तं प्रवालवलभीमुखं ।
गन्धर्व्वैर्गीतिकुशलैरप्सरोभिश्च शोभितं । विमानं सुकृतावासं सुखेनैवोपपद्यते ।
मुकुटेनाग्निवर्णेन जाम्बूनदविभूषिणा । दिव्यचन्दनदिग्धाङ्गो दिव्यमाल्यविभूषितः ।

दिव्यान् लोकान् विचरति दिव्यैर्भोगैः समन्वितः । विबुधानां प्रसादेन श्रिया परमया युतः ।
अथ वर्षगणानेवं स्वर्गलोके महीयते । अयं गन्धर्व्वसहितः सहस्राण्येकविंशतिं । ४५
पुरन्दरपुरे रम्ये शक्रेण सह मोदते । दिव्ययानविमानेषु लोकेषु विविधेषु च ।
दिव्यनारीगणाकीर्णो निवसत्यमरो यथा । ततः सूर्य्यस्य भवने चन्द्रस्य भवने तथा ।
शिवस्य भवने राजन् विष्णोर्य्याति सलोकतां । एवमेतन्महाराज नात्र कार्य्या विचारणा ।
श्रद्दधानेन वै भाव्यमेवमाह गुरुर्म्मम । वाचकस्य तु दातव्यं मनसा यद्यदिच्छति ।
हस्त्यश्वरथयानानि वाहनानि विशेषतः । कटके कुण्डले चैव ब्रह्मसूत्रं तथा परं । ५०
वस्त्रञ्चैव विचित्रञ्च गन्धञ्चैव विशेषतः । देववत् पूजयेत्तन्तु विष्णुलोकमवाप्नुयात् ।
अतः परं प्रवक्ष्यामि यानि देयानि भारते । वाच्यमाने तु विप्रेभ्यो राजन् पर्व्वणि पर्व्वणि ।
जातिं देशञ्च सत्यञ्च माहात्म्यं भरतर्षभ । धर्म्मवृत्तिञ्च विज्ञाय क्षत्रियाणां नराधिप ।
स्वस्तिवाच्य द्विजानादौ ततः कार्य्यं प्रवर्त्तिते । समाप्ते पर्व्वणि ततः स्वशक्त्या पूजयेद्द्विजान् ।
आदौ तु वाचकञ्चैव वस्त्रगन्धसमन्वितं । विधिवद्भोजयेद्राजन्मधुपायसमुत्तमं । ५५
ततो मूलफलप्रायं पायसं मधुसर्पिषा । आस्तीके भोजयेद्राजन् दद्याच्चैव गुडौदनं ।
अपूपैश्चैव पूपैश्च मोदकैश्च समन्वितं । सभापर्व्वणि राजेन्द्र हविष्यं भोजयेद्द्विजान् ।
आरण्यके मूलफलैस्तर्पयेत्तु द्विजोत्तमान् । अरणीपर्व्व चासाद्य जलकुम्भं प्रदापयेत् ।
तर्पणानि च मुख्यानि धान्यमूलफलानि च । सर्व्वकामगुणोपेतं विप्रेभ्योऽन्नं प्रदापयेत् ।
विराटपर्व्वणि तथा वासांसि विविधानि च । उद्योगे भरतश्रेष्ठ सर्व्वकामगुणान्वितं । ६०
भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान् । भीष्मपर्व्वणि राजेन्द्र दत्त्वा यानमनुत्तमं ।
ततः सर्व्वगुणोपेतमन्नं दद्यात् सुसंस्कृतं । द्रोणपर्व्वणि विप्रेभ्यो भोजनं परमार्च्चितं ।
शय्याश्च देया राजेन्द्र चापान्यसिवरांस्तथा । कर्णपर्व्वण्यपि तथा भोजनं सार्व्वकामिकं ।
विप्रेभ्यः संस्कृतं सम्यग्दद्यात् संयतमानसः । शल्यपर्व्वणि राजेन्द्र मोदकैः सगुडौदनैः ।
अपूपैस्तर्पणैश्चैव सर्व्वमन्नं प्रदापयेत् । गदापर्व्वण्यपि तथा मुद्गमिश्रं प्रदापयेत् । ६५
स्त्रीपर्व्वणि तथा रत्नैस्तर्पयेत्तु द्विजोत्तमान् । घृतौदनं पुरस्ताच्च ऐषीके दापयेत् पुनः ।
ततः सर्व्वगुणोपेतमन्नं दद्यात् सुसंस्कृतं । शान्तिपर्व्वण्यपि तथा हविष्यं भोजयेद्द्विजान् ।
आश्वमेधिकं समासाद्य भोजनं सार्व्वकामिकं । तथाश्रमनिवासे तु हविष्यं भोजयेद्द्विजान् ।
मौषले सार्व्वगुणिकं गन्धमाल्यानुलेपनं । महाप्रस्थानिके तद्वत् सर्व्वकामगुणान्वितं ।
स्वर्गपर्व्वण्यपि तथा हविष्यं भोजयेद्द्विजान् । हरिवंशसमाप्तौ तु सहस्रं भोजयेद्द्विजान् । ७०
गामेकां निष्कसंयुक्तां ब्राह्मणाय निवेदयेत् । तदर्द्धेनापि दातव्या दरिद्रेणापि पार्थिव ।
सर्व्वपर्व्वसमाप्तौ तु पुस्तकं वै विचक्षणः । सुवर्णेन च संयुक्तं वाचकाय निवेदयेत् ।

हरिवंशे पर्व्वणि च पायसं तत्र भोजयेत् । पारणे पारणे राजन् यथावद्भरतर्षभ ।
समाप्य सर्व्वाः प्रयतः संहिताः शास्त्रकोविदः । शुभे देशे निवेश्याथ क्षौमवस्त्राभिसंवृताः ।
शुक्लाम्बरधरः स्रग्वी शुचिर्भूत्वा स्वलङ्कृतः । अर्च्चयेत यथान्यायं गन्धमाल्यैः पृथक् पृथक् । ८५
संहितापुस्तकान् राजन् प्रयतः सुसमाहितः । भक्ष्यैर्भोज्यैश्च पेयैश्च कामैश्च विविधैः शुभैः ।
हिरण्यञ्च सुवर्णञ्च दक्षिणामथ दापयेत् । देवताः कीर्त्तयेत् सर्व्वा नरनारायणौ तथा ।
ततो गन्धैश्च माल्यैश्च स्वलङ्कृत्य द्विजोत्तमान् । तर्पयेद्विविधैः कामैर्दानैश्चोच्चावचैस्तथा ।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः । प्राप्नुयाच्च क्रतुफलं तथा पर्व्वणि पर्व्वणि ।
वाचको भरतश्रेष्ठ व्यक्ताक्षरपदस्वरः । भविष्यं श्रावयेद्विद्वान् भारतं भरतर्षभ । ९०
भुक्तवत्सु द्विजेन्द्रेषु यथावत् संप्रदापयेत् । वाचकं भरतश्रेष्ठ भोजयित्वा स्वलङ्कृत ।
वाचके परितुष्टे तु शुभा प्रीतिरनुत्तमा । ब्राह्मणेषु तु तुष्टेषु प्रसन्नाः सर्व्वदेवताः ।
ततो हि वरणं कार्य्यं द्विजानां भरतर्षभ । सर्व्वकामैर्यथान्यायं साधुभिश्च पृथग्विधैः ।
इत्येष विधिरुद्दिष्टो मया ते द्विपदाम्वर । श्रद्दधानेन वै भाव्यं यन्मां त्वं परिपृच्छसि ।
भारतश्रवणे राजन् पारणे च नृपोत्तम । सदा यत्नवता भाव्यं श्रेयस्तु परमिच्छता । ९५
भारतं शृणुयान्नित्यं भारतं परिकीर्त्तयेत् । भारतं भवने यस्य तस्य हस्तगतो जयः ।
भारतं पावनं पुण्यं भारते विविधाः कथाः । भारतं सेव्यते देवैर्भारतं परमं पदं ।
भारतं सर्व्वशास्त्राणामुत्तमं भरतर्षभ । भारतात् प्राप्यते मोक्षस्तत्त्वमेतद्ब्रवीमि ते ।
महाभारतमाख्यानं क्षितिं गाञ्च सरस्वतीं । ब्राह्मणान् केशवञ्चैव कीर्त्तयन्नावसीदति ।
वेदे रामायणे पुण्ये भारते भरतर्षभ । आदौ चान्ते च मध्ये च हरिः सर्व्वत्र गीयते । १००
यत्र विष्णुकथा दिव्या श्रुतयश्च सनातनाः । तत् श्रोतव्यं मनुष्येण परं पदमिहेच्छता ।
एतत् पवित्रं परममेतद्धर्म्मनिदर्शनं । एतत् सर्व्वगुणोपेतं श्रोतव्यं भूतिमिच्छता ।
कायिकं वाचिकञ्चैव मनसा समुपार्ज्जितं । तत् सर्व्वं नाशमायाति तमः सूर्य्योदये यथा ।
अष्टादशपुराणानां श्रवणाद्यत् फलं लभेत् । तत् फलं समवाप्नोति वैष्णवो नात्र संशयः ।
स्त्रियश्च पुरुषाश्चैव वैष्णवं पदमाप्नुयुः । स्त्रीभिश्च पुत्रकामाभिः श्रोतव्यं वैष्णवं यशः । १०५
दक्षिणा चात्र देया वै निष्कपञ्च सुवर्णकं । वाचकाय यथाशक्त्या यथोक्तं फलमिच्छता ।
स्वर्णशृङ्गीञ्च कपिलां सवत्सां वस्त्रसंवृतां । वाचकाय च दद्याद्धि आत्मनः श्रेयमिच्छता ।
अलङ्कारं प्रदद्याच्च पाण्यो वै भरतर्षभ । कर्णस्याभरणं दद्याद्धनञ्चैव विशेषतः ।
भूमिदानं समाद्यद्वाचकाय नराधिप । भूमिदानसमं दानं न भूतं न भविष्यति ।
शृणोति श्रावयेद्वाऽपि सततञ्चैव यो नरः । सर्व्वपापविनिर्म्मुक्तो वैष्णवं पदमाप्नुयात् । ११०
पितॄनुद्धरते सर्व्वानेकादश समुद्भवान् । आत्मानं ससुतञ्चैव स्त्रियश्च भरतर्षभ ।

दंशाश्चैव होमोऽपि कर्त्तव्योऽत्र नराधिप । इदं मया तवाग्रे च प्रोक्तं सर्वं नरर्षभ ।

इति श्रीमहाभारते स्वर्गारोहणपर्व्वणि सर्व्वपर्व्वानुकीर्त्तने षष्ठोऽध्यायः ॥ ६ ॥

॥ समाप्तञ्चेदं स्वर्गारोहणिकपर्व्व ॥

अत्र यथोक्ताध्यायश्लोकसंख्यान्यूनाधिक्यं लिपिकरप्रमादाज्जातोर्थं ॥



# श्रीमहाभारतं

॥ अथ खिलहरिवंशपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

द्वैपायनौष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथ पापहरं शिवञ्च। यो भारतं समधिगच्छति वाच्यमानं किं तस्य पुष्कर जलैरभिषेचनेन।

जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः। यस्यास्यकमलगलितं वाङ्मयममृतं जगत् पिबति।

यो गोशतं कनकशृङ्गमयं ददाति विप्राय वेदविदुषे च बहुश्रुताय। पुण्यां च भारतकथां शृणुयाच्च नरस्तुल्यं फलं भवति तस्य च तस्य चैव।

शताश्वमेधस्य यदत्र पुण्यं चतुःसहस्रस्य शतक्रतोश्च। भवेदनन्तं हरिवंशनाम्ना प्रकीर्त्तितं व्यासमहर्षिणा च।

यद्राजपेयेन तु राजसूयात् दृष्टं फलं हस्तिरथेन चान्यत्। तदश्नुते व्यासवचःप्रमाणं गीतञ्च वाल्मीकिमहर्षिणा च। ५

यो हरिवंशं लेखयति यथाविधिना महातपाः सपदि। स याति हरेः पदकमलं कमलं यथा मधुपो लुब्धः।

पितामहाद्यं प्रवदन्ति षष्ठं महर्षिमव्यग्रविभूतियुक्तं। नारायणस्यांशजमेकपुत्रं द्वैपायनं वेदमहानिधानं।

आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतं। ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनं।

असच्च सदसच्चैव यद्विश्वं सदसत्परं। परावराणां स्रष्टारं पुराणं परमव्ययं।

मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिं। नमस्कृत्य हृषीकेशं चराचरगुरुं हरिं। १०

नैमिषारण्ये कुलपतिः शौनकस्तु महामुनिः। सौतिं पप्रच्छ धर्म्मात्मा सर्व्वशास्त्रविशारदं।

॥ शौनक उवाच ॥ सौते सुमहदाख्यानं भवता परिकीर्त्तितं। भारतानां च सर्व्वेषां पार्थिवानां तथैव च।

देवानां दानवानाञ्च गन्धर्व्वोरगरक्षसां। दैत्यानामथ सिद्धानां गुह्यकानां तथैव च।

अत्यद्भुतानि कर्म्माणि विक्रमा धर्म्मनिश्चयाः। विचित्राश्च कथायोगा जन्म चाग्र्यमनुत्तमं।

कथितं भवता पुण्यं पुराणं श्लक्ष्णया गिरा। मनःकर्णसुखं सौते प्रीणात्यमृतसम्मितं। १५

तत्र जन्म कुरूणां वै त्वयोक्तं लोमहर्षणे। न तु वृष्ण्यन्धकानाञ्च तद्भवान् वक्तुमर्हति।

॥ सौतिरुवाच ॥ जनमेजयेन यत् पृष्टः शिष्यो व्यासस्य धर्म्मवित्। तत्तेऽहं सम्प्रवक्ष्यामि वृष्णीनां वंशमादितः।

श्रुत्वेतिहासं कार्त्स्न्येन भारतानां स भारतः। जनमेजयो महाप्राज्ञो वैशम्पायनमब्रवीत्।

॥ जनमेजय उवाच ॥ महाभारतमाख्यानं बह्वर्थं श्रुतिविस्तरं । कथितं भवता पूर्व्वं विस्तरेण मया श्रुतं ।
तत्र शूराः समाख्याता बहवः पुरुषर्षभाः । नामभिः कर्म्मभिश्चैव वृष्ण्यन्धकमहारथाः ।
तेषां कर्म्मावदातानि त्वयोक्तानि द्विजोत्तम । तत्र तत्र समासेन विस्तरेणैव मे प्रभो ।
न च मे तृप्तिरस्तीह कथ्यमाने पुरातने । एकश्चैव मतो राशिर्वृष्णयः पाण्डवास्तथा ।
भवांश्च वंशकुशलस्तेषां प्रत्यक्षदर्शिवान् । कथयस्व कुलं तेषां विस्तरेण तपोधन ।
यस्य यस्यान्वये ये ये तांस्तानिच्छामि वेदितुं । तच्च सर्व्वमशेषेण कथयस्व महामुने ।
तेषां पूर्व्वविसृष्टिञ्च विचित्राञ्च प्रजापतेः । ५
॥ सौतिरुवाच ॥ सत्कृत्य परिपृष्टस्तु स महात्मा महातपाः । विस्तरेणानुपूर्व्व्या च कथयामास तां कथां ।
॥ वैशम्पायन उवाच ॥ शृणु राजन् कथां दिव्यां पुण्यां पापप्रणाशिनीं । कथ्यमानां मया चित्रां बह्वर्थां श्रुतिसम्मितां ।
यश्चैतां धारयेत्तात शृणुयाद्वाप्यभीक्ष्णशः । स्ववंशधारणं कृत्वा स्वर्गलोके महीयते ।
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकं । प्रधानं पुरुषं तस्मान्निर्म्ममे विश्वमीश्वरः ।
तं वै विद्धि महाराज ब्रह्माणममितौजसं । स्रष्टारं सर्व्वभूतानां नारायणपरायणं । १०
अहङ्कारस्तु महतस्तस्माद्भूतानि जज्ञिरे । भूतभेदाश्च भूतेभ्य इति सर्गः सनातनः ।
विस्तरावयवश्चैव यथाप्रज्ञं यथाश्रुतं । कीर्त्यमानं शृणु मया पूर्व्वेषां कीर्त्तिवर्द्धनं ।
धन्यं यशस्यं शत्रुघ्नं स्वर्ग्यमायुःप्रवर्द्धनं । कीर्त्तनं स्थिरकीर्त्तीनां सर्व्वेषां पुण्यकर्म्मणां ।
तस्मात्कल्याय ते कल्यः समग्रं शुचये शुचिः । आदिष्टवंशाद्वक्ष्यामि भूतसर्गमनुत्तमं ।
ततः स्वयम्भूर्भगवान् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवासृजत् । १५
आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः ।
हिरण्यवर्णमभवत्तदण्डमुदकेशयं । तत्र जज्ञे स्वयं ब्रह्मा स्वयम्भूरिति नः श्रुतं ।
हिरण्यगर्भो भगवानुषित्वा परिवत्सरं । तदण्डमकरोद्द्वैधं दिवं भुवमथापि च ।
तयोः शकलयोर्मध्ये आकाशमसृजत्प्रभुः । अप्सु पारिप्लवां पृथ्वीं दिशश्च दशधा दधे ।
तत्र कालं मनो वाचं कामं क्रोधमथो रतिं । ससर्ज्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन् प्रजापतीन् । २०
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुं । वसिष्ठञ्च महातेजाः सोऽसृजत्सप्त मानसान् ।
सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः । नारायणात्मकानां वै सप्तानां ब्रह्मजन्मनां ।
ततोऽसृजत्पुनर्ब्रह्मा रुद्रं रोषात्मसम्भवं । सनत्कुमारञ्च विभुं पूर्व्वेषामपि पूर्व्वजं ।
सप्तैते जनयन्ति स्म प्रजा रुद्रश्च भारत । स्कन्दः सनत्कुमारश्च तेजः संक्षिप्य तिष्ठतः ।
तेषां सप्त महावंशा दिव्या देवगणान्विताः । क्रियावन्तः प्रजावन्तो महर्षिभिरलङ्कृताः । २५
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च । वयांसि च ससर्ज्जादौ पर्ज्जन्यञ्च ससर्ज्ज ह ।
ऋचो यजूंषि सामानि निर्म्ममे यज्ञसिद्धये । साध्यास्तैरयजन्देवानित्येवमनुशुश्रुम ।
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे । आपवस्य प्रजासर्गं सृजतो हि प्रजापतेः ।

आपवमानकः सृष्टा नैव विष्णुर्मे यंदा तदा । द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स ससृजे विविधाः प्रजाः । दिवञ्च पृथिवीञ्चैव महिम्ना व्याप्य तिष्ठतः ।    ३०
विराजमसृजद्विष्णुः सोऽसृजत्पुरुषं विराट् । पुरुषं तं मनुं विद्धि तद्वै मन्वन्तरं स्मृतं ।
द्वितीयं मानसस्यैवं मनोरन्तरमुच्यते । स वैराजः प्रजासर्गं ससर्ज पुरुषः प्रभुः ।
नारायणविसर्गः स प्रजास्तस्याप्ययोनिजाः । आयुष्मान् कीर्त्तिमान्धन्यः प्रजावांश्च भवेन्नरः ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि आदिसर्गकथने प्रथमोऽध्यायः ॥ १ ॥

॥ वैशम्पायन उवाच ॥ स सृष्ट्वा तु प्रजास्त्वेवमापवो वै प्रजापतिः । लेभे वै पुरुषः पत्नीं शतरूपामयोनिजां ।
आपवस्य महिम्ना तु दिवमावृत्य तिष्ठतः । धर्म्मेणैव महाराज शतरूपा व्यजायत ।    ३५
सा तु वर्षायुतं तप्त्वा तपः परमदुश्चरं । भर्त्तारं दीप्ततपसं पुरुषं प्रत्यपद्यत ।
स वै स्वायम्भुवस्तात पुरुषो मनुरुच्यते । तस्यैकसप्ततियुगं मन्वन्तरमिहोच्यते ।
वैराजात्पुरुषाद्वीरं शतरूपा व्यजायत । प्रियव्रतोत्तानपादौ वीरात्काम्या व्यजायत ।
काम्या नाम महाबाहो कर्द्दमस्य प्रजापतेः । कन्यापुत्राश्च चत्वारः सम्राट् कुक्षिर्विराट् प्रभुः ।
प्रियव्रतं समासाद्य पतिं सा जनयत् सुतान् । उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः ।    ४०
उत्तानपादाच्चतुरः सूनृता सुषुवे सुतान् । धर्म्मस्य कन्या सुश्रोणी सूनृता नाम विश्रुता ।
उत्पन्ना वाजिमेधेन ध्रुवस्य जननी शुभा । ध्रुवञ्च कीर्त्तिमन्तञ्च आयुष्मन्तं वसुन्तथा ।
उत्तानपादोऽजनयत्सूनृतायां प्रजापतिः । ध्रुवो वर्षसहस्राणि त्रीणि दिव्यानि भारत ।
तपस्तेपे महाराज प्रार्थयन् सुमहद्यशः । तस्मै ब्रह्मा ददौ प्रीतः स्थानमात्मसमं प्रभुः ।
अचलञ्चैव पुरतः सप्तर्षीणां प्रजापतिः । तस्याभिमानमृद्धिञ्च महिमानं निरीक्ष्य च ।    ४५
देवासुराणामाचार्य्यः श्लोकमप्युशना जगौ । अहोऽस्य तपसो वीर्य्यमहो श्रुतमहोऽद्भुतं ।
यमद्य पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः । तस्मात् श्लिष्टिञ्च भव्यञ्च ध्रुवाच्छम्भुर्व्यजायत ।
श्लिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् । रिपुं रिपुञ्जयं रिप्रं वृकलं वृकतेजसं ।
रिपोराधत्त बृहती चाक्षुषं सर्व्वतेजसं । अजीजनत् पुष्करिण्यां वीरण्यां चाक्षुषो मनुं ।
प्रजापतेरात्मजायामरण्यस्य महात्मनः । मनोरजायन्त दश नड्वलायां महौजसः ।    ५०
कन्यायां भरतश्रेष्ठ वैराजस्य प्रजापतेः । ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक्कविः ।
अग्निष्टुदतिरात्रश्च सुद्युम्नश्चेत्यमी नव । अभिमन्युश्च दशमो नड्वलायाः महायशाः ।
ऊरोरजनयत् पुत्रान् षडाग्नेयी महाप्रभान् । अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयं ।
अङ्गात् सुनीथकन्यायां वेनमेकं व्यजायत । अपचारेण वेनस्य प्रकोपः सुमहानभूत् ।
प्रजार्थमृषयोऽथास्य ममन्थुर्दक्षिणं करं । वेनस्य पाणौ मथिते सम्बभूव महानृषिः ।    ५५
तं दृष्ट्वा मुनयः प्राहुरेष वै मुदिताः प्रजाः । करिष्यति महातेजा यशश्च प्राप्स्यते महत् ।
स धन्वी कवची जातः कराज्ज्वलनसन्निभः । पृथुर्वैन्यस्तदा चेमां ररक्ष क्षत्रपूर्व्वजः ।

राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः । तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ ।
तेनेयं गौर्महाराज दुग्धा सस्यानि भारत । प्रजानां वृत्तिकामेन देवैः सर्षिगणैः सह ।
पितृभिर्दानवैश्चैव गन्धर्व्वैः साप्सरोगणैः । सर्पैः पुण्यजनैश्चैव वीरुद्भिः पर्व्वतैस्तथा । ८०
तेषु तेषु तु पात्रेषु दुह्यमाना वसुन्धरा । प्रादाद्यथेप्सितं क्षीरं तेन प्राणानधारयन् ।
पृथुपुत्रौ तु धर्म्मज्ञौ जज्ञातेऽन्तर्द्धिपालिनौ । शिखण्डिनी हविर्द्धानमन्तर्द्धानाद्व्यजायत ।
हविर्द्धानात् षडाग्नेयी धिषणाऽजनयत्सुतान् । प्राचीनबर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ ।
प्राचीनबर्हिर्भगवान् महानासीत्प्रजापतिः । हविर्द्धानान्महाराज येन संवर्द्धिताः प्रजाः ।
प्राचीनाग्राः कुशास्तस्य पृथिव्यां जनमेजय । प्राचीनबर्हिर्भगवान् पृथिवीतलचारिणः । ८५
समुद्रतनयायान्तु कृतदारोऽभवत्प्रभुः । महतस्तपसः पारे सवर्णायां महीपतिः ।
सवर्णाऽधत्त सामुद्री दश प्राचीनबर्हिषः । सर्व्वान् प्रचेतसो नाम धनुर्व्वेदस्य पारगान् ।
अपृथग्धर्म्मचरणास्तेऽतप्यन्त महत्तपः । दशवर्षसहस्राणि समुद्रसलिलेशयाः ।
तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहाः । अरक्ष्यमाणामावव्रुर्बभूवाथ प्रजाक्षयः ।
प्रत्याहृताः प्रजाः सर्व्वाश्चाक्षुषस्यान्तरे मनोः । नाशकन्मारुतो वातुं वृतं खमभवद्द्रुमैः । ९०
दशवर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः । तदुपश्रुत्य तपसा युक्ताः सर्व्वे प्रचेतसः ।
मुखेभ्यो वायुमग्निञ्च सृजुर्जातमन्यवः । उन्मूलानथ तान् कृत्वा वृक्षान् वायुरशोषयत् ।
तानग्निरदहद्घोर एवमासीद्द्रुमक्षयः । द्रुमक्षयमथो बुद्ध्वा किञ्चिच्छिष्टेषु शाखिषु ।
उपगम्याब्रवीदेतानथ सोमः प्रजापतीन् । कोपं यच्छत राजानः सर्व्वे प्राचीनबर्हिषः ।
वृक्षशून्या कृता पृथ्वी शाम्यतामग्निमारुतौ । रत्नभूता च कन्येयं वृक्षाणां वरवर्णिनी । ९५
भविष्यं जानता तत्त्वं धृता गर्भेण वै मया । मारिषा नाम कन्येयं वृक्षाणामिति निर्म्मिता ।
भार्य्या वोऽस्तु महाभागाः सोमवंशविवर्द्धिनी । युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन तेजसः ।
अस्यामुत्पत्स्यते पुत्रो दक्षो नाम प्रजापतिः । स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै ।
अग्निनाऽग्निसमो भूत्वा प्रजाः संवर्द्धयिष्यति । ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ।
संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्म्मेण मारिषां । मारिषायां ततस्ते तु मनसा गर्भमादधुः । १००
दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः । दक्षो जज्ञे महातेजाः सोमस्यांशेन भारत ।
पुत्रानुत्पादयामास सोमवंशविवर्द्धनान् । अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः ।
स सृष्ट्वा मनसा दक्षः पश्चादसृजत स्त्रियः । ददौ स दश धर्म्माय कश्यपाय त्रयोदश ।
शिष्टाः सोमाय राज्ञेऽथ नक्षत्राख्या ददौ प्रभुः । तासु देवाः खगा गावो नागा दितिजदानवाः ।
गन्धर्व्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः । ततः प्रभृति राजेन्द्र प्रजा मैथुनसम्भवाः । १०५
सङ्कल्पाद्दर्शनात् स्पर्शात्पूर्व्वेषां प्रोच्यते प्रजाः ।

॥ जनमेजय उवाच ॥ देवानां दानवानाञ्च गन्धर्व्वोरगरक्षसां । सम्भवः कथितः पूर्व्वं दक्षस्य च महात्मनः ।

अङ्गुष्ठाद्दक्षिणाज्जातो दक्षः प्रोक्तस्त्वयाऽनघ। वामाङ्गुष्ठात्तथा चैव तस्य पत्नी व्यजायत।
कथं प्राचेतसत्वं स पुनर्लेभे महातपाः। एतन्मे संशयं विप्र सम्यगाख्यातुमर्हसि।
दौहित्रश्चैव सोमस्य कथं श्वशुरतां गतः। ११०
॥ वैशम्पायन उवाच ॥ उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु पार्थिव। ऋषयोऽत्र न मुह्यन्ति विद्वांसश्चैव ये जनाः।
युगे युगे भवन्त्येते सर्व्वे दक्षादयो नृपाः। पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति।
ज्यैष्ठ्यं कानिष्ठ्यमप्येषां पूर्व्वं नासीज्जनाधिप। तप एव गरीयोऽभूत् प्रभावश्चैव कारणं।
इमां विसृष्टिं दक्षस्य यो विद्यात् सचराचरां। प्रजावानायुरुत्तीर्णः स्वर्गलोके महीयते।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि प्रजासर्गे दक्षोत्पत्तिकथने द्वितीयोऽध्यायः ॥ २ ॥
॥ जनमेजय उवाच ॥ देवानां दानवानाञ्च गन्धर्व्वोरगरक्षसां। उत्पत्तिं विस्तरेणैव वैशम्पायन कीर्त्तय। ११५
॥ वैशम्पायन उवाच ॥ प्रजाः सृजेति व्यादिष्टः पूर्व्वं दक्षः स्वयम्भुवा। यथा ससर्ज्ज भूतानि तथा शृणु महीपते।
मनसा चैव भूतानि पूर्व्वमेवासृजत् प्रभुः। ऋषीन् देवान् सगन्धर्व्वानसुरानथ राक्षसान्।
यक्षभूतपिशाचांश्च वयःपशुसरीसृपान्। यदाऽस्य तास्तु मानस्यो न व्यवर्द्धन्त वै प्रजाः।
तदा सञ्चिन्त्य धर्म्मात्मा प्रजाहेतोः प्रजापतिः। स मैथुनेन धर्म्मेण सिसृक्षुर्व्विविधाः प्रजाः।
असिक्नीमावहत् पत्नीं वीरणस्य प्रजापतेः। सुतां सुतपसा युक्तां महतीं लोकधारिणीं। १२०
अथ पुत्रसहस्राणि वैरण्यां पञ्च वीर्य्यवान्। असिक्न्यां जनयामास दक्ष एव प्रजापतिः।
तांस्तु दृष्ट्वा महाभागान् संविवर्द्धयिषून् प्रजाः। देवर्षिः प्रियसंवादो नारदः प्राब्रवीदिदं।
नाशाय वचनं तेषां शापायैवात्मनस्तथा। यं कश्यपः सुतं वीरं परमेष्ठी व्यजीजनत्।
दक्षस्य वै दुहितरि दक्षशापभयान्मुनिः। पूर्व्वं स हि समुत्पन्नो नारदः परमेष्ठिना।
असिक्न्यामथ वैरण्यां भूयो देवर्षिसत्तमः। तं भूयो जनयामास पितेव मुनिपुङ्गवं। १२५
तेन दक्षस्य पुत्रा वै हर्य्यश्वा इति विश्रुताः। निर्म्मथ्य नाशिताः सर्व्वे विधिना च न संशयः।
तस्योद्यतस्तदा दक्षो नाशायामितविक्रमः। ब्रह्मर्षीन् पुरतः कृत्वा याचितः परमेष्ठिना।
ततोऽभिसन्धिं चक्रुस्ते दक्षस्तु परमेष्ठिना। कन्यायां नारदो मह्यं तव पुत्रो भवेदिति।
ततो दक्षः सुतां प्रादात् प्रियां वै परमेष्ठिने। स तस्यां नारदो जज्ञे दक्षशापभयादृषिः।
॥ जनमेजय उवाच ॥ कथं विनाशिताः पुत्रा नारदेन महर्षिणा। प्रजापतेर्द्विजश्रेष्ठ श्रोतुमिच्छामि तत्त्वतः। १३०
॥ वैशम्पायन उवाच ॥ दक्षस्य पुत्रा हर्य्यश्वा विवर्द्धयिषवः प्रजाः। समागता महावीर्य्या नारदस्तानुवाच ह।
बालिशा बत यूयं वै नास्या जानीथ वै भुवः। प्रमाणं स्रष्टुकामा वै प्रजाः प्राचेतसात्मजाः।
अन्तरूर्द्ध्वमधश्चैव कथं स्रक्ष्यथ वै प्रजाः। ते तु तद्वचनं श्रुत्वा प्रयाताः सर्व्वतो दिशः।
अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः। हर्य्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः।
वैरण्यामेव पुत्राणां सहस्रमसृजत् प्रभुः। विवर्द्धयिषवस्ते तु शबलाश्वाः प्रजास्तदा। १३५
पूर्व्वोक्तं वचनं तात नारदेनैव चोदिताः। अन्योन्यमूचुस्ते सर्व्वे सम्यगाह महामुनिः।

भ्रातॄणां पदवीं भ्रातुर्गन्तव्यं नात्र संशयः । ज्ञात्वा प्रमाणं पृथ्व्याश्च सुखं स्रक्ष्यामहे प्रजाः ।
एकाग्राः स्वस्थमनसो यथावदनुपूर्व्वशः । तेऽपि तेनैव मार्गेण प्रयाताः सर्व्वतो दिशं ।
अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः । नष्टेषु शवलाश्वेषु दक्षः क्रुद्धोऽब्रवीद्वचः ।
नारदं नाशमेहीति गर्भवासं वसेति च । तदा प्रभृति वै भ्राता भ्रातुरन्वेषणे नृप । १०
प्रयातो नश्यति क्षिप्रं तन्न कार्य्यं विपश्चिता । तांश्चैव नष्टान् विज्ञाय पुत्त्रान् दक्षः प्रजापतिः ।
षष्टिं ततोऽसृजत्कन्यां वैरण्यामिति नः श्रुतं । तास्तदा प्रतिजग्राह भार्य्यार्थं कश्यपः प्रभुः ।
सोमो धर्म्मश्च कौरव्य तथैवान्ये महर्षयः । ददौ स दश धर्म्माय कश्यपाय त्रयोदश ।
सप्तविंशति सोमाय चतस्रोऽरिष्टनेमिने । द्वे चैव भृगुपुत्त्राय द्वे चैवाङ्गिरसे तथा ।
द्वे कृशाश्वाय विदुषे तासां नामानि मे शृणु । अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती । १५
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च भारत । धर्म्मपत्न्यो दश त्वेतास्तास्वपत्यानि मे शृणु ।
विश्वेदेवास्तु विश्वायाः साध्या साध्यान् व्यजायत । मरुत्वत्या मरुत्वन्तो वसोस्तु वसवस्तथा ।
भानोस्तु भानवस्तात मुहूर्त्तास्तु मुहूर्त्तजाः । लम्बायाश्चैव घोषोऽथ नागवीथी च यामिजा ।
पृथिवीविषयं सर्व्वमरुन्धत्यां व्यजायत । सङ्कल्पायास्तु सर्व्वात्मा जज्ञे सङ्कल्प एव हि ।
नागवीथ्यास्तु यामिन्या वृषलम्ब व्यजायत । या राजन् सोमपत्न्यस्तु दक्षः प्राचेतसो ददौ । २०
सर्व्वा नक्षत्रनाम्न्यस्ता ज्योतिषे परिकीर्त्तिताः । ये त्वन्ये ख्यातिमन्तो वै देवा ज्योतिःपुरोगमाः ।
वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरं । आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः । आपस्य पुत्त्रो वैतण्ड्यः श्रमः शान्तो मुनिस्तथा ।
ध्रुवस्य पुत्त्रो भगवान् कालो लोकप्रकालनः । सोमस्य भगवान् वर्चा वर्चस्वी येन जायते ।
धरस्य पुत्त्रो द्रविणो हुतहव्यवहस्तथा । मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा । २५
अनिलस्य शिवा भार्य्या यस्याः पुत्त्रो मनोजवः । अविज्ञातगतिश्चैव द्वौ पुत्त्रावनिलस्य तु ।
अग्निपुत्त्रः कुमारस्तु शरस्तम्बे श्रिया वृतः । तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ।
अपत्यं कृत्तिकानान्तु कार्त्तिकेय इति स्मृतः । स्कन्दः सनत्कुमारश्च सृष्टः पादेन तेजसा ।
प्रत्यूषस्य विदुः पुत्त्रमृषिं नाम्नाऽथ देवलं । द्वौ पुत्त्रौ देवलस्यापि क्षमावन्तौ तपस्विनौ ।
बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मवादिनी । योगसिद्धा जगत्कृत्स्नमसक्ता विचचार ह । ३०
प्रभासस्य च भार्य्या सा वसूनामष्टमस्य च । विश्वकर्म्मा महाभागो यस्यां जज्ञे प्रजापतिः ।
कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वर्द्धकिः । भूषणानाञ्च सर्व्वेषां कर्त्ता शिल्पवतां वरः ।
यः सर्व्वासां विमानानि देवतानां चकार ह । मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः ।
सुरभी कश्यपाद्रुद्रानेकादश विनिर्म्ममे । महादेवप्रसादेन तपसा भाविता सती ।
अजैकपादहिर्ब्बुध्न्यस्त्वष्टा रुद्राश्च भारत । त्वष्टुश्चैवात्मजः श्रीमान् विश्वरूपो महायशाः । ३५
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः । वृषाकपिश्च शम्भुश्च कपर्द्दी रैवतस्तथा ।

मृगव्याधश्च सर्पश्च कपाली च विशाम्पते। एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः।
शतं त्वेवं समाख्यातं रुद्राणाममितौजसां। पुराणे भरतश्रेष्ठ यैर्व्याप्ताः सचराचराः।
लोका भरतशार्दूल कश्यपस्य निबोध मे। अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खसा।
सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा। कद्रुर्मुनिश्च राजेन्द्र तास्वपत्यानि मे शृणु। १७०
पूर्व्वमन्वन्तरे तात द्वादशासन्सुरोत्तमाः। तुषिता नाम तेऽन्योन्यमूचुर्वैवस्वतेऽन्तरे।
उपस्थितेऽतियशसश्चाक्षुषस्यान्तरे मनोः। हितार्थं सर्व्वलोकानां समागम्य परस्परं।
आगच्छत द्रुतं देवा अदितिं सम्प्रविश्य वै। मन्वन्तरे प्रसूयामस्तन्नः श्रेयो भविष्यति।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु ते सर्व्वे चाक्षुषस्यान्तरे मनोः। मारीचात्कश्यपाज्जातास्ते दित्या दक्षकन्यया।
तत्र शक्रश्च विष्णुश्च जज्ञाते पुनरेव च। अर्य्यमा चैव धाता च त्वष्टा पूषा च भारत। १७५
विवस्वान् सविता चैव मित्रो वरुण एव च। अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः।
चाक्षुषस्यान्तरे पूर्व्वमासन् ये तुषिताः सुराः। वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृताः।
सप्तविंशतिः याः प्रोक्ताः सोमपत्न्यो महाव्रताः। तासामपत्यान्यभवन् दीप्तान्यमिततेजसां।
अरिष्टनेमिपत्नीनामपत्यानीह षोडश। बहुपुत्रस्य विदुषश्चतस्रो विद्युतः स्मृताः।
प्रत्यङ्गिरसजाः श्रेष्ठा ऋचो ब्रह्मर्षिसत्कृताः। कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः सुताः। १८०
एते युगसहस्रान्ते जायन्ते पुनरेव ह। सर्व्वदेवगणास्तात त्रयस्त्रिंशत्तु कामजाः।
तेषामपि च राजेन्द्र निरोधोत्पत्तिरुच्यते। यथा सूर्य्यस्य गगने उदयास्तमयाविह।
एवं देवनिकायास्ते सम्भवन्ति युगे युगे। दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतं।
हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्य्यवान्। सिंहिका चाभवत्कन्या विप्रचित्तेः परिग्रहः।
सैंहिकेया इति ख्याता यस्याः पुत्रा महाबलाः। गणैश्च सह राजेन्द्र दशसाहस्रमुच्यते। १८५
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः। असंख्याता महाबाहो हिरण्यकशिपोः शृणु।
हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः। अनुह्रादश्च ह्रादश्च प्रह्रादश्चैव वीर्य्यवान्।
संह्रादश्च चतुर्थोऽभूत् ह्रादपुत्रो ह्रदस्तथा। संह्रादपुत्रः सुन्दश्च निसुन्दश्चैव तावुभौ।
ह्रदस्य पुत्रो ह्यायुश्च शिबिः कालस्तथैव च। विरोचनश्च प्राह्रादिर्ब्बलिर्जज्ञे विरोचनात्।
बलेः पुत्रशतन्त्वासीद्बाणज्येष्ठं नराधिप। धृतराष्ट्रश्च सूर्य्यश्च चन्द्रमाश्चेन्द्रतापनः। १९०
कुम्भनाभो गर्द्दभाक्षः कुक्षिरित्येवमादयः। बाणस्तेषामतिबलो ज्येष्ठः पशुपतिप्रियः।
पुराकल्पे हि बाणेन प्रसाद्योमापतिं प्रभुं। पार्श्वतो विहरिष्यामि इत्येवं याचितो वरः।
बाणस्य चेन्द्रदमनो लोहित्यामुदपद्यत। गणास्तथा सुरा राजन् शतसाहस्रसम्मिताः।
हिरण्याक्षसुताः पञ्च विद्वांसः सुमहाबलाः। झर्झरः शकुनिश्चैव भूतसन्तापनस्तथा।
महानाभश्च विक्रान्तः कालनाभस्तथैव च। अभवन् दनुपुत्राश्च शतं तीव्रपराक्रमाः। १९५
तपस्विनो महावीर्य्याः प्राधान्येन निबोध तान्। द्विमूर्द्धा शकुनिश्चैव तथा शङ्कुशिराः प्रभुः।

शङ्कुकर्णो विराधश्च गवेष्ठी दुन्दुभिस्तथा। अयोमुखः शम्बरश्च कपिलो वामनस्तथा।
मरीचिर्मघवांश्चैव इरा गर्गशिरा वृकः। विक्षोभणश्च केतुश्च केतुवीर्य्यशतह्रदौ।
इन्द्रजित्सर्व्वजिच्चैव वज्रनाभस्तथैव च। महानाभश्च विक्रान्तः कालनाभस्तथैव च।
एकचक्रो महाबाहुस्तारकश्च महाबलः। वैश्वानरः पुलोमा च विद्रावणमहाशिराः। १००
स्वर्भानुर्वृषपर्व्वा च तुहुण्डश्च महासुरः। सूक्ष्मश्चैव निचन्द्रश्च ऊर्णनाभो महागिरिः।
असिलोमा च केशी च शठश्च बलको मदः। तथा गगनमूर्द्धा च कुम्भनाभो महासुरः।
प्रमदो मयश्च कुपथो हयग्रीवश्च वीर्य्यवान्। वैसृपः सविरूपाक्षः सुपथोऽथ हराहरौ।
हिरण्यकशिपुश्चैव शतमायश्च शम्बरः। शरभः शलभश्चैव विप्रचित्तिश्च वीर्य्यवान्।
एते सर्व्वे दनोः पुत्राः कश्यपादभिजज्ञिरे। विप्रचित्तिप्रधानास्ते दानवाः सुमहाबलाः। १०५
एतेषां यदपत्यन्तु न तच्छक्यं नराधिप। प्रसंख्यातुं महीपाल पुत्रपौत्रमनन्तकं।
स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु सुतात्रयं। उपदानवी हयशिराः शर्म्मिष्ठा वार्षपर्व्वणी।
पुलोमा कालका चैव वैश्वानरसुते उभे। बह्वपत्ये महावीर्य्ये मारीचेस्तु परिग्रहः।
तयोः पुत्रसहस्राणि षष्टिं दानवनन्दनान्। चतुर्द्दशशतानन्यान् हिरण्यपुरवासिनः।
मारीचिर्ज्जनयामास महता तपसाऽन्वितः। पौलोमाः कालकेयाश्च दानवास्ते महाबलाः। ११०
अवध्या देवतानाञ्च हिरण्यपुरवासिनः। कृताः पितामहेनाजौ निहताः सव्यसाचिना।
प्रभाया नहुषः पुत्रः सृञ्जयश्च शचीसुतः। पूरुं जज्ञेऽथ शर्म्मिष्ठा दुष्मन्तमुपदानवी।
ततोऽपरे महावीर्य्या दानवास्त्वतिदारुणाः। सिंहिकायामथोत्पन्ना विप्रचित्तेः सुतास्तथा।
दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः। सैंहिकेया इति ख्यातास्त्रयोदश महाबलाः।
व्यंशः शल्यश्च बलिनौ नभश्चैव महाबलः। वातापिर्नमुचिश्चैव इल्वलः खसृमस्तथा। ११५
आञ्जिको नरकश्चैव कालनाभस्तथैव च। राहुर्ज्येष्ठस्तु तेषां वै सूर्य्यचन्द्रप्रमर्द्दनः।
शुकः पोतरणश्चैव वज्रनाभश्च वीर्य्यवान्। मूकश्चैव तुहुण्डश्च ह्रदपुत्रौ बभूवतुः।
मारीचः सुन्दपुत्रश्च ताडकायां व्यजायत। एते वै दानवाः श्रेष्ठा दनुवंशविवर्द्धनाः।
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः। संह्रादस्य तु दैत्यस्य निवातकवचाः कुले।
समुत्पन्नाः सुमहता तपसा भावितात्मनः। तिस्रः कोट्यः सुतास्तेषां मणिमत्यां निवासिनां। १२०
तेऽप्यवध्याश्च देवानामर्ज्जुनेन निपातिताः। षट् सुताः सुमहासत्त्वास्ताम्रायाः परिकीर्त्तिताः।
काकी श्येनी च भासी च सुग्रीवी शुचि गृध्रिका। काकी काकानजनयदुलूकी प्रत्युलूककान्।
श्येनी श्येनांस्तथा भासी भासान् गृध्रांश्च गृध्र्यपि। शुचिरौदकान् पक्षिगणान् सुग्रीवी तु परन्तप।
अश्वानुष्ट्रान् गर्द्दभांश्च ताम्रावंशः प्रकीर्त्तितः। विनतायास्तु पुत्रौ द्वावरुणो गरुडस्तथा।
सुपर्णः पतगश्रेष्ठो दारुणः स्वेन कर्म्मणा। सुरसायाः सहस्रन्तु सर्पाणाममितौजसां। १२५
अनेकशिरसां तात खेचराणां महात्मनां। काद्रवेयाश्च बलिनः सहस्रममितौजसः।

सुपर्णवशगा नागा जज्ञिरेऽनेकमस्तकाः । तेषां प्रधानाः सततं शेषवासुकितक्षकाः ।
ऐरावतो महापद्मः कम्बलाश्वतरावुभौ । एलापत्रस्तथा शङ्खः कर्कोटकधनञ्जयौ ।
महानीलमहाकर्णौ धृतराष्ट्रबलाहकौ । कुहरः पुष्पदंष्ट्रश्च दुर्मुखः सुमुखस्तथा ।
शङ्खश्च शङ्खपालश्च कपिलो वामनस्तथा । नहुषः शङ्खरोमा च मणिरित्येवमादयः । २१०
तेषां पुत्राश्च पौत्राश्च गरुडेन निपातिताः । चतुर्द्दशसहस्राणि क्रूराणामुरगाशिनां ।
गणं क्रोधवशं विद्धि तस्य सर्व्वे च दंष्ट्रिणः । स्थलजाः पक्षिणोऽब्जाश्च धरायाः प्रसवाः स्मृताः ।
गास्तु वै जनयामास सुरभिर्महिषीस्तथा । इरा वृक्षलता वल्लीस्तृणजातीश्च सर्व्वशः ।
खसा तु यक्षरक्षांसि मुनिरप्सरसस्तथा । अरिष्टा तु महासत्त्वान् गन्धर्व्वानमितौजसः ।
एते कश्यपदायादाः कीर्त्तिताः स्थाणुजङ्गमाः । तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः । २१५
एष मन्वन्तरे तात सर्गः स्वारोचिषे स्मृतः । वैवस्वते तु महति वारुणे वितते क्रतौ ।
जुह्वानस्य ब्रह्मणो वै प्रजासर्ग इहोच्यते । पूर्व्वं यत्र तु ब्रह्मर्षीनुत्पन्नान् सप्त मानसान् ।
पुत्रत्वे कल्पयामास स्वयमेव पितामहः । ततो विरोधे देवानां दैत्यानाञ्चैव भारत ।
दितिर्व्विनष्टपुत्रा वै तोषयामास कश्यपं । तां कश्यपः प्रसन्नात्मा सम्यगाराधितस्तया ।
वरेण च्छन्दयामास सा च वव्रे वरं तदा । पुत्रमिन्द्रवधार्थाय समर्थममितौजसं । २२०
स च तस्यै वरं प्रादात् प्रार्थितः सुमहातपाः । दत्त्वा च वरमव्यग्रो मारीचस्तामभाषत ।
भविष्यति सुतस्तेऽयं यद्येनं धारयिष्यसि । इन्द्रं सुतो निहन्ता ते गर्भं वै शरदां शतं ।
यदि धारयसे शौचतत्परा व्रतमास्थिता । तथेत्यभिहितो भर्त्ता तया देव्या महातपाः ।
धारयामास गर्भन्तु शुचिः सा वसुधाधिप । ततोऽभ्युपगमाद्दित्या गर्भमाधाय कश्यपः ।
रोचयन्वै गणश्रेष्ठं देवानाममितौजसं । तेजः संश्रय दुर्द्धर्षमवध्यममरैरपि । २२५
जगाम पर्व्वतायैव तपसे संशितव्रतः । तस्याश्चैवान्तरप्रेप्सुरभवत् पाकशासनः ।
ऊने वर्षशते चास्या ददर्शान्तरमच्युतः । अकृत्वा पादयोः शौचं दितिः शयनमाविशत् ।
निद्राञ्चाकारयामास तस्याः कुक्षिं प्रविश्य सः । वज्रपाणिस्ततो गर्भं सप्तधा तं न्यकृन्तत ।
स पाट्यमानो वज्रेण गर्भस्तु प्ररुरोद ह । मारोदीरिति तं शक्रः पुनः पुनरथाब्रवीत् ।
सोऽभवत् सप्तधा गर्भस्तमिन्द्रो रुषितः पुनः । एकैकं सप्तधा चक्रे वज्रेणैवारिकर्षणः । २३०
मरुतो नाम देवास्ते बभूवुर्भरतर्षभ । यथैवोक्तं मघवता तथैव मरुतोऽभवन् ।
देवा एकोनपञ्चाशत् सहाया वज्रपाणिनः । तेषामेवं प्रवृद्धानां भूतानां जनमेजय ।
रोचयन्वै गणश्रेष्ठं देवानाममितौजसं । निकायेषु निकायेषु हरिः प्रादात् प्रजापतिं ।
क्रमशस्तानि राज्यानि पृथुपूर्व्वाणि भारत । स हरिः पुरुषो वीरः कृष्णो जिष्णुः प्रजापतिः
पर्ज्जन्यस्तपनो व्यक्तस्तस्य सर्व्वमिदं जगत् । भूतसर्गमिमं सम्यक् जानतो भरतर्षभ । २३५

मरुताञ्च शुभं जन्म शृण्वतः पठतोऽपि वा । नास्ति मृत्युभयमथो परलोकभयं कुतः ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि मारुतोत्पत्तिकथने तृतीयोऽध्यायः ॥ ३ ॥

॥ वैशम्पायन उवाच ॥ अभिषिच्याधिराज्ये तु पृथुं वैन्यं पितामहः । ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ।
द्विजानां वीरुधाञ्चैव नक्षत्रग्रहयोस्तथा । यज्ञानां तपसाञ्चैव सोमं राज्येऽभ्यषेचयत् ।
अपान्तु वरुणं राज्ये राज्ञां वैश्रवणं प्रभुं । बृहस्पतिन्तु विश्वेषां ददावाङ्गिरसं पतिं ।
भृगूणामधिपञ्चैव काव्यं राज्येऽभ्यषेचयत् । आदित्यानां तथा विष्णुं वसूनामथ पावकं । १९०
प्रजापतीनां दक्षन्तु मरुतामथ वासवं । दैत्यानां दानवानाञ्च प्रह्लादममितौजसं ।
वैवस्वतं पितॄणाञ्च यमं राज्येऽभ्यषेचयत् । यक्षाणां राक्षसानाञ्च पार्थिवानां तथैव च ।
सर्व्वभूतपिशाचानां गिरीशं शूलपाणिनं । शैलानां हिमवन्तञ्च नदीनामथ सागरं ।
नारायणन्तु साध्यानां रुद्राणां वृषभध्वजं । विप्रचित्तिन्तु राजानं दानवानामथादिशत् ।
गन्धानां मरुताञ्चैव भूतानामशरीरिणां । शब्दाकाशवताञ्चैव वायुं बलवतामथ । १९५
सागराणां नदानाञ्च मेघानां वर्षितस्य च । गन्धर्व्वाणामधिपतिं चक्रे चित्ररथं विभुं ।
नागानां वासुकिं चक्रे सर्पाणामथ तक्षकं । सर्व्वेषां दंष्ट्रिणां शेषं राजानमभ्यषेचयत् ।
वारणानान्तु राजानमैरावतमथादिशत् । उच्चैःश्रवसमश्वानां गरुडं च पतत्त्रिणां ।
मृगाणामथ शार्दूलं गोवृषन्तु गवामपि । वनस्पतीनां राजानं प्लक्षमेवादिशत् प्रभुं ।
गन्धर्व्वाप्सरसाञ्चैव कामदेवं तथा प्रभुं । ऋतूनामथ मासानां दिवसानां तथैव च । २००
पक्षाणाञ्च क्षपाणाञ्च मुहूर्त्ततिथिपर्व्वणां । कलाकाष्ठाप्रमाणानां गतेरयनयोस्तथा ।
गणितस्याथ योगस्य चक्रे संवत्सरं प्रभुं । एवं विभज्य राज्यानि क्रमेण स पितामहः ।
दिशापालानथ ततः स्थापयामास भारत । पूर्व्वस्यां दिशि पुत्रन्तु वैराजस्य प्रजापतेः ।
दिशापालं सुधन्वानं राजानं सोऽभ्यषेचयत् । दक्षिणस्यां महात्मानं कर्द्दमस्य प्रजापतेः ।
पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषेचयत् । पश्चिमायां दिशि तथा रजसः पुत्रमच्युतं । २०५
केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत् । तथा हिरण्यरोमाणं पर्ज्जन्यस्य प्रजापतेः ।
उदीच्यां दिशि दुर्द्धर्षं राजानं सोऽभ्यषेचयत् । तैरियं पृथिवी सर्व्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्म्मेण परिपाल्यते । राजसूयाभिषिक्तस्तु पृथुरेभिर्नराधिपैः ।
वेददृष्टेन विधिना राजराज्ये नराधिप । ततो मन्वन्तरेऽतीते चाक्षुषेऽमिततेजसि ।
वैवस्वताय मनवे ब्रह्मा राज्यमथादिशत् । तस्य विस्तरमाख्यास्ये मनोर्वैवस्वतस्य च । २१०
तवानुकूल्याद्राजेन्द्र यदि शुश्रूषसेऽनघ । महद्ध्येतदधिष्ठानं पुराणे परिनिष्ठितं ।
धन्यं यशस्यमायुष्यं स्वर्गवासकरं शुभं ।

॥ जनमेजय उवाच ॥ विस्तरेण पृथोर्जन्म वैशम्पायन कीर्त्तय । यथा महात्मना तेन दुग्धा चेयं वसुन्धरा ।

यथा च पितृभिर्दुग्धा यथा देवैर्यथर्षिभिः। यथा दैत्यैश्च नागैश्च यथा यक्षैर्यथा द्रुमैः।
यथा शैलैः पिशाचैश्च गन्धर्व्वैश्च द्विजोत्तमैः। राक्षसैश्च महासत्त्वैर्यथा दुग्धा वसुन्धरा। २८५
तेषां पात्रविशेषांश्च वैशम्पायन कीर्त्तय। वत्सान् क्षीरविशेषांश्च दोग्धारश्चानुपूर्व्वशः।
यस्माच्च कारणात् पाणिर्व्वेणस्य मथितः पुरा। क्रुद्धैर्महर्षिभिस्तात कारणं तच्च कीर्त्तय।
॥ वैशम्पायन उवाच ॥ हन्त ते कथयिष्यामि पृथोर्वैन्यस्य विस्तरं। एकाग्रः प्रयतश्चैव शृणुष्व जनमेजय।
नाशुचेः क्षुद्रमनसो नाशिष्यायाव्रताय वा। कीर्त्तयेयमहं राजन् कृतघ्नायाहिताय वा।
स्वर्ग्यं यशस्यमायुष्यं धन्यं वेदैश्च सम्मितं। रहस्यमृषिभिः प्रोक्तं शृणु राजन् यथातथं। २९०
यश्चैनं कथयेन्नित्यं पृथोर्वैन्यस्य विस्तरं। ब्राह्मणेभ्यो नमस्कृत्य न स शोचेत् कृताकृतैः।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पृथूपाख्याने चतुर्थोऽध्यायः ॥ ४ ॥

॥ वैशम्पायन उवाच ॥ आसीद्धर्म्मस्य गोप्ता वै पूर्व्वमत्रिसमः प्रभुः। अत्रिवंशसमुत्पन्नस्त्वङ्गो नाम प्रजापतिः।
तस्य पुत्रोऽभवद्वेनो नात्यर्थं धर्म्मकोविदः। जातो मृत्युसुतायां वै सुनीथायां प्रजापतिः।
स मातामहदोषेण तेन कालात्मजात्मजः। स्वधर्म्मान् पृष्ठतः कृत्वा कामाल्लोभेष्ववर्त्तत।
मर्य्यादां स्थापयामास धर्म्मापेतां स पार्थिवः। वेदधर्म्मानतिक्रम्य सोऽधर्म्मनिरतोऽभवत्। २९५
निःस्वाध्यायवषट्कारास्तस्मिन् राजनि शासति। प्रावर्त्तन्त न पपुः सोमं हुतं यज्ञेषु देवताः।
न यष्टव्यं न होतव्यमिति तस्य प्रजापतेः। आसीत् प्रतिज्ञा क्रूरेयं विनाशे प्रत्युपस्थिते।
अहमिज्यश्च यष्टा च यज्ञश्चेति कुरूद्वह। मयि यज्ञा विधातव्या मयि होतव्यमित्यपि।
तमतिक्रान्तमर्य्यादमाददानमसाम्प्रतं। ऊचुर्म्महर्षयः सर्व्वे मरीचिप्रमुखास्तदा।
वयं दीक्षां प्रवेक्ष्यामः संवत्सरगणान् बहून्। अधर्म्मं कुरु मा वेन नैष धर्म्मः सनातनः। ३००
अत्रेर्वंशे प्रसूतस्त्वं प्रजापतिरसंशयं। प्रजाश्च पालयिष्येऽहमिति ते समयः कृतः।
तांस्तथा ब्रुवतः सर्व्वान् महर्षीनब्रवीत्तदा। वेनः प्रहस्य दुर्ब्बुद्धिरिममर्थमनर्थवित्।
॥ वेन उवाच ॥ स्रष्टा धर्म्मस्य कश्चान्यः श्रोतव्यं कस्य वा मया। श्रुतवीर्य्यतपःसत्यैर्मया वा कः समो भुवि।
प्रभवं सर्व्वभूतानां धर्म्माणाञ्च विशेषतः। सम्मूढा न विदुर्नूनं भवन्तो मामचेतसः।
इच्छन् दहेयं पृथिवीं प्लावयेयं जलैस्तथा। द्यां भुवं चैव रुन्धेयं नात्र कार्य्या विचारणा। ३०५
यदा न शक्यते मोहादवलेपाच्च पार्थिवः। अनुनेतुं तदा वेनस्ततः क्रुद्धा महर्षयः।
निगृह्य तं महात्मानो विस्फुरन्तं महाबलं। ततोऽस्य सव्यमूरुं ते ममन्थुर्जातमन्यवः।
तस्मिंस्तु मथ्यमाने वै राज्ञ ऊरौ विजज्ञिवान्। ह्रस्वोऽतिमात्रः पुरुषः कृष्णश्चापि बभूव ह।
स भीतः प्राञ्जलिर्भूत्वा स्थितवान् जनमेजय। तमत्रिर्विह्वलं दृष्ट्वा निषीदेत्यब्रवीत्तदा।
निषादवंशकर्त्ताऽसौ बभूव वदताम्बर। धीवरानसृजच्चापि वेनकल्मषसम्भवान्। ३१०
ये चान्ये विन्ध्यनिलयास्तुषारास्तुम्बुरास्तथा। अधर्म्मरुचयस्तात विद्धि तान् वेनसम्भवान्।
ततः पुनर्महात्मानः पाणिं वेनस्य दक्षिणं। अरणीमिव संरब्धा ममन्थुर्जातमन्यवः।

पृथुस्तस्मात् समुत्पन्नः कराज्ज्वलनसन्निभः । दीप्यमानः स्ववपुषा साक्षादग्निरिव ज्वलन् ।
स धन्वी कवची जातः पृथुरेव महायशाः । आद्यमाजगवं नाम धनुर्गृह्य महारवं ।
शरांश्च दिव्यान् रक्षार्थं कवचञ्च महाप्रभं । तस्मिन् जातेऽथ भूतानि संप्रहृष्टानि सर्व्वशः । ३१५
समापेतुर्महाराज वेनश्च त्रिदिवं ययौ । समुत्पन्नेन कौरव्य सत्पुत्रेण महात्मना ।
त्रातः स पुरुषव्याघ्र पुन्नाम्नो नरकात्तदा । तं समुद्राश्च नद्यश्च रत्नान्यादाय सर्व्वशः ।
तोयानि चाभिषेकार्थं सर्व्व एवोपतस्थिरे । पितामहश्च भगवान् देवैराङ्गिरसैः सह ।
स्थावराणि च भूतानि जङ्गमानि च सर्व्वशः । समागम्य तदा वैन्यमभ्यषिञ्चन्नराधिपं ।
महता राजराज्येन प्रजापालं महाद्युतिं । सोऽभिषिक्तो महातेजा विधिवद्धर्म्मकोविदैः । ३२०
आदिराज्ये तदा राज्ञां पृथुर्व्वैन्यः प्रतापवान् । पित्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः ।
अनुरागात्ततस्तस्य नाम राजेत्यजायत । आपस्तस्तम्भिरे तस्य समुद्रमभियास्यतः ।
पर्व्वताश्च ददुर्म्मार्गं ध्वजभङ्गश्च नाभवत् । अकृष्टपच्या पृथिवी सिध्यन्त्यन्नानि चिन्तया ।
सर्व्वकामदुघा गावः पुटके पुटके मधु । एतस्मिन्नेव काले तु यज्ञे पैतामहे शुभे ।
सूतः सूत्यां समुत्पन्नः सौत्येऽहनि महामतिः । तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः । ३२५
पृथोः स्तवार्थं तौ तत्र समाहूतौ सुरर्षिभिः । तावूचुर्ऋषयः सर्व्वे स्तूयतामेष पार्थिवः ।
कर्म्मैतदनुरूपं वां पात्रञ्चायं नराधिपः । तावूचतुस्तदा सर्व्वांस्तानृषीन् सूतमागधौ ।
आवां देवानृषींश्चैव प्रीणयावः स्वकर्म्मभिः । न चास्य विद्वो वै कर्म्म न तथा लक्षणं यशः ।
स्तोत्रं येनास्य कुर्य्याव राज्ञस्तेजस्विनो द्विजाः । ऋषिभिस्तौ नियुक्तौ तु भविष्यैः स्तूयतामिति ।
यानि कर्म्माणि कृतवान् पृथुः पश्चान्महाबलः । सत्यवाग्दानशीलोऽयं सत्यसन्धो नरेश्वरः । ३३०
श्रीमान् जैत्रः क्षमाशीलो विक्रान्तो दुष्टशासनः । धर्म्मज्ञश्च कृतज्ञश्च दयावान् प्रियभाषकः ।
मान्यमानयिता यज्वा ब्रह्मण्यः सत्यसङ्गरः । शमः शान्तश्च निरतो व्यवहारस्थितो नृपः ।
ततः प्रभृति लोकेषु स्तवेषु जनमेजय । आशीर्व्वादाः प्रयुज्यन्ते सूतमागधबन्दिभिः ।
तयोः स्तवान्ते सुप्रीतः पृथुः प्रादात् प्रजेश्वरः । अनूपदेशं सूताय मगधं मागधाय च ।
तं दृष्ट्वा परमप्रीताः प्रजाः प्राहुर्महर्षयः । वृत्तीनामेष वो दाता भविष्यति नराधिपः । ३३५
ततो वैन्यं महाराज प्रजाः समभिदुद्रुवुः । त्वं नो वृत्तिं विधत्स्वेति महर्षिवचनात्तदा ।
सोऽभिद्रुतः प्रजाभिस्तु प्रजाहितचिकीर्षया । धनुर्गृह्य पृषत्कांश्च पृथिवीमार्द्दयद्बली ।
ततो वैन्यभयात् त्रस्ता गौर्भूत्वा प्राद्रवन्मही । तां पृथुर्धनुरादाय द्रवन्तीमन्वधावत ।
सा लोकान् ब्रह्मलोकादीन् गत्वा वैन्यभयात्तदा । प्रददर्शाग्रतो वैन्यं प्रगृहीतशरासनं ।
ज्वलद्भिर्निशितैर्ब्बाणैर्दीप्ततेजसमच्युतं । महायोगं महात्मानं दुर्द्धर्षममरैरपि । ३४०
अलभन्ती तु सा त्राणं वैन्यमेवान्वपद्यत । कृताञ्जलिपुटा भूत्वा पूज्या लोकैस्त्रिभिस्तदा ।
उवाच चैनं नाधर्म्मं स्त्रीवधं कर्त्तुमर्हसि । कथं धारयिता चासि प्रजा राजन् मया विना ।

मयि लोकाः स्थिता राजन् मयेदं धार्य्यते जगत् । मद्विनाशे विनश्येयुः प्रजाः पार्थिव विद्धि तत् ।
न मामर्हसि हन्तुं वै श्रेयश्चेत्त्वं चिकीर्षसि । प्रजानां पृथिवीपाल शृणु चेदं वचो मम ।
उपायतः समारब्धाः सर्व्वे सिद्ध्यन्त्युपक्रमाः । उपायं पश्य येन त्वं धारयेथाः प्रजा नृप । ३८५
हत्वाऽपि मां न शक्तस्त्वं प्रजा धारयितुं नृप । अनुभूता भविष्यामि यच्छ कोपं महाद्युते ।
अवध्याश्च स्त्रियः प्राहुस्तिर्य्यग्योनिगतेष्वपि । सत्त्वेषु पृथिवीपाल न धर्म्मं त्यक्तुमर्हसि ।
एवं बहुविधं वाक्यं श्रुत्वा राजा महामनाः । कोपं निगृह्य धर्म्मात्मा वसुधामिदमब्रवीत् ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पृथूपाख्याने पञ्चमोऽध्यायः ॥ ५ ॥
॥ पृथुरुवाच ॥ एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा । बहून्वै प्राणिनो ऽथैकं भवेत्तस्येह पातकं ।
सुखमेधन्ति बहवो यस्मिंस्तु निहते सति । तस्मिन् हते नास्ति भद्रे पातकं चोपपातकं । ३९०
एकस्मिन् यत्र निधनं प्रापिते दुष्टकारिणि । बहूनां भवति क्षेमं तत्र पुण्यप्रदो बधः ।
सोऽहं प्रजानिमित्तं त्वां हनिष्यामि वसुन्धरे । यदि मे वचनं नाद्य करिष्यसि जगद्धितं ।
त्वां निहत्याद्य बाणेन मच्छासनपराङ्मुखीं । आत्मानं प्रथयित्वाऽहं प्रजा धारयिता स्वयं ।
सा त्वं शासनमास्थाय मम धर्म्मभृतां वरे । सञ्जीवय प्रजाः सर्व्वाः समर्था ह्यसि धारणे ।
दुहितृत्वञ्च मे गच्छ तत एनमहं शरं । नियच्छेयं त्वद्बधार्थमुद्यतं घोरदर्शनं । ३९५
॥ वसुन्धरोवाच ॥ सर्व्वमेतदहं वीर विधास्यामि न संशयः । उपायतः समारब्धाः सर्व्वे सिध्यन्त्युपक्रमाः ।
उपायं पश्य येन त्वं धारयेथाः प्रजा इमाः । वत्सन्तु मम तं पश्य क्षरेयं येन वत्सला ।
समाञ्च कुरु सर्व्वत्र त्वं मां धर्म्मभृतां वर । यथाऽभिष्यन्दमानं मे क्षीरं सर्व्वत्र भावयेत् ।
॥ वैशम्पायन उवाच ॥ तत उत्सारयामास शैलान् शतसहस्रशः । धनुष्कोट्या तदा वैन्यस्तेन शैला विवर्द्धिताः ।
पृथुर्वैन्यस्तदा चक्रे महीं राजा समां ततः । मन्वन्तरेष्वतीतेषु विषमासीद्वसुन्धरा । ४००
स्वभावेनाभवंस्तस्याः समानि विषमाणि च । चाक्षुषस्यान्तरे पूर्व्वमासीदेवं तदा किल ।
न हि पूर्व्वविसर्गे वै विषमे पृथिवीतले । प्रविभागः पुराणां वा ग्रामाणां वा तदाऽभवत् ।
न शस्यानि न गोरक्षा न कृषिर्न वणिक्पथः । नैव सत्यानृतं तत्र न लोभो न च मत्सरः ।
वैवस्वतेऽन्तरे तस्मिन् साम्प्रते समुपस्थिते । वैन्यात् प्रभृति राजेन्द्र सर्व्वस्यैतस्य सम्भवः ।
यत्र यत्र समन्त्वस्या भूमेरासीत्तदाऽनघ । तत्र तत्र प्रजाः सर्व्वा निवासं समरोचयन् । ४०५
आहारः फलमूलानि प्रजानामभवत्तदा । कृच्छ्रेण महता युक्त इत्येवमनुशुश्रुम ।
स कल्पयित्वा वत्सन्तु मनुं स्वायम्भुवं प्रभुं । स्वपाणौ पुरुषव्याघ्र दुदोह पृथिवीं ततः ।
शस्यजातानि सर्व्वाणि पृथुर्वैन्यः प्रतापवान् । तेनान्नेन प्रजास्तात वर्त्तन्तेऽद्यापि सर्व्वशः ।
ऋषिभिः श्रूयते चाऽपि पुनर्दुग्धा वसुन्धरा । वत्सः सोमोऽभवत्तेषां दोग्धा चाङ्गिरसः सुतः ।
बृहस्पतिर्महातेजाः पात्रं छन्दांसि भारत । क्षीरमासीदनुपमं तपो ब्रह्म च शाश्वतं । ४१०
ततः पुनर्देवगणैः पुरन्दरपुरोगमैः । काञ्चनं पात्रमादाय दुग्धेयं श्रूयते मही ।

वत्सस्तु मघवानासीद्दोग्धा तु सविता प्रभुः । क्षीरमूर्ज्जस्करञ्चैव वर्त्तन्ते येन देवताः ।
पितृभिः श्रूयते चापि पुनर्दुग्धा वसुन्धरा । राजतं पात्रमादाय सुधाममितविक्रमैः ।
यमो वैवस्वतस्तेषामासीद्वत्सः प्रतापवान् । अन्तकश्चाभवद्दोग्धा कालो लोकप्रकालनः
नागैश्च श्रूयते दुग्धा वत्सं कृत्वा तु तक्षकं । अलाबुं पात्रमादाय विषं क्षीरं नरोत्तम । ३७५
तेषामैरावतो दोग्धा धृतराष्ट्रः प्रतापवान् । नागानां भरतश्रेष्ठ सर्पाणाञ्च महीपते ।
तेनैव वर्त्तयन्त्युग्रा महाकाया विषोल्बणाः । तदाहारास्तदाचारास्तद्वीर्य्यास्तदपाश्रयाः ।
असुरैः श्रूयते चापि पुनर्दुग्धा वसुन्धरा । आयसं पात्रमादाय मायां शत्रुनिवर्हिणीं ।
विरोचनस्तु प्राह्लादिर्वत्सस्तेषामभूत्तदा । ऋत्विक् द्विमूर्द्धा दैत्यानां मधुर्दोग्धा महाबलः ।
तयैते मायया ऽद्यापि सर्व्वे मायाविनो ऽसुराः । वर्त्तयन्त्यमितप्रज्ञास्तदेषाममितं बलं । ३८०
यक्षैश्च श्रूयते राजन् पुनर्दुग्धा वसुन्धरा । आमपात्रे महाराज पुरा ऽन्तर्द्धानमक्षयं ।
वत्सं वैश्रवणं कृत्वा यक्षैः पुण्यजनैस्तदा । दोग्धा रजतनाभस्तु पिता मणिवरस्य यः ।
यक्षात्मजो महातेजास्त्रिशीर्षः सुमहातपाः । तेन ते वर्त्तयन्तीति परमर्षिरुवाच ह ।
राक्षसैश्च पिशाचैश्च पुनर्दुग्धा वसुन्धरा । शावं कपालमादाय प्रजा भोक्तुं नराधिप ।
दोग्धा रजतनाभस्तु तेषामासीत् कुरूद्वह । वत्सः सुमाली कौरव्य क्षीरं रुधिरमेव च । ३८५
तेन क्षीरेण यक्षाश्च राक्षसाश्चामरोपमाः । वर्त्तयन्ति पिशाचाश्च भूतसङ्घास्तथैव च ।
पद्मपत्रे पुनर्दुग्धा गन्धर्व्वैः साप्सरोगणैः । वत्सं चित्ररथं कृत्वा शुचीन् गन्धान् नरर्षभ ।
तेषाञ्च सुरुचिश्चासीद्दोग्धा भरतसत्तम । गन्धर्व्वराजो ऽतिबलो महात्मा सूर्य्यसन्निभः ।
शैलैश्च श्रूयते राजन् पुनर्दुग्धा वसुन्धरा । ओषधीर्वै मूर्त्तिमतीो रत्नानि विविधानि च ।
वत्सस्तु हिमवानासीन्मेरुर्दोग्धा महागिरिः । पात्रन्तु शैलमेवासीत्तेन शैलाः प्रतिष्ठिताः । ३९०
वीरुद्भिः श्रूयते राजन् पुनर्दुग्धा वसुन्धरा । पालाशं पात्रमादाय छिन्नदग्धप्ररोहणं ।
दुदोह पुष्पितः सालो वत्सः प्लक्षो ऽभवत्तदा । सेयं धात्री विधात्री च पावनी च वसुन्धरा ।
चराचरस्य सर्व्वस्य प्रतिष्ठा योनिरेव च । सर्व्वकामदुघा दुग्धा सर्व्वसस्यप्ररोहिणी ।
आसीदियं समुद्रान्ता मेदिनीति परिश्रुता । मधुकैटभयोः कृत्स्ना मेदसा ऽभिपरिप्लुता ।
तेनेयं मेदिनी देवी प्रोच्यते ब्रह्मवादिभिः । ततो ऽभ्युपगमाद्राज्ञः पृथोर्व्वैन्यस्य भारत । ३९५
दुहितृत्वमनुप्राप्ता देवी पृथ्वीति चोच्यते । पृथुना प्रविभक्ता च शोधिता च वसुन्धरा ।
सस्याकरवती स्फीता पुरपत्तनमालिनी । एवंप्रभावो वैन्यः स राजासीद्राजसत्तमः ।
नमस्यश्चैव पूज्यश्च भूतग्रामैरसंशयः । ब्राह्मणैश्च महाभागैर्व्वेदवेदाङ्गपारगैः ।
पृथुरेव नमस्कार्य्यो ब्रह्मयोनिः सनातनः । पार्थिवैश्च महाभागैः पार्थिवत्वमभीप्सुभिः ।
आदिराजो नमस्कार्य्यः पृथुर्व्वैन्यः प्रतापवान् । योधैरपि च विक्रान्तैः प्राप्तुकामैर्जयं युधि । ४००
पृथुरेव नमस्कार्य्यो योधानां प्रथमो नृपः । यो हि योद्धा रणं याति कीर्त्तयित्वा पृथुं नृपं ।

स घोररूपान् संग्रामान् क्षेमी तरति कीर्त्तिमान्। वैश्यैरपि च वित्ताढ्यैः पञ्चवृत्तिविधायिभिः।
पृथुरेव नमस्कार्य्यो वृत्तिदाता महायशाः। तथैव शूद्रैः शुचिभिस्त्रिवर्णपरिचारिभिः।
पृथुरेव नमस्कार्य्यः श्रेयः परमभीप्सुभिः। एते वत्सविशेषाश्च दोग्धारः क्षीरमेव च।
पात्राणि च मयोक्तानि किम्भूयो वर्णयामि ते। ४०५
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पृथूपाख्याने पृथिवीदोहे षष्ठोऽध्यायः॥ ६ ॥
॥ जनमेजय उवाच ॥ मन्वन्तराणि सर्व्वाणि विस्तरेण तपोधन। तेषां पूर्व्वविसृष्टिञ्च वैशम्पायन कीर्त्तय।
यावन्तो मनवश्चैव यावन्तं कालमेव च। मन्वन्तरमथं ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः।
॥ वैशम्पायन उवाच ॥ न शक्यो विस्तरस्तात वक्तुं वर्षशतैरपि। मन्वन्तराणां कौरव्य संक्षेपं चैव मे शृणु।
स्वायम्भुवो मनुस्तात मनुः स्वारोचिषस्तथा। औत्तमिस्तामसश्चैव रैवतश्चाक्षुषस्तथा।
वैवस्वतश्च कौरव्य साम्प्रतो मनुरुच्यते। सावर्णिश्च मनुस्तात भौत्यो रौच्यस्तथैव च। ४१०
तथैव मेरुसावर्णाश्चत्वारो मनवः स्मृताः। अतीता वर्त्तमानाश्च तथैवानागताश्च ये।
कीर्त्तिता मनवस्तात मयैते तु यथाश्रुतं। ऋषींस्तेषां प्रवक्ष्यामि पुत्रान् देवगणांस्तथा।
मरीचिरत्रिर्भगवानङ्गिराः पुलहः क्रतुः। पुलस्त्यश्च वशिष्ठश्च सप्तैते ब्रह्मणः सुताः।
उत्तरस्यां दिशि तथा राजन् सप्तर्षयः स्मृताः। यामा नाम तथा देवास्त्वासन् स्वायम्भुवेऽन्तरे।
आग्नीध्रश्चाग्निबाहुश्च मेधा मेधातिथिर्वसुः। ज्योतिष्मान् द्युतिमान् हव्यः सवनः पुत्र एव च। ४१५
मनोः स्वायम्भुवस्यैते दश पुत्रा महौजसः। एतत्ते प्रथमं राजन् मन्वन्तरमुदाहृतं।
और्व्वो वशिष्ठपुत्रश्च स्तम्बः काश्यप एव च। प्राणो बृहस्पतिश्चैव दत्तो निश्च्यवनस्तथा।
एते महर्षयस्तात वायुप्रोक्ता महाव्रताः। देवाश्च तुषिता नाम स्मृताः स्वारोचिषेऽन्तरे।
हविघ्नः सुकृतिर्ज्योतिरापोमूर्त्तिरयस्मयः। प्रथितश्च नभस्यश्च नभ ऊर्ज्जस्तथैव च।
स्वारोचिषस्य पुत्रास्ते मनोस्तात महात्मनः। कीर्त्तिताः पृथिवीपाल महावीर्यपराक्रमाः। ४२०
द्वितीयमेतत्कथितं तव मन्वन्तरं मया। इदं तृतीयं वक्ष्यामि तन्निबोध नराधिप।
वशिष्ठपुत्राः सप्तासन् वाशिष्ठा इति विश्रुताः। हिरण्यगर्भस्य सुता ऊर्ज्जा नाम सुतेजसः।
ऋषयोऽत्र मया प्रोक्ताः कीर्त्यमानान्निबोध तान्। औत्तमेयान् महाराज दश पुत्रान् मनोरिमान्।
इष ऊर्ज्जस्तनूर्ज्जश्च मधुर्म्माधव एव च। शुचिः शुक्रः सहश्चैव नभस्यो नभ एव च।
भानवस्तत्र देवाश्च मन्वन्तरमुदाहृतं। मन्वन्तरं चतुर्थं ते कीर्त्तयिष्यामि तच्छृणु। ४२५
काव्यः पृथुस्तथैवाग्निर्जन्युर्धामा च भारत। कपीवानकपीवांश्च तत्र सप्तर्षयोऽपरे।
पुराणे कीर्त्तितास्तात पुत्राः पौत्राश्च भारत। सत्या देवगणाश्चैव तामसस्यान्तरे मनोः।
पुत्रांश्चैव प्रवक्ष्यामि तामसस्य मनोर्नृप। द्युतिस्तपस्यः सुतपास्तपोमूलस्तपोधनः।
तपोरतिरकल्माषस्तन्वी धन्वी परन्तपः। तामसस्य मनोरेते दश पुत्रा महाबलाः।
वायुप्रोक्ता महाराज पञ्चमं तदनन्तरं। वेदबाहुर्यदुध्रश्च मुनिर्वेदशिरास्तथा।

हिरण्यरोमा पर्ज्जन्य ऊर्द्ध्वबाहुश्च सोमजः । सत्यनेत्रस्तथाऽत्रेय एते सप्तर्षयोऽपरे ।
देवाश्चाभूतरजसस्तथा प्रकृतयोऽपरे । पारिप्लवश्च रैभ्यश्च मनोरन्तरमुच्यते ।
अथ पुत्त्रान्निमांस्तस्य निबोध गदतो मम । धृतिमानव्ययो युक्तस्तत्त्वदर्शी निरुत्सुकः ।
आरण्यश्च प्रकाशश्च निर्मोहः सत्यवाक् कृती । रैवतस्य मनोः पुत्त्राः पञ्चमञ्चैतदन्तरं ।
षष्ठं ते सम्प्रवक्ष्यामि तन्निबोध नराधिप । भृगुर्नभो विवस्वांश्च सुधामा विरजास्तथा ।
अतिनामा सहिष्णुश्च सप्तैते तु महर्षयः । चाक्षुषस्यान्तरे तात मनोर्देवानिमान् शृणु ।
आद्याः प्रभूता ऋभवः पृथुकाश्च दिवौकसः । लेखा नाम महाराज पञ्च देवगणाः स्मृताः ।
ऋषेरङ्गिरसः पुत्त्रा महात्मानो महौजसः । नाड्वलेया महाराज दश पुत्त्रास्तु विश्रुताः ।
ऊरुप्रभृतयो राजन् षष्ठं मन्वन्तरं स्मृतं । अत्रिर्वशिष्ठो भगवान् काश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रस्तथैव च । तथैव पुत्त्रो भगवानृचीकस्य महात्मनः ।
सप्तमो जमदग्निश्च ऋषयः साम्प्रतं दिवि । साध्या रुद्राश्च विश्वे च वसवो मरुतस्तथा ।
आदित्याश्चाश्विनौ चैव देवौ वैवस्वतौ स्मृतौ । मनोर्वैवस्वतस्यैते वर्त्तन्ते साम्प्रतेऽन्तरे ।
इक्ष्वाकुप्रमुखाश्चैव दश पुत्त्रा महात्मनः । एतेषां कीर्त्तितानान्तु महर्षीणां महौजसां ।
राजन् पुत्त्राश्च पौत्त्राश्च दिक्षु सर्व्वासु भारत । मन्वन्तरेषु सर्व्वेषु प्रादेशं सप्त सप्तकाः ।
स्थिता लोकव्यवस्थार्थं लोकसंरक्षणाय च । मन्वन्तरे व्यतिक्रान्ते चत्वारः सप्तका गणाः ।
कृत्वा कर्म्म दिवं यान्ति ब्रह्मलोकमनामयं । ततोऽन्ये तपसा युक्ताः स्थानं तत्पूरयन्त्युत ।
अतीता वर्त्तमानाश्च क्रमेणैतेन भारत । एतान्युक्तानि कौरव्य सप्तातीतानि भारत ।
मन्वन्तराणि षट् चापि निबोधानागतानि मे । सावर्णा मनवस्तात पञ्च तांश्च निबोध मे ।
एको वैवस्वतस्तेषां चत्वारस्तु प्रजापतेः । परमेष्ठिसुतास्तात मेरुसावर्णितां गताः ।
दक्षस्यैते हि दौहित्राः प्रियायास्तनया नृप । महान्तस्तपसा युक्ता मेरुपृष्ठे महौजसः ।
रुचेः प्राजापतेः पुत्त्रो रौच्यो नाम मनुः स्मृतः । भूत्याञ्चोत्पादितो देव्यां भौत्यो नाम रुचेः सुतः ।
अनागतास्तु सप्तैते स्मृता दिवि महर्षयः । मनोरन्तरमासाद्य सावर्णस्येह ताञ् शृणु ।
रामो व्यासस्तथाऽत्रेयो दीप्तिमानिति विश्रुतः । भारद्वाजस्तथा द्रौणिरश्वत्थामा महाद्युतिः ।
गौतमस्यात्मजश्चैव शरद्वान्नाम गौतमः । कौशिको गालवश्चैव रुरुः काश्यप एव च ।
एते सप्त महात्मानो भविष्या मुनिसत्तमाः । ब्रह्मणः सदृशाश्चैते धन्याः सप्तर्षयः स्मृताः ।
अभिजात्याऽथ तपसा मन्त्रव्याकरणैस्तथा । ब्रह्मलोकप्रतिष्ठास्तु स्मृता ब्रह्मर्षयोऽमलाः ।
भूतभव्यभवज्ज्ञानं बुद्ध्वा चैव च ये स्वयं । तपसा तु प्रसिद्धा ये सङ्गताः प्रविचिन्तकाः ।
मन्त्रव्याकरणाद्यैश्च ऐश्वर्य्यात्सर्व्वशश्च ये । एतान् भार्य्याश्विनो ज्ञात्वा नैष्ठिकानि च नाम च ।
सप्तैते सप्तभिश्चैव गुणैः सप्तर्षयः स्मृताः । दीर्घायुषो मन्त्रकृत ईश्वरा दीर्घचक्षुषः ।
बुद्ध्या प्रत्यक्षधर्म्माणो गोत्रप्रावर्त्तकास्तथा । कृतादिषु युगाख्येषु सर्व्वेष्वेव पुनः पुनः ।

प्रावर्त्तयन्ति ते वर्णानाश्रमांश्चैव सर्व्वशः । सप्तर्षयो महाभागाः सत्यधर्म्मपरायणाः ।
तेषाञ्चैवान्वयोत्पन्ना जायन्तीह पुनः पुनः । मन्त्रब्राह्मणकर्त्तारो धर्म्मे प्रशिथिले तथा ।
यस्माच्च वरदाः सप्त परेभ्य एव चाचिताः । तस्माच्च कालो न वयः प्रमाणमृषिभावने ।
एते सप्तर्षिकोद्देशो व्याख्यातस्ते मया नृप । सावर्णस्य मनोः पुत्रान् भविष्यान् शृणु सत्तम ।
वरीयांश्चावरीयांश्च संमतो धृतिमान्वसुः । चरिष्णुरार्य्यो धृष्णुश्च वाजः सुमतिरेव च । ४०५
सावर्णस्य मनोः पुत्रा भविष्या दश भारत । प्रथमं मेरुसावर्णान् प्रवक्ष्यामि मुनीन् शृणु ।
मेधातिथिस्तु पौलस्त्यो वसुः काश्यप एव च । ज्योतिष्मान् भार्गवश्चैव द्युतिमानङ्गिरास्तथा ।
सवनश्चैव वाशिष्ठ आत्रेयो हव्यवाहनः । पौलहः सप्त इत्येते मुनयो रोहितेऽन्तरे ।
देवतानां गणास्तत्र त्रय एव नराधिप । दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः ।
मनोः पुत्रो धृष्टकेतुः पञ्चहोत्रो निराकृतिः । पृथुः श्रवा भूरिधामा ऋचीकोऽथ बृहतो गयः । ४१०
प्रथमस्य तु सावर्णस्यैव पुत्रा महौजसः । दशमे त्वथ पर्य्याये द्वितीयस्यान्तरे मनोः ।
हविष्मान् पौलहश्चैव सुकृतिश्चैव भार्गवः । आपो मूर्त्तिस्तथाऽऽत्रेयो वाशिष्ठश्चाष्टमः स्मृतः ।
पौलस्त्यः प्रामतिश्चैव नभोगश्चैव काश्यपः । अङ्गिरा नभसः सत्यः सप्तैव परमर्षयः ।
देवतानां गणौ द्वौ तौ ऋषिमन्तश्च ये स्मृताः । मनोः सुतास्तमौजाश्च कुनिषश्चैव वीर्य्यवान् ।
शतानीको निरामित्रो वृषसेनो जयद्रथः । भूरिद्युम्नः सुवर्चाश्च दश त्वेते मनोः सुताः । ४१५
एकादशे तु पर्य्याये तृतीयस्यान्तरे मनोः । तस्य सप्त ऋषींश्चापि कीर्त्यमानान्निबोध मे ।
हविष्मान् काश्यपश्चापि हविष्मान् यश्च भार्गवः । तरुणश्च तथात्रेयो वासिष्ठस्त्वनयस्तथा ।
अङ्गिराश्चोदधिष्णाश्च पौलस्त्यो निश्चरस्तथा । पुलहश्चाग्नितेजाश्च भाव्याः सप्त महर्षयः ।
ब्रह्मणस्तु सुता देवा गणास्तेषां त्रयः स्मृताः । सर्व्वत्रगः सुशर्म्मा च देवानीकः पुरूद्वहः ।
क्षेमधन्वा दृढायुश्च आदर्शः पण्डको मनुः । सावर्णस्य तु पुत्रा वै तृतीयस्य नव स्मृताः । ४२०
चतुर्थस्य तु सावर्णस्यर्षीन् सप्त निबोध मे । द्युतिर्व्वसिष्ठपुत्रश्च आत्रेयः सुतपास्तथा ।
अङ्गिरास्तपसो मूर्त्तिस्तपस्वी काश्यपस्तथा । तपोधनश्च पौलस्त्यः पौलहश्च तपो रविः ।
भार्गवः सप्तमस्तेषां विज्ञेयस्तु तपो धृतिः । पञ्च देवगणाः प्रोक्ता मानसा ब्रह्मणश्च ते ।
देववायुरदूरश्च देवश्रेष्ठो विदूरथः । मित्रवान्मित्रदेवश्च मित्रसेनश्च मित्रकृत् ।
मित्रबाहुः सुवर्चाश्च द्वादशस्य मनोः सुताः । त्रयोदशेऽथ पर्य्याये भाव्ये मन्वन्तरे मनोः । ४२५
अङ्गिराश्चैव धृतिमान् पौलस्त्यो हव्यपस्तु यः । पौलहस्तत्त्वदर्शी च भार्गवश्च निरुत्सुकः ।
निष्प्रकम्पस्तथात्रेयो निर्म्मोहः काश्यपस्तथा । सुतपाश्चैव वाशिष्ठः सप्तैते तु महर्षयः ।
त्रय एव गणाः प्रोक्ता देवतानां स्वयम्भुवा । त्रयोदशस्य पुत्रास्ते विज्ञेयास्तु रुचेः सुताः ।
चित्रसेनो विचित्रश्च नयो धर्म्मभृतो धृतः । सुनेत्रः क्षत्रवृद्धिश्च सुतपा निर्भयो दृढः ।
रौच्यस्यैते मनोः पुत्रा अन्तरे तु त्रयोदशे । चतुर्द्दशेऽथ पर्य्याये भौत्यस्यैवान्तरे मनोः । ४३०

अग्नीध्रः काश्यपश्चैव पौलस्त्यो भार्गवस्तथा । भार्गवो ह्यतिबाहुश्च शुचिराङ्गिरसस्तथा ।
युक्तश्चैव तथात्रेयः शुक्रो वाशिष्ठ एव च । अजितः पौलहश्चैव अन्त्याः सप्तर्षयश्च ते ।
एतेषां कल्यमुत्थाय कीर्त्तनात् सुखमेधते । यशश्चाप्नोति सुमहदायुष्मांश्च भवेत्तथा ।
अतीतानागतानां वै महर्षीणां सदा नरः । देवतानां गणाः प्रोक्ताः पञ्च वै भरतर्षभ ।
तरक्षुभीरुर्वप्रश्च तरस्वानुग्र एव च । अभिमानी प्रवीणश्च जिष्णुः संक्रन्दनस्तथा । ९५
तेजस्वी सबलश्चैव भौत्यस्यैते मनोः सुताः । भौत्यस्यैवाधिकारे तु पूर्णं कल्पन्तु पूर्य्यते ।
इत्येते नामतोऽतीता मनवः कीर्त्तिता मया । तैरियं पृथिवी तात ससमुद्रान्ता सपत्तना ।
पूर्णं युगसहस्रन्तु परिपाल्या नराधिप । प्रजाभिश्चैव तपसा संहारस्तेषु नित्यशः ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि मनुवर्णने सप्तमोऽध्यायः ॥ ७ ॥
॥ जनमेजय उवाच ॥ मन्वन्तरस्य संख्यानं युगानाञ्च महामते । सङ्क्षेपतः प्रमाणञ्च वक्तुमर्हसि मे द्विज ।
॥ वैशम्पायन उवाच ॥ अहोरात्रं भजेत् सूर्य्यो मानवं लौकिकं परं । तमुपादाय गणनां शृणु संख्यामरिन्दम । १००
निमेषैः पञ्चदशभिः काष्ठा त्रिंशत्तु ताः कला । त्रिंशत्कला मुहूर्त्तस्तु त्रिंशता तैर्मनीषिणः ।
अहोरात्रमिति प्राहुश्चन्द्रसूर्य्यगतिं नृप । विशेषेण तु सर्व्वेषु अहोरात्रस्य निश्चयः ।
अहोरात्राः पञ्चदश पक्ष इत्यभिशब्दितः । पक्षौ द्वौ तु स्मृतो मासो द्वौ मासावृतुरुच्यते ।
अब्दं द्व्ययनमुक्तन्तु अयनं ऋतुभिस्त्रिभिः । दक्षिणञ्चोत्तरञ्चैव संख्यातत्त्वविशारदैः ।
मानेनानेन यो मासः पक्षद्वयसमन्वितः । पितॄणां तदहोरात्रमिति कालविदो विदुः । १०५
कृष्णपक्षस्त्वहस्तेषां शुक्लपक्षस्तु शर्व्वरी । कृष्णपक्षे त्वहःश्राद्धं पितॄणां वर्त्तते नृप ।
मानुषेण तु मानेन यो वै संवत्सरः स्मृतः । देवानां तदहोरात्रं दिवा चैवोत्तरायणं ।
दक्षिणायनं स्मृता रात्रिः प्राज्ञैस्तत्त्वार्थकोविदैः । दिव्यमब्दं दशगुणमहोरात्रं मनोः स्मृतं ।
अहोरात्रं दशगुणं मानवः पक्ष उच्यते । पक्षा दशगुणा मासो मासैर्द्वादशभिर्गुणैः ।
ऋतुर्मनूनां संप्रोक्तः प्राज्ञैस्तत्त्वार्थदर्शिभिः । ऋतुत्रयेण त्वयनं तद्द्वयेनैव वत्सरः । ११०
चत्वार्य्येव सहस्राणि वर्षाणान्तु कृतं युगं । तावच्छती भवेत्सन्ध्या सन्ध्यांशश्च तथा नृप ।
त्रीणि वर्षसहस्राणि त्रेता स्यात् परिमाणतः । तस्याश्च त्रिशती सन्ध्या सन्ध्यांशश्च तथाऽपरः ।
तथा वर्षसहस्रे द्वे द्वापरं परिकीर्त्तितं । तस्यापि द्विशती सन्ध्या सन्ध्यांशश्च तथाविधः ।
कलिर्वर्षसहस्रन्तु संख्यातोऽत्र मनीषिभिः । तस्यापि शतिका सन्ध्या सन्ध्यांशश्चैव तद्विधः ।
एषा द्वादशसाहस्री युगसंख्या प्रकीर्त्तिता । दिव्येनानेन मानेन युगसंख्यां निबोध मे । ११५
कृतं त्रेता द्वापरञ्च कलिश्चैव चतुर्युगं । युगं तदेकसप्तत्या गणितं नृपसत्तम ।
मन्वन्तरमिति प्रोक्तं संख्यातार्थविशारदैः । अयनस्यापि सम्प्राप्ते देवेऽयने दक्षिणोत्तरे ।
मनुः प्रलीयते ह्यत्र मन्वन्तेऽप्ययने प्रभो । ततोऽपरो मनुः कालमेतावन्तं भवत्युत ।
समतीतेषु राजेन्द्र लोकः संवत्सरः स्मृतः । तदेव चायुतं प्रोक्तं मुनिना तत्त्वदर्शिना ।

ब्रह्मणस्तदहः प्रोक्तं कल्पश्चेति च कथ्यते । सहस्रयुगपर्य्यन्ता या निशा प्रोच्यते बुधैः । ४९०
निमज्जत्यप्सु यत्रोर्व्वी सशैलवनकानना । तस्मिन् युगसहस्रे तु पूर्णे भरतसत्तम ।
ब्राह्मं दिवसपर्य्यन्ते कल्पो निःशेष उच्यते । युगानि सप्ततिस्तानि साग्राणि कथितानि ते ।
कृतत्रेतादियुक्तानि मनोरन्तरमुच्यते । चतुर्द्दशैते मनवः कीर्त्तिताः कीर्त्तिवर्द्धनाः ।
वेदेषु सपुराणेषु सर्व्वेषु प्रभविष्णवः । प्रजानां पतयो राजन् धन्यमेषाञ्च कीर्त्तनं ।
मन्वन्तरेषु संहाराः संहारान्तेषु सम्भवाः । न शक्यमन्तस्तेषां वै वक्तुं वर्षशतैरपि । ४९५
विसर्गस्य प्रजानाञ्च संहारस्य च भारत । मन्वन्तरेषु संहाराः श्रूयन्ते भरतर्षभ ।
सशेषास्तत्र तिष्ठन्ति देवा ब्रह्मर्षिभिः सह । तपसा ब्रह्मचर्य्येण श्रुतेन च समन्विताः ।
पूर्णे युगसहस्रे तु कल्पो निःशेष उच्यते । तत्र सर्व्वाणि भूतानि दग्धान्यादित्यतेजसा ।
ब्रह्माणमग्रतः कृत्वा सहादित्यगणैर्विभो । प्रविशन्ति सुरश्रेष्ठं हरिं नारायणं प्रभुं ।
यः स्रष्टा सर्व्वभूतानां कल्पान्तेषु पुनः पुनः । अव्यक्तः शाश्वतो देवस्तस्य सर्व्वमिदं जगत् । ५००
तत्र संवर्त्तते रात्रिः सकलेकार्णवे तदा । नारायणो दधे निद्रां ब्राह्मीं वर्षसहस्रकं ।
तावत्तमितकालस्य रात्रिस्त्विह्यभिशब्दिता । निद्रायोगमनुप्राप्तो यस्यां शेते पितामहः ।
सा च रात्रिरपक्रान्ता सहस्रयुगपर्य्यया । तदा प्रबुद्धो भगवान् ब्रह्मा लोकपितामहः ।
पुनः सिसृक्षया युक्तः सर्गाय निदधे मनः । सैव सृतिः पुराणेयं तद्वृत्तं तद्विचेष्टितं ।
देवस्थानानि तान्येव केवलश्च विपर्य्ययः । ततो दग्धानि भूतानि सर्व्वाण्यादित्यरश्मिभिः । ५०५
देवर्षियक्षगन्धर्व्वपिशाचोरगराक्षसाः । जायन्ते च पुनस्तात युगे भरतसत्तम ।
यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये । दृश्यन्ते तानि तान्येव तथा ब्राह्मीषु रात्रिषु ।
निष्क्रमित्वा प्रजाकारः प्रजापतिरसंशयं । ये च वै मानुषा देवाः सर्व्वे चैव महर्षयः ।
ते सङ्गताः शुद्धसङ्गाः शश्वद्धर्म्मविसर्गतः । न भवन्ति पुनस्तात युगे भरतसत्तम ।
तत्सर्व्वं क्रमयोगेण कालसङ्ख्याविभागवित् । सहस्रयुगसङ्ख्यानं कृत्वा दिवसमीश्वरः । ५१०
रात्रिं युगसहस्रान्तां कृत्वा च भगवान्विभुः । संहरत्यथ भूतानि सृजते च पुनः पुनः ।
अव्यक्तव्यक्तो महादेवो हरिर्नारायणः प्रभुः । तस्य ते कीर्त्तयिष्यामि मनोर्व्वैवस्वतस्य वै ।
विसर्गं भरतश्रेष्ठ साम्प्रतस्य महाद्युते । वृष्णिवंशप्रसङ्गेन कथ्यमानं पुरातनं ।
यत्रोत्पन्नो महात्मा स हरिर्वृष्णिकुले प्रभुः । सर्व्वासुरविनाशाय सर्व्वलोकहिताय च ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि मन्वन्तरानुकीर्त्तने अष्टमोऽध्यायः ॥ ८ ॥

॥ वैशम्पायन उवाच ॥ विवस्वान् कश्यपाज्जज्ञे दाक्षायण्यामरिन्दम । तस्य भार्य्याऽभवत्संज्ञा त्वाष्ट्री देवी विवस्वतः । ५१५
सुरेणुरिति विख्याता त्रिषु लोकेषु भामिनी । सा वै भार्य्या भगवतो मार्त्तण्डस्य महात्मनः ।
भर्त्तृरूपेण नातुष्यद्रूपयौवनशालिनी । संज्ञा नाम सुतपसा सुदीप्तेन समन्विता ।
आदित्यस्य हि तद्रूपं मार्त्तण्डस्य तु तेजसा । गात्रेषु परिदग्धं वै नातिकान्तमिवाभवत् ।

न खल्वयं मृतोऽण्डस्थ इति स्नेहादभाषत । अज्ञानात् कश्यपस्तस्मान्मार्त्तण्ड इति चोच्यते ।
तेजस्त्वभ्यधिकं तात नित्यमेव विवस्वतः । येनातितापयामास त्रीन् लोकान् कश्यपात्मजः ।
त्रीण्यपत्यानि कौरव्य संज्ञायां तपतांवरः । आदित्यो जनयामास कन्यां द्वौ च प्रजापती ।
मनुर्वैवस्वतः पूर्व्वं श्राद्धदेवः प्रजापतिः । यमश्च यमुना चैव यमजौ संबभूवतुः ।
स वर्णन्तु तद्रूपं संज्ञा दृष्ट्वा विवस्वतः । असहन्ती तु स्वां छायां सवर्णां निर्ममे ततः ।
मायामयी तु सा संज्ञा तस्याश्छाया समुत्थिता । प्राञ्जलिः प्रणता भूत्वा छाया संज्ञां नरेश्वर ।
उवाच किं मया कार्य्यं कथयस्व शुचिस्मिते । स्थिताऽस्मि तव निर्द्देशे शाधि मां वरवर्णिनि ।
॥ संज्ञोवाच ॥ अहं यास्यामि भद्रन्ते स्वमेव भवनं पितुः । त्वयेह भवने मह्यं वस्तव्यं निर्व्विकारया ।
इमौ च बालकौ मह्यं कन्या चेयं सुमध्यमा । संभाव्यास्ते न चाख्येयमिदं भगवते क्वचित्
॥ छायोवाच ॥ आकेशग्रहणाद्देवि आशापान्नैव कर्हिचित् । आख्यास्यामि मतं तुभ्यं गच्छ देवि यथासुखं ।
॥ वैशम्पायन उवाच ॥ समादिश्य सवर्णान्तु तथेत्युक्ता तया च सा । त्वष्टुः समीपमगमद्व्रीडितेव तपस्विनी ।
पितुः समीपगा सा तु पित्रा निर्भर्त्सिता तदा । भर्त्तुः समीपं गच्छेति नियुक्ता च पुनः पुनः ।
अगच्छद्वडवा भूत्वाच्छाद्य रूपमनिन्दिता । कुरूनथोत्तरान् गत्वा तृणान्यथ चचार ह ।
द्वितीयायान्तु संज्ञायां संज्ञेयमिति चिन्तयन् । आदित्यो जनयामास पुत्रमात्मसमं तदा ।
पूर्व्वजस्य मनोस्तात सदृशोऽयमिति प्रभुः । मनुरेवाभवन्नाम्ना सावर्ण इति चोच्यते ।
द्वितीयो यः सुतस्तस्याः स विज्ञेयः शनैश्चरः । संज्ञा तु पार्थिवी तात स्वस्य पुत्रस्य वै तदा ।
चकाराभ्यधिकं स्नेहं न तथा पूर्व्वजेषु वै । मनुस्तस्याक्षमत्तत्तु यमस्तस्या न चक्षमे ।
तां स रोषाच्च बाल्याच्च भाविनोऽर्थस्य गौरवात् । पदा सन्तर्ज्जयामास संज्ञां वैवस्वतो यमः ।
तं शशाप ततः क्रोधात्सावर्णजननी नृप । चरणः पततामेष तवेति भृशदुःखिता ।
यमस्तु तत्पितुः सर्व्वं प्राञ्जलिः प्रत्यवेदयत् । भृशं शापभयोद्विग्नः संज्ञावाक्यैर्विवेजितः ।
शापोऽयं विनिवर्त्तेत स प्राह पितरं तदा । मात्रा स्नेहेन सर्व्वेषु वर्त्तितव्यं सुतेषु वै ।
सेयमस्मानपाहाय यवीयांसं बुभूषति । तस्या मयोद्यतः पादो न तु देहे निपातितः ।
बाल्याद्वा यदि वा मोहात्तद्भवान् क्षन्तुमर्हति । यस्मात्ते पूजनीयाऽहं लज्जिताऽस्मि तथा मुने ।
तस्मात्तवैष चरणः पतिष्यति न संशयः । शप्तोऽहमस्मि लोकेश जनन्या तपतां वर ।
तव प्रसादाच्चरणो न पतेन्मम गोपते ।
॥ विवस्वानुवाच ॥ असंशयं महत् पुत्र भविष्यत्यत्र कारणं । येन त्वामाविशत् क्रोधो धर्म्मज्ञं सत्यवादिनं ।
न शक्यमन्यथाकर्त्तुं मया मातृवचस्तव । कृमयो मांसमादाय यास्यन्ति धरणीतलं ।
तव पादान्महाप्राज्ञ ततस्त्वम्प्राप्स्यसे सुखं । कृतमेवं वचः सत्यं मातुस्तव भविष्यति ।
शापस्य परिहारेण त्वञ्च त्रातो भविष्यसि । आदित्योऽथाब्रवीत् संज्ञां किमर्थं तनयेषु वै ।
तुल्येष्वभ्यधिकः स्नेहः क्रियतेऽति पुनः पुनः । सा तत् परिहरन्ती तु नाचचक्षे विवस्वते ।

आत्मानं च समाधाय योगाभ्यासमवस्थित । तां प्रभुकामो भगवानाश्रय सुरनन्दन ।
मूर्द्धसु च जगाम समर्थोऽतिगतो तु सा । ततः सर्व्वं यथावृत्तमाचचक्षे विवस्वते । ४८०
विवस्वानथ तच्छ्रुत्वा श्वशुरं त्वष्टारमभ्यगात् । त्वष्टा तु तं यथान्यायमर्च्चयित्वा विभावसुं ।
निर्द्दग्धुकामं रोषेण सान्त्वयामास वै तदा ।
॥ त्वष्टोवाच ॥ तवातितेजसाविष्टमिदं रूपं न शोभते । असहन्ती च तत् संज्ञा वने चरति शाद्वले ।
द्रष्टा हि तां भवानद्य स्वां भार्य्यां शुभचारिणीं । नित्यं तपस्यभिरतां वडवारूपधारिणीं ।
पर्णाहारां कृशां दीनां जटिलां ब्रह्मचारिणीं । हस्तिहस्तपरिक्लिष्टां व्याकुलां पद्मिनीमिव । ४८५
श्लाघ्यां योगबलोपेतां योगमास्थाय गोपते । अनुकूलन्तु ते देव यदि स्यान्मम तन्मतं ।
रूपं निवर्त्तयाम्यद्य तव कान्तमरिन्दम । रूपं विवस्वतश्चासीत्तिर्य्यगूर्द्ध्वं समं न वै ।
तेनासौ सम्भृतो देवो रूपेण तु विभावसुः । तस्मात्त्वष्टुः स वै वाक्यं बहु मेने प्रजापतिः ।
समनुज्ञातवांश्चैव त्वष्टारं रूपसिद्धये । ततोऽभ्युपगमात्त्वष्टा मार्त्तण्डस्य विवस्वतः ।
भ्रमिमारोप्य तत्तेजः शातयामास भारत । ततो निर्भासितं रूपं तेजसा संहतेन वै । ४९०
कान्तात् कान्ततरं द्रष्टुमधिकं शुशुभे तदा । मुखे निर्व्वर्त्तितं रूपं तस्य देवस्य गोपतेः ।
ततः प्रभृति देवस्य मुखमासीत्तु लोहितं । मुखरागन्तु यत् पूर्व्वं मार्त्तण्डस्य मुखच्युतं ।
आदित्या द्वादशैवेह सम्भूता मुखसम्भवाः । धाताऽर्य्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्ज्जन्यो दशमस्तथा । ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ।
हर्षं लेभे ततो देवो दृष्ट्वादित्यान् स्वदेहजान् । गन्धैः पुष्पैरलङ्कारैर्भास्वता मुकुटेन च । ४९५
एवं सम्पूजयामास त्वष्टा वाक्यमुवाच ह । गच्छ देव निजां भार्य्यां कुरूंश्चरति सोत्तरान् ।
वडवारूपमास्थाय वने चरति शाद्वले । स तथा रूपमास्थाय स्वां भार्य्यां शुभलोचनां ।
ददर्श योगमास्थाय स्वां भार्य्यां वडवां ततः । अधृष्यां सर्व्वभूतानां तपसा नियमेन च ।
वडवावपुषा राजंश्चरन्तीमकुतोभयां । सोऽश्वरूपेण भगवांस्तां मुखे समभावयत् ।
मैथुनाय विचेष्टन्तीं परपुंसपशङ्कया । सा तन्निरवमच्छुक्रं नासिकायां विवस्वतः । ५००
देवौ तस्यामजायेतामश्विनौ भिषजाम्वरौ । नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ।
मार्त्तण्डस्यात्मजावेतावष्टमस्य प्रजापतेः । तान्तु रूपेण कान्तेन दर्शयामास भास्करः ।
सा तु दृष्ट्वैव भर्त्तारं तुतोष जनमेजय । यमस्तु कर्म्मणा तेन भृशं पीडितमानसः ।
धर्म्मेण रञ्जयामास धर्म्मराज इमाः प्रजाः । स लेभे कर्म्मणा तेन शुभेन परमद्युतिः ।
पितॄणामाधिपत्यञ्च लोकपालत्वमेव च । मनुः प्रजापतिस्त्वासीत् सावर्णः स तदोच्यते । ५०५
भाव्यः सोऽनागते तस्मिन् मनुः सावर्णिकेऽन्तरे । मेरुपृष्ठे तपो घोरमद्यापि चरति प्रभुः ।
भ्राता शनैश्चरस्तस्य ग्रहत्वमुपलब्धवान् । नासत्यौ यौ समाख्यातौ स्वर्व्वैद्यौ तौ बभूवतुः ।
रेवतोऽपि तथा राजन्नश्वानां शान्तिदोऽभवत् । त्वष्टा तु तेजसा तेन विष्णोश्चक्रमकल्पयत् ।

तदप्रतिहतं युद्धे दानवानां चिकीर्षया। यवीयसी तु याऽप्यासीद्यमी कन्या यशस्विनी।
अभवत् सा सरिच्छ्रेष्ठा यमुना लोकभाविनी। मनुरित्युच्यते लोके सावर्ण इति चोच्यते। ६१०
द्वितीयो यः सुतस्तस्य मनोर्भ्राता शनैश्चरः। ग्रहत्वं स तु लेभे वै सर्वलोकाभिपूजितम्।
य इदं जन्म देवानां शृणुयाद्वाऽपि धारयेत्। आपद्भ्यः स विमुच्येत प्राप्नुयाच्च महद्यशः।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्वणि वैवस्वतोत्पत्तिकथने नवमोऽध्यायः ॥ ९ ॥

॥ वैशम्पायन उवाच ॥ मनोर्वैवस्वतस्यासन् पुत्रा वै नव तत्समाः। इक्ष्वाकुश्चैव नाभागो धृष्णुः शर्यातिरेव च।
नरिष्यन्तस्तथा प्रांशुर्नाभागारिष्टसप्तमाः। करूषश्च पृषध्रश्च नवैते भरतर्षभ।
अकरोत् पुत्रकामस्तु मनुरिष्टिं प्रजापतिः। मित्रावरुणयोस्तात पूर्वमेव विशाम्पते। ६१५
अनुत्पन्नेषु नवसु पुत्रेष्वेतेषु भारत। तस्यां तु वर्तमानायामिष्ट्यां भरतसत्तम।
मित्रावरुणयोरंशे मनुराहुतिमाजुहोत्। आहुत्यां हूयमानायां देवगन्धर्वमानवाः।
तुष्टिं च परमां जग्मुर्मुनयश्च तपोधनाः। अहोऽस्य तपसो वीर्यमहो श्रुतमहोऽद्भुतम्।
तत्र दिव्याम्बरधरा दिव्याभरणभूषिता। दिव्यसंहनना चैव इडा जज्ञे इति श्रुतिः।
तामिलेत्येव होवाच मनुर्दण्डधरस्तदा। अनुगच्छस्व मां भद्रे तमिडा प्रत्युवाच ह। ६२०
धर्मयुक्तमिदं वाक्यं पुत्रकामं प्रजापतिं।
॥ इडोवाच ॥ मित्रावरुणयोरंशे जाताऽस्मि वदतां वर। तयोः सकाशं यास्यामि न मां धर्मो हतोऽवधीत्।
सैवमुक्त्वा मनुं देवं मित्रावरुणयोरिडा। गत्वाऽन्तिकं वरारोहा प्राञ्जलिर्वाक्यमब्रवीत्।
अंशेऽस्मिन् युवयोर्जाता देवौ किं करवाणि वां। मनुना चाहमुक्ता वै अनुगच्छस्व मामिति।
तां तथावादिनीं साध्वीमिडां धर्मपरायणां। मित्रश्च वरुणश्चोभावूचतुर्यन्निबोध तत्। ६२५
अनेन तव धर्मेण प्रश्रयेण दमेन च। सत्येन चैव सुश्रोणि प्रीतौ स्वो वरवर्णिनि।
आवयोस्त्वं महाभागे ख्यातिं कन्येति यास्यसि। मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि।
सुद्युम्न इति विख्यातस्त्रिषु लोकेषु शोभने। जगत्प्रियो धर्मशीलो मनोर्वंशविवर्द्धनः।
निवृत्ता सा तु तच्छ्रुत्वा गच्छन्ती पितुरन्तिकं। बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता।
सोमपुत्राद्बुधाद्राजंस्तस्यां जज्ञे पुरूरवाः। जनयित्वा सुतं सा तमिडा सुद्युम्नतां गता। ६३०
सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः। उत्कलश्च गयश्चैव विनताश्वश्च भारत।
उत्कलस्योत्कला राजन् विनताश्वस्य पश्चिमा। दिक् पूर्वा भरतश्रेष्ठ गयस्य तु गया पुरी।
प्रविष्टे तु मनौ तात दिवाकरमरिन्दम। दशधा तद्दधत् क्षत्रमकरोत् पृथिवीमिमां।
यूपाङ्किता च पृथिवी यस्येयं सवनाकरा। इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान्।
कन्याभावात्तु सुद्युम्नो नैनं गुणमवाप्तवान्। वसिष्ठवचनाच्चासीत् प्रतिष्ठाने महात्मनः। ६३५
प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य कुरूद्वह। तत् पुरूरवसे प्रादाद्राज्यं प्राप्य महायशाः।
सुद्युम्नः कारयामास प्रतिष्ठाने नृपक्रियां। धृष्णुकस्याम्बरीषश्च दण्डकश्चेति ते त्रयः।

चचकार महात्मा वै दण्डकारण्यमुत्तमं । वर्षं तपोऽकरोद्विप्रात्तावत्कालमनुत्तमं ।
तत्र प्रविष्टमात्रस्तु नरः पापात् प्रमुच्यते । सुद्युम्नस्तु दिवं यात ऐलमुत्पाद्य भारत ।
मानवेयो महाराज स्त्रीपुंसोर्लक्षणैर्युतः । धृतवान् स इलेत्येवं सुद्युम्नश्चेति विश्रुतः । ६४०
नरिष्यतः शकाः पुत्रा नाभागस्य तु भारत । अम्बरीषोऽभवत् पुत्रः पार्थिवर्षभसत्तमः ।
धृष्टस्य धार्ष्टकं क्षत्रं रणे दृष्टं बभूव ह । शर्यातेर्मिथुनं त्वासीदानर्तो नाम विश्रुतः ।
पुत्रः कन्या सुकन्याख्या या पत्नी च्यवनस्य ह । आनर्तस्य तु दायादो रेवो नाम महाद्युतिः ।
आनर्तविषयश्चासीत् पुरी चास्य कुशस्थली । रेवस्य रैवतः पुत्रः ककुद्मी नाम धार्म्मिकः ।
ज्येष्ठः पुत्रशतस्यासीद्राज्यं प्राप्य कुशस्थलीं । स कन्यासहितः श्रुत्वा गान्धर्वं ब्रह्मणोऽन्तिके । ६४५
मुहूर्त्तभूतं देवस्य मर्त्यं बहुयुगं प्रभो । आजगाम युवैवाथ स्वां पुरीं यादवैर्वृतां ।
कृतां द्वारवतीं नाम्ना बहुद्वारां मनोरमां । भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः ।
ततस्तद्रैवतो ज्ञात्वा यथातत्त्वमरिन्दम । कन्यां तां बलदेवाय सुव्रतां नाम रेवतीं ।
दत्त्वा जगाम शिखरं मेरोस्तपसि संस्थितः । रेमे रामोऽपि धर्म्मात्मा रेवत्या सहितः सुखी ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि ऐलोत्पत्तौ दशमोऽध्यायः ॥ १० ॥

॥ जनमेजय उवाच ॥ कथं बहुयुगे काले समतीते द्विजोत्तम । न जरा रेवतीं प्राप्ता रैवतं वा ककुद्मिनं । ६५०
मेरुं गतस्य वा तस्य शर्यातेः सन्ततिः कथं । स्थिता पृथिव्यामद्यापि श्रोतुमिच्छामि तत्त्वतः ।
॥ वैशम्पायन उवाच ॥ न जरा क्षुत्पिपासा वा न मृत्युर्भरतर्षभ । ऋतुचक्रं न भवति ब्रह्मलोके सदाऽनघ ।
ककुद्मिनस्तु तं लोकं रैवतस्य गतस्य च । हृता पुण्यजनैस्तात राक्षसैः सा कुशस्थली ।
तस्य भ्रातृशतस्यासीद्धार्म्मिकस्य महात्मनः । तद्वध्यमानं रक्षोभिर्दिशः प्राद्रवदच्युत ।
विद्रुतस्य तु राजेन्द्र तस्य भ्रातृशतस्य वै । तेषान्तु ते भयाक्रान्ताः क्षत्रियास्तत्र तत्र ह । ६५५
अन्ववायस्तु सुमहांस्तत्र तत्र विशाम्पते । येषामेते महाराज शार्याता इति विश्रुताः ।
क्षत्रिया भरतश्रेष्ठ दिक्षु सर्व्वासु विश्रुताः । सर्व्वशः पर्व्वतगणान् प्रविष्टाः कुरुनन्दन ।
नाभागारिष्टपुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ । करूषस्य तु कारूषाः क्षत्रिया युद्धदुर्म्मदाः ।
पृषध्रो हिंसयित्वा तु गुरोर्गां जनमेजय । शापाच्छूद्रत्वमापन्नो नव ते परिकीर्त्तिताः ।
वैवस्वतस्य तनया मनोर्वै भरतर्षभ । क्षुवतस्तु मनोः पुत्र इक्ष्वाकुरभवत्सुतः । ६६०
तस्य पुत्रशतं त्वासीदिक्ष्वाकोर्भूरिदक्षिणं । तेषां ज्येष्ठो विकुक्षिस्तु विकुक्षित्वादयोधतां ।
प्राप्तः परमधर्म्मज्ञः सोऽयोध्याधिपतिः प्रभुः । शकुनिप्रमुखास्तस्य पुत्राः पञ्चाशदुत्तमाः ।
उत्तरापथदेशस्य रक्षितारो विशाम्पते । चत्वारिंशदथाष्टौ च दक्षिणस्यां तथा दिशि ।
वशातिप्रमुखाश्चान्ये रक्षितारो विशाम्पते । इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथादिशत् ।
मांसमानय श्राद्धार्थं मृगं हत्वा महाबल । श्राद्धकर्म्मणि चोद्दिष्टमकृते श्राद्धकर्म्मणि । ६६५
भक्षयित्वा शशं तात शशादो मृगयां गतः । इक्ष्वाकुणा परित्यक्तो वसिष्ठवचनात् प्रभुः ।

इक्ष्वाकौ संस्थिते तात शशादस्तामथावसत्। शशादस्य तु दायादः ककुत्स्थो नाम वीर्य्यवान्।
इन्द्रस्य वृषभूतस्य ककुत्स्थोऽजयतासुरान्। पूर्व्वमाडीबके युद्धे ककुत्स्थस्तेन स स्मृतः।
अनेनास्तु ककुत्स्थस्य पृथुरानेनसः स्मृतः। विष्टराश्वः पृथोः पुत्रस्तस्मादार्द्रस्त्वजायत।
आर्द्रस्य युवनाश्वस्तु श्रावस्तस्तस्य चात्मजः। जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्म्मिता। ६६०
श्रावस्तस्य तु दायादो वृहदश्वो महीपतिः। कुवलाश्वः सुतस्तस्य राजा परमधार्म्मिकः।
यः स धुन्धुवधाद्राजा धुन्धुमारत्वमागतः।
॥ जनमेजय उवाच ॥ धुन्धोर्व्वधमहं ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः। यदर्थं कुवलाश्वः स धुन्धुमारत्वमागतः।
॥ वैशम्पायन उवाच ॥ कुवलाश्वस्य पुत्राणां शतमुत्तमधन्विनां। सर्व्वे विद्यासु निष्णाता बलवन्तो दुरासदाः।
बभूवुर्द्धार्म्मिकाः सर्व्वे यज्वानो भूरिदक्षिणाः। कुवलाश्वं पिता राज्ये वृहदश्वो न्ययोजयत्। ६६५
पुत्रसंक्रामितश्रीस्तु वनं राजा समाविशत्। तमुतङ्कोऽथ विप्रर्षिः प्रयान्तं प्रत्यवारयत्।
॥ उतङ्क उवाच ॥ भवता रक्षणं कार्य्यं तत्तावत् कर्त्तुमर्हसि। निरुद्विग्नस्तपश्चर्त्तुं न हि शक्नोमि पार्थिव।
ममाश्रमसमीपे वै समेषु मरुधन्वसु। समुद्रो वालुकापूर्ण उज्जालक इति स्मृतः।
देवतानामवध्यश्च महाकायो महाबलः। अन्तर्भूमिगतस्तत्र वालुकान्तर्हितो महान्।
राक्षसस्य मधोः पुत्रो धुन्धुर्नाम महासुरः। शेते लोकविनाशाय तप आस्थाय दारुणं। ६७०
संवत्सरस्य पर्य्यन्ते स निश्वासं विमुञ्चति। यदा तदा भूश्चलति सशैलवनकानना।
तस्य निश्वासवातेन रज उद्धूयते महत्। आदित्यपथमावृत्य सप्ताहं भूमिकम्पनं।
सविस्फुलिङ्गं साङ्गारं सधूममतिदारुणं। तेन तात न शक्नोमि तस्मिन् स्थातुं स्व आश्रमे।
तं मारय महाकायं लोकानां हितकाम्यया। लोकाः सुस्था भवन्त्वद्य तस्मिन् विनिहते त्वया।
त्वं हि तस्य वधायैकः समर्थः पृथिवीपते। विष्णुना च वरो दत्तो मह्यं पूर्व्वयुगेऽनघ। ६७५
यस्तं महासुरं रौद्रं हनिष्यति महाबलं। तस्य त्वं वरदानेन तेज आप्याययिष्यसि।
न हि धुन्धुर्म्महातेजास्तेजसाऽल्पेन शक्यते। निर्द्दग्धुं पृथिवीपाल दिव्यवर्षशतैरपि।
वीर्य्यं हि सुमहत्तस्य देवैरपि दुरासदं। स एवमुक्तो राजर्षिरुतङ्केन महात्मना।
कुवलाश्वं सुतं प्रादात्तस्मिन् धुन्धुनिवर्हणे।
॥ वृहदश्व उवाच ॥ भगवन् न्यस्तशस्त्रोऽहमयन्तु तनयो मम। भविष्यति द्विजश्रेष्ठ धुन्धुमारो न संशयः। ६८०
स तं व्यादिश्य तनयं राजर्षिर्धुन्धुमारणे। जगाम पर्व्वतायैव तपसे संशितव्रतः।
कुवलाश्वस्तु पुत्राणां शतेन सह पार्थिवः। प्रायादुतङ्कसहितो धुन्धोस्तस्य निवर्हणे।
तमाविशत्तदा विष्णुस्तेजसा भगवान् प्रभुः। उतङ्कस्य नियोगाद्वै लोकानां हितकाम्यया।
तस्मिन् प्रयाते दुर्द्धर्षे दिवि शब्दो महानभूत्। एष श्रीमानवध्योऽद्य धुन्धुमारो भविष्यति।
दिव्यैर्म्माल्यैश्च तं देवाः समन्तात् समवाकिरन्। देवदुन्दुभयश्चैव प्रणेदुर्भरतर्षभ। ६८५
स गत्वा जयतां श्रेष्ठस्तनयैः सह वीर्य्यवान्। समुद्रं खानयामास वालुकापूर्णमव्ययं।

नारायणेन कौरव्य तेजसाऽऽप्यायितस्तदा । स बभूव महातेजा भूयो बलसमन्वितः ।
तस्य पुत्रैः खनद्भिश्च वालुकान्तर्हितस्तदा । धुन्धुरासादितो राजन् दिशमाश्रित्य पश्चिमां ।
मुखजेनाग्निना क्रोधाल्लोकानुद्वर्त्तयन्निव । वारि सुस्राव वेगेन महोदधिरिवोदये ।
सोमस्य भरतश्रेष्ठ धारोर्म्मिकलिलं महत् । तस्य पुत्रशतं दग्धं त्रिभिरूनन्तु रक्षसा । ७००
ततः स राजा कौरव्य राक्षसं तं महाबलं । आससाद महातेजा धुन्धुं धुन्धुनिवर्हणः ।
तस्य वारिमयं वेगमपिबत् स नराधिपः । योगी योगेन वह्निञ्च शमयामास वारिणा ।
निहत्य तं महाकायं बलेनोदकराक्षसं । उत्तङ्कं दर्शयामास कृतकर्म्मा नराधिपः ।
उत्तङ्कस्तु वरं प्रादात्तस्मै राज्ञे महात्मने । तस्याक्षयं ददौ वित्तं शत्रुभिश्चापराजयं ।
धर्म्मे रतिञ्च सततं स्वर्गे वासं तथाऽक्षयं । पुत्राणाञ्चाक्षयान् लोकान् स्वर्गे ये रक्षसा हताः । ७०५
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि धुन्धुवधे एकादशोऽध्यायः ॥ ११ ॥
॥ वैशम्पायन उवाच ॥ तस्य पुत्रास्त्रयः शिष्टा दृढाश्वो ज्येष्ठ उच्यते । चन्द्राश्वकपिलाश्वौ तु कुमारौ द्वौ कनीयसौ ।
धौन्धुमारिर्दृढाश्वस्तु हर्य्यश्वस्तस्य चात्मजः । हर्य्यश्वस्य निकुम्भोऽभूत् क्षत्रधर्म्मरतः सदा ।
संहताश्वो निकुम्भस्य पुत्रो रणविशारदः । अकृशाश्वकृशाश्वौ तु संहताश्वसुतौ नृप ।
तस्य हैमवती कन्या सतां माता दृषद्वती । विख्याता त्रिषु लोकेषु पुत्रश्चास्याः प्रसेनजित् ।
लेभे प्रसेनजिद्भार्य्यां गौरीं नाम पतिव्रताम् । अभिशप्ता तु सा भर्त्रा नदी वै बाहुदाऽभवत् । ७१०
तस्याः पुत्रो महानासीत् युवनाश्वो महीपतिः । मान्धाता युवनाश्वस्य त्रिलोकविजयी सुतः ।
तस्य चैत्ररथी भार्य्या शशबिन्दोः सुताऽभवत् । साध्वी बिन्दुमती नाम रूपेणासदृशी भुवि ।
पतिव्रता च ज्येष्ठा च भ्रातॄणामयुतस्य सा । तस्यामुत्पादयामास मान्धाता द्वौ सुतौ नृप ।
पुरुकुत्सञ्च धर्म्मज्ञं मुचुकुन्दञ्च धार्म्मिकं । पुरुकुत्ससुतस्त्वासीत्त्रसद्दस्युर्महीपतिः ।
नर्म्मदायामथोत्पन्नः सम्भूतस्तस्य चात्मजः । सम्भूतस्य च दायादः सुधन्वा नाम पार्थिवः । ७१५
सुधन्वनः सुतश्चासीत्त्रिधन्वा रिपुमर्द्दनः । राज्ञस्त्रिधन्वणश्चासीद्विद्वांस्त्रय्यारुणः सुतः ।
तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः । पाणिग्रहणमन्त्राणां विघ्नं चक्रे स दुर्म्मतिः ।
येन भार्य्या हृता पूर्व्वं कृतोद्वाहा परस्य वै । बाल्यात्कामाच्च मोहाच्च संहर्षाच्चापलेन च ।
जहार कामात्कन्यां स कस्यचित्पुरवासिनः । अधर्म्मशङ्कुना तेन राजा त्रय्यारुणोऽत्यजत् ।
अपध्वंसेति बहुशो वदन् क्रोधसमन्वितः । पितरं सोऽब्रवीत्त्यक्तः क्व गच्छामीति वै मुहुः । ७२०
पिता च तमथोवाच श्वपाकैः सह वर्त्तय । नाहं पुत्रेण पुत्रार्थी त्वयाऽद्य कुलपांसन ।
इत्युक्तः स निराक्रामन्नगराद्वचनात्पितुः । न च तं वारयामास वशिष्ठो भगवानृषिः ।
स तु सत्यव्रतस्तात श्वपाकावसथान्तिके । पित्रा त्यक्तोऽवसद्वीरः पिताऽप्यस्य वनं ययौ ।
ततस्तस्मिंस्तु विषये नावर्षत्पाकशासनः । समा द्वादश राजेन्द्र तेनाधर्म्मेण वै तदा ।
दारांस्तु तस्य विषये विश्वामित्रो महातपाः । संन्यस्य सागरानूपे चचार विपुलं तपः । ७२५

तस्य पत्नी गले बद्धा मध्यमं पुत्रमौरसं । शेषस्य भरणार्थाय व्यक्रीणाद्गोशतेन वै ।
तन्तु बद्धं गले दृष्ट्वा विक्रयार्थं नृपात्मजः । महर्षिपुत्रं धर्म्मात्मा मोक्षयामास भारत ।
सत्यव्रतो महाबाहुर्भरणन्तस्य चाकरोत् । विश्वामित्रस्य तुष्ट्यर्थमनुकम्पार्थमेव च ।
सोऽभवद्गालवो नाम गले बन्धान्महातपाः । महर्षिः कौशिकस्तात तेन वीरेण मोक्षितः ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि गालवोत्पत्तौ द्वादशोऽध्यायः ॥ १२ ॥

॥ वैशम्पायन उवाच ॥ सत्यव्रतस्तु भक्त्या च कृपया च प्रतिज्ञया । विश्वामित्रकलत्रं तद्बभार विनये स्थितः । ७१०
हत्वा मृगान् वराहांश्च महिषांश्च वनेचरान् । विश्वामित्राश्रमाभ्याशे मांसं वृक्षे बबन्ध सः ।
उपांशुव्रतमास्थाय दीक्षां द्वादशवार्षिकीं । पितुर्नियोगादवसत्तस्मिन् वनगते नृपे ।
अयोध्याञ्चैव राष्ट्रं च तथैवान्तःपुरं मुनिः । याज्योपाध्यायसम्बन्धाद्वशिष्ठः पर्य्यरक्षत ।
सत्यव्रतस्तु बाल्याद्वै भाविनोऽर्थस्य वा बलात् । वशिष्ठेऽभ्यधिकं मन्युं धारयामास नित्यशः ।
पित्रा हि तं तदा राज्यात्त्यज्यमानं स्वमात्मजं । न वारयामास मुनिर्व्वशिष्ठः कारणेन ह । ७१५
पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे । न च सत्यव्रतस्तस्माद्धृतवान् सप्तमे पदे ।
जानन्धर्म्मान् वशिष्ठस्तु न मां त्रातीति भारत । सत्यव्रतस्तदा रोषं वशिष्ठे मनसाऽकरोत् ।
गुणबुद्ध्या तु भगवान् वशिष्ठः कृतवांस्तदा । न च सत्यव्रतस्तस्य तमुपांशुमबुध्यत ।
तस्मिन्नपरितोषो यः पितुरासीन्महात्मनः । तेन द्वादशवर्षाणि नावर्षत् पाकशासनः ।
तेन त्विदानीं वहता दीक्षान्तां दुर्व्वहां भुवि । कुलस्य निष्कृतिस्तात कृता सा वै भवेदिति । ७२०
न तं वशिष्ठो भगवान् पित्रा त्यक्तं न्यवारयत् । अभिषेक्ष्याम्यहं पुत्रमस्येत्येवं मतिर्मुनेः ।
स तु द्वादशवर्षाणि तां दीक्षामुद्वहन् बली । अविद्यमाने मांसे तु वशिष्ठस्य महात्मनः ।
सर्व्वकामदुघान्दोग्ध्रीं ददर्श स नृपात्मजः । तां वै क्रोधाच्च मोहाच्च श्रमाच्चैव क्षुधार्द्दितः ।
दशधर्म्मगतो राजा जघान जनमेजय । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश । तच्च मांसं स्वयञ्चैव विश्वामित्रस्य चात्मजान् । ७२५
भोजयामास तच्छ्रुत्वा वशिष्ठोऽप्यस्य चुक्रुधे । क्रुद्धस्तु भगवान्वाक्यमिदमाह नृपात्मजं ।
॥ वशिष्ठ उवाच ॥ पातयेयमहं क्रूर तव शङ्कुमसंशयं । यदि ते द्वाविमौ शङ्कू न स्यातां वै पुनः कृतौ ।
पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च । अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ।
॥ वैशम्पायन उवाच ॥ एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महातपाः । त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः ।
विश्वामित्रस्तु दाराणामागतो भरणे कृते । स तु तस्मै वरं प्रादान्मुनिः प्रीतस्त्रिशङ्कवे । ७३०
छन्द्यमानो वरेणाथ वरं वव्रे नृपात्मजः । सशरीरो व्रजे स्वर्गमित्येवं याचितो वरः ।
अनावृष्टिभये तस्मिन् गते द्वादशवार्षिके । पित्र्येऽभिषिच्य राज्ये तु याजयामास तं मुनिः ।
मिषतां देवतानाञ्च वशिष्ठस्य च कौशिकः । सशरीरं तदा तन्तु दिवमारोपयत्प्रभुः ।
तस्य सत्यरथा नाम पत्नी केकयवंशजा । कुमारं जनयामास हरिश्चन्द्रमकल्मषं ।

स वै राजा हरिश्चन्द्रस्त्रैशङ्कव इति स्मृतः । आहर्त्ता राजसूयस्य सम्राडिति च विश्रुतः । ७५५
हरिश्चन्द्रस्य पुत्त्रोऽभूद्रोहितो नाम वीर्य्यवान् । येनेदं रोहितपुरं कारितं राज्यसिद्धये ।
कृत्वा राज्यं स राजर्षिः पालयित्वा तथा प्रजाः । संसारासारतां ज्ञात्वा द्विजेभ्यस्तत्पुरन्ददौ ।
हरितो रोहितस्याथ चञ्चुर्हारित उच्यते । विजयश्च सुदेवश्च चञ्चुपुत्त्रौ बभूवतुः ।
जेता क्षत्त्रस्य सर्व्वस्य विजयस्तेन स स्मृतः । रुरुकस्तनयस्तस्य राजा धर्म्मार्थकोविदः ।
रुरुकस्य वृकः पुत्त्रो वृकाद्बाहुस्तु जज्ञिवान् । शकैर्यवनकाम्बोजैः पारदैः पह्नवैः सह । ७६०
हैहयास्तालजङ्घाश्च निरस्यन्ति स्म तं नृप । नात्यर्थं धार्म्मिकस्तात स हि धर्म्मयुगेऽभवत् ।
सगरस्तु सुतो बाहोर्जज्ञे सह गरेण सः । और्व्वस्याश्रममासाद्य भार्गवेणाभिरक्षितः ।
आग्नेयमस्त्रं लब्ध्वा च भार्गवात्सगरो नृपः । जिगाय पृथिवीं हत्वा तालजङ्घान् सहैहयान् ।
शकानां पह्नवानाञ्च धर्म्मं निरसदच्युतः । क्षत्त्रियाणां कुरुश्रेष्ठ पारदानां स धर्म्मवित् ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि त्रिशङ्कुचरिते त्रयोदशोऽध्यायः ॥ १३ ॥

॥ जनमेजय उवाच ॥ कथं स सगरो जातो गरेणैव सहाच्युतः । किमर्थञ्च शकादीनां क्षत्त्रियाणां महौजसां । ७६५
धर्म्मं कुलोचितं क्रुद्धो राजा निरसदच्युतः । एतन्मे सर्व्वमाचक्ष्व विस्तरेण तपोधन ।
॥ वैशम्पायन उवाच ॥ बाहोर्व्यसनिनस्तात हृतं राज्यमभूत्किल । हैहयैस्तालजङ्घैश्च शकैः सार्द्धं विशाम्पते ।
यवनाः पारदाश्चैव काम्बोजाः पह्नवाः खशाः । एते ह्यपि गणाः पञ्च हैहयार्थे पराक्रमन् ।
हृतराज्यस्तदा राजा स वै बाहुर्वनं ययौ । पत्न्या चानुगतो दुःखी वने प्राणानवासृजत् ।
पत्नी तु यादवी तस्य सगर्भा पृष्ठतोऽन्वगात् । सपत्न्या तु गरस्तस्यै दत्तः पूर्व्वमभूत्किल । ७७०
सा तु भर्त्तुश्चितां कृत्वा वने तामभ्यरोहत । और्व्वस्तां भार्गवस्तात कारुण्यात्समवारयत् ।
तस्याश्रमे च तं गर्भं गरेणैव सहाच्युत । व्यजायत महाबाहुं सगरं नाम पार्थिवं ।
और्व्वस्तु जातकर्म्मादि तस्य कृत्वा महात्मनः । अध्याप्य वेदानखिलांस्ततोऽस्त्रं प्रत्यपादयत् ।
आग्नेयन्तु महाबाहुरमरैरपि दुःसहं । स तेनास्त्रबलेनाजौ बलेन च समन्वितः ।
हैहयान्निजघानाशु क्रुद्धो रुद्रः पशूनिव । आजहार च लोकेषु कीर्त्तिं कीर्त्तिमतां वरः । ७७५
ततः शकान् सयवनान् काम्बोजान् पारदांस्तथा । पह्नवांश्चैव निःशेषान् कर्त्तुं व्यवसितः किल ।
ते वध्यमाना वीरेण सगरेण महात्मना । वशिष्ठं शरणं गत्वा प्रणिपेतुर्मनीषिणं ।
वशिष्ठस्त्वथ तान् दृष्ट्वा समयेन महाद्युतिः । सगरं वारयामास तेषां दत्त्वाऽभयन्तदा ।
सगरः स्वाम्प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च । धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह ।
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत् । यवनानां शिरः सर्व्वं काम्बोजानां तथैव च । ७८०
पारदा मुक्तकेशाश्च पह्नवाः श्मश्रुधारिणः । निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ।
शका यवनकाम्बोजाः पारदाः पह्नवास्तथा । कोलिसर्पाः समहिषा दार्व्वाश्चोलाः सकेरलाः ।
सर्व्वे ते क्षत्त्रियास्तात धर्म्मस्तेषां निराकृतः । वशिष्ठवचनाद्राजन् सगरेण महात्मना ।

खशांस्तुषारांश्चोलांश्च मद्रान् किष्किन्धकांस्तथा । कौन्तलांश्च तथा वङ्गान् साल्वान् कौङ्कणकांस्तथा ।
स धर्म्मविजयी राजा विजित्येमां वसुन्धरां । अश्वं प्रचारयामास वाजिमेधाय दीक्षितः । ७८५
तस्य चारयतः सोऽश्वः समुद्रे पूर्व्वदक्षिणे । वेलासमीपेऽपहृतो भूमिञ्चैव प्रवेशितः ।
स तं देशं तदा पुत्रैः खानयामास पार्थिवः । आसेदुस्ते तदा तत्र खन्यमाने महार्णवे ।
तमादिदेवं पुरुषं हरिं कृष्णं प्रजापतिं । विष्णुं कपिलरूपेण स्वपन्तं पुरुषोत्तमं ।
तस्य चक्षुःसमुत्थेन तेजसा प्रतिबुध्यतः । दग्धास्ते वै महाराज चत्वारस्त्ववशेषिताः ।
बर्हकेतुः सुकेतुश्च तथा धर्म्मरथो नृपः । शूरः पञ्चजनो नाम तस्य वंशकरा नृप । ७९०
प्रादाच्च तस्मै भगवान् हरिर्नारायणो वरं । अक्षयं वंशमिक्ष्वाकोः कीर्त्तिञ्चाप्यनिवर्त्तिनीं ।
पुत्रं समुद्रञ्च विभुः स्वर्गे वासन्तथाऽक्षयं । पुत्राणां चाक्षयान् लोकान् तस्य ये चक्षुषा हताः ।
समुद्रश्चार्घ्यमादाय ववन्दे तं महीपतिं । सागरत्वञ्च लेभे स कर्म्मणा तेन तस्य वै ।
तञ्चाश्वमेधिकं सोऽश्वं समुद्रादुपलब्धवान् । आजहाराश्वमेधानां शतं स सुमहायशाः ।
पुत्राणाञ्च सहस्राणि षष्टिस्तस्येति नः श्रुतं । ७९५

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि सगरोत्पत्तिचरितकथने चतुर्द्दशोऽध्यायः ॥ १४ ॥

॥ जनमेजय उवाच ॥ सगरस्यात्मजा वीराः कथं जाता महात्मनः । विक्रान्ताः षष्टिसाहस्रा विधिना केन वा द्विज ।
॥ वैशम्पायन उवाच ॥ द्वे भार्य्ये सगरस्यास्तां तपसा दग्धकिल्बिषे । ज्येष्ठा विदर्भदुहिता केशिनी नाम विश्रुता ।
कनीयसी तु महती पत्नी परमधर्म्मिणी । अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ।
और्व्वस्ताभ्यां वरं प्रादात्तद्बिबोध जनाधिप । षष्टिं पुत्रसहस्राणि गृह्णात्वेका तपस्विनी ।
एकं वंशधरं त्वेका यथेष्टं वरयत्विति । तत्रैका जगृहे पुत्रान् भृशं शूरान् बहूंस्तथा । ८००
एकं वंशधरं त्वेका तथेत्याह महामुनिः । केशिन्यसूत सगरादसमञ्जसमात्मजं ।
राजा पञ्चजनो नाम बभूव स महाबलः । इतरा सुषुवे तुम्बीं बीजपूर्णामिति श्रुतिः ।
तत्र षष्टिसहस्राणि गर्भास्ते तिलसंमिताः । सम्बभूवुर्यथाकालं ववृधुश्च यथाक्रमं ।
घृतपूर्णेषु कुम्भेषु तान् गर्भान्निदधे पिता । धात्रीश्चैकैकशः प्रादात्तावतीरेव पोषणे ।
ततो दशसु मासेषु समुत्तस्थुर्यथासुखं । कुमारास्ते यथाकालं सगरप्रीतिवर्द्धनाः । ८०५
षष्टिः पुत्रसहस्राणि तस्यैवमभवन्नृप । गर्भादलाबुमध्याद्वै जातानि पृथिवीपते ।
तेषां नारायणं तेजः प्रविष्टानां महात्मनां । एकः पञ्चजनो नाम पुत्रो राजा बभूव ह ।
सुतः पञ्चजनस्यासीदंशुमान्नाम वीर्य्यवान् । दिलीपस्तनयस्तस्य खट्वाङ्ग इति विश्रुतः ।
येन स्वर्गादिहागत्य मुहूर्त्तं प्राप्य जीवितं । त्रयोऽनुसन्धिता लोका बुद्ध्या सत्येन चानघ ।
दिलीपस्य तु दायादो महाराजो भगीरथः । यः स गङ्गां सरिच्छ्रेष्ठामवातारयत प्रभुः । ८१०
कीर्त्तिमान् स महाभागः शक्रतुल्यपराक्रमः । समुद्रमानयच्चैनां दुहितृत्वेन कल्पयन् ।
तस्माद्भागीरथी गङ्गा कथ्यते वंशचिन्तकैः । भगीरथसुतो राजा श्रुत इत्यभिविश्रुतः ।

नाभागस्य सुतस्त्वासीत्पुत्रः परमधार्म्मिकः। अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताऽभवत्।
अयुताजित्तु दायादः सिन्धुद्वीपस्य वीर्य्यवान्। अयुताजित्सुतस्त्वासीदृतुपर्णो महायशाः।
दिव्याक्षहृदयज्ञो वै राजा नलसखो बली। ऋतुपर्णसुतस्त्वासीदार्त्तपर्णिर्महीपतिः। ८११
सुदासस्तस्य तनयो राजा इन्द्रसखोऽभवत्। सुदासस्य सुतस्त्वासीत्सौदासो नाम पार्थिवः।
ख्यातः कल्माषपादो वै राजा मित्रसहोऽभवत्। कल्माषपादस्य सुतः सर्व्वकर्म्मेति विश्रुतः।
अनरण्यस्तु पुत्रोऽभूद्विश्रुतः सर्व्वकर्म्मणः। अनरण्यसुतो निघ्नो निघ्नपुत्रौ बभूवतुः।
अनमित्रो रघुश्चैव पार्थिवर्षभसत्तमौ। अनमित्रसुतो राजा विद्वान् दुलिदुहोऽभवत्।
दिलीपस्तनयस्तस्य रामस्य प्रपितामहः। दीर्घबाहुर्द्दिलीपस्य रघुर्नाम्नाऽभवत्सुतः। ८२०
अयोध्यायां महाराजो रघुरासीन्महाबलः। अजस्तु राघवो जज्ञे अजाद्दशरथोऽभवत्।
रामो दशरथाज्जज्ञे धर्म्मात्मा सुमहायशाः। रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः।
अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः। निषधस्य नलः पुत्रो नभः पुत्रो नलस्य तु।
नभसः पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः। क्षेमधन्वसुतस्त्वासीद्देवानीकः प्रतापवान्।
आसीदहीनगुर्न्नाम देवानीकात्मजः प्रभुः। अहीनगोस्तु दायादः सुधन्वा नाम पार्थिवः। ८२५
सुधन्वनः सुतश्चैव ततो जज्ञे नलो नृप। उक्थो नाम स धर्म्मात्मा नलपुत्रो बभूव ह।
वज्रनाभः सुतस्तस्य उक्थस्य च महात्मनः। शङ्खस्तस्य सुतो विद्वान् व्युषिताश्व इति श्रुतः।
पुष्यस्तस्य सुतो विद्वानर्थसिद्धिस्तु तत्सुतः। सुदर्शनः सुतस्तस्य अग्निवर्णः सुदर्शनात्।
अग्निवर्णसुतः शीघ्रः शीघ्रस्य तु मरुः सुतः। मरुस्तु योगमास्थाय कलापद्वीपमास्थितः।
तस्यासीद्विश्रुतवतः पुत्रो राजा बृहद्बलः। नलौ द्वावेव विख्यातौ पुराणे भरतर्षभ। ८३०
वीरसेनात्मजश्चैव यश्चेक्ष्वाकुकुलोद्वहः। इक्ष्वाकुवंशप्रभवाः प्राधान्येनेह कीर्त्तिताः।
एते विवस्वतो वंशे राजानोऽमिततेजसः। पठन् सम्यगिमां सृष्टिमादित्यस्य विवस्वतः।
श्राद्धदेवस्य देवस्य प्रजानां पुष्टिदस्य च। प्रजावानेति सायुज्यमादित्यस्य विवस्वतः।
विपाप्मा विरजाश्चैव आयुष्मांश्च भवत्युत।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि आदित्यवंशानुकीर्त्तने पञ्चदशोऽध्यायः ॥ १५ ॥
॥ जनमेजय उवाच ॥ कथं वै श्राद्धदेवत्वमादित्यस्य विवस्वतः। श्रोतुमिच्छामि विप्राग्र्य श्राद्धस्य च परं विधिं। ८३५
पितृणामादिसर्गञ्च क एते पितरः स्मृताः। एवञ्च श्रुतमस्माभिः कथ्यमानं द्विजातिभिः।
स्वर्गस्थाः पितरोऽन्येषां देवानामपि देवताः। इति वेदविदः प्राहुरेतदिच्छामि वेदितुं।
ये च तेषां गणाः प्रोक्ता यच्च तेषां परं बलं। यथा च कृतमस्माभिः श्राद्धं प्रीणाति वै पितॄन्।
प्रीताश्च पितरो ये च श्रेयसा योजयन्ति हि। एवं वेदितुमिच्छामि पितॄणां सर्गमुत्तमं।
॥ वैशम्पायन उवाच ॥ हन्त ते कथयिष्यामि पितॄणां सर्गमुत्तमं। यथा च कृतमस्माभिः श्राद्धं प्रीणाति वै पितॄन्। ८४०
प्रीताश्च पितरो ये च श्रेयसा योजयन्ति हि। मार्कण्डेयेन कथितं भीष्माय परिपृच्छते।

अपृच्छत्कुरुराजो हि शरतल्पगतं पुरा। एवमेव पुरा प्रश्नं यथा त्वं परिपृच्छसि।
तत्तेऽनुपूर्व्या वक्ष्यामि भीष्मेणोदाहृतं यथा। गीतं सनत्कुमारेण मार्कण्डेयाय पृच्छते।
॥ युधिष्ठिर उवाच ॥ पुष्टिकामेन धर्म्मज्ञ कथं पुष्टिरवाप्यते। एतद्वै श्रोतुमिच्छामि किं कुर्वाणो न शोचति।
॥ भीष्म उवाच ॥ श्राद्धैः प्रीणाति हि पितॄन् सर्व्वकामफलैस्तु यः। तत्परः प्रयतः श्राद्धी प्रेत्य चेह च मोदते। ८०५
पितरो धर्म्मकामस्य प्रजाकामस्य च प्रजां। पुष्टिकामस्य पुष्टिञ्च प्रयच्छन्ति युधिष्ठिर।
॥ युधिष्ठिर उवाच ॥ वर्त्तन्ते पितरः स्वर्गे केषाञ्चिन्नरके पुनः। प्राणिनां नियतं ह्युक्तं कर्म्मजं फलमुच्यते।
श्राद्धानि चैव कुर्व्वन्ति फलकामाः सदा नराः। अभिसन्धाय पितरं पितुश्च पितरं तथा।
पितुः पितामहञ्चैव त्रिषु पिण्डेषु नित्यशः। तानि श्राद्धानि दत्तानि कथं गच्छन्ति वै पितॄन्।
कथञ्च शक्तास्ते दातुं निरयस्थाः फलं पुनः। के वा ते पितरोऽन्ये स्म कान् यजामो वयं पुनः। ८१०
देवा अपि पितॄन् स्वर्गे यजन्तीति च नः श्रुतं। एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते।
स भवान् कथयत्वेतां कथाममितबुद्धिमान्। यथा दत्तं पितॄणां वै तारणायेह कल्पते।
॥ भीष्म उवाच ॥ अत्र ते वर्णयिष्यामि यथाश्रुतमरिन्दम। ये च ते पितरोऽन्ये स्म यान् यजामो वयं पुनः।
पित्रा मम पुरा गीतं लोकान्तरगतेन वै। श्राद्धकाले मम पितुर्मया पिण्डः समुद्यतः।
तं पिता मम हस्तेन भित्त्वा भूमिमयाचत। हस्ताभरणपूर्णेन केयूराभरितेन च। ८१५
रक्ताङ्गुलितलेनाथ यथा दृष्टः पुरा मया। नैष कल्पविधिर्दृष्ट इति निश्चित्य चाप्यहं।
कुशेष्वेव तदा पिण्डं दत्तवानविचारयन्। ततः पिता मे सुप्रीतो वाचा मधुरया तदा।
उवाच भरतश्रेष्ठ प्रीयमाणो मयाऽनघ। त्वया दायादवानस्मि कृतार्थोऽमुत्र चेह च।
सत्पुत्रेण त्वया पुत्र धर्म्मज्ञेन विपश्चिता। मया तु तव जिज्ञासा प्रयुक्तैषा दृढव्रत।
व्यवस्थानञ्च धर्म्मेषु कर्त्तुं लोकस्य चानघ। यथा चतुर्थं धर्म्मस्य रक्षिता लभते फलं। ८२०
पापस्य हि तथा मूढः फलं प्राप्नोत्यरक्षिता। प्रमाणं यद्धि कुरुते धर्म्माचारेषु पार्थिवः।
प्रजास्तदनुवर्त्तन्ते प्रमाणाचरितं सदा। त्वया च भरतश्रेष्ठ वेदधर्म्माश्च शाश्वताः।
कृताः प्रमाणं प्रीतिश्च मम निर्व्वर्त्तिताऽतुला। तस्मात्तवाहं सुप्रीतः प्रीत्या वरमनुत्तमं।
ददामि तं प्रतीच्छ त्वं त्रिषु लोकेषु दुर्लभं। न ते प्रभविता मृत्युर्यावज्जीवितुमिच्छसि।
त्वत्तोऽभ्यनुज्ञां सम्प्राप्य मृत्युः प्रभविता तव। किं वा ते प्रार्थितं भूयो ददामि वरमुत्तमं। ८२५
तद्ब्रूहि भरतश्रेष्ठ यत्ते मनसि वर्त्तते। इत्युक्तवन्तं तमहमभिवाद्य कृताञ्जलिः।
अब्रुवं कृतकृत्योऽहं प्रसन्ने त्वयि सत्तम। यदि त्वनुग्रहं भूयस्त्वत्तोऽर्हामि महाद्युते।
प्रश्नमिच्छाम्यहं किञ्चिद्व्याहृतं भवता स्वयं। स मामुवाच धर्म्मात्मा ब्रूहि भीष्म यदिच्छसि।
छेत्तास्मि संशयं तात यन्मां पृच्छसि भारत। अपृच्छं तमहं तातं तथान्तर्हितमेव च।
गतं सुकृतिनां लोकं कौतूहलसमन्वितः। ८३०
॥ भीष्म उवाच ॥ श्रूयन्ते पितरो देवा देवानामपि देवताः। देवाश्च पितरोऽन्ये वा कान् यजामो वयं पुनः।

कथञ्च दत्तमस्माभिः श्राद्धं प्रीणात्यथो पितॄन् । लोकानन्यगतांस्तान किन्नु श्राद्धस्य वा फलं ।
कान् यजन्ति स्म लोकान् वै सदेवनरदानवाः । सयक्षरोगगन्धर्व्वाः सकिन्नरमहोरगाः ।
अत्र मे संशयस्तीव्रः कौतूहलमतीव च । तद्ब्रूहि मम धर्म्मज्ञ सर्व्वज्ञो ह्यसि मे मतः ।
एतच्छ्रुत्वा वचस्तस्य भीष्मश्चोवाच वै पिता । ८७५

॥ शान्तनुरुवाच ॥ सङ्क्षेपेणैव ते वक्ष्ये यन्मां पृच्छसि भारत । पितरश्च यथाश्रुताः फलं दत्तस्य चानघ ।
पितृणां कारणं श्राद्धे शृणु सर्व्वं समाहितः । आदिदेवसुतास्तात पितरो दिवि देवताः ।
तान् यजन्ति स्म वै लोकाः सदेवासुरमानुषाः । सयक्षरोगगन्धर्व्वाः सकिन्नरमहोरगाः ।
आप्यायितास्च ते श्राद्धैः पुनराप्याययन्ति च । जगत्सदेवगन्धर्व्वमिति ब्रह्मानुशासनं ।
तान् यजस्व महाभाग श्राद्धैरग्र्यैरतन्द्रितः । ते ते श्रेयो विधास्यन्ति सर्व्वकामफलप्रदाः । ८८०
तथैवाराध्यमानास्ते नामगोत्रानुकीर्त्तनैः । अस्मानाप्याययिष्यन्ति स्वर्गस्थानपि भारत ।
मार्कण्डेयस्तु ते प्रश्नमेतत्सर्व्वं प्रवक्ष्यति । एष वै पितृभक्तश्च विदितात्मा च भारत ।
उपस्थितश्च श्राद्धेऽद्य ममैवानुग्रहाय वै । एनं पृच्छ महाभागमित्युक्त्वाऽन्तरधीयत ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पितृकल्पे षोडशोऽध्यायः ॥ १६ ॥

॥ भीष्म उवाच ॥ ततोऽहं तस्य वचनान्मार्कण्डेयं समाहितः । प्रश्नं तमेवाप्रच्छं च यथा पृष्टः पुरा पिता ।
स मामुवाच धर्म्मात्मा मार्कण्डेयो महातपाः । भीष्म वक्ष्यामि कार्त्स्न्येन शुश्रूषुः प्रयतो भव । ८८५
अहं पितृप्रसादाद्वै दीर्घायुष्ट्वमवाप्तवान् । पितृभक्त्यैव लब्धञ्च प्राप्तो लोके परमं यशः ।
सोऽहं युगस्य पर्य्यन्ते बहुवर्षसहस्रिके । अधिरुह्य गिरिं मेरुं तपोऽतप्यं सुदुश्चरं ।
ततः कदाचित्पश्यामि दिवं प्रज्वाल्य तेजसा । विमानमहमायान्तमुत्तरेण गिरेस्तदा ।
तस्मिन् विमाने पर्य्यङ्के ज्वलिताङ्गारवर्चसं । अपश्यं तत्र चैवाहं शयानं दीप्ततेजसं ।
अङ्गुष्ठमात्रं पुरुषमग्नावग्निमिवाहितं । सोऽहं तस्मै नमस्कृत्य प्रणम्य शिरसा विभुं । ८९०
सन्निविष्टं विमानस्थं पाद्यार्घ्याभ्यामपूजयं । अपृच्छञ्चैव दुर्द्धर्षं विद्याम त्वां कथं विभो ।
तपोवीर्य्यात् समुत्पन्नं नारायणगुणात्मकं । दैवतं ह्यसि देवानामिति मे वर्त्तते मतिः ।
स मामुवाच धर्म्मात्मा स्मयमान इवानघ । न ते तपः सुचरितं येन मां नावबुध्यसे ।
क्षणेनैव प्रमाणं स बिभ्रदन्यदनुत्तमं । रूपेण च पुमांस्तादृग्दृष्टपूर्व्वो न मे क्वचित् ।

॥ सनत्कुमार उवाच ॥ विद्धि मां ब्रह्मणः पुत्रं मानसं पूर्व्वजं विभो । तपोवीर्य्यात्समुत्पन्नं नारायणगुणात्मकं । ८९५
सनत्कुमार इति यः श्रुतो वेदेषु वै पुरा । सोऽस्मि भार्गव भद्रन्ते कं कामं करवाणि ते ।
ये त्वन्ये ब्रह्मणः पुत्रा यवीयांसस्तु ते मम । भ्रातरः सप्त दुर्द्धर्षास्तेषां वंशाः प्रतिष्ठिताः ।
क्रतुर्वसिष्ठः पुलहः पुलस्त्योऽत्रिस्तथाऽङ्गिराः । मरीचिश्च तथा विद्वान् देवगन्धर्व्वसेविताः ।
त्रीन् लोकान् धारयन्तीमे देवदानवपूजिताः । वयन्तु यतिधर्म्माणः संयोज्यात्मानमात्मनि ।
प्रजा धर्म्मञ्च कामञ्च व्यवहाय महामुने । यथोत्पन्नस्तथैवाहं कुमार इति विद्धि मां । ९००

तस्मात्सनत्कुमारेति नामैतन्मे प्रतिष्ठितं । मद्भक्त्या ते तपस्वीशं मम दर्शनकाङ्क्षया ।
एष दृष्टोऽस्मि भवता कं कामं करवाणि ते । इत्युक्तवन्तं तमहं प्रत्यवोचं सनातनं ।
अनुज्ञातो भगवता प्रीयमाणेन भारत । ततोऽहमेतमर्थं वै तमपृच्छं सनातनं ।
पृष्टः पितॄणां सर्गञ्च फलं श्राद्धस्य चानघ । चिच्छेद संशयं भीष्म स च देवेश्वरो मम ।
स मामुवाच धर्म्मात्मा कथान्ते बहुवार्षिके । रमे त्वयाऽहं विप्रर्षे शृणु सर्व्वं यथातथं । ९०५
देवानसृजत ब्रह्मा मां यक्ष्यन्तीति भार्गव । तमुत्सृज्य तदात्मानमयजंस्ते फलार्थिनः ।
ते शप्ता ब्रह्मणा मूढा नष्टसंज्ञा दिवौकसः । न स्म किञ्चिद्विजानन्ति ततो लोकोऽप्यमुह्यत ।
ते भूयः प्रणताः शप्ताः प्रायाचन्त पितामहं । अनुग्रहाय लोकानां ततस्तानब्रवीद्विभुः ।
प्रायश्चित्तञ्चरध्वं वै व्यभिचारो हि वः कृतः । पुत्रांश्च परिपृच्छध्वं ततो ज्ञानमवाप्स्यथ ।
प्रायश्चित्तक्रियार्थन्ते पुत्रान् पप्रच्छुरार्त्तवत् । तेभ्यस्ते प्रयतात्मानः शशंसुस्तनयास्तदा । ९१०
प्रायश्चित्तानि धर्म्मज्ञा वाङ्मनःकर्म्मजानि वै । शंसन्ति कुशला नित्यं चक्षुष्मामपि नित्यशः ।
प्रायश्चित्तार्थतत्त्वज्ञा लब्धसंज्ञा दिवौकसः । गम्यतां पुत्रका एवं पुत्रैरुक्ताश्च ते तदा ।
अभिशस्तास्तु वै देवाः पुत्रवाक्येन तेन वै । पितामहमुपागच्छन् संशयच्छेदनाय वै ।
ततस्तानब्रवीद्देवो यूयं वै ब्रह्मवादिनः । तस्माद्यदुक्ता यूयं तैस्तत्तथा न तदन्यथा ।
यूयं शरीरकर्त्तारस्तेषां देवा भविष्यथ । ते तु ज्ञानप्रदातारः पितरो वो न संशयः । ९१५
अन्योन्यं पितरो यूयं ते चैवेति न संशयः । देवाश्च पितरश्चैव तद्बुध्यध्वं दिवौकसः ।
ततस्ते पुनरागम्य पुत्रानूचुर्द्दिवौकसः । ब्रह्मणा छिन्नसन्देहाः प्रीतिमन्तः परस्परं ।
यूयं वै पितरोऽस्माकं यैर्व्वयं प्रतिबोधिताः । धर्म्मज्ञाः कश्च वः कामः को वरो वः प्रदीयतां ।
यदुक्तं चैव युष्माभिस्तत्तथा न तदन्यथा । उक्ता यदत्र युष्माभिः पुत्रका इति वै वयं ।
तस्माद्भवन्तः पितरो भविष्यथ न संशयः । योऽनिष्ट्वा च पितॄन् श्राद्धैः क्रियाः काश्चित्करिष्यति । ९२०
राक्षसा दानवा नागाः फलं प्राप्स्यन्ति तस्य तत् । श्राद्धैराप्यायिताश्चापि पितरः सोममव्ययं ।
आप्याय्यमाना युष्माभिर्व्वर्द्धयिष्यन्ति नित्यदा । श्राद्धैराप्यायितः सोमो लोकानाप्याययिष्यति ।
समुद्रपर्व्वतवनं जङ्गमाजङ्गमैर्वृतं । श्राद्धानि पुष्टिकामाश्च ये करिष्यन्ति मानवाः ।
तेभ्यः पुष्टिं प्रजां चैव दास्यन्ति पितरः सदा । श्राद्धे ये च प्रदास्यन्ति त्रीन् पिण्डान्नामगोत्रतः ।
सर्व्वत्र वर्त्तमानांस्तान् पितरः सपितामहाः । भावयिष्यन्ति सततं श्राद्धदानेन तर्पिताः । ९२५
एवमाज्ञापितं पूर्व्वं ब्रह्मणा परमेष्ठिना । इति तद्वचनं सत्यं भवत्वद्य दिवौकसः ।
पुत्राश्च पितरश्चैव वयं सर्व्वे परस्परं ।
॥ सनत्कुमार उवाच ॥ त एते पितरो देवा देवाश्च पितरस्तथा । अन्योन्यं पितरो ह्येते देवाश्च पितरश्च ह ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पितृकल्पे सप्तदशोऽध्यायः ॥ १७ ॥
॥ मार्कण्डेय उवाच ॥ इत्युक्तोऽहं भगवता देवदेवेन भास्वता । सनत्कुमारेण पुनः पृष्टवान् देवमव्ययं ।

सन्देहमेतमस्मेह भगवन्नमरिन्दम । निबोध तेन गाहृय निखिलं धर्म्मवादिनः । ९४०
कियन्तो वै पितृगणाः कस्मिन् लोके प्रतिष्ठिताः । वर्त्तन्ते देवप्रवरा देवानां सोमवर्द्धनाः ।
॥ सनत्कुमार उवाच ॥ सप्तैते यजतां श्रेष्ठ स्वर्गे पितृगणाः स्मृताः । चत्वारो मूर्त्तिमन्तश्च त्रयस्तेषाममूर्त्तयः ।
तेषां लोकं विसर्गञ्च कीर्त्तयिष्यामि तच्छृणु । प्रभावञ्च महत्त्वञ्च विस्तरेण तपोधन ।
धर्म्ममूर्त्तिधरास्तेषां त्रयो ये परमा गणाः । तेषां नामानि लोकांश्च कीर्त्तयिष्यामि तच्छृणु ।
लोकाः सनातना नाम यत्र तिष्ठन्ति भास्वराः । अमूर्त्तयः पितृगणास्ते वै पुत्राः प्रजापतेः । ९४५
विरजस्य द्विजश्रेष्ठ वैराजा इति विश्रुताः । यजन्ति तान् देवगणा विधिदृष्टेन कर्म्मणा ।
एते वै योगविभ्रष्टा लोकान् प्राप्य सनातनान् । पुनर्युगसहस्रान्ते जायन्ते ब्रह्मवादिनः ।
ते तां प्राप्य स्मृतिं भूयः साङ्ख्ययोगमनुत्तमं । यान्ति योगगतिं सिद्धाः पुनरावृत्तिदुर्ल्लभां ।
एते स्युः पितरस्तात योगिनां योगवर्द्धनाः । आप्याययन्ति ये पूर्व्वं सोमं योगबलेन वै ।
तस्माच्छ्राद्धानि देयानि योगिनाञ्च विशेषतः । एष वै प्रथमः कल्पः सोमपानां महात्मनां । ९५०
एतेषां मानसी कन्या मेना नाम महागिरेः । पत्नी हिमवतः श्रेष्ठा यस्या मैनाक उच्यते ।
मैनाकस्य सुतः श्रीमान् क्रौञ्चो नाम महागिरिः । पर्व्वतप्रवरः पुत्रो नानारत्नसमन्वितः ।
तिस्रः कन्यास्तु मेनायां जनयामास शैलराट् । अपर्णामेकपर्णाञ्च तृतीयामेकपाटलां ।
तपश्चरन्त्यः सुमहद्दुश्चरं देवदानवैः । लोकान् सन्तापयामासुस्तास्तिस्रः स्थाणुजङ्गमान् ।
आहारमेकपर्णेन एकपर्णा समाचरत् । पाटलापुष्पमेकञ्च आदधावेकपाटला । ९५५
एका तत्र निराहारा तां माता प्रत्यषेधयत् । उमा इति निषेधन्ती मातृस्नेहेन दुःखिता ।
सा तथोक्ता तदा मात्रा देवी दुश्चरचारिणी । उमेत्येवाभवत् ख्याता त्रिषु लोकेषु सुन्दरी ।
तथैव नाम्ना तेनेह विश्रुता योगधर्म्मिणी । एतत्तु त्रिकुमारीकं जगत् स्थास्यति भार्गव ।
तपःशरीरास्ताः सर्व्वास्तिस्रो योगबलान्विताः । सर्व्वाश्च ब्रह्मवादिन्यः सर्व्वाश्चैवोर्द्ध्वरेतसः ।
उमा तासां वरिष्ठा च ज्येष्ठा च वरवर्णिनी । महायोगबलोपेता महादेवमुपस्थिता । ९६०
असितस्यैकपर्णा तु देवलस्य महात्मनः । पत्नी दत्ता महाब्रह्मन् योगाचार्य्याय धीमते ।
जैगीषव्याय तु तथा विद्धि तामेकपाटलां । एते चापि महाभागे योगाचार्य्यावुपस्थिते ।
लोकाः सोमपदा नाम मरीचेर्यत्र वै सुताः । पितरो यत्र वर्त्तन्ते देवास्तान् भावयन्त्युत ।
अग्निष्वात्ता इति ख्याताः सर्व्व एवामितौजसः । एतेषां मानसी कन्या अच्छोदा नाम निम्नगा ।
अच्छोदं नाम विख्यातं सरो यस्याः समुत्थितं । तया न दृष्टपूर्व्वास्ते पितरस्ते कदाचन । ९६५
अप्यमूर्त्तानथ पितॄन् सा ददर्श शुचिस्मिता । सम्भूता मानसस्तेषां पितॄन् स्वानभिजानती ।
व्रीडिता तेन दुःखेन बभूव वरवर्णिनी । सा दृष्ट्वा पितरं वव्रे वसुं नामान्तरिक्षगं ।
अमावसुमिति ख्यातमायोः पुत्रं यशस्विनं । अद्रिकाप्सरसा युक्तं विमानेऽधिष्ठितं दिवि ।
सा तेन व्यभिचारेण मनसः कामरूपिणी । पितरं प्रार्थयित्वाऽन्यं योगभ्रष्टा पपात ह ।

सोऽपश्यद्विमानानि पतमाना दिवश्च्युता । त्रसरेणुप्रमाणानि सोऽपश्यत्तेषु तान् पितॄन् । ९६०

सुसूक्ष्मानपरिव्यक्तानग्नीनग्निष्विवाहितान् । त्रायध्वमित्युवाचार्त्ता पतन्ती तानवाक्शिराः ।

तैरुक्ता सा तु माभैषीरिति व्योम्नि व्यवस्थिता । ततः प्रसादयामास तान् पितॄन् दीनया गिरा ।

ऊचुस्ते पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात् । भ्रष्टैश्वर्या स्वदोषेण पतसि त्वं शुचिस्मिते ।

यैः क्रियन्ते हि कर्माणि शरीरैर्दिवि दैवतैः । तैरेव तत्कर्मफलं प्राप्नुवन्तीह देवताः ।

सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे । तस्मात्त्वं तपसः पुत्रि प्रेत्येदं प्राप्स्यसे फलं । ९६५

इत्युक्ता पितृभिः सा तु पितॄन्प्रासादयत्स्वकान् । ध्यात्वा प्रसादं ते चक्रुस्तस्याः सर्वेऽनुकम्पया ।

अवश्यम्भाविनं ज्ञात्वा तेऽर्थमूचुस्ततश्च तां । अस्य राज्ञो वसोः कन्या त्वमपत्यत्वमेष्यसि ।

उत्पन्नस्य पृथिव्यान्तु मानुषेषु महात्मनः । कन्या च भूत्वा लोकान् स्वान् पुनः प्राप्स्यसि दुर्लभान् ।

पराशरस्य दायादं त्वं विप्रं जनयिष्यसि । स वेदमेकं ब्रह्मर्षिश्चतुर्द्धा विभजिष्यति ।

महाभिषस्य पुत्रौ द्वौ शान्तनोः कीर्त्तिवर्द्धनौ । विचित्रवीर्यं धर्मज्ञं तथा चित्राङ्गदं विभुं । ९७०

एतानुत्पाद्य पुत्रांस्त्वं पुनर्ल्लोकानवाप्स्यसि । व्यतिक्रमात् पितॄणाञ्च जन्म प्राप्स्यसि कुत्सितं ।

अस्यैव राज्ञः कन्या त्वमद्रिकायां भविष्यसि । अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा ।

एवमुक्ता तु दाशेयी जाता सत्यवती तदा । मत्स्ययोनौ समुत्पन्ना राज्ञस्तस्य वसोः सुता ।

वैभ्राजा नाम ते लोका दिवि भान्ति सुदर्शनाः । यत्र बर्हिषदो नाम पितरो दिवि विश्रुताः ।

तान्वै देवगणाः सर्वे यक्षगन्धर्वराक्षसाः । नागाः सर्पाः सुपर्णाश्च भावयन्त्यमितौजसः । ९७५

एते पुत्रा महात्मानः पुलस्त्यस्य प्रजापतेः । महात्मानो महाभागास्तेजोयुक्तास्तपस्विनः ।

एतेषां मानसी कन्या पीवरी नाम विश्रुता । योगा च योगपत्नी च योगमाता तथैव च ।

भवित्री द्वापरं प्राप्य युगं धर्मभृतां वरा । पराशरकुलोद्भूतः शुको नाम महातपाः ।

भविष्यति युगे तस्मिन् महायोगी द्विजर्षभः । व्यासादरण्यां सम्भूतो विधूमोऽग्निरिव ज्वलन् ।

स तस्यां पितृकन्यायां पीवर्यां जनयिष्यति । कन्यां पुत्रांश्च चतुरो योगाचार्यान्महाबलान् । ९८०

कृष्णं गौरं प्रभुं शम्भुं कृत्वीं कन्यां तथैव च । ब्रह्मदत्तस्य जननीं महिषीं त्वणुहस्य च ।

एतानुत्पाद्य धर्मात्मा योगाचार्यान्महाव्रतान् । श्रुत्वा स्वजनकाद्धर्मान् व्यासादमितबुद्धिमान् ।

महायोगी ततो गत्वा पुनरावर्त्तिनीं गतिं । यत्तत्पदमनुद्विग्नमव्ययं ब्रह्म शाश्वतं ।

अमूर्त्तिमन्तः पितरो धर्म्ममूर्त्तिधरा मुने । कथा यथेयमुत्पन्ना कृष्णस्यान्धककुलान्वया ।

सुकाला नाम पितरो वसिष्ठस्य प्रजापतेः । निरता दिवि लोकेषु ज्योतिर्भासिषु भास्वराः । ९८५

सर्वकामसमृद्धेषु द्विजास्तान् भावयन्त्युत । तेषां वै मानसी कन्या गौर्नाम्ना दिवि विश्रुता ।

तवैव वंशे या दत्ता शुकस्य महिषी प्रिया । एकशृङ्गेति विख्याता साध्यानां कीर्त्तिवर्द्धिनी ।

मरीचिगर्भास्तान् लोकान् समाश्रित्य व्यवस्थिताः । ये त्वथाङ्गिरसः पुत्राः साध्यैः संवर्द्धिताः पुरा ।

तान् क्षत्रियगणास्तात भावयन्ति फलार्थिनः । एतेषां मानसी कन्या यशोदा नाम विश्रुता ।

पत्नी सा विश्वमहतः सुता वै शुक्रवर्च्चसः । राजर्षेर्जननी चापि दिलीपस्य महात्मनः । ९९०
यस्य यज्ञे पुरा गीता गाथाः प्रीतैर्महर्षिभिः । तदा देवयुगे तात वाजिमेधे महामखे ।
अग्नेर्जन्म तथा दृष्ट्वा शाण्डिल्यस्य महात्मनः । दिलीपं यजमानं ये पश्यन्ति सुसमाहिताः ।
सत्यव्रतं महात्मानं तेऽपि स्वर्गजितो नराः । सुस्वधा नाम पितरः कर्द्दमस्य प्रजापतेः ।
समुत्पन्नास्तु पुलहान्महात्मानो द्विजर्षभाः । लोकेषु दिवि वर्त्तन्ते कामगेषु विहङ्गमाः ।
तांश्च वैश्यगणास्तात भावयन्ति फलार्थिनः । तेषां वै मानसी कन्या विरजा नाम विश्रुता । ९९५
ययातेर्जननी ब्रह्मन्महिषी नहुषस्य च । अथ एते गणाः प्रोक्ताश्चतुर्थन्तु निबोध मे ।
उत्पन्ना ये स्वधायान्तु सोमपा वै कवेः सुताः । हिरण्यगर्भस्य सुताः शूद्रास्तान् भावयन्त्युत ।
मानसा नाम ते लोका यत्र तिष्ठन्ति ते दिवि । तेषां वै मानसी कन्या नर्म्मदा सरितांवरा ।
या भावयति भूतानि दक्षिणापथगामिनी । पुरुकुत्सस्य या पत्नी त्रसद्दस्योर्जनन्यपि ।
तेषामथाभ्युपगमान्मनुस्तात युगे युगे । प्रवर्त्तयति श्राद्धानि नष्टे धर्म्मे प्रजापतिः । १०००
पितॄणामादिसर्गे तु सर्व्वेषां द्विजसत्तम । तस्मादेनं स्वधर्म्मेण श्राद्धदेवं वदन्ति वै ।
सर्व्वेषां राजतं पात्रमथ वा रजतान्वितं । दत्तं स्वधां पुरोधाय श्राद्धं प्रीणाति वै पितॄन् ।
सोमस्याप्यायनं कृत्वा वह्नेर्वैवस्वतस्य च । उदगायनमप्यग्नावन्यभावेऽप्सु वा पुनः ।
पितॄन् प्रीणाति यो भक्त्या पितरः प्रीणयन्ति तं । यच्छन्ति पितरः पुष्टिं प्रजाश्च विपुलास्तथा ।
स्वर्गमारोग्यमेवाथ यदन्यदपि चेप्सितं । देवकार्य्यादपि मुने पितृकार्य्यं विशिष्यते । १००५
• देवतानां हि पितरः पूर्व्वमाप्यायनं स्मृतं । शीघ्रप्रसादा ह्यक्रोधा लोकस्याप्यायनं परं ।
स्थिरप्रसादाश्च सदा तान् नमस्यस्व भार्गव । पितृभक्तोऽसि विप्रर्षे मद्भक्तश्च विशेषतः ।
श्रेयस्तेऽद्य विधास्यामि प्रत्यक्षं कुरु तत् स्वयं । चक्षुर्दिव्यं सविज्ञानं प्रदिशामि च तेऽनघ ।
गतिमेतामप्रमत्तो मार्कण्डेय निशामय । न हि योगगतिर्दिव्या पितॄणाञ्च परा गतिः ।
त्वद्विधेनापि विज्ञेन दृश्यते मांसचक्षुषा । स एवमुक्त्वा देवेशो मामुपस्थितमग्रतः । १०१०
चक्षुर्दत्त्वा सविज्ञानं देवानामपि दुर्लभं । जगाम गतिमिष्टां वै दितीयोऽग्निरिव ज्वलन् ।
तन्निबोध कुरुश्रेष्ठ यन्मयासीन्निशामितं । प्रसादात्तस्य देवस्य दुर्ज्ञेयं भुवि मानुषैः ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पितृकल्पे अष्टादशोऽध्यायः ॥ १८ ॥
॥ मार्कण्डेय उवाच ॥ आसन् पूर्व्वयुगे तात भरद्वाजात्मजा द्विजाः । योगधर्म्ममनुप्राप्य भ्रष्टा दुश्चरितेन वै ।
अपभ्रंशमनुप्राप्ता योगधर्म्मोपचारिणः । महतः सरसः पारे मानसस्य विसंस्थिताः ।
तमेवार्थमनुध्यान्तो नष्टमप्यवमोहिताः । अप्राप्य योगं सर्व्वे स्म संयुक्ताः कालधर्म्मणा । १०१५
ततस्ते योगविभ्रष्टा देवेषु सुचिरोषिताः । जाताः कौशिकदायादाः कुरुक्षेत्रे नरर्षभाः ।
हिंसया निश्चरिष्यन्तो धर्म्मं पितृकृतेन वै । ततस्ते पुनराधान्ति भ्रष्टाः प्राप्स्यन्ति कुत्सितां ।
तेषां पितृप्रसादेन पूर्व्वजातिकृतेन च । स्मृतिरुत्पत्स्यते प्राप्य तां तां जातिं जुगुप्सितां ।

ते धर्म्मचारिणो नित्यं भविष्यन्ति समाहिताः । मनुष्यत्वं प्रतिलप्स्यन्ति ततो भूयः स्वकर्म्मभिः ।
ततश्च योगं प्राप्स्यन्ति पूर्व्वजातिकृतं पुनः । भूयः सिद्धिमनुप्राप्ताः स्थानं प्राप्स्यन्ति शाश्वतं । १०१०
एवं धर्म्मे च ते बुद्धिर्भविष्यति पुनः पुनः । योगधर्म्मे च निरतः प्राप्स्यसे सिद्धिमुत्तमां ।
योगो हि दुर्ल्लभो नित्यमल्पप्रज्ञैः कदाचन । लब्ध्वाऽपि नाशयन्त्येनं व्यसनैः कटुतामिताः ।
अधर्म्मेष्वेव वर्त्तन्ते गर्हयन्ते गुरूनपि । याचन्ते न च शास्त्राणि रक्षन्ति शरणागतान् ।
नावजानन्ति कृपणान्याचन्ते न धनोत्कटान् । युक्ताहारविहाराश्च युक्तचेष्टाः स्वकर्म्मसु ।
ध्यानाध्ययनयुक्ताश्च कलहाशुभवर्ज्जिताः । नोपभोगरता नित्यं न मांसमधुभक्षणाः । १०१५
न कामपरमा नित्यं न विप्रोत्साहिनस्तथा । नानार्थसंकथासक्ता नालस्योपहतास्तथा ।
नात्यन्तमानसंसक्ता गोष्ठीष्वनिरतास्तथा । प्राप्नुवन्ति नरा योगं योगो हि दुर्ल्लभो भुवि ।
प्रशान्ताश्च जितक्रोधा मानाहङ्कारवर्ज्जिताः । कल्याणभाजनं ये तु ते भवन्ति यतव्रताः ।
एवंविधास्तु ते तात ब्राह्मणा ह्यभवंस्तदा । स्मरन्ति ह्यात्मनो दोषं प्रमादं कृतमेव तु ।
ध्यानाध्ययनयुक्ताश्च शान्ते वर्त्मनि संस्थिताः । शान्तिमन्ते परमामाप्य लभन्ते नात्र संशयः । १०२०
तस्मात्त्वमपि धर्म्मज्ञ योगधर्म्मपरो भव । योगधर्म्मे च निरतः प्राप्स्यसे सिद्धिमुत्तमां ।
योगधर्म्माद्धि धर्म्मज्ञ न धर्म्मोऽस्ति विशेषवान् । वरिष्ठः सर्व्वधर्म्माणां तं समाचर भार्गव ।
कालस्य परिमाणेन लघ्वाहारो जितेन्द्रियः । तत्परः प्रयतः स्नातो योगधर्म्मरतो मुनि ।
इत्युक्त्वा भगवान् देवस्तत्रैवान्तरधीयत । अष्टादशैव वर्षाणि निमेषमिव मेऽभवत् ।
उपासतस्तं देवेशं वर्षाण्यष्टादशैव मे । प्रसादात्तस्य देवस्य न ग्लानिरभवत्तदा । १०२५
न क्षुत्पिपासे कालं वा प्रत्यजानं तदाऽनघ । पश्चाच्छिष्यसकाशात्तु कालः संविदितो मया ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पितृकल्पे ऊनविंशोऽध्यायः ॥ १८ ॥
॥ मार्कण्डेय उवाच ॥ तस्मिन्नन्तर्हिते देवे वचनात्तस्य वै विभोः । चक्षुर्दिव्यं सविज्ञानं प्रादुरासीत्तदा मम ।
ततोऽहं तानपश्यं वै ब्राह्मणान् कौशिकात्मजान् । आपगेय कुरुक्षेत्रे यानुवाच विभुर्म्मम ।
ब्रह्मदत्तोऽभवद्राजा यस्तेषां सप्तमो द्विजः । पितृवर्त्तीति विख्यातो नाम्ना श्रेष्ठेन कर्म्मणा ।
शुकस्य कन्या कृत्वी तं जनयामास पार्थिवं । अणुहात् पार्थिवश्रेष्ठात् काम्पिल्ये नगरोत्तमे । १०३०
॥ भीष्म उवाच ॥ यथोवाच महाभागो मार्कण्डेयो महातपाः । तस्य वंशमहं राजन् कीर्त्तयिष्यामि तच्छृणु ।
॥ युधिष्ठिर उवाच ॥ अणुहः कस्य वै पुत्रः कस्मिन् काले बभूव च । राजा धर्म्मभृतां श्रेष्ठो यस्य पुत्रो महायशाः ।
ब्रह्मदत्तो नरपतिः किंवीर्य्यः स बभूव च । कथञ्च सप्तमस्तेषां स बभूव नराधिपः ।
न ह्यल्पवीर्य्याय शुको भगवान् लोकपूजितः । कन्यां प्रदद्याद्योगात्मा कृत्वीं कीर्त्तिमतीं प्रभुः ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते । ब्रह्मदत्तस्य चरितं तद्भवान् वक्तुमर्हति । १०३५
यथा च वर्त्तमानास्ते संसारेषु द्विजातयः । मार्कण्डेयेन कथितास्तद्भवान् प्रब्रवीतु मे ।
॥ भीष्म उवाच ॥ प्रतीपस्य तु राजर्षेस्तुल्यकालो नराधिपः । पितामहस्य मे राजन् बभूवेति मया श्रुतं ।

ब्रह्मदत्तो महाभागो योगी राजर्षिसत्तमः। रुतज्ञः सर्व्वभूतानां सर्व्वभूतहिते रतः।
सखा स गालवो यस्य योगाचार्य्यो महायशाः। शिक्षामुत्पाद्य तपसा क्रमो येन प्रवर्त्तितः।
कण्डरीकश्च योगात्मा तस्यैव सचिवोऽभवत्। जात्यन्तरेषु सर्व्वेषु सहायाः सर्व्व एव ते। १०५०
सप्तजातिषु सप्तैव बभूवुरमितौजसः। यथोवाच महाभागो मार्कण्डेयो महातपाः।
तस्य वंशमहं राजन् कीर्त्तयिष्यामि तच्छृणु। ब्रह्मदत्तस्य पौराणं पौरवस्य महात्मनः।
बृहत्क्षत्रस्य दायादः सुहोत्रो नाम धार्म्मिकः। सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह।
तेनेदं निर्म्मितं पूर्व्वं हास्तिनापुरमुत्तमं। हस्तिनश्चापि दायादास्त्रयः परमधार्म्मिकाः।
अजमीढो द्विमीढश्च पुरुमीढस्तथैव च। अजमीढस्य धूमिन्यां जज्ञे बृहदिषुर्नृप। १०५५
बृहद्धनुर्बृहदिषोः पुत्रस्तस्य महायशाः। बृहद्धर्म्मेति विख्यातो राजा परमधार्म्मिकः।
सत्यजित्तस्य तनयो विश्वजित्तस्य चात्मजः। पुत्रो विश्वजितश्चापि सेनजित् पृथिवीपतिः।
पुत्राः सेनजितश्चासंश्चत्वारो लोकसम्मताः। रुचिरः श्वेतकेशश्च महिम्नारस्तथैव च।
वत्सश्चावन्तको राजा यस्यैते परिवत्सकाः। रुचिरस्य तु दायादः पृथुषेणो महायशाः।
पृथुषेणस्य पारस्तु पारान्नीपोऽथ जज्ञिवान्। नीपस्यैकशतं तात पुत्राणाममितौजसां। १०६०
महारथानां राजेन्द्र शूराणां बाहुशालिनां। नीपा इति समाख्याता राजानः सर्व्व एव ते।
तेषां वंशकरो राजा नीपानां कीर्त्तिवर्द्धनः। काम्पिल्ये समरो नाम स चेष्टसमरोऽभवत्।
समरस्य परः पारः सदश्व इति ते त्रयः। पुत्राः परमधर्म्मज्ञाः पारपुत्रः पृथुर्भवेत्।
पृथोस्तु सुकृतो नाम सुकृतेनेह कर्म्मणा। जज्ञे सर्व्वगुणोपेतो विभ्राजस्तस्य चात्मजः।
विभ्राजस्य तु पुत्रोऽभूदणुहो नाम पार्थिवः। बभौ शुकस्य जामाता कृत्वीभर्त्ता महायशाः। १०६५
सुतोऽणुहस्य राजर्षिर्ब्रह्मदत्तोऽभवत् प्रभुः। योगात्मा तस्य तनयो विष्वक्सेनः परन्तपः।
विभ्राजः पुनराजातः स्वकृतेनेह कर्म्मणा। ब्रह्मदत्तस्य पुत्रोऽन्यः सर्व्वसेन इति श्रुतः।
चक्षुषी तस्य निर्भिन्ने पक्षिण्या पूजनीयया। सुचिरोषितया राजन् ब्रह्मदत्तस्य वेश्मनि।
अथास्य पुत्रस्त्वपरो ब्रह्मदत्तस्य जज्ञिवान्। विष्वक्सेन इति ख्यातो महाबलपराक्रमः।
विष्वक्सेनस्य पुत्रोऽभूद्दण्डसेनो महीपतिः। भल्लाटोऽस्य कुमारोऽभूद्राधेयेन हतः पुरा। १०७०
दण्डसेनात्मजः शूरो महात्मा कुलवर्द्धनः। भल्लाटपुत्रो दुर्ब्बुद्धिरभवच्च युधिष्ठिर।
स तेषामभवद्राजा नीपानामन्तको नृपः। उग्रायुधेन यस्यार्थे सर्व्वे नीपा विनाशिताः।
उग्रायुधो मदोत्सिक्तो मया विनिहतो युधि। दर्पान्वितो दर्परुचिः सततञ्चानये रतः।
॥ युधिष्ठिर उवाच ॥ उग्रायुधः कस्य सुतः कस्मिन् वंशे स जज्ञिवान्। किमर्थञ्चैव भवता निहतस्तद्ब्रवीहि मे।
॥ भीष्म उवाच ॥ अजमीढस्य दायादो विद्वान् राजा यवीनरः। धृतिमांस्तस्य पुत्रस्तु तस्य सत्यधृतिः सुतः। १०७५
जज्ञे सत्यधृतेः पुत्रो दृढनेमिः प्रतापवान्। दृढनेमिसुतश्चापि सुधर्म्मा नाम पार्थिवः।
आसीत् सुधर्म्मणः पुत्रः सार्व्वभौमः प्रजेश्वरः। सार्व्वभौम इति ख्यातः पृथिव्यामेकराड्विभुः।

तस्यान्ववाये महति महान् पौरवनन्दनः । महतश्चापि पुत्रस्तु राजा रुक्मरथः स्मृतः ।
पुत्रो रुक्मरथस्यापि सुपार्श्वो नाम पार्थिव । सुपार्श्वतनयश्चापि सुमतिर्नाम धार्मिकः ।
सुमतेरपि धर्म्मात्मा सन्नतिर्नाम वीर्य्यवान् । तस्य वै सन्नतेः पुत्रः कृतो नाम महाबलः । १०३०
शिष्यो हिरण्यनाभस्य कौशल्यस्य महात्मनः । चतुर्व्विंशतिधा तेन प्रोक्ताः साम्नां संहिताः ।
स्मृतास्ते प्राच्यसामानः कार्त्तयो नाम सामगाः । कार्त्तिरुग्रायुधः सोऽथ वीरः पौरवनन्दनः ।
बभूव येन विक्रम्य पृषतस्य पितामहः । नीपो नाम महातेजाः पञ्चालाधिपतिर्हतः ।
उग्रायुधस्य दायादः क्षेम्यो नाम महायशाः । क्षेम्यात् सुवीरो नृपतिः सुवीरात्तु नृपञ्जयः ।
नृपञ्जयाद्बहुरथ इत्येते पौरवाः स्मृताः । स चाप्युग्रायुधस्तात दुर्बुद्धिरभवत्तदा । १०३५
प्रवृद्धचक्रो बलवान्नीपान्तकरणो महान् । स दर्पपूर्णो ह्याजौ नीपानन्यांश्च पार्थिवान् ।
पितर्य्युपरते मह्यं श्रावयामास किल्बिषं । मामन्त्रैः परिहृतं प्रयान्तं धरणीतले ।
उग्रायुधस्य राजेन्द्र दूतोऽभ्येत्य वचोऽब्रवीत् । यच ते जननीं भीष्म गन्धकालीं यशस्विनीं ।
स्त्रीरत्नं मम भार्य्यार्थे प्रयच्छ कुरुनन्दन । एवं राज्यञ्च ते स्फीतं धनानि च न संशयः ।
प्रदास्यामि यथाकाममहं वै रत्नभाग्भुवि । मम प्रज्वलितं चक्रं निशम्येदं सुदुर्ज्जयं । १०४०
शत्रवो विद्रवन्त्याजौ दर्शनादेव भारत । राज्यं ते ह्यपि चेत् स्वस्ति प्राणानां वा कुलस्य वा ।
शासने मम तिष्ठस्व न हि ते शान्तिरन्यथा । पश्चः प्रस्तारशयने शयानेस्तन चोदितः ।
दूतात्तर्हितमेतद्वै वाक्यमग्निशिखोपमं । ततोऽहं तस्य दुर्बुद्धेर्विज्ञाय मतमच्युत ।
आज्ञापयं वै संग्रामे सेनाध्यक्षांश्च सर्व्वशः । विचित्रवीर्य्यं बालञ्च मदुपाश्रयमेव च ।
दृष्ट्वा क्रोधपरीतात्मा युद्धायैव मनो दधे । निगृहीतस्तदाऽहं तैः सचिवैर्मन्त्रकोविदैः । १०४५
ऋत्विग्भिर्देवकल्पैश्च सुहृद्भिरार्थदर्शिभिः । स्निग्धैश्च शास्त्रविद्भिश्च संग्रामश्च निवर्त्तितः ।
कारणं श्रावितश्चास्मि युक्तरूपं तदाऽनघ ।
॥ मन्त्रिण ऊचुः ॥ प्रवृद्धचक्रः पापोऽसौ त्वञ्चाशौचगतः प्रभो । न चैषः प्रथमः कल्पो युद्धं नाम कदाचन ।
ते वयं सामपूर्व्वं वै दानं भेदन्तथैव च । प्रयोक्ष्यामस्ततः शुद्धो देवतान्यभिवाद्य च ।
हुतस्वस्त्ययनो विप्रैर्ज्जप्त्वाऽग्नीनार्च्य च द्विजान् । ब्राह्मणैरभ्यनुज्ञातः प्रयास्यसि जयाय वै । ११००
अस्त्राणि न प्रयोज्यानि न प्रवेश्यश्च संगरः । अशौचे वर्त्तमानेन वृद्धानामिति शासनं ।
सामदानादिभिः पूर्व्वमपि भेदेन वा ततः । तं हनिष्यसि विक्रम्य समरं समवाप्य च ।
प्राज्ञानां वचनं काले वृद्धानाञ्च विशेषतः । श्रोतव्यमिति तच्छ्रुत्वा निवृत्तोऽस्मि नराधिप ।
ततस्तैः स क्रमः सर्व्वः प्रयुक्तः शास्त्रकोविदैः । तस्मिन् काले कुरुश्रेष्ठ वाक्यं चारत्रमुत्तमं ।
स सामादिभिरप्यादावुपायैः प्राज्ञचिन्तितैः । अनुनीयमानो दुर्बुद्धिरनुनेतुं न शक्यते । ११०५
प्रवृत्तस्तस्य तच्चक्रमधर्म्मनिरतस्य वै । परदाराभिलाषेण सहसात निवर्त्तितं ।
न त्वहं तस्य जाने तन्निवृत्तं चक्रमुत्तमं । हतं त्वकर्म्मणा तन्तु पूर्व्वं सद्भिश्च निन्दितं ।

हतघ्नोऽयं खरो पापो रुषो निष्कास्य वै पुरात्। हतवाक्यवसनो विप्रैः प्रायोपवसनं स्थितः।
ततः संसर्गमागम्य बलेनाक्रमणेन च। अत्यद्भुतमभूद्युद्धं देवासुरमिवाभवत्।
स तथाऽस्त्रप्रतापेन निर्दग्धो रणमूर्द्धनि। पपाताभिमुखः शूरस्त्यक्त्वा प्राणानरिन्दम। १११०
एतस्मिन्नन्तरे तात काम्पिल्यात् पृषतोऽभ्ययात्। हते नीपेश्वरे चैव हते चोग्रायुधे नृपे।
अहिच्छत्रं स्वकं राज्यं पित्र्यं प्राप महाद्युतिः। द्रुपदस्य पिता राजन्नमात्यैरनुमते तदा।
ततोऽभूद्द्रुपदो राजा द्रोणकोपेन निराकृतः। ततोऽर्जुनेन तरसा निर्जित्य द्रुपदं रणे।
अहिच्छत्रं सकाम्पिल्यं द्रोणायाथापवर्जितं। प्रतिगृह्य ततो द्रोण उभयं जयतां वरः।
काम्पिल्यं द्रुपदायैव प्रायच्छद्विदितं तव। एष ते द्रुपदस्यादौ ब्रह्मदत्तस्य चैव ह। १११५
वंशः कार्त्स्न्येन वै प्रोक्तो नीपस्योग्रायुधस्य च।
॥ युधिष्ठिर उवाच ॥ किमर्थं ब्रह्मदत्तस्य पूजनीया शकुन्तिका। अन्धञ्चकार गाङ्गेय ज्येष्ठं पुत्रं पुरा विभो।
चिरोषिता गृहे चापि किमर्थञ्चैव तस्य सा। चकार विप्रियमिदं तस्य राज्ञो महात्मनः।
पूजनीया च कथाऽसौ किं कृतं तेन चैव ह। एतन्मे संशयं छिन्धि धर्म्मज्ञ यथातथं।
॥ भीष्म उवाच ॥ शृणु सर्व्वं महाराज यथावृत्तमभूत् पुरा। ब्रह्मदत्तस्य भवने तन्निबोध युधिष्ठिर। ११२०
काचिच्छकुन्तिका राजन् ब्रह्मदत्तस्य वै सखी। शितिपक्षा श्यामशिराः शितिपृष्ठा सितोदरी।
सखी सा ब्रह्मदत्तस्य सुहृदं बहुभाषिका। तस्याः कुलायमभवद्गृहे तस्य नरोत्तम।
सा सदाऽहनि निर्गत्य तस्य राज्ञो गृहोत्तमात्। सदाराम्भोधितीरेषु पल्वलेषु सरःसु च।
नदीपल्वलकुञ्जेषु वनेषूपवनेषु च। प्रफुल्लेषु तडागेषु कह्लारेषु सुगन्धिषु।
कुमुदोत्पलकिञ्जल्कसुरभीकृतवायुषु। हंससारसघुष्टेषु कारण्डवरुतेषु च। ११२५
चरित्वा तेषु सा रात्रावपि काम्पिल्यमागमत्। नृपतेर्भवनं प्राप्य ब्रह्मदत्तस्य धीमतः।
राज्ञा तेन सदा राजन् कथायोगं चकार सा। आश्चर्याणि च दृष्टानि यानि वृत्तानि कानिचित्।
चरित्वा विविधान्देशान् कथयामास तानि सा। कदाचित्तस्य नृपतेर्ब्रह्मदत्तस्य कौरव।
पुत्रोऽभूद्राजशार्दूल सर्व्वसेनेति विश्रुतः। पूजनीयाऽपि सा तस्मिन् प्रसूताऽण्डमथापि च।
तस्मिन्नीडे तदा चैकं स कालात् प्रास्फुटत्तदा। स्फुटितो मांसपिण्डस्तु चञ्चुपादाक्षसंयुतः। ११३०
बभूवाण्डजसुरोमा बभूव पृथिवीपते। चञ्चुपक्षाद्युपत्राद्वीपत्पीतोत्थितश्च च।
अथ सा पूजनीया वै राजपुत्रस्वपुत्रयोः। तुल्यस्नेहात् प्रीतिमती दिवसे दिवसेऽभवत्।
आजहार सदा सायं चञ्चुभ्यामृतफलद्वयं। अमृतस्वादसदृशं सर्व्वदैव तनूजयोः।
स बालो ब्रह्मदत्तस्य पूजनीयासुतश्च ह। ते फले भक्षयित्वा च पृथुकौ तौ मुदा युतौ।
अभूतां नित्यमेवं हि खादितौ तौ च ते फले। तस्यां गतायामथ च पूजन्यां वै सदाऽहनि। ११३५
शिशुना चटकेनाथ धात्री तत्र शिशुं नृप। तेन प्रक्रीडयामास ब्रह्मदत्तात्मजं सदा।
नीडात्तमाहृत्य तदा पूजनीयासुतात्ततः। क्रीडता राजपुत्रेण कदाचिच्चटकः स तु।

मधुरार्द्रः शनैर्भूत्वा शनैः संशोषयेत् रिपुं । वल्मीक इव सूक्ष्माग्रं [illegible] मूलानि कृन्तति ।

अहोरात्रं समयं कृत्वा मुखेनाभ्युतो हरिः । [illegible] पार्थिव ।

सुप्तं मत्तं प्रमत्तं वा घातयन्ति रिपुं नराः । विदित्वैव वर्त्तितव्यं [illegible] मायया ।  ११७०

न च शेषं प्रकुर्व्वन्ति पुनर्वैरभयाद्बुधाः । घातयन्ति समूलं हि [illegible] नृप ।

ऋणशेषमथाग्नेश्च शेषमग्नेश्च भूमिप । पुनर्वर्द्धेत संभूय तस्माच्छेषं न शेषयेत् ।

वर्द्धते न्यस्यते वैरी एकपाशे च मुच्यते । एकायत्त्वारोहति स्फुरते [illegible] ।

कृत्वा सख्यमकार्याणि विश्वस्ते क्रतुना न हि । पूर्व्वोक्तानं यथा नाशो जामाता यस्य [illegible] ।

निधाय मनसा वैरं प्रिये वक्तीव यो नरः । उपसर्प्य तं प्राज्ञः [illegible] इव [illegible] ।  ११७५

न चावज्ञेन वस्तव्यं सवैरे वर्द्धते रिपौ । पातयेत् समूलं हि नदीरय इव द्रुमं ।

अमित्रादुन्नतिं प्राप्य नोन्नतोऽस्मीति विश्वसेत् । तस्मात् प्राप्योन्नतिं नश्येत् प्रावार इव [illegible] ।

इत्येता उशनोगीता गाथा धार्य्या विपश्चिता । कुर्व्वता चात्मरक्षां वै नरेण पृथिवीपते ।

मया च किल्बिषं तुभ्यं प्रयुक्तमतिदारुणं । पुनरन्यं प्रकुर्य्यन्त्या तस्मान्नो विश्वसे त्वयि ।

एवमुक्त्वा प्रदुद्राव तदाकाशे पतत्त्रिणी । इत्येतत्ते मयाख्यातं पुराभूतमिदं नृप ।  ११८०

ब्रह्मदत्तस्य राजेन्द्र यद्वृत्तं पूजनीयया । श्राद्धस्य पृच्छसे यन्मां युधिष्ठिर महामते ।

अतस्ते वर्णयिष्येऽहमितिहासं पुरातनं । गीतं सनत्कुमारेण मार्कण्डेयाय पृच्छते ।

श्राद्धस्य फलमुद्दिश्य नियतं मुक्ततत्त्व च । तन्निबोध महाराज सप्तजातिषु भारत ।

सगालवस्य चरितं कण्डरीकस्य चैव हि । ब्रह्मदत्तद्वितीयानां योगिनां ब्रह्मचारिणां ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पूजनीयोपाख्याने विंशतितमोऽध्यायः ॥ २० ॥

॥ मार्कण्डेय उवाच ॥ श्राद्धे प्रतिष्ठितो लोकः श्राद्धाद्योगः प्रवर्त्तते । हन्त ते वर्त्तयिष्यामि श्राद्धस्य फलमुत्तमं ।  ११८५

ब्रह्मदत्तेन यत्प्राप्तं सप्तजातिषु भारत । तत एव हि धर्म्मस्य वृद्धिर्निर्वर्त्तते शनैः ।

पीडयाऽप्यथ धर्म्मस्य कृते श्राद्धे पुराऽनघ । यत्प्राप्तं श्राद्धैः पूर्व्वं तन्निबोध महामते ।

ततोऽहं तानधर्म्मिष्ठान् कुरुक्षेत्रे पितृव्रतान् । सनत्कुमारनिर्दिष्टानपश्यं सप्त वै द्विजान् ।

दिव्येन चक्षुषा तेन यानुवाच पुरा विभुः । वाग्दुष्टः क्रोधनो हिंस्रः पिशुनः कविरेव च ।

खसृमः पितृवर्त्ती च नामभिः कर्म्मभिस्तथा । कौशिकस्य सुतास्तात शिष्या गर्गस्य भारत ।  ११९०

पितर्य्युपरते सर्व्वे व्रतवन्तस्तदाऽभवन् । नियोगात्ते गुरोस्तस्य गां दोग्ध्रीं समकालयन् ।

समानवत्सां कपिलां सर्व्वे न्यायागतां तदा । तेषां पथि क्षुधार्त्तानां बाल्यान्मोहाच्च भारत ।

क्रूरा बुद्धिः समभवत्तां गां वै हिंसितुं तदा । तान् कविः खसृमश्चैव याचेतां नेति वै तदा ।

न चाशक्यन्त ताभ्यां ते तदा वारयितुं द्विजाः । पितृवर्त्ती तु यस्तेषां नित्यं श्राद्धाह्निको द्विजः ।

स सर्व्वानब्रवीद्भ्रातॄन् कोपाद्धर्म्मे समाहितः । यद्यवश्यं प्रहन्तव्यं पितॄनुद्दिश्य साध्विमां ।  ११९५

प्रकुर्व्वीमहि गां सम्यक् सर्व्व एव समाहिताः । एवमेषाऽपि गौर्द्धर्म्मं प्राप्स्यते नात्र संशयः ।

पितृनभ्यर्च्य धर्म्मेण नाधर्म्मो नो भविष्यति । तथेत्युक्त्वा तु ते सर्व्वे प्रोक्षयित्वा च मामतः ।
पितृभ्यः कल्पयित्वैनामुपायुञ्जत भारत । उपयुज्य च गां सर्व्वे गुरोस्तस्य न्यवेदयन् ।
शार्दूलेन हता धेनुर्वत्सोऽयं प्रतिगृह्यताम् । वात्सल्याद्गां च तु वत्सं तं प्रतिजग्राह वै द्विजः ।
मिथ्योपचर्य्य ते तन्तु गुरुमन्यायतो द्विजाः । कालेन समयुज्यन्त सर्व्वे एवायुषः क्षये ।  ११००
ते वै क्रूरतया हिंसा अनार्य्यत्वाद्गुरौ तथा । उग्रा हिंसाविहाराश्च सप्ताजायन्त सोदराः ।
लुब्धकस्यात्मजास्तात बलवन्तो मनीषिणः । पितॄनभ्यर्च्य धर्म्मेण प्रोक्षयित्वा च मातरम् ।
स्मृतिप्रत्ययवत्त्वं च तेषां जात्यन्तरेऽभवत् । जाता व्याधा दशार्णेषु सप्त धर्म्मविचक्षणाः ।
स्वधर्म्मनिरताः सर्व्वे लोभानृतविवर्ज्जिताः । तावन्मात्रं प्रकुर्व्वन्ति यावता प्राणधारणम् ।
शेषं ध्यानपराः कालमनुध्यायन्ति कर्म्म तत् । नामधेयानि चाप्येषामिमान्यासन् विशाम्पते ।  ११०५
निर्वैरो निर्वृतिः क्षान्तो निर्मन्युः कृतिरेव च । वैधसो मातृवर्त्ती च व्याधाः परमधार्म्मिकाः ।
तैरेवमुषितैस्तात हिंसाधर्म्मपरैः सदा । माता च पूजिता वृद्धा पिता च परितोषितः ।
यदा माता पिता चैव संयुक्तौ कालधर्म्मणा । तदा धनूंषि ते त्यक्त्वा वने प्राणानवासृजन् ।
शुभेन कर्म्मणा तेन जाता जातिस्मरा मृगाः । त्रासादुत्पादसंविग्ना रम्ये कालञ्जरे गिरौ ।
उन्मुखो नित्यवित्रस्तः स्तब्धकर्णो विलोचनः । पण्डितो घस्मरो नादी नामतस्तेऽभवन्मृगाः ।  १११०
तमेवार्थमनुध्यान्तो जातिस्मरणसम्भवम् । आसन् वनेचरा दान्ता निर्द्वन्द्वा निष्परिग्रहाः ।
ते सर्व्वे शुभकर्म्माणः सधर्म्माणो वनेचराः । योगधर्म्ममनुध्यान्तो विहरन्ति स्म तत्र ह ।
मरुं साध्य जहुः प्राणान् लब्ध्वाहारात्परिश्रमाः । तेषां मरुं साधयतां पदन्यासानि भारत ।
तथैवाद्यापि दृश्यन्ते गिरौ कालञ्जरे नृप । कर्म्मणा तेन ते तात शुभेनाशुभवर्ज्जिताः ।
शुभाच्छुभतरां योनिं चक्रवाकत्वमागताः । शुभे देशे शरद्वीपे सप्तासन् वै जलौकसः ।  १११५
त्यक्त्वा सहचरीधर्म्मं मुनयो धर्म्मचारिणः । सुमनाः शुचिवाक् शुद्धः पञ्चमश्छिद्रदर्शनः ।
सुनेत्रश्च स्वतन्त्रश्च शकुना नामतः स्मृताः । पञ्चमः पापकृत्तत्र सप्तजातिष्वजायत ।
षष्ठस्तु कण्डरीकोऽभूद्ब्रह्मदत्तस्तु सप्तमः । तेषान्तु तपसा तेन सप्तजातिकृतेन वै ।
योगस्य चाभिनिर्वृत्त्या प्रतिभानाच्च शोभनात् । पूर्व्वजातिषु यद्वृत्तं श्रुतं गुरुकुलेषु वै ।
तथैवावस्थिता बुद्धिः संसारेष्वपि वर्त्तताम् । ते ब्रह्मचारिणः सर्व्वे विहङ्गा ब्रह्मवादिनः ।  ११२०
योगधर्म्ममनुध्यान्तो विहरन्ति स्म तत्र ह । तेषान्तत्र विहङ्गानां चरतां सहचारिणाम् ।
नीपानामीश्वरो राजा विभ्राजः पौरवान्वयः । विभ्राजमानो वपुषा प्रभावेण समन्वितः ।
श्रीमानन्तःपुरवृतो वनं तत् प्रविवेश ह । स्वतन्त्रस्तु चक्रवाकस्तु स्पृहयामास तं नृप ।
दृष्ट्वायान्तं श्रियोपेतं भवेयमहमीदृशः । यद्यस्ति सुकृतं किञ्चित्तपो वा नियमोऽपि वा ।
खिन्नोऽस्म्युपवासेन तपसा निष्फलेन च ।  ११२२

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पितृकल्पे एकविंशोऽध्यायः ॥ २१ ॥

॥ मार्कण्डेय उवाच ॥ ततस्तावब्रुवातां तावूचतुः ब्रह्मचारिणौ । आवां ते सचिवौ स्यावस्तव प्रियहितैषिणौ ।
तथेत्युक्त्वा तु तत्रासीत्तदा योगात्मिका मतिः । स्वतन्त्रश्चक्रतुः चक्रुः शुचिवाक् तत्रागमत् ।
यस्मात् कामप्रधानस्त्वं योगधर्म्ममपास्य वै । एवं वरं प्रार्थयसे तस्मात्त्वं निबोध मे ।
राजा त्वं भविता तात काम्पिल्ये नात्र संशयः । भविष्यतः सखायौ च द्वाविमौ सचिवौ तव ।
शप्त्वा तानभिभाष्याथ चत्वारश्चक्रुरक्षमाः । तांश्चैवमीक्षितो राज्यं अभिचारप्रधर्षितान् ।   ११९०
शप्ताः खगास्त्रयस्ते तु योगभ्रष्टा विचेतसः । तमयाचन्त चत्वारस्त्रयस्ते ब्रह्मचारिणः ।
तेषां प्रसादं चक्रुस्ते चर्येणान् सुमनाऽब्रवीत् । सर्व्वेषामेव वचनात् प्रसादादुत्तमात्तथा ।
अन्तवान् भविता शापो युष्माकं नात्र संशयः । इतश्च्युताश्च मानुष्यं प्राप्य योगमवाप्स्यथ ।
सर्व्वसत्त्वरुतज्ञश्च स्वतन्त्रोऽयं भविष्यति । पितृप्रसादो ह्यस्माभिरस्य प्राप्तः कृतेन वै ।
गां प्रोक्षयित्वा धर्म्मेण पितृभ्य उपकल्पिता । अस्माकं ज्ञानसंयोगः सर्व्वेषां योगसाधनः ।   ११९५
इममेव वाक्यसन्दर्भं श्लोकमेकमुदाहृतं । पुरुषान्तरितं श्रुत्वा ततो योगमवाप्स्यथ ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पितृकल्पे द्वाविंशोऽध्यायः ॥ २२ ॥
॥ मार्कण्डेय उवाच ॥ ते योगधर्म्मनिरताः सप्त मानसचारिणः । पद्मगर्भोऽरविन्दाक्षः क्षीरगर्भः सुलोचनः ।
उरुबिन्दुः सुबिन्दुश्च हैमगर्भस्तु सप्तमः । वाय्वम्बुभक्षाः सततं शरीराण्युपशोषयन् ।
राजा विभ्राजमानस्तु वपुषा तद्वनं तदा । चचारान्तःपुरवृतो नन्दनं मघवानिव ।
स तानपश्यत् खचरान् योगधर्म्मात्मकान्नृपः । निर्व्विण्णश्च तमेवार्थमनुध्यायन् पुरं ययौ ।   १२००
अणुहो नाम तस्यासीत् पुत्रः परमधार्म्मिकः । अणुधर्म्मरतिर्नित्यमणुं योऽध्यगमत् पदं ।
प्रादात् कन्यां शुकस्तस्मै कृत्वीं पूजितलक्षणां । ब्रह्मर्षिमनुयोषितां योगधर्म्मरतां सदा ।
सा तु दृष्टा पुरा भीष्म पितृकन्या मनीषिणी । सनत्कुमारेण तदा सन्निधौ मम शोभना ।
अध्यात्मभूता श्रेष्ठा दुर्व्विज्ञेया कृतात्मभिः । योगा च योगपत्नी च योगमाता तथैव च ।
यथा ते कथितं पूर्व्वं पितृकल्पेषु वै मया । विभ्राजस्तु सुतं राज्ये स्थापयित्वा नरेश्वरः ॥   १२०५
आमन्त्र्य पौरान् प्रीतात्मा ब्राह्मणान् स्वस्ति वाच्य च । प्रायात् सरस्तपस्यन्वै यत्र ते सहचारिणः ।
स वै तत्र निराहारो वायुभक्षो महातपाः । त्यक्त्वा कामांस्तपश्चक्रे सरस्तस्य पार्श्वतः ।
तस्य सङ्कल्प आसीच्च तेषामन्यतमस्य वै । पुत्रत्वं प्राप्य योगेन युज्येयमिति भारत ।
कृत्वाऽभिसन्धिं तपसा महता स समन्वितः । महातपाः स विभ्राजो विरराजांशुमानिव ।
ततो विभ्राजितं तेन वैभ्राजं नाम तद्वनं । सरस्तत्र कुरुश्रेष्ठ वैभ्राजमिति विश्रुतं ।   १२१०
यत्र ते शकुना राजंश्चत्वारो योगधर्म्मिणः । योगभ्रष्टास्त्रयश्चैव देवन्यासकृतोऽभवन् ।
काम्पिल्ये नगरे ते तु ब्रह्मदत्तपुरोगमाः । जाताः सप्त महात्मानः सर्व्वे विगतकल्मषाः ।
प्राणध्यानतपःपूता वेदवेदाङ्गपारगाः । स्मृतिमन्तोऽथ चत्वारस्त्रयस्तु परिमोहिताः ।
स्वतन्त्रस्त्वणुहात्मजो ब्रह्मदत्तो महायशाः । यथा ह्यासीत् पक्षिभावे सङ्कल्पः पूर्व्वचिन्तितः ।

छिद्रदर्शी सुनेत्रश्च तथा बाभ्रव्यवत्सयोः । जातौ श्रोत्रियदायादौ वेदवेदाङ्गपारगौ । १२७५
सखायौ ब्रह्मदत्तस्य पूर्वजातिविचेष्टितौ । पाञ्चालः पाञ्चिकस्तत्र कण्डरीकस्तथाऽपरः ।
पाञ्चालो बह्वृचस्त्वासीदाचार्य्यत्वं चकार ह । द्विवेदः कण्डरीकस्तु छन्दोगोऽध्वर्य्युरेव च ।
सर्व्वसत्त्वरुतज्ञस्तु राजासीदणुहात्मजः । पाञ्चालकण्डरीकाभ्यां तस्य सख्यमभूत्तदा ।
ते ग्राम्यधर्म्मनिरताः कामस्य वशवर्त्तिनः । पूर्व्वजातिकृतेनाथ धर्म्मकामार्थवेदिनः ।
अणुहस्तु नृपश्रेष्ठो ब्रह्मदत्तमकल्मषं । अभिषिच्य तदा राज्ये परां गतिमवाप्तवान् । १२८०
ब्रह्मदत्तस्य भार्य्या तु देवलस्यात्मजाऽभवत् । असितस्य हि दुर्द्धर्षा सन्नतिर्नाम नामतः ।
तामेकभावसम्पन्नां लेभे कन्यामनुत्तमां । सन्नतिं सन्नतिमतीं देवलाद्योगधर्म्मिणीं ।
पञ्चमः पाञ्चिकस्तत्र सप्तजातिषु भारत । षष्ठस्तु कण्डरीकोऽभूद्ब्रह्मदत्तस्तु सप्तमः ।
शेषा विहङ्गमा ये वै काम्पिल्ये सहचारिणः । ते जाताः श्रोत्रियकुले सुदरिद्रे सहोदराः
धृतिमान् सुमना विद्वांस्तत्त्वदर्शी च नामतः । वेदाध्ययनसम्पन्नाश्चत्वारश्छिद्रदर्शिनः । १२८५
तेषां संवित्तथोत्पन्ना पूर्व्वजातिकृता तदा । ते योगधर्म्मनिरताः प्रव्रजिताः सर्व्व एव हि ।
आमन्त्र्य पितरं तात पिता तानब्रवीत्तदा । अधर्म्म एष पुत्रकं यन्मां त्यक्त्वा गमिष्यथ ।
दारिद्र्यमनपाकृत्य पुत्रार्थांश्चैव पुष्कलान् । शुश्रूषामप्रयुज्यैव कथं मे गन्तुमर्हथ ।
ते तमूचुर्द्विजाः सर्व्वे पितरं पुनरेव च । करिष्यामो विधानन्ते येन त्वं वर्त्तयिष्यसि ।
इमं श्लोकं महार्थं त्वं राजानं सहमन्त्रिणं । श्रावयेथाः समागम्य ब्रह्मदत्तमकल्मषं । १२९०
स ते दास्यति प्रीतात्मा ग्रामान् भोगांश्च पुष्कलान् । कामतोऽभीप्सितान् सर्व्वान् गच्छ तात यथेप्सितं ।
एतावदुक्त्वा ते सर्व्वे पूजयित्वा च तं गुरुं । योगधर्म्ममनुप्राप्य परां निर्वृतिमाप्नुयुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पितृकल्पे त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ मार्कण्डेय उवाच ॥ ब्रह्मदत्तस्य तनयः स वैभ्राजस्त्वजायत । योगात्मा तपसा युक्तो विष्वक्सेन इति श्रुतः ।
कदाचिद्ब्रह्मदत्तः स भार्य्यया सहितो वने । विजहार प्रहृष्टात्मा यथा शच्या शतक्रतुः ।
ततः पिपीलिकरुतं शुश्राव स नराधिप । कामिनीं कामिनस्तस्य याचतः क्रोशतो भृशं । १२९५
श्रुत्वा तु याच्यमानां तां क्रुद्धां सूक्ष्मां पिपीलिकां । ब्रह्मदत्तो महाहासमकस्मादेव चाहसत् ।
ततः सा सन्नतिर्दीना व्रीडितेवाभवत्तदा । निराहारा बहुतिथं बभूव वरवर्णिनी ।
प्रसाद्यमाना भर्त्रा सा तमुवाच शुचिस्मिता । त्वयाऽवहसिता राजन् नाहं जीवितुमुत्सहे
स तत्कारणमाचख्यौ न च सा श्रद्दधाति तत् । उवाच चैनं कुपिता नैष भावोऽस्ति मानुषे ।
को वै पिपीलिकरुतं मानुषो वेत्तुमर्हति । ऋते देवप्रसादाद्वा पूर्व्वजातिकृतेन वा । १३००
तपोबलेन वा राजन् विद्यया वा नराधिप । यद्येष वै प्रभावस्ते सर्व्वसत्त्वरुतज्ञता ।
यथाऽहमेतज्जानीयां तथा प्रत्याययस्व मां । प्राणानहं परित्यक्ष्ये राजन् सत्येन ते शपे ।
तत्तस्या वचनं श्रुत्वा महिष्याः परुषं प्रभुः । स राजा परमापन्नो देवश्रेष्ठं प्रपद्यत ।

शरण्यं सर्व्वभूतेशं भक्त्या नारायणं प्रभुं । समाधिस्थो निराहारः षण्मासैश्च महायशाः ।
ददर्श दर्शने राजा देवं नारायणं प्रभुं । उवाच चैनं भगवान् सर्व्वभूतानुकम्पकः । ११८५
ब्रह्मदत्त प्रभाते त्वं कल्याणं समवाप्स्यसि । इत्युक्त्वा भगवान् देवस्तत्रैवान्तरधीयत ।
चतुर्णान्तु पिता योऽसौ ब्राह्मणानां महात्मनां । श्लोकं सोऽधीत्य पुत्रेभ्यः कृतकृत्य इवाभवत् ।
स राजानमथान्विच्छन् सहमन्त्रिणमच्युतं । न ददर्शान्तरं किञ्चित् श्लोकं श्रावयितुं तदा ।
अथ राजा शिरःस्नातो लब्ध्वा नारायणाद्वरं । प्रविवेश पुरं प्रीतो रथमारुह्य काञ्चनं ।
तस्य रश्मीन् प्रत्यगृह्णात् कण्डरीको द्विजर्षभः । चामरव्यजनञ्चापि बाभ्रव्यः समवाक्षिपत् । ११९०
इदमन्तरमित्येवं ततः स ब्राह्मणस्तदा । श्रावयामास राजानं श्लोकं तं सचिवौ च तौ ।
सप्त व्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ । चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ।
तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदथ ।
तच्छ्रुत्वा मोहमगमद् ब्रह्मदत्तो नराधिपः । सचिवश्चास्य पाञ्चालः कण्डरीकस्तथैव च ।
स्रस्तरश्मिप्रतोदौ तौ पतितव्यजनावुभौ । दृष्ट्वा बभूवुरस्वस्थाः पौराश्च सुहृदस्तथा । ११९५
मुहूर्त्तमिव राजा स सह ताभ्यां रथे स्थितः । प्रतिलभ्य ततः संज्ञां प्रत्यागच्छदरिन्दम ।
ततस्ते तत् सरः स्मृत्वा योगञ्चाप्युपलभ्य च । ब्राह्मणं विपुलैरर्थैर्भोगैश्च समयोजयन् ।
अभिषिच्य स्वराज्ये तु विष्वक्सेनमरिन्दमं । जगाम ब्रह्मदत्तोऽथ सदारो वनमेव च ।
अथ तं सन्नतिर्धीरा देवलस्य सुता तदा । उवाच परमप्रीता योगाद्वनगतं नृपं ।
जानन्त्या ते महाराज पिपीलिकरुतस्वनं । चोदितः क्रोधमुद्दिश्य सक्तः कामेषु वै मया । १२००
इतो वयं गमिष्यामो गतिमिष्टामनुत्तमां । तव चान्तर्हितो योगस्ततः संस्मारितो मया ।
स राजा परमप्रीतः पत्न्याः श्रुत्वा वचस्तदा । प्राप्य योगं बलादेव गतिं प्राप सुदुर्लभां ।
कण्डरीकोऽपि धर्म्मात्मा साङ्ख्ययोगमनुत्तमं । प्राप्य योगगतिं सिद्धो विशुद्धः स्वेन कर्म्मणा ।
क्रमं प्रणीय पाञ्चालः शिक्षामुत्पाद्य केवलां । योगाचार्य्यगतिं प्राप यशश्चाग्र्यं महातपाः ।
एवमेतत् पुरावृत्तं मम प्रत्यक्षमच्युत । तद्धारयस्व गाङ्गेय श्रेयसा योक्ष्यसे ततः । १२०५
ये चान्ये धारयिष्यन्ति तेषां चरितमुत्तमं । तिर्य्यग्योनिषु ते जातु न भविष्यन्ति कर्हिचित् ।
श्रुत्वा चेदमुपाख्यानं महार्थं महतां गतिं । योगधर्म्मो हृदि सदा परिवर्त्तति भारत ।
स तेनैवानुबन्धेन कदाचिल्लभते शमं । ततो योगगतिं याति सिद्धानां भुवि दुर्लभां ।
॥ वैशम्पायन उवाच ॥ एवमेतत् पुरा गीतं मार्कण्डेयेन धीमता । श्राद्धस्य फलमुद्दिश्य सोमस्याप्यायनाय वै ।
सोमो हि भगवान् देवो लोकस्याप्यायनं परं । वृष्णिवंशप्रसङ्गेन तस्य वंशं निबोध मे । १२१०
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पितृकल्पे चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ वैशम्पायन उवाच ॥ पिता सोमस्य वै राजन् जज्ञेऽत्रिर्भगवानृषिः । ब्रह्मणो मानसात् पूर्व्वं प्रजासर्गं विधित्सतः ।
तथात्रिः सर्व्वभूतानां तस्थौ स्वतनयैर्वृतः । कर्म्मणा मनसा वाचा शुभान्येव चचार सः ।

अहिंसकः सर्व्वभूतेषु धर्म्मात्मा संशितव्रतः । काष्ठकुड्यशिलाभूत ऊर्द्ध्वबाहुर्महाद्युतिः ।
अनुत्तरं नाम तपो येन तप्तं महत् पुरा । त्रीणि वर्षसहस्राणि दिव्यानीति ह नः श्रुतं ।
तस्योर्द्ध्वरेतसस्तस्य स्थितस्यानिमिषस्य ह । सोमत्वं तनुरापेदे महाबुद्धस्य भारत । १३१५
ऊर्द्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः । नेत्राभ्यां वारि सुस्राव दशधा द्योतयन् दिशः ।
तं गर्भं विधिना हृष्टा दश देव्यो दधुस्तदा । समेत्य धारयामासुर्न च ताः समशक्नुवन् ।
स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः । पपात भासयन् लोकान् शीतांशुः सर्व्वभावनः ।
यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः । ततस्ताभिः स हेवाशु निपपात वसुन्धरां ।
पतितं सोममालोक्य ब्रह्मा लोकपितामहः । रथमारोपयामास लोकानां हितकाम्यया । १३२०
स हि वेदमयस्तात धर्म्मात्मा सत्यसङ्गरः । युक्तो वाजिसहस्रेण सितेनेति हि नः श्रुतं ।
तस्मिन्निपतिते देवाः पुत्रेऽत्रेः परमात्मनि । तुष्टुवुर्ब्रह्मणः पुत्रा मानसाः सप्त ये श्रुताः ।
तथैवाङ्गिरसस्तत्र भृगोरेवात्मजैः सह । ऋग्भिर्यजुर्भिः सामभिरथर्व्वाङ्गिरसैरपि ।
तस्य संस्तूयमानस्य तेजः सोमस्य भास्वतः । आप्याय्यमानं लोकांस्त्रीन् भावयामास सर्व्वतः ।
स तेन रथमुख्येन सागरान्तां वसुन्धरां । त्रिःसप्तकृत्वोऽतियशाश्चकाराभिप्रदक्षिणं । १३२५
तस्य यच्च्यावितं तेजः पृथिवीमन्वपद्यत । ओषध्यस्ताः समुत्पन्नास्तेजसा प्रज्वलन्त्युत ।
ताभिर्द्धार्य्यास्त्रयो लोकाः प्रजाश्चैव चतुर्विधाः । पोष्टा हि भगवान् सोमो जगतो जगतीपते ।
स लब्धतेजा भगवान् संस्तवैस्तैश्च कर्म्मभिः । तपस्तेपे महाभाग पद्मानां दशतीर्दश ।
हिरण्यवर्णा या देव्यो धारयन्त्यात्मना जगत् । विभुस्तासामभूद्देवः प्रख्यातः स्वेन कर्म्मणा ।
ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः । बीजौषधीनां विप्राणामपाञ्च जनमेजय । १३३०
सोऽभिषिक्तो महाराज राजराज्येन राजराट् । त्रीन् लोकान् भावयामास स्वभासा भास्वतां वरः ।
सप्तविंशतिरिन्दोस्तु दाक्षायिण्यो महाव्रताः । ददौ प्राचेतसो दक्षो नक्षत्राणीति या विदुः ।
स तत् प्राप्य महद्राज्यं सोमः सोमवतां वरः । समाजह्रे राजसूयं सहस्रशतदक्षिणं ।
होताऽस्य भगवानत्रिरध्वर्य्युर्भगवान् भृगुः । हिरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमेयिवान् ।
सदस्यस्तत्र भगवान् हरिर्नारायणः प्रभुः । सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः । १३३५
दक्षिणामददत् सोमस्त्रीन् लोकानिति नः श्रुतं । तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च भारत ।
तं सिनी च कुहूश्चैव द्युतिः पुष्टिः प्रभा वसुः । कीर्त्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे ।
प्राप्यावभृथमव्यग्रः सर्व्वदेवर्षिपूजितः । विरराजाधिराजेन्द्रो दशधा भासयन् दिशः ।
तस्य तत् प्राप्य दुष्प्रापमैश्वर्य्यमृषिसंस्तुतं । विबभ्राम मतिस्तात विनयादनयाहृता ।
बृहस्पतेः स वै भार्य्यां तारां नाम यशस्विनीं । जहार तरसा सर्व्वानवमत्याङ्गिरःसुतान् । १३४०
स याच्यमानो देवैश्च तथा देवर्षिभिः सह । नैव व्यसर्ज्जयत्तारां तस्मा आङ्गिरसे तदा ।
स संरब्धस्ततस्तस्मिन् देवाचार्य्यो बृहस्पतिः । उशना तस्य जग्राह पार्ष्णिमङ्गिरसस्तदा ।

स हि शिष्यो महातेजाः पितुः पूर्व्वं बृहस्पतेः । तेन स्नेहेन भगवान् रुद्रस्तस्य बृहस्पतेः ।
पार्ष्णिग्राहोऽभवद्देवः प्रगृह्याजगवं धनुः । तेन ब्रह्मशिरो नाम परमास्त्रं महात्मना ।
उद्दिश्य दैत्यानुत्सृष्टं येनैषां नाशितं यशः । तत्र तद्युद्धमभवत् प्रख्यातं तारकामयं । १३४५
देवानां दानवानाञ्च लोकक्षयकरं महत् । तत्र शिष्टास्तु ये देवास्तुषिताश्चैव भारत ।
ब्रह्माणं शरणं जग्मुरादिदेवं सनातनं । ततो निवार्य्योशनसं तं वै रुद्रञ्च शङ्करं ।
ददावङ्गिरसे तारां स्वयमेव पितामहः । तामन्तःप्रसवां दृष्ट्वा तारां प्राह बृहस्पतिः ।
मदीयायां न ते योनौ गर्भो धार्य्यः कथञ्चन । अथोत्सावसृजत्तं वै कुमारं दस्युहन्तमं ।
इषीकास्तम्बमासाद्य ज्वलन्तमिव पावकं । जातमात्रः स भगवान् देवानामक्षिपद्वपुः । १३५०
ततः संशयमापन्नास्तारामूचुः सुरोत्तमाः सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः ।
पृच्छ्यमाना यदा देवैर्नाह सा साध्वसाधु वा । तदा तां शप्तुमारब्धः कुमारो दस्युहन्तमः ।
तं निवार्य्य ततो ब्रह्मा तारां पप्रच्छ संशयं । यदत्र तथ्यं तद्ब्रूहि तारे कस्य सुतो ह्ययं ।
सा प्राञ्जलिरुवाचेदं ब्रह्माणं वरदं शनैः । सोमस्येति महात्मानं कुमारं दस्युहन्तमं ।
तं मूर्द्धन्याघ्राय तनयं सोमो धाता प्रजापतिः । बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमतः । १३५५
प्रतिकूलञ्च गगने समभ्युत्तिष्ठते बुधः । उत्पादयामास तदा पुत्रं वै राजपुत्रिका ।
तस्यापत्यं महाराजो बभूवैलः पुरूरवाः । उर्व्वश्यां जज्ञिरे यस्य पुत्राः षड् महात्मनः ।
प्रसह्य धर्षितस्तत्र सोमो वै राजयक्ष्मणा । ततो यक्ष्माभिभूतस्तु सोमः प्रक्षीणमण्डलः ।
जगाम शरणायाथ पितरं सोऽत्रिमेव च । तस्य तत् पापशमनं चकारात्रिर्महातपाः ।
स राजयक्ष्मणा मुक्तः श्रिया जज्वाल सर्व्वशः । एतत् सोमस्य वै जन्म कीर्त्तितं कीर्त्तिवर्द्धनं । १३६०
वंशमस्य महाराज कीर्त्त्यमानमतः शृणु । धन्यमारोग्यमायुष्यं पुण्यं सङ्कल्पसाधकं ।
सोमस्य जन्म श्रुत्वैव पापेभ्यो विप्रमुच्यते ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि सोमोत्पत्तिकथने पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ वैशम्पायन उवाच ॥ बुधस्य तु महाराज विद्वान् पुत्रः पुरूरवाः । तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः ।
ब्रह्मवादी पराक्रान्तः शत्रुभिर्युधि दुर्ज्जयः । आहर्त्ता चाग्निहोत्रस्य यज्ञानाञ्च महीपतिः ।
सत्यवादी पुण्यमतिः काम्यः संवृतमैथुनः । अतीव त्रिषु लोकेषु यशसाऽप्रतिमस्तदा । १३६५
तं ब्रह्मवादिनं शान्तं धर्म्मज्ञं सत्यवादिनं । उर्व्वशी वरयामास हित्वा मानं यशस्विनी ।
तया सहावसद्राजा दश वर्षाणि पञ्च च । पञ्च षट् सप्त चाष्टौ च दश चाष्टौ च भारत ।
वने चैत्ररथे रम्ये तथा मन्दाकिनीतटे । अलकायां विशालायां नन्दने च वनोत्तमे ।
उत्तरान् स कुरून् प्राप्य मनोरथफलद्रुमान् । गन्धमादनपादेषु मेरुशृङ्गे तथोत्तरे ।
एतेषु वनमुख्येषु सुरैराचरितेषु च । उर्व्वश्या सहितो राजा रेमे परमया मुदा । १३७०
देशे पुण्यतमे चैव महर्षिभिरभिष्टुते । राज्यं स कारयामास प्रयागे पृथिवीपतिः ।

तस्य पुत्रा बभूवुस्ते षट् देवसुतोपमाः । दिवि जाता महात्मान आयुर्धीमानमावसुः ।
विश्वायुश्चैव धर्मात्मा श्रुतायुश्च तथाऽपरः । दृढायुश्च वनायुश्च शतायुश्चोर्व्वशीसुताः ।
॥ जनमेजय उवाच ॥ गन्धर्व्वी उर्व्वशी देवी राजानं मानुषं कथं । देवानुत्सृज्य संप्राप्ता तन्मे ब्रूहि बहुश्रुत ।
॥ वैशम्पायन उवाच ॥ ब्रह्मशापाभिभूता सा मानुषं समपद्यत । ऐलन्तु सा वरारोहा समयात् समुपस्थिता । ११७५
आत्मनः शापमोक्षार्थं समयं सा चकार ह । अनग्नदर्शनञ्चैव अकामाच्च मैथुनं।
द्वौ मेषौ शयनाभ्याशे तदा बद्धौ च तिष्ठतः । घृतमात्रा तथाहारः कालमेकन्तु पार्थिव ।
यद्येष समयो राजन् यावत् कालञ्च ते दृढः । तावत् कालन्तु वत्स्यामि कृतः समय एष नः ।
तस्यास्तं समयं सर्व्वं स राजा समपालयत् । एवं सा वसते तत्र पुरूरवसि भाविनी ।
वर्षाण्येकोनषष्टिन्तु तच्छक्रा शापमोहिता । उर्व्वश्यां मानुषस्थायां गन्धर्व्वाश्चिन्तयाऽन्विताः । ११८०
॥ गन्धर्व्वा ऊचुः ॥ चिन्तयध्वं महाभागा यथा सा तु वराङ्गना । समागच्छेत् पुनर्देवानुर्व्वशी स्वर्गभूषणं ।
ततो विश्वावसुर्नाम तत्राह वदताम्वरः । मया तु समयस्ताभ्यां क्रियमाणः श्रुतः पुरा ।
व्युत्क्रान्तसमयं सा वै राजानं त्यक्ष्यते यथा । तदहं वेद्मि भेदेन यथा भेत्स्यत्यसौ नृपः ।
ससहायो गमिष्यामि युष्माकं कार्य्यसिद्धये । एवमुक्त्वा गतस्तत्र प्रतिष्ठानं महायशाः ।
निशायामथ चागम्य मेषमेकं जहार सः । मातृवद्वर्त्तते सा तु मेषयोश्चारुहासिनी । ११८५
गन्धर्व्वागमनं ज्ञात्वा शापान्तञ्च यशस्विनी । राजानमब्रवीत्तत्र पुत्रो मे ऽह्रियतेति सा ।
एवमुक्तो विनिश्चित्य नग्नो नैवोदतिष्ठत । नग्नं मां द्रक्ष्यते देवी समयो वितथो भवेत् ।
ततो भूयस्तु गन्धर्व्वा द्वितीयं मेषमाक्षुः । द्वितीये तु हृते मेषे ऐलं देव्यब्रवीदिदं ।
पुत्रो मे ह्रियते राजन्ननाथाया इव प्रभो । एवमुक्तस्तदोत्थाय नग्नो राजा प्रधावितः ।
मेषयोः पदमन्विच्छन् गन्धर्व्वैर्विद्युदप्यथ । उत्पादिता सुमहती यया तद्भवनं महत् । ११९०
प्रकाशितं वै सहसा ततो नग्नमवैक्षत । नग्नं दृष्ट्वा तिरोभूता साऽप्सराः कामरूपिणी ।
तिरोभूतान्तु तां दृष्ट्वा गन्धर्व्वा प्रगमन्दिवं । उत्सृष्टावुरणौ दृष्ट्वा राजा ह्यागतो गृहं ।
अपश्यन्नुर्व्वशीं तत्र विललाप सुदुःखितः । चचार पृथिवीञ्चापि मार्गमाणः इतस्ततः ।
अथापश्यत् स तां राजा कुरुक्षेत्रे महाबलः । प्लक्षतीर्थे पुष्करिण्यां हैमवत्यां समाप्लुतां ।
क्रीडन्तीमप्सरोभिश्च पञ्चभिः सह शोभनां । तां क्रीडन्तीं ततो दृष्ट्वा विललाप सुदुःखितः । ११९५
सा चापि तत्र तं दृष्ट्वा राजानमविदूरतः । उर्व्वशी ताः सखीः प्राह स एष पुरुषोत्तमः ।
यस्मिन्नहमवात्सं वै दर्शयामास तं नृपं । समाविग्नास्तु ताः सर्व्वाः पुनरेव नराधिप ।
जाये हो तिष्ठ मनसि घोरे वचसि तिष्ठ ह । एवमादीनि सूक्तानि परस्परमभाषत ।
उर्व्वशी चाब्रवीदैलं सगर्भाऽहं त्वया विभो । संवत्सरात् कुमारास्ते भविष्यन्ति न संशयः ।
निशामेकाञ्च नृपते निवत्स्यसि मया सह । हृष्टो जगाम राजाऽथ स्वपुरं सुमहायशाः । १२००
गते संवत्सरे भूय उर्व्वशी पुनरागमत् । उषितश्च तया सार्द्धमेकरात्रं महायशाः ।

उर्व्वश्यथाब्रवीदेनं गन्धर्व्वा वरदास्तव। तान् वृणीष्व महाराज ब्रूहि चैतांस्तथैव हि।
वृणीष्व समतां राजन् गन्धर्व्वाणां महात्मनां। तथेत्युक्त्वा वरं वव्रे गन्धर्व्वाश्च तथाऽस्त्विति।
पूरयित्वाऽग्निना स्थालीं गन्धर्व्वा हि तमब्रुवन्। अनेनेष्ट्वा च लोकान् नः प्राप्स्यसि त्वं नराधिप।
तानादाय कुमारांस्तु नगरायोपचक्रमे। निक्षिप्याग्निमरण्ये तु सपुत्रस्तु गृहं ययौ। १३०५
अभ्येत्याग्निन्तु नापश्यदश्वत्थं तत्र दृष्टवान्। शमीजातन्तु तं दृष्ट्वा अश्वत्थं विस्मितस्ततः।
गन्धर्व्वेभ्यस्तदाऽशंसदग्निनाशं ततस्तु सः। श्रुत्वा तमर्थमखिलमरणीन्तु समादिशन्।
अश्वत्थादरणीं कृत्वा मथित्वाऽग्निं यथाविधि। मथित्वाऽग्निं त्रिधा कृत्वा अयजत् स नराधिपः।
इष्ट्वा यज्ञैर्बहुविधैर्गतस्तेषां सलोकतां। गन्धर्व्वेभ्यो वरं लब्ध्वा त्रेताग्निं समकारयत्।
एकोऽग्निः पूर्व्वमेवासीदैलस्त्रेतामकारयत्। एवं प्रभावो राजासीदैलस्तु पुरुषोत्तम। १३१०
देशे पुण्यतमे चैव महर्षिभिरभिष्टुते। राज्यं स कारयामास प्रयागे पृथिवीपतिः।
उत्तरे जाह्नवीतीरे प्रतिष्ठाने महायशाः।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि ऐलोत्पत्तिकथने षड्विंशोऽध्यायः॥ २६ ॥
॥ वैशम्पायन उवाच ॥ ऐलपुत्रा बभूवुस्ते सप्त देवसुतोपमाः। दिवि जाता महात्मान आयुर्द्धीमानमावसुः।
विश्वायुश्चैव धर्म्मात्मा श्रुतायुश्च तथाऽपरः। दृढायुश्च वनायुश्च शतायुश्चोर्व्वशीसुताः।
अमावसोस्तु दायादो भीमो राजाऽथ नग्नजित्। श्रीमान् भीमस्य दायादो राजासीत् काञ्चनप्रभः। १३१५
विद्वांस्तु काञ्चनस्यापि सुहोत्रोऽभून्महाबलः। सौहोत्रिरभवज्जह्नुः केशिन्या गर्भसम्भवः।
आजह्रे यो महासत्रं सर्व्वमेधं महामखं। पतिलोभेन यं गङ्गा पतित्वेऽभिससार ह।
नेच्छतः प्लावयामास तस्य गङ्गाऽथ तत्सदः। स तया प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः।
सौहोत्रिरब्रवीद्गङ्गां क्रुद्धो भरतसत्तम। एष ते विफलं यत्नं पिबन्नम्भः करोम्यहं।
अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि। राजर्षिणा ततः पीतां गङ्गां दृष्ट्वा महर्षयः। १३२०
उपनिन्युर्म्महाभागां दुहितृत्वेन जाह्नवीं। युवनाश्वस्य पुत्रीन्तु कावेरीं जह्नुरावहत्।
युवनाश्वस्य शापेन गङ्गार्द्धेन विनिर्ग्गतां। कावेरीं सरितां श्रेष्ठां जह्नोर्भार्य्यामनिन्दितां।
जह्नुस्तु दयितं पुत्रं सुनहं नाम धार्म्मिकं। कावेर्य्यां जनयामास अजकस्तस्य चात्मजः।
अजकस्य तु दायादो बलाकाश्वो महीपतिः। बभूव मृगयाशीलः कुशस्तस्यात्मजोऽभवत्।
कुशपुत्रा बभूवुर्हि चत्वारो देववर्च्चसः। कुशिकः कुशनाभश्च कुशाम्बो मूर्त्तिमांस्तथा। १३२५
पह्लवैः सह संवृद्धो राजा वनचरैस्तदा। कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमं विभुः।
लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान्। पूर्णे वर्षसहस्रे वै तन्तु शक्रो ह्यपश्यत।
अत्युग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः। समर्थः पुत्रजनने स्वमेवांशमवासयत्।
पुत्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः। स गाधिरभवद्राजा मघवान् कौशिकः स्वयं।
पौरकुत्स्यभवद्भार्य्या गाधिस्तस्यामजायत। गाधेः कन्या महाभागा नाम्ना सत्यवती शुभा। १३३०

तां गाधिर्भृगुपुत्राय ऋचीकाय ददौ प्रभुः । तस्याः प्रीतोऽभवद्भर्त्ता भार्गवो भृगुनन्दनः ।
पुत्रार्थं कल्पयामास चरुं गाधेस्तथैव च । उवाचाहूय तां भर्त्ता ऋचीको भार्गवस्तदा ।
उपयोज्यश्चरुरयं त्वया मात्रा त्वयं तव । तस्यां जनिष्यते पुत्रो दीप्तिमान् क्षत्रियर्षभः ।
अजेयः क्षत्रियैर्लोके क्षत्रियर्षभसूदनः । तवापि पुत्रं कल्याणि धृतिमन्तं तपोधनं ।
शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति । एवमुक्त्वा तु तां भार्य्यामृचीको भृगुनन्दनः । १४५५
तपस्यभिरतो नित्यमरण्यं प्रविवेश ह । गाधिः सदारस्तु तदा ऋचीकाश्रममभ्यगात् ।
तीर्थयात्राप्रसङ्गेन सुतां द्रष्टुं नरेश्वर । चरुद्वयं गृहीत्वा तदृषेः सत्यवती तदा ।
चरुमादाय यत्नेन सा तु मात्रे न्यवेदयत् । माता व्यत्यस्य दैवेन दुहित्रे स्वं चरुं ददौ ।
तस्याश्चरुमथाज्ञानादात्मसंस्थं चकार ह । अथ सत्यवती गर्भं क्षत्रियान्तकरं तदा ।
धारयामास दीप्तेन वपुषा घोरदर्शनं । तामृचीकस्ततो दृष्ट्वा योगेनाभ्यनुसृत्य च । १४६०
तामब्रवीद्द्विजश्रेष्ठः स्वां भार्य्यां वरवर्णिनीं । मात्राऽसि वञ्चिता भद्रे चरुव्यत्यासहेतुना ।
जनिष्यति हि पुत्रस्ते क्रूरकर्म्माऽतिदारुणः । भ्राता जनिष्यते चापि ब्रह्मभूतस्तपोधनः ।
विश्वं हि ब्रह्म तपसा मया तस्मिन् समर्पितं । एवमुक्ता महाभागा भर्त्रा सत्यवती तदा ।
प्रसादयामास पतिं पुत्रो मे नेदृशो भवेत् । ब्राह्मणापसदस्त्वत्त इत्युक्तो मुनिरब्रवीत् ।
नैष सङ्कल्पितः कामो मया भद्रे तथाऽस्त्विति । उग्रकर्म्मा भवेत्पुत्रः पितुर्मातुश्च कारणात् । १४६५
पुनः सत्यवती वाक्यमेवमुक्त्वाऽब्रवीदिदं । इच्छन् लोकानपि मुने सृजेथाः किं पुनः सुतं ।
शमात्मकमृजुं त्वं मे पुत्रं दातुमिहार्हसि । काममेवंविधः पौत्रो मम स्यात्तव च प्रभो ।
यद्यन्यथा न शक्यं वै कर्त्तुमेतद्द्विजोत्तम । *ततः प्रसादमकरोत् स तस्यास्तपसो बलात् ।
भद्रे नास्ति विशेषो मे पौत्रे च वरवर्णिनि । त्वया यथोक्तं वचनं तथा भद्रे भविष्यति ।
ततः सत्यवती पुत्रं जनयामास भार्गवं । तपस्यभिरतं दान्तं जमदग्निं शमात्मकं । १४७०
भृगोश्चरुविपर्य्यासे रौद्रवैष्णवयोः पुरा । यजनाद्वैष्णवेऽग्नेश्च जमदग्निरजायत ।
सा हि सत्यवती पुण्या सत्यधर्म्मपरायणा । कौशिकीति समाख्याता प्रवृत्तेयं महानदी ।
इक्ष्वाकुवंशप्रभवो रेणुर्नाम नराधिपः । तस्य कन्या महाभागा कामली नाम रेणुका ।
रेणुकायान्तु कामल्यां तपोविद्यासमन्वितः । आर्च्चीको जनयामास जामदग्न्यं सुदारुणं ।
सर्व्वविद्यान्तगं श्रेष्ठं धनुर्व्वेदस्य पारगं । रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकं । १४७५
और्व्वस्यैवमृचीकस्य सत्यवत्यां महायशाः । जमदग्निस्तपोवीर्य्याज्जज्ञे ब्रह्मविदाम्वरः ।
मध्यमश्च शुनःशेफः शुनःपुच्छः कनिष्ठकः । विश्वामित्रन्तु दायादं गाधिः कुशिकनन्दनः ।
जनयामास पुत्रन्तु तपोविद्याशमात्मकं । प्राप्य ब्रह्मर्षिसमतां योऽयं सप्तर्षितां गतः ।
विश्वामित्रस्तु धर्म्मात्मा नाम्ना विश्वरथः स्मृतः । जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्द्धनः ।
विश्वामित्रस्य च सुता देवरातादयः स्मृताः । विख्यातास्त्रिषु लोकेषु तेषां नामानि मे शृणु । १४८०

देवश्रवाः कतिश्चैव यस्मात् कात्यायनाः स्मृताः । शालावत्यां हिरण्याक्षो रेणोर्जज्ञेऽथ रेणुमान् ।
साङ्कृतिर्गालवश्चैव मुद्गलश्चेति विश्रुताः । मधुच्छन्दो जयश्चैव देवलश्च तथाऽष्टकः ।
कच्छपो हारितश्चैव विश्वामित्रस्य ते सुताः । तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनां ।
पाणिनो बभ्रवश्चैव ध्यानजप्यास्तथैव च । पार्थिवा देवराताश्च शालङ्कायनबास्कलाः ।
लोहिता यामदूताश्च तथा कारीषयः स्मृताः । सौश्रुताः कौशिका राजंस्तथाऽन्ये सैन्धवायनाः । १४६५
देवला रेणवश्चैव याज्ञवल्क्याघमर्षणाः । औदुम्बरा ह्यभिष्णातास्तारकायनचुञ्चुलाः ।
शालावत्या हिरण्याक्षाः साङ्कृत्या गालवास्तथा । नारायणिर्नरश्चान्यो विश्वामित्रस्य धीमतः ।
ऋष्यन्तरविवाह्याश्च कौशिका बहवः स्मृताः । पौरवस्य महाराज ब्रह्मर्षेः कौशिकस्य च ।
सम्बन्धोऽप्यस्य वंशेऽस्मिन् ब्रह्मक्षत्रस्य विश्रुतः । विश्वामित्रात्मजानान्तु शुनःशेपोऽग्रजः स्मृतः ।
भार्गवः कौशिकत्वं हि प्राप्तः स मुनिसत्तमः । विश्वामित्रस्य पुत्रस्तु शुनःशेपोऽभवत् किल । १४७०
हरिदश्वस्य यज्ञे तु पशुत्वे विनियोजितः । देवैर्दत्तः शुनःशेपो विश्वामित्राय वै पुनः ।
देवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत् । देवरातादयः सप्त विश्वामित्रस्य वै सुताः ।
दृषद्वतीसुतश्चापि विश्वामित्रात्तथाऽष्टकः । अष्टकस्य सुतो लौहिः प्रोक्तो जह्नुगणो मया ।
अत ऊर्द्ध्वं प्रवक्ष्यामि वंशमायोर्महात्मनः ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि अमावसुवंशकीर्त्तने सप्तविंशोऽध्यायः ॥ २७ ॥

॥ वैशम्पायन उवाच ॥ आयोः पुत्त्रास्तथा पञ्च सर्व्वे वीरा महारथाः । स्वर्भानुतनयायाञ्च प्रभायां जज्ञिरे नृप । १४७५
नहुषः प्रथमं जज्ञे वृद्धशर्म्मा ततः परं । रम्भो रजिरनेनाश्च त्रिषु लोकेषु विश्रुताः ।
रजिः पुत्त्रशतानीह जनयामास पञ्च वै । राजेयमिति विख्यातं क्षत्रमिन्द्रभयावहं ।
यत्र देवासुरे युद्धे समुपोढे सुदारुणे । देवाश्चैवासुराश्चैव पितामहमथाब्रुवन् ।
आवयोर्भगवन् युद्धे को विजेता भविष्यति । ब्रूहि नः सर्व्वभूतेश श्रोतुमिच्छाम ते वचः ।
॥ ब्रह्मोवाच ॥ येषामर्थाय संग्रामे रजिरात्तायुधः प्रभुः । योत्स्यते ते विजेष्यन्ति त्रीन् लोकान्नात्र संशयः । १४८०
यतो रजिर्धृतिस्तत्र श्रीश्च तत्र यतो धृतिः । यतो धृतिश्च श्रीश्चैव धर्म्मस्तत्र जयस्तथा ।
ते देवदानवाः प्रीता देवेनोक्ता रजेर्जये । अभ्ययुर्जयमिच्छन्तो वृण्वानास्तं नरर्षभं ।
स हि स्वर्भानुदौहित्रः प्रभायां समपद्यत । राजा परमतेजस्वी सोमवंशविवर्द्धनः ।
ते हृष्टमनसः सर्व्वे रजिं दैतेयदेवताः । ऊचुरस्मज्जयाय त्वं गृहाण वरकार्म्मुकं ।
अथोवाच रजिस्तत्र तयोर्वै देवदैत्ययोः । अर्थज्ञः स्वार्थमुद्दिश्य यशः स्वञ्च प्रकाशयन् । १४८५
॥ रजिरुवाच ॥ यदि दैत्यगणान् सर्व्वान् जित्वा वीर्य्येण वासव । इन्द्रो भवानि धर्म्मेण ततो योत्स्यामि संयुगे ।
देवाः प्रथमतो भूयः प्रतीयुर्हृष्टमानसाः । एवं यथेष्टं नृपते कामः सम्पद्यतां तव ।
श्रुत्वा सुरगणानान्तु वाक्यं राजा रजिस्तदा । पप्रच्छासुरमुख्यांस्तु यथा देवानपृच्छत ।
दानवा दर्पपूर्णास्तु स्वार्थमेवावगम्य ह । प्रत्यूचुस्तं नृपवरं साभिमानमिदं वचः ।

अस्माकमिन्द्रः प्रह्लादो यस्यार्थे विजयामहे । अस्मिंस्तु समये राजंस्तिष्ठेथा राजसत्तम । १४९०
स तथेति ब्रुवन्नेव देवैरप्यभिचोदितः । भविष्यसीन्द्रो जित्वैवं देवैरुक्तस्तु पार्थिवः ।
जघान दानवान् सर्व्वान् येऽवध्या वज्रपाणिनः । स विप्रनष्टां देवानां परमश्रीः श्रियं वशी ।
निहत्य दानवान् सर्व्वानाजहार रजिः प्रभुः । ततो रजिं महावीर्य्यं देवैः सह शतक्रतुः ।
रजेः पुत्त्रोऽहमित्युक्त्वा पुनरेवाब्रवीद्वचः । इन्द्रोऽसि तात देवानां सर्व्वेषां नात्र संशयः ।
यस्याहमिन्द्रः पुत्त्रस्ते ख्यातिं यास्यामि कर्म्मभिः । शतक्रतुवचः श्रुत्वा वञ्चितस्तेन मायया । १४९५
तथेत्येवाब्रवीद्राजा प्रीयमाणः शतक्रतुं । तस्मिंस्तु देवसदृशे दिवं प्राप्ते महीपतौ ।
दायाद्यमिन्द्रादाजह्रुराचारात्तनया रजेः । पञ्च पुत्त्रशतान्यस्य तद्वै स्थानं शतक्रतोः ।
समाक्रामन्त बहुधा स्वर्गलोकं त्रिविष्टपं । ततो बहुतिथे काले समतीते महाबलः ।
हृतराज्योऽब्रवीच्छक्रो हृतभागो बृहस्पतिं ।
॥ इन्द्र उवाच ॥ बदरीफलमात्रं वै पुरोडाशं विधत्स्व मे । ब्रह्मर्षे येन तिष्ठेयं तेजसाप्यायितः सदा । १५००
ब्रह्मन् कृशोऽहं विमना हृतराज्यो हृताशनः । हतौजा दुर्ब्बलो मूढो रजेः पुत्त्रैः कृतः प्रभो ।
॥ बृहस्पतिरुवाच ॥ यद्येवं चोदितः शक्र त्वया स्यां पूर्व्वमेव हि । नाभविष्यत् त्वत्प्रियार्थमकर्त्तव्यं ममानघ ।
प्रयतिष्यामि देवेन्द्र त्वत्प्रियार्थं न संशयः । यथा भागञ्च राज्यञ्च न चिरात् प्रतिपत्स्यसे ।
तथा तात करिष्यामि मा ते भूद्विक्लवं मनः । ततः कर्म्म चकारास्य तेजसो वर्द्धनं तदा ।
तेषाञ्च बुद्धिसंमोहमकरोद्द्विजसत्तमः । नास्तिवादार्थशास्त्रं हि धर्म्मविद्वेषणं परं । १५०५
परमं तर्कशास्त्राणामसतां तन्मनोनुगं । न हि धर्म्मप्रधानानां रोचते तत् कथान्तरे ।
एतद्बृहस्पतिकृतं शास्त्रं श्रुत्वाऽल्पचेतसः । पूर्व्वोक्तधर्म्मशास्त्राणामभवन् द्वेषिणः सदा ।
प्रचक्रुर्न्यायरहितं तन्मतं बहुमेनिरे । तेनाधर्म्मेण ते पापाः सर्व्व एव क्षयं गताः ।
त्रैलोक्यराज्यं शक्रस्तु प्राप्य दुष्प्रापमेव च । बृहस्पतिप्रसादाद्वै परां निर्वृतिमभ्यगात् ।
ते यदा तु सुसंमूढा रागोन्मत्ता विधर्म्मिणः । ब्रह्मद्विषश्च संवृत्ता हतवीर्य्यपराक्रमाः । १५१०
ततो लेभे सुरैश्वर्य्यमिन्द्रः स्थानं तथोत्तमं । हत्वा रजिसुतान् सर्व्वान् कामक्रोधपरायणान् ।
य इदं च्यावनं स्थानात् प्रतिष्ठाञ्च शतक्रतोः । शृणुयाद्धारयेद्वाऽपि न स दौरात्म्यमाप्नुयात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि आयुर्वंशानुकीर्त्तने अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ वैशम्पायन उवाच ॥ रम्भोऽनपत्यस्त्वासीत्तु वंशं वक्ष्याम्यनेनसः । अनेनसः सुतो राजा प्रतिक्षत्रो महायशाः ।
प्रतिक्षत्रसुतश्चापि सृञ्जयो नाम विश्रुतः । सृञ्जयस्य जयः पुत्रो विजयस्तस्य चात्मजः ।
विजयस्य कृतिः पुत्त्रस्तस्य हर्य्यत्वतः सुतः । हर्य्यत्वतःसुतो राजा सहदेवः प्रतापवान् । १५१५
सहदेवस्य धर्म्मात्मा नदीन इति विश्रुतः । नदीनस्य जयत्सेनो जयत्सेनस्य संकृतिः ।
संकृतेरपि धर्म्मात्मा क्षत्त्रधर्म्मा महायशाः । अनेनसः समाख्याताः क्षत्त्रवृद्धस्य मे शृणु ।
क्षत्त्रवृद्धात्मजस्तत्र सुनहोत्रो महायशाः । सुनहोत्रस्य दायादास्त्रयः परमधार्म्मिकाः ।

काशः शलश्च द्वावेतौ तथा गृत्समदः प्रभुः । पुत्रो गृत्समदस्यापि शुनको यस्य शौनकाः ।
ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च । शलात्मजश्चार्ष्टिषेणस्तनयस्तस्य काश्यकः । १५२०
काश्यस्य काश्यपः पुत्रो राजा दीर्घतपास्तथा । धन्वस्तु दीर्घतपसो धन्वात् धन्वन्तरिः सुतः ।
तपसोऽन्ते सुमहतो जातो धन्वस्य धीमतः । पुनर्धन्वन्तरिर्देवो मानुषेष्विह जज्ञिवान् ।
॥ जनमेजय उवाच ॥ कथं धन्वन्तरिर्देवो मानुषेष्विह जज्ञिवान् । एतद्वेदितुमिच्छामि तन्मे ब्रूहि यथातथं ।
॥ वैशम्पायन उवाच ॥ धन्वन्तरेः सम्भवोऽयं श्रूयतां भरतर्षभ । स सम्भूतः समुद्रान्तु मथ्यमानेऽमृते पुरा ।
उत्पन्नः कलशात् पूर्व्वं सर्व्वतस्तु श्रिया वृतः । अभ्यसन् सिद्धिकार्य्ये हि विष्णुं दृष्ट्वा हि तस्थिवान् । १५२५
अब्जस्त्वमिति होवाच तस्मादब्जस्तु स स्मृतः । अब्जः प्रोवाच विष्णुं वै तनयोऽस्मि तव प्रभो ।
विधत्स्व भागं स्थानञ्च मम लोकेश्वरेश्वर । एवमुक्तः स दृष्ट्वा वै तथ्यं प्रोवाच तं प्रभुः ।
कृतो यज्ञविभागो हि यज्ञियैर्हि सुरैः पुरा । देवेषु विनियुक्तञ्च विधिहोत्रं महर्षिभिः ।
न शक्यमुपहोमो वै तुभ्यं कर्त्तुं कदाचन । अर्व्वाग्भूतोऽसि देवानां पुत्रस्त्वं हि महीश्वरः ।
द्वितीयायान्तु संभूत्यां लोके ख्यातिं गमिष्यसि । अणिमादिश्च ते सिद्धिर्गर्भस्थस्य भविष्यति । १५३०
तेनैव त्वं शरीरेण देवत्वं प्राप्स्यसे प्रभो । चरुमन्त्रैर्व्रतैर्जाप्यैर्यक्ष्यन्ति त्वां द्विजातयः ।
अष्टधा त्वं पुनश्चैवमायुर्व्वेदं विधास्यसि । अवश्यं भावी ह्यर्थोऽयं प्राग्दृष्टस्त्वब्जयोनिना ।
द्वितीयं द्वापरं प्राप्य भविता त्वं न संशयः । इमं तस्मै वरं दत्त्वा विष्णुरन्तर्दधे पुनः ।
द्वितीये द्वापरे प्राप्ते शौनहोत्रिः स काशिराट् । पुत्रकामस्तपस्तेपे धन्वो दीर्घं महत्तदा ।
प्रपद्ये देवतां तान्तु या मे पुत्रं प्रदास्यति । अब्जं देवं स पुत्रार्थे तदाराधितवान्नृपः । १५३५
ततस्तुष्टः स भगवानब्जः प्रोवाच तं नृपं । यदिच्छसि वरं ब्रूहि तत्ते दास्यामि सुव्रत ।
॥ नृप उवाच ॥ भगवन् यदि तुष्टस्त्वं पुत्रो मे ख्यातिमान् भव । तथेति समनुज्ञाय तत्रैवान्तरधीयत ।
तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा । काशिराजो महाराजः सर्व्वरोगप्रणाशनः ।
आयुर्व्वेदं भरद्वाजात् प्राप्येह सभिषक्क्रियं । तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ।
धन्वन्तरेस्तु तनयः केतुमानिति विश्रुतः । अथ केतुमतः पुत्रो वीरो भीमरथः स्मृतः । १५४०
पुत्रो भीमरथस्यापि दिवोदासः प्रजेश्वरः । दिवोदासस्तु धर्म्मात्मा वाराणस्यधिपोऽभवत् ।
एतस्मिन्नेव काले तु पुरीं वाराणसीं नृप । शून्यां निवेशयामास क्षेमको नाम राक्षसः ।
शप्ता हि सा मतिमता निकुम्भेन महात्मना । शून्या वर्षसहस्रं वै भवित्रीति न संशयः ।
तस्यान्तु शप्तमात्रायां दिवोदासः प्रजेश्वरः । विषयान्ते पुरीं रम्यां गोमत्यां संन्यवेशयत् ।
भद्रश्रेण्यस्य पूर्व्वन्तु पुरी वाराणसी ह्यभूत् । भद्रश्रेण्यस्य पुत्राणां शतमुत्तमधन्विनां । १५४५
हत्वा निवेशयामास दिवोदासो नराधिपः । भद्रश्रेण्यस्य तद्राज्यं हृतं येन बलीयसा ।
॥ जनमेजय उवाच ॥ वाराणसीं निकुम्भस्तु किमर्थं शप्तवान् प्रभुः । निकुम्भश्च स धर्म्मात्मा सिद्धिक्षेत्रं शशाप यः ।
॥ वैशम्पायन उवाच ॥ दिवोदासस्तु राजर्षिर्नगरीं प्राप्य पार्थिवः । वसति स्म महातेजाः स्फीतायान्तु नराधिपः ।

एतस्मिन्नेव काले तु कलत्रार्थी महेश्वरः। देव्याः स प्रियकामस्तु न्यवसच्छ्वशुरान्तिके।
देवाज्ञया पार्षदा ये त्वभिरूपास्तपोधनाः। पूर्वोक्तैरुपचारैश्च तोषयन्ति स्म पार्वतीम्। १५१०
हृष्यते वै महादेवी मेना नैव प्रहृष्यति। जुगुप्सत्यसकृत्तां वै देवीं देवं तथैव च।
सपार्षदस्त्वनाचारस्तव भर्त्ता महेश्वरः। दरिद्रः सर्व्वदैवासौ शीलं तस्य न वर्त्तते।
मात्रा तथोक्ता वरदा स्त्रीस्वभावाच्च चुक्रुधे। स्मितं कृत्वा तु वरदा भवपार्श्वमथागमत्।
विवर्णवदना देवी महादेवमभाषत। नेह वत्स्याम्यहं देव नय मां स्वं निवेशनम्।
तथा कर्त्तुं महादेवः सर्व्वान् लोकानवैक्षत। वासार्थं रोचयामास पृथिव्यां कुरुनन्दन। १५१५
वाराणसीं महादेवः सिद्धिक्षेत्रं महेश्वरः। दिवोदासेन तां ज्ञात्वा निविष्टां नगरीं भवः।
पार्श्वे तिष्ठन्तमाहूय निकुम्भमिदमब्रवीत्। गणेश्वर पुरीं गत्वा शून्यां वाराणसीं कुरु।
मृदुनैवाभ्युपायेन अतिवीर्य्यः स पार्थिवः। ततो गत्वा निकुम्भस्तु पुरीं वाराणसीं तदा।
स्वप्ने निदर्शयामास कण्डुकं नाम नापितम्। श्रेयस्तेऽहं करिष्यामि स्थानं मे रोचयानघ।
मद्रूपां प्रतिमां कृत्वा नगर्य्यन्ते तथैव च। ततः स्वप्ने यथोद्दिष्टं सर्व्वं कारितवान्नृप। १५२०
पुरीद्वारे तु विज्ञाप्य राजानञ्च यथाविधि। पूजाञ्च महतीं तत्र नित्यमेव प्रयोजयत्।
गन्धैश्च धूपमाल्यैश्च प्रोक्षणीयैस्तथैव च। अन्नपानप्रयोगैश्च अत्यद्भुतमिवाभवत्।
एवं सम्पूज्यते तत्र नित्यमेव गणेश्वरः। ततो वरसहस्रन्तु नगर्य्यां सम्प्रयच्छति।
पुत्रान् हिरण्यमायुश्च सर्व्वान् कामांस्तथैव च। राज्ञस्तु महिषी श्रेष्ठा सुयशा नाम विश्रुता।
पुत्रार्थमागता देवी साध्वी राज्ञा प्रचोदिता। पूजान्तु विपुलां कृत्वा देवी पुत्रमयाचत। १५२५
पुनः पुनरथागत्य बहुशः पुत्रकारणात्। न प्रयच्छति पुत्रं हि निकुम्भः कारणेन हि।
राजा तु यदि नः क्रुध्येत्कार्य्यसिद्धिस्ततो भवेत्। अथ दीर्घेण कालेन क्रोधो राजानमाविशत्।
भूतमेष महद्द्वारि नागराणां प्रयच्छति। प्रीतो वरान् वै शतशो मम किं न प्रयच्छति।
मामकैः पूज्यते नित्यं नगर्य्यां मे सदैव हि। विज्ञापितो मयाऽत्यर्थं देव्या मे पुत्रकारणात्।
न ददाति च पुत्रं मे कृतघ्नः केन हेतुना। ततो नार्हति सत्कारं मत्सकाशाद्विशेषतः। १५३०
तस्मात्तु नाशयिष्यामि स्थानमस्य दुरात्मनः। एवं स तु विनिश्चित्य दुरात्मा राजकिल्बिषी।
स्थानं गणपतेस्तस्य नाशयामास दुर्म्मतिः। भग्नमायतनं दृष्ट्वा राजानमशपत् प्रभुः।
यस्मादनपराधस्य त्वया स्थानं विनाशितं। पुरी शून्या तवाऽकस्मादेव नूनं भविष्यति।
ततस्तेन तु शापेन शून्या वाराणसी तदा। शप्त्वा पुरीं निकुम्भस्तु महादेवमथागमत्।
अकस्माच्च पुरी सा तु विद्रुता सर्व्वतो दिशं। तस्यां पुर्य्यां ततो देवो निर्म्ममे पदमात्मनः। १५३५
रमते तत्र वै देवो रममाणो गिरेः सुतां। न रतिं तत्र वै देवी लभते गृहविस्मयात्।
वसाम्यत्र न पूर्व्वान्तु देवी देवमथाऽब्रवीत्।
॥ देव उवाच ॥ नाहं वेश्म विमोक्ष्यामि अविमुक्तं हि मे गृहं। नाहं तत्र गमिष्यामि गच्छ देवि गृहं प्रति।

प्रहस्योवाच भगवांस्त्र्यम्बकस्त्रिपुरान्तकः । तस्मात्तदविमुक्तं हि प्रोक्तं देवेन वै स्वयं ।
एवं वाराणसी शप्ता अविमुक्तञ्च कीर्त्तितं । यस्मिन् वसति वै देवः सर्व्वदेवनमस्कृतः । १५८०
युगेषु त्रिषु धर्म्मात्मा सह देव्या महेश्वरः । अन्तर्द्धानं कलौ याति तत्पुरं हि महात्मनः ।
अन्तर्हिते पुरे तस्मिन् पुरी तु वसते पुनः । एवं वाराणसी शप्ता निवेशं पुनरागता ।
भद्रश्रेण्यस्य पुत्रस्तु दुर्द्दमो नाम विश्रुतः । दिवोदासेन बालेति घृणया स विसर्ज्जितः ।
हैहयस्य तु दायाद्यं हृतवान् वै महीपतिः । आजह्रे पितृदायाद्यं दिवोदासहृतं बलात् ।
भद्रश्रेण्यस्य पुत्रेण दुर्द्दमेन महात्मना । वैरस्यान्तं महाराज क्षत्रियेण विधित्सता । १५८५
दिवोदासाद्दृषद्वत्यां वीरो जज्ञे प्रतर्द्दनः । तेन पुत्रेण बालेन प्रहृतं तस्य वै पुनः ।
प्रतर्द्दनस्य पुत्रौ द्वौ वत्सभर्गौ सुविश्रुतौ । वत्सपुत्रो ह्यलर्कस्तु सन्नतिस्तस्य चात्मजः ।
अलर्कः काशिराजस्तु ब्रह्मण्यः सत्यसङ्गरः । अलर्कं प्रति राजर्षिं श्लोको गीतः पुरातनैः ।
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च । युवा रूपेण सम्पन्न आसीत् काशिकुलोद्वहः ।
लोपामुद्राप्रसादेन परमायुरवाप सः । तस्यासीत् सुमहद्राज्यं रूपयौवनशालिनः । १५९०
शापस्यान्ते महाबाहुर्हत्वा क्षेमकराक्षसं । रम्यां निवेशयामास पुरीं वाराणसीं पुनः ।
सन्नतेरपि दायादः सुनीथो नाम धार्म्मिकः । सुनीथस्य तु दायादः क्षेम्यो नाम महायशाः ।
क्षेम्यस्य केतुमान् पुत्रः सुकेतुस्तस्य चात्मजः । सुकेतुतनयश्चापि धर्म्मकेतुरिति श्रुतः ।
धर्म्मकेतोश्च दायादः सत्यकेतुर्म्महारथः । सत्यकेतुसुतश्चापि विभुर्नाम प्रजेश्वरः ।
सुविभुस्तु विभोः पुत्रः सुकुमारस्य तत्सुतः । सुकुमारस्य पुत्रस्तु धृष्टकेतुः सुधार्म्मिकः । १५९५
धृष्टकेतोश्च दायादो वेणुहोत्रः प्रजेश्वरः । वेणुहोत्रसुतश्चापि भर्गो नाम प्रजेश्वरः ।
वत्सस्य वत्सभूमिस्तु भृगुभूमिस्तु भार्गवात् । एते त्वङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे ।
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयः पुत्राः सहस्रशः । इत्येते काश्यपाः प्रोक्ता नहुषस्य निबोध च ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि ऊनत्रिंशोऽध्यायः ॥ २९ ॥

॥ वैशम्पायन उवाच ॥ उत्पन्नाः पितृकन्यायां विरजायां महौजसः । नहुषस्य तु दायादाः षडिन्द्रोपमतेजसः ।
यतिर्य्ययातिः संयातिरायातिः पाञ्चिकोभवः । सुयातिः षडेतेषां वै ययातिः पार्थिवोऽभवत् । १६००
यतिर्ज्येष्ठस्तु तेषां वै ययातिस्तु ततः परं । ककुत्स्थकन्यां गां नाम लेभे परमधार्म्मिकः ।
यतिस्तु मोक्षमास्थाय ब्रह्मभूतोऽभवन्मुनिः । तेषां ययातिः पञ्चानां विजित्य वसुधामिमां ।
देवयानीमुशनसः सुतां भार्य्यामवाप सः । शर्म्मिष्ठामासुरीञ्चैव तनयां वृषपर्व्वणः ।
यदुञ्च तुर्व्वसुञ्चैव देवयानी व्यजायत । द्रुह्युञ्चानुञ्च पूरुञ्च शर्म्मिष्ठा वार्षपर्व्वणी ।
तस्मै शक्रो ददौ प्रीतो रथं परमभास्वरं । असङ्गं काञ्चनं दिव्यं दिव्यैः परमवाजिभिः । १६०५
युक्तं मनोजवैः शुभ्रैर्येन कार्य्यं समुद्वहन् । स तेन रथमुख्येन षड्रात्रेणाजयन्महीं ।
ययातिर्युधि दुर्द्धर्षस्तथा देवान् सदानवान् । स रथः पौरवाणान्तु सर्व्वेषामभवत्तदा ।

यावत्तु वसुनाम्नो वै कौरवाज्जनमेजयात्। कुरोः पुत्रस्य राजेन्द्र राज्ञः पारिक्षितस्य च ।
जगाम स रथो नाशं शापाद्गार्ग्यस्य धीमतः । गार्ग्यस्य हि सुतं बालं स राजा जनमेजयः ।
वाक्क्रूरं हिंसयामास ब्रह्महत्यामवाप सः । स लोहगन्धो राजर्षिः परिधावन्नितस्ततः । १६१०
पौरजानपदैस्त्यक्तो न लेभे शर्म कर्हिचित्। ततः स दुःखसन्तप्तो नालभत् संविदं क्वचित्।
इन्द्रोतं शौनकं राजा शरणं प्रत्यपद्यत। याजयामास चेन्द्रोतः शौनको जनमेजयं।
अश्वमेधेन राजानं पावनार्थं द्विजोत्तमः । स लोहगन्धो व्यनशत्तस्यावभृथमेत्य च ।
स च दिव्यो रथो राजन् वसोश्चेदिपतेस्तदा । दत्तः शक्रेण तुष्टेन लेभे तस्माद्बृहद्रथः ।
बृहद्रथात् क्रमेणैव प्राप्तो बार्हद्रथं नृपं । ततो हत्वा जरासन्धं भीमस्तं रथमुत्तमम्। १६१५
प्रददौ वासुदेवाय प्रीत्या कौरवनन्दन । सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागरां।
व्यभजत् पञ्चधा राजा पुत्राणां नाहुषस्तदा । दिशि दक्षिणपूर्वस्यां तुर्वसुं मतिमान्नृपः ।
प्रतीच्यामुत्तरस्यां च द्रुह्युं चानुं च नाहुषः । दिशि पूर्वोत्तरस्यान्तु यदुं श्रेष्ठं न्ययोजयत् ।
मध्ये पूरुं च राजानमभ्यषिञ्चत् स नाहुषः । तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्मेण परिपाल्यते । प्रजास्तेषां पुरस्तात्तु वक्ष्यामि नृपसत्तम । १६२०
धनुर्न्यस्य पृषत्कांश्च पञ्चभिः पुरुषर्षभैः । जरावानभवद्राजा भारमावेश्य बन्धुषु ।
निक्षिप्तशस्त्रः पृथिवीं निरीक्ष्य पृथिवीपतिः । प्रीतिमानभवद्राजा ययातिरपराजितः ।
एवं विभज्य पृथिवीं ययातिर्यदुमब्रवीत्। जरां मे प्रतिगृह्णीष्व पुत्र कृत्यान्तरेण वै ।
तरुणस्तव रूपेण चरेयं पृथिवीमिमां । जरां त्वयि समाधाय तं यदुः प्रत्युवाच ह ।
अनिर्दिष्टा मया भिक्षा ब्राह्मणस्य प्रतिश्रुता । अनपाकृत्य तां राजन्न ग्रहीष्यामि ते जरां । १६२५
जरायां बहवो दोषाः पानभोजनकारिताः । तस्माज्जरां न ते राजन् ग्रहीतुमहमुत्सहे ।
सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप । प्रतिग्रहीतुं धर्मज्ञ पुत्रमन्यं वृणीष्व वै ।
स एवमुक्तो यदुना राजा कोपसमन्वितः । उवाच वदतां श्रेष्ठो ययातिर्गर्हयन् सुतं।
क आश्रमस्तवान्योऽस्ति को वा धर्मो विधीयते । मामनादृत्य दुर्बुद्धे यदहं तव देशिकः ।
एवमुक्त्वा यदुं तात शशापैनं स मन्युमान्। अराज्या ते प्रजा मूढ भवित्रीति नराधिप। १६३०
स तुर्वसुं च द्रुह्युं चाप्यनुं च भरतर्षभ। एवमेवाब्रवीद्राजा प्रत्याख्यातश्च तैरपि।
शशाप तानपि क्रुद्धो ययातिरपराजितः । यथा ते कथितं पूर्वं मया राजर्षिसत्तम ।
एवं शप्त्वा सुतान् सर्वांश्चतुरः पूरुपूर्वजान्। तदेव वचनं राजा पूरुमप्याह भारत ।
तरुणस्तव रूपेण चरेयं पृथिवीमिमां। जरां त्वयि समाधाय त्वं पूरो यदि मन्यसे ।
स जरां प्रतिजग्राह पितुः पूरुः प्रतापवान्। ययातिरपि रूपेण पूरोः पर्यचरन्महीं । १६३५
स मार्गमाणः कामानामन्तं भरतसत्तम । विश्वाच्या सहितो रेमे वने चैत्ररथे प्रभुः ।
यदा तृप्तः कामानां भोगेषु च नराधिपः । तदा पूरोः सकाशाद्वै स्वां जरां प्रत्यपद्यत ।

तत्र गाथा महाराज शृणु गीता ययातिना। याभिः प्रत्याहरेत् कामान् सर्व्वशोऽङ्गानि कूर्म्मवत्।
न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते।
यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। नालमेकस्य तत् सर्व्वमिति मत्वा न मुह्यति। १६३०
यदा भावं न कुरुते सर्व्वभूतेषु पापकं। कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा।
यदाऽन्येभ्यो न बिभेति यदा चास्मान्न बिभ्यति। यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा।
या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः। योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं।
जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः। धनाशा जीविताशा च जीर्य्यतोऽपि न जीर्य्यति।
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखं। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलां। १६३५
एवमुक्त्वा स राजर्षिः सदारः प्राविशद्वनं। कालेन महता चापि चचार विपुलं तपः।
भृगुतुङ्गे तपस्तीर्त्त्वा तपसोऽन्ते महायशाः। अनश्नन् देहमुत्सृज्य सदारः स्वर्गमाप्तवान्।
तस्य वंशे महाराज पञ्च राजर्षिसत्तमाः। यैर्व्याप्ता पृथिवी सर्व्वा सूर्य्यस्येव गभस्तिभिः।
यदोस्तु शृणु राजर्षेर्वंशं राजर्षिसत्कृतं। यत्र नारायणो जज्ञे हरिर्वृष्णिकुलोद्वहः।
स्वस्थः प्रजावानायुष्मान् कीर्त्तिमांश्च भवेन्नरः। ययातेश्चरितं पुण्यं पठन् शृण्वन् नराधिप। १६४०
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि ययातिचरिते त्रिंशत्तमोऽध्यायः ॥ ३० ॥
॥ जनमेजय उवाच ॥ पूरोर्वंशमहं ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः। द्रुह्योश्चानोर्यदोश्चैव तुर्व्वसोश्च पृथक् पृथक्।
वृष्णिवंशप्रसङ्गेन स्वं वंशं पूर्व्वमेव हि। विस्तरेणानुपूर्व्व्या च तद्भवान् वक्तुमर्हति।
॥ वैशम्पायन उवाच ॥ शृणु पूरोर्म्महाराज वंशमुत्तमपौरुषं। विस्तरेणानुपूर्व्व्या च यत्र जातोऽसि पार्थिव।
हन्त ते कीर्त्तयिष्यामि पूरोर्वंशमनुत्तमं। द्रुह्योश्चानोर्यदोश्चैव तुर्व्वसोश्च नराधिप।
पूरोः पुत्रो महावीर्य्यो राजासीज्जनमेजयः। प्राचिन्वांस्तु सुतस्तस्य यः प्राचीमजयद्दिशं। १६४५
प्राचिन्वतः प्रवीरोऽभून्मनस्युस्तस्य चात्मजः। राजा चाभयदो नाम मनस्योरभवत् सुतः।
तथैवाभयदस्यासीत् सुधन्वा नाम पार्थिवः। सुधन्वनो बहुगवः शम्यातिस्तस्य चात्मजः।
शम्यातेस्तु रहस्यातो रौद्राश्वस्तस्य वै सुतः। रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः।
ऋचेयुः प्रथमस्तेषां कक्षेयुस्तथैव च। कृकणेयुः स्थण्डिलेयुश्च सन्नतेयुस्तथैव च।
दशार्णेयुर्जलेयुश्च स्थलेयुश्च महाबलः। वननित्यो वनेयुश्च पुत्रिकाश्च दश स्त्रियः। १६५०
रुद्रा शूद्रा च भद्रा च मलदा मलहा तथा। खलदा चैव राजेन्द्र नलदा सुरसाऽपि च।
तथा गोचपला च स्त्रीरत्नकूटा च ता दश। ऋषिर्जातोऽत्रिवंशे तु तासां भर्त्ता प्रभाकरः।
रुद्रायां जनयामास सुतं सोमं यशस्विनं। स्वर्भानुना हते सूर्य्ये पतमाने दिवो महीं।
तमोऽभिभूते लोके च प्रभा येन प्रवर्त्तिता। स्वस्ति तेऽस्त्विति चोक्तो वै पतमानो दिवाकरः।
वचनात्तस्य विप्रर्षेर्न पपात दिवो महीं। अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः। १६५५
यज्ञेष्वत्रेर्बलञ्चैव देवैर्यस्य प्रवर्त्तितं। स तासु जनयामास पुत्रिकासु सनामकान्।

दश पुत्रान्महावीर्य्यांस्तपस्युग्रे रतान् सदा । ते तु भोजकरा राजन्सर्व्वे वेदपारगाः ।
[illegible]वेया इतिख्याताः किन्नविधर्मदर्शिनः । कक्षेयोस्तनयास्त्वासंस्त्रय एव महारथाः ।
सभानरश्चाक्षुषश्च परमन्युस्तथैव च । सभानरस्य पुत्रस्तु विद्वान् कालानलो नृपः ।
कालानलस्य धर्म्मज्ञः सृञ्जयो नाम वै सुतः । सृञ्जयस्याभवत् पुत्रो वीरो राजा पुरञ्जयः । ११७०
जनमेजयो महाराज पुरञ्जयसुतोऽभवत् । जनमेजयस्य राजर्षेर्महाशालोऽभवत् सुतः ।
देवेषु स परिज्ञातः प्रतिष्ठितयशा भुवि । महामना नाम सुतो महाशालस्य धार्म्मिकः ।
जज्ञे वीरः सुरगणैः पूजितः सुमहामनाः । महामनास्तु पुत्रौ द्वौ जनयामास भारत ।
उशीनरञ्च धर्म्मज्ञं तितिक्षुञ्च महाबलं । उशीनरस्य पत्न्यस्तु पञ्च राजर्षिवंशजाः ।
नृगा कृमिर्नवा दर्व्वा पञ्चमी च दृषद्वती । उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः । ११७५
तपसा चैव महता जाता वृद्धस्य चात्मजाः । नृगायास्तु नृगः पुत्रः कृम्या कृमिरजायत ।
नवायास्तु नवः पुत्रो दर्व्वायाः सुव्रतोऽभवत् । दृषद्वत्यास्तु संजज्ञे शिबिरौशीनरो नृपः ।
शिबेस्तु शिबयस्तात यौधेयास्तु नृगस्य च । नवस्य नवराष्ट्रन्तु कृमेस्तु कृमिला पुरी ।
सुव्रतस्य तथाऽम्बष्ठाः शिबिपुत्रान् निबोध मे । शिबेस्तु शिबयः पुत्राश्चत्वारो लोकविश्रुताः ।
वृषदर्भः सुवीरश्च कैकेयो मद्रकस्तथा । तेषां जनपदाः स्फीताः कैकेया मद्रकास्तथा । ११८०
वृषदर्भाः सुवीराश्च तितिक्षोस्तु प्रजाः शृणु । तितिक्षुरभवद्राजा पूर्व्वस्यां दिशि भारत ।
उषद्रथो महाराज फेनस्तस्य सुतोऽभवत् । फेनात्तु सुतपा जज्ञे सुतः सुतपसो बलिः ।
जातो मानुषयोनौ तु स राजा काञ्चनेषुधिः । महायोगी स तु बलिर्ब्बभूव नृपतिः पुरा ।
पुत्रानुत्पादयामास पञ्च वंशकरान् भुवि । अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च ।
पुण्ड्रः कलिङ्गश्च तथा बालेयं क्षत्रमुच्यते । बालेया ब्राह्मणाश्चैव तस्य वंशकरा भुवि । ११८५
बलेस्तु ब्रह्मणा दत्तो वरः प्रीतेन भारत । महायोगित्वमायुश्च कल्पस्य परिमाणतः ।
संग्रामे चाप्यजेयत्वं धर्म्मे चैव प्रधानता । त्रैलोक्यदर्शनञ्चापि प्राधान्यं प्रसवे तथा ।
बले चाप्रतिमत्वं वै धर्म्मतत्त्वार्थदर्शनं । चतुरो नियतान् वर्णांस्त्वञ्च स्थापयितेति च ।
इत्युक्तो विभुना राजा बलिः शान्तिं परां ययौ । तस्यैते तनयाः सर्व्वे क्षेत्रजा मुनिपुङ्गवात् ।
सम्भूता दीर्घतमसः सुदेष्णायां महौजसः । बलिस्तानभिषिच्येह पञ्च पुत्रानकल्मषान् । ११९०
कृतार्थः सोऽपि योगात्मा योगमाश्रित्य च प्रभुः । अधृष्यः सर्व्वभूतानां कालापेक्षी चरन्नृपः ।
कालेन महता राजन्स्वञ्च स्थानमुपागमत् । तेषां जनपदाः पञ्च अङ्गा वङ्गाः ससुह्मकाः ।
कलिङ्गाः पुण्ड्रकाश्चैव प्रजास्त्वङ्गस्य मे शृणु । अङ्गपुत्रो महानासीद्राजेन्द्रो दधिवाहनः ।
दधिवाहनपुत्रस्तु राजा दिविरथोऽभवत् । पुत्रो दिविरथस्यासीच्छक्रतुल्यपराक्रमः ।
विद्वान्धर्म्मरथो नाम तस्य चित्ररथः सुतः । तेन धर्म्मरथेनाथ तदा विष्णुपदे गिरौ । ११९५
यजता सह शक्रेण सोमः पीतो महात्मना । अथ चित्ररथस्यापि पुत्रो दशरथोऽभवत् ।

लोमपाद इति ख्यातो यस्य शान्ता सुताऽभवत् । तस्य दाशरथिर्वीरश्चतुरङ्गो महायशाः ।
ऋष्यशृङ्गप्रसादेन जज्ञे कुलविवर्द्धनः । चतुरङ्गस्य पुत्रस्तु पृथुलाक्ष इति स्मृतः ।
पृथुलाक्षसुतो राजा चम्पो नाम महायशाः । चम्पस्य तु पुरी चम्पा या मालिन्यभवत् पुरा ।
पूर्णभद्रप्रसादेन हर्य्यङ्गोऽस्य सुतोऽभवत् । ततो वैभाण्डकिस्तस्य वारणं शक्रवारणं ।   १७००
अवतारयामास महीं मन्त्रैर्वाहनमुत्तमं । हर्य्यङ्गस्य तु दायादो राजा भद्ररथः स्मृतः ।
पुत्रो भद्ररथस्यासीद्बृहत्कर्म्मा प्रजेश्वरः । बृहद्दर्भः सुतस्तस्य यस्माज्जज्ञे बृहन्मनाः ।
बृहन्मनास्तु राजेन्द्र जनयामास वै सुतं । नाम्ना जयद्रथं वीरं यस्माद्दृढरथो नृपः ।
आसीद्दृढरथस्यापि विश्वजिज्जनमेजय । दायादस्तस्य कर्णस्तु विकर्णस्तस्य चात्मजः ।
तस्य पुत्रशतन्त्वासीदङ्गानां कुलवर्द्धनं । बृहद्दर्भसुतो यस्तु राजा नाम्ना बृहन्मनाः ।   १७०५
तस्य पत्नीद्वयञ्चासीच्चैद्यस्यैते सुते शुभे । यशोदेवी च सत्या च ताभ्यां वंशस्तु भिद्यते ।
जयद्रथस्तु राजेन्द्र यशोदेव्यां व्यजायत । ब्रह्मक्षत्रोत्तरः सत्यां विजयो नाम विश्रुतः ।
विजयस्य धृतिः पुत्रस्तस्य पुत्रो धृतव्रतः । धृतव्रतस्य पुत्रस्तु सत्यकर्म्मा महायशाः ।
सत्यकर्म्मसुतश्चापि सूतस्त्वधिरथस्तु वै । यः कर्णं प्रतिजग्राह तेन कर्णस्तु सूतजः ।
एतद्वः कथितं सर्व्वं कर्णं प्रति महाबलं । कर्णस्य वृषसेनस्तु वृषस्तस्यात्मजः स्मृतः ।   १७१०
एतेषां वंशजाः सर्व्वे राजानः कीर्त्तिता मया । सत्यव्रता महात्मानः प्रजावन्तो महारथाः ।
ऋचेयोस्तु महाराज रौद्राश्वतनयस्य वै । शृणु वंशमनुप्रोक्तं यत्र जातोऽसि पार्थिव ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि कक्षेयुवंशानुकीर्त्तने एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ वैशम्पायन उवाच ॥ रौद्राश्वस्य तु राजर्षिर्ऋचेयुरेकराट् सुतः । ऋचेयोर्ज्वलना नाम भार्य्या वै तक्षकात्मजा ।
तस्यां देव्यां स राजर्षिर्मतिनारो महीपतिः । मतिनारसुतास्त्वासंस्त्रयः परमधार्म्मिकाः ।   १७१५
तंसुरोधः प्रतिरथः सुबाहुश्चैव धार्म्मिकः । गौरी कन्या च विख्याता मान्धातृजननी तथा ।
सर्व्वे वेदविदश्चैव ब्रह्मण्याः सत्यवादिनः । सर्व्वे कृतास्त्रा बलिनः सर्व्वे युद्धविशारदाः ।
पुत्रः प्रतिरथस्यासीत् कण्वः समभवन्नृपः । मेधातिथिः सुतस्तस्य यस्मात् काण्वोऽभवद्द्विजः ।
इलिनी नाम यस्यासीत् कन्या वै जनमेजय । ब्रह्मवादिन्यधिस्त्री च तंसुस्तामभ्यगच्छत ।
तंसोः सुरोधो राजर्षिर्धर्म्मनेत्रः प्रतापवान् । ब्रह्मवादी पराक्रान्तस्तस्य भार्य्योपदानवी ।   १७२०
उपदानवी सुतान् लेभे चतुरस्त्वैलिकात्मजान् । दुष्मन्तमथ सुष्मन्तं प्रवीरमनघन्तथा ।
दुष्मन्तस्य तु दायादो भरतो नाम वीर्य्यवान् । स सर्व्वदमनो नाम नागायुतबलो महान् ।
चक्रवर्त्ती सुतो जज्ञे दुष्मन्तस्य महात्मनः । शकुन्तलायां भरतो यस्य नाम्ना तु भारताः ।
दुष्मन्तं प्रति राजानं वागुवाचाशरीरिणी । माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुष्मन्त मावमंस्थाः शकुन्तलां । रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।   १७२५
त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला । भरतस्य विनष्टेषु तनयेषु महीपतेः ।

मातृकाम्नात् कोपेन मया ते कथितं यथा । बृहस्पतेराङ्गिरसः पुत्रो राजन्महामुनिः ।
संक्रामितो भरद्वाजो मरुद्भिः क्रतुभिर्विभुः । अत्रैवोदाहरन्तीमं भरद्वाजस्य धीमतः ।
धर्मसंक्रमणं चापि मरुद्भिर्भरताय वै । अयाजयद्भरद्वाजो मरुद्भिः क्रतुभिर्हि वै ।
पूर्वं तु वितथे तस्य कृते वै पुत्रजन्मनि । ततोऽथ वितथो नाम भरद्वाजात् सुतोऽभवत् । १७१०
ततोऽथ वितथे जाते भरतस्तु दिवं ययौ । वितथं चाभिषिच्याथ भरद्वाजो वनं ययौ ।
स चापि वितथः पुत्रान् जनयामास पञ्च वै । सुहोत्रञ्च सुहोतारं गयं गर्गं तथैव च ।
कपिलञ्च महात्मानं सुहोत्रस्य सुतद्वयं । काशकञ्च महासत्त्वस्तथा गृत्समतिर्नृपः ।
तथा गृत्समतेः पुत्रा ब्राह्मणाः क्षत्रिया विशः । काशेयस्तु काशेयाराजन् पुत्रो दीर्घतपास्तथा ।
बभूव दीर्घतपसो विद्वान् धन्वन्तरिः सुतः । धन्वन्तरेस्तु तनयः केतुमानिति विश्रुतः । १७१५
अथ केतुमतः पुत्रो विद्वान् भीमरथः स्मृतः । दिवोदास इति ख्यातः सर्वरक्षःप्रणाशनः ।
एतस्मिन्नेव काले तु पुरीं वाराणसीं नृप । शून्यां निवेशयामास क्षेमको नाम राक्षसः ।
शप्ता हि सा मतिमता निकुम्भेन महात्मना । शून्या वर्षसहस्रं वै भवित्रीति नराधिप ।
तस्यां तु शप्तमात्रायां दिवोदासः प्रजेश्वरः । विषयान्ते पुरीं रम्यां गोमत्यां संन्यवेशयत् ।
भद्रश्रेण्यस्य पुत्राणां शतमुत्तमधन्विनां । हत्वा निवेशयामास दिवोदासः प्रजेश्वरः । १७२०
दिवोदासस्य पुत्रस्तु वीरो राजा प्रतर्दनः । प्रतर्दनस्य पुत्रौ द्वौ वत्सो भार्गव एव च ।
अलर्को राजपुत्रस्तु राजा सन्नतिमान् भुवि । हैहयस्य तु दायाद्यं हृतवान् वै महीपतिः ।
आजह्रे पितृदायाद्यं दिवोदासहृतं बलात् । भद्रश्रेण्यस्य पुत्रेण दुर्दमेन महात्मना ।
दिवोदासेन बालेति घृणया स विसर्जितः । अष्टारथो नाम नृपः सुतो भीमरथस्य वै ।
तेन पुत्रेषु बालेषु प्रहृतं तस्य भारत । वैरस्यान्तं महाराज क्षत्रियेण विधित्सता । १७२५
अलर्कः काशिराजस्तु ब्रह्मण्यः सत्यसङ्गरः । षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
तस्यासीत् सुमहद्राज्यं रूपयौवनशालिनः । युवा रूपेण सम्पन्न आसीत् काशिकुलोद्वहः ।
लोपामुद्राप्रसादेन परमायुरवाप सः । वयसोऽन्ते महाबाहुर्हत्वा क्षेमकराक्षसं ।
रम्यां निवेशयामास पुरीं वाराणसीं नृपः । अलर्कस्य तु दायादः क्षेमको नाम पार्थिवः ।
सुनीथस्य तु दायादः क्षेम्यो नाम महायशाः । क्षेम्यस्य केतुमान् पुत्रो वर्षकेतुस्ततोऽभवत् । १७३०
वर्षकेतोस्तु दायादो विभुर्नाम प्रजेश्वरः । आनर्तस्तु विभोः पुत्रः सुकुमारस्ततोऽभवत् ।
सुकुमारस्य पुत्रस्तु सत्यकेतुर्महारथः । सुतोऽभवन्महातेजा राजा परमधार्मिकः ।
वत्सस्य वत्सभूमिस्तु भार्गभूमिस्तु भार्गवात् । एते त्वाङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च भरतर्षभ । सुहोत्रस्य बृहत् पुत्रो बृहतस्तनयास्त्रयः ।
अजमीढो द्विमीढश्च पुरुमीढश्च वीर्यवान् । अजमीढस्य पत्न्यस्तु तिस्रो वै यशसाऽन्विताः । १७३५
नीली च केशिनी चैव धूमिनी च वराङ्गना । अजमीढस्य केशिन्यां जज्ञे जह्नुः प्रतापवान् ।

आजह्रे यो महासत्रं सर्व्वमेधं महामखं । पतिलोभेन यं गङ्गा पतिं त्वभिससार ह ।
नेच्छतः प्लावयामास तस्य गङ्गाऽथ तत्सदः । ततस्तां प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः ।
जह्नुरप्यब्रवीद्गङ्गां क्रुद्धो भरतसत्तम । एष ते त्रिषु लोकेषु संक्षिप्यापः पिबाम्यहं ।
अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि । ततः पीतां महात्मानो दृष्ट्वा गङ्गां महर्षयः । १७८०
उपनिन्युर्महाभागां दुहितृत्वेन जाह्नवीं । युवनाश्वस्य पुत्रीं तु कावेरीं जह्नुरावहत् ।
गङ्गाशापेन देहार्द्धं यस्याः पश्चान्नदीकृतं । जह्नोस्तु दयितः पुत्रो ह्यजको नाम वीर्य्यवान् ।
अजकस्य तु दायादो बलाकाश्वो महीपतिः । बभूव मृगयाशीलः कुशिकस्तस्य चात्मजः ।
पह्लवैः सह संवृद्धो राजा वनचरैस्तदा । कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमप्रभं ।
लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान् । स गाधिरभवद्राजा मघवान् कौशिकः स्वयं । १७८५
विश्वामित्रस्तु गाधेयो राजा विश्वरथस्तदा । विश्वकृद्विश्वजिच्चैव तथा सत्यवती नृप ।
ऋचीकाज्जमदग्निस्तु सत्यवत्यामजायत । विश्वामित्रस्य तु सुता देवरातादयः स्मृताः ।
प्रख्यातास्त्रिषु लोकेषु तेषां नामानि मे शृणु । देवश्रवाः कतिश्चैव यस्मात् कात्यायनाः स्मृताः ।
शालावत्या हिरण्याक्षो रेणोर्ज्जज्ञेऽथ रेणुमान् । सांकृत्यो गालवो राजन् मौद्गल्यश्चेति विश्रुताः ।
तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनां । पाणिनो बभ्रवश्चैव ध्यानजप्यास्तथैव च । १७९०
पार्थिवा देवराताश्च शालङ्कायनसौश्रुताः । लोहित्या यामदूताश्च तथा कारीषयः स्मृताः ।
विश्रुताः कौशिका राजंस्तथाऽन्ये सैन्धवायनाः । ऋष्यन्तरविवाह्याश्च कौशिका बहवः स्मृताः ।
पौरवस्य महाराज ब्रह्मर्षेः कौशिकस्य च । सम्बन्धोऽप्यस्य वंशेऽस्मिन् ब्रह्मक्षत्रस्य विश्रुतः ।
विश्वामित्रात्मजानान्तु शुनःशेफोऽग्रजः स्मृतः । भार्गवः कौशिकत्वं हि प्राप्तः स मुनिपुङ्गवः ।
देवरातादयश्चान्ये विश्वामित्रस्य वै सुताः । दृषद्वतीसुतश्चापि विश्वामित्रात्तथाष्टकः । १७९५
अष्टकस्य सुतो लौहिः प्रोक्तो जह्नुगणो मया । आजमीढोऽपरो वंशः श्रूयतां भरतर्षभ ।
अजमीढात्तु नीलिन्यां सुशान्तिरुदपद्यत । पुरुजातिः सुशान्तेस्तु वाह्याश्वः पुरुजातितः ।
वाह्याश्वतनयाः पञ्च बभूवुरमरोपमाः । मुद्गलः सृञ्जयश्चैव राजा बृहदिषुस्तथा ।
यवीनरश्च विक्रान्तः कपिलाश्वश्च पञ्चमः । पञ्चैते रक्षणायालं देशानामिति नः श्रुतं ।
पञ्चानां विद्धि पाञ्चालान् स्फीतान् जनपदैर्वृतान् । अलं संरक्षणे तेषां पाञ्चाला इति विश्रुताः । १८००
मुद्गलस्य तु दायादो मौद्गल्यः सुमहायशाः । सर्व्व एते महात्मानः क्षत्रोपेता द्विजातयः ।
एते ह्यङ्गिरसः पक्षं संश्रिताः काण्वमुद्गलाः । मौद्गल्यस्य सुतो ज्येष्ठो ब्रह्मर्षिः सुमहायशाः ।
इन्द्रसेना यतो गर्भं वध्र्यश्वं प्रत्यपद्यत । वध्र्यश्वान्मिथुनं जज्ञे मेनकायामिति श्रुतिः ।
दिवोदासश्च राजर्षिरहल्या च यशस्विनी । शरद्वतश्च दायादमहल्या समसूयत ।
शतानन्दमृषिश्रेष्ठं तस्यापि सुमहायशाः । पुत्रः सत्यधृतिर्नाम धनुर्वेदस्य पारगः । १८०५
तस्य सत्यधृतेरेतो दृष्ट्वाऽप्सरसमग्रतः । अवस्कन्नं शरस्तम्बे मिथुनं समपद्यत ।

अपत्या तव अपात्र ब्राह्मणुर्भूमयां गत: । कृप: स्मृत: स वै तस्माद्गौतमी च कृपी तथा ।
एते शारद्वता: प्रोक्ता एते ते गौतमा: स्मृता: । अत ऊर्द्ध्वं प्रवक्ष्यामि दिवोदासस्य वर्णानि ।
दिवोदासस्य दायादो ब्रह्मर्षिर्मित्रयुर्नृप: । मैत्रायणो तत: सोमो मैत्रेयास्तु तत: स्मृता: ।
एते वै संश्रिता: पक्षं क्षत्रोपेतास्तु भार्गवा: । आसीत् पञ्चजन: पुत्र: सृञ्जयस्य महात्मन: । १७९०
सुत: पञ्चजनस्यापि सोमदत्तो महीपति: । सोमदत्तस्य दायाद: सहदेवो महायशा: ।
सहदेवसुतस्यापि सोमको नाम पार्थिव: । अजमीढात् पुनर्जात: क्षीणे वंशे तु सोमक: ।
सोमकस्य सुतो जन्तुर्यस्य पुत्रशतं बभौ । तेषां यवीयान् पृषतो द्रुपदस्य पिता प्रभु: ।
धृष्टद्युम्न: सुतस्तस्य धृष्टकेतुश्च तत्सुत: । आजमीढा: स्मृता ह्येते महात्मानस्तु सोमका: ।
पुत्राणामजमीढस्य सोमकत्वं महात्मन: । महिषी त्वजमीढस्य धूमिनी पुत्रवर्द्धिनी । १७९५
तृतीया तव पूर्वेषां जननी पृथिवीपते । सा तु पुत्रार्थिनी देवी व्रतचर्यासमन्विता ।
तेपे वर्षायुतं तप्ता तप: परमदुश्चरं । हुत्वाऽग्निं विधिवत् सा तु पवित्रमितभोजना ।
अग्निहोत्रकुशेष्वेव सुष्वाप जनमेजय । धूमिन्या स तया देव्या त्वजमीढ: समीयिवान् ।
ऋक्षं सञ्जनयामास धूम्रवर्णं सुदर्शनं । ऋक्षात् संवरणो जज्ञे कुरु: संवरणात्तथा ।
य: प्रयागादतिक्रम्य कुरुक्षेत्रं चकार ह । पुण्यञ्च रमणीयञ्च पुण्यकृद्भिर्निषेवितं । १८००
तस्यान्ववाय: सुमहान् यस्य नाम्ना स्म कौरवा: । कुरोस्तु पुत्राश्चत्वार: सुधन्वा सुधनुस्तथा ।
परिक्षिच्च महाबाहु: प्रवरश्चारिमेजय: । सुधन्वनस्तु दायाद: सुहोत्रो मतिमान् स्मृत: ।
च्यवनस्तस्य पुत्रस्तु राजन् धर्मार्थकोविद: । च्यवनात् कृतयज्ञस्तु इष्ट्वा यज्ञै: स धर्मवित् ।
विश्रुतं जनयामास पुत्रमिन्द्रसमं नृप: । चैद्योपरिचरं वीरं वसुं नामान्तरिक्षगं ।
चैद्योपरिचराज्जज्ञे गिरिका सप्त मानवान् । महारथो मगधराट् विश्रुतो यो बृहद्रथ: । १८०५
प्रत्यग्रह: कुशश्चैव यमाहुर्मणिवाहनं । मारुतश्च यदुश्चैव मत्स्यकालो च सप्तम: ।
बृहद्रथस्य दायाद: कुशाग्रो नाम विश्रुत: । कुशाग्रस्यात्मजो विद्वान् वृषभो नाम वीर्यवान् ।
वृषभस्यापि दायाद: पुष्पवान्नाम धार्मिक: । दायादस्तस्य विक्रान्तो राजा सत्यहित: स्मृत: ।
तस्य पुत्र: स धर्मात्मा नाम्ना ऊर्ज्जस्तु जज्ञिवान् । ऊर्ज्जस्य सम्भव: पुत्रो यस्य यज्ञे स वीर्यवान् ।
शकले द्वे स वै जातो जरया सन्धित: स तु । जरया सन्धितो यस्माज्जरासन्धस्तत: स्मृत: । १८१०
सर्वक्षत्रस्य जेताऽसौ जरासन्धो महाबल: । जरासन्धस्य पुत्रो वै सहदेव: प्रतापवान् ।
सहदेवात्मज: श्रीमानुदायु: स महायशा: । उदायुर्जनयामास पुत्रं परमधार्मिकं ।
श्रुतधर्मेति नामानं मगधान् योऽवसत् प्रभु: । परिक्षितस्तु दायादो धार्मिको जनमेजय: ।
जनमेजयस्य दायादास्त्रय एव महारथा: । श्रुतसेनोग्रसेनौ च भीमसेनश्च नामत: ।
एते सर्वे महाभागा विक्रान्ता बलशालिन: । जनमेजयस्य पुत्रो तु सुरथो मतिमांस्तथा । १८१५
सुरथस्य तु विक्रान्त: पुत्रो जज्ञे विदूरथ: । विदूरथस्य दायाद ऋक्ष एव महारथ: ।

द्वितीयः स जनो राजा नाम्ना तेनैव विश्रुतः । द्वाविमौ तव वंशेऽस्मिन् द्वावेव च परिक्षितौ ।
भीमसेनास्त्रयो राजन् द्वौ चापि जनमेजयौ । ज्येष्ठस्य च द्वितीयस्य भीमसेनोऽभवत् सुतः ।
प्रतीपो भीमसेनात्तु प्रतीपस्य तु शान्तनुः । देवापिर्बाह्लिकश्चैव त्रय एव महारथाः ।
शान्तनोः प्रसवस्त्वेष यत्र जातोऽसि पार्थिव । बाह्लिकस्य तु राज्यं वै सप्तबाह्यं नरेश्वर । १८२०
बाह्लिकस्य सुतश्चैव सोमदत्तो महायशाः । जज्ञिरे सोमदत्तात्तु भूरिर्भूरिश्रवाः शलः ।
उपाध्यायस्तु देवानां देवापिरभवन्मुनिः । च्यवनस्य कृतः पुत्र इष्टश्चासीन्महात्मनः ।
शान्तनुस्त्वभवद्राजा कौरवाणां धुरन्धरः । शान्तनोः संप्रवक्ष्यामि यत्र जातोऽसि पार्थिव ।
गाङ्गं देवव्रतं नाम पुत्रं सोऽजनयत् प्रभुः । स तु भीष्म इति ख्यातः कौरवाणां पितामहः ।
काली विचित्रवीर्य्यन्तु जनयामास भारत । शान्तनोर्दयितं पुत्रं धर्म्मात्मानमकल्मषं । १८२५
कृष्णद्वैपायनश्चैव क्षेत्रे वैचित्रवीर्य्यके । धृतराष्ट्रञ्च पाण्डुञ्च विदुरञ्चाप्यजीजनत् ।
धृतराष्ट्रस्तु गान्धार्य्यां पुत्रानजनयच्छतं । तेषां दुर्य्योधनः श्रेष्ठः सर्व्वेषामेव स प्रभुः ।
पाण्डोर्द्धनञ्जयः पुत्रः सौभद्रस्तस्य चात्मजः । अभिमन्योः परिक्षित्तु पिता तव जनेश्वर ।
एष ते पौरवो वंशो यत्र जातोऽसि पार्थिव । तुर्व्वसोश्च प्रवक्ष्यामि द्रुह्योश्चानोर्यदोस्तथा ।
तुर्व्वसोश्च सुतो वह्निर्गोभानुस्तस्य चात्मजः । गोभानोस्तु सुतो राजा त्रैसानुरपराजितः । १८३०
करन्धमस्तु त्रैसानोर्म्मरुत्तस्तस्य चात्मजः । अन्यस्त्वाविक्षितो राजा मरुत्तः कथितस्तव ।
अनपत्योऽभवद्राजा यज्वा विपुलदक्षिणः । दुहिता संमता नाम तस्यासीत् पृथिवीपतेः ।
दक्षिणार्थं तु सा दत्ता संवर्त्ताय महात्मने । दुष्मन्तं पौरवञ्चापि लेभे पुत्रमकल्मषं ।
एवं ययातेः शापेन जरासंक्रमणे तदा । पौरवं तुर्व्वसोर्वंशः प्रविवेश नृपोत्तम ।
दुष्मन्तस्य तु दायादः करूत्थामः प्रजेश्वरः । करूत्थामादथाक्रीडश्चत्वारस्तस्य चात्मजाः । १८३५
पाण्ड्यश्च केरलश्चैव कोलश्चोलश्च पार्थिवः । तेषां जनपदाः स्फीताः पाण्ड्याश्चोलाः सकेरलाः ।
द्रुह्योश्च तनयौ राजन् बभ्रुः सेतुश्च पार्थिवः । अङ्गारः सेतुपुत्रश्च मरुतां पतिरुच्यते ।
यौवनाश्वेन समरे कृच्छ्रेण निहतो बली । युद्धं सुमहदासीच्च मासान् परिचतुर्दश ।
अङ्गारस्य तु दायादो गान्धारो नाम पार्थिवः । ख्यायते यस्य नाम्ना वै गान्धारविषयो महान् ।
गान्धारदेशजाश्चैव तुरगा वाजिनाम्वराः । अनोस्तु पुत्रो धर्म्मोऽभूद् घृतस्तस्यात्मजोऽभवत् । १८४०
घृतात्तु दुदुहो जज्ञे प्रचेतास्तस्य चात्मजः । प्रचेतसः सुचेतास्तु कीर्त्तिता ह्यनवो मया ।
यदोर्वंशं प्रवक्ष्यामि ज्येष्ठस्योत्तमतेजसः । विस्तरेणानुपूर्व्व्या च गदतो मे निबोध तं ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पूरुवंशानुकीर्त्तने द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ वैशम्पायन उवाच ॥ बभूवुस्तु यदोः पुत्राः पञ्च देवसुतोपमाः । सहस्रदः पयोदश्च क्रोष्टा नीलोऽञ्जिकस्तथा ।
सहस्रदस्य दायादास्त्रयः परमधार्म्मिकाः । हैहयश्च हयश्चैव राजा वेणुहयस्तथा ।
हैहयस्याभवत् पुत्रो धर्म्मनेत्र इति श्रुतः । धर्म्मनेत्रस्य कार्त्तस्तु साहञ्जस्तस्य चात्मजः । १८४५

साहञ्जनी नाम पुरी तेन राज्ञा निवेशिता । साहञ्जस्य तु दायादो महिष्मान्नाम पार्थिवः ।
माहिष्मती नाम पुरी येन राज्ञा निवेशिता । आसीन्महिष्मतः पुत्रो भद्रश्रेण्यः प्रतापवान् ।
वाराणस्यधिपो राजा कथितः पूर्व्वमेव तु । भद्रश्रेण्यस्य दायादो दुर्द्दमो नाम विश्रुतः ।
दुर्द्दमस्य सुतो राजा कनको नाम नामतः । कनकस्य तु दायादाश्चत्वारो लोकविश्रुताः ।
कृतवीर्य्यः कृतौजाश्च कृतवर्म्मा तथैव च । कृताग्निस्तु चतुर्थोऽभूत् कृतवीर्य्यात्तथार्जुनः । १८१०
यः स बाहुसहस्रेण सप्तद्वीपेश्वरोऽभवत् । जिगाय पृथिवीमेको रथेनादित्यवर्च्चसा ।
स हि वर्षायुतं तप्त्वा तपः परमदुश्चरं । दत्तमाराधयामास कार्त्तवीर्य्योऽत्रिसम्भवं ।
तस्मै दत्तो वरान् प्रादाच्चतुरो भूरितेजसः । पूर्व्वं बाहुसहस्रन्तु प्रार्थितं सुमहद्वरं ।
अधर्म्मे धीयमानस्य सद्भिस्तत्र निवारणं । उग्रेण पृथिवीं जित्वा धर्म्मेणैवानुरञ्जनं ।
संग्रामान् सुबहून् जित्वा हत्वा चारीन् सहस्रशः । संग्रामे वर्त्तमानस्य वधञ्चाभ्यधिकाद्रणे । १८१५
तस्य बाहुसहस्रन्तु युध्यतः किल भारत । योगाद्योगेश्वरस्येव प्रादुर्भवति मायया ।
तेनेयं पृथिवी सर्व्वा सप्तद्वीपा सपत्तना । ससमुद्रा सनगरा उग्रेण विधिना जिता ।
तेन सप्तसु द्वीपेषु सप्त यज्ञशतानि वै । प्राप्तानि विधिना राज्ञा श्रूयन्ते जनमेजय ।
सर्व्वे यज्ञा महाबाहो सहस्रशतदक्षिणाः । सर्व्वे काञ्चनयूपाश्च सर्व्वे काञ्चनवेदयः ।
सर्व्वे देवैर्महाराज विमानस्थैरलङ्कृताः । गन्धर्व्वैरप्सरोभिश्च नित्यमेवोपशोभिताः । १८२०
यस्य यज्ञे जगौ गाथा गन्धर्व्वो नारदस्तथा । वरी दासात्मजो विद्वान्महिम्ना तस्य विस्मितः ।
॥ नारद उवाच ॥ न नूनं कार्त्तवीर्य्यस्य गतिं यास्यन्ति पार्थिवाः । यज्ञैर्दानैस्तपोभिर्व्वा विक्रमेण श्रुतेन वा ।
स हि सप्तसु द्वीपेषु चर्म्मी खड्गी शरासनी । रथी द्वीपाननुचरन् योगी संदृश्यते नृभिः ।
अनष्टद्रव्यता चैव न शोको न च विभ्रमः । प्रभावेण महाराज्ञः प्रजा धर्म्मेण रक्षतः ।
पञ्चाशीतिसहस्राणि वर्षाणां वै नराधिप । स सर्व्वरत्नभाक् सम्राट् चक्रवर्त्ती बभूव ह । १८२५
स एव पशुपालोऽभूत् क्षेत्रपालः स एव च । स एव वृष्ट्या पर्ज्जन्यो योगित्वादर्ज्जुनोऽभवत् ।
स वै बाहुसहस्रेण ज्याघातकठिनत्वचा । भाति रश्मिसहस्रेण शरदीव च भास्करः ।
स हि नागान् मनुष्येषु माहिष्मत्यां महाद्युतिः । कर्क्कोटकसुतान् जित्वा पुर्य्यां तस्यां न्यवेशयत् ।
स वै वेगं समुद्रस्य प्रावृट्कालेऽम्बुजेक्षणः । क्रीडन्नेव भुजोद्भिन्नं प्रतिस्रोतश्चकार ह ।
लुण्ठिता क्रीडता तेन फेनस्रग्दाममालिनी । चलदूर्म्मिसहस्रेण शङ्किताभ्येति नर्म्मदा । १८३०
तस्य बाहुसहस्रेण क्षुभ्यमाणे महोदधौ । भयान्निलीना निश्चेष्टाः पातालस्था महासुराः ।
चूर्णीकृतमहावीचिं चलन्मीनमहातिमिं । मारुताविद्धफेनौघमावर्त्तक्षोभदुःसहं ।
प्रावर्त्तयत्तदा राजा सहस्रेण च बाहुना । देवासुरसमाक्षिप्तः क्षीरोदमिव मन्दरः ।
मन्दरक्षोभचकिता अमृतोत्पादशङ्किताः । सहसोत्पतिता भीता भीमं दृष्ट्वा नृपोत्तमं ।
नता निश्चलमूर्द्धानो बभूवुस्ते महोरगाः । सायाह्ने कदलीषण्डे कम्पितास्तस्य वायुना । १८३५

स वै बद्धो धनुर्ज्याभिरुत्सिक्तः पञ्चभिः शरैः। लङ्केशं मोहयित्वा तु सबलं रावणं बलात्।
निर्ज्जित्यैव वशमानीय माहिष्मत्यां बबन्ध तं। श्रुत्वा तु बद्धं पौलस्त्यं रावणन्त्वर्ज्जुनेन तु।
ततो गत्वा पुलस्त्यस्तमर्ज्जुनं ददृशे स्वयं। मुमोच रक्षः पौलस्त्यं पुलस्त्येनानुयाचितः।
यस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः। युगान्ते त्वम्बुदस्येव स्फुटतो ह्यशनेरिव।
अहो बत मृधे वीर्य्यं भार्गवस्य यदच्छिनत्। राज्ञो बाहुसहस्रन्तु हैमं तालवनं यथा।  १८८०
तृषितेन कदाचित् स भिक्षितश्चित्रभानुना। स भिक्षामददद्वीरः सप्तद्वीपान् विभावसोः।
पुराणि ग्रामघोषांश्च विषयांश्चैव सर्व्वशः। जज्वाल तस्य सर्व्वाणि चित्रभानुर्दिधक्षया।
स तस्य पुरुषेन्द्रस्य प्रभावेण महात्मनः। ददाह कार्त्तवीर्य्यस्य शैलांश्चैव वनानि च।
स शून्यमाश्रमं रम्यं वरुणस्यात्मजस्य वै। ददाह वनवद्भीतश्चित्रभानुः सहैहयः।
यं लेभे वरुणः पुत्रं पुरा भास्वन्तमुत्तमं। वसिष्ठं नाम स मुनिः ख्यात आपव इत्युत।  १८८५
यत्रापवस्तु तं क्रोधाच्छप्तवानर्ज्जुनं प्रभुः। यस्मान्न वर्ज्जितमिदं वनं ते मम हैहय।
तस्मात्ते दुष्करं कर्म्म कृतमन्यो हनिष्यति। रामो नाम महाबाहुर्जामदग्न्यः प्रतापवान्।
छित्त्वा बाहुसहस्रं ते प्रमथ्य तरसा बली। तपस्वी ब्राह्मणस्त्वां वधिष्यति स भार्गवः।
॥ वैशम्पायन उवाच ॥ अनष्टद्रव्यता यस्य बभूवामित्रकर्षण। प्रभावेण नरेन्द्रस्य प्रजा धर्म्मेण रक्षतः।
रामात्ततोऽस्य मृत्युर्वै तस्य शापान्महीनृप। वरश्चैव तु कौरव्य स्वयमेव वृतः पुरा।  १८९०
तस्य पुत्रशतस्यासन् पञ्च शेषा महात्मनः। कृतास्त्रा बलिनः शूरा धर्म्मात्मानो यशस्विनः।
शूरसेनश्च शूरश्च धृष्टोक्तः कृष्ण एव च। जयध्वजश्च नामासीदावन्त्यो नृपतिर्महान्।
कार्त्तवीर्य्यस्य तनया वीर्य्यवन्तो महाबलाः। जयध्वजस्य पुत्रस्तु तालजङ्घो महाबलः।
तस्य पुत्राः शतं ख्यातास्तालजङ्घा इति श्रुताः। तेषां कुले महाराज हैहयानां महात्मनां।
वीतिहोत्राः सुजाताश्च भोजाश्चावन्तयः स्मृताः। तौण्डिकेराश्च विख्यातास्तालजङ्घास्तथैव च।  १८९५
भरताश्च सुजात्याश्च बहुत्वान्नानुकीर्त्तिताः। वृषप्रभृतयो राजन् यादवाः पुण्यकर्म्मिणः।
वृषो वंशधरस्तत्र तस्य पुत्रोऽभवन्मधुः। मधोः पुत्रशतं त्वासीद्वृषणस्तस्य वंशकृत्।
वृषणाद्वृष्णयः सर्व्वे मधोस्तु माधवाः स्मृताः। यादवा यदुना चाग्रे निरुच्यन्ते च हैहयाः।
न तस्य वित्तनाशोऽस्ति नष्टं प्रतिलभेच्च सः। कार्त्तवीर्य्यस्य यो जन्म कथयेदिह नित्यशः।
एते ययातिपुत्राणां पञ्च वंशा विशाम्पते। कीर्त्तिता लोकवीराणां ये लोकान् धारयन्ति वै।  १९००
भूतानीव महाराज पञ्च स्थावरजङ्गमान्। श्रुत्वा पञ्च विसर्गांश्च राजा धर्म्मार्थकोविदः।
वशी भवति पञ्चानामात्मजानां तथेश्वरः। लभेत पञ्च वरांश्चैव दुर्लभानिह लौकिकान्।
आयुः कीर्त्तिं तथा पुत्रानैश्वर्य्यं भूतिमेव च। धारणाच्छ्रवणाच्चैव पञ्च वर्गस्य भारत।
क्रोष्टोस्तु शृणु राजेन्द्र वंशमुत्तमपौरुषं। यदोर्व्वंशधरस्याथ यज्वनः पुण्यकर्म्मणः।

क्रोष्टुवंशं हि श्रुत्वेमं सर्व्वपापैः प्रमुच्यते। यस्यान्ववायजो विष्णुर्हरिर्वृष्णिकुलोद्वहः। १९८५

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि चतुस्त्रिंशोऽध्यायः॥ ३४ ॥

॥ वैशम्पायन उवाच ॥ गान्धारी चैव माद्री च क्रोष्टोर्भार्य्ये बभूवतुः। गान्धारी जनयामास अनमित्रं महाबलं।
माद्री युधाजितं पुत्रं ततोऽन्यं देवमीढुषं। तेषां वंशस्त्रिधाभूतो वृष्णीनां कुलवर्द्धनः।
माद्र्याः पुत्रौ तु जज्ञाते श्रुतौ वृष्ण्यन्धकावुभौ। जज्ञाते तनयौ वृष्णेः श्वफल्कश्चित्रकस्तथा।
श्वफल्कस्तु महाराज धर्म्मात्मा यत्र वर्त्तते। नास्ति व्याधिभयं तत्र नावर्षभयमप्युत।
कदाचित् काशिराजस्य विभोर्भरतसत्तम। त्रीणि वर्षाणि विषये नावर्षत् पाकशासनः। १९९०
स तत्र वासयामास श्वफल्कं परमार्च्चितं। श्वफल्कपरिवर्त्ते च ववर्ष हरिवाहनः।
श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत। गान्दिनीं नाम सा गाश्च ददौ विप्रेषु नित्यशः।
सामातुरुदरस्था तु बहून् वर्षगणान् किल। निवसन्ती न वै जज्ञे गर्भस्थां तां पिताऽब्रवीत्।
जायस्व शीघ्रं भद्रन्ते किमर्थमिह तिष्ठसि। प्रोवाच चैनं गर्भस्था कन्या गाश्च दिने दिने।
यदि दद्यां ततो जाये पितरं प्रत्युवाच ह। तथेत्युक्त्वा च तां चास्याः पिता काममपूरयत्। १९९५
दाता यज्वा च वीरश्च श्रुतवानतिथिप्रियः। अक्रूरः सुषुवे तस्मात् श्वफल्काद्भूरिदक्षिणः।
उपमद्गुस्तथामद्गुर्मृदरश्चारिमेजय। अविक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्द्दनः।
धर्म्मभृद्यतिधर्म्मा च गृध्रमोजोऽन्धकस्तथा। आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना।
अक्रूरेणोग्रसेनायां सुगात्र्यां कुरुनन्दन। प्रसेनश्चोपदेवश्च जज्ञाते देवनन्दनौ।
चित्रकस्याभवन् पुत्राः पृथुर्विपृथुरेव च। अश्वग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ। २०००
अरिष्टनेमिरश्वश्च सुधर्म्मा धर्म्मभृत्तथा। सुबाहुर्बहुबाहुश्च श्रविष्ठाश्रवणे स्त्रियौ।
अश्मक्यां जनयामास शूरं वै देवमीढुषः। महिष्यां जज्ञिरे शूराद्भोज्यायां पुरुषा दश।
वसुदेवो महाबाहुः पूर्व्वमानकदुन्दुभिः। जज्ञे यस्य प्रसूतस्य दुन्दुभ्यः प्राणदन् दिवि।
आनकानाञ्च संह्रादः सुमहानभवद्दिवि। पपात पुष्पवर्षञ्च शूरस्य भवने महत्।
मनुष्यलोके कृत्स्नेऽपि रूपे नास्ति समो भुवि। यस्यासीत् पुरुषाग्र्यस्य कान्तिश्चन्द्रमसो यथा। २००५
देवभागस्ततो जज्ञे तथा देवश्रवाः पुनः। अनाधृष्टिः कनवको वत्सवानथ गृञ्जिमः।
श्यामः शमीको गण्डूषः पञ्च चास्य वराङ्गनाः। पृथुकीर्त्तिः पृथा चैव श्रुतदेवा श्रुतश्रवा।
राजाधिदेवी च तथा पञ्चैता वीरमातरः। पृथां दुहितरं वव्रे कुन्तिस्तां कुरुनन्दन।
शूरः पूज्याय वृद्धाय कुन्तिभोजाय तां ददौ। तस्मात् कुन्तीति विख्याता कुन्तिभोजात्मजा पृथा।
अन्त्यस्य श्रुतदेवायां जगृहुः सुषुवे सुतः। श्रुतश्रवायां चैद्यस्य शिशुपालो महाबलः। २०१०
हिरण्यकशिपुर्य्योऽसौ दैत्यराजोऽभवत् पुरा। पृथुकीर्त्त्यान्तु सञ्जज्ञे तनयो वृद्धशर्म्मणः।
करूषाधिपतिर्वीरो दन्तवक्रो महाबलः। पृथां दुहितरं चक्रे कुन्तिस्तां पाण्डुरावहत्।

पृथायां च धर्मविद्राजा धर्माज्जज्ञे युधिष्ठिरः । भीमसेनस्तथा वातादिन्द्राच्चैव धनञ्जयः ।
लोकेऽप्रतिरथो वीरः शक्रतुल्यपराक्रमः । अनमित्राच्छिनिर्जज्ञे कनिष्ठाद्वृष्णिनन्दनात् ।
शैनेयः सत्यकस्तस्मात् युयुधानश्च सात्यकिः । उद्धवो देवभागस्य महाभागः सुतोऽभवत् । १९७५
पण्डितानां परं प्राहुर्देवश्रवसमुद्भवं । अश्मक्यां प्राप्तवान् पुत्रमनाधृष्टिर्यशस्विनं ।
निवृत्तशत्रुं शत्रुघ्नं देवश्रवा व्यजायत । श्रुतदेवाप्रजातस्तु नैषादिर्यः प्रतिश्रुतः ।
एकलव्यो महाराज निषादैः परिवर्द्धितः । वत्सावते त्वपुत्राय वसुदेवः प्रतापवान् ।
अद्भिर्ददौ सुतं वीरं शौरिः कौशिकमौरसं । गण्डूषाय त्वपुत्राय विष्वक्सेनो ददौ सुतान् ।
चारुदेष्णं सुचारुञ्च पञ्चालं कृतलक्षणं । असंग्रामेण यो वीरो नावर्त्तत कदाचन । १९८०
रौक्मिणेयो महाबाहुः कनीयान् भरतर्षभ । वायसानां सहस्राणि यं यान्तं पृष्ठतोऽन्वयुः ।
चारुमांसानि भोक्ष्यामश्चारुदेष्णहतानि तु । तन्त्रिजस्तन्त्रिपालश्च सुतौ कनवकस्य तु ।
वीरश्चाश्वहनुश्चैव वीरौ तावथ स्वर्भिभौ । श्यामपुत्रः शमीकस्तु शमीको राज्यमावहत् ।
जुगुप्समानो भोजत्वाद्राजसूयमवाप सः । अजातशत्रुः शत्रूणां जज्ञे तस्य विनाशनः ।
वसुदेवसुतान् वीरान् कीर्त्तयिष्यामि तच्छृणु । वृष्णेस्त्रिविधमेवन्तु बह्वाख्यं महौजसं । १९८५
धारयन् विपुलं वंशं नानर्थैरिह युज्यते ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ वैशम्पायन उवाच ॥ याः पत्न्यो वसुदेवस्य चतुर्द्दश वराङ्गनाः । पौरवी रोहिणी नाम मदिरापि तथा परा ।
वैशाखी च तथा भद्रा सुनाम्नी चैव पञ्चमी । सहदेवा शान्तिदेवा श्रीदेवा देवरक्षिता ।
वृकदेव्युपदेवी च देवकी चैव सप्तमी । सुतनुर्वडवा चैव द्वे एते परिचारिके ।
पौरवी रोहिणी नाम वाह्लीकस्यात्मजाऽभवत् । ज्येष्ठा पत्नी महाराज दयितानकदुन्दुभेः । १९९०
लेभे ज्येष्ठं सुतं रामं सारणं शठमेव च । दुर्द्दमं दमनं श्वभ्रं पिण्डारकमुशीनरं ।
चित्रां नाम कुमारीञ्च रोहिणीतनया दश । चित्रा सुभद्रेति पुनर्विख्याता कुरुनन्दन ।
वसुदेवाच्च देवक्यां जज्ञे शौरिर्महायशाः । रामाच्च निशठो जज्ञे रेवत्यां दयितः सुतः ।
सुभद्रायां रथी पार्थादभिमन्युरजायत । अक्रूरात् काशिकन्यायां सत्यकेतुरजायत ।
वसुदेवस्य भार्य्यासु महाभागासु सप्तसु । ये पुत्रा जज्ञिरे शूरा नामतस्तान्निबोध मे । १९९५
भोजश्च विजयश्चैव शान्तिदेवासुतावुभौ । वृकदेवः सुदेवायां गदश्चास्तां सुतावुभौ ।
अगावहं महात्मानं वृकदेवी व्यजायत । कन्या त्रिगर्त्तराजस्य भर्त्ता वै शिशिरायणः ।
जिज्ञासां पौरुषे चक्रे न चस्कन्देऽथ पौरुषे । कृष्णायससमप्रख्यो वर्षे द्वादशमे तथा ।
मिथ्याभिशस्तो गार्ग्यस्तु मन्युनाभिसमीरितः । गोपकन्यामुपादाय मैथुनायोपचक्रमे ।
गोपाली त्वप्सरास्तस्य गोपस्त्रीवेषधारिणी । धारयामास गार्ग्यस्य गर्भं दुर्द्धरमच्युत । १९९०
मानुष्यां गार्ग्यभार्य्यायां नियोगाच्छूलपाणिनः । स कालयवनो नाम जज्ञे राजा महाबलः ।

आवन्तस्य दशार्हस्य बली विदूरथस्य यः। दशार्हस्य सुतो व्योमा व्योमो जीमूत उच्यते।
जीमूतपुत्रो विकृतिस्तस्य भीमरथः सुतः। अथ भीमरथस्यासीत् पुत्रो नवरथस्तथा।
तस्य चासीद्दशरथः शकुनिस्तस्य चात्मजः। तस्मात् करम्भः कारम्भिर्देवरातोऽभवन्नृपः।
देवक्षत्रोऽभवत्तस्य दैवक्षत्रिर्महायशाः। देवगर्भसमो जज्ञे देवक्षत्रस्य नन्दनः।
मधूनां वंशकृद्राजा मधुर्मधुरवागपि। मधोर्जज्ञेऽथ वैदर्भ्यां पुरुद्वान् पुरुषोत्तमः। १९९५
मधुर्जज्ञेऽथ पौरव्यां भद्रवत्यां कुरूद्वह। ऐक्ष्वाकी चाभवद्भार्या सत्वांस्तस्मादजायत।
सत्वान् सर्व्वगुणोपेतः सत्वतां कीर्त्तिवर्द्धनः। इमां विसृष्टिं विज्ञाय ज्यामघस्य महात्मनः।
युज्यते परमप्रीत्या प्रजावांश्च भवेत्तथा।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि सप्तत्रिंशोऽध्यायः॥ ३७ ॥
॥ वैशम्पायन उवाच ॥ सात्वतान् सत्वसम्पन्नान् कौशल्या सुषुवे सुतान्। भजिनं भजमानञ्च दिव्यं देवावृधं नृपं।
अन्धकञ्च महाबाहुं वृष्णिञ्च यदुनन्दनं। तेषां विसर्गाश्चत्वारो विस्तरेणेह तान् शृणु। २०००
भजमानस्य सृञ्जय्यौ बाह्यकायोपबाह्यका। आस्तां भार्य्ये तयोस्तस्मात् जज्ञिरे बहवः सुताः।
क्रिमिश्च क्रमणश्चैव धृष्टः शूरः पुरञ्जयः। एते बाह्यकसृञ्जय्यां भजमानाद्विजज्ञिरे।
अयुताजित् सहस्राजित् शताजिच्च दासकः। उपबाह्यकसृञ्जय्यां भजमानाद्विजज्ञिरे।
यज्वा देवावृधो राजा चचार विपुलं तपः। पुत्रः सर्व्वगुणोपेतो मम स्यादिति निश्चितः।
संयुज्यात्मानमेवन्तु पर्णाशाया जलं स्पृशन्। सदोपस्पृशतस्तस्य चकार प्रियमापगा। २००५
चिन्तयाभिपरीता सा जगामैकविनिश्चयं। कल्याणत्वान्नरपतेस्तस्य सा निम्नगोत्तमा।
नाध्यगच्छत तां नारीं यस्यामेवंविधः सुतः। जायेत तस्मात् स्वयं गत्वा भवाम्यस्य सहव्रता।
अथ भूत्वा कुमारी सा बिभ्रती परमं वपुः। वरयामास नृपतिं तामियेष च स प्रभुः।
तस्यामाधत्त गर्भं स तेजस्विनमुदारधीः। अथ सा दशमे मासि सुषुवे सरितां वरा।
पुत्रं सर्व्वगुणोपेतं बभ्रुं देवावृधान्नृपात्। अत्र वंशे पुराणज्ञा गायन्तीति परिश्रुतं। २०१०
गुणान्देवावृधस्याथ कीर्त्तयन्तो महात्मनः। यथैवाग्रे तथा दूरात् पश्याम तथाऽन्तिकात्।
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः। षष्टिश्च षट् च पुरुषाः सहस्राणि च सप्त च।
एतेऽमृतत्वं सम्प्राप्ता बभ्रोर्देवावृधादपि। यज्वा दानपतिर्विद्वान् ब्रह्मण्यः सुदृढायुधः।
तस्यान्ववाये सुमहान् भोजा ये मार्त्तिकावताः। अन्धकात् काश्यदुहिता चतुरोऽलभतात्मजान्।
कुकुरं भजमानञ्च शमं कम्बलबर्हिषं। कुकुरस्य सुतो धृष्णुर्धृष्णोस्तु तनयस्तथा। २०१५
कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत्। जज्ञे पुनर्व्वसुस्तस्मादभिजिच्च पुनर्व्वसोः।
तथा वै पुत्रमिथुनं बभूवाभिजितः किल। आहुकश्चाहुकी चैव ख्यातौ ख्यातिमतां वरौ।
इमाश्चोदाहरन्त्यत्र गाथाः प्रति तमाहुकं। श्वेतेन परिवारेण किशोरप्रतिमो महान्।
अशीतिचर्म्मणा युक्त आहुकः प्रथमं व्रजेत्। नापुत्रवानाशतदो नासहस्रशतायुधः।

नाग्नदन्तकन्या नागन्या यो भोजमभितो व्रजेत् । पूर्व्वस्यां दिशि नागानां भोजस्य प्रचयः स्थितः ॥ २०१०

सोपासङ्गानुकर्षाणां ध्वजिनां सवरूथिनां । रथानां मेघघोषाणां सहस्राणि दशैव तु ।

रौप्यकाञ्चनकक्षाणां सहस्राण्येकविंशतिः । तावन्त्येव सहस्राणि उत्तरस्यां तथा दिशि ।

आभूमिपालान् भोजान् स्वानातिष्ठन् किङ्किणीकिनः । आहुकी चाप्यवन्तिभ्यः स्वसारं ददुरन्धकाः ।

आहुकस्य तु काश्यायां द्वौ पुत्रौ सम्बभूवतुः । देवकश्चोग्रसेनश्च देवगर्भसमावुभौ ।

देवकस्याभवन् पुत्राश्चत्वारस्त्रिदशोपमाः । देववानुपदेवश्च सुदेवो देवरक्षितः ॥ २०१५

कुमार्य्यः सप्त चाप्यासन् वसुदेवाय ता ददौ । देवकी शान्तिदेवा च सुदेवा देवरक्षिता ।

वृकदेव्युपदेवी च सुनाम्नी चैव सप्तमी । नवोग्रसेनस्य सुतास्तेषां कंसस्तु पूर्व्वजः ।

न्यग्रोधश्च सुनामा च कङ्कः शङ्कुः सुभूमिपः । राष्ट्रपालोऽथ सुतनुरनाधृष्टिस्तु पुष्टिमान् ।

तेषां स्वसारः पञ्चासन् कंसा कंसवती तथा । सुतनू राष्ट्रपाली च कङ्का चैव वराङ्गना ।

उग्रसेनः सहापत्यो व्याख्यातः कुकुरोद्भवः । कुकुराणामिमं वंशं धारयन्नमितौजसां ॥ २०२०

आत्मनो विपुलं वंशं प्रजावानाप्नुयान्नरः ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ वैशम्पायन उवाच ॥ भजमानस्य पुत्रोऽथ रथमुख्यो विदूरथः । राजाधिदेवः शूरस्तु विदूरथसुतोऽभवत् ।

राजाधिदेवस्य सुता जज्ञिरे वीर्य्यवत्तराः । दत्तातिदत्तौ बलिनौ शोणाश्वः श्वेतवाहनः ।

शमी च दण्डशर्म्मा च दन्तशत्रुश्च शत्रुजित् । श्रवणा च श्रविष्ठा च स्वसारौ सम्बभूवतुः ।

शमीपुत्रः प्रतिक्षत्रः प्रतिक्षत्रस्य चात्मजः । स्वयं भोजः स्वयं भोजाद्धृदिकः सम्बभूव ह ॥ २०२५

तस्य पुत्रा बभूवुर्हि सर्व्वे भीमपराक्रमाः । कृतवर्म्माऽग्रजस्तेषां शतधन्वा तु मध्यमः ।

देवार्हश्चावनाभश्च भिषक्श्वेतरथश्च यः । सुदान्तश्चातिदान्तश्च कामदा कामदन्तिका ।

देववान् दत्तको नाम पुत्रः कम्बलबर्हिषः । असमौजाः सुतस्तस्य नासमौजाश्च तावुभौ ।

अजातपुत्राय सुतान् प्रददावसमौजसे । सुदंष्ट्रश्च सुचारुश्च कृष्ण इत्यन्धकास्तथा ।

गान्धारी चैव माद्री च क्रोष्टोर्भार्य्ये बभूवतुः । गान्धारी जनयामास सुमित्रं मित्रवत्सलं ॥ २०३०

माद्री युधाजितं पुत्रं ततो वै देवमीढुषं । अनमित्रमभित्राणां जेतारमपराजितं ।

अनमित्रसुतो निघ्नो निघ्नस्य द्वौ बभूवतुः । प्रसेनश्च महाभागः सत्राजिच्च शत्रुजितावुभौ ।

प्रसेनो द्वारवत्यान्तु निविशन्तो महामणिं । दिव्यं स्यमन्तकं नाम समुद्रादुपलब्धवान् ।

तस्य सत्राजितः सूर्य्यः सखा प्राणसमोऽभवत् । स कदाचिन्निशापाये रथेन रथिनां वरः ।

तोयं कूलमुपस्प्रष्टुमुपस्थातुं ययौ रविं । तस्योपतिष्ठतः सूर्य्यं विवस्वानग्रतः स्थितः ॥ २०३५

अस्पष्टमूर्त्तिर्भगवांस्तेजोमण्डलवान् प्रभुः । अथ राजा विवस्वन्तमुवाच स्थितमग्रतः ।

यथैव व्योम्नि पश्यामि सदा त्वां ज्योतिषां पते । तेजोमण्डलिनं देवं तथैव पुरतः स्थितं ।

को विशेषोऽस्ति मे त्वत्तः सख्येनोपगतस्य वै । एतच्छ्रुत्वा तु भगवान्मणिरत्नं स्यमन्तकं ।

कण्ठादवमुच्यैनमेकान्ते न्यवसत् विभुः । ततो विग्रहवन्तं तं ददर्श नृपतिस्तदा ।
प्रीतिमानथ तं दृष्ट्वा मुहूर्त्तं कृतवान् कथां । तमभिप्रस्थितं भूयो विवस्वन्तं स सत्राजित् । १९५०
लोकानुद्भासयस्येतान् येन त्वं सततं प्रभो । तदेतन्मणिरत्नं मे भगवान् दातुमर्हसि ।
ततः स्यमन्तकमणिं दत्तवांस्तस्मै भास्करः । स तमाबध्य नगरीं प्रविवेश महीपतिः ।
तं जनाः पर्य्यधावन्त सूर्य्योऽयं गच्छतीति च । स तां पुरीं विस्मापयित्वा राजा त्वन्तःपुरं तथा ।
तत् प्रसेनजिते दिव्यं मणिरत्नं स्यमन्तकं । ददौ भ्रात्रे नरपतिः प्रेम्णा सत्राजिदुत्तमं ।
स मणिः स्यन्दते रुक्मं वृष्ण्यन्धकनिवेशने । कालवर्षी च पर्ज्जन्यो न च व्याधिभयं ह्यभूत् । १९५५
लिप्सां चक्रे प्रसेनात्तु मणिरत्ने स्यमन्तके । गोविन्दो न च तं लेभे शक्तोऽपि न जहार सः ।
कदाचिन्मृगयां यातः प्रसेनस्तेन भूषितः । स्यमन्तककृते सिंहाद्वधं प्राप वनेचरात् ।
अथ सिंहं प्रधावन्तमृक्षराजो महाबलः । निहत्य मणिरत्नं तदादाय बिलमाविशत् ।
ततो वृष्ण्यन्धकाः कृष्णं प्रसेनवधकारणात् । प्रार्थनां तां मत्वैबुद्धा सर्व्व एव शशङ्किरे ।
स शङ्क्यमानो धर्म्मात्मा न कारी तस्य कर्म्मणः । आहरिष्ये मणिमिति प्रतिज्ञाय वनं ययौ । १९६०
यत्र प्रसेनो मृगयामचरत्तत्र चाप्यथ । प्रसेनस्य पदं गृह्य पुरुषैराप्तकारिभिः ।
ऋक्षवन्तं गिरिवरं विन्ध्यञ्च गिरिमुत्तमं । अन्वेषयन् परिश्रान्तः स ददर्श महामनाः ।
साश्वं हतं प्रसेनन्तु नाविन्दत च तन्मणिं । अथ सिंहः प्रसेनस्य शरीरस्याविदूरतः ।
ऋक्षेण निहतो दृष्टः पदैर्ऋक्षस्य सूचितः । पदैस्तैरन्वियायाथ गुहामृक्षस्य माधवः ।
महत्यृक्षबिले वाणीं शुश्राव प्रमदेरितां । धात्र्या कुमारमादाय सुतं जाम्बवतो नृप । १९६५
क्रीडापयन्त्या मणिना मा रोदीरित्युदीरितां ।
॥ धात्र्युवाच ॥ सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः । सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ।
व्याक्रोशितस्य शब्दः स तूर्णञ्चापि बिलं ययौ । प्रविश्य तत्र भगवांस्तमृक्षबिलमञ्जसा ।
स्थापयित्वा बिलद्वारि यदून् लाङ्गलिना सह । शार्ङ्गधन्वा बिलस्थन्तु जाम्बवन्तं ददर्श ह ।
युयुधे वासुदेवस्तु बिले जाम्बवता सह । बाहुभ्यामेव गोविन्दो दिवसानेकविंशतिं । १९७०
प्रविष्टे तु बिलं कृष्णे वासुदेवपुरःसराः । पुरीं द्वारवतीमेत्य हतं कृष्णं न्यवेदयन् ।
वासुदेवस्तु निर्ज्जित्य जाम्बवन्तं महाबलं । लेभे जाम्बवतीं कन्यामृक्षराजस्य सम्मतां ।
मणिं स्यमन्तकञ्चैव जग्राहात्मविशुद्धये । अनुनीयर्क्षराजन्तु निर्य्ययौ च ततो बिलात् ।
उपायाद्द्वारकां कृष्णः स विना तैः पुरःसरैः । एवं स मणिमाहृत्य विशोध्यात्मानमच्युतः ।
ददौ सत्राजिते तं वै सर्व्वसात्वतसंसदि । एवं मिथ्याभिशस्तेन कृष्णेनामित्रघातिना । १९७५
आत्मा विशोधितः पापाद्विनिर्ज्जित्य स्यमन्तकं । सत्राजितो दश त्वासन् भार्य्यास्तासां शतं सुताः ।
ख्यातिमन्तस्त्रयस्तेषां भङ्गकारस्तु पूर्व्वजः । वीरो वातपतिश्चैव उपस्वावांस्तथैव च ।
कुमार्य्यश्चापि तिस्रो वै दिक्षु ख्याता नराधिप । सत्यभामोत्तमा यासां व्रतिनी च दृढव्रता ।

तथा प्रस्वापिनीं चैव भार्याः कृष्णाय ता ददौ । सभाक्षो भङ्गकारास्तु नारीरत्ने वरोत्तमौ ।

जज्ञाते गुणसम्पन्नौ विश्रुतौ रूपसम्पदा । माद्र्याः पुत्रस्तु जज्ञेऽथ पृश्निः पुत्रो युधाजितः । २०८०

जज्ञाते तनयौ पृश्नेः श्वफल्कश्चित्रकस्तथा । श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत ।

गान्दिनीन्नाम तस्याश्च गाः सदा प्रददौ पिता । तस्यां जज्ञे महाबाहुः श्रुतवानिति विश्रुतः ।

अक्रूरोऽथ महाभागो यज्वा विपुलदक्षिणः । उपमद्गुस्तथा मद्गुर्मुदरश्चारिमर्द्दनः ।

गिरिक्षिपस्तथोपेक्षः शत्रुहा चारिमेजयः । धर्म्मभृच्चापि धर्म्मा च गृध्रमोजान्तकस्तथा ।

आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना । विश्रुता साम्बमहिषी कन्या चास्य वसुन्धरा । २०८५

रूपयौवनसम्पन्ना सर्व्वसत्त्वमनोहरा । अक्रूरेणोग्रसेन्यान्तु सुतौ द्वौ कुरुनन्दन ।

सुदेवश्चोपदेवश्च जज्ञाते देववर्चसौ । चित्रकस्याभवन् पुत्राः पृथुर्विपृथुरेव च ।

अश्वग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ । अरिष्टनेमेश्च सुता धर्म्मो धर्म्मभृदेव च ।

सुबाहुर्बहुबाहुश्च श्रविष्ठाश्रवणे स्त्रियौ । इमां मिथ्याभिशस्तिं यः कृष्णस्य समुदाहृतां ।

वेद मिथ्याभिशापास्तं न स्पृशन्ति कदाचन । २०९०

इति श्री महाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥

॥ वैशम्पायन उवाच ॥ यच्छत् सत्राजिते कृष्णो मणिरत्नं स्यमन्तकं । तदा त्वहारयामास वभ्रवे शतधन्वना ।

यदा हि प्रार्थयामास सत्यभामामनिन्दितां । अक्रूरोऽन्तरमन्विच्छन्मणिश्चैव स्यमन्तकं ।

सत्राजितं ततो हत्वा शतधन्वा महाबलः । रात्रौ तं मणिमादाय ततोऽक्रूराय दत्तवान् ।

अक्रूरस्तु तदा रत्नमादाय भरतर्षभ । समयं कारयाञ्चक्रे नावेद्योऽहं त्वयेत्युत ।

वयमभ्युपपत्स्यामः कृष्णेन त्वां प्रधर्षितं । ममाद्य द्वारका सर्व्वा वशे तिष्ठत्यसंशयं । २०९५

हते पितरि दुःखार्त्ता सत्यभामा मनस्विनी । प्रययौ रथमारुह्य नगरं वारणावतं ।

सत्यभामा तु तद्वृत्तं भोजस्य शतधन्वनः । भर्त्तुर्निवेद्य दुःखार्त्ता पार्श्वस्थाऽश्रूण्यवर्त्तयत् ।

पाण्डवानान्तु दग्धानां हरिः कृत्वोदकक्रियां । कुल्यार्थे चापि पाण्डूनां न्ययोजयत सात्यकिं

ततस्त्वरितमागम्य द्वारकां मधुसूदनः । पूर्व्वजं हलिनं श्रीमानिदं वचनमब्रवीत् ।

हतः प्रसेनः सिंहेन सत्राजिच्छतधन्वना । स्यमन्तकः स मद्गामी तस्य प्रभुरहं विभो । २१००

तदारोह रथं शीघ्रं भोजं हत्वा महारथं । स्यमन्तको महाबाहो अस्माकं स भविष्यति ।

ततः प्रवृत्ते युद्धं तुमुलं भोजकृष्णयोः । शतधन्वा ततोऽक्रूरं सर्व्वतो दिक्ष्ववैक्षत ।

संरब्धौ तावुभौ दृष्ट्वा तत्र भोजजनार्द्दनौ । शक्तोऽपि शाठ्याद्धार्द्दिक्यमक्रूरो नाभ्यपद्यत ।

अपयाने ततो बुद्धिं भोजश्चक्रे भयार्द्दितः । योजनानां शतं साग्रं वडवा प्रत्यपद्यत ।

विख्याता हृदया नाम शतयोजनगामिनी । भोजस्य वडवा राजन् यया कृष्णमयोधयत् । २१०५

क्षीणां जवेन हृदयामध्वनः शतयोजने । दृष्ट्वा रथस्य स्वां वृद्धिं शतधन्वानमार्द्दयत् ।

ततस्तस्या हयायास्तु श्रमात् खेदाच्च भारत । खमुत्पेतुरथ प्राणाः कृष्णो राममथाब्रवीत् ।

तिष्ठेह त्वं महाबाहो दृष्टदोषा त्वया मया । पद्भ्यां गत्वा हरिष्यामि मणिरत्नं स्यमन्तकं ।
पद्भ्यामेव ततो गत्वा शतधन्वानमच्युतः । मिथिलामभितो राजन् जघान परमास्त्रवित् ।
स्यमन्तकञ्च नापश्यद्धत्वा भोजं महाबलं । निवृत्तञ्चाब्रवीत् कृष्णं रत्नं देहीति लाङ्गली । २११०
नास्तीति कृष्णः प्रोवाच ततो रामो रुषान्वितः । धिक्शब्दपूर्व्वमसकृत् प्रत्युवाच जनार्द्दनं
भ्रातृत्वान्मर्षयाम्येष स्वस्ति तेऽस्तु व्रजाम्यहं । कृत्यं न मे द्वारकया न त्वया न च वृष्णिभिः ।
प्रविवेश ततो रामो मिथिलामरिमर्द्दनः । सर्व्वकामैरुपहृतैर्मैथिलेनाभिपूजितः ।
एतस्मिन्नेव काले तु बभ्रुर्मतिमतां वरः । नानारूपान् क्रतून् सर्व्वानाजहार निरर्गलान् ।
दीक्षामयं स कवचं रक्षार्थं प्रविवेश ह । स्यमन्तककृते प्राज्ञो गान्दीपुत्रो महायशाः । २११५
अथ रत्नानि चान्यानि धनानि विविधानि च । षष्टिं वर्षाणि धर्म्मात्मा यज्ञेष्वेव न्यवेशयत् ।
अक्रूरयज्ञा इति ते ख्यातास्तस्य महात्मनः । बह्वन्नदक्षिणाः सर्व्वे सर्व्वकामप्रदायिनः ।
अथ दुर्य्योधनो राजा गत्वा स मिथिलां प्रभुः । गदाशिक्षां ततो दिव्यां बलभद्रादवाप्तवान् ।
प्रसाद्य तु तदा रामो वृष्ण्यन्धकमहारथैः । आनीतो द्वारकामेव कृष्णेन च महात्मना ।
अक्रूरस्त्वन्धकैः सार्द्धमपायात् पुरुषर्षभ । हत्वा सत्राजितं युद्धे सहबन्धुं महाबलं । २१२०
ज्ञातिभेदभयात् कृष्णस्तमुपेक्षितवांस्तदा । अपयाते तथाऽक्रूरे नावर्षत् पाकशासनः ।
अनावृष्ट्या तदा राष्ट्रमभवत् बहुधा कृशं । ततः प्रसादयामासुरक्रूरं कुकुरान्धकाः ।
पुनर्द्वारवतीं प्राप्ते तस्मिन्दानपतौ ततः । प्रववर्ष सहस्राक्षः कक्षे जलनिधेस्ततः ।
कन्याञ्च वासुदेवाय स्वसारं शीलसम्मतां । अक्रूरः प्रददौ धीमान् प्रीत्यर्थं कुरुनन्दन ।
अथ विज्ञाय योगेन कृष्णो बभ्रुगतं मणिं । सभामध्यगतं प्राह तमक्रूरं जनार्द्दनः । २१२५
यत्तद्रत्नं मणिवरं तव हस्तगतं विभो । तत् प्रयच्छस्व मानार्ह मयि मानार्य्यकं कृथाः ।
षष्टिवर्षगते काले यद्रोषोऽभूत्ममानघ । स संरूढोऽसकृत् प्राप्तस्तदा कालात्ययो महान् ।
स ततः कृष्णवचनात् सर्व्वसात्वतसंसदि । प्रददौ तं मणिं बभ्रुरक्लेशेन महामतिः ।
ततस्तस्मादृजुप्राप्तं बभ्रोर्हस्तादरिन्दमः । ददौ हृष्टमनाः कृष्णस्तं मणिं बभ्रवे पुनः ।
स कृष्णहस्तात् संप्राप्य मणिरत्नं स्यमन्तकं । आवध्य गान्दिनीपुत्रो विरराजांशुमानिव । २१३०
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि चत्वारिंशत्तमोऽध्यायः ॥ ४०॥
॥ जनमेजय उवाच ॥ प्रादुर्भावं पुराणेषु विष्णोरमिततेजसः । सतां कथयतामेव वाराह इति नः श्रुतं ।
न जाने तस्य चरितं न विधिं न च विस्तरं । न कर्म्मगुणसन्तानं न हेतुं न मनीषितं ।
किमात्मको वराहः स का मूर्त्तिः का च देवता । किमाचारप्रभावो वा किं वा तेन तदा कृतं ।
यज्ञार्थं समवेतानां मिषताञ्च द्विजन्मनां । महावराहचरितं कृष्णद्वैपायनेरितं ।
यथ नारायणो ब्रह्मन् वाराहरूपमास्थितः । दंष्ट्रया गां समुद्रस्थामुज्जहारारिसूदनः । २१३५
विस्तरेणैव कर्म्माणि सर्व्वाणि रिपुघातिनः । श्रोतुमिच्छाम्यशेषेण हरेः कृष्णस्य धीमतः ।

कर्मणामानुपूर्व्या च प्रादुर्भावाश्च ये विभोः । या चास्य प्रकृतिर्ब्रह्मंस्तां च व्याख्यातुमर्हसि ।
कथञ्च भगवान् विष्णुः सुरेशोऽरिनिषूदनः । वसुदेवकुले धीमान् वासुदेवत्वमागतः ।
अमरैरावृतं पुण्यं पुण्यकृद्भिरलंकृतं । देवलोकं समुत्सृज्य मर्त्यलोकमिहागतः ।
देवमानुषयोर्नेता भूर्भुवःप्रभवो विभुः । किमर्थं दिव्यमात्मानं मानुषे संन्ययोजयत् । २२१०
यश्चक्रं वर्त्तयत्येको मानुषाणामनामयं । मानुष्ये स कथं बुद्धिं चक्रे चक्रभृतां वरः ।
गोपायनं यः कुरुते जगतः सार्व्वलौकिकं । स कथं गां गतो विष्णुर्गोपत्वमगमत् प्रभुः ।
महाभूतानि भूतात्मा यो दधार चकार च । श्रीगर्भः स कथं गर्भे स्त्रिया भूचरया धृतः ।
येन लोकान् क्रमैर्जित्वा त्रिभिस्त्रींस्त्रिदशेप्सया । स्थापिता जगतो मार्गास्त्रिवर्गप्रभवाश्रयाः ।
योऽन्तकाले जगत् पीत्वा कृत्वा तोयमयं वपुः । लोकमेकार्णवं चक्रे दृश्यादृश्येन वर्त्मना । २२१५
यः पुराणे पुराणात्मा वाराहं रूपमास्थितः । विषाणाग्रेण वसुधामुज्जहारारिसूदनः ।
यः पुरा पुरुहूतार्थे त्रैलोक्यमिदमव्ययं । ददौ जित्वा वसुमतीं सुराणां सुरसत्तमः ।
येन सैंहं वपुः कृत्वा द्विधा कृत्वा च तत् पुनः । पूर्व्वदैत्यो महावीर्यो हिरण्यकशिपुर्हतः ।
यः पुरा ह्यनलो भूत्वा और्व्वः संवर्त्तको विभुः । पातालस्थोऽर्णवगतं पपौ तोयमयं हविः ।
सहस्रशिरसं ब्रह्मन् सहस्राक्षं सहस्रदं । सहस्रचरणं देवं यमाहुर्वै युगे युगे । २२२०
नाभ्यारण्यं समुत्पन्नं यस्य पैतामहं गृहं । एकार्णवगते काले तत्पङ्कजमपङ्कजं ।
येन ते निहता दैत्याः संग्रामे तारकामये । सर्व्वदेवमयं कृत्वा सर्व्वायुधधरं वपुः ।
गरुडस्थेन चोत्सिक्तः कालनेमिर्निपातितः । निर्जितश्च महादैत्यस्तारकश्च महासुरः ।
उत्तरान्ते समुद्रस्य क्षीरोदस्यामृतोदधेः । यः शेते शाश्वतं योगमास्थाय तिमिरं महत् ।
सुरारणी गर्भमधत्त दिव्यं तपःप्रकर्षाददितिः पुरा यं । शक्रञ्च यो दैत्यगणावरुद्धं गर्भावधानेन सनाथञ्चकार । २२२५
पदानि यो लोकमयानि कृत्वा चकार दैत्यान् सलिलाशयस्थान् । कृत्वा च देवांस्त्रिदिवस्य देवांश्चक्रे सुरेशं त्रिदशाधिपत्ये ।
पात्राणि दक्षिणां दीक्षां चमसोलूखलानि च । गार्हपत्येन विधिना अन्वाहार्येण कर्मणा ।
अग्निमाहवनीयञ्च वेदीञ्चैव कुशं स्रुवं । प्रोक्षणीयं ध्रुवाञ्चैव आवभृथ्यं तथैव च ।
अवांस्त्रीनपि च यश्चक्रे हव्यकव्यप्रदान् मखे । हव्यादांश्च सुरांश्चक्रे कव्यादांश्च पितॄनपि ।
भागार्थे यज्ञविधिना यश्चक्रे यज्ञकर्मणि । यूपान् समित् स्रुवं सोममार्द्रांश्च समिधस्तथा । २२३०
यज्ञियानि च द्रव्याणि यज्ञांश्च सवनात्मकान् । सदस्यान् यजमानांश्च मेधार्हांश्च क्रतूत्तमान् ।
विबभाज पुरा सर्व्वं पारमेष्ठ्येन कर्मणा । युगानुरूपं यः कृत्वा लोकाननुपरिक्रमन् ।
क्षणा लवाश्च काष्ठाश्च कलास्त्रैकाल्यमेव च । मुहूर्त्तास्तिथयो मासाः पक्षाः संवत्सरास्तथा ।
ऋतवः कालयोगाश्च प्रमाणं त्रिविधं त्रिषु । आयुः क्षेत्राण्युपचयो लक्षणं रूपसौष्ठवं ।
त्रयो वर्णास्त्रयो लोकास्त्रैविद्यं पावकास्त्रयः । त्रैकाल्यं त्रीणि कर्म्माणि त्रयोऽपायास्त्रयो गुणाः । २२३५
सृष्टा लोकास्त्रयोऽनन्ता येनानन्तेन वर्त्मना । सर्व्वभूतगणाः सृष्टाः सर्व्वभूतगुणात्मकाः ।

गुणानिन्द्रियपूर्व्वांश्च योजित रमते च यः । गत्यागतिज्ञो यो वेत्ता सर्व्वस्य जगतीश्वरः ।
यो गतिर्द्धर्म्मयुक्तानामगतिः पापकर्म्मणां । चातुर्व्वर्ण्यस्य प्रभवश्चातुर्व्वर्ण्यस्य रक्षिता ।
चातुर्व्विद्यस्य यो वेत्ता चातुराश्रम्यसंश्रयः । दिगन्तरो नभो भूमिरापो वायुर्विभावसुः ।
चन्द्रसूर्य्ययोर्ज्ज्योतिर्योगीशः क्षणदान्तकः । यः परं श्रूयते ज्योतिः यः परं श्रूयते तपः । ११७०
यः परं माक्षरपरं यः परः परमात्मनः । नारायणपरा वेदा नारायणपराः क्रियाः ।
नारायणपरो धर्म्मो नारायणपरा गतिः । नारायणपरं सत्यं नारायणपरं तपः ।
नारायणपरो मोक्षो नारायणपरं परं । आदित्यादिश्च यो दिव्यो यश्च दैत्यान्तको विभुः ।
युगान्तेष्वन्तको यश्च यश्च लोकान्तकान्तकः । सेतुर्यो लोकसेतूनां मेध्यो यो मेध्यकर्म्मणां ।
वेद्यो यो वेदविदुषां यः प्रभुः प्रभवात्मनां । सोमभूतश्च सौम्यानामग्निभूतोऽग्निवर्च्चसां । ११७५
मनुष्याणां मनोभूतस्तपोभूतस्तपस्विनां । विनयो नयवृत्तानां तेजस्तेजस्विनामपि ।
सर्गाणां सर्गकारश्च लोकहेतुरनुत्तमः । विग्रहो विग्रहार्हाणां गतिर्गतिमतामपि ।
आकाशप्रभवो वायुर्व्वायुप्राणो हुताशनः । देवा हुताशनप्राणाः प्राणोऽग्नेर्म्मधुसूदनः ।
रसाद्वै शोणितं जातं शोणितान्मांसमुच्यते । मांसात्तु मेदसो जन्म मेदसोऽस्थि निरुच्यते ।
अस्थ्नो मज्जा समभवन्मज्ज्ञातः शुक्रसम्भवः । शुक्राद्गर्भः समभवद्रसमूलेन कर्म्मणा । ११८०
तत्रापः प्रथमो भागः स सौम्यो राशिरुच्यते । गर्भोष्मसम्भवोऽग्निर्यो द्वितीयो राशिरुच्यते ।
शुक्रं सोमात्मकं विद्यादार्त्तवं पावकात्मकं । भावा रसानुगाश्चैषां वीर्य्यञ्च शशिपावकौ ।
कफवर्गेऽभवच्छुक्रं पित्तवर्गे च शोणितं । कफस्य हृदयं स्थानं पित्तं नाभ्यां प्रतिष्ठितं ।
देहस्य मध्ये हृदयं स्थानं तन्मनसः स्मृतं । नाभीकोष्ठान्तरं यत्तु तत्र देवो हुताशनः ।
मनः प्रजापतिर्ज्ञेयः कफः सोमो विभाव्यते । पित्तमग्निः स्मृतो ह्येवमग्नीषोमात्मकं जगत् । ११८५
एवं प्रवर्त्तिते गर्भे वर्द्धितेऽर्ब्बुदसन्निभे । वायुः प्रवेशनं चक्रे सङ्गतः परमात्मना ।
ततोऽङ्गानि विसृजति बिभर्त्ति परिवर्त्तयन् । स पञ्चधा शरीरस्थो भिद्यते वर्द्धयन् पुनः ।
प्राणोऽपानः समानश्च उदानो व्यान एव च । प्राणोऽस्य प्रथमं स्थानं वर्द्धयन् परिवर्त्तते ।
अपानः पश्चिमं कायमुदानोर्द्धं शरीरिणः । व्यानो व्यायच्छते येन समानः सन्निवर्त्तते ।
भूतावाप्तिस्ततस्तस्य जायतेन्द्रियगोचरा । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं । ११९०
तस्येन्द्रियनिविष्टानि स्वं स्वं योगं प्रचक्रिरे । पार्थिवं देहमाहुस्तु प्राणात्मानञ्च मारुतं ।
छिद्राण्याकाशयोनीनि जलात् स्रावः प्रवर्त्तते । ज्योतिश्चक्षुश्च आत्मा तेषां यत्तु मनः स्मृतं ।
ग्रामाश्च विषयाश्चैव यस्य वीर्य्यात् प्रवर्त्तिताः । इत्येतान् पुरुषः सर्व्वान् सृजन् लोकान् सनातनान् ।
नैधनेऽस्मिन् कथं लोके नरत्वं विष्णुरागतः । एष मे संशयो ब्रह्मन्नेष मे विस्मयो महान् ।
कथं गतिर्गतिमतामापन्नो मानुषीं तनुं । श्रुतो मे स्पष्ट संशय सर्व्वे वार्ष्णेय सम्भवः । ११९५
श्रोतुमिच्छामि विष्णोश्च वृष्णीनाञ्च यथाक्रमं । आश्चर्य्यं परमं विष्णुर्देवैर्दैत्यैश्च कथ्यते ।

विष्णोरुत्पत्तिमाश्चर्यं ममाचक्ष्व महामुने । एतदाश्चर्य्यमाख्यानं कथयस्व सुखावहं ।
प्रख्यातबलवीर्य्यस्य विष्णोरमिततेजसः । कर्म्मणाश्चर्य्यभूतस्य विष्णोस्तत्त्वमिहोच्यतां ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ वैशम्पायन उवाच ॥ प्रश्नभारो महांस्तात त्वयोक्तः शार्ङ्गधन्वनि । यथाशक्ति प्रवक्ष्यामि श्रूयतां वैष्णवं यशः ।
विष्णोः प्रभावश्रवणे दिष्ट्या ते मतिरुत्थिता । हन्त विष्णोः प्रवृत्तिं मे शृणु दिव्यां मयेरितां । २२००
सहस्रास्यं सहस्राक्षं सहस्रचरणञ्च यं । सहस्रशिरसं देवं सहस्रकरमव्ययं ।
सहस्रबाहुं भास्वन्तं सहस्रमुकुटं प्रभुं । सहस्रदं सहस्रादिं सहस्रभुजमव्ययं ।
हवनं सवनञ्चैव हव्यं होतारमेव च । पात्राणि च पवित्राणि वेदीं दीक्षां चरुं स्रुवं ।
स्रुक्सोमसूर्पमुषलं प्रोक्षणीं दक्षिणायनं । अध्वर्य्युं सामगं विप्रं सदस्यं सदनं तथा ।
यूपं समित्कुशं दर्व्वीं चमसोलूखलानि च । प्राग्वंशं यज्ञभूमिञ्च होतारं चयनञ्च यत् । २२०५
ह्रस्वानि प्रमाणानि चराणि स्थावराणि च । प्रायश्चित्तानि चार्घ्यञ्च स्थण्डिलानि कुशांस्तथा ।
मन्त्रं यज्ञवहं वह्निं भागं भागवहञ्च यत् । अग्रेभुजं सोमभुजं हुतार्च्चिषमुदायुधं ।
आहुर्वेदविदो विप्रा यं यज्ञे शाश्वतं विभुं । तस्य विष्णोः सुरेशस्य श्रीवत्साङ्कस्य धीमतः ।
प्रादुर्भावसहस्राणि समतीतान्यनेकशः । भूयश्चैव भविष्यन्तीत्येवमाह प्रजापतिः ।
यत् पृच्छसि महाराज पुण्यां दिव्यां कथां शुभां । यदर्थं भगवान् विष्णुर्वसुदेवकुले ऽभवत् । २२१०
तत्तेऽहं सम्प्रवक्ष्यामि शृणु सर्व्वमशेषतः । वासुदेवस्य माहात्म्यं चरितञ्च महाद्युतेः ।
हितार्थं सुरमर्त्यानां लोकानां प्रभवाय च । बहुशः सर्व्वभूतात्मा प्रादुर्भवति कार्य्यतः ।
प्रादुर्भावांश्च वक्ष्यामि पुण्यान्दिव्यान् गुणैर्युतान् । शुचिः प्रयतवान् भूत्वा निबोध जनमेजय ।
इदं पुराणं परमं पुण्यं वेदैश्च सम्मितं । हन्त ते कथयिष्यामि विष्णोर्दिव्यां कथां शृणु ।
यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत । धर्म्मसंस्थापनार्थाय तदा सम्भवति प्रभुः । २२१५
तस्य चैका महाराज मूर्त्तिर्भवति सत्तमा । नित्यं दिविष्ठा या राजंस्तपश्चरति दुश्चरं ।
द्वितीया चास्य शयने निद्रायोगमुपाययौ । प्रजासंहारसर्गार्थं किमध्यात्मविचिन्तकं ।
सुप्त्वा युगसहस्रं यः प्रादुर्भवति कार्य्यतः । पूर्णे वर्षसहस्रे तु देवदेवो जगत्प्रभुः ।
पितामहो लोकपालाश्चन्द्रादित्यौ हुताशनः । ब्रह्मा च कपिलश्चैव परमेष्ठी तथैव च ।
देवाः सप्तर्षयश्चैव त्र्यम्बकश्च महायशाः । वायुः समुद्राः शैलाश्च तस्य देहे समाश्रिताः । २२२०
सनत्कुमारस्य महानुभावो मनुर्महात्मा भगवान् प्रजाकरः । पुराणदेवोऽथ पुराणि चक्रे प्रदीप्तवैश्वानरतुल्यतेजाः ।
येन चार्णवमध्यस्थौ नष्टे स्थावरजङ्गमे । नष्टे देवासुरनरे प्रनष्टोरगराक्षसे ।
योद्धुकामौ दुराधर्षौ दानवौ मधुकैटभौ । हतौ प्रभवता तेन तयोर्दत्त्वामितं वरं ।
पुरा कमलनाभस्य स्वपतः सागराम्भसि । पुष्करे यत्र सम्भूता देवाः सर्षिगणाः पुरा ।
स एष पौष्करो नाम प्रादुर्भावो महात्मनः । पुराणं कथ्यते यत्र वेदश्रुतिसमाहितं । २२२५

वराहस्तु श्रुतिमुखः प्रादुर्भावो महात्मनः । यत्र विष्णुः सुरश्रेष्ठो वाराहं रूपमास्थितः ।
महीं सागरपर्य्यन्तां सशैलवनकाननां । वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः । अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः ।
आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् । धर्म्मसत्यमयः श्रीमान् कर्म्मविक्रमसत्क्रियः ।
प्रायश्चित्तनखो घोरः पशुजानुर्महाभुजः । उद्गात्रन्त्रो होमलिङ्गः फलबीजमहौषधिः ।    २२१०
वाय्वन्तरात्मा वेदस्फिग्विकृतः सोमशोणितः । वेदीस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरर्च्चितः । दक्षिणाहृदयो योगी महासत्रमयो महान् ।
उपाकर्म्मोष्ठरुचकः प्रवर्ग्यावर्त्तभूषणः । नानाछन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायो वै मेरुशृङ्ग इवोच्छ्रितः । महीं सागरपर्य्यन्तां सशैलवनकाननां ।
एकार्णवजले मग्नामेकार्णवगतः प्रभुः । दंष्ट्रया गां समुद्धृत्य लोकानां हितकाम्यया ।    २२१५
सहस्रशीर्षो लोकादिश्चकार पृथिवीं पुनः । एवं यज्ञवराहेण भूत्वा भूतहितार्थिना ।
उद्धृता पृथिवी देवी सागराम्बुधरा पुरा । वाराह एष कथितो नारसिंहमतः शृणु ।
यत्र भूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः । पुरा कृतयुगे राजन् सुरारिर्बलदर्पितः ।
दैत्यानामादिपुरुषश्चकार तप उत्तमं । दशवर्षसहस्राणि दशवर्षशतानि च ।
जलोपवासनिरतः स्थानमौनदृढव्रतः । ततः शमदमाभ्याञ्च ब्रह्मचर्य्येण चानघ ।    २२२०
ब्रह्मा प्रीतमनास्तस्य तपसा नियमेन च । तं वै स्वयम्भूर्भगवान् स्वयमागम्य भूपते ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता । आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैः सह ।
रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिन्नरैः । दिशाभिर्विदिशाभिश्च नदीभिः सागरैस्तथा ।
नक्षत्रैश्च मुहूर्तैश्च खेचरैश्च महाग्रहैः । देवर्षिभिस्तपोवृद्धैः सिद्धैः सप्तर्षिभिस्तथा ।
राजर्षिभिः पुण्यतमैर्गन्धर्व्वैरप्सरोगणैः । चराचरगुरुः श्रीमान् वृतः सर्व्वैः सुरैस्तथा ।    २२२५
ब्रह्मा वेदविदां श्रेष्ठो दैत्यं वचनमब्रवीत् । प्रीतोऽस्मि तव भक्तस्य तपसानेन सुव्रत ।
वरं वरय भद्रं ते यथेष्टं काममाप्नुहि ।
॥ हिरण्यकशिपुरुवाच ॥ न देवासुरगन्धर्व्वा न यक्षोरगराक्षसाः । न मानुषाः पिशाचा वा हन्युर्मां देवसत्तम ।
ऋषयो वा न मां शापैः क्रुद्धा लोकपितामह । यदि मे भगवान् प्रीतो वरमेवं वृणोम्यहं ।
न शस्त्रेण न चास्त्रेण गिरिणा पादपेन वा । न शुष्केण न चार्द्रेण स्यान्न चान्येन मे वधः ।    २२३०
पाणिप्रहारेणैकेन सभृत्यबलवाहनं । यो मां नाशयितुं शक्तः स मे मृत्युर्न संशयः ।
भवेयमहमेवार्कः सोमो वायुर्हुताशनः । सलिलञ्चान्तरीक्षञ्च नक्षत्राणि दिशो दश ।
अहं क्रोधश्च कामश्च वरुणो वासवो यमः । धनदश्च धनाध्यक्षो यक्षः किंपुरुषाधिपः ।
॥ ब्रह्मोवाच ॥ एते दिव्या वरास्तात मया दत्तास्तवाद्भुताः । सर्व्वान् कामानिमांस्तात प्राप्स्यसि त्वं न संशयः ।
एवमुक्त्वा तु भगवान् जगामाकाशमेव तु । वैराजं ब्रह्मसदनं ब्रह्मर्षिगणसेवितं ।    २२३५

श्रुत्वा चैव वरं तस्य दत्तं कमलयोनिना । ततो देवाश्च नागाश्च गन्धर्व्वमुनयस्तथा ।
वरप्रदानं श्रुत्वैव पितामहमुपस्थिताः । विभुं विज्ञापयाञ्चक्रुर्देवा इन्द्रपुरोगमाः ।
॥ देवा ऊचुः ॥ वरेणानेन भगवन् बाधिष्यति स नोऽसुरः । तत् प्रसीदस्व भगवन् वधोऽप्यस्य विचिन्त्यताम् ।
भगवन् सर्व्वभूतानां स्वयम्भूरादिकृद्विभुः । स्रष्टा च हव्यकव्यानामव्यक्तप्रकृतिर्ध्रुवः ।
ततो लोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः । प्रोवाच भगवान् वाक्यं सर्व्वान्देवगणांस्तदा । २२६०
॥ ब्रह्मोवाच ॥ अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलं । तपसोऽन्तेऽस्य भगवान् वधं विष्णुः करिष्यति ।
एतच्छ्रुत्वा सुराः सर्व्वे वाक्यं पङ्कजजन्मनः । स्वानि स्थानानि दिव्यानि जग्मुस्ते वै मुदान्विताः ।
लब्धमात्रे वरे चापि सर्व्वाः सोऽबाधत प्रजाः । हिरण्यकशिपुर्दैत्यो वरदानेन दर्पितः ।
आश्रमेषु महाभागान् मुनीन् वै शंसितव्रतान् । सत्यधर्म्मरतान्दान्तान् पुरा धर्षितवांश्च सः ।
देवांस्त्रिभुवनस्थांश्च पराजित्य महाबलः । त्रैलोक्यं वशमानीय स्वर्गेऽवसद्दासुरः । २२६५
यदा वरमदोन्मत्तो न्यवसद्दानवो दिवि । यज्ञियान् कृतवान् दैत्यान् देवांश्चाप्ययज्ञियान् ।
आदित्याश्च तथा रुद्रा विश्वे च वसवस्तथा । शरण्यं शरणं विष्णुमुपतस्थुर्महाबलं ।
देवयज्ञमयं ब्रह्म ब्रह्मदेवं सनातनं । भूतं भव्यं भविष्यञ्च प्रभुं लोकनमस्कृतं ।
नारायणं विभुं देवं शरण्यं शरणं गताः ।
॥ देवा ऊचुः ॥ त्रायस्व नोऽद्य देवेश हिरण्यकशिपोर्भयात् । त्वं हि नः परमो देवस्त्वं हि नः परमो गुरुः । २२७०
त्वं हि नः परमो धाता ब्रह्मादीनां सुरेश्वर । उत्फुल्लाम्बुजपत्राक्ष शत्रुपक्षभयावह ।
क्षयाय दितिवंशस्य शरणं त्वं भवस्व नः ।
॥ विष्णुरुवाच ॥ भयं त्यजध्वममरा अभयं वो ददाम्यहं । तथैव त्रिदिवं देवाः प्रतिपद्यत मा चिरं ।
एष तं सगणं दैत्यं वरदानेन दर्पितं । अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहं ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा स भगवान् विसृज्य त्रिदशेश्वरान् । सभां हिरण्यकशिपोर्जगाम हरिरीश्वरः । २२७५
नरस्य कृत्वार्द्धतनुं सिंहस्यार्द्धतनुं तथा । नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना ।
जीमूतघनसङ्काशो जीमूतघननिस्वनः । जीमूतघनदीप्तौजा जीमूत इव वेगवान् ।
दैत्यं सोऽतिबलं दृप्तं दृप्तशार्दूलविक्रमं । दृप्तैर्दैत्यगणैर्गुप्तं हतवानेकपाणिना ।
नृसिंह एष कथितो भूयोऽयं वामनोऽपरः । यत्र वामनमाश्रित्य रूपं दैत्यविनाशनं ।
बलेर्ब्बलवतो यज्ञे बलिना विष्णुना पुरा । विक्रमैस्त्रिभिरक्षोभ्याः क्षोभितास्ते महासुराः । २२८०
विप्रचित्तिः शिविः शङ्कुरयःशङ्कुस्तथैव च । अयःशिरा अश्वशिरा हयग्रीवश्च वीर्य्यवान् ।
वेगवान् केतुमानुग्रः सोग्रव्यग्रो महासुरः । पुष्करः पुष्कलश्चैव साश्वोऽश्वपतिरेव च ।
प्रह्लादोऽश्वशिराः कुम्भः संह्रादो गगनप्रियः । अनुह्रादो हरिहरौ वराहः संहरो रुजः ।
शरभः शलभश्चैव कुपनः कोपनः क्रथः । बृहत्कीर्त्तिर्महाजिह्वः शङ्कुकर्णो महास्वनः ।
दीर्घजिह्वोऽर्कनयनो मृदुचापो मृदुप्रियः । वायुर्गविष्ठो नमुचिः शम्बरो विक्षरो महान् । २२८५

चन्द्रहन्ता क्रोधहन्ता क्रोधवर्द्धन एव च । कालकः कालकेयश्च वृत्रः क्रोधो विरोचनः ।
गविष्ठश्च वरिष्ठश्च प्रलम्बनरकावुभौ । इन्द्रतापनवातापी केतुमान् बलदर्पितः ।
असिलोमा पुलोमा च बाष्कलः प्रमदो मदः । खसृमः कालवदनः करालः केशिकः शरः ।
एकाक्षश्चन्द्रहा राहुः संह्रादः शम्बरस्वनः । शतघ्नीचक्रहस्ताश्च तथा परिघपाणयः ।
अश्मयन्त्रायुधोपेता भिन्दिपालायुधास्तथा । शूलोलूखलहस्ताश्च परश्वधधरास्तथा ।　२२८०
पाशमुद्गरहस्ताश्च तथा मुषलपाणयः । महाशिलाप्रहरणाः शूलहस्ताश्च दानवाः ।
नानाप्रहरणा घोरा नानावेशा महाजवाः । कूर्मकुक्कुटवक्त्राश्च काकोलूकमुखास्तथा ।
खरोष्ट्रवदनाश्चैव वराहवदनास्तथा । भीमा मकरवक्त्राश्च क्रोष्टुवक्त्राश्च दानवाः ।
आखुदर्दुरवक्त्राश्च घोरा वृकमुखास्तथा । मार्ज्जारशशवक्त्राश्च महावक्त्रास्तथापरे ।
नक्रमेषाननाः शूरा गोजाविमहिषाननाः । गोधाशल्लकवक्त्राश्च क्रौञ्चवक्त्राश्च दानवाः ।　२२८५
गरुडास्याः खड्गमुखा मयूरवदनास्तथा । गजेन्द्रचर्मवसनास्तथा कृष्णाजिनाम्बराः ।
चीरसंवृतगात्राश्च तथा वल्कलवाससः । उष्णीषिणो मुकुटिनस्तथा कुण्डलिनोऽसुराः ।
कवचिनो लम्बशिखाः कम्बुग्रीवाः सुवर्चसः । नानावेशधरा दैत्या नानामाल्यानुलेपनाः ।
स्वान्यायुधानि संगृह्य प्रदीप्तानीव तेजसा । क्रममाणं हृषीकेशमुपावर्त्तन्त सर्व्वशः ।
प्रमथ्य सर्व्वान् दैतेयान् पादहस्ततलैस्ततः । रूपं कृत्वा महाभीमं जहाराशु स मेदिनीम् ।　२२९०
तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे । नभः प्रक्रममाणस्य नाभ्यां किल समास्थितौ ।
परमाक्रममाणस्य जानुदेशे व्यवस्थितौ । विष्णोरतुलवीर्य्यस्य वदन्त्येवं द्विजातयः ।
हृत्वा स मेदिनीं कृत्स्नां हत्वा चासुरपुङ्गवान् । ददौ शक्राय त्रिदिवं विष्णुर्बलवतां वरः ।
एष ते वामनो नाम प्रादुर्भावो महात्मनः । वेदविद्भिर्द्विजैरेतत् कथ्यते वैष्णवं यशः ।
भूयो भूतात्मनो विष्णोः प्रादुर्भावो महात्मनः । दत्तात्रेय इति ख्यातः क्षमया परया युतः ।　२२९५
तेन नष्टेषु वेदेषु प्रक्रियासु मखेषु च । चातुर्वर्ण्ये च संकीर्णे धर्म्मे शिथिलतां गते ।
अभिवर्द्धति चाधर्म्मे सत्ये नष्टेऽनृते स्थिते । प्रजासु शीर्य्यमाणासु धर्म्मे चाकुलतां गते ।
सयज्ञाः सक्रिया वेदाः प्रत्यानीता हि तेन वै । चातुर्वर्ण्यमसङ्कीर्णं कृतं तेन महात्मना ।
तेन हैहयराजस्य कार्त्तवीर्य्यस्य धीमतः । वरदेन वरो दत्तो दत्तात्रेयेण धीमता ।
एतद्बाहुद्वयं यत्ते तत्ते मम कृते नृप । शतानि दश बाहूनां भविष्यन्ति न संशयः ।　२३००
पालयिष्यसि कृत्स्नाञ्च वसुधां वसुधेश्वर । दुर्निरीक्ष्योऽरिवृन्दानां युद्धस्थश्च भविष्यसि ।
एष ते वैष्णवः श्रीमान् प्रादुर्भावोऽद्भुतः शुभः । कथितो वै महाराज यथाश्रुतमरिन्दम ।
भूयश्च जामदग्न्येति प्रादुर्भावो महात्मनः । यत्र बाहुसहस्रेण निर्जितं दुर्जयं रणे ।
रामोऽर्ज्जुनमनीकस्थं जघान नृपतिं प्रभुः । रथस्थं पार्थिवं रामः पातयित्वार्ज्जुनं भुवि ।
धर्षयित्वा यथाकामं क्रोशमानञ्च मेघवत् । कृत्स्नं बाहुसहस्रञ्च चिच्छेद भृगुनन्दनः ।　२३०५

कीर्त्तितं कीर्त्तनीयस्य सर्व्वलोकगुरोः प्रभोः । प्रीयन्ते पितरस्तस्य प्रादुर्भावानुकीर्त्तनात् ।
विष्णोरमितवीर्य्यस्य यः शृणोति कृताञ्जलिः ।

एतास्तु योगेश्वरयोगमायाः श्रुत्वा विमुच्येत नरस्तु पापैः । ऋद्धिं समृद्धिं विपुलांश्च भोगान् प्राप्नोति शीघ्रं भगवत्प्रसादात् ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

॥ वैशम्पायन उवाच ॥ विस्तरं शृणु मे विष्णोर्हरित्वञ्च कृते युगे । वैकुण्ठत्वञ्च देवेषु कृष्णत्वं मानुषे युगे ।
ईश्वरत्वं हि तस्येदं कर्म्मणां गहनां गतिं । सम्प्रत्यतीतां भाव्यांश्च शृणु राजन् यथातथं । २२८०
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान् प्रभुः । नारायणो ह्यनन्तात्मा प्रभवोऽव्यय एव च ।
एष नारायणो भूत्वा हरिरासीत् कृते युगे । ब्रह्मा शक्रश्च सोमश्च धर्म्मः शुक्रो बृहस्पतिः ।
अदितेरपि पुत्रत्वमेत्य यादवनन्दनः । एष विष्णुरिति ख्यात इन्द्रादवरजोऽभवत् ।
प्रसादजं ह्यस्य विभोरादित्याः पुत्रजन्म तत् । वधार्थं सुरशत्रूणां दैत्यदानवरक्षसां ।
प्रधानात्मा पुरा ह्येष ब्रह्माणमसृजत् प्रभुः । सोऽसृजत् पूर्व्वपुरुषः पुराकल्पे प्रजापतीन् । २२८५
ते तन्वानास्तनूस्तत्र ब्रह्मवंशाननुत्तमान् । तेभ्योऽभवन्महात्मभ्यो बहुधा ब्रह्म शाश्वतं ।
एतदाश्चर्य्यभूतन्तु विष्णोः कर्म्मानुकीर्त्तनं । कीर्त्तनीयस्य लोकेषु कीर्त्यमानं निबोध मे ।
वृत्ते वृत्रवधे तात वर्त्तमाने कृते युगे । आसीत्त्रैलोक्यविख्यातः संग्रामस्तारकामयः ।
तत्र स्म दानवा घोराः सर्व्वे संग्रामदर्पिताः । घ्नन्ति देवगणान् सर्व्वान् सयक्षोरगराक्षसान् ।
ते वध्यमाना विमुखाः क्षीणप्रहरणा रणे । त्रातारं मनसा जग्मुर्देवं नारायणं प्रभुं । २२९०
एतस्मिन्नन्तरे मेघा निर्व्वाणाङ्गारवर्च्चसः । सार्कचन्द्रग्रहगणं छादयामासुरम्बरं ।
चलद्विद्युद्गणाविद्धा घोरा निर्ह्रादकारिणः । तेऽन्योन्यवेगाभिहताः प्रववुः सप्त मारुताः ।
दीप्ततोयाश्मनीपातैर्वज्रवेगानिलाकुलैः । ररास घोरैरुत्पातैर्दह्यमानमिवाम्बरं ।
पेतुरुल्कासहस्राणि पेतुराकाशगान्यपि । न्युब्जानि च विमानानि प्रपतन्त्युत्पतन्ति च ।
चतुर्युगान्तपर्य्याये लोकानां यद्भयं भवेत् । तादृशान्येव रूपाणि तस्मिन्नुत्पातदर्शने । २२९५
तमसा निष्प्रभं सर्व्वं न प्राज्ञायत किञ्चन । तिमिरौघपरिक्षिप्ता न रेजुश्च दिशो दश ।
निशेव रूपिणी काली कालमेघावगुण्ठिता । द्यौर्न भात्यभिभूतार्का घोरेण तमसा वृता ।
तान् घनौघान् सतिमिरान् दोर्भ्यां संक्षिप्य स प्रभुः । वपुः सन्दर्शयामास दिव्यं कृष्णवपुर्हरिः ।
बलाहकाञ्जननिभं बलाहकतनूरुहं । तेजसा वपुषा चैव कृष्णं कृष्णमिवाचलं ।
दीप्तपीताम्बरधरं तप्तकाञ्चनभूषणं । धूमान्धकारवपुषं युगान्ताग्निमिवोत्थितं । २३००
चतुर्द्विगुणपीनांसं किरीटच्छन्नमूर्द्धजं । चामीकरकराकारैरायुधैरुपशोभितं ।
चन्द्रार्ककिरणोद्योतं गिरिकूटमिवोच्छ्रितं । नन्दकानन्दितकरं शराशीविषधारिणं ।
शक्तिचित्रं हलोदग्रं शङ्खचक्रगदाधरं । विष्णुशैलं क्षमामूलं श्रीवत्सं शार्ङ्गधन्विनं ।
हर्य्यश्ववरसंयुक्ते सुपर्णध्वजशोभिते । चन्द्रार्कचक्ररचिते मन्दराक्षकृताकरे ।

अनन्तरश्मिसंयुक्ते दुर्द्दर्शमिव भास्करे। तारकाचित्रकुमुदे घनसन्तवनन्मुरे। २३०५
भयेष्वभयदं व्योम्नि देवा दैत्यपराजिताः। ददृशुस्ते स्थितं देवं दिव्यलोकमये रथे।
ते कृताञ्जलयः सर्व्वे देवाः शक्रपुरोगमाः। जयशब्दं पुरस्कृत्य शरण्यं शरणङ्गताः।
स तेषां ता गिरः श्रुत्वा विष्णुर्दैवतदैवतः। मनश्चक्रे विनाशाय दानवानां महामृधे।
आकाशे तु स्थितो विष्णुः सोऽनन्ते पुरुषोत्तमः। उवाच देवताः सर्व्वाः सप्रतिज्ञमिदं वचः।
शान्तिं व्रजत भद्रं वो माभैष्ट मरुतां गणाः। जिता मे दानवाः सर्व्वे त्रैलोक्यं प्रतिगृह्यताम्। २३१०
ते तस्य सत्यसन्धस्य विष्णोर्वाक्येन तोषिताः। देवाः प्रीतिं परां जग्मुः प्राश्यैवामृतमुत्तमम्।
ततस्तमः संह्रियते विनेशुश्च बलाहकाः। प्रववुश्च शिवा वाताः प्रसन्नाश्च दिशो दश।
ज्योतींषि च प्रभावन्ति चन्द्रश्चक्रुः प्रदक्षिणम्। प्रदीप्तानिव तेजांसि चक्रुरर्कं प्रदक्षिणम्।
न विग्रहं ग्रहाश्चक्रुः प्रसेदुश्चापि सिन्धवः। नीरजस्का बभूवुश्च नाकमार्गादयस्त्रयः।
यथार्थमूहुः सरितो नापि चुक्षुभिरेऽर्णवाः। शुभा भूतेन्द्रियगणा नराणामन्तरात्मसु। २३१५
महर्षयो वीतशोका वेदानुच्चैरधीयत। यज्ञेषु च हविः स्वादु शिवमश्नाति पावकः।
प्रवृत्तधर्म्माः संवृत्ता लोका मुदितमानसाः। प्रीत्या परमया युक्ता देवदेवस्य भाषते।
विष्णोर्दैत्यप्रतिज्ञस्य श्रुत्वारिनिधने गिरम्।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

॥ वैशम्पायन उवाच ॥ ततोऽभयं विष्णुवचः श्रुत्वा दैतेयदानवाः। उद्योगं परमं चक्रुर्युद्धाय युधि दुर्ज्जयाः।
मयस्तु काञ्चनमयं त्रिनल्वायतमव्ययम्। चतुश्चक्रं सुविपुलं सुकल्पितमहायुधम्। २३२०
किङ्किणीजालनिर्घोषं द्वीपिचर्म्मपरिष्कृतम्। रुचिरं रत्नजालैश्च हेमजालैश्च भूषितम्।
ईहामृगगणाकीर्णं पक्षिभिश्च विराजितम्। दिव्यास्त्रतुणीरधरं पयोधरनिनादितम्।
स्वक्षं ध्वजवरं धुर्य्यं सूपस्थमगमोपमम्। गदापरिघसम्पूर्णं मूर्त्तिमन्तमिवार्णवम्।
हेमकेयूरवलयं स्वर्णमण्डलकूवरम्। सपताकध्वजोदग्रं सादित्यमिव मन्दरम्।
गजेन्द्राम्भोदसदृशं लम्बकेयूरवर्च्चसम्। युक्तमृक्षसहस्रेण सहस्राम्बुदनादितम्। २३२५
दीप्तमाकाशगं दिव्यं रथं पररथारुजम्। अध्यतिष्ठद्रणाकाङ्क्षी मेरुं दीप्त इवांशुमान्।
तारस्तु क्रोशविस्तारमायसं वायसध्वजम्। शैलोत्करसमाकीर्णं नीलाञ्जनचयोपमम्।
काललोहाष्टचरणं लोहेशायुगकूवरम्। तिमिरोद्गारकिरणं गर्ज्जन्तमिव तोयदम्।
लोहजालेन महता सगवाक्षेण दंशितम्। आयसैः परिघैः शूलैः क्षेपणीयैश्च लेष्टुभिः।
प्रासैः पाशैश्च विततैरसमैश्च मुद्गरैः। शोभितं चासनीयैश्च तोमरैः सपरश्वधैः। २३३०
उद्यतं द्विषतां हेतोर्द्वितीयमिव मन्दरम्। युक्तं खरसहस्रेण सोऽध्यारोहद्रणाक्षमम्।
विरोचनस्तु संक्रुद्धो गदापाणिरवस्थितः। प्रमुखे तस्य सैन्यस्य दीप्तशृङ्ग इवाचलः।
युक्तं हयसहस्रेण ह्यग्रीवस्तु दानवः। स्यन्दनं वाहयामास सपत्नानीकमर्द्दनम्।

व्यायतं वज्रसारवत् धनुर्विस्फारयन्महत् । वराहः प्रमुखे तस्थौ सावरोध इवाचलः ।
खरस्तु विक्षरन्दर्पान्नेत्राभ्यां रोषजं जलं । स्फुरद्दन्तोष्ठवदनः संग्रामं सोऽभ्यकाङ्क्षत । २४९५
त्वष्टा त्वष्टाश्वयुक्तं यानमास्थाय दानवः । व्यूहितो दानवैर्व्यूहैः परिचक्राम वीर्य्यवान् ।
विप्रचित्तिसुतः श्वेतः श्वेतकुण्डलभूषणः । श्वेतशैलप्रतीकाशो युद्धायाभिमुखः स्थितः ।
अरिष्टो बलिपुत्रस्तु वरिष्ठोऽद्रिशिलायुधः । युद्धायाभिमुखस्तस्थौ धराधर इवाचलः ।
किशोरस्त्वतिसंहर्षात् किशोर इव चोदितः । अभवद्दैत्यसैन्यस्य मध्ये रविरिवोदितः ।
लम्बस्तु लम्बमेघाभ प्रलम्बाम्बरभूषणः । दैत्यव्यूहगतो भाति सनीहार इवांशुमान् । २५००
स्वर्भानुर्वक्त्रयोधी च दशनौष्ठेक्षणायुधः । हसंस्तिष्ठति दैत्यानां प्रमुखे स महाग्रहः ।
अन्ये हयगता भान्ति गजस्कन्धेषु चापरे । सिंहव्याघ्रगतास्त्वन्ये वराहर्क्षेषु चापरे ।
केचित् खरोष्ट्रयातारः केचित्तोयदवाहनाः । नानापक्षिगतास्त्वन्ये केचित् पवनवाहनाः ।
पत्तिनस्त्वपरे दैत्या भीषणा विकृताननाः । एकपादा द्विपादाश्च नर्दन्तो युद्धकाङ्क्षिणः ।
प्रक्ष्वेडमाना बहवः स्फोटयन्तश्च ते भुजान् । हृष्टशार्दूलनिर्घोषा नेदुर्दानवपुङ्गवाः । २५०५
ते गदापरिघैरुग्रैर्धनुर्व्यायामशालिनः । बाहुभिः परिघाकारैस्तर्ज्जयन्ति स्म देवताः ।
प्रासैः पाशैश्च खड्गैश्च तोमराङ्कुशपट्टिशैः । चिक्रीडुस्ते शतघ्नीभिः शितधारैश्च मुद्गरैः ।
गण्डशैलैश्च शैलैश्च परिघैश्चोत्तमायुधैः । चक्रैश्च दैत्यप्रवराश्चक्रुरानन्दितं बलं ।
एवं दानवसैन्यन्तत् सर्व्वं युद्धमदोत्कटं । देवताभिमुखं तस्थौ मेघानीकमिवोद्धतं ।
तदद्भुतं दैत्यसहस्रगाढं वाय्वग्नितोयाम्बुदशैलकल्पं । बलं रणायाभ्युदयात्युदीर्णं युयुत्सयोन्मत्तमिवावभासे । २५१०

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

॥ वैशम्पायन उवाच ॥ श्रुतस्ते दैत्यसैन्यस्य विस्तरस्तात विग्रहे । सुराणां सर्व्वसैन्यस्य वैष्णवं विस्तरं शृणु ।
आदित्या वसवो रुद्रा अश्विनौ च महाबलौ । सबलाः सानुगाश्चैव संनह्यन्त यथाक्रमं ।
पुरुहूतस्तु पुरतो लोकपालः सहस्रदृक् । ग्रामणीः सर्व्वदेवानामारुरोह सुरद्विपं ।
सव्ये चास्य रथः पार्श्वे पक्षिप्रवरवेगवान् । सुचारुचक्रचरणो हेमवज्रपरिष्कृतः ।
देवगन्धर्व्वयक्षौघैरनुयातः सहस्रशः । दीप्तिमद्भिः सदस्यैश्च ब्रह्मर्षिभिरभिष्टुतः । २५१५
वज्रविस्फूर्जितोद्धूतैर्विद्युदिन्द्रायुधार्पितैः । गुप्तो बलाहकगणैः पर्व्वतैरिव कामगैः ।
यमारूढः स भगवान् पर्य्येति मघवान् जगत् । हविर्द्धाने स्म गायन्ति विप्रा मखमुखे स्थिताः ।
स्वर्गे शक्रानुयानेषु देवतूर्य्यनिनादिषु । सेन्द्रं समुपनृत्यन्ति शतशोऽप्सरसां गणाः ।
केतुना वंशराजेन भ्राजमानो यथा रविः । युक्तो हयसहस्रेण मनोमारुतरंहसा ।
स स्यन्दनवरो भाति युक्तो मातलिना तदा । कृत्स्नः परिवृतो मेरुर्भास्करस्येव तेजसा । २५२०
यमस्तु दण्डमुद्यम्य कालयुक्तश्च मुद्गरं । तस्थौ सुरसहानीके दैत्यान्नादेन भीषयन् ।
चतुर्भिः सागरैर्गुप्तो लेलिहानैश्च पन्नगैः । शङ्खमुक्ताङ्गदधरो बिभ्रत्तोयमयं वपुः ।

कालपाशस्तु संरब्धं यमः प्रतिभयोपमः । वाग्भीरितमहोद्गारैः कुर्व्वन् क्रीडाः सहस्रशः ।
पाण्डरोद्धूतवसनः प्रवालरुचिराधरः । मणिश्यामोत्तमवपुर्हारैरुत्तमविभूषितः ।
वरुणः पाशधृग्मध्ये देवानीकस्य तस्थिवान् । युद्धवेलामभिलषन् भिन्नवेल इवार्णवः । २६६५
यक्षराक्षससैन्येन गुह्यकानां गणैरपि । मणिश्यामोत्तमवपुः कुबेरो नरवाहनः ।
युक्तश्च शङ्खपद्माभ्यां निधीनामधिपः प्रभुः । देवो वित्तेश्वरः श्रीमान् गदापाणिरदृश्यत ।
विमानयोधी धनदो विमाने पुष्पके स्थितः । स राजराजः शुशुभे युद्धार्थी नरवाहनः ।
प्रेक्षमाणः शिवसखः साक्षादिव शिवः स्वयं । दैत्यस्य संमुखे देवः स्थितवान् समरोत्सुकः ।
पूर्व्वं पक्षं सहस्राक्षः पितृराजस्तु दक्षिणं । वरुणः पश्चिमं पक्षमुत्तरं नरवाहनः । २६७०
चतुर्युगाश्च चत्वारो लोकपाला बलोत्कटाः । स्वासु दिक्षु स्वरक्षन् वै तस्य देवबलस्य ते ।
सूर्य्यः सप्ताश्वयुक्तेन रथेनाम्बरगामिना । श्रिया जाज्वल्यमानेन दीप्यमानैश्च रश्मिभिः ।
उदयास्तमयचक्रेण मेरुपर्य्यन्तगामिना । त्रिदिवद्वारचिह्नेन तपता लोकमव्ययं ।
सहस्ररश्मियुक्तेन भ्राजमानेन तेजसा । रराज मध्ये देवानां द्वादशात्मा दिनेश्वरः ।
सोमः श्वेतहये भाति स्यन्दने शीतरश्मिवान् । हिमतोयप्रपूर्णाभिर्भाभिराप्लावयन् जगत् । २६७५
तमृक्षयोगानुगतं शिशिरांशुं द्विजेश्वरं । शशच्छायाङ्किततनुं नैशस्य तमसः क्षयं ।
ज्योतिषामीश्वरं व्योम्नि रसानां रसदं प्रभुं । ओषधीनां परित्राणान्निधानममृतस्य च ।
जगतः प्रथमं भागं सौम्यं शीतमयं रसं । ददृशुर्दानवाः सोमं हिमप्रहरणं स्थितं ।
यः प्राणः सर्व्वभूतानां पञ्चधा भिद्यते नृषु । सप्तस्कन्धगतो लोकांस्त्रीन्दधार चराचरान् ।
यमाहुरग्नेर्यन्तारं प्रभवं प्रभवमीश्वरं । सप्तस्वरगता यस्य योनिर्गीतिरुदीर्यते । २६८०
यं वदन्त्युत्तमं भूतं यं वदन्त्यशरीरिणं । यमाहुराकाशगमं शीघ्रगं शब्दयोनिनं ।
स वायुः सर्व्वभूतायुरुद्धूतस्तेन तेजसा । ववौ प्रव्यथयन्दैत्यान् प्रतिलोमः स तोयदः ।
मरुतो देवगन्धर्व्वा विद्याधरगणैः सह । चिक्रीडुरसिभिः शुभ्रैर्निर्मुक्तैः पन्नगैरिव ।
सृजन्तः सर्पपतयस्तीव्रं रोषमयं विषं । शरभूताः सुरेन्द्राणां चेरुर्व्यात्तमुखा दिवि ।
पर्व्वतास्तु शिलाशृङ्गैः शतशाखैश्च पादपैः । उपतस्थुः सुरगणान् प्रहर्त्तुं दानवं बलं । २६८५
यः स देवो हृषीकेशः पद्मनाभस्त्रिविक्रमः । कृष्णवर्त्मा युगान्ताभो विश्वस्य जगतः प्रभुः ।
समुद्रयोनिर्मधुहा हव्यभुक् क्रतुसत्कृतः । भूरापो व्योम भूतात्मा शमः शान्तिकरोऽरिहा ।
जगद्योनिर्ज्जगद्बीजो जगद्गुरुरुदारधीः । सोऽर्कमग्निमिवोद्यन्तमुद्यम्योत्तमतेजसं ।
चरिष्णुममरानीके चक्रं चक्रगदाधरः । सव्ये विन्यस्य मुसलं सवितुर्मण्डलं यथा ।
सव्येनालम्ब्य महतीं सर्व्वासुरविनाशिनीं । करेण कालीं महतीं शत्रुकालप्रदां गदां । २६९०
शेषैर्भुजैः प्रदीप्तानि भुजगारिध्वजः प्रभुः । दधारायुधजातानि शार्ङ्गादीनि महायशाः ।
स कश्यपस्यात्मभवं द्विजं भुजगभोजनं । पवनाधिकसम्पाते गगनक्षोभणं खगं ।

अथ मृगव्याघमायायां भयदां तामसीं दृढाम् । सुगान्ते लोकदग्धीं सृष्टिमाविश्य वह्निना ।
सा ददाह ततः सर्व्वं मायामयविकल्पिता । दग्धाश्चादित्यवपुषः सद्य तमसुरादये ।
मायामौर्व्वीं समासाद्य दह्यमाना दिवौकसः । भेजिरे चन्द्रविषयं शीतांशुसलिलं पुरं ।
ते दह्यमाना चौर्व्वेण तेजसा भ्रष्टतेजसः । संसुर्व्वेषितं देवाः सन्तप्ताः शरणैषिणः । ११९५
सन्तप्ते मायया सैन्ये दह्यमाने च दानवैः । चोदितो देवराजेन वरुणो वाक्यमब्रवीत् ।
॥ वरुण उवाच ॥ पुरा ब्रह्मर्षिः शक्र तपस्तेपे सुदारुणं । ऊर्व्वः पूर्व्वं च तेजस्वी सदृशो ब्रह्मणो गुणैः ।
तं तपन्तमिवादित्यं तपसा जगदव्ययं । उपतस्थुर्मुनिगणा देवा देवर्षिभिः सह ।
हिरण्यकशिपुश्चैव दानवो दानवेश्वरः । ऋषिं विज्ञापयामास पुरा परमतेजसं ।
ते तमूचुर्ब्रह्मर्षयो वचनं धर्म्मसंहितं । ऋषिवंशेषु भगवंश्छिन्नमूलमिदं कुलं । १२००
एकस्त्वमनपत्यश्च गोत्रं यच्चानुवर्त्तसे । कौमारं व्रतमास्थाय क्लेशमेवानुवर्त्तसे ।
बहूनि विप्रगोत्राणि मुनीनां भावितात्मनां । एकदेशानि तिष्ठन्ति विभक्तानि विना प्रजाः ।
कुलेषूच्छन्नभूतेषु तेषु नो नास्ति कारणं । भवांश्च तपसा श्रेष्ठः प्रजापतिसमद्युतिः ।
तत् प्रवर्त्तस्व वंशाय वर्द्धयात्मानमात्मना । समाधत्स्वौर्व्विनं तेजो द्वितीयां कुरु वै तनुं ।
स एवमुक्तो मुनिभिर्मुनिर्मर्म्मणि ताडितः । जगर्हे तानृषिगणान् वचनञ्चेदमब्रवीत् । १२०५
यथायं शाश्वतो धर्म्मो मुनीनां विहितः पुरा । आर्षं हि सेवतां कर्म्म वन्यमूलफलाशिनां ।
ब्रह्मयोनौ प्रसूतस्य ब्राह्मणस्यात्मदर्शिनः । ब्रह्मचर्य्यं सुचरितं ब्रह्माणमपि चालयेत् ।
द्विजानां वृत्तयस्तिस्रो ये गृहाश्रमवासिनः । अस्माकन्तु वने वृत्तिर्वन्याश्रमनिवासिनां ।
अब्भक्षा वायुभक्षाश्च दन्तोलूखलिकास्तथा । अश्मकुट्टा निरन्नाश्च दशपञ्चतपाश्च ये ।
एते तपसि तिष्ठन्तो व्रतैरपि सुदुश्चरैः । ब्रह्मचर्य्यं पुरस्कृत्य प्रार्थयन्ते परां गतिं । १२१०
ब्रह्मचर्य्याद् ब्राह्मणस्य ब्राह्मणत्वं विधीयते । एवमाहुः परे लोके ब्रह्म ब्रह्मविदो जनाः ।
ब्रह्मचर्य्ये स्थितं धैर्य्यं ब्रह्मचर्य्ये स्थितं तपः । ये स्थिता ब्रह्मचर्य्येषु ब्राह्मणास्ते दिवि स्थिताः ।
नास्ति योगं विना सिद्धिं नास्ति सिद्धिं विना यशः । नास्ति लोके यशोमूलं ब्रह्मचर्य्यात् परं तपः ।
यन्निगृह्येन्द्रियग्रामं भूतग्रामञ्च पञ्चकं । ब्रह्मचर्य्यं समाधत्ते किमतः परमं तपः ।
अयोगे केशधरणमसङ्कल्पे व्रतक्रिया । अब्रह्मचर्य्ये चर्य्या च त्रयः स्याद्दम्भसंज्ञितं । १२१५
क्व दाराः क्व च संयोगः क्व च भावविपर्य्ययः । यत्रेयं ब्रह्मणा सृष्टा मनसा मानसी प्रजा ।
यद्यस्ति तपसो वीर्य्यं युष्माकममितात्मनां । सृजध्वं मानसान् पुत्रान् प्राजापत्येन कर्म्मणा ।
मनसा निश्चिता योनिराधातव्या तपस्विना । नदारयोनौ बीजम्वा व्रतयुक्त तपस्विना ।
यदिदं लुप्तधर्म्मार्थं युष्माभिरपि निर्भयैः । व्याहृतं सद्भिरत्यर्थमसद्भिरिव मे मतं ।
वपुर्दीप्तान्तरात्मानमेव कृत्वा मनोमयं । दारयोगं विना स्रक्ष्ये पुत्रमात्मतनूरुहं । १२२०
एवमात्मानमात्मा मे द्वितीयं जनयिष्यति । वन्येनानेन विधिना दिधक्षन्तमिव प्रजाः ।

ऊर्व्वस्तु तपसा विष्टो निवेश्योरुं हुताशने । ममन्थैकेन दर्भेण सुतस्य प्रभवारणिं ।
तस्योरुं सहसा भित्त्वा ज्वालामाली निरिन्धनः । जगतो दहनाकाङ्क्षी पुत्रोऽग्निः समपद्यत ।
ऊर्व्वस्योरुं विनिर्भिद्य और्व्वो नामान्तको ऽनलः । दिधक्षन्निव लोकांस्त्रीन् जज्ञे परमकोपनः ।
उत्पन्नमात्रश्चोवाच पितरं दीनया गिरा । क्षुधा मे बाधते तात जगद्भक्ष्ये त्यजस्व मां । २४९५
त्रिदिवारोहिभिर्ज्वालैर्जृम्भमाणो दिशो दश । निर्दहन् सर्व्वभूतानि ववृधे सोऽन्तकोऽनलः ।
एतस्मिन्नन्तरे ब्रह्मा सर्व्वलोकहितः प्रभुः । आजगाम मुनिर्यत्र असृजत् पुत्रमुत्तमं ।
स ददर्शोरुमूर्व्वस्य दीप्यमानं सुताग्निना । और्व्वकोपाग्निसन्तप्तान् लोकांश्च ऋषिभिः सह ।
तमुवाच ततो ब्रह्मा मुनिमूर्व्वं सभाजयन् । पुत्रेदं धार्य्यतां तेजो लोकानां क्रियतां दया ।
अस्यापत्यस्य ते विप्र करिष्ये स्थानमुत्तमं । निवासं तस्य दास्यामि प्राशनं चामृतोपमं । २५००
तथ्यमेतन्मम वचः शृणु त्वं वदताम्बर ।
॥ ऊर्व्व उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे भगवान् विभोः । मतिमेतां ददातीह परमानुग्रहाय वै ।
प्रभातकाले सम्प्राप्ते काङ्क्षितव्ये समागमे । भगवंस्तर्पितः पुत्रः कैर्हव्यैः प्राप्स्यते सुखं ।
कुत्र चास्य निवासः स्याद्भोजनञ्च किमात्मकं । विधास्यति भवानस्य वीर्य्यतुल्यं महौजसः ।
॥ ब्रह्मोवाच ॥ वड़वामुखेऽस्य वसतिः समुद्रस्य भविष्यति । मम योनिर्जलं विप्र तस्य तोयमयं वपुः । २५०५
तत्रायमास्तां निरतः पिबन् वारिमयं हविः । तद्धविश्च पुत्रस्य विसृजाम्यालयञ्च तत् ।
ततो युगान्ते भूतानामेष चाहञ्च सुव्रत । सहितौ विचरिष्यावो निष्पुराणकरावुभौ ।
एषोऽग्निरन्तकाले तु सलिलाशी मया कृतः । दहनः सर्व्वभूतानां सदेवासुररक्षसां ।
एवमस्त्विति सोऽप्यग्निः संवृतज्वालमण्डलः । प्रविवेशार्णवमुखं निक्षिप्य पितरि प्रभां ।
प्रतियातस्ततो ब्रह्मा ते च सर्व्वे महर्षयः । और्व्वस्याग्नेः प्रभावज्ञाः स्वां स्वां गतिमुपाश्रिताः । २५१०
हिरण्यकशिपुर्दृष्ट्वा तदद्भुतमपूजयत् । ऊर्व्वं प्रणतसर्व्वाङ्गो वाक्यञ्चेदमुवाच ह ।
॥ हिरण्यकशिपुरुवाच ॥ भगवन्नद्भुतमिदं निर्वृत्तं लोकसाक्षिकं । तपसा ते मुनिश्रेष्ठ परितुष्टः पितामहः ।
अहन्तु तव पुत्रस्य तव चैव महाव्रत । भृत्य इत्यवगन्तव्यः साध्योऽस्मि यदि कर्म्मणा ।
तव वश्यत्वमापन्नस्तवैवाराधने रतः । सीदेयञ्च मुनिश्रेष्ठ तवैव स्यात् पराजयः ।
॥ ऊर्व्व उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यस्य तेऽहं गुरुः स्मृतः । नास्ति ते मत्प्रसादेन भयमद्येह सुव्रत । २५१५
इमाञ्च मायां गृह्णीष्व मम पुत्रेण निर्म्मितां । निरिन्धनामग्निमयीं दुःस्पर्शां पावकैरपि ।
एषा ते स्वस्य वंशस्य वशगारिविनिग्रहे । रक्षत्यात्मपक्षञ्च परांश्च प्रहरिष्यति ।
एवमस्त्विति संगृह्य प्रणम्य मुनिपुङ्गवं । जगाम त्रिदिवं हृष्टः कृतार्थो दानवेश्वरः ।
सैषा दुर्विषहा माया देवैरपि दुरासदा । और्व्वेण निर्म्मिता पूर्व्वं पावकेनोर्व्वसूनुना ।
तस्मिंस्तु व्युत्थिते दैत्ये निर्वीर्य्यैषा न संशयः । शापो ह्यस्याः पुरा दत्तः सृष्टा येनैव तेजसा । २५२०
यद्येषा प्रतिहन्तव्या कर्त्तव्यश्च भवान् सुखी । दीयतां मे सखा ब्रह्म तोययोनिर्निशाकरः ।

तेनाहं सहितः शक्र यादोभिश्च समाहितः । मायामेतां हनिष्यामि त्वत्प्रसादान्न संशयः ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ वैशम्पायन उवाच ॥ एवमस्त्विति संहृष्टः शक्रस्त्रिदशवर्द्धनः । सन्दिदेशागतः सोमं युद्धाय शिशिरायुधं ।

॥ शक्र उवाच ॥ गच्छ सोम सहायत्वं कुरु पाशधरस्य वै । असुराणां विनाशाय जयार्थञ्च दिवौकसां ।

त्वमप्रतिमवीर्य्यश्च ज्योतिषाञ्चेश्वरेश्वरः । त्वन्मयं सर्व्वलोकानां रसं रसविदो विदुः । ११८५

क्षयवृद्धी तवाव्यक्ते सागरस्येव मण्डले । परिवर्त्तस्यहोरात्रं कालं जगति योजयन् ।

लोकच्छायामयं लक्ष्म तवाङ्के शशसंज्ञितं । न विदुः सोम देवाश्च ये च नक्षत्रयोगिनः ।

त्वमादित्यपथादूर्द्धं ज्योतिषाञ्चोपरि स्थितः । तमः प्रोत्सार्य्य महसा भासयस्यखिलं जगत् ।

श्वेतभानुर्हिमज्योतिर्ज्योतिषामधिपः शशी । अब्दकृत् कालयोगात्मा इज्यो यज्ञरसो ऽव्ययः ।

ओषधीशः क्रियायोनिरम्भोयोनिरनुष्णभाक् । शीतांशुरमृताधारश्चपलः श्वेतवाहनः । ११९०

त्वं कान्तिः कान्तवपुषां त्वं सोमः सोमपायिनां । सौम्यस्त्वं सर्व्वलोकानां तिमिरघ्नस्त्वमृक्षराट् ।

तद्गच्छ त्वं सहानेन वरुणेन वरूथिना । शमयस्वासुरीं मायां यया दह्याम संयुगे ।

॥ सोम उवाच ॥ यन्मां वदसि युद्धार्थे देवराज वरप्रद । एष वर्षामि शिशिरं दैत्यमायापकर्षणं ।

एतान्मच्छीतनिर्दग्धान् पश्यस्व हिमवेष्टितान् । विमायान् विमदांश्चैव दानवांस्तु महामृधे ।

॥ वैशम्पायन उवाच ॥ ततो हिमकरोत्सृष्टाः सवाष्पा हिमवृष्टयः । वेष्टयन्ति स्म तान् घोरान् दैत्यान्मेघगणा इव । ११९५

तौ पाशशुक्लायुधिनौ वरुणेन्दू महाहवे । जघ्नतुर्हिमपातैश्च पाशपातैश्च दानवान् ।

द्वावम्बुनाथौ समरे तौ पाशहिमयोधिनौ । मृधे चेरतुरम्भोभिः क्षुब्धाविव महार्णवौ ।

ताभ्यामाप्लावितं सैन्यं तद्दानवमदृश्यत । जगत्संवर्त्तकाम्भोदैः प्रवृष्टैरिव संवृतं ।

तावुद्यतांशुपाशौ तु शशाङ्कवरुणावुभौ । शमयामासतुर्म्मायां देवौ तां दैत्यनिर्म्मितां ।

शीतांशुजालनिर्द्दग्धाः पाशैश्च स्यन्दिता मृधे । न शेकुश्चलितुं दैत्या विशिरस्का इवाद्रयः । १२००

शीतांशुनिहतास्ते तु पेतुर्द्दैत्या हिमार्द्दिताः । हिमप्लाविनसर्व्वाङ्गा निरूष्माण इवाग्नयः ।

तेषान्तु दिवि दैत्यानां विपरीतप्रभाणि ह । विमानानि विचित्राणि पतन्ति चोत्पतन्ति च ।

तान् पाशहस्तच्छयितांश्छादितान् शीतरश्मिना । मयो ददर्श मायावी दानवान्दिवि दानवः ।

स शिलाजालविततां गण्डशैलाट्टहासिनीं । पादपोत्कटकूटाग्रां कन्दराकीर्णकाननां ।

सिंहव्याघ्रगणाकीर्णां नदद्भिर्द्दैत्ययूथपैः । ईहामृगगणाकीर्णां पवनाघूर्णितद्रुमां । १२०५

निर्म्मितां स्वेन पुत्त्रेण क्रौञ्चेन दिवि कामगां । प्रथितां पार्व्वतीं मायां ससृजे स समन्ततः ।

सा साश्मशब्दैः शिलावर्षैः प्रपतद्भिश्च पादपैः । निजघ्ने देवसङ्घांस्तान्दानवांश्चाप्यजीवयत् ।

नैशाकरी वारुणी च मायेऽन्तर्द्दधतुस्ततः । अश्मभिश्चायसघनैः कीर्णा देवगणा रणे ।

साश्मसङ्घातविषमा द्रुमपर्व्वतसङ्कटा । अभवद्घोरसञ्चारा पृथिवी पर्व्वतैरिव ।

नानाहतोऽश्मभिः कश्चिच्छिलाशृङ्गाप्यनाश्रितः । नानिरुद्धो द्रुमगणैर्द्देवो ऽदृश्यत संयुगे । १२१०

तदपभ्रष्टधनुषं भग्नप्रहरणाविलं । निष्प्रयत्नं सुरानीकं वर्ज्जयित्वा गदाधरं ।
स हि युद्धगतः श्रीमानीशो न स्म व्यकम्पत । सहिष्णुत्वाज्जगत्स्वामी न चुक्रोध गदाधरः ।
कालज्ञः कालमेघाभः समैक्षत् कालमाहवे । देवासुरविमर्द्दं स द्रष्टुकामो जनार्द्दनः ।
ततो भगवता दिष्टौ रणे पावकमारुतौ । मायाया मयसृष्टायाः प्रवृद्धायाः शमाय वै ।
ततः प्रवृत्तावन्योन्यं प्रहृष्टौ ज्वालवेगिनौ । चोदितौ विष्णुवाक्येन तां मायामपकर्षतां । २६१५
ताभ्यामुद्भ्रान्तमेघाभ्यां प्रवृद्धाभ्यां महाहवे । दग्धा सा पार्व्वती माया भस्मीभूता ननाश ह ।
सोऽनिलोऽनलसंयुक्तः सोऽनलश्चानिलाकुलः । दैत्यसेनां ददहतुर्युगान्तेष्विव मूर्च्छितौ ।
वायुः प्रधावितस्तत्र पश्चादग्निश्च मारुतात् । चेरतुर्दानवानीके क्रीडन्तावनिलानलौ ।
भस्मावयवभूतेषु प्रपतत्सु पतत्सु च । दानवानां विमानेषु ज्वलत्सूच्चैश्च पावके ।
वातस्कन्धापविद्धेषु विमानेषु समन्ततः । मायाबन्धे विनिर्दग्धे स्तूयमाने गदाधरे । २६२०
निष्प्रयत्नेषु दैत्येषु त्रैलोक्ये मुक्तबन्धने । संप्रहृष्टेषु देवेषु साधु साध्विति सर्व्वशः ।
जये दशशताक्षस्य मयस्य च पराजये । दिक्षु सर्व्वासु शुद्धासु प्रवृत्ते धर्म्मसंस्तरे ।
अपावृते चन्द्रपथे स्वयनस्थे दिवाकरे । प्रकृतिस्थेषु लोकेषु त्रिषु चारित्रबन्धुषु ।
अभिन्नबन्धने मृत्यौ हूयमाने हुताशने । यज्ञभागिषु देवेषु स्वर्गार्थं दर्शयत्सु च ।
लोकपालेषु सर्व्वेषु दिक्षु संयानवर्त्तिषु । भावे तपसि शुद्धानामभावे पापकर्म्मिणां । २६२५
देवपक्षे प्रमुदिते दैत्यपक्षे पराजिते । त्रिपादविग्रहे धर्म्मे अधर्म्मे पादविग्रहे ।
अपावृतमहाद्वारे वर्त्तमाने च सत्पथे । स्वधर्म्मस्थेषु वर्णेषु लोकेष्वाश्रमेषु च ।
प्रजारक्षणयुक्तेषु भ्राजमानेषु राजसु । गीयमानासु गाथासु देवसंस्तवनादिषु ।
प्रशान्तकल्मषे लोके शान्ते तमसि दारुणे । अग्निमारुतयोस्तस्मिन् वृत्ते संग्रामकर्म्मणि ।
तन्मया विमला लोकास्ताभ्यां जयकृतप्रियाः । पूर्व्वदेवभयं श्रुत्वा मारुताग्निकृतं महत् । २६३०
कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यत । भास्कराकारमुकुटः शिञ्जिताङ्गदभूषणः ।
मन्दराचलसङ्काशो महारजतसंवृतः । शतप्रहरणोदग्रः शतबाहुः शताननः ।
शतशीर्षः स्थितः श्रीमान् शतशृङ्ग इवाचलः । कक्षे महति संवृद्धो निदाघ इव पावकः ।
धूम्रकेशो हरितश्मश्रुर्दंष्ट्रौष्ठपुटाननः । त्रैलोक्यान्तरविस्तारी नामयन् वपुषा क्षितिं ।
बाहुभिस्तुलयन् व्योम क्षिपन् पद्भ्यां महीधरान् । ईरयन्मुखनिश्वासैर्वृष्टिमन्तो बलाहकान् । २६३५
तिर्य्यगायतरक्ताक्षं मन्दरोदग्रवर्च्चसं । दिधक्षन्तमिवायान्तं सर्व्वान् देवगणान्मृधे ।
तर्ज्जयन्तं सुरगणान् छादयन्तं दिशो दश । संवर्त्तकाले तृषितं दृप्तं मृत्युमिवोत्थितं ।
सुतलेनोच्छ्रयवता विपुलाङ्गुलिपर्व्वणा । लम्बाभरणपूर्णेन किञ्चिच्चलितवर्म्मणा ।
उच्छ्रितेनाग्रहस्तेन दक्षिणेन वपुष्मता । दानवान् देवनिहतानुत्तिष्ठध्वमिति ब्रुवन् ।
समरे कालनेमिं तं क्षिपतां कालनेमिनं । वीक्षन्ति स्म सुराः सर्व्वे भयवित्रस्तलोचनाः । २६४०

ते स्म वीक्षन्ति भूतानि क्रमन्तं कालनेमिनं। त्रिविक्रमं विक्रमन्तं नारायणमिवापरं।
सोऽक्षुभ्यन् प्रथमं पादं मारुताघूर्णिताम्बरः। प्राक्रामदसुरो युद्धे त्रासयन् सर्व्वदेवताः।
मयेनासुरेन्द्रेण परिष्वक्तः क्रमन् रणे। कालनेमिर्बभौ दैत्यः सविष्णुरिव मन्दरः।
अथ विव्यथिरे देवाः सर्व्वे सेन्द्रपुरोगमाः। दृष्ट्वा कालमिवायान्तं कालनेमिं भयावहं।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि सप्तचत्वारिंशोऽध्यायः॥ ४७॥

॥ वैशम्पायन उवाच॥ दानवांस्तांस्तु पिप्रीषुः कालनेमिर्महासुरः। व्यवर्द्धत महातेजास्तपान्ते जलदो यथा। २६८५
तं त्रैलोक्यान्तरगतं दृष्ट्वा ते दानवेश्वराः। उत्तस्थुरपरिश्रान्ताः प्राप्येवामृतमुत्तमं।
ते वीतभयसन्त्रासा मयतारपुरोगमाः। तारकामयसंग्रामे सततं जितकाशिनः।
रेजुरायोधनगता दानवा युद्धदुर्म्मदाः। अस्त्रमभ्यस्यतां तेषां व्यूहांश्च परिधावतां।
प्रेक्षताञ्चाभवत् प्रीतिर्दानवं कालनेमिनं। ये तु तत्र मयस्यासन् मुख्या युद्धविशारदाः।
तेऽपि सर्व्वे भयं त्यक्त्वा हृष्टा योद्धुमुपस्थिताः। मयस्तारो वराहश्च हयग्रीवश्च वीर्य्यवान्। २६९०
विप्रचित्तिसुतः श्वेतः खरलम्बावुभावपि। अरिष्टो बलिपुत्रश्च किशोरोष्ट्रौ तथैव च।
स्वर्भानुश्चामरप्रख्यो वक्त्रयोधी महासुरः। एते चास्त्रविदः सर्व्वे सर्व्वे तपसि संस्थिताः।
दानवाः कृतिनो जग्मुः कालनेमिनमुत्तमं। ते गदाभिश्च गुर्व्वीभिश्चक्रैश्च सपरश्वधैः।
कालकल्पैश्च मुषलैः क्षेपणीयैश्च मुद्गरैः। अश्मभिश्चाद्रिसदृशैर्गण्डशैलैश्च दंशितैः।
पट्टिशैर्भिन्दिपालैश्च परिघैश्चोत्तमायुधैः। घातनीभिश्च गुर्व्वीभिः शतघ्नीभिस्तथैव च। २६९५
युगैर्यन्त्रैश्च निर्म्मुक्तैरर्गलैश्चायताडितैः। दोर्भिश्चायतपीनांसैः पाशैः प्रासैश्च मूर्च्छितैः।
सर्पैर्ल्लेलिह्यमानैश्च विसर्पद्भिश्च सायकैः। वज्रैः प्रहरणीयैश्च दीप्यमानैश्च तोमरैः।
विकोशैश्चासिभिर्नीलैः शूलैश्च शितनिर्म्मलैः। ते वै सन्दीप्तमनसः संप्रहृतोत्तमायुधाः।
कालनेमिं पुरस्कृत्य तस्थुः संग्राममूर्द्धनि। सा दीप्तशस्त्रप्रवरा दैत्यानां रुरुचे चमूः।
द्यौर्निमीलितनक्षत्रा सघनेवाम्बुदागमे। देवतानामपि चमूः संमुदे शक्रपालिता। २७००
दीप्ताशीतोष्णरूपेण चन्द्रभास्करवर्च्चसा। वायुवेगवती सौम्या तारागणपताकिनी।
तोयदाविद्धवसना ग्रहनक्षत्रहासिनी। यमेन्द्रवरुणैर्गुप्ता धनदेन च धीमता।
सम्प्रदीप्ताग्निपवना नारायणपरायणा। सा समुद्रौघसदृशी दिव्या देवमहाचमूः।
रराजास्त्रवती भीमा यक्षगन्धर्व्वशालिनी। तयोश्चम्वोस्तदानीन्तु बभूव स समागमः।
द्यावापृथिव्योः संयोगे यथा स्याद्युगपर्य्यये। तद्युद्धमभवद्घोरं देवदानवसङ्कुलं। २७०५
क्षमापराक्रममयं दर्पस्य विनयस्य च। निश्चक्रमुर्ब्बलाभ्यान्तु ताभ्यां भीमाः सुरासुराः।
पूर्व्वापराभ्यां संरब्धाः सागराभ्यामिवाम्बुदाः। ताभ्यां बलाभ्यां संहृष्टाश्चेरुस्ते देवदानवाः।
वनाभ्यां पार्व्वतीयाभ्यां पुष्पिताभ्यां यथा गजाः। समाजघ्नुस्तदा भेरीः शङ्खान्दध्मुश्च नैकशः।
स शब्दो द्यां भुवञ्चैव दिशश्च समपूरयत्। ज्याघाततलनिर्घोषो धनुषामपि निस्वनः।

दुन्दुभीनाञ्च नदतां दैत्यानन्वद्रवुः खगाः । तेऽन्योन्यमभिसम्पेतुः पातयन्तः परस्परं । २४७०
बभञ्जुर्ब्बाहुभिर्बाहून् द्वन्द्वमन्ये युयुत्सवः । देवतास्त्वासृजन् घोरान् परिघांश्चोत्तमायसान् ।
सत्वरुराजो निस्त्रिंशान् गदा गुर्व्वीश्च दानवाः । गदानिपातैर्भग्नाङ्गा बाणैश्च शकलीकृताः ।
परिपेतुर्भृशं केचित् न्युब्जाः केचित् सवव्रिरे । ततो रथैः सतुरगैर्विमानैश्चाशुगामिभिः ।
संपेतुस्ते सुसंरब्धा रोषादन्योन्यमाहवे । संवर्त्तमानाः समरे निवर्त्तन्तस्तथापरे ।
रथा रथैर्न्यरुध्यन्त पदातांश्च पदातिभिः । तेषां रथानां तुमुलः स शब्दः शब्दवाहिनां । २४७५
बभूवाथ प्रसक्तानां नभसीव पयोमुचां । बभञ्जिरे रथान् केचित् केचित् संमृदिता रथैः ।
सम्बाधमेके संप्राप्य न शेकुश्चलितुं रथाः । अन्योऽन्यं समरेऽन्ये तु दोर्भ्यामुत्क्षिप्य दर्पिताः ।
संह्रादमानाभरणा जघ्नुस्तत्रासिचर्म्मिणः । अस्त्रैरन्ये विनिर्भिन्ना वेमुरक्तं हता युधि ।
क्षरज्जलानां सदृशा जलदानां समागमे । तदस्त्रशस्त्रग्रथितं क्षिप्तोत्क्षिप्तगदाचितं ।
देवदानवसंक्षुब्धं सङ्कुलं युद्धमाबभौ तद्दानवमहामेघं देवायुधतडित्प्रभं । २४८०
अन्योन्यबाणवर्षान्तं युद्धदुर्द्दिनमाबभौ । एतस्मिन्नन्तरे क्रुद्धः कालनेमिर्महासुरः ।
व्यवर्द्धत समुद्रौघैः पूर्य्यमाण इवाम्बुदः । तस्य विद्युच्चलापीडाः प्रदीप्ताशनिवर्षिणः ।
गात्रान्नगशिरप्रख्याद्विनिष्पेतुर्बलाहकाः । क्रोधान्निःश्वसतस्तस्य भ्रूभेदस्वेदवर्षिणः ।
साग्निनिस्फोटपवनान्मुखान्निश्चेरुरर्च्चिषः । तिर्य्यगूर्द्ध्वञ्च गगने ववृधुस्तस्य बाहवः ।
पञ्चास्याः कृष्णवपुषो लेलिहाना इवोरगाः । सोऽस्त्रजालैर्बहुविधैर्द्धनुर्भिः परिघैरपि । २४८५
दिव्यमाकाशमावव्रे पर्व्वतैरुच्छ्रितैरिव । सोऽनिलोद्धूतवसनस्तस्थौ संग्राममूर्द्धनि ।
सन्ध्यातपग्रस्तशिखः साक्षान्मेरुरिवाचलः । ऊरुवेगप्रक्षिप्तैः शैलशृङ्गाग्रपादपैः ।
अपातयद्देवगणान् वज्रेणेव महागिरीन् । बाहुभिः शस्त्रनिस्त्रिंशैश्छिन्नभिन्नशिरोरसः ।
न शेकुश्चलितुं देवाः कालनेमिहता युधि । मुष्टिभिर्निहताः केचित् केचिच्च विदलीकृताः ।
यक्षगन्धर्व्वपतयः पेतुः सह महोरगैः । तेन वित्रासिता देवाः समरे कालनेमिना । २४९०
न शेकुर्य्यत्नवन्तोऽपि यत्नं कर्त्तुं विचेतसः । तेन शक्रः सहस्राक्षः स्यन्दितः शरबन्धनैः ।
ऐरावतगतः सङ्ख्ये चलितुं न शशाक ह । निर्ज्जलाम्भोदसदृशो निर्जलार्णवसप्रभः ।
निर्व्यापारः कृतस्तेन विपाशो वरुणो मृधे । रणे वैश्रवणस्तेन परिघैः कालरूपिभिः ।
विलपन् लोकपालेशस्त्याजितो धनदः क्रियां । यमः सर्व्वहरस्तेन मृत्युप्रहरणो रणे ।
याम्यामवस्थामगमितः स्वां दिशमाविशत् । स लोकपालान्निर्जित्य कृत्वा तेषाञ्च कर्म्म तत् । २४९५
दिक्षु सर्व्वासु देहं स्वं चतुर्द्धा विदधे तदा । स नक्षत्रपथं गत्वा दिव्यं स्वर्भानुदर्शितं ।
जहार लक्ष्मीं सोमस्य यच्चास्य विषयं महत् । चालयामास दीप्तांशुं स्वर्गद्वारात् सभास्करं ।
सायनञ्चास्य विषयं जहार दिनकर्म्म च । सोऽग्निं देवमुखं दृष्ट्वा चकारात्ममुखे शयं ।
वायुञ्च तरसा जित्वा चकारात्मवशानुगं । स समुद्रान् समानीय सर्व्वाश्च सरितो बलात् ।

चकाराप्रवशे वीर्य्यादिन्द्रभूताश्च विश्रवः । अपः स वरुणाः कृत्वा दिविश्चा याश्च भूमिजाः । २५१०
आपयामास जगतीं सुगुप्तां धरणीधरैः । स स्वयम्भूरिवाभाति महाभूतपतिर्महान् ।
सर्व्वलोकमयो दैत्यः सर्व्वलोकभयावहः । स लोकपालैकवपुश्चन्द्रसूर्य्यग्रहात्मवान् ।
पावकानिलसङ्घातो रराज युधि दानवः । पारमेष्ठ्ये स्थितं स्थाने लोकानां प्रभवाप्यये ।
तं तुष्टुवुर्दैत्यगणा देवा इव पितामहं ।
इति श्री महाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ वैशम्पायन उवाच ॥ पश्य तं नाध्यवसन्त विपरीतेन कर्म्मणा । वेदा धर्म्मः क्षमा सत्यं श्रीश्च नारायणाश्रया । २५१५
स तेषामनुपस्थानात् सक्रोधो दानवेश्वरः । वैष्णवं पदमन्विच्छन् ययौ नारायणान्तिकं ।
स ददर्श सुपर्णस्थं शङ्खचक्रगदाधरं । दानवानां विनाशाय भ्रामयन्तं गदां शुभां ।
सजलाम्भोदसदृशं विद्युत्सदृशवाससं । स्वारूढं स्वर्णपत्राढ्यं शिखिनं काश्यपं खगं ।
दृष्ट्वा दैत्यविनाशाय रणे स्वस्थमिव स्थितं । दानवो विष्णुमक्षोभ्यं बभाषे क्षुभ्यमानसः ।
अयं स रिपुरस्माकं पूर्व्वेषां दानवर्षिणां । अर्णवावासिनश्चैव मधोर्वै कैटभस्य च । २५२०
अयं स विग्रहोऽस्माकमशाम्यः किल कथ्यते । येन नः संयुगेष्वद्य बहवो दानवा हताः ।
अयं स निर्घृणो युद्धे स्त्रीबालवधकारकः । येन दानवनारीणां सीमन्तोद्धरणं कृतं ।
अयं स विष्णुर्देवानां वैकुण्ठश्च दिवौकसां । अनन्तो भोगिनामप्सु स्वयम्भूश्च स्वयम्भुवः ।
अयं स मायी देवानामस्माकं विप्रिये स्थितः । अस्य क्रोधेन महता हिरण्यकशिपुर्हतः ।
अस्य छायामुपाश्रित्य देवा मखमुखे स्थिताः । आज्यं महर्षिभिर्दत्तमश्नुवन्ति त्रिधा हुतं । २५२५
अयं नो निधने हेतुः सर्व्वेषां देवविद्विषां । अस्य चक्रे प्रविष्टानि कुलान्यस्माकमाहवे ।
अयं स किल युद्धेषु सुरार्थे त्यक्तजीवितः । सवितुस्तेजसा युक्तं चक्रं क्षिपति शत्रुषु ।
अयं स कालो दैत्यानां कालभूते मयि स्थिते । अतिक्रान्तस्य कालस्य फलं प्राप्स्यति दुर्म्मतिः ।
दिष्ट्येदानीं समक्षं मे विष्णुरेष समागतः । अद्य मद्बाणनिष्पिष्टो मामेव प्रणमिष्यति ।
यास्याम्यपचितिं दिष्ट्या पूर्व्वेषामद्य संयुगे । इमं नारायणं हत्वा दानवानां भयावहं । २५३०
क्षिप्रमेव वधिष्यामि रणे नारायणाश्रयान् । जात्यन्तरगतोऽप्येष मृधे बाधति दानवान् ।
एषोऽनन्तः पुरा भूत्वा पद्मनाभ इति स्मृतः । जघानैकार्णवे घोरे तावुभौ मधुकैटभौ ।
विनिवेश्य स्वके ऊरौ निहतौ दानवेश्वरौ । द्विधा भूतं वपुः कृत्वा सिंहार्द्धं नरसंस्थितं ।
पितरं मे जघानैष हिरण्यकशिपुं पुरा । शुभं गर्भमधत्तैनमदितिर्देवतारणिः ।
यज्ञकाले बलेर्य्यो वै कृत्वा वामनरूपतां । त्रीन् लोकानाजहारैष क्रममाणस्त्रिभिः क्रमैः । २५३५
भूयस्त्विदानीं समरे सम्प्राप्ते तारकामये । मया सह समागम्य सह देवैर्विनङ्क्ष्यति ।
स एवमुक्त्वा बहुधा क्षिपन्नारायणं रणे । वाग्भिरप्रतिरूपाभिर्युद्धमेवाभ्यरोचयत् ।
क्षिप्यमाणोऽसुरेन्द्रेण न चुकोप गदाधरः । क्षमाबलेन महता सस्मितं वाक्यमब्रवीत् ।

ते गदाचक्रनिर्द्दग्धा गतसत्त्वा गतासवः । गगनाद्भ्रष्टसर्व्वाङ्गा निपेतुर्धरणीतले ।
तेषु सर्व्वेषु दैत्येषु हतेषु पुरुषोत्तमः । तस्थौ शक्रप्रियं कृत्वा कृतकर्म्मा गदाधरः ।
तस्मिन् विमर्द्दे निर्वृत्ते संग्रामे तारकामये । तं देशमाजगामाशु ब्रह्मा लोकपितामहः ।
सर्व्वैर्ब्रह्मर्षिभिः सार्द्धं गन्धर्व्वैः साप्सरोगणैः । देवदेवो हरिं देवं पूजयन् वाक्यमब्रवीत् ।
॥ ब्रह्मोवाच ॥ कृतं देव महत् कर्म्म सुराणां शल्यमुद्धृतं । वधेनानेन दैत्यानां वयञ्च परितोषिताः ।
योऽयं हतस्त्वया विष्णो कालनेमी महासुरः । त्वमेकोऽस्य मृधे हन्ता नान्यः कश्चन विद्यते ।
एष देवान् परिभवन् लोकांश्च सचराचरान् । ऋषीणां कदनं कृत्वा मामपि प्रतिगर्ज्जति ।
तदनेन तवोग्रेण परितुष्टोऽस्मि कर्म्मणा । यदयं कालतुल्याभः कालनेमी त्वया हतः ।
तदा गच्छस्व भद्रं ते गच्छाम दिवमुत्तमां । ब्रह्मर्षयस्त्वां तत्रस्थाः प्रतीक्षन्ते सदोगताः
अहं सहर्षयश्चैव तव त्वां वदताम्वर । अर्च्चयिष्याम विधिवद्गीर्भिर्दिव्याभिरच्युत ।
किञ्चाहं तव दास्यामि वरं वरभृताम्वर । सुरेष्वपि सदैत्येषु वराणां वरदो भवान् ।
निर्य्यातयैतत्त्रैलोक्यं स्फीतं निहतकण्टकं । तस्मिन्नेव मृधे विष्णो शक्राय सुमहात्मने ।
एवमुक्तो भगवता ब्रह्मणा हरिरव्ययः । देवान् शक्रमुखान् सर्व्वानुवाच शुभया गिरा ।
॥ विष्णुरुवाच ॥ श्रूयतां त्रिदशाः सर्व्वे यावन्तो वै समागताः । श्रवणावहितैर्द्देवैः पुरस्कृत्य पुरन्दरं ।
अस्मिन्नः समरे सर्व्वे कालनेमिमुखा हताः । दानवा विक्रमोपेताः शक्रादपि महत्तराः ।
तस्मिन्महति संक्रन्दे द्वावेव तु विनिःसृतौ । वैरोचनिश्च दैत्येन्द्रः स्वर्भानुश्च महाग्रहः ।
तदिष्टां भजतां शक्रो दिशं वरुण एव च । याम्यां यमः पालयतामुत्तराञ्च धनाधिपः ।
ऋक्षैः सह गतो योगं काले चरतु चन्द्रमाः । अब्दं ऋतुमुखं सूर्य्यो भजतामयनैः सह ।
आज्यभागाः प्रवर्त्तन्तां सदस्यैरभिपूजिताः । हूयन्तामग्नयो विप्रैर्वेददृष्टेन कर्म्मणा ।
देवाश्च बलिहोमेन स्वाध्यायेन महर्षयः । श्राद्धेन पितरश्चैव तृप्तिं यान्तु यथासुखं ।
वायुश्चरतु मार्गस्थस्त्रिधा दीप्यतु पावकः । त्रयो वर्णाश्च लोकांस्त्रींस्तर्पयन्त्वात्मजैर्गुणैः ।
क्रतवः संप्रवर्त्तन्तां दीक्षणीयैर्द्विजातिभिः । दक्षिणाश्चोपवर्त्तन्तां यथार्थं सत्रयाजिनां ।
गाश्च सूर्य्यो रसान् सोमो वायुः प्राणांश्च प्राणिषु । तर्पयन्तः प्रवर्त्तन्तां शिवैः सौम्यैश्च कर्म्मभिः ।
यथावदानुपूर्व्व्येण महेन्द्रसलिलोद्भवाः । त्रैलोक्यमातरः सर्व्वाः सागरं यान्तु सिन्धवः ।
दैत्येभ्यस्त्यज्यतां भीतिः शान्तिं भजत देवताः । स्वस्ति वोऽस्तु गमिष्यामि ब्रह्मलोकं सनातनं ।
स्वगृहे स्वर्गलोके वा संग्रामे वा विशेषतः । विश्रम्भो हि न कर्त्तव्यो नित्यं क्षुद्रा हि दानवाः ।
छिद्रेषु प्रहरन्त्येते नैतेषां संस्थितिर्ध्रुवा । सौम्यानामृजुभावानां भवतामार्ज्जवा मतिः ।
अहन्तु दुष्टभावानां युष्माकं सुदुरात्मनां । असम्यग्वर्त्तमानानां नाहं दास्यामि देवताः ।
यदा च सुदुराधर्षं दानवेभ्यो भयं भवेत् । तदा समुपगम्याशु विधास्ये वस्ततोऽभयं ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा सुरगणान् विष्णुः सत्यपराक्रमः । जगाम ब्रह्मणा सार्द्धं ब्रह्मलोकं महायशाः ।

एतदाश्चर्य्यमभवत् संग्रामे तारकामये । दानवानाञ्च विष्णोश्च यथा त्वं परिपृच्छसि ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि ऊनपञ्चाशोऽध्यायः ॥ ४९ ॥

॥ जनमेजय उवाच ॥ ब्रह्मणा देवदेवेन साद्धं सलिलयोनिना । ब्रह्मलोकं गतो ब्रह्मन् वैकुण्ठः किं चकार ह ।

किमर्थञ्चादिदेवेन गीतः सलिलयोनिना । विष्णुर्दैत्यवधे वृत्ते देवैश्च कृतवन्दितः ।

ब्रह्मलोके च किं स्थानं कं वा योगमुपास्त सः । कं वा दधार नियमं स विभुर्भूतभावनः ।

कथं तस्यासतस्तत्र विश्वं जगदिदं महत् । श्रियमाप्नोति विपुलां सुरासुरनरार्च्चितां ।

कथं स्वपिति घर्म्मान्ते बुध्यते जलदक्षये । कथञ्च ब्रह्मलोकस्थो धुरं वहति लौकिकीं ।

चरितं तस्य विप्रेन्द्र दिव्यं भगवतो विधिं । विस्तरेण यथातत्त्वं सर्व्वमिच्छामि वेदितुं ।

॥ वैशम्पायन उवाच ॥ शृणु नारायणस्यादौ प्रवृत्तिं विस्तरेण तु । ब्रह्मलोकं यथा गत्वा ब्रह्मणा सह मोदते ।

कामं तस्य गतिः सूक्ष्मा देवैरपि दुरासदा । यच वक्ष्याम्यहं राजंस्तन्मे निगदतः शृणु ।

एष लोकमयो देवो लोकाश्चैतन्मयास्तथा । एष देवमयश्चैव देवाश्चैतन्मया दिवि ।

अस्य पारं न पश्यन्ति बहवः पारचिन्तकाः । एष पारं परस्यैव लोकानां वेद माधवः ।

अस्य देवान्धकारस्य मार्गितव्यस्य दैवतैः । शृणु वै यत्तदा वृत्तं ब्रह्मलोके पुरातनं ।

स गत्वा ब्रह्मणो लोकं दृष्ट्वा पैतामहं पदं । ववन्दे तानृषीन् सर्व्वान् विष्णुरार्षेण कर्म्मणा ।

सोऽग्निं प्राक्सवने दृष्ट्वा हूयमानं महर्षिभिः । अवन्दत महातेजाः कृत्वा पौर्व्वाह्णिकीं क्रियां ।

स ददर्श मखेष्वाज्यैरिज्यमानं महर्षिभिः । भागं यज्ञियमस्नानं स्वदेहमपरं स्थितं ।

अभिवाद्याभिवाद्यानामृषीणां ब्रह्मवर्च्चसां । परिचक्राम सोऽचिन्त्यो ब्रह्मलोकं सनातनं ।

स ददर्शाग्निकुण्डान् यूपांश्चषालालविभूषितान् । मखेषु च महर्षिभिः सन्नः कृतलक्षणान् ।

आज्यधूमं समाघ्राय शृण्वन् वेदान् द्विजेरितान् । यज्ञैरिज्यन्तमात्मानं पश्यंस्तत्र चचार ह ।

ऊचुस्तमृषयो देवाः सदस्याः सदसि स्थिताः । यज्ञोपवीतभूषाः सर्व्वे पवित्रान्तरपाणयः ।

देवेषु वर्त्तते यद्वै सर्व्वं तद्धि जनार्द्दनात् । यत् प्रवृत्तञ्च देवेभ्यस्तद्विद्धि मधुसूदनात् ।

अग्नीषोममयं लोकं यं विदुर्विदुषो जनाः । तं सोममग्निं लोकञ्च वेद विष्णुं पितामहः ।

क्षीराद्यथा दधि भवेद्दध्नः सर्पिर्यथा भवेत् । मथ्यमानेषु भूतेषु तथा लोका जनार्द्दनात् ।

यथेन्द्रियैश्च भूतैश्च परमात्माभिधीयते । तथा देवैश्च वेदैश्च लोकैश्च विदितो हरिः ।

यथा भूतेन्द्रियावाप्तिर्विहिता भुवि देहिनां । तथा प्राणेश्वरावाप्तिर्देवानां दिवि वैष्णवी ।

मन्त्रिणां मन्त्रफलदः पवित्रं परमात्मवान् । लोकतन्त्रकरो ह्येष मन्त्रैर्यज्ञैश्च हूयते ।

॥ ऋषय ऊचुः ॥ स्वागतं ते सुरश्रेष्ठ पद्मनाभ महाद्युते । इदं यज्ञियमातिथ्यं मन्त्रतः प्रतिगृह्यतां ।

त्वमस्य यज्ञपूतस्य पात्रं पात्रस्य पावनः । अतिथिस्त्वं हि सर्व्वेषां स्वदृष्टः परमो मतः ।

त्वयि योद्धुं गते विष्णो न प्रावर्त्तन्त नः क्रियाः । अवेक्षमाणस्य यज्ञस्य न हि कर्म्म विधीयते ।

सदक्षिणस्य यज्ञस्य त्वमस्तुतिः फलं लभेत् । अथात्मानमिहास्माभिरिज्यमानं निरीक्षसे ।

एवमस्त्विति तान् विप्रान् भगवान् प्रतिपूजयन् । मुमुदे ब्रह्मलोकस्थो ब्रह्मेव हि पितामहः ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

॥ वैशम्पायन उवाच ॥ ऋषिभिः पूजितस्तैस्तु विवेश हरिरीश्वरः । पौराणं गुह्यसदनं दिव्यं नारायणाश्रयं ।

स तद्विवेश हृष्टात्मा तानामन्त्र्य सदोगतान् । प्रणम्य चादिदेवाय ब्रह्मणे पद्मयोनये ।　　२८००

स्वेन नाम्ना परिख्यातं स तन्नारायणाश्रमं । प्रविशन्नेव भगवानायुधानि व्यसर्ज्जयत् ।

स तत्राम्बुपतिप्रख्यं ददर्शालयमात्मनः । स्वधिष्ठितं देवगणैः शाश्वतैश्च महर्षिभिः ।

सम्वर्त्तकाम्बुदोपेतं नक्षत्रानलसङ्कुलं । तिमिरौघपरिक्षिप्तमप्रधृष्यं सुरासुरैः ।

न तत्र विषयो वायोर्नेन्दोर्नापि विवस्वतः । वपुषा पद्मनाभस्य स देशस्तेजसा वृतः ।

स तत्र प्रविशन्नेव जटाभारं समुद्वहन् । सहस्रशीर्षो भूत्वा च शयनायोपचक्रमे ।　　२८०५

लोकानामन्तकालज्ञा काली नयनशालिनी । उपतस्थे महात्मानं निद्रा तं कालरूपिणी ।

स शिश्ये शयने दिव्ये समुद्राम्भोदशीतले । हरिरेकार्णवाकारं व्रतेन व्रतिनाम्बरः ।

तं शयानं महात्मानं भवाय जगतः प्रभुं । उपासाञ्चक्रिरे विष्णुं देवाः सर्षिगणास्तथा ।

तस्य सुप्तस्य शुशुभे नाभिमध्यात् समुत्थितं । आद्यं तच्चासनं पद्मं ब्रह्मणः सूर्य्यसन्निभं ।

सहस्रपत्रं वर्णाढ्यं सुकुमारं सुपुष्पितं । ब्रह्मसूत्रोद्यतकरः स्वपन्नेव महामुनिः ।　　२८१०

आवर्त्तयति लोकानां सर्व्वेषां कालपर्य्ययं । निःसृतास्तस्य वदनान्निश्वासपवनेरिताः ।

प्रजानां पङ्क्तयो घोषैर्निष्पतन्त्युत्पतन्ति च । ते सृष्टाः प्राणिनामोघा विभक्ता ब्रह्मणा स्वयं ।

चतुर्द्धा स्वां गतिं जग्मुः कृतान्तोक्तेन कर्म्मणा । न तं वेद स्वयं ब्रह्मा नापि ब्रह्मर्षयोऽव्ययाः ।

विष्णुं निद्रामयं योगं प्रविष्टं तमसा वृतं । ते तु ब्रह्मर्षयः सर्व्वे पितामहपुरोगमाः ।

न विदुस्तं क्वचित् सुप्तं क्वचिदासीनमासने । जागर्त्ति कोऽत्र कः शेते कश्च सुप्तश्च नेङ्गते ।　　२८१५

को भोगवान् को द्युतिमान् कृष्णात् कृष्णतरश्च कः । विमृषन्ति स्म तं देवा दिव्याभिरुपपत्तिभिः ।

न चैनं शेकुरन्वेष्टुं कर्म्मतो जन्मतोऽपि वा । गाथाभिस्तत्प्रतिष्ठाभिर्ये तस्य चरितं विदुः ।

पुराणास्तं पुराणेषु ऋषयः संप्रचक्षते । श्रूयते चास्य चरितं वेदेष्वपि पुरातनं ।

महापुराणात् प्रभृति परं तस्य न विद्यते । यच्चास्य देवदेवस्य चरितं सुप्रभावजं ।

ते नेमाः श्रुतयो व्याप्ता लौकिक्यो देवजाश्च याः । भवकाले भवत्येष भूतानां भूतभावनः ।　　२८२०

दानवानामभावाय जागर्त्ति मधुसूदनः । यदेनं वीक्षितुं देवा न शेकुः सुप्तमव्ययं ।

ततः स्वपिति घर्म्मान्ते जागर्त्ति जलदक्षये । तस्मिन् सुप्ते न वर्त्तन्ते मन्त्रपूताः क्रतुक्रियाः ।

स हि यज्ञाश्च वेदाश्च यज्ञाङ्गानि च सर्व्वशः । या हि यज्ञगतिः प्रोक्ता स एष पुरुषोत्तमः ।

शरत्प्रवृत्तयज्ञो हि जागर्त्ति मधुसूदनः । तदिदं वार्षिकं चक्रं धारयत्यम्बुदेश्वरः ।

वैष्णवं कर्म्म कुर्व्वाणः सुप्ते विष्णौ पुरन्दरः । या त्वेषा शङ्करी माया निद्रेति जगति स्थिता ।　　२८२५

साऽकस्माद्रूपिणी घोर कालरात्रिर्महीक्षिता । तस्याश्चानुपमोदारा निशा दिवसनाशिनी ।

जीविताद्भुतहरा सा तु सर्व्वप्राणभृतां भुवि । नैतया कश्चिदाविष्टो जृम्भमाणो मुहुर्मुहुः ।

शक्तः प्रसहितुं वेगं मज्जन्निव महार्णवे । ब्राह्मणा भुवि मर्त्यानां अमृता वा कथञ्चन ।

सैषा भवति मर्त्यस्य निद्रा सर्व्वस्य लौकिकी । सुप्रान्ते चोचते सैषा प्रायशो भुवि देहिनां ।

मृत्युकाले च भूतानां प्राणान् छयते भृशं । देवेष्वपि दधारैनां नान्यो नारायणादृते । २८५०

सखी सर्व्वहरस्यैषा पाप्मा विष्णोः शरीरजा । सैषा नारायणमुखे दृष्ट्वा कमललोचना ।

लोकानल्पेन कालेन भजते भूतमोहिनी । एवमेषा हितार्थाय लोकानां कृष्णवर्त्मना ।

भ्रियते सेवनीया हि पत्येव हि पतिव्रता । स तया निद्रयाच्छन्नस्तस्मिन्नारायणाश्रमे ।

शेते स्म भगवान् विष्णुर्मोहयन् जगदव्ययः । तस्य वर्षसहस्राणि शयानस्य महात्मनः ।

जग्मुः कृतयुगश्चैव त्रेता चैव युगोत्तमं । स तु द्वापरपर्य्यन्ते दृष्ट्वा लोकान् सुदुःखितान् । २८५५

प्राबुध्यत महातेजाः स्तूयमानो महर्षिभिः ।

॥ ऋषय ऊचुः ॥ जहीहि निद्रां सहजां भुक्तपूर्व्वामिव स्रजं । इमे ते ब्रह्मणा सार्द्धं देवा दर्शनकाङ्क्षिणः ।

इमे ते ब्रह्मविद्वांसो ब्रह्मसंस्तववादिनः । वर्द्धयन्ते हृषीकेश ऋषयः संशितव्रताः ।

एतेषामात्मभूतानां भूतानामात्मभावन । शृणु विष्णो शुभा वाचो भूयोमान्यनिवासिनां ।

इमे त्वां सप्त मुनयः सहिता मुनिमण्डले । स्तुवन्ति देव दिव्याभिर्गाथाभिर्गीर्भिरच्युत । २८६०

उत्तिष्ठ शतपत्राक्ष पद्मनाभ महाद्युते । कारणं किञ्चिदुत्पन्नं देवानां कार्य्यगौरवात् ।

॥ वैशम्पायन उवाच ॥ स संचिन्त्य जगत् सर्व्वं तिमिरौघं विदारयन् । उदतिष्ठद्धृषीकेशः श्रिया परमया ज्वलन् ।

स ददर्श सुरान् सर्व्वान् समेतान् सपितामहान् । विवक्षून् क्षुभिताश्चैव जगत्यर्थे समागतान् ।

तानुवाच हरिर्देवान्निद्राविश्रान्तलोचनः तत्त्वदृष्टार्थया वाचा धर्म्महेत्वर्थयुक्तया ।

॥ विष्णुरुवाच ॥ कुतो वो विग्रहो देवाः कुतो वा भयमागतं । कस्य वा केन वा कार्य्यं किं वा मयि न वर्त्तते । २८६५

न खल्वकुशलं लोके वर्त्तते दानवोत्थितं । नृणामायासजननं शीघ्रमिच्छामि वेदितुं ।

एष ब्रह्मविदां मध्ये विहाय शयनोत्तमं । शिवाय भवतामर्थे स्थितः किं करवाणि वः ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा विष्णुगदितं ब्रह्मा लोकपितामहः । उवाच परमं वाक्यं हितं सर्व्वदिवौकसां ।

नास्ति किञ्चिद्भयं विष्णो सुराणामसुरान्तक । येषां भवानभयदः कर्णधारो रणे रणे ।

शक्रे जयति देवेशे त्वयि चारिनिसूदने । धर्म्मे प्रयतमानानां दानवानां कुतो भयं । २८७०

सत्ये धर्म्मे च निरतान्मानवान् विगतज्वरान् । नाकालधर्म्मणा मृत्युः शक्नोति प्रसमीक्षितुं ।

मानवानाञ्च पतयः पार्थिवा वै परस्परं । षड्भागमुपयुञ्जाना न भेदं कुर्व्वते मिथः ।

ते प्रजानां शुभकराः करदैरविगर्हिताः । आकरैर्विप्रयुक्तार्थाः कोषमापूरयन्त्युत ।

स्फीतान् जनपदान् स्वान् स्वान् पालयन्तः क्षमापराः । अतोऽस्य चत्वारश्चतुरो वर्णान् जुगुपुरञ्जसा ।

नोद्वेजनीया भूतानां सचिवैः साधुपूजिताः । चतुरङ्गैर्बलैर्युक्ताः षड्गुणानुपभुञ्जते । २८७५

धनुर्व्वेदपराः सर्वे सर्वे वेदेषु निष्ठिताः । यजन्ते च यथाकालं यज्ञैर्विपुलदक्षिणैः ।
वेदानधीत्य दिव्याभिर्व्रतचर्य्याभिर्ब्रह्मचर्य्यया । श्राद्धैर्यज्ञैश्च शतशस्तर्पयन्ति पितामहान् ।
नैषामविदितं किञ्चित्त्रिषु लोकेषु विद्यते । वैदिकं लौकिकञ्चैव धर्म्मशास्त्रोक्तमेव च ।
ते परापरदृष्टार्था महर्षिसमतेजसः । भूयः कृतयुगं कर्त्तुमुत्सहन्ते नराधिपाः ।
तेषामेव प्रभावेण क्षिप्रं वर्षति वासवः । यथार्थञ्च ववुर्वाता विरजस्का दिशो दश । २८८०
निरुत्पाता च वसुधा सुप्रचाराश्च वै ग्रहाः । चन्द्रमाश्च सनक्षत्रः सौम्यञ्चरति योगतः ।
अनुलोमकरः सूर्य्यो अयने द्वे चचार च । हव्यैश्च विविधैस्तृप्तः शुभगन्धो हुताशनः ।
एवं सम्यक् प्रवृत्तेषु निमित्तेषु मखादिषु । तर्पयन्तस्तु महीं कृत्स्नां नृणां कालभयं कुतः ।
तेषां ज्वलितकीर्त्तीनामन्योन्यमनुवर्त्तिनां । राज्ञां बलैर्बलवतां पीड्यते वसुधातलं ।
सेयं भारपरिश्रान्ता पीड्यमाना नराधिपैः । पृथिवी समनुप्राप्ता नौरिवासन्नविप्लवा । २८८५
युगान्तसदृशं रूपं शैलोच्चलितबन्धनं । जलोत्पीडाकुलस्वेदं दर्शयन्ती मुहुर्मुहुः ।
क्षत्रियाणां वपुर्भिश्च तेजसा च बलेन च । नृणाञ्च राष्ट्रैर्विस्तीर्णैः श्राम्यतीव वसुन्धरा ।
पुरे पुरे नरपतिः कोटिसङ्ख्यैर्बलैर्वृतः । राष्ट्रे राष्ट्रे च बहवो ग्रामाः शतसहस्रशः ।
भूमिपानां सहस्रैश्च तेषाञ्च बलिनां बलैः । ग्रामायुतौघैर्गाढेव भूमिर्निर्व्वेदमागता ।
सेयं निरामयं ज्ञात्वा निसृष्टं कालमच्युत । प्राप्ता तवालयं विष्णो भवांश्चास्याः परा गतिः । २८९०
कर्म्मभूमिरियं स्थानां भूमिरेषा व्यथाकुला । यथा न सीदेत्तत् कुर्य्याज्जगत्येषा हि शाश्वती ।
अस्या हि पीडने दोषो महान् स्यान्मधुसूदन । क्रियालोपश्च भूतानां दूषितश्च जगद्भवेत् ।
श्राम्यते व्यक्तमेवैषा पार्थिवौघप्रपीडिता । सहजां या क्षमां त्यक्त्वा चलत्वमचला गता ।
यदस्याः श्रुतवन्तः स्म तच्चापि भवता श्रुतं । भारावतरणार्थं हि मन्त्रयामस्त्वया सह ।
सत्पथे हि स्थिताः सर्व्वे राजानो राज्यवर्द्धनाः । नराणाञ्च त्रयो वर्णा ब्राह्मणाननुयायिनः । २८९५
सर्व्वे सत्यमयं वाक्यं वर्णा धर्म्मपरास्तथा । सर्व्वे वेदपरा विप्राः सर्व्वे विप्रपरा नराः ।
एवं जगति वर्त्तन्ते मनुष्या धर्म्मकारणात् । यथा धर्म्मवधो न स्यात्तथा मन्त्रः प्रवर्त्त्यतां ।
सतां गतिरियं नान्या धर्म्मस्यास्याः सुसाधनं । राज्ञाञ्चैव वधः कार्य्यो धरण्या भारनिर्णये ।
तदागच्छ महाभाग सह वै मन्त्रकारणात् । व्रजामो मेरुशिखरं पुरस्कृत्य वसुन्धरां ।
इतिश्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ वैशम्पायन उवाच ॥ बाढमित्येव सह तैर्दुर्दिनाम्भोदनिःस्वनः । प्रतस्थे दुर्दिनाकारः सदुर्दिन इवाचलः । २९००
समुक्तामणिविद्योतं सचन्द्राश्मोदवर्चसं । सजटामण्डलं कृत्स्नं बिभ्रत् कृष्णवपुर्हरिः ।
स चास्योरसि विस्तीर्णे रोमाञ्चोद्गतराजिमान् । श्रीवत्सो राजते श्रीमान् सनद्धयमुखाश्रितः ।
पीते वसानो वसने लोकानां गुरुरव्ययः । हरिः सोऽभवदासन्नः ससन्ध्याभ्र इवाचलः ।
तं व्रजन्तं सुपर्णेन पद्मयोनिगतानुगं । अनुजग्मुः सुराः सर्व्वे तद्गतासक्तचक्षुषः ।

नातिदीर्घेण कालेन ते गत्वा रत्नपर्व्वतं । ददृशुर्देवतानाञ्च स्वां सभां कामरूपिणीं । २८०५
मेरोः शिखरविन्यस्तां सेवितां सूर्य्यवर्च्चसा । काञ्चनस्तम्भरचितां वज्रवैदूर्य्यतोरणां ।
मनोनिर्म्माणचित्राढ्यां विमानशतमालिनीं । रत्नजालान्तरवतीं कामगां रत्नभूषितां ।
कुसुमरत्नसमाकीर्णां सर्व्वर्त्तुकुसुमोत्कटां । देवमायाधरां दिव्यां निर्म्मितां विश्वकर्म्मणा ।
तां स्पृष्टमनसः सर्व्वे यथास्थानं यथाविधि । यथानिवेशं विबुधा विविशुस्तां सभां शुभां ।
ते निषेदुर्य्ययोक्तेषु विमानेष्वासनेषु च । भद्रासनेषु पीठेषु कुशेष्वास्तरणेषु च । २८१०
ततः प्रभञ्जनो वायुर्ब्रह्मणा साधु चोदितः । मा शब्द इति सर्व्वत्र प्रचकाराथ तां सभां ।
निःशब्दस्तिमिते तस्मिन् समाजे त्रिदिवौकसां । बभाषे धरणी वाक्यं खेदात् करुणभाषिणी ।
॥ धरण्युवाच ॥ त्वया धार्य्या त्वहं देव त्वया वै धार्य्यते जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ।
यत्त्वया धार्य्यते किञ्चित्तेजसा च बलेन च । ततस्तव प्रसादेन मया पश्चात्तु धार्य्यते ।
त्वया धृतं धारयामि नाधृतं धारयाम्यहं । न हि तद्विद्यते भूतं यत्त्वया न तु धार्य्यते । २८१५
त्वमेव कुरुषे वीर नारायण युगे युगे । मम भारावतरणं जगतो हितकाम्यया ।
तवैव तेजसा क्रान्ता रसातलतलं गता । त्रायस्व मां सुरश्रेष्ठ तवैव शरणं गतां ।
दानवैः पीड्यमानाहं राक्षसैश्च दुरात्मभिः । त्वामेव शरणं नित्यमुपयास्ये सनातनं ।
तावन्मेऽस्ति भयं भूयो यावन्न त्वां ककुद्मिनं । शरणं यामि मनसा शतशोऽप्य सहस्रशः ।
अहमादौ पुराणस्य भेदिता पद्मयोनिना । साम्यं कृत्वा कृतौ पूर्व्वं मृण्मयौ द्वौ महासुरौ । २८२०
कर्णस्रोतोभवौ द्वौ हि विष्णोरस्य महात्मनः । महार्णवे प्रस्वपतः काष्ठकुड्यमनौ स्थितौ ।
तौ विवेश स्वयं वायुर्ब्रह्मणा साधुचोदितः । तौ दिवं छादयन्तौ तु ववृधाते महासुरौ ।
वायुप्राणौ तु तौ दृष्ट्वा ब्रह्मा परिमृशञ्छनैः । एकं मृदुतरं मेने कठिनं वेद चापरं ।
नामनी तु तयोश्चक्रे सवितुः सलिलोद्भवः । मृदुस्त्वयं मधुर्नाम कठिनः कैटभोऽभवत् ।
तौ दैत्यौ कृतनामानौ चेरतुर्बलदर्पितौ । सर्व्वमेकार्णवं लोकं युद्धकामौ सुनिर्भयौ । २८२५
तावागतौ समालोक्य ब्रह्मा लोकपितामहः । एकार्णवाम्बुनिचये तत्रैवान्तरधीयत ।
स पद्मे पद्मनाभस्य नाभिमध्यात् समुत्थिते । रोचयामास वसतिं गुप्तां ब्रह्मा चतुर्मुखः ।
तावुभौ जलगर्भस्थौ नारायणपितामहौ । बहून् वर्षगणानप्सु शयानौ न चकम्पतुः ।
अथ दीर्घस्य कालस्य तावुभौ मधुकैटभौ । आजग्मतुस्समुद्देशं यत्र ब्रह्मा व्यवस्थितः ।
दृष्ट्वा तावसुरौ घोरौ महाकायौ दुरासदौ । ब्रह्मणा ताडितो विष्णुः पद्मनालेन वै पुरा । २८३०
उत्पपाताथ शयनात् पद्मनाभो महाद्युतिः । तद्युद्धमभवद्घोरं तयोस्तस्य च वै तदा ।
एकार्णवे तदा लोके त्रैलोक्ये जलतां गते । तदाभूत्तुमुलं युद्धं वर्षसङ्ख्यासहस्रशः ।
न च तावसुरौ युद्धे तदाश्रममवापतुः । अथ दीर्घस्य कालस्य तौ दैत्यौ युद्धदुर्म्मदौ ।
ऊचतुः प्रीतमनसौ देवं नारायणं प्रभुं । प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोः ।

आवां जहि न यत्रोर्व्वी सलिलेन परिप्लुता । इतो च तव पुत्रत्वं प्राप्नुयाव सुरोत्तम ।　　२८६५
यो ह्यावां युधि निर्ज्जेता तस्यावां विहितौ सुतौ । स तु गृह्य मृधे दोर्भ्यां दैत्यौ समभिपीडयन् ।
अस्मत्तु निधनञ्चापि तावुभौ मधुकैटभौ । तौ हतौ चाप्सु तौ तोये वपुर्भ्यामेकतां गतौ ।
मेदो मुमुचतुर्दैत्यौ मथ्यमानौ जलोर्म्मिभिः । मेदसा तज्जलं व्याप्तं ताभ्यामन्तर्दधे ततः ।
नारायणश्च भगवानसृजत् स पुनः प्रजाः । दैत्ययोर्मेदसा छन्ना मेदिनीति ततः स्मृता ।
प्रभावात् पद्मनाभस्य शाश्वती जगती कृता । वराहेण पुरा भूत्वा मार्कण्डेयस्य पश्यतः ।　　२८७०
विषाणेनाहमेकेन तोयमध्यात् समुद्धृता । कृताहं क्रमता भूयस्तदा युष्माकमग्रतः ।
बलेः सकाशाद्दैत्यस्य विष्णुना प्रभविष्णुना । साम्प्रतं खिद्यमानाहं एतमेव गदाधरं ।
अनाथा जगतो नाथं शरण्यं शरणङ्गता । अग्निः सुवर्णस्य गुरुर्गवां सूर्य्यो गुरुः स्मृतः ।
नक्षत्राणां गुरुः सोमो मम नारायणो गुरुः । यदहं धारयाम्येका जगत्स्थावरजङ्गमं ।
मया धृतं धारयते सर्व्वमेतद्गदाधरः । जामदग्न्येन रामेण भारावतरणेच्छया ।　　२८७५
रोषात्त्रिःसप्तकृत्वोऽहं क्षत्त्रियैर्व्विप्रयोजिता । सास्मि वेद्यां समारोप्य तर्पिता नृपशोणितैः ।
भार्गवेण पितुः श्राद्धे कश्यपाय निवेदिता । मांसमेदोऽस्थिदुर्गन्धा दिग्धा क्षत्त्रियशोणितैः ।
रजस्वलेव युवतिः कश्यपं समुपस्थिता । स मां ब्रह्मर्षिरप्याह किमुर्व्वि त्वमवाङ्मुखी ।
वीरपत्नीव्रतमिदं धारयन्ती विषीदसि । साहं विज्ञापितवती कश्यपं लोकभावनं ।
पतयो मे हता ब्रह्मन् भार्गवेण महात्मना । साहं विहीना विक्रान्तैः क्षत्त्रियैः शस्त्रवृत्तिभिः ।　　२८८०
विधवा शून्यनगरा न धारयितुमुत्सहे । तस्मान्मे दीयतां भर्त्ता भगवंस्त्वत्समो नृपः ।
रक्षेत् सग्रामनगरां यो मां सागरमालिनीं । स श्रुत्वा भगवान्वाक्यं बाढमित्यब्रवीत् प्रभुः ।
ततो मां मानवेन्द्राय मनवे संप्रदत्तवान् । सा मनुप्रभवं पुण्यं प्राप्येक्ष्वाकुकुलं महत् ।
विपुलेनास्मि कालेन पार्थिवात् पार्थिवं गता । एवं दत्तास्मि मनवे मानवेन्द्राय धीमते ।
भुक्ता राजसहस्रैस्तु महर्षिकुलसम्भवैः । बहवः क्षत्त्रियाः शूरा मां जित्वा दिवमाश्रिताः ।　　२८८५
ते स्म कालवशं प्राप्य मय्येव प्रलयं गताः । मत्कृते विग्रहा लोके वृत्ता वर्त्तन्त एव च ।
क्षत्त्रियाणां बलवतां संग्रामेष्वनिवर्त्तिनां । एतद्युगान्तप्रवृत्तेन दैवेन परिणाम्यता ।
जगद्धितार्थं क्रियतां राज्ञां हेतुं रणक्षये । यद्यस्ति मयि कारुण्यं भारश्चैवाद्य कारणात् ।
एकश्चक्रधरः श्रीमानभयं मे प्रयच्छतु । यमहं भारसन्तप्ता संप्राप्ता शरणार्थिनी ।
भारा यद्यवरोप्तव्यो विष्णुरेव ब्रवीतु मां ।　　२८९०

॥ इतिश्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि धरणीवाक्ये त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा पृथिवीवाक्यं सर्व्व एव दिवौकसः । तदर्थकृत्यं सञ्चिन्त्य पितामहमथाब्रुवन् ।
भगवन् क्रियतामस्याः पृथिव्या भारसन्ततिः । शरीरकर्त्ता लोकानां त्वं हि लोकसमुद्भवः ।
यत् कर्त्तव्यं महेन्द्रेण यमेन वरुणेन वा । यद्वा कार्य्यं धनेशेन स्वयं नारायणेन वा ।

यद्वा चन्द्रमसा कार्य्यं भास्करेणानिलेन वा। आदित्यैर्वसुभिर्वापि रुद्रैर्वा लोकभावनैः।
अश्विभ्यां वा सुराध्यक्षाभ्यां साध्यैर्वा त्रिदिवालयैः। बृहस्पत्युशनोभ्यां वा कालेन कलिनापि वा। २७९५
महेश्वरेण वा ब्रह्मन् विशाखेन गुहेन वा। यक्षराक्षसगन्धर्व्वैश्चारणैश्च महोरगैः।
पर्व्वतैः शैलमुख्यैर्व्वा सागरैर्व्वा महोर्म्मिभिः। गङ्गामुखीभिर्दिव्याभिः सरिद्भिर्व्वा सुरेश्वर।
क्षिप्रमाज्ञापय विभो कथमंशः प्रयुज्यताम्। यदि ते पार्थिवं कार्य्यं कार्य्यं पार्थिवविग्रहे।
कथमंशावतरणं कुर्व्मः सर्व्वे पितामह। अन्तरीक्षगता ये च पृथिव्यां ये च पार्थिवाः।
सदस्यानाञ्च विप्राणां पार्थिवानां कुलेषु च। अयोनिजाश्चैव तनूः सृजाम जगतीतले। २८००
सुराणामेककार्य्याणां श्रुत्वैतन्निश्चितं महत्। देवैः परिवृतः प्राह वाक्यं लोकपितामहः।
रोचते मे सुरश्रेष्ठा युष्माकमपि निश्चयः। स्वशरीरैः स्वशरीरांशांस्तथा सृजामहे भुवि।
सर्व्व एव सुरश्रेष्ठास्तेजोभिरवरोहत। भावयन्तो भुवं देवीं सन्ध्या त्रिभुवनाश्रयम्।
पार्थिवे भारते वंशे पूर्व्वमेव विनिर्मिता। पृथिव्याः सारमिदं भूयतां यत्र मया कृतम्।
समुद्रोऽह पुरा पूर्व्वं वेलामासाद्य पश्चिमाम्। आसे सार्द्धं तनूजेन कश्यपेन महात्मना। २८०५
कथाभिः पूर्व्ववृत्ताभिर्लोकवृत्तानुगामिभिः। इतिवृत्तैश्च बहुभिः पुराणप्रभवैर्गुणैः।
कुर्व्वतस्तु कथास्तास्ताः समुद्रः सह गङ्गया। समीरमाजगामाशु युक्तस्तोयदमारुतैः।
सवीचीं विषमां कुर्व्वन् गतिं वेगतरङ्गिणीम्। यादोगणविचित्रेण सञ्छन्नस्तोयवाससा।
शङ्खमुक्तामलतनुः प्रवालमणिभूषणः। युक्तश्चन्द्रमसा पूर्णः साभ्रगम्भीरनिस्वनः।
स मां परिभवन्निव स्वां वेलामत्यतिक्रमत्। क्लेदयामास चपलैर्लावणैरम्बुविस्रवैः। २८१०
तञ्च देशं व्यवसितः समुद्रोऽपि समाहितुम्। उक्तः संरब्धया वाचा शान्तोऽसीति ततो मया।
शान्तोऽसीत्युक्तमात्रस्तु तनुत्वं सागरो गतः। संहतोर्म्मितरङ्गौघः स्थितो राजश्रिया ज्वलन्।
भूयश्चैव मया शप्तः समुद्रः सह गङ्गया। सकारणां मतिं कृत्वा युष्माकं हितकाम्यया।
दस्मात् त्वं राजतुल्येन वपुषा समुपस्थितः। गच्छार्णव महीपालो राजैव त्वं भविष्यसि।
तत्रापि सहजां लीलां धारयन् स्वेन तेजसा। भविष्यसि नृपां भर्त्ता भरतानां कुलोद्वहः। २८१५
शान्तोऽसीति मयोक्तस्त्वं यस्मात् तनुतां गतः। शन्तनुर्यशसा लोके ख्यातनामा भविष्यसि।
इयमप्यायतापाङ्गी गङ्गा सर्व्वाङ्गशोभना। रूपिणी वै सरिच्छ्रेष्ठा तत्र त्वामपि यास्यति।
एवमुक्तस्तु मां क्षुब्धः सोऽभिगम्यार्णवोऽब्रवीत्। मां प्रभो देव देवानां किमर्थं शप्तवानसि।
अहं तव विधेयात्मा त्वत्कृतस्त्वत्परायणः। अपापोऽप्यसदृशैर्व्वाक्यैरात्मजं मां किमात्मना।
भगवंस्त्वत्प्रसादेन वेगात् पर्व्वणि वर्द्धितः। यद्यहं चलितो ब्रह्मन् कोऽत्र दोषो ममात्मनः। २८२०
क्षिप्ताभिः पवनैरद्भिः स्पृष्टा यद्यसि पर्व्वणि। अत्र मे भगवन् किन्नु विद्यते शापकारणम्।
उद्धूतैश्च महावातैः प्रवृद्धस्य बलाहकैः। पर्व्वणा चेन्दुयुक्तेन त्रिभिः क्षुब्धोऽस्मि कारणैः।
एवं यद्यपराध्योऽहं कारणैस्त्वत्प्रवर्त्तितैः। अनुमर्हसि मे ब्रह्मन् शापोऽयं विनिवर्त्तताम्।

एवं मयि निराशत्वे शापाच्चिन्तितात्मनि गते । कारणं कुरु देवेश प्रमाणं यदभीप्सितं ।
भवांश्च देव गङ्गाया मानुषत्वात्तयाज्ञया । महोदधिमदीयायाः प्रसादं कर्त्तुमर्हसि । ९९५
तमहं श्लक्ष्णया वाचा महार्णवमथाब्रुवं । अकारणं देवानां वयं शापाभिलेखितं ।
शान्तिं व्रज न भेतव्यं प्रसन्नोऽस्मि महोदधे । शापेऽस्मिन् सरितां नाथ भविष्यं शृणु कारणं ।
गङ्गा च भारते वंशे स्वदेहं स्वेन तेजसा । आधत्स्व सरितां नाथ त्यक्त्वा सागरीं तनुं ।
महोदधे महीपालस्तत्र राजश्रिया वृतः । पालयंश्चतुरो वर्णान् येन सलिलेश्वर ।
इयञ्च तां परित्यज्य बिभ्रती मानुषीं तनुं । तत्कालरमणीयाङ्गी गङ्गा परिचरिष्यति । १०००
अनया सह जाह्नव्या मोदमानो ममाज्ञया । इमं सलिलसंक्लेशं विस्मरिष्यसि सागर ।
त्वरयाचैव कर्त्तव्यं त्वयेदं मम शासनं । प्राजापत्येन विधिना गङ्गया सह सागर ।
वसवः प्रच्युताः स्वर्गात् प्रविष्टाश्च रसातलं । तेषामुत्पादनार्थाय मया त्वं विनियोजितः ।
अष्टौ तान् जाह्नवी गर्भानपत्यार्थे दधातु वै । विभावसोस्तुल्यगुणान् सुराणां प्रीतिवर्द्धनान् ।
उत्पाद्य तु वसूनष्टौ कृत्वा कुरुकुलं महत् । प्रवेक्ष्यसि तनुं त्यक्त्वा पुनः सागर सागरीं । १००५
एवमेतन्मया पूर्व्वं स्थितार्थं वः सुरोत्तमाः । भविष्यं पश्यता भारं पृथिव्याः पार्थिवात्मकं ।
तदैव शान्तनोर्वंशः पृथिव्यां रोपितो मया । वसवो यत्र गङ्गायामुत्पन्नास्त्रिदिवौकसः ।
अद्यापि भुवि गाङ्गेयस्तत्रैव वसुरष्टमः । सतेन वसवः प्राप्ताः स एकः परिलम्बते ।
सृष्टास्त्रियां द्वितीयायां द्वितीया शान्तनोस्तनुः । विचित्रवीर्य्यो द्युतिमानासीद्राजा प्रतापवान् ।
वैचित्रवीर्य्यौ दायादौ पार्थिवौ भुवि साम्प्रतं । पाण्डुश्च धृतराष्ट्रश्च विख्यातौ पुरुषर्षभौ । १०१०
तत्र पाण्डोः प्रिया पृष्टे द्वे भार्य्ये यौवनस्थिते । शुभे कुन्ती च माद्री च देवयोषोपमे भुवि ।
धृतराष्ट्रस्य राज्ञस्तु भार्य्यैका तुल्यरूपिणी । गान्धारी भुवि विख्याता नित्यं भर्त्तृव्रते स्थिता ।
तत्र वंशा विभज्यन्तां विपक्षाः पक्ष एव च । पुत्राणां हि तयो राज्ञोर्भविता विग्रहो महान् ।
तेषां विमर्द्दे दायाद्ये नृपाणां भविता क्षयः । युगान्तप्रतिमश्चैव भविष्यति महद्भयं ।
सबलेषु नरेन्द्रेषु शातयत्स्वितरेतरं । विभक्तपुरराष्ट्रौघा क्षितिः शैथिल्यमेष्यति । १०१५
द्वापरस्य युगस्यान्ते मया दृष्टं पुरातनं । क्षयं यास्यन्ति शस्त्रेण पार्थिवाः सह वाहनैः ।
तत्रावशिष्टान् मनुजान् सुप्तानपि विचेतसः । धक्ष्यन्ते शङ्करस्यांशः पावकेनास्त्रतेजसा ।
अन्तकप्रतिमे तस्मिन्निवृत्ते क्रूरकर्म्मणि । समाप्तमिदमाख्यातं तृतीयं द्वापरं युगं ।
महेश्वरांशेऽपसृते ततो माहेश्वरं युगं । तिष्ये प्रवर्त्स्यते पश्चाद्युगं दारुणदर्शनं ।
अधर्म्मप्रायपुरुषं स्वल्पधर्म्मपरिग्रहं । उत्सन्नसत्वसंयोगं वर्द्धितानृतसम्भवं । १०२०
महेश्वरं कुमारञ्च द्वौ च देवौ समाश्रिताः । भविष्यन्ति नराः सर्व्वे लोकेन स्थविरायुषः ।
तदेष निर्णयः प्रोक्तः पृथिव्यां पार्थिवात्मकः । अंशावतरणं सर्व्वे सुराः कुरुत मा चिरं ।
धर्म्मस्यांशोऽथ कुन्त्यां वै माद्र्यां च विनियुज्यतां । विग्रहस्य कलिर्मूलं गान्धार्य्यां विनियुज्यतां ।

एतौ पक्षौ भविष्यन्ति राजानः कालचोदिताः । जातरागाः पृथिव्यर्थं सर्वे वैरानलाकुलाः ।
गच्छत्वियं वसुमती स्वां योनिं लोकधारिणीं । दृष्टोऽयं नैष्ठिको राज्ञामुपायो लोकविश्रुतः । ३००५
श्रुत्वा पितामहवचः सा जगाम यथागतं । पृथिवी सह कालेन वधाय पृथिवीक्षितां ।
देवानचोदयद्ब्रह्मा निग्रहार्थं सुरद्विषां । नरञ्चैव पुराणर्षिं शेषञ्च धरणीधरं ।
सनत्कुमारं साध्यांश्च देवानग्निपुरोगमान् । वरुणञ्च यमञ्चैव सूर्य्याचन्द्रमसौ तथा ।
गन्धर्व्वाप्सरसश्चैव रुद्रादित्यांस्तथाश्विनौ । ततोंऽशानवनिं देवाः सर्व्व एवावतारयन् ।
यथा ते कथितं पूर्व्वमंशावतरणे मया । अयोनिजा योनिजाश्च ते देवाः पृथिवीतले । ३०१०
दैत्यदानवहन्तारः संभूताः पुरुषेश्वराः । चीरिकाश्रमसङ्काशा वज्रसंहननास्तथा ।
नागायुतबलाः केचित् केचिदोघबलान्विताः । गदापरिघशक्तीनां सहाः परिघबाहवः ।
गिरिशृङ्गप्रहर्त्तारः सर्व्वे परिघयोधिनः । वृष्णिवंशे समुत्पन्नाः शतशोऽथ सहस्रशः ।
कुरुवंशे च ये देवाः पञ्चालेषु च पार्थिवाः । याजकानां समृद्धानां ब्राह्मणानाञ्च योनिषु ।
सर्व्वास्त्रज्ञा महेष्वासा वेदव्रतपरायणाः । सर्व्वर्द्धिगुणसम्पन्ना यज्वानः पुण्यकर्मिणः । ३०१५
आचालयेयुः शैलांस्ते क्रुद्धा भिन्द्युर्महीतलं । उत्पतेयुरथाकाशं क्षोभयेयुर्महोदधिं ।
एवमादिश्य तान् ब्रह्मा भूतभव्यभवत्प्रभुः । नारायणे समावेश्य लोकान् शान्तिमुपागमत् ।
भूयः शृणु यथा विष्णुरवतीर्णो महीतलं । प्रजानां वै हितार्थाय प्रभुः प्राणधनेश्वरः ।
ययातिवंशजस्याथ वसुदेवस्य धीमतः । कुले पूज्ययशःकर्म्मा जज्ञे नारायणः प्रभुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि देवानामंशावतरणे चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ वैशम्पायन उवाच ॥ कृतकार्य्ये गते काले जगत्याश्च यथालयं । अंशावतरणे वृत्ते नृपाणां भारते कुले । ३०२०
भागेऽवतीर्णे धर्म्मस्य शक्रस्य पवनस्य च । अश्विनोर्हृदभिषजोर्भागे वै भास्करस्य च ।
पूर्व्वमेवावनिगते भागे देवपुरोधसः । वसूनामष्टमे भागे प्रागेव धरणीगते ।
मृत्योर्भागे क्षितिगते कलेर्भागे तथैव च । भागे सोमस्य च तथा वरुणस्य च गाङ्गते ।
शङ्करस्य गते भागे मित्रस्य धनदस्य च । गन्धर्व्वोरगयक्षाणां भागांशेषु गतेष्वपि ।
भागेष्वेतेषु गगनाद्गतेषु धरणीतलं । तिष्ठन्नारायणस्यांशे नारदः प्रत्यदृश्यत । ३०२५
ज्वलिताग्निप्रतीकाशो बालार्कसदृशेक्षणः । सव्यापवृत्तं विपुलं जटामण्डलमुद्वहन् ।
चन्द्रांशुशुक्ले वसने वसानो रुक्मभूषणः । वीणां गृहीत्वा महतीं कक्षासक्तां सखीमिव ।
कृष्णाजिनोत्तरासङ्गो हेमयज्ञोपवीतवान् । दण्डी कमण्डलुधरः साक्षाच्छक्र इवापरः ।
भेत्ता जगति गुह्यानां विग्रहाणां गुहोपमः । महर्षिविग्रहकर्षिर्विद्वान् गान्धर्व्ववेदवित् ।
वैरकेलिकिलो विप्रो ब्राह्मः कलिरिवापरः । देवगन्धर्व्वलोकानामादिवक्ता मुनिः परः । ३०३०
गाता चतुर्णां वेदानामुद्गाता प्रथमर्त्विजां । स नारदोऽथ विप्रर्षिर्ब्रह्मलोकचरोऽव्ययः ।
स्थितो देवसभामध्ये संरब्धो विष्णुमब्रवीत । अंशावतरणं विष्णो यदिदं त्रिदशैः कृतं ।

वधाय पृथिवीशानां सर्व्वमेतदकारणं । यदेतत् पार्थिवं वध्यं क्षत्रं त्वयि दिवौकस ।
न नारायणयुक्तोऽयं कार्य्यार्थः प्रतिभाति मे । न युक्तं जानता देव त्वया तत्त्वार्थदर्शिना ।
देवदेव पृथिव्यर्थे प्रयोक्तुं कार्य्यमीदृशं । त्वं हि चक्षुष्मतां चक्षुः कान्तः प्रभवतां प्रभुः । ३०४५
श्रेष्ठो योगवतां योगी गतिर्गतिमतामपि । देवमागान् गतान्दृष्ट्वा किं त्वं सम्भ्रामसे विभुः ।
वसुन्धरायाः सत्कार्य्यमिदं त्वं नानुबुध्यसे । त्वया सनाथा देवांशास्त्वन्मयास्त्वत्प्रचोदिताः ।
जगत्यां सन्तरिष्यन्ति कार्य्याकार्य्यान्तरश्रुताः । तदहं त्वरया विष्णो प्राप्तः सुरसभामिमां ।
तव सर्व्वार्थमार्गांश शृणु चाप्यत्र कारणं । ये त्वया निहता दैत्याः संग्रामे तारकामये ।
तेषां शृणु गतिं विष्णो ये गताः पृथिवीतलं । पुरी पृथिव्यां मुदिता मथुरा नाम विश्रुता । ३०५०
निविष्टा यमुनातीरे स्फीता जनपदायुता । मधुर्नाम महानासीत् दानवो युधि दुर्ज्जयः ।
त्रासनः सर्व्वभूतानां बलेन महताऽन्वितः । तस्य तत्र महच्चासीन्महापादपसङ्कुलं ।
घोरं मधुवनं नाम यत्रासौ न्यवसत् पुरा । तस्य पुत्रो महानासील्लवणो नाम दानवः ।
त्रासनः सर्व्वभूतानां बले महति तिष्ठवान् । स तत्र दानवः क्रीडन्सर्व्वपूगाननेकशः ।
स देवतगणाल्लोकानुदार्य्यति दर्पितः । अयोध्यायामयोध्यायां रामे दाशरथौ स्थिते । ३०५५
राज्यं शासति धर्म्मज्ञे राक्षसानां भयावहे । स दानवो बलश्लाघी घोरं वनमुपाश्रितः ।
प्रेषयामास रामाय दूतं परुषवादिनं । विषयासन्नभूतो हि तव रामरिपुश्च सः ।
न च सामन्तमिच्छन्ति राजानो बलशालिनं । राज्ञा राज्यव्रतस्थेन प्रजानां शुभमिच्छता ।
जेतव्या रिपवः सर्व्वे स्फीतं विषयमिच्छता । अभिषेकार्द्रकेशेन राज्ञा रञ्जनकाम्यया ।
जेतव्यानीन्द्रियाण्यादौ तज्जये हि ध्रुवो जयः । सम्यग् वर्त्तितुकामस्य विशेषेण महीपते । ३०६०
नयानामुपदेशेन नास्ति लोकसमो गुरुः । व्यसनेषु असक्तस्य धर्म्ममध्यस्य धीमतः ।
सत्त्वस्थस्य नृपतेर्नास्ति सामन्तजं भयं । प्रवृद्धैर्हन्यते सर्व्वः सहजैरिन्द्रियारिभिः ।
अमित्राणां प्रियकरैर्मोहैरधृतिरीश्वरः । यत्त्वया श्रीकृते मोहात् सबलो रावणो हतः ।
नैतदौपयिकं मन्ये महत्तत् कर्म्म कुत्सितं । वनवासप्रवृत्तेन यत्त्वया व्रतशालिना ।
प्रहृतं राक्षसे नीचे नैव दृष्टः सतां विधिः । सतामक्रोधजो धर्म्मः शुभां नयति सद्गतिं । ३०६५
यत्त्वया निहतो मोहाद्दूषिताश्रमौकसः । स एव रावणो धन्यो यत्त्वया व्रतचारिणा ।
स्त्रीनिमित्ते हतो युद्धे ग्राम्यान्धर्म्मानवेक्षता । यदि ते स हतः संख्ये दुर्ब्बुद्धिरजितेन्द्रियः ।
युध्यस्वाद्य मया सार्द्धं मृधे यद्यसि वीर्य्यवान् । तस्य दूतस्य तच्छ्रुत्वा भाषितं रूक्षवादिनः ।
धैर्य्यादसम्भ्रान्तवपुः स्मितं राघवोऽब्रवीत् । असदेतत्त्वया दूत भाषितं तस्य गौरवात् ।
यन्मां क्षिपसि दोषेण वेदात्मानञ्च सुस्थितं । यद्यहं सत्पथे मूढो यदि वा रावणो हतः । ३०७०
यदि वा मे हृता भार्य्या तत्र का परिदेवना । न वाङ्मात्रेण दुष्यन्ति साधवः सत्पथे स्थिताः ।
वाग्भिर्न च यथा देवः सदा सत्स्थितरेषु च । कृतं दूतेन यत् कार्य्यं गच्छ त्वं दूत मा चिरं ।

नात्मच्छायेषु सौधेषु प्रवत्स्यन्तीह मद्विधाः । अयं ममानुजो भ्राता शत्रुघ्नः शत्रुतापनः ।
तस्य दैत्यस्य दुर्बुद्धेर्वधे प्रतिकरिष्यति । एवमुक्तः स दूतस्तु ययौ सौमित्रिणा सह ।
अनुज्ञातो नरेन्द्रेण राघवेण महात्मना । स शीघ्रयानः संप्राप्तस्तदा मधुवनं महत् ।   ३०८५
चक्रे निवेशं सौमित्रिर्लवणान्ते युयुत्सया । ततो दूतस्य वचनात् स दैत्यः क्रोधमूर्च्छितः ।
अमर्षी सद्यस्तं कृत्वा युद्धायाभिमुखे स्थितः । तद्युद्धमभवद्घोरं सौमित्रेर्दानवस्य च ।
उभयोर्दुर्द्धरयोः शूरयोरणमूर्द्धनि । तौ शरैः साधुनिर्मुक्तैरन्योन्यमभिजघ्नतुः ।
न च तौ युद्धवैमुख्यं श्रमं वाप्युपजग्मतुः । अथ सौमित्रिणा बाणैः पीडितो दानवो युधि ।
ततः स शूलरहितः पर्य्यहीयत दानवः । स स्रुहीत्वाऽङ्कुशञ्चैव देवैर्द्दत्तवरं रणे ।   ३०९०
कर्षणं सर्व्वभूतानां लवणो विननाद ह । शिरोधरायां जग्राह सोऽङ्कुशेन चकर्ष च ।
प्रवेशयितुमारब्धो लवणो राघवानुजं । स ह्यसम्भ्रममुद्यम्य शत्रुघ्नः खड्गमुत्तमं ।
अङ्कुशञ्चैव चिच्छेद दैत्यस्य च शिरो महत् । स हत्वा दानवं सङ्ख्ये सौमित्रिर्मित्रनन्दनः ।
तद्वनं तस्य दैत्यस्य चिच्छेदास्त्रेण बुद्धिमान् । छित्त्वा वनञ्च सौमित्रिर्निवेशं सोऽभ्यरोचयत् ।
भवाय तस्य देशस्य पूर्य्याः परमधर्म्मवित् । तस्मिन्मधुवनस्थाने मथुरा नाम सा पुरी ।   ३०९५
शत्रुघ्नेन पुरा सृष्टा हत्वा तं दानवं रणे । सा पुरी परमोदारा सुवप्रद्वारतोरणा ।
स्फीता राष्ट्रसमाकीर्णा समृद्धभवनाकुला । उद्यानवनसम्पन्ना सुसीमा सुप्रतिष्ठिता ।
प्रांशुप्राकारसम्पन्ना परिखाकुलमेखला । चयाट्टालककेयूरा प्रासादवरकुण्डला ।
सुसंवृतद्वारमुखी चत्वरोद्गारहासिनी । अरोगवीरपुरुषा हस्त्यश्वरथसङ्कुला ।
अर्द्धचन्द्रप्रतीकाशा यमुनातीरशोभिता । पुण्यापणवती दुर्गा रत्नसञ्चयगर्व्विता ।   ३१००
क्षेत्राणि सस्यवन्त्यस्यां काले देवश्च वर्षति । नरनारीसम्मुदिता सा पुरी स्म प्रकाशते ।
निविष्टविषयश्चैव शूरसेनस्ततोऽभवत् । तस्यां पुर्य्यां महावीर्य्यो राजा भोजकुलोद्वहः ।
उग्रसेन इति ख्यातो महासेनपराक्रमः । तस्य पुत्रत्वमापन्नो योऽसौ विष्णो त्वया हतः ।
कालनेमिर्महादैत्यः संग्रामे तारकामये । कंसो नाम विशालाक्षो भोजवंशविवर्द्धनः ।
राजा पृथिव्यां विख्यातः सिंहविस्पष्टविक्रमः । राज्ञां भयङ्करो घोरः शङ्कनीयो महोच्छ्रितः ।   ३१०५
भयदः सर्व्वभूतानां सत्पथाद्बाह्यतां गतः । दारुणाभिनिवेशेन दारुणेनान्तरात्मना ।
युक्तस्तेनैव दर्पेण प्रजानां रोमहर्षणः । न राजधर्म्माभिरतो नास्य स्वजनवत्सलः ।
नात्मराज्यप्रियकरस्त्वण्डः क्रूरकृत् सदा । स कंसस्तत्र संभूतो यस्ते युद्धे पराजितः ।
क्रव्यादो बाधते लोकानासुरेणान्तरात्मना । योऽप्यसौ हयविक्रान्तो हयग्रीव इति स्मृतः ।
केशी नाम हयो जातः कंसस्यैव जघन्यजः । स दुष्टो हेषितपटुः केशरी निरवग्रहः ।   ३११०
वृन्दावने वसत्येको नॄणां मांसानि भक्षयन् । अरिष्टो बलिपुत्रस्तु ककुद्मी वृषरूपवान् ।
गवामरित्वमापन्नः कामरूपी महासुरः । रिष्टो नाम दितेः पुत्रो वरिष्ठो दानवेषु यः ।

कुञ्जरत्वमगाद्दैत्यः कंसस्यैव स वाहनः । लम्बो नामेति विख्यातो योऽसौ दैत्येषु दारुणः ।
प्रलम्बो नाम भूत्वाऽसौ वटं भाण्डीरमाश्रितः । खर इत्युच्यते दैत्यो धेनुकः सोऽसुरोत्तमः ।
घोरस्तालवनं दैत्यश्चरत्युत्सादयन् प्रजाः । वराहश्च किशोरश्च यौ तौ दानवसत्तमौ । ३११५
मल्लौ रङ्गगतौ तत्र जातौ चाणूरमुष्टिकौ । यौ तौ मयश्च तारश्च दानवौ दानवान्तक ।
प्राग्ज्योतिषे तौ भौमस्य नरकस्य पुरे रतौ । एते दैत्या विनिहतास्त्वया विष्णो निराकृताः ।
मानुषीं तनुमास्थाय बाधन्ते भुवि मानवान् । त्वत्कथाद्वेषिणः सर्व्वे त्वद्भक्तान् घ्नन्ति मानवान् ।
तव प्रसादात्तेषां वै दानवानां क्षयो भवेत् । त्वत्तस्ते बिभ्यति दिवि त्वत्तो बिभ्यति सागरे ।
पृथिव्यां बिभ्यति त्वत्तो नान्यतस्तु कदाचन । दुर्वृत्तस्य हतस्यापि त्वया नान्येन श्रीधर । ३१२०
दिवश्च्युतस्य दैत्यस्य गतिर्भवति मेदिनी । व्युत्थितस्य तु मेदिन्यां हतस्य नृशरीरिणः ।
दुर्लभं स्वर्गगमनं त्वयि जाग्रति माधव । तदा गच्छ स्वयं विष्णो गच्छाम पृथिवीतलं ।
दानवानां विनाशाय विसृजात्मानमात्मना । मूर्त्तयो हि तवाव्यक्ता दृश्यादृश्याः सुरोत्तमैः ।
तासु सृष्टास्त्वया देवाः सम्भविष्यन्ति भूतले । तवावतरणे विष्णो कंसः स न भविष्यति ।
सेत्स्यते स च कार्य्यार्थो यस्यार्थे भूमिरागता । त्वं भारते कार्य्यगुरुस्त्वञ्चक्षुस्त्वं परायणः । ३१२५
तदा गच्छ हृषीकेश क्षितौ तान् जहि दानवान् ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि नारदवाक्ये पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

॥ वैशम्पायन उवाच ॥ नारदस्य वचः श्रुत्वा सस्मितं मधुसूदनः । प्रत्युवाच शुभं वाक्यं देवानां प्रभुरीश्वरः ।
त्रैलोक्यस्य हितार्थाय यन्मां वदसि नारद । तस्य सम्यक्प्रवृत्तस्य श्रूयतामुत्तरं वचः ।
विदिता देहिनो जाता मयैते भुवि दानवाः । यांश्च यस्तनुमास्थाय दैत्यः पुष्यति विग्रहं ।
जानामि कंसं सम्भूतमुग्रसेनसुतं भुवि । केशिनञ्चैव जानामि दैत्यं तुरगरूपिणं । ३१३०
नागं कुवलयापीडं मल्लौ चाणूरमुष्टिकौ । अरिष्टञ्चैव जानामि दैत्यं वृषभरूपिणं ।
विदितो मे खरश्चैव प्रलम्बश्च महासुरः । सा च मे विदिता विप्र पूतना दुहिता बलेः ।
कालियञ्चापि जानामि यमुनाह्रदगोचरं । वैनतेयभयाद्यस्तु यमुनाह्रदमाविशत् ।
विदितो मे जरासन्धः स्थितो मूर्ध्नि महीक्षितां । प्राग्ज्योतिषपुरे चापि नरकं साधु तर्कये ।
मानुषे पार्थिवे लोके मानुषत्वमुपागतं । बाणञ्च शोणितपुरे गुहप्रतिमतेजसं । ३१३५
दृप्तं बाहुसहस्रेण देवैरपि सुदुर्जयं । मय्यासक्ताञ्च जानामि भारतीं महतीं धुरं ।
तच्च सर्व्वं विजानामि यथा यास्यन्ति ते नृपाः । क्षयो भुवि मया दृष्टः शक्रलोके च सत्क्रिया ।
तेषां पुरुषदेहानामपरावृत्तिवर्त्तिनां । सम्प्रवेक्ष्याम्यहं योगेनात्मनश्चापरस्य च ।
सम्प्राप्य मानुषं लोकं मानुषत्वमुपागतः । कंसादींस्तांश्च सर्व्वांश्च वधिष्यामि महासुरान् ।
तेन तेन विधानेन येन यः शान्तिमेष्यति । अनुप्रविश्य योगेन तास्ता हि गतयो मया । ३१४०
अमीषां हि सुरेन्द्राणां हन्तव्या रिपवो युधि । जगत्यर्थे कृतो योऽयमंशोत्सर्गो महात्मभिः ।

सुरदेवर्षिगन्धर्वैरितश्चानुमते मम । विनिश्चयो हि प्रागेव नारदाद्यं कृतो मया ।
निवासं तत्र मे ब्रह्मा विदधातु पितामहः । तत्र देशे यथा जातो येन वेषेण वा वसन् ।
तानहं समरे हन्यां तन्मे ब्रूहि पितामह ।
॥ ब्रह्मोवाच ॥ नारायणेमं सिद्धार्थमुपायं शृणु मे विभो । भुवि यस्ते जनयिता जननी च भविष्यति । ३१०५
यत्र त्वञ्च महाबाहो जातः कुलकरो भुवि । यादवानां महद्वंशमखिलं धारयिष्यसि ।
तांश्चासुरान् समुत्पाद्य वंशं कृत्वात्मनो महत् । स्थापयिष्यसि मर्य्यादां यथा तन्मे निशामय ।
पुरा हि कश्यपो विष्णो वरुणस्य महात्मनः । जहार यज्ञिया गा वै पयोदास्तु महामखे ।
अदितिः सुरभिश्चैव द्वे भार्ये कश्यपस्य तु । प्रदीयमाना गास्तास्तु नैच्छतां वरुणस्य तु ।
ततो मां वरुणोऽभ्येत्य प्रणम्य शिरसा नतः । उवाच भगवन् गावो गुरुणा मे हृता इति । ३११०
कृतकार्य्योऽपि गास्तास्तु नानुजानाति मे गुरुः । अन्ववर्त्तत भार्य्ये द्वे अदितिं सुरभिं ततः ।
मम ता ह्यक्षया गावो दिव्याः कामदुहाः प्रभो । चरन्ति सागरान् सर्व्वान् रक्षिताः स्वेन तेजसा ।
कस्ता धर्षयितुं शक्तो मम गाः कश्यपादृते । अक्षयं याः क्षरन्त्यग्र्यं पयो देवामृतोपमं ।
प्रभुर्व्वा व्युत्थितो ब्रह्मन् गुरुर्व्वा यदि वेतरः । त्वया नियम्याः सर्व्वे वै त्वं हि नः परमा गतिः ।
यदि प्रभवतां दण्डो लोके कार्य्यमजानतां । न विद्यते लोकगुरो नाश्यते लोकसेतवः । ३११५
यथा वाऽस्तु तथा वाऽस्तु कर्त्तव्ये भगवान् प्रभुः । मम गावः प्रदीयन्तां ततो गन्ताऽस्मि सागरं ।
आत्मा मम हि ता गावो या गावः सत्वमव्ययं । लोकानां त्वत्प्रवृत्तानामेकं गोब्राह्मणं स्मृतं ।
त्रातव्याः प्रथमं गावस्त्रातास्त्रायन्ति ता द्विजान् । गोब्राह्मणपरित्राणे परित्रातं जगद्भवेत् ।
इत्यम्बुपतिना प्रोक्तो वरुणेनाहमच्युत । गवां कारणतत्त्वज्ञः कश्यपे शापमुत्सृजं ।
येनांशेन हृता गावः कश्यपेन महात्मना । स तेनांशेन जगतीं गत्वा गोपत्वमेष्यति । ३१२०
या च सा सुरभिर्नाम अदितिश्च सुरारणी । उभे ते तस्य वै भार्य्ये सह तेनैव यास्यतः ।
ताभ्यां सह स गोपत्वे कश्यपो भुवि रंस्यते । तदस्य कश्यपस्यांशस्तेजसा कश्यपोपमः ।
वसुदेव इति ख्यातो गोषु तिष्ठति भूतले । गिरिर्गोवर्द्धनो नाम मथुरायास्त्वदूरतः ।
तत्रासौ गोष्वभिरतः कंसस्य करदायकः । तस्य भार्य्याद्वयञ्चैव अदितिः सुरभिस्तथा
देवकी रोहिणी चैव वसुदेवस्य धीमतः । तत्रावतर लोकानां भवाय मधुसूदन । ३१२५
जयाशीर्व्वचनैस्त्वेते वर्द्धयन्ति दिवौकसः । आत्मानमात्मना हि त्वमवतार्य्य महीतले ।
देवकीं रोहिणीञ्चैव गर्भाभ्यां परितोषय । तत्र त्वं शिशुरेवादौ गोपालकृतलक्षणः ।
वर्द्धयस्व महाबाहो पुरा त्रैविक्रमे यथा । छादयित्वात्मनात्मानं मायया गोपरूपया ।
गोपकन्यासहस्राणि रमयंश्चर मेदिनीं । गाश्च ते रक्षतो विष्णो वनानि परिधावतः ।
वनमालापरिक्षिप्तं धन्या द्रक्ष्यन्ति ते वपुः । विष्णौ पद्मपलाशाक्षे गोपालवसतिं गते । ३१३०
बाले त्वयि महाबाहो लोको बालत्वमेष्यति । त्वद्भक्ताः पुण्डरीकाक्ष तव चित्तवशानुगाः ।

गोषु गोपा भविष्यन्ति सहायाः सततन्तव । वने चारयतो गाश्च गोष्ठेषु परिधावतः ।
मज्जतो यमुनायाञ्च रतिमाप्स्यन्ति ते भृशं । जीवितं वसुदेवस्य भविष्यति सुजीवितं ।
यस्त्वया तात इत्युक्तः स पुत्र इति वक्ष्यति । अथवा कस्य पुत्रत्वं गच्छेथाः कश्यपादृते ।
का वा धारयितुं शक्ता विष्णो त्वामदितिं विना । योगेनात्मसमुत्थेन गच्छ त्वं विजयाय वै । ११७५
वयमप्यालयान् स्वान् स्वान् गच्छामो मधुसूदन ।
॥ वैशम्पायन उवाच ॥ स तु देवानभ्यनुज्ञाप्य विविक्ते त्रिदिवालये । जगाम विष्णुः स्वं देशं क्षीरोदस्योत्तरां दिशं ।
तत्रैव पार्व्वती नाम गुहा मेरोः सुदुर्गमा । त्रिभिस्तस्यैव विक्रान्तैर्नित्यं पर्व्वसु पूजिता ।
पुराणं तत्र विन्यस्य देहं हरिरुदारधीः । आत्मानं योजयामास वसुदेवगृहे प्रभुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पितामहवाक्ये षट्पञ्चाशोऽध्यायः ॥ ५६ ॥ समाप्तञ्चेदं हरिवंशपर्व्व ॥

## ॥ अथ विष्णुपर्व्व ॥

॥ वैशम्पायन उवाच ॥ ज्ञात्वा विष्णुं क्षितिगतं भागांश्च त्रिदिवौकसां । विनाशशंसी कंसस्य नारदो मथुरां ययौ । ११८०
त्रिविष्टपादापतितो मथुरोपवने स्थितः । प्रेषयामास कंसस्य दूतं स मुनिपुङ्गवः ।
स दूतः कथयामास मुनेरागमनं नृपे । स नारदस्य गमनं श्रुत्वा त्वरितविक्रमः ।
निर्ज्जगामासुरः कंसः स्वपुर्य्याः पद्मलोचनः । स ददर्शातिथिं श्लाघ्यं देवर्षिं वीतकल्मषं ।
तेजसा ज्वलनाकारं वपुषा सूर्य्यवर्च्चसं । सोऽभिवाद्यर्षये तस्मै पूजाञ्चक्रे यथाविधि ।
आसनञ्चाग्निवर्णाभं विसृज्योपजहार वै । निषसादासने तस्मिन् स वै शक्रसखो मुनिः । ११८५
उवाच चोग्रसेनस्य सुतं परमकोपनं । पूजितोऽहं त्वया वीर विधिदृष्टेन कर्म्मणा ।
गते त्विदं मम वचः श्रूयतां गृह्यतां च तत् । अनुसृत्य दिवो लोकानहं ब्रह्मपुरोगमान् ।
गतः सूर्य्यसखं तात विपुलं मेरुपर्व्वतं । स नन्दनवनञ्चैव दृष्ट्वा चैत्ररथं वनं ।
आप्लुतं मे सुतीर्थासु सरित्सु सह दैवतैः । दिव्या त्रिधारा दृष्टा मे गङ्गा त्रिपथगामिनी ।
स्मरणादेव सर्व्वेषामंहसां या विभेदिनी । उपस्पृष्टश्च तीर्थेषु दिव्येषु च यथाक्रमं । ११९०
दृष्टं मे ब्रह्मसदनं ब्रह्मर्षिगणसेवितं । देवगन्धर्व्वनिर्घोषैरप्सरोभिश्च नादितं ।
सोऽहं कदाचिद्देवानां समाजे मेरुमूर्द्धनि । संगृह्य वीणां संसक्तामगच्छं ब्रह्मणः सभां ।
सोऽहं तत्र सितोष्णीषान्नानारत्नविभूषितान् । दिव्यासनगतान्देवानपश्यं सपितामहान् ।
तत्र मन्त्रयतामेवं दैवतानां मया श्रुतः । भवतः सानुगस्येह वधोपायः सुदारुणः ।
तत्रैषा देवकी या ते मथुरायां पितृष्वसा । योऽस्या गर्भोऽष्टमः कंस स ते मृत्युर्भविष्यति । ११९५
देवानां स हि सर्व्वस्वं त्रिदिवस्य गतिश्च सः । परं रहस्यं देवानां स ते मृत्युर्भविष्यति ।
परतोऽपि परस्तेषां स्वयम्भूश्च दिवौकसां । ततस्ते तदद्भुतं दिव्यञ्च कथयाम्यहं ।
साध्यश्च स हि ते मृत्युर्भूतपूर्व्वश्च तं स्मर । यत्नश्च क्रियतां कंस देवक्या गर्भकृन्तने ।

एवं मे त्वद्गता प्रीतिरित्यर्थं चाहमागतः । भुज्यन्तां सर्वकामार्थाः स्वस्ति तेऽस्तु व्रजाम्यहं ।
॥ वैशम्पायन उवाच ॥ इत्युक्ता नारदे याते तस्य वाक्यं विचिन्तयन् । जहासोच्चैस्ततः कंसः प्रकाशदशनश्चिरं । ३२००
प्रोवाच सस्मितश्चैव स भृत्यानग्रतः स्थितान् । हास्यः खलु स सर्व्वेषु नारदो न विशारदः ।
नाहं भीषयितुं शक्यो देवैरपि सवासवैः । आहवस्थः शयानो वा प्रमत्तो मत्त एव वा ।
योऽहं दोर्भ्यामुदाराभ्यां क्षोभयेयं धरामिमां । कोऽस्ति यो मानुषे लोके मां क्षोभयितुमुत्सहेत् ।
अद्यप्रभृति भूतानामहं देवानुवर्त्तिनां । नृपक्षिपशुसङ्घानां करोमि कदनं महत् ।
आज्ञाप्यतां हयः केशी प्रलम्बो धेनुकस्तथा । अरिष्टो वृषभश्चैव पूतना कालियस्तथा । ३२०५
अटध्वं पृथिवीं कृत्स्नां यथेष्टं कामरूपिणः । प्रहरध्वञ्च सर्व्वेषु येऽस्माकं पक्षदूषकाः ।
गर्भस्थानामपि गतिर्व्विज्ञेया भुवि देहिनां । नारदेन हि गर्भेभ्यो भयन्नः समुदाहृतं ।
भवन्तोऽपि यथाकामं मोदन्तां विगतज्वराः । मां च वो नाथमाश्रित्य नास्ति देवकृतं भयं ।
स तु केलिकिलो विप्रो भेदशीलश्च नारदः । सुश्लिष्टमपि लोकेषु भेदयन् लभते रतिं ।
कण्डूयमानः सततं लोकानटति चञ्चलः । चङ्क्रमो नरेन्द्राणां तन्त्रोर्भेदराणि चैव च । ३२१०
एवं स विलपन्नेव वाक्यावेग तु केवलं । विवेश भवनं कंसो दह्यमानेन चेतसा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नारदागमने कंसवाक्ये सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ वैशम्पायन उवाच ॥ सोऽज्ञापयत संरब्धः सचिवानात्मनो हितान् । यत्ता भवत सर्व्वे वै देवक्या गर्भकृन्तने ।
प्रथमादेव हन्तव्या गर्भास्ते सर्व्व एव तु । मूलादेव हि हन्तव्यः सोऽनर्थो यत्र संशयः ।
देवकी च स्थिरे गुप्ता प्रच्छन्नमभिरक्षिता । स्वैरञ्चरतु विश्रब्धा गर्भकाले च रक्ष्यतां ।
मासांश्चै पुष्पमासादीन् गणयन्तु मम स्त्रियः । परिणामे हि गर्भस्य शेषं ज्ञास्यामहे वयं । ३२१५
वसुदेवश्च संरक्ष्यः स्त्रीसनाथासु भूमिषु । अप्रमत्तैर्मम हितैरात्रावहनि चैव च ।
स्त्रीभिर्व्वर्षवरैश्चैव वक्तव्यं न च कारणं । एष मानुषको यत्नो मानुषैरेव साध्यते ।
श्रूयतां येन दैवं हि मद्विधैः प्रतिहन्यते । मन्त्रग्रामैः सुविहितैरौषधैश्च सुयोजितैः ।
यत्नेन चानुकूल्येन दैवमप्यनुलोम्यते ।
॥ वैशम्पायन उवाच ॥ एवं स यत्नवान् कंसो देवक्या गर्भकृन्तने । भयेन मन्त्रयामास श्रुतार्थो नारदात् स वै । ३२२०
एवं श्रुत्वा प्रयत्नं वै कंसस्याविष्टसंश्रितं । अन्तर्द्धानगतो विष्णुश्चिन्तयामास वीर्य्यवान् ।
सप्तेमान्देवकीगर्भान् भोजपुत्रो वधिष्यति । अष्टमे च मया गर्भे कार्य्यसाधनमात्मनः ।
तस्य चिन्तयतस्त्वेवं पातालमगमन्मनः । यत्र ते गर्भशयनाः षड्गर्भा नाम दानवाः ।
विक्रान्तवपुषो दीप्तास्तेऽमृतप्राशनोपमाः । अमरप्रतिमाः सर्व्वे पुत्रा वै कालनेमिनः ।
तेऽर्थ्यकं वै परित्यज्य हिरण्यकशिपुं पुरा । उपासाञ्चक्रिरे दैत्याः पुरा लोकपितामहं । ३२२५
तप्यमानास्तपस्तीव्रं जटामण्डलधारिणः । तेषां प्रीतोऽभवद्ब्रह्मा षड्गर्भाणां वरं ददौ ।
॥ ब्रह्मोवाच ॥ भो भो दानवशार्दूलास्तपसाऽहं सुतोषितः । ब्रूत यो यश्च वः कामस्तस्य तं तं ददाम्यहं ।

ते तु सर्व्वे समानार्था दैत्या ब्रह्माणमब्रुवन् । यदि नो भगवान् प्रीतो देयश्चैव वरो वरः ।
अवध्याः स्याम भगवन्देवतैः सोरगैः । शापप्रहरणैश्चापि नियतैः परमर्षिभिः ।
यक्षगन्धर्व्वपतिभिः सिद्धचारणमानवैः । माभूद्वधो नो भगवन् ददासि यदि नो वरं । ३३१०
तानुवाच ततो ब्रह्मा सुप्रीतेनान्तरात्मना । भवद्भिर्यदिदं प्रोक्तं सर्व्वमेतद्भविष्यति ।
षड्गर्भाणां वरं दत्त्वा स्वयम्भूस्त्रिदिवङ्गतः । ततो हिरण्यकशिपुः सरोषो वाक्यमब्रवीत् ।
मामुत्सृज्य वरो यस्माद्वृतो वः पद्मयोनितः । तस्मात्त्यजामि वः स्नेहः शत्रुभूतांस्त्यजाम्यहं ।
षड्गर्भा इति योऽयं वः शब्दः पित्राभिवर्द्धितः । स एव वो गर्भगतान् पिता सर्व्वान् बधिष्यति ।
षडेव देवकीगर्भे षड्गर्भा वै महासुराः । भविष्यथ ततः कंसो गर्भस्थान् वो बधिष्यति । ३३१५
॥ वैशम्पायन उवाच ॥ जगामाथ ततो विष्णुः पातालं यत्र तेऽसुराः । षड्गर्भाः संयुताः सन्ति जले गर्भशयालयाः ।
स ददर्श जले सुप्तान् षड्गर्भान् गर्भसंस्थितान् । निद्रया कालरूपिण्या सर्व्वानन्तर्हितानिव ।
स्वप्नरूपेण तेषां वै विष्णुर्देहानथाविशत् । प्राणेश्वरांश्च निष्कृष्य निद्रायै प्रददौ तदा ।
ताञ्चोवाच ततो निद्रां विष्णुः सत्यपराक्रमः । गच्छ निद्रे मयोत्सृष्टा देवकीभवनान्तिकं ।
इमान् प्राणेश्वरान् गृह्य षड्गर्भाख्यान् देहिनः । षट्सु गर्भेषु देवक्या योजयस्व यथाक्रमं । ३३२०
जातेष्वेतेषु गर्भेषु नीतेषु च यमक्षयं । कंसस्य विफले यत्ने देवक्याः सफले श्रमे ।
प्रसादं ते करिष्यामि मत्प्रभावसमं भुवि । येन सर्व्वस्य लोकस्य देवि देवी भविष्यसि ।
सप्तमो देवकीगर्भो योंऽशः सौम्यो ममाग्रजः । स संक्रामयितव्यस्ते सप्तमे मासि रोहिणीं ।
सङ्कर्षणात्तु गर्भस्य स तु सङ्कर्षणो युवा । भविष्यत्यग्रजो भ्राता मम शीतांशुदर्शनः ।
पतितो देवकीगर्भः सप्तमोऽयं भयादिति । अष्टमे मयि गर्भस्थे कंसो यत्नं करिष्यति । ३३२५
या तु सा नन्दगोपस्य वसुदेवानुगस्य वै । यशोदा नाम भद्रन्ते भार्य्या गोपकुलोद्वहा ।
तस्यास्त्वं नवमो गर्भः कुलेऽस्माकं भविष्यसि । नवम्यामेव संजाता कृष्णपक्षस्य वै तिथौ ।
अहन्त्वभिजिते योगे निशाया यौवने स्थिते । अर्द्धरात्रे करिष्यामि गर्भमोक्षं यथासुखं ।
अष्टमस्य तु मासस्य जातावावां ततः समं । प्राप्स्यावो गर्भव्यत्यासं प्राप्ते कंसस्य शासने ।
अहं यशोदां यास्यामि त्वं देवि भज देवकीं । आवयोर्गर्भव्यत्यासात् कंसो न स्यात्तु मूढतां । ३३३०
ततस्त्वां गृह्य चरणे शिलायां निरसिष्यति । निरस्यमाना गगने स्थानं प्राप्स्यसि शाश्वतं ।
मच्छवीसदृशी कृष्णा सङ्कर्षणसमानना । बिभ्रती विपुलौ बाहू मम बाहूपमौ दिवि ।
त्रिशिखं शूलमुद्यम्य खड्गञ्च कनकत्सरुं । पात्रीञ्च पूर्णां मधुनः पङ्कजञ्च सुनिर्म्मलं ।
नीलकौशेयसम्वीता पीतेनोत्तरवाससा । शशिरश्मिप्रकाशेन हारेणोरसि राजता ।
दिव्यकुण्डलपूर्णाभ्यां श्रवणाभ्यां विभूषिता । इन्दोः सपत्नभूतेन त्वं मुखेन विराजता । ३३३५
मुकुटेन विचित्रेण केशबन्धेन शोभिता । भुजगाभैर्भुजैर्भीमैर्भासयन्ती दिशो दश ।
ध्वजेन शिखिबर्हैश्च उच्छ्रितेन विराजता । अङ्गदेन मयूराणां अङ्गदेन च भास्वता ।

इन्द्रस्य चारुदृष्टिस्त्वं सहस्रनयनेति च । तापसानाञ्च देवी त्वमरणी चाग्निहोत्रिणां ।
क्षुधा च सर्व्वभूतानां तृप्तिस्त्वञ्च दिवौकसां । स्वाहा तुष्टिर्धृतिश्चैव वसूनां त्वं वसुमती ।
आशा त्वाशि मनुष्याणां तुष्टिश्च कृतकर्म्मणां । दिशश्च विदिशश्चैव तथा ह्यग्निशिखा प्रभा ।
शकुनी पूतना च त्वं रेवती च सुदारुणा । निद्रा च सर्व्वभूतानां मोहिनी क्षत्रिया तथा । ३२८०
विद्यानां ब्रह्मविद्या च त्वमोङ्कारो वषट् तथा । नारीणां पार्व्वतीं त्वाञ्च पौराणा ऋषयोऽब्रुवन् ।
अरुन्धत्येकभर्त्तॄणां प्रजापतिवचो यथा । भेदो विवादशीलानां त्वमिन्द्राणीति विश्रुता ।
त्वया व्याप्तमिदं सर्व्वं जगत् स्थावरजङ्गमं । संग्रामेषु च सर्व्वेषु वह्निप्रज्वलिते तथा ।
नदीतीरेषु चौरेषु वनेषु च गुहासु च । प्रवासे राजबन्धे च शत्रूणाञ्च प्रमर्द्दने ।
प्राणात्ययेषु सर्व्वेषु त्वं हि रक्षा न संशयः । त्वयि मे हृदयं देवि त्वयि बुद्धिर्मनस्त्वयि । ३२८५
रक्ष मां सर्व्वपापेभ्यः प्रसादं कर्त्तुमर्हसि । इमं देव्याः स्तवं पुण्यमितिहाससमन्वितं ।
यः पठेत् प्रातरुत्थाय शुचिः प्रयतमानसः । त्रिभिश्च काङ्क्षितं मासैः फलं वै संप्रयच्छति ।
षण्मासान् पठते यस्तु काङ्क्षितञ्च लभेत सः । अर्च्चिता नवभिर्मासैर्दिव्यं चक्षुः प्रयच्छति ।
संवत्सरेण सिद्धिन्तु यथाकामं प्रयच्छति । सत्यञ्च ब्रह्मचर्य्यञ्च द्वैपायनवचो यथा ।
नृणां बन्धं वधं घोरं पुत्त्रनाशं धनक्षयं । व्याधिमृत्युभयञ्चैव पूजिता शमयिष्यसि । ३२९०
मोहयित्वा च तं कंसमेका त्वं भोक्ष्यसे जगत् । अहमप्यात्मनो वृत्तिं विधास्ये गोषु गोपवत् ।
स्ववृद्ध्यर्थं तथा देव करिष्ये कंसगोपनं । एवं तान्तु समादिश्य गतोऽन्तर्द्धानमीश्वरः ।
सा चापि तं नमस्कृत्य तथाऽस्त्विति विनिश्चिता ।

॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि स्वप्नगर्भविधाने आर्य्यास्तवे ऊनषष्टितमोऽध्यायः ॥ ५८ ॥

॥ वैशम्पायन उवाच ॥ कृते गर्भविधाने तु देवकी देवतोपमा । जग्राह सप्त तान् गर्भान् यथावत् समुदाहृतान् ।
षड्गर्भान् निःसृतान् कंसस्तान् जघान शिलातले । आपन्नं सप्तमं गर्भं सा निनायाथ रोहिणीं । ३२९५
अर्द्धरात्रे स्थितं गर्भं पातयन्ती रजस्वला । निद्रया सहसाविष्टा पपात धरणीतले ।
सा स्वप्नमिव तं दृष्ट्वा स्वं गर्भं गर्भमादधत् । अपश्यन्ती च तं गर्भं मुहूर्त्तं व्यथिताऽभवत् ।
तामाह निद्रा संविग्ना नैशे तमसि रोहिणीं । रोहिणीमिव सोमस्य वसुदेवस्य धीमतः ।
कर्षणेनास्य गर्भस्य स्वगर्भाञ्चाहितस्य वै । सङ्कर्षणो नाम शुभे तव पुत्त्रो भविष्यति ।
सा तं पुत्त्रमवाप्यैव हृष्टा किञ्चिदवाङ्मुखी । विवेश रोहिणी वेश्म सुप्रभा रोहिणी यथा । ३३००
तस्य गर्भस्य मार्गेण गर्भमाधत्त देवकी । यदर्थं सप्त ते गर्भाः कंसेन विनिपातिताः ।
तन्तु गर्भं प्रयत्नेन ररक्षुस्तस्य रक्षिणः । स तत्र गर्भवसतौ वसत्यात्मेच्छया हरिः ।
यशोदाऽपि समाधत्त गर्भं तदहरेव तु । विष्णोः शरीरजां निद्रां विष्णोर्निर्द्देशकारिणीं ।
गर्भकाले त्वसंपूर्णे अष्टमे मासि ते स्त्रियौ । देवकी च यशोदा च सुषुवाते समं तदा ।
यामेव रजनीं विष्णुर्जज्ञे वृष्णिकुले प्रभुः । तामेव रजनीं कन्यां यशोदाऽपि व्यजायत । ३३०५

नन्दगोपस्य भार्य्यैका वसुदेवस्य चापरा । तुल्यकालं हि गर्भिण्यौ यशोदा देवकी तथा ।
देवक्यजनयद्विष्णुं यशोदा तान्तु कन्यकां । मुहूर्त्तेऽभिजिते प्राप्ते सार्द्धरात्रे विभूषिते ।
सागराः समकम्पन्त चेलुश्च धरणीधराः । जज्वलुश्चाग्नयः शान्ता जायमाने जनार्द्दने ।
शिवाः संप्रववुर्व्वाताः प्रशान्तमभवद्रजः । ज्योतींषि व्यत्यकाशन्त जायमाने जनार्द्दने ।
अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्व्वरी । मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः । १२०
अव्यक्तः शाश्वतः कृष्णो हरिर्नारायणः प्रभुः । जायते भगवांस्तत्र नयनैर्मोहयन् जगत् ।
अनाहता दुन्दुभयो देवानां प्राणदंस्तदा । आकाशात् पुष्पवर्षञ्च ववर्ष त्रिदशेश्वरः ।
गीर्भिर्म्मङ्गलयुक्ताभिः स्तुवन्तो मधुसूदनं । महर्षयः सगन्धर्व्वा उपतस्थुः सहाप्सराः ।
जायमाने हृषीकेशे प्रहृष्टमभवज्जगत् । इन्द्रश्च त्रिदशैः सार्द्धं तुष्टाव मधुसूदनं ।
वसुदेवस्तु तं रात्रौ जातं पुत्रमधोक्षजं । श्रीवत्सलक्षणं दृष्ट्वा युतं दिव्यैश्च लक्षणैः । १२५
उवाच वसुदेवस्तं रूपं संहर वै प्रभो । भीतोऽहं देव कंसस्य तस्मादेवं वदाम्यहं ।
मम पुत्रा हतास्तेन तव ज्येष्ठाऽम्बुजेक्षण ।
॥ वैशम्पायन उवाच ॥ वसुदेववचः श्रुत्वा रूपं संहरदच्युतः । अनुज्ञाप्य पितृत्वेन नन्दगोपगृहं नय ।
वसुदेवस्तु संगृह्य दारकं क्षिप्रमेव च । यशोदाया गृहं रात्रौ विवेश सुतवत्सलः ।
यशोदायास्त्वविज्ञातस्तत्र निक्षिप्य दारकं । गृहीत्वा दारिकां तां च देवकीशयने न्यसत् । १३०
परिवर्त्ते कृते ताभ्यां गर्भाभ्यां भयविक्लवः । वसुदेवः कृतार्थो वै निर्जगाम निवेशनात् ।
उग्रसेनसुतायाथ कंसायानकदुन्दुभिः । निवेदयामास तदा कन्यां तां वरवर्णिनीं ।
तच्छ्रुत्वा त्वरितः कंसो रक्षिभिः सह वेगितः । आजगाम गृहद्वारं वसुदेवस्य वीर्य्यवान् ।
स तत्र त्वरितं द्वारि किं जातमिति चाब्रवीत् । दीयतां शीघ्रमित्येवं वाग्भिः समभितर्ज्जयन् ।
ततो हाहाकृताः सर्व्वा देवकीभवने स्त्रियः । उवाच देवकी दीना बाष्पविक्लवया गिरा । १३५
दारिका पुत्र जातेति कंसं समभियाचती । श्रीमन्तो मे हताः सप्त पुत्र गर्भास्त्वया विभो ।
दारिकेयं हतैवैषा पश्यस्व यदि मन्यसे । दृष्ट्वा कंसस्तु तां कन्यामकृष्यत मुदा युतः ।
हतैवैषा यदा कन्या जातेत्युक्ता वृथामतिः । सा गर्भशयनक्लिष्टा गर्भाम्बुक्लिन्नमूर्द्धजा ।
कंसस्य पुरतो न्यस्ता पृथिव्यां पृथिवीसमा । पादे तां गृह्य पुरुषः समाविध्यावधूय च ।
उदयच्छन्निव सहसा शिलायां समपोथयत् । सावधूता शिलापृष्ठे निष्पिष्टा दिवमुत्पतत् । १४०
हित्वा गर्भतनुं सा तु सहसा मुक्तमूर्द्धजा । जगामाकाशमाविश्य दिव्यस्रगनुलेपना ।
कन्यैव चाभवत् सा तु दिव्या देवैरभिष्टुता । नीलपीताम्बरधरा गजकुम्भोपमस्तनी ।
रथविस्तीर्णजघना चन्द्रवक्त्रा चतुर्भुजा । विद्युद्विस्पष्टवर्णाभा बालार्कसदृशेक्षणा ।
पयोधरस्तनवती सन्ध्येव सपयोधरा । सा वै निशि तमोग्रस्ते सर्व्वभूतगणाकुले ।
नृत्यती हसती चैव विपरीतेन भास्वती । विहायसि गता रौद्री पपौ पानमनुत्तमं । १४५

जहास च महाहासं कंसञ्च रुषिताऽब्रवीत् । कंस कंसात्मनाशाय यदहं घातिता त्वया ।
सहसा च समुत्क्षिप्य शिलायामभिपोथिता । तस्मात्तवान्तकालेऽहं कृष्यमाणस्य शत्रुणा ।
पाटयित्वा करैर्देहमुष्णं पास्यामि शोणितं । एवमुक्त्वा वचो घोरं सा यथेष्टेन वर्त्मना ।
खं सा देवालयं देवी समया विचचार च । सा कन्या ववृधे तत्र वृष्णिसङ्घेषु पूजिता ।
पुत्रवत् पाल्यमाना सा देवदेवाज्ञया तदा । विद्धि चैनामथोत्पन्नामंशाद्देवीं प्रजापतेः । ३२९५
एकानंशां योगकन्यां रक्षार्थं केशवस्य च । तां वै सर्व्वे सुमनसः पूजयन्ति स्म यादवाः ।
देवीवद्दिव्यवपुषं कृष्णः संरक्षितो यया । तस्यां गतायां कंसस्तु तां मेने मृत्युमात्मनः ।
विविक्ते देवकीञ्चैव व्रीडितः समभाषत ।

॥ कंस उवाच ॥ पितृष्वसः कृतो यत्नस्तव गर्भा हता मया । अन्य एवान्यतो देवि मम मृत्युरुपस्थितः ।
नैराश्येन कृतो यत्नः स्वजने प्रहृतं मया । दैवं पुरुषकारेण न चातिक्रान्तवानहं । ३३००
त्यज गर्भगतां चिन्तां सन्तापं पुत्रजं त्यज । हेतुभूतस्त्वहं तेषां मतिं कालविपर्य्यये ।
काल एव नृणां शत्रुः कालश्च परिणामकः । कालो नयति सर्व्वं वै हेतुभूतास्तु मद्विधाः ।
आगमिष्यन्ति वै देवि यथाभागमुपद्रवाः । इदन्तु कष्टं यज्जन्तुः कर्त्ताऽहमिति मन्यते ।
माकार्षीः पुत्रजां चिन्तां विलापं शोकजं त्यज । एवं प्राया नृणां योनिर्नास्ति कालस्य संस्थितिः ।
पतामि पादयोर्मूर्द्ध्ना पुत्रवत्तव देवकि । मद्गतस्त्यज्यतां रोषो जानाम्यपकृतं त्वयि । ३३०५
इत्युक्तवन्तं कंसं सा देवकी वाक्यमाददे । बाष्पपूर्णमुखी दीना भर्त्तारमभिवीक्षती ।
उत्तिष्ठोत्तिष्ठ वत्सेति कंसं मातेव जल्पती ।

॥ देवक्युवाच ॥ ममाग्रतो हता गर्भा ये त्वया कालरूपिणा । कारणं त्वञ्च वै पुत्र कृतान्तो ह्यत्र कारणं ।
गर्भकर्त्तनमेतन्मे सहनीयं त्वया कृतं । पादयोः पतता मूर्द्ध्ना स्वञ्च कर्म्म जुगुप्सता ।
गर्भे च नियतो मृत्युर्बाल्येऽपि न निवर्त्तते । युवा पि मृत्योर्वशगः स्थविरो मृत एव च । ३३१०
कालपक्वमिदं सर्व्वं हेतुभूतस्त्वमेव तु । अजाते दर्शनं नास्ति यथा नास्ति तथैव सः ।
जातोऽप्यजाततां याति विधात्रा यत्र नीयते । तद्गच्छ पुत्र मा ते भून्मद्गतं मन्युकारणं ।
मृत्युनाऽपहृते पूर्व्वं शेषो हेतुः प्रवर्त्तते । विधिना पूर्व्वदृष्टेन प्रजासर्गेण तत्त्वतः ।
मातापित्रोस्तु कार्य्येण जन्मतस्तूपपद्यते । निशम्य देवकीवाक्यं स कंसः स्वं निवेशनं ।
प्रविवेश सुसंरब्धो दह्यमानेन चेतसा । कृत्ये प्रतिहते दीनो जगाम विमना भृशं । ३३१५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि श्रीकृष्णजन्मनि षष्टितमोऽध्यायः ॥ ६० ॥

॥ वैशम्पायन उवाच ॥ प्रागेव वसुदेवस्तु व्रजे शुश्राव रोहिणीं । प्रजातां पुत्रमेवाग्रे चन्द्रात् कान्ततराननं ।
स नन्दगोपं त्वरितः प्रोवाच शुभया गिरा । गच्छानया सह त्वं वै व्रजमेव यशोदया ।
तत्रैनौ दारकौ गत्वा जातकर्म्मादिभिर्गुणैः । योजयित्वा व्रजे तात संवर्द्धय यथासुखं ।
रौहिणेयश्च मे पुत्रं परिरक्ष शिशुं व्रजे । अहं वाच्यो भविष्यामि पितृपक्षेषु पुत्रिणां ।

योऽहमेकस्य पुत्रस्य न पश्यामि शिशोर्मुखं । ह्रियते हि बलात् प्रज्ञा प्राज्ञस्यापि सतो मम । ३३७५
अस्माद्धि मे भयं कंसान्निर्घृणाद्वै शिशोर्वधे । यथा च रौहिणेयं त्वं नन्दगोप ममात्मजं ।
गोपायसि शिशुं तात तस्यान्वेषी तथा कुरु । विघ्ना हि बहवो लोके बालानुत्थापयन्ति च ।
स च पुत्रो मम ज्यायान् कनीयांश्चाप्ययं तव । उभावपि समं नाम्ना निरीक्षस्व यथासुखं ।
वर्द्धमानावुभावेतौ समानवयसौ यथा । शोभेतां गोव्रजे तस्मिन् नन्दगोप तथा कुरु ।
बाल्ये केलिकिलः सर्वो बाल्ये मुह्यति मानुषः । बाल्ये चण्डतमः सर्वस्तत्र यत्नपरो भव । ३३८०
न च वृन्दावने कार्यो गवां घोषः कदाचन । तत्र वासे तु भेतव्यं केशिनः पापदर्शिनः ।
सरीसृपेभ्यः कीटेभ्यः शकुनिभ्यस्तथैव च । गोष्ठेषु गोभ्यो वत्सेभ्यो रक्ष्यौ ते दारकौ शिशू ।
नन्दगोप गता रात्रिः शीघ्रयानो व्रजाश्वितः । इमे त्वां त्वरयन्तीव पक्षिणः सव्यदक्षिणाः ।
रहस्यं वसुदेवेन सोऽनुज्ञातो महात्मना । यानं यशोदया सार्द्धमारुरोह मुदा युतः ।
कुमारस्कन्धवाह्यायां शिबिकायां समाहितः । संवेशयामास शिशुं शिबिकायां महामतिः । ३३८५
जगाम च विविक्तेन शीतलानिलवर्षिणा । बहूदकेन मार्गेण यमुनातीरगामिना ।
स ददर्श शुभे देशे गोवर्द्धनवनोपगे । यमुनातीरसम्बद्धं शीतमारुतसेवितं ।
विगतश्वापदं रम्यं लतागुल्मसमाकुलं । गोभिस्तृणविलग्नाभिः स्यन्दनीभिरलङ्कृतं ।
समप्रचारञ्च गवां समतीर्थजलाशयं । वृषाणां स्कन्धघातैश्च विषाणोद्धृतपादपं ।
भासामिषादानुसृतं श्येनैश्चामिषगृध्नुभिः । सृगालमृगसिंहैश्च वसामेदाशिभिर्वृतं । ३३९०
शार्दूलशब्दाभिरुतं नानापक्षिसमाकुलं । स्वादुवृक्षफलं रम्यं पर्याप्ततृणसंस्तरं ।
गोव्रजं गोरुतमिश्रं गोपनारीभिरावृतं । हम्बारवैश्च वत्सानां सर्वतः कूजितस्वनं ।
शकटावर्त्तविपुलं कण्टकीवाटसङ्कुलं । पर्यन्तेष्वावृतं वन्यैर्वृहद्भिः पतितैर्द्रुमैः ।
वत्सानां रोपितैः कीलैर्दामभिश्च विभूषितं । करीषाकीर्णवसुधं कटच्छन्नकुटीमठं ।
क्षेम्यं प्रचारबहुलं हृष्टपुष्टजनावृतं । दामनीप्रायबहुलं गर्गरोद्गारनिस्वनं । ३३९५
तक्रनिस्रावबहुलं दधिमण्डार्द्रमृत्तिकं । मन्थानवलयोद्गारैर्गोपीनां जनितस्वनं ।
काकपक्षधरैर्बालैर्गोपालैः क्रीडनाकुलं । सार्गलद्वारगोवाटं मध्ये गोस्थानसङ्कुलं ।
सर्पिषा पच्यमानेन सुरभीकृतमारुतं । नीलपीताम्बराभिश्च तरुणीभिरलङ्कृतं ।
वन्यपुष्पावतंसाभिर्गोपकन्याभिरावृतं । शिरसा घृतकुम्भाभिर्बद्धैरञ्चलमाम्बरैः ।
यमुनातीरमार्गेण जलहारीभिरावृतं । स तत्र प्रविशन् हृष्टो गोव्रजं गोपनादितं ।
प्रत्युद्गतो गोपवृद्धैः स्त्रीभिर्वृद्धाभिरेव च । निवेशं रोचयामास परिवर्त्ते सुखाश्रये ।
सा यत्र रोहिणी देवी वसुदेवसुखावहा । तत्र तं बालसूर्याभं कृष्णं गूढं न्यवेशयत् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गोव्रजगमने एकषष्टोऽध्यायः ॥ ६१ ॥
॥ वैशम्पायन उवाच ॥ तत्र तस्यासतः कालः सुमहानत्यवर्त्तत । गोव्रजे नन्दगोपस्य वल्लवत्वं प्रकुर्व्वतः ।

दारकौ कृतनामानौ ववृधाते सुखं तु तौ । ज्येष्ठः सङ्कर्षणो नाम कनीयान् कृष्ण एव च ।
मेघकृष्णस्तु कृष्णोऽभूद्देहान्तरगतो हरिः । अवर्द्धत गवां मध्ये सागरस्य इवाम्बुदः । ३४०५
शकटस्य त्वधः सुप्तं कदाचित् कर्म्मसङ्गिनी । यशोदा तं समुत्सृज्य जगाम यमुनां नदीम् ।
शिशुलीलां ततः कुर्व्वन् स हस्तचरणौ क्षिपन् । रुरोद मधुरं कृष्णः पादावूर्द्ध्वं प्रसारयन् ।
स तत्रैकेन पादेन शकटं पर्य्यवर्त्तयत् । न्युब्जं पयोधराकाङ्क्षी चकार च रुरोद च ।
एतस्मिन्नन्तरे प्राप्ता यशोदा शीघ्रविक्रमा । स्नाता प्रस्रवदिग्धाङ्गी बद्धवत्सेव सौरभी ।
सा ददर्श विपर्य्यस्तं शकटं वायुना विना । हाहेति कृत्वा त्वरितं दारकं जगृहे तदा । ३४१०
न सा बुबोध तत् केन शकटं परिवर्त्तितं । स्वस्ति मे दारकस्येति प्रीता भीता च साऽभवत् ।
किन्नु वक्ष्यति ते तात पिता परमकोपनः । त्वय्यधःशकटे सुप्ते शकटात्तु विलोडिते ।
किं मे स्नानेन दुःस्नानं मयाद्य गमनेन किं । पर्य्यस्ते शकटे तात यत्त्वां पश्याम्यपावृतं ।
एतस्मिन्नन्तरे गोभिराजगाम वनेचरः । काषाये वाससी बिभ्रन्नन्दगोपो व्रजान्तिकं ।
स ददर्श विपर्य्यस्तं भिन्नभाण्डघटीघटं । अपास्तधूर्व्विभग्नाक्षं शकटं चक्रमोक्षितं । ३४१५
भीतस्त्वरितमागम्य सहसा साश्रुलोचनः । अपि मे स्वस्ति पुत्रायेत्यसकृद्वचनं वदन् ।
पिबन्तं स्तनमालोक्य पुत्रं स्वस्थोऽब्रवीत् पुनः । वृषयुद्धं विना केन पर्य्यस्तं शकटं मम ।
प्रत्युवाच यशोदा तं भीता गद्गदभाषिणी । न हि जानाम्यहं केन शकटं भुवि पातितं ।
अहं गता नदीमार्य्य चैलप्रक्षालनार्थिनी । आगता च विपर्य्यस्तमपश्यं शकटं भुवि ।
तयोः कथयतोरेवमब्रुवंस्तत्र दारकाः । अनेन शिशुना यानमेतत् पादेन पातितं । ३४२०
अस्माभिः सम्पतद्भिश्च दृष्टमेतद्यदृच्छया । आश्चर्य्यमिति ते सर्व्वे विस्मयोत्फुल्ललोचनाः ।
स्वे स्थाने शकटस्याथ चक्रबन्धमकारयन् ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां शकटभङ्गे द्विषष्टोऽध्यायः ॥ ६२ ॥

॥ वैशम्पायन उवाच ॥ कस्यचित्त्वथ कालस्य शकुनीवेशधारिणी । धात्री कंसस्य भोजस्य पूतनेति परिश्रुता ।
पूतना नाम शकुनी घोरा प्राणिभयङ्करी । आजगामार्द्धरात्रे वै पक्षौ क्रोधाद्विधुन्वती ।
ततोऽर्द्धरात्रसमये पूतना प्रत्यदृश्यत । व्याघ्रगम्भीरनिर्घोषा व्याहरन्ती पुनः पुनः । ३४२५
निलिल्ये शकटाक्षे सा प्रस्रवोत्पीडवर्षिणी । ददौ स्तनं सा कृष्णाय तस्मिन् सुप्तजने निशि ।
तस्याः स्तनं पपौ कृष्णः प्राणैः सह ननाद च । छिन्नस्तनी सा सहसा पपात शकुनी भुवि ।
तेन शब्देन वित्रस्तास्ततः सुबुधिरे जनाः । स नन्दगोपो गोपाश्च यशोदा च सुविक्लवा ।
ते तामपश्यन् पतितां विसंज्ञां विपयोधरां । पूतनां पतितां भूमौ वज्रेणेवावदारितां ।
इदं किन्त्विति सन्त्रस्ताः कस्येदं कर्म्म चेत्यपि । नन्दगोपं पुरस्कृत्य गोपास्ते पर्य्यवारयन् । ३४३०
नाध्यगच्छन्त च तदा हेतुं तत्र कदाचन । आश्चर्य्यमाश्चर्य्यमिति ब्रुवन्तोऽनुययुर्गृहान् ।
गतेषु तेषु गोपेषु विस्मितेषु यथागृहं । यशोदां नन्दगोपस्तु पप्रच्छागतसम्भ्रमः ।

कोऽयं विधिर्न जानामि विस्मयो मे महानयं । पुत्रस्य मे भयं भीरु भीरुत्वं समुपागतं ।
यशोदा त्वब्रवीद्भीता नार्य्य जानामि किं न्विदं । दारकेण शयानेन सुप्ता शब्देन बोधिता ।
यशोदायामजानन्त्यां नन्दगोपः सबान्धवः । कंसाद्भयं चकारोग्रं विस्मयञ्च जगाम च । ३०३५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां पूतनावधे द्विषष्टोऽध्यायः ॥ ६२ ॥

॥ वैशम्पायन उवाच ॥ काले गच्छति तौ सौम्यौ दारकौ कृतनामकौ । कृष्णः सङ्कर्षणश्चोभौ रिङ्गिणौ समपद्यतां ।
तावन्योन्यगतौ बालौ बाल्यादेवैकतां गतौ । एकमूर्त्तिधरौ कान्तौ बालचन्द्रार्कवर्च्चसौ ।
एकनिर्म्माणनिर्युक्तावेकशय्यासनाशनौ । एकवेशधरावेकं पुष्यमाणौ शिशुव्रतं ।
एककार्य्यान्तरगतावेकदेहौ द्विधाकृतौ । एककार्य्यौ महावीर्य्यावेकस्य शिशुतां गतौ ।
एकप्रमाणौ लोकानां देववृत्तान्तमानुषौ । कृत्स्नस्य जगतो गोपौ संवृत्तौ गोपदारकौ । ३०४०
अन्योन्यव्यतिषक्ताभिः क्रीडाभिरभिशोभितौ । अन्योन्यकिरणग्रस्तौ चन्द्रसूर्य्याविवाम्बरे ।
विसर्पन्तौ तु सर्व्वत्र सर्पभोगभुजावुभौ । रेजतुः पांशुदिग्धाङ्गौ दृप्तौ कलभकाविव ।
क्वचिद्भस्मप्रदिग्धाङ्गौ करीषप्रोक्षितौ क्वचित् । तौ तत्र पर्य्यधावेतां कुमाराविव पावकी ।
क्वचिज्जानुभिरुद्घृष्टैः सर्पमाणौ विरेजतुः । क्रीडन्तौ वत्सशालासु शकृद्दिग्धाङ्गमूर्द्धजौ ।
शुशुभाते श्रिया जुष्टावानन्दजननौ पितुः । जनञ्च विप्रकुर्व्वाणौ विहसन्तौ क्वचित् क्वचित् । ३०४५
तौ तत्र कौतूहलिनौ मूर्द्धजव्याकुलेक्षणौ । रेजतुश्चन्द्रवदनौ दारकौ सुकुमारकौ ।
अतिप्रसक्तौ तौ दृष्ट्वा सर्व्वव्रजविचारिणौ । नाशकद्वारयितुं नन्दगोपः सुदुर्द्दमौ ।
ततो यशोदा संक्रुद्धा कृष्णं कमललोचनं । आनाय्य शकटीमूले भर्त्सयन्ती पुनः पुनः ।
दाम्ना चैवोदरे बद्ध्वा प्रत्यबन्धदुलूखले । यदि शक्नोषि गच्छेति तमुक्त्वा कर्म्म साऽकरोत् ।
व्यग्रायान्तु यशोदायां निर्जगाम ततोऽङ्गणात् । शिशुलीलां ततः कुर्व्वन् सर्व्वं विस्मापयन् व्रजं । ३०५०
सोऽङ्गणान्निःसृतः कृष्णः कर्षमाण उलूखलं । यमलाभ्यां प्रवृद्धाभ्यामर्ज्जुनाभ्यां निवारितः ।
मध्यान्निश्चक्राम तयोः शिशुः कर्षन्नुलूखलं । तत्तस्य कर्षतो बद्धं तिर्य्यग्गतमुलूखलं ।
लग्नं ताभ्यां समूलाभ्यामर्ज्जुनाभ्याञ्चकर्ष सः । तावर्ज्जुनौ कृष्यमाणौ तेन बालेन रंहसा ।
समूलविटपौ भग्नौ स च मध्ये जहास वै । निदर्शनार्थं गोपानां दिव्यं स्वबलमास्थितः ।
तद्दाम तस्य बालस्य प्रभावादभवद्दृढं । यमुनातीरमार्गस्था गोप्यस्तं ददृशुः शिशुं । ३०५५
क्रन्दन्त्यो विस्मयन्त्यश्च यशोदानिकटं ययुः । तास्तु संभ्रान्तवदना यशोदामूचुरङ्गनाः ।
एह्यागच्छ यशोदे त्वं संभ्रमात् किं विलम्बसे । यौ तावर्ज्जुनवृक्षौ तु व्रजे सत्योपयाचनौ ।
पुत्रस्योपरि तावेतौ पतितौ ते महीरुहौ । दृढेन दाम्ना तत्रैव बद्धो वत्स इवोदरे ।
जहास वृक्षयोर्मध्ये तव पुत्रः स बालकः । उत्तिष्ठ गच्छ दुर्मेधे मूढे पण्डितमानिनि ।
पुत्रमानय जीवन्तं मुक्तं मृत्युमुखादिव । सा भीता सहसोत्थाय हाहाकारं प्रकुर्व्वती । ३०६०
तं देशमगमद्यत्र पातितौ तौ महाद्रुमौ । ददर्श सा तयोर्मध्ये द्रुमयोरात्मजं शिशुं ।

शैलानां भूषणं घोषा घोषाणां भूषणं वनं । वनानां भूषणं गावस्ताश्चास्माकं परा गतिः ।
तस्मादन्यद्वनं यावः प्रत्यग्रयवसेन्धनं । इच्छन्त्यनुपभुक्तानि भोक्तुं गावस्तृणानि वै ।
तस्माद्वनं नवतृणं गच्छन्तु धनिनो व्रजाः । न द्वारबन्धावरणा न गृहक्षेत्रिणस्तथा ।
प्रशस्ता हि व्रजा लोके यथा वै चक्रचारिणः । शकृन्मूत्रेषु तेष्वेव जातं चारत्वमागतं ।
न तृणं भुञ्जते गावो नापि तत् पयसे हितं । स्थलीप्रायासु रम्यासु नवासु वनराजिषु । ३४९५
चराव: महिता गोभिः क्षिप्रं संवाह्यतां व्रजः । श्रूयते हि वनं रम्यं पर्याप्ततृणसंस्तरं ।
नाम्ना वृन्दावनं नाम स्वादुवृक्षफलोदकं । अझिल्लिकण्टकवनं सर्व्वैर्वनगुणैर्युतं ।
कदम्बपादपप्रायं यमुनातीरसंश्रितं । स्निग्धशीतानिलवनं सर्व्वर्त्तुनिलयं शुभं ।
गोपीनां सुखसञ्चारि चारुचित्रवनान्तरं । तत्र गोवर्द्धनो नाम नातिदूरे गिरिर्महान् ।
भ्राजते दीर्घशिखरो नन्दनस्येव मन्दरः । मध्ये चास्य महाशाखो न्यग्रोधो योजनोच्छ्रितः । ३५००
भाण्डीरो नाम शुशुभे नीलमेघ इवाम्बरे । मध्येन चास्य कालिन्दी सीमन्तमिव कुर्व्वती ।
प्रयाता नन्दनस्येव नलिनी सरितांवरा । तत्र गोवर्द्धनञ्चैव भाण्डीरञ्च वनस्पतिं ।
कालिन्दीञ्च नदीं रम्यां द्रक्ष्यावश्चरतः सुखं । तत्रायं वसतां घोषस्त्यज्यतां निर्गुणं वनं ।
सञ्चालयाव भद्रन्ते किञ्चिदुत्पाद्य कारणं । एवं कथयतस्तस्य वासुदेवस्य धीमतः ।
प्रादुर्बभूवुः शतशो रक्तमांसवसाशनाः । घोराश्चिन्तयतस्तस्य स्वतनूरुहजास्तदा । ३५०५
विनिष्पेतुर्भयकराः सर्व्वशः शतशो वृकाः । वृकान्निष्पतितान्दृष्ट्वा गोषु वत्सेष्वथो नृषु ।
गोपीषु च यथाकामं व्रजे त्रासोऽभवन्महान् । ते वृकाः पञ्चबद्धाश्च दशबद्धास्तथाऽपरे ।
त्रिंशद्विंशतिबद्धाश्च शतबद्धाश्च यूथशः । निश्चेरुस्तस्य गात्रेभ्यः श्रीवत्सकृतलक्षणाः ।
कृष्णस्य कृष्णवदना गोपानां भयकारिणः । भक्षयन्तश्च तैर्वत्सांस्त्रासयन्तश्च गोव्रजं ।
निशि बालान् हरन्तश्च वृकैरुत्सादितो व्रजः । न वनं शक्यते गन्तुं न च गाः परिरक्षितुं । ३५१०
न वनात् किञ्चिदाहर्त्तुं न चावतरितुं नदीं । त्रस्ताः शुद्धिशमनसो गतास्तस्मिन्वने वसन् ।
एवं वृकैरुदीर्णैश्च व्याघ्रतुल्यपराक्रमैः । व्रजो निष्पन्दचेष्टः स एकस्थानचरः कृतः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां वृकदर्शने पञ्चषष्टोऽध्यायः ॥ ६५ ॥
॥ वैशम्पायन उवाच ॥ एवं वृकांश्च तान्दृष्ट्वा वर्द्धमानान् दुरासदान् । सस्त्रीपुंसोऽथ घोषो वै समस्तोऽमन्त्रयत्तदा ।
स्थानेनेह न नः कार्य्यं व्रजामोऽन्यन्महद्वनं । यच्छिवञ्च सुखोष्यञ्च गवाञ्चैव सुखावहं ।
अद्यैव किञ्चिरेण स्म व्रजामः सह गोधनैः । यावद्वृकैर्व्वधं घोरं न नः सर्व्वो व्रजो व्रजेत् । ३५१५
एषां धूम्रारुणाङ्गानां दंष्ट्रिणां नखकर्षिणां । वृकाणां कृष्णवक्त्राणां बिभीमो निशि गर्ज्जतां ।
मम पुत्रो मम भ्राता मम वत्सोऽथ गौर्मम । वृकैर्व्यापादितेत्येवं क्रन्दन्ति स्म गृहे गृहे ।
तासां रुदितशब्देन गवां हम्भारवेण च । व्रजस्योत्थापनं चक्रुर्घोषवृद्धाः समागताः ।
तेषां मतमथाज्ञाय गन्तुं वृन्दावनं वनं । व्रजस्य च निवासाय गवाञ्चैव हिताय च ।

वृन्दावननिवेशाय तान् श्रुत्वा कृतनिश्चयान्। नन्दगोपो बृहद्वाक्यं बृहस्पतिरिवाददे। ३३२०
अद्यैव निश्चयप्राप्तिर्यदि गन्तव्यमेव नः। शीघ्रमाज्ञाप्यतां घोषः सज्जीभवत मा चिरं।
ततोऽवघुष्यत तदा घोषे तत्प्राकृतैर्जनैः। शीघ्रं गावः प्रकाल्यन्तां भाण्डं समभिरोप्यतां।
वत्सयूथानि काल्यन्तां युज्यन्तां शकटानि च। वृन्दावनमितः स्थानान्निवेशाय च गम्यतां।
तच्छ्रुत्वा नन्दगोपस्य वचनं साधु भाषितं। उदतिष्ठद्व्रजः सर्व्वः शीघ्रं गमनलालसः।
प्रयाह्युत्तिष्ठ गच्छामः किं शेषे याहि योजय। उत्तिष्ठति व्रजे तस्मिन्नासीत् कोलाहलो महान्। ३३२५
उत्तिष्ठमानः शुशुभे शकटीशकटस्तु सः। व्याघ्रघोषमहाघोषो घोषः सागरघोषवान्।
गोपीनां गर्गरीभिश्च मूर्द्धि चोत्सम्भितैर्घटैः। निष्पपात व्रजात् पङ्क्तिस्तारापङ्क्तिरिवाम्बरात्।
नीलपीतारुणैस्तासां वस्त्रैरग्र्यतमाम्बरैः। शक्रचापायते पङ्क्तिर्गोपीनां मार्गगामिनी।
दामनीदामभारैश्च केचित् कायावलम्बिभिः। गोपा मार्गगता भान्ति सावरोहा इव द्रुमाः।
स व्रजो व्रजता भाति शकटौघेन भास्वता। पोतैः पवनविक्षिप्तैर्निष्पतद्भिरिवार्णवः। ३३३०
क्षणेन तद्व्रजस्थानमीरिणं समपद्यत। द्रव्यावयवनिर्द्धूतं कीर्णं वायसमण्डलैः।
ततः क्रमेण घोषः स प्राप्तो वृन्दावनं महत्। निवेशं विपुलं चक्रे गवाञ्चैव हिताय च।
शकटावर्त्तपर्य्यन्तश्चन्द्रार्द्धाकारसंस्थितं। मध्ये योजनविस्तारं तावद्द्विगुणमायतं।
कण्टकीभिः प्रवृद्धाभिस्तथा कण्टकितैर्द्रुमैः। निखातोच्छ्रितशाखाग्रैरभिगुप्तं समन्ततः।
मन्थैरारोप्यमाणैश्च मन्थबन्धानुकर्षणैः। अद्भिः प्रक्षाल्यमानाभिर्गर्गरीभिः समन्ततः। ३३३५
कीलैरारोप्यमाणैश्च दामनीपाशपाशितैः। स्तम्भनीयष्टैश्चापि शकटैः परिवर्त्तितैः।
नियोगपाशैरासक्तैर्गर्गरीस्तम्भमूर्द्धसु। छादनार्थं प्रकीर्णैश्च कटैश्च तृणसङ्कटैः।
शाखाविटङ्कैर्वृक्षाणां क्रियमाणैरितस्ततः। शोध्यमानैर्गवां स्थानैः स्थाप्यमानैरुदूखलैः।
प्राक्स्रुवैः सिच्यमानैश्च सन्दीप्यद्भिश्च पावकैः। सवत्सचर्म्मास्तरणैः पर्य्यङ्कैश्चावरोपितैः।
तोयमुत्तारयन्तीभिः प्रेक्षन्तीभिश्च तद्वनं। शाखाश्चाकर्षमाणाभिर्गोपीभिश्च समन्ततः। ३३४०
युवभिः स्थविरैश्चैव गोपैर्व्यग्रकरैर्भृशं। विशसद्भिः कुठारैश्च काष्ठान्यपि तरूनपि।
तद्व्रजस्थानमधिकं शुशुभे काननावृतं। रम्यं वननिवेशं वै स्वादुमूलफलोदकं।
तास्तु कामदुघा गावः सर्व्वपक्षिरुतं वनं। वृन्दावनमनुप्राप्ता नन्दनोपमकाननं।
पूर्व्वमेव तु कृष्णेन गवां वै हितकारिणा। शिवेन मनसा दृष्टं तद्वनं वनचारिणा।
पश्चिमेऽपि ततो रूक्षे घर्म्ममासे निरामये। वर्षतीवामृतं देवे तृणं तत्र व्यवर्द्धत। ३३४५
न तत्र वत्साः सीदन्ति न गावो नेतरे जनाः। यत्र तिष्ठति लोकानां हिताय मधुसूदनः।
तास्तु गावः स घोषश्च स च सङ्कर्षणो युवा। कृष्णेन विहितं वासं तमध्यासत निर्वृताः।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वृन्दावनप्रवेशे षट्षष्टोऽध्यायः ॥ ६६ ॥
॥ वैशम्पायन उवाच ॥ तौ तु वृन्दावनं प्राप्तौ वसुदेवसुतावुभौ। चेरतुर्वत्सयूथानि चारयन्तौ सुरूपिणौ।

पूर्णाश्च घर्मसमयस्तयोस्तत्र वने सुखं । क्रीडतोः सह गोपालैर्यमुनाप्रावनावतोः ।
ततः प्रावृडनुप्राप्ता मनसः कामदीपनी । प्रववर्षुर्महामेघाः शक्रचापाङ्कितोदराः ।
बभूवादर्शनः सूर्यो भूमिश्चादर्शयत्तृणं । महता मेघवातेन नवतोयानुकर्षिणा ।
संमार्जिततला भूमिर्यौवनस्थेव लक्ष्यते । नववर्षावसिक्तानि शक्रगोपाकुलानि च ।
नष्टदावाग्निमार्गाणि वनानि प्रचकाशिरे । नृत्यव्यापारकालश्च मयूराणां कलापिनां ।
मदरक्ताः प्रवृत्ताश्च केकाः पटुरवास्तथा । नवप्रावृषि कान्तानां षट्पदाचारदायिनां ।
धौतमस्वं कदम्बानां नवाम्भोभिर्भ्राजते वपुः । वासितं कुटजैः पुष्पैः कदम्बैर्व्वासितं वनं ।
त्रासितं जलदैरुष्णं तोषिता च वसुन्धरा । सन्तप्ता भास्करकरैरभितप्ता दवाग्निना ।
जलैर्व्वलाहकोत्सृष्टैरुच्छ्वसन्तीव पर्व्वताः । महावातसमुद्धूतं महामेघगणार्पितं ।
मही महाराजपुरैस्तुल्यमापद्यते नभः । क्वचित् कन्दलहासाढ्यं शिलीन्ध्राभरणं क्वचित् ।
संप्रदीप्तमिवाभाति फुल्लनीपद्रुमं वनं । ऐन्द्रेण पयसा सिक्तं मारुतेन नवीकृतं ।
पार्थिवं गन्धमाघ्राय लोकः क्षुभितमानसः । कृष्णसारङ्गनादेन दर्दुरव्याहृतेन च ।
नवैश्च शिखिविक्रुष्टैरवकीर्णा वसुन्धरा । भ्रमत्पूर्णमहावर्त्ता वर्षप्राप्तमहारयाः ।
हरन्त्यस्तीरजान् वृक्षान् विस्तारं यान्ति निम्नगाः । सन्ततासारनिर्द्धौताः क्लिन्नपक्षोत्तरच्छदाः ।
न त्यजन्ति नगाग्राणि श्रान्ता इव पतत्त्रिणः । तोयगम्भीरलम्बेषु प्रस्रवत्सु नदत्सु च ।
उदरेषु नवाभ्राणां मज्जतीव दिवाकरः । महीरुहैरुत्पतितैः सलिलोत्पीडसङ्कुला ।
अन्वेष्यमार्गा वसुधा भाति शाद्वलमालिनी । वज्रेणेवावरुग्णानां नगानां नगशालिनां ।
स्रोतोभिः परिकृत्तानि पतन्ति शिखराण्यधः । पतता मेघवर्षेण यथा निम्नानुसारिणा ।
पर्व्वतोद्गीर्णमुक्तेन पूर्य्यन्ते वनराजयः । हर्षोत्क्षिप्तमुखा वन्या मेघनादानुसारिणः ।
भान्त्यतिकृष्णा मातङ्गा गाढ़ता इव तोयदाः । प्रावृट्प्रवृत्तिं संदृश्य दृष्ट्वा चाम्बुधरान् घनान् ।
रौहिणेयो मिथः काले कृष्णं वचनमब्रवीत् । पश्य कृष्ण घनान् कृष्णान् बलाकाङ्कदभूषणान् ।
गगने तव गात्राणां वर्णचौराणिवे त्थितान् । तव निद्राकरः कालस्तव गात्रोपमं नभः ।
त्वमिवाज्ञातवसतिं चन्द्रो वसति वार्षिकीं । एतन्नीलाम्बदश्यामं नीलोत्पलदलप्रभं ।
संप्राप्ते दुर्द्दिने काले दुर्द्दिनं भाति वै नभः । पश्य कृष्ण जलोदग्रैः कृष्णैरद्र्यचितैर्घनैः ।
गोवर्द्धनो यथा रम्यो भाति गोवर्द्धनो गिरिः । पतितेनाम्भसा ह्येते समन्तान्मददर्पिताः ।
भ्राजन्ते कृष्णसारङ्गाः काननेषु मदान्विताः । एतान्यमृतकल्पानि हरितानि मृदूनि च ।
तृणानि शतपत्राक्षपत्रैर्गूहन्ति मेदिनीं । चरस्थलानां शैलानां वनानाञ्च घनागमे ।
सस्यानाञ्च सीमानां न लक्ष्योर्थतिरिच्यते । शीघ्रवातसमुद्धूताः प्रोषितोत्सुककारिणः ।
दामोदरोद्दामरवाः प्रागल्भ्यं यान्ति तोयदाः । हरे सर्व्वमयापेन विचर्येण त्रिविक्रम ।
दिवाकरेण रचितं तवेदं मध्यमं पदं । नभस्ये च नभस्तुल्यं भात्येव चरत्नभः ।

मेघैः शीतातपकरो तिरश्चिरिव रश्मिवान्। द्यावापृथिव्योः संसर्गः सततं प्रततैः कृतः।
अव्यवच्छिन्नधारौघैः समुद्रौघसमैर्घनैः। नीपार्जुनकदम्बानां पृथिव्यां वातहृष्टयः। ३४४०
गन्धैः कोलाहला वान्ति वाता मदनदीपनाः। संप्रवृत्तमहावर्षं लम्बमानमिवाम्बुदं।
आत्यगाधमपर्य्यन्तं ससागरमिवाम्बरं। धारानिर्म्मलनाराचं विद्युत्कवचवर्म्मिणं।
शक्रचापायुधवरं युद्धसज्जमिवाम्बरं। शैलानाञ्च वनानाञ्च द्रुमाणाञ्च वरानन।
प्रतिच्छन्नानि भासन्ते शिखराणि घनैर्घनैः। गजानीकैरिवाकीर्णं सलिलोद्गारिभिर्घनैः।
वर्णसारूप्यतां याति गगनं सागरस्य वै। समुद्रोद्धूतजनना लोलशाद्वलकम्पिनः। ३४४५
शीतलाः सपृषद्ग्रामाः कर्कशा वान्ति मारुताः। निशासु सुप्तचन्द्रासु मुक्ततोयासु तोयदैः।
नष्टसूर्य्यस्य नभसो न विभान्ति दिशो दश। घेतनं पुष्करं कोशैः सुधाध्मातैः समन्ततः।
न घृणीनां न रम्याणां विशेषं यान्ति हृष्टयः। सर्व्वदोषपरित्यक्तं मेघशोभातिभूषितं।
पश्य वृन्दावनं कृष्ण वनश्चैत्ररथं यथा। एवं प्रावृड्गुणान् सर्व्वान् श्रीमान् कृष्णस्य पूर्व्वजः।
कथयन्नेव बलवान् व्रजमेव जगाम ह। तौ रामचन्द्रावन्योन्यं कृष्णसङ्कर्षणावुभौ। ३४५०
तत्कालं ज्ञातिभिः सार्द्धं चेरतुस्तन्महावनं।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि प्रावृड्वर्णने सप्तदशोऽध्यायः ॥ १७ ॥

॥ वैशम्पायन उवाच ॥ कदाचित्तु तदा कृष्णो विना सङ्कर्षणेन वै। चचार तद्वनवरं कामरूपी वरानन।
काकपक्षधरः श्रीमान् श्यामः पद्मदलेक्षणः। श्रीवत्सेनोरसि युतः शशाङ्क इव लक्ष्मणे।
साङ्गदेनाग्रपादेन पद्मकोशश्रियवर्चसा। सुकुमाराभिताम्रेण क्रान्तविक्रान्तगामिना।
पीते प्रीतिकरे नृणां पद्मकिञ्जल्कसन्निभे। सूक्ष्मे वसानो वसने ससन्ध्य इव तोयदः। ३४५५
वत्सव्यापारयुक्ताभ्यां व्यग्राभ्यां दण्डरज्जुभिः। भुजाभ्यां साधुवृत्ताभ्यां पूजिताभ्यां सदाऽमरैः।
सदृशं पुण्डरीकस्य गन्धेन कमलस्य च। रराज तस्य तत्ताम्रं चिरोष्ठपुटं मुखं।
शिखाभिस्तस्य मुक्ताभीरराज मुखपङ्कजं। वृतं षट्पदपङ्क्तीभिर्यथा स्यात् पद्ममण्डलं।
तस्यार्ज्जुनकदम्बाढ्या नीपकन्दलमालिनी। रराज माला शिरसि नक्षत्राणि यथा दिवि।
स तया मालया वीरः शुशुभे सर्व्वपुष्पया। मेघकालाम्बुदश्यामो नभस्य इव मूर्त्तिमान्। ३४६०
एकेनामलपत्रेण कण्ठसूत्रावलम्बिना। रराज वर्हिपत्रेण मन्दमारुतकम्पिना।
कचिद्गायन् क्वचित् क्रीडंश्चञ्चूर्य्यंश्च क्वचित् क्वचित्। पर्णवाद्यं श्रुतिसुखं वादयंश्च क्वचिद्वने।
गोपवेणुं सुमधुरं कामात्तमपि वादयन्। प्रह्लादनार्थञ्च गवां क्वचिद्वनगतो युवा।
गोकुलेऽम्बुधरश्यामश्चचार द्युतिमान् प्रभुः। रेमे च तत्र रम्यासु चित्रासु वनराजिषु।
मयूरवरघुष्टासु मदनोद्दीपनीषु च। मेघनादप्रतिश्रुत्यैर्नादितासु समन्ततः। ३४६५
शाद्वलच्छन्नमार्गासु शिलिन्ध्राभरणासु च। कन्दलामलरक्तीषु स्रवन्तीषु नवं जलं।
केशराणां नवैर्गन्धैर्मदनिश्वसितोपमैः। अभीक्ष्णं निःश्वसन्तीषु योषित्स्विव समन्ततः।

सेव्यमानो नवैर्वातैर्द्रुमजालविनिःसृतैः । तासु कृष्णो मुदं लेभे सौम्यासु वनराजिषु ।
स कदाचिद्वने तस्मिन् गोभिः सह परिभ्रमन् । ददर्श विपुलोदग्रं शाखिनं शाखिनाम्बरं ।
स्थितं धरण्यां मेघाभं निविडं पत्रसञ्चयैः । गगनार्द्धोच्छ्रिताकारं पवनाभोगधारिणं । ३६१०
नीलचित्राङ्गवर्णैश्च सेवितं बहुभिर्द्विजैः । फलैः प्रवालैश्च घनं सेन्द्रचापघनोपमं ।
भवनाकारविटपं लतापुष्पसुमण्डितं । विशालमूलावनतं पवनाम्भोदधारिणं ।
आधिपत्यमिवान्येषां तस्य देशस्य शाखिनां । कुर्वाणं शुभकर्माणं निरावर्षं निरातपं ।
न्यग्रोधं पर्वताग्राभं भाण्डीरं नाम नामतः । दृष्ट्वा तत्र मतिञ्चक्रे निवासाय तदा प्रभुः ।
स तत्र वयसा तुल्यैर्वत्सपालैः सहानघः । रेमे वै दिवसं कृष्णः पुरा स्वर्गगतो यथा । ३६१५
तं क्रीडमानं गोपालाः कृष्णं भाण्डीरवासिनं । रमयन्ति स्म बहवो वन्यैः क्रीडनकैस्तदा ।
अन्ये स्म परिगायन्ति गोपा मुदितमानसाः । गोपालाः कृष्णमेवान्ये गायन्ति स्म रतिप्रियाः ।
तेषां स गायतामेव वादयामास वीर्य्यवान् । पर्णवाद्यान्तरे वेणुं तुम्बीवीणाञ्च तत्र च ।
कदाचिच्चारयन्नेव गाः स गोवृषभेक्षणः । जगाम यमुनातीरं लतालङ्कृतपादपं ।
तरङ्गापाङ्गकुटिलां वारिस्पर्शसुखानिलां । तात्र पद्मोत्पलवतीं ददर्श यमुनां नदीं । ३६२०
जलजैः प्राणिभिः कीर्णां जलजैर्भूषितां गुणैः । जलजैः कुसुमैश्चित्रां जलजैर्वरितोदकां ।
सुतीर्थां स्वादुसलिलां ह्रदिनीं वेगगामिनीं । तोयवातोद्धुतैर्वृक्षैरवनामितपादपां ।
हंसकारण्डवोद्घुष्टां सारसैश्च निनादितां । अन्योन्यमिथुनैश्चैव सेवितां मिथुनेचरैः ।
प्रस्थितस्रोतचरणां पुलिनश्रोणिमण्डलां । आवर्त्तनाभिगम्भीरां पद्मरोमानुरञ्जितां ।
तटच्छेदोदरां कान्तां तरङ्गत्रिवलीधरां । चक्रवाकस्तनतटीं तीरपार्श्वायतानानां । ३६२५
फेनप्रहृष्टदशनां प्रसन्नां हंसहासिनीं । रुधिरोत्पलदन्तोष्ठीं नतभ्रूं जलजेक्षणां ।
ह्रददीर्घललाटान्तां कान्तशैवलमूर्द्धजां । दीर्घस्रोतायतभुजामाभोगश्रवणायतां ।
कारण्डवाकुण्डलिनीं श्रीमत्पङ्कजलोचनां । काशपुष्पमयं वासो वसानां हंसलक्षणां ।
तटजाभरणोपेतां मीननिर्मलमेखलां । पारिप्लवप्लवक्षौमां सारसारावनूपुरां ।
श्वापदक्षानुलिप्ताङ्गीं कूर्म्मलक्षणभूषितां । निपानश्वापदापीतां नृभिः पीतपयोधरां । ३६३०
श्वापदोच्छिष्टसलिलामाश्रमस्थानसङ्कुलां । तां समुद्रस्य महिषीं वीक्षमाणः समन्ततः ।
चचार रुचिरं कृष्णो यमुनामुपशोभयन् । ताञ्चरन् स नदीं श्रेष्ठां ददर्श ह्रदमुत्तमं ।
दीर्घं योजनविस्तारं दुस्तरं त्रिदशैरपि । गम्भीरमक्षोभ्यजलं निष्कम्पमिव सागरं ।
तोयजैः श्वापदैस्त्यक्तं शून्यं तोयचरैः खगैः । अगाधेनाम्भसा पूर्णं मेघपूर्णमिवाम्बरं ।
दुःखोपसर्प्यं तीरेषु ससर्पैर्व्विपुलैर्व्विलैः । विषारणिभवस्याग्नेर्धूमेन परिवेष्टितं । ३६३५
अभोज्यं तत् पशूनां हि अपेयञ्च जलार्थिनां । उपभोगैः परित्यक्तं सद्भिस्त्रिषवणार्थिभिः ।
आकाशादप्यसञ्चार्य्यं खगैराकाशगोचरैः । दह्येष्वपि पतत्स्वप्सु ज्वलन्तमिव तेजसा ।

समन्तायोजनं साग्रं तीरेष्वपि दुरासदं । विषानलेन घोरेण ज्वालाप्रज्वलितोदकं।
सजलोत्करतस्यास्य क्रोशमात्रे निरामये। तं दृष्ट्वा चिन्तयामास कृष्णो वै विपुलं ह्रदं।
अगाधं द्योतमानञ्च कस्येदं सुमहद्ध्रदं। अस्मिन् स कालियो नाम नीलाञ्जनचयोपमः। ३६४०
उरगाधिपतिः साक्षाद्ध्रदे वसति दारुणः। उत्सृज्य सागरे वासं यो मया विजितः पुरा।
भयात् पन्नगराजस्य सुपर्णस्योरगाशिनः। तेनेयं दूषिता सर्व्वा यमुना सागरङ्गमा।
भयादस्योरगपतेर्नायं देशो निषेव्यते। तदिदं दारुणाकारमरण्यं कण्टकावृतं।
सावरोधद्रुमं घोरं कीर्णं नानालताद्रुमैः। रक्षितं सर्पराजस्य सचिवैर्व्वनचारिभिः।
वनं निर्व्विषयाकारं विषाक्तमिव दुस्तरं। तैराप्तकारिभिर्नित्यं सर्व्वतः परिरक्षितं। ३६४५
शैवालमलिनैश्चापि वृक्षैः सुपन्नगाकुलैः। कर्त्तव्यमार्गौ भ्राजेते ह्रदस्यास्य तटावुभौ।
तदस्य सर्पराजस्य कर्त्तव्यो निग्रहो मया। यथेयं सरिदम्भोदा सर्व्वाङ्गसुजलाशया।
व्रजोपभोग्या च शुभा नागे वै दमिते मया। सर्व्वत्र सुखसञ्चारा सर्व्वतीर्थसुखाश्रया।
एतदर्थञ्च वासो मे व्रजेऽस्मिन् गोपजन्म च। अमीषामुत्पथस्थानां निग्रहार्थं दुरात्मनां।
एतं कदम्बमारुह्य तदेव शिशुलीलया। विनिपत्य ह्रदे घोरे दमयिष्यामि कालियं। ३६५०
एवं कृते बाहुवीर्य्यं लोके ख्यातिं गमिष्यति।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां कालियह्रददर्शने अष्टषष्टोऽध्यायः ॥ ६८ ॥
॥ वैशम्पायन उवाच ॥ सोऽपसृत्य नदीतीरं बद्ध्वा परिकरं दृढं। आरोहच्चपलः कृष्णः कदम्बशिखरं मुदा।
कृष्णः कदम्बशिखरान्नीलोऽम्बुदाकृतिः। ह्रदमध्येऽकरोच्छब्दं निपपातम्बुजेक्षणः।
स कृष्णेनाभिपतता क्षोभितो यमुनाह्रदः। सम्प्रासिच्यत वेगेन भिद्यमान इवाम्बुदः।
तेन शब्देन संक्षुब्धं तत्सर्पभवनं महत्। उदतिष्ठज्जलात् सर्पो रोषपर्य्याकुलेक्षणः। ३६५५
स चोरगपतिः क्रुद्धो मेघराशिसमप्रभः। ततो रक्तान्तनयनः कालियः समदृश्यत।
पञ्चास्यः पावकोच्छ्वासश्चलज्जिह्वोऽनलाननः। पृथुभिः पञ्चभिर्घोरैः शिरोभिः परिवारितः।
पूरयित्वा ह्रदं सर्व्वं भोगेनानलवर्च्चसा। स्फुरन्निव स रोषेण ज्वलन्निव च तेजसा।
क्रोधेन तज्जलं तस्य सर्व्वं शृतमिवाभवत्। प्रतिस्रोतश्च भीतेव जगाम यमुना नदी।
तस्य क्रोधाग्निपूर्णेभ्यो वक्त्रेभ्योऽभूच्च मारुतः। दृष्ट्वा कृष्णं ह्रदगतं क्रीडन्तं शिशुलीलया। ३६६०
सधूमाः पन्नगेन्द्रस्य मुखान्निश्चेरुरर्च्चिषः। सृजता तेन रोषाग्निं समीपे तीरजा द्रुमाः।
क्षणेन भस्मसान्नीता युगान्तप्रतिमेन वै। तस्य पुत्राश्च दाराश्च भृत्याश्चान्ये महोरगाः।
वमन्तः पावकं घोरं वक्त्रेभ्यो विषसम्भवं। सधूमं पन्नगेन्द्रास्ते निष्पेतुरमितौजसः।
प्रवेष्टितश्च तैः सर्पैः स कृष्णो भोगबन्धनं। निश्चलचरणाकारस्तस्थौ गिरिरिवाचलः।
सन्दशन्त्यस्तमेतैः तैर्व्विषोत्पीडजलाविलैः। ते कृष्णं सर्पपतयो न ममार च वीर्य्यवान्। ३६६५
एतस्मिन्नन्तरे भीता गोपालाः सर्व्व एव ते। क्रन्दमाना व्रजं जग्मुर्बाष्पसंदिग्धया गिरा।

॥ गोपा ऊचुः ॥ एष मोहकृतः कृष्णो मग्नो वै कालिये ह्रदे । भक्ष्यते सर्पराजेन तदागच्छत मा चिरं ।
नन्दगोपाय वै क्षिप्रं सबलाय निवेद्यतां । एष ते कृष्यते पुत्रः सर्पेणेति महाह्रदे ।
नन्दगोपस्तु तच्छ्रुत्वा वज्रपातोपमं वचः । आर्त्तः स्खलितविक्रान्तस्तं जगाम ह्रदोत्तमं ।
सबालयुवतीवृद्धः स च सङ्कर्षणो युवा । आक्रीडं पन्नगेन्द्रस्य जलस्थं समुपागमन् ।　३६७०
नन्दगोपादयो गोपास्ते सर्व्वे साश्रुलोचनाः । हाहाकारं प्रकुर्व्वन्तस्तस्थुस्तीरे ह्रदस्य वै ।
व्रीडिता विस्मिताश्चैव शोकार्त्ताश्च पुनः पुनः । केचित्तु पुत्र हा हेति हाधिगित्यपरे पुनः ।
अपरे हा हताः स्मेति रुरुदुर्भृशदुःखिताः । स्त्रियश्चैव यशोदां तां हा हताऽसीति चुक्रुशुः ।
या पश्यसि प्रियं पुत्रं सर्पराजवशं गतं । सन्दितं सर्पभोगेन कृष्यमाणं यथा मृगं ।
अश्मसारमयं नूनं हृदयं तेऽभिलक्ष्यते । पुत्रं कथमिमं दृष्ट्वा यशोदे नावदीर्य्यसे ।　३६७५
दुःखितं वत पश्यामो नन्दगोपं ह्रदान्तिके । न्यस्य पुत्रमुखे दृष्टिं निश्चेतनमिव स्थितं ।
यशोदामनुगच्छन्त्यः सर्पावासमिमं ह्रदं । प्रविशामो न यास्यामः सर्व्वा दामोदरं विना ।
दिवसः को विना सूर्य्यं विना चन्द्रेण का निशा । विना वृषेण का गावो विना कृष्णेन को व्रजः ।
विना कृष्णं न यास्यामो विवत्सा इव धेनवः । तासां विलपितं श्रुत्वा तेषाञ्च व्रजवासिनां ।
विलापं नन्दगोपस्य यशोदारुदितं तथा । एकभावशरीरश्च एकदेहो द्विधाकृतः ।　३६८०
सङ्कर्षणस्तु संक्रुद्धो बभाषे कृष्णमव्ययं । कृष्ण कृष्ण महाबाहो गोपानां नन्दिवर्द्धन ।
दम्यतामेष वै क्षिप्रं सर्पराजो विषायुधः । इमे नो बान्धवास्तात त्वां मत्वा मानुषं विभो ।
परिदेवन्ति करुणं सर्व्वे मानुषबुद्धयः । तच्छ्रुत्वा रौहिणेयस्य वाक्यं संज्ञासमीरितं ।
विक्रीड्यास्फोटयद्बाहू भित्त्वा तं भोगबन्धनं । तस्य पद्भ्यां समाक्रम्य भोगराशिं जलोत्थितं ।
शिरस्तु कृष्णो जग्राह स्वहस्तेनावनाम्य च । तस्यारुरोह सहसा मध्यमं तन्महच्छिरः ।　३६८५
सोऽस्य मूर्द्ध्नि स्थितः कृष्णो ननर्त्त रुचिराङ्गदः । मृद्यमानः स कृष्णेन श्रान्तमूर्द्धा भुजङ्गमः ।
आस्यैः सरुधिरोद्गारैः कातरो वाक्यमब्रवीत् । अविज्ञानान्मया कृष्ण रोषोऽयं सम्प्रदर्शितः ।
दमितोऽहं हतविषो वशगस्ते वरानन । तदाज्ञापय किं कुर्य्यां सदारापत्यबान्धवः ।
कस्य वा वश्यतां यामि जीवितं मे प्रदीयतां । पञ्चमूर्द्धागतं दृष्ट्वा सर्पं सर्पारिकेतनः ।
अक्रुद्ध एव भगवान् प्रत्युवाचोरगेश्वरं । तवास्मिन् यमुनातोये नैव स्थानं ददाम्यहं ।　३६९०
गच्छार्णवजलं सर्प सभार्य्यः ससुबान्धवः । यश्चेह भूयो दृश्येत स्थले वा यदि वा जले ।
तव भृत्यस्तनूजो वा क्षिप्रं बध्यः स मे भवेत् । शिवश्चास्य जलस्यास्तु त्वञ्च गच्छ महार्णवं ।
स्थाने त्विह भवेद्दोषस्तवान्तकरणो महान् । मत्पदानि च ते सर्प दृष्ट्वा मूर्द्धसु सागरे ।
गरुडः पन्नगरिपुस्त्वयि न प्रहरिष्यति । इत्युक्त्वा मूर्द्ध्नि वचसा कृष्णेनोरगपुङ्गवः ।
पश्यतामेव गोपानां जगामादर्शनं ह्रदात् । निर्ज्जिते तु गते सर्पे कृष्णमुत्तीर्य्य विष्ठितं ।　३६९५
विस्मिता तुष्टुवुर्गोपाश्चक्रुश्चैव प्रदक्षिणं । ऊचुश्च सर्व्वे सुप्रीता नन्दगोपं वनेचराः ।

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे पुत्र ईदृशः । अद्यप्रभृति गोपानां गवां गोष्ठस्य चानघ ।
आपत्सु शरणं कृष्णः प्रभुश्चायतलोचनः । जाता शिवजला सर्व्वा यमुना मुनिसेविता ।
तीरे चाख्याः सुखं गावो विचरिष्यन्ति नः सदा । व्यक्तमेव वने जाता वयं यत्कृष्णमीदृशं ।
सद्भूतं न जानीमश्छन्नमग्निमिव व्रजे । एवं ते विस्मिताः सर्व्वे स्तुवन्तः कृष्णमव्ययं । ३८००
जग्मुर्गोपगणा घोषं देवाश्चैत्ररथं यथा ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां कालियदमने ऊनसप्ततोऽध्यायः ॥ ६९ ॥

॥ वैशम्पायन उवाच ॥ दमिते सर्पराजे तु कृष्णेन यमुनाह्रदे । तमेव चेरतुर्देशं सहितौ रामकेशवौ ।
आजग्मतुस्तौ सहितौ गोधनैः सह गोपिनौ । गिरिं गोवर्द्धनं रम्यं वसुदेवसुतावुभौ ।
गोवर्द्धनस्योत्तरतो यमुनातीरमाश्रितं । ददृशाते ततो वीरौ रम्यं तालवनं महत् ।
तौ तालपर्णप्रतते रम्ये तालवने रतौ । चेरतुः परमप्रीतौ वृषपोताविवोद्धतौ । ३८०५
स तु देशः समः स्निग्धः सुमहान् कृष्णमृत्तिकः । दर्भप्रायः स्थलीभूतो लोष्टपाषाणवर्ज्जितः ।
तालैस्तैर्विपुलस्कन्धैरुच्छ्रितैः श्यामपर्णभिः । फलाग्रशाखिभिर्भाति नागहस्तैरिवोच्छ्रितैः ।
तत्र दामोदरो वाक्यमुवाच वदतांवरः । अहो तालफलैः पक्वैर्वासितेयं वनस्थली ।
स्वादून्यार्य्य सुगन्धीनि श्यामानि रसवन्ति च । पक्वतालानि सहितौ पातयाव लघुक्रमौ ।
यद्येषामीदृशो गन्धो माधुर्य्येणातितर्पणः । रसेनामृतकल्पेन भवितव्यञ्च मे मतिः । ३८१०
दामोदरवचः श्रुत्वा रौहिणेयो हसन्निव । पातयन् पक्वतालानि चालयामास तांस्तरून् ।
तच्च तालवनं नृणामसेव्यं दुरतिक्रमं । निर्म्माणभूतमोरिणं पुरुषादालयोपमं ।
दारुणो धेनुको नाम दैत्यो गर्द्दभरूपवान् । खरयूथेन महता वृतो वसति नामरः ।
स तु तालवनं घोरं गर्द्दभः परिरक्षति । नृपक्षिश्वापदगणांस्त्रासयन्नतिदर्पितः ।
तालशब्दं स तं श्रुत्वा संघुष्टं फलपातने । नामर्षयत तं क्रुद्धस्तालस्वनमिव द्विपः । ३८१५
शब्दानुसारी संक्रुद्धो दर्पाविद्धसटाननः । स्तब्धाक्षो हेषितपटुः खुरैर्निर्द्दारयन्महीं ।
आविद्धपुच्छो हृषितो व्यात्तानन इवान्तकः । आपतन्नेव ददृशे रौहिणेयमुपस्थितं ।
तालानां तमधो दृष्ट्वा सध्वजाकारमव्ययं । रौहिणेयं खरो दुष्टः सोऽदशद्दशनायुधः ।
पद्भ्यामुभाभ्याञ्च पुनः पश्चिमाभ्यां पराङ्मुखः । जघानोरसि दैत्योऽसौ रौहिणेयं निरायुधं ।
ताभ्यामेव स जग्राह पद्भ्यां तं दैत्यगर्द्दभं । आवर्ज्जितमुखस्कन्धं प्रैरयंस्तालमूर्द्धनि । ३८२०
स भग्नोरुकटीग्रीवो भग्नपृष्ठो दुराकृतिः । खरस्तालफलैः सार्द्धं पपात धरणीतले ।
तं गतासुं गतश्रीकं पतितं वीक्ष्य गर्द्दभं । ज्ञातींश्चास्यापरांस्तस्य तृणराजनि सोऽक्षिपत् ।
सा भूर्गर्द्दभदेहैश्च तालैः पक्वैश्च पातितैः । बभासे छन्नजलदा द्यौरिवाव्यक्तशारदी ।
तस्मिन् गर्द्दभदैत्ये तु सानुगे विनिपातिते । रम्यं तालवनं तद्धि भूयो रम्यतरं बभौ ।
विप्रमुक्तभयं शुभ्रं विविक्ताकारदर्शनं । चरन्ति स्म सुखं गावस्तत्तालवनमुत्तमं । ३८२५

ततः प्रहृष्टास्ते सर्व्वे गोपा वनविचारिणः । वीतशोकभयायासाश्चेरुर्यथेष्टं स्म ते वनं ।
ततः सुखं प्रकीर्णासु गोषु नागेन्द्रविक्रमौ । द्रुमपर्णासने कृत्वा यथार्हं तौ निषेदतुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां धेनुकवधे सप्ततितमोऽध्यायः ॥ ७० ॥
॥ वैशम्पायन उवाच । अथ तौ जातहर्षौ तु वसुदेवसुतावुभौ । तत्तालवनमुत्सृज्य भूयो भाण्डीरमागतौ ।
चारयन्तौ विवृद्धानि गोधनानि शुभाननौ । स्फीतशष्पप्ररूढानि वीक्षमाणौ वनानि च ।
क्ष्वेडयन्तौ प्रगायन्तौ विचिन्वन्तौ च पादपान् । नामभिर्व्याहरन्तौ च सवत्सा गाः परन्तपौ ।
नियोगपाशैरासक्तैः स्कन्धाभ्यां शुभलक्षणौ । वनमालाकुलोरस्कौ बालशृङ्गाविवर्षभौ ।
सुवर्णाञ्जनचूर्णाभ्यामन्योन्यसदृशाम्बरौ । महेन्द्रायुधसंसक्तौ शुक्लकृष्णाविवाम्बुदौ ।
कुशाग्रकुसुमानाञ्च कर्णपूरमनोरमौ । वनमार्गेषु कुर्व्वाणौ वन्यवेशधरावुभौ ।
गोवर्द्धनस्यानुचरौ वने सानुचरौ च तौ । चेरतुर्लोकसिद्धाभिः क्रीडाभिरपराजितौ ।
तावेव मानुषीं दीक्षां वहन्तौ सुरपूजितौ । तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्व्वनं ।
तौ तु भाण्डीरमुचिते काले क्रीडानुवर्त्तिनौ । प्राप्तौ परमशाखाढ्यं न्यग्रोधं शाखिनाम्वरं ।
तत्र स्पन्दोलिकाभिश्च युद्धमार्गविशारदौ । अश्मभिः क्षेपणीयैश्च व्यायामं कुरुतः स्म तौ ।
युद्धमार्गैश्च विविधैर्गोपालैः सहितावुभौ । मुदितौ सिंहविक्रान्तौ यथाकामं विचेरतुः ।
तयोरमयतोरेवं तच्छिशुत्वपुरोत्तम । प्रलम्बोऽभ्यागमत्तत्र छिद्रान्वेषी तयोस्तदा ।
गोपालवेशमास्थाय वन्यपुष्पविभूषितः । लोभयानः स्म तौ वीरौ हासैः क्रीडनकैस्तदा ।
सोऽवगाहत निःशङ्कस्तेषां मध्यममानुषः । मानुषं वपुरास्थाय प्रलम्बो दानवोत्तमः ।
प्रक्रीडितास्तु ते सर्व्वे सह तेनामरारिणा । गोपालवपुषं गोपा मन्यमानाः स्वबान्धवं ।
स तु छिद्रान्तरप्रेप्सुः प्रलम्बो गोपतां गतः । दृष्टिं परिदधे कृष्णे रौहिणेये च दारुणां ।
अविषह्यं ततो मत्वा कृष्णमद्भुतविक्रमं । रौहिणेयवधे यत्नमकरोद्दानवोत्तमः ।
हरिणाक्रीडितं नाम बालक्रीडनकं ततः । प्रक्रीडितास्तु ते सर्व्वे द्वौ द्वौ युगपत्तदा ।
कृष्णः श्रीदामसहितः पुप्लुवे गोपसूनुना । सङ्कर्षणस्तु पुप्लुवे प्रलम्बेन सहानघ ।
गोपालास्त्वपरे द्वन्द्वं गोपालैरपरैः सह । प्रद्रुता लङ्घयन्तो वै अन्योन्यं लघुविक्रमाः ।
श्रीदामानजयत् कृष्णः प्रलम्बं रौहिणीसुतः । गोपालाः कृष्णपक्षीयैर्गोपालास्त्वपरे जिताः ।
ते वाहयन्तस्त्वन्योन्यं संहर्षात् सहसा द्रुताः । भाण्डीरस्कन्धमुद्दिश्य मर्य्यादां पुनरागमन् ।
सङ्कर्षणन्तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः । द्रुतं जगाम विमुखः सचन्द्र इव तोयदः ।
स भारमसहंस्तस्य रौहिणेयस्य धीमतः । ववृधे सुमहाकायः शक्राक्रान्त इवाम्बुदः ।
स भाण्डीरवटप्रख्यं स्निग्धाञ्जनगिरिप्रभं । स्वं वपुर्दर्शयामास प्रलम्बो दानवोत्तमः ।
पञ्चस्तवकयुक्तेन मुकुटेनार्कवर्च्चसा । दीप्यमानाननो दैत्यः सूर्य्याक्रान्त इवाम्बुदः ।
महाननो महाग्रीवः सुमहानञ्जनोपमः । रौद्रः शकटचक्राक्षो नामयंश्चरणैर्महीं ।

स्रग्दामलम्बाभरणः प्रलम्बाम्बरभूषणः । धीरं प्रलम्बः प्रययौ तोयकम्प इवाम्बुदः । ३७५५
स जहारैव वेगेन रौहिणेयं महासुरः । सागरोपप्लवगतं कृत्स्नं लोकमिवान्तकः ।
ह्रियमाणः प्रलम्बेन स तु सङ्कर्षणो बभौ । उह्यमान इवाकाशे कालमेघेन चन्द्रमाः ।
स सन्दिग्धमिवात्मानं मेने सङ्कर्षणस्तदा । दैत्यस्कन्धगतः श्रीमान् कृष्णञ्चेदमुवाच ह ।
ह्रियेऽहं कृष्ण दैत्येन पर्वतोदग्रवर्ष्मणा । दर्शयित्वा सुमहतीं मायां मानुषरूपिणीं ।
कथमस्य मया कार्यं शासनं दुष्टचेतसः । प्रलम्बस्य प्रवृद्धस्य दर्पाद्द्विगुणवर्ष्मणः । ३७६०
तमाह सस्मितं कृष्णः साम्ना हर्षकलेन वै । अभिज्ञो रौहिणेयस्य वृत्तस्य च बलस्य च ।
अहोऽयं मानुषो भावो व्यक्तमेवानुपाल्यते । यस्त्वं जगन्मयं गुह्यं गुह्याद्गुह्यतरं गतः ।
स्मर नारायणात्मानं लोकानां त्वं विपर्य्यये । अवगच्छात्मनात्मानं समुद्राणां समागमे ।
पुरातनानां देवानां ब्रह्मणः सलिलस्य च । आत्मवृत्तप्रवृत्तञ्च संस्मरात्मनि वै वपुः ।
शिरः खं ते जलं मूर्त्तिः क्षमा भूर्द्दहनो मुखं । वायुर्लोकायुरुच्छ्वासो मनः स्रष्टा ह्यभूत्तव । ३७६५
सहस्रास्यः सहस्राङ्गः सहस्रचरणेक्षणः । सहस्रपद्मनाभस्त्वं सहस्रांशुधरोऽरिहा ।
यत्त्वया दर्शितं लोके तत् पश्यन्ति दिवौकसः । यत्त्वया नोक्तपूर्वं हि कस्तदन्वेष्टुमर्हति ।
यद्वेदितव्यं लोकेऽस्मिंस्त्वया समुदाहृतं । विदितं यत्त्वैकस्य देवा अपि न तद्विदुः ।
आत्मजं ते वपुर्व्योम्नि न पश्यन्त्यात्मसम्भवं । यत्तु ते कृत्रिमं रूपं तदर्चन्ति दिवौकसः ।
देवैर्न दृष्टश्चान्तस्ते तेनानन्त इति स्मृतः । त्वं हि सूक्ष्मो महानेकः सूक्ष्मैरपि दुरासदः । ३७७०
त्वय्येव जगतः स्तम्भः शाश्वती जगती स्थिता । अचला प्राणिनां योनिर्धारयत्यखिलं जगत् ।
चतुःसागरभोगस्त्वं चातुर्वर्ण्यविभागवित् । चतुर्युगेशो लोकानां चातुर्होत्रफलाशनः ।
यथाऽहमपि लोकानां तथा त्वं तच्च मे मतं । उभावेकशरीरौ स्वो जगदर्थे द्विधा कृतौ ।
अहं वा शाश्वतः कृष्णस्त्वं वा शेषः पुरातनः । स्वबलेन भवान् पूर्णस्त्रैलोक्यान्तरदर्शनः ।
लोकानां शाश्वतो देवस्त्वं हि शेषः सनातनः । आवयोर्देहमात्रेण द्विधेदं धार्य्यते जगत् । ३७७५
अहं यः स भवानेव यस्त्वं सोऽहं सनातनः । द्वावेव विहितौ ह्यावामेकदेहौ महाबलौ ।
तदास्से मूढवत् किं त्वं बलेन जहि दानवं । मूर्ध्नि देवरिपुं देव वज्रकल्पेन मुष्टिना ।
॥ वैशम्पायन उवाच ॥ संस्मारितः स कृष्णेन रौहिणेयः पुरातनं । स बलेन तदा पूर्णस्त्रैलोक्यान्तरचारिणा ।
ततः प्रलम्बं दुर्वृत्तं सुबद्धेन महाभुजः । मुष्टिना वज्रकल्पेन मूर्ध्नि चैनमताडयत् ।
तस्योत्तमाङ्गं स्वे काये विकपालं विवेश ह । जानुभ्याञ्च ततः शेते गतासुर्दानवोत्तमः । ३७८०
जगत्यां विप्रकीर्णस्य तस्य देहमभूत्तदा । प्रलम्बस्याम्बरस्थस्य मेघस्येव विदीर्य्यतः ।
तस्य भग्नोत्तमाङ्गस्य देहात् सुस्राव शोणितं । बहु गैरिकसंयुक्तं शैलशृङ्गादिवोदकं ।
तं निहत्य प्रलम्बन्तु संहृत्य बलमात्मनः । पर्य्यष्वजत वै कृष्णं रौहिणेयः प्रतापवान् ।
तन्तु कृष्णश्च गोपाश्च दिविष्ठाश्च दिवौकसः । तुष्टुवुर्निहते दैत्ये जयाशीर्भिर्महाबलं ।

बलेनायं हतो दैत्यो बालेनाक्लिष्टकर्म्मणा । बलदेवेति नामास्य देवैरुक्तं दिवि स्थितैः । ३७८५
बलन्तु बलदेवस्य तदा भुवि जना विदुः । कर्म्मणा निहते दैत्ये देवैरपि दुरासदे ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां प्रलम्बवधे एकसप्ततोऽध्यायः ॥ ७१ ॥
॥ वैशम्पायन उवाच ॥ तयोः प्रहृतयोरेवं कृष्णस्य च बलस्य च । वने विचरतोर्मासौ व्यतियातौ स्म वार्षिकौ ।
व्रजमाजग्मतुस्तौ तु व्रजे शुश्रुवतुस्तदा । प्राप्तं शक्रमहं वीरौ गोपांश्चोत्सवलालसान् ।
कौतूहलादिदं वाक्यं कृष्णः प्रोवाच तत्र तान् । कोऽयं शक्रमहो नाम येन वो हर्ष आगतः ।
तत्र वृद्धतमस्त्वेको गोपो वाक्यमुवाच ह । श्रूयतां तात शक्रस्य यदर्थं ध्वज इष्यते । ३७९०
देवानामीश्वरः शक्रो मेघानाञ्चारिसूदन । तस्य चायं महः कृष्ण लोकनाथस्य शाश्वतः ।
तेन सञ्चोदिता मेघास्तस्य चायुधभूषिताः । तस्यैवाज्ञाकराः शस्यं जनयन्ति नवाम्बुभिः ।
मेघस्य पयसो दाता पुरुहूतः पुरन्दरः । संप्रहृष्टः स भगवान् प्रीणयत्यखिलं जगत् ।
तेन सम्पादितं शस्यं वयमन्ये च देहिनः । वर्त्तयामोपयुञ्जानास्तर्पयामश्च देवताः ।
देवे वर्षति लोकेऽस्मिंस्ततः शस्यं प्रवर्द्धते । पृथिव्यां तर्पितायान्तु साम्प्रतं तृप्यते जगत् । ३७९५
क्षीरवत्यस्त्विमा गावो वत्सवत्यश्च निर्वृताः । तेन संवर्द्धितास्तात तृणैः पुष्टाः सपुङ्गवाः ।
नाशस्या नातृणा भूमिर्न बुभुक्षार्द्दितो जनः । दृश्यते यत्र दृश्यन्ते वृष्टिमन्तो बलाहकाः ।
दुदोह सवितुर्गा वै शक्रो दिव्याः पयस्वलाः । ताः क्षरन्ति नवं क्षीरं मेध्यं मेघौघधारितं ।
वाय्वीरितन्तु मेघेषु करोति कदनं महत् । जवेनाविष्कृतश्चैव गर्ज्जतीति जना विदुः ।
तस्य चैवोह्यमानस्य वायुयुक्तैर्बलाहकैः । वज्राशनिसमाः शब्दाः श्रूयन्तेऽगमभेदिनः । ३८००
तज्जलं वज्रनिष्पेषैर्विमुञ्चति नभोगतैः । बहुभिः कामगैर्मेघैः शक्रो भृत्यैरिवेश्वरः ।
कचिद्दुर्द्दिनसङ्काशैः कचिच्छिन्नाभ्रसन्निभैः । कचिद्भिन्नाञ्जनाकारैः कचिच्छीकरवर्षिभिः ।
मण्डयतीव देवेन्द्रो विश्वमेवं नभोघनैः । कचिच्छीकरमूकलं कुर्व्वद्भिर्गगणे घनैः ।
एवमेतत्पयो दुग्धं गोभिः सूर्य्यस्य शाश्वतं । पर्ज्जन्यः सर्व्वभूतानां भवाय भुवि वर्षति ।
यस्मात् प्रावृडियं कृष्ण शक्रस्य भुवि भाविनी । तस्मात् प्रावृषि राजानः सर्व्वे शक्रं मुदा युताः । ३८०५
महैः सुरेशमर्च्चन्ति वयमन्ये च मानवाः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां गोपवाक्ये द्विसप्ततोऽध्यायः ॥ ७२ ॥
॥ वैशम्पायन उवाच ॥ गोपवृद्धस्य वचनं श्रुत्वा शक्रपरिग्रहे । प्रभावज्ञोऽपि शक्रस्य वाक्यं दामोदरोऽब्रवीत् ।
वयं वनचरा गोपाः सदा गोधनजीविनः । गावोऽस्मद्दैवतं विद्धि गिरयश्च वनानि च ।
कर्षकाणां कृषिर्वृत्तिः पण्यं विपणिजीविनां । गावोऽस्माकं परा वृत्तिरेतत्त्रैविद्यमुच्यते ।
विद्यया यो यया युक्तस्तस्य सा दैवतं परं । सैव पूज्यार्च्चनीया च सैव तस्योपकारिणी । ३८१०
योऽन्यस्य फलमश्नानः करोत्यन्यस्य सत्क्रियां । द्वावनर्थौ स लभते प्रेत्य चेह च मानवः ।
कृष्यन्ता प्रथिता सीमा सीमान्तं श्रूयते वनं । वनान्ता गिरयः सर्व्वे सा चास्माकं गतिर्ध्रुवा ।

श्रूयन्ते गिरयश्चापि वनेऽस्मिन् कामरूपिणः । प्रविश्य तास्तास्तनवो रमन्ते स्वेषु सानुषु ।
भूत्वा केशरिणः सिंहा व्याघ्राश्च नखिनाम्बराः । वनानि स्वानि रक्षन्ति त्रासयन्तो वनच्छिदः ।
यदा चैषां विकुर्व्वन्ति ते वनालयजीविनः । घ्नन्ति तानेव दुर्वृत्तान् पौरुषादेन कर्म्मणा । ३८१५
मन्त्रयज्ञपरा विप्राः सीतायज्ञाश्च कर्षकाः । गिरियज्ञा वयं गोपा इज्योऽस्माभिर्गिरिर्व्वने ।
तन्मह्यं रोचते गोपा गिरियज्ञः प्रवर्त्त्यतां । कर्म्म कृत्वा सुखं स्थाने पादपेष्वथ वा गिरौ ।
तत्र हत्वा पशून् मेध्यान् वितत्यायतने शुभे । सर्व्वघोषस्य सन्दोहः क्रियतां किं विचार्य्यते ।
तं शरत्कुसुमापीडाः परिवार्य्य प्रदक्षिणं । गावो गिरिवरं सर्व्वास्ततो यान्तु पुनर्व्वनं ।
प्राप्ता किलेयं हि गवां स्वादुतोयतृणा गुणैः । शरत्प्रमुदिता रम्या गतमेघजलाशया । ३८२०
प्रियकैः पुष्पितैर्गौरं श्यामं बाणासनैः क्वचित् । कठोरतृणमाभाति निर्म्मयूररुतं वनं ।
विजला विमला व्योम्नि विबलाका विविद्युतः । विचरन्ति जलधरा विदन्ता इव कुञ्जराः ।
पटुना मेघवातेन नवतोयानुकर्षिणा । पर्णोत्करघनाः सर्व्वाः प्रसादं यान्ति निम्नगाः ।
सितवर्षाम्बुदोष्णीषं हंसचामरवीजितं । पूर्णचन्द्रामलच्छत्रं साभिषेकमिवाम्बरं ।
हंसैर्व्विहसितानीव समुत्क्रुष्टानि सारसैः । सर्व्वाणि तनुतां यान्ति जलानि जलदक्षये । ३८२५
चक्रवाकस्तनतटाः पुलिनश्रोणिमण्डलाः । हंसलक्षणहासिन्यः पतिं यान्ति समुद्रगाः ।
कुमुदोत्फुल्लसलिलं ताराभिश्चित्रमम्बरं । समसभ्युत्स्मयन्तीव शर्व्वरीष्वितरेतरं ।
मत्तक्रौञ्चावघुष्टेषु कलमापक्वपाण्डुषु । निर्विष्टरमणीयेषु वप्रेषु रमते मनः ।
पुष्करिण्यस्तडागानि वाप्यश्च विकचोत्पलाः । केदाराः सरितश्चैव सरांसि च श्रिया ज्वलन् ।
पङ्कजानि च ताम्राणि तथाऽन्यानि सितान्यपि । उत्पलानि च नीलानि भेजिरे वारिजां श्रियं । ३८३०
मदं जहुः सितापाङ्गा मन्दं ववृधिरेऽनिलाः । अभवद्व्यभ्रमाकाशमभञ्च निभृतोऽर्णवः ।
ऋतुपर्य्यायशिथिलैर्नृत्तनृत्यसमुच्छ्रितैः । मयूराङ्गरुहैर्भूमिर्व्वर्हिणेनेव लक्ष्यते ।
सुपङ्कसलिलैस्तीरैः काशपुष्पलताकुलैः । हंससारसविन्यासैर्य्यमुना साऽतिशोभना ।
कालपक्वेषु शस्येषु केदारेषु वनेषु च । शस्यादा जलजादाश्च मत्ता विरुरुवुः खगाः ।
सिषिचुर्य्यानि जलदा जलेन जलदागमे । तानि शस्यानि बालानि कठिनत्वङ्गतानि वै । ३८३५
त्यक्त्वा मेघमयं वासः शरद्गुणविदीपितः । एष वै विमले व्योम्नि हृष्टो वसति चन्द्रमाः ।
क्षीरिण्यो द्विगुणं गावः प्रमत्ता द्विगुणं वृषाः । वनानां द्विगुणा लक्ष्मीः शस्यैर्गुणवती मही ।
ज्योतींषि घनमुक्तानि पद्मवन्ति जलानि च । मनांसि च मनुष्याणां प्रसादमुपयान्ति वै ।
असृजत् सविता व्योम्नि निर्मुक्तो जलदैर्भृशं । शरत्प्रज्वलितं तेजस्तीक्ष्णरश्मिर्व्विशोषयन् ।
नीराजयित्वा सैन्यानि प्रयान्ति विजिगीषवः । अन्योन्यराष्ट्राभिमुखाः पार्थिवाः पृथिवीक्षितः । ३८४०
बन्धुजीवाभिताम्रासु मधुपङ्कवतीषु च । मनस्तिष्ठति कान्तासु चित्रासु वनराजिषु ।
वनेषु च विराजन्ते पादपा वनशोभिनः । असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः ।

इषुसाह्वा निकुम्भाश्च प्रियकाः सप्तपर्णकास्तथा । भ्रमराः षट्पदाश्चैव कोकिलाश्च समन्ततः ।
अङ्गेषु च विशेषेण मर्मरोद्गारहारिषु । शरत्प्रकाशरूपेषु गोष्ठेष्वटति रूपिणी ।
नूनं त्रिदशभूयिष्ठं मेघकालसुखोषितं । पतत्रिकेतनं देवं बोधयन्ति दिवौकसः । ३८४५
शरद्येवं सुशस्यायां प्राप्तायां प्रावृषः क्षये । नीलचन्द्रार्कवर्णैश्च रचितं बहुभिर्द्विजैः ।
फलैः प्रवालैश्च घनमिन्द्रचापघनोपमं । भवनाकारविटपं लतापरमलङ्कृतं ।
विशालमूलावनतं पवनाभोगधारिणं । अर्चयामो गिरिं देवं गाश्चैव सविशेषतः ।
सावतंसैर्विषाणैश्च वर्हापीडैश्च दंशितैः । घण्टाभिश्च प्रलम्बाभिः पुष्पैः शारदिकैस्तथा ।
शिवाय गावः पूज्यन्तां गिरियज्ञः प्रवर्त्यतां । पूज्यतां त्रिदशैः शक्रो गिरिरस्माभिरिज्यतां । ३८५०
गोयज्ञं कारयिष्यामि बलादेव न संशयः । यद्यस्ति मयि वः प्रीतिर्यदि वा सुहृदो वयं ।
गावो हि पूज्याः सततं सर्व्वेषां नात्र संशयः । यद्यस्तु मायया भवेत् प्रीतिर्भवतां वै भवाय च ।
एतन्मम वचस्तथ्यं क्रियतामविचारितं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शरद्वर्णने द्विसप्ततोऽध्याय ॥ ७२ ॥

॥ वैशम्पायन उवाच ॥ दामोदरवचः श्रुत्वा हृष्टास्ते गोषु जीविनः । तद्वागमृतमस्वाना: प्रत्यूचुरविशङ्कया ।
तवैषा बाल महती गोपानां हर्षवर्द्धिनी । प्रीणयत्येव नः सर्व्वान् बुद्धिर्वृद्धिकरी गवां । ३८५५
त्वं गतिस्त्वं रतिश्चैव त्वं वेत्ता त्वं परायणं । भयेष्वभयदस्त्वं नस्त्वमेव सुहृदां सुहृत् ।
त्वत्कृते कृष्ण घोषोऽयं क्षेमी मुदितगोकुलः । हृष्टो वसति शान्तारिर्यथा स्वर्गगतस्तथा ।
जन्मप्रभृतिदिव्यैस्ते विक्रान्तैर्भुवि दुष्करैः । बोद्धव्याश्चाभिमानाच्च विस्मितानि मनांसि नः ।
बलेन च पराक्रमेण यशसा विक्रमेण च । उत्तमस्त्वञ्च मर्त्येषु देवेष्विव पुरन्दरः ।
प्रतापेन च तीक्ष्णेन दीप्त्या पूर्णतयाऽपि च । उत्तमस्त्वञ्च मर्त्येषु देवेष्विव दिवाकरः । ३८६०
कान्त्या लक्ष्म्या प्रसादेन वदनेन स्मितेन च । उत्तमस्त्वञ्च मर्त्येषु देवेष्विव निशाकरः ।
बलेन वपुषा चैव बाल्येन चरितेन च । त्वयास्ति शक्तिधरस्तुल्यो न तु कश्चन मानुषः ।
यत्त्वयाऽभिहितं वाक्यं गिरियज्ञं प्रति प्रभो । कस्तल्लङ्घयितुं शक्तो वेलामिव महोदधेः ।
स्थितः शक्रमहस्तात श्रीमान् गिरिमहस्त्वयं । त्वत्प्रणीतोऽद्य गोपानां गवां हेतोः प्रवर्त्यतां ।
भाजनान्युपकल्प्यन्तां पयसः पेशलानि च । कुम्भाश्च विनिवेश्यन्तामुदपानेषु शोभनाः । ३८६५
पूर्य्यन्तां पयसा नद्यो द्रोण्यश्च विपुलायताः । भक्ष्यं भोज्यञ्च पेयञ्च तत्सर्व्वमुपनीयतां ।
भाजनानि च मांसस्य न्यस्यन्तामोदनस्य च । त्रिरात्रश्चैव सन्दोहः सर्व्वघोषस्य दृश्यतां ।
विशस्यन्ताञ्च पशवो भोज्या ये महिषादयः । प्रवर्त्यताञ्च यज्ञोऽयं सर्व्वगोपसमाकुलः ।
आनन्दजननो घोषो महान्मुदितगोकुलः । तूर्य्यप्रणादघोषैश्च वृषभाणाञ्च गर्ज्जितैः ।
हम्भारवैश्च वत्सानां गोपानां हर्षवर्द्धनः । दधिह्रदः शरावर्त्तः पयःकुल्यासमाहतः । ३८७०
मांसराशिप्रकूटाढ्यः प्रकाशोदनपर्व्वतः । संप्रावर्त्तत यज्ञः स गिरेर्गोभिः समाकुलः ।

हृष्टगोपगणाकीर्णो गोपनारीमनोहरः । अथाभिवृष्टपर्य्यन्ते पर्य्याप्ते यज्ञसंविधौ ।
यज्ञं गिरेस्तिथौ सौम्ये चक्रुर्गोपा द्विजैः सह । यजनान्ते तदन्नन्तु तत्पयो दधि चोत्तमं ।
मांसञ्च मायया कृष्णो गिरिर्भूत्वा समश्नुते । तर्पिताश्चापि विप्राग्र्यास्तुष्टाः सम्पूर्णभाजनाः ।
उत्तस्थुः प्रीतमनसः स्वस्ति वाच्य यथासुखं । भुक्त्वा चावभृथे कृष्णः पयः पीत्वा च कामतः । ३८७५
सन्तृप्तोऽस्मीति दिव्येन रूपेण प्रजहास वै । तं गोपाः पर्व्वताकारं दिव्यस्रगनुलेपनं ।
गिरिमूर्द्ध्नि स्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः । भगवानपि तेनैव रूपेणाच्छादितः प्रभुः ।
सह तैः प्रणतो गोपैर्व्ववन्दात्मानमात्मना । तमूचुर्व्विस्मिता गोपा देवं गिरिवरे स्थितं ।
भगवंस्त्वद्वशे युक्ता दासाः किं कुर्म्म किङ्कराः । स उवाच ततो गोपान् गिरिप्रभवया गिरा ।
अद्यप्रभृति याज्योऽहं गोषु यद्यस्ति वो दया । अहं वः प्रथमो देवः सर्व्वकामकरः शुभः । ३८८०
मम प्रभावाच्च गवामयुतान्युपभोक्ष्यथ । शिवश्च वो भविष्यामि मद्भक्तानां वने वने ।
रंस्येऽहं सह युष्माभिर्यथा दिवि गतस्तथा । ये चेमे प्रथिता गोपा नन्दगोपपुरोगमाः ।
एषां प्रीतः प्रयच्छामि गोपानां विपुलं धनं । पर्य्याप्नुवन्तु क्षिप्रं मां गावो वत्ससमाकुलाः ।
एवं मम परा प्रीतिर्भविष्यति न संशयः । ततो नीराजनार्थं वै वृन्दशो गोकुलानि च ।
परिवव्रुर्गिरिवरं सवृषाणि समन्ततः । ता गावः प्रद्रुता हृष्टाः सापीडस्तबकाङ्गदाः । ३८८५
सस्रगापीडशृङ्गाग्राः शतशोऽथ सहस्रशः । अनुजग्मुश्च गोपालाः कालयन्तो धनानि च ।
भक्तिच्छेदानुलिप्ताङ्गा रक्तपीतासिताम्बराः । मयूरचित्राङ्गदिनो भुजैः प्रहरणावृतैः ।
मयूरचित्रपत्रैश्च केशबन्धैः सुयोजितैः । बभ्राजुरधिकं गोपाः समवाये तदाऽद्भुते ।
अन्ये वृषानारुरुहुर्नृत्यन्ति चापरे मुदा । गोपालास्त्वपरे गा वै जगृहुः शीघ्रगामिनः ।
अस्मिन् पर्य्यायनिर्व्वृत्ते गवां नीराजनोत्सवे । अन्तर्द्धानं जगामाशु तेन देहेन सोऽचलः । ३८९०
कृष्णोऽपि गोपसहितो विवेश व्रजमेव ह । गिरियज्ञप्रवृत्तेन तेनाश्चर्य्येण विस्मिताः ।
गोपाः सबालवृद्धा वै तुष्टुवुर्म्मधुसूदनं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गिरियज्ञप्रवर्त्तने चतुःसप्ततोऽध्यायः ॥ ७४ ॥

॥ वैशम्पायन उवाच ॥ मखे प्रतिहते शक्रः सक्रोधस्त्रिदशेश्वरः । संवर्त्तकं नाम गणं तोयदानामथाब्रवीत् ।
भो बलाहकमातङ्गाः श्रूयतां मम भाषितं । यदि वो मत्प्रियं कार्य्यं राजभक्तिपुरस्कृतं ।
एते वृन्दावनगता दामोदरपरायणाः । नन्दगोपादयो गोपा विद्विषन्ति ममोत्सवं । ३८९५
आजीवो यः परस्तेषां गोपत्वञ्च यतः स्मृतं । ता गावः सप्तरात्रेण पीड्यन्तां वृष्टिमारुतैः ।
ऐरावतगतश्चाहं स्वयमेवाम्बु दारुणं । स्रक्ष्यामि वृष्टिवातञ्च वज्राशनिसमस्वनं ।
भवद्भिश्चण्डवर्षेण चरता मारुतेन च । हतास्ताः सव्रजा गावस्त्यक्ष्यन्ति भुवि जीवितं ।
एवमाज्ञापयामास सर्व्वान् स जलदान् प्रभुः । प्रत्याहृते वै कृष्णेन शासने पाकशासनः ।
ततस्ते जलदाः कृष्णा घोरनादा भयावहाः । आकाशं छादयामासुः सर्व्वतः पर्व्वतोपमाः । ३९००

विद्युत्सम्पातजननाः शक्रचापविभूषिताः । तिमिरावृतमाकाशं चक्रुर्मेघाः समन्ततः ।
गजा इवान्ये संसक्ताः केचिन्मकरवर्चसः । नागा इवान्ये गगने चेरुर्जलदपुङ्गवाः ।
तेऽन्योन्यवपुषा बद्धा नागयूथायुतोपमाः । दुर्द्दिनं विपुलं चक्रुश्छादयन्तो नभस्तलं ।
नृहस्तनागहस्तानां वेणूनाञ्चैव सर्व्वशः । धाराभिस्तुल्यरूपाभिर्व्ववृषुस्ते बलाहकाः ।
समुद्रं मेनिरे तद्धि खमारूढं नृचक्षुषः । दुर्व्विगाह्यमपर्य्यन्तमगाधं दुर्द्दिनं महत् । १८०५
नैवापतन्वै खगमा दुद्रुवुर्मृगजातयः । पर्व्वताभेषु मेघेषु खे नदत्सु समन्ततः ।
नष्टसूर्य्येन्दुसदृशैर्मेघैर्नभसि दारुणैः । अतिवृष्टेन लोकस्य विरूपमभवद्वपुः ।
मेघौघैर्निष्प्रभाकारमदृश्यग्रहतारकं । चन्द्रसूर्य्यांशुरहितं खं बभूवातिनिष्प्रभं ।
वारिणा मेघमुक्तेन मुच्यमानेन चासकृत् । आबभौ सर्व्वतस्तत्र भूमिस्तोयमयी यथा ।
विनेदुर्ब्बर्हिणस्तत्र स्तोककाः पतिता खगाः । विवृद्धिं निम्नगा याताः प्लवगाः संश्रयं गताः । १८१०
गर्जितेन च मेघानां पर्ज्जन्यनिनदेन च । तर्ज्जितानीव कम्पन्ते तृणानि तरुभिः सह ।
प्राप्तोऽन्तकालो लोकानां व्यक्तमेकार्णवा मही । इति गोपगणा वाक्यं व्याहरन्ति भयार्द्दिताः ।
तेनोत्पाताम्बुवर्षेण गावो विप्रहता भृशं । हम्बारवैः क्रन्दमाना न चेलुस्तम्भितोपमाः ।
निष्कम्पसक्थिचरणा निष्प्रयत्नखुराननाः । हृष्टरोमार्द्रतनवः क्षामकुक्षिपयोधराः ।
काश्चित् प्राणान् जहुः श्रान्ता निपेतुः काश्चिदातुराः । काश्चित् सवत्साः पतिता गावः शीतवेपिताः । १८१५
काश्चिदाक्रम्य क्रोडेन वत्सांस्तिष्ठन्ति मातरः । विमुखाः श्रान्तसक्थ्यश्च निराहाराः कृशोदराः ।
पेतुरार्त्ता वेपमाना गावो वर्षपराजिताः । वत्साश्चोन्मुखका बाला दामोदरमुखाः स्थिताः ।
त्राहीति वदनैर्द्दीनैः कृष्णमूचुरिवार्द्दिताः । गवां तत्कदनं दृष्ट्वा दुर्द्दिनागमजं महत् ।
गोपांश्चासन्ननिधनान् कृष्णः कोपं समादधे । स चिन्तयित्वा संरब्धो दृष्टोपायो मयेति च ।
आत्मानमात्मना वाक्यमिदमूचे प्रियंवदः । अद्याहमिममुत्पाट्य सकाननवनं गिरिं । १८२०
कल्पयेयं गवां स्थानं वर्षत्राणाय दुर्द्धरं । अयं धृतो मया शैलः पृथ्वीच्छत्रमिवापरं ।
त्रास्यते सव्रजा गा वै मद्वश्यश्च भविष्यति । एवं संचिन्तयित्वा तु कृष्णः सत्यपराक्रमः ।
बाह्वोर्व्वलं दर्शयिष्यन् समीपे तं महीधरं । दोर्भ्यामुत्पाटयामास कृष्णो गिरिरिवापरः ।
स धृतः सङ्गतो मेघैर्गिरिः सव्येन पाणिना । गृहभावङ्गतस्तत्र गृहाकारेण वर्च्चसा ।
भूमेरुत्पाट्यमानस्य तस्य शैलस्य सानुषु । शिलाः प्रशिथिलाः शैलान्निपेतुश्च सपादपाः । १८२५
शिखरैर्घूर्णमानैश्च शीर्य्यमाणैश्च सर्व्वशः । विटपैश्चाकुलैः सद्यो नगमः खगमोऽभवत् ।
चलत्प्रस्रवणैः पार्श्वे मेघौघैरेकताकृतेः । भिद्यमानाश्मनिचयश्चचाल धराधरः ।
न मेघानां प्रवृष्टानां न शैलस्याश्मवर्षिणः । न विदुस्ते जना रूपं वायोस्तस्य च गर्ज्जतः ।
मेघैश्च शैलसंस्थानैर्जलदस्रवणार्पितैः । मिश्रीकृत इवाभाति गिरिरङ्गामवर्धमान् ।
आप्लुतोऽयं गिरिः पक्षैरिति विद्याधरोरगाः । गन्धर्व्वाप्सरसश्चैव वाचोऽमुञ्चन्त सर्व्वशः । १८३०

स चचालाचलविन्यस्तो मुकुमूलः शिलोच्चयः । रोषैर्निर्वर्त्तयामास कृष्णनाशनराक्षसः ।
कानिचिच्छिथिलाश्मौघः सम्भिन्नाङ्गानि कानिचित् । गिरेर्गैरिकप्रस्रावाणि तस्य शृङ्गाणि चाभवन् ।
गिरिणा कम्पमानेन कम्पितानाञ्च शाखिनां । पुष्पवृष्टिरवर्षं भूमौ व्यशीर्य्यत समन्ततः ।
निःसृताः पृथुमूर्द्धानः स्वस्तिकालङ्कृतिभूषिताः । द्विजिह्वपतयः क्रुद्धाः खेचराः खे समन्ततः ।
आर्त्तिं जग्मुः खगगणा वर्षेण च भयेन च । उत्पत्योत्पत्य गगनात् पुनः पेतुरधोमुखाः । ३९३५
रेसुश्चारोषिताः सिंहाः सजला इव तोयदाः । गर्गरा इव मथ्यन्तो नेदुः शार्दूलपुङ्गवाः ।
विषमैश्च समीभूतैः समैश्चात्यन्तदुर्गमैः । व्यावृत्तदेहः स गिरिरन्य एवोपलक्ष्यते ।
अतिवृष्टस्य तैर्मेघैस्तस्य रूपं बभूव ह । लक्षितस्यैव रुद्रेण त्रिपुरस्य विनाशने ।
बाहुदण्डेन कृष्णस्य विधृतं सुमहत्तदा । नीलाभ्रपटलच्छन्नं तद्गिरिच्छत्रमाबभौ ।
स्वप्नायमानो जलदैर्निमीलितगुहामुखः । बाहूपधाने कृष्णस्य प्रसुप्त इव स गिरिः । ३९४०
निर्विहङ्गरुतैर्वृक्षैर्निर्मयूररुतैर्वनैः । निरालम्ब इवाभाति स गिरिः खचरैर्वृतः ।
पर्य्यस्तैर्घूर्णमानैश्च प्रचलद्भिश्च सानुभिः । सज्वराणीव शैलस्य वनानि शिखराणि च ।
उपमार्गगतास्तस्य मेघाः पवनवाहनाः । तर्ज्यमाना महेन्द्रेण तोयं मुमुचुरक्षयं ।
स लम्बमानः कृष्णस्य भुजाग्रे सघनो गिरिः । चक्रारूढ इवाभाति देशो नृपतिपीडितः ।
स मेघनिचयस्तस्थौ गिरिं तं परिवार्य्य ह । पुरं पुरस्कृत्य यथा स्फीतो जनपदो महान् । ३९४५
निरीक्ष्य तं करे शैलं तुलयित्वा च सस्मितं । प्रोवाच गोप्ता गोपानां प्रजापतिरिव स्थितः ।
एतद्देवैरसम्भाव्यं दिव्येन विधिना मया । कृतं गिरिगृहं गोपा निवातशरणं गवां ।
क्षिप्रं विशन्तु यूथानि गवामिह हि शान्तये । निवातेषु च देशेषु निवसन्तु यथासुखं ।
यथाश्रेष्ठं यथायूथं यथासारं यथासुखं । विभज्यतामयं देशः कृतं वर्षनिवारणं ।
शैलोत्पाटनभूरेषा महती निर्म्मिता मया । त्रैलोक्यमप्युत्सहते रक्षितुं किं पुनर्व्रजं । ३९५०
ततः किलकिलाशब्दो गवां हम्भारवैः सह । गोपानां तुमुलो जज्ञे मेघनादश्च वाह्यतः ।
प्रविशन्ति ततो गावो गोपैर्यूथप्रकल्पिताः । तस्य शैलस्य विपुलं विमलं गह्वरोदरं ।
कृष्णोऽपि मूले शैलस्य शैलस्तम्भ इवोच्छ्रितः । दधारैकेन हस्तेन शैलं प्रियमिवातिथिं ।
ततो व्रजस्य भाण्डानि युक्तानि शकटानि च । विविशुर्वर्षभीतानि तद्गृहं गिरिनिर्मितं ।
अतिदैवन्तु कृष्णस्य दृष्ट्वा तत् कर्म वज्रभृत् । मिथ्याप्रतिज्ञो जलदान् वारयामास वै विभुः । ३९५५
सप्तरात्रे तु निर्वृत्ते धरण्यां विगतोत्सवे । जगाम संवृतो मेघैर्वृत्रहा स्वर्गमेव च ।
निवृत्ते सप्तरात्रे तु निष्फले शतक्रतौ । गताभ्रे विमले व्योम्नि दिवसे दीप्तभास्करे ।
गावस्तेनैव मार्गेण परिजग्मुर्गतश्रमाः । स्वञ्च स्थानं गतो घोषः प्रत्ययात् पुनरेव सः ।
कृष्णोऽपि तं गिरिश्रेष्ठं स्वे स्थाने स्थावरात्मवान् । प्रीतो निवेशयामास शिवाय वरदो विभुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गोवर्द्धनधारणे पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

॥ वैशम्पायन उवाच ॥ धृतं गोवर्द्धनं दृष्ट्वा परित्रातञ्च गोकुलं । कृष्णस्य दर्शनं शक्रो रोचयामास विस्मितः । ३७९०

स निर्जलाम्बुदाकारं मत्तं मदजलोक्षितं । आरुह्यैरावतं नागमाजगाम महीतलं ।

स ददर्शोपविष्टं वै गोवर्द्धनशिलातले । कृष्णमक्लिष्टकर्माणं पुरुहूतः पुरन्दरः ।

तं वीक्ष्य बालं महता तेजसा दीप्तमव्ययं । गोपवेशधरं विष्णुं प्रीतिं लेभे पुरन्दरः ।

तं श्यामुत्पलदश्यामं कृष्णं श्रीवत्सलक्षणं । पर्य्याप्तनयनः शक्रः सर्व्वैर्नेत्रैरुदैक्षत ।

दृष्ट्वा चैनं श्रिया जुष्टं मर्त्यलोकेऽमरोपमं । सूपविष्टं शिलापृष्ठे शक्रः स व्रीडितोऽभवत् । ३७९५

तस्योपविष्टस्य सुखं पक्षाभ्यां पक्षिपुङ्गवः । अन्तर्द्धानगतश्छायां चकारोरगभोजनः ।

तं विविक्ते नगगतं लोकवृत्तान्ततत्परं । उपतस्थे गजं हित्वा कृष्णं बलनिषूदनः ।

स समीपगतस्तस्य दिव्यस्रगनुलेपनः । रराज देवराजो वै वज्रपूर्णकरः प्रभुः ।

किरीटेनार्कतुल्येन विद्युदुद्योतकारिणा । कुण्डलाभ्यां सवज्राभ्यां सततं शोभिताननः ।

पञ्चस्तबककान्तेन देहभूषणकारिणा । पद्मस्तबककल्पेन हारेणोरसि भूषितः । ३८००

ईक्षमाणः सहस्रेण नेत्राणां कामरूपिणां । त्रिदशाश्रापनोत्थेन मेघनिर्घोषघोषिणा ।

अथ दिव्येन मधुरं व्याजहार स्वरेण तं । कृष्ण कृष्ण महाबाहो ज्ञातीनां नन्दिवर्द्धन ।

अतिदैवं कृतं कर्म्म त्वया प्रीतिमता गवां । मयोत्सृष्टेषु मेघेषु युगान्तावर्त्तकारिषु ।

यत्त्वया रक्षिता गावस्तेनास्मि परितोषितः । स्वायम्भुवेन योगेन यश्चायं पर्व्वतोत्तमः ।

धृतो वेश्मवदाकाशे को ह्येतेन न विस्मयेत् । प्रतिषिद्धे मम मखे मयेयं रुषितेन वै । ३८०५

अतिवृष्टिः कृता कृष्ण गवां वै साप्तरात्रिकी । सा त्वया प्रतिषिद्धेयं मेघवृष्टिर्दुरासदा ।

देवैः सदानवगणैर्दुर्निर्व्वार्य्या मयि स्थिते । अहो मे सुप्रियं कृष्ण यत्त्वं मानुषदेहवान् ।

समग्रं वैष्णवं तेजो विनिगूहसि रोषितः । साधितं देवतानां हि मन्येऽहं कार्य्यमव्ययं ।

मयि मानुष्यमापन्ने युक्ते चैवं स्वतेजसा । सेत्स्यते वीर कार्य्यार्थो न किञ्चित् परिहास्यते ।

देवानां यज्ञवान्नेता सर्व्वकार्य्यपुरोगमः । एकस्त्वमसि देवानां लोकानाञ्च सनातनः । ३८१०

द्वितीयं नानुपश्यामि धुरं यस्ते समुद्वहेत् । यथा हि पुङ्गवः श्रेष्ठो मग्ने धुरि नियुज्यते ।

एवं त्वमसि देवानां मग्नानां द्विजवाहनः । तच्छरीरगतं कृष्ण जगत्प्रकरणं स्थिरं ।

ब्रह्मणा साधु निर्दिष्टं धातुभ्य इव काञ्चनं । स्वयं स्वयम्भूर्भगवान् बुद्ध्याऽथ वयसाऽपि वा ।

न त्वानुगन्तुं शक्नोति पङ्गुर्द्रुतगतिं यथा । स्थाणुभ्यो हिमवान् श्रेष्ठो ह्रदानां वरुणालयः ।

गरुत्मान् पक्षिणां श्रेष्ठो देवानाञ्च भवान् वरः । अपामधस्ताल्लोका वै तस्योपरि महीधराः । ३८१५

नागानामुपरिष्टाद्भूः पृथिव्युपरि मानुषाः । मनुष्यलोकादूर्द्ध्वन्तु खगानां गतिरुच्यते ।

आकाशस्योपरि रविर्द्वारं स्वर्गस्य भानुमान् । देवलोकः परस्तस्माद्विमानगमनो महान् ।

यत्राहं कृष्ण देवानामैन्द्रे विनिहितः पदे । स्वर्गादूर्द्ध्वं ब्रह्मलोको ब्रह्मर्षिगणपूजितः ।

तत्र सोमगतिश्चैव ज्योतिषाञ्च महात्मनां । तस्योपरि गवां लोकः साध्यास्तं पालयन्ति च ।

स हि सर्व्वगतः कृष्ण महाकाशगतो महान्। उपर्य्युपरि तत्रापि गतिस्तव तपोमयी। ३९९०
यां न विद्मो वयं सर्व्वे पृच्छन्तोऽपि पितामहम्। लोकास्त्वधो दुष्कृतिनां नागलोकस्तु दारुणः।
पृथिवीकर्म्मशीलानां क्षेत्रं सर्व्वस्य कर्म्मणः। खमस्थिराणां विषयो वायुना तुल्यवृत्तिनाम्।
गतिः शमदमाढ्यानां स्वर्गः सुकृतकर्म्मणाम्। ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परा गतिः।
गवामेव तु गोलोको दुरारोहा हि सा गतिः। स तु लोकस्त्वया कृष्ण सीदमानः कृतात्मना।
धृतो धृतिमता वीर निघ्नतोपद्रवं गवाम्। तदहं समनुप्राप्तो गवां वाक्येन चोदितः। ३९९५
ब्रह्मणश्च महाभाग गौरवात्तव चानघ। अहं भूतपतिः कृष्ण देवराजः पुरन्दरः।
अदितेर्गर्भपर्य्याये पूर्व्वजस्ते पुरातनः। तेजस्तेजस्विनश्चैव यत्ते दर्शितवानहम्।
मेघरूपेण तत्सर्व्वं क्षन्तुमर्हसि मे विभो। एवं क्षान्तमनाः कृष्ण स्वेन सौम्येन तेजसा।
ब्रह्मणः शृणु मे वाक्यं गवार्हं गजविक्रमः। आह त्वां भगवान् ब्रह्मा गावश्चाकाशगा दिवि।
कर्म्मभिस्तोषिता दिव्यैस्तव संरक्षणादिभिः। भवता रक्षिता लोका गोलोकस्य महानयं। ४०००
यदयं पुङ्गवैः सार्द्धं वर्द्धामः प्रसवैस्तथा। कर्षकान् पुङ्गवैर्व्वाह्यैर्मेध्येन हविषा सुरान्।
श्रियं शकृत्प्रवृत्तेन तर्पयिष्यामि कामदाः। तदस्माकं गुरुस्त्वं हि प्राणदश्च महाबल।
अद्यप्रभृति नो राजा त्वमिन्द्रो वै भव प्रभो। तस्मात्त्वं काञ्चनैः पूर्णैर्दिव्यस्य पयसो घटैः।
एभिरद्याभिषिच्यस्व मया हस्तावनामितैः। अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः।
गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम्। ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः। ४००५
उपेन्द्र इति कृष्ण त्वां गास्यन्ति दिवि देवताः। ये चेमे वार्षिका मासाश्चत्वारो विहिता मम।
एषामर्द्धं प्रयच्छामि शरत्कालस्तु पश्चिमः। अद्यप्रभृति मासौ द्वौ ज्ञास्यन्ति मम मानवाः।
वर्षार्द्धे च ध्वजो मह्यं ततः पूजामवाप्स्यति। ममात्मप्रभवं दर्पं तदा त्यक्ष्यन्ति बर्हिणः।
अल्पवादमदाश्चैव ये चान्ये मेघनादिनः। शान्तिं सर्व्वे गमिष्यन्ति मम कालविचारिणः।
अगस्त्यचरितामाशामगस्त्यो विचरिष्यति। सहस्ररश्मिरादित्यस्तापयन् स्वेन तेजसा। ४०१०
ततः शरदि युक्तायां सौनकासेषु बर्हिषु। याचमाने खगे तोयं विप्लुतेषु प्लुतेषु च।
हंससारसपूर्णेषु नदीनां पुलिनेषु च। मत्तक्रौञ्चप्रनादेषु मत्तेषु वृषभेषु च।
गोषु चैव प्रहृष्टासु क्षरन्तीषु पयो बहु। निवृत्तेषु च मेघेषु निर्य्यात्य जगतो जलम्।
आकाशे शस्त्रसङ्काशे हंसेषु विचरत्सु च। जातपद्मेषु तोयेषु वापीषु च सरःसु च।
तडागेषु च कान्तेषु तोयेषु विमलेषु च। कलमावनताग्रासु पक्वकेदारपङ्क्तिषु। ४०१५
मध्यस्थं सलिलारम्भं कुर्व्वतीषु नदीषु च। सुसस्याधाश्च सोमायां मनोहर्य्यां मुनेरपि।
पृथिव्यां पृथुराष्ट्रायां रम्यायां वर्षसंक्षये। श्रीमत्सु पङ्क्तिमार्गेषु फलवत्सु तृणेषु च।
इक्षुमत्सु च देशेषु प्रवृत्तेषु मखेषु च। ततः प्रवर्त्स्यते पुण्या शरत् सुप्तोत्थिते त्वयि।
लोकेऽस्मिन् कृष्ण निखिले यथैव त्रिदिवे तथा। नराश्चापि च मामेव ध्वजाकारासु यष्टिषु।

महेन्द्रश्चाप्युपेन्द्रश्च पूजयन्तु महीतले । ये चावयोः स्थिरे कृत्ये मैत्र्येणैव सञ्चिते । ४०१०
मानवाः प्रणमिष्यन्ति तेषां नास्त्यनयागमः । ततः शक्रस्तु तान् गृह्य घटान् दिव्यपयोधरान् ।
अभिषेकेण गोविन्दं योजयामास योगवित् । दृष्ट्वाऽभिषिच्यमानं तं गावस्ताः सह यूथपैः ।
स्तनैः प्रस्रवसंयुक्तैः सिषिचुः कृष्णमव्ययं । मेघाश्च दिवि मुक्ताभिः सामृताभिः समन्ततः ।
सिषिचुस्तोयधाराभिः सिच्यमानं तमव्ययं । वनस्पतीनां सर्व्वेषां सुधाविन्दुनिभं पयः ।
ववर्ष पुष्पवर्षञ्च नेदुस्तूर्य्याणि चाम्बरे । स्तुवन्ति मुनयः सर्व्वे वाग्भिर्मन्त्रपरायणाः । ४०१५
एकार्णवविविक्तश्च दधार वसुधा वपुः । प्रसादं सागरा जग्मुर्व्ववुर्व्वाता जगद्धिताः ।
मार्गस्थो विबभौ भानुः सोमो नक्षत्रसंयुतः । ईतयः प्रशमं जग्मुर्जग्मुर्निर्व्वैरतां नृपाः ।
प्रवालपत्रशबलाः पुष्पवन्तश्च पादपाः । मदं प्रसुस्रुवुर्नागा यातास्तोषं वने मृगाः ।
अलङ्कृता गात्ररुहैर्धातुभिर्भान्ति पर्व्वताः । देवलोकोपमो लोकस्तृप्तोऽमृतरसैरिव ।
आसीत् कृष्णाभिषेके हि दिव्यः स्वर्गरसोक्षितः । अभिषिक्तन्तु तं गोभिः शक्रो गोविन्दमव्ययं । ४०२०
दिव्यमाल्याम्बरधरं देवदेवोऽब्रवीदिदं । एष ते प्रथमः कृष्ण नियोगो गोषु यः कृतः ।
श्रूयतामपरश्चापि ममागमनकारणं । क्षिप्रं समाप्यतां कंसः केशी च तुरगाधमः ।
अरिष्टश्च सदाऽरिष्टो राजराज्यं ततः कुरु । पितृष्वसरि जातस्ते ममांशोऽहमिव स्थितः ।
स ते रक्ष्यश्च मान्यश्च सख्ये च विनियुज्यतां । त्वया ह्यनुगृहीतः स तव वृत्तानुवर्त्तकः ।
त्वद्वशे वर्त्तमानश्च प्राप्स्यते विपुलं यशः । भारतस्य च वंशस्य स वरिष्ठो धनुर्द्धरः । ४०२५
भविष्यत्यनुरूपश्च त्वत्कृते न च रंस्यते । भारतं त्वयि चायत्तं तस्मिंश्च पुरुषोत्तमे ।
उभाभ्यामपि संयोगे यास्यन्ति निधनं नृपाः । प्रतिज्ञातञ्च मे कृष्ण ऋषिमध्ये सुरेषु च ।
मम पुत्रोऽर्ज्जुनो नाम सृष्टः कुन्त्यां कुलोद्वहः । सोऽस्त्राणां पारतत्त्वज्ञः श्रेष्ठश्चापविकर्षणे ।
तं प्रवेक्ष्यन्ति वै सर्व्वे राजानः शस्त्रयोधिनः । अक्षौहिणीश्च शूराणां राज्ञां संग्रामयोधिनां ।
सैकः क्षत्रियधर्म्मेण योजयिष्यति मृत्युना । तस्याश्चरितं मार्गं धनुषो लाघवस्य च । ४०३०
नानुयास्यन्ति राजानो देवा वा त्वां विना प्रभो । स ते बन्धुः सहायश्च संग्रामेषु भविष्यति ।
तस्य योगो विधातव्यस्त्वया गोविन्द मत्कृते । द्रष्टव्यः स यथाऽहं वै त्वया मान्यश्च नित्यशः ।
त्राता त्वमेव लोकानामर्ज्जुनस्य च नित्यशः । त्वया च नित्यं संरक्ष्य आहवेषु महत्सु च ।
रक्षितस्य त्वया तस्य न मृत्युः प्रभविष्यति । अर्ज्जुनं विद्धि मां कृष्ण माञ्चैवात्मानमात्मना ।
आत्मा तेऽहं यथा सम्यक् तथैव तव सोऽर्ज्जुनः । त्वया लोकानिमान् जित्वा बलेर्हस्तात्त्रिभिः क्रमैः । ४०३५
देवतानां कृतो राजा पुरा ज्येष्ठक्रमादहं । त्वाञ्च सत्यमयं ज्ञात्वा सत्येष्टं सत्यविक्रमं ।
सत्येनोत्पत्य देवा वै योजयन्ति रिपुवधे । सोऽर्ज्जुनो नाम मे पुत्रः पितुस्ते भगिनीसुतः ।
इह सौहार्दमायातु भूत्वा सहचरस्तव । तस्य ते युध्यतः कृष्ण स्वे स्थाने ऽथ गृहेऽपि वा ।
वोढव्या पुङ्गवेनेव धूः सदा रणमूर्द्धनि । कंसे विनिहते कृष्ण त्वया भाव्यर्थदर्शिना ।

अभितस्तां महद्युद्धं भविष्यति महीक्षितां। तत्र तेषां नृवीराणामतिमानुषकर्म्मणां। ४०८०

विजयस्यार्ज्जुनो भोक्ता यशसा तस्य योत्स्यते। एतत्ते कृष्ण कार्त्स्न्येन कर्त्तुमर्हसि भाषितं।

यद्यहं ते सुराश्चैव सत्यस्य प्रियमच्युत। शक्रस्य वचनं श्रुत्वा कृष्णो गोविन्दताङ्गतः।

प्रीतेन मनसा युक्तं प्रतिवाक्यं जगाद ह। प्रीतोऽस्मि दर्शनादेव तव शक्र शचीपते।

यत्त्वयाऽभिहितञ्चेदं न किञ्चित् परिहास्यते। जानामि भवतो भावं जानाम्यर्ज्जुनसम्भवं।

जाने पितृष्वसारञ्च पाण्डोर्दत्तां महात्मनः। युधिष्ठिरञ्च जानामि कुमारं धर्म्मनिर्म्मितं। ४०८५

भीमसेनञ्च जानामि वायोः सन्तानजं सुतं। अश्विभ्याञ्चैव जानामि सृष्टं पुत्रद्वयं शुभं।

नकुलं सहदेवञ्च माद्रीकुक्षिगतावुभौ। कानीनञ्चापि जानामि सवितुः प्रथमं सुतं।

पितृष्वसरि कर्णं वै प्रसूतं सूततां गतं। धार्त्तराष्ट्राश्च मे सर्व्वे विदिता युद्धकाङ्क्षिणः।

पाण्डोरुपरमञ्चैव शापाशनिनिपातजं। तद्गच्छ त्रिदिवं शक्र सुखाय त्रिदिवौकसां।

नार्ज्जुनस्य रिपुः कश्चिन्ममाग्रे प्रभविष्यति। अर्ज्जुनार्थञ्च तान् सर्व्वान् पाण्डवानक्षतान् युधि। ४०९०

कुन्त्या निर्य्यातयिष्यामि निवृत्ते भारते मृधे। यच्च वक्ष्यति मां शक्र तनूजस्तव सोऽर्ज्जुनः।

भृत्यवत्तत्करिष्यामि तव स्नेहेन यन्त्रितः। सत्यसन्धस्य तच्छ्रुत्वा प्रियं प्रीतस्य भाषितं।

कृष्णस्य साक्षात्त्रिदिवं जगाम त्रिदशेश्वरः।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गोविन्दाभिषेके षट्सप्ततोऽध्यायः ॥ ७६ ॥

॥ वैशम्पायन उवाच ॥ गते शक्रे ततः कृष्णः पूज्यमानो व्रजालयैः। गोवर्द्धनधरः श्रीमान् जगाम व्रजमेव ह।

तन्तु वृद्धाः स्म नन्दन्ति ज्ञातयश्च सहोषिताः। धन्याः स्मोऽनुगृहीताः स्म त्वद्वृत्तेन नयेन च। ४०९५

गावो वर्षभयात्तीर्णा वयं तीर्णा महाभयात्। तव प्रसादाद्गोविन्द देवतुल्यपराक्रम।

अमानुषाणि कर्म्माणि पश्यामस्तव गोपते। धारणेनास्य शैलस्य विद्मस्त्वां कृष्ण दैवतं।

कस्त्वं भवसि रुद्राणां मरुतां वा महाबल। वसूनां वा किमर्थञ्च वसुदेवः पिता तव।

बलञ्च बाल्ये क्रीडा च जन्म चास्मासु गर्हितं। कृष्ण दिव्या च ते चेष्टा शङ्कितानि मनांसि नः।

किमर्थं गोपवेशेन रमसेऽस्मासु गर्हितं। लोकपालोपमश्चैव गास्त्वं किं परिरक्षसि। ४१००

देवो वा दानवो वा त्वं यक्षो गन्धर्व्व एव वा। अस्माकं बान्धवो जातो योऽसि सोऽसि नमोऽस्तु ते।

केनचिद्यदि कार्य्येण वससीह यदृच्छया। वयं तवानुगाः सर्व्वे भवन्तं शरणङ्गताः।

॥ वैशम्पायन उवाच ॥ गोपानां वचनं श्रुत्वा कृष्णः पद्मनिभेक्षणः। प्रत्युवाच स्मितं कृत्वा ज्ञातींस्तान् समुपा
गताम्।

मन्यन्ते मां यथा सर्व्वे भवन्तो भीमविक्रमाः। तथाऽहं नावगन्तव्यः स्वजातीयोऽस्मि बान्धवः।

यदि त्ववश्यं श्रोतव्यं कालः सम्प्रतिपाल्यतां। ततो भवन्तः श्रोष्यन्ति मां च द्रक्ष्यन्ति तत्त्वतः। ४१०५

यद्यहं भवतां श्लाघ्यो बान्धवो देवसप्रभः। परिज्ञानेन किं कार्य्यं यद्येषोऽनुग्रहो मम।

एवमुक्तास्ततो गोपा वसुदेवसुतेन वै। बद्धमौना दिशः सर्व्वा भेजिरे पिहिताननाः।

कृष्णस्तु यौवनं दृष्ट्वा निशि चन्द्रमसो नवं । शारदीञ्च निशां रम्यां मनश्चक्रे रतिम्प्रति ।
स करीषाङ्गरागासु व्रजरथ्यासु वीर्य्यवान् । वृषाणां जातदर्पाणां युद्धानि समयोजयत् ।
गोपालांश्च बलोदग्रान् योधयामास वीर्य्यवान् । वने स वीरो गाश्चैव जग्राह ग्राहवद्विभुः । ४१८०
युवतीर्गोपकन्याश्च रात्रौ सङ्काल्य कालवित् । कैशोरकं मानयन्वै सह ताभिर्मुमोद ह ।
तास्तस्य वदनं कान्तं कान्ता गोपस्त्रियो निशि । पिबन्ति नयनाक्षेपैर्गाङ्गतं शशिनं यथा ।
हरितालार्द्रपीतेन स कौशेयेन वाससा । वसानो भद्रवसनं कृष्णः कान्ततरोऽभवत् ।
स बद्धाङ्गदनिर्व्यूहश्चित्रया वनमालया । शोभमानो हि गोविन्दः शोभयामास तं व्रजं ।
नाम दामोदरेत्येवं गोपकन्यास्तदाऽब्रुवन् । विचित्रं चरितं घोषे दृष्ट्वा तत्तस्य भास्वतः । ४१८५
तास्तं पयोधरोत्तानैरुरोभिः समपीडयन् । भ्रामिताक्षैश्च वदनैर्निरीक्षन्ते वराङ्गनाः ।
ता वार्य्यमाणाः पितृभिर्भ्रातृभिर्मातृभिस्तथा । कृष्णं गोपाङ्गना रात्रौ मृगयन्ते रतिप्रियाः ।
तास्तु पङ्क्तीकृताः सर्व्वा रमयन्ति मनोरमं । गायन्त्यः कृष्णचरितं द्वन्द्वशो गोपकन्यकाः ।
कृष्णलीलानुकारिण्यः कृष्णप्रणिहितेक्षणाः । कृष्णस्य गतिगामिन्यस्तरुण्यस्ता वराङ्गनाः ।
वनेषु तालहस्ताग्रैः कुट्टयन्त्यस्तथाऽपराः । चेरुर्वै चरितं तस्य कृष्णस्य व्रजयोषितः । ४१९०
तास्तस्य नृत्यं गीतञ्च विलासस्मितवीक्षितं । मुदिताश्चानुकुर्व्वन्त्यः क्रीडन्त्यो व्रजयोषितः ।
भावनिस्यन्दमधुरं गायन्त्यस्ता वराङ्गनाः । व्रजं गताः सुखं चेरुर्दामोदरपरायणाः ।
करीषपांशुदिग्धाङ्गास्ताः कृष्णमनुवव्रिरे । रमयन्त्यो यथा नागं सम्प्रमत्तं करेणवः ।
तमन्या भावविकचैर्नेत्रैः प्रहसिताननाः । पिबन्त्यतृप्ता वनिताः कृष्णं कृष्णमृगेक्षणाः ।
मुखमस्याब्जसङ्काशं तृषिता गोपकन्यकाः । रत्यन्तरगता रात्रौ पिबन्ति रतिलालसाः । ४१९५
हाहेति कुर्व्वतस्तस्य प्रहृष्टास्ता वराङ्गनाः । जगृहुर्निःसृतां वाणीं साम्ना दामोदरेरितां ।
तासां ग्रथितसीमन्ता रतिश्रान्त्याकुलीकृताः । चारु विस्रंसिरे केशाः कुचाग्रे गोपयोषितां ।
एवं स कृष्णो गोपीनां चक्रवालैरलङ्कृतः । शारदीषु सचन्द्रासु निशासु मुमुदे सुखी ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि हल्लीशक्रीडने सप्तसप्ततोऽध्यायः ॥ ७७ ॥

॥ वैशम्पायन उवाच ॥ प्रदोषार्द्धे कदाचित्तु कृष्णे रतिपरायणे । त्रासयन् समदो गोष्ठानरिष्टः प्रत्यदृश्यत ।
निर्व्वाणाङ्गारमेघाभस्तीक्ष्णशृङ्गोऽर्कलोचनः । क्षुरतीक्ष्णाग्रचरणः कालः काल इवापरः । ४२००
लेलिहानः सनिष्पेषं जिह्वयौष्ठौ पुनः पुनः । गर्व्विताविद्धलाङ्गूलः कठिनस्कन्धबन्धनः ।
ककुदोदग्रनिर्म्माणः प्रमाणाद्दुरतिक्रमः । शकृन्मूत्रोपलिप्ताङ्गो गवामुद्वेजनो भृशं ।
महाकटिः स्थूलमुखो गूढजानुर्महोदरः । विषाणावल्गितगतिर्लम्बता कण्ठचर्म्मणा ।
गवाङ्गढेषु चपलस्तरुघाताङ्किताननः । युद्धसज्जविषाणाग्रो द्विषद्वृषभसूदनः ।
अरिष्टो नाम हि गवामरिष्टो दारुणाकृतिः । दैत्यो वृषभरूपेण गोष्ठान् विपरिधावति । ४२०५
पातयन् स गवां गर्भान् दृप्तो गच्छत्यनार्त्तवे । भजमानश्च चपलो गृष्टीः स प्रचचार ह ।

शृङ्गप्रहरणो रौद्रः प्रचरन् गोषु दुर्द्दमः । गोष्ठेषु न रतिं लेभे विना युद्धेन गोवृषः ।
स तत्र गास्तु सततं बाधमानो मदोत्कटः । चकार निर्वृषं गोष्ठं निर्व्वत्सशिशुपुङ्गवं ।
एतस्मिन्नेव काले तु गा वै कृष्णसमीपगाः । त्रासयामास दुष्टात्मा वैवस्वतपथे स्थितः ।
मेघाभ्रगिरिवाम्भोदो गर्ज्जमानो महावृषः । तमापतन्तं महाकायं गर्ज्जमानं महावृषं । ४११०
तालशब्देन तं कृष्णः सिंहनादैश्च मोहयन् । अभ्यधावत गोविन्दो दैत्यं वृषभरूपिणं ।
स कृष्णं गोवृषो दृष्ट्वा चक्षुषा क्रुद्धलोचनः । रोषितस्तालशब्देन युद्धाकाङ्क्षी ननर्द्द च ।
तमापतन्तं दुर्द्धर्षं दृष्ट्वा वृषभरूपिणं । तस्मात् स्थानान्न चचलत् कृष्णो गिरिरिवाचलः ।
स कुक्षौ वृषभो दृष्टिं प्रणिधाय धृतानलः । कृष्णस्य निधनाकाङ्क्षी तूर्णमभ्युत्पपात ह ।
तमापतन्तं वेगेन प्रतिजग्राह दुर्द्धरं । कृष्णः कृष्णाञ्जननिभं वृषं प्रतिवृषोपमः । ४११५
स संसक्तस्तु कृष्णेन वृषेणेव महावृषः । मुमोच नासया फेनं नस्ततोऽस्य समन्ततः ।
तावन्योन्यावबद्धाङ्गौ युद्धे कृष्णवृषावुभौ । रेजतुर्मेघसमये संसक्ताविव तोयदौ ।
तस्य दर्पबलं हत्वा कृत्वा शृङ्गान्तरे पदं । सोऽपीडयदरिष्टस्य कण्ठं क्लिन्नमिवाम्बरं ।
शृङ्गञ्चास्य पुनः सव्यमुत्पाट्य यमदण्डवत् । तेनैव प्राहरद्वक्त्रे स ममार वृषो हतः ।
स भिन्नशृङ्गो भग्नास्यो भग्नस्कन्धश्च दानवः । पपात रुधिरोद्गारी साम्बुधार इवाम्बुदः । ४१२०
गोविन्देन हतं दृष्ट्वा दृप्तं वृषभदानवं । साधु साध्विति भूतानि तत्कर्म्माण्यभितुष्टुवुः ।
स चापेन्द्रो वृषं हत्वा कान्तवक्त्रनिशामुखः । अरविन्दाभनयनः पुनरेव रराम ह ।
ते तु गोवृत्तयः सर्व्वे कृष्णं कमललोचनं । उपासाञ्चक्रिरे हृष्टाः स्वर्गे शक्रमिवामराः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अरिष्टवधे अष्टसप्ततोऽध्यायः ॥ ७८ ॥
॥ वैशम्पायन उवाच ॥ इत्थं ब्रजगतं श्रुत्वा वर्द्धमानमिवानलं । उद्वेगमगमत् कंसः शङ्कमानस्ततो भयं ।
पूतनायां हतायाञ्च कालिये च पराजिते । धेनुके प्रलयं नीते प्रलम्बे च निपातिते । ४१२५
धृते गोवर्द्धने शैले विफले शक्रशासने । गोषु त्रातासु च तथा स्पृहणीयेन कर्म्मणा ।
ककुद्मिनि हतेऽरिष्टे गोपेषु मुदितेषु । दृश्यमाने विनाशे च सन्निकृष्टे महाभये ।
वृक्षयोः कर्षणेनापि शकटस्य तथैव च । अचिन्त्यं कर्म्म तच्छ्रुत्वा वर्द्धमानेषु शत्रुषु ।
प्राप्तारिष्टमिवात्मानं मेने स मथुरेश्वरः । विषण्णेन्द्रियभूतात्मा गतासुप्रतिमो बभौ ।
ततो ज्ञातीन् समानाय्य पितरञ्चोग्रशासनः । निशि स्तिमितमूकायां मथुरायां जनाधिपः । ४१३०
वसुदेवञ्च देवाभं कङ्कञ्चाह्वय यादवं । सत्यकं दारुकञ्चैव कङ्कावरजमेव च ।
भोजं वैतरणञ्चैव विकद्रुञ्च महाबलं । भयेसखञ्च राजानं विपृथुञ्च पृथुश्रियं ।
बभ्रुं दानपतिञ्चैव कृतवर्म्माणमेव च । भूरितेजसमक्षोभ्यं भूरिश्रवसमेव च ।
एतान् स यादवान् सर्व्वानाभाष्य शृणुतेति च । उग्रसेनसुतो राजा प्रोवाच मथुरेश्वरः ।
भवन्तः सर्व्वकार्य्यज्ञाः सर्व्वे वेदेषु निष्ठिताः । न्यायवृत्तान्तकुशलास्त्रिवर्गस्य प्रवर्त्तकाः । ४१३५

येन वामनमास्थाय विक्रमीर्णं पुरा वपुः । त्रिभिः क्रमैश्च त्रीँल्लोकान् जहार त्रिदिवालयं ।
चतुर्थो तेजसो भागं कृत्वा दाशरथे गृहे । स एव रामसंज्ञो वै रावणं व्यवधत्तदा ।
एवमेष निकृत्या वै तत्तद्रूपमुपागतः । साधयत्यात्मनः कार्यं सुराणामर्थसिद्धये ।
तदेष नूनं विष्णुर्वा शक्रो वा मरुतां पतिः । मत्प्रार्थनेषया प्राप्तो नारदो मां यदुक्तवान् ।
अत्र मे शङ्कते बुद्धिर्वसुदेवं प्रति ध्रुवं । अस्य बुद्धिविशेषेण वयं कातरतां गताः । ॥११७०
अहं हि खट्वाङ्गवने नारदेन समागतः । द्वितीयं स हि मां विप्रः पुनरेवाब्रवीदिदं ।
यत्त्वयाऽनुष्ठितो यत्नः कंस गर्भकृते महान् । वसुदेवेन ते रात्रौ तत्कृत्स्नं विफलीकृतं ।
दारिका या त्वया रात्रौ शिलायां कंस पातिता । तां यशोदासुतां विद्धि कृष्णश्च वसुदेवजः ।
रात्रौ व्यावर्तितावेतौ गर्भौ तव वधाय वै । वसुदेवेन सन्धाय मित्ररूपेण शत्रुणा ।
सा तु कन्या यशोदाया विन्ध्ये पर्वतसत्तमे । हत्वा शुम्भनिशुम्भौ द्वौ दानवौ नगचारिणौ । ॥११७५
कृताभिषेका वरदा भूतसङ्घनिषेविता । अर्च्यते दस्युभिर्घोरैर्महापशुबलिप्रिया ।
सुरापिशितपूर्णाभ्यां कुम्भाभ्यामुपशोभिता । मयूराङ्गदचित्रैश्च बर्हभारैर्विभूषिता ।
हृष्टकुक्कुटसञ्चारं वनं वायसनादितं । छागयूथैश्च संपूर्णमविरुद्धैश्च पक्षिभिः ।
सिंहव्याघ्रवराहाणां नादेन प्रतिनादितं । वृक्षगन्धोत्कटनिबिडं कान्तारैः सर्वतो वृतं ।
दिव्यभृङ्गारचमरैरादर्शैश्च विभूषितं । देवतूर्यनिनादैश्च शतशः प्रतिनादितं । ॥११८०
स्थानं तस्या नगे विन्ध्ये निर्मितं स्वेन तेजसा । रिपूणां त्रासजननी नित्यं तत्र मनोरमे ।
वसते परमप्रीता दैवतैरभिपूजिता । यश्चायं नन्दगोपस्य कृष्ण इत्युच्यते सुतः ।
अत्र मे नारदः प्राह सुमहत् कार्यकारणं । द्वितीयो वसुदेवाद्धि वासुदेवो भविष्यति ।
स हि ते सहजो मृत्युर्बान्धवश्च भविष्यति । स एव वासुदेवो वै वसुदेवसुतो बली ।
बान्धवो धर्मतो मह्यं हृदयेनान्तको रिपुः । यथा हि वायसो मूर्ध्नि पद्भ्यां समवतिष्ठते । ॥११८५
नेत्रे तुदति तस्यैव वक्त्रेणामिषगर्द्धिना । वसुदेवस्तथैवायं सपुत्रो ज्ञातिबान्धवः ।
छिनत्ति मम मूलानि भुङ्क्ते च मम पार्श्वतः । भ्रूणहत्याऽपि सन्तार्या गोवधः स्त्रीवधोऽपि वा ।
न कृतघ्नस्य लोकोऽस्ति बान्धवस्य विशेषतः । पतितानुगतं मार्गं निषेवत्यचिरेण सः ।
यः कृतघ्नोऽनुबन्धेन प्रीतिं वहति दारुणां । नरकाध्युषितः पन्था गन्तव्यस्तेन दारुणः ।
अपापे पापहृदयो यः पापमनुतिष्ठति । सर्वं वा स्वजनस्याद्यः स वा स्याद्धनरः सुतः । ॥११९०
नियमैर्गुरुकृत्येन मया बान्धवकाम्यया । रक्षितो कलहे घोरे वधमर्हन्ति वीरुधः ।
युद्धस्युपरमे ते तु मत्तास्तिष्ठन्ति सात्वते । बान्धवानामपि तथा भेदकाले समुत्थिते ।
वधने योऽन्तरप्रेप्सुः स्वजनो यदि चेतरः । कालस्य हि विनाशाय मया पृष्टो विजानता ।
वसुदेव कुलस्यास्य परिरोधयसे श्रमं । समर्थो वैरशीलश्च सदा पापमतिः शठः ।
स्थाने यदुकुलं मूढ शोचनीयं त्वया कृतं । वसुदेव त्वया दृष्टो यत्नया त्वं पुरस्कृतः । ॥११९५

जनं दृष्ट्वैव कुपितः प्रेषितः प्रीतिमानभूत् । तस्मिन्नेव मुहूर्त्ते तु मथुरायाः स निर्ययौ ।

प्रीतिमान् पुण्डरीकाक्षं द्रष्टुं दानपतिः स्वयं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अक्रूरप्रस्थापने ऊनाशीतोऽध्यायः ॥ ७८ ॥

॥ वैशम्पायन उवाच ॥ चिरं यदूत्तमं दृष्ट्वा सर्व्वे ते यदुपुङ्गवाः । निरीक्ष्य सचिवान् सर्व्वैर्गिरं तं गतायुषं ।

अन्धकस्तम्भितमना धैर्य्यादविकलं वचः । प्रोवाच वदतां श्रेष्ठः समाजे कंसमोजसा ।

अश्लाघ्यो वदतः पुत्र तवायं वाक्परिश्रमः । अयुक्तो गर्हितः सद्भिर्म्मान्येषु विशेषतः । ४६३५

अयादवो यदि भवान् [illegible] तावद्दूष्यसे । न हि त्वा यादवा वीर बलात् कुर्व्वन्ति यादवं ।

अश्लाघ्या वृष्णयः पुत्र येषां त्वमनुगामिता । इक्ष्वाकुवंशजो राजा विनिकृष्टः स्ववंशकृत् ।

भोजो वा यादवो वाऽसि कंसो वाऽसि यथा तथा । सहजन्ते शिरस्नात जटी मुण्डोऽपि वा भव ।

उग्रसेनस्त्वयं श्लाघ्यो योऽस्माकं कुलपांसनः । दुर्ज्जातो येन येन त्वमीदृशो जनितः सुतः ।

न चात्मना गुणांस्तात प्रवदन्ति मनीषिणः । परैरुक्ता गुणा गौण्यं यान्ति सर्व्वार्थसाधिताः । ४६४०

पृथिव्यां यदुवंशोऽयं निन्दनीयो महीक्षितां । बालः कुलान्तकृन्मूढो येषां त्वमनुगामिता ।

एतैरसाधुभिर्व्वाक्यैस्त्वया साध्विति भाषितैः । न चाप्यवमितं कार्य्यमात्मा च विहतः कृतः ।

गुरोरनवलिप्तस्य मान्यस्य महतामपि । क्षेपणं कः शुभं मन्येद्द्विजस्येव वधं कृतं ।

मान्याश्चैवाभिगम्याश्च वृद्धास्तात यथाऽग्नयः । क्रोधो हि तेषां प्रदहेल्लोकानन्तर्गतानपि ।

बुधेन तात दान्तेन नित्यमभ्युत्थितात्मना । धर्म्मस्य गतिरन्वेष्या मत्स्यस्य गतिरप्स्विव । ४६४५

केवलं त्वन्तु दर्पेण वृद्धानग्निसमानिह । वाचा तुदसि मर्म्मघ्न्या समन्तोक्ता यथाकृतिः ।

वसुदेवस्य पुत्रार्थे यदिमं परिगर्हसि । तव मिथ्याप्रलापन्ते निन्दामि कृपणं वचः ।

दारुणोऽपि पिता पुत्रे नैव दारुणतां व्रजेत् । पुत्रार्थे ह्यापदः कष्टाः पितरः प्राप्नुवन्ति च ।

कारितो वसुदेवेन यदि पुत्रः शिशुः पुरा । मन्यसे यदकर्त्तव्यं तत्पृच्छ पितरं स्वकं ।

गर्हता वसुदेवस्य यदुवंशस्य निन्दता । त्वया यादवपुत्राणां वैरञ्च विषमर्ज्जितं । ४६५०

अकर्त्तव्यं यदि कृतं वसुदेवेन पुत्रजं । किमर्थमुग्रसेनेन शिशुस्त्वं न विनाशितः ।

पुन्नाम्नो नरकात् पुत्रो यस्मात्त्राति पितॄन् सदा । तस्माद्ब्रुवन्ति पुत्रेति पुत्रं धर्म्मविदो जनाः ।

जात्या हि यादवः कृष्णः स च सङ्कर्षणो युवा । त्वच्चापि विकृतस्ताभ्यां जातवैरेण चेतसा ।

उद्भूतं मोह सर्व्वेषां यदूनां हृदयानि वै । वसुदेवे त्वयाक्षिप्ते वासुदेवे च कोपिते ।

कृष्णे च भवतो द्वेष्ये वसुदेवविगर्हणात् । शंसन्ति चेमानि भयं निमित्तान्यशिवानि ते । ४६५५

सर्पाणां दर्शनं तीक्ष्णं स्वप्नानाञ्च निशाक्षये । पुर्य्यां वैधव्यशंसीनि कारणैरनुमीमहे ।

एष घोरो ग्रहः स्वातिमुल्लिखन् खे गभस्तिभिः । वक्रमङ्गारकश्चक्रे चित्रायां घोरदर्शनः ।

बुधेन पश्चिमा सन्ध्या व्याप्ता घोरेण तेजसा । वैश्वानरपथे शुक्रो ह्यतिचारञ्चचार च ।

केतुना धूमकेतोस्तु नक्षत्राणि त्रयोदश । भरण्यादीनि भिन्नानि नानुयान्ति निशाकरं ।

प्राक्सन्ध्यापरिघग्रस्ता ताभिर्व्वाधति भास्करं। शिवा श्मशानमाक्रम्य निशास्वारावर्षिणी। ४४६०
उभे सन्ध्ये पुरीं घोरा पर्य्येति बहु वाशतो। उल्कानिर्घातनादेन पपात धरणीतले।
चलत्यपर्व्वणि मही गिरीणां शिखराणि च। प्रतिलोमं प्रजल्पन्ते व्याहरन्तो मृगद्विजाः।
ग्रस्तः स्वर्भानुना सूर्य्यो दिवा नक्तमजायत। धूमोत्पातैर्हिमैर्व्याप्ताः शुष्काशनिसमावृताः।
प्रस्रवन्ति घना रक्तं साशनिस्तनयित्नवः। चलिताः देवताः स्थानात्त्यजन्ति विहगा नगान्।
यानि राजविनाशाय दैवज्ञाः कथयन्ति च। तानि सर्व्वाणि पश्यामो निमित्तान्यशुभानि वै। ४४६५
त्वञ्चापि स्वजनद्वेषी राजधर्म्मपराङ्मुखः। अनिमित्तागतक्रोधः सन्निकृष्टभयो ह्यसि।
यत्त्वं देवोपमं वृद्धं वसुदेवं वसूपमं। मोहात् क्षिपसि दुर्बुद्धे कुतस्ते शान्तिरात्मनः।
मद्गतो यो हि नः स्नेहः सम्प्रत्यसोऽद्य तं वयं। अहितं त्वच्च वंशस्य न त्वां वयमुपास्महे।
स हि दानपतिर्धन्यो यो द्रक्ष्यति वने गतं। पुण्डरीकपलाशाक्षं कृष्णमक्लिष्टकारिणं।
छिन्नमूलो ह्ययं वंशो यदूनां त्वत्कृते कृतः। कृष्णो ज्ञातीन् समानीय स सन्धानं करिष्यति। ४४७०
सान्त्वमेव तवानेन वसुदेवेन धीमता। कालस्य च विनाशो भूपि त्वं यथाविद्धि स।
सम्यक्तु रोचते कंस वसुदेवसहायवान्। गच्छ कृष्णस्य निलयं प्रीतिस्ते तेन रोचतां।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकवाक्ये अशीतितमोऽध्यायः॥ ८०॥

॥ वैशम्पायन उवाच ॥ अन्धकस्य वचः श्रुत्वा कंसः संरक्तलोचनः। न किञ्चिदब्रवीत् क्रोधाद्विवेश स्वं निवेशनं।
ते तु सर्व्वे यथावेश्म यादवाः श्रुतविस्तराः। असम्विदितसङ्कल्पाः कंसे जग्मुर्मिथः।
अक्रूरोऽपि यथाशास्त्रं कृष्णदर्शनलालसः। जगाम रथमुख्येन मनसस्तुल्यगामिना। ४४७५
कृष्णस्यापि निमित्तानि शुभान्यङ्गगतानि वै। पितृतुल्येन शंसन्ति बान्धवेन समागमं।
प्रागेव तु नरेन्द्रेण माथुरेणोग्रसेनिना। केशिनः प्रेषितो दूतो वधार्थी येन कारणात्।
स तु दूतवचः श्रुत्वा केशी क्लेशकरो नृणां। वृन्दावनगतो गोपान् बाधते स्म दुरासदः।
मानुषं मांसमश्नानः क्रुद्धो दुष्टपराक्रमः। दुर्दान्तो वाजिदैत्योऽसावकरोत् कदनं महत्।
निघ्नन् गा वै सगोपालान् गवां पिशितभोजनः। उद्दामः कामचारी च स केशी निरवग्रहः। ४४८०
तदरण्यं श्मशानाभं नृणामस्थिभिरावृतं। यत्रास्ते स हि दुष्टात्मा केशी तुरगदानवः।
खुरैर्द्दारयते भूमिं वेगेनारुजते द्रुमान्। हेषितैः स्पर्द्धते वायुं प्लुतैर्लङ्घयते नभः।
अतिप्रवृद्धो मत्तश्च दुष्टाश्वो वनगोचरः। प्रकम्पितसटो रौद्रः कंसस्य परिचारगः।
ईरिणं तद्वनं सर्व्वं तेनासीत् पापकारिणा। कृतं तुरगदैत्येन सर्व्वान् गोपान् जिघांसता।
तेन दुष्टप्रचारेण दूषितं तद्वनं महत्। न नृभिर्गोधनैश्चापि सेव्यते वनवृत्तिभिः। ४४८५
निःसम्पातः कृतः पन्थास्तेन तद्विषयाश्रितः। मदाच्चलितवृत्तेन नृमांसान्यश्नता भृशं।
नृशब्दानुसरः क्रुद्धः स कदाचिद्दिनागमे। जगाम घोषसंवासं चोदितः कालधर्म्मणा।
तं दृष्ट्वा दुद्रुवुर्गोपाः स्त्रियश्च शिशुभिः सह। क्रन्दमाना जगन्नाथं कृष्णं नाथमपाश्रिताः।

नादो रुदितशब्देन गोपानां क्रन्दितेन च । दत्त्वाऽभयन्तु कृष्णो वै केशिनं सोऽभिदुद्रुवे ।
केशी चाप्युद्धतग्रीवः प्रकाशदशनेक्षणः । हेषमाणो जवोदग्रो गोविन्दाभिमुखो ययौ । ४२९०
तमापतन्तं सम्प्रेक्ष्य केशिनं हयदानवं । प्रत्युज्जगाम गोविन्दस्तोयदः शशिनं यथा ।
केशिनस्तु तमभ्याशे दृष्ट्वा कृष्णमवस्थितं । मनुष्यबुद्धयो गोपाः कृष्णमूचुर्हितैषिणः ।
कृष्ण तात न खल्वेष सहसा ते हयाधमः । उपसर्प्यो भवान् बालः पापश्चैष दुरासदः ।
एष कंसस्य सहजः प्राणास्तात बहिश्चरः । उत्तमश्च हयेन्द्राणां दानवोऽप्रतिमो युधि ।
त्रासनः परसैन्यानां तुरगाणां महाबलः । अवध्यः सर्व्वभूतानां प्रथमः पापकर्म्मिणां । ४२९५
गोपानां तद्वचः श्रुत्वा वदतां मधुसूदनः । केशिना सह युद्धाय मतिञ्चक्रेऽरिसूदनः ।
ततः सव्यं दक्षिणञ्च मण्डलानि परिभ्रमन् । पद्भ्यामुभाभ्यां स हयः क्रोधेनाहन्त द्रुमान् ।
मुखे लम्बसटे चास्य स्कन्धे केशघनावृते । वलया भ्रमरक्षाभाः सुस्रुवुः क्रोधजं जलं ।
सफेनं वक्त्रमस्यैव ववौ रजनीकृतं । हिमकाले यथा व्योम्नि नीहारमिव चन्द्रमाः ।
गोविन्दमरविन्दाक्षं हेषितोद्गारशीकरैः । सफेनैस्यन्दनीयैः प्रोक्षयामास भारत । ४३००
खुरोद्धूतावसक्तेन मधुकचूर्णपाण्डुना । रजसा स हयः कृष्णं चकारारुणमूर्द्धजं ।
प्लुतावल्गितपादस्तु तटस्थाने धरां खुरैः । दन्तान् निर्दशमानस्तु केशी कृष्णमुपाद्रवत ।
स संसक्तस्तु कृष्णेन केशी तुरगसत्तमः । पूर्व्वाभ्यां चरणाभ्यां वै कृष्णं वक्षस्यताडयत् ।
पुनः पुनश्च स बली प्राहिणोत्पार्श्वतः खुरान् । कृष्णस्य दानवो घोरं प्रहारममितौजसः ।
वक्त्रेण चास्य घोरेण तीक्ष्णदंष्ट्रायुधेन वै । सदशद्बाहुशिखरं कृष्णस्य कुपितो हयः । ४३०५
स लम्बकेशरसटः कृष्णेन सह सङ्गतः । रराज केशी मेघेन संयुक्तः स्व इवांशुमान् ।
उरस्यास्योरसा हन्तुमियेष बलवान् हयः । वेगेन वासुदेवस्य क्रोधाद्द्विगुणविक्रमः ।
तस्योत्सिक्तस्य बलवान् कृष्णोऽप्यमितविक्रमः । बाहुमाभोगिनं कृत्वा मुखे क्रुद्धः समादधत ।
स तं बाहुमशक्तो वै खादितुं भेत्तुमेव वा । दशनैर्मूलनिर्मुक्तैः सफेनं रुधिरं वमन् ।
विपाटिताभ्यामोष्ठाभ्यां कटाभ्यां विदलीकृतः । अक्षिणी विकृते चक्रे विसृते मुक्तबन्धने । ४३१०
निरस्तहनुराविष्टः शोणिताक्तविलोचनः । उत्कर्णो नष्टचेतास्तु स केशी बह्वचेष्टत ।
उत्पतन्नसकृत् पादैः शकृन्मूत्रं समुत्सृजन् । खिन्नाङ्गरोमा श्रान्तश्च निर्यत्नचरणोऽभवत् ।
केशिवक्त्रविलग्नस्तु कृष्णबाहुरशोभत । व्याभुग्न इव घर्म्मान्ते चन्द्रार्द्धकिरणैर्घनः ।
केशी च कृष्णसंसक्तः श्रान्तगात्रो व्यरोचत । प्रभातावनतश्चन्द्रः श्रान्तो मेरुमिवाश्रितः ।
तस्य कृष्णभुजोद्धूताः केशिनो दशना मुखात् । पेतुः शरदि निस्तोयाः सिताभ्रावयवा इव । ४३१५
स तु केशी भृशं श्रान्तः कृष्णेनाक्लिष्टकर्म्मणा । स्वभुजं व्यायतं कृत्वा पाटितो वक्त्रतस्तदा ।
स पाटितो भुजेनाशु कृष्णेन विकृताननः । केशी नदन्महानादं दानवो व्यथितस्तदा ।

विघूर्णमानः स्रस्ताङ्गो मुखाद्रुधिरमुद्वमन्। अर्धं श्वेतीकृतवपुर्निकृत्ताङ्ग इवाचलः।
व्यादितास्यो महारौद्रः सोऽसुरः कृष्णबाहुना। निपपात यथा कृत्तो नागो द्विविदलीकृतः।
बाहुना कृत्तदेहस्य केशिनो रूपमाबभौ। पशोरिव महाघोरं निहतस्य पिनाकिना। ४४१०
द्विपादपृष्ठपुच्छार्द्धे श्रवणैकाक्षिनासिके। केशिनस्ते द्विधाभूते द्वे अर्द्धे रेजतुः क्षितौ।
केशिदन्तक्षतस्यापि कृष्णस्य शुशुभे भुजः। वृद्धताल इवारण्ये गजेन्द्रदशनाहतः।
तं हत्वा केशिनं युद्धे कल्पयित्वा च भागशः। कृष्णः पद्मपलाशाक्षो हसंस्तत्रैव तस्थिवान्।
तं हतं केशिनं दृष्ट्वा गोपा गोपस्त्रियस्तथा। बभूवुर्मुदिताः सर्वे हतविघ्ना हतक्लमाः।
दामोदरन्तु श्रीमन्तं यथास्थानं यथावयः। अभ्यनन्दन् प्रियैर्वाक्यैः पूजयन्तः पुनः पुनः। ४४१५
॥ गोपा ऊचुः ॥ अहो तात कृतं कर्म हतोऽयं लोककण्टकः। दैत्यः क्षितिचरः कृष्ण हयरूपं समास्थितः।
कृतं वृन्दावनं क्षेम्यं सेव्यं नृमृगपक्षिणां। घ्नता पापमिमं तात केशिनं हयदानवं।
हता नो बहवो गोपा गावो वत्सेषु वत्सलाः। नैके चान्ये जनपदा हतानेन दुरात्मना।
एष संवर्त्तकं कर्त्तुमुद्यतः किल पापकृत्। नृलोकं निर्नरं कृत्वा चर्त्तुकामो यथासुखं।
नैतस्य प्रमुखे स्थातुं कश्चिच्छक्तो जिजीविषुः। अपि देवसमूहेषु किं पुनः पृथिवीतले। ४४२०
॥ वैशम्पायन उवाच ॥ अथाद्धान्तर्हितो विप्रो नारदः खगमो मुनिः। प्रीतोऽस्मि विष्णो देवेति कृष्ण कृष्णेति चाब्रवीत्।
यदिदं दुष्करं कर्म कृतं केशिजिघांसया। त्वय्येव केवलं युक्तं त्रिदिवे त्र्यम्बकेऽपि वा।
अहं युद्धोत्सुकस्तात त्वद्गतेनान्तरात्मना। इदं नरहयं युद्धं द्रष्टुं स्वर्गादिहागतः।
पूतनानिधनादीनि कर्म्माणि तव दृष्टवान्। अहं त्वनेन गोविन्द कर्म्मणा परितोषितः।
हयादस्मान्महेन्द्रोऽपि बिभेति बलसूदनः। कुर्वाणाच्च वपुर्घोरं केशिनो दुष्टचेतसः। ४४२५
यत्त्वया पाटितं देहं भुजेनायतपर्व्वणा। एषोऽस्य मृत्युरन्ताय विहितो विश्वयोनिना।
यस्मात्त्वया हतः केशी तस्मान्मच्छासनं शृणु। केशवो नाम नाम्ना त्वं ख्यातो लोके भविष्यसि।
स्वस्त्यस्तु भवतो लोके साधु याम्यहमाशुगः। कृत्यशेषश्च ते कार्य्यो बालस्त्वमसि मा चिरं।
त्वयि कार्य्यान्तरगते नरा इव दिवौकसः। विडम्बयन्तः क्रीडन्ति लीलां त्वद्गतमाश्रिताः।
अभ्यासे वर्त्तते कालो भारतस्याहवोदधेः। हस्तप्राप्तानि युद्धानि राज्ञां त्रिदिवगामिनाम्। ४४३०
पन्थानः शोधिता व्योम्नि विमानारोहिणाऽध्वगाः। अवकाशा विभज्यन्ते शक्रलोके महीक्षितां।
उग्रसेनसुते शान्ते पदस्थे त्वयि केशव। अभितस्त्वन्महद्युद्धं भविष्यति महीक्षितां।
त्वाञ्चाप्रतिमकर्म्माणं संश्रयिष्यन्ति पाण्डवाः। भेदकाले नरेन्द्राणां पक्षपाती भविष्यसि।
त्वयि राजासनस्थे हि राजश्रियमनुत्तमां। शुभां त्यक्ष्यन्ति राजानस्त्वत्प्रभावान्न संशयः।
एष मे कृष्ण सन्देशः श्रुतिभिः ख्यातिमेष्यति। देवतानां दिविष्ठानां जगतश्च जगत्पते। ४४३५
दृष्टं मे भवतः कर्म्म दृष्टस्त्वासि मया प्रभो। कंसे भूयः समेष्यामि साधिते साधयाम्यहं।

एवमुक्त्वा तु स तदा नारदः खं जगाम ह । नारदस्य वचः श्रुत्वा देवकीप्रीतिवर्धनः ।

गोपान् कृष्णः समाभाष्य विवेश व्रजमेव ह ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि केशिवधे एकाशीतितमोऽध्यायः ॥ ८१ ॥

॥ वैशम्पायन उवाच ॥ अथास्तं गच्छति तदा मन्दरश्मौ दिवाकरे । सन्ध्यारक्ततले व्योम्नि शशाङ्के पाण्डुमण्डले ।

नीडस्थेषु विहङ्गेषु सत्सु प्रादुष्कृताग्निषु । ईषत्तमःसंवृतासु दिक्षु सर्व्वासु सर्व्वशः । ४४५०

घोषवासिषु सुप्तेषु वाशन्तीषु शिवासु च । नक्तञ्चरेषु हृष्टेषु पिशितामिषकाङ्क्षिषु ।

शक्रगोपाकुलारावे प्रदोषे ऽभ्यागतस्वरे । अग्निप्रज्वलवेलायां प्राप्तायां गृहमेधिनां ।

वन्यैर्वैखानसैर्मन्त्रैर्हूयमाने हुताशने । उपावृत्तासु वै गोषु दुह्यमानासु च व्रजे ।

अवबद्धासु रम्भन्तीषु बहुवत्सासु धेनुषु । प्रकीर्णदामनीकेषु गावश्चैवाह्वयत्सु च ।

सन्निनादेषु गोपेषु काष्ठदाने च गोधने । करीषेषु प्रकृष्टेषु दीप्यमानेषु सर्व्वशः । ४४५५

काष्ठभारावनम्रस्कन्धैर्गोपैरभ्यागतैस्तदा । किञ्चिदभ्युत्थिते सोमे मन्दरश्मौ विराजति ।

ईषद्विगाहमानायां रजन्यां दिवसे गते । प्राप्ते दिनव्युपरमे प्रवृत्ते क्षणदामुखे ।

भास्करे तेजसि गते सौम्ये तेजस्युपस्थिते । अग्निहोत्राकुले काले सौम्येन्दौ प्रत्युपस्थिते ।

अग्नीषोमात्मके सन्धौ वर्त्तमाने जगन्मये । पश्चिमेनाग्निदीप्तेन पूर्व्वेणोत्सृतवर्चसा ।

दग्धान्तमिव दृश्ये व्योम्नि किञ्चित्तारागणाकुले । वयोभिर्व्योमसंस्रुतां बन्धुभिश्च समागमं । ४४६०

संसक्तिः स्यन्दनेनाशु प्राप्तो दानपतिर्व्रजं । प्रविशन्नेव पप्रच्छ सान्निध्यं केशवस्य सः ।

रौहिणेयस्य चाक्रूरो नन्दगोपस्य चाभ्यगात् । स नन्दगोपस्य गृहं वासाय वसुदोपमः ।

अवतीर्य्य ततो यानात् प्रविवेश महाबलः । हर्षपूर्णेन वक्त्रेण साश्रुनेत्रेण चैव ह ।

प्रविशन्नेव च द्वारि ददर्श दोहने गवां । वत्समध्ये स्थितं कृष्णं सवत्समिव गोवृषं ।

स तं हर्षपरीतेन वचसा गद्गदेन च । एहि केशव तातेति व्याजहार स धर्म्मवित् । ४४६५

उत्तानशायिनं दृष्ट्वा पुनर्दृष्ट्वा स्थिताऽन्वितं । अव्यक्तयौवनं कृष्णमक्रूरः प्रशशंस च ।

अयं स पुण्डरीकाक्षः सिंहशार्दूलविक्रमः । सम्पूर्णजलमेघाभः पर्व्वत[illegible]द्युतिः ।

मृधध्वजधर्षणीयेन श्रीवत्सेन वक्षसा । द्विषच्छिद्रधनदद्भ्यां [illegible]भ्यां साधु भूषितः ।

मूर्त्तिमान् स रहस्यात्मा जगतोऽग्र्यस्य भाजनं । गोप[illegible]वरो विष्णुरुदग्रायतमूर्द्धजः ।

किरीटलाञ्छनेनापि शिरसा छत्रवर्चसा । [illegible]कुण्डलमयोग्याभ्यां श्रवणाभ्यां विशेषतः । ४४७०

हारार्हेण च पीनेन सुविस्तीर्णेन [illegible] । दाभ्यां भुजाभ्यां दीर्घाभ्यां वृत्ताभ्यामुपशोभितः ।

क्षौमहस्तोपपन्नेन वपुषा [illegible]याधिना । पीते वसानो वसने सोऽयं विष्णुः सनातनः ।

धरण्याश्रयभूताभ्यां [illegible]रणाभ्यामरिन्दमः । त्रैलोक्याक्रान्तिभूताभ्यां भुवि पद्भ्यां व्यवस्थितः ।

रुचिराग्र[illegible]याश्च चक्राचित स्वेक्षणे । द्वितीय उत्तमश्चापि महासंयोगमिच्छति ।

अवतीर्णो भवायेह प्रथमं पद्मात्मनः । शोभतेऽद्य भुवि श्रेष्ठस्त्रिदशानां धुरन्धरः । ४४७५

अयं भविष्ये दृष्टो वै भविष्यकुशलैर्नरैः। गोपालो यादवं वंशं क्षीणं विस्तारयिष्यति ।
तेजसा यादवाश्चास्य सततोऽथ सहस्रशः। वंशमापूरयिष्यन्ति स्रोता इव महार्णवं ।
अस्यैव शासने सर्व्वं जगत् स्थास्यति शाश्वतं । निहतामित्रवाहनस्य क्षोणं क्षतयुगे यथा ।
अयमास्थाय वसुधां स्थापयित्वा जगद्वशे । राज्ञां भविष्यत्युपरि न च राजा भविष्यति ।
नूनं त्रिभिः क्रमैर्जित्वा यथाऽनेन कृतः प्रभुः । पुरा पुरन्दरो राजा देवतानां त्रिविष्टपे । ४९८०
तथैव वसुधां जित्वा जितपूर्व्वां त्रिभिः क्रमैः । स्थापयिष्यति राजानमनुपश्येनं न संशयः ।
प्रसृष्टैरगाधोऽयं प्रश्नैश्च बहुभिः श्रुतः । आख्यैर्ब्राह्मवादैश्च पुराणोऽयं हि गीयते ।
स्पृहणीयो हि लोकस्य भविष्यति च केशवः । तथा ख्यातोऽस्यिना बुद्धिर्मानुष्यमुपजीवितुं ।
अहन्त्वस्याद्य वसतिं पूजयिष्ये यथाविधि । विष्णुत्वं मनसा चैव पूजयिष्यामि मन्त्रवित् ।
यच्च जातिपरिज्ञानं प्रादुर्भावाश्च वै मृधु । समानुषं वेद्मि चैनं ये चान्या दिव्यचक्षुषः । ४९८५
सोऽहं कृष्णेन वै रात्रौ संमन्त्र्य विदितात्मना । सहानेन गमिष्यामि मथुरां यदि मंस्यते ।
एवं बहुविधं कृष्णं दृष्ट्वा हेत्वर्थकारणैः । विवेश नन्दगोपस्य कृष्णेन सह संसदं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अक्रूरागमने [illegible]ऽध्यायः ॥ ८९ ॥
॥ वैशम्पायन उवाच ॥ स नन्दगोपस्य गृहं प्रविष्टः सह केशवः । गोपवृद्धान् समानीय प्रोवाचाभिवदन्निव ।
कृष्णं चैवाब्रवीत् प्रीतो रौहिणेयेन सङ्गतं । श्वः पुरीं मथुरां तात गमिष्यावः सुखाय च ।
यास्यन्ति च व्रजाः सर्व्वे सगोकुलपरिग्रहाः । कंसाज्ञया समुचितं करमादाय वार्षिकं । ४९९०
वयश्चैव प्रगन्तारो रथमारुह्य संगताः । सम्वृद्धस्तत्र कंसस्य भविष्यति धनुर्महः ।
तं द्रक्ष्यथ समृद्धञ्च स्वजनैश्च समेष्यथः । पितरं वसुदेवञ्च सततं दुःखभाजनं ।
द[illegible]ध्वधश्रान्तं शुचामय समेष्यथः । सततं पीड्यमानञ्च कंसेनाशुभबुद्धिना ।
दह्यन्ते शोषित[illegible] दुःखैः शिथिलतां गतं । कंसस्य भयमन्त्र तं भवद्भ्यां च विना कृतं ।
दह्यमानं दिवारात्रौ स[illegible]चेनान्तरात्मना । ताञ्च द्रक्ष्यसि गोविन्द पुत्रैः[illegible]ह्रदितमानिनीं । ४९९५
देवकीं देवसङ्काशां सीदन्तीं विहत[illegible] पुत्रशोकेन शुष्यन्तीं त्वद्दर्शनपरायणां ।
वियोगदुःखसन्तप्तां विवत्सामिव सौरभीं । [illegible]रोत्सुकां दीनां नित्यं मलिनवाससं ।
स्वर्भानुवदनग्रस्तां शशाङ्कस्य प्रभामिव । त्वद्दर्शनपरां । [illegible] तवागमनकाङ्क्षिणीं ।
त्वत्प्रवृत्तेन शोकेन सीदन्तीं वै तपस्विनीं । त्वत्प्रलापेषु कुशल[illegible] यया बाल्ये वियोजितां ।
अरूपज्ञा तव विभो वक्त्रस्यास्येन्दुवर्च्चसः । यदि त्वां जनयित्वा सा देवक[illegible] तात तप्यते । ५०००
अपत्ययोऽत्र कस्तस्या वरं स्त्रीत्वानपत्यता । एकः शोको हि नारीणामपुत्राणा[illegible]भिधीयते ।
सपुत्रा त्वफले पुत्रे धिक् प्रजातेन तप्यते । त्वन्तु शक्रसमः पुत्रो यस्यास्त्वन्तृप्तो गुणैः ।
परेषामप्यभयदो न सा शोचितुमर्हति । वृद्धौ तवाद्यपितरौ परभृत्यत्वमागतौ ।
त्वत्कृते भर्त्सितौ नित्यं कंसेनादीर्घदर्शिना । यदि ते देवकी मान्या पृथिवी बालधारिणी ।

तां शोकवर्जिते मग्नामुत्सारयितुमर्हसि । तद्वृद्धं प्रियपुत्रं वसुदेवं सुदुःखितं । ४४०५
पुत्रयोगेन संयोज्य कृष्ण धर्म्ममवाप्स्यसि । यथा नागः सुदुर्द्धर्षो दमितो यमुनाह्रदे ।
विमूलश्च कृतः शैलो यथा वै भूधरस्त्वया । दर्पोच्छ्रितश्च बलवानरिष्टो विनिपातितः ।
परप्राणहरः केशी दुष्टात्मा च हतो यतः । एतेनैव प्रयत्नेन वृद्धावुद्धृत्य दुःखितौ ।
यथा धर्म्ममवाप्नोषि तत् कृष्ण परिचिन्त्यतां । निर्भर्त्स्यमानो येनोच्चैः पिता ते कंससंसदि ।
ते सर्व्वे यदवोऽश्रूणि नेत्रैर्दुःखान्विता भृशं । गर्भावकर्त्तनादीनि दुःखानि सुबहूनि वा । ४४१०
माता ते देवकी कृष्ण कंसस्य सहते ऽवशा । मातापितृभ्यां सर्व्वेण जातेन तनयेन वै ।
कार्यं वै प्रतिकर्त्तव्यं यथा योगमुदाहृतं । एवं ते कुर्व्वतः कृष्ण मातापित्रोरनुग्रहं ।
परित्यजेतां तौ शोकं स्यात्तु धर्म्मस्तवातुलः ।
॥ वैशम्पायन उवाच ॥ कृष्णस्तु विदितार्थो वै तमाहामितदर्शिनं । वाढमित्येव तेजस्वी न च चुक्रोध केशवः ।
ते च गोपाः समागम्य नन्दगोपपुरःसराः । अक्रूरवचनं श्रुत्वा सज्जेयुः कंसशासनात् । ४४१५
गमनाय च ते सज्जा बभूवुर्व्रजवासिनः । सज्जोपायनं कृत्वा गोपवृद्धाः प्रतस्थिरे ।
करं नृपस्य सर्पिर्भिर्विविधैश्चोपनायिकं । यथासारं यथायुक्तमुपानीय पयोघृतं ।
तं सज्जयित्वा कंसस्य करं चोपायनानि च । ते सर्व्वे गोपपतयो गमनायोपतस्थिरे ।
अक्रूरस्य कथाभिस्तु सह कृष्णेन जाग्रतः । रौहिणेयद्वितीयस्य निशा सा व्यत्यवर्त्तत ।
ततः प्रभाते विमले पक्षिव्याहारसंकुले । नैशाकरे रश्मिजाले चन्द्रहासक्षयसंवृते । ४४२०
तमःक्षयसमाकीर्णे पर्य्यस्ते ज्योतिषां गणे । प्रत्यूषपवमानार्द्रे क्लेदिते धरणीतले ।
क्षीणाकारासु तारासु सुप्तनिष्पन्दभासु च । नैशमन्तर्दधे रूपमुदगच्छद्दिवाकरः ।
शीतांशुः शान्तकिरणो निष्प्रभः समपद्यत । एको नाशयते रूपमेको वर्द्धयते वपुः ।
गोभिः समवकीर्णासु व्रजनिर्य्याणभूमिषु । मन्थनावर्त्तपूर्णेषु गर्गरेषु नदत्सु च ।
दामभिर्बध्यमानेषु वत्सेषु तरुणेषु च । गोपैरापूर्य्यमाणासु चावरथ्यासु सर्व्वशः । ४४२५
तत्रैव गुरुकं भाण्डं शकटारोपितं बहु । त्वरिताः पृष्ठतः कृत्वा जग्मुः स्यन्दनवाहनाः ।
कृष्णोऽथ रौहिणेयश्च स चैवामितदर्शनः । त्रयो रथगता जग्मुस्त्रिलोकपतयो यथा ।
अथाह कृष्णमक्रूरो यमुनातीरमाश्रितः । स्यन्दनं तात रक्षस्व यत्नं च कुरु वाजिषु ।
हयेभ्यो यवसं दत्त्वा हयभाण्डे रथे तथा । प्रगाढं यत्नमादाय क्षणं तात प्रतीक्ष मां ।
यमुनाया ह्रदे ह्यस्मिन् स्तोष्यामि भुजगेश्वरं । दिव्यैर्भागवतैर्मन्त्रैः सर्व्वलोकप्रभुं यतः । ४४३०
गुह्यं भागवतं देवं सर्व्वलोकस्य भावनं । श्रीमत्स्वस्तिकमूर्द्धानं प्रणमिष्यामि भोगिनं ।
सहस्रशिरसं देवमनन्तं नीलवाससं । धर्म्मदेवस्य तस्याद्य यद्दिवं प्रभविष्यति ।
सर्व्वं तदस्तत्प्रस्थानमभिज्ञास्यसि मे यथा । स्वस्तिकायतनं दृष्ट्वा विशिखं श्रीविभूषितं ।
ममाजस्तव सर्व्वेषां शान्त्यर्थं वै भविष्यति । आस्तां मां समुदीक्षन्तौ भवन्तौ सहितावुभौ ।

निवृत्तो भुजगेन्द्रस्य यावदस्मि ह्रदोत्तमात् । तमाह कृष्णः संहृष्टो गच्छ प्रविश मा चिरं । ४४३५
आवां खलु न शक्तौ स्वस्तथा हीनावुपासितुं । स ह्रदे यमुनायास्तु ममज्जामितदक्षिणः ।
रसातले स ददृशे नागलोकमिमं यथा । तस्य मध्ये सहस्रास्यं हेमतालोच्छ्रितध्वजं ।
लाङ्गलासक्तहस्ताग्रं मुषलापाश्रितोदरं । असिताम्बरसंवीतं पाण्डुरं पाण्डुराननं ।
कुण्डलैकधरं मत्तं सुप्तमम्बुरुहेक्षणं । भोगोत्कटासने शुभ्रे स्वेन देहेन शोभिते ।
स्वासीनं स्वस्तिकाभ्यासे वरार्हाभ्यां महीधरं । किंचित्सव्यापवृत्तेन मौलिना हेमचूलिना । ४४४०
जातरूपमयैः पद्मैर्मालया कृतवक्षसं । रक्तचन्दनदिग्धाङ्गं दीर्घबाहुमरिन्दमं ।
पद्मनाभं सिताभ्राभं भाभिर्ज्वलितवर्चसं । ददर्श भोगिनां नाथमेकमेकार्णवेश्वरं ।
पूज्यमानं द्विजिह्वैर्व्वासुकिप्रमुखैः प्रभुं । कम्बलाश्वतरौ नागौ तौ चामरकरावुभौ ।
आवीजयेतां तं देवं धर्म्मासनगतं प्रभुं । तत्राभ्यासगतो भाति वासुकिः पन्नगेश्वरः ।
वृतोऽन्यैः सचिवैः सर्पैः कर्कोटकपुरःसरैः । तं घटैः काञ्चनैर्दिव्यैः पद्मोत्पलमस्तकैः । ४४४५
राजानं स्नापयामासुः स्नातमेकार्णवाम्बुभिः । तस्योत्सङ्गे घनश्यामं श्रीवत्साच्छादितोरसं ।
पीताम्बरधरं विष्णुं सूपविष्टं ददर्श ह । अपरेणैव सोमेन तुल्यसंहननं प्रभुं ।
सङ्कर्षणमिवासीनं तं दिव्यं विष्टरं विना । स कृष्णं तत्र तरसा व्याहर्त्तुमुपचक्रमे ।
तस्य संस्तम्भयामास वाक्यं कृष्णः स्वतेजसा । सोऽनुभूय भुजङ्गानां तं भागवतमव्ययं ।
उदतिष्ठत् पुनस्तोयात् विस्मितोऽमितदक्षिणः । स तौ रथस्थावासीनौ तथैव बलकेशवौ । ४४५०
निरीक्षमाणावन्योन्यं ददर्शाद्भुतरूपिणौ । अथामज्जत् पुनस्तत्र तदाऽक्रूरः कुतूहलात् ।
दृश्यते यत्र देवोऽसौ नीलवासाः सिताननः । तथैवासीनमुत्सङ्गे सहस्रास्यस्य तस्य वै ।
ददर्श कृष्णमक्रूरः पूज्यमानं तदा प्रभुं । भूयश्च सहसोत्थाय तमर्थं सहसा वदन् ।
रथं तेनैव मार्गेण जगामामितदक्षिणः । तमाह केशवो हृष्टः स्थितमक्रूरमागतं ।
कीदृशं नागलोकस्य वृत्तं भागवते ह्रदे । चिरन्तु भवता कालं व्याक्षेपेण विलम्बितं । ४४५५
मन्ये दृष्टं त्वयाश्चर्यं हृदयं ते यथाऽचलं । प्रत्युवाच स तं कृष्णमाश्चर्यं भवता विना ।
किं भविष्यति लोकेषु स्थावरेषु चरेषु च । तत्राश्चर्यं मया दृष्टं कृष्ण यद्भुवि दुर्लभं ।
तदिहापि यथा तत्र पश्यामि च रमामि च । सङ्गतस्यास्मि लोकानामाश्चर्येणेह रूपिणा ।
अतः परतरं कृष्ण नाश्चर्यं द्रष्टुमुत्सहे । तदागच्छ गमिष्यामः कंसराजपुरीं प्रभो ।
यावच्चास्तं प्रजत्येष दिवसान्ते दिवाकरः । ४४६०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अक्रूरस्य नागलोकदर्शने त्र्यशीतोऽध्यायः ॥ ८३ ॥

॥ वैशम्पायन उवाच ॥ स तु युक्त्वा रथवरमाहृत्यामितदक्षिणः । कृष्णेन सार्द्धं संप्राप्तस्तथा सङ्कर्षणेन च ।
आससाद पुरीं रम्यां मथुरां कंसपालितां । विविशुस्तां पुरीं रम्यां काले रक्तदिवाकरे ।
तौ तु स्वभवनं वीरौ कृष्णसंकर्षणावुभौ । संवेशितौ बुद्धिमता अक्रूरेणार्कतेजसा ।

तावाह वरवर्णाभौ भीतौ दानपतिस्तदा । त्यजथा तात गमने वसुदेवस्य वै सुतौ ।
युवयोर्हि कृते क्रुद्धः कंसेन स निरस्यते । भर्त्स्यते च दिवारात्रौ नैव स्थातव्यमित्यपि । ४४२६
तद्युवाभ्यां हि कर्त्तव्यं पित्रर्थं सुखमुत्तमं । यथा सुखमवाप्नोति तद्धि कार्य्यं हितार्थिना ।
तमुवाच ततः कृष्णो याचावावामतर्किता । प्रेक्षन्तौ मथुरां वीर राजमार्गेषु धार्मिक ।
तथैव तु त्वदं साधो गच्छावो यदि मन्यसे ।
॥ वैशम्पायन उवाच ॥ अनुशिष्टौ च तौ वीरौ प्रस्थितौ प्रेक्षकावुभौ । मालानाभ्यामिवोन्मुखौ कुञ्जरौ युद्धकाङ्क्षिणौ ।
तौ तु मार्गगतं दृष्ट्वा रजकं रङ्गकारकं । अयाचेतां ततस्तानि वासांसि रुचिराणि वै । ४४३०
रजकः स तु तौ प्राह युवां कस्य वनेचरौ । राज्ञो वासांसि यौ मोहाद्याचेतां निर्भयावुभौ ।
अहं कंसस्य वासांसि नानादेशभवानि वै । कामरागाणि शतशो रञ्जयामि विशेषतः ।
युवां कस्य वने जातौ मृगैः सह विवर्द्धितौ । जातरागाविदं दृष्ट्वा रक्तमाच्छादनं बहु ।
अहो वां जीवितं त्यक्तं यौ भवन्ताविहागतौ । मूर्खौ प्राकृतविज्ञानौ वासो याचितुमिच्छथः ।
तस्मै चुक्रोध वै कृष्णो रजकायाल्पमेधसे । प्राप्ताग्निष्टाय मूर्खाय सृजते वाङ्मयं विषं । ४४३५
तलेनाशनिकल्पेन स तं मूर्द्ध्न्यताडयत् । स गतासुः पपातोर्व्यां रजको व्यस्तमस्तकः ।
तं हतं परिदेवन्त्यो भार्य्यास्तस्य विमुक्तकच्छाः । त्वरितं मुक्तकेश्यश्च जग्मुः कंसनिवेशनं ।
तावप्युभौ सुवसनौ जग्मतुर्माल्यकारणात् । वीथीं माल्यापणानां वै गन्धार्थिनौ द्विपाविव ।
गुणको नाम तत्रासीत् माल्यवृत्तिः प्रियंवदः । प्रभूतमाल्यापणवान् सश्रीवान् प्रियदर्शनः ।
तं कृष्णः श्लक्ष्णया वाचा माल्यार्थमभिसृष्टया । देहीत्युवाच तत्कालं मालाकारमकातरं । ४४४०
ताभ्यां प्रीतो ददौ माल्यं प्रभूतं माल्यजीवकः । भवतः स्वमिदं चेति प्रोवाच प्रियदर्शने ।
प्रीतस्तु मनसा कृष्णो गुणकाय वरं ददौ । श्रीस्त्वां सततसव्या सौम्य धनौघैरभिवर्त्स्यते ।
स लब्ध्वा वरमव्यग्रो माल्यवृत्तिरधोमुखः । कृष्णस्य पतितो मूर्द्ध्ना प्रतिजग्राह तं वरं ।
यथाविमाविति तदा स मेने माल्यजीवकः । स भृशं भयसंविग्नो नोत्तरं प्रत्यपद्यत ।
वसुदेवसुतौ तौ च राजमार्गगतावुभौ । कुब्जां ददृशतुर्भूयः सानुलेपनभाजनां । ४४४५
तामाह कृष्णः कुब्जेति कस्येदमनुलेपनं । नयस्वम्बुजपत्राक्षि क्षिप्रमाख्यातुमर्हसि ।
सा स्मितावेक्षणी भूत्वा प्रत्युवाचाम्बुजेक्षणं । कृष्णं जलदगम्भीरं विद्युत्कुटिलगामिनि ।
राज्ञः स्नानमर्हं यामि तद्गृहाणानुलेपनं । स्थिताऽस्म्यागच्छ भद्रं ते हृदयस्यासि मे प्रियः ।
कुतस्त्वागम्यते सौम्य यस्मात् त्वं नावबुध्यसे । महाराजस्य दयितां नियुक्तामनुलेपने ।
तामुवाच सस्मितन्तु कृष्णः कुब्जामवस्थितां । आवयोर्गात्रसदृशं दीयतामनुलेपनं । ४४५०
वयं हि देशातिथयो मल्लाः प्राप्ता वरानने । द्रष्टुं धनुर्महं दिव्यं राष्ट्रञ्चैव महर्द्धिमत् ।
प्रत्युवाचाथ सा कृष्णं प्रियोऽसि मम दर्शने । राजार्हमिदमव्यग्रं तद्गृहाणानुलेपनं ।
तावुभावनुलिप्ताङ्गौ चारुगात्रौ विरेजतुः । तीर्थगौ पङ्कदिग्धाङ्गौ यमुनायां यथा वृषौ ।

॥ वैशम्पायन उवाच ॥ स चिन्तयित्वा मनसा मन्त्रं भोजविवर्द्धनः । बभूव विमना राजा चिन्तयन् स सुदुःखितः ।
कथं बालो विगतभीरवमन्य महाबलं । प्रेक्षमाणस्य पुरुषैर्बहुभिर्भृशं विनिर्जितः ।
यदर्थं दारुणं कर्म कृत्वा लोकविगर्हितं । पितृव्यस्यात्मजान् भोजः सर्वेषामेव पोषणं । ३३२५
दैवं पुरुषकारेण न शक्यमतिवर्त्तितुं । नारदोक्तन्तु वचनं नूनं मत्समुपस्थितं ।
एवं राजा विचिन्त्यैव निष्क्रम्य स गृहोत्तमात् । प्रेक्षागारं जगामाशु मञ्चागारावलोककः ।
स दृष्ट्वा सर्व्वनिर्युक्तं प्रेक्षागारं नृपोत्तमः । श्रेणीनां कृतसंयुक्तैर्मञ्चवाटैर्निरन्तरं ।
उत्तरागारयुक्ताभिर्व्वलभीभिर्व्विभूषितं । कुटीभिश्च महाशृङ्गाभिरेकस्तम्भैश्च भूषितं ।
सर्व्वतः सारनिर्युक्तं स्वायतं सुप्रतिष्ठितं । उदयाद्रिसुनिष्ठं महागिरिवरोत्तमं । ३३३०
नृपासनपरिक्षिप्तं मञ्चारपदसङ्कुलं । कृतं नवेदिकाभिश्च मार्गवीथीभरक्षणं ।
स दृष्ट्वा भूषितं रङ्गमाज्ञापयत बुद्धिमान् । श्वः सचिवाः समाजाश्च सपताकास्तथैव च ।
सुवासिता वपुष्मन्त उपनीतोत्तरच्छदाः । क्रियन्तां मञ्चवाटाश्च वस्त्रैश्च वीथयस्तथा ।
रङ्गवाटे करीषश्च कल्प्यन्तां राशयोऽव्ययाः । घण्टातोरणशोभाश्च वलयश्चानुपूर्व्वतः ।
स्थाप्यन्तां सुनिखाताश्च पानकुम्भा यथाक्रमं । उदकभारवहाः सर्व्वे सकाञ्चनघटोत्तराः । ३३३५
कलशश्चोपकल्प्यन्तां कषायाश्चैव कुम्भशः । प्राश्निकाश्च निमन्त्र्यन्तां श्रेण्यश्च सपुरोगमाः ।
आज्ञा च देया मल्लानां प्रेक्षकाणां तथैव च । समाजे मञ्चशोभाश्च कल्प्यन्तां सुपकल्पिताः ।
एवमाज्ञाप्य राजा स समाजविधिमुत्तमं । समाजवाटान्निष्क्रम्य विवेश स्वं निवेशनं ।
आह्वाने तत्र मल्लस्य तस्य मल्लवरस्य वै । चाणूरस्याप्रमेयस्य मुष्टिकस्य तथैव च ।
तौ मल्लौ सुमहावीर्य्यौ बलिनौ बाहुशालिनौ । कंसस्याज्ञां पुरस्कृत्य हृष्टौ विविशतुस्तदा । ३३४०
तौ समीपगतौ दृष्ट्वा मल्लौ जगति विश्रुतौ । उवाच कंसो नृपतिः सोपन्यासमिदं वचः ।
भवन्तौ मम विख्यातौ मल्लौ वीरध्वजार्चितौ । पूजितौ च यथान्यायं सत्कारार्हौ विशेषतः ।
तस्मात्तौ यदि सत्काराः स्मर्य्यन्ते सुकृतानि वा । कर्त्तव्यं मे महत्कर्म भवद्भ्यां स्वेन तेजसा ।
यावेतौ मम संवृद्धौ व्रजे गोपालकावुभौ । सङ्कर्षणश्च कृष्णश्च बालावपि जितश्रमौ ।
एतौ रङ्गगतौ युद्धे युध्यमानौ वनेचरौ । निपातानन्तरं शीघ्रं हन्तव्यौ नात्र संशयः । ३३४५
बालाविमौ चपलकावक्रियाविति सर्व्वथा । नावज्ञा तत्र कर्त्तव्या कर्त्तव्यो यत्न एव हि ।
ताभ्यां युधि निरस्ताभ्यां गोपाभ्यां रङ्गसन्निधौ । आयत्याञ्च तदात्वे च श्रेयो मम भविष्यति ।
नृपतेः स्नेहसंयुक्तैर्व्वचोभिर्व्वर्द्धमानयोः । ऊचतुर्युद्धसक्तौ मल्लौ चाणूरमुष्टिकौ ।
यद्यावयोः प्रमुखे स्थास्येते गोपकिल्बिषौ । हतावित्यवगन्तव्यौ प्रेतरूपौ तपस्विनौ ।
यद्यावां प्रतियोत्स्येते तावरिष्टपरिप्लुतौ । आवाभ्यां रोषयुक्ताभ्यां प्रमुखे तौ वनौकसौ । ३३५०
एवं वाग्विषमुत्सृज्य तावुभौ मल्लपुङ्गवौ । अनुज्ञातौ नरेन्द्रेण स्वगृहं प्रतिजग्मतुः ।
महामात्रं ततः कंसो बभाषे हस्तिजीविनं । वशी कुवलयापीडः समाजद्वारि तिष्ठतु ।

वसुवाक्यदलोलाक्षपक्ष: क्रोधनो नृषु । दानोत्कटकटस्तब्ध: प्रतिवारणवारण: ।
स सञ्चोदयितव्यस्ते तावुद्दिश्य वनौकसौ । वसुदेवसुतौ गोपौ यथा स्यातां गतासुषौ ।
त्वया चैव गजेन्द्रेण यदि तौ गोषु जीविनौ । भवेतां घातितौ रङ्गे न पश्येयं मदोत्कटौ । ॥२५
ततस्तौ पातितौ दृष्ट्वा वसुदेव: सबान्धव: । छिन्नमूलो निरालम्ब: सभार्य्यो विनशिष्यति ।
ये चेमे यादवा मूर्खा: सर्व्वे कृष्णपरायणा: । ते नशिष्यन्ति छिन्नाशा दृष्ट्वा कृष्णं निपातितं ।
एतौ हत्वा गजेन्द्रेण मल्लैर्व्वा स्वयमेव वा । पुरीं निर्य्यादवां कृत्वा विचरिष्याम्यहं सुखी ।
पिताऽपि मे परित्यक्तो यादवानां कुलोद्वह: । येषाञ्च मे परित्यक्ता यादवा कृष्णपक्षिण: ।
न चाहमुग्रसेनेन जात: किल सुतार्थिना । मानुषेणाल्पवीर्य्येण यथा मामाह नारद: । ॥३०
। महामात्र उवाच ॥ कथमुक्तं नारदेन राजन् देवर्षिणा पुरा । आश्चर्य्यमेतत् कथितं त्वया: सुतमरिन्दम ।
कथमन्येन जातस्त्वमुग्रसेनात् पितुर्विना । तव मात्रा कथं राजन् कृतं कर्म्मेदमीदृशं ।
अन्याऽपि प्राकृता नारी न कुर्य्यात्तु जुगुप्सितं । विस्तरं श्रोतुमिच्छामि परं कौतूहलं हि मे ।
॥ कंस उवाच ॥ यथा कथितवान्विप्रो महर्षिर्नारद: प्रभु: । तथाऽहं सम्प्रवक्ष्यामि यदि ते श्रवणे मति: ।
आगत: शक्रसदनात् स वै शक्रसखो मुनि: । चन्द्रांशुशुक्लवसनो जटामण्डलमुद्वहन् । ॥३५
कृष्णाजिनोत्तरीयेण रुक्मयज्ञोपवीतवान् । दण्डी कमण्डलुधर: प्रजापतिरिवापर: ।
गाता चतुर्णां वेदानां विद्वान् गन्धर्व्ववेदवित् । स नारदोऽथ देवर्षिर्ब्रह्मलोकचरोऽव्यय: ।
तमागतमृषिं दृष्ट्वा पूजयित्वा यथाविधि । पाद्यार्घमासनं दत्त्वा सम्प्रवेश्योपविश्य च ।
सुखोपविष्टोऽथ मुनि: पृष्ट्वा च कुशलं मम । उवाच मां प्रीतमना देवर्षिर्भावितात्मवान् ।
पूजितोऽहं त्वया वीर विधिदृष्टेन कर्म्मणा । इदमेकं मम वच: श्रूयतां प्रतिगृह्यतां । ॥४०
गतोऽहं देवसदनं सौवर्णं मेरुपर्व्वतं । सोऽहं कदाचिद्देवानां समाजे मेरुमूर्द्धनि ।
तत्र मन्त्रयतामेवं देवतानां मया श्रुत: । भवत: सानुगस्येह वधोपाय: सुदारुण: ।
तत्रैव देवकीगर्भो विष्णुर्लोकनमस्कृत: । योऽस्या गर्भोऽष्टम: कंस स ते मृत्युर्भविष्यति ।
देवानां स तु सर्व्वस्वं त्रिदिवस्य गतिश्च स: । परं रहस्यं देवानां स ते मृत्युर्भविष्यति ।
यत्नश्च क्रियतां कंस गर्भाणां पातनं प्रति । नावज्ञा रिपवे कार्य्या दुर्ब्बले स्वजनेऽपि वा । ॥४५
न चायमुग्रसेनस्तु पिता तव महाबल । द्रुमिलो नाम तेजस्वी सौभस्य पतिरूर्ज्जित: ।
श्रुत्वाऽहं तद्वचस्तस्य किञ्चिद्रोषसमन्वित: । भूयोऽपृच्छं कथं ब्रह्मन् द्रुमिलो नाम दानव: ।
मम मात्रा कथं तस्य ब्रूहि विप्र समागम: । एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
॥ नारद उवाच ॥ हन्त ते वर्णयिष्यामि शृणु राजन् यथार्थत: । द्रुमिलस्य च मात्रा ते संवादञ्च समागमं ।
सुयामुनं नाम गिरिं तव माता रजस्वला । प्रेक्षितुं सहिता स्त्रीभिर्गता वनकुतूहलात् । ॥५०
सा तत्र रमणीयेषु रुचिरद्रुमसानुषु । चचार नगशृङ्गेषु कन्दरेषु नदीषु च ।
किन्नरोद्गीतमधुरा: प्रतिश्रुत्याऽभिनादिता: । शृण्वती काममननीर्म्मोच: श्रोत्रसुखावहा: ।

षट्पदैश्चैव विरुतं वनानाञ्च विकूजितं । अशोकमभिगच्छन्ती शोभयन्ती व्यरोचयत् ।
एतस्मिन्नन्तरे वायुर्वनराजिविनिःसृतः । सुखः कुसुमगन्धाढ्यो ववौ मन्मथबोधनः ।
द्विरेफाभरणाश्चैव कदम्बा वायुघट्टिताः । मुमुचुर्गन्धमधिकं मत्तासारमूर्च्छिताः । ४८५५
केसराः पुष्पवर्षैश्च षट्पदैरवबोधनाः । शोभा दीप्ता इवाभान्ति पुष्पकर्णिकधारिणः ।
मही नवतृणच्छन्ना शक्रगोपविभूषिता । यौवनस्थेव वनिता चन्द्रधारार्चितं वपुः ।
अथ सौभपतिः श्रीमान् द्रुमिलो नाम दानवः । भविष्यद्दैवयोगेन विधात्रा यत्र चोदितः ।
कामगेन रथेनाशु तरुणादित्यवर्चसा । यदृच्छया गतस्तत्र सुयामुनदिदृक्षया ।
विहायसा कामगमो मनसोऽप्याशुगामिना । स तं प्राप्य पर्वतेन्द्रं अवतीर्य रथोत्तमात् । ४८६०
पर्वतोपवने न्यस्य रथं परमपावनं । उभौ तौ सूतसहितौ चेरतुर्नगमूर्द्धनि ।
ततो बहून्यपश्येतां काननानि वनानि च । सर्वर्तुगुणसम्पन्ने नन्दनस्येव कानने ।
चेरतुर्नगशृङ्गेषु कन्दरेषु नदीषु च । नानाधातुपिनद्धेषु शृङ्गैरभ्रभिरङ्कितैः ।
नानावर्णविचित्रैश्च काञ्चनाञ्चनराजतैः । नानाकुसुमगन्धाढ्यान् नानासत्त्वगणैर्युतान् ।
नानाद्विजगणोद्घुष्टान् नानापुष्पफलद्रुमान् । नानौषधिसमायुक्तान् ऋषिसिद्धानुसेवितान् । ४८६५
विद्याधरान् किम्पुरुषान् यक्षवानरराक्षसान् । सिंहान् व्याघ्रान् वराहांश्च महिषाञ्छरभाञ्छशान् ।
चमरांश्चमराद्युक्तानश्वान् पन्नगराक्षसान् । एवं बहुविधान् पश्यंश्चरमाणो नगोत्तमं ।
दूरादद्राक्षीन्नृपतिर्देवीं सुरसुतोपमां । क्रीडमानां सखीभिश्च पुष्पाणीव प्रचिन्वतीं ।
तत्र चरन्तीं सुश्रोणीं सखीभिः सह संवृतां । दृष्ट्वा सौभपतिर्दूराद्विस्मयन् सूतमब्रवीत् ।
कस्येयं मृगशावाक्षी वनान्तरविचारिणी । रूपौदार्यगुणोपेता मन्मथस्य रतिर्यथा । ४८७०
शचीव पुरुहूतस्य उर्वशी वा तिलोत्तमा । नारायणोरुं निर्भिद्य सम्भूता वरवर्णिनी ।
ऐलस्य दयिता देवी या विद्वत्तं किमुर्वशी । क्षीरार्णवे मथ्यमाने सुरासुरगणैः सह ।
मन्थानं मन्दरं कृत्वा ह्यमृतायेति नः श्रुतं । ततोऽमृतात् समुत्पन्ना देवी श्रीर्लोकभाविनी ।
नारायणाङ्कललिता किं श्रीरेषा वरानना । नीलमेघान्तरगता द्योतन्तीवाचिरप्रभा ।
तथा योषिद्गणान्मध्ये रूपं प्रद्योतयद्वनं । अतीव सुकुमाराङ्गी सुप्रभेन्दुनिभानना । ४८७५
दृष्ट्वा रूपमनिन्द्याङ्ग्या विभ्रान्तो व्याकुलेन्द्रियः । कामस्य वशमापन्नो मनो विक्लवतीव मे ।
भृशं कृन्तन्ति मेऽङ्गानि कुसुमायुधसायकाः । भित्त्वा हृदि शराः पञ्च निर्दहन्तीव मे तनुं ।
हृच्छयाग्निर्दहति मामाज्यसिक्त इवानलः । कथमस्य भवेत् कार्य्यं प्रमाथि मन्मथाग्निना ।
केनोपायेन किं कुर्यां भजेन्मां मत्तकामिनी । एवं बहुविधं चिन्तयानो नोपलभ्य च दानवः ।
सूतमाह मुहूर्त्तं त्वं तिष्ठ वीरमिहानघ । अहं यास्यामि तां द्रष्टुं कस्येयमिति सुन्दरी । ४८८०
प्रतीक्षमाणस्तिष्ठस्व यावदागमनं मम । श्रुत्वा तु वचनं सूतस्तथास्त्विति च सोऽब्रवीत् ।
एवमुक्त्वा दानवेन्द्रो मन्मथाय मनो दधे । इच्छयाविष्टहृदयो दृष्ट्वा तामसितेक्षणां ।

वायुमुपस्पृश्य बलवान् ध्यानमेवान्वचिन्तयत् । मुहूर्त्तं ध्यानमार्गेण दृष्ट्वा ज्ञानबलात्ततः ।
उग्रसेनस्य पत्नीति ज्ञात्वा हर्षमवाप सः । उग्रसेनस्य वै रूपं कृत्वा सम्परिवर्त्य च ।
उपासर्पत्प्रहृष्टाङ्गः प्रसभं दानवेश्वरः । स्मयमानस्य तन्वङ्ग्याः पार्श्वममितवीर्य्यवान् । ॥४८१५॥
उग्रसेनस्य रूपेण मातरं ते व्यधर्षयत् । सा पतिस्निग्धहृदया भावेनोपससर्प तं ।
शङ्किता चाभवत् पश्चात्तस्य गौरवदर्शनात् । सा तमाहोत्थिता भीता न त्वं मम पतिर्ध्रुवं ।
कस्य त्वं विकृताचारो येनास्मि मलिनीकृता । एकपत्नीव्रतमिदं मम सन्दूषितं त्वया ।
पत्युर्मे रूपमास्थाय नीच नीचेन कर्म्मणा । किं मां वक्ष्यन्ति रुषिता बान्धवाः कुलपांसनीं ।
जुगुप्सिता च वत्स्यामि पतिपक्षैर्निराकृता । धिक् त्वामीदृशकामं दुष्कुलं धृत्यनिन्द्रियं । ॥४८२०॥
अविश्वास्यमनार्य्यञ्च परदाराभिमर्षणं । स तामाह प्रभाषन्तीं स्मितः क्रोधेन दानवः ।
अहं वै द्रुमिलो नाम सौभस्य पतिरूर्ज्जितः । किं मां क्षिपसि रोषेण मूढे पण्डितमानिनि ।
मानुषं पतिमाश्रित्य नीचं मृत्युवशे स्थितं । व्यभिचाराच्च दुष्यन्ति स्त्रियः स्त्रीभावगर्व्विते ।
न ह्यासां नियता बुद्धिर्मानुषीणां विशेषतः । श्रूयन्ते हि स्त्रियो बह्व्यो व्यभिचारव्यतिक्रमैः ।
प्रसूता देवसदृशान् पुत्रानमितविक्रमान् । सतीव हि त्वं स्त्रीलोके पतिधर्म्मरता सती । ॥४८२५॥
रुद्ध्वा केशान् विधुन्वन्ती भाषसे यद्यदिच्छसि । कस्य त्वमिति यच्चाहं त्वयोक्तो मत्तकाशिनि ।
कंसस्तस्माद्रिपुध्वंसी तव पुत्रो भविष्यति । सा सरोषा पुनर्भूत्वा निन्दन्ती तस्य तं वरं ।
उवाच व्यथिता देवी दानवं दुष्टवादिनं । धिक् ते वृत्तं सुदुर्वृत्त यः सर्व्वा निन्दसि स्त्रियः ।
सन्ति स्त्रियो नीचवृत्ताः सन्ति चैव पतिव्रताः । यास्वेकपत्न्यः श्रूयन्ते ऽरुन्धतीप्रमुखाः स्त्रियः ।
याभिर्धृताः प्रजाः सर्व्वा लोकाश्चैव कुलाधम । यस्त्वया मम पुत्रो वै दत्तो वृत्तविनाशनः । ॥४८३०॥
न मे बहुमतस्त्वेष शृणु चापि यदुच्यते । उत्पत्स्यति पुमान् सौम्य पतिवंशे ममाव्ययः ।
भविष्यति स ते मृत्युर्यस्य दत्तस्त्वया सुतः । द्रुमिलस्त्वेवमुक्तस्तु जगामाकाशमेव तु ।
तेनैव रथमुख्येन दिव्येनाकाशगामिना । जगाम च पुरीं दीना माता तदपरेव ते ।
स एवमुक्त्वा भगवान्नारदो मुनिसत्तमः । दीप्यमानस्तपोवीर्य्यात् साक्षादग्निरिव ज्वलन् ।
वल्लकीवाद्यमातन्वन् सप्तस्वरविमूर्च्छनात् । गायन्नै स्वस्थवीथीञ्च जगाम ब्रह्मणोऽन्तिकं । ॥४८३५॥
शृणुष्वेदं महामात्र निबोध वचनं मम । तथाख्यातं नारदेन त्रैकाल्यज्ञेन धीमता ।
अहं बलेन वीर्य्येण मदेन च नयेन च । प्रभावेणैव वीर्य्येण तेजसा विक्रमेण च ।
सत्येन चैव दानेन नान्योऽस्ति सदृशः पुमान् । विदित्वा सर्व्वमात्मानं वचनं श्रद्दधाम्यहं ।
क्षेत्रजोऽहं सुतस्त्वेवमुग्रसेनस्य दुष्टिप । मातापितृभ्यां सन्त्यक्तः स्थितोऽहं स्वेन तेजसा ।
उभाभ्याञ्चैव विद्विष्टो बान्धवैश्च विशेषतः । एतानपि वधिष्यामि हत्वा वनचरावुभौ । ॥४८४०॥
तद्गच्छ गजमारुह्य साङ्कुशप्रासतोमरः । स्थिरो भव महामात्र समाजद्वारि मा चिरं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कंसवाक्ये पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

॥ वैशम्पायन उवाच ॥ तस्मिन्नपि दिवसे द्वितीये समुपस्थिते । आपूर्यत महारङ्गः पौरैर्युद्धदिदृक्षुभिः ।
स चित्राष्टाश्रिचरणः सार्गलद्वारवेदिकः । गवाक्षावृतचक्रश्च तल्पोत्तमसुभूषितः ।
प्राङ्मुखैश्चाव निर्युक्तैर्माल्यदामावलम्बितैः । मञ्चकूटैर्विराजद्भिः शारदैरिव तोयदैः ।
मञ्चागारैः सुनिर्युक्तैर्युद्धाय सुविभूषितैः । समाजवाटः शुशुभे सर्ववीथ इवार्णवः ।　　४१७५
सकर्णग्रहयुक्ताभिः पताकाभिर्निरन्तरम् । श्रेणीनाञ्च गणानाञ्च मञ्चा मान्यचयोपमाः ।
अन्तःपुरगतानाञ्च प्रेक्षागाराण्यनेकशः । रेजुः काञ्चनचित्राणि रत्नज्वालाकुलानि च ।
तानि रत्नौघकॢप्तानि सवातायनवन्ति च । रेजुश्चामरनिक्षेपैः सपक्षा इव खे नगाः ।
तत्र चामरजालैश्च भूषणानाञ्च शिञ्जितैः । मणीनाञ्च वराङ्गानां विविधाश्चैव रश्मिभिः ।
गणिकानां पृथङ्मञ्चाः शुभैरास्तरणाम्बरैः । शोभिता वारमुख्याभिर्विमानप्रतिमोज्ज्वलाः ।　　४१८०
तत्रासनानि मुख्यानि पर्यङ्काश्च हिरण्मयाः । प्रकीर्णाश्च कुथाश्चित्राः सपुष्पस्तबकेष्टिताः ।
सौवर्णाः पानकुम्भाश्च पानभूम्यश्च शोभिताः । फलावदंशपूर्णाश्च चाङ्गेर्यः पानयोजिताः ।
अन्ये च मञ्चा बहवः काष्ठसञ्चयबन्धनाः । रेजुः प्रस्तरणास्तत्र शतशोऽथ सहस्रशः ।
उत्तमागारिकाश्चान्ये सूक्ष्मजालावलोकिनः । स्त्रीणां प्रेक्षागृहा भान्ति राजहंसा इवाम्बरे ।
प्राङ्मुखश्चात्र मञ्चोऽभून्मेरुशृङ्गसमप्रभः । वज्ररत्ननिभस्तम्भश्चारुनिर्व्यूहशोभितः ।　　४१८५
प्रेक्षागारः स कंसस्य प्रचकाशेऽधिकं श्रिया । शोभितो माल्यदामैश्च निर्व्याजकृतलक्षणः ।
तस्मिन्नानाजनाकीर्णे जनौघप्रतिनादिते । समाजवाटे संक्षुब्धे कम्पमानार्णवप्रभे ।
राज्ञा कुवलयापीडः समाजद्वारि कुञ्जरः । तिष्ठतीति समाज्ञाय प्रेक्षागारमुपाययौ ।
स शुक्ले वाससी बिभ्रच्छ्वेतच्छत्रसचामरः । शुशुभे श्वेतमुकुटः श्वेताभ्र इव चन्द्रमाः ।
तस्य सिंहासनस्थस्य सुखासीनस्य धीमतः । रूपमप्रतिमं दृष्ट्वा पौराः प्रोचुर्जयाशिषः ।　　४१९०
ततः प्रविविशुर्मल्ला रङ्गमावल्गिताम्बराः । तिस्रश्च भागशः कक्षाः प्रविश्य बलशालिनः ।
ततस्तूर्यनिनादेन क्ष्वेडितास्फोटितेन च । वसुदेवसुतौ हृष्टौ रङ्गद्वारमुपस्थितौ ।
तावापतन्तौ त्वरितौ प्रतिषिद्धौ वरात्मजौ । तेन मत्तेन नागेन चोद्यमानेन वै भृशम् ।
स मत्तहस्ती दुष्टात्मा कृत्वा कुण्डलिनं करम् । चकार चोदितो यत्नं निहन्तुं वसुदेवजौ ।
ततः प्रहसितः कृष्णस्त्वार्यमाणो गजेन वै । कंसस्य तस्य रङ्गे च अमर्षे सुदुरात्मनः ।　　४१९५
त्वरते खलु कंसोऽयं गन्तुं वैवस्वतक्षयम् । यो मामनेन नागेन प्रधर्षयितुमिच्छति ।
सन्निकृष्टे ततो नागे गर्जमाने यथा घने । वल्गित्वोत्पत्य गोविन्दश्चक्रे तालस्वनं प्रभुः ।
क्ष्वेडितास्फोटितरवं कृत्वा नागस्य सोऽग्रतः । करं सशीकरं तस्य प्रतिजग्राह वक्षसा ।
विषाणान्तरगो भूत्वा पुनश्चरणमध्यगः । बबाधे तं गजं कृष्णः पवनस्तोयदं यथा ।
स हस्तादभिनिष्क्रान्तो विषाणाग्राच्च हस्तिनः । विमुक्तः पादमध्याच्च कृष्णो द्विपमबोधयत् ।　　४२००
मोहितः कायसंमूढो हन्तुं कृष्णमशक्नुवन् । गजः स्वेनैव गात्रेषु मार्गमाणो ररास ह ।

पपात भूमौ जानुभ्यां दशनाभ्यां तुतोद च । मदं सुस्राव रोषाच्च घर्मापाये यथा घनः ।
कृष्णस्तु तेन नागेन क्रीडित्वा शिशुलीलया । निधनाय मतिञ्चक्रे कंसदिष्टेन चेतसा ।
स तस्य प्रमुखे पादं कृत्वा कुम्भान्तरान्तरं । दोर्भ्यां विषाणमुत्पाट्य तेनैव माहरत्तदा ।
स तेन वज्रकल्पेन स्वेन दन्तेन कुञ्जरः । हन्यमानः शकृन्मूत्रं मुमोचार्त्तो रराव च । ४६७५
कृष्णाजर्ज्जरिताङ्गस्य कुञ्जरस्यार्त्तचेतसः । कटाभ्यामति सुस्राव वेगवद्भूरि शोणितं ।
लाङ्गूलञ्चास्य वेगेन निष्कर्ष हलायुधः । शैलशृङ्गावसंलीनं वैनतेय इवोरगं ।
तेनैव गजदन्तेन कृष्णो हत्वा तु कुञ्जरं । जघानैकप्रहारेण गजारोहणमुल्बणं ।
सोऽर्त्तनादं महत् कृत्वा विदन्तो दन्तिनाम्बरः । पपात सहमहामात्रो वज्रभिन्न इवाचलः ।
ततस्तौ तु गजाङ्गानि प्रगृह्य रणकर्कशौ । गजस्य पादरक्षांश्च जघ्नतुः पुरुषर्षभौ । ४६८०
तांश्च हत्वा विविशतुर्मध्यं रङ्गस्य तावुभौ । नासत्याविव तौ स्वर्गादवतीर्णौ विविक्षया ।
वृष्ण्यन्धकाश्च भोजाश्च ददृशुर्व्वनमालिनौ । क्ष्वेडितास्फुटनादेन बाह्वारास्फोटितेन च ।
सिंहनादैश्च तालैश्च हर्षयामासतुर्ज्जनं । तौ दृष्ट्वा भोजराजस्तु विषसाद कुधामतिः ।
पौराणामनुरागश्च हर्षश्चासज्ज भारत । तं हत्वा पुष्करोक्षौ तौ महत्तमं दन्तिनाम्बरं ।
अवतीर्णोऽर्णवाकारं समाजं सह पूर्व्वजः । ४६८५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कुवलयापीडवधे षडशीतोऽध्यायः ॥ ८६ ॥
॥ वैशम्पायन उवाच ॥ प्रविशन्तन्तु वेगेन मारुतावसिताम्बरं । पूर्व्वजं पुरतः कृत्वा कृष्णं कमललोचनं ।
गजदन्तकृतोत्सिक्तं सुभुजं देवकीसुतं । लीलाकृताङ्कुरं वारं मदेन रुधिरेण च ।
वल्गमानं यथा सिंहं व्यूहमानं यथा घनं । बाहुशब्दप्रहारेण चालयन्तं वसुन्धरां ।
औग्रसेनिः समालोक्य दन्तिदन्तोद्यतायुधं । कृष्णं प्रशायसमुखः सरोषं समुदैक्षत ।
भुजासक्तेन शुशुभे गजदन्तेन केशवः । चन्द्रार्द्धविम्बसंसक्तो यथैकशिखरो गिरिः । ४६९०
वल्गमाने तु गोविन्दे स कृत्स्नो रङ्गसागरः । अनौघप्रतिनादेन पूर्य्यमाण इवाबभौ ।
ततः क्रोधाग्निताम्राक्षः कंसः परमकोपनः । चाणूरमादिशद्युद्धे कृष्णस्य सुमहाबलं ।
अन्ध्रमल्लञ्च निर्ज्जितं मुष्टिकञ्च महाबलं । बलदेवाय सक्रोधो हिमाद्रिचयोपमं ।
कंसेनापि समाज्ञप्तश्चाणूरः पूर्व्वमेव तु । योद्धव्यं सह कृष्णेन त्वया यत्नवतेति वै ।
स रोषेण तु चाणूरः कषायीकृतलोचनः । अभ्यवर्त्तत युद्धार्थमपां पूर्णो यथा घनः । ४६९५
अवघुष्टे समाजे तु निःशब्दस्तिमिते जने । यादवास्तत्र सहिता इदं वचनमब्रुवन् ।
बाहुयुद्धमिदं रङ्गे सप्राश्निकमकातरं । क्रियाबलसमाज्ञातमशक्तं निर्म्मितं पुरा ।
अहिंस्यापि श्रमो नित्यं विनेयः कारुदर्शिभिः । करीषेण च मल्लस्य सततं सत्क्रिया स्मृता ।
स्थितो भूमिगतश्चैव यो यथामार्गतः स्थितः । नियुद्धतश्च पर्य्यायः प्राश्निकैः समुदाहृतः ।
बालो वा यदि वा मध्यः कृशो वा स्थविरोऽपि वा । बलस्थो वा स्थितो रङ्गे ज्ञेयः कक्षान्तरेण वै । ४७००

बलतश्च क्रियातश्च बाहुयुद्धविधिर्युधि । निपातानन्तरं किञ्चिन्न कर्त्तव्यं कदाचन ।
तदिदं प्रस्तुतं रङ्गे युद्धं कृष्णान्ध्रमल्लयोः । बालः कृष्णो महानन्ध्रः कथं न स्याद्विचारणा ।
ततः किलकिलाशब्दः समाजे समवर्त्तत । श्रावयन् च गोविन्दो वाक्यमेतदुवाच ह ।
अहं बालो महानन्ध्रो वपुषा पर्व्वतोपमः । युद्धं समानेन सह रोचते बाहुशालिना ।
युद्धव्यतिक्रमः कश्चिन्न भविष्यति मत्कृतः । न ह्यहं बाहुयोधानां दूषयिष्यामि यत्कृतं ।
योऽयं करीषधर्म्मश्च तोयधर्म्मश्च रङ्गजः । कषायस्य च संसर्गः समयो ह्येष कल्पितः ।
संयमः स्थिरता शौर्य्यं व्यायामः सत्क्रिया बलं । रङ्गे च नियता ह्येते युद्धविदां मतं ।
यद्ययं बाहुयुद्धं वै सवैरं कर्त्तुमुद्यतः । अत्र वै निग्रहः कार्य्यस्तोषयिष्याम्यहं जगत् ।
करूषेषु प्रसूतोऽयं चाणूरो नाम नामतः । बाहुयोधी शरीरेण कर्म्मभिश्चैव विश्रुतः ।
एतेन बहवो मल्ला निपातानन्तरं हताः । रङ्गप्रतापकामेन मल्लमार्गश्च दूषितः ।
शस्त्रसिद्धिश्च योधानां संग्रामे शस्त्रयोधिनां । रङ्गे सिद्धिस्तु मल्लानां प्रतिमल्लनिपातजा ।
रणे विजयमानस्य कीर्त्तिर्भवति शाश्वती । हतस्यापि रणे शस्त्रैर्नाकपृष्ठं विधीयते ।
रणे ह्युभयतः सिद्धिर्हतस्येह हतोऽपि वा । सा हि प्राणान्तिकी यात्रा महद्भिः साधुपूजिता ।
अयन्तु मार्गो बलतः क्रियातश्च विनिःसृतः । मृतस्य रङ्गे कः स्वर्गो जयतो वा कुतो रतिः ।
ये तु केचित् स्वदेशेषु राज्ञः पण्डितमानिनः । प्रतापार्थे हता मल्ला मल्लहन्तुर्वधो हि सः ।
एवं सञ्जल्पतस्तस्य ताभ्यां युद्धं सुदारुणं । उभाभ्यामभवद्घोरं वारणाभ्यां यथा वने ।
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सकङ्कटैः । सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा ।
तावुभावपि संश्लिष्टौ यथा शैलमयौ तथा । क्षेपणैर्मुष्टिभिश्चैव वराहोद्धृतनिःस्वनैः ।
कीलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च । शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ।
जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टितैः । तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा ।
बाहुप्राणेन शूराणां समाजोत्सवसन्निधौ । अरज्यन्त जनाः सर्व्वे सोत्कृष्टनिनदोत्थिताः ।
साधुवादांश्च मल्लेषु घोषयन्त्यपरे जनाः । ततः प्रस्विन्नवदनः कृष्णप्रणिहितेक्षणः ।
न्यवारयत तूर्य्याणि कंसः सव्येन पाणिना । प्रतिषिद्धेषु तूर्य्येषु मृदङ्गादिषु तेषु वै ।
खे सङ्गतान्यवाद्यन्त दिव्यतूर्य्याण्यनेकशः । युध्यमाने हृषीकेशे पुण्डरीकनिभेक्षणे ।
स्वयमेव प्रवाद्यन्त तूर्य्यघोषास्तु सर्व्वशः । अन्तर्द्धानगता देवा विमानैः कामरूपिणः ।
खेचरैर्विद्याधरैः सार्द्धं कृष्णस्य जयकाङ्क्षिणः । जयस्व कृष्ण चाणूरं दानवं मल्लरूपिणं ।
इति सप्तर्षयः सर्व्वे ऊचुश्चैव नभोगताः । चाणूरेण चिरं कालं क्रीडित्वा देवकीसुतः ।
बलमाधारयामास कंसस्याभावदर्शिवान् । ततश्चचाल वसुधा मल्लाश्चैव जघूर्णिरे ।
मुकुटाच्चापि कंसस्य पपात मणिरुत्तमः । दोर्भ्यामानम्य कृष्णस्तु चाणूरं तूर्णमोजितं ।
प्राहरन्मुष्टिना मूर्ध्नि वक्षस्याहत्य जानुना । निःसृते चाक्षुरुधिरे तस्य नेत्रे ववल्गने ।

तापनीये यथा षण्डे कवोदरे इव भिद्यते । पपात स तु रङ्गस्य मध्ये निःसृतलोचनः ।
चाणूरो विगतप्राणो जीवितान्ते महीतले । देहेन तस्य महता चाणूरस्य महाद्युतः ।
सन्निरुद्धो महारङ्गः स शैलेनेव लक्ष्यते । रौहिणेयो हते तस्मिंश्चाणूरे बलदर्पिते ।
जग्राह मुष्टिकं रङ्गे कृष्णस्तोशलकं पुनः । सन्निपाते तु तौ मल्लौ प्रथमे क्रोधमूर्च्छितौ ।
समेयातां रामकृष्णौ कालस्य वशवर्तिनौ । निर्घातावमतौ भूमौ रङ्गमध्ये ववल्गतुः ।
कृष्णस्तोशलमुद्यम्य गिरिकूटोपमं बली । भ्रामयित्वा शतगुणं निष्पिपेष महीतले ।
तस्य कृष्णाभिपन्नस्य पीडितस्य बलीयसः । मुखाद्रुधिरमत्यर्थमुज्जगाम मुमूर्षतः ।
सङ्कर्षणस्तु सुचिरं योधयित्वा महाबलः । अन्तरं महामल्लो मल्लकानि व्यदर्शयत् ।
मुष्टिनैकेन तेजस्वी साशनिस्तनयित्नुना । शिरस्यभ्यहनद्वीरो वज्रेणेव महागिरिं ।
स निष्पतितमस्तिष्को विस्रस्तनयनाननः । पपात निहतस्तेन ततो नादो महानभूत् ।
अन्ते तोशलकौ हत्वा कृष्णसङ्कर्षणावुभौ । क्रोधसंरक्तनयनौ रङ्गमध्ये ववल्गतुः ।
समाजवाटो निर्मल्लः सोऽभवद्भीमदर्शनः । मल्ले तदा महामल्ले मुष्टिके च निपातिते ।
ये च सम्प्रेक्षका गोपा नन्दगोपपुरोगमाः । भयतोभितसर्वाङ्गाः सर्वे तत्राकलित्रिरे ।
हर्षजं वारि नेत्राभ्यां वर्षमाणा प्रवेपती । प्रस्नवोत्पीडिता कृष्णं देवकी समुदैक्षत ।
कृष्णदर्शनमुक्तेन बाष्पेणाकुलितेक्षणः । वसुदेवो जरां त्यक्त्वा क्षणेन तरुणायते ।
वारमुख्याश्च ताः सर्वाः कृष्णस्य मुखपङ्कजं । पपुर्हि नेत्रभ्रमरैर्निमेषान्तरगामिभिः ।
कंसस्याथ मुखस्वेदो भ्रुभेदान्तरगोचरः । अवभद्रोषनिर्योगः कृष्णसन्दर्शनेरितः ।
केशायासधूमेन रोषनिश्वासवाहिना । दीप्तमन्तर्गतं तस्य हृदयं मानसाग्निना ।
तस्य प्रस्फुरितोष्ठस्य स्विन्नालिकतलस्य वै । कंसवक्त्रस्य रोषेण रक्तसूर्यायते वपुः ।
क्रोधरक्तमुखात्तस्य प्रसृताः स्वेदबिन्दवः । यथा रविकरस्पृष्टा तुषारद्रवबिन्दवः ।
सोऽज्ञापयत संक्रुद्धः पुरुषान् व्यायतान् बहून् । गोपावेतौ समाजौघान्निष्क्राम्येतां वनेचरौ ।
नैवैतौ द्रष्टुमिच्छामि विकृतौ पापदर्शनौ । गोपानामपि मे राज्ये न कश्चित् स्थातुमर्हति ।
नन्दगोपश्च दुर्मेधाः पापेष्वभिरतो मम । आयसैर्निगडाकारैर्लोहपाशैर्नियम्यतां ।
वसुदेवश्च दुर्वृत्तो नित्यमस्मच्चरो मम । अवृद्धार्हेण दण्डेन क्षिप्रमद्यैव शास्यतां ।
ये चेमे प्राकृता गोपा दामोदरपरायणाः । ह्रियन्तां गाव एतेषां यच्चास्ति वसु किञ्चन ।
एवमाज्ञापयानं तं कंसं परुषभाषिणं । ददर्शायतनयनः कृष्णः सत्यपराक्रमः ।
क्षिप्ते पितरि सुक्रोध नन्दगोपे च केशवः । ज्ञातीनाञ्च व्यथां दृष्ट्वा विसंज्ञाञ्चैव देवकीं ।
स सिंह इव वेगेन केशवो जातविक्रमः । आरुरुक्षुर्महाबाहुः कंसमासनमच्युतः ।
रङ्गमध्यादुत्पपात कृष्णः कंसासनान्तिके । अवस्कन्दायुधाविष्टो यथा वायुर्बलाहकः ।
ददृशुर्न हि तं सर्वे रङ्गमध्यादवप्लुतं । केवलं कंसपार्श्वस्थं ददृशुः पुरवासिनः ।

पुत्रं समभिवीक्षन्ती या वनाऽस्मीति वादिनी । कुत्रासावास्तेऽद्येति विललाप रुरोद च । ४८१०
सा तस्य वदनं दीनमुद्धृत्य पुत्रवत्सिनी । हता पुत्रेति कारुण्यं विललापार्त्तया गिरा ।
पुत्र शूरव्रते युक्त ज्ञातीनां नन्दिवर्द्धन । किमिदं त्वरितं वत्स प्रयाणं कृतवानसि ।
प्रसुप्तश्चापि विहतो किं पुत्र नियमं विना । वत्स नैवंविधा भूमौ शेरते कृतलक्षणाः ।
रावणेन पुरा गीतः श्लोकोऽयं साधुसम्मतः । सन्निविष्टेन लोकस्य राक्षसानां समागमे ।
एवमूर्जितवीर्य्यस्य ममामरविघातिनः । बान्धवेभ्यो भयं घोरं दुर्निवार्य्यं भविष्यति । ४८१५
तथैव ज्ञातिलुब्धस्य मम पुत्रस्य धीमतः । ज्ञातिभ्यो भयमुत्पन्नं शरीरान्तकरं महत् ।
सा पतिं नृपतिं द्रष्टुमुपेत्य विचेतसं । उवाच रुदती वाक्यं विवत्सा सुरभी यथा ।
एह्येहि राजन् शुद्धात्मन् पश्य पुत्रं जनेश्वर । शयानं वीरशयने वज्राहतमिवाचलं ।
अस्य कुर्व्वो महाराज निर्वाणसदृशीं क्रियां । प्रेतत्वमुपपन्नस्य गतस्य यमसादनं ।
वीरभोग्यानि राज्यानि वयञ्चापि पराजिताः । गच्छ विज्ञापयैनं कृष्णः कंससत्कारकारणात् । ४८२०
मरणान्तानि वैराणि शान्ते शान्तिर्भविष्यति । प्रेतकार्य्याणि कार्य्याणि सुतः किमपराध्यति ।
एवमुक्त्वा पतिं भोजं केशानाकृष्य दुःखिता । पुत्रस्य मुखमीक्षन्ती विललापैव सा भृशं ।
इमास्ते किं करिष्यन्ति भार्य्या राजन् सुखोचिताः । त्वां पतिं नृपतिं प्राप्य या विपन्नमनोरथाः ।
इमं ते पितरं वृद्धं कृपणं वत्सवत्सलं । कथं द्रक्ष्यामि शुष्यन्तं कासारसलिलं यथा ।
अहं ते जननी पुत्र किमर्थं नाभिभाषसे । प्रस्थितो दीर्घमध्वानं परित्यज्य प्रियं जनं । ४८२५
अहो वीरान्त्यभाग्यायाः कृतान्तेनाभिवर्त्तिना । वाञ्छितं मम मन्दाया मोघमेव नयकोविद ।
दानमानस्तहीनानि हृष्टान्येतानि ते गृहे । रुदन्ति तव भृत्यानां कुलानि कुलपुङ्गव ।
उत्तिष्ठ नृपशार्दूल दीर्घबाहो महाबल । पाहि दीनं जनं सर्व्वं पुरमन्तःपुरं तथा ।
एवं विलपतीनान्तु कंसस्त्रीणां सुविस्तरं । जगामास्तं दिनकरः सन्ध्यारागेण रञ्जितः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कंसस्त्रीविलापे अष्टाशीतोऽध्यायः ॥ ८८ ॥

। वैशम्पायन उवाच ॥ उग्रसेनस्तु कृष्णस्य समीपं दुःखितो ययौ । पुत्रशोकाभिसन्तप्तो विषपीत इव श्वसन् । ४८३०
स ददर्श स्थितं कृष्णं यादवैः परिवारितं । पश्चात्तापाद्ध्यायन्तं कंसस्य निधनाविलं ।
कंसनारीप्रलापांश्च श्रुत्वा सकरुणान् बहून् । गर्हमाणं तथात्मानं तस्मिन् यादवसंसदि ।
अहो मयाऽतिबालेन नवरोषानुवर्त्तिना । वैधव्यं स्त्रीसहस्राणां कंसस्यास्य कृते कृतं ।
कारुण्यं खलु नारीषु प्राकृतस्यापि जायते । एवमार्त्ते रुदन्तीषु मया भर्त्तरि पातिते ।
परिदेवितमात्रेण शोकः खलु विधीयते । हतान्यस्थानभिज्ञानां स्त्रीणां कारुण्यसम्भवः । ४८३५
कंसस्य निधनः श्रेयान् प्रागेवाभिमतो मम । सतामुद्वेजनीयस्य पापेष्वभिरतस्य च ।
लोके पतितवृत्तस्य परपक्षाश्रयमेधसः । अभीष्टं मरणं श्रेयो न विद्विष्टस्य जीवितं ।
कंसः पापरुचिश्चैव साधूनामप्यसम्मतः । धिक्शब्दपतितस्यैव जीविते तस्य का दया ।

स्वर्गे तपोभृतां वासः फलं पुण्यस्य कर्मणः । इत्यपि यद्वचो युक्तमसत्यवचैरेव धार्य्यते ।
यदि स्युर्निर्वृता लोकाः स्युः स्वकर्मपरायणाः । नरा धर्मप्रवृत्ताश्च न राज्ञामनयः स्पृशेत् । ४८१०
निग्रहे दुष्टवृत्तानां कृतान्तः कुरुते वधं । दृष्टधर्मेषु लोकेषु कर्तव्यं पारलौकिकं ।
अतीव देवा रक्षन्ति नरं धर्मपरायणं । कर्त्तारः सुलभा लोके दुष्कृतस्य हि कर्मणः ।
हतः सोऽयं मया कंसः साध्वितदवगम्यतां । मूलच्छेदः कृतस्तस्य विपरीतस्य कर्मणः ।
तदेष सान्त्व्यतां सर्व्वः शोकार्त्तः प्रमदाजनः । पौराश्च पुर्य्यां शेषाश्च सान्त्व्यतां सर्व्व एव हि ।
एवं ब्रुवति गोविन्दे विवेशावनताननः । उग्रसेनो यदून् दृष्ट्वा पुत्रकिल्विषदूषितः । ४८१५
स कृष्णं पुण्डरीकाक्षमुवाच यदुसंसदि । वाष्पसन्दिग्धया वाचा दीनया सज्जमानया ।
पुत्रो नियन्त्रितः क्रोधा नीतो याम्यां दिशं रिपुः । स्वधर्माधिगता कीर्त्तिर्नाम विख्यापितं भुवि ।
स्थापितं सत्त्वमाहात्म्यं प्रहिता रिपवः कृताः । स्थापितो यादवो वंशो गर्व्विताः सुहृदः कृताः ।
सामन्तेषु नरेन्द्रेषु प्रतापस्ते प्रकाशितः । मित्राणि त्वां भजिष्यन्ति संश्रयिष्यन्ति पार्थिवाः ।
प्रकृतयोऽनुयास्यन्ति सेविष्यन्ति च द्विजातयः । सन्धिविग्रहमुख्यास्त्वां प्रणमिष्यन्ति मन्त्रिणः । ४८२०
हस्त्यश्वरथसंपूर्णं पदातिगणसङ्कुलं । प्रतिगृह्णीष्व कृष्णेदं कंसस्य बलमव्ययं ।
धनं धान्यञ्च यत्किञ्चिद्रत्नान्याच्छादनानि च । प्रतीच्छन्तु नियुक्ता वै त्वदीयाः कृष्ण पूरुषाः ।
स्त्रियो हिरण्यं यानानि यच्चान्यदस्ति किञ्चन । एवं सुविहिते योगे पर्य्याप्ते कृष्ण विग्रहे ।
प्रतिष्ठितायां मेदिन्यां यदूनां मधुसूदन । त्वं गतिस्त्राणमित्येव यदूनां यदुनन्दन ।
शृणुष्व ब्रुवतो वीर कृपणामिदं वचः । अस्य त्वत्कोपदग्धस्य कंसस्याशुभकर्मणः । ४८२५
तव प्रसादाद्गोविन्द प्रेतकार्य्यं क्रियेत ह । तस्य कृत्वा नरेन्द्रस्य त्रिपक्षं और्द्ध्वदैहिकं ।
स्नुषोऽहं सभार्य्यश्च चरिष्यामि मृगैः सह । प्रेतसत्कारमात्रेण कृतं बान्धवकर्म्मणि ।
आनृण्यं लौकिकं कृष्ण गताः किल भवन्ति ह । अस्याग्निं पश्चिमं कृत्वा चितिस्थाने विधानतः ।
तोयप्रदानमात्रेण कंसस्यानृण्यमाप्नुयां । एतन्मे कृष्ण विज्ञाप्यं वरोऽत्र मयि युज्यतां ।
प्राप्नोतु सुगतिं तत्र कृपणः पश्चिमां क्रियां । एतच्छ्रुत्वा वचस्तस्य कृष्णः परमविस्मितः । ४८३०
प्रत्युवाचोग्रसेनं वै सान्त्वपूर्व्वमिदं वचः । कालयुक्तमिदं तात त्वयैतत् प्रतिभाषितं ।
सदृशं राजशार्दूल वृत्तस्य च कुलस्य च । यस्त्वमेवंविधं ब्रूषे गतेऽर्थे दुरतिक्रमे ।
प्राप्स्यते नृपसत्कारं कंसः प्रेतगतोऽपि सन् । कुर्व्वं मदृशं ते जन्म वेद्यं त्रिदिववासिषु ।
कथं न ज्ञायते तात नियतिर्दुरतिक्रमा । स्थावराणाञ्च भूतानां जङ्गमानाञ्च पार्थिव ।
पूर्व्वजन्मकृतं कर्म्म कालेन परिपच्यते । श्रुतवन्तोऽर्थवन्तश्च दातारः प्रियदर्शनाः । ४८३५
ब्रह्मण्या नयसम्पन्ना दीनानुग्रहकारिणः । लोकपालसमास्तात महेन्द्रसमविक्रमाः ।
क्षितिपालाः कृतान्तेन नीयन्ते नृपसत्तम । धार्म्मिकाः सर्व्वभावज्ञाः प्रजापालनतत्पराः ।
क्षत्रधर्म्मरता दान्ताः कालेन निधनं गताः । स्वयमेव कृतं कर्म्म शुभं वा यदि वाऽशुभं ।

प्राप्तकालस्य तत् सर्व्वं दृश्यते खलु देहिनः । एषा ह्यन्तर्हिता माया दुर्व्विज्ञेया सुरैरपि ।
यथाऽयं मुह्यते लोको यत्र कर्म्मैव कारणं । कालेनाभिहतः कंसः पूर्व्वकर्म्मप्रचोदितः । ४८८०
न ह्यहं कारणं तत्र कालः कर्म्म च कारणं । सूर्य्यसोममयं तात कृत्स्नं स्थावरजङ्गमं ।
कालेन निधनं गत्वा कालेनैव च जायते । कालस्तु सर्व्वभूतानां निग्रहप्रग्रहे रतः ।
तस्मात् सर्व्वाणि भूतानि कालस्य वशगानि वै । स्वदोषेणैव दग्धस्य सुतोऽस्तव नराधिप ।
नाहं वै कारणं तत्र कालस्तत्र तु कारणं । अथवाऽहं भविष्यामि कारणं नात्र संशयः ।
परायणपरः कालः किं करिष्यत्यकारणः । कालस्तु बलवान् राजन् दुर्व्विज्ञेया हि सा गतिः । ४८८५
परावरविशेषज्ञा यां यान्ति समदर्शिनः । गतिं कालस्य ये विद्युर्मोक्षतत्त्वस्य पारगाः ।
ब्रवीमि यदहं तात तदनुष्ठीयतां वचः । न हि राज्येन मे कार्य्यं नाप्यहं नृप काङ्क्षितः ।
न चापि राज्यलुब्धेन मया कंसो निपातितः । किन्तु लोकहितार्थाय कीर्त्यर्थञ्च सुतस्तव ।
व्यङ्गभूतः कुलस्यास्य सानुगो विनिपातितः । अहं स एव गोमध्ये गोपैः सह वनेचरः ।
प्रीतिमान् विचरिष्यामि कामचारी यथा गजः । एतावच्छतशोऽप्येवं सत्येनैतद्ब्रवीमि ते । ४८९०
न मे कार्य्यं नृपत्वेन विज्ञाप्यं क्रियतामिदं । भवानाज्ञाऽस्तु मान्यो मे यदूनामग्रणीः प्रभुः ।
विजयायाभिषिच्यस्व स्वराज्ये राजसत्तम । यदि ते मत्प्रियं कार्य्यं यदि वा नास्ति ते व्यथा ।
मया निसृष्टं राज्यं स्वं चिराय प्रतिगृह्यतां ।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु वचनं सोऽक्षरं प्रत्यभाषत । ह्रीडिताधोमुखं तन्तु राजानं यदुसंसदि ।
अभिषेकेण गोविन्दो योजयामास धर्म्मवित् । स बद्धमुकुटः श्रीमानुग्रसेनो महीपतिः । ४८९५
चकार सह कृष्णेन कंसस्य निधनक्रियां । तं सर्व्वे यादवा मुख्या राजानं कृष्णशासनात् ।
अनुजग्मुः पुरीमार्गे देवा इव शतक्रतुं । रजन्यान्तु निवृत्तायां ततः सूर्य्ये विराजति ।
पश्चिमं कंससत्कारं चक्रुस्ते यदुपुङ्गवाः । शिबिकायामथारोप्य कंसदेहं यथाक्रमं ।
नैष्ठिकेन विधानेन चक्रुस्ते तस्य सत्क्रियां । स नीतो यमुनातीरमुत्तरं नृपतेः सुतः ।
सत्कृतश्च यथान्यायं नैऋतेन चिताग्निना । तथैव भ्रातरश्चास्य सुनामानं महाभुजं । ४९००
सत्कारं लम्भयामासुः सह कृष्णेन यादवाः । ताभ्यान्ते सलिलञ्चक्रुर्वृष्ण्यन्धकपुरोगमाः ।
अक्षयश्चापि प्रेतेभ्यो भाषमाणाः पुनः पुनः । तयोस्ते सलिलं दत्त्वा यादवा दीनमानसाः ।
पुरस्कृत्योग्रसेनं वै विविशुर्म्मथुरां पुरीं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कंससत्कारे उग्रसेनाभिषेके ऊननवतोऽध्यायः । ८९ ॥

॥ वैशम्पायन उवाच ॥ स कृष्णस्तत्र बलवानौविलेखेन सत्कृतः । मथुरां यादवाकीर्णां पुरीं तां सुखमावसत् ।
प्राप्तयौवनदेहस्तु युक्तो राजश्रिया ज्वलन् । चचार मथुरां वीरः सरत्नाकरभूषणां । ४९०५
कस्यचित्त्वथ कालस्य सहितौ रामकेशवौ । गुरुं सान्दीपनिं काश्यमवन्तिपुरवासिनं ।
धनुर्वेदचिकीर्षार्थमुभौ तावभिजग्मतुः । निवेद्य गोत्रं स्वाध्यायमाचारेणाभ्यलङ्कृतौ ।

प्रसूषु निरहङ्कारावुभौ रामजनार्द्दनौ । प्रतिज्ञयाच तौ काश्यौ विद्याः प्राहाच विश्रुताः ।
तौ च श्रुतिधरौ वीरौ यथावत् प्रत्यपद्यतां । अहोरात्रैश्चतुःषष्ट्या साङ्गं वेदमधीयतां ।
चतुष्पादं धनुर्व्वेदं शस्त्रग्रामं ससंग्रहं । अचिरेणैव कालेन गुरुणाभ्यस्यमिच्छतां ।  ४८१०
अतीवामानुषीं मेधां चिन्तयित्वा तयोर्गुरुः । मेने तावागतौ वीरौ देवौ चन्द्रदिवाकरौ ।
ददर्श च महात्मानावुभौ तावपि पर्व्वसु । पूजयन्तौ महादेवं साक्षाद्विष्णुमवस्थितं ।
गुरुं सान्दीपनिं कृष्णः कृतकृत्योऽभ्यभाषत । गुर्व्वर्थं किं ददामीति रामेण सह भारत ।
तयोः प्रभावं स ज्ञात्वा गुरुः प्रोवाच हृष्टवत् । पुत्रमिच्छाम्यहं दत्तं योऽस्तो लवणाम्भसि ।
पुत्र एको हि मे जातः स चापि तिमिना हृतः । प्रभासे तीर्थयात्रायां तमेव पुनरानय ।  ४८१५
तथेत्येवाब्रवीत् कृष्णो रामस्यानुमते स्थितः । गत्वा समुद्रं तेजस्वी विवेशान्तर्जलं हरिः ।
समुद्रः प्राञ्जलिर्भूत्वा दर्शयामास तत्तदा । तमाह कृष्णः क्वासौ भो पुत्रः सान्दीपनेरिति ।
समुद्रः प्रत्युवाचेदं दैत्यः पञ्चजनो महान् । तिमिरूपेण तं बालं ग्रस्तवानिति भारत ।
स पञ्चजनमासाद्य जघान पुरुषोत्तमः । न चाससाद तं बालं गुरुपुत्रं तदाऽच्युतः ।
स तु पञ्चजनं हत्वा शङ्खं लेभे जनार्द्दनः । यः स देवमनुष्येषु पाञ्चजन्य इति श्रुतः ।  ४८२०
ततो वैवस्वतं देवं गतः स पुरुषोत्तमः । ततो यमोऽभ्युपागम्य ववन्दे च गदाधरं ।
किमागमनकृत्यन्ते किङ्करोमीति चाब्रवीत् । तमुवाचाथ गोविन्दो गुरुपुत्रः प्रदीयतां ।
श्रुत्वा न तद्वचो युद्धमकरोत् सुमहत्तदा । ततो वैवस्वतं देवं निर्ज्जित्य पुरुषोत्तमः ।
आससाद च तं बालं गुरुपुत्रं तदाऽच्युतः । आनिनाय गुरोः पुत्रं चिरनष्टं यमक्षयात् ।
ततः सान्दीपनेः पुत्रः प्रसादादमितौजसः । दीर्घकालगतः प्रेतः पुनरासीच्छरीरवान् ।  ४८२५
तदशक्यमचिन्त्यञ्च दृष्ट्वा सुमहदद्भुतं । सर्व्वेषामेव भूतानां विस्मयः समजायत ।
स गुरोः पुत्रमादाय पाञ्चजन्यञ्च माधवः । रत्नानि च महार्हाणि पुनरायाज्जगत्प्रभुः ।
शङ्खैस्तत्र रत्नानि महार्हाणि बहूनि च । आनाय्य वेदयामास गुरवे वासवानुजः ।
गदापरिघयुद्धेषु सर्व्वास्त्रेषु च तावुभौ । अचिरात् मुख्यतां प्राप्तौ सर्व्वलोके धनुष्मतां ।
ततः सान्दीपनेः पुत्रं तद्रूपवयसं तदा । प्रादात् कृष्णः प्रतीतात्मा सह रत्नैरुदारधीः ।  ४८३०
चिरनष्टेन पुत्रेण काश्यः सान्दीपनिस्तदा । समेत्य मुमुदे राजन् पूजयन्नात्मजावुभौ ।
कृतास्त्रौ तावथो वीरौ गुरुमामन्त्र्य सुव्रतौ । आयातौ मथुरां भूयो वसुदेवसुतावुभौ ।
ततः प्रत्युद्ययुः सर्व्वे यादवा यदुनन्दनौ । सबला वृष्ण्यन्धकाः उग्रसेनपुरोगमाः ।
श्रेण्यः प्रकृतयश्चैव मन्त्रिणः सपुरोहिताः । सबालवृद्धयुवतिः पुरी समभिवर्त्तत ।
नन्दितूर्य्याण्यवाद्यन्त तुष्टुवुश्च जनार्द्दनं । रथ्याः पताकामालिन्यो भ्राजन्ते स्म समन्ततः ।  ४८३५
प्रहृष्टमुदितं सर्व्वमन्तःपुरमशोभत । गोविन्दागमनेऽत्यर्थं यथैवेन्द्रमहे तथा ।
मुदिताश्चाप्यगायन्त राजमार्गेषु गायनाः । स्तवाशीःप्रथिता गाथा यादवानां प्रियङ्कराः ।

गोविन्दरामौ सम्प्राप्तौ भ्रातरौ लोकविश्रुतौ । स्वपुरे निर्भयाः सर्व्वे क्रीडध्वं सह बान्धवैः ।
न तत्र कश्चिद्दीनो वा मलिनो वा विचेतनः । मथुरायामभूद्राजन् गोविन्दे समुपस्थिते ।
वयांसि साधुवाक्यानि प्रहृष्टा गोवृषद्विपाः । नरनारीगणाः सर्व्वे भेजिरे मनसः सुखं ।  ४९४०
शिवाश्च वाताः प्रववुर्विरजस्का दिशो दश । दैवतानि च हृष्टानि सर्व्वेष्वायतनेषु च ।
यानि लिङ्गानि लोकस्य बभुः कृतयुगे पुरा । तानि सर्व्वाण्यदृश्यन्त पुरीं प्राप्ते जनार्द्दने ।
ततः काले शिवे पुण्ये स्वन्दनेनारिमर्द्दनः । हरियुक्तेन गोविन्दो विवेश मथुरां पुरीं ।
विशन्तं मथुरां रम्यां तमुपेन्द्रमरिन्दमं । अनुजग्मुर्यदुगणाः शक्रं देवगणा इव ।
वसुदेवस्य भवनं ततस्तौ यदुनन्दनौ । प्रविष्टौ हृष्टवदनौ चन्द्रादित्याविवाचलं ।  ४९४५
परेण तेजसा युक्तौ रवीन्द्राविव रूपिणौ । तावायुधानि विन्यस्य गृहे स्वे स्वैरचारिणौ ।
मुमुदाते यदुवरौ वसुदेवसुतावुभौ । उद्यानेषु विचित्रेषु फलपुष्पावनामिषु ।
चेरतुः सुमहात्मानौ यादवैः परिवारितौ । रैवतस्य समीपे तु सरित्सु विमलासु च ।
पद्मपत्रसमृद्धासु कारण्डवयुतासु च । एवं तावेकनिर्म्माणौ मथुरायां शुभाननौ ।
उग्रसेनानुगौ भूत्वा किञ्चित् कालमथोषतुः ।  ४९५०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कृष्णप्रत्यागमने नवतितमोऽध्यायः ॥ ९० ॥

॥ वैशम्पायन उवाच ॥ स कृष्णस्तत्र बलवान् रौहिणेयेन सङ्गतः । मथुरां यादवाकीर्णां पुरीं तां सुखमावसत् ।
प्राप्तयौवनदेहस्तु युक्तो राजश्रिया विभुः । चचार मथुरां वीरः सवनाकरभूषणां ।
कस्यचित्त्वथ कालस्य राजा राजगृहेश्वरः । शुश्राव निहतं कंसं दुहितृभ्यां महीपतिः ।
ततो नातिचिरात् कालाज्जरासन्धः प्रतापवान् । आजगाम षडङ्गेन बलेन महता वृतः ।
जिघांसुर्वै यदून् क्रुद्धः कंसस्यापचितिं स्मरन् । अस्तिः प्राप्तिश्च नाम्नास्तां मागधस्य सुते नृप ।  ४९५५
जरासन्धस्य कन्ये द्वे पीनश्रोणिपयोधरे । उभे कंसस्य ते भार्य्ये प्रादाद्बार्हद्रथो नृपः ।
स ताभ्यां मुमुदे राजा बद्धा पितरमाहुकं । समाश्रित्य जरासन्धमनादृत्य च यादवान् ।
शूरसेनेश्वरो राजा यथा ते बहुशः श्रुतः । ज्ञातिकार्य्यार्थविद्धर्म्मसुग्रसेनहिते रतः ।
वसुदेवोऽभवन्नित्यं कंसो न सस्पृहे च तं । रामकृष्णौ व्यपाश्रित्य हते कंसे दुरात्मनि ।
उग्रसेनोऽभवद्राजा भोजवृष्ण्यन्धकैर्वृतः । दुहितृभ्यां जरासन्धः प्रियाभ्यां बलवान्नृपः ।  ४९६०
चोदितो वीरपत्नीभ्यामुपायान्मथुरां ततः । कृत्वा सर्व्वसमुद्योगं क्रोधादग्निसमो ज्वलन् ।
प्रतापावनता ये च जरासन्धस्य पार्थिवाः । मित्राणि ज्ञातयश्चैव संयुक्ताः सुहृदस्तथा ।
तमेवानुययुः सर्व्वे सैन्यैः समुदितैर्वृताः । महेष्वासा महावीर्य्या जरासन्धप्रियैषिणः ।
कारूषो दन्तवक्रश्च चेदिराजश्च वीर्य्यवान् । कलिङ्गाधिपतिश्चैव पौण्ड्रश्च बलिनाम्बरः ।
आकृतिः कैशिकश्चैव भीष्मकश्च नराधिपः । पुत्रश्च भीष्मकस्यापि रुक्मी मुख्यः धनुर्भृतां ।  ४९६५
सहदेवार्ज्जुनाभ्यां यः स्पर्द्धते स महाहवे । वेणुदारिः श्रुतर्व्वा च क्राथश्चैवांशुमानपि ।

अङ्गराजश्च बलवान् वङ्गानामधिपस्तथा । कोशलः काशिराजश्च दशार्णाधिपतिस्तथा ।
सुह्मेश्वरश्च विक्रान्तो विदेहाधिपतिस्तथा । मद्रराजश्च बलवांस्त्रिगर्त्तानामधीश्वरः ।
शाल्वराजश्च विक्रान्तो दरदश्च महाबलः । यवनाधिपतिश्चैव भगदत्तश्च वीर्य्यवान् ।
सौवीरराजः शैव्यश्च पाण्ड्यश्च बलिनाम्वरः । गान्धारराजः सुबलो नग्नजिच्च महाबलः ।
काश्मीरराजो गोनर्द्दो दरदाधिपतिर्नृपः । दुर्य्योधनादयश्चैव धार्त्तराष्ट्रा महाबलाः ।
एते चान्ये च राजानो बलवन्तो महारथाः । तमभ्ययुर्जरासन्धं विद्विषन्तो जनार्द्दनं ।
ते शूरसेनानाविश्य प्रभूतयवसेन्धनान् । ऊषुः संरुध्य मथुरां पुरस्कृत्य बलं तदा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मथुरोपरोधे जरासन्धोद्योगे एकनवतोऽध्यायः ॥ ९१ ॥
॥ वैशम्पायन उवाच ॥ मथुरोपवने मत्वा निविष्टांस्तान्नराधिपान् । अपश्यन् वृष्णयः सर्व्वे पुरस्कृत्य जनार्द्दनं ।
ततो हृष्टमनाः कृष्णो रामं वचनमब्रवीत् । त्वरते खलु कार्य्यार्थो देवतानां न संशयः ।
यथाऽयं सन्निकृष्टो हि जरासन्धो नराधिपः । लक्ष्यन्ते हि ध्वजाग्राणि रथानां वातरंहसां ।
एतानि शशिकल्पानि नृपाणां विजिगीषतां । छत्राण्यार्य्य विराजन्ते प्रोच्छ्रितानि सितानि च ।
अहो नृपरथोदग्रा विमला छत्रपङ्क्तयः । अभिवर्त्तन्ति नः शुभ्रा यथा खे हंसपङ्क्तयः ।
काले खलु नृपः प्राप्तो जरासन्धो महीपतिः । आवयोर्युद्धनिकषः प्रथमः समरातिथिः ।
आर्य्य तिष्ठाव सहितावनुप्राप्ते महीपतौ । युद्धारम्भः प्रयोक्तव्यो बलस्तावन् विमृश्यतां ।
एवमुक्ता ततः कृष्णः सुस्थः संग्रामलालसः । जरासन्धमभिप्रेप्सुश्चकार बलदर्शनं ।
वीक्षमाणश्च तान् सर्व्वान्नृपान् यदुवरोऽव्ययः । आत्मनैवात्मना वाक्यमुवाच हृदि सम्मितिं ।
इमे ते पृथिवीपालाः पार्थिवे वर्त्मनि स्थिताः । ये विनाशं गमिष्यन्ति शास्त्रदृष्टेन कर्म्मणा ।
प्रोक्षितान् खल्विमान्मन्ये मृत्युना नृपपुङ्गवान् । स्वर्गगामीति चाप्येषां वपूंषि प्रचकाशिरे ।
स्थाने भारपरिश्रान्ता वसुधेयं दिवङ्गता । एषां नृपतिमुख्यानां बलौघैरभिपीडिता ।
भूमिर्निरन्तरा चेयं बलराष्ट्राभिसन्तता । स्वल्पेन खलु कालेन विविक्तं पृथिवीतलं ।
भविष्यति नरेन्द्रौघैः शतशो विनिपातितैः ।
॥ वैशम्पायन उवाच ॥ जरासन्धस्ततः क्रुद्धः प्रभुः सर्व्वमहीक्षितां । नराधिपसहस्रौघैरनुयातो महाद्युतिः ।
व्यायतोदग्रतुरगैः सादिभिः सुसमाहितैः । रथैः सांग्रामिकैर्युक्तैरसङ्गगतिभिः क्वचित ।
हेमकक्ष्यैर्महाघण्टैर्वारणैर्वारिदोपमैः । महामात्रोत्तमारूढैः कल्पितैरणकोविदैः ।
स्वारूढैः सादिभिर्युक्तैः प्रेङ्खमाणैः प्रवल्गितैः । वाजिभिर्व्योमगमनाभैः प्लवद्भिरिव पर्व्वतैः ।
खड्गचर्म्मधरोदग्रैः पत्तिभिर्व्वल्गिताम्बरैः । सहस्रसङ्ख्यासंयुक्तैरुत्पतद्भिरिवोरगैः ।
एवं चतुर्व्विधैः सैन्यैः कम्पमानैरिवाम्बुदैः । नृपोऽभियातो बलवान् जरासन्धो धृतव्रतः ।
स रथैर्मेघनिर्घोषैर्गजैश्च मदशालिभिः । हेषमाणैश्च तुरगैः क्ष्वेडमानैश्च पत्तिभिः ।
नादयानो दिशः सर्व्वास्तस्याः पुर्य्या वनानि च । स राजा सागराकारः ससैन्यः प्रत्यदृश्यत ।

तद्बलं पृथिवीशानां दृश्यते ध्वजमालाकुलं । वेष्टिताम्बोटिनिर्वस्त्रैर्यथैन्यमिवाबभौ ।
रथैः पवनसम्पातैर्गजैश्च जलदोपमैः । तुरगैश्च जवोपेतैः पत्तिभिः खगमोपमैः ।
विमिश्रं सर्व्वतो भाति मत्तद्विपरथाकुलं । वर्षान्ते सागरगतं यथाभ्रपटलं तथा ।
सबलास्ते महीपाला जरासन्धपुरोगमाः । परिवार्य्य पुरीं सर्व्वे निवेशायोपचक्रमुः ।
बभौ तस्य निविष्टस्य बलश्रीः शिविरस्य वै । शुक्लपर्य्यन्तपूर्णस्य यथा रूपं महोदधेः । ५०७०
वीतरागे ततः काले समुत्तस्थुर्महीक्षितः । आरोहणार्थं पर्य्यासे समीयुर्युद्धलालसाः ।
समवायीकृताः सर्व्वे यमुनामनु ते नृपाः । निविष्टा मन्त्रयामासुर्युद्धकाले कुतूहलात् ।
तेषां स तुमुलः शब्दः शुश्रुवे पृथिवीक्षितां । युगान्ते भिद्यमानानां सागराणामिव स्वनः ।
तेषां सकञ्चुकोष्णीषाः स्थविरा वेत्रपाणयः । नेत्यस्मो शब्द इत्येवं ब्रुवन्तो राजशासनात् ।
तस्य रूपं बलस्यासीन्निःशब्दस्तिमितस्य वै । मीनमीनभुजङ्गस्य निःशब्दस्य यथोदधेः । ५०७५
निःशब्दस्तिमिते तस्मिन् योगादिव महार्णवे । जरासन्धो महद्वाक्यं बृहस्पतिरिवाददे ।
शीघ्रं समभिवर्त्तन्तां बलानि पृथिवीक्षितां । सर्व्वतो नगरी चेयं जनौघैः परिवार्य्यतां ।
अश्मयन्त्राणि युज्यन्तां क्षेपणीयाश्च मुद्गराः । कार्य्या भूमिसमा सर्व्वा जनौघैश्च परिप्लुता ।
ऊर्द्ध्वञ्चापि निवाद्यन्तां प्रासा वै तोमरास्तथा । दार्य्यताञ्चैव टङ्कौघैः खनित्रैश्च पुरी द्रुतं ।
नृपाश्च युद्धमार्गज्ञा विन्यस्यन्तामदूरतः । अद्यप्रभृति सैन्यैर्मे पुरोरोधः प्रवर्त्त्यतां । ५०८०
यावदेतौ रणे गोपौ वसुदेवसुतावुभौ । सङ्कर्षणश्च कृष्णश्च घातयामि शितैः शरैः ।
आकाशमपि टङ्कौघैर्निःसम्पातं यथा भवेत् । मयाऽनुशिष्टास्तिष्ठन्तु पुरीभूमिषु भूमिपाः ।
तेषु तेष्ववकाशेषु शीघ्रमारुध्यतां पुरी । मद्रः कलिङ्गाधिपतिश्चेकितानः सबाह्लिकः ।
काश्मीरराजो गोनर्द्दः करूषाधिपतिस्तथा । द्रुमः किम्पुरुषश्चैव पर्व्वतीयो ह्यनामयः ।
नगर्य्याः पश्चिमं द्वारं शीघ्रमारोधयन्त्विति । पौरवो वेणुदारिश्च वैदर्भः सोमकस्तथा । ५०८५
रुक्मी च भोजाधिपतिः सूर्य्याक्षश्च समाल्वः । विन्दानुविन्दावावन्त्यौ दन्तवक्रश्च वीर्य्यवान् ।
छागलिः पुरमित्रश्च विराटश्च महीपतिः । कौशाम्ब्यो मालवश्चैव शतधन्वा विदूरथः ।
भूरिश्रवास्त्रिगर्त्तश्च बाणः पञ्चनदस्तथा । उत्तरं नगरद्वारमेते दुर्गसहा नृपाः ।
आरुह्य चाभिमर्द्दन्तां वज्रप्रतिमगौरवाः । उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः ।
एकलव्यो बृहत्क्षत्रः क्षत्रधर्म्मा जयद्रथः । उत्तमौजाश्च शल्यश्च कौरवाः कैकयास्तथा । ५०९०
वैदिशो वामदेवश्च साङ्कृतश्च शिनीपतिः । पूर्व्वं नगरनिर्व्यूहमेतेष्वायत्तमस्तु नः ।
दारयन्तोऽभिधावन्तु वाता इव बलाहकान् । अहञ्च दरदश्चैव चेदिराजश्च वीर्य्यवान् ।
दक्षिणं नगरद्वारं पालयामः सुदंशिताः । एवमेषा पुरी क्षिप्रं समन्तादेष्टिता बलैः ।
वज्रावपातविषमं प्राप्नोतु तुमुलं भयं । गदिनो ये गदाभिस्ते परिघैः परिघायुधाः ।
अपरे विविधैः शस्त्रैर्द्दारयन्तु पुरीमिमां । अद्यैव नगरी ह्येषा विषमोच्चयसङ्कटा । ५०९५

कार्य्या भूमिसमा सर्व्वा भवद्भिर्वसुधाधिपैः । चतुरङ्गं बलं व्यूह्य जरासन्धो व्यवस्थितः ।
अथाभ्ययाद्यदून् क्रुद्धः सह सर्व्वैर्नराधिपैः । प्रतिजग्मुर्द्दशार्हास्तं व्यूढानीकाः प्रहारिणः ।
तद्युद्धमभवद्घोरं तेषां देवासुरोपमं । नृपाणां बहुभिः सार्द्धं व्यतिषक्तरथद्विपं ।
नगराभिःसृतौ दृष्ट्वा वसुदेवसुतावुभौ । क्षुभितं नरराजानीकं त्रस्तसंमूढवाहनं ।
रथस्थौ दंशितौ चैव चेरतुस्तत्र यादवौ । मकराविव संरब्धौ समुद्रक्षोभणावुभौ । ५०१०
तयोः प्रयुध्यतोः संख्ये मतिरासीद्महात्मनोः । आयुधानां पुराणानामादानकृतलक्षणा ।
ततः खान्निष्पतन्ति स्म दिव्यान्याहवसंप्लवे । लेलिहानानि दीप्तानि महान्ति सुदृढानि च ।
क्रव्यादैरनुयातानि मूर्त्तिमन्ति वृहन्ति च । तृषितान्याहवे भोक्तुं नृपमांसानि वै भृशं ।
दिव्यस्रग्दामधारीणि वासयन्ति च खेचरान् । प्रभया भासमानानि पतमानानि चाम्बरात् ।
हलं संवर्त्तकं नाम सौनन्दं मुषलं तथा । धनुषां प्रवरं शार्ङ्गं गदा कौमोदकी तथा । ५०१५
चत्वार्य्येतानि तेजांसि विष्णुप्रहरणानि च । ताभ्यां समवकीर्णानि यादवाभ्यां महामृधे ।
जग्राह प्रथमं रामो ललामप्रतिमं हलं । सर्पन्तमिव सर्पेन्द्रं दिव्यमालाकुलं मृधे ।
सौनन्दञ्च ततः श्रीमान्निरानन्दकरं द्विषां । सव्येन सात्वतां श्रेष्ठो जग्राह मुषलोत्तमं ।
दर्शनीयञ्च लोकेषु धनुर्जलदनिस्वनं । नाम्ना शार्ङ्गमिति ख्यातं कृष्णो जग्राह वीर्य्यवान् ।
देवैर्निगदितार्थस्य गदा तस्यापरे करे । निविष्टा कुमुदाक्षस्य नाम्ना कौमोदकीति सा । ५०२०
तौ सप्रहरणौ वीरौ साक्षाद्विष्णोस्तनूपमौ । समरे रामगोविन्दौ रिपूंस्तान् प्रत्ययुध्यतां ।
सायुधप्रग्रहौ वीरौ तावन्योन्यसयावुभौ । पूर्व्वजानुजसंज्ञौ तौ रामगोविन्दलक्षणौ ।
द्विषत्सु प्रतिकुर्व्वाणौ पराक्रान्तौ तयेश्वरौ । विचेरतुर्यथा देवौ वसुदेवसुतावुभौ ।
हलमुद्यम्य रामस्तु सर्पेन्द्रमिव कोपितं । चचार समरे वीरो द्विषतामन्तको यथा ।
विकर्षन् रथवृन्दानि क्षत्रियाणां महात्मनां । चकार रोषं सफलं नागेषु च हयेषु च । ५०२५
कुञ्जरान् लाङ्गलाक्षिप्तान् मुषलाक्षेपताडितान् । रामो विराजन् समरे विममन्थ यथाऽचलान् ।
ते वध्यमाना रामेण रणे क्षत्रियपुङ्गवाः । जरासन्धान्तिकं भीताः समरात् प्रतिजग्मिरे ।
तानुवाच जरासन्धः क्षत्रधर्म्मे व्यवस्थितः । धिगेतां क्षत्रवृत्तिं वः समरे कातरात्मनां ।
पराङ्मुखस्य समरे विरथस्य पलायतः । भ्रूणहत्यामिवासह्यां प्रवदन्ति मनीषिणः ।
भीताः कस्मान्निवर्त्तध्वं धिगेतां क्षत्रवृत्तितां । क्षिप्रं सर्व्वे निवर्त्तध्वं मम वाक्येन चोदिताः । ५०३०
अथवा तिष्ठत रथैः प्रेक्षकाः समवस्थिताः । यावदेतौ रणे गोपौ प्रेषयामि यमक्षयं ।
ततस्ते क्षत्रियाः सर्व्वे जरासन्धेन चोदिताः । सृजन्तः शरजालानि हृष्टा योद्धुं व्यवस्थिताः ।
ते हयैः काञ्चनापीडैर्रथैश्चाम्बुदनादिभिः । नागैश्चाश्वोदसङ्काशैर्मदामात्रप्रचोदितैः ।
सतनुत्राः सनिस्त्रिंशाः सपताकायुधध्वजाः । स्वारोपितधनुष्मन्तः सतूणीराः सतोमराः ।
सचक्रचारसेधिनः सर्व्वे चारुचामरवीजिताः । रणे तेऽधिगता रेजुः सन्ध्यभ्रा मरीचिनः । ५०३५

ते युद्धरागाद्रथिनो व्यगाहन्त युधाम्बराः । गदाभिश्चैव गुर्व्वीभिः क्षेपणीयैश्च मुद्गरैः ।
एतस्मिन्नन्तरे तत्र देवानां नन्दिवर्द्धनः । सुपर्णध्वजमास्थाय कृष्णस्तु रथमुत्तमं ।
तदाऽभ्ययाज्जरासन्धं शरैर्विव्याध चाष्टभिः । सारथिञ्चास्य विव्याध पञ्चभिर्निशितैः शरैः ।
जघान तुरगांश्चाजौ यतमानस्य वीर्य्यवान् । तं कृष्णमतमास्थाय चित्रसेनो महारथः ।
सेनानीः कैशिकश्चैव रुक्मं विविधतुः शरैः । त्रिभिर्विव्याध संक्रुद्धं बलदेवञ्च कैशिकः ।    ५०१०
बलदेवो धनुस्तस्य भल्लेनाजौ द्विधाऽकरोत् । अथैनाभ्यर्द्दयच्चापि नाराचैः शरवृष्टिभिः ।
षड्भिर्म्महाबाहुर्वीरः समन्तात् स्वर्णभूषणैः । तं चित्रसेनः संरब्धो विव्याध नवभिः शरैः ।
कैशिकः पञ्चभिश्चापि जरासन्धश्च सप्तभिः । त्रिभिस्त्रिभिश्च नाराचैस्तान् बिभेद जनार्द्दनः ।
पञ्चभिः पञ्चभिश्चैव बलदेवः शितैः शरैः । रथेषाञ्चैव चिच्छेद चित्रसेनस्य वीर्य्यवान् ।
बलदेवो धनुश्चाजौ भल्लेनास्य द्विधाऽकरोत् । स छिन्नधन्वा विरथो गदामादाय वीर्य्यवान् ।    ५०१५
अभ्यद्रवत् सुसंरब्धो जिघांसुर्मुषलायुधं । विद्धवन्तस्तु नाराचैश्चित्रसेनवधैषिणः ।
धनुश्चिच्छेद रामस्य जरासन्धो महाबलः । गदया चाजघानाश्वान् क्रोधात् स मगधेश्वरः ।
रामश्चाभ्यद्रवद्वीरो जरासन्धो महाबलः । आदाय मुषलं रामो जरासन्धमुपाद्रवत् ।
तयोस्तद्युद्धमभवत् परस्परवधैषिणोः । चित्रसेनस्तु संक्रुद्धं दृष्ट्वा रामेण मागधं ।
रथमन्यं समारुह्य जरासन्धमवारयत् । ततो बलेन महता गजानीकेन चाप्यथ ।    ५०२०
उभयोरन्तरे ताभ्यां सङ्कुलं समपद्यत । ततः सैन्येन महता जरासन्धोऽभिसंवृतः ।
रामकृष्णावुभौ भोजानामसाद महाबलः । ततः प्रक्षुभितस्येव सागरस्य महास्वनः ।
प्रादुर्ब्बभूव तुमुलः सेनयोरुभयोरपि । वेणुभेरीमृदङ्गानां शङ्खानाञ्च सहस्रशः ।
उभयोः सेनयो राजन् प्रादुरासीन्महास्वनः । क्ष्वेडितास्फोटितोत्कृष्टैस्तुमुलः सर्व्वतोऽभवत् ।
उत्पपात रजश्चापि खुरनेमिसमुद्धतं । सम्पतन्महाशस्त्राः प्रस्फीतशरासनाः ।    ५०२५
अन्योन्यमभिगर्ज्जन्तः शूरास्तत्रावतस्थिरे । रथिनः सादिनश्चैव पत्तयश्च सहस्रशः ।
गजाश्चाचलसङ्काशाः सन्निपेतुः समन्ततः । स सम्प्रहारस्तुमुलस्त्यक्त्वा प्राणानवर्त्तत ।
वृष्णिभिः सह योधानां जरासन्धस्य दारुणः । ततः शिनिरनाधृष्टिर्ब्बभ्रुर्व्विपृथुराहुकः ।
बलदेवं पुरस्कृत्य सैन्यस्यार्द्धेन दंशिताः । दक्षिणं पक्षमाभेदुः शत्रुसैन्यस्य भारत ।
पालितं चेदिराजेन जरासन्धेन च प्रभो । उदीच्येश्च महावीर्य्यैः शल्यशाल्वादिभिर्न्नृपैः ।    ५०३०
सृजन्तः शरवर्षाणि समभित्यक्तजीविताः । अगावहः पृथुः कङ्कः शतधन्वा विदूरथः ।
हृषीकेशं पुरस्कृत्य सैन्यस्यार्द्धेन दंशिताः । भीष्मकेणाभिगुप्तस्य रुक्मिणा च महात्मना ।
दन्तवक्त्रेणापि राजेन्द्र तथा मद्रेश्वरेण च । प्राच्यैश्च दाक्षिणात्यैश्च गुप्तं वीर्य्यबलान्वितैः ।
तेषाञ्च युद्धमभवत् समभित्यक्तजीवितं । शरवृष्टिप्रावृषाणां सृजतामशनिस्वनं ।
सात्यकिश्चित्रकः श्यामो युयुधानश्च वीर्य्यवान् । राजाधिदेवो मृदुरः श्वफल्कश्च महारथः ।    ५०३५

सत्राजिच्चित्रसेनश्च बलेन महता वृताः। व्यूहस्य पक्षं ते सव्यं प्रतीयुर्दंशिता मृधे।
व्यूहस्यार्द्धं समासेदुर्मदिरेणाभिरक्षितं। राजभिश्चापि बहुभिर्वेणुदारिमुखैः सह।
प्रतीच्यश्च बलोदग्रैर्द्धार्त्तराष्ट्रैश्च पालितं।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मथुरारोधे द्विनवतोऽध्यायः ॥ ९२ ॥
॥ वैशम्पायन उवाच ॥ ततो युद्धानि वृष्णीनां बभूवुः सुमहान्त्यपि। मागधस्य महामात्रैर्नृपैश्चैवानुयायिभिः।
रुक्मिणा वासुदेवस्य भीष्मकेणाहुकस्य च। क्राथेन वसुदेवस्य कौशिकस्य च बभ्रुणा। ५०९०
गदेन चेदिराजस्य दन्तवक्त्रस्य शम्भुना। तथाऽन्यैर्वृष्णिवीराणां नृपाणाञ्च महात्मनां।
द्वन्द्वमासीत् ससैन्यानां नृपैर्भरतसत्तम। अहानि पञ्च चैकञ्च षट् सप्ताष्टौ च दारुणं।
गजैर्गजा हयैरश्वाः पादाताश्च पदातिभिः। रथैरथा विमिश्राश्च योधा युयुधिरे ततः।
जरासन्धस्य नृपतेरामेणासीत् समागमः। महेन्द्रस्येव वृत्रेण दारुणो रोमहर्षणः।
अवेद्य रुक्मिणीं कृष्णो रुक्मिणं स व्ययोधयत्। ज्वलनार्कांशुसङ्काशानाशीविषविषोपमान्। ५०९५
वारयामास कृष्णो वै शरांस्तस्य तु शिक्षया। अथैषां सुमहानासीद्योधानां परिक्षयः।
उभयोः सेनयो राजन् मांसशोणितकर्द्दमः। कबन्धानि समुत्तस्थुः सुबहूनि समन्ततः।
तस्मिन् विमर्द्दे योधानां सङ्घातृप्तिकराणि च। रथो रामो जरासन्धं शरैराशीविषोपमैः।
आवृण्वन्नभ्ययाद्वीरस्तञ्च राजा स मागधः। अभ्यद्रवत वेगेन स्यन्दनेनाशुगामिना।
अन्योन्यं विविधैरस्त्रैश्छित्त्वा विद्धा विनेदतुः। तौ क्षीणशस्त्रौ विरथौ हताश्वौ हतसारथी। ५१००
गदे गृहीत्वा विक्रान्तावन्योन्यमभिधावतां। कम्पयन्तौ भुवं वीरौ तावुद्यतमहागदौ।
ददृशाते महात्मानौ गिरी सशिखराविव। व्युपारमन्त युद्धानि पश्यतां तौ महाभुजौ।
संरब्धावभिधावन्तौ गदायुद्धेषु विश्रुतौ। उभौ तौ परमाचार्य्यौ लोके ख्यातौ महाबलौ।
मत्ताविव गजौ युद्धे तावन्योन्यमयुध्यतां। ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः।
समन्ततश्चाप्सरसः समाजग्मुः सहस्रशः। तद्देवयक्षगन्धर्व्वमहर्षिभिरलङ्कृतं। ५१०५
शुशुभेऽभ्यधिकं राजन् दिवं ज्योतिर्गणैरिव। अभिदुद्राव रामं तु जरासन्धो महाबलः।
सव्यं मण्डलमाश्रित्य बलदेवस्तु दक्षिणं। प्राहरेतां ततोऽन्योन्यं गदायुद्धविशारदौ।
दन्ताभ्यामिव मातङ्गौ नादयन्तौ दिशो दश। गदानिपातो रामस्य शुश्रुवेऽशनिनिःस्वनः।
जरासन्धस्य च रणे पर्व्वतस्येव दीर्य्यतः। न स्म कम्पयते रामं जरासन्धकरच्युता।
गदा गदाभृतां श्रेष्ठं विन्ध्यं गिरिमिवानिलः। रामस्य तु गदावेगं वीर्य्यात् स मगधेश्वरः। ५११०
सेहे धैर्य्येण महता शिक्षया च व्यपोहयत्। एवं तौ तत्र संग्रामे विचरन्तौ महाबलौ।
मण्डलानि विचित्राणि विचेरतुररिन्दमौ। व्यायच्छन्तौ चिरं कालं परिश्रान्तौ च तस्थतुः।
समाश्वस्य मुहूर्त्तन्तु पुनरन्योन्यमघ्नतां। एवं तौ योधमुख्यौ तु समं युयुधतुश्चिरं।
न च तौ युद्धवैमुख्यमुभावेव प्रजग्मतुः। अथापश्यद्गदायुद्धे विशेषं तस्य वीर्य्यवान्।

रामः क्रुद्धो गदां त्यक्त्वा जग्राह मुषलोत्तमं । तमुद्यतं तदा दृष्ट्वा मुषलं घोरदर्शनं । ५११५
अमोघं बलदेवेन क्रुद्धेन तु महारणे । ततोऽन्तरीक्षे वागासीत् सुस्वरा लोकसाक्षिणी ।
उवाच बलदेवं तं समुद्यतहलायुधं । न त्वया राम वध्योऽयमलं खेदेन मागधे ।
विहितोऽस्य मया मृत्युस्तस्मात् साधु व्युपारम । अचिरेणैव कालेन प्राणांस्त्यक्ष्यति मागधः ।
जरासन्धस्तु तच्छ्रुत्वा विमनाः समपद्यत । न प्रजह्रे ततस्तस्मिन् पुनरेव हलायुधः ।
तौ व्युपारमतां युद्धे वृष्णयस्ते च पार्थिवाः । प्रशान्तमभवद्युद्धं तेषामेवं सुदारुणं । ५१२०
दीर्घकालं महाराज निघ्नतामितरेतरं । पराजिते त्वपक्रान्ते जरासन्धे महीपतौ ।
अस्तं याति दिनकरे नानुसस्रुस्तदा निशि । समानीय स्वकं सैन्यं लब्धलक्षा महाबलाः ।
पुरीं प्रविविशुर्हृष्टाः केशवेनाभिपालिताः । स्वाच्युतान्यायुधान्येव तान्येवान्तर्दधुस्तदा ।
जरासन्धोऽपि नृपतिर्विमनाः स्वं पुरं ययौ । राजानश्चानुगा येऽस्य स्वराष्ट्राण्येव ते ययुः ।
जरासन्धन्तु ते जित्वा मेनिरे नैव निर्जितं । कृष्णाय कुरुशार्दूल राजा ह्यतिबलः स वै । ५१२५
दश चाष्टौ च संग्रामान् जरासन्धस्य यादवाः । ददुर्न चैनं समरे हन्तुं शेकुर्महारथाः ।
अक्षौहिण्यश्च तत्रासन् विंशतिर्भरतर्षभ । जरासन्धस्य नृपतेस्तदर्थे याः समागताः ।
अल्पत्वादभिभूतास्तु वृष्णयो भरतर्षभ । बार्हद्रथेन राजेन्द्र राजभिः सहितेन वै ।
जित्वा तु मागधं संख्ये जरासन्धं महीपतिं । विहरन्ति स्म सुखिनो वृष्ण्यन्धका महारथाः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मथुरारोधे जरासन्धापयाने नवतितमोऽध्यायः ॥ ९० ॥

॥ वैशम्पायन उवाच ॥ स एवमत्र बलवान् रौहिणेयेन संयुतः । मथुरां यादवाकीर्णां पुरीं तां सुखमावसत् । ५१३०
प्राप्तयौवनदेहस्तु युक्तो राजश्रिया प्रभुः । चचार मथुरां प्रीतः सवनाकरभूषणां ।
कस्यचित्त्वथ कालस्य राजा राजगृहेश्वरः । सस्मार निहतं कंसं जरासन्धः प्रतापवान् ।
युद्धायोद्योजितो भूयो दुहितृभ्यां महीपतिः । दश सप्त च संग्रामान् जरासन्धस्य यादवाः ।
ददुर्न चैनं समरे हन्तुं शेकुर्महारथाः । ततो मगधराट् श्रीमांश्चतुरङ्गबलान्वितः ।
भूयोऽष्टादशमं कर्त्तुं संग्रामं समुपारभत । वैलक्ष्यात् पुनरेवाथो राजा राजगृहेश्वरः । ५१३५
जरासन्धो बली श्रीमान् पाकशासनसन्निभः । स साधनेन महता पाकशासनविक्रमः ।
कृष्णस्य वधमन्विच्छन् भूयो वै संन्यवर्त्तत । तं श्रुत्वा सहिताः सर्व्वे निवृत्तं मगधेश्वरं ।
यादवा मन्त्रयामासुर्जरासन्धभयार्द्दिताः । ततः प्राह महातेजा विकद्रुर्नयकोविदः ।
कृष्णं कमलपत्राक्षमुग्रसेनस्य शृण्वतः । श्रूयतां तात गोविन्द कुलस्यास्य समुद्भवः ।
श्रूयताऽभिधास्यामि प्राप्तकालमहं नृप । युक्तश्चेन्मन्यसे साधो करिष्यसि वचो मम । ५१४०
यादवस्यास्य वंशस्य समुद्भवमशेषतः । यथा मे कथितं पूर्व्वं व्यासेन विदितात्मना ।
आसीद्राजा मनोर्वंशे श्रीमानिक्ष्वाकुसम्भवः । हर्य्यश्व इति विख्यातो महेन्द्रसमविक्रमः ।
तस्यासीद्दयिता भार्य्या मधोर्दैत्यस्य वै सुता । देवी मधुमती नाम यथा देवी शची तथा ।

सा यौवनगुणोपेता रूपेणाप्रतिमा भुवि। मनोरथकरी राज्ञः प्राणेभ्योऽपि गरीयसी।
वनजाक्षी रतिप्रख्या सुश्रोणी कामरूपिणी। एकपत्नीव्रतधरा खेचरी रोहिणी यथा। ५१०५
सा तमिक्ष्वाकुशार्दूलं कामयामास कामिनी। स कदाचिन्नरश्रेष्ठो भ्रात्रा ज्येष्ठेन माधव।
राज्यान्निरस्तो विश्वस्तः सोऽयोध्यां संपरित्यजत्। स तदाऽल्पपरीवारः प्रियया सहितो वने।
रेमे स हितकालज्ञः प्रियया कमलेक्षणः। भ्रात्रा निराकृतं राज्यात् प्रोवाच कमलेक्षणा।
एह्यागच्छ नृपश्रेष्ठ त्यज राज्यकृतां स्पृहां। गच्छावः सहितौ वीर मधोर्धाम पितुर्मम।
रम्यं मधुवनं नाम कामपुष्पफलद्रुमं। सहितौ तत्र रंस्यावो यथा दिवि गतौ तथा। ५११०
पितुर्मे दयितस्त्वं हि मातुश्च मम पार्थिव। मत्प्रियत्वात् प्रियतरो भ्रातुश्च लवणस्य मे।
रंस्यावस्तत्र सहितौ राज्यस्थाविव कामगौ। तत्र गत्वा नरश्रेष्ठ अमराविव नन्दने।
भद्रन्ते विहरिष्यावो यथा देवपुरे तथा। तं त्यजाव महाराज भ्रातरन्तेऽभिमानिनं।
आवयोर्द्वेषिणं नित्यं मत्तं राज्यमदेन वै। धिगिमं गर्हितं वासं भृत्यवच्च पराश्रयं।
गच्छावः सहितौ वीर पितुर्मे भवनान्तिकं। तस्य सम्यक् प्रवृत्तस्य पूर्वजं भ्रातरम्प्रति। ५११५
कामार्त्तस्य नरेन्द्रस्य पत्न्यास्तद्रुरुचे वचः। ततो मधुपुरं राजा हर्य्यश्वः स जगाम ह।
भार्य्यया सह कामिन्या कामी पुरुषपुङ्गवः। मधुना दानवेन्द्रेण स साम्ना समुदाहृतः।
स्वागतं वत्स हर्य्यश्व प्रीतोऽस्मि तव दर्शनात्। यदेतन्मम राज्यं वै सर्वं मधुवनं विना।
ददानि तव राजेन्द्र वासश्च प्रतिगृह्यतां। वनेऽस्मिन् लवणश्चैव सहायस्ते भविष्यति।
अमित्रनिग्रहे चैव कर्णधारत्वमेष्यति। पालयैनं शुभं राष्ट्रं समुद्रानूपभूषितं। ५१२०
गोसमृद्धं श्रिया जुष्टमाभीरप्रायमानुषं। तत्र ते रमणस्थानं दुर्गं गिरिपुरं महत्।
भविता पार्थिवावासः सुराष्ट्रविषयो महान्। अनूपविषयश्चैव समुद्रान्तो निरामयः।
आनर्त्तं नाम ते राष्ट्रं भविष्यत्यायतं महत्। तद्विवासमहं मन्ये कालयोगेन पार्थिव।
अध्यास्यतां यथाकालं पार्थिवं वृत्तमुत्तमं। ययातमपि वंशस्ते समेष्यति च यादवं।
अनुवंशश्च वंशस्य सोमस्य भविता किल। एष मे विभवस्तात तवेमं विषयोत्तमं। ५१२५
दत्त्वा यास्यामि तपसे सागरं वरुणालयं। लवणेन समायुक्तस्त्वमिमं विषयोत्तमं।
पालयस्वाखिलं तात स्वस्य वंशस्य वृद्धये। बाढमित्येव हर्य्यश्वः प्रतिजग्राह तत्पुरं।
स च दैत्यस्तपोवासं जगाम वरुणालयं। हर्य्यश्वश्च महातेजा दिव्ये गिरिवरोत्तमे।
निवेशयामास पुरं वासार्थममरोपमः। आनर्त्तं नाम तद्राष्ट्रं सुराष्ट्रं गोधनायुतं।
अचिरेणैव कालेन समृद्धं प्रत्यपद्यत। अनूपविषयश्चैव वेलावनविभूषितं। ५१३०
निविष्टं चैत्रशस्याढ्यं प्राकारग्रामसंकुलं। शशास स नृपः स्फीतं तद्राष्ट्रं राष्ट्रवर्द्धनः।
राजधर्मेण यशसा प्रजानां नन्दिवर्द्धनः। तस्य सम्यक् प्रचारेण हर्य्यश्वस्य महात्मनः।
व्यवर्द्धत तदक्षोभ्यं राष्ट्रं राष्ट्रगुणैर्युतं। स हि राजा स्थितो राज्ये राजवृत्तेन शोभितः।

प्राप्तः कुलोचितां लक्ष्मीं वृत्तेन च नयेन च । तस्यैवं सुप्रवृत्तस्य पुत्रकामस्य धीमतः ।
मधुमत्यां सुतो जज्ञे यदुर्नाम महायशाः । सोऽवर्द्धत महातेजा यदुर्दुन्दुभिनिस्वनः । ५१७५
राजलक्षणसम्पन्नः सपत्नैर्दुरतिक्रमः । यथाऽस्य पूर्व्वजो राजा पुरुः स सुमहायशाः ।
स एक एव तस्यासीत् पुत्रः परमशोभनः । ऊर्ज्जितः पृथिवीभर्त्ता हर्य्यश्वस्य महात्मनः ।
दशवर्षसहस्राणि स कृत्वा राज्यमव्ययं । जगाम त्रिदिवं राजा धर्म्मेणासमितो भुवि ।
ततो यदुरदीनात्मा प्रजाभिरभ्यषिच्यत । पितर्य्युपरते श्रीमान् कर्म्मणार्क इवोदितः ।
ययाम चेमां वसुधां प्रजानामभयङ्करां । यदुरिन्द्रप्रतीकाशो नृपो येन स्म यादवाः । ५१८०
स कदाचिन्नृपश्रेष्ठो जलक्रीडां महोदधौ । दारैः सह गुणोदारैः चचार इव चन्द्रमाः ।
स तत्र सहसा क्षिप्तस्तितीर्षुः सागराम्भसि । धूमवर्णेन नृपतिः सर्पराजेन वीर्य्यवान् ।
सोऽपाकृष्यत वेगेन जले सर्पपुरं महत् । मणिकाञ्चनदृढद्वारं मुक्तादामविभूषितं ।
कीर्णं शङ्खकुलैः शुभ्रैरलङ्कारार्थिविभूषितं । प्रवालाङ्कुरपत्राढ्यैः पादपैरुपशोभितं ।
कीर्णं पन्नगनार्य्यौघैः समुद्रोदरचारिभिः । स्वर्णेन मध्ये भास्वन्तं स्फाटिकेनेन्दुवर्च्चसा । ५१८५
स तं ददर्श राजेन्द्रो विमले सागराम्भसि । पन्नगेन्द्रपुरं तोये जगत्यामिव निर्म्मितं ।
स्वस्यैव पुरे तत्र प्रावेश्यत नृपो यदुः । अगारं तोयदाकारं पूर्ण सर्पवधूगणैः ।
तस्य दृष्टं मणिमयं अलङ्कं परमासनं । स्वास्तीर्णे पद्मपत्रैश्च पद्मनुचोत्तर च्छदं ।
तमासीनं नृपं तत्र परमे पन्नगासने । द्विजिह्वपतिरव्यग्रो धूमवर्णोऽभ्यभाषत ।
पिता ते स्वर्गतिं प्राप्तः कृत्वा वंशमिमं महत् । भवन्तं तेजसा युक्तमुत्पाद्य वसुधाधिपं । ५१९०
यादवो नाम वंशोऽयं त्वन्नाम्ना वसुधाधिप । पिता ते मधुसार्थाय स्थापितः पार्थिवाकरः ।
वंशे चास्मिंस्तव त्रिंशा देवानां तनयाऽव्ययाः । यशोणासुरगाणाञ्च उत्पत्स्यन्ते नृयोनिजाः ।
एता मम सुताः पञ्च कुमार्य्यो वृत्तसम्मताः । उत्पन्ना यौवनास्थस्य भगिन्यो नृपसत्तम ।
प्रतीच्छेमाः स्वधर्म्मेण प्राजापत्येन कर्म्मणा । वरस्य ते प्रदास्यामि वरार्हस्त्वं मतो मम ।
नामास्तु कौकुराश्चैव भोजाश्चान्धकयादवाः । दाशार्हा वृष्णयश्चेति ख्यातिं यास्यन्ति सप्त ते । ५१९५
स तस्मै धूमवर्णो वै कन्याः कन्याव्रते स्थिताः । जलपूर्णेन योगेन ददाविन्द्रसमाय वै ।
वरस्यास्मै ददौ प्रीतः स वै पन्नगपुङ्गवः । श्रावयन् कन्यकाः सर्व्वा यथाक्रममदीनवत् ।
एतासु ते सुताः पञ्च सुतास्तु मम मानद । उत्पत्स्यन्ते पितुस्तेजो मातुश्चैव समाश्रिताः ।
पन्नासमयनद्धाश्च सलिलाभ्यन्तरेचराः । तव वंशे भविष्यन्ति पार्थिवाः कामरूपिणः ।
स वरं कन्यकाश्चैव लब्ध्वा यदुररिन्दमः । उदतिष्ठत वेगेन सलिलाच्चन्द्रमा इव । ५२००
स पञ्चकन्यामध्यस्थो ददृशे तत्र पार्थिवः । पञ्चतारेण संयुक्तो नक्षत्रेणेव चन्द्रमाः ।
स तदन्तःपुरं सर्व्वं ददर्श नृपसत्तमः । वैवाहिकेन वेशेन दिव्यस्रगनुलेपनः ।

समाश्वास्य च ताः सर्व्वाः सपत्नीः पावकोपमाः । जगाम स्वपुरं राजा प्रीत्या परमया युतः ।
स्वपुरन्तु ततो राजा गत्वा वै रमते भृशं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि विकद्रुवाक्ये चतुरशीतितमोऽध्यायः ॥ ८४ ॥

॥ विकद्रुरुवाच ॥ स तासु नागकन्यासु कालेन महता नृपः । जनयामास विक्रान्तान् पञ्च पुत्रान् कुलोद्वहान् । ५२०५
मुचुकुन्दं महाबाहुं पद्मवर्णं तथैव च । माधवं सारसञ्चैव हरितञ्चैव पार्थिवं ।
एतान् पञ्च सुतान् राजा पञ्चभूतोपमान् भुवि । ईक्षमाणो नृपः प्रीतिं जगामातुलविक्रमः ।
ते प्राप्तवयसः सर्व्वे स्थिताः पञ्च यथाऽद्रयः । तेजिता बलदर्पाभ्यामूचुः पितरमच्युतः ।
तात युक्ताः स्म वयसा बले महति संस्थिताः । चिप्रमाज्ञप्तमिच्छामः किं कुर्म्मस्तव शासनात् ।
स तान्नृपतिशार्दूलः शार्दूलानिव वेगितान् । प्रीत्या परमया प्राह सुतान् वीर्य्यकृतक्षणान् । ५२१०
विन्ध्यर्क्षवन्तावभितो द्वे पुर्य्यौ पर्व्वताश्रये । निवेशयतु यत्नेन मुचुकुन्दः सुतो मम ।
सह्यस्य चोपरि पुरीं दक्षिणां दिशमाश्रितां । पद्मवर्णोऽपि मे पुत्रो निवेशयतु माचिरं ।
तत्रैव परतः कान्ते देशे चम्पकभूषिते । सारसो मे पुरं रम्यं निवेशयतु पुत्रकः ।
हरितोऽयं महाबाहुः सागरे सलिलोदरे । द्वीपं पन्नगराजस्य सुतो मे पालयिष्यति ।
माधवोऽपि महाबाहुर्ज्येष्ठः श्रेष्ठश्च धर्म्मवित् । यौवराज्येन संयुक्तः स्वपुरं पालयिष्यति । ५२१५
सर्व्वे नृपश्रियं प्राप्ता अभिषिक्ताः सचामराः । पित्राऽनुशिष्टास्चत्वारो लोकपालोपमा नृपाः ।
स्वं स्वं निवेशनं सर्व्वे भेजिरे नृपसत्तमाः । पुरस्थानानि रम्याणि मृगयन्तो यथाक्रमं ।
मुचुकुन्दस्तु राजर्षिर्व्विन्ध्यमध्ये व्यरोचत । स्वस्थाने नर्म्मदातीरे दारुणोपलसङ्कटे ।
स तु तं शोभयामास विविक्तञ्च चकार ह । सेतुश्चैव समस्तस्य परिखाश्चामितोदकाः ।
स्थापयामास भागेषु देवतायतनान्यपि । रथ्यावीथीर्नृणां मार्गांश्चत्वराणि वनानि च । ५२२०
स तां पुरीं धनवतीं पुरुहूतपुरीप्रभां । नातिदीर्घेण कालेन चकार नृपसत्तमः ।
गोभिर्द्धनेन धान्येन सम्पूर्णां ध्वजमालिनीं । नाम चास्याः शुभञ्चक्रे निर्म्मितं स्वेन तेजसा ।
तस्याः पुर्य्या नृपश्रेष्ठो देवश्रेष्ठपराक्रमः । महाश्मसङ्घातवतो यथेयं विन्ध्यसानुगा ।
माहिष्मती नाम पुरी प्रकाशमुपयास्यति । उभयोर्व्विन्ध्ययोः पादे नगयोस्तां महापुरीं
मध्ये निवेशयामास श्रिया परमया युतां । पुरिका नाम धर्म्मात्मा पुरीं देवपुरीप्रभां । ५२२५
उद्यानशतसम्बाधां समृद्धापणचत्वरां । ऋक्षवतोऽभितश्चैव तीरे तत्र निरामये ।
निर्म्मिता सा पुरी राज्ञा पुरिका नाम नामतः । स ते द्वे विपुले पुर्य्यौ देवपुर्य्युपमे शुभे ।
पालयामास धर्म्मात्मा राजधर्म्मेण वीर्य्यवान् । पद्मवर्णोऽपि राजर्षिः सह्यपृष्ठे पुरोत्तमं ।
चकार नद्या वेण्णायास्तीरे तरुलताकुले । विषयस्यास्य तां ज्ञात्वा सम्पूर्णं राष्ट्रमेव च ।
निवेशयामास नृपः सवप्रप्रायमुत्तमं । पद्मावतं जनपदं करवीरञ्च तत्पुरं । ५२३०

निर्म्मितं पद्मवर्णेन प्राजापत्येन कर्म्मणा । सारणेनापि विहितं रम्यं क्रौञ्चपुरं महत् ।
चम्पकाशोकबकुलं विपुलं तावदूर्मिकं । वनवासीति विख्यातः स्फीतो जनपदो महान् ।
पुरस्य तस्य तु श्रीमान् द्रुमैः सर्व्वर्त्तुकैर्वृतः । हरितोऽपि समुद्रस्य द्वीपं समभिपालयत् ।
रत्नसञ्चयसम्पूर्णं नारीजनमनोहरं । तस्य दाशा जने मद्रा मद्गुरा नाम विश्रुताः ।
ये चरन्ति सदा शङ्खान् समुद्रोदरचारिणः । तस्यापरे दाशगणाः प्रवालान् जलसम्भवान् ।    ५२०५
सञ्चिन्वन्ति सदा युक्ता जातरूपञ्च मौक्तिकं । जलजानि च रत्नानि निषादास्तस्य मानवाः ।
प्रविशन्तोऽर्णवे युक्ता नौभिः संयात्रगामिनः । मत्स्यमांसेन ते सर्व्वे वर्त्तन्ते स्म सदा नराः ।
तरन्तः सर्व्वरत्नानि रत्नद्वीपनिवासिनः । ते संयात्रगतैर्द्रव्यैर्वणिजो दूरगामिनः ।
हरितं तर्पयन्त्येवं यथैव धनदं तथा । एवमिक्ष्वाकुवंशाद्धि यदुवंशो विनिःसृतः ।
चतुर्द्धा यदुपुत्रैस्तु चतुर्भिर्भिद्यते पुनः । स यदुर्माधवे राज्यं विसृज्य यदुपुङ्गवे ।    ५२१०
त्रिपिष्टपं गतो राजा देहं त्यक्त्वा महीतले । बभूव माधवसुतः सत्वतो नाम वीर्य्यवान् ।
सत्वद्रूप्यगुणोपेतो राजा राजगुणे स्थितः । सत्वतस्य सुतो राजा भीमो नाम महानभूत् ।
येन भैमाः सुसंवृत्ताः सत्वतात् सात्वताः स्मृताः । राज्यस्थे तु नृपे तस्मिन् रामे राज्यं प्रशासति ।
शत्रुघ्नो लवणं हत्वा चिच्छेद स मधोर्व्वनं । तस्मिन्मधुवने स्थाने पुरीञ्च मथुरामिमां ।
निवेशयामास विभुः सुमित्रानन्दिवर्द्धनः । पर्य्याये चैव रामस्य भरतस्य तथैव च ।    ५२१५
सुमित्रासुतयोश्चैव प्राप्तयोर्वैष्णवं पदं । भीमेनेयं पुरी तेन राज्यसम्बन्धकारणात् ।
स्ववंशे स्थापिता पूर्व्वं स्वयमध्यासिता तथा । ततः कुशे स्थिते राज्ये लवे तु युवराजनि ।
अन्धको नाम भीमस्य सुतो राज्यमकारयत् । अन्धकस्य सुतो जज्ञे रेवतो नाम पार्थिवः ।
ऋक्षोऽपि रेवताज्जज्ञे रम्ये पर्व्वतमूर्द्धनि । ततो रैवत उत्पन्नः पर्व्वतः सागरान्तिके ।
नाम्ना रैवतको नाम भूमौ भूमिधरः स्मृतः । रैवतस्यात्मजो राजा विश्वगर्भो महायशाः ।    ५२२०
बभूव पृथिवीपालः पृथिव्यां प्रथितः प्रभुः । तस्य तिसृषु भार्य्यासु दिव्यरूपासु केशव ।
चत्वारो जज्ञिरे पुत्रा लोकपालोपमाः शुभाः । वसुर्व्वभ्रुः सुषेणश्च सभाक्षश्चैव वीर्य्यवान् ।
यदुप्रवीराः प्रख्याता लोकपाला इवापरे । तैरयं यादवो वंशः पार्थिवैर्बहुलीकृतः ।
यस्मिंस्त्वं कृष्ण लोकेशाः सुप्रजाताः प्रजेश्वराः । वसोस्तु कुन्तिविषये वसुदेवः सुतो विभुः ।
ततः संजनयामास सुप्रभे द्वे च दारिके । कुन्तीञ्च पाण्डोर्महिषीं देवतामिव भूचरीं ।    ५२२५
भार्य्याञ्च दमघोषस्य चेदिराजस्य सुप्रभां । एष ते स्वस्य वंशस्य प्रभवः परिकीर्त्तितः ।
श्रुतो मया पुरा कृष्ण कृष्णद्वैपायनान्तिकात् । त्वं त्विदानीं प्रनष्टेऽस्मिन् वंशे वंशधरोऽनघ ।
स्वयम्भूरिव सम्प्राप्तो भवायास्मज्जयाय च । न तु त्वां पौरमात्रेण शक्ता गूहयितुं वयं ।
देवगुह्येष्वपि भवान् सर्व्वज्ञः सर्व्वभावनः । शक्तोऽसि जरासन्धं नृपं नाशयितुं विभो ।
त्वद्बुद्धिवशगाः सर्व्वे वयं योधव्रते स्थिताः । जरासन्धस्तु बलवान्नृपाणां मूर्द्ध्नि तिष्ठति ।    ५२३०

अप्रमेयबलस्यैव वयञ्च कृष्णसाधनाः । न चैषमेकाहमपि पुरीरोधं सहिष्यति ।
क्षयभक्तेन्धनयवसा दुर्गैरपरिनिष्ठिता । असंस्कृताम्बुपरिखा द्वाराट्टयन्त्रवर्जिता ।
वप्रप्राकारमार्गेषु कर्त्तव्या बहुविस्तरा । संस्कर्त्तव्यायुधागारा योक्तव्या चेष्टकाचयैः ।
कंसस्य बलभोग्यत्वान्नाभिगुप्ता पुरा जनैः । सद्यो निपतिते कंसे राज्ये ऽस्माकं नवोदये ।
पुरीप्रत्ययरोधेयञ्च रोधं विषहिष्यति । बलस्यार्द्दभयाच्च कृष्यमाणं परेण च । ५२८५
असंशयमिदं राष्ट्रं शनैः सह विनङ्क्ष्यति । यादवानां विरोधेन ये जिता राज्यकामुकैः ।
ते सर्व्वे द्वैधमिच्छन्ति यत्क्षमं तद्विधीयतां । वचनीया भविष्यामो नृपाणां नृपकारणात ।
जरासन्धभयार्त्तानां द्रवतां राष्ट्रसंभ्रमे । आर्त्ता वक्ष्यन्ति नः सर्व्वे रुध्यमानाः पुरे जनाः ।
यादवानां विरोधेन विनष्टाः स्मेति केशव । एतन्मम मतं कृष्ण विश्वम्भात् समुदाहृतं ।
त्वन्तु विज्ञापितः सर्व्वं न पुनः संप्रबोधितः । यदत्र नः क्षमं कृष्ण तत् स्वैरं संविधीयतां । ५२९०
त्वमस्य नेता सैन्यस्य वयं त्वच्छासने स्थिताः । त्वन्मूलश्च विरोधोऽयं रक्षात्मनात्मना सह ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि विकद्रुवाक्ये पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
॥ वैशम्पायन उवाच ॥ विकद्रोस्तद्वचः श्रुत्वा वसुदेवो महायशाः । परितुष्टेन मनसा वचनञ्चेदमब्रवीत् ।
राजषाड्गुण्यवक्ता वै राजमन्त्रार्थतत्त्ववित् । स तत्त्वञ्च हितञ्चैव कृष्णाकं किल धीमता ।
भाषिता राजधर्म्मास्तु सत्यास्तु जगतो हिताः । एतच्छ्रुत्वा पितुर्वाक्यं विकद्रोस्तु महात्मनः ।
वाक्यमुत्तरमेकाग्रो बभाषे पुरुषोत्तमः । युवतां वः श्रुतं वाक्यं हेतुतः क्रमतस्तथा । ५२९५
न्यायतः शास्त्रतश्चैव दैवज्ञाप्यनपश्यतां । श्रूयतामुत्तरं वाक्यं श्रुत्वा च प्रतिगृह्यतां ।
नयेन व्यवहर्त्तव्यं पार्थिवेन यथाक्रमं । सन्धिश्च विग्रहश्चैव यानमासनमेव च ।
द्वैधीभावं संश्रयञ्च षाड्गुण्यञ्चिन्तयेत् सदा । बलिनः सन्निकर्षे तु न स्थेयं पण्डितेन वै ।
अपक्रामेद्धि कालज्ञः समर्थो युद्धमाचरेत् । अहं तावत् सहार्य्येण मुहूर्त्तेऽरिजन् प्रकाशितः ।
जीवितार्थी गमिष्यामि शक्तिमन्तमपाक्रमन् । ततः सह्याचलयुतं सहार्य्येणाहमव्ययं । ५३००
आत्मद्वितीयः श्रीमन्तं प्रवेक्ष्ये दक्षिणापथं । करवीरपुरञ्चैव रम्यं क्रौञ्चपुरं तथा ।
द्रक्ष्यावस्तत्र सहितौ गोमन्तञ्च नगोत्तमं । आवयोर्गमनं श्रुत्वा जितकाशी स पार्थिवः ।
अप्रविश्य पुरीं दर्पादनुसारं करिष्यति । ततः सह्यवनेष्वेव जरासन्धोऽनुयास्यति ।
आवयोर्ग्रहणे चैव नृपतिः प्रयतिष्यति । एषा नः श्रेयसी यात्रा भविष्यति कुलस्य वै ।
पौराणामथ पुर्य्यास्तु देशस्य च सुखावहा । न च शत्रुपरिभ्रंशे राजानो विजिगीषवः । ५३०५
परराष्ट्रेषु स्थास्यन्ति सृधे शत्रुवधं विना । एवमुक्त्वा तु तौ वीरौ कृष्णसङ्कर्षणावुभौ ।
प्रपेदतुरसंभ्रान्तौ दक्षिणौ दक्षिणापथं । तौ तु राष्ट्राणि शतशश्चरन्तौ कामरूपिणौ ।
दक्षिणां दिशमास्थाय चेरतुर्मार्गगौ सुखं । सह्यपृष्ठेषु रम्येषु मोदमानावुभौ तथा ।
दक्षिणापथगौ वीरावध्वानं संप्रपेदतुः । तौ तु स्वल्पेन कालेन सह्यं पर्व्वविभूषितं ।

करवीरपुरं प्राप्तौ स्वर्वंशजविभूषितं । तौ तत्र गत्वा वेलाया नद्यास्तीरान्तमाश्रितं ।
आसेदतुः प्ररोहाढ्यं न्यग्रोधं तरुपुङ्गवं । अधस्तात्तस्य वृक्षस्य मुनिं दीप्ततपोधनं । ५२९०
अंसासक्तपरशुं जटावल्कलधारिणं । गौरमग्निशिखाकारं तेजसा भास्करोपमं ।
क्षत्रान्तकरमक्षोभ्यं वपुष्मन्तमिवार्णवं । न्यस्तसंकुचिताधानं काले हुतहुताशनं ।
स्निग्धं त्रिपथगाम्भोभिराद्यं देवगुरुं यथा । सवत्सां धेनुकां स्वेतां होमधुक्षामदोहनां ।
क्षीरारणीं कर्षमाणं महेन्द्रगिरिगोचरं । ददृशतुस्तौ सहितावपरिम्लानमव्ययं । ५२९५
भार्गवं राममासीनं मन्दरस्थं यथा रविं । न्यायतस्तौ तु तं दृष्ट्वा पादमूले कृताञ्जली ।
वसुदेवसुतौ वीरौ सधिष्ण्याविव पावकौ । कृष्णस्तमृषिशार्दूलमुवाच वदताम्वरः ।
श्लक्ष्णं मधुरया वाचा लोकवृत्तान्तकोविदः । भगवन् जामदग्न्य त्वामवगच्छामि भार्गवं ।
रामं मुनीनामृषभं क्षत्रियाणां कुलान्तकं । त्वया सायकवेगेन क्षिप्तो भार्गव सागरः ।
इषुपातेन नगरं कृतं सूर्पारकं त्वया । धनुःपञ्चशता याममिषुपञ्चशतोच्छ्रितं । ५३००
सह्यस्य च निकुञ्जेषु स्फीतो जनपदो महान् । अनिकस्योदधेर्वेलामपरान्ते निवेशितः ।
त्वया तत्र कार्त्तवीर्य्यस्य सहस्रभुजकाननं । छिन्नं परशुनैकेन स्मरता निधनं पितुः ।
हृदयस्थापि रुधिरैः क्षत्रियाणां कृतान्वियं । त्रिराधा त्वत्परशुसृष्टैर्जातपङ्का वसुन्धरा ।
रैणुकेयं विजाने त्वां छिन्नो क्षत्रियरोषणं । परशुप्रग्रहे युक्तं यथैवेह रणे तथा ।
तदिच्छावस्त्वया विप्र कश्चिदर्थमुपश्रुतं । उक्तश्च श्रुतार्थेन प्रत्युक्तमविशङ्कया । ५३०५
आवां तो माथुरौ ब्रह्मन् यमुनातीरवासिनौ । यादवौ स्वो मुनिश्रेष्ठ यदि ते श्रुतिमागतौ ।
वसुदेवो यदुश्रेष्ठः पिता नो हि धृतव्रतः । जन्मप्रभृति चैवावां व्रजेष्वेव नियोजितौ ।
तौ स्वः कंसभयात्तत्र शङ्कितौ परिवर्द्धितौ । वयश्च प्रथमं प्राप्तौ मथुरां च प्रवेशितौ ।
तावावां व्युत्थितं हत्वा समाजे कंसमोजसा । पितरं तत्र तस्यैव स्थापयित्वा जनेश्वरं ।
स्वमेव कर्म चारब्धौ गवां व्यापारकारकौ । अथावयोः पुरं रोद्धुं जरासन्धो व्यवस्थितः । ५३१०
संग्रामान् सुबहून् कृत्वा नास्त्रलब्धावपि स्वयं । ततः स्वपुररक्षार्थं प्रजानाञ्च धृतव्रत ।
अकृतास्त्रावनुद्योगौ कर्त्तव्यबलसाधनौ । अरथौ पत्तिकौ युद्धे निस्तनुत्रौ निरायुधौ ।
जरासन्धाद्भयभयात् पुराद्द्राविव निःसृतौ । उभावावामनुप्राप्तौ मुनिश्रेष्ठ तवान्तिकं ।
आवयोर्मन्त्रमात्रेण कर्त्तुमर्हसि सत्क्रियां । श्रुत्वैतद्भार्गवो रामस्तयोर्वाक्यमनिन्दितं ।
रैणुकेयः प्रतिवचो धर्म्मसंहितमब्रवीत् । अवगम्यादहं कृष्ण सम्प्राप्तोऽस्म्यागतः प्रभो । ५३१५
एक एव विना शिष्यैर्युवयोर्मन्त्रकारणात् । विदितो मे व्रजे वासस्तव पद्मनिभेक्षण ।
दानवानां वधश्चापि कंसस्य च दुरात्मनः । विग्रहश्च जरासन्धे विदित्वा पुरुषोत्तम ।
तव सन्ध्याहृतस्येह सम्प्राप्तोऽस्मि वरानन । जाने त्वां कृष्ण गोप्तारं जगतः प्रभुमव्ययं ।
देवकार्य्यार्थसिद्ध्यर्थमवाप्तं बालताङ्गतं । न त्वया ऽविदितं किञ्चित्त्रिषु लोकेषु विद्यते ।

तथापि भक्तिमात्रेण शृणु वक्ष्यामि ते वचः । पूर्व्वजैस्तव गोविन्द पूर्व्वं पुरमिदं कृतं । ५३१०
करवीरपुरं नाम राष्ट्रञ्चैव निवेशितं । पुरेऽस्मिन्नृपतिः कृष्ण वासुदेवो महायशाः ।
शृगाल इति विख्यातो नित्यं परमकोपनः । नृपेण तेन गोविन्द स्ववंशप्रभवा नृपाः ।
दायादा निहताः सर्व्वे वीरद्वेषानुयायिना । अहङ्कारपरो नित्यमजितात्माऽतिमत्सरी ।
राज्यैश्वर्य्यमदाविष्टः पुत्त्रेष्वपि च दारुणः । तस्येह भवतः स्थानं रोचते मे नरोत्तम ।
करवीरपुरे घोरे नित्यं पार्थिवदूषिते । श्रूयतां कथयिष्यामि यत्रासौ शत्रुबाधनौ । ५३१५
जरासन्धं बलादद्य यत्रासौ बाधयिष्यतः । तीर्त्वा वेण्णामिमां पुण्यां नदीमद्यैव सत्कृताः ।
विषयान्ते निवेशाय गिरिं गच्छाम दुर्गमं । रम्यं यज्ञगिरिं नाम सह्यस्य प्रवरं गिरिं ।
निवासं मांसभक्षाणां चौराणां घोरकर्म्मणां । नानाद्रुमलतायुक्तं चित्रं पुष्पितपादपं ।
प्रोह्य तत्र निशामेकां खट्वाङ्गीं नाम निम्नगां । भद्रन्ते मन्तरिष्यामो निकषोपलभूषणां ।
गङ्गाप्रपातप्रतिमां स्रस्तामस्य महतो गिरेः । तस्याः प्रपाते द्रक्ष्यामस्तापसारण्यभूषणे । ५३२०
असमानकामान्मानार्हान् गत्वा तान् धरणीधरान् । द्रक्ष्यामस्तत्र तान् विप्रान् शान्ततो वै तपोधनान् ।
तां तीर्त्वा निम्नगां तत्र तांश्च दृष्ट्वा तपोधनान् । रम्यं क्रौञ्चपुरं नाम गमिष्यामः पुरोत्तमं ।
वंशजस्तत्र ते राजा कृष्ण धर्म्मरतः सदा । महाकपिरिति ख्यातो वनस्यास्य जनाधिपः ।
तमदृष्ट्वैव राजानं निवासाय गतेऽहनि । तीर्थमानडुहं नाम गमिष्यामः सनातनं ।
ततश्च्युता गमिष्यामः सह्यस्य शिखरे गिरिं । गोमन्तमिति विख्यातं नैकशृङ्गविभूषितं । ५३२५
खगान्तरमहाशृङ्गं दुरारोहं खगैरपि । विश्रामभूतं देवानां ज्योतिर्भिरिव संवृतं ।
सोपानभूतं स्वर्गस्य गगणाद्दृमिवोत्थितं । तं विमानान्तरगतं गिरिं मेरुमिवापरं ।
तस्योत्तमे महाशृङ्गे भास्वतो दिवर्कशिः । उदयास्तमये सूर्य्यं सोमञ्च ज्योतिषां पतिं ।
ऊर्म्मिमन्तं समुद्रञ्च सपारद्वीपभूषणं । प्रेक्षन्तौ सुखं तत्र नगाग्रे विचरिष्यथः ।
शृङ्गस्थौ तस्य शैलस्य गोमन्तस्य वनेचरौ । दुर्गयुद्धेन बाधन्तौ जरासन्धं विजेष्यथः । ५३३०
तत्र शैलगतौ दृष्ट्वा भवन्तौ युद्धदुर्म्मदौ । [illegible]क शैलयुद्धे वै जरासन्धो भविष्यति ।
भवद्भ्यामपि युद्धे तु प्रवृत्ते तत्र दारुणे । आयुधैः सह संयोगं पश्यामि न चिरादिव ।
संग्रामश्च महान् कृष्ण निर्द्दिष्टस्तत्र दैवतैः । यदूनां पार्थिवानाञ्च मांसशोणितकर्दमः ।
तत्र चक्रं हलञ्चैव गदां कौमोदकीन्तथा । सौनन्दं मुषलञ्चैव वैष्णवान्यायुधानि च ।
दर्शयिष्यन्ति संग्रामे पास्यन्ति च महीक्षितां । रुधिरं कालयुक्तानां वपुर्भिः कालसन्निभैः । ५३३५
स चक्रमुषलो नाम संग्रामः कृष्ण विश्रुतः । दैवतैरिह निर्दिष्टः कालस्यादिशसंस्थित ।
तत्र ते कृष्ण संग्रामे सुव्यक्तं वैष्णवं वपुः । द्रक्ष्यन्ति रिपवः सर्व्वे सुराश्च सुरभावन ।
तां भजस्व गदां कृष्ण चक्रञ्च चिरविस्मृतं । भजस्व तेन रूपेण सुराणां विजयाय वै ।
बलस्यायं हलं घोरं मुषलञ्चारिमर्द्दनं । बधाय सुरशत्रूणां भजतां लोकभावनः ।

एष ते प्रथमः कृष्ण संग्रामो भुवि पार्थिवैः। पृथिव्यर्थे समाख्यातो भारावतरणे मृधे। ५२५०
आयुधावाप्तिरत्रैव वपुषो वैष्णवस्य च। लक्ष्म्याश्च तेजसश्चैव व्यूहानाञ्च विदारणं।
ततः प्रभृति संग्रामो धरण्यां शस्त्रमूर्च्छितः। भविष्यति ततः कृष्ण भारतं नाम वैशसं।
तद्गच्छ कृष्ण शैलेन्द्रं गोमन्तन्तु नगोत्तमं। जरासन्धो मृधे चापि विजयेहाप्युपस्थितः।
जरासन्धं निमित्तानि शंसन्ति समुपस्थितं। इदञ्चैवामृतप्रख्यं होमधेन्वाः पयोऽमृतं।
पीत्वा गच्छत भद्रं वो यथादिष्टेन वर्त्मना। ५२५५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि परशुरामवाक्ये षण्णवतितमोऽध्यायः॥ ९६॥
॥ वैशम्पायन उवाच ॥ तस्तु धेन्वाः पयः पीत्वा बलदर्पसमन्वितौ। ततस्तौ रामसहितौ प्रस्थितौ यदुपुङ्गवौ।
गोमन्तं पर्व्वतं द्रष्टुं मत्तनागेन्द्रगामिनौ। जामदग्न्यप्रदिष्टेन मार्गेण वदतांवरौ।
जामदग्न्यतृतीयास्ते त्रयस्त्रय इवाग्नयः। शोभयन्ति स्म पन्थानं त्रिदिवं त्रिदशा इव।
ते चाध्वविधिना सर्व्वे ततो वै दिवसक्रमात्। गोमन्तमचलं प्राप्ता मन्दरं त्रिदशा इव।
लताचारुविचित्राङ्गं नानाद्रुमविभूषितं। गन्धागुरुपिनद्धाङ्गं चित्रं चित्रैर्मनोरमैः। ५२६०
द्विरेफगणसङ्कीर्णं शिलासङ्कटपादपं। सत्त्ववर्हिणनिर्घोषैर्नादितं मेघनादिभिः।
गगनाग्रशिखरं जलदाभकपादपं। मत्तद्विपविषाणाग्रपरिघृष्टोपलाङ्कितं।
कुरङ्गिशावाण्डजगणैः समन्तात् प्रतिनादितं। दरीप्रपाताम्बुरवैश्छन्नं शाद्वलपल्लवैः।
नीलाश्मचयसङ्घातैर्न्नैकवर्णं यथा नभः। धातुनिस्रावदिग्धाङ्गं सानुप्रस्थविभूषितं।
कीर्णं सुरगणैः कान्तैस्सनाकमिव कामगं। उच्छ्रितं सुविशालाग्रं समन्तात्परिसंस्रवं। ५२६५
सकाननदरीप्रस्थं श्वेताभ्रगणभूषितं। पवनाघातकासैश्च सर्व्वैस्स्यन्दनचन्दनैः।
तमालैस्तालवनयुतं मरिचक्षुपसंकुलं। पिप्पलीवल्लीकलिलं चित्रसिन्दूरपादपैः।
द्रुमैः सर्ज्जरसानाञ्च सर्व्वतः प्रतिशोभितं। प्रांशुसालवनैर्गुप्तं बहुचित्रवनैर्युतं।
सर्ज्जनिम्बाञ्जनवनं पाटलीकुलसङ्कुलं। हिन्तालैश्च तमालैश्च पुन्नागैश्चोपशोभितं।
जलेषु जलजैश्छन्नं स्थलेषु स्थलजैरपि। पङ्कजैर्द्रुमषण्डैश्च सर्व्वतः प्रतिभूषितं। ५२७०
जम्बूजम्बीरनृत्याढ्यं कद्रुकन्दलभूषितं। चम्पकाशोकबकुलं बिल्वतिन्दुकशोभितं।
कुटजैर्नागपुष्पैश्च समन्तादुपशोभितं। नागयूथसमाकीर्णं मृगसङ्घातशोभितं।
सिद्धचारणसङ्घैश्च सेवितप्रस्थगह्वरं। विद्याधरगणैर्नित्यमनुकीर्णशिलातलं।
सिंहशार्दूलसन्नादैः सततं प्रतिनादितं। सेवितं वारिधाराभिश्चन्द्रपादैश्च शोभितं।
स्तुतं त्रिदशगन्धर्व्वैरप्सरोभिरलङ्कृतं। वनस्पतीनां दिव्यानां पुष्पैरुच्चावचैश्चितं। ५२७५
शक्रवज्रप्रहाराणामनभिज्ञं कदाचन। दावाग्निभयनिर्म्मुक्तं देवानामपि संश्रयं।
प्रपातप्रभवाभिश्च सरिद्भिरुपशोभितं। जलशैवलसङ्घट्टैरुन्मिषन्तमिव श्रिया।
काननैरासमाकारैर्व्विशेषद्भिरिव श्रियं। स्थलीभिर्मृगवीथीभिः कान्ताभिरुपशोभितं।

पार्श्वैरुपलकल्माषैर्मेघैरिव विभूषितं । पादपक्षुपभूमीभिः सपुष्पाभिः समन्ततः ।
मण्डितं वनराजीभिः प्रमदाभिः पतिं यथा । दरीभिः सुन्दरीभिश्च कन्दरीभिस्तथैव च । ५९८०
तेषु तेष्ववकाशेषु सदारमिव शोभितं । ओषधीदीप्तशिखरं वानप्रस्थनिषेवितं ।
जातरूपैर्व्विनोद्देशैः कृत्रिमैरिव भूषितं । मूलेन सुविशालेन शिरसाऽभ्युच्छ्रितेन च ।
पृथिवीमन्तरीक्षञ्च गाहयन्तमिव स्थितं । ते तमासाद्य गोमन्तं रम्यं भूमिधरोत्तमं ।
रुचिरं रुरुहुः सर्व्वे वासायामरसन्निभाः । रुरुहुस्ते गिरिवरं खमूर्द्धमिव पक्षिणः ।
अवक्रममाणा वेगेन वैनतेयपराक्रमाः । ते तु तस्योत्तमं शृङ्गमारूढास्त्रिदशा इव । ५९८५
अगारं रुचिरं चक्रुर्मनसा निर्म्मितोपमं । निविष्टौ यादवौ दृष्ट्वा जामदग्न्यो महामुनिः ।
रामोऽभिमतमक्लिष्टमाप्रष्टुमुपचक्रमे । कृष्ण यास्याम्यहं तात पुरं सूर्पारकं विभो ।
युद्धे दीर्नास्ति वैमुख्यं संग्रामे दानवैरपि । प्राप्तवानस्मि यां प्रीतिं मार्गानुगमनादपि ।
सा मे कृष्णानुग्रस्त्वाति शरीरमिदमव्ययं । इदं तत् स्थानमुद्दिष्टं यत्रायुधसमागमः ।
युवयोर्व्विहितो देवैः समयः साम्परायिकः । देवानां मुख्य वैकुण्ठ विष्णो देवैरभिष्टुत ।
कृष्ण सर्व्वस्य लोकस्य शृणु मे नैष्ठिकं वचः । यदिदं प्रस्तुतं कर्म्म त्वया गोविन्द लौकिकं ।
मानुषाणां हितार्थाय साधु मानुषदेहिना । तस्यायं प्रथमः कल्पः कालेन तु नियोजितः ।
जरासन्धेन वै सार्द्धं संग्रामे समुपस्थिते । तत्रायुधबलञ्चैव रूपञ्च रणकर्क्कशं ।
स्वयमेवात्मना कृष्ण आत्मानं संविधत्स्व ह । चक्रोद्यतकरं दृष्ट्वा त्वां गदापाणिमाहवे ।
चतुर्दिगुणपीनांसं विभियादपि शतक्रतुः । अद्य प्रभृति ते यात्रा स्वर्गीका समुपस्थिता ।
पृथिव्याः समरार्थे च कीर्त्त्यर्थञ्च सताम्वर । वैनतेयस्य चाह्वानं वाहनध्वजकर्म्मणि ।
कुरु शीघ्रं महाबाहो गोविन्द वदताम्वर । युद्धकामा नृपतयस्त्वदिशाभिमुखोद्यताः ।
धार्त्तराष्ट्रस्य वशगास्तिष्ठन्ति रणवृत्तयः । राज्ञां निधनदृष्टार्थां वैधव्येनाधिवासिता ।
एकवेणीधरा चेयं वसुधा त्वां प्रतीक्षते । मयाहं कृष्ण नचिरं मंक्षिप्यारिविमर्द्दन ।
त्वयि मानुष्यमापन्ने युद्धे च समुपस्थिते । त्वरस्व कृष्ण युद्धाय दानवानां बधाय च ।
स्वर्गाय च नरेन्द्राणां देवतानां सुखाय च । सत्कृतोऽहं त्वया कृष्ण लौकिकेनैव सत्तमः ।
त्वया सत्कृतरूपेण येनाहं सत्कृतः स्वयं । साधयामि महाबाहो भवतः कार्य्यसिद्धये ।
स्मर्त्तव्यस्तत्र तत्राहं यत्र युद्धं भवेत् सदा । इत्युक्त्वा जामदग्न्यस्तु कृष्णमक्लिष्टकारिणं ।
जयाशिषा वर्द्धयित्वा जगामाभीप्सितां दिशं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गोमन्तारोहणे सप्तसप्ततितमोऽध्यायः ॥ ८७ ॥

॥ वैशम्पायन उवाच ॥ जामदग्न्ये गते रामे तौ यादवकुलोद्वहौ । गोमन्तशिखरे रम्ये चेरतुः कामरूपिणौ ।
वनमालाकुलोरस्कौ नीलपीताम्बरावुभौ । गौरश्यामतनू कान्तौ गगनस्थाविवाम्बुदौ ।
तौ शैलधातुदिग्धाङ्गौ युवानौ शिखरे स्थितौ । चेरतुस्तत्र कान्तेषु वनेषु रतिलालसौ ।

उदयन्तं निरीक्षन्तौ शशिनं ज्योतिषाम्बरं । उदयास्तमने चैव ग्रहाणां मारुताम्बरं ।
अथ सङ्कर्षणः श्रीमान् विना कृष्णेन वीर्य्यवान् । चचार तस्य शिखरे नगस्य नगसन्निभः ।
स पुष्पस्य कदम्बस्य प्रच्छाये निषसाद ह । वायुना मदगन्धेन वीज्यमानः सुखेन वै । ५५१०
तस्य तेनानिलौघेन सेव्यमानस्य तत्र वै । मद्यसंस्पर्शजो गन्धः संस्पृशन् घ्राणमागतः ।
तृष्णा चैनं विवेशाशु वारुणीप्रभवा तदा । शुशोष च मुखं तस्य मत्तस्येवापरेऽहनि ।
स्मारितः स पुरावृत्तममृतप्राशनं विभुः । तृषितो मदिरान्वेषी ततस्तं तरुमैक्षत ।
तस्य प्रावृषि पुष्पस्य पयसो जलदोज्झितं । तत्कोटरस्था मदिरा संजायत मनोहरा ।
तान्तु तृष्णाभिभूतात्मा पिबन्नार्त्त इवासकृत् । मदाच्च चलिताकारः समजायत स प्रभुः । ५५१५
तस्य मत्तस्य वदनं किञ्चिच्चलितलोचनं । घूर्णिताकारमभवच्छरत्कालेन्दुसप्रभं ।
कदम्बकोटरे जाता नाम्ना कादम्बरीति सा । वारुणी रूपिणी तत्र देवानाममृतारणी ।
कादम्बरीमदकलं विदित्वा कृष्णपूर्व्वजं । तिस्रस्त्रिदशनार्य्यस्तमुपतस्थुः प्रियम्वदाः ।
मदिरा रूपिणी भूत्वा कान्तिश्च शशिनः प्रिया । श्रीश्च देवी वरिष्ठा स्त्री स्वयमेवाम्बुजध्वजा ।
साञ्जलिप्रग्रहा देवी रौहिणेयमुपस्थिता । वारुण्यात्मचितं वाक्यमुवाच मदविक्लवं । ५५२०
यथं जयस्व दैत्यानां बलदेव दिवीश्वर । अहन्ते दयिता कान्ता वारुणी समुपस्थिता ।
त्वामेवान्वेषिणं श्रुत्वा स्वागतं वडवामुखे । शीर्णपुष्पेव वसुधा पर्य्येमि विमलानन ।
पुष्पचक्रानुलिप्तेषु केशरेषूषितं मया । अतिमुक्तेषु चान्येषु पुष्पस्तवकवत्सु च ।
साऽहं कदम्बमालीना मेघकाले सुखप्रिया । तृषितं मार्गमाणा त्वां तेन रूपेण च्छादिता ।
साऽस्मि पूर्व्वेण योगेन यथैवामृतमन्थने । समीपं प्रेषिता पित्रा वरुणेन तवानघ । ५५२५
सा यथैवार्णवगता तथैव वडवामुखे । त्वयोपभोक्तुमिच्छामि सत्यतस्त्वं हि मे गुरुः ।
न त्वाऽनन्त परित्यक्ष्ये भर्त्सिताऽपि त्वयाऽनघ । नाहं त्वया विना लोकानुत्सहे देव सेवितुं ।
मदिरानन्तरं कान्तिः सङ्कर्षणमुपस्थिता । मदेन गलितश्रोणी किञ्चिदाघूर्णितेक्षणा ।
प्रोवाच प्रणता साऽथ बद्धाञ्जलिपुटा सती । जयपूर्व्वेण योगेन सस्मितं योगमिच्छती ।
अहं चन्द्रादपि गुरुं सहस्रशिरसं प्रभुं । त्वद्गुणैरनुरक्ता त्वां यथा च मदिरा तथा । ५५३०
श्रीश्च पद्मालया देवी निधेया वक्षसोरसि । रौहिणेयोरसि शुभा मालेवामलतां गता ।
सा मालाममलां स्वस्य बलस्योरसि दर्शिता । पद्मं स्वं पद्महस्ता वै सङ्कर्षणमथाब्रवीत् ।
राम रामाभिरामस्त्वं वारुण्या समलङ्कृतः । कान्त्या मया च देवेश शरच्चन्द्रमा यथा ।
इदञ्च ते मया मौलिरुद्धृता वरुणालयात् । मध्ये श्रीषंवरस्य याते भानुरिवाबभौ ।
जातरूपमयञ्चैकं कुण्डलं वज्रभूषितं । आदिपद्मञ्च पद्माच दिव्यं श्रवणभूषणं । ५५३५
केयूराणि च नीलानि समुद्रार्हाणि भाजन । हारञ्च पीनतरलः समुद्राभ्यन्तरोचितः ।
देवेमां प्रतिगृह्णीष्व पौरणीं भूषणक्रियां । समयस्ते महाबाहो भूषणानामलङ्कृया ।

संस्थाप्य तमलङ्कारं तावत्तिष्ठः सुरस्त्रियः । प्रहृष्टमेव बलदेवो हि शारदेन्दुसमप्रभः ।
स समागम्य कृष्णेन सवलाऽञ्जीरवर्धना । मुदं लेभे पृथिवीशमो रामनाभ: शशी यथा ।
ताभ्यामुभाभ्यां संलापे वर्त्तमाने मुहुः पथा । वैनतेयो नभोऽभ्याशमभिचक्राम वेगितः । ५३५०
संग्राममुक्तस्तेजस्वी दैत्यप्रहरणाङ्कितः । देवतानां जयश्लाघी दिव्यस्त्रगनुलेपनः ।
सुप्तस्य शयने दिव्ये क्षीरोदे वरुणालये । विष्णोः किरीटं दैत्येन हृतं वैरोचनेन वै ।
तदर्थं तेन संग्रामः कृतो गुर्व्वर्थभोजना । किरीटार्थे समुद्रस्य मध्ये दैत्यगणैः सह ।
मोचयित्वा किरीटन्तु वैष्णवं पततांवरः । व्यत्यक्रामत वेगेन गगनं देवतालयं ।
स ददर्श गुरुं शैले विष्णुं कार्य्यान्तरागतं । तेन क्रीडावलम्बेन किरीटेन विराजता । ५३५५
स दृष्ट्वा मानुषं विष्णुं शैलराजशिरोगतं । प्रकाशवेशनिर्मुक्तं विमौलिमिव मानुषं ।
अभिज्ञस्तस्य भावानां गरुत्मान् पततांवरः । चिक्षेप खगतो मौलिं विष्णोः शिरसि चाहवन् ।
उपेन्द्रमूर्द्धि सा मौलिरपिनद्धा स्वयापतत् । शिरसः स्थाननिर्मुक्ता कृष्णस्यैवाभ्यशोभयत् ।
यथैव मेरुशिखरे भानुश्चन्द्रिने तथा । वैनतेयप्रयोगेण विदित्वा मौलिमागतां ।
कृष्णः प्रहृष्टवदनो रामं वचनमब्रवीत् । त्वरते खलु कार्य्यार्थो देवतानां न संशयः । ५३६०
यथेयमावयोः शैले संग्रामरचना कृता । वैरोचनेन सुप्तस्य मम मौलिर्महोदधौ ।
शक्रस्य सदृशं रूपं दिव्यमाख्याय सागरात् । पापरूपेण यो नीत आनीतोऽसौ गरुत्मता ।
सुव्यक्तं सन्निकृष्टः स जरासन्धो नराधिपः । लक्ष्यन्ते च ध्वजाग्राणि रथानां वातरंहसां ।
एतानि विजिगीषूणां शशिकल्पानि भूभृतां । छत्राण्यार्य्य विराजन्ते दर्शितानि सितानि च ।
अहो नृपस्योदग्रा विमलाश्छत्रपङ्क्तयः । अभ्यवर्त्तन्त नः शुभ्रा यथा खे हंसपङ्क्तयः । ५३६५
अहो द्युविमलाभानां शस्त्राणां विमलानन । प्रभाभास्करभामिश्राश्चरन्तीव दिशो दश ।
एतानि नूनं समरे पार्थिवैरायुधानि च । विमानि विनशिष्यन्ति मयि सर्व्वाणि संयुगे ।
काले खलु नृपः प्राप्तो जरासन्धो महीपतिः । आवयोर्युद्धनिकषः प्रथमः समरातिथिः ।
आर्य्य तिष्ठाव सहितौ न स्वस्वनागते नृपे । युद्धारम्भः प्रयोक्तव्यो बलं तावद्विमृश्यतां ।
एवमुक्त्वा ततः कृष्णः स्वस्थः संग्रामलालसः । जरासन्धवधप्रेप्सुश्चकार बलदर्शनं । ५३७०
वीक्षमाणश्च तान् सर्व्वान्नृपान् यदुवरोऽव्ययः । आत्मानमात्मनोवाच यत्पूर्व्वं दिवि मन्त्रितं ।
इमे ते पृथिवीपालाः पार्थिवे वर्त्मनि स्थिताः । ये विनाशं गमिष्यन्ति शास्त्रदृष्टेन कर्म्मणा ।
प्रोक्षितान् खल्विमान्मन्ये मृत्युना नृपसत्तमान् । स्वर्गगामीनि चाप्येषां वपूंषि प्रचकाशिरे ।
स्थाने भारपरिश्रान्ता वसुधेयं दिवङ्गता । एषा नृपतिसिंहानां बलौघैरभिपीडिता ।
मही निरन्तरा चेयं बलराशाभिवन्नता । अचिरेण खलु कालेन विविक्तं पृथिवीतलं । ५३७५
भविष्यति नरेन्द्रौघैराकीर्णञ्च नभस्तलं ।

इति श्रीमहामहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि जरासन्धाभिगमने अष्टनवतितमोऽध्यायः ॥ ९८ ॥

॥ वैशम्पायन उवाच ॥ जरासन्धस्ततः प्राप्तो नृपः सर्व्वमहीक्षितां । नराधिपैर्बहुभिरनुयातो महाद्युतिः ।
व्यायतोदग्रतुरगैर्विस्पष्टार्थसमाहितैः । रथैः सांग्रामिकैर्युक्तैरत्युग्रगतिभिः क्वचित् ।
हेमकक्ष्यैर्घण्टाचित्रैर्गजैर्वारिदोपमैः । महामात्रोत्तमारूढैः कल्पितैरपकल्पितैः
सारूढैः सादिभिर्युक्तैः प्रेङ्खमाणैः प्रवल्गितैः । वाजिभिर्वायुसङ्काशैः प्लवद्भिरिव पक्षिभिः ।　　५५३०
खड्गचर्म्मधरोदग्रैः पत्तिभिर्वल्गिताम्बरैः । सहस्रसंख्यैर्विमुक्तैरुत्पतद्भिरिवोरगैः ।
एवं चतुर्व्विधैः सैन्यैः प्रचलद्भिरिवाम्बुदैः । नृपोऽभियातो बलवान् जरासन्धो धृतव्रतः ।
स रथैर्नेमिनिर्घोषैर्गजैश्च मदस्राविभिः । हेषद्भिश्चापि तुरगैः क्ष्वेडिताश्चैश्च पत्तिभिः ।
सन्नादयन् दिशः सर्व्वाः सर्व्वांश्चैव गुहाश्रयान् । स राजा सागराकारः ससैन्यः प्रत्यदृश्यत ।
तद्बलं पृथिवीशानां दृप्तयोधजनाकुलं । क्ष्वेडितास्फोटितरवं मेघसैन्यमिवाबभौ ।　　५५३५
रथैः पवनसम्पातैर्गजैश्च जलदोपमैः । तुरगैश्च सिताभ्राभैः पत्तिभिश्चापि दंशितैः ।
व्यामिश्रं तद्बलं भाति पक्षिद्विपरयाकुलं । वर्षान्ते सागरगतं यथाभ्रपटलं तथा ।
ततस्ते महीपाला जरासन्धपुरोगमाः । परिवार्य्य गिरिं सर्व्वे निवेशाय प्रचक्रिरे ।
बभौ तस्य निविष्टस्य बलस्यौघः शिबिरस्य वै । पुरे पर्व्वणि पूर्णस्य यथा रूपं महोदधेः ।
वीतरात्रेऽथ काले तु नृपास्ते कृतकौतुकाः । आरोहणार्थं शैलस्य समेता युद्धलालसाः ।　　५५४०
समन्तादीरिताः सर्व्वे गिरिप्रस्थेषु ते नृपाः । निविष्टा मन्त्रयामासुर्युद्धकालकृतत्वराः ।
ततस्तु तुमुलः शब्दः शुश्रुवे पृथिवीक्षितां । युगान्ते भिद्यमानानां सागराणां यथा स्वनः ।
तेषां सकञ्चुकोष्णीषाः स्थविरा वेत्रपाणयः । चेरुर्मा शब्द इत्येवं ब्रुवन्तो राजशासनात् ।
तस्य रूपं बलस्यासीन्निःशब्दस्तिमितस्य वै । लीनमीनग्रहस्येव निःशब्दस्य महोदधेः ।
तस्मिन् स्तिमितनिःशब्दे योगादिव महार्णवे । जरासन्धो बृहद्वाक्यं बृहस्पतिरिवाददे ।　　५५४५
शीघ्रं समभिवर्त्तन्तां बलानीह महीक्षितां । सर्व्वतः पर्व्वतस्यास्य बलौघैः परिवार्य्यतां ।
अश्मयन्त्राणि युज्यन्तां क्षेपणीयाश्च मुद्गराः । ऊर्द्ध्वश्चापि प्रवाह्यन्तां प्रासा वै तोमराणि च ।
ऊर्द्ध्वं प्रक्षेपणार्थाय दृढानि च लघूनि च । अस्त्रपातविघातानि क्रियन्तामाशु शिल्पिभिः ।
शूराणां युध्यमानानां प्रमत्तानां परस्परं । यथा न पतते बाह्यस्तथा शीघ्रं विधीयतां ।
दार्य्यतामेष टङ्कौघैः खनित्रैश्च नगोत्तमः । नृपाश्च युद्धमार्गज्ञा विन्यस्यन्तामदूरतः ।　　५५५०
अद्यप्रभृति सैन्यैर्मे गिरिरोधः प्रवर्त्त्यतां । यावदेतौ पातयामो वसुदेवसुतावुभौ ।
अचलोऽयं शिलायोनिः क्रियतां निश्चलाचलः । आकाशमपि बाणौघैर्निःसम्पातं विधीयतां ।
मयाऽनुशिष्टास्तिष्ठन्तु गिरेर्भूमिषु भूमिपाः । तेषु तेष्ववकाशेषु रोधमास्थाप्यतां गिरिः ।
मद्रः कलिङ्गाधिपतिश्चेकितानः सवाह्लिकः । काश्मीरराजो गोनर्द्दः करूषाधिपतिस्तथा ।
द्रुमः किम्पुरुषश्चैव पार्व्वतीयाश्च मानवाः । पर्व्वतस्यापरं पार्श्वं क्षिप्रमारोहयन्त्वमी ।　　५५५५
पौरवो वेणुदारिश्च वैदर्भः सोमकस्तथा । रुक्मी च भोजाधिपतिः सूर्य्याक्षश्चैव मालवः ।

पञ्चालानामधिपतिर्द्रुपदश्च नराधिपः । विन्दानुविन्दावावन्त्यौ दन्तवक्रश्च वीर्य्यवान् ।
छागलिः पुरुमित्रश्च विराटश्च महीपतिः । कौशाम्ब्यो मालवश्चैव शतधन्वा विदूरथः ।
भूरिश्रवास्त्रिगर्त्तश्च बाणः पञ्चनदस्तथा । उत्तरं पर्व्वतोद्देशमेते दुर्गसहा नृपाः ।
आरोहन्तु विमर्द्दन्तो वज्रप्रतिमगौरवाः । उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः । ५५००
एकलव्यो दृढाश्वश्च क्षत्रधर्म्मा जयद्रथः । उत्तमौजास्तथा शाल्वः केरलेयश्च कौशिकः ।
वैदिशो वामदेवश्च सुकेतुश्चापि वीर्य्यवान् । पूर्व्वं पर्व्वतनिर्य्यूहमेतेष्वायान्तमस्तु नः ।
दारयन्तोऽभिधावन्तु वाता इव बलाहकान् । अहञ्च दरदश्चैव चेदिराजश्च सङ्गताः ।
दक्षिणं शैलनिचयं दारयिष्याम दंशिताः । एवमेष गिरिः क्षिप्रं समन्तादर्द्दितो बलैः
वज्रप्रपातविषमं प्राप्नोतु कदनं महत् । गदिनो ये गदाभिस्ते परिघैः परिघायुधाः । ५५०५
अपरे विविधैः शस्त्रैर्दारयन्तु नगोत्तमं । एष भूमिधरोऽद्यैव विषमोच्चिकाषितः ।
कार्य्यो भूमिसमः सर्व्वो भवद्भिर्व्वसुधाधिपैः । जरासन्धवचः श्रुत्वा पार्थिवेषु च शासनं ।
गोमन्तं वेष्टयामासुः सागराः पृथिवीमिव । उवाच राजा चेदीनां देवानां मघवानिव ।
किन्नो युद्धेन दुर्गेऽस्मिन् गोमन्ते च नगोत्तमे । दुरारोहोऽयमत्युच्चः प्रांशुपादपसङ्कटः ।
काष्ठस्तूपैश्च बहुभिः परिवार्य्य समन्ततः । अद्यैवादीप्यतां क्षिप्रमनलमन्थनकर्म्मणा । ५५१०
क्षत्रियाः कुसुमारा हि रणे सायकयोधिनः । न युक्ताः पर्व्वतारोहे नियोक्तुं पादयोधिनः ।
न नाम प्रतिबन्धेन न चावस्कन्दकर्म्मणा । शक्य एष गिरिस्तात देवैरप्यभिमर्द्दितुं ।
दुर्गयुद्धं क्रमः श्रेयान्नोद्ययुद्धेन पार्थिवाः । भक्तोदकेन्धनक्षीणाः पात्यन्ते गिरिसंश्रिताः ।
वयं बहव इत्येवं नात्येष निपुणो नयः । यादवौ नावमन्तव्यौ द्वावप्येतौ रणे स्थितौ ।
अविज्ञातबलावेतौ श्रूयेते देवसम्मितौ । कर्म्मभिस्तु परौ विद्म बालावतिबलान्वितौ । ५५१५
दुष्कराणीह कर्म्माणि कृतवन्तौ यदूत्तमौ । शुष्ककाष्ठस्तूपैर्वैश्च सर्व्वतः पर्व्वतोत्तमं ।
अग्निना दीपयिष्यामो दग्धेनौ गतचेतनौ । यदि चेन्निष्क्रमिष्येते दह्यमानावितोऽग्निकं ।
समेत्य पातयिष्यामस्त्यक्ष्येते जीवितं ततः । वाक्यमेतत्तु रुरुचे सर्व्वेषां महीक्षितां ।
यदुक्तं चेदिराजेन नृपाणां हितकाङ्क्षिणा । ततः काष्ठस्तूपैर्मेध्यैः शुष्कशाखैश्च पादपैः ।
उपादीप्यत शैलेन्द्रः सूर्य्यपादैरिवाम्बुदः । ददृशुः सर्व्वतस्तत्र पावकं तत्र पार्थिवाः । ५५२०
यथोद्देशं यथावातं शैलस्य लघुविक्रमाः । स वायुदीपितो वह्निरुत्पपात समन्ततः ।
सधूमज्वालमालाभिर्भाभिः खं दीपयन्निव । सोऽनलः पवनाधूतः काष्ठसञ्चयमूलवान् ।
ददाह शैलं श्रीमन्तं गोमन्तं कान्तपादपं । स दह्यमानः शैलेन्द्रो मुमोच विपुलाः शिलाः ।
शतशः शतधा भूत्वा महाभ्राकारदर्शनाः । स चित्रभानुः शैलेन्द्रं भाभिर्भानुरिवाम्बुदं ।
आश्लिष्यतीव विधिवत्समन्तादर्चिरुद्धतः । धातुभिः पच्यमानैश्च ज्वलद्भिश्चैव पादपैः । ५५२५
उद्भ्रान्तश्वापदो रौति तुद्यमान इवाद्रिराट् । सतप्तो दह्यमानस्तु स शैलः कृष्णवर्त्मना ।

गीतीर्णिव नृत्यमाना काननान्तरराजती । वह्निना दीपिताश्चापि गिरिर्भातिविराजते ।
धूमान्धकारगर्भं तन्नृत्यमान इवाम्बुदे । विशिष्टोपलसङ्घातः कर्षणाङ्गारवर्षणः ।
गिरिर्भात्यनलोद्गारैर्व्याप्तश्चिरिवाम्बुदः । प्रपातप्रस्रवोच्छ्रितो धूमसम्मूर्च्छितोदरः ।
सगिरिर्भस्मतां यातो युगान्ताग्निहतोपमः । विक्रान्तास्तस्य पार्श्वेभ्यः सर्वा दग्धार्द्धदेहिनः । ५५१०
समन्तः पृथुमूर्द्धानो निःश्वसन्निवेक्षणाः । उत्पत्योपत्य गगनात् पुनः पेतुरवाङ्मुखाः ।
वह्नुरुर्जिता सिंहाः शार्दूलाद्यानलताविताः । मुमुचुः पादपायेव दारुनिर्यासजं जलं ।
वज्रावृद्धगनिर्व्यातो भस्माङ्गारामिविन्दवः । धूमच्छाया च गगने दर्पितालोडदर्शना ।
त्यज्यमानमहामात्रैर्विहगैः श्वापदैरपि । गिरिर्भीकल्पमायाति प्राग्नभ्यात्तं कृष्णवर्त्मनः ।
स मुमोच शिलाः पीनस्नातोदयशिलोच्चयः । वह्निना पुरुस्तस्य यथा श्याह्रारितस्तथा । ५५१५
आदीप्य तन्तु शैलेन्द्रं क्षत्रिया व्यूहदंशिताः । अर्द्धकामसमरकान्ताः पात्रेनाभिताडिताः
दह्यमाने नगश्रेष्ठे शीर्य्यमाणे महाद्रुमे । धूनमाने नगामस्थे मूले शिथिलनाकृते ।
सरोषं हि तदा रामो वचनं केशिसूदनं । बभाषे पद्मपत्राक्षं स साक्षान्मधुसूदनं ।
दह्यतेऽयं गिरिस्तात ममानुशिखरद्रुमः । आवयोः कृष्ण वैरेण वैरिभिर्वसुधाधिपैः ।
पश्य कृष्णानलोष्णार्त्तैः सधूमाभाः समन्ततः । वनतो विरमन्तीव नगाभ्याशे खगोत्तमाः । ५५२०
अयं यद्यावयोरर्थे गोमन्तस्तात दह्यते । अयशस्यमिदं लोके कोलाहलं भविष्यति ।
तदस्यानृत्यहेतोर्हि नगस्य समसन्निभ । क्षत्रियान्निहनिष्यामि दोर्भ्यामेव नृपाम्बर ।
एते ते क्षत्रियाः सर्व्वे गिरिमादीप्य दंशिताः । स्थिरतस्तात दृश्यन्ते ययादिशं युयुत्सवः ।
एवमुक्त्वा गिरेः शृङ्गाच्छृङ्गादिवोडुराट् । निपपात बलः श्रीमान् वनमालाधरो युवा ।
कादम्बरीमदक्षीबो नीलवासाः सितप्रभः । स शारदेन्दुसङ्काशो वनमालाश्रितोदरः । ५५२५
कान्तिकरुण्डलधरश्चारुमौलिरवाङ्मुखः । निपपात नरेन्द्राणां मध्ये केशवपूर्व्वजः ।
अवप्लुते ततो रामे कृष्णः कृष्णाम्बुदोपमः । गोमन्तशिखरात्क्रोमानाप्लुतोऽमितविक्रमः ।
ततः सम्पीडयामास पद्भ्यां गिरिवरं हरिः । स पीडितो गिरिस्तेन निर्झरस्य समन्ततः ।
जलाकुलोपलस्तत्र प्रस्नुतो द्विरदो यथा । स तेन वारिणा वह्निस्तत्क्षणात् प्रशमं गतः ।
कल्पान्ते वारिधाराभिर्मेघजालैरिवांशुमान् । सिंहाररसितनिर्घोषः पीतवासा घनाकृतिः । ५५३०
किरीटमूर्द्धा सौम्यास्यः पुण्डरीकनिभेक्षणः । श्रीवत्सवक्षाः सुमुखः सहस्राक्षसमद्युतिः ।
रामादनन्तरं कृष्णः सुतो वै वीर्य्यवांस्ततः । ताभ्यामवप्लुताभ्याञ्च चरणैः पीडितो गिरिः ।
मुमोच सलिलोत्पीडां तीव्रपावकशान्तये । सलिलोत्पीडनं दृष्ट्वा पार्थिवा भयमाविशन् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गोमन्तदाहे नवनवतोऽध्यायः ॥ ९९ ॥
॥ वैशम्पायन उवाच ॥ तौ नगादाप्लुतौ दृष्ट्वा वसुदेवसुतावुभौ । कृत्स्नं नरवरानीकं सर्व्वं संमूढवाहनं ।
बाहुप्रहरणौ तौ तु चेरतुस्तत्र यादवौ । मकराविव संरब्धौ समुद्रक्षोभणावुभौ । ५५३५

ताभ्यां मृधे प्रविष्टाभ्यां यादवाभ्यां मतिस्त्वभूत् । आयुधानां पुराणानामादाननृतलक्षणा ।
ततोऽम्बरतलाद्भूयः पतन्ति स्म महात्मनोः । मध्ये राजसहस्रस्य समरप्रतिकाङ्क्षिणोः ।
यानि वै माथुरे युद्धे प्राप्तान्यायुधयोधिनोः । तान्यम्बरात् पतन्ति स्म दिव्यान्याहवसंसदे ।
लेलिहानानि दीप्तानि दीप्ताग्निसदृशानि वै । निक्षिप्य यानि तत्रैव तानि प्राप्तौ तु यादवौ ।
क्रव्यादैरनुयातानि मूर्त्तिमन्ति बृहन्ति च । तृषितान्याहवे भोक्तुं नृपमांसानि सर्व्वशः । ५५१०
दिव्यस्रग्दामधारीणि वासयन्तीव खेचरान् । प्रभया भासमानानि दंशितानि दिशो दश ।
हलं सम्वर्त्तकं नाम सौनन्दं मुषलं तथा । चक्रं सुदर्शनं नाम गदां कौमोदकीं तथा ।
चत्वार्य्येतानि तेजांसि विष्णुप्रहरणानि वै । ताभ्यां समवतीर्णानि यादवाभ्यां महामृधे ।
जग्राह प्रथमं रामो हलमप्रतिमं रणे । सर्पन्तमिव सर्पेन्द्रं दिव्यमालाकुलं महत् ।
सव्येन सात्वतां श्रेष्ठो जग्राह मुषलोत्तमं । सौनन्दं नाम वक्तव्यमिरानन्दकरं द्विषां । ५५१५
दर्शनीयञ्च लोकेषु चक्रमादित्यवर्चसं । नाम्ना सुदर्शनं नाम प्रीतो जग्राह केशवः ।
देवैर्निगदितार्थस्य गदा तस्यापरे करे । निषक्ता कुमुदाक्षस्य नाम्ना कौमोदकीति सा ।
तौ सप्रहरणौ वीरौ साक्षाद्विष्णुतनूपमौ । समरे रामगोविन्दौ रिपूंस्तान् प्रत्ययुध्यतां ।
सायुधप्रग्रहौ वीरौ तावन्योन्यमयावुभौ । पूर्व्वजानुजसंज्ञौ तौ रामगोविन्दलक्षणौ ।
समरेऽप्रतिरूपौ तौ विष्णुरेको द्विधाकृतः । द्विषन्तु प्रतिकुर्व्वाणौ पराक्रान्तौ यथेश्वरौ । ५५२०
हलमुद्यम्य रामस्तु सर्पेन्द्रमिव कोपितं । चचार समरे वीरो द्विषतामन्तकोपमः ।
विकर्षयन् रथवृन्दानि क्षत्रियाणां महात्मनां । चकार रामः सफलं नागेषु च हयेषु च ।
कुञ्जरान् लाङ्गलोत्क्षिप्तान्मुषलाक्षेपताडितान् । रामोऽभिरामः समरे निर्ममन्थ यथाऽचलान् ।
ते बध्यमाना रामेण समरे क्षत्रियर्षभाः । जरासन्धान्तिकं भीता विरथाः प्रतिजग्मिरे ।
तानुवाच जरासन्धः क्षत्रधर्म्मे व्यवस्थितः । धिगेतां क्षत्रवृत्तिं वः समरे कातरात्मनां । ५५२५
पराक्रान्तस्य समरे विरथस्य पलायतः । भ्रूणहत्यामिवासह्यां प्रवदन्ति मनीषिणः ।
पत्तिनो भुवि चैकस्य गोपस्याल्पवलीयसः । भीताः किं विनिवर्त्तध्वं धिगेतां क्षत्रवृत्तितां ।
क्षिप्रं समभिवर्त्तध्वं मम वाक्येन चोदिताः । अथवा तिष्ठत रथैः प्रेक्षकाः समवस्थिताः ।
यावदेतौ रणे गोपौ प्रेषयामि यमक्षयं । ततस्ते क्षत्रियाः सर्व्वे जरासन्धेन चोदिताः ।
क्षिपन्तः शरजालानि हृष्टा योद्धुमुपस्थिताः । ते हयैः काञ्चनापीडै रथैश्चेन्दुसमप्रभैः । ५५३०
नागैश्चाम्भोदसङ्काशैर्महामात्रप्रचोदितैः । सतनुत्राः सनिस्त्रिंशाः सायुधावरणाम्बराः ।
स्वारोपितधनुष्मन्तः सतूणीराः ससायकाः । सखड्गाससिधिनः सर्व्वे चारुचामरवीजिताः ।
रणावनिगता रेजुः स्यन्दनस्था महीक्षितः । तौ युद्धरङ्गापतितौ विगाहन्तौ युधाम्बरं ।
वसुदेवसुतौ वीरौ युयुत्सू प्रत्यदृश्यतां । तद्युद्धमभवत्तत्र तयोस्तेषाञ्च संयुगे ।
सायकोत्सर्गबहुलं गदानिर्घातदारुणं । ततः शरसहस्राणि मतौ क्षत्रियौ रणेविभौ । ५५३५

तस्मात्तु योधमुख्यौ तावभिदुद्रोवतुस्तदा । गदाभिरेव गुर्वीभिः शैलाविव महद्रवे ।
अर्द्यमानौ महेष्वासौ यादवौ न चकम्पतुः । ततः क्रुद्धोऽम्बुदाकारः सङ्कर्षणमहाधरः ।
अवर्द्धत महातेजा वातयुक्तो यथाऽनलः । स चक्रेणार्कतुल्येन दीप्यमानेन तेजसा ।
चिच्छेद समरे वीरो नृगजाश्वसहारथान् । गदानिपातनिहता वासुदेवस्य संयुगे ।
न शेकुस्ते रणे स्थातुं पार्थिवा नष्टचेतसः । चक्रधारानिकृत्तानि चिच्छिदाविव मरीचिभिः ।                ५५८०
रथयूथानि भग्नानि न शेकुश्चलितुं रणे । मुसलाभिप्रभग्नाश्च कुञ्जराः षष्टिहायनाः ।
घना इव घनापाये भग्नदन्ता विचुक्रुशुः । चक्रानलज्वालहताः सादिनः सपदातयः ।
पेतुः परामवस्तत्र यथा वज्रहताश्रयाः । चक्रलाङ्गलनिर्दग्धं तत्सैन्यं विद्रुतं क्षतं ।
युगान्तोपहतप्रख्यं सर्व्वं पतितमाबभौ । आक्रीडभूमिं दिव्यानामायुधानां वपुष्मतां ।
वैष्णवानां नृपास्ते तु द्रष्टुमप्यसमर्थाः । केचिद्भयाः संत्रस्ताः केचिन्निहतपार्थिवाः ।                ५५८५
भग्नैरुत्तकाश्च रथे विशीर्णा धरणीतले । तस्मिन् विमर्द्दे घोरे चक्रलाङ्गलसंप्लवे ।
दारुणानि प्रवृत्तानि रक्षांस्यौत्पातिकानि च । सान्त्वयन्तां कुञ्जराणां पाटितानाञ्च कायवत् ।
अन्तो न शक्यते द्रष्टुं नगानाम् इवाभितः । निपातितनरेन्द्रा सा रुधिराक्ता रणक्षितिः ।
योषेव चन्दनाक्ताङ्गी भैरवा प्रतिभाति वै । नरकेशाश्चिमज्जाभिः सादितानाञ्च दन्तिनां ।
रुधिरौघाप्लवा तत्र छादयामास मेदिनीं । तस्मिन्महाभोगवक्रे नरवाहनसङ्कुले ।                ५५९०
शिवानामशिवैः शब्दैर्नादिते घोरदर्शने । मांसशोणितसञ्चारे रुधिराम्बुह्रदाकुले ।
अन्तकाक्रान्तमध्ये नागदेहैः समावृते । कपालैर्बहुभिर्व्याप्ते तुरगैश्चावदारितैः ।
कबन्धैश्च समुत्थैश्च नादितप्रतिनादिते । निपाते पृथिवीशानां मृत्युसाधारणे रणे ।
कृष्णः शत्रुवधं कर्त्तुं चचारात्मकदम्बकः । युगान्तार्कप्रभश्चक्रं कालो येवायसो दृढं ।
दृष्ट्वा सैन्यावनिगतो बभाषे कैशवो नृपान् । किन्न युध्यत वै शूरा हस्त्यश्वरथसंयुताः ।                ५५९५
किमिदं गम्यते शूराः कृतास्त्रा दृढनिश्चयाः । अयं सपूर्व्वजः सङ्ख्ये पदातिः प्रमुखे स्थितः ।
सुदृढेनापि रणे भवन्तो येन पालिताः । स इदानीं जरासन्धः किमर्थं नाभिवर्त्तते ।
एवमुक्ते तु नृपतिर्दरदो नाम वीर्यवान् । रामं हलायुधभुजं प्रत्ययात् सैन्यमध्यग ।
बभाषे स तु ताम्राक्षमुत्थाणमिव सेवनी । एह्येहि राम युध्यस्व मया सार्द्धमरिन्दम ।
तत्र युद्धं तयोरासीद्रामस्य दरदस्य च । स्वेच्छाकवरिष्ठाभ्यां कुञ्जराभ्यामिवोत्कटा ।                ५६००
पीडयित्वा ततः स्कन्धे रामो दरदमाहवे । बलेन बलिनां श्रेष्ठो मुसलेनावपोथयत् ।
स कायगतमूर्द्धा वै मुसलेनावपोथितः । पपात दरदो भूमौ दारिताङ्ग इवाचलः ।
रामेण निहते तस्मिन् दरदे राजसत्तमे । जरासन्धस्य राज्ञस्तु रामेणासीत् समागमः ।
महेन्द्रस्येव वृत्रेण सङ्ग्रामो लोमहर्षणः । गदे गृहीत्वा विक्रान्तावन्योन्यमभ्यधावतां ।
कम्पयन्तौ भुवं वीरौ तावुद्यतमहागदौ । ददृशाते महात्मानौ गिरी सशिखराविव ।                ५६०५

जरासन्धस्य निधनं ये चान्ये तत्समा नृपाः । पर्य्याप्तो तत्समाप्तौ च नः कर्णचेदिकुलोद्वह ।
यदूनां प्रथमा बन्धुस्त्वं हि सर्व्वमहीक्षितां । अतः प्रभृति संग्रामान् द्रक्ष्यसे चेदिसत्तम ।
नाकं नोपगमित्येवं संग्रामं रणवृत्तयः । कथयिष्यन्ति लोकेऽस्मिन् ये धरिष्यन्ति पार्थिवाः ।
वाञ्छां पराजयं युद्धे गोमन्तेऽपलसत्तमे । श्रवणाद्धारणाच्चास्य स्वर्गलोके भजन्ति ते ।
तद्गच्छाम महाराज करवीरं पुरोत्तमं । त्वयोद्दिष्टेन मार्गेण चेदिराज शिवाय वै ।        ६११०
ते स्यन्दनगताः सर्व्वे पवनोत्पातिनिर्हयैः । भेजिरे दीर्घमध्वानं मूर्त्तिमन्त इवाग्नयः ।
ते चिराचोषिताः प्राप्ताः करवीरं पुरोत्तमं । शिवाय च शिवे देशे निविष्टास्त्रिदशोपमाः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि करवीरपुराभिगमने शततमोऽध्याय. ॥ १०० ॥

॥ वैशम्पायन उवाच ॥ तानागतान् विदित्वाऽथ शृगालो युद्धदुर्मदः । पुरस्य धर्षणं मत्वा निर्ज्जगामेन्द्रविक्रमः ।
रथेनादित्यवर्णेन भास्वता रणगामिना । आयुधप्रतिपूर्णेन नेमिनिर्घोषनादिना ।
मन्दराचलकल्पेन चित्राभरणभूषिणा । अव्यग्रमायकैस्तूणैः पूर्णेनार्णवघोषिणा ।        ६११५
हर्य्यश्वेनाशुगतिनाऽमरेण शिवरंह्वसि । हेमकूवरगर्भेण दृढाक्षेणाभिगामिना ।
सुबन्धुरेण दीप्तेन पतच्चित्ररंहसा । खगानेव शक्रस्य हर्य्यश्वेन रथाद्रिणा ।
सावित्रे नियमे पूर्णे यं ददौ सविता स्वयं । आदित्यरश्मिभिरिव रश्मिभिर्यो नियम्यते ।
तेन स्यन्दनमुख्येन द्विषत्स्यन्दनघातिना । स शृगालोऽभ्ययात् कृष्णं शलभः पावकं यथा ।
चापपाणिः सुतीक्ष्णेषुः कवची हेममालिकः । सितप्रावरणोष्णीषः पावकाकारलोचनः ।        ६१२०
मुहुर्म्मुहुर्ज्ज्यां चपलं विक्षिपन्दुःसहं धनुः । निःश्वसन् रोषजं वायुं सानलज्वालमण्डलं ।
साभिभूषणपङ्क्तीनां दीप्तो मरुरिवाचलः । रथस्थ इव शैलेन्द्रः शृगालः प्रत्यदृश्यत ।
तस्यार्गमितशब्देन रथनेमिस्वनेन च । गुरुत्वेन च नाम्यन्तो चचालोर्व्वी यथा पुरा ।
तमापतन्तं श्रीमन्तं मूर्त्तिमन्तमिवाचलं । शृगालं लोकपालाभं दृष्ट्वा कृष्णो न विव्यथे ।
शृगालस्यापि संरब्धः स्यन्दनेनाशुगामिना । समीपे वासुदेवस्य युयुत्सुः प्रत्यदृश्यत ।        ६१२५
वासुदेवं स्थितं दृष्ट्वा शृगालो युद्धलालसः । अभिदुद्राव वेगेन मेघराशिरिवाचलं ।
वासुदेवः स्मितं कृत्वा प्रतियुद्धाय तस्थिवान् । तद्युद्धमभवत्ताभ्यां समरे घोरदर्शनं ।
उभाभ्यामपि मत्ताभ्यां कुञ्जराभ्यां यथा वने । शृगालस्त्वब्रवीत् कृष्णं समरे समुपस्थितं ।
युद्धरागेण तेजस्वी मोहाश्वलितगौरवः । गोमन्ते युद्धमार्गे वै यत्त्वया कृष्ण चेष्टितं ।
अनायकानां सर्व्वाणां नृपाणां दुर्ब्बले बले । स मे सुविदितः कृष्ण क्षत्रियाणां पराजयः ।        ६१३०
कृपणानामसत्त्वानामयुद्धानां रणोत्सवे । किमिदानीं यथाकामं स्थितोऽहं पार्थिवे पदे ।
क यास्यसि मया रुद्धो रणेष्वपरिनिष्ठितः । न चाहमेकं सबलो युक्तस्त्वां योद्धुमाहवे ।
अहमेकस्त्वमप्येको द्वौ युध्याव रणे स्थितौ । किं जनेन निरस्तेन त्वं वाऽहं वा रणे स्थितः ।
हते मयि त्वमप्येको वासुदेवो भविष्यसि । धर्म्मयुद्धेन निधनं प्रयात्वेकतरो रणे ।

लोकेऽस्मिन् वासुदेवोऽहं भविष्यामि हते त्वयि । शृगालस्य वचः श्रुत्वा वासुदेवः क्षमापरः । ५९७५
तिष्ठतः प्रहरस्वेति तमुक्त्वा चक्रमाददे । ततः सायकजालानि शृगालः क्रोधमूर्च्छितः ।
चिक्षेप कृष्णे घोराणि युद्धाय लघुविक्रमः । अस्त्राणि यानि चान्यानि मुषलाद्यानि संयुगे ।
पातयामास गोविन्दे स शृगालः प्रतापवान् । शृगालप्रहितैरस्त्रैः पावकज्वालमालिभिः ।
निर्दयाभिहतः कृष्णः स्थितो गिरिरिवाचलः । सोऽस्त्रप्रहाराभिहतः किञ्चिद्रोषसमन्वितः ।
चक्रमुद्यम्य गोविन्दः शृगालोरसि चाक्षिपत् । तं रथस्थं प्रमाणस्थं शृगालं युद्धदुर्मदं । ५९८०
जघान समरे चक्रं जातदर्पं महाबलं । निहत्य समरे क्रूरं शृगालं युद्धकामुकं ।
ततः सुदर्शनं चक्रं पुनरायाद्धरेः करं । चक्रेणोरसि निर्भिन्नः स गतासुर्गतोत्सवः ।
पपात धनजङ्घाढ्यो शृगालोऽद्रिरिवाहतः । निशम्य तं निपतितं वज्रपातादिवाचलं ।
तस्य सैन्यान्यपययुर्विमनांसि हते नृपे । केचित् प्रविश्य नगरं करुणाभिहता भृशं ।
रुरुदुर्दुःखसन्तप्ता भर्तृशोकाभिपीडिताः । केचित्तत्रैव शोचन्तः स्मरन्तः सुकृतानि च । ५९८५
पतितं भूमिपं भूमौ न त्यजन्ति स्म दुःखिताः । ततो मेघनिनादेन स्वरेणारिविमर्द्दनः ।
कृष्णः कमलपत्राक्षो जनानामभयं ददौ । चक्रोद्यितेन हस्तेन राजताङ्गुलिपर्वणा ।
न भेतव्यं न भेतव्यमिति तानभ्यभाषत । नास्य पापस्य दोषेण निराबाधकरं जनं ।
घातयिष्यामि समरे नेदं क्रूरव्रतं भृशं । अश्रुपूर्णमुखा दीनाः क्रन्दमाना भृशं तदा ।
पतितोऽयं शृगालस्य भ्रष्टः संलोलमानसः । ते स्म पश्यन्ति पतितं धरण्यां धरणीपतिं । ५९९०
चक्रनिर्द्दारितोरस्कं भिन्नशृङ्गमिवाचलं । विलपन्ति स्म समरे सचिवाः सप्रजा भृशं ।
बाष्पपातेक्षणा दीनाः शोकस्य वशमागताः । तेषां रुदितशब्देन पौराणां विविधैः स्वरैः ।
महिष्यस्तस्य निष्पेतुः सपुत्त्रा रुदिताननाः । तास्तं निपातितं दृष्ट्वा श्लाघ्यं भूमिपतिं पतिं ।
स्तनानारुज्य करजैर्भृशार्त्ताः पर्य्यदेवयन् । उरांस्यङ्गविशेषांश्च शिरांस्यन्याकुलान्यपि ।
निर्द्दयं ताडयन्त्यस्ता विस्वरं रुरुदुः स्त्रियः । तस्योरसि सुदुःखार्त्ता रुदितक्लिन्नलोचनाः । ५९९५
पेतुरूर्द्धभुजाः सर्व्वा कृत्तमूला लता इव । तासां वाष्पाम्बुपूर्णानि नेत्राणि नृपयोषितां ।
वारिविप्रहतानीव पद्मानि चकाशिरे । ताः पतिं पतितं भूमौ रुदन्त्यः करैः ताडिताः ।
लालप्यमानाः करुणं योषितः पर्य्यदेवयन् । पुत्त्रञ्चास्य पुरस्कृत्य बालं प्रस्नुतलोचनं ।
शक्रदेवं पितुः पार्श्वे द्विगुणं रुरुदुः स्त्रियः । अयन्ते वीर विक्रान्तो बालः पुत्त्रो न पण्डितः ।
त्वद्विहीनः कथमयं पदे स्थास्यति पैतृके । कथमेकपदे त्यक्त्वा गतोऽस्यन्तःपुरं परं । ६०००
अतृप्तास्तव भोग्यानां किं कुर्म्मो विधवा वयं । तस्य पद्मावती नाम महिषी प्रमदोत्तमा ।
पुत्त्रमाता सुतं गृह्य वासुदेवमुपस्थिता । यस्त्वया पातितो वीर रणश्लाघेन कर्म्मणा ।
तस्य प्रेतगतस्यायं पुत्त्रस्त्वां शरणं गतः । यदि त्वां प्रणमेतायं कुर्य्याद्वा शासनं तव ।
नायमेकप्रहारेण जनस्तप्येत दारुणं । यदि कुर्य्यादयं मूढस्त्वयि बान्धवकं विधिं ।

नैवं परीत: कृपण: वैरेण भरणोत्सवे । भयमस्य विपन्नस्य बान्धवस्य तवानघ । ५७०५
त्वमतीरच्छ्रतां वीर पुत्र: पुत्र इवात्मज: । तस्यास्तद्वचनं श्रुत्वा सत्क्रियां यदुनन्दन: ।
मृदुपूर्व्वमिदं वाक्यमुवाच वदताम्बर: । राजपत्नि गतो रोष: सहानेन दुरात्मना ।
प्रकृतिस्था वयं जाता देवि नैवास्मि बान्धव: । रोषो मे विगत: साध्वि तव वाक्यैरनिन्दिते: ।
योऽयं पुत्र: शृगालस्य ममाप्येष न संशय: । अभयश्चाभिषेकश्च ददाम्यस्मै सुताय वै ।
आह्वयन्तां प्रकृतय: पुरोधा मन्त्रिणस्तथा । पितृपैतामहे राज्ये तव पुत्रोऽभिषिच्यतां । ५७१०
तत: प्रकृतय: सर्व्वा: पुरोधा मन्त्रिणस्तथा । अभिषेकार्थमाजग्मुर्यत्र तौ रामकेशवौ ।
तत: सिंहासनस्थं तं राजपुत्रं जनार्द्दन: । अभिषेकेण दिव्येन योजयामास वीर्य्यवान् ।
अभिषिच्य शृगालस्य करवीरपुरे सुतं । कृष्णपादरजो वाशु प्रज्ञानमभ्यरोपयत् ।
रथेन हरियुक्तेन तेन युद्धार्थिनेन वै । केशव: प्रस्थितोऽध्वानं तूर्णं वा त्रिदिवं यथा ।
शक्रदेवोऽपि धर्म्मात्मा सह मात्रा परन्तप: । सबालवृद्धयुवतिर्मुख्या: प्राकृतयस्तथा । ५७१५
शिविकायामथारोप्य शृगालं युद्धदुर्म्मदं । सचिता दूरमार्गेण पश्चिमाभिमुखा ययु: ।
मेधनेन विधानेन यकृते तस्य सत्क्रियां । सत्कारं कारयामास पितृणां पारलौकिकं ।
उद्दिश्योद्दिश्य राजानं श्राद्धं कृत्वा सहस्रश: । ततस्ते सलिलं दत्त्वा नामगोत्रादिकीर्त्तनै: ।
पितर्य्युपरते घोरशोकसन्तिप्तमानस: । कृतोदकं तदा राजा प्रविवेश पुरोत्तमं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शृगालवधे एकाधिकशततमोऽध्याय: ॥ १०१ ॥
॥ वैशम्पायन उवाच ॥ तौ तु स्वल्पेन कालेन पञ्चरात्रोषितौ पथि । इमयोवेश सत्कृत्य त्वेकरात्रोषितौ तत: । ५७२०
जग्मतु: सहितौ वीरौ मुदा परमया युतौ । नगरीं मथुरां प्राप्तौ वसुदेवसुतावुभौ ।
तत: प्रत्युद्गता: सर्व्वे यादवा यदुनन्दनौ । सबला हृष्टमनस उग्रसेनपुरोगमा: ।
श्रेण्य: प्रकृतयश्चैव मन्त्रिणश्च यथोदिता: । सबालवृद्धा सा चैव पुरी समभिवर्त्तत ।
नन्दितूर्य्याण्यवाद्यन्त स्तूयेतां पुरुषोत्तमौ । रथ्या: पताकामालिन्यो भासन्ति स्म समन्तत: ।
हृष्टप्रमुदिता सर्व्वा पुरी परमशोभिता । भ्रात्रोस्तयोरागमने यथैवेन्द्रमहे तथा । ५७२५
मुदितास्तत्र गायन्ति राजमार्गेषु गायना: । स्तवाशीर्व्वसुला गाथा यादवानां प्रियङ्करा: ।
गोविन्दरामौ संप्राप्तौ भ्रातरौ लोकविश्रुतौ । स्वे पुरे निर्भया: सर्व्वे क्रीडध्वं यादवा: सुखं ।
न तत्र कश्चिद्दीनो वा मलिनो वा विचेतन: । मथुरायामभूत् कश्चिद्रामकृष्णसमागमे ।
वयांसि साधुवाक्यानि प्रहृष्टा गोवृषद्विपा: । नरनारीगणाश्चैव भेजिरे मानसं सुखं ।
शिवाश्च प्रववुर्व्वाता विरजस्का दिशो दश । दैवतानि च सर्व्वाणि हृष्टान्यायतनेष्वपि । ५७३०
यानि लिङ्गानि लोकस्य तुष्टानीह कृते युगे । तानि सर्व्वाण्यदृश्यन्त तयोरागमने तदा ।
तत: काले शिवे पुण्ये स्यन्दनेनारिमर्द्दनौ । हरियुक्तेन तौ वीरौ प्रविष्टौ मथुरां पुरीं ।
प्रविशन्तं पुरीं रम्यां गोविन्दं राममेव च । अनुजग्मुर्यदुगणा: शक्रं देवगणा इव ।

वसुदेवस्य भवनं पितुस्तौ यदुनन्दनौ । प्रविष्टौ हृष्टवदनौ चन्द्रादित्याविवाचलं ।
ततस्तौ वसुदेवस्य पादौ समभिवाद्य च । उग्रसेनन्तु राजानमन्यांश्च यदुपुङ्गवान् । ५७३५
यथान्यायं पूजयित्वा तौ सर्व्वैश्चाभिनन्दितौ । अग्मतुर्हृष्टमनसौ मातुरेव निवेशनं ।
तत्रायुधानि विन्यस्य गृहे स्वे स्वैरचारिणौ । मुमुदाते यदुवरौ वसुदेवसुतावुभौ ।
एवं तावेकनिर्म्माणौ मथुरायां शुभाननौ । उग्रसेनानुगौ भूत्वा कञ्चित् कालं विचेरतुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मथुराप्रत्यागमने द्व्यधिकशततोऽध्यायः ॥ १०२ ॥
॥ वैशम्पायन उवाच । कस्यचित्त्वथ कालस्य स्मृत्वा गोपेषु सौहृदं । जगामैको व्रजं रामः कृष्णस्यानुमते स्थितः ।
स गतस्तत्र रम्याणि ददर्श विपुलानि वै । भुक्तपूर्व्वाण्यरण्यानि सरांसि सुरभाणि च । ५७४०
स प्रविष्टस्तु वेगेन तं व्रजं कृष्णपूर्व्वजः । वन्येन रमणीयेन वेशेनालङ्कृतः प्रभुः ।
स तानभाषत प्रीत्या यथापूर्व्वमरिन्दमः । गोपांस्तेनैव विधिना यथान्यायं यथावयः ।
तथैव प्राह तान् सर्व्वांस्तथा च परिहर्षयन् । तथैव सह गोपीभिर्योजयन्मधुराः कथाः ।
तमूचुः स्थविरा गोपाः प्रियं मधुरभाषिणः । रामं रमयतां श्रेष्ठं प्रवासात् पुनरागतं ।
स्वागतं ते महाबाहो यदूनां कुलनन्दन । अद्य स्म निर्वृतास्तात यत्त्वां पश्यामहे वयं । ५७४५
प्रीताश्चैव वयं वीर यत्त्वं पुनरिहागतः । विख्यातस्त्रिषु लोकेषु राम शत्रुभयङ्करः ।
वर्द्धनीया वयं नूनं त्वया यादवनन्दन । अथवा प्राणिनस्तात रमन्ते जन्मभूमिषु ।
त्रिदशानां वयं मान्या ध्रुवमद्यामलानन । ये स्म दृष्टास्त्वया तात काङ्क्षमाणास्तवागमं ।
दिष्ट्या ते निहता मल्लाः कंसश्च विनिपातितः । उग्रसेनोऽभिषिक्तश्च माहात्म्येनात्मजेन वै ।
समुद्रे च श्रुतोऽस्माभिस्तिमिना सह विग्रहः । गोमन्ते च श्रुतोऽस्माभिः क्षत्रियैः सह विग्रहः । ५७५०
दरदस्य वधश्चैव जरासन्धपराजयः । तत्रायुधावतरणं श्रुतं नः परमाद्भुतं ।
वधश्चैव शृगालस्य करवीरपुरोत्तमे । तत्सुतस्याभिषेकश्च नागराणाञ्च सान्त्वनं ।
मथुरायां प्रवेशस्तु कीर्त्तनीयः सुरोत्तमैः । प्रतिष्ठिता च वसुधा पार्थिवाश्च वशीकृताः ।
तव चागमनं दृष्ट्वा सभाग्याः स्म यथा पुरा । तेन स्म परितुष्टा वै हर्षिताश्च सबान्धवाः ।
प्रत्युवाच ततो रामः सर्व्वांस्तानभितः स्थितान् । यादवेष्वपि सर्व्वेषु भवन्तो मम बान्धवाः । ५७५५
इहावयोर्गतं बाल्यमिह चैवावयो रतं । भवद्भिर्व्वर्द्धितावेव यास्यामो विक्रियां कथं ।
गृहेषु भवतां भुक्तं गावश्च परिरक्षिताः । अस्माकं बान्धवाः सर्व्वे भवन्तो बहुमानिताः ।
ब्रुवत्येवं यथातत्त्वं गोपमध्ये हलायुधे । संहृष्टवदना भूयो बभूवुर्गोपयोषितः ।
ततो वनान्तरगतो रेमे रामो महाबलः । एतस्मिन्नन्तरे प्राप्ते रामाय विदितात्मने ।
गोपालैर्देशकालज्ञैरुपानीयत वारुणी । सोऽपिबत् पाण्डराभाभस्तत्कालं ज्ञातिभिर्वृतः । ५७६०
वनान्तरगतो रामः पानं मदसमीरणं । उपनिन्युस्ततस्तस्मै वन्यानि विविधानि च ।
प्रत्यग्ररमणीयानि पुष्पाणि च फलानि च । मेध्यांश्च विविधान् गन्धान् भक्ष्यांश्च हृदयङ्गमान् ।

मध्ये वनानि पद्मानि विकचान्युत्पलानि च । शिरसा चारुकेशेन किञ्चिदावृतमौलिना ।
श्रवणैकावलम्बेन कुण्डलेन विराजता । चन्दनार्द्रेण पीनेन वनमालावलम्बिना ।
विबभावुरसा रामः कैलासेनेव मन्दरः । नीले वसानो वसने प्रत्यग्रजलदप्रभे । ६०६५
रराज वपुषा शुभ्रः शशिमरीचिर्यथा शशी । लाङ्गलेनावसक्तेन भुजगाभोगवर्त्तिना ।
तथा भुजाग्रश्लिष्टेन मुषलेन च भास्वता । स मत्तो बलिनां श्रेष्ठो रराजाघूर्णिताननः ।
शैशिरेषु त्रियामासु यथा खेदागतः शशी । रामस्तु यमुनामाह स्नातुमिच्छे महानदि ।
एहि मामभिगच्छ त्वं रूपिणी सागरङ्गमे । सङ्कर्षणस्य मत्तस्य भारतीं परिभूय सा ।
नाभ्यवर्त्तत तं देशं स्त्रीस्वभावेन मोहिता । ततश्चुक्रोध बलवान् रामो मदसमीरितः । ६०७०
चकार स हलं हस्ते कर्षणाधोमुखं बली । तस्यामुपरि मेदिन्यां पेतुस्तामरसस्रजः ।
मुमुचुः पुष्पकोषैश्च पुष्परेणूत्कटं जलं । स हलेनानताग्रेण कूले गृह्य महानदीं ।
चकर्ष यमुनां रामो व्युत्थितां वनितामिव । सा विह्वलजलस्रोता ह्रदप्रस्थितसञ्चया ।
व्यावर्त्तत नदी भीता हलमार्गानुसारिणी । लाङ्गलादिष्टमार्गा सा वेगगा वक्रगामिनी ।
सङ्कर्षणभयत्रस्ता योषेवाकुलिताङ्गना । पुलिनश्रोणिबिम्बोष्ठी मृदितैस्तोयताडितैः । ६०७५
फेनमेखलसूत्रैश्च छिन्नैः स्रोतोऽन्तगामिनी । तरङ्गविषमापीडा चक्रवाकोन्नतस्तनी ।
वेगगम्भीरवक्राङ्गी त्रस्तमीनविभूषणा । सितहंसेक्षणापाङ्गी काशक्षौमोज्झिताम्बरा ।
तीरजाकुलकेशान्ता जलस्खलितगामिनी । लाङ्गलोल्लिखितापाङ्गी क्षुभिता सागरङ्गमा ।
मत्तेव कुटिलापाङ्गी राजमार्गेण गच्छती । कृष्यते सा स्म वेगेन स्रोतःस्खलितगामिनी ।
उन्मार्गानीतमार्गा सा येन वृन्दावनं वनं । वृन्दावनस्य मध्येन सा नीता यमुना नदी । ६०८०
रोरूयमाणेव खगैरन्विता तोयवासिभिः । सा यदा समनुक्रान्ता नदी वृन्दावनं वनं ।
तदा स्त्रीरूपिणी भूत्वा यमुना राममब्रवीत् । प्रसीद नाथ भीतास्मि प्रतिलोमेन कर्षणा ।
विपरीतमिदं रूपं तोयञ्च मम जायते । असत्यहं नदीमध्ये रौहिणेय त्वया कृता ।
कर्षणेन महाबाहो स्वमार्गव्यभिचारिणी । प्राप्तां मां सागरे नूनं सपत्न्यो वेगगर्विताः ।
फेनहासैर्हसिष्यन्ति तोयव्यावृत्तगामिनीं । प्रसादं कुरु मे वीर याचे त्वां कृष्णपूर्व्वज । ६०८५
सुप्रसन्नमना नित्यं भवस्व त्वं सुरोत्तम । कर्षणायुधहृष्टोऽसि रोषोऽयं विनिवर्त्त्यतां ।
गच्छामि चरणौ मूर्ध्ना तवाहं लाङ्गलायुध । मार्गमादिष्टमिच्छामि क्व गच्छामि महाभुज ।
प्रणामावनतां दृष्ट्वा यमुनां लाङ्गलायुधः । प्रत्युवाचार्णववधूं मदक्लान्तमिदं वचः ।
लाङ्गलादिष्टमार्गा त्वमिमं मे प्रियदर्शने । देशमन्नप्रदानेन प्लावयस्वाखिलं शुभे ।
एष ते सुभ्रु सन्देशः कथितः सागराङ्गने । शान्तिं व्रज महाभागे गम्यतां च यथासुखं । ६०९०
लोका हि यावत् स्थास्यन्ति तावत्तिष्ठतु मे यशः । यमुनाकर्षणं दृष्ट्वा सर्व्वे ते व्रजवासिनः ।
साधु साध्विति रामाय प्रणामञ्चक्रिरे तदा । तां विसृज्य महावेगां तांश्च सर्व्वान् वनौकसः ।

ततः सञ्चिन्त्य मनसा बुद्ध्या निश्चित्य चैव ह । पुनः प्रतिजगामाशु मथुरां रोहिणीसुतः ।
स गत्वा मथुरां रामो भवनं मधुसूदनं । परिवर्त्तमानं ददृशे पृथिव्यां वासमध्यं ।
तथैवाध्वन्यवेशेन सोपसृष्टो जनार्द्दनं । प्रत्ययवनमालेन वक्षसाऽतिविराजता ।
स दृष्ट्वा तूर्णमायान्तं रामं लाङ्गलधारिणं । सहसोत्थाय गोविन्दः प्रददावासनोत्तमं ।
उपविष्टं ततो रामं पप्रच्छ कुशलं शुभे । बान्धवेषु च सर्व्वेषु गोषु चैव जनार्द्दनः ।
प्रत्युवाच ततो रामो भ्रातरं साधुभाषिणं । सर्व्वत्र कुशलं कृष्ण येषां कुशलमिच्छसि ।
ततस्तयोर्विचित्रार्थाः पौराण्यो ह्यभवन् कथाः । वसुदेवायतः पुण्या रामकेशवयोस्तदा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि यमुनाकर्षणे द्व्यधिकशततोऽध्यायः ॥ १०२ ॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नन्तरे प्राप्ता लोकप्रावृत्तिका नराः । चक्रायुधगृहं सर्व्वे लोकपालगृहोपमं ।
तेष्वात्ययिकशंसीषु लोकप्रावृत्तिकेष्विह । कृतसंज्ञा यदुश्रेष्ठाः समेताः कृष्णसंसदि ।
समागतेषु सर्व्वेषु यदुमुख्येषु संसदि । प्रावृत्तिका नराः प्राहुः पार्थिवात्ययिकं वचः ।
जनार्द्दन नरेन्द्राणां पार्थिवानां समागमः । शशंसुर्दाक्षिणात्यानां सुमहानित्यनेकशः ।
त्वरितास्तत्र गच्छन्ति नानाजनपदेश्वराः । कुण्डिने पुण्डरीकाक्ष भीष्मकस्य शासनात् ।
प्रकाशं स्म कथास्तत्र श्रूयन्ते मनुजेरिताः । रुक्मिणी किल नाम्ना स्वा रुक्मिणः प्रथिता स्वसा ।
भावी स्वयम्वरस्तत्र तस्याः किल जनार्द्दन । इत्यर्थमेते नृवरा गच्छन्ति सबलानुगाः ।
तस्यास्त्रैलोक्यसुन्दर्य्यास्तृतीयेऽहनि यादव । रुक्मभूषणभूषिण्या भविष्यति स्वयम्वरः ।
राज्ञां तत्र समेतानां हस्त्यश्वरथगामिनां । द्रक्ष्यामः शतशस्तत्र वृन्दानि च महात्मनां ।
सिंहशार्दूलदर्पाणां मत्तद्विरदगामिनां । सदा युद्धप्रियाणां हि परस्परममर्षिणां ।
जयाय शीघ्रं त्वरिता बलौघेन समन्विताः । निरुद्धाः पृथिवीपालाः किमेकाग्रपरा वयं ।
निरुत्साहा भविष्यामो गच्छामो यदुसत्तम । श्रुत्वैतत् केशवो वाक्यं हृदि शल्यमिवार्पितं ।
निर्ज्जगाम यदुश्रेष्ठो यदूनां सहितो बलैः । यादवास्ते बलाद्याः सर्व्वे संग्रामलालसाः ।
निर्ययुः स्यन्दनैर्दिव्यैर्गर्व्वितास्त्रिदशा इव । बलाग्रेण नियुक्तेन हरिरोषानसमन्वितः ।
चक्रोद्यतकरः कृष्णो गदापाणिर्व्यरोचत । यादवाश्चापरे तत्र वासुदेवानुयायिनः ।
रथैरादित्यसङ्काशैः किङ्किणीप्रतिनादितैः । उग्रसेनन्तु गोविन्दः प्राह निश्चितदर्शनः ।
तिष्ठ त्वं नृपशार्दूल भ्राता मे सहितोऽनघ । चत्रिया निकृतिप्रज्ञाः शास्त्रज्ञाश्छिद्रदर्शिनः ।
पुरीं शून्यामिमां वीर जवनैः पीडयन्ति नः । अस्माकं सहिताः सर्व्वे जरासन्धवशानुगाः ।
मोदन्ते सुखिनस्तत्र देवलोके यथाऽमराः ।
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा भोजराजो महायशाः । कृष्णं स्नेहेन विहृतं बभाषे वचनामृतं ।
कृष्ण कृष्ण महाबाहो यदूनां नन्दिवर्द्धन । श्रूयतां यदहं त्वां वक्ष्यामि रिपुसूदन ।
त्वया विहीनाः सर्व्वे स्म न शक्ताः सुखमासितुं । पुरेऽस्मिन् विषयान्ते वा पतिहीना इव स्त्रियः ।

त्वन्नाथा वयं तात तवाङ्कबलमाश्रिताः । बिभीमो न नरेन्द्राणां शक्राणामपि मानद ।
विजयाय यदुश्रेष्ठ यत्र यत्र गमिष्यसि । तत्र त्वं सहितोऽस्माभिर्गन्तैया यादवर्षभ ।
तस्य राज्ञो वचः श्रुत्वा सस्मितं देवकीसुतः । यथेष्टं भवतामद्य तथा कर्त्ताऽस्म्यसंशयं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि भद्रादाहरणे चतुरधिकशततोऽध्यायः ॥ १०४ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु कृष्णो हि जगामाशु रथेन वै । भीष्मकस्य पुरं प्राप्तो लोहितायति भास्करे । ५८१५
प्राप्ते राजसमाजे तु शिविराकीर्णभूतले । यज्ञं सुविपुलं दृष्ट्वा राजर्षी तनुमाविशत् ।
विश्रामनार्थं भूपानां प्रकाशार्थं पुरातनं । मनसा चिन्तयामास वैनतेयं महाबलं ।
ततश्चिन्तितमात्रस्तु विदित्वा विनतात्मजः । सुखगम्यं वपुः कृत्वा तिष्ठन्तं केशवान्तिके ।
तस्य पक्षनिपातेन पवनोद्धूतकारिणा । कम्पिता मनुजाः सर्व्वे न्युब्जाश्च पातिता भुवि ।
शिरोभिः पतिताः सर्व्वे प्राविपन्न यथोरगाः । तान् सन्निपतितान्दृष्ट्वा कृष्णो गिरिरिवाचलः । ५८२०
स तदा पक्षवातेन मेने पतगसत्तमं । ददर्श गरुडं प्राप्तं दिव्यस्रगनुलेपनं ।
पक्षवातेन पृथिवीं चालयन्तं मुहुर्मुहुः । पृष्ठासक्तैः प्रवरैर्भिन्नद्विरिवोरगैः ।
विचारं हस्तसंश्लेषं साम्यमानमवाङ्मुखं । चरणाभ्यां प्रकर्षन्तं पाण्डुरं भोगिनाम्बरं ।
हेमवैरूपचितं धातुमन्तमिवाचलं । अमृताहरणं हर्त्तारं द्विजेन्द्रं विनतात्मजं ।
वाहनं दैत्यसंघानां वाहनं ध्वजलक्षणं । तं दृष्ट्वा सध्वजं प्राप्तं सचिवं साम्परायिकं । ५८२५
धृतिमन्तं गरुत्मन्तं जगाद मधुसूदनः । दृष्ट्वा परमसंहृष्टः स्थितं देहमिवापरं ।
तुल्यसामर्थ्यया वाचा गरुत्मन्तमुपस्थितं ।
॥ कृष्ण उवाच ॥ स्वागतं खगश्रेष्ठ सुरसेनारिमर्द्दन । विनताहृदयानन्द स्वागतं केशवप्रिय ।
सत्र पतगश्रेष्ठ कैशिकस्य निवेशनं । वयन्त्वैव गत्वाऽद्य प्रतीक्षामः स्वयम्वरं ।
राज्ञां तत्र समेतानां हस्त्यश्वरथगामिनां । द्रक्ष्यामः शतशस्तत्र समेतानां महात्मनां । ५८३०
एवमुक्त्वा महाबाहुर्वैनतेयं महाबलं । जगामाथ पुरीं कृष्णः कैशिकस्य महात्मनः ।
वैनतेयसखः श्रीमान् यादवैश्च महारथैः । विदर्भनगरीं प्राप्ते कृष्णे देवकिनन्दने ।
हृष्टाः प्रमुदिताः सर्व्वे निवासायोपचक्रमुः । सर्व्वे शस्त्रायुधधरा राजानो बलशालिनः ।
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु राजा नयविशारदः । कैशिकस्तत उत्थाय प्रहृष्टेनान्तरात्मना ।
अर्घ्यमाचमनीं दत्त्वा स राजा कैशिकः स्वयं । सत्कृत्य विधिवत् कृष्णं स्वपुरं संन्यवेशयत् । ५८३५
पूर्व्वमेव तु कृष्णाय कारितं दिव्यमन्दिरं । विवेश सबलः श्रीमान् कैलासं शङ्करो यथा ।
खानपानादिरत्नौघैरर्चितो वासवानुजः । सुखेनैवोषितः कृष्णस्तस्य राज्ञो निवेशने ।
पूजितो बहुमानेन स्नेहपूर्णेन चेतसा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे पञ्चाधिकशततोऽध्यायः ॥ १०५ ॥
॥ वैशम्पायन उवाच ॥ ते कृष्णमागतं दृष्ट्वा वैनतेयसहाच्युतं । बभूवुश्चिन्तयाविष्टाः सर्व्वे नृपतिसत्तमाः ।

ते समेत्य गता राजन् राजानो भीमविक्रमाः । सम्पूर्णबलसुबला नीतिमार्गविचक्षणाः । ५८१०
भीष्मकस्य सभां गत्वा रम्यां हेमपरिष्कृतां । सिंहासनेषु चित्रेषु विविधास्तरणेषु च ।
निषेदुस्ते नृपवरा देवा देवसभामिव । तेषां मध्ये महाबाहुर्जरासन्धो महाबलः ।
बभाषे सुमहातेजा देवान् विश्वेश्वरो यथा ।
॥ जरासन्ध उवाच ॥ श्रूयतां भो नृपश्रेष्ठा भीष्मकस्य महामतिः । कथ्यमानं मया बुद्ध्या वचनं वदतांवराः ।
योऽसौ कृष्ण इति ख्यातो वसुदेवसुतो बली । वैनतेयसहायेन संप्राप्तः कुण्डिनं त्विह । ५८१५
कन्याहेतोर्महातेजा यादवैरभिसंवृतः । अवश्यं कुरुते यत्नं कन्यावाप्तिर्यथा भवेत् ।
इदञ्च कारणं कार्य्यं सुनयोपेतवाञ्छितं । कुरुध्वं नृपशार्दूला विनिश्चित्य बलाबलं ।
पदातिनौ महावीर्य्यौ वसुदेवसुतावुभौ । वैनतेयं विना तस्मिन् गोमन्ते पर्व्वतोत्तमे ।
यत् कृतं सुमहद्घोरं भवद्भिर्विदितं महत् । कृष्णस्य यादवैश्चैव भोजान्धकमहारथैः ।
समेत्य युध्यमानस्य कीदृशो विग्रहो भवेत् । कन्यार्थे यतमानेन गरुडस्थेन विष्णुना । ५८२०
कः स्थास्यति रणे तस्मिन्नपि शक्रः सुरैः सह । पुरा एकार्णवे घोरे श्रूयते मेदिनी स्थिरं ।
पातालस्य तले मग्ना विष्णुना प्रभविष्णुना । वाराहं रूपमास्थाय उद्धृता जगदादिना ।
हिरण्याक्षस्तु दैत्येन्द्रो वाराहेण निपातितः । हिरण्यकशिपुश्चैव महाबलपराक्रमः ।
अवध्योऽमरदैत्यानामृषिगन्धर्व्वकिन्नरैः । यक्षराक्षसनागानां नाकाशे नावनिस्थले ।
न चाभ्यन्तरबाह्यकोर्न शुष्केणार्द्रकेण च । अवध्यस्त्रिषु लोकेषु दैत्येन्द्रो ह्यपराजितः । ५८२५
नारसिंहेन रूपेण निहतो विष्णुना पुरा । वामनेन तु रूपेण कश्यपस्यात्मजो बली ।
अदित्या गर्भसंभूतो बलिर्बद्धोऽसुरोत्तमः । सत्यरज्जुमयैः पाशैः कृतः पातालसंश्रयः ।
कार्त्तवीर्य्यो महावीर्य्यः सहस्रभुजविग्रहः । दत्तात्रेयप्रसादेन मत्तो वरमदेन च ।
जामदग्न्यो महातेजा रेणुकागर्भसम्भवः । त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृतांवरः ।
पर्शुना वज्रकल्पेन सप्तद्वीपेश्वरो नृपः । निहतो विष्णुना भूयस्तद्रूपेण हैहयः । ५८३०
इक्ष्वाकुकुलसंभूतो रामो दाशरथिः पुरा । त्रिलोकजयिनं वीरं रावणं वै न्यपातयत् ।
पुरा कृतयुगे विष्णुः संग्रामे तारकामये । अष्टबाहुर्भुजो भूत्वा गरुडस्थो हि वीर्य्यवान् ।
निजघानासुरान् युद्धे वरदानेन दर्पितान् । कालनेमिश्च दैत्येन्द्रं देवतानां भयप्रदं ।
सहस्रकिरणाभेन चक्रेण न्यहनद्युधि । महायोगबलेनाजौ विश्वरूपेण विष्णुना ।
अनेन प्राप्तकालास्ते निहता बहवोऽसुराः । वने वनचरा दैत्या महाबलपराक्रमाः । ५८३५
निहता बालभावेन प्रलम्बारिष्टधेनुकाः । शकुनिं केशिनञ्चैव यमलार्ज्जुनकावपि ।
नागं कुवलयापीडं चाणूरं मुष्टिकन्तथा । कंसञ्च बलिनां श्रेष्ठं सगणं देवकीसुतः ।
न्यहनद्धि पर्व्वेण क्रीडमानो हि केशवः । एवमादीनि दिव्यानि त्वद्भुतान्यपि विष्णुना ।
कृतानि तत्र तत्रैव मायया प्रभविष्णुना । तेनाहं वः प्रवक्ष्यामि भवतां हितकाम्यया ।

तं मन्ये केशवं विष्णुं सुराणामसुरान्तकं । नारायणं जगद्योनिं पुराणं पुरुषं ध्रुवं । ५८८०
स्रष्टारं सर्व्वभूतानां शास्तारं सनातनं । अधृष्यं सर्व्वभूतानां सर्व्वलोकनमस्कृतं ।
अनादिमध्यनिधनं क्षरमक्षरमव्ययं । स्वयम्भुवमजं स्थाणुमजेयं सचराचरैः ।
त्रिविक्रमं त्रिलोकेशं त्रिदशेन्द्रारिनाशनं । इति मे निश्चला बुद्धिर्जातोऽयं मथुरामधि ।
कुले महति वै राज्ञां विपुले चक्रवर्त्तिनां । कथमन्यस्य पुंसस्तु गरुत्मान् वाहनो भवेत् ।
विशेषेण तु कन्यार्थं विक्रमस्य जनार्द्दने । कः स्थास्यति पुमानद्य गरुडस्थायतो बली । ५८८५
स्वयंवरकृतेनासौ विष्णुः स्वयमिहागतः । विष्णोरागमनं चैव महान्दोषः प्रकीर्त्तितः ।
भवद्भिरनुचिन्त्येदं क्रियतां यदनन्तरं ।
॥ वैशम्पायन उवाच ॥ एवं विश्रवमाणस्तु मगधानां जनेश्वरं । सुनीथोऽथ महाप्राज्ञो वचनञ्चेदमब्रवीत् ।
॥ सुनीथ उवाच ॥ सत्यमाह महाबाहुर्म्मगधाधिपतिर्नृपः । समस्तं नरदेवानां यथा वृत्तं महाहवे ।
गोमन्ते रामकृष्णाभ्यां कृतं कर्म्म सुदुष्करं । गजाश्वरथसम्बाधा पत्तिध्वजसमाकुला । ५८९०
निर्द्दग्धा महती सेना चक्रलाङ्गलवह्निना । तेनायं मागधः श्रीमाननागतमचिन्तयत् ।
श्रुते राजसैन्यानामनुस्मृत्य सुदारुणं । पदात्योर्युध्यतोस्तत्र बलकेशवयोर्युधि ।
दुर्न्निवार्य्यतरैर्घातैरभवद्वाहिनीवधः । विदितं वः सुपर्णस्य आगतस्य नृपोत्तमाः ।
पतगानिलोद्धूता बभ्रमुर्गगनेचराः । समुद्राः क्षुभिताः सर्व्वे चचालाद्रिर्म्मही मुहुः ।
वयञ्च सर्व्वे सन्त्रस्ताः किमुत्पातेति विक्लवाः । यदा सस्तस्य पृष्ठेन आरूढः केशवः खगे । ५८९५
कथमस्माद्विधैः शक्यं प्रतिष्ठातुं रणाजिरे । राज्ञां स्वयंवरो नाम सुमहान् हर्षवर्द्धनः ।
कृतो नरवरैराद्यैर्यशोधर्म्मस्य वै विधिः । इदन्तु कुण्डिननगरमासाद्य मनुजेश्वरैः ।
पुनरेवैष्यते नूनं महापुरुषविग्रहः । यदि सा वरयेदन्यं राज्ञां मध्ये नृपात्मजा ।
कृष्णस्य भुजयोर्व्वीर्य्यं कः पुमान् प्रसहिष्यति । विख्यापितस्तु दोषोऽयं स्वयंवरमहोत्सवे ।
तदर्थमागतः कृष्णो वयञ्चैव नराधिपाः । कृष्णस्यागमनञ्चैव नृपाणामपि गर्हितं । ५९००
कन्याहेतोर्नरेन्द्राणां यथा वदति मागधः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे सुनीथवाक्ये षडधिकशततोऽध्यायः ॥ १०६ ॥
॥ वैशम्पायन उवाच ॥ इत्येवमुक्ते वचने सुनीथेन महात्मना । करूषाधिपतिर्व्वीरो दन्तवक्रोऽभ्यभाषत ।
॥ दन्तवक्र उवाच ॥ यदुक्तं मगधेन्द्रेण सुनीथेन नराधिपाः । युक्तपूर्व्वमिदं मन्ये यदस्माकं वचो हितं ।
न च विद्वेषणेनाहं न चाहङ्कारवादिना । न चात्मविजिगीषुत्वाद्दूषयामि वचोऽद्भुतं ।
वाक्यार्णवं महागाधं नीतिशास्त्रार्थसंहितं । क एष निखिलं वक्तुं शक्तो वै राजसंसदि । ५९०५
किन्त्वनुस्मरणार्थं हि यद्ब्रवीमि शृणुध्व मे । आगतो वासुदेवेति किमाश्चर्य्यं नराधिपाः ।
यथागता वयं सर्व्वे तथा कृष्ण इहागतः । किमत्र दोषो गोप्यो वा कस्य हेतोः समागताः ।
यदस्माभिः समेत्यैव कृतं गोमन्तरोधनं । तत्र युद्धकृतं दोषं कथं वः कर्त्तुमर्हथ ।

वनवासे स्थितौ वीरौ कंसव्यामोहहेतुना । देवर्षिवचनाद्राजन् वृन्दावनतटे स्थितौ ।
तावाहूय वधार्थाय उभौ रामजनार्द्दनौ । नागेनोद्दीपितौ वीरौ हतनागौ विचेष्टितौ । ५८१०
ततः स्ववीर्य्यमाश्रित्य निहतौ रङ्गसागरे । गतासुरिव चासीनो मथुरेशः सहानुगः ।
किमत्र विहितो दोषो येनास्माभिर्व्विरोधिभिः । उपरोधपरा राजन् वयं सर्व्वे समागताः ।
सेनातिबलमालोक्य विवशौ रामकेशवौ । पुरं बलं समुत्सृज्य गोमन्तं पर्व्वतं गतौ ।
तत्रापि गतमस्माभिर्हन्तुं समरयोधिभिः । अप्राप्तयौवनाभ्यान्तु पदाताभ्यां रणाजिरे ।
रथाश्वनरनागेन तत्र वै विग्रहः कृतः । कृतोपरोधं श्रेष्ठः स क्षात्रधर्म्मेण दीपितः । ५८१५
दावाग्निमुखमाविश्य स्नातौ यत्र तपस्विनौ । विनीत इति मन्यामः सर्व्वे क्षत्रियपुङ्गवाः ।
प्रतियुद्धं करोत्येवं कृष्णयाम जनार्द्दनं । यत्र यत्र प्रयास्यामो वयं तत्र भवेत् कलिः ।
प्रीत्यर्थं प्रयतिष्यामः कृष्णेन सह भूमिपाः । इदं कुण्डिपुरं कृष्णो नागतः कलिहेतुना ।
कन्यानिमित्तागमने कस्य युद्धं प्रयच्छति । मर्त्त्येऽस्मिन् पुरुषेन्द्रोऽसौ न कश्चित् प्राकृतो नरः ।
देवलोके च देवेशः प्रवरः पुरुषोत्तमः । देवानामपि कर्त्ताऽसौ लोकानाञ्च विशेषतः । ५८२०
न देवे चासिता बुद्धिर्न चेर्ष्या नापि मत्सरः । न सर्व्वो न कृशो नार्त्तः प्रणतार्त्तिहरः सदा ।
एष विष्णुः प्रभुर्द्देवो देवानामपि दैवतं । आगतो गरुडेनेह स्वयम्पाकार्य्यहेतुना ।
न सेनासहितो याति कृष्णः शत्रुविनाशने । इमां यात्रां विजगोप्तुं प्रीत्यर्थं आगतो हरिः ।
सहितो यादवश्रेष्ठैर्भोजवृष्ण्यन्धकैरिह । अर्घ्यमाचमनीं दत्त्वा च विष्टरञ्च नराधिपाः ।
करिष्यामो वयं सर्व्वे केशवाय महात्मने । एवं सन्धानतः कृत्वा कृष्णेन सहिता वयं । ५८२५
वसामो विगतोद्वेगा निर्भया विगतज्वराः । तस्य तद्वचनं श्रुत्वा दन्तवक्त्रस्य धीमतः ।
शाल्वः प्रवदतां श्रेष्ठस्तानुवाच नराधिपान् ।
॥ शाल्व उवाच ॥ किं भयेनास्य नः सर्व्वे न्यस्तशस्त्रा भवामहे । सन्धानकरणे चेतोः कृष्णस्य भयकम्पिताः ।
परस्तवेन किं कार्य्यं विनिन्द्य बलमात्मनः । नैव धर्म्मो नरेन्द्राणां क्षात्रधर्म्मे च तिष्ठतां ।
महत्सु राजवंशेषु संभूताः कुलवर्द्धनाः । तेषां कापुरुषा बुद्धिः कथं भवितुमर्हति । ५८३०
अहं जानामि वै कृष्णमादिदेवं सनातनं । प्रभुं सर्व्वामरेन्द्राणां नारायणपरायणं ।
वैकुण्ठमजयं लोके चराचरगुरुं हरिं । सम्भूतं देवकीगर्भे विष्णुं लोकनमस्कृतं ।
कंसराजवधार्थाय भारावतरणाय च । अस्माकञ्च विनाशाय लोकसंरक्षणाय च ।
अंशावतरणे कृत्स्नं जाने विष्णोर्व्विचेष्टितं । संग्राममतुलं कृत्वा विष्णुना सह भूमिपाः ।
चक्रानलविनिर्द्दग्धा यास्यामो यमसादनं । तत्र जानामि राजेन्द्राः कालेनायुःक्षयो भवेत् । ५८३५
नाकाले म्रियते कश्चित् प्राप्ते काले न जीवति । एवं विनिश्चयं बुद्ध्वा न कुर्यात् कार्य्यविप्लवं ।
स एव भगवान् विष्णुरालोक्य तपसः क्षयं । निहन्ता दितिजेन्द्राणां यथाकालेन योगवित् ।
बलिं वैरोचनिञ्चैव बद्ध्वाऽवध्यं महाबलं । कृतवान्देवदेवो वै पातालतलवासिनं ।

एवमादीनि चान्यानि विष्णोश्चेष्टानि वै नृपाः । तस्मादयुक्तं भवतां विग्रहार्थे विचारणं ।
न च संग्रामहेतोर्हि कृष्णस्यागमनं त्विह । यस्य वा तस्य वा कन्या वरयिष्यति तस्य वा ।　　६८८०
किमत्र विग्रहो राज्ञां प्रीतिर्भवति वै ध्रुवं ।
॥ वैशम्पायन उवाच ॥ एवं कथयमानानां नृपाणां बुद्धिशालिनां । न किञ्चिदब्रवीद्राजा भीष्मकः पुत्रकारणात् ।
महावीर्यमदोत्सिक्तं भार्गवास्त्राभिरक्षितं । रणे प्रचण्डातिरथं विचिन्त्य मनसा सुतं ।
कृष्णं न सहते नित्यं पुत्रो वै बलदर्पितः । नित्याभिमानी च रणे न बिभेति च कस्यचित् ।
कृष्णस्य भुजवीर्य्येण म्रियते नात्र संशयः । भविष्यति ततो युद्धं महापुरुषविग्रहं ।　　६८८५
द्वेषी चैवाभिमानी च कुतो जीवति मे सुतः । जीवितं नात्र पश्यामि मम पुत्रस्य केशवात् ।
कन्याहेतोः सुतं श्रेष्ठं पितॄणां नन्दिवर्द्धनं । कारयिष्ये कथं युद्धं पुत्रेण सह केशवं ।
न च नारायणं देवं वरमिच्छति रुक्मराट् । मूढभावमदोन्मत्तः संग्रामेष्वनिवर्त्तकः ।
नियतं भस्मसाद्याति तृणराशिर्यथाऽनले । करवीरेश्वरः शूरः शृगालश्चित्रयोधिना ।
क्षणेन भस्मसान्नीतः केशवेन बलीयसा । वृन्दावने वसन् श्रीमान् केशवो बलिनाम्बरः ।　　६८९०
उद्धृत्यैकेन हस्तेन सप्ताहं धृतवान् गिरिं । दुष्करं कर्म संस्मृत्य मनः सीदति मे भृशं ।
इन्द्रस्तु स्वयमागत्य देवतैः सह वृत्रहा । अभिषिच्याब्रवीत् कृष्णमुपेन्द्रेति शचीपतिः ।
यथा च दमितो नागः कालियो यमुनाह्रदे । विषाग्निज्वलितो घोरः कालानलसमप्रभः ।
कंसो चैव महावीर्य्यो दानवो हयविग्रहः निहतो वासुदेवेन देवैरपि दुरासदः ।
सान्दीपनिसुतश्चैव चिरनष्टश्च सागरे । कृष्णः पञ्चजनं हत्वा चानयद्यममन्दिरात् ।　　६८९५
गोमन्ते सुमहद्युद्धं बहुभिश्चैव तावुभौ । कृत्वा विनाशजननं गजाश्वरथसंकुलं ।
गजेन गजवृन्दानि रथेन रथयोधिनः । सादिनश्चाश्वयोधेन चरणेन पदातिनः ।
अप्रतुल्यौ महावीर्य्यौ वसुदेवसुतावुभौ । न देवासुरगन्धर्व्वा न यक्षोरगराक्षसाः ।
न नागा न च दैत्येन्द्रा न पिशाचा न गुह्यकाः । कृतवन्तस्तथा घोरं गजाश्वरथसंक्षयं ।
तमनुस्मृत्य संग्रामं भृशं सीदति मे मनः । न मया श्रुतपूर्व्वो वा दृष्टपूर्व्वः कुतोऽपि वा ।　　६९००
तादृशो भुवि मर्त्त्योऽन्यो वासुदेवात् पुरोत्तमात् । सम्प्रत्यत्र महाबाहुर्ह्यागतो महाद्युतिः ।
सान्त्वयित्वा महावीर्य्यं संविधास्यामि यत् क्षमं ।
॥ वैशम्पायन उवाच ॥ इति सञ्चिन्त्य मनसा बलाबलविनिश्चयं । गमनाय मतिश्चक्रे प्रसादयितुमच्युतं ।
चिन्त्यमानो नरेन्द्रस्य बहुभिर्न्नयशालिभिः । सूतमागधवन्दिभ्यो बोधितस्तुतिमङ्गलैः ।
प्रभातायां रजन्यान्तु कृतपूर्व्वाह्णिकक्रियाः । उपविष्टा नृपाः सर्व्वे स्वेषु विश्रामवेश्मसु ।　　६९०५
ये विग्रहाय वै राजन् विदर्भायां नराधिपैः । तैरागम्य स्वराजेषु रहो मत्वा निवेदितं ।
श्रुत्वा कृष्णाभिषेकन्तु केचिद्धृष्टा नराधिपाः । केचिद्दीनतरा भीता उदासीनास्तथाऽपरे ।
त्रिधा प्रभिन्ना सा सेना नरनागाश्वसंकुला । महार्णव इव क्षुब्धा अभिषेकेण चालिता ।

नृपाणां भेदमालोक्य भीष्मको राजसत्तमः । अतिक्रममचिन्त्यच कृतं नृपतिना स्वयं ।
विचिन्त्य मनसा राजा दह्यमानेन चेतसा । जगाम नरदेवानां समाजे प्रतिवेदितुं । ६०६०
एतस्मिन्नन्तरे दूताः सम्प्राप्ताः कैशिकान्तिकात् । लेखमुद्धृत्य शिरसा विविशुश्च नृपार्णवं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे सप्ताधिकशततमोऽध्यायः ॥ १०३ ॥
॥ जनमेजय उवाच ॥ कृत्वा कंसं महावीर्य्यं देवैरपि दुरासदं । नाभिषिक्तः स्वयं राज्ये नोपविष्टो नृपासने ।
कन्यार्थे चागतः कृष्णस्तत्रापि न कृतातिथिः । अपमानमतुलं प्राप्य क्षान्तवान् केन हेतुना ।
विनतायाः सुतश्चैव महाबलपराक्रमः । स चापि क्षमया युक्तः कारणं किमपेक्षितः ।
एतदाख्याहि भगवन् परं कौतूहलं हि मे । ६०६५
॥ वैशम्पायन उवाच ॥ विदर्भनगरीं प्राप्ते वैनतेये महाद्युते । मनसा चिन्तयामास वासुदेवाय कैशिकः ।
दृष्ट्वाश्चर्य्यं हि नः सर्व्वान् ध्रुवं पापक्षयो भवेत् । विशुद्धभावः कृष्णस्य आवयोर्दृष्टवत्सलः ।
अतः पात्रतरः कोऽन्यस्त्रिषु लोकेषु विद्यते । कृष्णात् कमलपत्राक्षाद्देवदेवाज्जनार्द्दनात् ।
तस्यावां किं प्रदास्यावश्चातिथ्यकारणेन ह । पात्रमासाद्य वै राजन् यथा धर्म्मो न लुप्यते ।
एवमन्योन्यमश्चिन्त्य भ्रातरौ क्रथकैशिकौ । स्वराज्यं दातुकामौ तौ जग्मतुः केशवान्तिकं । ६०७०
देवमासाद्य तौ वीरौ विदर्भनगराधिपौ । ऊचतुस्तौ महात्मानौ प्रणम्य शिरसा हरिं ।
अद्यावां सफलं जन्म अद्यावां प्रथितं यशः । अद्यावां पितरस्तृप्ता देव त्वयि गृहागते ।
चामरं व्यजनं छत्रं ध्वजं सिंहासनं वरं । स्फीतकोषा पुरी चैव आवाभ्यां सहितं तव ।
उपेन्द्रस्त्वं महाबाहो देवेन्द्रेणाभिषिक्तवान् । आवामिह तु राज्ये त्वामभिषिञ्चाव वै प्रभो ।
आवयोर्यत् कृतं कार्य्यं बहुभिः पार्थिवैरपि । शक्यते नान्यथा कर्त्तुं जरासन्धेन वा स्वयं । ६०७५
श्रुतस्ते मागधो राजा जरासन्धो महाद्युतिः । कथ्यते भुवने राजन्नृपाणामभयप्रदः ।
सिंहासनमनध्यास्य पुरस्तस्य न विद्यते । कथं राजसमाजेऽस्मिन्नास्यते देवकीसुतः ।
कृष्णोऽपि सुमहावीर्य्यो ह्यभिमानी महाद्युतिः । न चागमिष्यते चास्मिन् कन्यार्थे च स्वयंवरं ।
पार्थिवेषूपविष्टेषु स्वेषु सिंहासनेषु वै । कथमास्यति नीचेषु आसनेषु महाद्युतिः ।
इति सञ्चिन्त्यमानस्तु श्रुत्वाऽसौ भीष्मको नृपः । आवयोः सह संमन्त्र्य श्रियं कोपसमार्थिना । ६०८०
तव विश्रामहेतोर्हि कारितेदं गृहोत्तमं । देवानामपि देवोऽसि सर्व्वलोकनमस्कृतः ।
मानुषे मर्त्यलोकेऽस्मिन्नरेन्द्रत्वं समाचर । समाजे मानवेन्द्राणां माभूदासनसङ्कटं ।
विदर्भनगरे तेषां राजेन्द्रत्वं समाचर । आस्थतामासने शुभ्रे श्वः प्रभाते महाद्युते ।
अधिवास्यात्मनात्मानं विधिदृष्टेन कर्म्मणा । यथा गमिष्यन्ति नृपाः करिष्ये देवशासनात् ।
एवमुक्त्वा सुरश्रेष्ठं प्रणिपत्य कृताञ्जली । प्रेषयामासतुर्वीरौ रक्षमध्ये नृपैर्वृतौ । ६०८५
देवदूतस्य वचनं यथोक्तं वज्रपाणिना । लिखित्वा सुमहातेजाः कैशिकः प्राह शासनं ।
॥ कैशिक उवाच ॥ विदितं वो नृपाः सर्व्वे वैनतेयसहाच्युतः । आगतोऽस्ति यदूत्तम विदर्भनगरीं हरिः ।

प्राप्तमासीच्च पीठोऽयमिति सञ्चिन्त्य भूपतिः । प्रददौ वासुदेवाय स्वराज्यं धर्म्महेतुना ।
इदमासनमासन्नेति आज्ञा मे चोदिते ततः । वागुवाचाशरीरेव केनापि व्योमचारिणा ।
॥ देवदूत उवाच ॥ न युक्तमासनं दातुं त्वयाद्येदं नराधिप । इदमन्यासनं दिव्यं सर्व्वरत्नविभूषितं । ६०००
जाम्बूनदमयं दिव्यं रचितं विश्वकर्म्मणा । प्रेषितं देवराजेन सिंहलक्षणलाञ्छितं ।
अत्रोपविष्टं देवेशं चराचरनमस्कृतं । अभिषिञ्चाथ राजेन्द्रं बहुभिः पार्थिवैः सह ।
आगताः कुण्डिननगरे कन्याहेतोर्नराधिपाः । नागमिष्यति यः कश्चित् सोऽस्य वध्यो भविष्यति ।
इमे चैवाष्टकलसा निधीनामर्णवसंभवाः । अम्बया राजराजस्य धनेशस्य महात्मनः ।
दिव्याः काञ्चनरत्नाढ्या दिव्याभरणयोनयः । राजेन्द्रस्याभिषेकार्थमागच्छन्ति नृपैर्हृताः । ६००५
एष शक्रस्य सन्देशः कथितो मे नराधिपाः । संवेशमाहूय तान् सर्व्वानभिषिञ्चत केशवं ।
॥ कौशिक उवाच ॥ इति सञ्चिन्त्य सर्व्वोऽसौ देवदूतो गतो दिवं । दत्त्वासनञ्च कृष्णाय बालार्कसदृशप्रभं ।
तेनाहञ्चोदयिष्यामि भवन्तो ये समागताः । दुर्निवार्य्यतरं घोरं शक्रेण स्वयमीरितं ।
युष्माभिर्दर्शने युक्तमद्भुतं भुवि दुर्लभं । कलसैरभिषिञ्चन्तं स्वयमेव नभस्तलात् ।
दृष्ट्वाश्चर्य्यं हि नः सर्व्वो ध्रुवं पापक्षयो भवेत् । स्नपनेन च कृष्णाय देवदेवाय विष्णवे । ६०१०
आगच्छध्वं नृपश्रेष्ठा न भयं कर्त्तुमर्हथ । आवयोः कृतसन्धानो युष्मदर्थे जनार्द्दनः ।
सर्व्वेषां मनुजेन्द्राणां न वैरं कुरुते हरिः । विरुद्धभावः कृष्णस्य आवयोर्दृष्टतत्त्वनः ।
मागधस्य विशेषेण न वैरं हृदि दृश्यते । यदत्र कारणं कार्य्यं तद्भवद्भिर्विचिन्त्यतां ।
॥ वैशम्पायन उवाच ॥ एवं सञ्चिन्त्यमानास्तु नृपाः शापभयार्द्दिताः । भूयः शुश्रुवुराजेन्द्र राजानः सर्व्व एव ते ।
मेघगम्भीरनादेन स्वरेणापूरयन्नभः । वागुवाचाशरीरेण देवराजस्य शासनात् । ६०१५
॥ चित्राङ्गद उवाच ॥ त्रैलोक्याधिपतिः शक्रः प्रजापालनहेतुना । आज्ञापयति युष्माकं नृपाणां हितकाम्यया ।
न युक्तं समतान्योन्यं कृष्णेन सह वैरिणा । वसध्वं प्रीतिमुत्पाद्य स्वराष्ट्रेषु नराधिपाः ।
प्रणतार्त्तिहरः कृष्णः प्रतिसेनान्तकोऽनलः । अनेन सह संप्रीत्या मोदध्वं विगतज्वराः ।
मानुषाणां नृपा देवा नृपाणां देवताः सुराः । सुराणां दैवतं शक्रः शक्रस्यापि जनार्द्दनः ।
एष विष्णुः प्रभुर्द्देवो देवानामपि दैवतं । जातोऽयं मानुषे लोके नररूपेण केशवः । ६०२०
अजेयः सर्व्वलोकेषु देवदानवमानवैः । कार्त्तिकेयसहायस्य अपि शूलधरस्य च ।
तस्मै देवादिदेवाय केशवाय महात्मने । अभिषिच्य सुरैः सार्द्धं किमिच्छेयमतः परं ।
न चाधिकारो देवानां राजेन्द्रस्याभिषेचने । तेनाहं नाभिषिञ्चामि सर्व्वलोकनमस्कृतं ।
नृपाणामधिकारोऽयं राजेन्द्रस्याभिषेचने । गत्वा यूयं विदर्भाणां क्रथकैशिकयोः सह ।
सञ्चिन्त्य विधिदृष्टेन कुरुध्वं नृपसत्तमाः । प्रीतिसन्धानकालोऽयमिति सञ्चिन्त्य वासवः । ६०२५
बोधनार्थे विसृष्टोऽहं युष्माकं मनुजेश्वराः । विदर्भनगरे कृष्णः आवितोऽस्याधिवासनं ।
राजेन्द्राभिषेकार्थे राजानौ क्रथकैशिकौ । तयोः सार्द्धं नृपश्रेष्ठाः कृत्वा शुभमहोत्सवं ।

अभिषेकेण सत्कृत्य प्रतिगृह्य स्वदक्षिणां । आगमिष्यथ संहृष्टाः पुनरेव स्वयंवरं ।
जरासन्धः सुनीथश्च दन्तवक्त्रश्च महारथः । शाल्वः सौभपतिश्चैव चत्वारो राजसत्तमाः ।
रुक्मिण्याश्च कृते हेतोर्हि तिष्ठन्त्विह च पार्थिवाः । ६०१०

॥ वैशम्पायन उवाच ॥ एवमाज्ञां सुरेशस्य श्रुत्वा चित्राङ्गदेरितां । गमनाय मतिञ्चक्रुः सर्व्व एव नृपोत्तमाः ।
अनुज्ञाता नरेन्द्रेण जरासन्धेन धीमता । भीष्मकं पुरतः कृत्वा प्रयाताः सबलैर्वृताः ।
भीष्मकश्च महाबाहुः स्वबलेन समन्वितः । जगाम पार्थिवैः सार्द्धं हृष्टभावेन चेतसा ।
यत्र कृष्णो महाबाहुः कैशिकस्य निवेशने । दूरादेव प्रकाशन्ती पताका ध्वजमालिनी ।
शुभा देवसभा रम्या स्थानदेतोरिहागता । दिव्यरत्नप्रभाकीर्णा दिव्यध्वजसमाकुला । ६०१५
दिव्याम्बरपताकाढ्या दिव्याभरणभूषिता । दिव्यस्रग्दामकलिला दिव्यगन्धाधिवासिता ।
विमानयानैः श्रीमद्भिः समन्तात् परिवारिता । दिव्याप्सरोगणास्तत्र ननृतुश्च समन्ततः ।
गन्धर्व्वा मुनयश्चैव किन्नराश्च समन्ततः । उपगायन्ति देवेशमम्बरान्तरमाश्रिताः ।
स्तुवन्ति मुनयः सर्व्वे सिद्धाश्च परमर्षयः । देवदुन्दुभयश्चैव स्वयमेवानदन् दिवि ।
पद्मयोनिसमुत्थानि गन्धचूर्णान्यनेकशः । समन्तात् पात्यमानानि आकाशस्थैर्दिवौकसैः । ६०२०
स्वयमागम्य राजेन्द्र देवैः सह शचीपतिः । विमानवरमारुह्य सप्रकाशं स्थितोऽम्बरे ।
अष्टभिर्लोकपालैस्तु स्वदिग्भागेषु संस्थितैः । उपगायद्भिर्नृत्यद्भिः स्तुवद्भिश्च समन्ततः ।
श्रुत्वा सुतुमुलं नादं सर्व्व एव नराधिपाः । विस्मयोत्फुल्लनयना विविशुस्ते सभां शुभां ।
कैशिकस्तु महातेजा उपगम्य नराधिपान् । प्रवेशयामास बली प्रतिपूज्य यथाविधि ।
निवेदिते सुरश्रेष्ठे पार्थिवानां समागमे । निर्ज्जगाम हरिः श्रीमान् सर्व्वमङ्गलपूजितः । ६०२५
ततोऽम्बरस्थास्ते दिव्याः कलशास्तैलकपिञ्जलाः । मत्तकारसमायुक्ता ववर्षुर्जलदा इव ।
दिव्यकाञ्चनरत्नौघैर्दिव्यपुष्पसमन्वितैः । गन्धचूर्णविमिश्रैश्च राजेन्द्रस्याभिषेचने ।
यथोक्तविधिपूर्व्वेण सोऽभिषिच्य जनार्द्दनं । दीपयित्वा नरेन्द्राणां दिव्यैराभरणैः शुभैः ।
दिव्याम्बरविचित्रैश्च दिव्यमाल्यानुलेपनैः । सत्कृत्य विधिवच्छक्रस्तामुपविष्टो जनार्द्दनः ।
शुभे देवसभोद्देशे स्थानहेतोरिहागते । उपास्यमानो यदुभिर्विविधैश्च नराधिपैः । ६०३०
वैनतेयश्च बलवान् कामरूपी नराकृतिः । दक्षिणं पक्षमाश्रित्य आसनस्थो बभूव ह ।
क्रथकैशिकौ तौ वीरौ वामपार्श्वे स्व आसने । उपविष्टौ महात्मानौ देवस्यानुमते नृपौ ।
तथैव वामपार्श्वे तु वृष्ण्यन्धकमहारथाः । सात्यकिप्रमुखा वीरा उपविष्टा महारथाः ।
भास्करप्रतिमे दिव्ये दिव्यास्तरणसंवृते । सुखोपविष्टं श्रीमन्तं देवा इव शचीपतिं ।
सचिवैः आविताः पूर्व्वं प्रविष्टास्ते नराधिपाः । यथार्हेण तु संपूज्य राजानः सर्व्व एव ते । ६०३५
सुखोपविष्टास्ते तेषु आसनेषु नराधिपाः । कैशिकस्तु महाप्राज्ञः सर्व्वशास्त्रार्थवित्तमः ।
पूजयित्वा यथान्यायमुवाच वदताम्वरः ।

॥ कैशिक उवाच ॥ अभिज्ञाता नृपाः सर्व्वे मानुषोऽयमिति प्रभो । भवन्तमुपयान्मानो देव तान् क्षन्तुमर्हसि ।
॥ कृष्ण उवाच ॥ न मे वैरं निवसते एकाहमपि कैशिक । विशेषेण नरेन्द्राणां क्षात्रे धर्म्मे व्यवस्थिताः ।
योद्धव्यमिति धर्म्मेण अधर्म्मेति पराङ्मुखे । तेषां किंहेतुना कोपः कर्त्तव्यस्त्वनघेश्वराः । ६०६०
यद्वृत्तं तदतिक्रान्तं ये मृतास्ते दिवङ्गताः । एष धर्म्मो नृलोकेऽस्मिन् जायन्ते च म्रियन्ते च ।
तस्मादशोच्यं भवतां मृतानां वै नराधिपाः । क्षन्तव्यं भवताऽस्माकं वीतवैरा भवन्तु वै ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा नरेन्द्रांस्तानाभाष्य मधुसूदनः । कैशिकस्य मुखं वीक्ष्य विरराम महाद्युतिः ।
एतस्मिन्नेव काले तु भीष्मको नयकोविदः । पूजयित्वा यथान्यायमुवाच वदताम्वरः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे नृपाश्वासने अष्टाधिकशतोऽध्यायः ॥ १०८ ॥
॥ भीष्मक उवाच ॥ पुत्रो मे बालभावेन भगिनीं दातुमिच्छति । स्वयंवरे नरेन्द्राणां न चाहं दातुमुत्सहे । ६०६५
अतीव तस्य बालत्वं दातुं नेच्छेऽस्मि निर्घ्नम । एका त्वेकं समालोक्य वरयिष्यति मे मतिः ।
अतस्त्वाऽहं प्रसादिष्ये पुत्रदुर्नयहेतुना । प्रसादं कुरु देवेश क्षन्तुमर्हसि मे प्रभो ।
॥ कृष्ण उवाच ॥ बालभावेन पुत्रस्ते चालितो नृपमण्डलं । यदा वै भवति प्रौढः कीदृशो विनयो भवेत् ।
सूर्य्येन्दुसदृशान् लोकांस्तपसोपार्ज्जितश्रियः । लोकेऽस्मिन्नरदेवानां महाकुलसमुद्भवान् ।
एकस्यापि नृपस्यापि मोहाद्यो वितथं वदेत् । न स तिष्ठति लोकेऽस्मिन्निह चेह च वञ्चिता । ६०७०
एष धर्म्मो नरेन्द्राणामिति मे विदितं प्रभो । लोकधर्म्मं पुरस्कृत्य पुरा गीतं स्वयम्भुवा ।
कथं तव सुतस्तेषामपतो मनुजेश्वर । वक्तुमर्हति राजेन्द्र वितथं राजसंसदि ।
तादृशं रङ्गमतुलं कारयंस्तनयस्तव । कथं त्वया न विज्ञात इति मे संशयो महान् ।
आगतानां नरेन्द्राणामनलार्केन्दुवर्च्चसां । यथार्हेण तु संपूज्य आतिथ्यं कृतवानसि ।
रथाश्वनरनागानां विमर्द्दमतुलं तथा । कथं न ज्ञातवानाजंस्तव पुत्रस्य चेष्टितं । ६०७५
विषादो मा भवेदत्र चतुरङ्गबलागमात् । कथं न ज्ञायसे राजन्निति मे बुद्धिसंशयः ।
समागमनमेवेह प्रायेण न हितन्तव । अतो न कृतमातिथ्यमपायाय नराधिप ।
पार्थिवेभ्यो दीयतां कन्या मामपास्य नराधिप । समागमनदोषेण कथं कन्यां न दास्यसि ।
कन्याविघ्नं प्रकुर्व्वाणो नरके परिपच्यते । इति मन्वादिभिर्गीतं धर्म्मविद्भिर्नरोत्तमैः ।
अतोऽर्थं न प्रविष्टोऽहं रङ्गमध्ये विशाम्पते । विदित्वा न कृतातिथ्यं नरदेव तवालयं । ६०८०
क्रियार्थमभ्युतो राजेन्द्र प्रार्थितोऽहं नराधिप । विदर्भनगरे राजन् वलविश्रामहेतुना ।
आवाभ्यां कृतमातिथ्यं कैशिकस्तु प्रियातिथिः । उषितो च यथा स्वर्गे पुरा गरुडकेशवौ ।
॥ वैशम्पायन उवाच ॥ एवमाब्रुवमाणं तं कृष्णं वाक्यविशारदं । श्रुत्वा वागङ्कुशाभिन्नः शमितोऽग्निरिव ज्वलन् ।
॥ भीष्मक उवाच ॥ प्रसीद देवलोकेश मर्त्यलोकेश पाहि मां । अज्ञानतमसाविष्टं ज्ञानचक्षुःप्रदो भव ।
मनुष्ये मांसचक्षुष्ट्वात् न सम्यग्विदिता वयं । न प्रसिध्यन्ति कार्य्याणि कुर्व्वतामविचारणात् । ६०८५
भवन्तं शरणं प्राप्य देवतानामपि दैवतं । सम्यग्भवतु मे दृष्टिः संपतन्तु च मे क्रियाः ।

अनिष्पन्नामपि क्रियां नयोपेतां विचक्षणाः । फलदां हि प्रकुर्वन्ति सद्भावेनापनिर्भया ।
भवन्तं शरणं प्राप्य नातिबाधति मे भयं । अन्यथा चिन्तितं कार्य्यं तत्त्वत्राण श्रोतुमर्हसि ।
न दातुमिच्छे कन्यायाः पार्थिवेभ्यः स्वयंवरं । प्रसादं कुरु देवेश न कोपं कर्त्तुमर्हसि ।
॥ कृष्ण उवाच ॥ वचनेन किमुक्तेन त्वया राजन्महामते । स्वकन्यां दास्यसे नेति कोऽत्र नेता नवानघ । ६०९०
मा देहीति न वाच्येयं ददस्वेति न मे वचः । रुक्मिण्या दिव्यमुत्पत्तिं शृणुष्व कारणं मम ।
मेरुकूटे पुरा देवैः कृत्वा स्वांशावतारणं । तदा विसृष्टा पूर्व्वं श्रीर्गच्छेति पतिना सह ।
समुद्भवे कुण्डिनगरे भीष्मकस्याङ्गनोदरे । आवेशनं विपुलश्रीणि प्रत्यवेक्षस्व केशवं ।
तेनाहं वः प्रवक्ष्यामि राजशक्तकं वचः । श्रुत्वा स्वयं विनिश्चित्य यदुक्तं तत् करिष्यसि ।
रुक्मिणी नाम ते कन्या न सा प्राकृतमानुषी । श्रीरेषा मद्धवाक्येन जाता केनापि हेतुना । ६०९५
न च सा मनुजेन्द्राणां स्वयम्बरविधिक्षमा । एका लोकाय दातव्या इति धर्मव्यवस्थितिः ।
न च तां शक्यते राजन्नन्यस्मै दातुं स्वयंवरे । सदृशं वरमालोक्य दातुमर्हसि धर्मतः ।
अतोऽयं वैनतेयोऽयं विघ्नकारणहेतुना । आगतः कुण्डिनगरे देवराजेन चोदितः ।
अहञ्चैवागतो राज्ञां द्रष्टुकामो महोत्सवं । तां च कन्यां वरारोहां पद्मेन रहितां श्रियं ।
वन्तव्यमिति यत् प्रोक्तं त्वया राजन् समेत्य नः । युक्तपूर्व्वमहं मन्ये क्रतुयाय न पार्थिव । ६१००
पूर्व्वमेव मया वान्तं येनास्मि विषये तव । आगतः सौम्यरूपेण तेनेह वान्तवान् प्रभो ।
वान्तेषु गुणवाक्यं च दोषापहरणं क्षमा । कथमस्मद्विधे राजन् कलुषो वसते हृदि ।
कुलजे सत्त्वसम्पन्ने धर्मज्ञे सत्यवादिनि । मादृशे च कथं राजन् कलुषो वसते हृदि ।
वान्तोऽयमिति मन्तव्यं यत्त्वया समागतं । न त्वहं सेनया सार्द्धं यास्यामि रिपुवाहिनीं ।
अत्रान्तस्थारिसेनायां यास्यामि द्विजवाहने । स्थितः सत्रकोपस्थानां यथानिकर्षणः । ६१०५
मान्योऽस्माकञ्च त्वं राजन् वयसा च पितासमः । पालयस्व पुरीं स्वकां पुत्रेषु पितृवद्वशः ।
कलुषो नाम राजेन्द्र वसेत कापुरुषेषु वै । शूरेषु शुद्धभावेषु कलुषो वसते कथं ।
आनीध्वं मां सतां वृत्तं पुत्रेषु पितृवद्वशं । आवयोरपि राजानौ विदर्भनगराधिपौ ।
आतिथ्यकरणेऽस्माकं स्वराज्यं दत्तवानुभौ । तेन दानफलेनास्य दश पूर्व्वे दिवङ्गताः ।
भविष्याश्चैव राजेन्द्र पुत्रपौत्रा दशावराः । तेऽपि तथैव यास्यन्ति देवलोके नराधिपाः । ६११०
अनयोः सुचिरं कालं भुक्त्वा राज्यमकण्टकं । यत्राभिन्नार्थं सोऽवश्य सुखं यास्यन्ति निर्वृतिं ।
नरेन्द्राश्च महाभागा येऽभिषेचितुमागताः । कालेन तेऽपि यास्यन्ति देवलोकं त्रिविष्टपं ।
स्वस्ति वोऽस्तु गमिष्यामि वैनतेयसहायवान् । नगरीं मथुरां रम्यां भोजराजेन पालितां ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु राजानं भीष्मकं यदुपुङ्गवः । राजाभिश्चैवमुक्तमनन्य वैदर्भाभ्यां विनिर्गतः ।
सभा निष्क्रान्य देवेशो जगाम स्वयमन्तिकं । ततः स दृष्ट्वा राजर्षिर्भीष्मकः कृष्ण केशवं । ६११५
ते च सर्व्वे महीपाला विषण्णवदनाभवन् । आद्यं स्वायम्भुवं रूपं सुरासुरनमस्कृतं ।

चतुष्पादस्वरूपाङ्कं चतुर्भुजविग्रहं । चतुश्चरणं देवं चतुर्मुकुटोज्ज्वलं ।

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं । दिव्याभरणसंयुक्तं दिव्यानेकायुधायुधं ।

कृष्णं रक्तारविन्दाक्षं चन्द्रसूर्य्याग्निलोचनं । दृष्ट्वा स राजा राजेन्द्रं प्रणिपत्य कृताञ्जलिः ।

वाङ्मनः कायसंयुक्तं स्तोतुमारब्धवांस्तदा । ६११०

॥ भीष्मक उवाच ॥ देवदेव नमस्तुभ्यमनादिनिधनाय वै । आद्यनायादिदेवाय नारायण परायण ।

सहस्रशिरसे विष्णवे जिष्णवे विभवाय च । पद्मनाभाय जटिने दण्डिने पिङ्गलाय च ।

हंसप्रभाय हंसाय चक्ररूपाय वै नमः । वैकुण्ठाय नमस्तस्मै अजाय परमात्मने ।

शङ्खचक्रगदायुक्ताय पुराणपुरुषाय च । पुरुषोत्तमाय मुक्ताय निर्गुणाय नमोऽस्तु ते ।

वरदो भव मे नित्यं शङ्खचक्रगदाधर । लोकनाथ सदा नाथ विष्णुस्त्वं विदितात्मकः । ६११५

॥ वैशम्पायन उवाच ॥ एवं स्तुत्वा महादेवं नृपाणामग्रतो नृपः । महार्हमणिमुक्ताभिर्वज्रवैदूर्य्यशालिनं ।

शातकुम्भमयं निचयं कृष्णाय प्रददौ नृपः । पुनश्चक्रे नमस्कारं वैनतेयं महाबले ।

॥ भीष्मक उवाच ॥ नमस्तस्मै खगेन्द्राय मनोमारुतरंहसे । कामरूपाय दिव्याय काश्यपाय च वै नमः ।

॥ वैशम्पायन उवाच ॥ इति संक्षेपतः स्तुत्वा सत्कृत्य वरभूषणैः । ततो विसर्ज्जयामास कृष्णं लोकनमस्कृतं ।

अनुज्ञातस्तु नृपाश्चैव प्रस्थितं वासवानुजं । प्रतिगृह्य च सत्कारं नृपाणामग्र्यवीर्य्यवान् । ६१२०

जगाम मथुरां कृष्णो द्योतयन् वै दिशो दश । वैनतेयं पुरस्कृत्य सौम्यरूपं खगोत्तमं ।

महता रथवृन्देन परिवार्य्य समन्ततः । भेरीपटहनादेन शङ्खशब्दवरेण च ।

बृंहितेन च नागानां हयानां हेषितेन च । सिंहनादेन शूराणां रथनेमिस्वनेन च ।

तुमुलः सुमहानासीन्महामेघरवोपमः । गते कृष्णे महावीर्य्ये आदाय परमासनं ।

सभामादाय देवाश्च प्रययुस्त्रिदिवालयं । महता चतुरङ्गेण बलेन परिवारिताः । ६१२५

कौशिकमाश्रममनुज्ञाप्य अनुज्ञाते जनार्द्दने । प्रययुस्ते नृपाः सर्व्वे पुनरेव स्वयंवरं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कृष्णाभिषेके नवाधिकशततमोऽध्यायः ॥ १०८ ॥

॥ वैशम्पायन उवाच ॥ ततः प्रयाते वसुदेवपुत्रे नराधिपा भूषणभूषिताङ्गाः । सभां समाजग्मुः सुरेन्द्रकल्पाः प्रबोधनार्थं गम

नोत्सुकाश्च ।

सभागतान् भीमरथिप्रकाशान् सुखोपविष्टान् रुचिरासनेषु । समीक्ष्य राजा सुनयार्थवादी जगाद वाक्यं नरराजसिंहः ।

स्वयम्बरकृतो दोषो विदितो वो नराधिपाः । कन्यायो मम दुहितुः दुर्नयस्य फलोदयः ।

॥ वैशम्पायन उवाच ॥ एवमाभाष्य तान् सर्व्वान् सत्कृत्य च यथाविधि । ततो विसर्ज्जयामास नृपांस्तान्मध्यदेशजान् । ६१३०

पूर्व्वपश्चिमजांश्चैव उत्तरापथिकानपि । तेऽपि सर्व्वे मनोद्वाषाः प्रहृष्टमनसो नृपाः ।

यथार्हेण च संपूज्य जग्मुस्ते नरपुङ्गवाः । जरासन्धः सुनीथश्च दन्तवक्त्रश्च वीर्य्यवान् ।

शाल्वः सौभपतिश्चैव महाकूर्म्मश्च पार्थिवः । क्रथकौशिकमुख्याश्च नृपाः सवरवंशजाः ।

वेणुदारिश्च राजर्षिः काश्मीराधिपतिस्तथा । एते चान्ये च बहवो दक्षिणापथिका नृपाः ।

श्रोतुकामा रुक्मिवाक्यं स्थिता वै भीष्मकान्तिके । तान् वै समीक्ष्य राजेन्द्रः स राजा भीष्मको बली । ६१९५
स्नेहपूर्णेन मनसा स्थितांस्तानवनीश्वरान् । त्रिवर्गसहितं श्लक्ष्णं षड्गुणालङ्कृतं शुभं ।
उवाच नयसम्पन्नं स्निग्धगम्भीरया गिरा ।
॥ भीष्मक उवाच ॥ भवतामवनीशानां समालोक्य नयान्वितं । वचनं व्याहृतं श्रुत्वा कृतोऽहं कार्य्यमीदृशं ।
सद्भिर्भवद्भिः कृत्स्नं वयं नित्यापराधिनः ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु राजा स भीष्मको नयकोविदः । उवाच सुतमुद्दिश्य वचनं राजसंसदि । ६२००
॥ भीष्मक उवाच ॥ पुत्रस्य चेष्टामालोक्य बालाकुलितचेतनः । मन्ये बालानिमान् लोकान् स एकः पुरुषः प्रभुः ।
कीर्त्तिः कीर्त्तिमतां श्रेष्ठो यशश्च विपुलं तथा । स्थापितं भुवि मर्त्येऽस्मिन् स्वबाहुबलमूर्च्छितं ।
धन्या खलु महाभागा देवकी योषितांवरा । पुत्रं त्रिभुवनश्रेष्ठं धृत्वा गर्भेण केशवं ।
कृष्णं कमलपत्राक्षं श्रीपुञ्जममरार्च्चितं । स्नेहपूर्णाश्रुनेत्राभ्यामीक्षते मुखपङ्कजं ।
॥ वैशम्पायन उवाच ॥ एवं लालप्यमानन्तु राजानं राजसंसदि । उवाच श्लक्ष्णया वाचा शाल्वराजो महाद्युतिः । ६२०५
॥ शाल्व उवाच ॥ अलं खेदेन राजेन्द्र सुतार्थमरिमर्द्दन । क्षत्रियस्य रणे राजन् ध्रुवं जयपराजयौ ।
नियता गतिर्मर्त्यानामेष धर्म्मः सनातनः । बलकेशवयोरन्यस्तुल्यो यः कः पुमानिह ।
रणे योधयितुं शक्तस्तव पुत्रं महाबलं । ययातिवंशवृन्दानामेक एव रणाजिरे ।
रिपून् बाधयितुं शक्तो धनुर्द्धरो महाभुजः । भार्गवास्त्रं महारौद्रं देवैरपि दुरासदं ।
सृजतो बाहुवीर्य्येण कः पुमान् प्रसहिष्यति । अयन्तु पुरुषः कृष्णो ह्यनादिनिधनोऽव्ययः । ६२१०
तं विजेता न लोकेऽस्मिन्नपि शूलधरः स्वयं । तव पुत्रो महाप्राज्ञः सर्व्वशास्त्रार्थतत्त्ववित् ।
विदित्वा देवमीशानं न योधयति केशवं । अस्ति तस्य रणे जेता यवनाधिपतिर्नृपः ।
स कालयवनो नाम अवध्यः केशवस्य च । तस्मा सुदारुणं घोरं तपः परमदुश्चरं ।
रुद्रमाराधयामास द्वादशाब्दान्ययोऽशनः । पुत्रकामेन मुनिना तोष्य रुद्रात् सुतो वृतः ।
माथुराणामवध्योऽसौ भवेदिति च शङ्करात् । एवमस्त्विति रुद्रोऽपि प्रददौ मुनये सुतं । ६२१५
एवं गार्ग्यस्य तनयः श्रीमाञ्छुद्रवरोद्भवः । माथुराणामवध्योऽसौ मथुरायां विशेषतः ।
कृष्णोऽपि बलवानेष माथुरो जातवानयं । स जेष्यति रणे कृष्णं मथुरायां समागतः ।
मन्यध्वं यदि वो युक्तां नृपा वाचं मयेरितां । विसृजध्वं तत्र दूतं यवनेन्द्रपुरं प्रति ।
॥ वैशम्पायन उवाच ॥ श्रुत्वा सौभपतेर्व्वाक्यं सर्व्वे ते नृपसत्तमाः । ऊचुर्हृष्टमनसः सर्व्वे हृष्टाः शाल्वराजं महाबलं ।
स तेषां वचनं श्रुत्वा जरासन्धो महीपतिः । बभूव विमना राजन् ब्रुवाणो वचनं त्वरन् । ६२२०
॥ जरासन्ध उवाच ॥ मां समाश्रित्य पूर्व्वेऽस्मिन्नृपा नृपभयार्द्दिताः । प्राप्नुवन्ति परं राज्यं सम्प्रत्यवलाश्रयं ।
इदानीं संशयो याते भूपैः परमं भयहेतुना । अन्येन स्वपतिर्देवादन्यं रतिदरायणा ।
अहो सुबलवद्दैवमशक्यं विनिवर्त्तितुं । यदहं कृष्णभीतोऽस्मि संश्रयामि बलाधिकं ।
नूनं योगविहीनोऽहं कारयिष्ये पराश्रयं । श्रेयो हि मरणं मह्यं न चान्यं संश्रये नृपाः ।

कृष्णो वा बलदेवो वा यो वाऽन्यो वा नरोऽपरः । समरे प्रतियोत्स्यामि यथा मधुप्रचोदितः । ६५७५
एष मे निश्चयो बुद्धेरेष मे पुरुषव्रतः । सतोऽन्यथा न शक्तोऽहं कर्त्तुं परकृतावहं ।
भवतां साधुवृत्तानामाबाधं न करोति सः । तेन दूतं प्रहास्यामि नृपाणां रक्षणाय वै ।
व्योममार्गेण यातव्यं यथा कृष्णो न बाधते । गच्छन्तमनुचिन्त्यैवं प्रेषयध्वं नृपोत्तमाः ।
अयं सौभपतिः श्रीमाननलार्केन्दुसप्रभः । रथेनादित्यवर्णेन प्रयातु स्वपुरं बली ।
यवनेन्द्रो यथाऽभ्येति नरेन्द्राणां समागमं । वचनञ्च यथाऽस्माकं दूत्येन कृष्णविग्रहे । ६५८०
॥ वैशम्पायन उवाच ॥ पुनरेवाब्रवीद्राजा सौभस्य पतिमूर्जितं । गच्छ सर्वनरेन्द्राणां साहाय्यं कुरु मानद ।
यवनेन्द्रो यथा याति यथा कृष्णं विजेष्यति । यथा वयन्तु तुष्यामस्तथा नीतिर्विधीयतां ।
एवं सन्दिश्य तान् सर्वान् भीष्मकं पूज्य धर्मतः । प्रययौ स्वपुरं राजा स्वेन सैन्येन संवृतः ।
शाल्वोऽपि नृपतिस्तत्र तांश्च संपूज्य वीर्य्यवान् । जगामाकाशमार्गेण रथेनानिलगामिना ।
तेऽपि सर्वे महीपाला दक्षिणापथगामिनः । अनुज्ञाप्य जरासन्धं गताः स्वनगरेषु वै । ६५८५
भीष्मकः सहपुत्रेण तावुभौ चिन्त्य दुर्नयं । गृहे विविशतुर्दीनौ कृष्णमेवानुचिन्तयन् ।
रुक्मिणी विदिता साध्वी स्वयंवरनिवर्त्तनं । कृष्णस्यागमने हेतोर्नृपाणां दोषदर्शनं ।
गत्वा तु सा सखीमध्ये उवाच व्रीडितानना । न चान्येषां नरेन्द्राणां पत्नी भवितुमुत्सहे ।
कृष्णात् कमलपत्राक्षात् सत्यमेतद्वचो मम ।

॥ इतिश्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे दशाधिकशततमोऽध्यायः ॥ ११० ॥

॥ वैशम्पायन उवाच ॥ यवनानां कुलोदयः स कालयवनो नृपः । बभूव राजा धर्मेण रक्षिता पुरवासिनां । ६५९०
त्रिवर्गविदितप्रज्ञः षड्गुणानुपजीवकः । त्यक्तव्यसनसंमूढो गुणेष्वभिरतः सदा ।
श्रुतिमान्धर्म्मशीलश्च सत्यवादी जितेन्द्रियः । सांपानिकविधिज्ञश्च दुर्गलाभानुसारिणः ।
शूरोऽप्रतिबलश्चैव मन्त्रिप्रवरसेवकः । सुखासीनः सभां रम्यां सचिवैः परिवारितः ।
उपास्यमानो यवनैरात्मविद्भिर्विपश्चितैः । विविधाश्च कथा दिव्याः कथ्यमानाः परस्परं ।
एतस्मिन्नेव काले तु दिव्यगन्धवहोऽनिलः । प्रववौ मदनाबोधस्तस्य वै सुखशीतलः । ६५९५
किंस्विदित्येकमनसः सभायां ये समागताः । उत्फुल्लनयनाः सर्वे राजा चैवावलोक्य सः ।
अपश्यन् रथं दिव्यमायान्तं भास्करोपमं । शातकुम्भमयैर्दिव्यै रथाङ्गैरुपशोभितं ।
दिव्यरत्नप्रभाकीर्णं दिव्यध्वजपताकिनं । उह्यन्तं दिव्यतुरगैर्मनोमारुतरंहसैः ।
चन्द्रभास्करबिम्बानि कृत्वा जाम्बूनदं शुभं । रचितं विश्वकर्म्मेव वैयाघ्रवरभूषणैः ।
रिपूणां त्रासजननं मित्राणां हर्षवर्द्धनं । दाक्षिणात्यादुपायान्तं रथं पररथारुजं । ६६००
तत्रोपविष्टं श्रीमन्तं सौभस्य पतिमूर्जितं । दृष्ट्वा परमसंहृष्टश्चार्घ्यं पाद्येति चाब्रवीत् ।
उवाच यवनेन्द्रस्य मन्त्री प्रवदतांवरः । तत उत्थाय महाबाहुः स्वयमेव नृपासनात् ।
प्रत्युद्गम्यार्घ्यमादाय रथाभ्यासे स्थितः । शाल्वोऽपि सुमहातेजा दृष्ट्वा राजानमागतं ।

मुदा परमया युक्तः शक्रप्रतिमतेजसं । अवतीर्य सुविस्रब्धमेक एव रथोत्तमात् ।
विवेश परमप्रीतो मित्रदर्शनलालसः । दृष्ट्वाऽभ्युत्थितं राजा च शाल्वो राजसत्तमः । ६००५
उवाच श्लक्ष्णया वाचा मार्ग्योऽस्मि महामते । दूतोऽहं मनुजेन्द्राणां सकाशादागतोऽन्तिके ।
प्रेषितो बहुभिः सार्द्धं जरासन्धेन धीमता । तेन मन्ये महाराज मार्ग्योऽस्मीति राजसु ।
|| कालयवन उवाच || जानाम्यहं महाबाहो दूत्येन त्वामिहागतं । सूचितं नरदेवानां प्रेषितं मागधेन वै ।
तेन त्वामर्च्चये राजन् विशेषेण महाद्युते । अर्घ्यपाद्यादिसत्कारैरासनेन यथाविधि ।
भवत्यभ्यर्च्चिते राज्ञां सर्व्वेषामर्च्चनं भवेत् । मानिते तव राजेन्द्र सर्व्वेषां मानितं भवेत् । ६०१०
आस्यतामासने दिव्ये मया सार्द्धं नरेश्वर ।
|| वैशम्पायन उवाच । तथालिङ्गनकं कृत्वा पृष्ट्वा च कुशलामयं । सुखोपविष्टौ सहितौ शुभे सिंहासने नृपौ ।
|| कालयवन उवाच || तद्बाहुबलमाश्रित्य वयं सर्व्वे नराधिपाः । वसामो विगतोद्विग्ना देवा इव शचीपतिं ।
किमसाध्यं भवेदस्य येनासि प्रेषितो मयि । वद सत्यं वचस्तस्य किमाज्ञापयति प्रभुः ।
करिष्ये वचनं तस्य अपि कर्म्म सुदुष्करं । ६०१५
|| शाल्व उवाच || यथा वदति राजेन्द्र मगधाधिपतिर्नृपः । तथाऽहं संप्रवक्ष्यामि शृणु त्वं यवनाधिप ।
|| जरासन्ध उवाच || जातोऽयं जगदाबाधो कृष्णः परमदुर्ज्जयः । विदित्वा तस्य दुर्वृत्तमहं हन्तुं समुद्यतः ।
पार्थिवैर्ब्बहुभिः सार्द्धं समग्रबलवाहनैः । उपरुध्य महासैन्यैर्गोमन्तमचलोत्तमं ।
चेदिराजस्य वचनं महार्थं श्रुतवानहं । तदा तयोर्विनाशाय कृताग्निमयोजयं ।
ज्वालाशतसहस्राढ्यं युगान्ताग्निसमप्रभं । दृष्ट्वा रामो गिरेः शृङ्गादाप्लुतो हेमतालधृक् । ६०२०
विनिष्पत्य महासेनां मध्ये सागरसन्निभां । आजघान दुराधर्षो नराश्वरथदन्तिनः ।
सर्पेन्द्रमिव सर्पेन्द्रं विक्षिप्याकृष्य लाङ्गलं । नरनागाश्ववृन्दानि मुषलेनावरोपयत् ।
गजेन गजमास्फाल्य रथेन रथयोधिनं । हयेन च हयारोहान् पदातेन पदातिनं ।
समरे स महातेजा नृपाणां शतसङ्कुले । विचरन् विविधान्मार्गान् दिनान्ते भास्करो यथा ।
रामादनन्तरं कृष्णः प्रगृह्यार्कसमप्रभं । चक्रं चक्रभृतां श्रेष्ठः सिंहः क्षुद्रमृगं यथा । ६०२५
प्रविचाल्य महावीर्य्यः पादवेगेन तं गिरिं । समुत्सैन्ये पपातोर्व्वीं धैर्य्यवान् वीरः प्रतापवान् ।
प्रनृत्यन्निव शैलोऽसौ तोयधाराभिषेचितः । घूर्णमानो विवेशोर्व्वीं निर्व्वाप्य च कृताशनं ।
आदीप्यमानाच्छिखरादवप्लुत्य जनार्द्दनः । जघान वाहिनीं राज्ञां सकर्म्मण्येण पाणिना ।
विक्षिप्य विपुलं चक्रं गदापातादनन्तरं । नरनागाश्ववृन्दानि मुषलेन व्यचूर्णयत् ।
क्रोधानिलसमुद्भूतचक्रज्वालावलिप्तया । निर्द्दग्धा महती सेना नरेन्द्रार्काभिपालिता । ६०३०
नरनागाश्वकलिलं पत्तिध्वजसमाकुलं । रथानीकं पदाताभ्यां क्षणेन विरलीकृतं ।
सेनां प्रभग्नामालोक्य चक्रानलभयार्द्दितां । महता रथवृन्देन परिवार्य्य समन्ततः ।
तथाहं युध्यमानस्तु भ्राताऽस्य बलदो बली । स्थितो ममाग्रतः शूरो गदापाणिर्हलायुधः ।

॥ वैशम्पायन उवाच ॥ शृणु राजन् सुपर्णेन कृतं कर्म्मातिमानुषं । विदर्भनगरायाते वैनतेये महाद्युतौ ।
असंप्राप्ते तु नगरीं मथुरां मधुसूदने । मनसा चिन्तयामास वैनतेयो महामतिः ।
यदुक्तं देवदेवेन नृपाणामग्रतः प्रभौ । यास्यामि मथुरां रम्यां भोजराजेन पालितां ।
इति तद्वचनस्यान्ते गमिष्येति विचिन्तयन् । कृताञ्जलिपुटः श्रीमान् प्रणिपत्याब्रवीदिदं ।
॥ गरुड उवाच ॥ देव यास्यामि नगरीं रैवतस्य कुशस्थलीं । रैवतञ्च गिरिं रम्यं नन्दनप्रतिमं महत् । ६९६५
रत्नसौदामितां रम्यां शैलोदधितटाश्रितां । वृक्षगुल्मलताकीर्णां पुष्परेणुविभूषितां ।
गजेन्द्रभुजगाकीर्णामृक्षवानरसेवितां । वराहमहिषाक्रान्तां मृगयूथैरनेकशः ।
तां समन्तात् समालोक्य वासार्थं ते समाश्रमं । यदि स्याद्भवते रम्या प्रशस्ता नगरावलिः ।
कण्टकोद्धरणं कृत्वा आगमिष्ये तवान्तिकं ।
॥ वैशम्पायन उवाच ॥ एवं विज्ञाप्य देवेशं प्रणिपत्य जनार्द्दनं । जगाम पतगेन्द्रो वै पश्चिमाभिमुखो बली । ६९७०
कृष्णोऽपि यदुभिः सार्द्धं विवेश मथुरां शुभां । पौरैश्च उपसेनश्च नागरैश्च सर्व्वशः ।
प्रत्युद्गम्यार्च्चयन् कृष्णं प्रहृष्टजनसङ्कुलं ।
॥ जनमेजय उवाच ॥ श्रुत्वाऽभिषिक्तं राजेन्द्र शक्रभिर्व्वसुधाधिपैः । किं चकार महाबाहुरुग्रसेनो महीपतिः ।
॥ वैशम्पायन उवाच ॥ श्रुत्वाऽभिषिक्तं राजेन्द्र शक्रभिर्व्वसुधाधिपैः । हर्षेण कृतसन्मानं दूतं प्रियाङ्कुरं कृतं ।
एकैकं नृपतेर्भागं शतसाहस्रसम्मितं । राजेन्द्रेष्वर्द्धं दत्तं मानवेषु च वै दश । ६९७५
ये तत्र समनुप्राप्ता न रिक्तास्ते गृहं गताः । शङ्खेन यादवश्रेष्ठ प्रददौ हरिचिन्तितं ।
एवं निधिपतिः श्रीमान्देवतैरनुमोदितः । इति श्रुत्वाऽर्थिकजनाल्लोकप्राशंसिकादरात् ।
चकार महतीं पूजां देवतायतनेषु वै । वसुदेवस्य भवने तोरणोभयपार्श्वतः ।
नटानां नृत्यगेयानि वाद्यानि च समन्ततः । पताकाध्वजमालाढ्यां कारयामास वै नृपः ।
कंसराजस्य तु सभां विचित्राम्बरसुप्रभां । पताका विविधाकारा दापयामास भोजराट् । ६९८०
तोरणं गोपुरञ्चैव सुधापङ्कविलेपनं । कारयामास राजेन्द्र राजेन्द्रस्य समालयं ।
पताका वनमालाढ्याः पूर्णकुम्भाः समन्ततः । राजमार्गेषु राजेन्द्र चन्दनोदकसेचिताः ।
वस्त्रास्तरणकं राजा दापयामास भूतले । धूपं पार्श्वोभये चैव चन्दनागुरुगुग्गुलैः ।
गुडं सर्करसञ्चैव दह्यमानं ततस्ततः । वृद्धस्त्रीजनसंघाश्च गायन्ति स्तुतिमङ्गलं ।
अर्घं कृत्वा प्रतीक्षन्ते स्वेषु स्थानेषु योषितः । एवं कृत्वा पुरानन्दमुग्रसेनस्तु बुद्धिमान् । ६९८५
वसुदेवगृहं गत्वा प्रियाख्यानं निवेद्य च । रामेण सह संमन्त्र्य निर्गतो रथमन्तिकं ।
तस्मिन्नेवान्तरे राजञ्छङ्खध्वनिरभून्महान् । पाञ्चजन्यस्य निनदं श्रुत्वा मथुरवासिनः ।
स्त्रियो बालाश्च वृद्धाश्च सूतमागधवन्दिनः । विनिर्ययुर्महाबाहुं रामं कृत्वाऽग्रतो नृप ।
अर्घं पाद्यं पुरस्कृत्य उग्रसेनोऽथ धीमतः । दृष्टिपथानमासाद्य उग्रसेनो महीपतिः ।
अवतीर्य्य रथाच्छुभ्रात्पादमार्गेण चाव्रजत् । दृष्ट्वासीनं रथे रम्ये दिव्यरत्नविभूषिते । ६९९०

षड्विंशारथश्चैव दिव्यरत्नसमन्वितं । वनमालोरसं दिव्यं तपन्तमिव भास्करं ।
चामरं व्यजनं छत्रं खगेन्द्रध्वजमुच्छ्रितं । राजलक्षणसम्पन्नमायतार्क्कनिवेशितं ।
श्रियाऽभिभूतं देवेशं दुर्न्निरीक्ष्यतरं हरिं । दृष्ट्वा स राजा राजेन्द्र हर्षगद्गदया गिरा ।
बभाषे पुण्डरीकाक्षं रामं कंसनिसूदनं । रथेन न मया गन्तुं युक्तपूर्व्वेति चिन्त्य वै ।
अवतीर्णो महाभाग गजात् त्वं स्यन्दनेन च । विष्णुना चक्रहस्तेन गतेयं मथुरा पुरी । ६२०५
अथ प्रक्षालितात्मानं देवेशं वै नृपार्च्चिते । तमहं श्रोतुमिच्छामि सर्व्वभावेन केशवं ।
प्रत्युवाच महातेजा राजानं स्मितपूर्व्वकः । न युक्तं नृपते श्रोतुं प्रसन्नं देवसत्तमं ।
विना स्तोत्रेण सन्तुष्टस्तव राजन् जनार्द्दनः । तुष्टस्य स्तुतिना किन्ते दर्शनेन तव स्तुतिः ।
राजेन्द्रत्वमनुप्राप्य आगतस्तव वेश्मनि । न त्वया स्तुतवान् राजन् दिव्यैः स्तोत्रैरमानुषैः ।
एवमाभाषमाणौ तौ सम्प्राप्तौ केशवालयं । सर्व्वोपनभृतं दृष्ट्वा स्थापयित्वा रथोत्तमं । ६२१०
उवाच वदतां श्रेष्ठ उग्रसेनं नराधिपं । यन्मया त्वभिषिक्तस्त्वं मथुरेशो भव स्थिति ।
न युक्तमन्यथाकर्त्तुं मथुराधिपते त्वयं । सर्व्वमाचमनीयञ्च पाद्यञ्चाथ निवेदितं ।
न दातुमर्हसे राजन्नेव मे सम्मतः प्रियः । तत्राभिप्रायं विज्ञाय ब्रवीमि नृपते वचः ।
त्वमेव माथुरो राजा नान्यथा कर्त्तुमर्हसि । त्वां भागञ्च नृपते दास्यामि तव दक्षिणां ।
यथा नृपाणां सर्व्वेषां तथा ते स्थापितोऽच्युतः । शतसाहस्रिको भागो वस्त्राभरणवर्ज्जितः । ६२१५
आरुहस्व रथं शुभ्रं चामीकरविभूषितं । चामरं व्यजनं छत्रं ध्वजञ्च मथुरेश्वर ।
दिव्याभरणसंयुक्तं मुकुटं भास्करप्रभं । धारयस्व महाभाग पालयस्व पुरीमिमां ।
पुष्पपात्रैः परिवृतो मथुरां प्रतिपालय । शिवाशिवगणसंयुक्तां भोजवंशं प्रवर्द्धय ।
देवदेवाद्यनन्ताय शौरिणे वज्रपाणिना । प्रेषितं देवराजेन दिव्याभरणमम्बरं ।
माथुराणाञ्च सर्व्वेषां भागा दौवारिका इव । सूतमागधवन्दीनामेकैकस्य सहस्रिकं । ६२२०
इन्द्रस्योजनसंघानां गणिकानां शतं शतं । नृपेण सह तिष्ठन्ति विकद्रुप्रमुखाश्च ये ।
दशसाहस्रिको भागस्तेषां धात्रा प्रकल्पितः ।
॥ वैशम्पायन उवाच ॥ एवं संपूज्य राजेन्द्रं माथुराणां वसूत्तमैः । कृत्वा सुमहदानन्दं मथुरां मधुसूदनः ।
दिव्याभरणमाल्यैश्च दिव्याम्बरविलेपनैः । दीप्यमानः समन्ताच्च देवैरिव त्रिविष्टपे ।
भेरीपटहनादेन शङ्खदुन्दुभिनिस्वनैः । बृंहितेन च नागानां हयानां हेषितेन च । ६२२५
सिंहनादैश्च शूराणां रथनेमिस्वनेन च । तुमुलः सुमहानासीन्नादो मेघरवोपमः ।
वन्दिभिः स्तूयमानश्च नमस्कृत्यपि प्रजाः । दत्त्वा दानमनन्तञ्च स ययौ विष्णवं हरिः ।
स्वभावोन्नतभावत्वाद् दृष्टपूर्व्वं ततोऽधिकं । समदृष्टारभावाच्च विस्मयं स जगाम च ।
दीप्यमानं स्ववपुषा आयान्तं भास्करप्रभं । दृष्ट्वा मथुरवासिन्यो नमस्कृत् पदे पदे ।
एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्य्यङ्कमुत्सृज्याऽऽगमाम मथुरां पुरीं । ६२३०

तान् पक्षिपतितान् दृष्ट्वा रामकृष्णौ तु विस्मितौ । मनसा चिन्तयामास विज्ञातो पन्नगोत्तमं ।
ददर्श समनुप्राप्तं द्विजकायमनुत्तमं । प्रणम्य शिरसा ताभ्यां वाक्यज्ञो कृतात्मनः ।
तं दृष्ट्वा समनुप्राप्तं पक्षिणं वाक्यकोविदं । प्रीतिमान् वचनं जगाद मधुसूदनः ।
स्वागतं खगश्रेष्ठ सुरसेनारिमर्द्दन । विनतादयितानन्द स्वागतं केशवप्रिय ।
तमुवाच ततः कृष्णः शिरसा देवमिवापरं । तुष्टवान् मधुरया वाचा भाषीमं विनतात्मजं । ६१८५
॥ कृष्ण उवाच ॥ यास्यामः पतगश्रेष्ठ भोजस्यान्तःपुरं महत् । तत्र गत्वा सुखासीना मन्त्रयामो मनोगतं ।
॥ वैशम्पायन उवाच ॥ प्रविष्टौ तौ महावीर्यौ बलदेवजनार्द्दनौ । वैनतेयद्वितीयेन गुह्यं मन्त्रममन्त्रयन् ।
अवध्योऽसौ कृतोऽस्माकं सुमहच्च रिपोर्बलं । कृतः सैन्येन महता महद्भिश्च नराधिपैः ।
सङ्कुलानि च सैन्यानि हन्तुं वर्षशतैरपि । न शक्ष्यामः वयं नेतुं जरासन्धस्य वाहिनीं ।
अतोऽर्थं वैनतेय त्वां ब्रवीमि मथुरां पुरीं । वसतोरावयोः श्रेयो न भवेदिति मे मतिः । ६१९०
॥ गरुड उवाच ॥ देवदेवं नमस्कृत्वा गतोऽहं भवतोऽन्तिकात् । वासार्थमीक्षितुं भूमिं तव देव कुशस्थलीं ।
गत्वाऽहं खे समास्थाय समन्तादवलोक्य तां । दृष्ट्वा वै विबुधश्रेष्ठ पुरलक्षणपूजितां ।
सागरानूपविपुलां प्रागुदक्प्लवशीतलां । सर्व्वतोदधिमध्यस्थामभेद्यामिन्द्रदैरपि ।
सर्व्वरत्नाकरवतीं सर्व्वकामफलद्रुमां । सर्व्वर्त्तुकुसुमाकीर्णां सर्व्वतः सुमनोहरां ।
सर्व्वाश्रमाधिवासाश्च सर्व्वकामगुणैर्युतां । नरनारीगणाकीर्णां नित्यामोदविवर्द्धिनीं । ६१९५
प्राकारपरिक्षेपितां गोपुराट्टालमालिनीं । विचित्रचत्वरपथां विपुलद्वारतोरणां ।
चन्द्रार्गलविचित्राढ्यां हेमप्राकारशोभितां । नरनागाश्वकलिलां रथनेमिस्वनाकुलां ।
नानाद्विजगणाकीर्णां दिव्यपुष्पफलद्रुमां । पताकाध्वजमालाढ्यां महाभवनशालिनीं ।
भीषणीं रिपुसंघानां मित्राणां हर्षवर्द्धनीं । मनुजेन्द्राधिवासेभ्यो विशिष्टां नगरोत्तमां ।
रैवतश्च गिरिश्रेष्ठं कुरु देव सुरालयं । नन्दनप्रतिमं दिव्यं पुरद्वारस्य भूषणं । ६२००
कारयस्वाधिवासस्ते तत्र गत्वा सुरोत्तम । कुमाराणां प्रचारश्च सुरम्यो भविष्यति ।
नाम्ना द्वारवती नाम त्रिषु लोकेषु विश्रुता । भविष्यति पुरी रम्या शक्रस्येवामरावती ।
यदि स्यात् संहृता भूमिं प्रदास्यति महोदधिः । यथेष्टं विविधं कृत्वा विश्वकर्म्मा रचिष्यति ।
मणिमुक्ताप्रवालैश्च वज्रवैदूर्य्यसप्रभैः । द्रव्यैरभिप्राययुतैर्द्दिव्यरत्नैस्त्रिलोकजैः ।
दिव्यलक्ष्मसमाकीर्णान् स्वर्गे देवसभोपमान् । जाम्बूनदमयान् शुभ्रान् सर्व्वरत्नविभूषितान् । ६२०५
दिव्यध्वजपताकाढ्यान् देवकिन्नरपालितान् । चन्द्रसूर्य्यप्रभाकीर्णान् प्रासादान् कारय प्रभो ।
॥ वैशम्पायन उवाच ॥ एवं कृत्वा तु संजल्पं वैनतेयोऽथ केशवं । प्रणम्य शिरसा ताभ्यां निषसाद कृताञ्जलिः ।
कृष्णोऽपि रामसहितो विचिन्त्य हितमीरितं । प्रकाशं कर्त्तुकामश्च विसृज्य विनतात्मजं ।
सत्कृत्य विधिवद्राजन् महार्हवरभूषणैः । मोदेते सुखिनौ तत्र देवलोके यथाऽमरौ ।
तस्य तद्वचनं श्रुत्वा भोजराजो महायशाः । कृष्णं स्नेहेन विश्वस्तं बभाषे वचनामृतं । ६२१०

॥ उग्रसेन उवाच ॥ कृष्ण कृष्ण महाबाहो यदूनां नन्दिवर्द्धन । श्रूयतां यदहं त्वाऽद्य वक्ष्यामि रिपुसूदन ।

त्वया विहीनाः सर्व्वे स्म न शक्ताः सुखमासितुं । पुरेऽस्मिन् निवसन्तो वा पतिहीना इव स्त्रियः ।

त्वन्नाथा वयमत्यन्तं त्वद्बाहुबलमाश्रिताः । बिभीमो न नरेन्द्राणां देवेन्द्राणामपि माधव ।

विजयाय यदुश्रेष्ठ यत्र यत्र गमिष्यसि । तत्र त्वं सहितोऽस्माभिर्गन्तासि यादवर्षभ ।

तस्य राज्ञो वचः श्रुत्वा प्रहृष्टो देवकीसुतः । यथेष्टं भवतामद्य तथा कर्त्ताऽस्म्यसंशयं । ६५८५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे मन्त्रोदाहरणे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

॥ वैशम्पायन उवाच ॥ कस्यचित्त्वथ कालस्य सभांस्थान् यदुसंसदि । बभाषे पुण्डरीकाक्षो हेतुमद्वाक्यमुत्तमं ।

यादवानामियं भूमिर्मथुरा राष्ट्रवर्द्धिनी । वयञ्चैवेह सम्भूता व्रजे च परिवर्द्धिताः ।

तत्त्विदानीं गतं दुःखं शत्रवश्च पराजिताः । नृपेषु जनितं वैरं जरासन्धेन विग्रहः ।

वाहनानि च नः सन्ति पादातञ्चाप्यनन्तकं । रत्नानि च विचित्राणि मित्राणि सुबहूनि च ।

इयञ्च माथुरी भूमिरल्पा गम्या परस्य तु । वृद्धिश्चापि पराऽस्माकं बलतो मित्रतस्तथा । ६५९०

कुमारकोट्यो याश्चेमाः पदातीनां गणाश्च ये । एषामपीह बहूनां संमर्द्दमुपलक्षये ।

तस्माद्धि रोचतेऽन्यत्र निवासो यदुपुङ्गवाः । पुरीं निवेशयिष्यामि मम तद्दातुमर्हथ ।

एतद्वचनमुक्तं वो समाभिप्रायजं वचः । भवाय भवतां काले मयोक्तं यदुसंसदि ।

तमूचुर्यादवाः सर्व्वे प्रहृष्टमनसस्तदा । साध्यतां यदभिप्रेतं जनस्यास्य भवाय च ।

ततः सम्मन्त्रयामासुर्वृष्णयो मन्त्रमुत्तमं । अवध्योऽसौ नृपोऽस्माकं सुमहच्च रिपोर्बलं । ६५९५

ततः सैन्यक्षयश्चापि महानिह नराधिपैः । बहुत्वाच्च सैन्यानि हन्तुं वर्षशतैरपि ।

न शक्यामो ह्यतस्तेषामपयानेऽभवन्मतिः । एतस्मिन्नन्तरे राजा स कालयवनस्तदा ।

सैन्येन तद्विधेनैव मथुरामभ्युपागमत् । ततो जरासन्धबलं दुर्निवार्य्यं महत्तदा ।

ते कालयवनञ्चैव श्रुत्वेदं प्रतिपेदिरे । केशवः पुनरेवाह यादवान् सत्यसङ्गरान् ।

अद्यैव दिवसः पुण्यो निर्यात सबलानुगाः । ततो निष्क्रमुः सर्व्वे यादवाः कृष्णशासनात् । ६६००

ओघा इव समुद्रस्य बलौघप्रतिनादिताः । संप्रस्थिते ते कल्याणि वसुदेवपुरोगमाः ।

सुमन्त्रहृष्टैर्गजैर्मत्तैरथैरश्वैश्च दंशिताः । आहत्य दुन्दुभीः सर्व्वे सघनध्वानितास्तथा ।

निर्ययुर्यादवाः सर्व्वे मथुरामपहाय वै । अनल्पैः काञ्चनापीडैर्मत्तैश्च वरवारणैः ।

ह्रतमुत्तैश्च तुरगैः कशापार्ष्णिप्रचोदितैः । स्थानि स्थानि बलस्यापि क्षोभयन्तः प्रकम्पिताः ।

प्रत्यङ्मुखा ययुर्हृष्टा वृष्णयो भरतर्षभ । ततो मुदिततराः सर्व्वे यादवा रणशोभिनः । ६६०५

अनीकान्यपि कर्षन्तो वासुदेवपुरोगमाः । ते तु नानाद्रुमाकीर्णं नारिकेलवनैर्युतं ।

कीर्णं नागगणैः कान्तैः केतकीषण्डमण्डितं । पुन्नागतालीवकुलं द्राक्षावनयुतं क्वचित् ।

अनूपं सिन्धुराजस्य प्रपेदुर्यदुपुङ्गवाः । ते तत्र रमणीयेषु विषयेषु सुखप्रियाः ।

मुमुदुर्यादवाः सर्व्वे देवाः स्वर्गगता यथा । पुरञ्चास्य विचिन्वन् स कृष्णस्तु परवीरहा ।

ददर्श विपुलं देशं सागरानूपशोभितं । वाहनानां हितञ्चैव सिकताताम्रमृत्तिकं । ६४६०
पुरलक्षणसम्पन्नं कृतास्पदमिव श्रिया । सागरानिलसंवीतं सागराम्बुनिषेवितं ।
विषयं सिन्धुराजस्य शोभितं पुरलक्षणैः । तत्र रैवतको नाम पर्वतो नातिदूरतः ।
मन्दरोदारशिखरः पर्वतोऽभिविराजते । तत्रैकलव्यसंवासो द्रोणेनाध्युषितश्चिरं ।
प्रभूतपुरुषोपेतः सर्वरत्नसमाकुलः । विहारभूमिस्तत्रैव तस्य राज्ञः सुनिर्म्मिता ।
नाम्ना द्वारवती नाम स्वायताष्टापदोपमा । केशवेन मतिस्तत्र पुर्य्यर्थे विनिवेशिता । ६४६५
निवेशं तत्र सैन्यानां रोचयन्ति स्म यादवाः । ते रक्तसूर्य्ये दिवसे तत्र यादवपुङ्गवाः ।
सेनापालांश्च संचक्रुः स्कन्धावारनिवेशनं । उवास तत्र न्यवसत् केशवः सह यादवैः ।
देशे पुरनिवेशाय स यदुप्रवरो विभुः । तस्यास्तु विविधं नाम वास्तूनि च महायशाः ।
निर्म्ममे पुरुषश्रेष्ठो मनसा यादवोत्तमः । एवं द्वारवतीञ्चैव पुरीं प्राप्य सबान्धवाः ।
सुखिनो न्यवसन् राजन् स्वर्गे देवगणा इव । कृष्णोऽपि कालयवनं ज्ञात्वा केशिनिषूदनः । ६४७०
जरासन्धभयाच्चैव पुरीं द्वारवतीं ययौ ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि द्वारवतीप्रयाणे चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

॥ जनमेजय उवाच ॥ भगवन् श्रोतुमिच्छामि विस्तरेण तपोधन । चरितं वासुदेवस्य यदुश्रेष्ठस्य धीमतः ।
किमर्थञ्च परित्यज्य मथुरां मधुसूदनः । मध्यदेशस्य ककुदं धाम लक्ष्म्याश्च केवलं ।
शृङ्गं पृथिव्याः स्वालक्ष्यं प्रभूतधनधान्यवत् । आर्य्याढ्यजनभूयिष्ठमधिष्ठानवरोत्तमं ।
अयुद्धेनैव दाशार्हस्त्यक्तवान् द्विजसत्तम । स कालयवनश्चापि किं कृष्णं प्रत्यपद्यत । ६४७५
द्वारकाञ्च समाश्रित्य वारिदुर्गां जनार्द्दनः । किञ्चकार महाबाहुर्म्महायोगी महामनाः ।
किंवीर्य्यः कालयवनः केन जातश्च वीर्य्यवान् । यमसह्यं समालक्ष्य व्यपयातो जनार्द्दनः ।

॥ वैशम्पायन उवाच ॥ वृष्णीनामन्धकानाञ्च गुरुर्गार्ग्यो महातपाः । ब्रह्मचारी पुरा भूत्वा न च दारान् स विन्दति ।
तथा हि वर्त्तमानं तमूर्द्धरेतसमव्ययं । श्यालोऽभिशस्तवान् गार्ग्यमपुमानिति राजनि ।
सोऽभिशस्तस्तदा राजन्नगरे लज्जितस्त्वयं । लिप्सुः पुत्रं ततो गत्वा तपस्तेपे सुदारुणं । ६४८०
ततो द्वादशवर्षाणि सोऽयश्चूर्णमभक्षयत् । आराधयन्महादेवमचिन्त्यं शूलपाणिनं ।
रुद्रस्तस्मै वरं प्रादात् समर्थं युधि निग्रहे । वृष्णीनामन्धकानाञ्च सर्व्वतेजोमयं सुतं ।
ततः शुश्राव तं राजा यवनाधिपतिर्व्वरं । पुत्रप्रसवजं देवादपुत्रः पुत्रकामिना ।
स तमानाय्य नृपतिः सान्त्वयित्वा द्विजर्षभं । घोषमध्ये स्त्रियं राजा गोपस्त्रीषु समासृजत् ।
गोपाली त्वप्सरास्तत्र गोपस्त्रीवेशधारिणी । धारयामास गार्ग्यस्य गर्भं दुर्द्धरमच्युत । ६४८५
मानुष्यां गार्ग्यभार्य्यायां नियोगाच्छूलपाणिनः । स कालयवनो नाम जज्ञे शूरो महाबलः ।
अपुत्रस्याथ राज्ञस्तु ववृधेऽन्तःपुरे शिशुः । तस्मिन्नुपरते राजन् स कालयवनो नृपः ।
युद्धाभिकामो नृपतिः पर्य्यपृच्छद् द्विजोत्तमान् । वृष्ण्यन्धककुलं तस्य नारदेन निवेदितं ।

विज्ञाय वरदानन्तु नारदान्मधुसूदनः । उपैक्षत तेजस्वी वर्द्धमानं यवनेषु तं ।
स विवृद्धो यदा राजा यवनानां महाबलः । तत एनं नृपा म्लेच्छाः संश्रित्यानुययुस्तदा । ६४००
शकास्तुषारा दरदाः पारदास्तङ्गणाः खशाः । पह्लवाः शतशश्चान्ये म्लेच्छा हैमवतास्तथा ।
स तैः परिवृतो राजा दस्युभिः शलभैरिव । नानावेशायुधैर्भीमैर्मथुरामभ्यवर्त्तत ।
गजवाजिखरोष्ट्राणामयुतैरर्बुदैरपि । पृथिवीं कम्पयामास सैन्येन महता वृतः ।
रेणुना सूर्य्यमार्गन्तु समवच्छाद्य पार्थिवः । मूत्रेण शकृता चैव सैन्येन सस्रुजे नदीं ।
अश्वोष्ट्रशकृतां राशेर्निःसृता वै यतो नृप । ततोऽश्वशकृदित्येवं नाम तस्या बभूव ह । ६४०५
तत्सैन्यं महदायाति श्रुत्वा वृष्ण्यन्धकाग्रणीः । वसुदेवः समानाय्य ज्ञातीनिदमुवाच ह ।
इदं समुत्थितं घोरं वृष्ण्यन्धकभयं महत् । अवध्यश्चापि नः शत्रुर्वरदानात्पिनाकिनः ।
सामादयोऽभ्युपायाश्च विहितास्तेऽस्य सर्व्वशः । मत्तो मदबलाभ्यान्तु युद्धमेव चिकीर्षति ।
एतावानिह वासश्च कथितो नारदेन मे । जरासन्धश्च नो राजा नित्यमेव न मृष्यते ।
तथाऽन्ये पृथिवीपाला वृष्णिचक्रप्रतापिताः । केचित् कंसवधाच्चापि विरक्तास्मद्गता नृपाः । ६४१०
समाश्रित्य जरासन्धमस्मान्निच्छन्ति बाधितुं । बहवो ज्ञातयश्चैव यदूनां निहता नृपैः ।
विवर्द्धितुं न शक्ष्यामः पुरेऽस्मिन्निति केशवः । अपयाने मतिं कृत्वा दूतं तस्मै ससर्ज्ज ह ।
ततः कुम्भे महासर्पं भिन्नाञ्जनचयोपमं । घोरमाशीविषं कृष्णं कृष्णः प्राक्षेपयत्तदा ।
ततस्तं मुद्रयित्वा तु स्वदूतेनाभ्यहारयत् । निदर्शनार्थं गोविन्दो भीषयामास तं नृपं ।
स दूतः कालयवने दर्शयामास तं घटं । कालसर्पोपमः कृष्ण इत्युक्त्वा भरतर्षभ । ६४१५
तत्कालयवनो बुद्ध्वा त्रासनं यादवैः कृतं । पिपीलिकानां चण्डानां पूरयामास तं घटं ।
स सर्पो बहुभिस्तीक्ष्णैः सर्व्वतस्तैः पिपीलिकैः । भक्ष्यमाणः किलाङ्गेषु भस्मीभूतोऽभवत्तदा ।
तं मुद्रयित्वा तु घटं तथैव यवनाधिपः । प्रेषयामास कृष्णाय बाहुल्यमुपवर्णयन् ।
वसुदेवस्तु तं दृष्ट्वा विहतं योगमात्मनः । उत्सृज्य मथुरामाशु द्वारकामभिजग्मिवान् ।
वैरस्यान्तं विधित्संस्तु वासुदेवो महायशाः । निवेश्य द्वारकां राजन् वृष्णीनाश्वास्य चैव ह । ६४२०
पदातिः पुरुषव्याघ्रो बाहुप्रहरणस्तदा । आजगाम महायोगी मथुरां मधुसूदनः ।
तं दृष्ट्वा निर्ययौ हृष्टः स कालयवनो तदा । प्रेक्षापूर्व्वन्तु कृष्णोऽपि निश्चक्राम महाबलः ।
अथान्वगच्छद्गोविन्दं जिघृक्षुर्यवनेश्वरः । न चैनमशकद्राजा ग्रहीतुं योगधर्म्मिणं ।
मान्धातुस्तु सुतो राजा मुचुकुन्दो महायशाः । पुरा देवासुरे युद्धे कृतकर्म्मा महाबलः ।
वरेण च्छन्दितो देवैर्निद्रामेव गृहीतवान् । श्रान्तस्य तस्य वागेवं तदा प्रादुरभूत्किल । ६४२५
प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः । चक्षुषा क्रोधदीप्तेनेत्येवमाह पुनः पुनः ।
एवमस्त्विति तं शक्र उवाच त्रिदशैः सह । स सुरैरभ्यनुज्ञात आदिराजमुपागमत् ।
स पर्व्वतगुहां काञ्चित्प्रविश्य श्रमकर्षितः । सुष्वाप कालमेतं वै यावत् कृष्णस्य दर्शनं ।

तमर्थं वासुदेवस्य नारदेन निवेदितं । वरदानञ्च देवेभ्यस्तस्य च भूपतेः ।
कृष्णोऽनुगम्यमानस्तु तेन म्लेच्छेन प्रभुणा । तां गुहां मुचुकुन्दस्य प्रविवेश विनीतवत् ।      ६३७०
शिरःस्थाने तु राजर्षेर्मुचुकुन्दस्य केशवः । वस्त्रमपयं त्यक्त्वा तस्थौ बुद्धिमतां वरः ।
अनुप्रविश्य यवनो ददर्श पृथिवीपतिं । स तं सुप्तं कृतान्ताभमाससाद सुदुर्मतिः ।
वासुदेवन्तु तं मत्वा घट्टयामास पार्थिवं । पादेनात्मविनाशाय शलभः पावकं यथा ।
मुचुकुन्दस्तु राजर्षिः पादस्पर्शप्रबोधितः । चुकोप निद्राच्छेदेन पादस्पर्शेन तेन च ।
स संस्मृत्य वरं शक्रादवैक्षत तमग्रतः । स दह्यमानः क्रुद्धेन संप्रजज्वाल सर्व्वतः ।      ६३७५
ददाह पावकस्तन्तु शुष्कं वृक्षमिवाशनिः । क्षणेन कालयवनं नेत्रतेजोविनिर्गतः ।
तं वासुदेवः श्रीमन्तं चिरसुप्तं नराधिपं । कृतकार्य्योऽब्रवीद्धीमानिदं वचनमुत्तमं ।
राजंश्चिरप्रसुप्तोऽसि कथितो नारदेन मे । कृतं मे सुमहत्कार्य्यं स्वस्ति तेऽस्तु व्रजाम्यहं ।
वासुदेवमथालक्ष्य राजा ह्रस्वं प्रमाणतः । परिवृत्तं युगं मेने कालेन महता तदा ।
उवाच राजा गोविन्दं को भवान् किमिहागतः । कश्च कालः प्रसुप्तोऽस्मि यदि जानासि कथ्यतां ।      ६३८०
॥ वासुदेव उवाच ॥ सोमवंशोद्भवो राजा ययातिर्नाम नाहुषः । तस्य पुत्रो यदुर्ज्येष्ठश्चत्वारोऽस्य यवीयसः ।
यदुवंशे समुत्पन्नं वसुदेवात्मजं विभो । वासुदेवं विजानीहि नृपते मामिहागतं ।
त्रेतायुगे प्रसुप्तोऽसि विदितो मेऽसि नारदात् । इदं कलियुगं विद्धि किमन्यत्करवाणि ते ।
मम शत्रुस्त्वया दग्धो देवदत्तवरो नृप । अवध्यो यो मया संख्ये भवेद्वर्षशतैरपि ।
॥ वैशम्पायन उवाच ॥ इत्युक्तः स तु कृष्णेन निर्ज्जगाम गुहामुखात् । अन्वीयमानः कृष्णेन कृतकार्य्येण धीमता ।      ६३८५
ततो ददर्श पृथिवीमावृतां ह्रस्वकैर्नरैः । अल्पोत्साहैरल्पबलैरल्पवीर्य्यपराक्रमैः ।
परेणाधिष्ठितञ्चैव राज्यं केवलमात्मनः । प्रीत्या विसृज्य गोविन्दं प्रविवेश महावनं ।
हिमवन्तमगाद्राजा तपसे धृतमानसः । ततः स तप आस्थाय विनिर्मुच्य कलेवरं ।
आरुरोह दिवं राजा कर्म्मभिः स्वैर्ज्जितैः शुभैः । वासुदेवोऽपि धर्म्मात्मा उपायेन महामनाः ।
घातयित्वात्मनः शत्रुं तत्सैन्यं प्रत्यपद्यत । प्रभूतरथहस्त्यश्वसर्व्वशस्त्रायुधध्वजं ।      ६३९०
आदायोपययौ धीमांस्तत्सैन्यं निवृतेश्वरं ।
निवेदयामास नराधिपे तदा तदुग्रसेने प्रतिपूर्णमानसः । जनार्द्दनो द्वारवतीञ्च तां पुरीमशोभयत्तेन धनेन भूरिणा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कालयवनवधे पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥
॥ वैशम्पायन उवाच ॥ ततः प्रभाते विमले भास्करेऽभ्युदिते तदा । कृतजप्यो हृषीकेशो वनान्ते निषसाद ह ।
परिचक्राम तं देशं दुर्गस्थानदिदृक्षया । उपतस्थुः कुलमाग्र्या यादवा यदुनन्दनं ।
रोहिण्यामहनि श्रेष्ठे स्वस्ति वाच्य द्विजोत्तमान् । पुण्याहघोषैर्विपुलैर्दुर्गस्यारम्भवान् विभो ।      ६३९५
ततः पद्मपलाशाक्षो यादवान् केशिसूदनः । प्रोवाच वदतां श्रेष्ठो देवान् सुरपतिर्यथा ।
कल्पितेयं मया भूमिः पश्यध्वं देवसद्मवत् । नाम चास्याः कृतं पुर्य्याः ख्यातिं यदुपयास्यति ।

इयं द्वारवती नाम पृथिव्यां निर्म्मिता मया । भविष्यति पुरी रम्या शक्रस्येवामरावती ।
तान्येवास्याः कारयिष्ये चिह्नान्यायतनानि च । चत्वरान् राजमार्गांश्च समानन्तःपुराणि च ।
देवा इवात्र मोदन्तां भवन्तो विगतज्वराः । बाधमाना रिपून् सर्व्वानुग्रसेनपुरोगमाः । ६५१०
गृह्यन्तां गृहवास्तूनि कार्य्यन्तां विकचत्वराः । मीयन्तां राजमार्गाश्च प्राकारश्च च या गतिः ।
प्रेष्यन्तां शिल्पमुख्या वै नियुक्ता वेश्मकर्म्मसु । नियुज्यन्तां च देशेषु प्रेष्यकर्म्मकरा जनाः ।
एवमुक्तास्तु यदवो गृहसंग्रहतत्परा । यथानिवेशं संहृष्टाश्चक्रुर्व्वास्तुपरिग्रहं ।
सूत्रहस्तास्ततो मानं चक्रुर्यादवपुङ्गवाः । पुण्येऽहनि महाराज द्विजातीन् प्रतिपूज्य च ।
वास्तुदैवतकर्म्माणि विधिनाऽकारयंस्ततः । स्थपतीनथ गोविन्दस्तत्रोवाच महामतिः । ६५१५
अस्मदर्थे सुविहितं क्रियतामत्र मन्दिरं । विभक्तचत्वरपथं सुनिविष्टेष्टदैवतं ।
ते तथेति महाबाहुमुक्त्वा स्थपतयस्तदा । दुर्गकर्म्मणि सम्भारानुपलभ्य यथाविधि ।
यथान्यायं निर्म्ममिरे द्वाराण्यायतनानि च । स्थानानि विदधुस्तस्यां ब्रह्मादीनां यथाक्रमं ।
अपामग्नेः सुरेशस्य दृषदोलूखलस्य च । चातुर्द्धानि चत्वारि द्वाराणि विदधुश्च ते ।
शुद्धाक्षमैन्द्रं भल्लाटं पुष्पदन्तं तथैव च । तेषु वेश्मसु युक्तेषु यादवेषु महात्मसु । ६५२०
पुर्य्याः क्षिप्रं प्रवेशार्थं चिन्तयामास माधवः । तस्य देवात्थिता बुद्धिर्विमला क्षिप्रकारिणी ।
पुर्य्याः सा वै प्रियकरी यदूनामभिवर्द्धिनी । शिल्पिमुख्यस्तु देवानां प्रजापतिसुतः प्रभुः ।
विश्वकर्म्मा स्वमत्या वै पुरीं संस्थापयिष्यति । मनसा समनुध्याय तस्यागमनकारणात् ।
त्रिदशाभिमुखः कृष्णो विविक्ते समपद्यत । तस्मिन्नेव ततः काले शिल्पाचार्य्यो महामतिः ।
विश्वकर्म्मा सुरश्रेष्ठः कृष्णस्य प्रमुखे स्थितः । ६५२५
॥ विश्वकर्म्मोवाच ॥ शक्रेण प्रेषितः क्षिप्रं तव विष्णो इहानघ । किङ्करः समनुप्राप्तः शाधि मां किं करोमि ते ।
यथा प्रभुः स देवेशस्त्र्यम्बकश्च यथाऽव्ययः । तथा त्वं देव मान्योऽसि विशेषो नास्ति वः प्रभो ।
त्रैलोक्यव्यापिकां वाचमुत्सृज्यस्व महाभुज । एवोऽस्मि परितुष्टार्थः किं करोमि प्रशाधि मां ।
श्रुत्वा विनीतं तद्वाक्यं केशवो विश्वकर्म्मणः । प्रत्युवाच यदुश्रेष्ठः कंसारिरतुलं वचः ।
श्रुतार्थो देवगुह्यस्य भवान् यत्र वयं स्थिताः । अवश्यं त्विह कर्त्तव्यं सदनं मे सुरोत्तम । ६५३०
तदियं पूः प्रकाशार्थं निवेश्या मम सुव्रत । मत्प्रभावानुरूपैश्च गृहैश्चेयं समन्ततः ।
उत्तमा च पृथिव्यां स्यात् यथा स्वर्गेऽमरावती । तथैवं हि त्वया कार्य्या शक्रो यासि महामते ।
मम स्थानमिदं कार्य्यं यथैव त्रिदिवे तथा । मर्त्त्याः पश्यन्तु मे लक्ष्मीं पुर्य्यां यदुकुलस्य च ।
एवमुक्तस्ततः प्राह विश्वकर्म्मा मतीश्वरः । कृष्णमक्लिष्टकर्म्माणं देवामित्रविनाशनं ।
सर्व्वमेतत् करिष्यामि यत्त्वयाऽभिहितं प्रभो । पुरी त्वियं जनस्यास्य न पर्य्याप्ता भविष्यति । ६५३५
भविष्यति च विस्तीर्णा हर्म्यैरस्याः सुशोभना । चत्वारः सागरा ह्यस्यां विचरिष्यन्ति रूपिणः ।
यदीच्छेत् सागरः किञ्चिदुत्स्रष्टुमिह तोयराट् । ततः स्वायतलक्ष्मा पुरी स्यात् पुरुषोत्तम ।

एवमुक्तस्ततः कृष्णः प्रागेव कृतनिश्चयः । सागरं सरितां नाथमुवाच वदतांवरः ।
समुद्र दश च द्वे च योजनानि जलाशये । प्रतिसंह्रियतामात्मा यद्यस्ति मयि मान्यता ।
अवकाशे त्वया दत्ते पुरीयं मामकं बलं । पर्य्याप्तविषयारामा समग्रं विषहिष्यति । ६६४०
ततः कृष्णस्य वचनं श्रुत्वा नदनदीपतिः । समारुतेन योगेन उत्ससर्ज्ज जलाशयं ।
विश्वकर्म्मा ततः प्रीतः पुर्य्याः संदृश्य वास्तु तत् । गोविन्दे चैव सम्मानं सागरः कृतवांस्तदा ।
विश्वकर्म्मा ततः कृष्णमुवाच यदुनन्दनं । अद्यप्रभृति गोविन्द सर्व्वे समभिरोहत ।
मनसा निर्म्मिता चेयं मया पूः प्रवरा विभो । अचिरेणैव कालेन गृहसंबाधमालिनी ।
भविष्यति पुरी रम्या सुद्वारा प्राग्र्यतोरणा । चयाट्टालककेयूरा पृथिव्यां ककुदोपमा । ६६४५
अन्तःपुरञ्च कृष्णस्य परिचर्य्याक्षमं महत् । चकार तस्यां पुर्य्यां वै देशे त्रिदशपूजिते ।
ततः सा निर्म्मिता कान्ता पुरी द्वारवती तदा । मानसेन प्रयत्नेन वैष्णवी विश्वकर्म्मणा ।
विधानविहितद्वारा प्राकारवरशोभिता । परिखाचयसंगुप्ता साट्टप्राकारतोरणा ।
कान्तनारीनरगणा वणिग्भिरुपशोभिता । नानापण्यसमाकीर्णा गगनादिव गाङ्गता ।
प्रपावापीप्रसन्नादेरुद्यानैरुपशोभिता । समन्ततः संवृताङ्गी वनितेव घनेक्षणा । ६६५०
सम्मृष्टचत्वरवती वेश्मान्तसघमार्चिता । रथ्याकोटिसहस्राढ्या शुभ्रराजपथोत्तरा ।
भूषयन्ती समुद्रं सा स्वर्गमिन्द्रपुरी यथा । पृथिव्यां सर्व्वरत्नानामेका निचयशालिनी ।
सुराणामपि संनत्रा सामन्तक्षोभकारिणी । अप्रकाशं तदाकाशं प्रासादैरभिकुर्व्वती ।
पृथिव्यां प्रथुराष्ट्रायां जनौघप्रतिनादिता । चाषैश्च वारिराजस्य शिशिरोहतमारुता ।
अनूपोपवनैः कान्तैः कान्ता जनमनोरमा । सतारका द्यौरिव सा द्वारका प्रत्यराजत । ६६५५
प्राकारेणार्कवर्णेन शातकौम्भेन संवृता । हिरण्मयप्रतिपूर्णैश्च गृहैर्गम्भीरनिस्वनैः ।
शुभ्रमेघप्रतीकाशैर्द्वारैः सौधैश्च शोभिता । कचित् कचिद्दयापैरुपाट्टसमहापथा ।
तामावसत् पुरीं कृष्णः सर्व्वयादवनन्दनः । अभिप्रेतजनाकीर्णां सोमः खमिव भासयन् ।
विश्वकर्म्मकृतां दिव्यां रत्नजालसमाकुलां । विश्वकर्म्मा च तां कृत्वा पुरीं शक्रपुरीमिव ।
जगाम त्रिदिवं देवो गोविन्देनाभिपूजितः । भूयस्तु बुद्धिरभवत् कृष्णस्य विदितात्मनः । ६६६०
जनानिमान् धनौघेन तर्पयेयमहं यदि । स वैश्रवणसंश्लिष्टं निधीनामुत्तमं निधिं ।
शङ्खमाह्वयतोपेन्द्रो निशि स्वभवने विभुः । स शङ्खः केशवाह्वानं ज्ञात्वा हि निधिराट् स्वयं ।
आजगाम समीपं वै तस्य द्वारवतीपतेः । स शङ्खः प्राञ्जलिर्भूत्वा विनयादवनौं गतः ।
कृष्णं विज्ञापयामास यथा वैश्रवणं तथा । भगवन् किं मया कार्य्यं सुराणां वित्तरक्षिणा ।
नियोजय महाबाहो यन्मया कार्य्यमच्युत । तमुवाच हृषीकेशः शङ्खं गुह्यकसत्तमं । ६६६५
जना येऽस्मिन् कृशधनास्तान्धनेनाभिपूरय । नेच्छाम्यनशितं द्रष्टुं कृशं मलिनमेव वा ।
देहीति चैव याचन्तं नगर्य्यां निर्द्धनं नरं ।

॥ वैशम्पायन उवाच ॥ शिरसा शासनं दृष्ट्वा निधिराट् केशवस्य सः । निधीनाज्ञापयामास द्वारवत्यां गृहे गृहे ।
धनौघैरभिवर्षध्वं यक्षाः सर्वे तथा च ते । नाधनो विद्यते तत्र क्षीणभाग्योऽपि वै नरः ।
द्वारवत्यां पुरि पुरा केशवस्य महात्मनः । चकार वायोराह्वानं भूयश्च पुरुषोत्तमः । ६६६०
तत्रस्थ एव भगवान् यादवानां प्रियङ्करः । प्राणयोनिश्च भूतानामुपतस्थे गदाधरं ।
एकमासीनमेकान्ते देवगुह्यधरं प्रभुं । किं मया देव कर्त्तव्यं सर्व्वगेनाशुगामिना ।
यथैव दूतो देवानां तथैवास्मि तवानघ । तमुवाच ततः कृष्णो रहस्यं पुरुषो हरिः ।
मारुतं जगतः प्राणं रूपिणं समुपस्थितं । गच्छ मारुत देवेशमनुमान्य सहामरैः ।
सभां सुधर्म्मामादाय देवेभ्यस्त्वमिहानय । यादवा धार्म्मिका ह्येते विक्रान्ताश्च सहस्रशः । ६६६५
तस्यां विशेयुरेते हि न तु या कृत्रिमा भवेत् । या त्वक्षया सभा रम्या कामगा कामरूपिणी ।
सा यदून् धारयेत् सर्व्वान् यथैव त्रिदशांस्तथा । संगृह्य वचनं तस्य कृष्णस्याक्लिष्टकर्म्मणः ।
वायुरात्मोपमगतिर्जगाम त्रिदिवालयं । सोऽनुमान्य सुरान् सर्व्वान् कृष्णवाक्यं निवेद्य च ।
सभां सुधर्म्मामादाय पुनरायान्महीतलं । सुधर्म्मणे सुधर्म्माख्यां कृष्णायाक्लिष्टकर्म्मणे ।
देवो देवसभां दत्त्वा वायुरन्तरधीयत । द्वारवत्यास्तु सा मध्ये केशवेन निवेशिता । ६६७०
सुधर्म्मा यदुमुख्यानां देवानां त्रिदिवे यथा । एवं स दिव्यैर्भौमैश्च जलजैश्चाव्ययो हरिः ।
द्रव्यैरलङ्करोति स्म पुरीं स्वां प्रमदामिव । मर्य्यादाश्चैव सञ्चक्रे श्रेणीश्च प्रकृतीस्तथा ।
बलाध्यक्षांश्च युक्तांश्च प्रकृतीशांस्तथैव च । उग्रसेनं नरपतिं काश्यपञ्चापि पुरोहितं ।
सेनापतिमनाधृष्टिं विकद्रुं मन्त्रिपुङ्गवं । यादवानां कुलकरान् स्थविरान्दश तत्र वै ।
स्थापयामास मतिमान् सर्व्वकार्य्येष्वनन्तरान् । रथेष्वतिरथो यन्ता दारुकः केशवस्य वै । ६६७५
योधमुख्यश्च योधानां प्रवरः सात्यकिः कृतः । विधानमेवं कृत्वा स कृष्णः पुर्य्यामनिन्दितः ।
मुमुदे यदुभिः सार्द्धं लोकस्रष्टा महीतले । रेवतस्याथ कन्याञ्च रेवतीं शीलसम्मतां ।
प्राप्तवान् बलदेवस्तु कृष्णस्यानुमते तदा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि द्वारवतीनिर्म्माणे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु जरासन्धः प्रतापवान् । नृपानुद्योजयामास चेदिराजप्रियेप्सया ।
सुतया भीष्मकस्याथ रुक्मिण्यां रुक्मभूषणः । शिशुपालस्य नृपतेर्विवाहो भविता किल । ६६८०
दन्तवक्त्रस्य तनयं सुवक्त्रममितौजसं । सहस्राक्षसमं युद्धे मायाशतविशारदं ।
पौण्ड्रस्य वासुदेवस्य तथा पुत्रं महाबलं । सुदेवं वीर्य्यसम्पन्नं पृथगक्षौहिणीपतिं ।
एकलव्यस्य पुत्रञ्च वीर्य्यवन्तं बलान्वितं । पुत्रञ्च पाण्ड्यराजस्य कलिङ्गाधिपतिं तथा ।
कृतवैरञ्च कृष्णेन वेणुदारिं नराधिपं । अंशुमन्तं तथा क्राथं श्रुतर्व्वाणञ्च भारत ।
निर्वृत्तशत्रुं कालिङ्गं गान्धाराधिपतिं तथा । पटुमञ्च महावीर्य्यं कौशाम्ब्याधिपमेव च । ६६८५
पटुमञ्च महावीर्य्यं काश्याधिपतिमेव च ।

॥ जनमेजय उवाच ॥ कस्मिन् देशे नृपो जज्ञे रुक्मी वेदविदाम्बरः। कस्यान्ववाये द्युतिमान् तन्मे ब्रूहि द्विजसत्तम।
॥ वैशम्पायन उवाच ॥ राजर्षेर्यादवस्यासीद्विदर्भो नाम वै सुतः। विन्ध्यस्य दक्षिणे पार्श्वे विदर्भां यो न्यवेशयत्।
क्रथकैशिकमुख्यास्तु पुत्रास्तस्य महात्मनः। बभूवुर्वीर्य्यसम्पन्नाः पृथग्वंशकरा नृपाः।
तस्यान्ववाये भीमस्य जज्ञिरे वृष्णयो नृप। क्रथस्य त्वंशुमान् वंशे कैशिकस्य तु भीष्मकः। ६५९०
हिरण्यरोमेत्याख्यां दाक्षिणात्येश्वरं जनाः। अगस्त्यगुप्तामाशां यः कुण्डिनस्थोऽन्वशान्नृपः।
रुक्मी तस्याभवत् पुत्रो रुक्मिणी च विशाम्पते। रुक्मी त्वस्त्राणि दिव्यानि द्रुमात् प्राप महाबलः।
जामदग्न्यात्तथा रामाद्ब्राह्ममस्त्रमवाप्तवान्। प्रास्पर्द्धत स कृष्णेन नित्यमद्भुतकर्म्मणा।
रुक्मिणी त्वभवद्राजन् रूपेणासदृशी भुवि। चकमे वासुदेवस्तां श्रवादेव महामतिः।
स तया चाभिलषितः श्रवादेव जनार्द्दनः। तेजो वीर्य्यबलोपेतः स मे भर्त्ता भवेदिति। ६५९५
तां ददौ न च कृष्णाय रुक्मी द्वेषान्महाबलः। याचमानाय कंसस्य द्वेष्योऽसाविति चिन्तयन्।
चैद्यस्यार्थे सुनीथस्य जरासन्धो महाबलः। वरयामास तां राजा भीष्मकं भीमदर्शनं।
चेदिराजस्य हि वसोरासीत् पुत्रो बृहद्रथः। मगधेषु पुरा येन निर्म्मितः स गिरिव्रजः।
तस्यान्ववाये संजज्ञे जरासन्धो महाबलः। वसोरेव तदा वंशे दमघोषोऽपि चेदिराट्।
दमघोषस्य पुत्रास्तु पञ्च भीमपराक्रमाः। भगिन्यां वसुदेवस्य श्रुतश्रवसि जज्ञिरे। ६६००
शिशुपालो दशग्रीवो रैभ्योऽथोपदिशो बली। सर्व्वास्त्रकुशला वीरा वीर्य्यवन्तो महाबलाः।
ज्ञातिः समानवंशस्य सुनीथः प्रददौ सुतं। जरासन्धस्तु सुतवद्दर्शनं जुगोप च।
जरासन्धं पुरस्कृत्य वृष्णिशत्रुं महाबलं। कृतान्यागांसि चैद्येन वृष्णीनां तत्प्रियैषिणा।
जामाता त्वभवत्तस्य कंसस्तस्मिन् हते युधि। कृष्णार्थे वैरमभवत् जरासन्धस्य वृष्णिभिः।
भीष्मकं वरयामास सुनीथार्थे तु रुक्मिणीं। तां ददौ भीष्मकश्चापि शिशुपालाय वीर्य्यवान्। ६६०५
ततश्चैद्यमुपादाय जरासन्धो नराधिपः। ययौ विदर्भां सहितो दन्तवक्रेण धीमता।
अनुयातश्च पौण्ड्रेण वासुदेवेन धीमता। अङ्गवङ्गकलिङ्गानामीश्वरश्च महाबलः।
मानयिष्यंश्च तान् रुक्मी प्रत्युद्गम्य नराधिपान्। परया पूजयोपेतांश्चानिनाय पुरीं प्रति।
पितृष्वसुः प्रियार्थेश्च रामकृष्णावुभावपि। प्रययुर्वृष्णयश्चान्ये रथैस्तत्र बलान्विताः।
क्रथकैशिकभर्त्ता तान् प्रतिसृज्य यथाविधि। पूजयामास पूजार्हान् बहिरेव न्यवेशयत्। ६६१०
श्वो भाविनि विवाहे तु रुक्मिणी निर्ययौ बहिः। चतुर्युजा रथेनेष्टं देवतायतनं शुभा।
इन्द्राणीमर्चयिष्यन्ती कृतकौतुकमङ्गला। दीप्यमानेन वपुषा बलेन महता वृता।
तां ददर्श ततः कृष्णो लक्ष्मीं साक्षादिव स्थितां। रूपेणाग्र्येण सम्पन्नां देवतायतनान्तिके।
वह्नेरिव शिखां दीप्तां मायां भूमिगतामिव। पृथिवीमिव गम्भीरामुत्थितां पृथिवीतलात्।
मरीचिमिव सोमस्य सौम्यां स्त्रीविग्रहां भुवि। श्रीमिवाग्र्यां विनापद्मां भविष्यां श्रीसहायिनीं। ६६१५
कृष्णेन मनसा दृष्टां दुर्निरीक्ष्यां सुरैरपि। श्यामावदातां श्यामाभां पृथुचार्व्वायतेक्षणां।

ताम्राक्षनयनापाङ्गीं पूर्णचन्द्रनिभाननां । ताम्रतुङ्गनखीं सुभ्रूं नीलकुञ्चितमूर्द्धजां ।
अत्यर्थं रूपतः कान्तां पीनश्रोणिपयोधरां । तीक्ष्णाग्रैः समैर्दन्तैः प्रभासद्भिरलङ्कृतां ।
अनन्यां प्रमदां लोके रूपेण यशसा श्रिया । रुक्मिणीं रूपिणीं देवीं पाण्डरक्षौमवासिनीं ।
तां दृष्ट्वा ववृधे कामः कृष्णस्य प्रियदर्शनां । हविषेवानलस्यार्च्चिर्मनसास्यां समादधत् । ६६१०
रामेण सह सम्मन्त्र्य केशवस्तु महाबलः । ततः प्रमाथेऽकरोद्बुद्धिं वृष्णिभिः प्रविधाय च ।
कृते तु देवकार्य्ये तां निष्क्रामन्तीं सुरालयात् । उत्क्षिप्य सहसा कृष्णः स्वं निनाय रथोत्तमं ।
वृक्षमुत्पाट्य रामोऽपि जघानापततः परान् । सन्नद्धाश्च दाशार्हाः सदाशस्त्रास्तु सर्वशः ।
ते रथैर्विविधाकारैः समुच्छ्रितमहाध्वजैः । वाजिभिर्वारणैश्चैव परिवव्रुर्हलायुधं ।
आदाय रुक्मिणीं कृष्णो जगामाशु पुरीं प्रति । रामे भारं समासज्य युयुधाने च वीर्य्यवान् । ६६१५
अक्रूरे विपृथौ चापि गदे च कृतवर्म्मणि । चक्रदेवे सुदेवे च सारणे च महाबले ।
निवृत्तशत्रौ विक्रान्ते भङ्गकारे विदूरथे । उग्रसेनात्मजे कङ्के शतद्युम्ने च केशवः ।
राजाधिदेवे मृदरे प्रसेने चित्रके तथा । अतिदान्ते बृहद्दुर्गे श्वफल्के सत्यके पृथौ ।
वृष्ण्यन्धकेषु चान्येषु मुख्येषु मधुसूदनः । गुरुमासज्य तं भारं ययौ द्वारवतीं प्रति ।
दन्तवक्त्रो जरासन्धः शिशुपालश्च वीर्य्यवान् । सन्नद्धा निर्ययुः क्रुद्धा जिघांसन्तो जनार्द्दनं । ६६२०
अङ्गवङ्गकलिङ्गैश्च सार्द्धं पौण्ड्रश्च वीर्य्यवान् । निर्ययौ चेदिराजस्तु भ्रातृभिः स महारथैः ।
तान् प्रत्यगृह्णन् संरब्धा वृष्णिवीरा महारथाः । सङ्कर्षणं पुरस्कृत्य वासवं मरुतो यथा ।
आपतन्तं हि वेगेन जरासन्धं महाबलं । षड्भिर्विव्याध नाराचैर्युयुधानो महाहवे ।
अक्रूरो दन्तवक्त्रन्तु विव्याध नवभिः शरैः । तं प्रत्यविध्यत् कारूषो बाणैर्दशभिराशुगैः ।
विपृथुः शिशुपालञ्च शरैर्विव्याध सप्तभिः । अष्टभिः प्रत्यविध्यत्तं शिशुपालः प्रतापवान् । ६६२५
गवेषणस्तु चैद्यन्तु षड्भिर्विव्याध मार्गणैः । अतिदान्तस्तथाऽष्टाभिर्बृहद्दुर्गन्तु पञ्चभिः ।
प्रतिविव्याध तावैद्यः पञ्चभिः पञ्चभिः शरैः । जघानाश्वांश्चतुर्भिस्तु चतुरो विपृथोः शरैः ।
बृहद्दुर्गस्य भल्लेन शिरश्चिच्छेद वीर्य्यवान् । गवेषणस्य सूतञ्च प्राहिणोद्यमसादनं ।
हताश्वन्तु रथं त्यक्त्वा विपृथुः सुमहाबलः । आरुरोह रथं क्षिप्रं बृहद्दुर्गस्य वीर्य्यवान् ।
विपृथोः सारथिश्चैव गवेषणरथं द्रुतं । आरुह्य जवनानश्वान् नियन्तुमुपचक्रमे । ६६३०
ते क्रुद्धाः शरवर्षेण सुनीथं समवाकिरन् । नृत्यन्तो रथमार्गेषु चापहस्ताः कलापिनः ।
चक्रदेवो दन्तवक्त्रं बिभेदोरसि पत्रिणा । पटुमं पञ्चभिश्चापि विव्याध युधि मार्गणैः ।
ताभ्यां स विद्धो दशभिर्व्वाणैर्व्वातिगैः शितैः । ततो बली चक्रदेवं बिभेद दशभिः शरैः ।
पञ्चभिश्चापि विव्याध स विदूराद्विदूरथं । विदूरथोऽपि तं षड्भिर्व्विव्याधाशु शितैः शरैः ।
त्रिंशता प्रत्यविध्यत्तं बली वार्ष्णेर्महाबलं । कृतवर्म्मा बिभेदाशु राजपुत्रं त्रिभिः शरैः । ६६३५
न्यहनत् सारथिञ्चास्य ध्वजञ्चिच्छेद चोच्छ्रितं । प्रतिविव्याध तं क्रुद्धः पौण्ड्रः षड्भिः शिलीमुखैः ।

धनुश्चिच्छेद तरसा भल्लेन कुलवर्द्धनः। विद्धस्तु कालिङ्गं विव्याध नवभिः शरैः।
तोमरेणांसदेशे तं निर्बिभेद कलिङ्गजः। गजेनासाद्य कण्ठन्तु गजमङ्गस्य वीर्य्यवान्।
तोमरेण जघानाङ्गं बिभेदाङ्गश्च तं शरैः। चित्रकश्च चपलकश्च सत्यकश्च महाबलः।
कलिङ्गस्य तदाऽनीकं नाराचैर्बिभिदुः शितैः। निहत्य रुक्मिणाऽसौ वङ्गराजस्य कुञ्जरं। ६६१०
जघान रामः संक्रुद्धो वङ्गराजञ्च संयुगे। तं हत्वा रथमारुह्य धनुरादाय वीर्य्यवान्।
सङ्कर्षणो जघानोग्रैर्नाराचैः कैशिकान् बहून्। षड्भिर्निहत्य काश्यान् महेष्वासान् स वीर्य्यवान्।
शतं जघान संक्रुद्धो मागधानां महाबलः। निहत्य तान्महाबाहुर्जरासन्धं ततोऽभ्ययात्।
तमापतन्तं विव्याध नाराचैर्मागधस्त्रिभिः। तं बिभेदाष्टभिः क्रुद्धो नाराचैर्मुशलायुधः।
चिच्छेद चास्य भल्लेन ध्वजं हेमपरिष्कृतं। तद्युद्धमभवद्घोरं तेषां देवासुरोपमं। ६६१५
सृजतां शरवर्षाणि निघ्नतामितरेतरं। गजैर्गजाः सुसंक्रुद्धाः सन्निपेतुः सहस्रशः।
रथैरथाश्च संरब्धाः सादिभिश्चापि सादिनः। पदातयः पदातीनां शक्तिचर्म्मासिपाणयः।
छिन्दन्तो ह्युत्तमाङ्गानि विचेरुर्युधि ते पृथक्। असीनां पात्यमानानां कवचेषु महात्मनां।
शराणां पततां शब्दः पक्षिणामिव शुश्रुवे। भेरीशङ्खमृदङ्गानां वेणूनाञ्च स्वने ध्वनिं।
अभूच्च घोषः शस्त्राणां ज्याघोषश्च महात्मनां। ६६२०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीहरणे सप्तदशाधिकशततमोऽध्यायः॥ ११७ ॥

॥ वैशम्पायन उवाच ॥ कृष्णेन ह्रियमाणां वै रुक्मी श्रुत्वा तु रुक्मिणीं। प्रतिज्ञामकरोत् क्रुद्धः समक्षं भीष्मकस्य तु।
अहत्वा युधि गोविन्दमनानीय च रुक्मिणीं। कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि ते।
आस्थाय स रथं वीरः समुद्यतायुधध्वजं। जवेन प्रययौ क्रुद्धो बलेन महता वृतः।
तमन्वयुर्नृपाश्चैव दक्षिणापथवासिनः। क्राथोंऽशुमान् श्रुतर्व्वा च वेणुदारिश्च वीर्य्यवान्।
भीष्मकस्य सुताश्चान्ये स्यन्दनैरथिनाम्वराः। क्रथकैशिकमुख्याश्च सर्व्व एव महारथाः। ६६२५
ते गत्वा दूरमध्वानं सरितं नर्म्मदामनु। गोविन्दं ददृशुः क्रुद्धाः सहैव प्रियया स्थितं।
अवस्थाप्य च तत्सैन्यं रुक्मी मदबलान्वितः। चिकीर्षन् द्वैरथं युद्धमभ्ययान्मधुसूदनं।
स विव्याध चतुःषष्ट्या गोविन्दं निशितैः शरैः। तं प्रत्यविध्यत्सप्तत्या बाणैर्युधि जनार्द्दनः।
यतमानस्य चिच्छेद ध्वजञ्चास्य महाबलः। जहार च शिरः कायात्सारथेस्तस्य वीर्य्यवान्।
तं कृच्छ्रगतमाज्ञाय परिवव्रुर्जनार्दनं। दाक्षिणात्या जिघांसन्तो राजानः सर्व्व एव हि। ६६३०
तमंशुमान्महाबाहुर्विव्याध नवभिः शरैः। श्रुतर्व्वा पञ्चभिः क्रुद्धो वेणुदारिश्च सप्तभिः।
ततोंऽशुमन्तं गोविन्दो बिभेदोरसि वीर्य्यवान्। निषसाद रथोपस्थे व्यथितः स नराधिपः।
श्रुतर्व्वणो जघानाश्वांश्चतुर्भिश्चतुरः शरैः। वेणुदारेर्ध्वजं छित्त्वा भुजं विव्याध दक्षिणं।
तथैव च श्रुतर्व्वाणं शरैर्विव्याध सप्तभिः। शिश्रिये च ध्वजं श्रान्तो व्यसीदच्च व्यथान्वितः।

कथकैशिकमुख्यास्ते रथवंशेन सर्व्वशः सुसन्नः शरवर्षाणि वासुदेवं मनोऽब्रुवु । ६६७५
बाणैर्बाणांस्तु चिच्छेद तेषां युधि जनार्द्दनः । जघान चैषां संरब्धो यतमानांश्च तान् परान् ।
पुनरन्यांस्त्रिःपञ्चा निजघान शितैः शरैः । कुद्धानापततो वीरानाहूयन्त महारथाः ।
विद्रुतं स्वबलं दृष्ट्वा रुक्मी क्रोधसमन्वितः । पञ्चभिर्निशितैर्बाणैर्विव्याधोरसि केशवं ।
सारथिञ्चास्य विव्याध सायकैर्निशितैस्त्रिभिः । आजघान ध्वजञ्चास्य शरेणानतपर्व्वणा ।
केशवश्चापि तं षष्ट्या क्रुद्धो विव्याध मार्गणैः । धनुश्चिच्छेद चाप्यस्य यतमानस्य रुक्मिणः । ६६८०
अथान्यद्धनुरादाय रुक्मी कृष्णजिघांसया । प्रादुश्चकार च तथा दिव्यान्यस्त्राणि वीर्य्यवान् ।
अस्त्रैरस्त्राणि संवार्य्य तस्य कृष्णो महाबलः । पुनश्चिच्छेद चापञ्च रथेषाञ्च त्रिभिः शरैः ।
स छिन्नधन्वा विरथः खड्गमादाय चर्म्म च । उत्पपात रथाद्वीरो गरुत्मानिव वीर्य्यवान् ।
तस्याभिपततः खड्गं चिच्छेद युधि केशवः । नाराचैस्त्रिभिराक्रुद्धो बिभेदैनमथोरसि ।
स पपात महाबाहुर्व्वसुधामनुनादयन् । विसंज्ञो मूर्च्छितो राजा वज्रेणेव हतो गिरिः । ६६८५
तांश्च राज्ञः शरैः सर्व्वान् पुनर्विव्याध केशवः । रुक्मिणं पतितं दृष्ट्वा व्यद्रवन्त नराधिपाः ।
विचेष्टमानं भूमौ तं भ्रातरं वीक्ष्य रुक्मिणी । पादयोर्न्यपतद्भर्त्तुर्भ्रातुर्जीवितकाङ्क्षिणी ।
तामुत्थाप्य परिष्वज्य सान्त्वयामास केशवः । अभयं रुक्मिणे दत्त्वा प्रययौ स्वां पुरीं ततः ।
वृष्णयोऽपि जरासन्धं जित्वा तांश्चापि पार्थिवान् । प्रययुर्द्वारकां हृष्टाः पुरस्कृत्य हलायुधं ।
प्रयाते पुण्डरीकाक्षे श्रुतर्व्वाऽभ्येत्य संयुगे । रुक्मिणं रथमारोप्य प्रययौ स्वपुरं ततः । ६६९०
अनानीय स्वसारन्तु रुक्मी वीर्य्यमदान्वितः । हीनप्रतिज्ञो नैच्छत् स प्रवेष्टुं कुण्डिनं पुरं ।
विदर्भेषु च वासार्थं निर्म्ममेऽन्यत् पुरं महत् । तद्भोजकटमित्येवं बभूव भुवि विश्रुतं ।
तत्रौजसा महातेजा दक्षिणां दिशमन्वगात् । भीष्मकः कुण्डिने चैव राजावास महाभुजः ।
द्वारकाञ्चापि सम्प्राप्ते रामे वृष्णिबलान्विते । रुक्मिण्याः केशवः पाणिं जग्राह विधिवत् प्रभुः ।
ततः सह तया रेमे प्रियया प्रीयमाणया । सीतयेव पुरा रामः पौलोम्येव पुरन्दरः । ६६९५
सा हि तस्याभवज्ज्येष्ठा पत्नी कृष्णस्य भाविनी । पतिव्रता गुणोपेता रूपशीलगुणान्विता ।
तस्यामुत्पादयामास पुत्रान्दश महारथान् । चारुदेष्णं सुदेष्णञ्च प्रद्युम्नञ्च महाबलं ।
सुषेणं चारुगुप्तञ्च चारुबाहुञ्च वीर्य्यवान् । चारुविन्दं सुचारुञ्च भद्रचारुन्तथैव च ।
चारुञ्च बलिनां श्रेष्ठं सुतां चारुमतीं तथा । धर्म्मार्थकुशलास्ते तु कृतास्त्रा युद्धदुर्म्मदाः ।
महिषीः सप्त कल्याणीस्ततोऽन्या मधुसूदनः । उपयेमे महाबाहुर्गुणोपेताः कुलोद्गताः । ६७००
कालिन्दीं मित्रविन्दाञ्च सत्यां नाग्नजितीं तथा । सुतां जाम्बवतश्चापि रोहिणीं कामरूपिणीं ।
मद्रराजसुताञ्चापि सुशीलां भद्रलोचनां । सात्राजितीं सत्यभामां लक्ष्मणां जालहासिनीं ।
शैब्यस्य च सुतां तन्वीं रूपेणाप्सरसां समां । स्त्रीसहस्राणि चान्यानि षोडशातुलविक्रमः ।

उपयेमे हृषीकेशः सर्व्वा भैमी च ताः शुभाः । परार्द्ध्यवस्त्राभरणाः कामैः सर्व्वैः समन्विताः ।
जज्ञिरे तस्य पुत्राश्च तासु वीराः सहस्रशः । सर्व्वास्त्रकुशलाः सर्व्वे बलवन्तो महारथाः । ६७०५
यज्वानः पुण्यकर्म्माणो महाभागा महाबलाः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीहरणे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
॥ वैशम्पायन उवाच ॥ ततः काले व्यतीते तु रुक्मी भवति वीर्य्यवान् । दुहितुः कारयामास स्वयंवरमरिन्दमः ।
तत्राहूता हि राजानो राजपुत्राश्च रुक्मिणा । समाजग्मुर्महावीर्य्या नानादिग्भ्यः श्रियाऽन्विताः ।
तत्राजगाम प्रद्युम्नः कुमारैरपरैर्वृतः । सा हि तं चकमे कन्या स च तां शुभलोचनां ।
शुभाङ्गी नाम वैदर्भी कान्तिद्युतिसमन्विता । पृथिव्यामभवत् ख्याता रुक्मिणस्तनया तदा । ६७१०
उपविष्टेषु सर्व्वेषु पार्थिवेषु महात्मसु । वैदर्भी वरयामास प्रद्युम्नमरिसूदनं ।
स हि सर्व्वास्त्रकुशलः सिंहसंहननो युवा । रूपेणाप्रतिमो लोके केशवस्यात्मजोऽभवत् ।
वयोरूपगुणोपेता राजपुत्री च साऽभवत् । नारायणीवेन्द्रसेना जातकामा च तं प्रति ।
वृत्ते स्वयंवरे जग्मू राजानः स्वपुराणि ते । उपादाय तु वैदर्भीं प्रद्युम्नो द्वारकां ययौ ।
स तस्यां जनयामास देवगर्भोपमं सुतं । अनिरुद्धमिति ख्यातं कर्म्मणाऽप्रतिमं भुवि । ६७१५
धनुर्व्वेदे च वेदे च नीतिशास्त्रे च पारगं । सम्भवत्स यदा राजन्ननिरुद्धो वयोऽन्वितः ।
तदाऽस्य रुक्मिणः पौत्रीं रुक्मिणीं रुक्मसन्निभां । पत्न्यर्थं वरयामास नाम्ना रुक्मवतीति सा ।
अनिरुद्धं गुणैर्दान्तं कृतबुद्धिर्नृपसत्तमः । प्रीत्या च रौक्मिणेयस्य रुक्मिणश्चाप्यपद्यत ।
स्पर्द्धमानोऽपि कृष्णेन वैरं तदपहाय सः । ददानीत्यब्रवीद्राजा प्रीतिमान् जनमेजय ।
केशवः सह रुक्मिण्या पुत्रैः सङ्कर्षणेन च । अन्यैश्च वृष्णिभिः सार्द्धं विदर्भान् सबलो ययौ । ६७२०
संयुक्ता ज्ञातयश्चैव रुक्मिणः सुहृदश्च ये । आहूता रुक्मिणा तेऽपि तत्राजग्मुर्नराधिपाः ।
शुभे तिथौ महाराज नक्षत्रे चाभिपूजिते । विवाहः सोऽनिरुद्धस्य बभूव परमोत्सवः ।
पाणौ गृहीते वैदर्भ्यास्त्वनिरुद्धेन भारत । वैदर्भयादवानाञ्च बभूव परमोत्सवः ।
रेमिरे वृष्णयस्तत्र पूज्यमाना यथाऽमराः । अथाश्मकानामधिपो वेणुदारिरुदारधीः ।
आर्च्चः श्रुतर्व्वा चाणूरः क्राथस्त्वंशुमानपि । जयत्सेनः कलिङ्गानामधिपश्च महाबलः । ६७२५
पाण्ड्यश्च नृपतिः श्रीमानृषिकाधिपतिस्तथा । एते संमन्त्र्य राजानो दाक्षिणात्या महर्द्धयः ।
अभिगम्याब्रुवन् सर्व्वे रुक्मिणं रहसि प्रभुं । भवानक्षेषु कुशलो वयञ्चापि रिरंसवः ।
प्रियद्यूतश्च रामोऽप्यक्षेष्वनिपुणोऽपि च । तं भवन्तं पुरस्कृत्य जेतुमिच्छाम तं वयं ।
इत्युक्तो रोचयामास रुक्मी द्यूतं महारथः । ते शुभां काञ्चनस्तम्भां कुसुमैर्भूषिताजिरां ।
सभां तां विविशुर्हृष्टाः सिक्तां चन्दनवारिणा । तां प्रविश्य ततः सर्व्वे शुभ्रस्रगनुलेपनाः । ६७३०
सौवर्णेष्वासनेष्वासाञ्चक्रिरे विजिगीषवः । आहूतो बलभद्रस्तु कितवैरक्षकोविदैः ।
वाढमित्यब्रवीद्धृष्टः सह दीव्याम पश्यतां । निश्चयात् तं जिगीषन्तो दाक्षिणात्या नराधिपाः ।

मणिमुक्तासुवर्णानि तत्राजह्नुः सहस्रशः। ततः प्रावर्तत द्यूतं तेषां तद्गतिमानसम्।
कलहायास्पदं घोरं दुर्मतीनां भयावहं। निष्काणां तु सहस्राणि सुवर्णस्य दशादितः।
रुक्मिणा सह सम्पाते बलदेवो ग्लहं ददौ। तं जिगाय ततो रुक्मी वर्तमानं महाबलं। ६७०५
तावदेवापरं भूयो बलदेवं जिगाय सः। अवहस्योच्यमानस्तु रुक्मिणा केशवाग्रजः।
सुवर्णकोटीर्जग्राह ग्लहे तस्य महाबलः। जितमित्येव हृष्टोऽथ समाकृतिरभाषत।
श्लाघमानस्तु चिक्षेप प्रहसन्मुसलायुधं। अविद्यो दुर्बलः श्रीमान् हिरण्यमजितं मया।
अजेयो बलदेवोऽयमक्षद्यूते पराजितः। कलिङ्गराजस्तच्छ्रुत्वा प्रजहास भृशं तदा।
दन्तान् प्रदर्शयन् हृष्टस्तदाक्रुध्यद्धलायुधः। रुक्मिणस्तद्वचः श्रुत्वा पराजयनिमित्तजं। ६७१०
निगृह्यमानस्तीक्ष्णाभिर्वाग्भिर्भीष्मकसूनुना। रोषमाधारयामास जितरोषोऽपि धर्मवित्।
संक्रुद्धो धर्षणां प्राप्य रौहिणेयो महाबलः। धैर्यात्मनः संनियम्य ततो वचनमब्रवीत्।
दशकोटिसहस्राणि ग्लह एको ममापरः। एतं संपरिगृह्णीष्व पातयाक्षान्नराधिप।
कृष्णाश्वान् लोहिताश्वांश्च देशेऽस्मिंस्त्वधिपांशुने। इत्येवमाह्वयामास रुक्मिणं रौहिणीसुतः।
अनुक्त्वा वचनं किञ्चिद्बाढमित्यब्रवीत् पुनः। अक्षान् रुक्मी तदा धूर्तः पातयामास पार्थिवः। ६७१५
चातुरक्षे तु निर्वृत्ते निर्जितः स नराधिपः। बलदेवेन धर्मेण नेत्युवाच ततो बलं।
धैर्यात्मनः संनियम्य न स किञ्चिदुवाच ह। बलदेवं ततो रुक्मी मया जितमिति स्मयन्।
बलदेवस्तु तच्छ्रुत्वा जिह्मवाक्यं नराधिपात्। भूयः क्रोधसमाविष्टो नोत्तरं व्याजहार ह।
ततो गम्भीरनिर्घोषा वागुवाचाशरीरिणी। बलदेवस्य तं क्रोधं वर्द्धयन्ती महात्मनः।
सत्यमाह बलः श्रीमान्धर्मेणैव पराजितः। अनुक्त्वाऽपि ततः किञ्चित् प्राप्तो भवति कर्मणा। ६७२०
मनसा समनुज्ञातं तत् स्यादित्यवगम्यतां। इति श्रुत्वा वचः सत्यमन्तरीक्षात् सुभाषितं।
सङ्कर्षणस्तदोत्थाय सौवर्णेनारुणा बली। जघानाष्टापदेनैव प्रमथ्य यदुपुङ्गवः।
रुक्मिण्या भ्रातरं ज्येष्ठं निष्पिपेष महीतले। विवादे कुपितो रामः स्वैरं क्रूरभाषिणं।
ततोऽपहृत्य संक्रुद्धः कलिङ्गाधिपतेरपि। दन्तान् बभञ्ज संरम्भात् प्रोन्ननाद च सिंहवत्।
खड्गमुद्यम्य तांश्चापि त्रासयामास पार्थिवान्। स्तम्भं सभायाः सौवर्णमुत्पाट्य बलिनाम्वरः। ६७२५
गजेन्द्र इव तं स्तम्भं कर्षन् सङ्कर्षणस्ततः। निर्जगाम सभाद्वारात्त्रासयन् क्रथकैशिकान्।
रुक्मिणं निकृतिप्रज्ञं स हत्वा यादवर्षभः। वित्रास्य द्विषतः सर्वान् सिंहः क्षुद्रमृगानिव।
जगाम शिबिरं रामः स्वमेव स्वजनावृतः। न्यवेदयत कृष्णाय तच्च सर्वं यथाऽभवत्।
नोवाच स तदा किञ्चित् कृष्णो रामं महाद्युतिः। रुक्मिणी च ततः श्रुत्वा निहतं भ्रातरं प्रियं।
निरुद्ध्य च तदात्मानं क्रोधादश्रूण्यवर्त्तयत्। न हतो वासुदेवेन यः पूर्वं परवीरहा। ६७३०
स रामकरमुक्तेन निहतो द्यूतमण्डले। अष्टापदेन बलश्लाघी वज्रधरोपमः।
तस्मिन् हते महावीर्ये नृपतौ भीष्मकात्मजे। द्रुमभार्गवतुल्ये वै द्रुमभार्गवशिक्षिते।

हतौ च युद्धकुशले नित्यकालजिति पातिते। हस्त्यश्वरथसंघाश्च सर्व्वे विमनसोऽभवन्।
एतत्ते सर्व्वमाख्यातं रुक्मिणो निधनं मया। वैरस्य च समुत्थानं वृष्णिभिर्भरतर्षभ।
वृष्णयोऽपि महाराज धनान्यादाय सर्व्वशः। रामकृष्णौ समाश्रित्य ययुर्द्वारवतीं पुरीं। ६०४५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिवधे ऊनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

॥ जनमेजय उवाच ॥ भूय एव तु विप्रर्षे बलदेवस्य धीमतः। माहात्म्यं श्रोतुमिच्छामि शेषस्य धरणीधृतः।
अतीव बलदेवस्त्वं तेजोराशिसमन्वितं। कथयन्ति महात्मानो ये पुराणविदो जनाः।
तस्य कर्म्माण्यहं विप्र श्रोतुमिच्छामि तत्त्वतः। अनन्तं यं विदुर्नागमादिदेवं महौजसं।
॥ वैशम्पायन उवाच ॥ पुराणे नागराजोऽसौ कथ्यते धरणीधरः। शेषस्तेजोनिधिः श्रीमानव्ययः पुरुषोत्तमः।
योगाचार्य्यो महावीर्य्यो वेदमन्त्रमुखो बली। जरासन्धं गदायुद्धे जितवान् यो न चावधीत्। ६०५०
बहवश्चैव राजानः पृथिव्यां पृथिवीपते। अन्वयुर्मागधं सर्व्वे ते चापि विजिता रणे।
नागायुतबलप्राणो भीमो भीमपराक्रमः। स बलदेवेन बाहुयुद्धे विनिर्ज्जितः।
दुर्य्योधनस्य कन्यान्तु हरमाणो न्यगृह्यत। साम्बो जाम्बवतीपुत्रो नगरे नागसाह्वये।
राजभिः सर्व्वतो रुद्धो हरमाणो बलात् किल। तमुपश्रुत्य संद्रष्टुमाजगाम हलायुधः।
रामस्तस्य तु मोक्षार्थमागतो नालभच्च तं। ततश्चक्रोध बलवानद्भुतञ्चाकरोन्महत्। ६०५५
अनिवार्य्यमसंधार्य्यं दिव्यमप्रतिमं बली। लाङ्गलास्त्रं समुद्यम्य ब्रह्मदण्डाभिमन्त्रितं।
प्राकारवप्रे विन्यस्य पुरस्य स महाद्युतिः। प्रचकर्षैकहस्ताग्रं नगरं कौरवस्य तत्।
तदा घूर्णितमालक्ष्य पुरं दुर्य्योधनो नृपः। साम्बं निर्यातयामास सभार्य्यं तस्य धीमतः।
ददौ शिष्यं तदात्मानं रामस्य सुमहात्मनः। गदायुद्धे कुरुपतिं शिष्यं जग्राह तञ्च सः।
ततः प्रभृति राजेन्द्र पुरमेतद्विघूर्णितं। आवर्ज्जितमिवाभाति गङ्गामभिमुखं नृप। ६०६०
इदमित्यद्भुतं कर्म्म रामस्य प्रथितं भुवि। भाण्डीरे कथ्यते राजन् यत् कृतं शौरिणा पुरा।
प्रलम्बं मुष्टिनैकेन यज्जघान हलायुधः। धेनुकञ्च महाकायं चिक्षेप नगमूर्द्धनि।
स गतासुः पपातोर्व्व्यां दैत्यो गर्द्दभरूपधृक्।
लवणजलगमा महानदी द्रुतजलवेगतरङ्गगामिनी। नगरमभिमुखी यदा कृता हलविधृता यमुना यमस्वसा।
बलदेवस्य माहात्म्यमेतत्ते कथितं मया। अनन्तस्याप्रमेयस्य शेषस्य सुमहात्मनः। ६०६५
इति पुरुषवरस्य सौरिणो बहुविधमुक्तमनन्यदेव च। यदकथितमिहाद्य कर्म्म ते तदुपलभस्व पुराणविस्तरात्।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि बलदेवमाहात्म्यकथने विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

॥ जनमेजय उवाच ॥ प्रत्येत्य द्वारकां विष्णुर्हते रुक्मिणि वीर्य्यवान्। अकरोद्यन्महाबाहुस्तन्मे वद महामुने।
॥ वैशम्पायन उवाच ॥ स तैर्वृतः पुरीं गत्वा सर्व्वयादवनन्दनः। द्वारकां भगवान् कृष्णः प्रत्यवेक्षत वीर्य्यवान्।
प्रत्यपद्यत रत्नानि विविधानि बहूनि च। यथार्हं पुण्डरीकाक्षो नैर्ऋतान् प्रत्यवारयत्।
तत्र विघ्नं चरन्ति स्म दैतेयाः सह दानवैः। तान् जघान महाबाहुर्वरदत्तान् महासुरान्। ६०७०

विघ्नश्चाप्याकरोत्तत्र नरको नाम दानवः । त्रासनः सुरसङ्घानां देवराजरिपुर्बली ।
स भूमेर्मूर्त्तिलिङ्गस्थः सर्व्वदेवाभिबाधिता । मानुषाणामृषीणाञ्च प्रतीपमकरोत्तदा ।
त्वष्टुर्दुहितरं भौमः कशेरुमगमत्तदा । गजरूपेण जग्राह रुचिराङ्गीं चतुर्दशीं ।
प्रमथ्य तां वरारोहां नरको वाक्यमब्रवीत् । नष्टशोकभयो मोहात् प्राग्ज्योतिषपतिस्तदा ।
यानि देवमनुष्येषु रत्नानि विविधानि च । बिभर्त्ति च मही कृत्स्ना सागरेषु च यद्वसु । ६७९५
अद्यप्रभृति तानीह सहिताः सर्व्वनैर्ऋताः । ममैवोपाहरिष्यन्ति दैत्याश्च सह दानवैः ।
एवमुक्त्वा तु वस्त्राणि रत्नानि विविधानि च । सञ्जहार तदा भौमस्तच्च नाधिचकार सः ।
गन्धर्व्वाणाञ्च याः कन्या जहार नरको बली । याश्च देवमनुष्याणां सप्त चाप्सरसां गणाः ।
चतुर्दशसहस्राणि सैकविंशच्छतानि च । एकवेणीधराः सर्व्वाः सतां मार्गमनुव्रताः ।
तासां पुरवरं भौमोऽकारयन्मणिपर्व्वते । अलकायामदीनात्मा मुरोः स्वविषयं प्रति । ६८००
ताश्च प्राग्ज्योतिषपतिं मुरोश्चैव दशात्मजाः । नैर्ऋताश्च यथा मुख्याः पालयन्त उपासते ।
स एष तमसः पारे वरदत्तो महासुरः । स चासुरगणैः सर्व्वैः सहितैः कर्म तत् पुरा ।
कृतपूर्व्वं महाघोरं यदकार्षीन्महासुरः । अदितिं धर्षयामास कुण्डलार्थे महासुरः ।
यं मही सुषुवे देवी यस्य प्राग्ज्योतिषं पुरं । दारपालाश्च चत्वारस्तस्यासन् युद्धदुर्म्मदाः ।
हयग्रीवो निसुन्दश्च वीरः पञ्चनदस्तथा । मुरुः पुत्त्रसहस्रैश्च वरदत्तोऽसुरो महान् । ६८०५
आदेवयानमावृत्य पन्थानं समुपस्थिताः । वित्रासनाः सुकृतिनां विरूपैराक्षसैः सह ।
तद्वधार्थं महाबाहुः शङ्खचक्रगदासिभृत् । जातो वृष्णिषु देवक्यां वसुदेवाज्जनार्द्दनः ।
तस्याथ पुरुषेन्द्रस्य लोके प्रथिततेजसः । निवासो द्वारकादेवैरुपायादुपपादिता ।
अतीव हि पुरी रम्या द्वारका वासवक्षयात् । महार्णवपरिक्षिप्ता पञ्चपर्व्वतशोभिता ।
तस्यां देवपुराभायां सभा काञ्चनतोरणा । सा दाशार्हीति विख्याता योजनायामविस्तृता । ६८१०
तत्र वृष्ण्यन्धकाः सर्व्वे रामकृष्णपुरोगमाः । लोकयात्रामिमां कृत्स्नां परिरक्षन्त आसते ।
तत्रासीनेषु सर्व्वेषु कदाचिद्भरतर्षभ । दिव्यगन्धो ववौ वायुः पुष्पवर्षं पपात च ।
ततः किल्किलाशब्दः प्रभाजालाभिसंवृतः । मुहूर्त्तमन्तरीक्षेऽभूत्ततो भूमौ प्रतिष्ठितः ।
मध्ये तु तेजसस्तस्य पाण्डरं गजमास्थितः । वृतो देवगणैः सर्व्वैर्वासवः प्रत्यदृश्यत ।
रामकृष्णौ च राजा च वृष्ण्यन्धकगणैः सह । प्रत्युद्ययुर्महात्मानं पूजयन्तः सुरेश्वरं । ६८१५
सोऽवतीर्य्य गजात्तूर्णं परिष्वज्य जनार्द्दनं । सस्वजे बलदेवञ्च तथा राजानमाहुकं ।
वृष्णीनन्यान् सस्वजे च यथाकालं यथावयः । पूजितो रामकृष्णाभ्यामाविवेश सभां शुभां ।
तत्रासीनोऽभ्यलङ्कृत्य सभान्तां स सुरेश्वरः । अर्घ्यादिसमुदाचारं प्रत्यगृह्णाद्यथाविधि ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नरकवधे एकविंशत्यधिकशततोऽध्यायः ॥ १२१ ॥
॥ वैशम्पायन उवाच ॥ अथोवाच महातेजा वासवो वासवानुजं । सान्त्वपूर्व्वं करेणास्य संस्पृश्य वदनं शुभं ।

देवकीनन्दन वचः शृणु मे मधुसूदन । येन माऽभिगतोऽस्म्यद्य कार्य्येणामित्रकर्षण । ६८८०
भौमोऽसौ नरको नाम ब्रह्मणो वरदर्पितः । अदित्याः कुण्डले मोहादाजहार दितिनन्दनः ।
देवानां विप्रियं नित्यमृषीणाञ्च स वर्त्तते । तव चैवान्तरप्रेप्सो जहि तं पापपूरुषं ।
अयं त्वां गरुडस्तत्र प्रापयिष्यति कामगः । कामवीर्य्योऽतितेजस्वी वैनतेयोऽन्तरीक्षगः ।
अवध्यः सर्व्वभूतानां भौमः स नरकोऽसुरः । निसूदयित्वा तं पापं क्षिप्रमागन्तुमर्हसि ।
इत्युक्तः पुण्डरीकाक्षो देवराजेन केशवः । प्रतिजज्ञे महाबाहुर्नरकस्य निबर्हणं । ६८८५
ततः सहैव शक्रेण शङ्खचक्रगदासिधृक् । प्रतस्थे गरुडेनाथ सत्यभामासहायवान् ।
क्रमेण सप्तस्कन्धान् स मारुतानां स वासवः । पश्यतां यदुसिंहानामूर्द्धमाचक्रमे बली ।
वारणेन्द्रगतः शक्रो गरुडस्थो जनार्द्दनः । प्रकाशेते विदूरस्थात् सूर्य्याचन्द्रमसाविव ।
अथान्तरीक्षे गन्धर्व्वैरप्सरोभिश्च केशवः । स्तूयमानोऽथ शक्रस्य क्रमेणान्तरधीयत ।
समाधायेतिकर्त्तव्यं वासवो त्रिदशाधिपः । स्वमेव भवनं प्रायात् कृष्णः प्राग्ज्योतिषं प्रति । ६८९०
पक्षानिलहतो वायुः प्रतिलोमं ववौ तदा । ततो भीमरवैर्मेघैर्बभ्रमुर्गगनेचराः ।
क्षणेन समनुप्राप्तो दिवमाकाशगेन वै । दूरादेव च तान्दृष्ट्वा प्रययौ यत्र ते स्थिताः ।
अपश्यत् पर्व्वतद्वारि हस्त्यश्वरथवाहनं । क्षुरान्तान् मौरवान् पाशान् षट्सहस्रान्ददर्श सः ।
॥ वैशम्पायन उवाच ॥ गरुडस्योपरि श्रीमान् शङ्खचक्रगदासिधृक् । बिभ्रन्नीलाम्बुदाकारं पीतवासाश्चतुर्भुजः ।
वनमालाकुलोरस्कः श्रीवत्सेन्दुनिभाननः । किरीटमूर्द्धा सूर्य्याभः सविद्युदिव चन्द्रमाः । ६८९५
ज्याविकर्षमहाशब्दः श्रूयतेऽशनिनिस्वनः । ज्ञात्वा च दानवः सर्व्वं स्वयं विष्णुरिहागतः ।
क्रोधाद्रुधिररक्ताक्षो मुरः कालान्तकप्रभः । अभ्यधावत वेगेन शक्तिं गृह्य महासुरः ।
चिक्षेप स महाशक्तिं वज्रकाञ्चनभूषितां । तामापतन्तीं शक्तिं स महोल्कां ज्वलितामिव ।
समाधत्त शरश्चैकं रुक्मपुङ्खं जनार्द्दनः । द्विधाऽच्छिनत् क्षुरप्रेण वासुदेवः स वीर्य्यवान् ।
शक्तिं चिच्छेद तत्रासौ विद्युत्पुञ्ज इव ज्वलन् । पुनस्तु क्रोधरक्ताक्षो मुरस्तेभ्य महागदां । ६९००
इन्द्राशनिर्विभिन्नेण विसृष्ट इव निस्वनः । आकर्णपूर्णं चिक्षेप अर्द्धचन्द्रं सुरोत्तमः ।
मध्यदेशे तु चिच्छेद गदां तां रुक्मभूषितां । पुनश्चिच्छेद भल्लेन दानवस्य शिरो रणे ।
संच्छिद्य पाशान् सर्व्वांस्तान्मुरं हत्वा सबान्धवं । सोऽग्र्यवेगगतान् हत्वा नरकस्य महाबलान् ।
शिलासंघानतिक्रम्य भगवान् देवकीसुतः । अपश्यद्दानवं सैन्यं निसुन्दस्य महाबलं ।
हयग्रीवञ्च दितिजं तथाऽन्यांश्चित्रयोधिनः । रोधयामास तन्मार्गं स्वसैन्येन महाबलः । ६९०५
निसुन्दो बलिनां श्रेष्ठो रथमास्थाय सत्वरः । अपाह कार्म्मुकं दिव्यं हेमपृष्ठं दुरासदं ।
विव्याध दशभिर्ब्बाणैर्निसुन्दो मधुसूदनं । केशवश्चापि सप्तत्या विव्याध निशितैः शरैः ।
अप्राप्तांश्चान्तरीक्षे ताञ्छरांश्चिच्छेद माधवः । ते सर्व्वे सैनिकाः कृष्णं समन्तात् पर्य्यवारयन् ।
शरजालेन महता छाद्यमानः सुरोत्तमः । दृष्ट्वा तान्दानवान् सर्व्वान् सक्रोधो मधुसूदनः ।

ततो दिव्येन शास्त्रेण पार्ज्जन्येन जनार्द्दनः । महता शरवर्षेण वारयामास तद्बलं । ६८५०
पञ्चपञ्चशरैस्तेषु एकैकेषु च तान् बहून् । पार्ज्जन्यस्य प्रभावेन सर्व्वान्मर्म्मस्वताडयत् ।
दुद्रुवुर्भयवित्रस्ता भग्नास्ते दानवा रणे । स्वसैन्यं विद्रुतं दृष्ट्वा निसुन्दस्तु पुनर्मृधे ।
विसृजञ्छरवर्षाणि छादयामास केशवं । न विभाति रणे सूर्य्यो नापि व्योम दिशो दश ।
शरैः सञ्छादयामास निसुन्दो गरुडध्वजं । सावित्रं नाम दिव्यास्त्रं जग्राह पुरुषोत्तमः ।
तेन बाणेन तान् बाणांश्चिच्छेद मधुसूदनः । बाणैर्बाणांस्तु सञ्छिद्य तत्र कृष्णो महाबलः । ६८५५
छत्रमेकेन बाणेन रथेषाञ्च त्रिभिः शरैः । पुनश्चिच्छेद तानश्वांश्चतुर्भिश्चतुरः शरैः ।
सारथिं पञ्चभिर्ब्बाणैर्ध्वजमेकेन चिच्छिदे । शरेणैकेन पुनः कृष्णः सुतीक्ष्णेन शितेन वै ।
शिरश्चिच्छेद भल्लेन निसुन्दस्य सुरोत्तमः । निसुन्दं पतितं दृष्ट्वा हयग्रीवः प्रतापवान् ।
शिलां प्रगृह्य महतीं ताडयामास दानवः । आविध्य सहसा मुक्तः शिलां शैलसमप्रभः ।
गृहीत्वा दिव्यमस्त्रं स समस्तास्त्रविदाम्बरः । दिव्यास्त्रेण शिलां विष्णुः सप्तधा कृतवांस्तदा । ६८६०
तद्विदार्य्य महत्कार्यं पातयामास भूतले । ततस्तैः शार्ङ्गनिर्मुक्तैर्नानावर्णैर्महाशरैः ।
यथा देवासुरं युद्धमभवद्भरतर्षभ । नानाप्रहरणाकीर्णं तथा घोरमवर्त्तत ।
गरुडस्थो महाबाहुर्निजघान महासुरान् । महास्त्रकृत्तनिर्भिन्नाः शरवृष्टिनिपातिताः ।
विनेदुर्द्दानवाः सर्व्वे समासाद्य जनार्द्दनं । केचिच्चक्राग्निना दग्धा दानवाः पेतुरम्बरात् ।
सन्निकर्षगताः केचिद्गतासुविकृताननाः । असृजन् शरवर्षाणि वृष्टिमन्त इवाम्बुदाः । ६८६५
विकृताङ्गाऽसुराः सर्व्वे कृष्णबाणप्रपीडिताः । शोणिताक्ता व्यदृश्यन्त पुष्पिता इव किंशुकाः ।
व्यद्रवन्त सुवित्रस्ता भग्नास्ते चित्रयोधिनः । पुनस्तु क्रोधरक्ताक्षो वीर्य्यवान् दानवः ।
दशव्यामोच्छ्रितं वृक्षं समारुह्य वनस्पतिं । वृक्षमुत्पाट्य वेगेन प्रगृह्य समधावत ।
चिक्षेप सुमहावृक्षं शिलया तु घनाकृतिः । वृक्षवेगानिलोद्धूतः शुशुभे सुमहाम्बरः ।
ततः शरसहस्रेण त्वरमाणो जनार्द्दनः । नैकधा तञ्च चिच्छेद चित्रभानुनिभाकृतिं । ६८७०
पुनश्चैकेन बाणेन हयग्रीवस्य चोरसि । विव्याध सर्वयोधानां नायको ज्वलनप्रभः ।
विवेश सोऽतिवेगेन हृदि भित्त्वा विनिर्गतः । यः सहस्रं समास्त्वेकः सर्व्वान्देवानयोधयत् ।
तं जघान महाघोरं हयग्रीवं महाबलं । अपारतेजा दुर्द्धर्षः सर्व्वयादवनन्दनः ।
मध्ये लोहितगङ्गस्य भगवान्देवकीसुतः । औदकायां विरूपाक्षं पाप्मानं पुरुषोत्तमः ।
अष्टौ शतसहस्राणि दानवानां परन्तपः । निहत्य पुरुषव्याघ्रः प्राग्ज्योतिषमुपाद्रवत् । ६८७५
हत्वा पञ्चनदं नाम नरकस्य महासुरं । ततः प्राग्ज्योतिषं नाम दीप्यमानमिव श्रिया ।
पुरमासादयामास तत्र युद्धमभून्महत् । ततः प्राध्मापयच्छङ्खं पाञ्चजन्यं महाबलः ।
शुशुभे स महाशब्दः संवर्त्तनिनदो यथा । श्रूयते त्रिषु लोकेषु भीमगम्भीरनिःस्वनः ।
तं श्रुत्वा नरकश्चापि क्रोधसंरक्तलोचनः । लोहचक्राष्टसंयुक्तं विमानमनिलं ययौ ।

रत्नकाञ्चनचित्राढ्यं वेदिकाभिरलङ्कृतं । महाध्वजेन महता काञ्चनेन विराजितं। ६८८०
हेमदण्डपताकाढ्यं वैदूर्य्यमणिकूवरं । युक्तमश्वसहस्रेण रथं पररथावहं ।
लोहजालैश्च सञ्छन्नं चित्रभक्तिविराजितं । रथमध्यगतो वीरः सवन्ध्य इव भास्करः
नानाप्रहरणाकीर्णं रथं हेमपरिष्कृतं ।
वपुं तयोरम्बुदसन्निभवर्णव्यालम्बमुक्ताफलतुल्यतेजाः । किरीटमूर्द्धाऽर्कसमानभाः कर्णौ तथा कुण्डलयोर्ज्वलन्तौ ।
धूम्रवर्णा महाकाया रक्ताक्षा विकृताननाः । नानाकवचिनः सर्व्वे दैत्यदानवराक्षसाः । ६८८५
खड्गचर्म्मधराः केचित् केचित्तूणीरसंवृताः । शक्तिहस्तास्तथा केचिच्छूलहस्तास्तथाऽपरे ।
गजवाजिरथौघैश्च चालयन्तश्च मेदिनीं । निर्ययुर्नगराच्छूराः सुसन्नद्धाः प्रहारिणः ।
वृतो दैत्यगणैः साद्धं नरकः कालसन्निभः । भेरीशङ्खमृदङ्गानां पणवानां सहस्रशः ।
वाद्यमानं स सुश्राव जीमूतनिनदोपमं । ततः कृष्णान्तिकं गत्वा सर्व्वे ते विकृताननाः ।
परिवार्य्य गरुत्मन्तं सर्व्वेऽयुध्यन्त सङ्गताः । सहसा छादयामासुः शरवर्षेण सैनिकाः । ६८९०
शक्तिशूलगदाप्रासांस्तोमरान् सायकान् बहून् । आकाशं छादयामासुर्विमुञ्चन्तः सहस्रशः ।
कृष्णः कृष्णाम्बुदाकारः शार्ङ्गं सज्यं धनुस्ततः । विस्फार्य्य सुमहच्चापं धनुर्ज्यानादनिस्वनं ।
व्यसृजच्छरवर्षाणि दानवानां जनार्द्दनः । शरवर्षेण तत् सैन्यं व्यद्रवत्तु महाहवात् ।
तद्युद्धमभवद्घोरं घोररूपेण रक्षसा । अभ्यद्रवन्त ते सर्व्वे कृष्णवाणप्रपीडिताः ।
केचिच्छिन्नभुजाश्चैव छिन्नग्रीवाशिराननाः । केचिच्चक्रैर्द्विधा भिन्नाः केचिद्वाणार्द्दितोरसः । ६८९५
केचिद्द्विधाकृताः शक्त्या गजाश्वरथवाहनाः । केचित् कौमोदकीभिन्नाः शङ्खशक्तिविदारिताः ।
एवं विद्राविता सर्व्वा गजाश्वरथवाहिनी । तत्रासीन्नरकेणास्य युद्धं परमदारुणं ।
यत् समासेन वक्ष्यामि तन्मे निगदतः शृणु । वासवः सुरसंघानां नरकः पुरुषोत्तमं ।
योधयामास तेजस्वी मधुवन्मधुसूदनं । क्रोधरक्तान्तनयनो नरकः कालसन्निभः ।
जग्राह कार्म्मुकं वीरः शक्रचापमिवोच्छ्रितं । ततोऽर्ककिरणप्रख्यं वाणं जग्राह केशवः । ६९००
दिव्येनास्त्रेण समरे पूरयामास तं रथं । उत्तमास्त्रं महापातं मुमोच नरको बली ।
वज्रविस्फुर्जिताकारमायान्तं वीक्ष्य केशवः । चिच्छेदास्त्रं महाभाग चक्रेण पुरुषोत्तमः ।
व्यहनत् सारथिञ्चास्य शरेण जनार्द्दनः । सरथं सध्वजं साश्वं जघान दशभिः शरैः ।
तनुत्रञ्चैव चिच्छेद शरेण मधुसूदनः । ततो विमुक्तकवचः सर्पस्येव तनुर्यथा ।
हताश्वो विरथो वीरो वितनुश्च दानवः । जग्राह विमलज्वालं लोहभारार्पितं दृढं । ६९०५
आविध्य सहसा मुक्तं शूलमिन्द्राशनिप्रभं । तदापतत्तु संप्रेक्ष्य शूलं हेमपरिष्कृतं ।
द्विधा च्छिन्नं क्षुरप्रेण कृष्णेनाद्भुतकर्म्मणा । तद्युद्धमभवद्घोरं घोररूपेण रक्षसा ।
उत्तमास्त्रं महापातं नरकेण महात्मना । मुहूर्त्तं योधयामास नरकं मधुसूदनः ।
अथोग्रचक्रेण प्रदीप्तेनाकरोद्द्विधा । चक्रद्विधाकृतं तच्च शरीरमपतद्भुवि ।

विभक्तं क्रकचेनेव गिरेः शृङ्गं द्विधाकृतं । कण्ठमासाद्य देवेन समासादितनिर्वृतम् । ६८१०

चक्रोत्क्षिप्तमिलत्ताम्रमुखाभं पतितं रणे । वज्रेणेव विनिर्भिन्नं यथा गैरिकपर्व्वतं ।

भूमिस्तु पतितं पुत्रं शिरोऽस्यादाय कुण्डले । उपातिष्ठत गोविन्दं वचनञ्चेदमब्रवीत् ।

दत्तस्त्वयैव गोविन्द त्वयैव विनिपातितः । यथेच्छसि तथा क्रीड बालक्रीडनकैरिव ।

इमे ते कुण्डले देव प्रजाश्चास्यानुपालय ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नरकवधे द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

॥ वैशम्पायन उवाच ॥ निहत्य नरकं भौमं वासवोपमविक्रमः । वासवावरजो विष्णुर्ददर्श नरकालयं । ६८१५

अथार्थ्यस्थानमासाद्य नरकस्य जनार्द्दनः । ददर्श धनमक्षय्यं रत्नानि विविधानि च ।

मणिमुक्ताप्रवालस्य वैदूर्य्यस्य च सञ्चयं । मसारगल्वार्ककूटानां तथा वज्रस्य सञ्चयान् ।

जाम्बूनदमयान्यस्य शातकुम्भमयानि च । प्रदीप्तज्वलनाभानि शीतरश्मिनिभानि च ।

शयनानि महार्हाणि तथा सिंहासनानि च । हिरण्मयञ्च रुचिरं शीतरश्मिसमप्रभं ।

ददर्श सुमहच्छत्रं वर्षमाणमिवाम्बुदं । जातरूपस्य शुभ्रस्य धाराः शतसहस्रशः । ६८२०

वरुणाद्दाहृतं पूर्व्वं नरकेणेति नः श्रुतं । यावदर्थं स्म वै दृष्टं नरकस्य धनं बहु ।

न वै राज्ञा कुवेरेण न शक्रेण यमेन वा । रत्नसञ्चयस्तादृक् दृष्टपूर्व्वो न च श्रुतः ।

हते भौमे निमुन्दे च हयग्रीवे च दानवे । उपानिन्युस्ततस्तानि रत्नान्यान्तःपुराणि च ।

दानवा हतशिष्टा ये कोषसंरक्षिणः । केशवाय महार्हाणि यान्यर्हति जनार्द्दन ।

॥ दैत्या ऊचुः ॥ इमानि मणिरत्नानि विविधानि वसूनि च । भौमरूपाश्च मातङ्गाः प्रवालविकृताङ्कुशाः । ६८२५

हेमसूत्रमहाकक्षाश्चापतोमरशालिनः । रुचिराभिः पताकाभिर्वसाना विविधाः कुथाः ।

ते च विंशतिसाहस्रा द्विस्तावच्च करेणवः । अष्टौ शतसहस्राणि देशजास्तूत्तमा हयाः ।

गोषु चापि कृतो यावान् कामस्तव जनार्द्दन । तावतीः प्रापयिष्यामो वृष्ण्यन्धकनिवेशनं ।

आविकानि च सूक्ष्माणि शयनान्यासनानि च । कामव्याहारिणश्चैव पक्षिणः प्रियदर्शनाः ।

चन्दनागुरुकाष्ठानि तथा कालीयकान्यपि । यच्च सर्व्वेषु लोकेषु धर्म्मेणाधिगतन्त्वया । ६८३०

तत् सर्व्वं प्रापयिष्यामो वृष्ण्यन्धकनिवेशनं । देवगन्धर्व्वरत्नानि पन्नगानाञ्च यद्वसु ।

तानि सर्व्वाणि सन्तीह नरकस्य निवेशने ।

॥ वैशम्पायन उवाच ॥ एतत् सर्व्वं हृषीकेशः परिस्पृश्य परीक्ष्य च । शीघ्रमारोहयामास दानवैर्द्वारकां पुरीं ।

ततस्तद्वारुणं छत्रं स्वयमुत्क्षिप्य माधवः । हिरण्यवर्षं वर्षन्तमारुरोह विहङ्गमं ।

गरुडं पतगश्रेष्ठं मूर्त्तिमन्तमिवाम्बुदं । ततोऽभ्ययाद्गिरिश्रेष्ठमभितो मणिपर्व्वतं । ६८३५

तत्र पुण्या ववुर्वाता बभूवुश्चामलाः प्रभाः । मणीनां हेमवर्णानामभिभूय दिवाकरं ।

तत्र वैदूर्य्यवर्णानि ददर्श मधुसूदनः । सतोरणपताकानि द्वाराणि शिखराणि च ।

विद्युद्ग्रथितमेघाभः प्रबभौ मणिपर्व्वतः । हेमचित्रवितानैश्च प्रासादैरुपशोभितः ।

तत्र ता हेमवर्णाभा ददर्श मधुसूदनः । गन्धर्व्वासुरमुख्यानां प्रिया दुहितरस्तथा ।
ददर्श विपुलश्रोणीः संरुद्धा गिरिकन्दरे । नरकेण समानीता रक्ष्यमाणाः समन्ततः । ६८८०
त्रिविष्टपसमे देशे तिष्ठन्तीरपराजिताः । नियमस्था यथा देव्यः सुखिन्यः कामवर्ज्जिताः ।
परिवक्रांशुका ह्येकवेणीधराः स्त्रियः । सर्व्वाः काषायवासिन्यः सर्व्वाश्च नियतेन्द्रियाः ।
व्रतोपवासतन्वङ्ग्यः काङ्क्षन्त्यः कृष्णदर्शनं । समेत्य यदुसिंहस्य सर्व्वास्ताः स्त्रियोऽब्रुवन् ।
नरकं निहतं मत्वा मुरञ्चैव महासुरं । हयग्रीवं निसुन्दञ्च ताः कृष्णं पर्य्यवारयन् ।
ये तासां रक्षिणो दृष्ट्वा दानवा यदुनन्दनं । कृताञ्जलिपुटाः सर्व्वे प्रणिपेतुर्व्वयोऽधिकाः । ६८८५
तासां परमनारीणामृषभाक्षं निरीक्ष्य तं । सर्व्वासामेव संकल्पः पतित्वेनाभवत्तदा ।
तस्य चन्द्रोपमं वक्त्रं समीक्ष्य मुदितेन्द्रियाः । सम्प्रहृष्टा महाबाहुमिदं वचनमब्रुवन् ।
सत्यञ्च तत्पुरा वायुरिहागम्य वाक्यमब्रवीत् । सर्व्वभूतमनाश्च देवर्षिरपि नारदः ।
विष्णुर्नारायणो देवः शङ्खचक्रगदासिभृत् । स भौमं नरकं हत्वा भर्त्ता च भविताद्य वः ।
सुप्रियं बत पश्यामश्चिरश्रुतमरिन्दमं । दर्शनेन कृतार्थाः स्म वयमस्य महात्मनः । ६८९०
ततस्ताः सान्त्वयामास प्रमदा वासवानुजः । सर्व्वाः कमलपत्राक्षीर्दृष्ट्वा प्रीतश्च माधवः ।
सान्त्वयित्वा यथार्हेण समाभाष्य च केशवः । यानैः किङ्करसंयुक्तैरवाहयन्मधुसूदनः ।
किङ्कराणां सहस्राणि रत्नसंवाहनक्षमां । शिबिकां वहतां तत्र निर्घोषः सुमहानभूत् ।
तस्य पर्व्वतमुख्यस्य शृङ्गं यत् परमार्च्चितं । विमलार्केन्दुसंकाशं मणिकाञ्चनतोरणं ।
सपक्षिगणमातङ्गं सव्यालमृगपादपं । शाखामृगगणाकीर्णं सुप्रस्तारशिलातलं । ६८९५
न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितं । सुप्रपातमहासानुं विचित्रशिखरद्रुमं ।
अत्यद्भुतमचिन्त्यञ्च मृगवृन्दविलोडितं । जीवञ्जीवकसंघैश्च बर्हिभिश्च निनादितं ।
तदप्यतिबलो विष्णुर्दोर्भ्यामुत्पाट्य भास्वरं । आरोपयामास तदा गरुडे पक्षिणाम्बरे ।
मणिपर्व्वतशृङ्गञ्च सभार्य्यञ्च जनार्द्दनं । उवाह लीलया पक्षी गरुडः पततांवरः ।
सपक्षबलविक्षेपैर्हिमाद्रिशिखरोपमः । दिक्षु सर्व्वासु संह्रादं जनयामास पक्षिराट् । ६९००
आरुजन् पर्व्वताग्राणि पादपांश्च समाक्षिपन् । संजहार महाभ्राणि विजहार च कानिचित् ।
विषयौ समतिक्रम्य देवयोश्चन्द्रसूर्य्ययोः । ययौ वातजवः पक्षी जनार्द्दनवशे स्थितः ।
स मेरुं गिरिमासाद्य देवगन्धर्व्वसेवितं । देवसद्मानि सर्व्वाणि ददर्श मधुसूदनः ।
विश्वेषां मरुताञ्चैव साध्यानाञ्च नराधिप । भ्राजमानान्यतिक्रामदश्विनोश्च परन्तप ।
प्राप्य पुण्यतमान् लोकान् देवलोकमरिन्दमः । शक्रसद्म समासाद्य प्रविवेश जनार्द्दनः । ६९०५
अवतीर्य्य स तार्क्ष्यात्तु ददर्श त्रिदशाधिपं । प्रीतश्चैवाभ्यनन्दत्तं देवराजः शतक्रतुः ।
प्रदाय कुण्डले दिव्ये ववन्दे तमथाच्युतः । सभार्य्यो विबुधश्रेष्ठं नरश्रेष्ठो जनार्द्दनः ।
सोऽर्च्चितो देवराजेन शच्या च प्रतिपूजितः । सत्यभामा च पौलोम्या यथावदभिनन्दिता ।

इति मे निश्चितं विद्धि पीतः सुरसुतोपमे। क्षमा गन्धश्च मेदिन्यां शब्दाकाशमथाम्बरे गुणाः।
ध्रुवं पङ्कजगर्भाभे त्वयि स्नेहस्तथा मम। रविरश्मौ यथा दिव्या प्रभा चैव दिवाकरे।
कान्तिश्च शाश्वती चन्द्रे स्नेहस्त्वयि तथा मम। एवंवादिनमात्मेशं सत्यभामा मनोहरं।
प्रणेदुवाच नेत्राभ्यां प्रमृज्य शुभमा जलं। महोदयस्त्वमिति ख्यातो नाम नित्यं मम प्रभो। ७०९०
अद्य साधारणस्नेहत्वमित्यवगता त्वहं। नाशाविषमहं पूर्व्वमनित्यं कालपर्ययं।
अद्य लोकगतिं तत्त्वामवगच्छामि न ध्रुवां। अस्तताया द्वितीयोऽयं जन्मभूर्मम सर्व्वथा।
किमत्र बहुनोक्तेन हृदयं वेत्सि नेऽच्युत। वाक्प्राप्तमिव पश्यामि माधुर्यं चैव प्रच्युतं।
मयि स्नेहस्य क्षतकस्तवान्यत्र न लक्षितः। अनुरागभावां यां भक्तां सर्व्वथा पुरुषोत्तम।
अवजानासि जानको केनचित् त्यक्तिमास्थितः। एतावत् खलु पर्य्याप्तं दृष्टं द्रष्टव्यमव्ययं। ७०९५
श्रुतश्चाप्यथवा श्राव्यं दृष्टः स्नेहफलोदयः। यदि त्वमनुगास्या मामनुज्ञातुमर्हसि।
तपस्येऽहं परं कृत्वा निश्चयं पुरुषोत्तम। भर्त्तुश्छन्देन नारीणां तपो वा व्रतकानि वा।
निष्फलं खलु यद्भर्त्तुश्छन्देन क्रियेत ह।
इतीदमुक्त्वा पुनरेव शोभना मुमोच नेत्रं नयनोद्भवं सती। प्रहाय पीतं हरिवाससः शुभा पटान्तमादाय मुखे शुचिस्मिता।
॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
॥ वैशम्पायन उवाच ॥ नारायणः सत्यभामां पुनरेवाथ भारत। प्रोवाच प्रणयात् क्रुद्धामभिमानवतीं सतीं। ७१००
॥ वासुदेव उवाच ॥ दहतीव ममाङ्गानि शोकः कमललोचने। किमु तत्कारणं येन त्वमेवमतिविक्लवा।
शापिताऽसि मम प्राणैराचक्ष्वानत्ययो यदि। श्रोतव्यं यदि भक्तेन भर्त्रा सर्व्वाङ्गशोभने।
ततः प्रोवाच भर्त्तारं सत्या सत्यव्रते स्थितं। वाष्पगद्गदया वाचा तथैवाधोमुखी स्थिता।
त्वयैव ख्यापितं पूर्व्वं सौभाग्यं मम मानद। जगत्यमलपत्राक्ष तत् ख्यातं केशिनाशन।
शिरो वहामि चेष्टत्वात्तवाहं देव गर्व्विता। सर्व्वसीमन्तिनीनाञ्च सुभगोत्तमाऽस्मि सर्व्वथा। ७१०५
साऽहमद्यावहास्यामि सपत्नीनां जनस्य च। इति प्रख्याभिराख्यातं श्रुत्वा तथ्यं ततस्ततः।
यत् पारिजातकुसुमं दत्तवान्नारदस्तव। तत् किलेष्टजने दत्तं त्वयाऽहं परिवञ्चिता।
रत्नानिश्चयदानेन तस्यामधिकः किल। स्नेहश्च बहुमानश्च प्रकाशं गमितस्त्वया।
तामश्लाघीत समक्षं ते प्रियां स किल नारदः। तदश्रौषीश्च दृष्टस्त्वं प्रियायाः संस्तवं किल।
स्तोतव्या यदि तावत् सा नारदेन तवाग्रतः। दुर्भगोऽयं जनस्तत्र किमर्थमनुशब्दितः। ७११०
प्रणयस्य रसं दत्त्वा पश्चात्तापः प्रभो यदि। अनुज्ञां मे प्रयच्छस्व तपश्चर्तुं प्रसीद मे।
स्वप्नेनापि न दृष्टाऽहं अहृष्यां पुष्करेक्षण। यदन्येरेव निर्दृष्टमनोषं पश्यतस्तव।
कामः काममनु तत्रैतत्पुनैरतु सतेजसः। अत्र मन्युश्च मे देव सान्निध्यं तत्र तत्र यत्।
मानार्थं जीव्यते लोके सद्भिरित्युक्तवानसि। तदेवं सति नेच्छामि जीवितुं मानवर्जिता।
ममाभवद्यतो रक्षा भयमद्य ततो मम। सर्व्वतो रक्षते यो मां स मां नाशाभिरक्षति। ७११५

का गतिं का गमिष्यामि त्यक्ता देव त्वया विभो । कुमुद्वतीमतां नूनं गतिं यास्यामि मन्दगा ।
किमकार्य्यमहं मोहादीश्वराणां प्रियाप्रियं । प्रिया भूत्वाऽप्रिया भूता यदहं तव मानद ।
वसन्तकुसुमैश्चित्रं यदा रैवतकं गिरिं । प्रिया भूत्वाऽप्रियाभूता कथं द्रक्ष्याम्यहं पुनः ।
परपुष्टस्वनोन्मिश्रं पुष्पगन्धवहं शुचिं । कथं नामानिलं देव्या सेवेयं दुर्भगा सती ।
अलङ्कीर्णा तवाङ्कस्था देव कृत्वा महोदधौ । कथं दौर्भाग्यमापन्ना पश्येयमपि सागरं ।　　७१२०
सात्राजिति प्रिया मान्या त्वत्तो मेऽस्तीति वक्ष्यति मां । समवायः क तत्रानमद्य वा कः करिष्यति ।
यदद्राक्षीद्धि मां श्वश्रूर्वत्सामिव नन्दिनी । अवज्ञातां त्वयाऽद्राक्षीन्नूनं दौर्भाग्यकर्षितां ।
किन्तु मूढेन ते प्रेम्णा सुस्निग्धेनापि मानद । यत् क्षमांगा जनैर्देवो मां न पश्यति नित्यदा ।
नाहं त्वां कितवं धूर्त्तमज्ञासिषमरिन्दम । अद्य ज्ञातोऽसि तत्त्वेन स्वपक्षो जनवञ्चकः ।
स्वरवर्णेङ्गिताकारान्निगूढान्देव यत्नतः । घोर ज्ञातोऽसि तत्त्वेन वाङ्मात्रमधुरः शठः ।　　७१२५
एवमीर्ष्यावशं प्राप्तां देवीं सात्राजितीं हरिः । अभिमानवतीं देवः सान्त्वपूर्व्वमथाब्रवीत् ।
मैवं पद्मपलाशाक्षि ममेश्वरि वद प्रिये । किमत्र बहुनोक्तेन मदीयमवगच्छ मां ।
तत् पारिजातकुसुमं तस्यै देवि समर्पितं । नारदो मत्प्रियं कुर्व्वन् मुनिरभ्यागतस्तदा ।
दाक्षिण्यादनुरोधाच्च दत्तवानत्र संशयः । प्रसीदैकापराधं मे मर्षयस्व शुचिस्मिते ।
पारिजातस्य पुष्पाणि यदीच्छसि तिकोपने । तदा दातास्मि सुश्रोणि सत्यमेतद्ब्रवीमि ते ।　　७१३०
स्वर्गादिहानयित्वा च पारिजातं द्रुमेश्वरं । गृहे ते स्थापयिष्यामि यावत्कालं त्वमिच्छसि ।
एवमुक्ता तु हरिणा प्रोवाच हरिवल्लभा । यद्येवं स द्रुमः शक्य इहानयितुमच्युत ।
मन्युरेष प्रमृष्टो हि भवेदच्युत मम । सीमन्तिनीनां सर्व्वासामधिका स्यामधोक्षज ।
तथाऽस्तु प्रथमः कल्प इति तां मधुसूदनः । प्रोवाचाप्रतिमो देवो जगतः प्रभवाव्ययः ।
तथेत्युक्ते तु कृष्णेन तुतोष समितिञ्जय । सत्यभामा सतामिष्टा केशवाङ्कनवल्लभा ।　　७१३५
ततः स्नातो जगन्नाथः सर्व्वात्मा सर्व्वभावनः । चकारावश्यकं सर्व्वं सर्व्वकामप्रदः सतां ।
दध्यौ च नारदं देवो ध्यातो देवमुनिर्नृप । अभ्याजगाम स ज्ञात्वा मुनिश्रेष्ठो महोदधौ ।
तमागतं नरपते सतां गतिरधोक्षजः । सत्यया सह धर्म्मात्मा यथाविधिमपूजयत् ।
पादौ प्रक्षालयाञ्चक्रे मुनेः सात्राजिती स्वयं । जलं देवः स्वयं कृष्णो भृङ्गारेण ददौ तदा ।
अर्घ्योपकल्पयामास सुखासीनाय केशवः । परमान्नं च मुनये प्रयतात्मा जगद्गुरुः ।　　७१४०
तदीयककर्म्मा सत्कृत्य दत्तं मुनिरुदारधीः । बुभुजे वदतां श्रेष्ठः श्रद्धया परयाऽन्वितः ।
उपस्पृश्य ततस्तुष्टः प्रददौ चाशिषः प्रभोः । ताश्च प्रीतेन मनसा प्रतिजग्राह केशवः ।
ततः सात्राजितीं देवीं प्रणतां नारदोऽब्रवीत् । प्रसार्य्य दक्षिणं हस्तं सजलं जलजेक्षणां ।
यथेन्द्राणी तथैव त्वं भव देवि पतिव्रता । सुचिरं वत्स सुभगा भव मत्तपसो बलात् ।
इत्युक्ता मुनिमुख्येन सत्यभामा हरिप्रिया । उवाचाञ्जलिना युक्ता हर्षेण तु नराधिप ।　　७१४५

स पुण्यमतिसौभाग्यं ददाति नरसत्तम: । तव दत्तं पुरा दाने व्रतेन नरसत्तमे । ७१७५

देवीभिर्धर्म्मनित्याभिर्धर्म्मार्थममरोत्तम । दत्तं श्रुत्वाऽभिकाङ्क्षन्ति दातुं पत्न्यो मम प्रभो ।

पुण्यार्थं दानधर्म्मार्थं मम प्रीत्यर्थमेव च । आनायय द्वारवतीं पारिजातं महाद्रुमं ।

दत्ते दाने पुन: स्वर्गं तत्र तं नायविर्य्यमि । प्रवाच्य एवं भगवान् बलभिद्भगवंस्त्वया ।

तथा तया प्रयत्नश्च कार्य्यो मुनिवर त्वया । यथा तरुवरं दद्यात् पारिजातं सुरेश्वर: ।

तत्र दूतगुणांस्तावत् पश्यामस्ते तपोधन । सत्याख्या सर्व्वकृत्यानां सम्यङ्हि त्वयि मे मता । ७१८०

एवं नारायणेनोक्तो नारदो भगवानृषि: । प्रहस्योवाच कौशिन्नमिदं वाक्यं तपोधन: ।

वाढमेवं प्रवक्ष्यामि यदुमुख्य सुरेश्वरं । न तु दास्यति देवेन्द्र: पारिजातं कथञ्चन ।

मन्दरं पर्व्वतश्रेष्ठं दानवैस्त्रिदशैस्तथा । निक्षिप्य तोयधौ पूर्व्वं पारिजात: समाहृत: ।

मन्दरं पर्व्वतश्रेष्ठं नयितुं प्रेषित: पुरा । पारिजातं हरेणापि लोककर्त्ता जनार्द्दन ।

स्वयं विज्ञापितो गत्वा तत: शक्रेण शङ्कर: । आक्रीडद्रुम उद्याने शच्या: स्यादिति याचित: । ७१८५

तथाऽस्त्विति वरो दत्तो महादेवेन चानघ । न च नीत: पारिजातो मन्दरं चित्रकन्दरं ।

क्रीडाकृत: स शर्व्वेति व्यपदेशेन मोचित: । महेन्द्रेण महाबाहो पारिजाततरु: पुरा ।

प्रियार्थमुमयाऽस्त्राक्षीत् पारिजातवनं हर: । गव्यूतिशतविस्तीर्णं मन्दरस्यैव कन्दरे ।

न तत्र सूर्य्यभा: कृष्ण प्रविशन्ति नगोत्तमे । न चन्द्रस्य प्रभा: शीता नैव कृष्ण सदागति: ।

शीतांशुं स्वच्छन्दतश्चात्र शैलपुत्र्या भवन्ति हि । स्वयम्प्रभं वनं तद्धि महादेवस्य तेजसा । ७१९०

वर्ज्जयित्वा महादेवं सगणं यदुवर्द्धन । मायान्यसादनं दिव्यं न प्रयाति कथञ्चन ।

स्रवन्ति तत्र वार्ष्णेय पारिजाता: समन्तत: । सर्व्वरत्नानि मुख्यानि मनसा काङ्क्षितानि वै ।

गणास्तान्युपभुञ्जन्ति प्रवराणां महात्मनां । आज्ञया देवदेवस्य लोकनाथस्य केशव ।

पारिजाताद्दशगुणं फलं तेषां तथा वनं । अभिमानं प्रभाश्चैव गुणा भृङ्गगणास्तथा ।

मूर्त्तिमन्तश्च ते वृक्षा: सोमं देवं वृषध्वजं । उपतिष्ठन्ति सततं प्रवरै: सह केशव । ७१९५

गोविन्द तेजसा जुष्टा दु:खैर्हीना: सुखान्विता: । तरवो मन्दरे ते हि दयिता: शैलकन्यया ।

अभिशाप्तान्धको नाम घोरस्तत्र महाबल: । दैतेयो वरदानेन दर्पित: पापनिश्चय: ।

स हतो देवदेवेन त्रिपुरारिविघातिना । अवध्य: सर्व्वभूतानां दृप्ताद्दशगुणं बली ।

एवं दु:खेन ते देव पारिजातं प्रदास्यति । पुष्करश्च सहस्राक्ष: सत्यमेतद्ब्रवीमि ते ।

सततं रक्षितो देव्या: शच्या: स हि वरद्रुम: । सर्व्वकामप्रद: कृष्ण तथेन्द्रस्यामितौजस: । ७२००

॥ वासुदेव उवाच ॥ मुने तेन कृतं साधु महादेवेन धीमता । यच्छचीकारणं कृत्वा न नीत: स तरु: पुरा ।

स ज्येष्ठ: सर्व्वभूतानां लोककृत्प्रभवोऽव्यय: । परावर्यस्य यद्भूयं कृतवानिति मे मति: ।

अहं यवीयान् देवस्य सर्व्वथा बलघातिन: । लालनीयश्च भगवन् अयन्त इव सत्तम ।

सर्व्वथा भगवांस्तावदुपायैर्बहुविस्तरै: । करोतु यत्नं प्रीत्यर्थं शक्रो श्रुति तपोधन ।

मया मुने प्रतिज्ञातं पुष्पार्थं सत्यभामया । स्वर्गादिहानयिष्यामि पारिजातमिति प्रभो । ७१०५

मया तदनृतं शक्यं कथं कर्त्तुं तपोधन । नानृतं हि वचो विप्र प्रोक्तपूर्व्वं मयाऽनघ ।

मयि भग्नप्रतिज्ञे हि लोकानां संशयो भवेत् । मत्कृता हि मुनिश्रेष्ठ लोका धर्म्मगुणान्विताः ।

परिधार्य्याः स्थिताः सर्व्वे स कथं अनृतं वदेत् ।

न देवगन्धर्व्वगणा न राक्षसा न चासुरा नैव च यक्षपन्नगाः । मम प्रतिज्ञामुपहन्तुमुद्यताः सुखाय जीवन्ति चिरं महा मुने ।

स पारिजातं यदि न प्रदास्यति प्रयाच्यमानो भवताऽमरेश्वरः । ततः शचीव्यामृदितानुलेपने गदां विमोक्ष्यामि पुरन्दरोरसि । ७११०

इति प्रवाच्यो यदि सामपूर्व्वकं प्रयाच्यमानो न तरुं प्रयच्छति । कृतिश्चयं मद्गमनाय सर्व्वथा त्वयाऽपि कार्य्यः खलु तत्र निश्चयः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

॥ वैशम्पायन उवाच ॥ नारदोऽथ मुनिर्गत्वा महेन्द्रसदनं नृप । तां रात्रिमवसत्तत्र ददृशे च महोत्सवं ।

तत्रादित्या महात्मानो वसवश्च सुरोत्तमाः । राजर्षयश्च विद्वांसः स्वर्गताः कर्म्मभिः शुभैः ।

नागा यक्षाश्च सिद्धाश्च चारणाश्च तपोधनाः । ब्रह्मर्षयश्च शतशो देवर्षिसनत्सुता ।

सुपर्णाश्च महात्मानो मरुतश्च महाबलाः । दिवौकसां निकायाश्च शतशोऽन्ये समागताः । ७११५

उपर्य्युपरि सर्व्वेषां सोमो देवो महेश्वरः । सत्त्वावमितविक्रान्तः स्वैर्गणैः परिवारितः

देवर्षिभिर्मुनिश्रेष्ठैः संवृतः सर्व्वभावनः । कल्पान्तरसहस्रेषु क्षयो येषां न विद्यते ।

यानर्चयन्ति सततं देवा देवेश्वरोपमाः । आत्मज्ञाः सत्यसन्धाश्च ये च धर्म्मपथे स्थिताः ।

रुद्राश्च काश्यपा देवमभ्युपासन्त भारत । स्कन्दश्च भगवान् गौरिर्गङ्गा च सरितांवरा ।

अर्चिष्मांस्तुम्बुरुश्चैव भारिश्च वदतांवरः । नेतारो देवदेवानामेते हि तपसाऽन्विताः । ७१२०

एतानुविधीयन्ते देवान्देवगणा नृप । धर्म्मनित्यास्तपोनित्याः सन्तः सन्मार्गमाश्रिताः ।

ये त्विमे मानुषा देवानर्चयन्ति शुभार्थिनः । तानर्चयन्ति शमगास्तथा राजन्कुभार्थिनः ।

पितृकृत्येषु देवानां संन्यासं येऽप्यनुष्ठिताः । स्वाध्यायवन्तः कौरव्य सततं धर्म्मचारिणः ।

गन्धर्व्वाधिपतिः श्रीमांस्तत्र चित्ररथो नृप । सपुत्रो वादयामास देववाद्यानि हृष्टवत् ।

ऊर्णायुश्चित्रसेनश्च हाहाहूहूश्च भारत । तुम्बरुस्तुम्बुरुश्चैव जगन्त्य च पञ्चमान् । ७१२५

उर्व्वशी पूर्व्वचित्तिश्च हेमा रम्भा च भारत । हेमदन्ता घृताची च सहजन्या तथैव च ।

जुजोष भगवान्देवस्तदुपस्थानमात्मवान् । नृत्तेन तुष्टः शक्रस्य जगाम जगतो गतिः ।

गते भूतपतौ सर्व्वे नृपा अभ्युर्च्यागतं । महेन्द्रेणार्च्चिता देवाः स्वानेव निलयान् गताः ।

ततः सर्व्वेषु यातेषु सुखासीनं पुरन्दरं । मदर्थैः स्वैः सहासीनं नारदोऽभिययौ मुनिः ।

तमिन्द्रः पूजयामास समुत्थाय तपोधनं । दिदेश कुशमध्ये च पीठमात्मासनोपमं । ७१३०

नारदोऽथ महातेजा महेन्द्रमिदमब्रवीत् । दूतोऽहममरश्रेष्ठ विष्णोरतुलतेजसः ।
किञ्चित् कार्य्यं पुरस्कृत्य प्रेषितोऽहं महात्मना । आगमिष्यति चाप्यत्र तद्वाक्यं श्रोष्यसे तथा ।
प्रीतिवाक्यानि हृद्यानि प्रयुज्य मुनये तदा । ततः प्रहृष्टो भगवानब्रवीत् पाकशासनः ।
किमाह पुरुषश्रेष्ठः शीघ्रमाचक्ष्व मे मुने । चिरस्य खलु दूतेन संस्मृतोऽस्मि महात्मना ।
प्रियवाक्यानि हृद्यानि ब्रूहि धर्म्मभृतांवर । ७२२५
॥ नारद उवाच ॥ महेन्द्रस्यानुजं द्रष्टुं गतोऽहं भ्रातरं तव । द्वारकां पुरुषश्रेष्ठं काश्यपानां यशस्करं ।
तन्तु रैवतकेऽद्राक्षं तदा वीरमरिन्दमं । रुक्मिण्या सहितं वीरमुत्सङ्गेव वृषध्वजं ।
पारिजाततरोः पुष्पं तस्य दत्तं मयाऽनघ । विस्मापनार्थं देवेश पद्मोनामृततेजसः ।
तद्दृष्ट्वा तस्य पत्न्यस्तु विस्मयं परमं ययुः । बहुकामप्रदं पुष्पं दृष्ट्वा राजन्समुद्भवं ।
गुणास्तासां मयाख्यातास्तस्य पुष्पस्य मानद । दृष्टिश्च पारिजातस्य कश्यपेनातितेजसा । ७२३०
अदित्या कश्यपो दत्तः पुण्यार्थेश्च यथा मम । पुण्यदाम्ना वेष्टयित्वा कण्ठे पुण्यार्थमात्मवान् ।
त्वञ्च दत्तो यथा शच्या देवास्तान्ये सुरेश्वर । निष्क्रयश्च यथा दत्तः कश्यपायैर्महर्षिभिः ।
तच्छ्रुत्वा तस्य पत्न्येका सत्यभामेति विश्रुता । पुण्यकार्यं मनस्तस्य दयिता ते यवीयसः ।
तया चाभ्यर्थितो भर्त्ता देव्या देवगणेश्वर । प्रतिजज्ञे स धर्म्मात्मा यवीयांस्तव मानद ।
ततो मामुक्तवान् वीरो विष्णुर्बलवतांवरः । यथावत् सुरमुख्याय ब्रुवतः शृणु माधव । ७२३५
त्वात्मनो यवीयांस्तु प्रणिपत्याच्युतोऽब्रवीत् । आनायय सुरश्रेष्ठ पारिजातं वरद्रुमं ।
मनोरथोऽस्तु सफलो बध्वास्तेऽसुरनाशन । धर्म्मकृत्यं विशेषेण बध्वास्तेऽमरसत्तम ।
अयं दुर्लभकल्याणो लोको लोकगणेश्वर । पश्यन्त्वमरकल्याणं सप्रभावाश्च मानुषाः ।
॥ वैशम्पायन उवाच ॥ वासुदेववचः श्रुत्वा महेन्द्रः कुरुनन्दन । नारदं वदतां श्रेष्ठमिदं वाक्यमथाब्रवीत् ।
अजानन् द्विजश्रेष्ठ श्रुतमुक्तं त्वया द्विज । सन्देशं प्रतिदास्यामि विष्णोरतुलतेजसः । ७२४०
आसीने नारदे शक्रो ह्यभ्यनुज्ञोऽथ नारदात् । स्वमासनवरं भेजे तस्यैव सदृशं विभो ।
उपविष्टः सुरपतिरथोवाच तपोधनं । निरीक्ष्य स्वबलं वीर्य्यं पार्षदं वृत्रनाशनः ।
॥ इन्द्र उवाच ॥ महर्षे कुशलं पृष्ट्वा वक्तव्यस्ते जनार्द्दनः । वचनान्मम धर्म्मज्ञ सर्व्वभूतसुखावहः ।
मदनन्तरमीशस्त्वं जगतो नात्र संशयः । त्वदीयः पारिजातश्च रत्नान्यन्यानि चाच्युत ।
त्वन्तु भागावतरणं कर्त्तुं देव महीं गतः । मानुष्यं सर्व्वकृत्यानामास्थितः कार्य्यसिद्धये । ७२४५
त्वयि तीर्णप्रतिज्ञे हि पुनः प्राप्ते त्रिपिष्टपं । पूरयिष्यामि बध्वास्ते दद्याम् कामानधोक्षज ।
न स्वर्गीयाणि रत्नानि नयितव्यानि तेऽच्युत । स्वल्पार्थे मानुषं लोकमिति पूर्व्वकृता स्थितिः ।
उत्क्रम्य हि स्थितिं देव प्रवर्त्तामि महाबल । यद्यहं किं प्रवक्ष्यन्ति प्रजापतिगणाः प्रभो ।
ब्रह्मणा सह पुत्रेण सपोत्रेण महात्मना । नियमाः सर्व्वकृत्यानां स्थापिता जगतो ध्रुवाः ।
प्रजापतिकृतं मार्गमपास्य ब्रजतो मम । श्रुत्वा प्रजापतिर्दुर्गाच्छापमप्युत्सृजेत् प्रभुः । ७२५०

अस्माभिर्भिद्यमानस्तु मर्य्यादासेतुबन्धनं । भेत्स्यन्त्यप्रहिता दैत्या दैत्यपक्षाश्च येऽपरे ।
स्त्रीनिमित्तमितो नीते पारिजाते द्रुमेश्वरे । स्वर्गौकसो भविष्यन्ति विमनस्काश्च नारद ।
उपभोगा मानुष्याणां विहिता ये स्वयम्भुवा । तैस्तुष्यतु मम भ्राता यथाश्रम् कालपर्य्ययं ।
इहापि तावत्त्रिदिवे मम यः स्यात् परिग्रहः । त्रिदिवस्थोऽपि तं कृष्णो नोपभोक्तुमिहार्हति ।
ज्येष्ठज्यायिष्ठभोगानां नाभिज्ञः किं जनार्द्दनः । यतो धर्म्मं समुत्सृज्य पापमेवानुवर्त्तते । ७२०५
स्त्रीवश्यता ख्याप्यमाना कृष्णस्य हि महात्मनः । अगम्यगमना घोरं जनयेदिति मे मतिः ।
मानुष्यं मानुषे प्राप्तो यदेतन्मधुसूदनः । कुर्य्याद्विसर्ज्जनीयं यद्भ्राता ज्येष्ठेन नारद ।
स्वर्गरत्नविलोपेन धर्षणा स्यात् परा मम । ख्यापितो धर्षणा चैव विशेषेणैव गर्हिता ।
धर्म्ममर्थञ्च कामञ्च क्रमेण मधुसूदनः । सेवतेव सतां धर्म्मान् स्थापितान् पद्मयोनिना ।
महीतलं पारिजातं नाययिष्याम्यहं यदि । पौलोमीमादितः कृत्वा को नु मां न हसिष्यति । ७२१०
पारिजातं महीपृष्ठे दृष्ट्वा स्पृष्ट्वा च मानुषाः । स्वर्गार्थं नाथमिष्यन्ति दृष्ट्वा स्वर्गफलं क्षितौ ।
पारिजातगुणास्तत्र जुषन्ति यदि नारद । देवानां मानुषाणाञ्च न विशेषो भविष्यति ।
तत्र यत् क्रियते कर्म्म इह तद्भुज्यते नरैः । स्वर्गार्थं न यतिष्यन्ति पारिजातगुणान्विताः ।
सर्व्वरत्नवरः स्वर्गे पारिजातस्तपोधनः । भुज्यते यदि मर्त्त्यैः स सर्व्वमेकं जगद्भवेत् ।
अन्नैर्मर्त्त्या न यक्ष्यन्ति लब्धस्वर्गफला भुवि । न पूर्त्तानि प्रदास्यन्ति तुल्यत्वममरैर्गताः । ७२१५
यज्ञैर्जप्याह्निकैश्चैव नित्यमाप्याययन्ति नः । मानुषाः स्वर्गमिच्छन्तः श्रद्दधानास्तपोधन ।
तत् सर्व्वं न करिष्यन्ति पारिजातगुणान्विताः । निस्तेजसो भविष्यामस्ते गमात्तदिहौकसः ।
इतः सुकृत्या प्रस्थितास्ते जीवन्ति पुरुषा भुवि । आप्याययन्तोऽप्यस्मान्दानैर्यज्ञैस्तथैव च ।
न बुभुक्षा पिपासा वा बाधते मानुषान् यदि । रोगो जरा वा धर्म्मश्च मृत्युर्व्वा रतिरेव वा ।
दौर्गन्ध्यं वाऽथ वा घोरा ईतयः कर्म्मसम्भवाः । किमुद्योगं करिष्यन्ति पारिजातगुणान्विताः । ७२२०
सर्व्वथा नयनं तत्र पारिजातस्य न क्षमं । इति वाच्यस्त्वया विप्र विष्णुरक्लिष्टकर्म्मकृत् ।
यथा यथा च मे भ्राता तुष्येत द्विपदाम्बर । तथा तथा त्वया कार्य्यं कार्य्यं मत्प्रीतिमिच्छता ।
हारांश्च मणिरत्नानि चन्दनान्यगुरूणि च । वस्त्राणि च विचित्राणि वधूर्दारकां नय ।
योग्यानि मर्त्यलोकानां यावदिच्छति केशवः । न स्वर्गपरिभोग्यन्तु कर्त्तुमर्हति केशवः ।
ददानि रत्नानि यथेप्सितान्यहं बहूनि चित्राणि च भूषणानि । न पारिजातञ्च कथञ्चन द्रुमं मुने प्रदास्यामि दिवौकसां
प्रियं । ७२२५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे इन्द्रवाक्ये अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

॥ वैशम्पायन उवाच ॥ देवराजवचः श्रुत्वा नारदः कुरुनन्दन । प्रोवाच वाक्यं वाक्यज्ञो महात्मा धर्म्मवित्तमः ।
अवश्यमेव वक्तव्यं हितं बलनिसूदन । मया तव महाबाहो बहुमानोऽस्ति मे त्वयि ।
उक्तो मया वासुदेवो आगतो भवतो मतं । न दत्तः पारिजातो हि कस्यापि मया पुरा ।

चेतनश्च मया तस्य दर्शिता भोः कथाचनः। न चावगतवान्देवः सत्यमेतद्ब्रवीमि ते।
उपेन्द्रोऽहं महेन्द्रेण ज्ञातव्योऽयं वदति मां। उवाच पुण्डरीकाक्षस्तदनन्तरमेव च। ७१९०
पुनः पुनर्मया चास्य चेतनो देव दर्शिताः। नैव बुद्धिश्च चाष्टन्ना कृष्णाजन तस्य वै।
अपि चायुष्मताञ्देवो वाक्यान्ते मधुसूदनः। प्रष्टव्य पुरुषश्रेष्ठः शरीरमिव वासव।
न देवगन्धर्व्वगणा न राक्षसा न चासुरा नैव च पन्नगोत्तमाः। मम प्रतिज्ञामपहन्तुमुद्यता मुने समर्थाः खलु भद्रमस्तु ते।
स पारिजातं यदि न प्रदास्यति प्रयाच्यमानो भवताऽमरेश्वरः। ततः शचीव्यामृदितानुलेपने गदां विमोक्ष्यामि पुरन्दरोरसि।
उपेक्ष्य महेन्द्रायं भ्रातुस्ते निश्चयः परः। यदत्र कार्यं न्याय्यं संप्रधार्य्य कुरुष्व तत्। ७१९५
तत्त्वं जितस्य देवेश श्रूयतां वदतो मम। मयनं पारिजातस्य द्वारकां मम रोचते।
नारदेनैवमुक्तस्तु प्रत्युवाच शचीपतिः। रोषाविष्टो देवराजः सहस्राक्षोऽब्रवीदिदं।
अनागसि मयि ज्येष्ठे सोदरे यदि केशवः। एवं प्रवृत्तः किं शक्यं कर्त्तुमत्र तपोधन।
बहूनि प्रतिलोमानि पुरा स कृतवान्मयि। कृष्णो नारद सोढानि भ्रातेतिस्म मयाऽनघ।
खाण्डवे चार्जुनरथं पुरा वाहयता मता। मदीया वारिता मेघाः शमयन्तोऽग्निमुद्धतं। ७२००
गोवर्द्धनं धारयता विप्रियश्च कृतं मम। तथा वृत्रवधे प्राप्ते साहाय्यार्थं वृतो मया।
समोऽहमिति सर्व्वेषां भूतानामिति चोक्तवान्। स्व...श्रमाश्रित्य वृत्रश्च निहतो मया।
देवासुरेषु प्राप्तेषु संग्रामेषु च नारद। युध्यत्यात्मेच्छया कृष्णो मुने सुविदितं तव।
बहुनाऽत्र किमुक्तेन तस्मादिच्छा प्रवर्त्ततां। ज्ञातिभेदो न नः कार्य्यः साक्षी त्वं मम नारद।
ममोरसि गदां मोक्तुं प्रोद्यतो यदि केशवः। अनुशच्याश्च पौलोमी गुणः क इह दृश्यते। ७२०५
उदवासं गतो धीमान् पिता नः कश्यपः प्रभुः। अदित्या सह मे माता तयोर्व्वाच्यमिदं भवेत्।
अजितात्मा मम भ्राता रजसा तमसा वृतः। कामेन च स्त्रियो वाक्यादेवं मामुक्तवान् गुरुं।
धिक् स्त्रियं सर्व्वथा विप्र धिग्रजो धिक् तमस्तथा। यत्राधिक्षिप्तवान् विष्णुरेवं मां स्त्रीजितो द्विज।
न दृष्टं कश्यपकुलं व्यपदेश्यं महामुने। नैव दक्षकुलं दृष्टं मातुर्मे यत्र सम्भवः।
न ज्येष्ठता न राजत्वं देवानां प्रतिमानितं। कामरागाभिभूतेन कृष्णेन खलु नारद। ७२१०
पुत्त्रदारमहर्म्मैर्हि भ्राता ऽनघ विशिष्यते। मद्वृत्तो ज्ञानसम्पन्न इति ब्रह्मा पुरा ऽब्रवीत्।
नास्ति भ्रातृसमो बन्धुराहार्य्य इतरो जनः। इति मामब्रवीन्माता पिता चैव प्रजापतिः।
सोदरेषु विशेषस्तु पिता मे कश्यपो ऽब्रवीत्। दृष्टा मया विरुध्यन्तो दानवाः पापनिश्चयाः।
काममेतन्न वक्तव्यं स्वयमात्मस्तवान्वितं। प्राप्तस्त्ववसरो विप्र यदिदं चोच्यते मया।
धनुर्व्वायां मुनिश्रेष्ठ क्रियायां हि पुराऽनघ। धन्याभिरमराणां हि वरदानान्महामते। ७२१५
उत्कृत्त्यशिरसो विष्णोः पुरा देवो धृतो मया। सन्धितश्च शिरो यस्याक्षिप्तं रौद्रेण तेजसा।
अहं विशिष्टो देवानामित्युक्त्वा पुनरच्युतः। धनुरारोप्य दर्पेण स्थितो नारद केशवः।

हितानुबन्धसहितं कार्य्यं श्रेयं सुरेश्वर । विपरीतस्य तद्बुद्धा नित्यं बुद्धिमतां वर । ७१७५
पश्चात्तापकरं यत् स्यादारम्भं कार्य्यमीदृशं । आरम्भेनैव तद्विद्यात् बुद्धिमतां नयः ।
विपाकमस्य कार्य्यस्य नानुपश्यामि शोभनं । यदत्र कारणं देव निबोध विबुधाधिप ।
य एको विश्वमध्यास्ते प्रधानं जगतो हरिः । प्रकृत्या यं परं सर्व्वे क्षेत्रज्ञं वै विदुर्बुधाः ।
तस्याव्यक्तस्य यो व्यक्तो भागः सर्व्वभवोद्भवः । तस्यात्मा प्रथमो देवो विष्णुः सर्व्वत्र धीमतः ।
प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी । यतः सर्व्वमयो विष्णुः स्त्रीमयो लोकभावनः ७१८०
रुक्मिण्याद्याः स्त्रियस्तस्य प्रकृते प्रथमो गुणः । अथवा प्रकृतिर्द्देवी गुणदेवो महेश्वरः ।
न विशेषोऽस्ति रुद्रस्य विष्णोश्चामरसत्तम । मुक्तिमव्याप्यवाधाय च दारप्रथमो गुणः ।
नारायणो महातेजाः सर्व्वलोकभावनः । भोक्ता महेश्वरो देवः कर्त्ता विष्णुरधोक्षजः ।
ब्रह्मा देवगणाश्चान्ये पश्चात् सृष्टा महात्मना । महादेवेन देवेश प्रजापतिगणास्तथा ।
एवं पुराणः पुरुषो विष्णुर्वेदेषु पठ्यते । अचिन्त्यस्याप्रमेयस्य गुणेभ्यश्च परस्तथा । ७१८५
अदित्या तपसा विष्णुर्महात्माराधितः पुरा । वरेण छन्दिता तेन परितुष्टेन चादितिः ।
तयोक्तस्त्वत्समं पुत्रमिच्छामीति सुरोत्तम । प्रणिपत्य च विज्ञाय नारायणमधोक्षजं ।
तेनोक्ता भुवने नास्ति मत्समः पुरुषोऽपरः । अंशेन तु भविष्यामि पुत्रः स्वल्पकमेव ते ।
स जातः सर्व्वकृद्देवो भ्राता तव सुरेश्वर । नारायणो महातेजा ह्युपेन्द्रं प्रचक्षते ।
इत्यनेक हरिर्द्देवः काश्यपत्वमुपागतः । तैस्तैर्भावैर्विकुरुते भूतभव्यभवाव्ययः । ७१९०
प्रादुर्भावं गतो देवो जगतो हितकाम्यया । माथुरं जगतां नाथः कर्त्ता हर्त्ता च केशवः ।
यथा पलस्तपिण्डः स्याद्व्याप्तः स्नेहेन मानद । तथा जगदिदं व्याप्तं विष्णुना प्रभविष्णुना ।
अप्रमेयदेवः सर्व्वात्मा तैस्तैर्भावैर्विकुर्व्वते । जगत्यतिगुणो देवो वैकुण्ठः सर्व्वभावनः ।
अतः समस्तदेवानां पूज्य एव च केशवः । पद्मनाभश्च भगवान् प्रजासर्गकरो विभुः ।
अनन्तो धारणार्थञ्च विभर्त्ति च महद्यशः । यश्च इत्यपि सद्भिश्च कथ्यते वेदवादिभिः । ७१९५
श्वेतः कृतयुगे देवो रक्तस्त्रेतायुगे तथा । द्वापरे च तथा पीतः कृष्णः कलियुगे विभुः ।
अवधीत् स हिरण्याक्षं दिव्यरूपधरो हरिः । जघ्ने हिरण्यकशिपुं नरसिंहवपुर्हरिः ।
दधाराप्सु निमज्जन्तीमेष देवो वसुन्धरां । वाराहं वपुराश्रित्य जगतो हितकाम्यया ।
हिताय जगतश्चैव विष्णुर्वामनरूपधृक् । बबन्ध च बलिं देवः श्रीमान् पन्नगबन्धनैः ।
देवदानवसम्भूतामकामयदपि श्रियं । त्वय्यनन्तः पुरा विष्णुरुदारामिततविक्रमः । ७२००
सावशेषं ततो यस्य तं न हन्ति जनार्द्दनः । अनेकेष्वपि वर्त्तन्तं व्रतमेतन्महात्मनः ।
जघ्ने च दानवान्मुख्यान्देवानाञ्चैव शत्रवः । तव प्रियार्थं गोविन्दो धर्म्मनित्यः सतां गतिः ।
रामत्वमपि चावाप्य जघ्ने रावणमात्मवान् । भूत्वा कामगुणश्चैव जघान द्विरदं हरिः ।
हिताय जगतोऽद्यापि लोके वसति मानुषं । उपेन्द्रो जगतो नाथः सर्व्वभूतोत्तमोत्तमः ।

जटी कृष्णाजिनी दण्डी दृष्टपूर्व्वो मया हरिः । दैत्येषु चरन्देवकार्य्येष्वग्निरिवाहुतः । ७१७५

अद्राक्षमपि गोविन्दं दानवैकार्णवं जगत् । कुर्व्वाणं दानवैर्हीनं जगतो हितकाम्यया ।

अवश्यं पारिजातन्ते नयिष्यति जनार्द्दनः । द्वारकाममरश्रेष्ठ मानुतं ते ब्रवीम्यहं ।

भ्रातृस्नेहाभिभूतस्त्वं कृष्णे न प्रहरिष्यसि । नापि कृष्णस्त्वयि श्रेष्ठे प्रहरिष्यति वासव ।

नैव पश्यश्याव्यसि प्रोक्तं मया देव कथञ्चन । पृच्छ त्वं नयधर्म्मज्ञान् ये हिताश्च मन्त्रिणः ।

नारदेनैवमुक्तस्तु महेन्द्रो जनमेजय । इदमुत्तरमीशोऽथ प्रत्युवाच जगद्गुरुं । ७१८०

एवंविधप्रभावं त्वं कृष्णं वदसि सत्तम । एवमेतन् कुरुश्रेष्ठः श्रुतं खलु मया मुने ।

यतश्चैवंविधः कृष्णस्ततोऽहं तस्य तं तरं । न प्रयच्छाम्यदातव्यं सतां धर्म्ममनुस्मरन् ।

महाप्रभावो नाल्पार्थे कुर्य्यादिति विचिन्तयन् । व्यवसितोऽहं भद्रन्ते मुने सर्व्वगुणोदितः ।

महाप्रभावाः सततं भवन्ति हि मनिष्यवः । श्रोतारश्चैव सततं वृद्धानां ज्ञानचक्षुषां ।

महात्मा कारणेनाल्पे कृष्णो धर्म्मभृताम्वरः । आत्मा श्रेष्ठेन धर्म्मज्ञो विरोधं गन्तुमर्हति । ७१८५

यथैव मम मातुः स वरं प्रादादधोक्षजः । तथैव तस्याः पुत्राणां श्रेष्ठतां मोढुमर्हति ।

यथैवोपेन्द्रतां यातः स्वयमिच्छन् जनार्द्दनः । तथैव भ्रातुरिन्द्रस्य संमानं कर्त्तुमर्हति ।

श्रैष्ठ्यमेव तु देवेन नारद्यं किं पुरातने । अथेदानीमपीच्छेत् स ज्येष्ठोऽस्तु मधुसूदनः ।

सुनिश्चितं बलरिपुमोच्य नारदो विसर्ज्जितस्त्रिदशवरेण धर्म्मवित् । ययौ पुरीं यदुवृषभाभिरक्षितां कुशस्थलीं हतमति मांसपोधनः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

॥ वैशम्पायन उवाच ॥ अथैत्य द्वारकां रम्यां नारदो मुनिसत्तमः । ददर्श पुरुषश्रेष्ठं नारायणमरिन्दमं । ७१९०

स्ववेश्मनि सुखासीनं सहितं सत्यभामया । विराजमानं वपुषा सर्व्वतेजोतिगामिना ।

तमेवार्थं महात्मानं चिन्तयन्तं दृढव्रतं । केवलं योजयन्तञ्च वाक्यमात्रेण भामिनीं ।

दृष्ट्वैव नारदं देवः प्रत्युत्थायावधीजनः । पूजयामास च तदा विधिदृष्टेन कर्म्मणा ।

सुखोपविष्टं विश्रान्तं प्रहस्य मधुसूदनः । वृत्तान्तं परिपप्रच्छ पारिजातकं प्रति ।

अथोवाच मुनिः सर्व्वं विस्तरेण महात्मने । इन्द्रानुज्ञायेन्द्रवाक्यं निखिलं जनमेजय । ७१९५

श्रुत्वा कृष्णस्तु तत्सर्व्वं नारदं वाक्यमब्रवीत् । अमरावतीं पुरीं यास्ये सोऽहं धर्म्मभृताम्वर ।

इत्युक्ता नारदेनैव सहितः सागरं ययौ । सन्दिदेश ततस्तत्र विविक्ते नारदं हरिः ।

महेन्द्रभवनं गत्वा वद वाक्यं तपोधन । अभिवाद्य महात्मानं मद्वाक्याद्बलसूदनं ।

न युद्धे प्रमुखे स्थातुमर्हसि त्वं मम प्रभो । पारिजातस्य नयने निश्चितं त्वमवेहि मां ।

एवमुक्तस्तु कृष्णेन नारदस्त्रिदिवं गतः । आचचक्षे च कृष्णोक्तं देवेन्द्रायामितौजसे । ७२००

ततो बृहस्पतेः शक्रः सकाशं वलनाशनः । श्रुत्वा बृहस्पतिश्चेदमुवाच कुरुनन्दन ।

अहो धिग्ब्रह्मसदनं मयि याते शतक्रतो । दुर्नीतमिदमारब्धं मन्त्रभेदो हि दारुणः ।

अनाख्याय कथं नाम भवता भुवनेश्वर । मयैतत् कश्यमारब्धं देव केनापि हेतुना ।
अथवा भवितव्येन कर्म्मजेन प्रयुज्यते । अशक्यश्च न विधिः शक्यः समतिवर्त्तितुं ।
सहसैव तु कार्य्याणामारम्भो न प्रशस्यते । तदेतत् सहसारब्धं कार्य्यं दास्यति लाघवं । ७०७५
वृहस्पतिं महात्मानं महेन्द्रोऽथाब्रवीद्वचः । एवं गतेऽद्य यत् कार्य्यं तद्भवान् वक्तुमर्हति ।
तमुवाचाथ धर्म्मात्मा गतानागततत्त्ववित् । अधोमुखश्चिन्तयित्वा वृहस्पतिरुदारधीः ।
यतस्व सह पुत्रेण योधयस्व जनार्द्दनं । तथा शक्र करिष्यामि यथा न्याय्यं भविष्यति ।
वृहस्पतिस्त्वेवमुक्त्वा क्षीरोदं सागरं गतः । आचष्ट चैव मुनये कश्यपाय महात्मने ।
तच्छ्रुत्वा कश्यपः क्रुद्धो वृहस्पतिमभाषत । अवश्यं भाव्यभावोऽसौ सर्व्वथा नाच संशयः । ७०८०
इच्छतः सदृशीं भार्य्यां भर्त्तुर्वैदेवशर्म्मणः । अपध्यानकृतो दोषः पतत्येव शतक्रतोः ।
अस्य दोषस्य शान्त्यर्थमारब्धश्च मुने मया । उदवासः स दोषश्च प्राप्त एव सुदारुणः ।
तद्गमिष्यामि साधाऽद्य सहादित्या तपोधन । उभौ तौ वारयिष्यामि देवं संवदते यदि ।
वृहस्पतिस्तु धर्म्मात्मा मारीचमिदमब्रवीत् । प्राप्तकालं त्वया तत्र भवितव्यं तपोधन ।
तथेति कश्यपस्तोक्त्वा सम्प्रस्थाप्य वृहस्पतिं । जगामाराधयितुं देवं रुद्रं भूतगणेश्वरं । ७०८५
तत्र सोऽस्य महात्मानमनादिं वृषभध्वजं । वरार्थी कश्यपो धीमानदित्या सहितः प्रभुः ।
तुष्टाव च तमोशानं मारीचः कश्यपस्तदा । वेदोक्तैः स्वकृतैश्चैव सावैः साध्यं जगद्गुरुं ।

॥कश्यप उवाच॥ उरुक्रमं विश्वकर्म्माणमीशं जगत्स्रष्टारं धर्म्मदृश्यं वरेण्यं । सम्प्रार्थ्य त्वां ध्रुतिमन्नाम दिव्यं विश्वेश्वरं भगवन्तं नमस्ये ।
यो देवानामधिपः पापहर्त्ता ततं विश्वं येन जगन्महत्त्वात् । आपो गर्भो यस्य शुभा धरित्री विश्वेश्वरं तं शरणं प्रपद्ये ।
शास्तारं कान् यो यतिरूपो निजघ्ने दत्तान्निर्भेण प्रणुदोऽहितानां । विरूपाक्षं सुदर्शनं पुण्ययोनिं विश्वेश्वरं यामि मूर्द्ध्ना
    प्रपद्ये । ७०९०
भर्त्ता य एको विभुर्जगतो विश्वमग्र्यं धाता धाम सुकृतिनाम्न ध्येयः । पुष्णात् मंमां महता शाश्वतेन सोमपानां मनी
    षिणां वरिष्ठः ।
अथर्व्वाणं सुशिरसं भूतयोनिं कृतिनं घोरं दानवानाञ्च बाधं । यज्ञ रुद्रो यस्मिंश्च संस्कृतं वै विश्वस्येशं शरणं यामि देवं ।
जगज्जालं विततं यत्र विश्वं विश्वात्मानं प्रीतिदेवं गतानां । य ऊर्द्ध्वगं रथमास्थाय याति विश्वेश्वरः स सुमना मेऽस्तु
    नित्यं ।
    अनश्वरं रोचनं चारुशाखं महाबलं धर्म्मनेतारमीशं । सहस्रनेत्रं शतवर्त्मानमग्र्यं महादेवं विश्वसृजं नमस्ये ।
शुचिं योगं शमनं शान्तपापं शम्यं शम्भुं शङ्करं भूतनाथं । धुरन्धरं गोपतिं चन्द्रचिह्नं रिपोकाणामयनं यामि मूर्द्ध्ना । ७०९५
आशुः शिपाणां वृषभं वीरुधाणां कृतं धर्म्मं विततं चारु श्रेयं । वसुन्धरं समृद्धीकं सम्मं त्वां ध्रुवमग्नं शूलधरं प्रपद्ये ।
अनन्तवीर्य्यं ध्रुतकर्म्माणमाद्यं यज्ञश्रेष्ठं यजताञ्चाभियाज्यं । हविर्भुजं भुवनानां सदैव ज्येष्ठं द्विजं धर्म्मव्रतं प्रपद्ये ।
परं गुणेभ्यः प्रश्निगर्भस्वरूपं यशःशृङ्गं व्यूहनं कान्तरूपं । शुद्धात्मानं पुरुषं सत्यधाम सर्व्वोहनं दुष्कृतीनां नमस्ये ।
युगोद्धारं सुस्थिरधं चारुकर्म्मं वृढसमं वृढधन्वानमाजं । शूरं वेत्तारं धनुषोऽत्यातिरेकं पतिं पशूनां शमनं नमस्ये ।

स सन्निपातस्तुमुलो बभूव कुरुनन्दन । जयन्तस्य च वीरस्य रौक्मिणेयस्य धीमतः ।
कृतप्रतिकृतश्चैव चक्रतुस्तौ महाबलौ । महेन्द्रोपेन्द्रतनयौ जगत्यजयतामरौ ।
देवाश्च मुनयश्चैव ददृशुर्विस्मयान्विताः । तं संग्रामं महाघोरं सिद्धाश्चैव सचारणाः ।
ततस्तु प्रवरो नाम देवदूतो महाबलः । पारिजातं पुनर्हर्तुमियेष कुरुनन्दन । ७१८५
सखा च देवराजस्य महास्त्रविदरिन्दमः । अवध्यो वरदानेन ब्रह्मणः कुरुनन्दन ।
ब्राह्मणस्तपसा सिद्धो जम्बुद्वीपादिहागतः । सख्यतया नृपते बालः सखित्वं बलशालिना ।
तमापतन्तं संप्रेक्ष्य कृष्णः सात्यकिमब्रवीत् । तवैष एव प्रवरं शरैर्वारय सात्यके ।
न त्वत्र निर्दयं बाणा मोक्तव्याः सात्यके त्वया । अवध्यं ब्राह्मणापत्यं योद्धव्यं खलु सर्वथा ।
ततः पश्चाद्रथेषूणां गरुडस्थं द्विजस्तदा । आजघान महाबाहो सात्यकिं प्रवरो भृशं । ७१९०
शिनेर्नप्ता धनुस्तस्य क्षिपतः सायकान्नृप । चिच्छेद पुरुषव्याघ्रो वचनं चेदमब्रवीत् ।
ब्राह्मणो नाभिहन्तव्यस्तिष्ठ तिष्ठ स्ववर्त्मनि । अवध्या यादवानां हि स्वराज्ञा अपि द्विजाः ।
प्रवरस्तु प्रहस्यैनमुवाच कुरुनन्दन । अलं ग्राम्या घृणा शूर युध्य सर्वात्मना रणे ।
जामदग्न्यस्य रामस्य शिष्योऽहमपि यादव । नामतः प्रवरो नाम सखा शक्रस्य धीमतः ।
न देवा योद्धुमिच्छन्ति मन्यन्तो मधुसूदनं । आनृण्यं वासवस्याहमद्य गन्ताऽस्मि माधव । ७१९५
ततस्तयोस्तदा रौद्रः संग्रामो ववृधे नृप । अस्त्रैर्दिव्यैर्नरव्याघ्र घ्नतोरद्भुतकर्मणोः ।
द्यौश्चचाल तदा राजन् धराश्चापि सहस्रशः । तस्मिन् वर्त्तति संग्रामे नेपाम्मनि महात्मनां ।
नातिश्लिष्टे रणे कार्ष्णिरैन्द्रिमस्त्रभृताम्वरं । ऐन्द्रिः कार्ष्णिं महात्मानं मायिनं शूरमच्युतं ।
हन्त त्वं च प्रतीच्छेति तावुभौ योधसत्तमौ । युयुधाते नरश्रेष्ठ परस्परजयैषिणौ ।
अथ शार्ङ्गायुधसुतं शचीपुत्रः प्रतापवान् । विभाव्याभ्यहनद्राजन् दिव्येनास्त्रेण सत्वरः । ७२००
सोऽस्त्रं तदभिदीप्यन्तमापतन्तं शितैः शरैः । तमस्त्रं बाणजालेन तद्द्रुतमिवाभवत् ।
ततस्तद्दीप्यमानन्तु पपात रणमूर्द्धनि । रौक्मिणेयस्य कौरव्य घोरं दानवमर्द्दनं ।
तेनास्त्रेण रथो दग्धः प्रद्युम्नस्य महात्मनः । नादहत्तत्तु घोरं तं रौक्मिणेयं जनाधिप ।
दहत्यग्निं न खल्वग्निरुद्धतोऽपि विधाम्यते । दग्धाद्रथान्महाबाहू रौक्मिणेयोऽपचक्रमे ।
अथ नारायणसुतो विरथो रथिनाम्वरः । स्थितो धनुष्मानाकाशे जयन्तमिदमब्रवीत् । ७२०५
महेन्द्रपुत्र दिव्यं त्वं यदस्त्रं मुक्तवानसि । नाहमीदृग्रूपाणां शक्यो हन्तुं शरैरपि ।
प्रयत्नं कुरु शिक्षाणां यत्नं मेऽद्य प्रदर्शय । नास्ति मेऽतिभयं कर्त्ता संग्रामेऽमरनन्दन ।
आसीन्मे साध्वसं दृष्ट्वा रथस्थं त्वां धृतायुधं । बिभेमि तव नेदानीं युद्धे दुर्बुद्ध्याऽबलः ।
मनसा स्पृहयतानेन पारिजातस्त्वया तरुः । अयं न खलु हन्ताभ्यां प्रष्टव्यो यस्त्वया कृतो ।
रथो मायामयो दग्धस्त्वया यो वास्तेजसा । ईदृशानां सहस्राणि स्रष्टुं शक्तोऽस्मि मायया । ७२१०
एवमुक्तो जयन्तस्तु मुमोचास्त्रं महाबलः । तपसोत्पादितं तेन स्वयमेवातितेजसा ।

ततः प्रद्युम्नो महावेगं शरजालैरवारयत् । समार्य्यकाणि दिव्यानि मुमोच चापराणि सः ।
दिक्षु सर्व्वासु ररक्षुस्तान्यस्त्राण्याय भारत । रौद्रिकेयं महास्त्राममन्तरीक्षे च पश्यत् ।
महोल्काप्रदृशान् बाणानस्त्राण्यमरसत्तमः । मुमोच यानि घोराणि प्रद्युम्नं प्रति सर्व्वतः ।
तानि सर्व्वाणि बाणौघैः कार्ष्णिरस्त्राण्यवारयत् । जयन्तश्चापरैर्बाणैर्विव्याध निशितैस्तदा । ७११५
ततो नादः समुत्कृष्टो खचरैः पुण्यकर्म्मभिः । दृष्ट्वा धैर्य्यञ्च शौर्य्यञ्च प्रद्युम्नस्य महात्मनः ।
प्रवरस्यापि बाणेन छिन्नेन शिनिपुङ्गवः । चिच्छेदस्यायसं वीरो धनुश्चापस्य भारत ।
ततोऽन्यत्तु जग्राह महत्तद्गुरुसत्तमं । महेन्द्रदत्तं प्रवरो महाशनिसमस्वनं ।
स तेन वीरो महता धनुषा विप्रसत्तमः । शरांश्चमोच विशिखानर्करश्मिनिभांस्तदा ।
चकर्त्त च धनुश्चित्रं शैनेयस्यामितौजसः । विव्याध सर्व्वगात्रेषु बाणैरपि च सात्यकिं । ७१२०
धनुरादाय शैनेयस्ततोऽन्यत् कुरुनन्दन । दृढं भारसहं धीमान् विव्याध प्रवरं रणे ।
उभावकर्त्ततुरन्योन्यं वर्म्मणी तौ शितैः शरैः । गात्रेभ्यश्चैव मांसानि मर्म्मभिद्भिः शरोत्तमैः ।
अथापरेण बाणेन पुनरिष्वासनं द्विधा । चिच्छेद प्रवरो वीरस्त्रिभिश्चैनमताडयत् ।
अन्यदिष्वासनं तस्तु ग्रहीतुमनसं द्विजः । गदया ताडयामास क्षेपया लघुहस्तवत् ।
सोऽसिं चर्म्म च जग्राह सात्यकिः प्रहसन्निव । न जग्राह धनुर्धीमान् गदयाऽभिहतो भृशं । ७१२५
ततः शरशतान्येव मुमोच प्रवरस्तदा । विहसन्निव विज्ञाय सत्यकं यदुनन्दनं ।
प्रद्युम्नोऽस्य ददौ खड्गं निर्म्मलाकाशसन्निभं । तच्च चिच्छेद भल्लेन निस्त्रिंशं प्रवरस्तदा ।
सुरदेहं पातयञ्च प्रवरः प्रहसन्निव । व्यधमञ्च तथा वर्म्म शितैर्बाणैरजिह्मगैः ।
आजघान च शक्त्यैनं हृदि विप्रो ननाद च । तं विक्लवमिव ज्ञात्वा पारिजातजिहीर्षया ।
तार्क्ष्योऽभ्यासे रथेनैव स तस्थौ प्रवरस्तदा । तं पक्षपुटवेगेन चिक्षेप गरुडस्तदा । ७१३०
गव्यूतिमात्रं स रथः पपात च मुमोह च । तं जयन्तो निपत्याथ पतितं भ्रातरं नृप ।
समाश्वास्य रथं शीघ्रं स्वमारोपितवांस्तदा । शैनेयमपि मुह्यन्तं पतन्तञ्च मुहुर्मुहुः ।
आश्वासयानः प्रद्युम्नः पितृव्यं परिषस्वजे । तं हि पस्पर्श हस्तेन सव्येन मधुसूदनः ।
नीरुजः स्पृष्टमात्रस्तु सात्यकिः समपद्यत । प्रद्युम्नो दक्षिणे पार्श्वे वामे तु शिनिपुङ्गवः ।
तस्थतुः पारिजातस्य युद्धप्रेप्सू तु तावुभौ । जयन्तः प्रवरश्चैव रथेनैकेन भारत । ७१३५
सम्पतन्तौ महेन्द्रेण प्रद्युम्नौ महात्मना । नाशक्तमभिगन्तव्यं गरुडस्य कथञ्चन ।
बलवानेष पततां राजा च विनतासुतः । दक्षिणे चैव सव्ये च पार्श्वे मम धृतायुधौ ।
उभौ स्थितौ युध्यमानं मामिवेह प्रपश्यतां । एवमुक्तौ स्थितौ वीरौ ततः शक्रस्य पार्श्वयोः ।
ददृशाते युध्यमानौ देवराजजनार्द्दनौ । अथेन्द्रो गरुडं बाणैर्वज्राशनिसमस्वनैः ।
विव्याध सर्व्वगात्रेषु महास्त्रप्रभवैस्तदा । स तान् बाणान् गणयन् वैनतेयः प्रतापवान् । ७१४०
इन्द्राभिमुखो वीरः शक्रनागमरिन्दमः । उभौ तौ सहसा राजन् बलिनौ नगपक्षिणौ ।

प्रद्युम्नो वीर्य्यसम्पन्नो महाप्राणो दुरासदः । रदनैः पक्षमरिपुं करेण शिरसा तथा ।
ऐरावणो गजपतिराजघान नरंस्तथा । ततो नखाङ्कुशैस्तीक्ष्णैर्वैनतेयो बलोत्कटः ।
तथा पक्षनिपातैश्च शक्रनागमताडयत् । स मुहूर्त्तं महानादोत् मर्द्दो गजपक्षिणोः ।
विस्मापनोयो जगतः प्रेक्षिणां भयावहः । मर्द्दयन्नैरावणं तार्क्ष्यस्ताडयामास भारत । ७५०९
नखाङ्कुशकरालेन चरणेन महाबलः । संप्रहाराभिसन्तप्तः स पपात त्रिपिष्टपात् ।
पारिपात्रे गिरिश्रेष्ठे द्वीपेऽस्मिन् जनमेजय । पतन्तमपि तं शक्रो न मुमोच महाबलः ।
कारुण्यादथ सौहार्द्दात् पूर्व्वाभ्युषणमार्दपि । कृष्णोऽप्यन्वागमच्चैनं पृष्ठतः प्रभवाप्ययः ।
पारिजाततवना वीरो गरुडेन महाबलः । समूदपर्व्वते तस्मिं पारिपात्रे तु वृत्रहा ।
ऐरावणं समास्थाय संग्रामो बहुधा पुनः । शरै राशीविषप्रख्यैरस्त्रयुक्तः सुनेर्जितः । ७५११
अन्योन्यं कुरुशार्दूल शक्रकेशवयोर्महान् । ततो वज्रायुधो वज्रमशनिञ्च पुनः पुनः ।
मुमोच गरुडे राजन्नैरावणरिपौ नृप । वज्राशनिनिपातांस्तान् भेदे शक्रस्य नागहा ।
अवध्यो बलिनां श्रेष्ठो निसर्गेण तपोबलात् । मुमोच पर्णमेकं मानयन्नशनिन्तदा ।
वज्रञ्च देवराजो वै भ्रातुः काश्यपसम्भवः । आक्रम्यमाणस्तार्क्ष्येण न्यमज्जत्पृथ्वीते गिरिः ।
विवेश धरणीं राजन् शीर्य्यमाणः समन्ततः । चुक्रुशे बध्यमानेन कृष्णस्य स तु पर्व्वतः । ७५१२
तमब्रवीत्ततः कृष्णः किञ्चित्क्रुधनधोरज । तं मुक्ता गरुडेनाय तस्यौ देवो विहायसि ।
प्रद्युम्नञ्च तदोवाच सर्व्वलोकभावनः । इतो द्वारवतीं गत्वा रथमानय मारिषं ।
स दारुकं महाबाहो सप्तेजोबलमाश्रितः । वक्तव्यो बलभद्रश्च राजा च कुकुराधिपः ।
श्वो जितेन्द्रमागमिष्ये द्वारकामिति मानद । नियुक्ता तु धर्म्मात्मा प्रद्युम्नः पितरं विभुः ।
गत्वा यथोक्तमुक्ता च यादवेन्द्रबलावुभौ । नातिकाल्मरमात्रेण पुनस्तं देशमाययौ । ७५१९
दारुकेण समायुक्तं रथमास्थाय भारत ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे द्वाविंशदधिकशततोऽध्यायः ॥ १२२ ॥
॥ वैशम्पायन उवाच ॥ तमारुह्य रथं कृष्णः पारिपात्रं गिरिं ययौ । यत्रैरावणमास्थाय स्थितः सुरपतिः प्रभुः ।
पारिपात्रो गिरिश्रेष्ठो दृष्ट्वायान्तं जनार्द्दनं । शाणपादसमो भूत्वा प्रविवेश वसुन्धरां ।
प्रियार्थं वासुदेवस्य प्रभावज्ञो महात्मनः । तस्य प्रीतो हृषीकेशः पर्व्वतस्य जनाधिप ।
ततः प्रयान्तं युद्धार्थमच्युतं कुरुनन्दन । सपारिजातो गरुडः पृष्ठतोऽनुययौ बली । ७५२४
प्रद्युम्नः सात्यकिश्चापि गरुडस्थौ महायशौ । गतावुभौ रक्षणार्थं पारिजातनरिन्दमौ ।
ततोऽस्तमगमत् सूर्य्यः प्रवृत्ता रजनी नृप । उपस्थितं पुनर्युद्धं शक्रकेशवयोः प्रभो ।
सुप्रहारहतं दृष्ट्वा विष्णुरैरावणं गजं । नातिकल्पं महातेजा देवराजानमब्रवीत् ।
गरुडाभिहतः पूर्व्वमातिकल्पो गजोत्तमः । ऐरावणो महाबाहो रात्रिश्च समुपागता ।
श्वः प्रभाते पुनः कामं प्रवत्स्य योत्स्यसि । एवमस्त्विति कृष्णञ्च देवराजोऽब्रवीत् प्रभुः । ७५३०

उवास पुष्कराभ्याशे देवराजः पुरन्दरः । सर्व्वं गिरिमिमं कृत्वा धर्म्मात्मा नृपसत्तम ।
ब्रह्मा तत्राजगामाथ कश्यपश्च महानृषिः । अदितिश्चैव सर्व्वे च देवा मुनय एव च ।
साध्या विश्वे च कौरव्य नासत्यावश्विनौ तथा । आदित्याश्चैव रुद्राश्च वसवश्च जनेश्वर ।
नारायणश्च पुत्रेण सत्यकेन च भारत । महावास गिरौ रम्ये पारियात्रे प्रहृष्टवत् ।
यः स प्राणप्रमाणोऽस्य भक्त्या समभवन्नृप । वरं प्रादात्ततस्तस्य पर्व्वतस्य सतां गतिः ।　　७०७५
प्राणपाद इति ख्यातो भविष्यसि महागिरे । पुष्पनाहेन तुल्यश्च पुण्यो हिमवतः शुभः ।
एवमेव च भूमिष्ठो भव पर्व्वतसत्तम । मेरुणा स्पर्द्धमानो हि बहुचित्रलतायुतः ।
तथा दत्त्वा वरं तस्य पर्व्वतस्य तु केशवः । दध्यौ गङ्गां सरिच्छ्रेष्ठां नमस्कृत्वा वृषध्वजं ।
अथाययौ विष्णुपदी स्मृता कृष्णेन भारत । संपूज्य तां ततः कृष्णः स्नातस्तस्यामधोक्षजः ।
उदकञ्च गृहीत्वैषा विष्वक्च हरिरव्ययः । देवमावाहयामास रुद्रं सर्व्वेश्वरेश्वरं ।　　७०८०
ततः प्राप्तो महादेवः सोमः स प्रवरो विभुः । तस्यावुपरि विष्वक्च तथा गङ्गोदकस्य च ।
तं पारिजातकुसुमैरर्च्चयामास केशवः । तुष्टाव वाग्भिरीशेशं सर्व्वकर्त्तारमीश्वरं ।

॥ श्रीकृष्ण उवाच ॥ रुद्रो देव त्वं रुदनाद्द्रावणाच्च रोरूयमाणो द्रावणाच्चातिदेवः । भक्तं भक्तानां वत्सलं वत्सलानां कीर्त्या युक्तेति त्वाऽद्य प्रभवाम्यन्तरेण ।
आम्नायज्ञानां त्वं पतिस्त्वं पशूनां ख्यातो देवः पशुपतिः सर्व्वकर्त्ता । नान्यस्त्वत्तः परमो देवदेव जगत्पतिः सुरवीरारिहन्ता ।
यस्मादीशो महतामीश्वराणां भवानाद्यः प्रीतिदः प्राणदश्च । तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो विद्वांसः सर्व्वशास्त्रार्थतत्त्वाः ।　　७०८५
भूतं यस्माज्जगदत्यन्तघोरं त्वत्तोऽव्यक्ताज्जगदचरेश । तस्मात्त्वामाहुर्भव इत्येव भूतं सर्व्वेश्वराणां महतामत्युदारं ।
यस्मात्त्वमेतैरभिषिक्तोऽसि सर्व्वैर्देवासुरैः सर्व्वभूतैश्च देव । महेश्वरं विश्वकर्म्माणमाहुस्त्वां वै सर्व्वे तेन देवातिदेव ।
पूज्यो देवैः पूज्यसे नित्यदा वै गन्धर्व्वयक्षराक्षसैर्विद्याधरैरमेयवीर्य्यः । तस्मादिख्यातो भगवान्देवदेवः सतामिष्टः सर्व्वभूतात्मभावी ।
अमित्रयाणां देव यस्मात् प्रतिष्ठा पुनर्भक्तानां भावनोऽमेयकीर्त्तिः । त्र्यम्बकेति प्रथमं तेन नाम तवाप्रमेयस्त्रिदशेशनाथ ।
शर्व्वः शत्रूणां शासनादप्रमेयस्माया भूयः शासनाच्चेतरेण । सर्व्वव्यापित्वाच्छङ्करत्वाच्च सद्भिः शब्दस्त्वेशान् श्रीकरात्कीर्त्यसेऽत्र ।　　७०९०
सम्भक्तानां नित्यदा यत् करोषि शर्म्म भ्रातृव्यात् यच्च नैषोः सनस्तात् । तस्मादेव शङ्करोऽस्यप्रमेयः सद्भिर्द्दक्षैः कथ्यसे सर्व्वनाथ ।
दत्तः प्रहारः कुलिशेन पूर्व्वं त्वंशान सुरराजाऽतिवीर्य्य । कण्ठे नैल्यं तेन ते यत् प्रवृत्तं तस्मात् ख्यातस्त्वं नीलकण्ठेतिकल्पः ।
यस्मिन्नाद्यं यच्च लोके भगाद्यं सर्व्वं सोमस्त्वं स्थावरं जङ्गमञ्च । प्राहुर्व्विप्रास्त्वां गुणिनं तत्त्वशास्त्रयातिथ्यामन्विकां लोकधात्रीं ।
वेदैर्गीतो नाभि तत्त्वं प्रसूता यज्ञो होतारणो योगिनां चातिरूपः । नात्यद्भुतं त्वत्समं देव भूतं भूतं भव्यं भवितारं नास्ति ।
अहं ब्रह्मा कपिलोऽप्यनन्तः पुत्राः सर्व्वे ब्रह्मणश्चातिवीराः । त्वत्तः सर्व्वे देवदेव प्रसूता एवं सर्व्वेशः कारणात्मा त्वमीशः ।　　७०९५

इति संस्तूयमानस्तु भगवान् गोवृषध्वजः । प्रहस्य हरिणा सार्द्धं गोविन्दमिदमब्रवीत् ।
मनीषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम । पारिजातञ्च हर्त्ताऽसि मा भूत्ते समरो व्यथा ।
यदा मैनाकमाश्रित्य तपस्त्वमकरोः प्रभो । तदा दत्तं वरं कृष्ण संस्मरस्व वीर्य्यमाप्नुहि ।
अवध्यस्त्वमजेयश्च मत्तः शूरतरस्तथा । भविताऽसीत्यवोचं यत्तत्तथा न तदन्यथा ।
यः संस्तवेन मां कश्चित् स्तोष्यत्यमरसत्तम । तथा कृतेन धर्म्मेण धर्म्मभाक् स भविष्यति । ७१७०
समरे च जयं विष्णो प्राप्य पूजां तथोत्तमां । विष्णोर्दकेश्वरो नाम भविताऽहमिहानघ ।
देशे त्वया स्थापितो वै देव पिङ्गोपयाचकः । इहस्थोपोषितो विद्वान् भक्तिमानस्य केशव ।
चिरात्रमोषितान् लोकान् गमिष्यति जनार्द्दन । अविन्ध्या नाम देशेऽस्मिन् गङ्गा चैव भविष्यति ।
गङ्गास्नानसमं स्नानं मन्मतौ भविता तथा । षट्पुरं नाम नगरं दानवानां जनार्द्दन ।
अत्रान्तर्द्धरणीदेशे तत्राक्रम्य महाबलाः । एते हिंसा दुरात्मानो जगतो देव कण्टकाः । ७१७५
कृत्वा वसन्ति गोविन्द मानावश्य महागिरेः । अवध्या देवदेवानां वरेण ब्रह्मणोऽनघ ।
मानुषान्तरितस्तस्मात्त्वमेतान् जहि केशव । एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
परिष्वज्य महात्मानं वासुदेवं जनाधिप । ततो याते महादेवे प्रभातायां नराधिप ।
तस्यां निशायां गोविन्दो भूयः पर्व्वतमब्रवीत् । तवाधः पर्व्वतश्रेष्ठ निवसन्ति महासुराः ।
ते निरुद्धा मया चात्र जगतो हितकाम्यया । निर्गमिष्यन्ति ते नैव मया बद्धा महाबलाः । ७१८०
द्वारे निरुद्धे तत्रैव विनङ्क्ष्यन्ति ममाज्ञया । त्वयि सन्निहितश्चाहं भविष्यामि महागिरे ।
अधिष्ठाय महाघोरांस्तिष्ठामि च पर्व्वत । यात्राप्रत्यूहकृद्यश्च यस्त्वां पर्व्वतसत्तम ।
सोमहस्तप्रदानस्य फलं प्राप्स्यति शाश्वतं । यत्तोऽस्मभिश्च प्रतिमां कारयित्वेह भक्तितः ।
शुश्रूषिष्यन्ति ये नित्यं मम यास्यन्ति ते गतिं । इति तं पर्व्वतं कृष्णो वरदोऽनुगृहीतवान् ।
तदाप्रभृति देवेशस्तत्र सन्निहितोऽच्युतः । पाषाणैः प्रतिमां तत्र कारयित्वा च कौरव । ७१८५
शुश्रूषन्ति कृतात्मानो विष्णुलोकाभिकाङ्क्षिणः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे त्रयोविंशदधिकशततमोऽध्यायः ॥ १२३ ॥
॥ वैशम्पायन उवाच ॥ ततो रथवरं कृष्णः समारुह्य महामनाः । विष्णोर्दकेश्वरं देवं नमस्कृत्य ययौ नृप ।
महेन्द्रमाह्वयामास रथस्थो मधुसूदनः । सत्कृतं पुष्कराभ्याशे सर्व्वदेवगणैः सह ।
ततः शक्रो जयन्तोऽथ हरिभिर्युक्तमुत्तमं । आरुरोह रथं देवः सर्व्वकामप्रदः सतां ।
तयोरथस्थयोर्युद्धमभवत् कुरुनन्दन । देवयोर्द्वन्द्वयोगेन पारिजातकृते तदा । ७१९०
ततर्द्द तरसा विष्णुर्बाणैः शत्रुबलार्द्दनः । सैन्यानि देवराजस्य बाणजालैरजिह्मगैः ।
उपेन्द्रं न महेन्द्रोऽथ नैव विष्णुः सुरेश्वरं । ताडयामासतुर्व्वीरौ शस्त्रैः शक्तावपि प्रभो ।
एकैकमस्त्रं दशभिर्व्वज्रिणस्य जनार्द्दनः । विव्याध विशिखैस्तीक्ष्णैः रथयुक्तैर्नरेश्वर ।
सैन्यान्यपि च देवेन्द्रः शरैरमरसत्तमः । छादयामास राजेन्द्र घोरैरस्त्राभिमन्त्रितैः ।

वर्षो बाणवर्षैश्च कृष्णो नरकमवाकिरत्। गरुडश्च महातेजा पक्षाभिर्दुर्निवारणः। ७८१५
भूमिष्ठाभ्यां रथाभ्यान्तौ तदन्तः प्रकुद्धारणौ। युयुधाते महात्मानौ नारायणसुराधिपौ।
चकम्पे वसुधा कृत्स्ना नौर्जलस्थेव भारत। दिशो दाहेन दिग्देशाः संवृताश्च समन्ततः।
वेगाद्गिरिशिखराश्चैव पेतुश्च शतशो द्रुमाः। पेतुश्च धरणीपृष्ठे मर्त्या धर्म्मगुणान्विताः।
निर्घाताः शतशश्चैव पेतुस्तत्र नराधिप। ऊहुश्च सरितः सर्व्वाः प्रतिस्रोतो विशाम्पते।
विश्वगाला बभुश्चैव पेतुरुल्काश्च निष्प्रभाः। मुक्तकेशाश्च भूतगणा रथनादेन मोहिताः। ७८२०
प्रजज्वाल जलं चैव वह्निर्जनपदेश्वर। युयुधुश्च यथैः सार्द्धं यथा नभसि सर्व्वतः।
ज्योतींषि शतशः पेतुः स्वर्गाच्च धरणीतले। दिग्गजाः संक्षुभिता नागाश्च धरणीतले।
गर्द्दभारुणसंस्थानैश्छिन्नाभ्रैरावृतं नभः। विनदद्भिर्महाघोरैविद्युल्लोहितवर्षिभिः।
सम्भूतं घोरं गगनं नरेन्द्रतपभाभवत्। स्वस्थाने सुरवीरौ तु दृष्ट्वा युद्धगतौ तदा।
अपश्यंन्मुनिगणा मन्त्रान् जगतो हितकाम्यया। ब्राह्मणाश्च महात्मानो व्यतिष्ठन्तेषु सत्वराः। ७८२५
ततो ब्रह्मा महातेजाः कश्यपं वाक्यमब्रवीत्। गच्छ वध्वा महादित्या पुत्रौ वारय सुव्रत।
स तथेति तदा देवमुक्त्वा पद्मभवं मुनिः। जगाम रथमास्थाय तयोः समरान्तिके।
स्थितस्तु कश्यपं दृष्ट्वा महादित्या तदान्तरा। उभौ रथाभ्यां धरणीमवतीर्णौ महाबलौ।
न्यस्तशस्त्रौ तु तौ वीरौ ववन्दतुररिन्दमौ। पितरौ धर्म्मतत्त्वज्ञौ सर्व्वभूतहिते रतौ।
उभौ प्रगृह्य हस्ताभ्यामदितिस्त्वब्रवीदिदम्। प्रमोदयानिवैवं किमन्योन्यं हन्तुमिच्छथ। ७८३०
स्वल्पमर्थं पुरस्कृत्य प्रवृत्तमतिदारुणं। सदृशं नेति पश्यामि सर्व्वथा मम पुत्रयोः।
श्रोतव्यं यदि मातुश्च पितुश्चैव प्रजापतेः। न्यस्तशस्त्रौ स्थितौ भूत्वा कुरुतं वचनं मम।
तथेत्युक्त्वा तु तौ देवौ ज्ञातुकामौ महाबलौ। गतौ जग्मतुश्चैव कथयन्तौ परस्परं।
॥ शक्र उवाच ॥ त्वं प्रभुः कृष्ण लोकस्य राज्येऽहं स्थापितस्त्वया। स्थापयित्वा कथं नाम पुनर्व्वामवमन्यसे।
भ्रातृत्वमुपगम्यैवं ज्येष्ठत्वं प्रतिपद्य च। कथं कमलपत्राक्ष निर्व्वाणं कर्त्तुमर्हसि। ७८३५
ज्ञात्वा तु शाक्रवीतेऽथ पुनरभ्यागतौ नृप। यत्रादितिः कश्यपश्च महात्मानौ दृढव्रतौ।
प्रियमङ्गलं नाम तं देशं मुनयोऽवदन्। यत्र तौ सङ्गतौ चोभौ पितृभ्यां कमलेक्षणौ।
ततः शक्रस्य कौरव्य दत्त्वा वाचाऽभयं तदा। यत्र देवगणाः सर्व्वे समेता धर्म्मचारिणः।
ततो यदुविमानैस्तु देवाः सर्व्वे त्रिपिष्टपं। त्वष्ट्रा परमया युक्तास्तेषामेवानुकम्पया।
कश्यपश्चादितिश्चैव तथा शक्रजनार्द्दनौ। विमानमेकमारुह्य गता राजंस्त्रिपिष्टपं। ७८४०
ते शक्रसदनं प्राप्य रम्यं सर्व्वगुणान्वितं। ऊषुरेकत्र कौरव्य मुदिता धर्म्मचारिणः।
शची तु कश्यपं पत्न्या सहितं धर्म्मवत्सला। उपाचरन्महात्मानं सर्व्वभूतहिते रतं।
ततस्तस्यां प्रभातायां रजन्यामब्रवीद्धरिं। अदितिर्द्धर्मतत्त्वज्ञा सर्व्वभूतहितङ्करं।
उपेन्द्र द्वारकां गच्छ पारिजातं नयस्व च। वध्वाः संप्रापयस्वेमं पुण्यकं हृदयेप्सितं।

पुष्पके सत्यया प्राप्ते पुनरेव तथा तरुः । नन्दने पुनरप्येष स्थास्यः स्थाने यथोचिते । [illegible]
एवमस्त्विति कृष्णेन देवमाता यशस्विनी । उक्ता धर्म्मगुणैर्युक्ता नारदेन महात्मना ।
ततोऽभिवाद्य पितरं मातरञ्च जनार्द्दनः । महेन्द्रं सह शच्या च प्रतस्थे द्वारकां प्रति ।
ददौ कृष्णाय पौलोमी नियोगात् कुरुनन्दन । सर्व्वासामेव कृष्णस्य भार्य्याणां धर्म्मचारिणी ।
दिव्यानां सर्व्वरत्नानां वाससाञ्च यशस्विनी । नानारागविचित्राणां सहैवाभरणानपि ।
भार्य्याणाञ्च सहस्राणि यानि षोडश माधवे । प्रतिस्थे महातेजाः प्रययौ द्वारकां प्रति । [illegible]
संपूज्यमानो ह्यमरैः सुकर्म्मा पुण्यकर्म्मभिः । ससत्यकः सपुत्रश्च प्राप्तो रैवतकं गिरिं ।
स तत्र स्थापयित्वा तु पारिजातं वरद्रुमं । सत्यकं प्रेषयामास द्वारकां द्वारमालिनीं ।
॥ कृष्ण उवाच ॥ पारिजातमिहानीतं महेन्द्रभवनात्मया । निवेदय महाबाहो भैमानां भैमवर्द्धन ।
अद्य द्वारवतीञ्चैव पारिजातं वरद्रुमं । प्रवेशयिष्ये नगरे शोभा प्रक्रियतां शुभा ।
इत्युक्तः सत्यको गत्वा तथोक्त्वा पुनरागतः । कुमारैरपरैः सार्द्धं शाम्बप्रद्युम्नभिः प्रभो । [illegible]
ततोऽग्रतः पारिजातमारोप्य गरुडे तदा । प्रद्युम्नो द्वारकां रम्यां विवेश रथिनाम्वरः ।
शैव्याद्यहययुक्तेन रथेनानुययौ हरिः । तस्यानु रथमुख्येन सत्यकः शाम्ब एव च ।
ये त्वन्ये नृप वार्ष्णेया यानैर्व्वहुविधैस्तथा । ययुः प्रद्युम्नमेतत् कर्म्म पूजयन्तो महात्मनः ।
सत्यकादित्तरं श्रुत्वा यादवा नागरास्तथा । विस्मयं परमं जग्मुरप्रमेयस्य कर्म्मणा ।
तं दिव्यकुसुमं वृक्षं दृष्ट्वा मर्त्यनिवासिनः । राजन्न ततृपुर्हृष्टाः पश्यमाना महोदयं । [illegible]
तदद्भुतमचिन्त्यञ्च मदकोकिलनादितं । वृक्षोत्तमं पश्यतां वै वृद्धानामगमज्जरा ।
येऽन्धाः सचक्षुषः सर्व्वे सम्बभूवुः क्षणादिव । विरोगा रोगिणश्चासन् घ्रात्वा गन्धं वनस्पतेः ।
सपन्नाः कोकिलाः श्वेताः श्रुत्वा मर्त्यनिवासिनः । बभूवुर्हृष्टमनसो ववन्दुश्च जनार्द्दनं ।
नानाविधानि वाद्यानि गेयानि मधुराणि च । शुश्रुवुस्तस्य वृक्षस्य नातिदूरगता नराः ।
योऽयं संकल्पयामास गन्धं वृक्षं नरस्तदा । स तमेव समाजघ्रौ पारिजातसमुद्भवं । [illegible]
ततः प्रविश्य रम्यान्तु द्वारकां यदुनन्दनः । वसुदेवं महात्मानं ददृशे देवकीन्तदा ।
कुकुराधिपतिञ्चैव बलं भ्रातरमेव च । वृद्धांश्च यादवानन्यान् मानार्हानमरोपमान् ।
विसृज्य तान् वै भगवाननादिनिधनोऽच्युतः । संपूज्य च यथान्यायं स्वमेव भवनं गतः ।
स सत्यभामया वासं विवेश मधुसूदनः । पारिजातं तरुश्रेष्ठं गृहीत्वा गदपूर्व्वजः ।
सा देवी पूजयामास प्रहृष्टा वासवानुजं । प्रतिजग्राह तञ्चापि पारिजातं महाद्रुमं । [illegible]
मनोऽधिपतिना स तरुरूपो भवति भारत । महत्त्वाद्वासुदेवस्य तदद्भुतमभूत्तदा ।
कदाचिद्द्वारकां सर्व्वां प्रच्छादयति भारत । कदाचिद्धस्तमात्रस्तु भवत्यङ्गुष्ठसन्निभः ।
ननन्द सत्या कौरव्य देवी प्राप्तमनोरथा । पुण्यकार्थञ्च समारान् सर्व्वानुपचक्रमे ।
यानि द्रव्याणि कौरव्य जम्बुद्वीपे तु कानिचित् । योग्यानि तानि कृष्णेन संहृतानि महात्मना ।

मुनिं तदा संस्तवान् स नारदं जनार्द्दनः सर्व्वगुणोदितं वशी । प्रतिग्रहार्थं व्रतकस्य सत्यया यथोपदिष्टः स पुरन्दरानुजः । ७१८५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

॥ वैशम्पायन उवाच ॥ अथ कृष्णस्य कौरव्य ध्यानमात्रे तपोधनः । आजगाम मुनिश्रेष्ठो नारदो वदतां वरः ।

तं पूजयित्वा विधिवद्वासुदेवो विशाम्पते । प्रतिग्रहार्थं विधिवत् क्षौमानभ्यनिमन्त्रयत् ।

ततः काले च संप्राप्ते स्नातं देवो महामुनिं । संपूज्य माल्यगन्धैश्च भोजयामास भारत ।

स स्वंकालिकमत्यर्थं सर्व्वमन्नदधाय: । सत्यया प्रियया सार्द्धं प्रहृष्टेनान्तरात्मना ।

पुष्पदामावसज्याथ कण्ठे कृष्णस्य भामिनी । ददस्व कृष्णं सुभगा पारिजाते वनस्पतौ । ७१९०

अद्भिर्ददौ नारदाय ततोऽनुज्ञाप्य केशवं । देवी धेनुसहस्रञ्च काञ्चनस्य च पर्व्वतं ।

हिरण्यकर्पासमिश्रञ्च मणिरत्नयुतस्य च । तिलमिश्रस्य च तथा धान्यैरन्यैर्युतस्य च ।

प्रतिगृह्य तु तत् सर्व्वं नारदो मुनिसत्तमः । प्रहृष्टो वदतां श्रेष्ठो मुक्त्वा केशवमब्रवीत् ।

भोः केशव मदीयस्त्वमद्भिर्दत्तोऽसि सत्यया । स त्वं मामनुगच्छस्व कुरुष्व यद्ब्रवीम्यहं ।

प्रयतः कल्प इत्येवमब्रवीन्मधुसूदनः । अञ्जलिमनुवव्राज नारदञ्च जनार्द्दनः । ७१९५

परिक्रामान् बहुविधान् कृत्वा मुनिवरस्ततः । तिष्ठस्व गच्छामीत्युक्त्वा परिहासविचक्षणः ।

अपनीय ततः कण्ठात् पुष्पदामैनमब्रवीत् । कपिलां गां सवत्सां भो निष्क्रयार्थं प्रयच्छ मे ।

तिलकृष्णाजिनं सूर्यं प्रयच्छ त्वञ्च काञ्चनं । एषोऽत्र निष्क्रयः कृष्ण विहितो वृषकेतुना ।

तथेत्युक्त्वा हृषीकेशस्तथा चक्रे जनाधिप । उवाच तं मुनिश्रेष्ठं हसित्वा मधुसूदनः ।

वरं वरय धर्म्मज्ञ यस्ते नारद काङ्क्षितः । तव दाताऽस्मि धर्म्मज्ञ परा प्रीतिर्हि मे त्वयि । ७२००

॥ नारद उवाच ॥ नित्यमेवास्तु मे प्रीतो भवान् विष्णो सनातन । त्वत्प्रभावात्तु सालोक्यं व्रजेयं ते महामते ।

अर्थी निजो भवेदस्य नारायण सताकृते । भवेयं ब्राह्मणश्चैव देव जात्यन्तरेष्वहं ।

एवमस्त्विति तं देवो विष्णुः प्रोवाच भारत । तुतोष च ततो धीमान्नारदो मुनिसत्तमः ।

षोडशस्त्रीसहस्राणि विष्णोरतुलतेजसः । निमन्त्रितानि कौरव्य सत्यया हरिकान्तया ।

तासां ददौ सन्निधौ सर्वमेकैकं हरिवल्लभा । शच्या यो वासुदेवस्य पुरा दत्तो नराधिप । ७२०५

पारिजातो वर्षमेकं ततः प्रवृत्ते तदा । आज्ञया वासुदेवस्य नारदेन महात्मना ।

निमन्त्रिता गणाः सर्व्वे केशवेन महात्मना । विभूतिं पारिजातस्य ददृशुः कुरुनन्दन ।

पाण्डवांश्चानयामास सहैव पृथया हरिः । द्रौपद्या च महातेजास्तथैव च सुभद्रया

श्रुतश्रवाञ्च ससुतां भीष्मकं ससुतं तथा । अन्यानपि च कौरव्य मित्रसम्बन्धिबान्धवान् ।

रेमे च सह पार्थेन फाल्गुनेन जनार्द्दनः । सान्तःपुरो महातेजाः परमर्द्ध्या वसन्नृप । ७२१०

संवत्सरे ततो दाते केशिहाऽमरसन्निभः । पारिजातं पुनः स्वर्गमनयत्सर्व्वभावनः ।

ततादितिं कश्यपञ्च दृष्ट्वा स्वपितरौ प्रभुः । शक्रेण सहितो धीमानप्रमेयपराक्रमः ।

सम्पुटाधादितिर्व्वीता प्रणते मधुसूदनं । श्रोत्राभ्यमेव वा यिंत्र मवलमन्यमम ।
मनोरथं मनैवं त्वं पूरयस्व जनार्द्दन । तथाऽसिवत्यब्रवीत्कृष्णकान्तो भातरमात्मवान् ।
आमन्त्रयित्वा पितरौ देवराजानमब्रवीत् । वासुदेवो महातेजाः कालमाप्तमिदं वचः । ७०१५
महादेवेन देवेश सन्दिष्टोऽस्मि महात्मना । अन्तर्भूमितले ऽवध्यानसुरान् प्रति मानद ।
नंदितो दशरात्रेण हन्ताऽहमसुरोत्तमान् । तवोपदिष्टात् सामर्थ्यं प्रवरेण महात्मना ।
जयन्तेन च वीरेण दानवानां जिघांसया । शक्रोऽथ मानुषो देशो देवपक्षतयाऽपरः ।
अवध्याः किल देवैस्ते भ्रूण्यो वरदर्पिताः । अस्माभिः किल हन्तव्या मानुषत्वमुपागतैः ।
तथेति कृष्णं स हरिः प्रीतरूपस्तदाऽब्रवीत् । समाज्ञातेऽथ तौ देवावन्योन्यं जनमेजय । ७०२०
ददौ किरीटं कृष्णाय शक्रोऽमृतसमुद्भवं । प्रीतात्मा कुरुशार्दूल कुण्डलद्वयमेव च ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

॥ जनमेजय उवाच ॥ पुण्यकानां समुत्पत्तिं कथयस्व तपोधन । द्वैपायनप्रसादेन सर्व्वं हि विदितं तव ।
॥ वैशम्पायन उवाच ॥ उमया पुण्यकविधिर्निरेन्द्रोत्पादितः पुरा । शृणु येन विधानेन लोके धर्मभृताम्वर ।
स्वर्गाज्जीते पारिजाते कृष्णेनाक्लिष्टकर्म्मणा । यदा द्वारवतीं धीमान्नारदो मुनिसत्तमः ।
देवासुरे नृपश्रेष्ठ संग्रामे समुपस्थिते । षट्पुरस्य वधे घोरे महादेवात्तथाऽनघ । ७०२५
कृष्णेन सहितं विप्रं नारदं धर्म्मवित्तमं । आसीनं परिपप्रच्छ रुक्मिणी भीष्मकी नृप ।
ततो जाम्बवती देवी सत्यभामा च भाविनी । गान्धारराजपुत्री च योगयुक्ता नराधिप ।
देव्यस्तु नृप कृष्णस्य बह्व्योऽन्या वै समागताः । कुलशीलगुणोपेता धर्म्मशीलाः पतिव्रताः ।
॥ रुक्मिण्युवाच ॥ मुने धर्म्मभृतां श्रेष्ठ सर्व्वज्ञ वदताम्वर । उत्पत्तिं पुण्यकानां त्वं वक्तुमर्हसि सुव्रत ।
विधिश्च फलयोगश्च दानं कालं तथैव च । कौतूहलं नः परमं तच्छ्रोतुं हि वदाम्बर । ७०३०
॥ नारद उवाच ॥ शृणु वैदर्भि धर्म्मज्ञे सपत्नीभिः सहानघे । पुण्यकानां विधिः प्रोक्तो यथा देवि पुरा मया ।
चचारेमां व्रतं देवी पुण्यकार्थं शुचिव्रता । व्रतावसाने ऽथ तया सर्व्वा देवि निमन्त्रिताः ।
अदित्याद्याः सुताः सर्व्वा दक्षस्याक्लिष्टकर्म्मणः । पौलोमी च शची देवी ख्याता लोके पतिव्रता ।
रोहिणी च महाभागा सोमस्य दयिता सती । फाल्गुनी च तथा पूर्व्वा रेवती च विशाम्पते ।
तथा शतभिषा चैव मघा च कुरुनन्दन । एताभिश्च महादेवी पूर्व्वमाराधिता सती । ७०३५
गङ्गा सरस्वती चैव वेत्नगङ्गा च निम्नगा । तथा वैतरणी चैव गण्डकी चैव भारत ।
अन्याश्च सरितो रम्या लोपामुद्रा च भारत । सत्यस्त्वन्या जगद्देवि धारयन्ति हि ताः शुभाः ।
शुभाश्च गिरिनन्दिन्यो वह्निकन्याश्च सुव्रताः । स्वाहा चाग्निप्रिया देवी सावित्री च यशस्विनी ।
ऋद्धिः कुबेरकान्ता च अलोमसहिषी तथा । भार्य्या पितृपतेश्चैव वसुपत्न्यस्तथैव च ।
श्रीर्धृतिस्तथा कीर्त्तिराशा मेधा च सुव्रता । प्रीतिर्व्वतिश्च ख्यातिश्च सन्नतिश्च तपोधना । ७०४०
देव्यः सत्यस्तथैवान्याः सर्व्वभूतहिते रताः । तासां व्रतावसाने च पूजाश्चक्रेऽम्बिका तदा ।

नानामणिविनिर्युक्तैर्नानाकारैः सुमध्यमे ।
प्रतिगृह्य च तां पूजां दत्तां देव्या तपोधनाः । उपविष्टाः कथाश्चित्राः कुर्व्वत्यो भर्त्तृदेवते ।
पुण्यकार्थं कथास्तासामासन् देवीं प्रति स्म याः । विधिश्च पुण्यकस्याथ सतीनां भर्त्तृदेवते ।
तासां मतेन साध्वीनां सर्व्वासां सोमनन्दिनी । पर्य्यपृच्छदुमां देवीं पुण्यकानां विधिस्वरं । ७७४५
उमा तासां प्रियार्थन्तु पुण्यकान्यब्रवीत्तदा । समयं मम वैदर्भि सर्व्वभूतहिते रता ।
सत्यैव सोमया दत्तः स तदा रत्नपर्व्वतः । प्रतिगृह्य मया चैव दत्तो मातुस्तथा शुभे ।
उमा सरस्वतीं साध्वीमामन्त्र्येदमभाषत । शृणु कन्यापि वक्ष्यामि सर्व्वाभिः सहिता शुभे ।
पुण्यकानां विधिं कृत्स्नं यथावदनुपूर्व्वशः । यथा देवि मया दृष्टः पुरा चैव विधिः शुभे ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पुण्यकविधौ षट्‌त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

॥ उमोवाच ॥ सर्व्वज्ञाहं यदा भर्त्तुः प्रसादेन शुचिस्मिते । तदा पुरा मया दृष्टः पुण्यकानां विधिः शुभः । ७७५०
सनातनः पुण्यविधिरिति बुद्ध्याऽवगम्यतां । महादेवप्रसादेन मया दृष्टस्तवच्छति ।
पुण्यकानि च सर्व्वाणि चीर्णवत्यस्म्यनिन्दिते । अनुज्ञया भगवतो भर्त्तुः सर्व्वस्य धीमतः ।
सतीत्वं धर्म्मचरणं यस्या नित्यमखण्डितं । पुण्यकानां विधिस्तस्याः पुराणे परिकीर्त्तितः ।
दानोपवासपुण्यानि सुकृतान्यफलन्त्यपि । निष्फलान्यसतीनान्तु पुण्यकानि तथा शुभे ।
या वञ्चयन्ति भर्त्तारं योनिदुष्टा ह्यसत्स्त्रियः । न तु तासां पुण्यफलमस्ति ता निरयङ्गमाः । ७७५५
साध्व्यो जगद्धारयन्ति सुशीलाः पतिदेवताः । अनन्या धर्म्मनित्याश्च सतां पन्थानमाश्रिता ।
अवाग्दुष्टाः श्रीसंयुक्ता धृतिमत्यः शुभव्रताः । सततं साधुवादिन्यो धारयन्ति जगत् खलु ।
व्याधितः पतितो वाऽपि दीनो वाऽपि कथञ्चन । न त्यक्तव्यः स्त्रिया भर्त्ता धर्म्म एष सनातनः ।
अकार्य्यकारिणं वाऽपि पतितं वाऽपि निर्गुणं । स्त्री पतिन्तारयत्येव यथात्मानं शुभानने ।
योनिदुष्टे स्त्रिया नास्ति प्रायश्चित्तं हतैव सा । वाग्दुष्टे विहितं सद्भिः प्रायश्चित्तं पुरातने । ७७६०
भर्त्तुश्छन्देन कर्त्तव्यं व्रतकं सर्व्वदा स्त्रिया । उपवासोऽपि वा धन्ये काङ्क्षन्त्या सुकृताकृतिं ।
कल्पान्तरसहस्रेषु न स्त्री सा लभते गतिं । तिर्य्यग्योनिसहस्रेषु पच्यते योनिविभ्रमात् ।
यदि सा नाम मानुष्यं स्त्री लभेदसती सती । चाण्डालयोनौ दुःशीला जायते कुक्कुराङ्गना ।
भर्त्ता देवः सदा स्त्रीणां सद्भिर्दृष्टस्तपोधने । यस्या हि तुष्यते भर्त्ता सा सती धर्म्मचारिणी ।
कौतूहलप्रवृत्तानान्तु स्त्रीणां लोको न शोभनः । भर्त्तर्य्येव मनो यासां सद्भावेन व्यवस्थितं । ७७६५
कर्म्मणा मनसा वाचा पतिं नातिचरन्ति याः । तासां पुण्यफलं सौम्ये पुण्यकैः समुदाहृतं ।
पुण्यकानां विधिं कृत्स्नमतः प्रवक्ष्यामि शोभने । निबोध त्वं सर्व्वाभिर्दृष्टो यथातथा मया ।
स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत् सती । उपवासार्थमथ वा व्रतकार्य्यं धृतव्रते ।
मधुराम्लाश्च वर्ज्जयेत् सततं लवणस्य च । पलाशौडुम्बरं पात्रं सकुशं सावनं तथा ।
गोशृङ्गं दक्षिणं भित्त्वा प्रतिगृह्णीत तज्जलं । ततो भर्त्तुः सती दद्यात् स्नातस्य प्रयतस्य च । ७७७०

आत्मनोऽपि निषेक्तव्यं ततः शिरसि तज्जलं । त्रैलोक्ये सर्व्वतीर्थेषु स्नानमेतद्दुराचरं ।
उपवासेषु कर्त्तव्यमेतद्धि व्रतकेषु च । स्नानमेतद्धि सामान्यं स्त्रीणां पुंसाञ्च भामिनि ।
अरुन्धति मया दृष्टं तपसा हरतेजसा । स्नानस्य विहितं शयनमासनञ्च तथाविधं ।
स्वयं प्रक्षालनञ्चापि पादयोरनुशब्दितं । अश्रुप्रपातो रोषश्च कलहश्च कृतः सति ।
उपवासाद्व्रताच्चापि सद्यो भ्रंशयति स्त्रियः । शुक्लमेव सदा वासः प्रशस्तञ्च प्रयत्नतः । ७०७५
अन्तरद्धारकञ्चैव उपवासे व्रते तथा । पादुकार्थं हवेः कार्य्यं सर्व्वदा व्रतके सति ।
उपवासेऽपि च विधिरेष एव प्रकीर्त्तितः । प्रसाधनञ्चाञ्जनञ्च गन्धान् सुमनसस्तथा ।
व्रतके चोपवासे च नित्यमेव विवर्ज्जयेत् । दन्तकाष्ठं शिरःस्नानमुद्वर्त्तनमथापि च ।
विवर्ज्जितं सदा सर्व्वं शौचार्थन्तु विधीयते । बिल्वामलकफलैः शुद्धैः स्नानञ्चैव समाचरेत् ।
प्रक्षालनं वै शिरसः सदा स्याच्छिरोक्लिन्नैः । शिरसोऽभ्यञ्जनं नास्ति नैव तावत् प्रशस्यते । ७०८०
पादयोर्न च गात्रस्य स्नेहेनेति स्थितिः स्मृता । गीतानृत्यानञ्च स्वरयानञ्च वर्ज्जयेत् ।
नग्नस्नानञ्च सततं न व्रते ह्युपवासके । नदीजलेन स्नानञ्च प्रशस्तं सोमनन्दिनि ।
शुभे तडागवाप्यादौ विस्तीर्णे जलसंयुते । गत्वा स्नानं प्रशस्तन्तु सदैव खलु सर्व्वथा ।
अलाभे त्ववरुद्धा स्त्री घटस्नानं समाचरेत् । नवैश्च कुम्भैः स्नातव्यं विधिरेष सनातनः ।
स्नानन्तु शिरसो दृष्टं मया दृष्टं तपोबलात् । ७०८५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पुण्यकविधौ सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

॥ उमोवाच ॥ विधिनैतेन कृत्स्नेन स्त्री सदा भर्त्तृदेवता । चरेत् संवत्सरं दान्ता षण्मासान्मासमेव वा ।
स्त्रियो ह्यावाहयेत् साध्वीरेकादश समाधिना । स्वयञ्चैव विधिर्दृष्टो व्रतकानां मया शुभः ।
अह्निर्द्द्यात् सतीः सर्व्वा या मूलव्रतिनी भवेत् । तासान्तु निष्क्रयो देयः कालदेशानुरूपतः ।
ततो मासान्तशुक्लस्य तिथौ च नवमी तथा । आराधयित्वा कर्त्तव्यं व्रतकस्यापि वर्ज्जनं ।
उपवासमहोरात्रं त्रिरात्रञ्चापि निश्चिता । आदौ चान्ते च कुर्व्वीत व्रतकस्य सुसिद्धये । ७०९०
क्षुरकर्म्म ततो भर्त्तुरात्मनश्चैव कारयेत् । उत्सादनञ्च वपनं तस्मिन्नहनि संस्मृतं ।
ततो विवाहवत् स्नानं विहितं पुण्यके शुभे । मण्डनञ्चैव विहितं माल्यधारणमेव च ।
कुम्भैश्च स्नाप्यमानेमं साध्वी मन्त्रमुदीरयेत् । भर्त्तृपादौ नमस्कृत्य मनसा वाऽथ वा गिरा ।
आपो देव्य ऋषीणां विश्वधात्र्यो दिव्या मदन्त्यो याः शङ्करा धर्म्मराज्यः । हिरण्यवर्णाः पावकाः शिवतमेन रसेन श्रेयसे मां जुषन्तु ।
अपामेष स्नतो मन्त्रः सर्व्वथान्यश्च मे शृणु । मन्त्राः पुराणविहिताः स्त्रीणां सर्व्वाङ्गशोभने । ७०९५
शुभाऽव्यया गुणिनी युक्तधर्म्मा भर्त्रा सार्द्धं कामदा स्यां वरेण्या । मा कर्म्मणा मनसा वाऽपि वाचा भर्त्तुर्भवेयं रुषती स्याञ्च वशगा ।
सपत्नीनामधि नित्यं भवेयं सुपुत्रा स्यां सुभगा चारुरूपा । सम्यग्रूपा गुणवादिनी च सर्व्वात्मना स्यामदरिद्रा भवेयं ।

पतिश्च मे स्यात् सुमुखो मत्प्रणीतो नित्यं मद्गतः आत्मप्रतिर्मद्गतिश्च । प्रीतिश्च मे स्याच्चक्रवाकानुरूपा मनो विरागो न भवेत् साधुता च स्यात् ।

लोकान् साध्वीनामुत्तमानां प्रजेयं याभिः सर्वं धार्य्यते विश्वरूपं । उभे कुले याः शुभाः पावयन्ति पितुर्भर्त्तुश्च पतिभक्तव्रधिताः स्म ।

भूमिर्द्यौर्दुर्ग्गसमाकाशमग्निरन्नाः वेदाः प्रजानिधीः मरतश्च । अहङ्कारश्च मम साध्वी नियुक्ताः ऋषियुग्मं मुनयो नियतयव्रतश्च ।

येनारम्भो दर्शितः भौतिकोऽयं विधिः सप्ताभिर्भूतयुक्तः सवीजैः । पश्यन्ते मे साक्षिणः सर्व्वसंख्याः व्रते चास्मिन्निश्चये चापि वृत्ते ।

चन्द्रादित्यौ पुण्यमाद्यौ यमश्च दिशः सर्व्वा दश चात्मा च मेयं । पश्यन्ते वै साक्षिणः सर्व्व एव व्रते चास्मिन्निश्चये चापि वृत्ते ।　७८००

मन्त्रैरेतैः पुराणोक्तैः सर्व्वद्रव्याभिमन्त्रणं । व्रतचर्य्याप्रभृति वै पुराणे समुदाहृतं ।

आच्छाद्य वाससी दद्यात् भर्त्तुः कर्त्ता स्वयं शुभे । यथात्मकल्पितं न स्यात्कुले विद्येन केनचित् ।

वासोऽन्यदेव दद्याच्च श्वेतं सूक्ष्मं नवं शुचि । स्वकल्पितं सूत्रतन्तु वाससा तेन निश्चयेत् ।　७८०५

ततो द्विजं शुचिं दान्तं ज्ञानविज्ञानकोविदं । भोजयेच्च यथाश्रद्धा सह भर्त्रा सुमध्यमे ।

ब्राह्मणस्यापि दातव्यं वासोयुग्मं महात्मने । शय्या यानं गृहं धान्यं दासी दासस्तथैव च ।

अलङ्कारः शक्तितश्च रत्नपर्व्वत एव च । सर्व्वधान्यैः समुन्मिश्रं तिलैश्च सविशेषतः ।

वासोभिश्च प्रतिच्छन्नो नानावर्णैरलङ्कृतैः । स्वस्य स्वावस्थयैव देया गौरेव वा ध्रुवं ।

लवणप्रतिमां दद्यान्नवनीतस्य चापरां । गुडस्य मधुनश्चैव सुवर्णस्य च शोभनां ।　७८१०

तथैव सर्व्वगन्धानां रसानां पृथगेव च । तथा सुमनसां दद्याद्ग्रन्थ्योदुम्बरस्य च ।

फलानाञ्चैव सर्व्वेषां वाससामपि नन्दिनि । चित्रप्रतिकृतिश्चैव काष्ठस्य प्रतिमास्तथा ।

शिलाप्रतिकृतिश्चैव दध्नोऽथ पयसस्तथा । सर्पिषा दूर्व्वया चैव या त्वन्यान्मन्यभीप्सति ।

कालदेशानुरूपञ्च देयं विभवतः सति । अल्पं वा बहुलं वाऽपि भर्त्तुश्छन्देन सर्व्वदा ।

तिलपात्रं प्रदातव्यं न देयं स तु शोभने । गोसहस्रं प्रदातव्या कपिला कांस्यमेव च ।　७८१५

कृष्णाजिनञ्च सुभगे सतिलं वाससाऽन्वितं । आदर्शश्चैव कूर्च्चश्च तथाऽजिनमनिन्दिते ।

एतद्दत्त्वा सर्व्वकामानाप्नोति वरवर्णिनि । पुरोधिका पुत्रवती सुभगा रूपभागिनी ।

सृष्टहस्ता धनाढ्या च स्त्री भवत्यमलेक्षणा । इष्टकया लभते चैव कन्या रूपगुणान्विताः ।

भवन्ति सुभगाश्चाढ्यास्तथैव च पुरोधिकाः । पुत्रवत्यो धनाढ्याश्च शीलवत्यश्च नित्यदा ।

अरुन्धतिकृतं दान्ते मयैतत् प्रथमं व्रतं । उमाव्रतिकमित्येवं ख्यातं शाक्तिकं खलु ।　७८२०

एतदेवोत्तमं स्त्रीणां व्रतं तस्मात् समाचरेत् । सर्व्वकामानवाप्नोति स्त्री दृष्टैरनिन्दिते ।

एतद्व्रतकराश्च च देवर्षिर्वृषध्वजः । पुराऽभिषिक्ते सौम्ये प्रियार्थं मम सर्व्वतः ।

व्रतकस्यावसाने तु देयं भोज्यञ्च नित्यदा। स्त्रीणां प्रदेयाः कामाश्च मदनाः कामदेवयोः।
एकैकस्य प्रदातव्यं व्रतकं वरवर्णिनि। इच्छातो ब्राह्मणानान्तु देयमन्नं सदक्षिणं।
पायसं तत्र दातव्यं व्रतके नान्यदिष्यते। नात्र प्राणिवधः कार्य्यः पुराणे नियता श्रुतिः। ८८१५
अथ द्वितीयं वक्ष्यामि व्रतकं सोमसत्त्वरे। महादेवप्रसादेन दृष्टवत्यस्मि यच्छुभे।
सर्व्वाः पुत्त्रफला नार्य्यः सद्भिरेतदुदाहृतं। तस्मादर्द्धेश्वरीं दद्यात् सपुत्त्रकरकान् शुभे।
ज्यैष्ठाषाढौ शुभौ मासौ पुरोक्तं विधिमाचरेत्। अथवा ज्यैष्ठमेवैकमाषाढं वा समाचरेत्।
ततो मासद्वये पूर्णे मासे वा वरवर्णिनि। सपुत्त्रकरकान्दद्यात् फाणितप्रतिपूरितान्।
सर्पिषः पयसश्चैव दध्नोऽथ मधुनोऽनघे। जलस्य च तथा दद्यात् पूरयित्वा सुमध्यमे। ८८२०
एकस्मै शान्तवृत्ताय सुव्रताय जितात्मने। सपुत्त्रकरकान्दद्यात् यावन्तो मनसः प्रियाः।
इच्छेद्दुहितरं चेद्धि स्त्रीणां कामकरं ततः। किञ्चिद्द्रव्यं सुताकामा सुतां प्राप्नोत्यसंशयं।
गौर्व्वाऽथ काञ्चनं वाऽपि दक्षिणार्थं प्रशस्यते। विप्रस्याच्छादनं देयमन्नञ्चैव शुचिस्मिते।
यज्ञोपवीतं व्रतके दद्यान्नारी शुचिव्रता। सपुत्त्रकरकाणान्तु विधिमेवं विपश्चिता।
अपत्याख्यानयोगेन ब्राह्मणेभ्यः शुचिव्रता। संवत्सरं सुपूर्णञ्च व्रतधर्म्मानुपालिनी। ८८२५
करकामपि दद्याच्च पूर्णे संवत्सरे शुभे। अनुज्ञया सदा भर्त्तुः सत्यवादिन्यरुन्धति।
सुवर्णसूत्रं विप्राय कौमुद्यां दातुमर्हति। यज्ञोपवीतं विप्रस्य व्रतकं सार्व्वकामिकं।
यज्ञोपवीतं कनकं दक्षिणाश्चापि शक्तितः। प्रयच्छती सती स्त्री हि सर्व्वान् कामान् समश्नुते।
नवं न भक्षयेत् किञ्चिन्नारी धान्यमयी फलं। पुष्पं वा नोपभुञ्जीत यावदेवं समाचरेत्।
एकभक्तेन धर्म्मज्ञे पुण्यकं कर्त्तुमर्हति। ब्राह्मणाय ततो देयं भर्त्तुश्च तदनन्तरं। ८८३०
एवं संवत्सरं कृत्वा सुभगा रूपशालिनी। भवत्यविधवा चैव स्त्री धनाढ्या तथैव च।
वार्त्ताकानि न खादेया स्त्री पूर्णं परिवत्सरं। न सा पुत्त्रविनाशं हि पश्यतीत्यनसूयके।
शाकं मृगमांसञ्च नित्यमेव विवर्ज्जयेत्। नाप्नोति मरणं नारी चाप्नोति पतिदैवतं।
अलाबु वर्ज्जयेन्नारी तथैवोत्पादिकामपि। कलशीं काञ्चनं नाथाय भर्त्तुः सुखमिच्छति।
पूर्णे संवत्सरे दद्यादेकैकं शाकमादितः। सुदक्षिणा पुत्त्रवती भवत्यपि पुरोधिका। ८८३५
स्वयं प्रक्षालयाना स्त्री स्वपादाविवमादितः। प्रतिष्ठां लभते नित्यमुद्वेगरहिता सती।
दिवा सूर्य्यस्य मार्गेण वर्त्तयेत् स्त्री पतिव्रता। एवं संवत्सरं पूर्णं रात्रावन्नं विवर्ज्जयेत्।
सा जीवपुत्त्रा सुभगा भवत्यमरवर्णिनी। अधितिष्ठति सर्व्वासु सपत्नीनां च संशयः।
पूर्णे संवत्सरे दद्यात् सौवर्णं सूर्य्यमुत्तमं। ब्राह्मणायाभिरूपाय दरिद्राय यशस्विने।
फलानि चाथ पुष्पाणि भक्ष्याण्यपि च सुव्रता। दद्यादन्नमितरे परितलका तथा। ८८४०
अथ वाऽस्तंगते सूर्य्ये भुङ्क्ते स्त्री नियता सती। चन्द्रनक्षत्रपूतानि भोज्यानि वरवर्णिनि।
सा दद्यात् काञ्चनञ्चन्द्रं नक्षत्राणि पद्मानपि। अभिरूपाय विप्राय वाचस्य ज्ञव्यापिनं।

चन्द्रशीतलगात्री सा भवत्यमरवर्णिनी। सुभगा दर्शनीया च पुत्रवत्यपि भाविनी।
पौर्णमास्यान्तु सततं प्राप्ते सोमोदयेऽङ्गना। अर्घं दद्यात् सुमनसां साक्षतं सकुशं तथा।
यावकस्य वलिं कुर्य्याद्दधिना सह संयुतं। एवं या कुरुते नित्यं सर्व्वान् कामानवाप्नुयात्। ७८६५
अदृष्ट्वा या तु नाश्नाति सूर्य्यं नारी पतिव्रता। दुर्द्दिने वाऽथ वा व्यभ्रे सेष्टान् कामानवाप्नुते।
काञ्चनं शक्तितो दद्यात् सा विप्राय मनस्विनी। सुभगा दर्शनीया च भवत्यमरवर्णिनी।
इति श्रीमहाभारते खिलेषु हरिवंशे पारिजातहरणे पुण्यकविधौ अष्टात्रिंशदधिकशततमोऽध्यायः॥ १३८॥
॥ भगवत्युवाच॥ निर्द्दिष्टव्यं शरीरं यैर्व्रतकैः पुण्यकैरपि। यान्यन्यानि प्रवक्ष्यामि सखेताभिर्व्वरे शृणु।
कृष्णाष्टमीं या क्षपति स्याद्वा मूलफलाशना। ब्राह्मणायैकमशनं सा दत्त्वा भर्तृदेवता।
शुक्लवस्त्रा शुभाचारा गुरुदैवतपूजिका। एवं संवत्सरं कृत्वा ततो दद्याद्द्विजातये। ७८७०
गोवालव्यजनकृतं चामरञ्च ध्वजं तथा। दक्षिणापूर्व्वमिष्टाय शक्त्या वाऽपि शुचिस्मिते।
ऊर्म्मिमन्तः सुगन्धाश्च श्रोणिदेशावलम्बिनः। तस्या भवन्ति केशास्तु भक्तिमत्या हि भर्त्तरि।
शिरो निर्व्विष्टुकामा तु गोमयेन शिरः सती। प्रक्षालयेत्सलं कृत्वा पयसा श्रीफलेन च।
गोमूत्रञ्च सदा प्राश्य क्षिरःस्नानञ्च निश्चयेत्। कृष्णां चतुर्द्दशीमेतत् कर्त्तव्यं वरवर्णिनि।
भवत्यविधवा चैव सुभगा विज्वरा तथा। शिरोरोगैस्तु नैताभ्याः शरीरमभितप्यते। ७८७५
दर्शनीयं ललाटं या स्त्री काङ्क्षति शुचिस्मिते। निर्यं प्रतिपदं नित्यं सा चरेदेकभोजना।
पयसा च तथाऽश्नीयाद्यावत् संवत्सरो गतः। ब्राह्मणस्य तथा दद्यात् पट्टं रूप्यमयं शुभं।
ललाटं रूपसम्पन्नं तेनाप्नोत्यङ्गना सती। द्वितीयां स्त्री सदा सोम्ये भ्रुवोरिच्छेत् सुरूपतां।
अनन्तरोपवासेन शाकभक्षाशना सती। ततः संवत्सरे पूर्णे ब्राह्मणान् स्वस्ति वाचयेत्।
फलैः परिणतैः सोम्ये माषाणां दक्षिणान्वितैः। लवणेन च भद्रन्ते घृतमात्रेण चानघे। ७८८०
भ्रुवौ विधाय सा दद्यात्सुगन्धाभिमये शुभे। श्रवणौ रूपसम्पन्नाविच्छन्ती स्त्री सुतन्त्यमे।
सत्त्वं श्रवणे प्राप्ते ध्रुवं भुञ्जीत यावकं। ततः संवत्सरे पूर्णे कर्णौ दद्याद्धिरण्मयौ।
घृते प्रक्षिप्य विप्राय पयसा सहिते शुभे। नासामिच्छेल्ललाटान्तां मध्यनावधिवर्ज्जितां।
तिलगुल्मं सदा सिञ्चेद्यावत् पुष्प्येद्धि रक्षितः। अनन्तरोपवासेन सेकव्यः सलिलैः सदा।
तस्मादादाय पुष्पाणि घृते प्रक्षिप्य दापयेत्। स्वक्षो भवेयमिति या स्त्री काङ्क्षेत् स्वनाङ्गवे। ७८८५
अनन्तरं सा भुञ्जीत पयसा वा घृतेन वा। ततः संवत्सरे पूर्णे पद्मपत्राणि पण्डिता।
तथैवोत्पलपत्राणि न्यसेत् क्षीरे शुचिस्मिते। स्वर्णमयानि विधाय ततो दद्यात् सती सति।
कृष्णसारसमानाक्षी स्त्री दत्त्वा भवति सा वै। इच्छेदोष्ठौ चारुरूपौ या स्त्री धर्मगुणान्विते।
सा स्वर्णमयेन च पिबेदुदकं वत्सरं सती। अयाचितेन भुञ्जीत नवम्यां धर्मभागिनी।
ततः संवत्सरे पूर्णे विद्रुमं दातुमर्हति। तेन बिम्बफलाभोष्ठी स्त्री भवत्येव शोभने। ७८९०
सुभगा च वपुःपुत्रधनाढ्या गोमती तथा। या चारुरूपाणिच्छेत दन्तानमरवर्णिनि।

शुक्लाष्टमीं न सा ऽश्नीयाद्भक्ष्यमर्गनन्दिता । ततः संवत्सरे पूर्णे दद्याद्रौप्यमयान् शुभान् ।
दन्तान् प्रणिय धर्मज्ञे पयस्तिगुणोदिते । तेन सा तिलपुष्पाभान् दन्तानाप्नोति या सती ।
सौभाग्यमपि चाप्नोति सपुत्रत्वं तथाऽनघे । सर्व्वमेव मुखं कान्तमिच्छन्त्या रुचिरानने ।
सा पौर्णमास्यामश्नातु प्राप्ते चन्द्रोदये शुभे । यावकं पयसा सिद्धं दत्त्वा विप्राय भाविनी । १०५
ततः संवत्सरे पूर्णे चन्द्रं रूप्यमयं शुभे । पद्मे कृतेऽभिमन्त्र्यास्य ब्राह्मणं स्वस्ति वाचयेत् ।
पूर्णचन्द्रमुखी तेन दानेन स्त्री शुभे भवेत् । स्तनाविच्छति या नारी तालराजफलोपमौ ।
अयाचितं दशम्यां सा नित्यमश्नीत वाग्यता । संवत्सरे ततः पूर्णे द्वे बिल्वे काञ्चने शुभे ।
सदक्षिणे ब्राह्मणाय प्रयच्छति धृतात्मने । सौभाग्यं परमाप्नोति बहून् पुत्रांस्तथैव च ।
सदोन्नतस्तनी चैव भवत्यमरवर्णिनि । शातोदरत्वमन्विच्छन्त् सपदेकान्नभोजना । ११०
पञ्चम्यां तु न भोक्तव्यमन्नं तोयेन नित्यदा । ततः संवत्सरे पूर्णे दद्यात्शातोदरं शुभे ।
पुष्पं सदक्षिणं धन्ये ब्राह्मणाय धृतात्मने । स्तनाविच्छति या नारी रूपयुक्तौ सुमध्यमे ।
द्वादशीं सा क्षपेत्तत्र शाकैः सर्व्वैरनिन्दितैः । संवत्सरे ततः पूर्णे पद्मे रौक्मे ददातु सा ।
ब्राह्मणायाभिरूपाय तथा पद्मद्वयं शुभे । श्रोण्यौ विशालामन्विच्छन्त् स्त्री क्षपेत्तत्र सुव्रते ।
त्रयोदशीमेकभक्तमश्नात्विदं ह्ययाचितं । ततः संवत्सरे पूर्णे लवणं संप्रयच्छतु । ११५
प्रजापतिमुखाकारं कृत्वा तत्र वरानने । काञ्चनं तत्र दातव्यं तदाकारस्य सर्व्वदा ।
कुङ्कुमेन च धर्मज्ञा शनकैरवचूर्णयेत् । रत्नानि चैव पूर्णानि वासो रक्तञ्च दापयेत् ।
तेन श्रोणीमभिमतां स्त्री सौम्ये प्रतिपद्यते । मधुरां वाचमिच्छन्ती वर्ज्जयेल्लवणं सती ।
संवत्सरं वा मासं वा दापयेल्लवणं ततः । सदक्षिणं ब्राह्मणाय परं माधुर्य्यमिच्छती ।
श्रुतवाक्यास्वतगुणं भवत्यमरवर्णिनी । गूढगुल्फशिरौ पादाविच्छन्त्यः सीमन्तिनि । १२०
षष्ठ्यां षष्ठ्यां वरारोहे भोक्तव्यः सन्निनोदनः । अग्निर्वा ब्राह्मणो वाऽपि न स्प्रष्टव्यः सदा पदा ।
यदा यदा स्पृशेत्तञ्च वन्देत तदमाऽस्विने । पादेन न च वै पादं प्रक्षालयितुमर्हति ।
एतैर्नित्यं व्रतैर्युक्ता धर्मज्ञा पतिदेवता । कूर्मौ रुक्ममयौ दद्याद्ब्राह्मणाय पतिव्रता ।
तौ वराय ब्राह्मणाय स्थापयित्वा घृते ऽनघे । पद्मे चाधोमुखे कृत्वा दद्याद्विप्राय नन्दिनि ।
रत्नैर्वैर्ष्विश्रयित्वा काञ्चनेन स्वलङ्कृते । सर्व्वमेव तु या गात्रमिच्छत्यतिमनोहरं । १२५
त्रिरात्रं पुष्पकाले सा करोतु पतिदेवता । कौसुम्भमथ वासाभ्यां माल्यामाल्ययुगे तथा ।
मातरं पितरञ्चैव मन्यते ऽतिथिदैवतं । घृतञ्च नित्यं विप्रेभ्यो ददातु लवणं तथा ।
सम्मार्ज्जनं गृहे चैव करोतु पतिदेवता । उपलेपञ्च धर्म्मज्ञा बलिकर्म्म च मानिनि ।
वाग्दुष्टा चैव सा शुभ्रे भवत्वात्मार्थपण्डिता । पर्य्यश्नातु च सा किञ्चिदपि शाकं यशस्विनि ।
बलिं सजलतथ्यञ्च परित्यजतु भाविनी । १३०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे व्रतविधौ अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

॥ उमोवाच ॥ बान्धवान् ब्राह्मणान् दिव्यान्नभोजनेन नित्यदा। सप्तमीं सप्तमीं नित्यं क्षपयेत स्त्री पतिव्रता।
ततः संवत्सरे पूर्णे तृणं दद्याद्धिरण्मयं। सदक्षिणं ब्राह्मणाय शुभवत्सुमनी भवेत्।
करञ्जे दीपकं दद्यात् सदा या प्रमदावरे। पूर्णे संवत्सरे दद्यात् सौवर्णं दीपकं ततः।
कन्या सा स्त्री भवेद्भर्त्तुरिष्टा पुत्त्रवती तथा। सपत्नीनामपि तथा दीपवज्ज्वलती शुभे।
या शेषभोजिनी नित्यं नैव च स्यादहन्मुदा। न च स्यादुन्मना सौम्ये नित्यञ्च पतिदेवता। ७८१५
शौचान्विता च सततं न च रूक्षाभिभाषिणी। श्वश्रूश्वशुरयोर्नित्यं शुश्रूषानिरता सती।
किं तस्या व्रतकैः कार्य्यं किं वा स्यादुपवासकैः। या भर्त्तृदेवता नित्यं सत्यधर्म्मगुणान्विता।
विधवा स्त्री तु या हि स्याद्दैवयोगात् सती सति। तस्या वक्ष्यामि यो धर्म्मः पुराणोक्तः सुमध्यमे।
पतिं संकल्पयित्वा सा चित्रस्थं वाऽथ मृण्मयं। तस्य पूजां सदा कुर्य्यात्सती धर्म्मेनुसारेत्।
तत एवाभ्यनुज्ञाञ्च नित्यं याचेत सुव्रता। व्रतके चोपवासे च भोजने च विशेषतः। ७८२०
भर्त्तृलोकान् व्रजत्येवं न चेदतिक्रमेत पतिं। शाण्डिली सूर्य्यवद्भाति सतत पतिदेवता।
अथ प्रभृति सर्व्वेषां देवानाञ्चैव योषितः। द्रक्ष्यन्ति पुण्यकविधिं पौराणे याः सनातनाः।
मुनिश्च नारदः कृत्स्नं पौराणं शास्यते विधिं। उपवासस्य धर्म्मात्मा व्रतकानां तथैव च।
अदितिश्चापि सेन्द्राणी त्वञ्च सोमसुत वरे। प्रवर्त्तने पुण्यकानां व्रतकानाञ्च सर्व्वदा।
कीर्त्तनीयाः सतीनां हि भविष्यथ गुणान्विताः। उपवासव्रतविधिं यथावदिह कृत्स्नशः। ७८२५
प्रादुर्भावेषु सर्व्वेषु भार्य्या विष्णोर्महात्मनः। शास्यन्ति पुण्यकविधिं नित्यमेव सनातनं।
विशेषधर्म्मो धर्म्माणां स्त्रीधर्म्मेषु प्रशस्यते। पतिभक्तिरदुष्टत्वमवाग्दुष्टत्वमेव च।
॥ नारद उवाच ॥ एवमुक्तास्तु ता देव्यो महादेव्या तपोधनाः। अस्तुवंस्ता महादेवीं प्रणिपत्य हरप्रियां।
अदितिर्व्रतकञ्चक्रे शृणु यद्धर्म्मचारिणी। उमाव्रतविधिः सर्व्वः पूर्व्वोद्दिष्टस्तया कृतः।
पारिजाते निवध्याथ मम दत्तस्तु कश्यपः। अदितिर्व्रतकं चक्रे शृणु यद्धर्म्मचारिणी। ७८३०
उमाव्रतविधिः सर्व्वः पूर्व्वोद्दिष्टस्तया कृतः। पारिजाते निवध्याथ मम दत्तस्तु काश्यपः।
अदितिव्रतकं नाम तद्दत्तं सत्यभामया। तद्व्रतकं दत्तं सावित्र्या धर्म्मनिश्चया।
तैरेव पुष्पैः संपूर्णमिदं त्वभ्यधिकं कृतं। सन्ध्याकाले च संप्राप्ते स्थाने स्थाने तथैव च।
पूजनं वा नमस्कारो जपश्च द्विगुणः स्मृतः। सावित्रीव्रतकं कृत्वा तथादितिव्रतं सती।
भर्त्तुः कुलं पितृकुलमात्मानञ्चैव तारयेत्। इन्द्राणी व्रतकञ्चक्रे तद्देवीनं यथाविधि। ७८३५
एकमभ्यधिकं वासो भोजनञ्चैव सामिषं। चतुर्थे दिवसे चापि पुण्यकार्थे विधिः स्मृतः।
अनेनाराचोपवासस्य देयं कुम्भासनं तदा। गङ्गया व्रतकं दत्तं तद्देवीनं यथाक्रमं।
स्नानमभ्यधिकं कार्य्यं प्रत्यूषस्यात्मनो जले। अन्यस्मिन् वा जले मानवस्त्रकपथे हरिप्रिये।
एतद्गङ्गाव्रतं नाम सर्व्वकामप्रदं स्मृतं। सप्त सप्त च सप्ताय कुलानि हरिवल्लभे।
स्त्री तारयति धर्म्मज्ञा गङ्गाव्रतकचारिणी। देयं कुम्भपदस्त्रञ्च गङ्गाया व्रतके शुभे। ७८४०

तारकां पारणश्चैव तद्व्रतं सार्व्वकामिकं । समभार्य्या चकाराथ व्रतं चामरयं शुभे ।
हेमन्ते तत्तु कर्त्तव्यमाकाशे हरिवल्लभे । इमानि चैव वाक्यानि ब्रूयादाकाशमाश्रिता ।
स्नाता शुचिसमाचारा नमस्कृत्य पतिं शुभे । चराम्यहं चामरयं व्रतं शुद्धेन चारये ।
पतिव्रता जीवपुत्रा भवेयञ्च पुरोऽधिका । सपत्नीश्चाधितिष्ठेयं पश्येयं शत्रुसा वसे ।
सभर्तृपुत्रा जीवेयं चिरं सुसुखमेव च । पतिलोकञ्च गच्छेयं भवेयं धनिनी तथा । ७८०५
सुचेला मृष्टहस्ता च स्वजनेष्टा गुणान्विता । एवं कृत्वा ततो विप्रं मधुना स्वस्ति वाचयेत् ।
तिलैरपि तथा लव्यैः पायसेन तु भोजयेत् । एवं व्रतानि देवीभिः कृतान्यमरवर्णिनि ।
महादेव्या पुरोक्तानि रुद्रपत्न्या हरिप्रिये । अहं ब्रवीमि तपसा महोदेन समन्विता: ।
सर्व्वा दृष्टयथ पुण्यानि व्रतकानि तथैव च । पौराणान्युमया देव्या यानि दृष्टानि वै पुरा ।
कल्याणगुणयुक्तानि पावनानि शुभानि च । ७८१०

॥ वैशम्पायन उवाच ॥ रुक्मिणी व्रतकश्चके दृष्ट्वा व्रतकविस्तरं । उमया वरदानेन दृष्ट्वा दिव्येन चक्षुषा ।
उमाव्रतकवत् सर्व्वं वृषदानं तथाऽधिकं । रत्नमालाप्रदानञ्च तथाऽन्यं सार्व्वकामिकं ।
तथा जाम्बवती चक्रे पुरोमाव्रतकं यथा । ददावभ्यधिकं सा तु रत्नवृक्षं मनोहरं ।
सत्या ददौ तथैवाथ पुरोमाव्रतके यथा । पीतमभ्यधिकं वासन्तया दत्तमुमाव्रते ।
रोहिण्या चाथ फाल्गुन्या मघया च पुरानने । व्रतानि खलु दत्तानि बहूनि कुलनन्दने । ७८१५
ददौ शतभिषा चैव व्रतकं पुण्यलक्षणं । येन नक्षत्रमुख्यत्वं जगाम कुरुनन्दन ।

इति श्रीमहाभारते खिलेषु हरिवंशे पारिजातहरणे उमाव्रतके चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

॥ जनमेजय उवाच ॥ वैशम्पायन धर्म्मज्ञ व्यासशिष्य तपोधन । पारिजातस्य हरणे षट्पुरं परिकीर्त्तितं ।
निवासोऽसुरमुख्यानां दारुणानां तपोधन । तेषां वधं मुनिश्रेष्ठ कीर्त्तयस्वात्मकथ्य च ।

॥ वैशम्पायन उवाच ॥ त्रिपुरे निहते वीरे रुद्रेणाक्लिष्टकर्म्मणा । तत्रायुधासा बहवो बभूवुरसुरोत्तमाः ।
शरानिना न दग्धास्ते रुद्रेण त्रिपुरालया: । षष्टिं शतसहस्राणि न न्यूनाभ्यधिकानि तु । ७८२०
ते ज्ञातिवधसन्तप्ताश्चक्रुर्व्वीरा: पुरा तपः । जम्बूमार्गे सतां निष्ठे महर्षिगणसेविते ।
आदित्याभिमुखा वीरा: सहस्राणां शतं समाः । वायुभक्षा नृपश्रेष्ठ तुत्रसुः पञ्चमध्यगं ।
तेषामुदुम्बरं राजन् गण एकः समाश्रितः । वृक्षं तत्रावसन् वीरास्ते कुर्व्वन्तो महत्तपः ।
कपित्थवृक्षमाश्रित्य केचित्तत्रोषिताः पुरा । शृगालवाटीस्त्वपरे चेरुरुग्रं तथा तपः ।
वटमूले तथा चेरुस्तपः कौरवनन्दन । अधीयन्तोऽपरे ब्रह्म वटं गत्वाऽसुरात्मजा: । ७८२५
तेषां तुष्टः प्रजाकर्त्ता नरदेव पितामहः । वरं दातुं सुरश्रेष्ठः प्राप्तो धर्म्मभृतांवरः ।
वरं वरयतेत्युक्तास्ते राजन् पद्मयोनिना । ते नेषुर्व्वरदानं तद्विपक्षत्र्यम्बकं विभुं ।
इच्छन्तोऽपराजितं गन्तुं ज्ञातीनां कुरुनन्दन । तानुवाच ततो ब्रह्मा सर्व्वज्ञः कुरुनन्दन ।
विश्वस्य जगतः कर्त्तुः संहर्त्तुश्च महात्मनः । कः शक्तोऽपराजितं गन्तु माऽस्तु वोऽत्र वृथा श्रमः ।

अनादिमध्यनिधनः योगी देवो महेश्वरः । तस्मात्तु युष्मं कर्त्तुं वयमिच्छन्ति सेऽसुराः । ९८७०

ते मेरुपादे केचित्तु दुरात्मानो महासुराः । अयेपुरपरे राजन्नसुरा बलदर्पिताः ।

तेपुर्ये तु दुरात्मानस्तानुवाच पितामहः । वरयध्वं वरं घोरा यद्रोचयन्ति असुराः ।

त ऊचुः सर्व्वदेवानामवध्याः स्याम हे विभो । पुराणि षट् च नो देव भवन्तु सर्व्वहीनतः ।

सर्व्वकामसमृद्धार्थं षट्पुरं चास्तु नः प्रभो । वयञ्च षट्पुरं गत्वा वसाम च सुखं प्रभो ।

रुद्रादुग्रं भयं न स्यादेव नो ध्यातयो यमाः । निहतं त्रिपुरं दृष्ट्वा भीताः स्म तपसां निधे । ९८७५

॥ पितामह उवाच ॥ असुरा भवतावध्या देवानां यक्षरक्षसां च । न चाधिक्षेप वेदिप्रान् सत्यवन्तान् सतां प्रियान् ।

विप्रोपघातं नोत्साचेत् करिष्यथ कथञ्चन । नाशं यास्यथ विप्रा हि जगतः परमा गतिः ।

नारायणाद्वो भेतव्यं कुर्व्वद्भिर्ब्राह्मणाहितं । सर्व्वभूतेषु भगवान् हितं धत्ते जनार्द्दनः ।

ते गता असुरा राजन् ब्रह्मणाऽथ विसर्ज्जिताः । येऽपि भक्ता महादेवमसुरा धर्म्मचारिणः ।

स्वयं हि दर्शनं तेषां ददौ त्रिपुरनाशनः । श्वेतं वृषभमारुह्य सोमः सप्रवरः प्रभुः । ९८८०

उवाच चेदं भगवानसुरान् स घृताकृतिः । वैरमुत्सृज्य दर्प्पञ्च हिंसाञ्चासुरसत्तमाः ।

मामेव चाश्रितास्तस्मादहं साधु ददामि वः । येऽर्च्चिताः स्म मुनिभिः सत्क्रियापरमैर्द्विजैः ।

सह तैर्गम्यतां स्वर्गः प्रीतोऽहं वः स्वकर्म्मणा । इह ये चैव वत्स्यन्ति तपसा ब्रह्मवादिनः ।

अपि कापित्थिकास्तेऽपि तेषां लोका यथा मम । इह मासान्तपक्षान्तौ यः करिष्यति मानवः ।

वानप्रस्थेन विधिना पूजयन् मां तपोधनः । वर्षायुतस्य सम्यक्स्य तपसः प्राप्यते फलं । ९८८५

कृत्वा त्रिरात्रं विधिवत्प्राप्स्यते योगिनां गतिं । अर्कद्वीपे नियमतो द्विगुणं तद्भविष्यति ।

नीचि देशे च भद्रं वो वरमेतं ददाम्यहं । श्वेतवाहननामानं यत्र मां पूजयिष्यति ।

सर्व्वो भयविक्तोऽपि गतिं स मम यास्यति । औडुम्बरान् वाटमूलान् द्विजान् कापित्थिकानपि ।

तथा शृगालवाटीयान्धर्म्मात्मानो दृढव्रतान् । मुनींश्च ब्रह्मवाटीयान् सविशेषेण ये नराः ।

पूजयिष्यन्ति सततं ते यास्यन्ति योगिनां गतिं । इत्युक्त्वाऽथ महादेवो भगवान् श्वेतवाहनः । ९८९०

तैरेव सहितः सर्व्वै रुद्रलोकं जगाम वै । अम्बुमार्गे गमिष्यामि अम्बुमार्गे वसाम्यहं ।

एवं सङ्कल्पयानोऽपि रुद्रलोके महीयते ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु चतुर्व्वेदः षडङ्गवित् । ब्राह्मणो याज्ञवल्क्यस्य शिष्यो धर्म्मगुणान्वितः ।

ब्रह्मदत्तेति विख्यातो विप्रो वाजसनेयिनां । अश्वमेधः कृतस्तेन वसुदेवस्य धीमतः ।

स सांवत्सरदीक्षायां दीक्षितः षट्पुरालये । आवर्त्तायाः शुभे तीरे सुनद्या मुनिजुष्टया । ९८९५

भार्य्या च वसुदेवस्य सहाध्यायी द्विजोत्तमः । उपाध्यायस्य कौरव्य चोरचेतोर्महात्मनः ।

वसुदेवस्तत्र याजी देवक्या सहितः प्रभो । यजमानं षट्पुरस्थं यथा शक्रो बृहस्पतिं ।

तत् सर्व्वं ब्रह्मदत्तस्य यज्ञं यज्ञदक्षिणं । उपासन्त मुनिश्रेष्ठा महात्मानो दृढव्रताः ।

व्यासोऽहं याज्ञवल्क्यश्च सुमन्तुर्जैमिनिस्तथा । इतिमान् आजग्मिवैव देवलाद्याश्च भारत ।
ब्रह्मण्याऽनुरूपया युक्तं वसुदेवस्य धीमतः । यथेप्सितान् ददौ कामान् देवकी धर्म्मचारिणी ।
वासुदेवप्रभावेण जगत्सर्वं महीतले । तस्मिन् यज्ञे वर्त्तमाने दैत्याः षट्पुरवासिनः ।
निकुम्भाद्याः समागम्य तपसा वरदर्पिताः । प्रार्थयन्तो यज्ञभागं नः सोमं पास्यामहे वयं ।
कन्याश्च ब्रह्मदत्तो नो यजमानः प्रयच्छतु । बह्व्यः सन्त्यस्य कन्याश्च रूपवत्यो महात्मनः ।
आहृत्य ताः प्रदातव्याः सर्व्वा एव हि नः शुभाः । रत्नानि च ब्रह्मदत्तो विशिष्टानि ददातु नः ।
अन्यथा न तु यष्टव्यं वयमाज्ञापयामहे । एतच्छ्रुत्वा ब्रह्मदत्तस्तानुवाच महासुरान् ।
यज्ञभागो न विहितः पुराणे ऽसुरसत्तमाः । कथं यज्ञे सोमपानं शक्यं दातुं मया हि वः ।
पृच्छतैव मुनिश्रेष्ठान् वेदभाष्यार्थकोविदान् । कन्या हि मम या देयास्ताश्च संकल्पिता मया ।
अन्तर्वेद्यां प्रदातव्याः सद्ब्राह्मणसमाश्रयं । रत्नानि तु प्रयच्छामि मान्येनाहं विविक्षतां ।
बलाच्चैव प्रदास्यामि देवकीपुत्रमाश्रितः । निकुम्भाद्यास्तु रुषिताः पापाः षट्पुरवासिनः ।
यज्ञवाटं विलुलुपुर्जह्रुः कन्याश्च तास्तथा । तं दृष्ट्वा सम्प्रहृष्टास्तु दध्मावानकदुन्दुभिः ।
वासुदेवं महात्मानं बलभद्रं गदं तथा । विदित्वाऽथ ततः कृष्णः प्रद्युम्नमिदमब्रवीत् ।
गच्छ कन्यापरित्राणं कुरु पुत्राशु मायया । यावदाहं ससैन्येन षट्पुरं यास्यहं प्रभो ।
स ययौ षट्पुरं वीरः पितुराज्ञाकरस्तदा । निमेषान्तरमात्रेण गत्वा कार्ष्णिर्महाबलः ।
कन्यास्ता मायया धीमानाजह्रे स महाबलः । मायामयीश्च कृत्वाऽन्या न्यस्तवान् रुक्मिणीसुतः ।
मा भैरिति च धर्म्मात्मा देवकीमुक्तवांस्तदा । मायामयीस्तु ता हृत्वा मतास्तस्य दुरासदाः ।
षट्पुरं विविशुर्दैत्याः परितुष्टा नराधिप । कर्म्म सामर्थ्यतस्तत्र विधिदृष्टेन कर्म्मणा ।
वह्निमिष्टं बहुगुणं तदभूच्च नराधिप । एतस्मिन्नन्तरे प्राप्ता राजानस्तत्र भारत ।
सर्व्वे निमन्त्रिताः पूर्व्वं ब्रह्मदत्तेन धीमता । जरासन्धो दन्तवक्त्रः शिशुपालस्तथैव च ।
पाण्डवा धार्त्तराष्ट्राश्च मालवास्तक्षणास्तथा । रुक्मी चैवाकृतिश्चैव नीलो मार्गेश एव च ।
विन्दानुविन्दावावन्त्यौ शल्यः शकुनिरेव च । राजानश्चापरे वीरा महात्मानो दृढायुधाः ।
आवासिता नातिदूरे षट्पुरस्य च भारत । तान्दृष्ट्वा नारदः श्रीमानचिन्तयदनिन्दितः ।
बलस्य यादवानाञ्च भविष्यति समागमः । अत्र हेतुरयं युद्धे तस्मात्तत्प्रयताम्यहं ।
एवं सञ्चिन्तयित्वा तु निकुम्भभवनं गतः । पूजितः स निकुम्भेन दानवैश्च तथाऽपरैः ।
उपविष्टः स धर्म्मात्मा निकुम्भमिदमब्रवीत् । कथं विरोधं यदुभिः कृत्वा स्वस्थैरिहास्यते ।
यो ब्रह्मदत्तः स कृष्णः स हि तस्य विभुः सखा । शतानि पञ्च भार्य्याणां ब्रह्मदत्तस्य धीमतः ।
आनीता वसुदेवस्य सुतस्य प्रियकाम्यया । शतद्वयं ब्राह्मणीनां राजन्यानां तथा शतं ।
वैश्यानां शतमेकञ्च शूद्राणां शतमेव च । ताभिः शुश्रूषितो धीमान्दुर्व्वासा धर्म्मवित्तमः ।
तेन तासां वरो दत्तो मुनिना पुण्यकर्म्मणा । एकैकस्यास्तनयो राजन्नेका दुहिता तथा ।

रूपेण सुपमाः सर्व्वा वरदानेन धीमतः । कन्या भवन्ति तनयास्तवाप्यसुर पुनः पुनः ।
सङ्गमे सङ्गमे वीर भर्त्तृभिः प्रथमे वय । सर्व्वपुष्पमयं गन्धं लभन्ति च वराङ्गनाः । ८०१०
सर्व्वदा यौवने न्यस्ताः सर्व्वा देवव्रतस्थिताः । सर्व्वा गुणैरुपगताः गीतनृत्यानुबोधनं ।
जानन्ति सर्व्वा दैतेय वरदानेन धीमतः । पुत्रास्ते रूपसम्पन्नाः शास्त्रार्थकुशलास्तथा ।
स्वे स्वे स्थिता वर्णधर्म्मे यथावदनुपूर्व्वशः । ताः कन्या भैमसुख्यानां दत्ताः प्रागेव धीमता ।
अवशेषं शतमेकं यद्यनीतं किल त्वया । तदर्थं यादवा वीर योधयिष्यन्ति सर्व्वशः ।
साहाय्यार्थन्तु राजानो स्त्रियन्तां हेतुपूर्व्वकं । ब्रह्मदत्तसुतार्थञ्च रत्नानि विविधानि च । ८०१५
दीयन्तां भूमिपालानां साहाय्यार्थे महात्मनां । आतिथ्यं क्रियतां चैव ये समेष्यन्ति वै नृपाः ।
एवमुक्ते तथा चक्रुरसुरास्तेऽतिहृष्टवत् । सज्जा पञ्चशतं कन्या रत्नानि विविधानि च ।
यथार्हञ्च नरेन्द्राणां विभक्ता मन्त्रिसत्तमाः । एते पाण्डुसुतान् वीरान् वारिता नारदेन ते ।
निमेषान्तरमात्रेण तत्र गत्वा महात्मना । तुष्टैस्तैरसुरा युक्ता राजन् भूमिपसत्तमैः ।
सर्व्वकामसमृद्धार्थैर्भवद्भिः स्वगतैः स्वयं । अर्च्चिताः स्म यथान्यायं शतं किं वः प्रयच्छतु । ८०२०
एवं नार्च्चितपूर्व्वैश्च दिव्यैर्भोगैर्भवद्विधैः । निकुम्भोऽयाचतोहृष्टः स तत्र सुररिपुस्तदा ।
सम्वर्त्तयित्वा वचनस्य माहात्म्यं सत्यमेव च । युद्धं नो रिपुभिः सार्द्धं भविष्यति नृपोत्तमाः ।
साहाय्यं दातुमिच्छामो भवद्भिस्तत्र सर्व्वथा । एवमस्त्विति तानूचुः क्षत्रियाः शोककल्पगाः ।
पाण्डवेयाकृते वीरान् सुतार्थोऽस्मारदादिमौ । क्षत्रियाः सन्निविष्टास्ते युद्धार्थं कुरुनन्दन ।
पल्यस्तु ब्रह्मदत्तस्य यज्ञवाटं गता अपि । कृष्णोऽपि सेनया सार्द्धं नाययौ षट्पुरं विभुः । ८०२५
महादेवस्य वचनमुद्दिश्य नमता नृप । स्थापयित्वा द्वारवत्यामाहुकं पार्थिवं तथा ।
स तया सेनया सार्द्धं पौराणां हितकाम्यया । यज्ञवाटस्याविदूरे देवो निविविशे विभुः ।
देशे प्रवरकल्याणे वसुदेवप्रचोदितः । दत्तगुल्मप्रतिसरं कृत्वा तं विधिवत् प्रभुः ।
प्रद्युम्नमटने श्रीमान् रक्षार्थं विनियुज्य वै ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १५२ ॥

॥ वैशम्पायन उवाच ॥ मुहूर्त्तेऽभ्युदिते सूर्य्ये अनवत्युपि निर्मले । बलः कृष्णः सात्यकिश्च तार्क्ष्ये नारदसंयुताः । ८०३०
बद्धगोधाङ्गुलित्राणा दंशिता युद्धकाङ्क्षिणः । बिल्वोदकेश्वरं देवं नमस्कृत्य सुरोत्तमं ।
आवर्त्तायां जले स्नात्वा रुद्रेण वरदत्तया । गङ्गायाः कुहरार्द्धे न रुद्रवाक्येन पुष्पगः ।
प्रद्युम्नमपि सैन्यस्य नियतिं स्थाप्य मानदः । रक्षार्थं यज्ञवाटस्य पाण्डवान् विनियुज्य च ।
शेषां सेनां गुहाद्वारि भगवान् विनियुज्य च । जयन्तमथ सञ्चार प्रवरञ्च महाकृतिः ।
तावापेतसुरेशाय स्वयञ्चाश्रयतं तदा । वियत्येव नियुक्तौ तौ प्रद्युम्न इव भारत । ८०३५
ततः कृष्णस्य वचनादाहता रणदुन्दुभिः । नदता मुरजाश्चैव वाद्यान्यपराणि च ।
मकरो रचितो व्यूहः शाम्बेन च गदेन च । आरण्योद्भवश्चैव भीमो वैतरणस्तथा ।

॥ दितिरुवाच ॥ कृतपुत्राऽस्मि भगवन् देवर्षे संयताम्बर । अवध्यं पुत्रमिच्छामि देवैरमितविक्रमम् ।
॥ कश्यप उवाच ॥ अवध्यस्ते सुतो देवि दानवश्च भवेदिति । देवानां संभवो नाम कश्चित् कमललोचने । ८२०५
देवदेवमृते रुद्रं तस्य न प्रभवाम्यहं । आत्मा ततस्ते पुत्रेण रक्षितव्यो हि सर्व्वथा ।
अस्पृशत तां देवीं कश्यपः सत्यवागथ । अस्पृष्टोदरदेशे तु सा पुत्रं सुषुवे ततः ।
सहस्रबाहुं कौरव्य सहस्रशिरसं तथा । द्विसहस्रेक्षणञ्चैव तावच्चरणमेव च ।
स व्रजत्यन्धवत्तस्मादनन्धोऽपि हि भारत । तमन्धकोऽयं नाम्नेति प्रोचुस्तत्र निवासिनः ।
अवध्योऽस्मीति लोकान् स सर्व्वान् बाधति भारत । हरत्यपि च रत्नानि सर्व्वाण्यात्मबलाश्रयात् । ८२१०
वामदत्यात्मवीर्य्येण निरस्याप्सरसां गणान् । स्वेच्छन्नूर्ज्जितोऽत्यर्थं सर्व्वलोकभयङ्करः ।
परदारापहरणं परस्वविलोपनं । चकार सततं मोहादन्धकः पापनिश्चयः ।
त्रैलोक्यविजयं कर्त्तुमुद्यतः स तु भारत । सहायैरसुरैः सार्द्धं बहुभिः सर्व्वधर्षिभिः ।
तं श्रुत्वा भगवान् शक्रः कश्यपं पितरं ब्रवीत् । अन्धकेनेदमारब्धमीदृशं मुनिसत्तम ।
आज्ञापय विभो कार्य्यमस्माकं समनन्तरं । यवीयसः कथं नाम सोढव्यं स्यान्मुने मया । ८२१५
इष्टपुत्रे प्रहर्त्तव्यं कथं नाम मया विभो । इहाद्यभवती कुर्य्यान्मन्युं मयि हते सुते ।
देवेन्द्रवचनं श्रुत्वा कश्यपोऽथाब्रवीन्मुनिः । वारयिष्यामि देवेन्द्र सर्व्वथा भद्रमस्तु ते ।
अन्धकं वारयामास दित्या सह तु कश्यपः । त्रैलोक्यविजयाद्वीर कुरुश्रेष्ठ भारत ।
वारितोऽपि स दुष्टात्मा बाधत्येव दिवौकसः । तैस्तैरुपायैर्दुष्टात्मा प्रमथ्य च तथा परान् ।
बभञ्ज काननं वृक्षानुद्यानानि च दुर्म्मतिः । उच्चैःश्रवःसुतानश्वान् बलाद्धयानयद्दिवः । ८२२०
नागान् दिग्गजसुतान् दिव्यानपि च भारत । बलाद्धरति देवानां पश्यतां बलदर्पितः ।
देवानाप्याययन्त्येव ये यज्ञास्तपसा तथा । तेषाञ्चकार विध्वंसं दुष्टात्मा देवकण्टकः ।
नेशुर्धर्म्मास्तथा वर्णास्तेपुर्नैव तपांस्यपि । अन्धकस्य भयाद्राजन् यज्ञविघ्नानि कुर्व्वतः ।
तस्येच्छया वाति वायुरादित्यश्च तपत्युत । चन्द्रमाः सनक्षत्रो दृश्यते नैव वा पुनः ।
न व्रजन्ति विमानानि विहायसि प्रभां प्रभो । अन्धकस्यातिघोरस्य बलदृप्तस्य दुर्म्मतेः । ८२२५
निरोङ्कारवषट्कारं जगद्धोरं तदाऽभवत् । अन्धकस्यातिघोरस्य भयात् कुरुकुलोद्वह ।
कुरूनथोत्तरान् पापो द्रावयामास भारत । भद्राश्वान् केतुमालांश्च जम्बुद्वीपांस्तथैव च ।
मानयन्ति च तं देवा दानवाश्च दुरासदाः । भूतानि च तथाऽन्यानि समर्थान्यपि सर्व्वथा ।
ऋषयो बध्यमानास्तु समेता ब्रह्मवादिनः । अचिन्तयन्नन्धकस्य बधं धर्म्मभृताम्बर ।
तेषां बृहस्पतिर्मध्ये धीमानिदमथाब्रवीत् । नास्य रुद्रादृते मृत्युर्विद्यते च कथञ्चन । ८२३०
तथा वरे दीयमाने कश्यपेनाभिभाषितं । नाहं रुद्रात् परित्रातुं शक्त इत्येव धीमता ।
तमुपायं चिन्तयामः शर्व्वो येन सनातनः । आनीयात् सर्व्वभूतानि पीड्यमानानि शङ्करः ।
विदितार्थो हि भगवानवश्यं जगतःप्रभुः । अस्य प्रमार्ज्जनं देवः करिष्यति सतां गतिः ।

शतं हि देवदेवस्य भवस्य जगतो गुरोः । यस्तेऽत्यन्तं रक्षितव्या मान्याश्चैव विशेषतः ।
तेनायं नारद सर्व्वे प्रयामः शरणं द्विजं । उपायं वेत्स्यते तत्र वधस्यो हि भवस्य नः । ८४३५
इत्युक्तस्तु तदा ऋषिः श्रुत्वा सर्व्वे तेऽथ तपोधनाः । वाचार्थं नारदं प्रोचुस्तस्मात्तथेति स चोक्तवान् ।
अभिवन्द्य तु तानेषु तत्कार्य्यं नारदो मुनिः । विचार्य्य मनसा विद्धामिति कार्य्यं स दृष्टवान् ।
स देवदेवं भगवान् द्रष्टुं मुनिरथाययौ । मन्दारवनमध्यस्थो यत्र नित्यं वृषध्वजः ।
स तत्र रजनीमेकामुषित्वा मुनिसत्तमः । मन्दाराणां वने रम्ये दयितः शूलपाणिनः ।
आजगाम पुनः स्वर्गं लब्ध्वाऽनुज्ञां वृषध्वजात् । मन्दारपुष्पैः सुकृतां मालामाबध्य भारत । ८४४०
ग्रथितां सविशेषाढ्यां सर्व्वगन्धोत्तमोत्तमां । शाखानमालादामञ्च तेरेव कुसुमैः कृतं ।
तत्र कण्ठे समासज्य महागन्धं नराधिप । आययावन्धको यत्र दुरात्मा बलदर्पितः ।
अन्धकस्तस्य तं दृष्ट्वा गन्धमाघ्राय चोत्तमं । समागतानां सर्व्वेषां महागन्धां महामुने ।
कुतेयं पुष्पजातिर्व्वा कमनीया तपोधन । गन्धान् वर्णांश्च तांस्तान् हि भोः पृच्छति मुहुर्मुहुः ।
स्वर्गे सन्तानकुसुमान्यतिवर्त्तन्ति सर्व्वथा । कः प्रभुस्तस्य देशस्य शक्यं वासयितुं मुने । ८४४५
आचक्ष्व यद्यनुग्राह्या वयं ते देवतातिथे । तमुवाच मुनिश्रेष्ठः प्रहसन्निव भारत ।
यशाय दक्षिणे हस्ते महतस्तपसो निधिः । मन्दरः पर्व्वतश्रेष्ठो वीर कामगमं वने ।
तत्र चैवंविधं पुष्पं भोः स्पृष्टः शूलपाणिनः । न तु तत्र वने कश्चिदच्छन्देन महात्मनः ।
प्रवेष्टुं लभते तद्वै रक्षन्ति प्रवरोत्तमाः । नानाप्रहरणा घोरा नानावेशा दुरासदाः ।
अवध्याः सर्व्वभूतानां महादेवाभिरक्षिताः । नित्यं प्रक्रीडते तत्र सोमः सप्रवरो हरः । ८४५०
मन्दारद्रुमषण्डेषु सर्व्वात्मा सर्व्वभावनः । तपोविशेषैराराध्य हरं त्रिभुवनेश्वरं ।
शक्यं मन्दारपुष्पाणि प्राप्तुं कश्यपवंशज । । क्षीररत्नमणिरत्नानि यानि चान्यानि चाप्यथ ।
काङ्क्षितानि फलन्ति स्म ते द्रुमा हरवल्लभाः । न तत्र सूर्य्यः सोमोऽथ तपत्यतुलविक्रम ।
स्वयम्प्रभं तरुवनं तद्धि दुःखविवर्ज्जितं । तत्र गन्धान् स्रवन्त्यन्ये वस्त्राण्यन्ये महाद्रुमाः ।
वासांसि विविधान्यन्ये सुगन्धीनि महाबल । भक्ष्यं भोज्यञ्च पेयञ्च चोष्यं लेह्यं तथैव च । ८४५५
तरुभ्यः स्रवते तेभ्यो विविधं मनसेप्सितं । पिपासा वा बुभुक्षा वा ग्लानिश्चिन्ताऽपि वाऽनघ ।
न मन्दारवने वीर भवतीत्युपधार्य्यतां । न ते वर्णयितुं शक्या गुणा वर्षशतैरपि ।
गुणा ये तत्र वर्त्तन्ते स्वर्गाद्बहुगुणोत्तराः । अतीव त्रिजयैर्लोकान् स महेन्द्रान् संशयः ।
एकाहमपि यस्तत्र वसेद्वै दितिजोत्तम । स्वर्गस्यापि हि तत् स्वर्गं सुखानामपि तत् सुखं ।
बभूव जगतः सर्व्वमिति मे धीयते मनः । ८४५९

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकवधे पञ्चचत्वारिंशदधिकशततोऽध्यायः ॥ १४५ ॥

॥ वैशम्पायन उवाच ॥ अन्धको नारदवचः श्रुत्वा तत्त्वेन भारत । मन्दरं पर्व्वतं गन्तुं मनो दध्रे महासुरः ।
सोऽसुरान् सुमहातेजाः समानीय महाबलः । जगाम मन्दरं क्रुद्धो महादेवाश्रयं तदा ।

तं महाभ्रप्रतिच्छन्नं महौषधिसमाकुलं । नानाविहगसंकीर्णं सर्वर्त्तुगणसेवितं ।
चन्दनागुरुवृक्षाढ्यं सरलद्रुमसङ्कुलं । किन्नरोद्गीतरम्यञ्च बहुनागसमाकुलं ।
वातोद्धूतैर्वनैः फुल्लैर्नृत्यन्तमिव च क्वचित् । प्रस्रुतैर्धातुभिश्चित्रैर्विक्षिप्तमिव च क्वचित् । ८२६५
पक्षिसङ्घैः सुमधुरैर्वदन्तमिव च क्वचित् । वृन्दैः शकुनिपक्षैः कीर्णं प्रपतद्भिरितस्ततः ।
महावलेश्च सच्चित्रैरद्रिर्हैमसमाश्रयैः । चन्द्रांशुविमलैः शिखैर्भूषितं शिखरोच्चयं ।
मृगराजशताकीर्णं मृगयूथनिषेवितं । स मन्दरगिरिं प्राह कुपितो बलदर्पितः ।
वेत्सि त्वं हि यथाऽवध्यो वरदानादहं पितुः । मम चैव वशे सर्वं त्रैलोक्यं सचराचरं ।
प्रतियोद्धुं न मां कश्चिदिच्छत्यपि गिरे भयात् । पारिजातवनच्छायास्ति तव सानौ महागिरे । ८२७०
सर्वकामप्रदैः पुष्पैर्भूषितं रत्नमुत्तमं । तदाचक्ष्वोपभोक्ष्यामि तद्वनं तव सानुजं ।
किं करिष्यसि कृष्णस्त्वं मनो हि त्वरते मम । त्रातारं नात्र पश्यामि मया त्वत्प्रहितस्य ते ।
इत्युक्तो मन्दरस्तेन तत्रैवान्तरधीयत । ततोऽन्धकोऽतिकुपितो वरदानेन दर्पितः ।
मुमोच नादं सुमहदिदं वचनमब्रवीत् । याच्यमानो मया नाम यस्मात्त्वं बहुमन्यसे ।
अहं चूर्णीकरोमि त्वां बलं पर्वत पश्य मे । एवमुक्त्वा गिरेः शृङ्गमुत्पाट्य बहुयोजनं । ८२७५
निष्पिपेष गिरिस्तस्य शृङ्गेऽयान्यच्च वीर्यवान् । सह तैरसुरैः सर्वैर्वरदानेन दर्पितः ।
तं प्रच्छन्नमहीजालं भज्यमानं महागिरिं । विदित्वा भगवान्रुद्रश्चकारानुग्रहं गिरेः ।
अविशिष्टतरं वीर सम्यग्दिव्यलतायुतं । नदीजालैर्बहुतरैरायुतं चित्रकाननं ।
स सानुभिः पुरा यद्वत्तद्वदेव विराजते । अथ देवप्रभावेण शृङ्गाण्युत्पाटितानि तु ।
छिन्नानि चासुराणां च घ्नन्ति घोराणि भारत । छिन्ना ये प्रपतन्ते स्म शृङ्गाणि तु महासुराः । ८२८०
शृङ्गैस्तैस्ते स्म बध्यन्ति पर्वतस्य जनाधिप । ये त्वन्यास्त्वसुरास्तत्र तिष्ठन्ति गिरिसानुषु ।
शृङ्गैस्ते न स्म बध्यन्ते मन्दरस्य महागिरेः । ततोऽन्धकस्तदा दृष्ट्वा सेनां तां मृदितां तया ।
कुपितः सुमहानादं नदित्वेदं तदाऽब्रवीत् । आक्रम्य तं वनं यस्य युद्धार्थमुपतिष्ठतु ।
किं त्वयाऽचल युद्धेन हताः स्म च्छद्मना रणे । एवमुक्ते त्वन्धकेन वृषभेण महेश्वरः ।
संप्राप्तः शूलमुद्यम्य देवोऽन्धकजिघांसया । प्रमथानां गणैश्चैव वृतो वै बहुलोचनः । ८२८५
तथा भूतगणैश्चैव धीमान् भूतगणेश्वरः । प्रचकम्पे ततः कृत्स्नं त्रैलोक्यं कुपिते हरे ।
भिन्नवक्षाः प्रतिस्रोतःस्रवाः प्रज्वलितोदकाः । अस्फुरद्दिशोऽग्निदाहाश्च सर्वतो हरतेजसा ।
युयुधुश्च ग्रहाः सर्वे विपरीता जनाधिप । चेलुश्च गिरयस्तत्र काले कुरुकुलोद्वह ।
प्रववर्षाथ पर्जन्यः सधूमाङ्गारवृष्टयः । उष्णाभश्चन्द्रमाश्चासीत् सूर्यः शीतप्रभस्तथा ।
न ब्रह्मापि विदुस्तत्र मुनयो ब्रह्मवादिनः । वडवाः सुषुवुर्गा वै गावोऽश्वानपि चानघ । ८२९०
पेतुर्वृक्षाश्च सन्दिग्धामग्निना भस्मसात्कृताः । खे धन्ते दुन्दुभा गावश्च गावश्चारुरुदुर्भृशं ।
राक्षसा यातुधानाश्च पिशाचाश्चापि सर्वशः । विपरीतं जगद्दृष्ट्वा महादेवस्तथागतं ।

कुशेन भगवाञ्छूलं प्रदीप्ताग्निसमप्रभं । तत पपात शरीरेऽस्य महदन्धकोरसि दुर्द्धरं ।
भस्म चाकरोद्रौद्रमन्धकं साधुकण्टकं । ततो देवगणाः सर्व्वे मुनयश्च तपोधनाः ।
हरं तुष्टुवुश्चैव जगच्छत्रौ निवर्त्तिते । देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात च । ८११५
त्रैलोक्यं निर्वृतञ्चासीच्छरेन्द्र विगतज्वरं । प्रजगुर्देवगन्धर्व्वा ननृतुश्चाप्सरोगणाः ।
जेपुश्च ब्राह्मणा वेदांश्चेजुश्च क्रतुभिस्तथा । यक्षाः प्रकृतिमापेदुरुष्णांशो यथा पुरा ।
स जज्वाल जले वह्निरापः सर्व्वाः प्रसेदिरे । मन्दरः पर्व्वतश्रेष्ठः पुरेव विरराज च ।
श्रिया परमया जुष्टः सर्व्वतश्च समुच्छ्रयात् । रेमे सोमश्च भगवान् पारिजातवने हरः ।
सुप्रचारान् सुरान् कृत्वा ब्रह्मादीन् सर्व्वतः प्रभुः । ८१२०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकवधे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

॥ जनमेजय उवाच ॥ मुनेऽन्धकवधः श्राव्यः श्रुतोऽयं खलु भो मया । शान्तिक्षयायां लोकानां कृता देवेन धीमता ।
निकुम्भस्य हतं देहं द्वितीयं चक्रपाणिना । यदर्थञ्च यथा चैव तद्भवान् वक्तुमर्हति ।
॥ वैशम्पायन उवाच ॥ श्रद्दधानस्य राजर्षे वक्तव्यं भवतोऽनघ । चरितं लोकनाथस्य हरेरमिततेजसः ।
द्वारवत्यां निवसतो विष्णोरतुलतेजसः । समुद्रयात्रा संप्राप्ता तीर्थे पिण्डारके नृप ।
उग्रसेनो नरपतिर्वसुदेवश्च भारत । निक्षिप्तौ नगराध्यक्षौ शेषाः सर्व्वे विनिर्गताः । ८१२५
पृथग्बलः पृथग्धीमान् लोकनाथो जनार्द्दनः । राज्ञः पृथक् कुमाराणां नृपामिततेजसां ।
गणिकानां सहस्राणि निःसृतानि नराधिप । कुमारैः सह वार्ष्णेयैरूपवद्भिः स्वलङ्कृतैः ।
दैत्याधिवासं निर्ज्जित्य यदुभिर्दृढविक्रमैः । वेश्या निवेशिता वीर द्वारवत्यां सहस्रशः ।
सामान्यास्ताः कुमाराणां क्रीडानार्य्यो महात्मनां । इच्छाभोग्या गुणैरेव राजन्या वेशयोषितः ।
स्थितिरेषा हि भैमानां कृताः कृष्णेन धीमता । स्त्रीनिमित्तं भवेद्वैरं मा यदूनामिति प्रभो । ८१३०
रेवत्या चैकया सार्द्धं बलो रेमे ऽनुकूलया । चक्रवाकानुरागेण यदुश्रेष्ठः प्रतापवान् ।
कादम्बरीपानकलो भूषितो वनमालया । चिक्रीड सागरजले रेवत्या सहितो बलः ।
षोडशस्त्रीसहस्राणि जले कमललोचनः । रमयामास गोविन्दो वैकल्पेन सर्व्वदृक् ।
अहमिष्टा मया सार्द्धं जले वसति केशवः । इति ता मेनिरे सर्व्वा राजन्नारायणस्त्रियः ।
सर्व्वाः सुरतबद्धाङ्ग्यः सर्व्वाः सुरतनर्पिताः । मानमूढश्च ताः सर्व्वा गोविन्दबद्धमानसं । ८१३५
अहमिष्टाऽहमिष्टेति स्निग्धे परिजने तदा । नारायणस्त्रियः सर्व्वा मुदा प्रचारिरे शुभाः ।
करजदिग्धचिह्नानि कुचाधरगतानि ताः । दृष्ट्वा दृष्ट्वा जहृषिरे दर्पणेष्वमलेक्षणाः ।
गोत्रमुद्दिश्य कृष्णस्य जगिरे कृष्णयोषितः । पिबन्त्य इव कृष्णस्य नयनैर्वदनाम्बुजं ।
कृष्णार्पितमनोदृष्ट्यः कान्ता नारायणस्त्रियः । मनोहरतरा राजन्नभवन्नेकनिश्चयाः ।
एकार्पितमनोदृष्ट्यो मैथ्यो ताश्चक्रिरेऽङ्गनाः । नारायणेन देवेन तर्पितास्वमनोरथाः । ८१४०
शिरांसि गर्व्वितान्यूहुः सर्व्वा निरवशेषतः । बाहुल्यं केशवमयं बहुमन्यस्तादराङ्गनाः ।

मणिवैदूर्य्यचित्राङ्गाः कार्त्तस्वरविभूषिताः । सर्व्वर्त्तुकुसुमाकीर्णाः सर्व्वगन्धाधिवासिताः ।

षट्पदैर्बहुभिर्जुष्टाः शकुनैः स्वनवादिभिः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि भानुमतीहरणे सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

॥ वैशम्पायन उवाच ॥ रेमे बलश्चन्दनपङ्कदिग्धः कादम्बरीपानकलः प्रहृष्टः । रक्तेक्षणो रेवतिमाश्रयित्वा प्रलम्बबाहुः

स्खलितः प्रयातः ।

नीलाम्बुदाभे वसने वसानश्चन्द्रांशुगौरो मदिराविलाक्षः । रराज रामोऽम्बुदमध्यमेत्य सम्पूर्णबिम्बो भगवानिवेन्दुः ।

वामैककर्णामलकुण्डलश्रीः स्वैरं मनोज्ञाब्जकृतावतंसः । तिर्य्यक्कटाक्षं प्रियया मुमोद रामो मुखं चाभिनिरीक्षमाणः । ८६८५

यथाश्रया कंसनिकुम्भशौचसद्धारकपोऽप्सरसां गणः सः । द्रष्टुं मुदा रेवतिमाश्रयाम बलानुयातं सर्व्वयानमद्य ।

तां रेवतीश्चापि च राम रामं सर्व्वा जगुस्तत्र वराङ्गयश्च । वाद्यानुरूपं ननृतुः सुगात्र्यः समन्ततोऽन्या अगिरे च सम्यक् ।

यथानुरूपेणाभिनयेन सम्यं यथावदेषां प्रियमर्थयुक्तं । यथानुकूलश्च बलस्य तत्र तथाश्रया रेवतराजपुत्र्याः ।

चुकूर्द्दुरन्याश्च तथैव तासां तद्भावभावाकृतिवेशयुक्ताः । सहस्रतालं ललितं मनोज्ञं वराङ्गनाः सम्वरताहृताङ्ग्यः ।

सहर्षणाधोक्षजनन्दनानि महोत्सवस्थाऽथ च मङ्गलानि । कंसप्रलम्बादिवधञ्च रम्यं चाणूरघातञ्च तथैव रङ्गे । ८६९०

यशोदयाथ प्रथितं यथाऽथ दामोदरत्वञ्च जनार्द्दनस्य । वधं तथाऽरिष्टकधेनुकाभ्यां व्रजे च वासं शकुनीवधञ्च ।

यथा च भग्नौ यमलार्ज्जुनौ च दृष्टिं वृकाणामपि कालयुक्तां । स कालियो नागपतिर्ह्रदे च कृष्णेन दान्तश्च यथा दुरात्मा ।

सङ्कीर्णं ह्रदाद्धरणञ्च वीर पद्मोत्पलानां मधुसूदनेन । गोवर्द्धनोऽर्थे च गवां धृतोऽभूद्यथा च कृष्णेन जनार्द्दनेन ।

कुब्जां यथा गन्धकपेषिकाञ्च कुब्जत्वहीनां कृतवांश्च कृष्णः । सवामनं वामनकञ्च चक्रे कृष्णो यथात्मानमजोऽप्यनिन्द्यः ।

सौभप्रमाथञ्च हलायुधस्य वधं परस्याप्यथ देवशत्रोः । गान्धारकन्या वहने नृपाणां रथे तथा योजनमूर्च्छितानां । ८६९५

तथा सुभद्राहरणे जयञ्च युद्धे च वालाहककम्बुमाले । रणप्रवेशञ्च युधाजितेर्यत् समाहृतं शक्रसमक्षमासीत् ।

एतानि चान्यानि च चारुरूपा जगुः स्त्रियः प्रीतिकराणि राजन् । सहर्षणाधोक्षजहर्षकाणि चित्राणि चानेककथाश्रयाणि ।

कादम्बरीपानमदोत्कटस्तु बलः प्रयुक्तः स चुकूर्द्द रामः । महस्रतालं मधुरं समञ्च स भार्य्यया रैवतराजपुत्र्या ।

तं कूर्द्दमानं मधुसूदनः स दृष्ट्वा महात्मा हर्षान्वितात्मा । चुकूर्द्द सत्या सहितो महात्मा बलस्य धीमान् हर्षागमार्थं ।

समुद्रयात्रार्थमथागतश्च चुकूर्द्द पार्थो नरलोकवीरः । कृष्णेन सार्द्धं मुदितश्चुकूर्द्द सुभद्रया चैव वराङ्गयष्ट्या । ८७००

गदश्च धीमानथ सारणश्च प्रद्युम्नसाम्बौ नृप सात्यकिश्च । सत्राजितोऽस्मनुदारवीर्य्यः स चारुदेष्णश्च महारूपः ।

वीरौ कुमारौ निशठोल्मुकौ च रामात्मजौ वीरतमौ चुकूर्द्दतुः । अक्रूरसेनापतिशङ्कवश्च तथाऽपरे भैमकुलप्रधानाः ।

महापानपात्रं वबृधे तदानीं कृष्णप्रभावेण जनेशपुत्र । आपूर्णमापूर्णमुदारकीर्त्ते चुकूर्द्दयद्भिर्नृपभैमसुख्यैः ।

तैराप्रसक्तैरतिकूर्द्दमानैर्यदुप्रवीरैरमरप्रकाशैः । हर्षान्वितं वीर जगत्तथाऽभूत्क्षेमञ्च पापानि नरेन्द्रसूनोः ।

देवर्षिदैत्यस्तत्र च नारदोऽथ विप्रः प्रियार्थं मधुकेशिशत्रोः । चुकूर्द्द मध्ये यदुसत्तमानां जटाकलापागलितैकदेशः । ८७०५

हासप्रणेता धुरि राजपुत्र स एव तत्राभवदप्रमेयः । मध्यञ्च गत्वा स चुकूर्द्द भूयो हेलाविकारैः सविजृम्भिताङ्गैः ।

स सत्यभामामथ केशवञ्च पार्थं सुभद्राञ्च बलञ्च देवं । देवीं तथा रैवतराजपुत्रीं सन्दृश्य सन्दृश्य जहास धीमान् ।

ता हासयामास स चेष्टयुक्ताभिर्दैत्यपायैः परिहासशीलः । चेष्टानुकारैर्हसितानुकारैर्लीलानुकारैरपरैश्च धीमान् ।

नृत्यावसाने भगवानुपेन्द्रस्त्याज धीमानथ तोयसङ्गान्। उत्तीर्य्य तोयादनुकूलवेषं जग्राह दत्त्वा मुनिसत्तमाय।
उपेन्द्रमुत्तीर्णमथाशु दृष्ट्वा भैमा हि ते तद्वदुरेव तोयं। विलक्षणा ये त्वथ पानभूमिं कृत्वाश्रया ते ययुरप्रमेयाः।
यथानुपूर्व्व्या च यथावयश्च यथाभिधानेन तदोपदिष्टाः। अन्नानि ते वै बुभुजुः प्रतीताः पपुश्च पेयानि यथानुकूलं।
मांसानि पक्वानि फलाम्लिकानि चुक्रोत्तरेणाथ च दाडिमेन। निष्टप्तशूल्यान् शकलान् पशूंश्च तत्रोपजह्रुः शुचयोऽथ सूदाः।
सुस्विन्नशूल्यांश्च महिषांश्च बालान् सृष्टान् सुनिष्टप्तघृतावसिक्तान्। वृक्षाम्लसौवर्चलचुक्रपूर्णान् पौरोगवोक्तानुपजह्रुरेषां। ८७०
पौरोगवोक्ता विधिना मृगाणां मांसानि सिद्धानि च पीवराणि। नानाप्रकाराण्युपजह्रुरेषां मृष्टानि पक्वानि च चुक्रचूतैः।
पार्श्वानि चान्ये शकलानि तत्र ददुः पशूनां घृतचर्चितानि। सामुद्रचूर्णैरवचूर्णितानि चूर्णेन मृष्टेन च मारिचेन।
समूलकैर्दाडिममातुलुङ्गैः पर्णासहिङ्ग्वार्द्रकभूस्तृणैश्च। तत्रोपदंशैः सुमुखोत्तरैस्ते पानानि हृष्टाः पपुरप्रमेयाः।
कट्वाङ्कशूल्यैरपि पक्षिभिश्च घृताम्लसौवर्चलतैलसिक्तैः। मैरेयमाध्वीकसुरासवांस्ते पपुः प्रियाभिः परिवार्य्यमाणाः।
श्वेतेन युक्तानपि शोणितेन भक्ष्यान् सुगन्धान् लवणान्वितांश्च आर्द्रान् किलाटान् घृतपूर्णकांश्च नानाप्रकारानपि खण्डकाद्यान्। ८७५
आपानपाशौण्डवभोजमिश्राः शाकैश्च सूपैश्च बहुप्रकारैः। पेयैश्च दध्ना पयसाथ वीराः स्विन्नानि राजन् बुभुजुः प्रहृष्टाः।
तथा रसालांश्च बहुप्रकाराः पपुः सुगन्धानपि पानवीपु। शृतं पयः शर्करया च युक्तं फलप्रकारांश्च बहूंश्च खादन्।
तृप्ताः प्रवृत्ताः पुनरेव वीरास्ते भैमसुख्या वनितासहायाः। गीतानि रम्याणि जगुः प्रहृष्टाः कान्ताभिनीतानि मनोहराणि।
आज्ञापयामास ततः सलस्थां निशि प्रहृष्टो भगवानुपेन्द्रः। छालिक्यगानं बहुसंविधानं यद्देवगन्धर्व्वमुदाहरन्ति।
जग्राह वीणामथ नारदस्तु षड्ग्रामरागादिसमाधियुक्तां। हल्लीषकन्तु स्वयमेव कृष्णः सवंशघोषं नरदेवपार्थ। ८८०
मृदङ्गवाद्यानपरांश्च वाद्यान् वराप्सरास्ता जगृहुः प्रतीताः। आसारितान्ते च ततः प्रतीता रम्भोत्थिता साभिनयार्थतज्ज्ञा।
तयाभिनीते वरगात्रयष्ट्या तुतोष रामश्च जनार्द्दनश्च। अथोर्व्वशी चारुविशालनेत्रा हेमा च रामाथ मिश्रकेशी।
तिलोत्तमा चाप्यथ मेनका च एतास्तथान्याश्च हरिप्रियार्थं। जगुस्तथैवाभिनयञ्च चक्रुर्हृष्टैश्च कामैर्ननृतुश्च कामं।
ता वासुदेवाप्यनुरक्तचित्तः संनृत्यगीताभिनयैरुदारैः। नरेन्द्रसूनो परितोषितेन ताम्बूलयोगेन वराप्सरोभिः।
तदागताभिर्नृवराङ्गनास्तु संख्यापरास्ता मानसयास्तथैव। फलानि गन्धोत्तमवन्ति वीरान्छालिक्यगान्धर्व्वनयाहृतांश्च। ८८५
कृष्णेच्छया च त्रिदिवान्तदेव अनुग्रहार्थं भुवि मानुषाणां। स्थितञ्च रम्यं हरिरिन्द्रसेव प्रयोजयामास महेन्द्रजेतः।
छालिक्यगान्धर्व्वमुदारबुद्धिस्तेनैव ताम्बूलमथ प्रयुक्तं। प्रयोजितं पद्मभिरिन्द्रतुल्यैश्छालिक्यमिष्टं सततं नराणां।
शुभावहं वृद्धिकरं प्रशस्तं मङ्गल्यमेवाथ तथा यशस्यं। पुण्यञ्च पुष्ट्यभ्युदयावहञ्च नारायणस्येष्टमुदारकीर्त्तेः।
अथावहं धर्म्मधुरावहञ्च दुःस्वप्ननाशं परिकीर्त्त्यमानं। करोति पापञ्च तथा विहन्ति शृण्वन् सुरावासगतो नरेन्द्रः।
छालिक्यगान्धर्व्वमुदारकीर्त्तिर्येन क्रियेकं दिवसं समस्तं। चतुर्युगानां नृप रैवतोऽथ ततः प्रवृत्ता सुकुमारजातिः। ८९०
गान्धर्व्वजातिस्तु तथापराणि दीपावथा दीपसतानि राजन्। विवेद कृष्णश्च सनारदश्च प्रद्युम्नमुख्यैर्नृप भैममुख्यैः।
विज्ञानमेतद्धि परं यथावद्देशमात्रानि जनोऽस्तु लोके। जानन्ति छालिक्यगुणोदयानां तोयं नदीनामथ वा समुद्रे।
ज्ञातुं हि शक्यं हिमवान् गिरिर्व्वा पलायतो वा गुणतोऽथ वापि। शक्यं न तच्छालिक्यसूते तपोभिस्तानि विधानान्यथ मूर्च्छनासु।

गोकर्णस्योपरिष्टात्तु भ्रंशितः स महासुरः । पपात चैलगङ्गायाः पुलिने सह कन्यया ।
न देवा नासुरा वापि न्नायन्ति तपोधनाः । गोकर्णं तेजसा युक्तं महादेवस्य भारत ।
एतदन्तरमासाद्य प्रद्युम्नः भीमविक्रमः । कन्यां भानुमतीं भैमो जहार रणदुर्ज्जयः । ८५९५
असुरः सोऽर्द्दितो राजन् कृष्णाभ्यां निशितैः शरैः । त्यक्त्वाथोत्तरगोकर्णं निकुम्भो दक्षिणां दिशं ।
जगाम पृष्ठतो यातौ कृष्णौ तार्क्ष्यगतौ तदा । विवेश षट्पुरञ्चैव ज्ञातीनामालयन्तदा ।
तत्र वीरौ समुद्दारि कृष्णौ रात्रिं तदोषतुः । रौक्मिणेयोऽपि कृष्णेन सन्दिष्टो द्वारकां पुरीं ।
अनयद्भानुतनयां प्रहृष्टेनान्तरात्मना । नयित्वा चायथौ वीरः षट्पुरं दानवाकुलं ।
ददर्श च गुहाद्वारि कृष्णौ भीमपराक्रमौ । ऊषतुर्द्वारमाक्रम्य षट्पुरस्य महाबलौ । ८६००
कृष्णौ प्रद्युम्नसहितौ निकुम्भवधकाङ्क्षिणौ । ततोऽनन्तरमेतस्माद्द्वाद्द्तिबलस्तदा ।
निर्ज्जगाम बली योद्धुं निकुम्भो भीमविक्रमः । तस्य निर्गच्छतस्तस्य बिलात् पार्थो विशाम्पते ।
रुरोध सर्व्वतो मार्गं शरैर्गाण्डीवनिःसृतैः । सोऽभिसृत्य गदां घोरामुद्यम्य वज्रकण्टकां ।
शिरस्यताडयत् पार्थं निकुम्भो बलिनाम्वरः । गदयाभिहते पार्थे रक्तं वमति मुह्यति ।
भ्रमित्वा सोऽसुरोद्दृप्तो रौक्मिणेयमताडयत् । तं प्राद्युम्नमुखं वीरं मायावी मायिनाम्वरं । ८६०५
अदृष्टेनाहतो वीरः शिरस्यथ मुमोह सः । तथा गतौ तु तौ दृष्ट्वा मुह्यमानौ सुताडितौ ।
अभिदुद्राव गोविन्दो निकुम्भं क्रोधमूर्च्छितः । कौमोदकीं समुद्यम्य गदपूर्व्वाङ्कुशो गदां ।
तावन्योन्यं दुराधर्षौ गर्ज्जन्तावभिपेततुः । ऐरावतगतः शक्रः सर्व्वैर्देवगणैः सह ।
ददर्श तन्महायुद्धं घोरं देवासुरं तदा । दृष्ट्वा देवान् समीकेऽस्मिन् वैर्युद्धैररिन्दमः ।
इयेष दानवं हन्तुं देवानां हितकाम्यया । समण्डलानि चित्राणि दर्शयामास केशवः । ८६१०
कौमोदकीं महाबाहुर्लालयन् युद्धकोविदः । तथैवासुरमुख्योऽपि गदां तां वज्रकण्टकां ।
शिक्षया भ्रामयाणोऽथ मण्डलानि चकार ह । स्वयमाविव गर्ज्जन्तौ दंष्ट्रिणाविव कुञ्जरौ ।
वासितान्तरमासाद्य क्रुद्धौ प्रासाहूकाविव । आजघान निकुम्भन्तु गदया गदपूर्व्वजं ।
स्फुटाट्टहासया वीरं नादं मुक्त्वा तु दारुणं । तत्कालमेव कृष्णोऽपि भ्रामयित्वा महागदां ।
निकुम्भमूर्द्धनि तदा पातयामास भारत । अवष्टभ्य मुहूर्त्तन्तु हरिः कौमोदकीं तदा । ८६१५
तस्यौ जगद्गुरुर्द्धीमान्मोहात् पतितः क्षितौ । हाहाभूतं जगत् सर्व्वं तत्कालमभवत्तदा ।
तथागते वासुदेवे नरदेवमहात्मनि । आकाशगङ्गा तोयेन शीतेन सुसुगन्धिना ।
सिषेचामृतमिश्रेण कृष्णं देवेश्वरः स्वयं । नूनमात्मेच्छया कृष्णस्तया चक्रे सुरोत्तमः ।
कोहि शक्तो महात्मानं युद्धे मोहयितुं हरिं । कृष्णः प्रत्यागतप्राणश्चक्रमुद्यम्य भारत ।
प्रतीक्षेति दुरात्मानमुवाच रिपुनाशनः । निकुम्भोऽप्यतिमायावी उत्पपात दुरासदः । ८६२०
शरीरं तत् परित्यज्य न तं वेत्ति च केशवः । सुमूर्षति ततो वार्य्यमिति मत्वा जनार्द्दनः ।
ररक्ष स्मरमाणोऽथ वीरो वीरव्रतं विभो । अथ प्रद्युम्नकौन्तेयावागतौ लब्धचेतसौ ।

स्थितौ नारायणाभ्याशे निकुम्भवधनिश्चितौ । प्रद्युम्नोऽथ मायावी विहितः कृष्णमब्रवीत् ।
निकुम्भस्तात नास्त्यत्र गतः क्वापि सुदुर्मतिः । प्रद्युम्नेनैवमुक्ते तु तत्क्षणाच्च कलेवरं ।
प्रजहाथाय भगवानर्ज्जुनेन सह प्रभुः । तथा शतसहस्राणि निकुम्भानां जनाधिप । ८५२५
ददृशुस्ते तदा वीर स्थिता दिवि च सर्व्वतः । सहस्राण्येव कृष्णस्तु तथा पार्थमरिन्दम ।
रौक्मिणेयं तथा वीरं तदद्भुतमिवाभवत् । पाण्डवस्य धनुः केचित् केचिदस्य महाशरान् ।
अन्येऽस्य जगृहुर्हस्तावन्ये पादौ महासुराः । एवं प्रगृह्य तं वीरमगमंस्ते विहायसं ।
पार्थानामपि कोषस्तु ग्रहीतानां तदाभवत् । नान्नं ददर्श कृष्णस्य कार्ष्णिश्च रिपुनाशनौ ।
विच्छिद्य तौ शरैर्वीरौ निकुम्भं पार्थवर्ज्जितौ । एकैकस्तु द्विधा छिन्नो द्वेधाभवति भारत । ८५३०
दिव्यज्ञानस्तदा कृष्णो भगवानथ दृष्टवान् । निकुम्भं तत्त्वतश्चापि ददर्श मधुसूदनः ।
हर्त्तारं सर्व्वमायानां हर्त्तारं फाल्गुनस्य च । स चक्रेण शिरस्तस्य चकर्त्तासुरसूदनः ।
पश्यतां सर्व्वभूतानां भूतभव्यभवो हरिः । स मुक्त्वा फाल्गुनं राजंश्छिन्ने शिरसि भारत ।
पपातासुरमुख्योऽथ छिन्नमूल इव द्रुमः । अथाकाशगतं पार्थं पतमानं विहायसः ।
कृष्णवाक्येन जग्राह कार्ष्णिर्व्वियति मानदः । निकुम्भे पतिते भूमौ समाश्वास्य धनञ्जयं । ८५३५
जगाम द्वारकां वीरः पार्थकामसमन्वितः । समियाय दशार्होऽथ द्वारकां मुदितो विभुः ।
नारदस्य महात्मानं ववन्दे यदुनन्दनः । नारदोऽथ महातेजा भानुं यादवमब्रवीत् ।
भानो माकार्षीर्मन्युं त्वं श्रूयतां भैमनन्दन । क्रीडन्त्या रैवते ह्याने दुर्व्वासाः कोपितोऽनया ।
स शशाप ततो रोषान्मुनिर्दुहितरं तव । अतिदुर्ललितैः कन्या शत्रुहस्तं गमिष्यति ।
सुतार्थे ते मया सार्द्धं मुनिभिः स प्रसादितः । बाल्यां दृष्टवतीं कन्यामनागसमिमां मुने । ८५४०
शप्तवानसि धर्म्मज्ञ कथं धर्म्मभृताम्वर । अनन्तरं विधत्स्वाथ वयं विज्ञापयामहे ।
अस्माभिरेवमुक्तस्तु दुर्व्वासा भैमनन्दन । उवाचाधोमुखो भूत्वा मुहूर्त्तं कृपयान्वितः ।
यदत्रोक्तमहं वाक्यं तत्तथा न तदन्यथा । रिपुहस्तमवश्यं हि गमिष्यति न संशयः ।
अदूषिता तु धर्म्मेण भर्त्तारमुपलप्स्यते । बहुपुत्रा बहुधना सुभगा च भविष्यति ।
सुगन्धिगन्धा च सदा कुमारी च पुनः पुनः । न च शोकमिमं घोरं तन्वङ्गी धारयिष्यति । ८५४५
एवं भानुमती वीर सहदेवाय दीयतां । श्रद्दधानः स शूरश्च धर्म्मशीलश्च पाण्डवः ।
ततो भानुमतीं भानुर्ददौ माद्रीसुताय वै । सहदेवाय धर्म्मात्मा नारदस्य वचः स्मरन् ।
आनीतः सहदेवश्च प्रेषिते चक्रपाणिना । विवाहे च तदा वृत्ते सभार्य्यः स्वपुरं गतः ।
इमं कृष्णस्य विजयं यः पठेच्छृणुयादथ । विजयं सर्व्वकृत्येषु श्रद्दधानो लभेन्नरः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि भानुमतीहरणे ऊनपञ्चाशदधिकशततोऽध्यायः ॥ १४८ ॥
॥ जनमेजय उवाच ॥ भानुमत्यापहरणं विजयं केशवस्य च । कालिक्यानयनञ्चैव देवलोकान्महामुने । ८५५०
क्रीडाञ्च सागरे दिव्यां वृष्णीनाममितौजसां । अश्रौषं परमाश्चर्य्यं मुने धर्म्मभृताम्वर ।

वज्रनाभवधं श्रुत्वा निकुम्भवधकीर्त्तने । तस्य कौतूहलं श्रोतुं प्रसादात्त्वत्तो मुने ।
॥ वैशम्पायन उवाच ॥ हन्त ते वर्णयिष्यामि वज्रनाभवधं नृप । विजयञ्चैव कामस्य शाम्बस्य च भारत ।
मेरोः सानौ नरपते तपस्तेपे महासुरः । वज्रनाभ इति ख्यातो निश्चितः समितिञ्जय ।
तस्य तुष्टो महातेजा ब्रह्मा लोकपितामहः । वरेण च्छन्दयामास तपसा परितोषितः । ८५५५
अवध्यतां स देवेभ्यो वव्रे दानवसत्तमः । पुरं वज्रपुरञ्चैव सर्व्वरत्नमयं शुभं ।
अच्छन्देन प्रवेशश्च न वायोरपि भारत । अचिन्तितेन कामानामुपपत्तिं नराधिप ।
शाखानगरमुख्यानां संवाहानां शतानि च । नगरस्याप्रमेयस्य समन्तात्तु जनमेजय ।
तथा तदभवत्तस्य वरदानेन भारत । उवास वज्रनगरे वज्रनाभो महासुरः ।
कोटिशो वरलब्धास्तमसुराः पर्य्युपासते । ऊषुर्वज्रपुरे राजन् सम्बाधेषु तथैव च । ८५६०
शाखानगरमुख्येषु रम्येषु च नराधिप । हृष्टपुष्टप्रमुदिता नृपदेवस्य शत्रवः ।
वज्रनाभोऽथ दुष्टात्मा वरदानेन दर्पितः । पुरस्य चात्मनश्चैव जगद्बाधितुमुद्यतः ।
महेन्द्रमब्रवीद्गत्वा देवलोकं त्रिशासते । ममैवेशितुमिच्छामि त्रैलोक्यं पाकशासन ।
अथवा मे प्रयच्छस्व युद्धं देवगणेश्वर । सामान्यञ्च जगत्कृत्स्नं काश्यपानां महात्मनां ।
स बृहस्पतिना सार्द्धं मन्त्रयित्वा सुरेश्वर । वज्रनाभं सुरश्रेष्ठः प्रोवाच कुरुवंशज । ८५६५
सत्रे स दीक्षितः सौम्य कश्यपो नः पिता मुनिः । तस्मिन् वृत्ते यथान्यायं तथा स हि करिष्यति ।
ततः स पितरं गत्वा कश्यपं दानवोऽब्रवीत् । यथोक्तं देवराजेन तमुवाचाथ कश्यपः ।
सत्रे वृत्ते करिष्यामि यथान्याय्यं भविष्यति । त्वन्तु वज्रपुरे पुत्र वस गच्छ समाहितः ।
एवमुक्ते वज्रनाभः स्वमेव भवनं गतः । महेन्द्रोऽपि ययौ देवो द्वारकां द्वारमालिनीं ।
गत्वा चान्तर्हितो देवो वासुदेवमथाब्रवीत् । वज्रनाभस्य वृत्तान्तं तमुवाच जनार्द्दनः । ८५७०
उपस्थितो देव वाजिमेधो महाक्रतुः । तस्मिन् वृत्ते वज्रनाभं पातयिष्यामि वासव ।
तत्रोपायं प्रवेशे तु चिन्तयाव शतक्रतो । नास्ति ह्यप्रवेशोऽस्ति तत्र वायोरपि प्रभो ।
ततो गतो देवराजो वासुदेवेन सत्कृतः । वाजिमेधे च संप्राप्ते वसुदेवस्य भारत ।
तस्मिन् यज्ञे वर्त्तमाने प्रवेशार्थं सुरात्मनो । चिन्तयामासतुर्वीरौ देवराजाच्युतावुभौ ।
तत्र यज्ञे वर्त्तमाने सुनाट्येन नटस्तदा । महर्षीन्तोषयामास भद्रनामेति नामतः । ८५७५
तं वरेण मुनिश्रेष्ठाश्छन्दयामासुरात्मवत् । स वव्रे हि नटो भद्रो वरं देवेश्वरोपमः ।
देवेन्द्रकृष्णच्छन्देन सरस्वत्या प्रचोदितः । प्रणिपत्य मुनिश्रेष्ठानश्वमेधे समागतान् ।
॥ नट उवाच ॥ भोज्यो द्विजानां सर्व्वेषां भवेयं मुनिसत्तमाः । सप्तद्वीपाञ्च पृथिवीं विचरेयमिमामहं ।
प्रसिद्धाकाशगमनः सत्कुर्व्वंश्च विशेषतः । अवध्यः सर्व्वभूतानां स्थावरा ये च जङ्गमाः ।
यस्य यस्य च वेशेन प्रविशेयमहं खलु । मृतस्य जीवतो वापि भावेनोत्पादितस्य च । ८५८०
स तुल्यस्तादृशः स्यां वै जरारोगविवर्ज्जितः । तुष्येयुर्मुनयो नित्यमन्ये च मम सर्व्वदा ।

एवमस्त्विति स प्रोक्तो व्याहृतैर्नृपते नटः । सप्तद्वीपां वसुमतीं पर्य्यटत्यमरोपमः ।
पुराणि दानवेन्द्राणामुत्तरांश्च कुरूंस्तथा । भद्राश्वान् केतुमालांश्च काला म्रद्वीपमेव च ।
पर्व्वणीषु तु सर्व्वासु द्वारकां यदुमण्डितां । आयाति वरदत्तः स लोकवीर महानटः ।
ततो हंसान् धार्त्तराष्ट्रान् देवलोकनिवासिनः । उवाच भगवाञ्छक्रः सान्त्वयित्वा सुरेश्वरः । ८१८५
भवन्तो भ्रातरोऽस्माकं काश्यपा देवपक्षिणः । विमानवाहा देवानां सुकृतीनां तथैव च ।
देवानामस्ति कर्त्तव्यं कार्य्यं शत्रुवधान्वितं । तत्कर्त्तव्यं न मन्त्रश्च भेत्तव्यो वः कथञ्चन ।
न कुर्व्वतां देवताज्ञामुग्रो दण्डः पतेदपि । सर्व्वत्राप्रतिषिद्धं वो गमनं हंससत्तमाः ।
गत्वा प्रवेशमन्येषां वज्रनाभपुरोत्तमं । दनोऽन्तःपुरवापीषु चरमुख्याचितं हि वः ।
तस्यास्ति कन्यारत्नं हि त्रैलोक्यातिशयं शुभं । नाम्ना प्रभावती नाम चन्द्राभेव प्रभावती । ८१९०
वरदानेन सा लब्धा माता किल वरानना । हैमवत्या महादेव्याः सकाशादिति नः श्रुतं ।
स्वयम्वरा च सा कन्या बन्धुभिः स्थापिता सती । आत्मेच्छया पतिं हंसा वरयिष्यति शोभना ।
तद्भवद्भिर्गुणा वाच्या प्रद्युम्नस्य महात्मनः । सद्भूताः कुलरूपस्य शीलस्य वयसस्तथा ।
यदा सा रक्तभावा तु वज्रनाभसुता सती । तस्याः सकाशात् सन्देशो नयितव्यः समाधिना ।
प्रद्युम्नस्य पुनस्तस्मादानयध्वं तथैव च । स्वबुद्ध्या प्राप्तकालञ्च यं विधेयं हितं मम । ८१९५
नेत्रवक्त्रप्रसादश्च कर्त्तव्यस्तत्र सर्व्वथा । तथा तथा गुणा वाच्याः प्रद्युम्नस्य महात्मनः ।
यथा यथा प्रभावत्या मनस्तत्र भवेत् स्थिरं । वृत्तान्तश्चानुदिवसं प्रदेयो मम सर्व्वथा ।
द्वारवत्यान्तु कृष्णस्य भ्रातुर्मम यवीयसः । तावद्यत्नश्च कर्त्तव्यः प्रद्युम्नो यावदात्मवित् ।
पर्य्यावर्त्तेदगारोहां वज्रनाभसुतां विभुः । अवध्यास्ते तु देवानां ब्रह्मणो वरदर्पिताः ।
दैवपुत्रैर्हि हन्तव्याः प्रद्युम्नप्रमुखैर्युधि । नटो दत्तवरस्तस्य वेश्माख्याश्च यादवाः । ८२००
प्रद्युम्नाद्या गमिष्यन्ति वज्रनाभविनाशनाः । एतच्च सर्व्वं कर्त्तव्यमन्यच्च स्वयमेव हि ।
प्राप्तकालं विधातव्यमस्माकं प्रियकाम्यया । प्रवेशस्तत्र देवानां नास्ति हंसाः कथञ्चन ।
वज्रनाभेप्सिते तत्र प्रवेशः खलु सर्व्वथा ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि प्रद्युम्नोत्तरे पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

॥ वैशम्पायन उवाच ॥ ते वासववचः श्रुत्वा हंसा वज्रपुरं ययुः । पूर्व्वोचितं हि गमनं तेषां तत्र नराधिप ।
ते दीर्घिकासु रम्यासु निपेतुर्वीर पक्षिणः । पद्मोत्पलैराहृतासु काञ्चनैः स्पर्शनक्षमैः । ८२०५
ते वै नन्दन्तो मधुरं संस्कृतापूर्व्वभाषिणः । पूर्व्वमप्यागतास्ते तु विस्मयं जनयन्ति हि ।
अन्तःपुरोपभोग्यासु चैत्रवापीषु ते नृप । दृष्टास्ते वज्रनाभस्य त्रिविष्टपनिवासिनः ।
आलपन्तः सुमधुरं धार्त्तराष्ट्रा जनेश्वर । स तानुवाच दैतेयो धार्त्तराष्ट्रानिदं वचः ।
त्रिविष्टपे नित्यरता भवन्तश्चारुभाषिणः । यदैवेहोत्सवो ऽस्माकं भवद्भिरवगम्यते ।
आगन्तव्यं आत्मपादाः स्वमिदं भवतां गृहं । विश्रब्धैश्च प्रवेष्टव्यं त्रिविष्टपनिवासिभिः । ८२१०

ते तथोक्ताः शकुनयो वज्रनाभेन भारत । तथेत्युक्त्वा हि विविशुर्दानवेन्द्रनिवेशनं ।
चक्रुः परिचयं ते च देवकार्य्यव्यपेक्षया । मानुषालापिनस्ते तु कथाश्चक्रुः पृथग्विधाः ।
वंशे बद्धाः काश्यपानां सुकृतीनां सुभागिनां । स्त्रियो रेमुर्विशेषेण शृण्वन्त्यः सङ्गताः कथाः ।
ततो विचरतीं हंसा ददृशुश्चारुहासिनीं । प्रभावतीं वरारोहां वज्रनाभसुतां तदा ।
हंसाः परिचितां चक्रुस्तां ततश्चारुहासिनीं । सखीं शुचिमुखी चक्रे हंसी राजसुतां तदा । ८६१५
सा तां कदाचित् पप्रच्छ वज्रनाभसुतां सखीं । विस्रम्भितां पृथक्सूक्तैराख्यानकशतैर्वरां ।
त्रैलोक्यसुन्दरीं वेद्मि त्वामहं हि प्रभावति । रूपशीलगुणैर्देवि किञ्चित्त्वां वक्तुमुत्सहे ।
व्यतिक्रामति ते भीरु यौवनं चारुहासिनि । यदतीतं पुनर्नैति गतं स्रोत इवाम्भसः ।
कामोपभोगतुल्या हि रतिर्देवि न विद्यते । स्त्रीणां जगति कल्याणि सत्यमेतद्ब्रवीमि ते ।
स्वयम्वरे तु न्यस्ता त्वं पित्रा सर्व्वाङ्गशोभने । न च काञ्चिद्वृणोषि त्वं देवासुरकुलोद्भवान् । ८६२०
व्रीडिता यान्ति सुश्रोणि प्रत्याख्यातास्त्वया शुभे । रूपशौर्य्यगुणैर्युक्ताः सदृशास्त्वत्कुलस्य हि ।
आगतांस्त्यजसे देवि सदृशान् कुलरूपयोः । इच्छति किमर्थं त्वां प्रद्युम्नो रुक्मिणीसुतः ।
त्रैलोक्ये यस्य रूपेण सदृशोऽस्ति कुलेन वा । गुणैर्वा चारुसर्व्वाङ्गि शौर्य्येणाप्यस्ति वा शुभे ।
देवेषु देवः सुश्रोणि दानवेषु च दानवः । मानुषेष्वपि धर्म्मात्मा मानुषः स महाबलः ।
यं सदा देवि दृष्ट्वा हि स्रवन्ति जघनानि हि । आपीनानीव धेनूनां स्रोतांसि सरितामिव । ८६२५
न पूर्णचन्द्रेण मुखं नयने वा कुशेशयैः । उत्सहामोपमातुं हि मृगेन्द्रेणाथ वा गतिं ।
जगतः सारमुद्धृत्य पुत्रः स विहितः शुभे । लक्ष्मणाङ्गं वरं चाङ्गं विष्णुना प्रभविष्णुना ।
हृतेन शम्बरो बाल्ये येन पापो निवर्हितः । मायाश्च सर्व्वाः संप्राप्ता न च शीलं विनाशितं ।
यान् यान् गुणान् पृथुश्रोणि मनसा कल्पयिष्यसि । एकस्थास्त्रिषु लोकेषु प्रद्युम्ने सर्व्व एव ते ।
रुष्या वह्निप्रतीकाशः क्षमया पृथिवीसमः । तेजसा सूर्य्यसदृशो गाम्भीर्य्येण ह्रदोपमः । ८६३०
प्रभावती शुचिमुखीमितिहोवाच भाविनी ।
॥ प्रभावत्युवाच ॥ विष्णुर्भुवनलोकस्थः श्रुतः सुबहुशो मया । पितुः कथयतः सौम्य नारदस्य च धीमतः ।
शत्रुः किल स दैत्यानां वर्ज्जनीयः किलानघे । कुलानि किल दैत्यानां तेन दग्धानि भामिनि ।
प्रदीप्तेन रथाङ्गेन शार्ङ्गेण गदया तथा । शाखानगरदेशेषु वसन्ति किल येऽसुराः ।
इत्येते दानवेन्द्रेण संदिश्यन्ते हितं प्रति । मनोरथो हि सर्व्वासां स्त्रीणामेवं शुचिस्मिते । ८६३५
भवेद्धि मे पतिकुलं श्रेष्ठं पितृकुलादिति । चरिणामाभ्युपायः स्यात्तस्येहागमनं प्रति ।
सहानुप्राप्तो मे स्यात् कुलं स्यात् पावितञ्च मे । समर्थनां मे पृष्ट्वा त्वं प्रयच्छ शुचिलापिनि ।
प्रद्युम्नः श्लाघया भर्त्ता मम वृष्णिकुलोद्भवः । अत्यन्तवैरी दैत्यानामुद्वेजनकरो हरिः ।
असुराणां स्त्रियो दृष्टाः कथयन्त्यो मया श्रुताः । प्रद्युम्नस्य यथा जन्म पुरस्तादपि मे श्रुतं ।
यथा च तेन निहतो बलवान् कालशम्बरः । यदि मे वर्त्तते नित्यं प्रद्युम्नः खलु सत्तमे । ८६४०

नटस्याथ ददुर्दैत्याः सत्कारं परया मुदा । सपर्य्यार्थं ददुश्चापि रत्नानि सुबहून्यथ । ८६७०
ततः स नगरे तत्र वरदत्तो नटस्तथा । स्वपुरे पुरवासीनां परं हर्षं समादधत् ।
रामायणं महाकाव्यमुद्दिश्य नाटकीकृतं । जन्म विष्णोरमेयस्य राक्षसेन्द्रवधेप्सया ।
लोमपादो दशरथ ऋष्यशृङ्गं महामुनिं । शान्तामानाययामास गणिकाभिः सहानघ ।
रामलक्ष्मणशत्रुघ्ना भरतश्चैव भारत । ऋष्यशृङ्गश्च शान्ता च तथारूपैर्नटैः कृतैः ।
तत्कालजीविनो दृष्ट्वा दानवा विस्मयं गताः । आचचक्षुश्च तेषां वै रूपतुल्यमच्युत । ८६७५
संस्काराभिनयौ तेषां प्रस्तावानाञ्च धारणं । दृष्ट्वा सर्व्वे प्रवेशञ्च दानवा विस्मयं गताः ।
ते रक्ता विस्मयाच्चेदुरसुराः परया मुदा । उत्थायोत्थाय चाक्रोश विक्षेपेषु पुनः पुनः ।
ददुर्व्वस्त्राणि तुष्टाश्च वैदेयं वसनानि च । हारानमोघरत्नांश्चैव हेमवैदूर्य्यभूषितान् ।
पृथगर्थेषु दत्तेषु श्लोकेऽस्मिं तुष्टुवुर्नटाः । असुरांश्च मुनींश्चैव गोत्रैरभिजनैरपि ।
प्रेषितं वज्रनाभस्य शासनान्नगरवासिभिः । नटस्य द्विजरूपस्य नरेन्द्रागमनं तदा । ८६८०
पुरा सुतार्थी दैत्येशः प्रेषयामास भारत । आनीयतां वज्रपुरं नटोऽसाविति हर्षितः ।
दानवेन्द्रवचः श्रुत्वा शासनान्नगरवासिभिः । नीता वज्रपुरं रम्यं नटवेषेण यादवाः ।
आवासश्च ततो दत्तः सुकृतो विश्वकर्म्मणा । रत्नाढ्यं यच्च तत् सर्व्वं दत्तं शतगुणोत्तरं ।
अथाकालोत्सवं चक्रे वज्रनाभो महासुरः । कारयामास रम्यञ्च सभूवाटं प्रहृष्टवत् ।
ततस्तान् परिविश्रान्तान् प्रेक्षार्थाय प्रचोदयत् । दत्त्वा रत्नानि भूरीणि वज्रनाभो महासुरः । ८६८५
उपविष्टश्च तान्द्रष्टुं सह ज्ञातिभिरात्मवान् । कन्ये चान्तःपुरं स्थाप्य चक्षुर्दृश्ये जनाधिप ।
भैमापि बहुनेपथ्या नटवेशधरास्तथा । कार्य्यार्थं भीमकर्म्माणो सुभार्थमुपचक्रमुः ।
ततो घनं मध्यसुषिरं मुरजानकभूषितं । तन्त्रीं स्वरगुणैर्विद्धमातोद्यानन्ववादयन् ।
ततस्तु देवगान्धारं छालिक्यं श्रवणामृतं । भैमस्त्रियः प्रजगिरे मनःश्रोत्रसुखावहं ।
गान्धारे ग्रामरागे गङ्गावतरणं तदा । विद्वमासारितं रम्यं जगिरे स्वरसम्पदा । ८६९०
लयतालसमं श्रुत्वा गङ्गावतरणं शुभं । असुरान् गमयामासुरुत्थायोत्थाय भारत ।
नान्दीञ्च वादयामास प्रद्युम्नो गद एव च । साम्बश्च वीर्य्यसम्पन्नः कार्य्यार्थं नटतां गतः ।
नान्द्यन्ते च तदा श्लोकं गङ्गावतरणाश्रितं । रोचिष्णुश्चकारोवाच सम्यक् सभिनयान्वितं ।
रम्भाभिसारं कौवेरं नाटकं ननृतुस्ततः । शूरो वारणरूपेण रम्भावेशा मनोवती ।
नलकूवरस्तु प्रद्युम्नः साम्बश्चास्य विदूषकः । कैलासो रूपितश्चापि मायया यदुनन्दनैः । ८६९५
शापश्च दत्तः क्रुद्धेन वारणस्य दुरात्मनः । नलकूवरेणाथ यथा रम्भा चाऽऽश्वस्य सान्त्विता ।
एतत् प्रकरणं वीरा ननृतुर्यदुनन्दनाः । नारदस्य मुनेः कीर्त्तिं वर्द्धयन्तो महात्मनः ।
पादोद्धारेण नृत्येन तथैवाभिनयेन च । तुष्टुवुर्दानवा वीरा भैमानाममितौजसां ।
ते ददुर्व्वस्त्रमुख्याणि रत्नान्याभरणानि च । हारांस्तरलविद्धांश्च वैदूर्य्यमणिभूषितान् ।

॥ वैशम्पायन उवाच ॥ आविश्येयं मया बाला कर्णविज्ञानमन्तु तु । कार्ष्णिर्हंसेन मनसा हंसीमिदमुवाच ह ।
दैत्येन्द्रतनयां प्राप्तमवगच्छत मामिह । षट्पदैः सह षट्पादो भूत्वा माल्ये निलीय तु । ८७१०
विश्रब्धाऽस्मि प्रभावत्या यथेष्टं मयि वर्त्ततां । इत्युक्ता हंसबालाय शुकयो कुसुमाश्रयः ।
तद्गृहमभ्यंतरं प्रभया द्योतितं तस्य धीमतः । अभिभूता प्रभा चैव रात्रौ चन्द्रोद्गता शुभा ।
प्रभावत्यास्तु तं दृष्ट्वा ववृधे कामसागरः । चन्द्रस्येवोदये प्राप्ते पर्व्वणि सरितांपतिः ।
सलज्जाधोमुखी किञ्चित् किञ्चित्तिर्य्यगवेक्षिणी । प्रभावती तदा तस्थौ निश्चलेवासवेक्षणा ।
करेणाधःप्रदेशे तां चारुभूषणभूषिते । स्पृष्ट्वोवाच वरारोहां रोमाञ्चिततनूरुहां । ८७१५
मनोरथशतैर्लब्धं किं पूर्णेन्दुसमप्रभं । अधोमुखं मुखं कृत्वा न मां किञ्चित् प्रभाषसे ।
प्रभोपमर्दं माकार्षीर्वदनस्य वरानने । साध्वसं त्यज्यतां भीरु दासः साध्वनुगृह्यतां ।
न कालमिव पश्यामि भीरु भीरुत्वमुत्सृज । याचाम्येषोऽञ्जलिं कृत्वा प्राप्तकालं निबोध मे ।
गान्धर्व्वेण विवाहेन कुरुष्वानुग्रहं मम । देशकालानुरूपेण रूपेणानुपमा सती ।
उपस्पृश्य ततो भैमो मणिस्थं जातवेदसं । जुहाव समये वीरः पुष्पैर्मन्त्रानुदीरयन् । ८७२०
अथाहाय करं तस्या वराभरणभूषितं । चक्रे प्रदक्षिणञ्चैव तं मणिस्थं हुताशनं ।
प्रजज्वाल स तेजस्वी मानयन्नच्युतात्मजं । भगवान् जगतः साक्षी शुभस्याथाशुभस्य च ।
उद्दिश्य दक्षिणां वीरो विप्राणां यदुनन्दनः । उवाच हंसीं द्वारस्था तिष्ठावो रह पश्चिमे ।
तस्यां प्रणम्य यातायां कामयानां चारुलोचनां । ग्रहाय दक्षिणे हस्ते निनाय शयनोत्तमं ।
ऊरावथोपवेश्यैनां सान्त्वयित्वा पुनः पुनः । चुचुम्ब कनकोत्तंसे वासयन्मुखमारुतैः । ८७२५
ततोऽस्या आपपौ वक्त्रं पद्मं मधुकरो यथा । आलिलिङ्ग च सुश्रोणीं क्रमेण रतिकोविदः ।
अरमयद्रश्मयेनां न चावेजितवांस्तदा । आप कन्यां रत्यर्थे रतिकार्य्यविशारदः ।
उवास स तया सार्द्धं रमन् कृष्णसुतः प्रभुः । अरुणोदयकाले च ययौ यत्र नटालयः ।
अकामया प्रभावत्या कथञ्चित् स विसर्ज्जितः । तामेव मनसा कान्तां कान्तरूपां समुद्वहन् ।
त ऊषुर्नटवेशेन कार्य्यार्थं भैमवंशजाः । प्रतीक्षन्तस्तदा वाक्यमिन्द्रकेशवयोस्तदा । ८७३०
उद्योगं वज्रनाभस्य त्रैलोक्यविजयं प्रति । प्रतीक्षन्तो महात्मानो गुह्यसंरक्षणे रताः ।
कश्यपस्य मुनेः सत्रं यावत्तावज्जनाधिप । देवासुराणां सर्व्वेषामविरोधो महात्मनां ।
त्रैलोक्यविजयार्थाय जपतां धर्म्मचारिणां । एवं कालप्रतीक्षाणां वसतां तत्र धीमतां ।
संप्राप्तः प्रावृषो रम्यः सर्व्वभूतमनोहरः । प्रहर्षितास्तु नृत्तान्तं प्रयच्छन्ति मनोजवाः ।
शक्रकेशवयोर्हंसाः कुमाराणां महात्मनां । रेमे सह प्रभावत्या प्रद्युम्नश्चानुरूपया । ८७३५
गायं गायं महात्मा धार्त्तराष्ट्राभिरक्षितः । तैरेव वज्रपुरे हंसैर्व्वसद्भिर्वासवाज्ञया ।
व्याप्तं नृप नटांस्तांश्च न विदुः काममोहिताः । दिवाऽपि रौक्मिणेयस्तु प्रभावत्या नृपालये ।
तिष्ठत्यन्तर्हितो वीरो हंससंघाभिरक्षितः । मायया ऽस्य प्रतिच्छाया दृश्यते हि नटालये ।

देवार्हेण तु वेशेन विवेश च प्रभावतीं । वर्णानि विमलं श्रीमं श्रीजं हारांश्च विचारितां ।
कृहयन्त्यसुरा दृष्ट्वा विस्मिताश्च महात्मनां । रूपं विचार्य मनसा सुभ्रूः भावामभावितां । ८७६०
तासां यादवनारीणां स्पृहयन्त्यसुरस्त्रियः । वज्रनाभस्य तु भ्राता सुनाभो नाम विश्रुतः ।
दुहितृद्वयस्तु नृपते तस्य रूपगुणान्वितं । एका चन्द्रवती नाम्ना गुणवत्यथ चापरा ।
प्रभावत्यालयं ते तु व्रजतः स्म तु नित्यदा । दृष्टजाते तु ते तत्र रतिमत्तां प्रभावतीं ।
परिपप्रच्छतुश्चैव विस्मयोपगतां सतीं । चोवाच मम विद्याऽस्ति याऽधीता काङ्क्षितं पतिं ।
रत्यर्थमानयत्याशु सौभाग्यञ्च प्रयच्छति । देवं वा दानवं वापि विवशं सद्य एव हि । ८७६५
साऽहं रमामि कान्तेन देवपुत्रेण धीमता । दृश्यतां मत्प्रभावेन प्रद्युम्नः सुप्रियो मम ।
ते दृष्ट्वा विस्मयं याते रूपयौवनसम्पदं । पुनरेवाब्रवीत्ते तु भगिन्यौ चारुहासिनी ।
प्रभावती वरारोहा कालप्राप्तमिदं वचः । देवा धर्मरता नित्यं दम्भशीला महासुराः ।
देवास्तपसि रक्ता हि युद्धे रक्ता महासुराः । देवाः सत्ये रता नित्यमनृते तु महासुराः ।
धर्मस्तपश्च सत्यञ्च यत्र तत्र जयो ध्रुवं । देवपुत्रौ वरयतं पती विद्यां ददाम्यहं । ८७७०
उषितौ मत्प्रभावेन सद्य एवोपलप्स्यथः । तां तथेत्यूचतुर्हृष्टे भगिन्यौ चारुलोचनां ।
परिपप्रच्छ भैमश्च कार्य्यमस्मत् प्रति मानिनी । स पितृव्यं गदं वीरं शाम्बञ्चाप्यवदत्तदा ।
रूपान्वितौ सुशीलौ च शूरौ च रणकर्म्मणि ।
॥ प्रभावत्युवाच ॥ परितुष्टेन दत्ता मे विद्या दुर्व्वाससा पुरा । परितुष्टेन सौभाग्यं सदा कन्यात्वमेव च ।
देवदानवयक्षाणां यं ध्यास्यसि स ते पतिः । भवितेति मया चैव वीरोऽयमभिकाङ्क्षितः । ८७७५
गृहीतं तदिमां विद्यां सद्यो वां प्रियसङ्गमः । ततो जगृहतुर्हृष्टे तां विद्यां भागिनीमुखात् ।
दध्यतुर्गदशाम्बौ च विद्यामभ्यस्य ते शुभे । तौ प्रद्युम्नेन सहितौ प्रविष्टौ भैमनन्दनौ ।
प्रच्छन्नं मायया वीरौ कार्ष्णिना मायिना नृप । गान्धर्व्वेण विवाहेन तावप्यभिवादितौ ।
पाणिं जगृहतुर्वीरौ मन्त्रपूर्व्वं सतां प्रियौ । चन्द्रवत्या गदः शाम्बो गुणवत्या तु केशविः ।
रेमिरेऽसुरकन्याभिर्व्वीरास्ते यदुपुङ्गवाः । मार्गमाणास्त्वनुज्ञां ते शक्रकेशवयोस्तदा । ८७८०

इतिश्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभीये प्रद्युम्नान्तरे त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

॥ वैशम्पायन उवाच ॥ नभो नभस्येऽथ निरीक्ष्य मासि कामस्तदा तोयदवृन्दकीर्णं । प्रभावतीं यादवविशालनेत्रामुवाच पूर्णेन्दु
निभाननः ।
तवाननाभो वरगात्रि चन्द्रो न दृश्यते सुन्दरि चारुबिम्बः । मत्तैर्मयूरप्रतिमैर्निरुद्धो बलाहकैर्गाढनिरन्तरोरु ।
संदृश्यते सुभ्रु तडिद्घनस्था त्वं हेमचार्व्वाभरणान्वितेव । मुञ्चन्ति धाराश्च घना महान्तस्तव हारयष्टेः सदृशा वराङ्गि ।
घनप्रदेशेषु बलाकपंक्त्यस्त्वदन्तपङ्क्तिप्रतिमा विभान्ति । निमग्नपद्मानि सरःसु सुभ्रु न भान्ति तोयानि रयाकुलानि ।
भग्ना घना वायुवशोपयाता बलाकमालामलचारुदन्ताः । अन्योन्यमभ्याहनितुं प्रहृष्टा वनेषु नागा इव शुक्ल
दन्ताः । ८७८५

धनुस्त्रिवर्णं वरगात्रि पश्य शक्रं तथापाण्डुरितान्तरालं । त्रिभुवनानां समयं जनांश्च प्रवर्त्तयं कामिजनस्य काले ।
घनागमः प्रतिनर्दमानान् गिरीश्च सुश्रोणि शिखीन् प्रहृष्टान् । बलाकमालाकुलितान्तरालान् प्रियाभिरामानुपनृत्यमानान् ।

हर्म्येषु चान्ये मणिपाण्डरेषु रावन्ति सुश्रोणि मयूरसंघाः । मुहूर्त्तशोभामतिचारुरूपां कृत्वा पतन्तो वलभीपुटेषु ।
प्रक्लिन्नपत्रावृतमस्तकेषु मुहूर्त्तचूडामणितां विधाय । प्रयान्ति भूमिं नवशाद्वलाभामालम्बमाना धृतपादपेशाः ।
प्रवाति धारान्तरनिःसृतश्च सुश्रोऽनिलश्चन्दनपङ्कशीतः । कदम्बसर्ज्जार्जुनपुष्पभूतं समावहन् गन्धमनल्पगन्धं ।　८७९०
रतिश्रमस्वेदविनाशहेतुर्नवोदभारामवने च हेतुः । न मारुतः स्याद्यदि चारुगात्रि न मेघकालो मम वल्लभः स्यात् ।
एवंविधेषु प्रियसङ्गमेषु रतावसाने यदुपैति वायुः । रतिश्रमस्वेदहरः सुगन्धिस्ततः परं किं सुखमस्ति लोके ।
जलाकुलानीव महानदीनां युगानि हंसाः पुलिनानि हृष्टाः । गताः समं मानसवासलुब्धाः सदारसाः क्रौञ्चगणानुविद्धाः ।
न भान्ति नद्योऽद्य सरांसि चैव हतत्विषस्तावदपाङ्गनेत्रे । गतेषु हंसेष्वथ सारसेषु रथाङ्गनामाह्वयनेषु चैव ।
भोगीन्द्रदेहेन शुभं शयानं ध्रुवं जगन्नाथमुपेन्द्रमीशं । निद्राऽभ्युपेता वरकालतन्वा श्रियं प्रणम्योत्तमचारुरूपा ।　८७९५
निद्रायमाणे भगवत्युपेन्द्रे मेघाम्बराकान्तनिशाकरोऽयं । पद्मामलाभः कमलायताक्षि कृष्णस्य वक्त्रानुकृतिं करोति ।
कदम्बनीपार्ज्जुनकेतकानां स्रजो ध्रुवं कृष्णमुपानयन्ति । पुष्पाणि चान्यान्यृतवः समस्ताः कृष्णात् प्रसादानभिकाङ्क्षमाणाः ।
नागाश्च नन्दी विषदिग्धदंष्ट्राः सृजन्ति पुष्पाण्यथ पादपान् यान् । पेपीयमाना भ्रमरैर्वनानां कौतूहलं ते जनयन्त्यतीव ।
तोयातिभाराम्बुदवृन्दमङ्गं नभः पतिष्यन्तमिवाभिवीक्ष्य । निपातगम्भीरमभिप्रविष्टं मनोहरं चारुमुखस्तनोरु ।
बलाकमालाकुलमाल्यदामा निरीक्ष्य रम्यं घनवृन्दमेतत् । सस्यानि भूमावभिवर्धमानं जगद्धितार्थं विमलाङ्गयष्टे ।　८८००
जलावलम्बाम्बुदवृन्दकर्षी घनैर्घनान् बोधयतीव वायुः । मदप्रसक्तो नृपतिर्यथाशु गजान् गजैः स्वैरिव वीर्यदृप्तान् ।
गम्भीरमम्भो विसृजन्ति मेघाः पूतं पवित्रं पवनैः सुगन्धि । हर्षावहं चातकबर्हिणानां वराङ्गनानां जलदप्रियाणां ।
प्लवङ्गमः षोडशपत्त्रशायी विरौति गोष्ठे सह कामिनीभिः । यथा द्विजातिः प्रियसत्यधर्मा यथा स्वशिष्यैः परिवार्यमाणः ।

गता महांभोदकालजोऽयं प्रहृष्टमेघस्तनभीषिता यत् । परिष्वजन्त्यः परिवर्द्धयन्ति विनाऽपि सख्यासमयं प्रियाणां ।
दोषोऽयमेकः सलिलागमस्य मां प्रत्युदारान् वयवर्णलोले । न दृश्यते यत्तव वक्त्रतुल्यो घनावृतस्तत्तनु शशाङ्कः ।　८८०५
प्रदृश्यते भीरु यदा शशाङ्को घनान्तरस्थो जगतः प्रदीपः । तदाऽनुपश्यन्ति जनाः प्रहृष्टा बन्धुं प्रवासादिव सन्निवृत्तं ।
विलापसाक्षी प्रियशोषितानां संदृश्यते भीरु यदा शशाङ्कः । मेघोत्सवः प्रोषितकामुकानां दृष्ट्वैव कान्तं भवतीत्यवैमि ।
मेघोत्सवः कान्तसमागतानां दावाग्नितुल्यः प्रियशोषितानां । तेनैव देहेन वराङ्गनानां चन्द्रोऽपि तावत् प्रियविप्रियस्य ।
विनाऽपि चन्द्रेण पुरे पितुस्ते यतः प्रभा चन्द्रगभस्तिगौरी । गुणागुणं चन्द्रमसो न वेद्मि यतस्ततोऽहं प्रसुतं ब्रवीमि ।
अवाप यो ब्राह्मणराज्यमीशो दुरापमन्यैः सुकृतैस्तपोभिः । गायन्ति विप्राः पवमानसंज्ञं यं सामगाः पर्व्वणि चाप्युदारं ।　८८१०
पिता बुधस्योत्तमवीर्यकर्मा पुरूरवा यस्य सुतो नृदेवः । प्राणाग्निरोषोऽग्निमजीजनद्यो नष्टं शमीगर्भभवं महात्मा ।
तथैव पश्चाच्चकमे महात्मा पुरोर्व्वशीमप्सरसां वरिष्ठां । पौत्रः पुरा योऽस्य तु सर्पदेहो मुनिप्रवीरैर्वरगात्रि घोरैः ।
नृपः कृतार्थैः पुनरेव यस्य धीमान् कृतोऽग्निर्दिवि पूज्यते च । आयुश्च वंशे नहुषस्य यस्य यो देवराजत्वमवाप वीरः ।

देवातिदेवो भगवान् प्रसूतो वंशे हरिर्यस्य जगत्प्रणेता । भैमप्रवीरः सुरकार्य्यहेतोर्यैः सम्भृतो यस्य सुतः सुताभिः ।
बभूव राजा च वसुश्च यस्य वंशे महात्मा शशिवंशकेतुः । यस्यानवद्यां गतिमवाप वीरः स्वैः कर्म्मभिः शक्रसमप्रभावः । ८८१५
वसुश्च राजा शशिवंशमुख्यो योऽवाप सम्राजमधिराज्यभावं । भोजाः कुले यस्य नराधिपस्य वीराः प्रसूताः सुरराज तुल्याः ।
न कूटकृत्यस्य नृपोऽस्ति वंशे न नास्तिको नैकृतिकोऽथ वाऽपि । अमद्धर्मोऽथवा कदर्य्यः शौर्य्येण वा वाग्मिताविहीनः ।
वंशे वधूस्त्वं कमलायताक्षि श्लाघ्या गुणानामतिपात्रभूता । कुरु प्रणामं त्रिदशाधिपस्य तस्य स्नेहाच्चास्य वशं प्रियस्य ।
नारायणायात्मभवायनाय लोकायनाय त्रिदशायनाय । खगेन्द्रकेतोः पुरुषोत्तमाय कुरु प्रणामं यदुपुङ्गवाय देवि ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभीये प्रद्युम्नोपाख्याने चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
॥ वैशम्पायन उवाच ॥ यज्ञावसाने तु मुनेः कश्यपस्यातितेजसः । अयुध्यन्त सुरासुराः स्थानि व्यानान्यमितविक्रमाः । ८८२०
वज्रनाभोऽपि निर्वृत्ते यज्ञे कश्यपमभ्यगात् । त्रैलोक्यविजयाकाङ्क्षी तमुवाचाथ कश्यपः ।
वज्रनाभ निबोधस्व श्रोतव्यं यदि चेन्मम । वस वज्रपुरे पुत्र स्वजनेन समावृतः ।
तपसाऽभ्यधिकः शक्रः शक्रश्चैव स्वभावतः । मद्गुणश्च कृतज्ञश्च ज्येष्ठः श्रेष्ठतमो गुणैः ।
राजा कृत्स्नस्य जगतः पात्रभूतः सतां गतिः । संप्राप्तो लोकराज्यं स सर्व्वभूतहिते रतः ।
नैव शक्यस्त्वया जेतुं वज्रनाभ विदन्स्वयं । यदि त्वं यदा व्युत्क्रामन् वै नचिरादिनशिष्यसि । ८८२५
वज्रनाभस्तु तद्वाक्यं नाभिनन्दति भारत । कालपाशपरीताङ्गो मर्त्तुकाम इवौषधं ।
अभिवाद्य सुदुर्बुद्धिः कश्यपं लोकभावनं । त्रैलोक्यविजयारम्भे मतिश्चक्रे दुरासदः ।
ज्ञातियोधान् समानीय मित्राणि सुहृदानि च । प्रतस्थे स्वर्गमेवाये विजिगीषन् विशाम्पते ।
एतस्मिन्नन्तरे देवौ कृष्णेन्द्रौ च महाबलौ । मिथ्यासामन्तुर्दमान वज्रनाभवधं प्रति ।
समागतास्तु तच्छ्रुत्वा यदुमुख्या महाबलाः । सम्मन्त्रयित्वा महात्मानस्त्विन्नमासेदिरे तदा । ८८३०
वज्रनाभोऽद्य हन्तव्यः प्रद्युम्नेनेत्यसंशयं । तयोर्द्दुहितरो भर्य्या भक्त्या ताः सर्व्वभावनाः ।
सर्व्वाः सगर्भास्तायैव किन्तु कार्य्यमनन्तरं । प्राप्तः प्रसवकालस्तु तासां नातिचिरादिव ।
संमन्त्र्यत्येतदर्थं संमान्ते महाबलः । आख्येयमसंवत् कृत्स्नं शक्रकेशवयोस्तदा ।
हंसैर्गत्वा तदाख्यातं देवयोस्तद्यथातथं । ताभ्यां हंसास्तु सन्दिष्टा न भेतव्यमिति प्रभो ।
उत्पत्स्यन्ति गुणैः श्लाघ्याः पुत्रा वः कामरूपिणः । सर्व्वास्त्राः सर्व्ववेदाश्च साक्रान् वीरसत्त्वसमन्विताः । ८८३५
तदा यानागतं सर्व्वं सम्माणि विविधानि च । सद्य एव युवानश्च भविष्यन्ति सुपण्डिताः ।
एवमुक्त्वा गता हंसाः पुनर्व्वज्रपुरं विभो । प्रद्युम्नश्चैव भैमानां शक्रकेशवभाषितं ।
प्रभावती तदा पुत्रं सुषुवे सदृशं पितुः । सद्यो यौवनसंप्राप्तं सर्व्वशास्त्रज्ञ भारत ।
नामसाम्बेण सुषुवे देवी चन्द्रवती नृप । चन्द्रप्रभमिति ख्यातं तनयं सदृशं पितुः ।
सद्यश्च यौवनं प्राप्तं सर्व्वशास्त्रस्य भारत । गुणवत्यपि पुत्रञ्च गुणवन्तमनिन्दितं । ८८४०
युवानावथ सद्यस्तौ सर्व्वशास्त्रार्थकोविदौ । इन्द्रोपेन्द्रप्रसादेन संवृत्तौ यदुवर्द्धनौ ।

एवंप्रवृत्ते वर्त्तमाना दृष्टास्ते यदुनन्दनाः । इन्द्रोपेन्द्रौ तथा वीर साम्बश्चैव यथार्थिता ।
निवेदिताश्च संभ्रान्तैर्दैत्यैराकाशरक्षिभिः । वज्रनाभाय वीराय निखिलेन यथाविधि ।
विधार्य सर्व्वे गृह्यन्तां समीते यदुपुङ्गवाः । इत्युवाचासुरपतिर्वज्रनाभो दुरासदः ।
ततः सैन्यं समाज्ञप्तमसुरेन्द्रेण धीमता । आवारयामास दिशः सर्व्वाः कुरुकुलोद्वह । ८८०५
गृह्यन्तामाशु बध्यन्तामिति वाचस्ततस्ततः । उच्चेरुरसुरेन्द्रस्य शासनाद्दितिजाश्रिताः ।
तच्छ्रुत्वा व्यथितास्तेषां मातरः पुत्रवत्सलाः । रुरुदुस्ता रुदन्त्योऽथ प्रद्युम्नः सर्व्वा अब्रवीत् ।
माभैष्ट जीवमानेषु स्थिरेष्वस्मासु सर्व्वथा । किं वो दैत्याः करिष्यन्ति सर्व्वथा भद्रमस्तु वः ।
प्रभावतीमथोवाच प्रद्युम्नो विक्लवां स्थितां । पिता मम महापाणिः पितृव्याश्च स्थितास्तव ।
भ्रातरश्चैव ते देवि ज्ञातयश्च तथाऽपरे । एते पूज्याश्च मान्याश्च तवार्य्ये खलु सर्व्वथा । ८८१०
भगिन्यौ पृच्छ भद्रन्ते कालोऽयं खलु दारुणः । मरणं वर्त्तमानानां युष्मतां विजयो ध्रुव ।
दानवेन्द्रादयो ह्येते नैतच्छक्नोऽप्यहर्थैषिणः । किमत्र कार्य्यमस्माभिः सर्व्वशस्त्रान्तरस्थितैः ।
प्रभावती रुदन्ती तु प्रद्युम्नमिदमब्रवीत् । शिरस्यञ्जलिमाधाय जानुभ्यां पतिता क्षितौ ।
गृहाण खड्गमात्मानं रक्ष शत्रुनिबर्हण । जीवन् पुत्रांश्च दारांश्च द्रष्टाऽसि यदुनन्दन ।
आर्य्या नृवर वैदर्भीमभिवन्द्य च मानद । स्वस्वैतास्त्रोत्रयात्मानं व्यसनादरिमर्द्दन । ८८१५
दुर्व्वाससा वरो दत्तो मुनिना मम धीमता । वैधव्यरहिता वत्से जीवपुत्रा भविष्यसि ।
एष मे हृदयाश्वासो भविता न तदन्यथा । सुव्याप्रितमनो वाक्यं मुनेरिन्द्रानुजात्मज ।
इत्युक्त्वाऽथासिमादाय स्वपस्पृष्टा मनस्विनी । प्रददौ रौक्मिणेयाय जयस्वेति वरं वरा ।
स तं जग्राह धर्म्मात्मा प्रहृष्टेनान्तरात्मना । प्रणम्य शिरसा दत्तं प्रियया भक्तियुक्तया ।
चन्द्रवत्यपि निस्त्रिंशं गदाय प्रददौ मुदा । तदा गुणवती चैव साम्बायापि महात्मने । ८८२०
हंसकेतुमथोवाच प्रद्युम्नः प्रणतं प्रभुः । इहैव साम्बसहितो युध्यस्व सह दानवैः ।
आकाशे दिक्षु सर्व्वासु योत्स्याम्यहमरिन्दम । इत्युक्त्वाऽथ रथं चक्रे मायया मायिनाम्वरः ।
सहस्रशिरसं नागं कृत्वा सारथिमात्मवान् । अनन्तभोगं कौरव्य सर्व्वनागोत्तमोत्तमं ।
स तेन रथमुख्येन हर्षयन् वै प्रभावतीं । चचारासुरसैन्येषु तृणेष्विव हुताशनः ।
शरैराशीविषप्रख्यैरर्द्धचन्द्रानुकारिभिः । भेदनैर्गोधनैश्चैव ततर्द्द दितिसम्भवान् । ८८२५
अस्रगाद्य रणे मत्ताः काष्ठां प्रस्वैरितस्ततः । जग्मुः कमलपत्राक्षं परं निश्चयमास्थिताः ।
चिच्छेद बाहून् केषाञ्चित् केयूरवलयोज्ज्वलान् । सकुण्डलानि चान्येषां शिरांस्यपि स चिच्छिदे ।
उरश्छिन्नैः शिरोभिस्तैः कायैश्च सकलैरपि । असुराणां मही कीर्णा प्रद्युम्नेनातितेजसा ।
देवेश्वरो देवगणैः सहितः समितिञ्जयः । ददर्श मुदितो युद्धं सैमानां दितिजैः सह ।
ये गदश्चैव साम्बश्च दैत्याः समभिद्रुद्रुवुः । ते ययुर्निधनं सर्व्वे यादांसीव महोदधौ । ८८३०
विषमं तत्तदा युद्धं दृष्ट्वा देवपतिर्हरिः । गदाय प्रेषयामास स्वं रथं हरिवाहनः ।

ददृशे मातलिसुतं यन्तारञ्च सुवर्च्चसं । आरुह्यैरावतं नागं प्रेषयामास चेश्वरः ।
जयन्तं रौक्मिणेयस्य सहायमददद्विभुः । ऐरावतमधिष्ठाय प्रवरं संप्रयुक्तवान् ।
देवपुत्रद्विजौ वीरावप्रमेयपराक्रमौ । अनुज्ञाप्य सुराध्यक्षं ब्रह्माणं लोकभावनं ।
तं मातलिसुतञ्चैव गजमैरावतं तदा । देवः प्रेषितवान् शक्रो विधिज्ञो वरकर्म्मसु । ८८७५
जीवनस्य तपो यस्मा यदूनामेव दुर्म्मतिः । प्रतिष्ठन्ति तु भूतानि सर्व्वत्र तु यथेप्सितं ।
प्रद्युम्नस्य जयन्तस्य प्राप्तौ समर्थौ महाबलौ । असुरान् घ्नतां तौ वैरिणां प्रभावात्तु ।
गदं कार्ष्णिरुवाचेदं दुर्म्मर्षी रणदुर्ज्जयः । उपेन्द्रानुज यत्नेन रणोऽयं प्रेषितस्त्वया ।
हरियुङ्मातलिसुतो यन्ता चायं महाबलः । प्रवराधिष्ठितश्चायं आप्लवैरावणो गजः ।
अधोपचारी रुद्रस्य दारुकाख्यो महाबलः । स रक्षति हृषीकेशं सर्व्वत्र तेऽच्युतानुज । ८८८०
तथाद्य वधिष्यामो वज्रनाभं महासुरं । अभ्युत्थानकरं पापं त्रिपिष्टपजयं प्रति ।
करिष्यामो विधानन्तु येन शक्यं सुतान्वितं । विजेष्यामस्ततस्तत्तु कर्त्तव्यमिति मे मतिः ।
कलत्ररक्षणं कार्य्यं सर्व्वोपायैर्नरैर्बुधैः । कलत्रधर्षणं लोके मरणादतिरिच्यते ।
एवं सन्दिश्य भैमः स गदश्चापि महाबलः । प्रद्युम्नकोऽथ ससर्ज्ज मायया दिव्यरूपया ।
तमश्च नाशयामास दैत्यसृष्टं दुरासदं । जघ्ने देवराजस्य तं दृष्ट्वा रिपुमर्द्दनं । ८८८५
ददृशुः सर्व्वभूतानि कार्ष्णिं सर्व्वेषु वस्तुषु । अन्तरात्मनि तत्रस्थं केवलमिव तं विदुः ।
एवं व्यतीता रजनी रौक्मिणेयस्य युध्यतः । असुराणां विभागस्य निहता नातितेजसा ।
यावद्धि योधयामास कार्ष्णिर्दैत्यान् रणाजिरे । सन्ध्योपास्त्या जयन्तेन तावद्विष्णुपदीजले ।
अथोभयञ्जयन्तस्य यावद्दैत्यान्महाबलः । तावदाकाशगङ्गायां भैमः सन्ध्यामुपास्तवान् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभवधे प्रद्युम्नोत्तरे पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

॥ वैशम्पायन उवाच ॥ जगत्सुप्ते ततस्तस्मिन्नुदिते रवौ । प्रादुरासीत् सुरिर्देवस्तार्क्ष्यो वीरगणानुगः । ८८९०
संयवायुमनोभ्यश्च शीघ्रोपततगः खगः । ततो विपतति प्रकाश्य समीपे कुरुनन्दन ।
समेत्य च यथान्यायं कृष्णो वासवसन्निधौ । पाञ्चजन्यं विमुदेष्यो दैत्यानां भयवर्द्धनं ।
तं श्रुत्वाऽभ्यागतश्चाथ प्रद्युम्नः परवीरहा । वज्रनाभं अभीयुक्तः केशवेन त्वरेति च ।
तार्क्ष्यमारुह्य गच्छेति पुनरेव प्रचोदितः । चकार स तथा वीरः प्रणिपत्य सुरोत्तमौ ।
स मनोरंहसा वीरस्तार्क्ष्येणाशु ययौ नृप । अभ्यासं वज्रनाभस्य महादैत्यस्य भारत । ८८९५
ततस्तार्क्ष्यगतो वीरस्ततो रणमूर्द्धनि । वज्रनाभं शिरो भुत्वा सर्व्वास्त्रविदनिन्दितः ।
तेन तार्क्ष्यगतेनैव गदया कृष्णसूनुना । उरस्यभिहतो वीरो वज्रनाभो महात्मना ।
स तेनाभिहतो वीरो दैत्यो मोहवशङ्गतः । चकार च भृशं रक्तं वभाम च गतासुवत् ।
आश्वस्त्यथ तं कार्ष्णिरुवाच रणदुर्ज्जयः । लब्धसंज्ञः स वीरस्तु प्रद्युम्नमिदमब्रवीत् ।
साधु यादव वीर्य्येण श्लाघ्यो मम रिपुर्भवान् । प्रतिप्रहारकालोऽयं स्थिरो भव महाबल । ८९००

एवमुक्त्वा महानादं मुक्त्वा मेघस्तनोपमम् । गदां मुमोच वेगेन सर्वाङ्गां वज्रकण्टकाम् ।
तया ललाटेऽभिहतः प्रद्युम्नो गदया नृप । उद्वमन् रुधिरं भूरि मुमोह यदुपुङ्गवः ।
तं दृष्ट्वा भगवान् कृष्णः पाञ्चजन्यं जलोद्भवम् । दध्मावाश्वासनकरं पुत्रस्य रिपुनाशनः ।
तं पाञ्चजन्यशब्देन प्रत्याश्वस्तं महाबलम् । दृष्ट्वा प्रमुदिता लोका विशेषेणेन्द्रकेशवौ ।
तस्य चक्रं करे याति कृष्णवाक्येन भारत । क्षुरनेमिसहस्रारं दैत्यसङ्घकुलान्तकम् । ८८०५
तत्प्रमोचाच्युतसुतः वज्रनाभाय भारत । नमस्कृत्वा सुरेन्द्राय नमस्कृत्वा महात्मने ।
वज्रनाभस्य तत्कायादुच्चकर्त शिरस्तदा । नारायणकरोन्मुक्तं दैत्यानामनुपश्यताम् ।
गदः सुनाभमवधीत्तमार्तं रणाजिरे । संप्रहृष्टं जिघांसन्तं रथस्थं महाबलम् ।
साम्बः समरमध्यस्थानसुरानरिमर्दनः । निनाय निशितैर्बाणैः प्रेताधिपपरिग्रहम् ।
निकुम्भस्तु हते वीरे वज्रनाभे महासुरे । जगाम षट्पुरं वीरो नारायणभयार्दितः । ८८१०
निवर्त्तिते रिपौ तस्मिन् वज्रनाभे दुरासदे । अवतीर्णौ महात्मानौ हरी वज्रपुरं तदा ।
सम्प्रशमनञ्चैव चक्रतुः सुरसत्तमौ । आश्वासयामासतुश्चैव बालवृद्धं भयार्दितम् ।
इन्द्रोपेन्द्रौ महात्मानौ समस्थित्वा महाबलौ । आयत्याञ्च तदात्वे च दृष्टप्रतिमनानुगा ।
वज्रनाभस्य तद्राज्यं चतुर्द्धा चक्रतुर्नृप । विजयस्य चतुर्भागं जयन्ततनयस्य तु ।
प्रद्युम्नस्य चतुर्भागं रौक्मिणेयसुतस्य च । चन्द्रप्रभस्य ददतुश्चतुर्भागं जनेश्वर । ८८१५
कोट्यस्तत्र ग्रामाणामधिकाश्च विशाम्पते । शाखापुरसहस्रञ्च स्फीतं वज्रपुरोपमम् ।
चतुर्द्धा चक्रतुस्तत्र संहृष्टौ शक्रकेशवौ । कम्बलाजिनवासांसि रत्नानि विविधानि च ।
चतुर्द्धा चक्रतुर्भोगौ वीर वासवकेशवौ । ततोऽभिषिक्तास्ते वीरा राजानो वासवाज्ञया ।
देवदुन्दुभिवाद्येन नृप विष्णुपदीजलैः । स्वयं शक्रेण देवेन केशवेन च धीमता ।
ऋषिवंशे महात्मानः शक्रमाधवनन्दनाः । विजयस्य प्रसिद्धैव गतिर्वियति धीमतः । ८८२०
मातलेन गुणेनापि माधवानां महात्मनाम् । अभिषिच्य जयन्तञ्च वासवो भगवान् ब्रवीत् ।
त्वयैते वीर संरक्ष्या राजानः समितिञ्जय । मम वंशकरो ह्येकः केशवस्य त्रयोऽनघ ।
अवध्याः सर्वभूतानां भविष्यन्ति ममाज्ञया । गमनागमनञ्चैव दिवि सिद्धं भविष्यति ।
त्रिपिष्टपं द्वारकाञ्च रम्यां नैमाभिरक्षिताम् । दिग्गजसुताजातान् हयांश्चोच्चैःश्रवोऽन्वयान् ।
ददस्वैषां प्रयच्छस्व रथांस्त्वष्टृकृतानपि । गजाञ्चैरावणसुतान् शत्रुघ्नरिपुघ्नयोः । ८८२५
प्रयच्छाकाशगौ वीर साम्बस्य च गदस्य च । आकाशेन पुरीं यातुं द्वारकां मेलरक्षिताम् ।
आयातौ च सुतौ द्रष्टुं यथेष्टं भैमनन्दनौ । इति सन्दिश्य भगवान् देवराजः पुरन्दरः ।
जगाम भगवान् स्वर्गं द्वारकामपि केशवः । साम्बस्त्वनुजितस्तत्र गदः प्रद्युम्न एव च ।
साम्बश्च द्वारकां यातावाद्ये राज्ये महाबलाः । अद्यापि तानि राज्यानि मेरोः पार्श्वे नृपोत्तरे ।
स्थास्यन्ति च जगद्यावत् स्थास्यत्यमरसन्निभ । निहते सौभले युद्धे स्वर्गं यातेषु वृष्णिषु । ८८३०

गदप्रद्युम्नशाम्बास्ते गता वज्रपुरं विभो । ततः प्राप्य पुनर्यान्ति स्वर्गं स्वैः कर्मभिः शुभैः ।
प्रसादेन च कृष्णस्य लोककर्त्तुर्जनेश्वर । प्रद्युम्नोत्तरमेतत्ते नृदेव कथितं मया ।
धन्यं यशस्यमायुष्यं शृणुयाच्छृणुतेव च । पुत्रपौत्रा विवर्द्धन्ते आरोग्यधनसम्पदा ।
धर्मो विपुलमाप्नोति द्वैपायनवचो यथा ।
इति श्रीमहाभारते खिलेषु हरिवंशे प्रद्युम्नोत्तरे वज्रनाभवधे षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥
॥ वैशम्पायन उवाच ॥ ददर्शाथ पुरीं कृष्णो द्वारकां गरुडे स्थितः । देवसद्मप्रतीकाशां समन्तात् प्रतिनादितां । ८८३५
मणिपर्व्वतयन्त्राणि तथा क्रीडागृहाणि च । उद्यानवनमुख्यानि बहुभोगवराणि च ।
संप्राप्ते च तदा कृष्णे वसुदेवात्मजे पुरीं । विश्वकर्म्माणमाहूय देवराजोऽब्रवीदिदं ।
प्रियमिच्छसि चेत् कर्त्तुं मह्यं त्रिदशसत्तम । कृष्णप्रियार्थं भूयस्त्वं प्रकुरुष्व मनोहरां ।
उद्यानशतसम्बाधां द्वारकां स्वर्गसन्निभां । कुरुष्व विबुधश्रेष्ठ यथा मम पुरी तथा ।
यत्किञ्चित्त्रिषु लोकेषु रत्नभूतं प्रपश्यसि । तेन संयुज्यतां क्षिप्रं पुरी द्वारवती त्वया । ८८४०
कृष्णो हि सुरकार्य्येषु सर्व्वेषु सततोत्थितः । संग्रामान् घोररूपांश्च विगाहति महाबलः ।
तामिन्द्रवचनाद्गत्वा विश्वकर्म्मा पुरीं ततः । अलञ्चक्रे समन्तात्तां यथेन्द्रस्यामरावती ।
तां ददर्श दशार्हाणामीश्वरः पक्षिवाहनः । विश्वकर्म्मकृतैर्दिव्यैरभिप्रायैरलङ्कृतां ।
तां तदा द्वारकां दृष्ट्वा विभुर्नारायणो हरिः । हृष्टः सर्व्वार्थसम्पन्नः प्रवेष्टुमुपचक्रमे ।
सोऽपश्यद्वृक्षषण्डांश्च रम्यान्दृष्टिमनोहरान् । द्वारकां प्रति दाशार्हश्चित्रितां विश्वकर्म्मणा । ८८४५
पद्मषण्डाकुलाभिश्च हंससेवितवारिभिः । गङ्गासिन्धुप्रकाशाभिः परिखाभिर्वृतां पुरीं ।
प्राकारेणार्कवर्णेन शातकौम्भेन राजता । वपुर्मूर्द्ध्नि निविष्टेन द्यां यथैवाभ्रमालया ।
काननैर्नन्दनप्रख्यैस्तथा चैत्ररथोपमैः । बभौ चारुपरिक्षिप्ता द्वारका द्यौरिवाम्बुदैः ।
बभौ रैवतकः शैलो रम्यसानुगुहाजिरः । पूर्व्वस्यां दिशि लक्ष्मीवान् मणिकाञ्चनतोरणः ।
दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते । इन्द्रकेतुप्रतीकाशः पश्चिमस्यां तथा क्षयः । ८८५०
उत्तरां दिशमत्यर्थं विभूषयति वेणुमान् । मन्दराद्रिप्रतीकाशः पाण्डरः पार्थिवर्षभ ।
चित्रकं पञ्चवर्णञ्च पाञ्चजन्यवनं महत् । सर्व्वर्त्तुकवनञ्चैव भाति रैवतकं प्रति ।
लतावेष्टितपर्य्यन्तं मेरुप्रभवनं महत् । भाति भार्गवनञ्चैव पुष्करञ्च महद्वनं ।
अच्छकैर्वीजकैश्चैव मन्दारैश्चोपशोभितं । शतावर्त्तवनञ्चैव करवीरकरम्भि च ।
भाति चैत्ररथञ्चैव नन्दनञ्च वनं महत् । रमणं भावनञ्चैव वेणुमच्च समन्ततः । ८८५५
वैदूर्य्यपत्रैर्जलजैस्तथा मन्दाकिनी नदी । भाति पुष्करिणी रम्या पूर्व्वस्यां दिशि भारत ।
सानन्दा भूषितास्तत्र केशवस्य प्रियैषिभिः । बहुभिर्देवगन्धर्व्वैश्चोदितैर्विश्वकर्म्मणा ।
महानदी द्वारवतीं पञ्चाशद्भिर्मुखैः । प्रविष्टा पुण्यसलिला भावयन्ती समन्ततः ।
अप्रमेयां महोत्सेधामगाधपरिखायुतां । प्राकारवरसम्पन्नां सुधापाण्डरलेपनां ।

तीक्ष्णयन्त्रशतघ्नीभिर्हेमजालैश्च भूषिता । आयसैश्च महाचक्रैर्ददर्श द्वारकां पुरीं । ८६६०
अष्टौ रथसहस्राणि नगरे किङ्किणीकिनां । समुच्छ्रितपताकानि यथा देवपुरे तथा ।
अष्टयोजनविस्तीर्णामचलां द्वादशायतां । द्विगुणोपनिवेशाञ्च ददर्श द्वारकां पुरीं ।
अष्टमार्गमहारथ्यां महाषोडशचत्वरां । एकमार्गपरिक्षिप्तां साक्षादुशनसा कृतां ।
स्त्रियोऽपि यस्यां युध्येरन् किमु वृष्णिमहारथाः । व्यूहानामुत्तमा मार्गाः सप्त चैव महापथाः ।
तत्र वै विहिताः साक्षाद्विविधा विश्वकर्म्मणा । तस्मिन् पुरवरश्रेष्ठे दाशार्हाणां यशस्विनां । ८६६५
वेश्मानि जहृषे दृष्ट्वा ततो देवकिनन्दनः । काञ्चनैर्मणिसोपानैरुपेतानि नृवर्षभैः ।
भीमघोषमहाघोषैः प्रासादवरचत्वरैः । समुच्छ्रितपताकानि पारिप्लववनानि च ।
काञ्चनाग्राणि भास्वन्ति प्रासादशिखराणि च । शृङ्गाणि रमणीयानि मेरुकूटनिभानि च ।
पाण्डुपाण्डुरशृङ्गैश्च शातकुम्भपरिष्कृतैः । रत्नसानुगुहाशृङ्गैर्विचित्रैरिव पर्व्वतैः ।
पञ्चवर्णैः सुवर्णैश्च पुष्पवृष्टिसमप्रभैः । पर्ज्जन्यतुल्यनिर्घोषैर्नानारूपैरिवाद्रिभिः । ८६७०
दावाग्निज्वलितप्रख्यैर्निर्म्मितैर्विश्वकर्म्मणा । आलिखद्भिरिवाकाशमतिचन्द्रार्कभास्वरैः ।
तैर्दाशार्हमहाभागैर्बभासे तद्वनं द्रुमैः । वासुदेवेन्द्रपर्ज्जन्यैर्गृहमेघैरलङ्कृता ।
ददृशे द्वारका चारु मेघैर्द्यौरिव संवृता । साक्षाद्भगवतो वेश्म विहितं विश्वकर्म्मणा ।
ददृशे वासुदेवस्य चतुर्योजनमायतं । तावदेव च विस्तीर्णमप्रमेयं महाधनं ।
प्रासादवरसम्पन्नैर्युक्तं जगति पर्व्वतैः । यच्चकार महाभागस्त्वष्टा वासवचोदितः । ८६७५
प्रासादश्चैव हेमाभं सर्व्वभूतमनोहरं । मेरोरिव गिरेः शृङ्गमुच्छ्रितं काञ्चनं महत ।
रुक्मिण्याः प्रवरं वासं विहितं विश्वकर्म्मणा । सत्यभामा पुनर्वेश्म यदावसत पाण्डुरं ।
विचित्रमणिसोपानं तद्विदुर्भोगवानिति । विमलादित्यवर्णाभिः पताकाभिरलङ्कृतं ।
व्यक्तभंजनिर्दिष्टा चतुर्दिक्षु महाध्वजः । स च प्रासादमुख्योऽत्र जाम्बवत्या विभूषितः ।
प्रभयाऽभ्यभवत् सर्व्वांस्तानन्यान् भास्करो यथा । उद्यद्भास्करवर्णाभस्तयोरन्तरमाश्रितः । ८६८०
विश्वकर्म्मकृतो दिव्यः कैलासशिखरोपमः । जाम्बूनद इवादीप्तः प्रदीप्तज्वलनोपमः ।
सागरप्रतिमो ऽतिष्ठन्मेरुरित्यभिविश्रुतः । तस्मिन् गान्धारराजस्य दुहिता कुलशालिनी ।
गान्धारी भरतश्रेष्ठ केशवेन निवेशिता । पद्मकूटमिति ख्यातं पद्मवर्णं महाप्रभं ।
सुभीमाया महाकूटं वेश्मातिरुचिरप्रभं । सूर्य्यप्रभस्तु प्रासादः सर्व्वकामगुणैर्युतः ।
लक्ष्मणाया नृपश्रेष्ठ निर्दिष्टः शार्ङ्गधन्वना । वैदूर्य्यमणिवर्णाभः प्रासादो हरितप्रभः । ८६८५
यं विदुः सर्व्वभूतानि परमित्येव भारत । वासः स मित्रविन्दाया देवर्षिगणपूजितः ।
महिष्या वासुदेवस्य भूषणं तेषु वेश्मसु । यस्तु प्रासादमुख्यो वै विहितो विश्वकर्म्मणा ।
अतीव रम्यः सोऽप्यासीदृंहितः पर्व्वतो यथा । सुनन्दाया निवासोऽसौ प्रशस्तः सर्व्वदैवतैः ।
महिष्या वासुदेवस्य केतुमानिति विश्रुतः । तत्र प्रासादमुख्यो वै यं त्वष्टा विदधे स्वयं ।

योजनायतविष्कम्भः सर्व्वरत्नमयः शुभः । स श्रीमान् विरजा नाम वराजनश्च शुभः । ८८९०
उपस्थानगृहं यत्तु केशवस्य महात्मनः । तस्मिन् सुविहिताः सर्व्वे वज्रादयाः पताकिनः ।
सद्मने वासुदेवस्य मार्गसंजननध्वजाः । रत्नवन्ति तान्यासन् यावन्तीह निवेशिताः ।
आहृत्य यदुसिंहेन वैजयन्तो ऽचलो महान् । हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरःप्रति ।
षष्टितालसमुत्सेधमर्द्धयोजनमायतं । सकिन्नरमहानादं तदप्यमिततेजसा ।
पश्यतां सर्व्वभूतानामानीतं लोकविश्रुतं । आदित्यपथगं यत्तु मेरोः शिखरमुत्तमं । ८८९५
पुण्डरीकशतैर्जुष्टं विमानैश्च हिरण्मयैः । जाम्बूनदमयं दिव्यं त्रिषु लोकेषु विश्रुतं ।
तदप्युत्पाट्य कृष्णार्थमानीतं विश्वकर्म्मणा । आक्रममाणमतीवाग्र्यं सर्व्वौषधिसमन्वितं ।
तदिन्द्रवचनात्त्वष्टा कार्य्यहेतोः समानयत् । पारिजातश्च तत्रैव केशवेनाहृतः स्वयं ।
नीयमाने हि तत्रासीद्युद्धमद्भुतकर्म्मणः । कृष्णस्य ये ऽभ्यरक्षन्त देवाः पादपमुत्तमं ।
पुण्डरीकशतैर्जुष्टा विमानैश्च हिरण्मयैः । विहिता वासुदेवार्थं रत्नपुष्पफलद्रुमाः । ८९००
पद्मषण्डजलोपेता रक्तसौगन्धिकोत्पलाः । मणिहेमस्वाकीर्णाः पुष्करिण्यः सरांसि च ।
तासां परमकूलानि शोभयन्ति महाद्रुमाः । सालास्तालाः कदम्बाश्च शतशाखाश्च रोहिताः ।
ये च हैमवता वृक्षा ये च मेरुकृतालयाः । आहृत्य यदुसिंहार्थं विहितं विश्वकर्म्मणा ।
रक्तपीतारुणश्यामाः श्वेतपुष्पाश्च पादपाः । सर्व्वर्त्तुफलसम्पन्नास्तेषु काननसन्धिषु ।
समकूलजलोपेताः शीतशर्करवालुकाः । तस्मिन् पुरवरे नद्यः प्रसन्नसलिला ह्रदाः । ८९०५
पुष्पाकुलजलोपेता नानाद्रुमलताकुलाः । अपरास्तत्र भवन्त्यो हेमशर्करवालुकाः ।
मत्तबर्हिणसंघैश्च कोकिलैश्च मदोत्कटैः । बभूवुः परमोपेतास्तस्यां पुर्य्यान्तु पादपाः ।
तत्रैव गजयूथानि पुरे गोमहिषास्तथा । निवासश्च कृतस्तत्र वराहमृगपक्षिणां ।
पुर्य्यां तस्यान्तु रम्यायां प्रासादो वै हिरण्मयः । व्यक्तं किष्कुशतोत्सेधो विहितो विश्वकर्म्मणा ।
ते च ते च महाशैलाः सरितश्च सरांसि च । परिक्षिप्तानि भोगेन वनान्युपवनानि च । ८९१०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि द्वारवतीनिवेशनिर्म्माणे सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥
॥ वैशम्पायन उवाच ॥ एवमालोकयानः स द्वारकां वृषभेक्षणः । अपश्यत् सदृशं कृष्णः प्रासादशतशोभितं ।
मणिस्तम्भसहस्राणामयुतैर्विधृतं सितैः । तोरणैर्ज्वलनप्रख्यैर्विविधद्रुमराजितैः ।
तत्र तत्र प्रभासद्भिर्विचित्रकाञ्चनवेदिकैः । प्रासादस्य समन्तात् स सर्व्वोपस्थानिको ऽभवत् ।
स्फाटिकस्तम्भविधृतो विस्तीर्णः सर्व्वकाञ्चनः । पद्माकुलजलोपेता रक्तसौगन्धिकोत्पलाः ।
मणिहेमनिभाश्चित्रा रत्नसोपानभूषिताः । मत्तबर्हिणजुष्टाश्च कोकिलैश्च मदोत्कटैः । ८९१५
बभूवुः परमोपेता वाप्यश्च विकचोत्पलाः । विश्वकर्म्मकृताः शैलाः प्राकारास्तस्य वेश्मनः ।
व्यक्तं किष्कुशतोत्सेधः परिखापरिवेष्टितः । सकृत् हृष्टनिवेशस्य निर्म्मितं विश्वकर्म्मणा ।
महेन्द्रवेश्मप्रतिमं समन्तादर्द्धयोजनं । ततस्तं पाण्डरं शौरिर्मूर्द्धि तिष्ठन् गरुत्मतः ।

नन्दगोपस्य गोपाला न शेकुः प्रसमीक्षितुं । व्यूढोरस्कौ महाबाहू बालरूपाविवोद्गतौ ।
श्रुत्वैतौ व्यथितः कंसो मन्त्रिभिः सहितोऽभवत् । नाशकच्च यदा कंसो घातितुं बलकेशवौ ।
निश्चयाच्च ततः कोपाद्वसुदेवं सबान्धवं । घनोपदेशेन तदा घोरबन्धाद्बबन्धनं ।
कालं महान्तमवसन् क्लिश्यमानकदुन्दुभिः । कंसस्तु पितरं बद्ध्वा शूरसेनान् प्रजाश्च ह । ८११०
जरासन्धं समाश्रित्य तथैवाकृतिभीषणौ । कदाचिदथ कालस्य मथुरायां महोत्सवं ।
पिनाकिनं समुद्दिश्य चक्रे कंसो नराधिपः । तत्र मल्लाः समाजग्मुर्नानादेश्या विशाम्पते ।
नर्त्तना गायनाश्चैव कुशला नृत्यकर्मसु । ततः कंसो महातेजा रङ्गवाटं महाधनं ।
कुशलैः कारयामास शिल्पिभिः साधुनिष्ठितैः । तत्र मञ्चसहस्राणि पौरजानपदैर्जनैः ।
समाकीर्णान्यदृश्यन्त ज्योतींषि गगने यथा । भोजराजः श्रिया जुष्टं रङ्गवाटं महर्द्धिमत् । ८११५
आरुरोह ततः कंसो विमानं सुकृती यथा । रङ्गद्वारि गजं मत्तं प्रभूतायुधकल्पितं ।
शूरैरधिष्ठितं कंसः स्थापयामास वीर्य्यवान् । यदा हि स महातेजा रामकृष्णौ समागतौ ।
शुश्राव पुरुषव्याघ्रौ सूर्य्याचन्द्रमसाविव । तदाप्रभृति यत्नोऽभूद्वधं प्रति नराधिप ।
न च शिश्ये सुखं रात्रौ रामकृष्णौ विचिन्तयन् । श्रुत्वा तु रामः कृष्णश्च तं समाजमनुत्तमं ।
उभौ विविशतुर्वीरौ शार्दूलौ गोव्रजं यथा । ततः प्रवेशे संरब्धौ रक्षिभिः पुरुषर्षभौ । ८१२०
हत्वा कुवलयापीडं ससादिमरिन्दमौ । चवल्गतुर्दुराधर्षौ रङ्गं विविशतुस्तदा ।
चाणूरान्ध्रौ विनिष्पिष्य केशवेन बलेन च । औग्रसेनिः सुदुष्टात्मा सानुजो विनिपातितः ।
यत् कृतं यदुसिंहेन देवैरपि सुदुष्करं । कर्म तत् केशवादन्यः कर्त्तुमर्हति कः पुमान् ।
यद्धि नाधिगतं पूर्व्वैः प्रह्लादबलिशम्बरैः । तदिदं प्रापितं विश्वं शौरिणा भवतां कृते ।
एतेन मुरमाक्रम्य दैत्यं पञ्चजनं तथा । निष्क्रम्य शैलसंघातान्निसुन्दः सगणो हतः । ८१२५
नरकश्च हतो भौमः कुण्डले चाहृते शुभे । प्राप्तश्च दिवि देवेषु केशवेन महद्यशः ।
वीतशोकभयाबाधाः कृष्णबाहुबलाश्रयाः । यजध्वं विविधैर्यज्ञैर्यादवा वीतमत्सराः ।
देवानां सुमहत् कार्य्यं कृतं कृष्णेन धीमता । प्रियमावेदयाम्येष भवतां भद्रमस्तु वः ।
यदिष्टं वो यदुश्रेष्ठाः कर्त्ताऽस्मि तदतन्द्रितः । भवतामपि यूयञ्च मम सुखावहं स्थिताः ।
इति संबोधयन् कृष्णमब्रवीत् पाकशासनः । स मां प्रैषीत् सुरश्रेष्ठः प्रीतस्तुष्टो यथा वयं । ८१३०
यत्र द्यौः श्रीः स्थिता तत्र यत्र श्रीस्तत्र सन्नतिः । सन्नतिश्च तथा श्रीश्च नित्यं कृष्णे महात्मनि ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नारदवाक्ये नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

॥ नारद उवाच ॥ सादिता मौरवाः पाशा निसुन्दनरकौ हतौ । कृतः क्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ।
शौरिणा पृथिवीपालास्त्रासिताः शार्ङ्गिणा रणे । धनुषश्च निनादेन पाञ्चजन्यस्वनेन च ।
मेघप्रख्यैरनीकैर्दाक्षिणात्यैः सुरक्षितं । रुक्मिणं युधि निर्जित्य महाबलपराक्रमं ।
रुक्मिणीमाजहाराशु केशवो वृष्णिपुङ्गवः । ततः पर्जन्यघोषेण रथेनादित्यवर्चसा । ८१३५

उवाह महिषीं भीष्मीं शङ्खचक्रगदासिभृत्। आहृत्यामाकृतिः क्षत्रः शिशुपालश्च निर्ज्जितः।
वक्रश्च सह सैन्येन शतधन्वा च निर्ज्जितः। इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुमान्।
हतः सौभपतिः श्रीमान् शाल्वश्च दृढधन्वना। पर्व्वतानां सहस्रन्तु चक्रेण पुरुषोत्तमः।
विकीर्य्य पुण्डरीकाक्षो द्रुमसेनमपोथयत्। महेन्द्रशिखरे चैव निमेषान्तरचारिणौ।
जघान पुरुषव्याघ्रो रावणस्याभितश्चरौ। इरावत्यां महाभोजावग्निसूर्य्यसमौ युधि।
गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना। अक्षप्रपातने चैव निमिर्हंसश्च दानवौ। ९१४०
उभौ तावपि कृष्णेन सानुगौ विनिपातितौ। दग्धा वाराणसी चैव केशवेन महात्मना।
सराष्ट्रः सानुबन्धश्च काशीनामधिपो हतः। विजित्य च समं संख्ये शरैः सन्नतपर्व्वभिः।
चक्रेन्द्रसेनिरानीतः कृष्णेनाद्भुतकर्म्मणा। वसितः सर्व्वयादोभिः सागरेषु महाबलः।
प्राप्य लोहितकूटस्थं कृष्णेन वरुणो जितः। महेन्द्रभवने जातो देवैर्गुप्तो महात्मभिः। ९१४५
अचिन्तयित्वा देवेन्द्रं पारिजातद्रुमो हृतः। पाण्ड्यं पौण्ड्रं कलिङ्गञ्च मात्स्यञ्चैव जनार्द्दनः।
जघान सहितान् सर्व्वान् वङ्गराजं तथैव च। एवं चैकशतं हत्वा रणे राज्ञां महात्मनां।
गान्धारीमावहद्धीमान्महिषीं प्रियदर्शनां। तथा गाण्डीवधन्वानं क्रीडन्तं मधुसूदनः।
जिगाय भरतश्रेष्ठं कुन्त्याः प्रमुखतो विभुः। द्रोणं द्रौणिं कृपं कर्णं भीमञ्चैव सुयोधनं।
चक्रानुयाने सहितान् जिगाय पुरुषोत्तमः। बभ्रोश्च प्रियमन्विच्छन् शङ्खचक्रगदासिभृत्। ९१५०
सौवीरराजस्य सुतां प्रमथ्य बलवान् प्रभुः। पर्य्यन्तां पृथिवीं कृत्स्नां भार्य्यां सरथकुञ्जरां।
वेणुदारिहृतां यश्च जिगाय पुरुषोत्तमः। अवाप्य तपसो वीर्य्यं बलमोजश्च माधवः।
पर्व्वदेशे जहाराथं बलेस्त्रिभुवनं हरिः। वज्रास्त्रनिमदाखड्गैस्तामयद्भिश्च दानवैः।
यस्य नाधिगतो मृत्युः पुरं प्राग्ज्योतिषं प्रति। अभिभूतश्च कृष्णेन नगरः स महाबलः।
बलेः पुत्रो महावीर्य्यो बाणो द्रविणवत्सरः। पीठं तथा महाबाहुं कंसामात्यं जनार्द्दनः। ९१५५
पैठिकञ्चापि लोमानं निजघान महाबलः। जम्भमैरावतञ्चापि विरूपञ्च महायशाः।
जघान पुरुषव्याघ्रो दैत्यं मानुषरूपिणं। तथा नागपतिं तोये कालियञ्च महौजसं।
निर्ज्जित्य पुण्डरीकाक्षः प्रेषयामास सागरं। संजीवयामास मृतं पुत्रं सान्दीपनेस्तथा।
निर्ज्जित्य पुरुषव्याघ्रो यमं वैवस्वतं हरिः। एवमेव महाबाहुः घातका सर्व्वदुरात्मनां।
देवांश्च ब्राह्मणांश्चैव ये दिषन्ति सदा नृप। निहत्य नरकं भौममाहृत्य मणिकुण्डले। ९१६०
देवमातुरदितेश्चैव प्रीत्यर्थं वज्रपाणिनः। एवं सदैव दैत्यानां सुराणाञ्च महायशाः।
भयाभयकरः कृष्णः सर्व्वलोकेश्वरो विभुः। संस्थाप्य धर्म्मं मर्त्त्येषु यज्ञैरिष्ट्वाप्तदक्षिणैः।
कृत्वा देवार्थममितं स्वस्थानं प्रतिपत्स्यते। कृष्णो भोगवतीं रम्यामृषिकान्तां महायशाः।
द्वारकामात्मसात् कृत्वा समुद्रं गमयिष्यति। बहुरत्नसमाकीर्णां चैत्ययूपशताङ्किता।
द्वारका वरुणावासं प्रवेक्ष्यति सकानना। तां सूर्य्यसदनप्रख्यां मतश्च शार्ङ्गधन्वनः। ९१६५

निवेशनो वनस्थानात् कन्या ज्ञानवती तथा। उपासङ्गस्य तु सुतौ वज्रस्तुः क्षिप्र एव च। ९१९५
कौशिक्यां सुतसोमायां यौधिष्ठिरी युधिष्ठिरः। कापाली गरुडश्चैव जज्ञाते चित्रयोधिनौ।
एवमादीनि पुत्राणां सहस्राणि निबोध मे। दशायुतं समाख्याता वासुदेवस्य ते सुताः।
अयुतानि तथा चाष्टौ शूरा रणविशारदाः। जनार्द्दनस्य वंशः कीर्त्तितोऽयं यथा तथा।
प्रद्युम्नस्य सुतो जज्ञे वैदर्भ्यां राजसत्तम। अनिरुद्धो रणे योद्धा जज्ञे च मृगकेतनः।
रेवत्यां बलदेवस्य जज्ञाते निशठोल्मुकौ। भ्रातरौ देवसङ्काशावुभौ पुरुषसत्तमौ। ९२००
सुतनुश्च नराची च शौरेराक्तां परिग्रहः। पौण्ड्रश्च कपिलश्चैव वसुदेवस्य तौ सुतौ।
नराच्यां कपिलो जज्ञे पौण्ड्रश्च सुतनूसुतः। तयोर्नृपोऽभवत् पौण्ड्रः कपिलश्च वनं ययौ।
तुर्य्यां समभवद्वीरो वसुदेवान्महाबलः। जरा नाम निषादानां प्रभुः सर्व्वधनुष्मतां।
काश्यां सुपार्श्वं तनयं लेभे स हि तरस्विनं। सानुवर्ण्योऽनिरुद्धस्य वज्रस्तस्मादजायत।
वज्रात्मजो प्रतिरथः सुबाहुस्तस्य चात्मजः। अनमित्राच्छिनिर्जज्ञे कनिष्ठाद्वृष्णिनन्दनात्। ९२०५
शिनेस्तु सत्यवाग्जज्ञे सत्यकश्च महारथः। सत्यकस्यात्मजः शूरो युयुधानस्त्वजायत।
असङ्गो युयुधानस्य तूणिस्तस्याभवत् सुतः। तूणेर्युगन्धरः पुत्र इति वंशः समाप्यते।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वृष्णिवंशानुकीर्त्तने द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
॥ जनमेजय उवाच ॥ य एष भवता पूर्व्वं शम्बरघ्नेत्युदाहृतः। प्रद्युम्नः स कथं जघ्ने शम्बरं तद्ब्रवीहि मे।
॥ वैशम्पायन उवाच ॥ रुक्मिण्यां वासुदेवस्य लक्ष्म्यां कामो धृतव्रतः। शम्बरान्तकरो जज्ञे प्रद्युम्नः कामदर्शनः।
तं सप्तरात्रे संपूर्णे निशीथे सूतिकागृहात्। जहार कृष्णस्य सुतं शिशुं वै कालशम्बरः। ९२१०
विदितं तच्च कृष्णस्य देवमायानुवर्त्तिनः। ततो न निगृहीतः स दानवो युद्धदुर्मदः।
स मृत्युना परीतायुर्मायया प्रजहार तं। दोर्भ्यामुत्क्षिप्य नगरं स्वं निनाय महासुरः।
अनपत्या तु तस्यासीद्भार्य्या रूपगुणान्विता। नाम्ना मायावती नाम मायेव शुभदर्शना।
ददौ तं वासुदेवस्य पुत्रं पुत्रमिवात्मजं। तस्या महिष्या मायिन्या दानवः कालचोदितः।
मायावती तु तं दृष्ट्वा संप्रहृष्टतनूरुहा। हर्षेण महता युक्ता पुनः पुनरुदैक्षत। ९२१५
अथ तस्या निरीक्षन्त्याः स्मृतिः प्रादुर्बभूव ह। अयं स मम कान्तोऽभूत् खल्वेवं चाप्यचिन्तयत्।
अयं स नाथो भर्त्ता मे यस्यार्थे हि दिवानिशं। चिन्ताशोकह्रदे मग्ना न विन्दामि रतिं क्वचित्।
अयं भगवता पूर्व्वं देवदेवेन शूलिना। खेदितेन कृतोऽनङ्गो दृष्टो जात्यान्तरे मया।
कथमस्य स्तनं दास्ये मातृभावेन जानती। भर्त्तुर्भार्य्या त्वहं भूत्वा वक्ष्ये वा पुत्र इत्युत।
एवं सञ्चिन्त्य मनसा धात्र्यास्तं सा समर्पयत्। रसायनप्रयोगैश्च शीघ्रमेवाभ्यवर्द्धयत्। ९२२०
धात्र्याः सकाशात् स च तां शुश्रुवन् रुक्मिणिनन्दनः। मायावतीमविज्ञानात्मेने स्वामिव मातरं।
सा च तं वर्द्धयामास कार्ष्णिं कमललोचनं। मायाशास्त्रे ददौ सर्व्वा दानवीः काममोहिता।
स यदा यौवनस्थस्तु प्रद्युम्नः कामदर्शनः। चिकीर्षितज्ञो नारीणां सर्व्वास्त्रविधिपारगः।

तं सा मायावती कान्तं काममभ्यागमाच्च कामिनी । इङ्गितैश्चापि दीव्यन्ती प्राबोधयत सस्मिता ।
प्रपद्यन्तीन्तु तां देवीं बभाषे चारुहासिनीं ।

॥ प्रद्युम्न उवाच ॥ मातृभावं व्यतिक्रम्य किमेवं वर्त्तसेऽन्यथा । अहो दुष्टस्वभावाऽसि स्त्रीत्वे चपलमानसा । ९९९३
या पुत्रभावमुत्सृज्य मयि लोभात् प्रवर्त्तसे । ननु तेऽहं सुतः सौम्ये कोऽयं शीलविपर्य्ययः ।
तत्त्वमिच्छाम्यहं देवि कथितं को नवं विधिः । विद्युत्सम्पातचपलः स्वभावः खलु योषितां ।
या नरेषु प्रसज्जन्ते समायेषु सखा इव । यदि तेऽहं सुतः सौम्ये यदि वाऽन्यात्मजः शुभे ।
कथितं तत्त्वमिच्छामि किमिदं ते चिकीर्षितं । एवमुक्ता तु सा भीरुः स्मरेण व्यथितेन्द्रिया ।
प्रियं प्रोवाच वचनं विविक्ते केशवात्मजं । न त्वं मम सुतः कान्त नापि ते शम्बरः पिता ।
रूपवानसि विक्रान्तस्त्वं जातो वृष्णिनन्दनः । पुत्रस्त्वं वासुदेवस्य रुक्मिण्या नन्दिवर्द्धनः ।
दिवसे सप्तमे बालो जातमात्रोऽपवाहितः । सूतिकागारमध्यात्त्वं शिशुरुत्तानशायितः ।
मम भर्त्रा हृतोऽसि त्वं बलवीर्य्यप्रवर्त्तिना । पितुस्ते वासुदेवस्य धर्षयित्वा गृहं महत् ।
पाकशासनकल्पस्य हृतस्त्वं शम्बरेण ह । सा च ते करुणं माता त्वां बालमनुशोचती । ९९९९
अत्यर्थं तप्यते वीर विवत्सा सौरभी यथा । स हि शक्रादपि महान् पिता ते गरुडध्वजः ।
इह त्वां नाभिजानाति बालमेवापवाहितं । कान्त वृष्णिकुमारस्त्वं न हि त्वं शम्बरात्मजः ।
वीर नैवंविधान् पुत्रान् दानवा जनयन्ति हि । अतोऽहं कामयामि त्वां न हि त्वं जनितो मया ।
रूपन्ते सौम्य पश्यन्ती सीदामि हृदि दुर्म्मना । यच्चो व्यवसितं कान्त यच्च मे हृदि वर्त्तते ।
तस्मै मनसि वार्ष्णेय प्रतिसन्धातुमर्हसि । एष ते कथितः सर्व्वः सद्भावस्त्वयि यो मम ।
यथा न मम पुत्रस्त्वं न पुत्रः शम्बरस्य च । श्रुत्वैवमखिलं सर्व्वं मायावत्या प्रभाषितं ।
चक्रायुधात्मजः क्रुद्धः शम्बरं स समाह्वयत् । सर्व्वमायास्वभिज्ञो ऽसौ नाम विश्राव्य चात्मनः ।
अहो दानव दुष्टात्मा केशवस्यात्मजं शिशुं । हरते निर्भयस्यैव भयमद्य करोम्यहं ।
कथं वै क्रोधमागच्छेद्युध्यते च कथं मया । प्रथमं किं करिष्यामि येन कुप्यति मन्दधीः ।
अस्ति चास्य ध्वजं चित्रं सिंहकेतुविभूषितं । तोरणं गृहमासाद्य उच्छ्रितं मेरुसन्निभम् ।
एतदुच्छ्रित्य पातिष्ये भल्लेन निशितेन च । ध्वजच्छेदं विदित्वाऽद्य शम्बरो निष्क्रमिष्यति ।
ततो युद्धेन हत्वाऽहं गन्ताऽस्मि द्वारकां प्रति । एवमुक्त्वा मध्यमायच्छे शरश्चापमोक्षणा ।
चिच्छेद ध्वजरत्नन्तु शम्बरस्य महाभुजः । तच्छ्रुत्वा तु ध्वजच्छेदं प्रद्युम्नेन महात्मना ।
क्रुद्धस्त्वाज्ञापयामास पुत्रान् वै कालशम्बरः । निर्यान्तु महावीरा रौक्मिणेयं त्वरान्विताः ।
नैतं वै द्रष्टुमिच्छामि मम विप्रियकारकं । श्रुत्वा तु शम्बरवाक्यं सुतास्ते शम्बरस्य च ।
सन्नद्धा निर्ययुर्हृष्टाः प्रद्युम्नवधकाङ्क्षया । चित्रसेनोऽतिसेनश्च विष्वक्सेनजितस्तथा ।
श्रुतसेनः सुषेणश्च सोमसेनो मनस्तथा । सेनानीः सैन्यहन्ता च सेनश्च ध्वजिकस्तथा ।
सेनस्कन्धोऽतिसेनश्च शनको जनकस्ततः । शकलो विकलः शान्तः स शान्तात्मकरो विभुः ।

धूम्रकेतुः सुदंष्ट्रश्च केशिरित्येवमादयः । चक्रतोमरशूलानि पट्टिशांश्च परश्वधान् ।
गृहीत्वा निर्ययुर्हृष्टा मृत्युना परिचोदिताः । चाक्रयन्तमनिशं वै नन्दुः संग्राममूर्द्धनि । ९२०५
प्रद्युम्नस्तु महाबाहुरथमास्थाय सत्वरं । निर्ययौ चापमादाय संग्रामाभिमुखस्तदा ।
ततः प्रवृत्तं युद्धन्तु तुमुलं लोमहर्षणं । शम्बरस्य च पुत्राणां केशवस्य तु सूनुना ।
ततो देवाः सगन्धर्व्वाः सयक्षोरगचारणाः । देवराजं पुरस्कृत्य विमानाग्रेषु विष्ठिताः ।
नारदस्तुम्बुरुश्चैव हाहाहूहूश्च गायनाः । अप्सरोभिः परिवृताः सर्व्वे तत्रावतस्थिरे ।
देवराजप्रतीहारो गन्धर्व्वश्चित्रमद्भुतं । शशंस देवराजाय वज्रिणे चित्रमद्भुतं । ९२१०
शम्बरस्य शतं पुत्रा एकः कृष्णस्य चात्मजः । बहूनां युध्यतामेव कथं जयमवाप्नुयात् ।
तच्छ्रुत्वा भाषितं तस्य प्रहस्य बलसूदनः । उवाच वचनञ्चेदं शृणु योऽस्य पराक्रमः ।
कामोऽयं पूर्व्वदेहे तु हरक्रोधाग्निनिर्द्दग्धः । रत्या प्रसादितो देवः कामपत्न्या त्रिलोचनः ।
परितुष्टेन देवेन वरमस्याः प्रदीयत । विष्णुवंशे च देहस्तु द्वारकायां भविष्यति ।
तस्य पुत्रस्तु ते भर्त्ता भविष्यति न संशयः । अनङ्ग इति विख्यातस्त्रिलोकेषु महायशाः । ९२१५
तत्रोत्पन्नो महातेजाः शम्बरं घातयिष्यति । सप्ताहे जातमात्रन्तु रुक्मिण्याः क्रोडसंस्थितं ।
आस्थाय शम्बरो मायां प्रद्युम्नमपनेष्यति । तद्गच्छ शम्बरगृहं भार्य्या मायावती भव ।
मायारूपप्रतिच्छन्ना शम्बरं मोहयिष्यसि । तत्र त्वमात्मनः कान्तं बालरूपं विवर्द्धय ।
प्राप्तयौवनदेहस्तु शम्बरं निहनिष्यति । ततस्त्वया महाभागे द्वारकां वै गमिष्यति ।
गमिष्यसे तथा च त्वं पौनःपुन्यं सहं वया । एवमादिश्य देवेशो जगाम पुरुषोत्तमः । ९२२०
कैलासं मेरुसङ्काशं सिद्धचारणसेवितं । कामपत्नी प्रणम्याथ देवदेवमुमापतिं ।
जगाम शम्बरगृहं कालं शान्तं प्रतीक्षती । एवमेव महाबाहुः शम्बरं निहनिष्यति ।
सपुत्रस्य च प्रद्युम्नो हन्ता तस्य दुरात्मनः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शम्बरवधे द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
॥ वैशम्पायन उवाच ॥ ततः प्रवृत्तं युद्धं तत् तुमुलं लोमहर्षणं । शम्बरस्य तु पुत्राणां रुक्मिण्या नन्दनस्य च ।
ततः क्रुद्धा महादैत्याः शरशक्तिपरश्वधान् । चक्रतोमरकुन्तानि भुशुण्डीर्मुषलानि च । ९२२५
युगपत्पातयन्ति स्म प्रद्युम्नोपरि वेगिताः । कार्ष्णिरप्यनिशं क्रुद्धः सर्व्वांस्तैर्गुणच्युतैः ।
एकैकं पञ्चभिः क्रुद्धश्चिच्छेद रणमूर्द्धनि । ततोऽसुराः क्रुद्धतराः सर्व्वे ते कृतनिश्चयाः ।
ववर्षुः शरजालानि प्रद्युम्नवधकाङ्क्षया । ततः प्रकुपितोऽनङ्गो धनुरादाय सत्वरः ।
शम्बरस्य जघानाशु दश पुत्रान्महाबलः । ततोऽपरेण भल्लेन कुपितः केशवात्मजः ।
चिच्छेदाशु शिरस्तस्य चित्रसेनस्य वीर्य्यवान् । ततस्ते हतशेषास्तु समेत्य समयुध्यत । ९२३०
शरवर्षं विमुञ्चन्तो अभ्यधावन् जिघांसितुं । ततः सन्धाय बाणांस्ते विमुञ्चन्तो रणोत्सुकाः ।
क्रीडन्निव महातेजास्तेषां शिरांस्यपातयत् । निहत्य समरे सर्व्वान् शतमुत्तमधन्विनां ।

प्रद्युम्नः समराकाङ्क्षी तस्थौ संग्राममूर्द्धनि । सर्वं पुत्रगतं श्रुत्वा शम्बरः क्रोधमादधे ।
सूतं सञ्चोदयामास रथं मे संप्रयोजय । राज्ञो वाक्यं निशम्याथ प्रणम्य शिरसा भुवि ।
स सैन्यं चोदयामास रथञ्च सुसमाहितं । युक्तमश्वसहस्रेण सर्वयोग्येन योजितं । ९९०५
शार्द्दूलचर्मसंवेष्टं किङ्किणीजालमालिनं । हैमाम्बुजपताकोर्ध्वं पट्टभक्तिविराजितं ।
ताराचित्रपिनद्धाङ्गं स्वर्णकूबरभूषितं । सुपताकं महोच्छ्रायं मृगराजोपकेतनं ।
सुविभक्तवरूथञ्च लोहेषाञ्च सुबन्धुरं । मन्दरोदग्रशिखरं चारुचामरभूषितं ।
नक्षत्रमालापिहितं हेमरत्नसमाचितं । विराजमानं श्रीमन्तमारोहच्छम्बरस्तदा ।
काञ्चनं चित्रसन्नाहं धनुर्गृह्य शरांस्तथा । प्रस्थितः समराकाङ्क्षी मृत्युना परिचोदितः । ९९१०
चतुर्भिः सचिवैः सार्द्धं सैन्येन महता वृतः । दुर्द्धरः केतुमाली च शत्रुहन्ता प्रमर्द्दनः ।
एतैः परिवृतोऽमात्यैर्युयुत्सुः प्रस्थितो रणे । द्वे नागसहस्राणि रथानां द्वे शते तथा ।
हयानामयुतान्यष्टौ प्रयुतैश्च पदातिनां । एतैः परिवृतो योधैः शम्बरः प्रययौ तदा ।
प्रयातस्य तु संग्रामे उत्पातान्युत्थितानि वै । स्तम्भचक्राकुले व्योम्नि वध्याकाराश्च नादिताः ।
गर्ज्जन्ति परुषं मेघा निर्घातश्चाम्बरात्पतत् । शिवा विनेदुरशिवं सैन्यं संकालयन्नहन् । ९९१५
ध्वजशीर्षेऽपतद्गृध्रः काञ्चने वै दानवाधमे । रथाग्रे पतितश्चास्य कबन्धो भुवि दृश्यते ।
चिचीकूचीति वाशन्ति शम्बरस्य रथोपरि । स्वर्भानुग्रस्त आदित्यः परिघैः परिवेष्टितः ।
स्फुरते नयनञ्चास्य सव्यं भयनिवेदनं । बाहुः प्रकम्पते सव्यः प्रास्खलंश्चैव वाजिनः ।
ध्वाङ्क्षो मूर्द्ध्नि निपतितः शम्बरस्य सुरारिणः । ववर्ष रुधिरं देवः शर्कराङ्गारमिश्रितं ।
उल्कापातसहस्राणि निपेतुरथ मूर्द्धनि । प्रतोदो न्यपतद्धस्तात् सारथेर्हयवाहिनः । ९९२०
एतानचिन्तयित्वा तु उत्पातान् समुपस्थितान् । प्रययौ शम्बरः क्रुद्धः प्रद्युम्नवधकाङ्क्षया ।
भेरीशङ्खमृदङ्गानां पणवानकदुन्दुभेः । युगपन्नाद्यमानानां पृथिवी समकम्पत ।
तेन शब्देन महता सम्भ्रान्ता मृगपक्षिणः । समन्तादुद्द्रुवुस्त्रस्ता भयविक्लवचेतनाः ।
रथमध्ये स्थितः कार्ष्णिश्चिन्तयन्निधनं रिपोः । सैन्यैः परिवृतोऽसंख्यैर्युद्धाय कृतनिश्चयः ।
क्रुद्धः शरसहस्रेण प्रद्युम्नं समताडयत् । असम्प्राप्तांश्चैव तान् बाणांश्चिच्छेद कृतहस्तवत् । ९९२५
प्रद्युम्नो धनुरायम्य शरवर्षं मुमोच ह । तत्र सैन्ये न स कश्चिद्यो न विद्धः शरेण वै ।
प्रद्युम्नशरघातेन तत् सैन्यं विमुखीकृतं । शम्बरस्य रथाभ्याशे स्थितं संत्रस्तभीतवत् ।
स्वबलं विद्रुतं दृष्ट्वा शम्बरः क्रोधमूर्च्छितः । आज्ञापयामास तदा सचिवान्दानवेश्वरः ।
गच्छध्वं मन्नियोगेन प्रहरध्वं रिपोः सुतं । नोपेक्षणीयः शत्रुर्वै बध्यतां क्षिप्रमेव वै ।
उपेक्षित इव व्याधिः शरीरं नाशयेद्ध्रुवं । तद्वद्दुर्मतिः पापो बध्यतां मन्निदेशतः । ९९३०
ततस्ते सचिवाः क्रुद्धाः शिरसा गृह्य शासनं । शरवर्षैः प्रद्युम्नमभितोऽभ्ययान् ।
तान्दृष्ट्वा धावतः संख्ये क्रुद्धो मकरकेतनः । चापमुद्यम्य संभ्रान्तात्मा प्रमुखतो बली ।

दुर्द्धरं पञ्चविंशत्या शरैः सन्नतपर्व्वभिः । बिभेद कुम्भहनुश्च केतुमालिं त्रिभिस्त्रिभिः ।
शतत्या शम्बरस्यारं ग्रीवायां तु प्रमर्द्दनं । बिभेद परमामर्षी रुक्मिण्या नन्दिवर्द्धनः ।
ततस्ते रथिनः क्रुद्धाः प्रद्युम्नं शरवृष्टिभिः । निजघ्नुः समरे वीरास्तदद्भुतमिवाभवत् । ९११५
एकैकशो बिभिदिरे षष्टिभिः षष्टिभिः शरैः । तानप्राप्तान् शरान् सर्व्वांश्चिच्छेद मकरध्वजः ।
ततोऽर्द्धचन्द्रमादाय दुर्द्धरस्य च सारथिं । जघान पश्यतां राज्ञां सर्व्वेषां सैनिकस्य वै ।
चतुर्भिश्च नाराचैः सुपर्व्वैः कङ्कवाजितैः । जघान चतुरः सोऽश्वान् दुर्द्धरस्य रथं प्रति ।
एकेन चोग्रं चापञ्च ध्वजमेकेन सत्वरं । छत्रं च युगपत्सार्द्धं चिच्छेद मकरध्वजः ।
ततोऽर्द्धचन्द्रमादाय कङ्कपत्रं सुतेजितं । मुमोच हृदये तस्य दुर्द्धरस्यात्मयोनिनः । ९१२०
स गतासुर्गतश्रीको गतचक्षुर्गतप्रभः । निपपात रथोपस्थात् छिन्नपुष्प इव द्रुमः ।
दुर्द्धरे निहते शूरे दानवे दानवेश्वरः । केतुमाली शरव्रातैरभिदुद्राव कृष्णजं ।
प्रद्युम्नमभिसंक्रुद्धो भ्रुकुटीभीषणाननः । तथाऽभ्यधावत् सहसा तिष्ठ तिष्ठेति चाब्रवीत् ।
संक्रुद्धः कृष्णसूनुश्च शरवर्षैरवाकिरत् । पर्व्वतं वारिधाराभिः प्रावृषीव यथा घनः ।
स विद्धो दानवामात्यः प्रद्युम्नेन धनुष्मता । चक्रमादाय चिक्षेप प्रद्युम्नवधकाङ्क्षया । ९१२५
तमप्राप्तं सहस्रारं कृष्णचक्रसमद्युतिं । निपत्योत्पत्य जग्राह सर्व्वेषामेव पश्यतां ।
तेनैव तस्य चिच्छेद केतुमालेः शिरस्तदा । तद्दृष्ट्वा कर्म्म विपुलं रौक्मिणेयस्य देवराट् ।
विस्मयं परमं प्राप्तः सर्व्वैर्देवगणैः सह । गन्धर्व्वाप्सरसश्चैव पुष्पवर्षैरवाकिरन् ।
केतुमालिं हतं दृष्ट्वा शम्बरस्य प्रमर्द्दनः । महाबलसमूहेन प्रद्युम्नमथ दुद्रुवे ।
ते गदां मुषलं चक्रं प्रासतोमरसायकान् । भिन्दिपालान् कुठारांश्च भास्करान् कूटमुद्गरान् । ९१३०
युगपत् संक्षिपन्ति स्म वधार्थं कृष्णनन्दने । सोऽपि तान्यस्त्रजालानि शस्त्रजालैरनेकधा ।
चिच्छेद बहुधा वीरो दर्शयन् पाणिलाघवं । गजान् सोऽभ्यहनत् क्रुद्धो गजारोहान् सहस्रशः ।
रथान् सारथिभिः सार्द्धं हयांश्चैव ममर्द्द च । पातयंश्च शरव्रातैर्नाविद्धः कश्चिदीक्ष्यते ।
एवं सर्व्वाणि सैन्यानि समस्य मकरध्वजः । नदीं प्रावर्त्तयद्घोरां शोणिताम्बुतरङ्गिणीं ।
मुक्ताहारैश्छिन्नवस्त्रां मांसमेदोस्रपङ्किलां । छत्रद्वीपां शरावर्त्तां रथैः पुलिनमण्डितां । ९१३५
केयूरकुण्डलापूर्णां ध्वजमत्स्यविभूषितां । नागग्राहवतीं रौद्रां मणिनक्रविभूषितां ।
केशशैवलसञ्छन्नां शोणितपङ्कवालिकां । वराननपद्माढ्यां हंसचामरवीचितां ।
शिरश्छिन्नसमाकीर्णां शोणितौघप्रवर्त्तिनीं । नदीं दुस्तरणीं भीमामसृगोघप्रवर्त्तितां ।
दुष्प्रेक्ष्यां दुर्गमां रौद्रां हीनतेजःसुदुस्तरां । भक्षग्राहवतीं घोरां यमराष्ट्रविवर्द्धिनीं ।
तत्र रुक्मिसुतः श्रीमान् विलोकयति धन्विनः । शम्बरस्तमथासाद्य शरानभ्यकिरन् बहून् । ९१४०
शम्बरस्तु पुनः क्रुद्धो मुमोच शरमुत्तमं । प्रद्युम्नस्य समासाद्य हृदये निपपात च ।
स विद्धस्तेन बाणेन प्रद्युम्नो न व्यकम्पत । शक्तिं जग्राह बलवान् शम्बरस्य मुमूर्षवे ।

संबोधय महाबाहुं पूर्व्वजातिञ्च स्मारय । वैष्णवास्त्रं प्रयच्छास्मै वधार्थं शम्बरस्य च ।
अभेद्यं कवचञ्चास्मै प्रयच्छासुरसूदने । एवमुक्तो मघवता नारदः प्रययौ त्वरन् ।
आकाशे विष्ठितोवाच मकरध्वजकेतनं । कुमार पश्य मां प्राप्तं देवगन्धर्व्वनारदं ।
प्रेषितं देवराजेन तव सम्बोधनाय वै । स्मर त्वं पूर्व्वकं भावं कामदेवोऽसि मानद । ९०७
हरकोपानलाद्दग्धस्तेनानङ्गत्वमागतः । त्वं रुक्मिण्यां जातोऽसि कृष्णाद्गर्भमनाः ।
जातोऽसि केशवेन त्वं प्रद्युम्न इति कीर्त्यसे । आहृत्य शम्बरेण त्वमिहानीतोऽसि मानद ।
सप्तरात्रे त्वसंपूर्णे सूतिकागारमध्यतः । वधार्थं शम्बरस्य त्वं ह्रियमाणो न्युपेक्षितः ।
केशवेन महाबाहो देवकार्य्यार्थसिद्धये । यैषा मायावती नाम भार्य्या वै शम्बरस्य तु ।
रतिं तां विद्धि कल्याणीं तव भार्य्यां पुरातनीं । तव सा रक्षणार्थाय शम्बरस्य गृहेऽवसत् ।
मायां शरीरजां न्यस्य मोहनार्थं दुरात्मनः । रतेरुत्पादनार्थाय प्रेषयत्सविशं तदा । ९०९
एवं प्रद्युम्न बुद्ध्वा वै तव भार्य्या प्रतिष्ठिता । हत्वा तं शम्बरं वीर वैष्णवास्त्रेण संयुगे ।
गृह्य मायावतीं भार्य्यां द्वारकां गन्तुमर्हसि । गृहाण वैष्णवञ्चास्त्रं कवचञ्च महाप्रभं ।
शक्रेण तव संप्रेष्य प्रेषितं मधुसूदन । शृणु मे चापरां वाचं शिवनामविशुद्धया ।
अस्य देवरिपोस्तात मुद्गरो नित्यमूर्ज्जितः । पार्व्वत्या तुष्टया दत्तः सर्व्वशत्रुनिबर्हणः ।
अमोघश्चैव संग्रामे देवदानवमानवैः । तदस्त्रप्रतिघातार्थं देवीं संस्तोतुमर्हसि । ९११
स्तुत्या चैव नमस्या च महादेवी रणोत्सुकैः । तत्र वै जियतां यत्नः संग्रामे रिपुणा सह ।
इत्युक्त्वा नारदो वाक्यं प्रययौ यत्र वासवः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शम्बरवधे नारदवाक्ये पञ्चषष्ट्यधिकशततोऽध्यायः ॥ १६५ ॥
॥ वैशम्पायन उवाच ॥ शम्बरस्तु ततः क्रुद्धो मुद्गरं तं समाददे । मुद्गरे गृह्यमाणे तु दारुणाः समुत्थिताः ।
पर्व्वताश्चलिताः सर्व्वे चलितं वसुधातलं । उन्मार्गाः सागरा जाताः संक्षुब्धाश्चापि देवताः ।
गृध्रचक्राकुलं व्योम उल्कापातो बभूव च । ववर्ष रुधिरं देवः परुषं पवनो ववौ । ९१३
एवं दृष्ट्वा महोत्पातान् प्रद्युम्नः स त्वरान्वितः । अवनीय रथाद्वीरः कृताञ्जलिपुटः स्थितः ।
देवीं सस्मार मनसा पार्व्वतीं शङ्करप्रियां । प्रणम्य शिरसा देवीं स्तोतुं समुपचक्रमे ।
॥ प्रद्युम्न उवाच ॥ ओं नमः कात्यायन्यै गुहस्य जनन्यै नमः । नमस्ते लोकमायायै कात्यायन्यै नमो नमः ।
नमः शत्रुविनाशिन्यै नमो गौर्य्यै गिरीशायै । नमस्ते दुःखदमनीं निद्ध्यायदि दारुणीं ।
कात्यायनीं नमस्येऽहं कुमारीश्चापि नित्यशः । कान्तारवासिनीं देवीं नमस्यामि कृताञ्जलिः । ९१५
विन्ध्यवासिनीं दुर्गंञ्च रणदुर्गां रणप्रियां । नमस्यामि महादेवीं जयाञ्च विजयान्तथा ।
अपराजितां नमस्येऽहमजितां शत्रुनाशनीं । घण्टाहस्तां नमस्यामि घण्टामालाकुलान्तथा ।
त्रिशूलिनीं नमस्यामि महिषासुरघातिनीं । सिंहवाहां नमस्यामि सिंहप्रवरकेतनां ।
एकानंशां नमस्यामि गायत्रीं यज्ञसत्कृतां । सावित्रीञ्चापि विप्राणां नमस्येऽहं कृताञ्जलिः ।

रक्ष मां देवि सततं संग्रामे विजयं कुरु । इति कामवचः श्रुत्वा दुर्गा सुप्रीतमानसा । ९११०
उवाच वचनं देवी सुप्रीतेनान्तरात्मना । पश्य पश्य महाबाहो रुक्मिण्या नन्दिवर्द्धन ।
वरं वरय वत्स त्वमनोघं दर्शनं मम । देव्यास्तु वचनं श्रुत्वा रोमाञ्चोद्गतमानसः ।
प्रणम्य शिरसा देवीं विज्ञाप्तुमुपचक्रमे । यदि त्वं देवि तुष्टाऽसि दीयतां मे यदीप्सितं ।
वरस्तु वरदे याचे सर्व्वासि निधेनु मे जयः । यस्त्वया मुद्गरो दत्तः शम्बरस्यात्मरक्षणः ।
एष मे गात्रमासाद्य माला पद्ममयी भवेत् । तथाऽस्त्विति च साऽप्युक्त्वा तत्रैवान्तरधीयत । ९११५
प्रद्युम्नस्तु महातेजाः प्रहृष्टो रथमास्थित । मुद्गरं तु प्रहीत्वाऽथ शम्बरः क्रोधमूर्च्छितः ।
भ्रामयित्वा स चिक्षेप प्रद्युम्नोरसि वीर्य्यवान् । स गत्वा सहसाऽभ्याशं माला भूत्वाऽथ पौष्करी ।
प्रद्युम्नस्य तु कण्ठे सा समासक्ता व्यराजत । नक्षत्राणान्तु मालायां यथा परिष्टतोडुराट् ।
ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः । साधु साध्विति वाचस्तु पूजयन् केशवात्मजं ।
मुद्गरं पुष्पभूतं तु दृष्ट्वा प्रद्युम्नसन्निधौ । वैष्णवं परमास्त्रं तु नारदेन यदाहृतं । ९१२०
सन्दधे चापमानम्य इदं वचनमब्रवीत् । यद्यहं रुक्मिणीपुत्रः केशवस्यात्मजो ह्यहं ।
तेन सत्येन वाणोऽयं जहि त्वं शम्बरं रणे । इत्युक्त्वा चापमाकृष्य सन्धाय च महामनाः ।
चिक्षेप शम्बरस्याथ दहन् लोकत्रयं यथा । स क्षिप्तो वृष्णिसिंहेन वाणः कन्यादमोदनः ।
हृदयं शम्बरस्याथ भित्त्वा धरणिमाससन् । नैवास्य मांसं न स्नायुर्नास्थि न चासृक् शोणितं ।
सर्व्वं तद्भस्मसाद्भूतं वैष्णवास्त्रस्य तेजसा । हते दैत्ये महाकाये दानवे शम्बराधमे । ९१२५
जगुर्देवगन्धर्व्वा ननृतुश्चाप्सरोगणाः । उर्व्वशी मेनका रम्भा विश्वाचीस्तिलोत्तमा ।
ननृतुर्हृष्टमनसो जगत् स्थावरजङ्गमं । देवराजस्तु सुप्रीतः सर्व्वदेवगणैः सह ।
प्रद्युम्नं पुष्पवर्षेण समभ्यर्च्चत् प्रहृष्टवत् ।

अथ समरहते तु दैत्यराजे मधुमथनसुतेन वैष्णवास्त्रैः । विगतरिपुभयाः सुराश्च अमुमर्करविभूषणकेतनं स्तुवन्तः ।
स च समरपरिश्रान्तं वहन् वै नगरमुखं प्रविवेश रौक्मिणेयः । प्रियतम इव कान्तया प्रहृष्टस्खलितपदं रतिर्हर्षेणसञ्चकार । ९१३०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शम्बरवधे प्रद्युम्नकृतदुर्गास्तवे षट्षष्ट्यधिकशततोऽध्यायः ॥ १६६ ॥

॥ वैशम्पायन उवाच ॥ समाप्तमायो मायाज्ञो विक्रान्तः समरेऽव्ययः । प्रद्युम्नो निहतो युद्धे मायावी कालशम्बरः ।
तस्मिन् वसन्ने नगरे निहत्यासुरसत्तमं । गृह्य मायावतीं देवीमागच्छन्नगरं पितुः ।
सोऽन्तरीक्षगतो भूत्वा मायया भीमविक्रमः । आजगाम पुरीं रम्यां रक्षितां तेजसा पितुः ।
सोऽन्तरीक्षात् प्रपतितः केशवान्तःपुरे शिशुः । मायावत्या सह तया रूपवानिव मन्मथः ।
तस्मिंस्तत्रावपतिते महिष्यः केशवस्य याः । विस्मिताश्चैव हृष्टाश्च भीताश्चैवाभवंस्ततः । ९१३५
ततस्तं कामसङ्काशं कान्तया सह सङ्गतं । प्रेक्षन्त्यो हृष्टवदनाः पिबन्त्यो नयनासवं ।
तं विनीतमुखं दृष्ट्वा सज्जमानं पदे पदे । अभवन् स्निग्धसंकल्पाः सर्व्वास्ताः कृष्णयोषितः ।
रुक्मिणी चैव तं दृष्ट्वा शोकार्त्ता पुत्रगर्द्धिनी । वपश्चोद्भतसंकीर्णा सवाष्पा वाक्यमब्रवीत् ।

॥ वैशम्पायन उवाच ॥ पवित्रमिदमद्भुतं महामाङ्गल्यं जयतामर। यं जप्त्वा तु नृपश्रेष्ठ सायम्प्रातस्ततो भवेत्।
कीर्त्तितं बलदेवेन कृष्णेनैवानुकीर्त्तितं। धर्म्मकामैश्च मुनिभिश्च विमिश्रापि कीर्त्तितं।
सुरासुरगुरुर्ब्रह्मा पातु मां जगतीपतिः। तथोङ्कारवषट्कारौ सावित्री विश्वमव्ययः। ९४९०
ऋचो यजूंषि सामानि छन्दांस्याथर्व्वणानि च। चत्वारः सकला वेदाः सरहस्याः सविस्तराः।
पुराणमितिहासश्च खिलान्युपखिलानि च। अङ्गान्युपाङ्गानि तथा व्याख्यानानि च पान्तु मां।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं। इन्द्रियाणि मनो बुद्धिस्तथा सत्त्वं रजस्तमः।
व्यानोदानः समानश्च प्राणो ऽपानश्च पञ्चमः। वायवः सप्त चैवान्ये येष्वायत्तमिदं जगत्।
मरीचिरङ्गिराऽत्रिश्च पुलस्त्यः पुलहः क्रतुः। भृगुर्व्वसिष्ठो भगवान् पान्तु ते मां महर्षयः। ९४९५
कश्यपाद्याश्च मुनयश्चतुर्द्दश दिशो दश। नरनारायणौ देवौ सनत्को पान्तु मां सदा।
रुद्राश्चैकादश प्रोक्ता आदित्या द्वादशैव तु। अष्टौ च वसवो देवा अश्विनौ द्वौ प्रकीर्त्तितौ।
ह्रीः श्रीर्लक्ष्मीः स्वधा मेधा तुष्टिः पुष्टिः स्मृतिर्धृतिः। अदितिर्दितिर्द्दनुश्चैव सिंहिका दैत्यमातरः।
हिमवान् हेमकूटश्च निषधः श्वेतपर्व्वतः। ऋषभः पारियात्रश्च विन्ध्यो वैदूर्य्यपर्व्वतः।
मल्याद्रयश्च सह्यश्च मेरुमन्दरदर्दुराः। क्रौञ्चकैलासमैनाका पान्तु मां धरणीधराः। ९५००
शेषश्च वासुकिश्चैव विशालाक्षश्च तक्षकः। एलापत्रः शुक्लकर्णः कम्बलाश्वतरावुभौ।
हस्तिभद्रः पिठरकः कर्कोटकधनञ्जयौ। तथा पूरणकश्चैव नागश्च करवीरकः।
सुमनास्यो दधिमुखस्तथा शङ्खारपिण्डकः। मणिनागश्च भगवांस्त्रिषु लोकेषु विश्रुतः।
नागराड्दधिकर्णश्च तथा हारिद्रकोऽपरः। एते चान्ये च बहवो ये चान्ये नानुकीर्त्तिताः।
भूधराः सत्यधर्म्माणः पान्तु मां भुजगेश्वराः। समुद्राः पान्तु चत्वारो गङ्गा च सरितांवरा। ९५०५
सरस्वती चन्द्रभागा शतद्रुर्द्देविका शिवा। इरावती विपाशा च सरयूर्यमुना तथा।
कल्माषी च रथोष्मा च बाहुदा च हिरण्वदा। प्लक्षा चेक्षुमती चैव सुवक्त्रा च दृषद्वती।
ख्याता चर्म्मण्वती चैव पुण्या चैव वधूसरा। एताश्चान्याश्च सरितो याश्चान्या नानुकीर्त्तिताः।
उत्तरापथगामिन्यः सलिलैः स्नापयन्तु मां। शिप्रा चर्म्मण्वती पुण्या नदी सप्तवती शुभा।
वेण्वा गोदावरी सीता कावेरी कोङ्कणावती। कृष्णवेण्णा शुक्तिमती तमसा पुष्पवाहिनी। ९५१०
ताम्रपर्णी ज्योतिरथा उत्पलोडुम्बरावती। नदी वैतरणी पुण्या विदर्भा नर्म्मदा शुभा।
वितस्ता वै भीमरथी एला चैव महानदी। कालिन्दी गोमती पुण्या नदः शोणश्च विश्रुतः।
एताश्चान्याश्च वै नद्यो याश्चान्या नानुकीर्त्तिताः। दक्षिणापथवाहिन्यः सलिलैः स्नापयन्तु मां।
सिन्धुर्वेत्रवती चैव भोजाख्या वनमालिका। पूर्व्वभद्रा ऽपराभद्रा निषधा च वरद्रुमा।
ख्याता वेत्रवती चैव पापदासीति विश्रुता। मलयावती पुष्पनदी पुण्या रम्या सरस्वती। ९५१५
सितप्रा चेन्दुमाला च तथा मधुमती नदी। उमा गरुनदी चैव वापी च विमलोदका।
विमला विमलोदा च मन्तगङ्गा पयस्विनी। एताश्चान्याश्च वै नद्यो याश्चान्या नानुकीर्त्तिताः।

ता मां समभिषिञ्चन्तु पश्चिमामाश्रिता दिशं । भागीरथी पुण्यजला प्राच्यां दिशि समाश्रिता।
सा तु दहतु मे पापं कीर्त्तिता सकृता हृता । प्रभासञ्च प्रयागञ्च नैमिषं पुष्कराणि च ।
गङ्गातीर्थं कुरुक्षेत्रं श्रीक्षेत्रं गौतमाश्रमं । रामह्रदं विनशनं रामतीर्थन्तथैव च । ६३१०
गङ्गाद्वारं कनखलं सोमो वै यत्र चोत्थितः । कपालमोचनं तीर्थं अमृतार्णञ्च विश्रुतं ।
सुवर्णबिन्दु विख्यातं तथा कनकपिङ्गलं । दशाश्वमेधिकञ्चैव पुण्याश्रमविभूषितं ।
बदरी चैव विख्याता नरनारायणाश्रमः । विख्यातं फल्गुतीर्थञ्च तीर्थं भद्रवटं तथा।
कोकामुखं पुण्यतमं गङ्गासागरमेव च । मगधेषु तपोदश्च गङ्गाह्रदश्च विश्रुतः ।
तीर्थान्येतानि पुण्यानि सेवितानि महर्षिभिः । मां स्नापयन्तु सलिलैः कीर्त्तिताकीर्त्तितानि वै । ६३११
धर्म्मार्थकामविषयो यशःप्राप्तिः शमो दमः । वत्सोऽश्रोऽथ पर्ज्जन्यो यमो नियम एव च ।
कीर्त्ति नयः सन्ततिश्च क्रोधो मोहः क्षमा धृतिः । विद्युतो ऽथाशोकरथः प्रमादोन्मादविग्रहाः ।
यक्षाः पिशाचा गन्धर्व्वाः किन्नराः सिद्धचारणाः । नक्षत्राः खेचरिणो दंष्ट्रिणः प्रियविग्रहाः ।
लम्बोदराश्च बलिनः पिङ्गाक्षा विश्वरूपिणः । महतः सप्तपर्ज्जन्या कलाकुटिलसञ्चयाः ।
नक्षत्राणि ग्रहाश्चैव ऋतवः शिशिरादयः । नानाहोराश्चचैव सूर्य्याचन्द्रमसौ तथा । ६३१२
आमोदश्च प्रमोदश्च प्रहर्षः शोक एव च । मन्युरुग्रस्तपः सत्यं श्रुतिः सिद्धिः स्मृतिस्तथा ।
रुद्राणी भद्रकाली च भद्रषष्ठी च वारुणी । माली च कालिका चैव शाण्डिली चैव विश्रुता ।
आर्य्या कुहूः सिनीवाली भीमा वेत्रवती रतिः । एकानंशा च कुष्माण्डी देवी कात्यायनी तथा ।
लोहित्यायनमाता च देवकन्याश्च या स्मृताः । गोनन्दा देवपत्नी च मां रक्षन्तु महात्मनः ।
नानाभरणवेष्टाश्च नानारूपाङ्कितानना । नानादेशविचारिण्यो नानावस्त्रोपशोभिताः । ६३१३
मेदोमज्जाप्रियाश्चैव मद्यमांसवसाप्रियाः । मार्ज्जारद्वीपिवक्त्राश्च गजसिंहनिभाननाः ।
कङ्कवायसगृध्राणां क्रौञ्चतुल्याननास्तथा । व्यालयज्ञोपवीताश्च चर्म्मप्रावरणास्तथा ।
जतजोचितरक्ताश्च शङ्खभेरीसमस्वनाः । मन्थराः क्रोधनाश्चैव प्रासादशिखरालयाः ।
मत्तोन्मत्तप्रमत्ताश्च प्रहसन्त्यश्च विष्ठिताः । पिङ्गाक्ष्यः पिङ्गकेश्यश्च तथा व्यालम्बमूर्द्धजाः ।
ऊर्द्धकेश्यः कृष्णकेश्यः श्वेतकेश्यस्तथैव च । नागायुतबलाश्चैव वायुवेगबलास्तथा । ६३१४
एकहस्ता एकपादा एकाक्षाः कम्पिताननाः । बहुपुत्रात्पपुत्राश्च द्विपुत्राः प्रियमल्लिकाः ।
मुखमण्डी बिडाली च पूतना गन्धपूतना । शीतवातोष्णवेताली रेवती गर्भसंस्थिता ।
प्रियहास्याः प्रियक्रोधाः प्रियवासाः प्रियम्बदाः । सुखप्रसादाः सुखदाः सदा द्विजजनप्रियाः ।
नक्तञ्चराः सुखोदर्काः सदा पर्व्वणि दारुणाः । मातरो मातृवत् पुत्र रक्षन्तु मम नित्यशः ।
पितामहमुखोद्भूता रौद्रा रुद्राङ्गसम्भवाः । कुमारस्कन्दजाश्चैव स्वरा वै वैष्णवादयः । ६३१५
महावीर्य्या महाभीमा दर्पोद्भूता महाबलाः । क्रोधजाः क्रोधनाः क्रूराः सुरविप्रियकारिणः ।
नक्तञ्चराः खेचरिणो दंष्ट्रिणः प्रियविग्रहाः । लम्बोदरा बलिनः पिङ्गाक्षा विश्वरूपिणः ।

शक्त्यृष्टिशूलपरिघप्रासचर्म्मासिपाणयः । पिनाकवज्रधनुर्बाणचक्रायुधप्रियाः ।
दण्डिनः कुण्डिनः शूराः जटामुकुटधारिणः । वेदवेदाङ्गकुशला नित्यं यज्ञोपवीतिनः ।
व्यालापीडाः कुण्डलिनो वीराः केयूरधारिणः । नानावसनसंवीता विविधस्रगनुलेपनाः ।
गजाश्वोष्ट्रर्क्षमार्ज्जारसिंहव्याघ्रनिभाननाः । वराहोलूकगोमायुमृगायुमहिषाननाः । ९९१०
वामना विकटाः कुब्जाः कराला लम्बमूर्द्धजाः । चन्द्रायतनयनाश्चान्ये चन्द्रजटधारिणः ।
श्वेतकैलासशृङ्गाभाः केचिद्दिनकरप्रभाः । केचिज्जलदवर्णाभा नीलाञ्जनचयोपमाः ।
एकपादा द्विपादाश्च तथा त्रिशिरसोऽपरे । निर्मांसाश्चाजजङ्घाश्च व्यादितास्या भयङ्कराः ।
वापीतडागकूपेषु समुद्रेषु सरःसु च । श्मशानशैलवृक्षेषु शून्यागारनिवासिनः ।
एते गणाश्च सततं रक्षन्तु मम सर्व्वतः । महागणपतिर्नन्दी महाकालो महाबलः । ९९१५
माहेश्वरो वैष्णवश्च ज्वरौ लोकभयावहौ । ग्रामणीश्चैव गोपालो भृङ्गरीटिर्गणेश्वरः ।
देवश्च वामदेवश्च घण्टाकर्णः करन्धमः । श्वेतमोदः कपाली च जम्भकः शत्रुतापनः ।
मज्जनोन्मज्जनौ चोभौ सन्तापनविलापनौ । निजघासो घसश्चैव स्थूणाकर्णः प्रशोषणः ।
उल्कामाली धमधमो ज्वालाजिह्वः प्रमर्द्दनः । संघट्टनः संकुचनः कालभूतः शिवङ्करः ।
कुष्माण्डः कुम्भमूर्द्धा च रोचनो वैकृतो ग्रहः । अनिकेतः सुरारिघ्नः शिवश्चाशिव एव च । ९९२०
क्षेमकः पिशिताशी च सुरारिर्हरिलोचनः । भीमको ग्राहकश्चैव तथैवोपग्रहो ग्रहः ।
उपग्रहोऽर्थकश्चैव तथा स्कन्दग्रहोऽपरः । चपलो लोमवेतालस्तामसः सुमहाकपिः ।
हृदयोद्वर्त्तनश्चण्डः कुण्डाशी कलहप्रियः । हरिश्मश्रुर्गरुत्मांसो मनोमारुतरंहसः ।
पार्व्वत्या रोषसंभूताः सहस्राणि शतानि च । शक्तिमन्तो द्युतिमन्तो महाप्राज्ञाः सत्यसङ्गराः ।
सर्व्वकामोपहर्त्तारो हन्तारो द्विषतां मृधे । रात्र्यावहनि दुर्गेषु कीर्त्तिताकीर्त्तिता मुखैः । ९९२५
तेषां गणानां पतयः सगणाः पान्तु नित्यशः । नारदः पर्व्वतश्चैव गन्धर्व्वाप्सरसाङ्गणाः ।
पितरः कारणं कार्य्यमाधयो व्याधयस्तथा । अगस्त्यो गालवो गार्ग्यः शक्तिर्धौम्यः पराशरः ।
कृष्णात्रेयश्च भगवानसितो देवलोऽनलः । बृहस्पतिरुतथ्यश्च मार्कण्डेयः श्रुतश्रवाः ।
द्वैपायनो विदर्भश्च जैमिनिर्माठरः कठः । विश्वामित्रो वशिष्ठश्च लोमशश्च महानृषिः ।
उतङ्कश्चैव रैभ्यश्च पौलोमश्च द्वितस्त्रितः । ऋषिश्च कालवृक्षीयो मुनिर्मेधातिथिस्तथा । ९९३०
सारस्वतो यवक्रीतः कुशिको गौतमस्तथा । सम्वर्त्त ऋष्यशृङ्गश्च काश्यपेयो विभाण्डकः ।
ऋचीको जमदग्निश्च तथौर्व्वस्तपसां निधिः । भरद्वाजः स्थूलशिराः कश्यपः पुलहः क्रतुः ।
दृढदग्निर्दरिश्मश्रुर्व्विजयः कण्व एव च । वैतण्डी च दीर्घतपा वेदशाखांशुमान् शिवः ।
शुनःशेफः शुनःपुच्छः शुनोलाङ्गूल एव च । अष्टावक्रो दधीचिश्च श्वेतकेतुस्तथैव च ।
उद्दालकः सारपाणिः शङ्खो गौरमुखस्तथा । अग्निवेश्यः शमीकश्च प्रमुचुर्मुमुचुस्तथा । ९९३५
एते चान्ये च बहव ऋषयः संशितव्रताः । मुनयः संशितात्मानो ये चान्ये नानुकीर्त्तिताः ।

यादवः स्वाधिनः शान्ताः शान्तिं कुर्व्वन्तु मे सदा। वर्णोऽत्रयश्चयो वेदाश्चैविद्यं कौस्तुभो मणिः।
ऊर्चैः श्रवा हयः श्रीमान्वैद्यो धन्वन्तरिर्हरिः। प्रसूतं गौः सुवर्णञ्च दधिगौराश्च सर्षपाः।
शुक्लाः सुमनसः कन्याः श्वेतच्छत्रं यथाक्रमाः। दूर्व्वा हिरण्यं गन्धाश्च वालव्यजनमेव च। ११५०
तथाऽप्रतिहतं चक्रं महोक्षश्चन्दनं विषं। श्वेता वृषः करी मत्तः सिंहो व्याघ्रा वयो गिरिः।
पृथिवी चोद्धृता लाजा ब्राह्मणा मधु पायसं। स्वस्तिको वर्द्धमानश्च नन्द्यावर्त्तः प्रियङ्गवः।
श्रीफलं गोमयं मत्स्या दुन्दुभी पटहस्वनः। अविपन्नश्च कन्याश्च सोमकुद्वाहनं धनुः।
रोचना रुचकश्चैव नदीनां सङ्गमोदकं। सुपर्णाः शतपत्राश्च चकोरा जीवजीवकाः।
नन्दीमुखो मयूरश्च वस्त्रमुक्ता मणिध्वजाः। आयुधानि प्रशस्तानि कार्य्यसिद्धिकराणि च। ११५५
पुण्यं वै विगतक्लेशं श्रीमद्वै मङ्गलान्वितं। रतिगौराह्वनं पूर्व्वमायुः श्रीजयकाङ्क्षिणा।
यश्चेदं श्रावयेद्विद्वान् यश्चेदं शृणुयान्नरः। मङ्गलाह्वनं स्नातो जपेत् पर्व्वणि पर्व्वणि।
वधबन्धपरिक्लेशं व्याधिशोकपराभवं। न च प्राप्नोति वैकल्यं परत्र च नन्दति।
धन्यं यशस्यमायुष्यं पवित्रं वेदसम्मितं। श्रीमत् स्वर्ग्यं सदा पुण्यमपत्यजननं शुभं।
शिवं क्षेमङ्करं नृणां मेधाजननमुत्तमं। सर्व्वरोगप्रशमनं सुकीर्त्तिकुलवर्द्धनं। ११६०
श्रद्दधानो दयाभूतः प्रपठेदात्मवान्नरः। सर्व्वपापविशुद्धात्मा गतिञ्च लभते शुभां।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वसुदेवाह्निके अष्टनवत्यधिकशततोऽध्यायः॥ १९८ ॥
॥ वैशम्पायन उवाच ॥ ततो यदैव प्रद्युम्नः शम्बरेणात्मघातिना। मासेऽस्मिन्नेव शाम्बस्तु जाम्बवत्यामजायत।
बाल्यात् प्रभृति रामेण सोऽस्त्रेषु विनियोजितः। रामादनन्तरश्चैव मानितः सर्व्ववृष्णिभिः।
जातमात्रे ततः कृष्णः शुभां तामावसत् पुरीं। निहतामित्रसामन्तः शक्रोद्यानं यथाऽमराः।
यादवीश्च श्रियं दृष्ट्वा स्वां श्रियं द्वेष्टि वासवः। अनाहूतभयाच्चैव न शान्तिं लेभिरे नृपाः। ११६५
कस्यचित्त्वथ कालस्य पुरे वारणसाह्वये। दुर्य्योधनस्य यज्ञे वै समीयुः सर्व्वपार्थिवाः।
तां श्रुत्वा माधवीं लक्ष्मीं सपुत्रश्च जनार्द्दनं। पुरीं द्वारवतीञ्चैव निविष्टां सागरान्तरे।
दूतैस्ते कृतसन्धाना पृथिव्यां सर्व्वपार्थिवाः। श्रियं द्रष्टुं हृषीकेशमाजग्मुः कृष्णमन्दिरं।
दुर्य्योधनमुखाः सर्व्वे धृतराष्ट्रवशानुगाः। पाण्डवप्रमुखाश्चैव धृष्टद्युम्नादयो नृपाः।
पाण्ड्याश्चोलकलिङ्गाश्च वाह्लीका द्रविडाः खशाः। अक्षौहिणीः प्रकर्षन्तो दश चाष्टौ च भूमिपाः। ११७०
आजग्मुर्यादवपुरीं गोविन्दभुजपालितां। ते पर्व्वतं रैवतकं परिवार्य्यावतस्थिरे।
विविशुर्य्यजनाख्यासु स्वासु स्वासु च भूमिषु। ततः श्रीमान् हृषीकेशः सह यादवपुङ्गवैः।
समीपं मानवेन्द्राणां निर्ययौ कमलेक्षणः। स तेषां नरदेवानां मध्यस्थो मधुसूदनः।
व्यराजत यदुश्रेष्ठः शरदीव दिवाकरः। स तत्र समुदाचारं यथान्यायं यथावयः।
कृत्वा सिंहासने कृष्णः काञ्चने निषसाद ह। राजानोऽपि यथान्यायं निषेदुर्विविधेष्वथ। ११७५
सिंहासनेषु चित्रेषु पीठेषु च नराधिपाः। सयादवनरेन्द्राणां समाजः शुशुभे तदा।

आश्चर्य्यः खलु लोकानां धन्यश्चासि महार्णव । येन सम्भवि योनिस्त्वमपां पतिरीश्वर ।
स्थाने त्वां वारिवाहिन्यः सरितो लोकपावनाः । इमाः समभिगच्छन्ति नद्यो लोकनमस्कृताः ।
समुद्रस्त्वेवमुक्तस्तु ततो मामब्रवीद्वचः । खं जलोन्नतं भित्त्वा सुस्थितः पवनेरितः ।
मा मैवं देवगन्धर्व्व नास्म्याश्चर्य्यो द्विजर्षभ । वसुधेयं मुने धन्या यत्राहमुपरि स्थितः ।
श्रुते तु पृथिवीं लोके किमाश्चर्य्यमतः परं । सोऽहं सागरवाक्येन क्षितिं क्षितितले स्थितः ।
कौतूहलसमाविष्टो ह्यब्रुवं जगतो गतिं । धरित्रि देहिनां योनिर्धन्या त्वमसि शोभने ।
आश्चर्य्यश्चापि भूतेषु महत्या क्षमया युते । तेन त्वमसि भूतानां धरणी मनुजारणिः ।
क्षमा त्वत्तः प्रसूता च कर्म्म चाम्बरगामिनां । ततो भूः स्तुतिवाक्येन वा मयोक्तेन तेजिता ।
विहाय सहजं धैर्य्यमथ मामभ्यभाषत । देवगन्धर्व्व मा मैवं संग्रामकलहप्रिय ।
नास्मि धन्या न चाश्चर्य्या पारक्येयं धृतिर्मम । एते धन्या द्विजश्रेष्ठ पर्व्वता धारयन्ति मां ।
एष्वाश्चर्य्याणि दृश्यन्ते एते लोकस्य सेतवः । सोऽहं पर्व्वतवाक्येन पर्व्वतान् समुपस्थितः ।
धन्या भवन्तो दृश्यन्ते बह्वाश्चर्य्याश्च भूधराः । काञ्चनस्यापरस्य धातूनाञ्च विशेषतः ।
तेन रत्नाकराः सर्व्वे भवन्तो भुवि शाश्वताः । ते ममैतद्वचः श्रुत्वा पर्व्वतास्त्वब्रुवन् वचः ।
ऊचुर्म्मां सान्त्वयुक्तानि वचांसि वनशोभिनः । ब्रह्मर्षे न वयं धन्या नाप्याश्चर्य्याणि सन्ति नः ।
ब्रह्मा प्रजापतिर्धन्यः स चाश्चर्य्यः सुरेष्वपि । सोऽहं पितामहं गत्वा सर्व्वमभ्यभाषयं ।
तस्य वाक्यस्य पर्य्यायं पर्य्याप्तमिव लक्षये । सोऽहं स्वयम्भुवं देवं लोकयोनिं चतुर्मुखं ।
पारम्पर्य्यादुपायातः प्रणामावनताननः । सोऽहं वाक्यसमाप्तौ वै आवदे पद्मयोनये ।
आश्चर्य्यं भगवानेको धन्यश्च जगतो गुरुः । न किञ्चिदन्यत् पश्यामि भूतं यद्भवता समं ।
त्वत्तः सर्व्वमिदं जातं जगत् स्थावरजङ्गमं । सदेवदानवा मर्त्या लोके भूतेन्द्रियात्मकाः ।
भवन्ति सर्व्वदेवेश दृश्यादृश्यमिदं जगत् । तेन त्वमसि देवानां देवदेवः सनातनः ।
तेषामेवासि यत् स्रष्टा लोकानामपि भावनः । ततो मां प्राह भगवान् ब्रह्मा लोकपितामहः ।
धन्याश्चर्य्याभिनिर्व्वाक्यैः किं मां नारद भाषसे । आश्चर्य्यं परमं वेदा धन्या वेदाश्च नारद ।
ये लोकान् धारयन्ति स्म वेदास्तत्त्वार्थदर्शिनः । ऋक्सामयजुषां सत्यमथर्व्वणि च यत्कृतं ।
तन्मयं विद्धि मां विप्र धृतोऽहं तैर्व्वा च ते । पारमेष्ठ्येन वाक्येन चोदितोऽहं स्वयम्भुवा ।
वेदोपस्थानिकाश्चक्रे मतिसंस्थानविस्तरां । सोऽहं स्वयम्भुवचनाद्वेदान्ते समुपस्थितः ।
उवाच वेदांश्चतुरो मन्त्रप्रवचनार्च्चितान् । धन्या भवन्तः पुण्याश्च नित्यमाश्चर्य्यभूषिताः ।
आधाराश्चैव विप्राणामित्याह प्रजापतिः । स्वयम्भुवोऽपीह परं भवत्सु प्रसमागतः ।
युष्मत्परतरं नास्ति श्रुत्या वा तपसाऽपि वा । प्रत्यूचुस्ते तदा वाक्यं वेदा मामभितः स्थिताः ।
आश्चर्य्याश्चैव धन्याश्च यज्ञाश्चास्मत्परायणाः । यज्ञार्थे च वयं सृष्टा धात्रा येन स्म नारद ।
तदस्माकं परा यज्ञा न वयं स्ववशे स्थिताः । स्वयम्भुवः परं वेदा वेदानाञ्च परं क्रतुः ।

ततोऽहमब्रुवं यज्वान् प्रज्वलाग्निपुरस्कृतान्। भो यज्वाः परमं तेजो युष्मासु खलु लक्ष्यते।
ब्राह्मणाऽभिहितं वाक्यं यच्च वेदैरुदीरितं। आश्चर्य्यमन्यल्लोकेऽस्मिन् भवद्भ्यो नाधिगम्यते।
धन्याः खलु भवन्तो ये द्विजातीनां स्ववंशिनः। तेन स्तनमृत्युपवर्जितं युष्माभिर्यान्ति तर्पिताः।
भार्गव विद्वाः सर्व्वे मन्त्रैरेव सहर्षयः। अग्निष्टोमादयो यज्ञा मम वाक्यादनन्तरं। ९९७०
प्रत्यूचुर्वो ततो वाक्यं सर्व्वे यूपध्वजाः स्थिताः। आश्चर्य्यमेवं वाक्यात्तु धन्यत्वेऽपि वा मुने।
आश्चर्य्यं परमं विष्णुः स ह्यस्माकं परा गतिः। यद्राज्यं वयमश्नीमो ऋतमग्निषु पावन।
तत् सर्व्वं पुण्डरीकाक्षो लोकमूर्त्तिः प्रयच्छति। सोऽहं विष्णुगतिं प्रेप्सुरिह संपतितो भुवि।
दृष्टस्त्वायं मया कृष्णो भवद्भिरिह संवृतः। यन्मयाऽभिहिता ह्येव ममाश्चर्य्यं जनार्द्दन।
धन्यस्त्वमसीति भवतां मध्यस्थो यत्र पार्थिवाः। प्रत्युक्तोऽहमनेनाथ वाक्यस्यास्य यदुत्तरं। ९९७५
दक्षिणाभिः सहैतेयं पर्य्याप्तं वचनं मम। यज्ञानाञ्च गतिर्व्विष्णुः सर्व्वेषाञ्च सदक्षिणः।
दक्षिणाभिः सहैत्येवं प्रश्नो मम समागतान्। कूर्म्मेणाभिहितं पूर्व्वं पारम्पर्य्यादिहागतं।
सदक्षिणेऽस्मिन् पुरुषे तद्वाक्यं प्रतिपादितं। यन्मां भवन्तः पृच्छन्ति वाक्यस्यास्य विनिर्णयं।
तदेतत् सर्व्वमाख्यातं साधु यामि यथागतं। नारदे तु गते स्वर्गं सर्व्वे ते पृथिवीक्षितः।
विस्मिता स्वानि राष्ट्राणि जग्मुः सबलवाहनाः। जनार्द्दनोऽपि सहितो यदुभिः पावकोपमैः। ९९८०
स्वमेव भवनं वीरो विवेश यदुपुङ्गवः।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि आश्चर्य्यप्रश्नोपाख्याने ऊनसप्तत्यधिकशततमोऽध्यायः॥ १६९॥
॥ जनमेजय उवाच ॥
भूय एव महाबाहो कृष्णस्य जगतीपतेः। माहात्म्यं श्रोतुमिच्छामि परमं द्विजसत्तम।
न हि मे तृप्तिरस्तीह शृण्वतस्तस्य धीमतः। कर्म्मणामनुमन्तारं पुराणस्य महात्मनः।
॥ वैशम्पायन उवाच ॥ शान्तः शक्यः प्रभावस्य वक्तुं वर्षशतैरपि। गोविन्दस्य महाराज श्रूयतामिदमद्भुतं।
अरतस्य प्रयातेन भीष्मेण परिचोदितः। गाण्डीवधन्वा बीभत्सुर्माहात्म्यं केशवस्य यत्। ९९८५
राज्ञां मध्ये महाराज ज्येष्ठं भ्रातरमब्रवीत्। युधिष्ठिरं जितामित्रं नीतिं तच्छृणु कौरव।
॥ अर्ज्जुन उवाच ॥ पुराऽहं द्वारकां यातः सम्बन्धीनवलोककः। न्यवसं पूजितस्तत्र भोजवृष्ण्यन्धकोत्तमैः।
ततः कदाचिद्धर्म्मात्मा दीक्षितो मधुसूदनः। एकाहेन महाबाहुः शास्त्रदृष्टेन कर्म्मणा।
ततो दीक्षितमासीनमभिगम्य द्विजोत्तमः। कृष्णं विज्ञापयामास परित्राहीति चाब्रवीत्।
॥ ब्राह्मण उवाच ॥ रक्षाधिकारो भवतः परिरक्षस्व मां विभो। चतुर्थांशं हि धर्म्मस्य रक्षिता लभते फलं। ९९९०
॥ वासुदेव उवाच ॥ न भेतव्यं द्विजश्रेष्ठ रक्षामि त्वां कुतो भयं। ब्रूहि तत्त्वेन भद्रं ते यद्यपि स्यात् सुदुष्करं।
॥ ब्राह्मण उवाच ॥ जातो जातो महाबाहो पुत्रो मे ह्रियतेऽनघ। त्रयो हतास्तुर्थं त्वं कृष्ण रक्षितुमर्हसि।
ब्राह्मण्याः सूतिकालोऽद्य तत्र रक्षा विधीयतां। यथा भ्रियेदपत्यं मे तथा कुरु जनार्द्दन।
॥ अर्ज्जुन उवाच ॥ ततो मामाह गोविन्दो दीक्षितोऽहं क्रताविह। रक्षा च ब्राह्मणे कार्य्या सर्व्वावस्थागतैरपि।
श्रुत्वाऽहमेवं कृष्णस्य ततो वचनमब्रुवं। मां नियोजय गोविन्द रक्षिष्यामि द्विजं भयात्। ९९९५

ततोऽसमुदधिः साक्षादुपतिस्थे जनार्द्दनं । प्राञ्जलिः समुपागम्य किं करोमीति चाब्रवीत् ।
प्रतिगृह्य स तां पूजां तमुवाच जनार्द्दनः । रथपन्थानमिच्छामि त्वया दत्तं महीपते । ९०२५
अथाब्रवीत् समुद्रस्तु प्राञ्जलिर्गरुडध्वजं । प्रसीद भगवन्नेवमन्योऽप्येवं गमिष्यति ।
त्वयैव स्थापितः पूर्व्वमगाधोऽस्मि जनार्द्दन । त्वया प्रवर्त्तिते मार्गे यास्यन्ति गमनीयतां ।
अन्येऽप्येवं गमिष्यन्ति राजानो दर्पमोहिताः । एवं सञ्चिन्त्य गोविन्द यत्क्षमं तत् समाचर ।
॥ वासुदेव उवाच ॥ ब्राह्मणार्थेऽस्मदर्थे च कुरु सागर मद्वचः । मदृते न पुमान् कश्चिदन्यस्त्वां धर्षयिष्यति ।
अथाब्रवीत् समुद्रस्तु पुनरेव जनार्द्दनं । अभिशापभयाद्भीतो बाढमेवं भवत्विति । ९०३०
शोषयाम्येष मार्गं ते येन त्वं कृष्ण यास्यसि । रथेन सह सूतेन सध्वजेन च केशव ।
॥ वासुदेव उवाच ॥ मया दत्तो वरः पूर्व्वं न शोषं यास्यसीति च । मानुषास्ते न जानीयुर्विविधान् रत्नसञ्चयान् ।
जलं स्तम्भय साधो त्वं ततो यास्याम्यहं रथी । न हि कश्चित् प्रमाणन्ते रत्नानां वेत्स्यते नरः ।
सागरेण तथेत्युक्ते प्रस्थिताः स्म जलेन वै । स्तम्भितेन यथा भूमौ मणिवर्णेन भास्वता ।
ततोऽर्णवं समुत्तीर्य्य कुरूनप्युत्तरान् वयं । क्षणेन समतिक्रान्ता गन्धमादनमेव च । ९०३५
ततस्तु पर्व्वताः सप्त केशवं समुपस्थिताः । जयन्तो वैजयन्तश्च नीलो रजतपर्व्वतः ।
महामेरुः सकैलास इन्द्रकूटश्च नामतः । बिभ्राणा वर्णरूपाणि विविधान्यद्भुतानि च ।
उपस्थाय च गोविन्दं किं कुर्म्मेत्यब्रुवंस्तदा । तांश्चैव प्रतिजग्राह विधिवन्मधुसूदनः ।
तानुवाच हृषीकेशः प्रणामावनतान् स्थितान् । विवरं गच्छतो मेऽद्य रथमार्गः प्रदीयतां ।
ते कृष्णस्य वचः श्रुत्वा प्रतिगृह्य च पर्व्वताः । प्रददुः कामतो मार्गं गच्छतो भरतर्षभ । ९०४०
तत्रैवान्तर्हितास्ते च तदाश्चर्य्यतरं मम । अव्याहतश्च रथो याति मेघजालेष्विवांशुमान् ।
ततः कदाचिद्दुःखेन रथमूहुस्तुरङ्गमाः । पङ्कभूतं हि तिमिरं स्पर्शाद्विज्ञायतेऽनघ ।
अथ पर्व्वतभूतं तत्तिमिरं समपद्यत । तदासाद्य महाराज निष्प्रयत्ना हयाः स्थिताः ।
ततश्चक्रेण गोविन्दः पाटयित्वा तमस्तदा । आकाशं दर्शयामास रथपन्थानमुत्तमं ।
निष्क्रम्य तमसस्तस्मादाकाशे दर्शिते तदा । भविष्यामीति संज्ञा मे भयञ्च विगतं मम । ९०४५
ततस्तेजः प्रज्वलितमपश्याम तदाऽम्बरे । सर्व्वलोकं समाविश्य स्थितं पुरुषविग्रहं ।
तं प्रविष्टो हृषीकेशो दीप्तं तेजोनिधिं तदा । रथ एव स्थितश्चाहं स च ब्राह्मणसत्तमः ।
स मुहूर्त्तात्ततः कृष्णो निश्चक्राम तदा प्रभुः । चतुरो बालकान् गृह्य ब्राह्मणस्यात्मजांस्तदा ।
प्रददौ ब्राह्मणायाथ पुत्रान् सर्व्वान् जनार्द्दनः । त्रयः पूर्व्वं हृता ये च सद्यो जातश्च बालकः ।
प्रहृष्टो ब्राह्मणस्तत्र पुत्रान्दृष्ट्वा पुनः प्रभो । अहञ्च परमप्रीतो विस्मितश्चाभवं नृप । ९०५०
ततो वयं पुनः सर्व्वे ब्राह्मणस्य च ते सुताः । यथागता निवृत्ताः स्म तथैव भरतर्षभ ।
ततः स्म द्वारकां प्राप्ताः क्षणेन भरतर्षभ । असम्प्राप्तेऽर्द्धदिवसे विस्मितोऽहं ततः पुनः ।

चतुर्थं भोजयित्वा तं द्विजं कृष्णो महायशाः । धनेन तर्पयित्वा च स्वर्गे मामागमत्तदा ।

॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वासुदेवमाहात्म्ये द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

॥ अर्ज्जुन उवाच ॥ ततः कृष्णो भोजयित्वा ब्रतानि सुबहूनि च । विप्राणामृषिकल्पानां कृतकृत्योऽभवत्तदा ।

ततः सह मया भुक्त्वा वृष्णिभोजैश्च सर्व्वशः । विविधाश्च कथा दिव्याः कथयामास भारत । ९७५५

ततः कथान्ते तत्राहमभिगम्य जनार्द्दनं । अपृच्छमत्यथाश्चर्यं कृतं यद्गरुडासनं ।

कथं समुद्रस्तम्भोदः कृतस्ते कमलेक्षण । पर्व्वतानाञ्च विवरं कृतं ते कथमच्युत ।

तमसञ्च कथं घोरं घनं चक्रेण पाटितं । तत्र यत् परमं तेजः प्रविष्टोऽसि कथञ्च तत् ।

किमर्थं तेन ते बालास्तदा चापहृताः प्रभो । यच्च ते दीर्घमध्वानं सङ्क्षिप्तं तत्कथं पुनः ।

कथञ्चाल्पेन कालेन कृतं सम्बद्धनागमं । एतत् सर्व्वं यथातत्त्वमाचक्ष्व मम केशव । ९७६०

॥ वासुदेव उवाच ॥ मद्दर्शनार्थं ते बाला हृतास्तेन महात्मना । विप्रार्थमेष्यते कृष्णो नागच्छेदन्यथेति च ।

ब्रह्मतेजोमयं दिव्यं महद्यद्दृष्टवानसि । अहं स भरतश्रेष्ठ मत्तेजस्तत् सनातनं ।

प्रकृतिः सा मम परा व्यक्ताव्यक्ता सनातनी । तां प्रविश्य भवन्तीह मुक्ता योगविदुत्तमाः ।

सा साङ्ख्यानां गतिः पार्थ योगिनाञ्च तपस्विनां । तत्पदं परमं ब्रह्म सर्व्वं विभज्यते जगत् ।

मामेव तत्परन्तेजो ज्ञातुमर्हसि भारत । समुद्रस्तम्भितो योऽहमहं स्तम्भयितः जलं । ९७६५

अहं ते पर्व्वताः सत्र ये दृष्टा विविधास्त्वया । पद्मभूतं हि तिमिरं दृष्टवानसि यद्धि तत् ।

अहं तमो घनीभूतमहमेव च पाटकः । अहञ्च कालो भूतानां धर्म्मश्चाहं प्रकीर्त्तितः ।

चन्द्रादित्यौ मही शैलाः सरितश्च सरांसि च । चतस्रश्च दिशः सर्व्वाः सर्व्वात्मा चतुर्व्विधः ।

चतुर्व्वर्णं मत्प्रसूतं चातुराश्रम्यमेव च । चातुर्व्विद्यस्य कर्त्ताऽहमिति बुध्यस्व भारत ।

॥ अर्ज्जुन उवाच ॥ भगवन् सर्व्वभूतेश वेत्तुमिच्छामि ते प्रभो । पृच्छामि त्वां प्रपन्नोऽहं नमस्ते पुरुषोत्तम । ९७७०

॥ भगवानुवाच ॥ ब्रह्म च ब्राह्मणाश्चैव तपः सत्यञ्च भारत । उग्रं तृष्टदण्डश्चैव मत्तस्तद्विद्धि पाण्डव ।

प्रियस्तेऽहं महाबाहो प्रियो मेऽसि धनञ्जय । तेन ते कथयिष्यामि नान्यथा वक्तुमर्हसे ।

अहं यजूंषि सामानि ऋचश्चाथर्व्वणानि च । ऋषयो देवता यज्ञा मत्तेजो भरतर्षभ ।

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं । चन्द्रादित्यावहोरात्राः पक्षा मासास्तथर्त्तवः ।

मुहूर्त्ताश्च कलाश्चैव क्षणाः संवत्सरास्तथा । मन्त्राश्च विविधाः पार्थ यानि शास्त्राणि कानिचित् । ९७७५

विद्याश्च वेदितव्यञ्च मत्तः प्रादुर्भवन्ति वै । मन्मयं विद्धि कौन्तेय सर्व्वं सृष्टिञ्च भारत ।

सत्त्वामञ्च ममैवात्मा सदसच्चैव तत् परं ।

॥ अर्ज्जुन उवाच ॥ एवमुक्तोऽस्मि कृष्णेन प्रीयता भरतर्षभ । तथैव च मनो नित्यमभवन्मे जनार्द्दने ।

एतच्छ्रुतञ्च दृष्टञ्च माहात्म्यं केशवस्य मे । यन्मां पृच्छसि राजेन्द्र भूयस्तातो जनार्द्दने ।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा कुरुश्रेष्ठो धर्म्मराजो युधिष्ठिरः । पूजयामास मनसा गोविन्दं पुरुषोत्तमं । ९७८०

निर्व्विण्णश्चाभवद्राजा सह सर्व्वैः सहोदरैः । राजभिश्च महावीर्य्यैर्ये तथान्ये समागताः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वासुदेवमाहात्म्ये त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

॥ जनमेजय उवाच ॥ भूय एव द्विजश्रेष्ठ यदुसिंहस्य धीमतः । कर्म्माण्यपरिमेयाणि श्रोतुमिच्छामि तत्त्वतः ।
श्रूयन्ते विविधानि स्म अद्भुतानि महाद्युते । असङ्ख्येयानि गुह्यानि प्राकृतान्यपि सर्व्वशः ।
यान्यहं विविधान्यस्य श्रुत्वा प्रीतिं महामते । प्रभूयाः सर्व्वशस्तात तानि मे शृण्वतोऽनघ ।
॥ वैशम्पायन उवाच ॥ बहून्याश्चर्य्यभूतानि केशवस्य महात्मनः । कर्म्माण्यद्भुतानि वै राजन् भूयश्चैव श्रुतानि ते । ९८६५
कथितानि मया साधो नान्तं शक्यं हि कर्म्मणां । गन्तुं भरतशार्दूल विस्तराणां महात्मनः ।
अवश्यञ्च मया वाच्यं संक्षेपमात्रेण भारत । विष्णोरतुलवीर्य्यस्य प्रथितोदारकर्म्मणः ।
आनुपूर्व्व्या प्रवक्ष्यामि शृणुष्वैकमना नृप । द्वारवत्यां निवसता यदुसिंहेन धीमता ।
शस्त्राणि नृपमुख्यानां शोभितानि महात्मनां । यदूनामन्तरप्रेप्सुर्निकुम्भो दानवो हतः ।
पुरं प्राग्ज्योतिषं गत्वा पुनस्तेन महात्मना । समुद्रमध्ये दुष्टात्मा नरको दानवो हतः । ९८७०
तामवश्च रणे जित्वा पारिजातो हृतो बलात् । निर्ज्जितश्चैव भगवान् वरुणो लोहिते ह्रदे ।
दन्तवक्रश्च कारूषो निहतो दक्षिणापथे । शिशुपालस्य सम्पूर्णे किल्विषे कथिते हतः ।
गत्वा च शोणितपुरं शङ्करेणाभिरक्षितः । बलेः सुतो महावीर्य्यो बाणो बाहुसहस्रवान् ।
महामृधे महाराज जित्वा जीवन्विसर्ज्जितः । निर्ज्जिताः पावकाश्चैव गिरिमध्ये महात्मना ।
शाल्वश्च विजितः सङ्ख्ये सौभश्च विनिपातितः । विक्षोभ्य सागरञ्चैव पाञ्चजन्यो वशीकृतः । ९८७५
हयग्रीवश्च निहतो नृपाश्चान्ये महाबलाः । जरासन्धस्य निधने मोचिताश्च नृपास्तदा ।
रथेन जित्वा नृपतीन् गान्धारतनया हृता । भ्रष्टराज्याश्च शोकार्त्ताः पाण्डवाः परिरक्षिताः ।
दाहितं तु वनं घोरं पुरुहूतस्य खाण्डवं । गाण्डीवञ्चाग्निना दत्तमर्ज्जुनायोपपादितं ।
दैत्यश्च तत्र हतो घोरे विग्रहे जनमेजय । अनेन यदुमुख्येन यदुवंशश्च वर्द्धितः ।
कुन्त्याश्च प्रमुखे प्रोक्ता प्रतिज्ञा पाण्डवान् प्रति । निवृत्ते भारते युद्धे प्रतिदास्यामि ते सुतान् । ९८८०
मोचितश्च महातेजा नृपः शापात् सुदारुणात् । यवनश्च हतः सङ्ख्ये काल इत्यभिविश्रुतः ।
वानरौ द्वौ महावीर्य्यौ मैन्दो द्विविद एव च । विजितौ युद्धदुर्द्धर्षौ जाम्बवांश्च पराजितः ।
सान्दीपनेस्तथा पुत्त्रस्तव चैव पिता नृप । गतौ वैवस्वतवशं जीवितौ तस्य तेजसा ।
संग्रामा बहवः प्राप्ता घोरा नरवरक्षयाः । निहताश्च नृपाः सर्व्वे कृत्वा तद्रूपमद्भुतं ।
जनमेजय युद्धेषु तथा ते वर्णितं मया । ९८८५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वासुदेवमाहात्म्ये चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

॥ जनमेजय उवाच ॥ भूय एव महाबाहो यदुसिंहस्य धीमतः । कर्म्माण्यपरिमेयाणि श्रुतानि द्विजसत्तम ।
त्वत्तः श्रुतवतां श्रेष्ठ वासुदेवस्य धीमतः । यदेतत् कथितं पूर्व्वं बाणं प्रति महासुरं ।
तदहं श्रोतुमिच्छामि विस्तरेण तपोधन । कथञ्च देवदेवस्य पुत्त्रत्वमसुरो गतः ।

योऽभिगुप्तः स्वयं ब्रह्मन् शङ्करेण महात्मना । सहपार्षदगणेनैव समेतेन गुहेन च ।

दहेर्ज्येष्ठसुतः पुत्रो ज्येष्ठो भ्रातृशतस्य यः । स्मृतो बाहुसहस्रेण दिव्यास्त्रशतधारिणा । १०८१०

सर्व्वैश्चैव महाकायैर्नानायुधधरैः शुभैः । वासुदेवेन स कथं सङ्ख्ये बाणः पराजितः ।

संरब्धैः द्वन्द्वयुद्धार्थी जीवन्मुक्तः कथञ्च सः ।

॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजन् कृष्णस्यामिततेजसः । मनुष्यलोके बाणेन यथा ऽभूद्विग्रहो महान् ।

वासुदेवेन यत्रासौ रुद्रस्कन्दसहायवान् । बलिपुत्रो रणश्लाघी जित्वा जीवन् विसर्ज्जितः ।

यथा चास्य वरो दत्तः शङ्करेण महात्मना । नित्यं सान्निध्यता चैव गाणपत्यं यथाऽक्षयं । १०८१५

यथा बाणस्य तद्युद्धं जीवन्मुक्तो यथा च सः । यथा च देवदेवस्य पुत्रत्वं सोऽसुरो गतः ।

यदर्थञ्च महद्युद्धं तत् सर्व्वमखिलं शृणु । दृष्ट्वा वपुः कुमारस्य क्रीडतश्च महात्मनः ।

बलिपुत्रो महावीर्य्यो विस्मयं परमं गतः । तस्य बुद्धिः समुत्पन्ना तपश्चर्त्तुं सुदारुणं ।

रुद्रस्याराधनार्थाय यथास्य स्यामहं सुतः । ततोऽतपयदात्मानं तपसा सोऽसुरोत्तमः ।

देवस्यास्य परं तोषं जगाम स महीपते । श्रीकण्ठश्च परां प्रीतिं गत्वा ऽसुरमथाब्रवीत् । १०८२०

वरं वृणीष्व भद्रं ते यत्ते मनसि वर्त्तते । अथ बाणोऽब्रवीद्वाक्यं देवदेवं सनातनं ।

देव्याः पुत्रत्वमिच्छामि त्वया दत्तं त्रिलोचन । शङ्करस्तु तथेत्युक्त्वा रुद्राणीमिदमब्रवीत् ।

कनीयान् कार्त्तिकेयस्य पुत्रोऽयं प्रतिगृह्यतां । यत्रोत्थितो महासेनः सोऽग्निजो रुधिरे पुरे ।

तत्रोद्देशे पुरञ्चास्य भविष्यति न संशयः । नाम्ना तच्छोणितपुरं भविष्यति पुरोत्तमं ।

मयाऽभिगुप्तं श्रीमच्च न कश्चित् प्रधर्षयिष्यति । ततः स निवसन् बाणः पुरे शोणितसाह्वये । १०८२५

राज्यं प्रशासते दिव्यं क्षोभयन् सर्व्वदेवताः । अथ वीर्य्यमदोन्मत्तो बाणो बाहुसहस्रवान् ।

अचिन्तयन् देवगणान् युद्धमाकाङ्क्षते सदा । ध्वजञ्चास्य ददौ प्रीतः कुमारोऽग्निसन्निभं ।

वाहनञ्चैव बाणस्य मयूरं दीप्ततेजसं । न देवा न च गन्धर्व्वा न यक्षा न च पन्नगाः ।

तस्य युद्धे व्यतिष्ठन्त देवदेवस्य तेजसा । त्र्यम्बकेनाभिगुप्तश्च दर्पोत्सिक्तो महासुरः ।

भूयो मृगयते युद्धं त्रिलोचनमथागमत् । स रुद्रमभिगम्याथ प्रणिपत्याभिवाद्य च । १०८३०

बलिसूनुरिदं वाक्यं पप्रच्छ वृषभध्वजं । असकृन्निर्ज्जिता देवाः ससाध्याः समरुद्गणाः ।

मया वज्रसहस्राक्षः सशैन्येन तथाभ्ययात् । इमं देशं समागम्य वसन्ति स्म पुरे सुखं ।

ते पराजयसंत्रस्ता निराशा मत्पराजये । नाकपृष्ठमुपागम्य निवसन्ति यथासुखं ।

सोऽहं निराशो युद्धस्य जीवितं नाद्य कामये । अयुध्यतो वृथा ह्येषां बाहूनां धारणं मम ।

तद्ब्रूहि मम युद्धस्य कच्चिदागमनं भवेत् । न मे युद्धं विना देव रतिरस्ति प्रसीद मे । १०८३५

ततः प्रहस्य भगवानब्रवीद्वृषभध्वजः । भविता बाण युद्धं ते यथा तच्छृणु दानव ।

ध्वजस्यास्य यदा भङ्गस्तव तात भविष्यति । स्वे स्थाने स्थापितस्यास्य तदा युद्धं भविष्यति ।

इत्येवमुक्तः प्रहसन् बाणः सुबहुशो मुदा । प्रसन्नवदनो भूत्वा पादयोः पतितोऽब्रवीत् ।

दिष्ट्या बाहुसहस्रस्य न वृथाधारणं मम । दिष्ट्या सहस्राक्षमहं विजेता पुनराहवे ।
आनन्दजाश्रुपूर्णाभ्यां नेत्राभ्यामरिमर्द्दनः । पञ्चाञ्जलिशतैर्द्देवं पूजयन् पतितो भुवि । ९८४०
॥ महेश्वर उवाच ॥ उत्तिष्ठोत्तिष्ठ बाणनामात्मजस्य कुलस्य च । यदृच्छं प्राप्स्यसे वीर युद्धमप्रतिमं महत् ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्ततो बाणस्त्र्यम्बकेण महात्मना । हर्षेणाभ्युत्थितः शीघ्रं पूजयन् वृषभध्वजं ।
शितिकण्ठविसृष्टस्तु बाणः परपुरञ्जयः । ययौ स्वमेव भवनं यत्र ध्वजगृहं महत् ।
तत्रोपविष्टः प्रहसन् कुम्भाण्डमिदमब्रवीत् । प्रियमावेदयिष्यामि भवतो यन्मनोनुगं ।
इत्येवमुक्तः प्रहसन् बाणमप्रतिमं रणे । प्रोवाच राजन् किन्त्वेतत् वक्तुकामोऽसि मे प्रियं । ९८४५
विस्मयोत्फुल्लनयनः प्रहर्षाद्दैत्यसत्तम । त्वत्तस्तच्छ्रोतुमिच्छामि वरं किं लब्धवानसि ।
देवदेवप्रसादात्तु स्कन्दस्य च महात्मनः । ईप्सितं किं त्वया प्राप्तं तन्मे ब्रूहि महासुर ।
शितिकण्ठप्रसादेन स्कन्दगोपायनेन च । कच्चित् त्रैलोक्यराज्यं ते व्यादिष्टं शूलपाणिना ।
कच्चिदिन्द्रस्तव भयात् पातालमुपयास्यति । कच्चिद्विष्णुभयं त्रासं विनाश्यन्ति दितेः सुताः ।
यस्य चक्रभयत्रस्ता वसन्ति सलिलाशये । कच्चिच्छार्ङ्गगदापाणेः स्थितस्य परमाहवे । ९८५०
न विष्णोर्भयसंत्रस्ताः प्रयास्यन्ति दितेः सुताः । पातालवासमुत्सृज्य कच्चित्तव बलाश्रयात् ।
विबुधावासनिरता भविष्यन्ति महासुराः । बलिर्व्विष्णुबलाक्रान्तो बद्धस्तव पिता नृप ।
सलिलौघाद्विनिःसृत्य कच्चिद्राज्यमवाप्स्यति । दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं ।
कच्चिद्देवार्च्चितं तात द्रक्ष्यामः पितरं तव । कच्चित्त्रिभिः क्रमैः पूर्व्वं हृताल्लोकानिमान् प्रभो ।
पुनः प्रत्यानयिष्यामो जित्वा सर्व्वान् दिवौकसः । शङ्खचक्रगदाशार्ङ्गनिर्घोषं शङ्खस्वनपुरोजवं । ९८५५
कच्चिन्नारायणं देवं जेष्यामः समितिञ्जयं । कच्चिद्वृषध्वजस्तात प्रसादसुमुखस्तव ।
यथा ते हृदयोत्कम्पः साश्रुबिन्दुः प्रवर्त्तते । कच्चिदीश्वरतोषेण कार्त्तिकेयमतेन च ।
प्राप्तवानसि सर्व्वेषामस्माकं पार्थिवं पदं । इति कुम्भाण्डवचनैश्चोदितः सोऽसुरोत्तमः ।
बाणो बाणोऽसमसक्तो प्रोवाच वदतां वरः ।
॥ बाण उवाच ॥ चिरात् प्रभृति कुम्भाण्ड न युद्धं प्राप्यते यदा । ततो मया मुदा पृष्टः शितिकण्ठः प्रतापवान् । ९८६०
युद्धाभिलाषः सुमहान् देव संजायते मम । अपि प्राप्स्याम्यहं युद्धं मनस्तुष्टिविवर्द्धनं ।
ततोऽहं देवदेवेन हरेणामितघातिना । प्रहस्य सुचिरं कालमुक्तोऽस्मि वचनं प्रियं ।
प्राप्स्यसे सुमहद्युद्धं बाण त्वं नचिरादिव । मयूरध्वजभङ्गस्ते भविष्यति यदाऽसुर ।
तदा त्वं प्राप्स्यसे युद्धं सुमहद्दितिनन्दन । ततोऽहं परमप्रीतो भगवन्तं वृषध्वजं ।
प्रणम्य शिरसा देवं तवान्तिकमुपागतः । इत्येवमुक्तः कुम्भाण्डः प्रोवाच नृपतिन्तदा । ९८६५
अहो न शोभनं राजन् यदेवं भाषसे वचः । एवं कथयतोरेव तयोरन्योन्यमुच्छ्रितः ।
ध्वजः पपात वेगेन शक्राशनिसमाहतः । तं तथा पतितं दृष्ट्वा सोऽसुरो ध्वजमुत्तमं ।

प्रहर्षमतुलं लेभे मेने चाहवमागतं । ततश्चकम्पे वसुधा शक्राशनिसमाहता ।
ननादान्तर्हितो भूमौ वृषदंशो जगर्ज च । देवानामपि यो देवः सोऽप्यवर्षत वासवः ।
शोणितं शोणितपुरे सर्व्वतः पुरमन्तिकात् । सूर्य्यं भित्त्वा महोल्का च पपात धरणीतले ।
स्वपक्षे चोदितः सूर्य्यो भरणीं समपीडयत् । चैत्यवृक्षेषु सहसा धाराः शतसहस्रशः ।
शोणितस्यास्रवन् घोरा निपेतुस्तारका भृशं । राहुरग्रसदादित्यमपर्व्वणि विशाम्पते ।
लोकक्षयकरे काले निर्घातश्चापतन्महान् । दक्षिणां दिशमास्थाय धूमकेतुस्ततोऽभवत् ।
अनिशञ्चाप्यविच्छिन्ना ववुर्व्वाताः सुदारुणाः । श्वेतलोहितपर्य्यन्तः कृष्णग्रीवस्तडिद्युतिः ।
त्रिवर्णपरिघो भानुः सन्ध्यारागमथावृणोत् । वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः ।
बाणस्य जन्मनक्षत्रं भर्त्सयन्निव सर्व्वशः । अनेकशाखश्चैत्यश्च निपपात महीतले ।
अर्चितः सर्व्वकन्याभिर्दानवानां महात्मनां । एवं विविधरूपाणि निमित्तानि निशामयन् ।
बाणो मदबलोन्मत्तो निश्चयं नाध्यगच्छत । विचिन्तयन्नभवत् प्राज्ञः कुम्भाण्डस्तत्त्वदर्शिवान् ।
बाणस्य सचिवस्तत्र चिन्तयन् बहुकिल्बिषं । उत्पाता ह्यत्र दृश्यन्ते कथयन्तो न शोभनं ।
तव राज्यविनाशाय भविष्यन्ति न संशयः । वयञ्चान्ये च सचिवा भृत्या ये च तवानुगाः ।
क्षयं यास्यन्ति न चिरात् सर्व्वे पार्थिवदुर्न्नयात् । यथा शक्रध्वजस्तेऽद्य स्वदर्पात् पतनं भवेत् ।
रणमाकाङ्क्षते मोहात् तथा बाणस्य गर्हितः । देवदेवप्रसादेन त्रैलोक्यविजयं गतं ।
त्रैलोक्याद्यधुना नाशो युद्धकाङ्क्षी ननर्द च । बाणः शीतसमायुक्त पयो पानमनुत्तमं ।
दैत्यदानवनारीभिः शार्दूलसमविक्रमः । कुम्भाण्डश्चिन्तयाविष्टो राजवेश्मान्ययात्तदा ।
अचिन्तयच्च तस्यार्थे तैरुत्पातनिदर्शनैः । राजा प्रमादी दुर्ब्बुद्धिर्जितकाशी मदोत्कटः ।
युद्धमेवाभिजल्पते न दोषाञ्जल्पते महान् । महोत्पातभयश्चैव न तस्माद्वा भविष्यति ।
अपीदानीं भवेन्मिथ्या सर्व्वमुत्पातदर्शनं । इह त्वास्ते विनयतः कार्त्तिकेयस्य वीर्य्यवान् ।
तेनोत्पन्नोऽपि दोषो नः कश्चिद्रक्षेत् पराभवं । उत्पन्नदोषप्रभवः क्षयोऽयं भविता महान् ।
दोषाणां न भवेन्नाश इति मे धीयते मतिः । नियतं दोष एवायं भविष्यति न संशयः ।
दौरात्म्यान्नृपतेरस्य दोषभाजो हि दानवाः । देवदानवसंघानां यः कर्त्ता भुवनप्रभुः ।
स भवः कार्त्तिकेयश्च कृतवासौ हि नः पुरे । प्राणैः प्रियतरो नित्यं भवस्य तु गुहः सदा ।
तद्विशिष्टश्च बाणोऽपि भवस्य सततं प्रियः । दर्पोत्सेकात्तु नाज्ञाय वरं याचितवान् भवं ।
युद्धहेतोः स लब्धस्तु सर्व्वथा न भविष्यति । यदि विष्णुपुरोगाणामिन्द्रादीनां दिवौकसां ।
भविता ह्यभयप्राप्तिर्भवहस्तात् कृतं भवेत् । एतयोश्च हि को युद्धं कुमारभवयोरिह ।
शक्तो दातुं समागम्य बाणसाहाय्यकारिणोः । न च देववचो मिथ्या भविष्यति कथञ्चन ।
भविष्यति महद्युद्धं सर्व्वदैत्यविनाशनं । एवं स चिन्तयाविष्टः कुम्भाण्डस्तत्त्वदर्शिवान् ।

स्वस्तिप्रणिहितां बुद्धिं चकार सुमहासुरः । ये हि देवैर्निबध्यन्ते पुण्यकर्म्मभिराहवे ।
यथा बलिर्नियमितस्तथा ते यान्ति सद्गतिं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे कुम्भाण्डवाक्ये पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥
॥ वैशम्पायन उवाच ॥ क्रीडाविहारोपगतः कदाचिदभवद्भवः । देव्या सह नदीतीरे रम्ये श्रीमति स प्रभुः ।
शतानि तत्राप्सरसां क्रीडन्ति स्म समन्ततः । सर्व्वर्त्तुकवने रम्ये गन्धर्व्वपतयस्तदा । ९९००
कुसुमैः पारिजातस्य पुष्पैः सन्तानकस्य च । गन्धोद्दाममिवाकाशं नदीतीरञ्च सर्व्वशः ।
वेणुवीणामृदङ्गैश्च पणवैश्च सहस्रशः । वाद्यमानैः स शुश्राव गीतमप्सरसां तथा ।
सूतमागधकल्पैश्चाप्यस्तुवन्नप्सरोगणाः । देवदेवं सुवपुषं त्र्यम्बकं रक्तवाससं ।
हरं महेशं वरदं रमयन्ति मनोरमाः । ततस्तु देव्या रूपेण चित्रलेखा वराऽप्सराः ।
भवं प्रसादयामास देवी च प्राहसत्तदा । प्रसादयन्तीमीशानं प्रहसन्त्यप्सरोगणाः । ९९०५
भवस्य पार्षदा दिव्या नानारूपा महौजसः । देव्या समनुज्ञया सर्व्वे क्रीडन्ते तत्र तत्र वै ।
अथ ते पार्षदास्तत्र रहस्येषु विपश्चितः । महादेवस्य रूपेण तच्चित्रं रूपमास्थिताः ।
ततो देव्यास्तु रूपेण लीलया वदनेन च । देवी प्रहासं मुमुचे ताश्चैवाप्सरसस्तदा ।
ततः किलकिलाशब्दः प्रादुर्भूतः समन्ततः । प्रहर्षमतुलञ्चापि लेभे प्रीतमना भवः ।
वाणस्य दुहिता कन्या तत्रोषा नाम भाविनी । देवं प्रक्रीडितं दृष्ट्वा देव्या सह नदीगतं । ९९१०
दीप्यमानं महात्मानं द्वादशादित्यवर्चसं । नानारूपं वपुः कृत्वा देव्याः प्रियचिकीर्षया ।
ऊषा मनोरथञ्चक्रे पार्व्वत्याः सन्निधौ तदा । धन्या हि भर्तृसहिता रमन्त्येवं समागताः ।
मनसा तस्य सङ्कल्पमुषया भावितं यथा । विज्ञाय तमभिप्रायमुषायाः पर्व्वतात्मजा ।
प्राह देवी ततो वाक्यमूषां हर्षयती शनैः । ऊषे शीघ्रं त्वमप्येवं भर्त्रा सह रमिष्यसि ।
यथा देवो मया सार्द्धं शङ्करः शत्रुतापनः । एवमुक्ते तदा देव्या वाक्ये चिन्ताविलक्षणा । ९९१५
ऊषा भावं तदा चक्रे भर्त्रा रंस्ये कदा सह । तदा हैमवती वाक्यं सम्प्रहस्येदमब्रवीत् ।
ऊषे शृणुष्व वाक्यं मे यदा संयोगमेष्यसि । वैशाखे मासि शुक्लायां द्वादश्यां त्वां दिनक्षये ।
रमयिष्यति यः स्वप्ने स ते भर्त्ता भविष्यति । एवमुक्ता दैत्यसुता कन्यागणसमावृता ।
अपाक्रामत हर्षेण रममाणा यथासुखं । ततः सखीभिर्हास्यन्ती हर्षेणोत्फुल्ललोचना ।
तालिकासन्निपातैश्च अन्योन्यमनुकूर्ज्जिताः । किन्नर्य्यो यक्षकन्याश्च नागदैतेयकन्यकाः । ९९२०
अप्सरोगणकन्याश्च ऊषायाः सखिनाकृताः । उक्ता च तत्र ताभिः सा भर्त्ता तव वरानने ।
भविष्यत्यचिरेणैव देव्या वचनकल्पितः । न हि देव्या वचो मिथ्या भविष्यति कदाचन ।
रूपाभिजनसम्पन्नः पतिस्ते कल्पितस्तया । ऊषा सखीनां तद्वाक्यं प्रतिपूज्य यथाविधि ।
दत्तं मनोरथं देव्या भावयन्ती व्यतिष्ठत । ततः क्रीडाविहारन्तमनुभूय सहोमया ।
गतेऽहनि ततः सर्व्वास्ता नार्य्यः परमाद्भुताः । ययुः स्वानालयान् सर्व्वा देवी चादर्शनं गता । ९९२५

काचिद्गेयरता यानैर्गेयैरन्यास्तथा रथैः । पुरं प्रविविशुर्हृष्टाः काश्चिदाकाशमाश्रिताः ।
ततो वर्षे प्रयाते तु वैशाखे मासि भाविनी । द्वादश्यां शुक्लपक्षस्य सखीभिः संवृता तदा ।
यथोक्तः पुरुषः स्वप्ने रमयामास तां तदा । निषेव्यमाणां रुदतीं देव्या वचनचोदितः ।
सा स्वप्ने धर्षिता तेन स्त्रीभावश्चापि लम्भिता । शोणिताक्ता प्ररुदती सहसैवोत्थिता निशि ।
तां तथा रुदतीं दृष्ट्वा सखीभयसमन्वितां । चित्रलेखा वचः स्निग्धमुवाच परमाद्भुतं । ९९१०
ऊषे मा भैः किमेवं त्वं रुदती परितप्यसे । बलेः सुतसुता हि त्वं प्रख्याता किं भयान्विता ।
न भयं विद्यते लोके तव सुभ्रु विशेषतः । अभयस्तव वामोरु पिता देवान्तको रणे ।
उत्तिष्ठोत्तिष्ठ भद्रं ते विषादं मा कृथाः शुभे । नैवंविधेषु वाक्येषु भयमस्ति वरानने ।
अस्मद्देवमहितः शचीभर्त्ता सुरेश्वरः । अप्राप्त एव नगरं पिता ते महितो रणे ।
अयं देवसमूहेषु भयदस्ते पिता सखि । महासुरवरः श्रीमान् बलेः पुत्रो महाबलः । ९९१५
एवं साऽतिहिता सख्या बाणपुत्री यशस्विनी । स्वप्नकं यथा दृष्टं तथा सर्व्वं न्यवेदयत् ।
॥ ऊषोवाच ॥ एवं संधर्षिता साध्वी कथं जीवितुमुत्सहे । पितरं किन्नु वक्ष्यामि देवशत्रुमरिन्दमं ।
एवं संदूषणकरी वंशस्यास्य महौजसः । श्रेयो हि मरणं मह्यं न मे श्रेयोऽद्य जीवितं ।
ईप्सितो वा यया कश्चित् पुरुषोऽधिगतो हि मे । निद्रायां जाग्रती चाहं नीता केन दशामिमां ।
कथमेवं कृता नाम कन्या जीवितुमुत्सहे । कुलोपक्रोशनकरी कुलाङ्गारी निराश्रया । ९९२०
जीवितं स्पृहयेन्नारी साध्वीनामग्रतः स्थिता । इत्येवं बाष्पपूर्णाक्षी सखीगणवृता तदा ।
विललाप चिरं कालमूषा कमललोचना । अनाथवत्तां रुदतीं सख्यः सर्व्वा निशेतम ।
ऊचुरश्रुपरीताक्ष्य ऊषां सर्व्वाः समागताः । दृष्टेन मनसा देवि शुभं वा यदि वाऽशुभं ।
क्रियते न च ते सुभ्रु कच्चिद्दुष्टं मनः शुभं । प्रसभं देवि संयोगाद्यदि भुक्ताऽसि भामिनि ।
स्वप्नयोगेन कल्याणि व्रतलोपो न विद्यते । व्यभिचारेण ते देवि नास्ति कश्चिद्व्यतिक्रमः । ९९२५
न च स्वप्नकृतो दोषो मर्त्त्यलोकेऽस्ति सुन्दरि । एवं विप्रर्षभा देवि धर्म्मज्ञाः कथयन्ति वै ।
मनसा चैव वाचा च कर्म्मणा च विशेषतः । दुष्टा या त्रिभिरेतैस्तु पापा सा प्रोच्यते बुधैः ।
न च ते दृश्यते भीरु मनः प्रचलितं सदा । कथं त्वं दोषदुष्टा वै नियता ब्रह्मचारिणी ।
यदि सुप्ता सती साध्वी शुद्धभावा मनस्विनी । इमामवस्थां नीता त्वं नैव धर्म्मो विलुप्यते ।
यस्या दुष्टं मनः पूर्व्वं कर्म्मणा चोपपादितं । तामाशुरवतीं नाम सती त्वमसि भाविनि । ९९३०
कुलजा रूपसम्पन्ना सर्व्वैः समुदिता गुणैः । इमामवस्थां नीताऽसि कालो हि दुरतिक्रमः ।
इत्येवमुक्ता रुदती बाष्पेणाकुलितेक्षणा । कुम्भाण्डदुहिता वाक्यं परमन्यदमब्रवीत् ।
त्यज शोकं विशालाक्षि अपापा त्वं वरानने । श्रुतं मे यदिदं वाक्यं [illegible] तच्छृणु ।
ऊषे यदुक्ता देव्याऽसि भर्त्तारं ध्यायती तदा । समीपे देवदेवस्य स्मर भाविनि तद्वचः ।
द्वादश्यां शुक्लपक्षस्य वैशाखे मासि यो निशि । हर्म्ये शयानां रुदतीं स्त्रीभावमुपनेष्यति । ९९३५

भविता स हि ते भर्त्ता शूरः शत्रुनिवर्हणः । इत्युवाच वचो हृष्टा देवी तव मनोनुगं ।
न हि तद्वचनं मिथ्या पार्व्वत्या यदुदाहृतं । तत्त्वं किमिदमत्यर्थं रोदिषीन्दुनिभानने ।
एवमुक्ता तु वचनं स्मृत्वा देवीवचस्तु तत् । अभवन्नष्टशोका सा बाणपुत्री शुभेक्षणा ।
॥ ऊषोवाच ॥ स्मरामि भाविनि वचो देव्याक्रीडगते भवे । यथोक्तं सर्व्वमखिलं मातः सम्यक्तदा मया ।
भर्त्ता तु मम यद्येव लोकनाथस्य भार्य्यया । व्यादिष्टः स कथं शक्यस्त्वत्र कार्य्यं विधीयतां ।　　९९६०
इत्येवमुक्ते वचने कुम्भाण्डदुहिता पुनः । व्याजहार यथान्यायमर्थतत्त्वविशारदा ।
न हि तस्य कुलं देवि न कीर्त्तिं नापि पौरुषं । कश्चिज्जानाति तत्त्वेन किमिदं त्वं विकत्थसे ।
अदृष्टश्चाश्रुतश्चैव दृष्टः स्वप्ने त्वया शुभे । कथं शक्यो भवेद्भीरु सोऽस्माभीरन्तिकं नरः ।
येन त्वमसितापाङ्गि रक्तकाशिनि विक्रमात् । रुदती प्रसभं भुक्ता प्रविश्यान्तःपुरं सखि ।
न ह्यसौ प्राकृतः कश्चिद्यः प्रविष्टः प्रमत्तवान् । नगरं लोकविख्यातमेकः शत्रुनिवर्हणः ।　　९९६५
आदित्या वसवो रुद्रा अश्विनौ च महौजसौ । न शक्ताः शोणितपुरं प्रवेष्टुं भीमविक्रमाः ।
सोऽयमेतैः शतगुणैर्व्विशिष्टश्चाग्निसुन्दनः । प्रविष्टः शोणितपुरं बाणमाक्रम्य मूर्द्धनि ।
यस्या नैवंविधो भर्त्ता भवेद्युद्धविशारदः । कस्तस्या जीवितेनार्थो भोगैर्व्वा स्यात्कुमेखले ।
धन्याऽस्म्यनुगृहीताऽस्मि यस्यास्ते पतिरीदृशः । प्राप्तो देव्याः प्रसादेन कन्दर्पसमविग्रहः ।
इदं तु यत् कार्य्यतमं शृणु त्वं यन्मयेरितं । विशेषो यस्य पुत्रोऽसौ यन्नामा यत्कुलस्य सः ।　　९९७०
इत्येवमुक्ते वचने सैषा काममोहिता । उवाच कुम्भाण्डसुतां कथं ज्ञास्याम्यहं सखि ।
त्वमेव चिन्तय सखि नोत्तरं प्रतिभाति मे । स्वकार्य्ये मुह्यते सर्व्वो यथा जीवं लभाम्यहं ।
ऊषाया वचनं श्रुत्वा रामा वाक्यमिदं पुनः । उवाच रुदतीश्चैव कुम्भाण्डतनया सखीं ।
कुशला ते विशालाक्षि सर्व्वथा सन्धिविग्रहे । अप्सरा चित्रलेखा वै क्षिप्रं विज्ञाप्यतां सखि ।
अस्याः सर्व्वमशेषं वै त्रैलोक्यं विदितं सदा । एवमुक्ता तदैवोषा हर्षेणागतविस्मया ।　　९९७५
तामप्सरसमानाय्य चित्रलेखां सखीं प्रियां । कृताञ्जलिपुटा दीना ऊषा वचनमब्रवीत् ।
चित्रलेखामप्सरसं प्रणयात्ता सखीमिदं । परमं शृणु मे वाक्यं यत्त्वां वक्ष्यामि भाविनि ।
भर्त्तारं यदि मे ह्यद्य त्वं नानयिष्यसि मत्प्रियं । कान्तं पद्मपलाशाक्षं मत्तमातङ्गविक्रमं ।
त्यक्ष्याम्यहं प्रियान् प्राणांस्ततः कमललोचने । चित्रलेखाऽब्रवीद्वाक्यमुषां हर्षयती शनैः ।
नैषोऽर्थः शक्यतेऽस्माभिर्वक्तुं भाविनि सुव्रते । न कुलेन न वर्णेन नश्शीलेन न रूपतः ।　　९९८०
न देशतश्च विज्ञातः स हि चौरो मया सखि । किन्तु शक्यं यथा कर्त्तुं बुद्धिपूर्व्वं मया सखि ।
प्राप्तस्त्वं शृणु मे वाक्यं यथा काममवाप्स्यसि । देवदानवयक्षाणां गन्धर्व्वोरगरक्षसां ।
ये विशिष्टाः प्रभावेण रूपेणाभिजनेन च । यथाप्रधानतः सर्व्वानालिखिष्याम्यहं सखि ।
मनुष्यलोके ये चापि प्रवरा लोकविश्रुताः । सततं तेन ते भीरु दर्शयिष्यामि तानहं ।
ततो विज्ञाय पद्मस्थं भर्त्तारं प्रतिलप्स्यसे । सा चित्रलेखया प्रोक्ता ऊषा हितचिकीर्षया ।　　९९८५

क्रियतामेवमित्याह चित्रलेखां सखीं प्रियां । ततः कुशलहस्तत्वादालेख्यं समन्ततः ।
इत्युक्त्वा सप्तरात्रेण कृत्वा लेख्यगतांस्तु तान् । चित्रपट्टगतान् सा तु आनाययामास शोभना ।
ततः प्रस्तीर्य्य पट्टं सा चित्रलेखा स्वयं कृतं । ऊषायै दर्शयामास सखीनाञ्च विशेषतः ।
एते देवेषु ये मुख्यास्तथा दानववंशजाः । किन्नरोरगयक्षाणां राक्षसानां समन्ततः ।
गन्धर्व्वासुरदैत्यानां ये चान्ये योगिनः स्मृताः । मनुष्याणाञ्च सर्वेषां ये विशिष्टतमा नराः । ९९९०
तदेतान् पश्य सर्व्वांस्तु यथाऽभिलिखितान् मया । एते भर्त्ता यथारूपो यथाऽभिलिखितः सखि ।
तं त्वं प्रत्यभिजानीहि स्वप्ने यं दृष्टवत्यसि। ततः क्रमेण सर्व्वांस्तान् दृष्ट्वा सा मत्तकाशिनी ।
देवदानवगन्धर्व्वान् विद्याधरगणांस्तथा । अतीत्य च यदून् सर्व्वानद्दर्श यदुनन्दनं ।
तत्रानिरुद्धं दृष्ट्वा सा विस्मयोत्फुल्ललोचना । उवाच चित्रलेखां तामयं चौरः स मे सखि ।
येनाहं दूषिता पूर्व्वं स्वप्ने सम्प्रगता सती । सोऽयं विशालनेत्रो मे कुतोऽयं रतितस्करः । ९९९५
चित्रलेखे वदस्वैनं तत्त्वतो मम शोभने । गुणशीलाभिजनतो नाम किञ्चास्य भामिनि ।
ततः पश्चाद्विधास्यामि कार्य्यस्यास्य विनिश्चयं ।
॥ चित्रलेखोवाच ॥ अयं त्रैलोक्यनाथस्य नप्ता कृष्णस्य धीमतः । भर्त्ता तव विशालाक्षि प्राद्युम्निर्भीमविक्रमः ।
न चास्य त्रिषु लोकेषु सदृशोऽस्ति पराक्रमे । उत्पाट्य पर्व्वतानेष पर्व्वतैरेव शातयेत् ।
धन्याऽस्यनुगृहीताऽसि यस्यास्ते यदुपुङ्गवः । रूपवान् समादिष्टः सदृशः सज्जनः पतिः । १००००
॥ ऊषोवाच ॥ त्वमेवात्र विशालाक्षि योग्या मम वरानने । अशक्या हि गतिस्त्वन्या अगत्या मे गतिर्भव ।
अन्तरीक्षचरी च त्वं योगिनी कामरूपिणी । उपायैरन्यकृत्यैस्त्वं क्षिप्रमानय मे प्रियं ।
उपायश्चिन्त्यतां भीरु अप्रतर्क्यं प्रिये सुखं । सिद्धार्था मन्त्रवर्त्मना येनोपायेन सुन्दरि ।
सर्वदा पत्तु यत्रित्र तत्त्रियं प्रस्यते बुधैः । कामार्त्ता चास्मि सुश्रोणि भव मे प्राणधारिणी ।
यद्येनं मे विशालाक्षि भर्त्तारममरोपमं । अद्य नानयसि क्षिप्रं प्राणांस्त्यक्ष्याम्यहं शुभे । १०००५
ऊषाया वचनं श्रुत्वा चित्रलेखाऽब्रवीदिदं । श्रोतुमर्हसि कल्याणि वचनं मे शुचिस्मिते ।
॥ चित्रलेखोवाच ॥ यथा वासवस्य नगरं रक्ष्यते देवि सर्व्वतः । द्वारकाऽपि तथा भीरु दुराधर्षा विशेषतः ।
अयस्मयप्रतिच्छन्ना गुप्तद्वारा च सा पुरी । गुप्ता वृष्ण्यन्धकनरैस्तु तथा द्वारकवासिभिः ।
प्रान्ते सलिलसंयुक्ता विहिता विश्वकर्म्मणा । रक्ष्यते पुरुषव्याघ्रैः पद्मनाभस्य शासनात् ।
शैलप्राकारपरिखा दुर्गमार्गप्रवेशिनी । सप्तप्राकाररचिता पर्व्वतैर्द्धातुमण्डितैः । १००१०
न च शक्यमविज्ञातैः प्रवेष्टुं द्वारकां पुरीं । आत्मानं नाद्य रक्षस्व पितरञ्च विशेषतः ।
॥ ऊषोवाच ॥ तव योगप्रभावेण शक्यं तत्र प्रवेशनं । बहुना किं प्रलापेन प्रतिज्ञा श्रूयतां मम ।
अनिरुद्धस्य वदनं पूर्णचन्द्रसमप्रभं । यद्यहं तत्र पश्यानि यास्यामि यमसादनं ।
दूतमासाद्य कार्य्याणां सिद्धिर्भवति भामिनि । तस्माद्दौत्येन मे गच्छ जीवन्तीं मां यदीच्छसि ।
यदि त्वं मे विशालाक्षि सख्यं प्रेम्णा च भाषितं । क्षिप्रमानय मे कान्तं तवास्मि शरणं गता । १००१५

जीवितस्य हि सन्देहं यथं वै स्वजनस्य च। कामार्त्ता हि न पश्यन्ति दूषणं वै कुलस्य च।
प्रयत्नो युज्यते कार्य्येष्विति शास्त्रनिदर्शनं। तस्य सखा विशालाक्षी द्वारकायाः प्रवेशने।
संस्तुताऽपि मया भीरु कुरु मे प्रियदर्शनं।
॥ चित्रलेखोवाच ॥ सर्व्वतः संस्तुता तेऽहं वाक्यैरस्तुतकल्पितैः। कारिता च समुद्योगं प्रियैः कान्तैश्च भाषितैः।
एषा गच्छाम्यहं भीरु क्षिप्रं तां द्वारकापुरीं। भर्त्तारमानयाम्यद्य तव हर्षितकुलोदहं। १००२०
अनिरुद्धं महाबाहुं प्रविश्य द्वारकां पुरीं। या वयस्याजनश्रेष्ठं दानवानां भयावहं।
इत्युक्ताऽन्तर्हिता क्षिप्रं चित्रलेखा मनोजवा। सखीभिः सहिता भूषा चिन्तयन्ती स्थिता तु सा।
तृतीये तु मुहूर्त्ते सा सख्या वाणपुरात्तदा। सखी प्रियं विकीर्षन्ती पूजयन्ती तपोधनान्।
क्षणेन समनुप्राप्ता द्वारकां कृष्णपालितां। कैलासशिखराकारैः प्रसादैरुपशोभितां।
ददर्श द्वारकाञ्चैव दिवि ताराभिव स्थितां। १००२५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे दूतीसम्प्रेषणे षट्सप्तत्यधिकशततमोऽध्यायः॥ १७६ ॥

॥ वैशम्पायन उवाच ॥ अथ द्वारवतीम्प्राप्य स्थिता सा भवनान्तिके। प्रवृत्तिहरणार्थाय चित्रलेखा व्यचिन्तयत्।
अथ चिन्तयती सा तु बुद्धिं बुद्ध्यर्थनिश्चितां। अपश्यन्नारदं तत्र ध्यायन्तमुदके मुनिं।
तं दृष्ट्वा चित्रलेखा तु हर्षोत्फुल्लनेत्रना। उपसृत्याभिवाद्यैनमधोमुखमवस्थिता।
नारदस्तामिषं दत्त्वा चित्रलेखामथाब्रवीत्। किमर्थमिह सम्प्राप्ता श्रोतुमिच्छामि तत्त्वतः।
देवर्षिमथ तं दिव्यं नारदं लोकपूजितं। कृताञ्जलिपुटा भूत्वा चित्रलेखाऽब्रवीद्वचः। १००३०
भगवन् श्रूयतां वाक्यं दौत्येनाहमिहागता। अनिरुद्धं मुने नेतुं यदर्थेश्च शृणुष्व मे।
नगरे शोणितपुरे वाणो नाम महासुरः। तस्य कन्या वरारोहा नाम्नोषेति च विश्रुता।
भगवन् साऽनुरक्ता च प्रद्युम्निं पुरुषोत्तमं। देव्या वरनिसर्गेण तस्या भर्त्ता विनिर्म्मितः।
तस्य नेतुमिहायाता तत्र सिद्धिं विधत्स्व मे। मया नीतेऽनिरुद्धे तु नगरं शोणिताह्वयं।
प्रवृत्तिः पुण्डरीकाक्षे त्वयाख्येया महामुने। भवतां भविता चैव क्षणेन सह विग्रहः। १००३५
वाणस्य सुमहान् सख्ये दिव्यो हि स महासुरः। न च शक्तोऽनिरुद्धस्तं युद्धे जेतुं महासुरं।
सहस्रबाहुमायान्तं जयेत् कृष्णो महाभुजः। भगवन् श्लिकर्षन्ते यदर्थमहमागता।
कथं हि पुण्डरीकाक्षो ज्ञापितस्तदिदं भवेत्। त्वत्प्रसादाच्च भगवन्न मे कृष्णाद्भयं भवेत्।
न हि तत्त्वार्थवृत्तिस्तु अनिरुद्धः कथं ध्रियेत्। क्रुद्धो हि स महाबाहुस्त्रैलोक्यमपि निर्द्दहेत्।
पौत्रशोकाभिसन्तप्तः शापेन स दहेत मां। तत्रोपायश्च भगवन् चिन्तितुं वै त्वमर्हसि। १००४०
यया सुखा लभेत् कान्तं मम चैवाभयं भवेत्। इत्येवमुक्तो भगवांश्चित्रलेखां स नारदः।
तामुवाच शुभं वाक्यं मा भैस्त्वं समयं शृणु। त्वया नीतेऽनिरुद्धे तु कन्यावेश्म प्रवेशिते।
यदि युद्धं भवेत्तत्र स्मर्त्तव्योऽहं तदा त्वया। एष मे परमः कामो युद्धं द्रष्टुमिहानघे।
यद्दृष्ट्वा च भवेत् प्रीतिः प्रवृत्तिश्च दृढा भवेत्। स्वज्ञातां तामसीं विद्यां सर्व्वलोकप्रमोहनीं।

चित्रलेखावचः श्रुत्वा सोऽनिरुद्धोऽब्रवीदिदं । दृष्टा स्वप्ने मया सा हि तन्मत्तः शृणु शोभने । १००७५
रूपं कान्तिं गतिञ्चैव संयोगं हसितं तथा । एवं सर्व्वमशेषाणि मुखानि परिचिन्तयन् ।
यद्यहं समनुप्राप्तो यदि सत्यं त्वमिच्छसि । मयका चित्रलेखे मां द्रष्टुमिच्छाम्यहं प्रियां ।
ईप्सितं तस्य विज्ञाय साऽनिरुद्धस्य भाविनी । चित्रलेखा ततस्तुष्टा तथेति च तमब्रवीत् ।
हर्म्म्ये स्त्रीगणमध्यस्थं कृत्वा चान्तर्हितं तदा । उत्पपात महोल्का सा माधुर्य्यं युद्धदुर्म्मदं ।
सा तमध्वानमागम्य सिद्धचारणसेवितं । सहसा शोणितपुरं प्रविवेश मनोजवा । १००८०
अदर्शनं तमानीय मायया कामरूपिणी । अनिरुद्धसमेता सा यत्रोषा तत्र गच्छती ।
ऊषायादर्शयच्चैनं चित्राभरणभूषितं । चित्रायुधधरं वीरं कन्दर्पसमरूपिणं ।
ततोषा विस्मिता दृष्ट्वा हर्म्म्यस्था सखिसन्निधौ । प्रवेशयामास च तं सा तदा स्वगृहं ततः ।
प्रहर्षोत्फुल्लनयना प्रियं दृष्ट्वाऽर्थकोविदा । सा हर्म्म्यस्था तमर्घ्येण यादवं समपूजयत् ।
चित्रलेखां परिष्वज्य प्रियाख्यानैर्नियुज्य च । त्वरितं कामिनी प्राह चित्रलेखां भयातुरा । १००८५
सखीदं वै कथं गुह्यं कार्य्यं कार्य्यविशारदे । गुह्ये कृते भवेत् स्वस्ति प्रकाशे जीवितक्षयः ।
चित्रलेखाऽब्रवीद्वाक्यं शृणु त्वं निश्चयं सखि । कृतं पुरुषकारं हि दैवं नाशयते क्षणात् ।
यदि देव्याः प्रसादस्ते अनुकूलो भविष्यति । अप्रमादात् कृतं गुह्यं न कश्चित् ज्ञास्यते नरः ।
सख्या तथैवमुक्ता सा पर्य्यवस्थितचेतना । एवमेतदिति प्राह साऽनिरुद्धमिदं वचः ।
दिष्ट्या स्वप्नगतश्चौरो दृश्यते सुभगो जनः । यत्कृते तु वयं खिन्ना दुर्लभप्रियकाम्यया । १००९०
कच्चित्तव महाबाहो कुशलं सर्व्वतो गतं । हृदयं हि मृदु स्त्रीणामेवं पृच्छाम्यहं तव ।
तस्यास्तद्वचनं श्रुत्वा ऊषायाः सत्त्वमर्थवत् । सोऽप्याह यदुशार्दूलः शुभाक्षरतरं वचः ।
हर्षविस्मृतनेत्रायाः पाणिनाऽस्रु प्रमृज्य च । प्रहस्य सस्मितं प्राह हृदयग्राहकं वचः ।
कुशलं मे वरारोहे सर्व्वत्र मितभाषिणि । त्वत्प्रसादाच्च सन्देहः प्रियमावेदयामि ते ।
अदृष्टपूर्व्वस्तु मया देशोऽयं शुभदर्शने । निशि स्वप्ने मया दृष्टं महत् कन्यापुरं महत् । १००९५
एवमेव त्वहं भीरु त्वत्प्रसादादिहागतः । न च मद्गुरुपत्न्या वै मिथ्या वाक्यं भविष्यति ।
देव्याश्च प्रीतिमाज्ञाय त्वत्प्रियार्थञ्च भाविनि । अनुप्राप्तोऽस्मि चात्रैव प्रमोद शरणागतः ।
इत्युक्ता त्वरमाणा सा गुह्ये देशे स्वलङ्कृता । कान्तेन सह संयुक्ता स्थिता वै भीतभीतवत् ।
ततश्चोद्वाहधर्म्मेण गान्धर्व्वेण समेत्य च । अन्योन्यं रेमतुस्तौ तु चक्रवाकौ यथा दिवा ।
कान्तेन सह संयुक्ता दिव्यस्रगनुलेपना । रममाणाऽनिरुद्धेन अविज्ञाता तु सा तदा । १०१००
तस्मिन्नेव क्षणे प्राप्तो यदूनामृषभो हि सः । दिव्यमाल्याम्बरधरो दिव्यस्रगनुलेपनः ।
ऊषया सह संयुक्तो विज्ञातो वाणरक्षिभिः । ततस्तैश्चारपुरुषैर्व्वाणस्यावेदितं द्रुतं ।
यथादृष्टमशेषेण कन्यायास्तद्व्यतिक्रमं । ततः किङ्करसैन्यं तत् व्यादिष्टं भीमकर्म्मणा ।
बलिपुत्रेण वाणेन वीरेणामित्रघातिना । गच्छध्वं सहिताः सर्व्वे हन्यतामेष दुर्म्मतिः ।

येन नः कुलचारित्रं दूषितं दुष्टितात्मना । अवार्यां धर्षितायां हि कुलं नो धर्षितं महत् ॥ ११००५
असम्प्रदत्तां योऽस्माभिः स्वयं दाक्षमधर्षयत् । अहो वीर्यमहो धैर्यमहो धार्ष्ट्यञ्च दुर्मतेः ॥
यः पुरं भवनञ्चेदं प्रविष्टो नः सुबालिशः । एवमुक्त्वा पुनस्तान् स किङ्करानभ्यचोदयत् ॥
ते तस्याज्ञामथो मूर्द्ध्ना सुसन्नद्धा विनिर्ययुः । यत्रानिरुद्धो ह्यभवत् तत्राजग्मुश्च दानवाः ॥
नानाशस्त्रायुधकरा नानारूपा भयङ्कराः । दानवाः समभिक्रुद्धाः प्राद्युम्निवधकाङ्क्षिणः ॥
तस्य सैन्यस्य निनदं श्रुत्वाऽभ्याशगतस्ततः । शय्यायोत्थितः शूरः प्राद्युम्निः किमिति ब्रुवन् ॥ ११०१०
अथापश्यत तत् सैन्यं नानाप्रहरणोद्यतं । स्थितं समन्ततश्चैव परिवार्य्य गृहं महत् ॥
रुदती तद्बलं दृष्ट्वा वाष्पव्याकुललोचना । प्राद्युम्निवधभीता सा बाणपुत्री यशस्विनी ॥
ततस्तु रुदतीं दृष्ट्वा तामूषां मृगलोचनां । हा हा कान्तेति वेपन्तीमनिरुद्धोऽभ्यभाषत ॥
अभयं तेऽस्तु सुश्रोणि मा भैस्त्वं हि मयि स्थिते । सम्प्राप्तो हर्षकालस्ते न तेऽस्ति भयकारणं ॥
कृत्स्नोऽयं यदि वा पश्य मृत्युवशौ यशस्विनि । नागच्छति न मे चिन्ता भीरु पश्याद्य विक्रमं ॥ ११०१५
ततोऽभ्यगच्छत्त्वरितो यत्र तद्दितिजं बलं । क्रुद्धः स्वयमथादाय सन्दष्टदशनच्छदः ॥
ततो युद्धं बलोघानां वार्णेयानां निशम्य तु । सा चित्रलेखाऽस्मरत नारदं देवदर्शनं ॥
ततो निमेषमात्रेण सम्प्राप्तो मुनिपुङ्गवः । स्थितोऽथ चित्रलेखायाः पुरं शोणितमाश्रयं ॥
अन्तरीक्षे स्थितस्तत्र सोऽनिरुद्धमथाब्रवीत् । मा भयं स्वस्ति ते वीर प्राप्तोऽस्म्यभिमतस्तव ॥
ततस्तु नारदं दृष्ट्वा सोऽभिवाद्य महाबलः । प्रहृष्टः सुमना भूत्वा युद्धार्थमभ्यवर्त्तत ॥ ११०२०
ततस्तेषां स्वनं श्रुत्वा सर्व्वेषामेव गर्ज्जतां । सहसैवोत्थितः शूरस्तोयार्द्दित इव द्विपः ॥
तमापतन्तं दृष्ट्वैव सन्दष्टौष्ठं महाभुजं । प्रासादद्वारगे तस्मिन् भयात्ते विप्रदुद्रुवुः ॥
सोऽन्तःपुरद्वारगतं परिघं गृह्य चातुलं । वधाय तेषां स्थितश्चैव नानायुद्धविशारदः ॥
ते सर्व्वे बाणवर्षैश्च गदाभिर्मुषलैस्तथा । असिभिः पट्टिशैः शूलैर्निजघ्नू रणगोचराः ॥
स हन्यमानो नाराचैः परिघैश्च समन्ततः । दानवैः समभिक्रुद्धैः प्राद्युम्निः शस्त्रकोविदैः ॥ ११०२५
नाक्षुभ्यत् सर्व्वभूतात्मा महाक्षोभ इवार्णवे । आविध्य परिघं घोरं तेषां मध्ये व्यवस्थितः ॥
सूर्य्यो दिवि चरन्मध्ये मेघानामिव सर्व्वतः । दण्डकाष्ठाजिनधरो नारदो हृष्टमानसः ॥
साधु साध्विति वै तत्र सोऽनिरुद्धमभाषत । ते हन्यमाना रौद्रेण परिघेणामितौजसा ॥
प्राद्रवन्त भयात् सर्व्वे मेघा वातेरिता इव । विद्राव्य दानवान् वीरः परिघेणोग्रविक्रमः ॥
अनिरुद्धो रणे हृष्टः सिंहनादं मुमोच ह । वर्षान्ते तोयदो व्योम्नि नदन्निव महास्वनं ॥ ११०३०
तिष्ठध्वमिति चुक्रोश दानवान् युद्धदुर्म्मदान् । प्राद्युम्निर्व्यहनच्चापि सर्व्वान् शत्रुनिबर्हणः ॥
तेन ते समरे सर्व्वे हन्यमाना महात्मना । यतो बाणस्ततो भीता ययुर्युद्धपराङ्मुखाः ॥
ततो बाणसमीपस्थाः श्रमन्तो रुधिरोक्षिताः । न शर्म्म लेभिरे दैत्या भयविक्लवलोचनाः ॥
मा भैष्ट मा भैष्ट इति राज्ञा तेनाभिभाषिताः । तामनुसृज्य चैकस्था युध्यध्वं दानवर्षभाः ॥

तानुवाच पुनर्व्वाणो भयविक्लवलोचनान् । किमिदं लोकविख्यातं यत्र उत्सृज्य दूरतः । ११०६५
भवन्तो यान्ति वैक्लव्यं क्लीबा इव विचेतसः । कोऽयं यस्य भयत्रस्ता भवन्तो यान्त्यनेकशः ।
कृतापदेशिनः सर्व्वे नानायुद्धविशारदाः । भवद्भिश्च हि मे कार्य्यं युद्धे साहाय्यमद्य वै ।
अब्रवीद्रमतेत्येवं मत्समीपाच्च गच्छत । अथ तान् वाग्भिरुग्राभिराश्वास्य बहुधा बली ।
व्यादिदेश रणे शूरानन्यानयुतशः पुनः । प्रमाथगणभूयिष्ठं व्यादिष्टं तस्य निर्ययौ ।
अनीकं सुमहद्रौद्रं नानाप्रहरणायुधं । अथान्तरीक्षे बहुधा सविद्युद्भिरिवाम्बुदैः । ११०७०
बाणानीकैः समभवद्व्याप्तं संदीप्तलोचनैः । केचित् क्षितिस्थाः प्राक्रोशन् गजा इव समन्ततः ।
अन्येऽन्तरीक्षेऽभ्यनदन् घर्म्मान्ते इव तोयदाः । ततस्तत् सुमहत् सैन्यं समेतमभवत् पुनः ।
तिष्ठ तिष्ठेति च तदा वाचोऽश्रूयन्त सर्व्वशः । अनिरुद्धो रणे वीरः स च तानभ्यवर्त्तत ।
तदाश्चर्य्यं समभवद्यदेकस्तैः समागतः । अयुध्यत महावीर्य्यैर्दानवैः सह संयुगे ।
तेषामेव च जग्राह परिघांस्तोमरानपि । तैरेव च तदा युद्धे तान् जघान महाबलः । ११०७५
पुनः परिघमुत्सृष्टं प्रगृह्य रणमूर्द्धनि । स दैत्यसंघान् समरे निजघान महाबलान् ।
निस्त्रिंशं चर्म्म चोत्सृष्टं प्रगृह्य रणमूर्द्धनि । स तेन विचरन्मार्गानेकः शत्रुनिबर्हणः ।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतं । इति प्रकारान् द्वात्रिंशद्विचरन्नभ्यदृश्यत ।
एकं सहस्रशस्तत्र ददृशुः शूरणमूर्द्धनि । कोपान्तं बहुधा युद्धे व्यादितास्यमिवान्तकं ।
ततस्ते भिन्नसन्तप्ता रुधिरौघपरिप्लुताः । पुनर्भग्नाः प्राद्रवन्त यत्र बाणो व्यवस्थितः । ११०८०
गजवाजिरथौघैस्ते उह्यमानाः समन्ततः । कृत्वा चार्त्तस्वरं घोरं दिशो जग्मुर्महौजसः ।
एवं भयमभूत्तेषां दानवानां महारणे । एकैकस्योपरि तदा तेऽन्योन्यं भयपीडिताः ।
वमन्तः शोणितं जग्मुर्व्विषाद विमुखा रणे । न बभूव पुरा दैत्यैर्युध्यतां तादृशं भयं ।
यादृशं युध्यमानानामनिरुद्धेन संयुगे । केचिद्वमन्तो रुधिरं न्यपतन् वसुधातले ।
दानवा गिरिशृङ्गाभा गदाशूलासिपाणयः । ते बाणमुत्सृज्य रणे जग्मुर्भयसमाकुलाः । ११०८५
विशान्तमाकाशतलं दानवा निर्ज्जिता रणे । निःशेषभग्नां महतीं दृष्ट्वा तां वाहिनीं तदा ।
बाणः क्रोधात् प्रजज्वाल समिद्धोऽग्निरिवाध्वरे । अन्तरीक्षचरो भूत्वा साधुवादी समन्ततः ।
नारदोऽनृत्यत प्रीत्या ह्यनिरुद्धस्य संयुगे । एतस्मिन्नन्तरे चैव बाणः परमकोपनः ।
कुम्भाण्डसंग्रहीतं तु रथमास्थाय वीर्य्यवान् । ययौ यत्रानिरुद्धो वै उद्यतासिरणे स्थितः ।
पट्टिशासिगदाशूलानुद्यम्य सपरश्वधान् । बभौ बाहुसहस्रेण शक्रो ध्वजशतैरिव । ११०९०
बद्धगोधाङ्गुलित्रैस्तु बाहुभिः स महाभुजः । नानाप्रहरणोपेतैः शुशुभे दानवोत्तमः ।
सिंहनादं नदन् क्रुद्धो विस्फारितमहाधनुः । अब्रवीत्तिष्ठ तिष्ठेति क्रोधसंरक्तलोचनः ।
वाचन्तान्तस्य संश्रुत्य प्राद्युम्निरपराजितः । बाणस्य वदतः संख्ये तदैव ततोऽहसत् ।
किङ्किणीजालनिर्घोषं रत्नध्वजपताकिनं । स्वर्णवर्म्मावनद्धाङ्गं दशनल्वं महारथं ।

तस्य वा अभवत्तत्तु रथे युद्धं महात्मनः । पुरा देवासुरे युद्धे हिरण्यकशिपोरिव । ११०५५

तमापतन्तं दृष्ट्वैव दानवं यदुनन्दनः । संप्रहृष्टस्ततो युद्धे तेजसा चाप्यपूर्यत ।

असिचर्म्मधरो वीरः स्वस्थः संग्रामलालसः । नरसिंहो यथा पूर्व्वमादिदैत्यवधोद्यतः ।

आपतन्तं ददर्शाथ खड्गचर्म्मधरं तदा । खड्गचर्म्मधरं तन्तु दृष्ट्वा बाणः पदातिनं ।

प्रहर्षमतुलं लेभे प्राद्युम्निवधकाङ्क्षया । तमुवाच विहीनस्य खड्गपाणिस्य मानुषः ।

अजेयमिति तं मत्वा युद्धायाभिमुखे स्थितः । अनिरुद्धं रणे बाणो जितकाशी महाबली । ११०६०

वाचं प्रोवाच संक्रुद्धो ध्रुवमेतं हन्यतामिति । वाचश्च श्रुत्वा तस्य श्रुत्वा प्राद्युम्निराहवे ।

बाणस्य वदनं क्रोधाद्दुममानोऽभ्युदैक्षत । ऊषा भयपरित्रस्ता रुदती तत्र भामिनी ।

अनिरुद्धः प्रहस्याथ समाश्वास्य च तां स्थितः । अथ बाणः शरौघांश्च क्षुद्रकाणां समन्ततः ।

चिक्षेप समरे क्रुद्धो ह्यनिरुद्धवधेप्सया । अनिरुद्धस्तु चिच्छेद काङ्क्षमाणः पराजयं ।

ववर्ष शरवर्षाणि क्षुद्रकाणां समन्ततः । बाणोऽनिरुद्धमिषुभिः काङ्क्षमाणो रणे वधं । ११०६५

तानि बाणसहस्राणि चर्म्मणा व्यवधूय सः । बभौ प्रमुखतस्तस्य स्थितः सूर्य्य इवोदये ।

सोऽभिभूय रणे बाणमास्थितो यदुनन्दनः । सिंहः प्रमुखतो दृष्ट्वा गजमेकं यथा वने ।

ततो बाणसहस्रैर्घोरैर्मर्म्मभेदिभिराशुगैः । विव्याध निशितैस्तीक्ष्णैः प्राद्युम्निमपराजितं ।

समाहतस्ततो बाणैः खड्गचर्म्मधरोऽपतत् । तमापतन्तं निशितैरभ्यघ्नत् सायकैस्तदा ।

सोऽतिविद्धो महाबाहुर्ब्बाणैः सन्नतपर्व्वभिः । क्रोधेनातिप्रजज्वाल चिकीर्षुः कर्म्म दुष्करं । ११०७०

रुधिरौघप्लुतैर्गात्रैर्बाणवर्षैः समाहतः । अभिप्लुतः सुसंक्रुद्धो ययौ बाणरथम्प्रति ।

असिभिर्मुसलैः शूलैः पट्टिशैस्तोमरैस्तथा । सोऽतिविद्धः शरौघैस्तु प्राद्युम्निर्नाभ्यकम्पत ।

आप्लुत्य सहसा क्रुद्धो रथेषां तस्य सोऽच्छिनत् । जघानाश्वान् स खड्गेन बाणस्य रणमूर्द्धनि ।

तं पुनः शरवर्षेण तोमरैः पट्टिशैस्तथा । चक्रतोमरसंयुक्तैर्बाणो युद्धमार्गविशारदः ।

हतोऽयमिति विज्ञाय प्राणदद्दानवो रणे । ततोऽवप्लुत्य सहसा रथपार्श्वे व्यवस्थितः । ११०७५

शक्तिं बाणस्ततः क्रुद्धो घोररूपां भयावहां । जग्राह ज्वलितां दीप्तां घण्टामालाकुलां रणे ।

ज्वलनादित्यसङ्काशां यमदण्डोपदर्शनां । प्राहिणोत्तामसङ्गेन महोल्कां ज्वलितामिव ।

तामापतन्तीं सम्प्रेक्ष्य जीवितान्तकरीन्तदा । सोऽभिप्लुत्य तदा शक्तिं जग्राह पुरुषोत्तमः ।

निर्ब्बिभेद तदा बाणं तया शक्त्या महाबलः । सा भित्त्वा तस्य देहं तु जगाम वसुधातलं ।

स गाढविद्धो व्यथितो ध्वजयष्टिं समाश्रितः । ततो मूर्च्छाभिभूतं तं कुम्भाण्डो वाक्यमब्रवीत् । ११०८०

उपेक्षसे दानवेन्द्र किमेवं शत्रुमुद्यतं । लब्धलक्षो ह्ययं वीरो निर्व्विकारोऽद्य दृश्यते ।

मायामाश्रित्य युध्यस्व नायं बध्योऽन्यथा भवेत् । आत्मानं माद्य रक्षस्व प्रमादात् किमुपेक्षसे ।

बध्यतामयमद्यैव न तत् सर्व्वान्विनाशयेत् । कुम्भाण्डवचनैरेवं दानवेन्द्रः प्रचोदितः ।

वाचं रुषामभिक्रुद्धः प्रोवाच वदताम्बरः । एषोऽहमस्य विदधे मृत्युं प्राणहरं रणे ।

आदाम्याम्यहमेतं हि गरुत्मानिव पन्नगान् । इत्येवमुक्त्वा स रथः साश्वः सध्वजसारथिः । १०१९९
गन्धर्व्वनगराकारस्तत्रैवान्तरधीयत । विज्ञायान्तर्हितं वाणं प्राद्युम्निरपराजितः ।
पौरुषेण समायुक्तः संप्रैक्षत दिशो दश । आस्थाय तामसीं विद्यां ततः क्रुद्धो बलेः सुतः ।
मुमोच निशितान् वाणांस्तस्मो मायाधरो बली । प्राद्युम्निर्विशिखैर्विद्धः सर्पभूतैः समन्ततः ।
वेष्टितो बहुधा तस्य देहः पन्नगराशिभिः । स तु वेष्टितसर्व्वाङ्गो बद्धः प्राद्युम्निराहवे ।
निष्प्रयत्नःक्षतस्तस्थौ मैनाक इव पर्व्वतः । ज्वालावलीढवदनैः सर्पभोगैर्विवेष्टितः । १०२००
अभीतः पर्व्वताकारः प्राद्युम्निरभवद्रणे । निष्प्रयत्नगतिश्चापि सर्पजिह्मसदैः शरैः ।
न विव्यथे स भूतात्मा सर्व्वतः परिवेष्टितः । ततस्तं वाग्भिरुग्राभिः संरब्धः समतर्ज्जयत् ।
वाणो ध्वजं समाश्रित्य रोषाचामर्षितो वचः । कुष्माण्ड वध्यतां शीघ्रमयं वै कुलपांसनः ।
चारित्रं येन नो लोके दूषितं दूषितात्मना । इत्येवमुक्ते वचने कुष्माण्डो वाक्यमब्रवीत् ।
राजन् वक्ष्याम्यहं किञ्चित तन्मे शृणु यदीच्छसि । अयं विज्ञायतां कस्य कुतो वाऽयमिहागतः । १०२०५
केन वायमिहानीतः शक्रतुल्यपराक्रमः । मयाऽयं बहुशो युध्यन् दृष्टो राजन्महारणे ।
क्रीडन्निव च युद्धेषु दृश्यते देववत्प्रभुः । बलवान् सत्त्वसम्पन्नः सर्व्वशस्त्रविशारदः ।
नायं वधकृतं दोषमर्हेदै दैत्यसत्तम । गान्धर्व्वेण विवाहेन कन्येयं तव सङ्गता ।
अदेया ह्यर्न्तिरास्था अनयिन्स्य वधं कुरु । विज्ञाय तु वधं वाऽस्य पूजां वाऽस्य करिष्यसि ।
वधे ह्यस्य महान्दोषो दृश्यते सुमहान् गुणः । अयं हि पुरुषोत्कर्षः सर्व्वथा मानमर्हति । १०२१०
सर्व्वतो वेष्टिततनुर्न व्यथत्येष भोगिभिः । कुलशौटीर्यवीर्य्येश्च सत्त्वेन च समन्वितः ।
पश्य राजन् यशोवीर्य्यैरन्वितं पुरुषोत्तमं । न नो गणयते सर्व्वान् वधं प्राप्तोऽप्ययं बली ।
यदि मायाप्रभावेण नात्र बद्धो भवेदयं । सर्व्वासुरगणान् सङ्ख्ये योधयेन्नात्र संशयः ।
सर्व्वयुद्धेषु मार्गज्ञो भवेदेषोऽधिकस्तव । शोणितौघप्लुतैर्गात्रैर्नागभोगैश्च वेष्टितः ।
त्रिशिखां भ्रुकुटीं कृत्वा न चिन्तयति नः स्थितान् । इमामवस्थां नीतोऽपि स्ववाहुबलमाश्रितः । १०२१५
न चिन्तयति राजंस्त्वां शौर्य्यवान् कोऽप्ययं युवा । सहस्रवाहोः समरे दिवाहुः प्रमुखे स्थितः ।
न चिन्तयति ते वीर भूयो वीर्य्यबलान्वितः । रुचितं यदि ते राजन् भूयो वीर्य्यबलान्वितः ।
कन्या चेयं न चान्यस्य निर्द्धायिनेन सङ्गता । यदि चेयत्तमः कश्चिदयं वंशे महात्मनां ।
ततः पूजामयं लब्ध्वा प्राप्स्यत्येवासुरोत्तम । रक्ष्यतामिति चोक्तो वै तथाऽस्त्विति च तस्थिवान् ।
एवमुक्ते तु वचने कुष्माण्डेन महात्मना । तथेत्याह तु कुष्माण्डं वाणः शक्रनिवर्हणः । १०२२०
संरक्षिणस्ततो दत्त्वा ह्यनिरुद्धस्य धीमतः । ययौ स्वमेव भवनं बलेः पुत्रो महाबलः ।
संयतं मायया दृष्ट्वा अनिरुद्धं महाबलं । ऋषीणां नारदः श्रेष्ठोऽप्यगाद्द्वारवतीं प्रति ।
ततो ह्याकाशमार्गेण मुनिर्द्वारवतीं गतः । बद्धं निवेदयामीति प्राद्युम्निं गरुडध्वजे ।
गते ऋषीणां प्रवरे सोऽनिरुद्धो व्यचिन्तयत । नष्टोऽयं दानवः क्रूरो युद्धं प्राप्य न संशयः ।

स गत्वा नारदस्तत्र शङ्खचक्रगदाधरं । ज्ञापयिष्यति तत्त्वेन इममर्थं यथैव तत् ।
नागैर्विवेष्टितं दृष्ट्वा ऊषा प्राद्रुवदातुरा । रुरोद बाष्पकण्ठी तामाह रुदतीं पुनः ।
किमिदं रुद्यते भीरु मा भैस्त्वं शुभलोचने । पश्य मुञ्चामि सम्प्राप्तं मत्कृते मधुसूदनं ।
यस्य शङ्खध्वनिं श्रुत्वा शार्ङ्गशब्दं बलस्य च । दानवा नाशमेष्यन्ति गर्भाद्यासुरयोषितां ।
॥ वैशम्पायन उवाच ॥ एवमुक्ताऽनिरुद्धेन ऊषा विस्रब्धमानसा । स्वदेशं पितरञ्चैव शोचते सा सुमध्यमा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि बाणयुद्धे अनिरुद्धबन्धने सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

॥ वैशम्पायन उवाच ॥ यदा बाणपुरे वीरः सोऽनिरुद्धः सहोषया । सन्निरुद्धोऽसुरेन्द्रेण बाणेन बलिसूनुना ।
तदा देवीं स कौमारीं रक्षार्थं शरणं गतः । यद्गीतमनिरुद्धेन देव्याः स्तोत्रमिदं शृणु ।
अनन्तमक्षयं दिव्यमादिदेवं सनातनं । नारायणं नमस्कृत्य प्रवरं प्रथमं विभुं ।
चण्डीं कात्यायनीं देवीमार्य्यां लोकनमस्कृतां । वरदां कीर्त्तयिष्यामि नामभिर्ऋषिसंस्तुतैः ।
ऋषिभिर्दैवतैश्चैव वाक्पुष्पैरर्चितां शुभां । तां देवीं सर्व्वदेवस्थां सर्व्वलोकनमस्कृतां ।
॥ अनिरुद्ध उवाच ॥ महेन्द्रविष्णुभगिनीं नमाम्यात्महिताय वै । मनसा भावशुद्धेन शुचिः स्तोष्ये कृताञ्जलिः ।
गौतमीं कंसभयदां यशोदानन्दिवर्द्धिनीं । मेघां गोकुलसम्भूतां नन्दगोपस्य नन्दिनीं ।
प्राज्ञां दक्षां शिवां पुण्यां दनुपुत्रप्रमर्द्दिनीं । तां देवीं सर्व्वदेवस्थां सर्व्वभूतनमस्कृतां ।
दर्शनीं पूरणीं मायां शक्तिरूपां शशिप्रभां । शान्तिं भूताश्च सततमोक्षे हन्तीं तोपणीं तथा ।
स्तव्यां देवैः सर्षिगणैः सर्व्वभूतनमस्कृतां । कालीं कात्यायनीं देवीं भयदां भयनाशिनीं ।
कात्यायनीं कामगमां त्रिनेत्रां ब्रह्मचारिणीं । सौदामिनीं मेघरवां वेतालीं विपुलाननां ।
यूयस्थामां महाभागां शकुनीं रेवतीं तथा । तिर्योनां पशूनीं षष्ठीं पौर्णमासीं चतुर्द्दशीं ।
सप्तविंशति ऋक्षाणि नद्यः सर्व्वा दिशो दश । नगरोपवनोद्यानचत्वरश्मशानवासिनीं ।
ह्रीं श्रीं गार्गीञ्च गान्धर्व्वीं योगिनीं योगदां सदा । कीर्त्तिमाशां दिशं स्पर्शां नमस्यामि सरस्वतीं ।
वेदानां मातरञ्चैव सावित्रीं भक्तवत्सलां । तपस्विनीं शान्तिकरीमेकानंशां सनातनीं ।
कौटवीं मदिरां चक्रामितां मलयवासिनीं । भूतधात्रीं भयकरीं कुष्माण्डीं कुसुमप्रियां ।
दारुणीं मन्दरावासां विन्ध्यकैलासवासिनीं । वराकुलां सिंहरथां शरभ्रां दुरत्ययां ।
दुर्लभां दुर्ज्जयां दुर्गां निशुम्भभयदर्शिनीं । सुराप्रियां सुरां देवीं शक्रराजानुजां शिवां ।
किरातीं चीरवसनां चैरचेलानमस्कृतां । आश्चर्यां भीमरूपां सौम्यां सर्व्वपर्व्वतवासिनीं ।
निशुम्भशुम्भमथनीं गजकुम्भोपमस्तनीं । जननीं सिद्धसेनस्य सिद्धचारणसेवितां ।
बलां कुमारप्रभवां पार्व्वतीं पर्व्वतात्मजां । पन्नगश्रेष्ठकन्यानां पत्नीं देवगणस्य च ।
कद्रूपुत्रमहत्त्वस्य पूर्व्वपौत्रवरस्त्रियः । माता पिता जगच्चान्या दिवि देवासुरगणैः ।
ऋषिपत्नीगणानाञ्च यक्षगन्धर्व्वसेविता । विद्याधराणां नारीषु साध्वीषु मनुजासु च ।
एवमेतासु नारीषु सर्व्वभूताश्रया ह्यसि । नमस्कृताऽसि देवैश्च किन्नरैर्दानवैरपि ।

अचिन्त्या चाप्रमेयाऽसि याऽसि साऽसि नमोऽस्तु ते । एभिर्नामभिरन्यैश्च कीर्त्तिता असि गौतमि ।

त्वत्प्रसादादविघ्नेन क्षिप्रं मुच्येय बन्धनात् । अवेक्षस्व विशालाक्षि पादौ ते शरणं व्रजे । १००१५

सर्व्वेषामेव बद्धानां मोक्षणं कर्त्तुमर्हसि । ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्य्याग्निमारुताः ।

अश्विनौ वसवश्चैव विश्वे साध्यास्तथैव च । मरुतः सह पर्ज्जन्या धाता भूमिर्द्दिशो दश ।

गावो नक्षत्रवंशाश्च ग्रहा नद्यो ह्रदास्तथा । सरितः सागराश्चैव नानाविद्याधराः खगाः ।

तथा नागाः सुपर्णाश्च गन्धर्व्वाप्सरसां गणाः । कृत्स्नं जगदिदं प्रोक्तं देव्या नामानुकीर्त्तनात् ।

देव्यास्तवमिदं पुण्यं यः पठेत् सुसमाहितः । सा तस्मै सप्तमे मासि वरमग्र्यं प्रयच्छति । १००२०

अष्टादशभुजा देवी दिव्याभरणभूषिता । हारभूषितसर्व्वाङ्गी मुकुटोज्ज्वलभूषणा ।

कात्यायनि स्तूयसे त्वं वरदे वामलोचने । नमोऽस्तु ते महादेवि सुप्रीता वै भजस्व मां ।

प्रयच्छस्व वरं ह्यायुः पुष्टिश्चैव तथा धृतिं ।

॥ वैशम्पायन उवाच ॥ एवं स्तुता महादेवी दुर्गा दुर्गपराक्रमा । सान्निध्यं कल्पयामास अनिरुद्धस्य बन्धने ।

अनिरुद्धहितार्थाय देवी शरणवत्सला । बद्धं बाणपुरे वीरमनिरुद्धं ह्यमोक्षयत् । १००२५

सान्त्वयामास तं वीरमनिरुद्धमरिन्दमं । प्रसादं दर्शयामास अनिरुद्धस्य बन्धने ।

पूजयामास तां वीरः सोऽनिरुद्धः प्रतापवान् । नागपाशेन बद्धस्य तस्योपाश्रितचेतसः ।

स्फोटयित्वा कराग्रेण पञ्जरं वज्रसन्निभं । बद्धं बाणपुरे वीरं साऽनिरुद्धमभाषत ।

सान्त्वयन्ती वशा देवी प्रसादाभिमुखी तदा ।

॥ देव्युवाच ॥ चक्रायुधो मोक्षयिताऽनिरुद्ध त्वां बन्धनादाशु सहस्व कालं । छित्त्वा तु बाणस्य स बाहुचक्रं पुरीं निजां नेष्यति दैत्यसूदनः । १००३०

॥ वैशम्पायन उवाच ॥ यदाऽनिरुद्धं सह बाणपुत्र्या नेतुं खगेन्द्रेण हरिः प्रवृत्तः । महासुरे बाण उदीर्णचक्रे न्यक्कारमासक्त तं निशम्य ।

ततोऽनिरुद्धः पुनरेव देवीं तुष्टाव हृष्टः शशिकान्तवक्त्रः ।

॥ अनिरुद्ध उवाच ॥ नमोऽस्तु ते देवि वरप्रदे शिवे नमोऽस्तु ते देवि सुरारिनाशिनि । नमोऽस्तु ते कामचरे सदाशिवे नमोऽस्तु ते सर्व्वहितैषिणि प्रिये ।

नमोऽस्तु ते महिषमहासुरार्द्दिनि नमोऽस्तु ते भयकरि त्रिदिशां सदा ।

ब्रह्माणीन्द्राणि रुद्राणि भूतभव्ये यशस्विनि । त्राहि मां सर्व्वदुःखेभ्यो नारायणि नमोऽस्तु ते । १००३५

नमोऽस्तु ते जगन्नाथे नित्यं दान्ते महाव्रते । प्रियभक्त जगन्मातः शैलपुत्रि वसुन्धरे ।

त्रायस्व मां विशालाक्षि नारायणि नमोऽस्तु ते । नमामि शिरसा देवीं बन्धनस्थो विशेषितः ।

रक्ष मां सर्व्वभूतेभ्यो नारायणि नमोऽस्तु ते । त्रायस्व सर्व्वदुःखेभ्यो दानवानां भयङ्करि ।

रुद्रप्रिये महाभागे भक्तानामार्त्तिनाशिनि । सर्व्वदुःखभयत्रासात्त्राहि मां परमेश्वरि ।

शृणुध्वं यादवाः सर्व्वे यथा चिन्तान्वितो ह्यहं । अनिरुद्धे हृते शूरे पृथिव्यां सर्व्वपार्थिवाः ।
अशक्ता इव मंस्यन्ते सर्व्वानस्मान् सबान्धवान् । आहुकश्चैव नो राजा हृतः शाल्वेन वै पुरा ।
प्रत्यानीतः स चास्माभिर्युद्धं कृत्वा सुदारुणं । प्रद्युम्नश्चापि नो बाल्ये शम्बरेण हृतो ह्यभूत् । १०६१०
स तं निहत्य समरे प्राप्तो रुक्मिणिनन्दनः । इदन्तु सुमहत् कष्टं प्राद्युम्निः क्व प्रवासितः ।
नैवंविधमहं दोषं स्मरामि मनुजर्षभाः । अश्मना गृष्ठितः पादो येन मे मूर्द्ध्नि पातितः ।
तस्याहं मानुबन्धस्य हरिष्ये जीवितं रणे । इत्येवमुक्ते कृष्णेन सात्यकिर्व्वाक्यमब्रवीत् ।
चराः कृष्ण प्रयुज्यन्तामनिरुद्धस्य मार्गणे । सपर्व्वतवनोद्देशां मार्गन्तु वसुधामिमां ।
आहुकं प्राह कृष्णस्तु स्मितं कृत्वा वचस्तदा । अन्वेषणेऽनिरुद्धस्य चरानादिश मा चिरं । १०६१५
आभ्यन्तराश्च बाह्याश्च व्यादिश्यन्तां चरा नृप ।
॥ वैशम्पायन उवाच ॥ केशवस्य वचः श्रुत्वा आहुकस्त्वरितोऽभवत् । अन्वेषणेऽनिरुद्धस्य चरान् व्यादिष्टवांस्तदा ।
ततश्चराश्च व्यादिष्टाः पार्थिवेन यशस्विना । तथा रथाश्च व्यादिष्टाः पार्थिवेन महात्मना ।
अभ्यन्तरश्च मार्गध्वं बाह्यतश्च समन्ततः । वेणुमन्तं लतावेष्टं तथा रैवतकं गिरिं ।
ऋक्षवन्तं गिरिञ्चैव मार्गध्वं त्वरिता हयैः । एकैकं तत्र योद्धानं मार्गितव्यं समन्ततः । १०६२०
यातव्यञ्चापि निःशङ्कमुद्यानेषु समन्ततः । हयानाञ्च सहस्राणि रथानाञ्चाप्यनेकशः ।
आरुह्य त्वरिताः सर्व्वे मार्गध्वं यदुनन्दनं । सेनापतिरनाधृष्टिरिदं वचनमब्रवीत् ।
कृष्णमक्लिष्टकर्म्माणमच्युतं भीतभीतवत् । शृणु कृष्ण वचो मह्यं यदि ते रोचते प्रभो ।
चिरात प्रभृति मे वक्तुं भवन्तं जायते मतिः । अमिलोमा पुलोमा च निसुन्दनरकौ हतौ ।
भौमः शाम्बश्च निहतो मैन्दो द्विविद एव च । हयग्रीवश्च सुमहान् सानुबन्धस्त्वया हतः । १०६२५
तादृशे विग्रहे वृत्ते देवर्षितो सुदारुणे । सर्व्वाण्येतानि कर्म्माणि निःशेषाणि रणे रणे ।
कृतवानसि गोविन्द पार्ष्णिग्राहश्च नास्ति ते । इदं कर्म्म त्वया कृष्ण सानुबन्धं कृतं रणे ।
पारिजातस्य हरणे यत् कृतं कर्म्म दुष्करं । तत्र शक्रस्त्वया कृष्ण ऐरावतशिरोगतः ।
निर्ज्जितो बाहुवीर्य्येण स्वयं युद्धविशारदः । तेन वैरं त्वया सार्द्धं कर्त्तव्यं नात्र संशयः ।
वैरानुबन्धश्च महांस्तेन कार्य्यस्त्वया सह । तत्रानिरुद्धहरणं कृतं मघवता स्वयं । १०६३०
न ह्यन्यस्य सकाशात्तु निर्य्यातनमस्ति ते । इत्येवमुक्ते वचने कृष्णो नाग इव श्वसन् ।
उवाच वचनं धीमाननाधृष्टिं महाबलं । सेनानीस्तात मा मैवं न देवाः क्षुद्रकर्म्मिणः ।
नाकृतज्ञा न च क्रोधा नावलिप्ता न बालिशाः । देवतार्थञ्च मे यत्नो महान्दानवसंक्षये ।
तेषां प्रियार्थञ्च रणे हन्मि दृप्तान्महासुरान् । तत्परस्तन्मनाश्चास्मि तद्भक्तस्तत्परायणः ।
कथं पापं करिष्यन्ति विज्ञायैवंविधं हि मां । अक्षुद्राः सत्यवन्तश्च नित्यं भक्तानुकम्पिनः । १०६३५
न तेभ्यो विद्यते पापं बालिशत्वात् प्रभाषसे । कदाचिदिह पौंश्चल्यादनिरुद्धो गतो भवेत् ।
देवेषु सनरेन्द्रेषु नैतत्कर्म्म विधीयते ।

॥ वैशम्पायन उवाच ॥ एवं चिन्तयमानस्य कृष्णस्याद्भुतकर्म्मणः । कृष्णस्य वचनं श्रुत्वा महाऽक्रूरोऽब्रवीदिदम् ।
मधुरं श्लक्ष्णया वाचा सोऽथ वाक्यविशारदः । यत्त्वया च प्रभो कार्य्यं तदस्माकं विनिश्चितं ।
अस्माकञ्चापि यत्कार्य्यं तद्धि कार्य्यं महीपते । संरक्ष्यास्त्वं वयं देवैस्ताभिरपि देवताः । १०४४०
देवतार्थे भवांश्चापि मानुषत्वमुपागतः । विष्णुर्बन्धुरिवा योनौ देवदेवः सनातनः ।
एवमक्रूरवचनैश्चोदितो मधुसूदनः । स्निग्धगम्भीरया वाचा पुनः कृष्णोऽभ्यभाषत ।
नायं देवैर्न गन्धर्व्वैर्न सर्व्वैरपि राक्षसैः । प्रद्युम्नपुत्रोऽपहृतः पुंश्चल्या तु मतः स्त्रिया ।
मायाविदग्धाः पुंश्चल्यो दैत्यदानवयोषितः । ताभिर्हृतो न सन्देहो नान्यतो विद्यते भयं ।
॥ वैशम्पायन उवाच ॥ इत्येवमुक्ते वचने कृष्णेन तु महात्मना । यथावगम्य तत्त्वेन यदुक्तं यदुनन्दने । १०४४५
उदतिष्ठत्सहासनात्तदा कृष्णः प्रशंसयन् । चिन्तयन् स तु सर्व्वेषां कृतमानसवन्दितां ।
मधुरः शुश्रुवे शब्दो माधवस्य निवेशने । ते जनाः सर्व्वतः सर्व्वे सभाद्वारमुपागताः ।
शनैर्गद्गदया वाचा इदं वचनमब्रुवन् । उद्यानानि सभाः शैला गुहा नद्यः सरांसि च ।
एकैकं सततो राजन् मार्गितं न च दृश्यते । अथ कृष्णवरा राजन्नुपागम्य तदाऽब्रुवन् ।
सर्व्वे संविदिता देशाः प्रावृषिजे च दृश्यते । अदृश्यन् संविधानस्थं विधानं यदुनन्दन । १०४५०
तदाज्ञापय नः क्षिप्रमनिरुद्धस्य मार्गणे । ततस्ते दीनमनसः सर्व्वे बाष्पाकुलेक्षणाः ।
अन्योन्यमभ्यभाषन्त किमतः कार्य्यमुत्तरं । सन्दष्टौष्ठपुटाः केचित् केचिद्बाष्पाकुलेक्षणाः ।
केचिद्भ्रुकुटिमाबध्य चिन्तयन्त्यर्थसिद्धये । एवं चिन्तयतां तेषां बहुधर्म्ममभिभाषतां ।
अनिरुद्धः कुतस्थेति यत्नतः सुमहानभूत् । अन्योन्यमभिवीक्षन्ते यादवा जातमन्यवः ।
तां निशां विमनस्कास्ते गमयेयुः कथञ्चन । अनिरुद्धो गतस्येति पुनः पुनररिन्दम । १०४५५
एवञ्च ब्रुवतां तेषां प्रभाता रजनी तदा । ततस्तूर्य्यनिनादैश्च शङ्खानाञ्च महास्वनैः ।
प्रबोधनं महाबाहोः कृष्णस्याक्रियतालये । ततः प्रभाते विमले प्रादुर्भूते दिवाकरे ।
प्रविवेश सभामेको नारदः प्रहसन्निव । दृष्ट्वा तु यादवान् सर्व्वान् कृष्णेन सह सङ्गतान् ।
ततः स जयशब्देन माधवं प्रत्यपूजयत् । उग्रसेनादयस्ते च तच्चापि प्रत्यपूजयन् ।
अथाभ्युत्थाय विमनाः कृष्णः समितिदुर्ज्जयः । मधुपर्कञ्च गाञ्चैव नारदाय ददौ प्रभुः । १०४६०
सोपविश्यासने शुभ्रे सत्कृतो यादवर्षभैः । सुखासीनो यथान्यायमुवाचेदं वचोऽर्थवत् ।
॥ नारद उवाच ॥ किमेवं चिन्तयाविष्टा निःसङ्गा गतमानसाः । उपहताः सर्व्वे वै क्लीबा इव समासते ।
एवमुक्ते तु वचने नारदेन महात्मना । वासुदेवोऽब्रवीद्वाक्यं शृण्वतां भगवन्निदं ।
अनिरुद्धो हृतो ब्रह्मन् केनापि निशि सुव्रत । तस्यार्थे सर्व्व एव च चिन्तार्त्ता इहैव यः ।
एष ते यदि वृत्तान्तः श्रुतो दृष्टोऽपि वा मुने । भगवन् कथ्यतां साधु प्रियमेतन्ममानघ । १०४६५
इत्येवमुक्ते वचने केशवेन महात्मना । प्रहस्य नारदः प्राह शृण्वतां मधुसूदन ।
निर्वृत्तं सुमहद्युद्धं देवासुरसमं महत् । अनिरुद्धस्य चैकस्य बाणस्य च महाहवे ।

न व्रतानि नियोक्ष्यन्ति विकर्मस्था द्विजातयः । चौरप्रायाश्च राजानो युगान्ते समुपस्थिते ।
कुण्डोदरा नैकृतिकाः सुरापा ब्रह्मवादिनः । अश्वमेधेन यक्ष्यन्ति युगान्ते जनमेजय ।
याजयिष्यन्त्ययाज्यांश्च तथाऽभक्ष्यभक्षिणः । ब्राह्मणा धनतृष्णार्ता युगान्ते समुपस्थिते ।
भोःशब्दमभिधास्यन्ति न च कश्चित् पठिष्यति । एकशङ्खास्तथा नार्यो गवेधुकपिनद्धिकाः ।
नक्षत्राणि विवर्णानि विपरीता दिशस्तथा । सन्ध्यारागोऽथ दिग्दाहो भविष्यत्यधमे युगे । ॥१५॥
पितॄन् पुत्रा नियोक्ष्यन्ति वध्वः श्वश्रूश्च कर्मसु । वाक्शरैस्तर्जयिष्यन्ति गुरून् शिष्यास्तथैव च ।
वियोनिषु च वत्स्यन्ति प्रमदासु नरास्तथा । मुखेषु च प्रयोक्ष्यन्ति प्रमत्ताश्च नराधमाः ।
अकृत्वाग्राणि भोक्ष्यन्ति नराश्चैवाग्निहोत्रिणः । भिक्षां बलिमदत्त्वा च भोक्ष्यन्ति पुरुषाः स्वयं ।
पतीन् सुप्तान् वञ्चयित्वा गमिष्यन्ति स्त्रियोऽन्यतः । पुरुषाश्च प्रसुप्तासु भार्यासु च परस्त्रियं ।
नाव्याधितो नाप्यरुजः सर्व एवाभ्यसूयकः । न कृते प्रतिकर्ता च युगे क्षीणे भविष्यति । ॥२०॥
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥१८९॥

॥ जनमेजय उवाच ॥ एवं विलुलिते लोके मनुष्याः केन पालिताः । निवत्स्यन्ति किमाचाराः किमाहारविहारिणः ।
किंकर्माणः किमीहन्तः किंप्रमाणाः किमायुषः । कां च काष्ठां समासाद्य प्रपत्स्यन्ति कृतं युगं ।
॥ व्यास उवाच ॥ अत ऊर्ध्वं च्युते धर्मे गुणहीनाः प्रजास्ततः । शीलव्यसनमासाद्य प्राप्स्यन्ति ह्रासमायुषः ।
आयुर्हान्या बलग्लानिर्बलग्लान्या विवर्णता । वैवर्ण्याद् व्याधिसंपीडा निर्वेदो व्याधिपीडनात् ।
निर्वेदादात्मसंबोधः संबोधाद्धर्मशीलता । एवं गत्वा परां काष्ठां प्रपत्स्यन्ति कृतं युगं । ॥५॥
उद्देशतो धर्मशीलाः केचिन्मध्यस्थतां गताः । विमर्शशीलाः केचित्तु हेतुवादकुतूहलाः ।
प्रत्यक्षमनुमानञ्च प्रमाणमिति निश्चिताः । प्रमाणैक्यं करिष्यन्ति नेति पण्डितमानिनः ।
अप्रमाणं करिष्यन्ति वेदोक्तमपरे जनाः । तदा मूढमनाश्चैव भविष्यन्ति [illegible]योऽपराः ।
नास्तिक्यपरमाश्चापि केचिद्धर्मविलोपकाः । भविष्यन्ति नरा मन्दा मूढाः पण्डितमानिनः ।
तदात्वमात्रश्रद्धेयाः शास्त्रज्ञानबहिष्कृताः । दाम्भिकास्ते भविष्यन्ति वादशीलकृतक्षणाः । ॥१०॥
तथा विलुलिते धर्मे जनाः श्रेष्ठपुरस्कृताः । शुभान्येवाचरिष्यन्ति दानसत्यसमन्विताः ।
सर्वभक्षः स्वयंगुप्तो निर्घृणो निरपत्रपः । भविष्यति तदा लोकस्तत् कषायस्य लक्षणं ।
विप्राणां शाश्वतीं वृत्तिं यदा वर्णावरा जनाः । अभिपत्स्यन्ति वृत्त्यर्थं तत् कषायस्य लक्षणं ।
कषायोपप्लवे काले ज्ञानविज्ञानवर्जिते । सिद्धिमल्पेन कालेन यास्यन्ति निरुपद्रुताः ।
महायुद्धं महावातं महावर्षं महाभयं । भविष्यति युगे क्षीणे तत् कषायस्य लक्षणं । ॥१५॥
विप्ररूपाणि रक्षांसि राजानः कर्णवेदिनः । पृथिवीमुपभोक्ष्यन्ति युगान्ते समुपस्थिते ।
निःस्वाध्यायवषट्कारा अनेतारोऽभिमानिनः । क्रव्यादा ब्रह्मरूपेण सर्वभक्षा वृथाव्रताः ।
मूर्खाः स्वार्थपरा लुब्धाः क्षुद्राः क्षुद्रपरिच्छदाः । व्यवहारोपवृत्ताश्च च्युता धर्माच्च शाश्वतात् ।
हर्तारः पररत्नानां परदारप्रधर्षकाः । कामात्मानो दुरात्मानः सोपधाः प्रियसाहसाः ।

पतिमपि लभते च साधु कन्या सवकमुपेत्य प्रजा सुतेषु वाचः । जनयति च सुतं गुणैरुपेतं जननविनं दिवसं प्रसूतेन च ।
विजयति वसुधाञ्च राजपुत्रोऽनुत्तमसुखं लभते दिवञ्च्यवन । विपुलमपि धनं लभेत वैश्यः सुगतिमियात् श्रवणाच्च शूद्र
जातिः । ११९७१

पुराणमेतच्चरितं महात्मनामधीत्य बुद्धिं लभते च नैष्ठिकीं । विहाय दुःखानि विमुक्तसंशयः संवोत्तरामी विचरेदसु
न्धरां ।

इत्येतदाख्यानमुदारवृत्तं मया प्रतिख्यातमतो हि सन्मतेषु । श्रोतव्य श्रेयसे पुनः श्रान्ताः सुखं भवन्तो विचरन्तु लोके ।
इति चरितमिदं महात्मनाम्नुविहितमद्भुतवीर्यकर्मणां । कथितमिदं हि समासविस्तरैः किमपरमिच्छसि किं ब्रवीमि ते ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

॥ जनमेजय उवाच ॥ प्रभावं पद्मनाभस्य स्वपतः सागराम्भसि । पुष्करे च यथोद्भूताः देवाः सर्षिगणाः पुरा ।
एतदाख्याहि निःशेषं योगं योगविदाम्पते । शृण्वतस्तस्य मे कीर्तिं न तृप्तिरुपजायते । ११९८०
कियता चैव कालेन शेते स पुरुषोत्तमः । कियत्कालं च स्वपिति कालस्य कथय नः ।
कियता चैव कालेन बोधमेष्यति सुरारिहा । कथं चोत्थाय भगवान् ससर्जाखिलं जगत् ।
के प्रजापतयस्तत्र पूर्वमासन् महामुने । कथं निर्मितवांश्चैव चित्रं लोकं सनातनः ।
कथमेकार्णवे घोरे नष्टे स्थावरजङ्गमे । नष्टे देवासुरनरे प्रनष्टोरगराक्षसे ।
नष्टानलानिले लोके नष्टाकाशमहीतले । केवलं गह्वरीभूते महाभूतविपर्यये । ११९८५
प्रभुर्महाभूतपतिर्महातेजा महाकृतिः । आस्ते सुरवरश्रेष्ठो विधिमास्थाय कं मुने ।
तन्मे समुपपन्नाय ब्रूह्येतत्संशयं द्विज । शुश्रूषवे धर्मिष्ठ यशो नारायणात्मकं ।
प्रादुर्भावं पुरस्कृत्य भूतं भव्यं महात्मनः । स्वधामानामुपविष्टानां भगवन् वक्तुमर्हसि ।
॥ वैशम्पायन उवाच ॥ नारायणयशोद्याने या भविष्यन्नृप स्पृहा । तदेवानश्वरं मत्तः श्रूयतां कुरुसत्तम ।
शृणुष्वादिपुराणेभ्यो देवेभ्यो यथा श्रुतः । ब्राह्मणानाञ्च वदतां श्रुतोऽस्माभिर्महात्मनां । ११९९०
यथा च तपसा दृष्टा बृहस्पतिसमद्युतिः । पराशरसुतः श्रीमान् कृष्णद्वैपायनोऽब्रवीत् ।
तत्तेऽहं सम्प्रवक्ष्यामि यथाशक्ति यथाश्रुति । न विज्ञातुं मया शक्यमविज्ञानेन भारत ।
कः समुत्सहते ज्ञातुं परं नारायणात्मकं । विस्मयन्तेऽस्य ब्रह्माद्या न वेदयन्ति तत्त्वतः ।
श्रुतं मे विप्रदेवानां यद्रहस्यं महर्षिणां । यदिज्यं धर्मशास्त्राणां तत्त्वतत्त्वार्थवेदिनां ।
यदध्यात्मविदां चिन्त्यं कारणञ्चापि कर्मिणां । अधिदैवञ्च यद्दैवं तद्देवमिति कीर्तितं । ११९९५
यद्भूतमधिभूतञ्च यत्परञ्च महर्षिणां । यत् सत्यं वेदवृद्धश्च यत्सत्यं यतयो विदुः ।
यः कर्ता कारको बुद्धिर्मनः क्षेत्रज्ञ एव च । प्रधानं पुरुषः शास्ता यः कश्चिदभिशब्द्यते ।
कालः कालं प्रपद्यति द्रष्टा स्वाधीन एव च । प्राणः पञ्चविधश्चैव ध्रुवमक्षरमेव च ।
उच्यते विविधैर्भावैरक्षर्यो ह्यनघ तत्परैः । स एष भगवान् सर्वं करोति विकरोति च ।
योऽस्मान् कारयते कर्म तेन स्म व्यापृतोऽस्मताः । यजामहे तमेवं च तमेवेच्छाम निर्वृतिं । १२०००

स भूयो विस्मयाविष्टः कौतूहलसमन्वितः । बालमादित्यसङ्काशं न शक्तोऽभ्युपसर्पितुं ।
सोऽचिन्तयदथैकान्ते स्थित्वा सलिलसन्निधौ । पूर्व्वदृष्टमिदं नेति शङ्कितो देवमायया ।
अगाधे सलिले तस्मिन् मार्कण्डेयः स वै मुनिः । न शान्तिं लभते तत्र सन्त्रासात् सम्भ्रमविक्लवः ।
तथैव भगवान् हंसो गतो योगेन बालतां । बभाषे मेघतुल्येन स्वरेण पुरुषोत्तमः ।
॥ भगवानुवाच ॥ माभैर्व्वत्स न भेतव्यं सम्प्रत्येहि ममान्तिकं । मार्कण्डेय मुने वीर बालस्त्वं श्रमपीड़ितः । ११४९०
॥ मार्कण्डेय उवाच ॥ को मां नाम्ना कीर्त्तयति तपः परिभवन्मम । बहुवर्षसहस्राख्यं धर्षयन्निव मे वयः ।
न ह्येष समुदाचारो देवेष्वपि समाहितः । मां ब्रह्माऽपि स विश्वेशो दीर्घायुरिति भाषते ।
कस्तपोघोरशिरसं मामद्य त्यक्तजीवितः । मार्कण्डेयेति मां प्रोक्ता मृत्युमीक्षितुमिच्छति ।
॥ वैशम्पायन उवाच ॥ एवमाभाष्य तं क्रोधान्मार्कण्डेयो महामुनिः । अथैनं भगवान् भूयो बभाषे तत्परायणं ।
॥ भगवानुवाच ॥ अहं ते जनको वत्स हृषीकेशः पिता गुरुः । आयुःप्रदाता पौराणः किमर्थं नोपसर्पसि । ११४९५
मां पुत्त्रकामः प्रथमं पिता ते ह्याङ्गिरा मुनिः । पूर्व्वमाराधयामास तपस्तीव्रमुपाश्रितः ।
ततस्त्वां घोरतपसं दहनोपमतेजसं । दत्तवानहमात्मेष्टं महर्षिममितायुषं ।
तत्र नोत्सहते चान्यो येन भूयो ममात्मकं । द्रष्टुमेकार्णवगतं क्रीड़न्तं योगधर्म्मिणं ।
॥ वैशम्पायन उवाच ॥ ततः प्रहृष्टवदनो विस्मयोत्फुल्ललोचनः । मूर्द्ध्नि बद्धाञ्जलिपुटो मार्कण्डेयो महातपाः ।
गोत्रनामादिकं श्रुत्वा दीर्घायुर्लोकपूजितः । अथाकरोन्नमस्कारं प्रणतः शिरसा प्रभुं । ११५००
॥ मार्कण्डेय उवाच ॥ इच्छेऽहं तत्त्वतो मायामिमां ज्ञातुं तवानघ । यदेकार्णवमध्यस्थः शेषे त्वं बालरूपवान् ।
किंसंज्ञः कश्च भगवन् लोके विज्ञायसे प्रभो । तर्कये त्वां महद्भूतं न भूतमिह तिष्ठति ।
॥ भगवानुवाच ॥ अहं नारायणो ब्रह्मा सम्भवः सर्व्वदेहिनां । सर्व्वभूतोद्भवकरः सर्व्वभूतविनाशनः ।
अहमैन्द्रे पदे शक्र ऋतूनामपि वत्सरः । अहं युगे युगाख्यश्च युगस्यावर्त्त एव च ।
अहं सर्व्वाणि सत्त्वानि दैवतान्यखिलानि च । भुजगानामहं शेषस्तार्क्ष्योऽहं सर्व्वपक्षिणां । ११५०५
अहं सहस्रशीर्षाद्यैः पादैरभिसंवृतः । आदित्यो यज्ञपुरुषो देवयज्ञमयो मखः ।
अहमग्निर्हव्यवाहो यादसां पतिरव्ययः । यत् पृथिव्यां द्विजेन्द्राणां तपसा भावितात्मनां ।
बहुजन्मनिरुद्धानां ब्रह्मणोऽप्यतिरिच्यते । ज्ञानवान् दृष्टविश्वात्मा योगिनां योगवित्तमः ।
कृतान्तः सर्व्वभूतानां विश्वेषां कालसंज्ञितः । अहं कर्म्मक्रिया जीवः सर्व्वेषां धर्म्मसाधनं ।
निष्क्रियः सर्व्वभूतानामात्मजातिः सनातनः । प्रधानं पुरुषो देवस्त्वनाद्यस्त्वव्ययोऽव्ययः । ११५१०
अहं धर्म्मस्तपश्चाहं सर्व्वाश्रमनिवासिनां । अहं हयशिरा देवः क्षीरोदधिमहार्णवे ।
ऋतं सत्यञ्च परममहमेकः प्रजापतिः । अहं सांख्यमहं योगः पदं तत्परमं तथा ।
अहमिज्या भवश्चाहमहं विद्याधिपः स्मृतः । अहं ज्योतिरहं वायुरहं भूमिरहं नभः ।
अहमापः समुद्राश्च नक्षत्राणि दिशो दश । अहं वर्षमहं सोमः पर्ज्जन्योऽहमहं रविः ।
क्षीरोदः सागरश्चाहं समुद्रो वड़वामुखः । वह्निः संवर्त्तको भूत्वा पिबंस्तोयमयं हविः । ११५१५

अहं पुराणं परमं तथैवाहं परायणं । अहं भूतस्य भव्यस्य वर्त्तमानस्य सम्भवः ।
यत्किञ्चित् पश्यसे चैव यच्छृणोषि च किञ्चन । यच्चानुभवसि लोके तत् सर्व्वं मामकं स्मृतं ।
विश्वं सृष्टं मया पूर्व्वं सृजेयञ्चाद्य पश्य मां । युगे युगे च स्रक्ष्यामि मार्कण्डेयाखिलं जगत् ।
तदेतदखिलं सर्व्वं मार्कण्डेयावधारय । शुश्रूषुर्मम धर्म्मांश्च कुक्षौ चर सुखी भव ।
मम ब्रह्मा शरीरस्थो देवाश्च ऋषिभिः सह । व्यक्तमव्यक्तयोगं मामवगच्छापराजितं । ११४२०
अहमेकाक्षरो मन्त्रस्त्र्यक्षरश्चैव सर्व्वशः । त्रिपदश्चैव परमस्त्रिवर्गार्थनिदर्शनः ।
॥ वैशम्पायन उवाच ॥ एवमेतत् पुराणेषु वेदान्तेषु महामुनिः । वक्तुमाहृतवानाशु मार्कण्डेयं महामुनिं ।
प्रवेशयामास ततो जठरं विश्वरूपधृक् । ततो भगवतः कुक्षिं प्रविष्टो मुनिसत्तमः ।
रराम सुखमासाद्य शुश्रूषन् हंसमव्ययं ।
तदक्षरं विविधमपाश्रितो वपुर्महार्णवे व्यपगतचन्द्रभास्करे । शनैश्चरन् प्रभुरथ हंससंज्ञितः सृजन् जगद्विचरति काल
पर्य्यये । ११४२५
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे मार्कण्डेयदर्शने द्विशततमोऽध्यायः ॥ २०० ॥
॥ वैशम्पायन उवाच ॥ आपवः स विभुर्भूत्वा कारयामास वै तपः । छादयित्वात्मनो देहमात्मना कुरुसत्तम ।
ततो महात्माऽतिबलो मतिं लोकस्य सर्ज्जने । महतां पञ्चभूतानां विश्वभूतो व्यचिन्तयत् ।
तस्य चिन्तयतस्तत्र तपसा भावितात्मनः । निराकाशे तोयमये सूक्ष्मे जगति गह्वरे ।
ईषत् सङ्क्षोभयामास सोऽर्णवं सलिले स्थितः । अनन्तरोर्म्मिणा सूक्ष्ममथ च्छिद्रमभूत्तदा ।
तत्र शब्दमयोऽभूत् स मारुतच्छिद्रसम्भवः । स लब्ध्वाऽन्तरमक्षोभ्यो व्यवर्द्धत समीरणः । ११४३०
विवर्द्धता बलवता तेन सङ्क्षोभितोऽर्णवः । अन्योन्यवेगाभिहता ममन्थुश्चोर्म्मयः कृशं ।
महार्णवस्य क्षुब्धस्य तस्मिन्नम्भसि मथ्यति । कृष्णवर्त्मा समभवत् प्रभुर्वैश्वानरोऽर्च्चिमान् ।
ततः संशोषयामास पावकः सलिलं बहु । क्षयाज्जलनिधेश्छिद्रमसृजद्विश्वजित्तदा ।
आत्मतेजोभवाः पुण्या आपोऽमृतरसोपमाः । आकाशं छिद्रसंभूतं वायुराकाशसम्भवः ।
आज्यं संघर्षणोद्भूतं पावकस्याज्यसम्भवं । दृष्ट्वा प्रीतमना देवो महात्मा भूतसम्भवः । ११४३५
दृष्ट्वा भूतानि भगवान् लोकसृष्ट्यर्थमव्ययः । ब्रह्मणो जन्मसहितं बहुरूपो विचिन्वति ।
चतुर्युगादिसंख्याते सहस्रयुगपर्य्यये । यत् पृथिव्यां द्विजेन्द्राणां तपसा भावितात्मनां ।
बहुजन्मनिरुद्धात्मा ब्राह्मणो यतिसत्तमः । ज्ञानवान्दृष्टविश्वात्मा योगिनां योगवित्तमः ।
तमात्मतत्त्वं विज्ञेयं संपूर्णैश्वर्य्यविक्रमं । देवो ब्रह्माणि विश्वेशो नियोजयति योगवित् ।
ततस्तस्मिन्महातोये हविषो हरिरच्युतः । स्वपन् क्रीडंश्च विविधं मोदते वै स पावकिः । ११४४०
पद्मं नाभ्युद्भवं चैकं समुत्पादितवांस्ततः । सहस्रपर्णं विरजो भास्कराभं हिरण्मयं ।
हुताशनज्वलितशिखोज्ज्वलप्रभं सुगन्धिनं शरदमलार्कतेजसं । विराजते कमलमुदारवर्चसं महात्मनस्तनुरुहचारुदर्शनं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे महापद्मोत्पत्तौ एकाधिकद्विशततोऽध्यायः ॥ २०१ ॥

॥ वैशम्पायन उवाच ॥ अथ योगविदां श्रेष्ठं सर्व्वभूतमहेश्वरं । स्रष्टारं सर्व्वभूतानां ब्रह्माणं सर्व्वतोमुखं ।
तस्मिन् हिरण्मये पद्मे बहुयोजनविस्तृते । सर्व्वतेजोगुणमये पार्थिवैर्लक्षणैर्युते ।
तच्च पद्मं पुराणज्ञाः पृथिवीरूपमुत्तमं । नारायणात् समुत्पन्नं प्रवदन्ति महर्षयः । ११८४५
या तु पद्मासना देवी तां पृथ्वीं परिचक्षते । ये तु गर्भाङ्कुराः सारास्तान् दिव्यान् पर्व्वतान् विदुः ।
हिमवन्तञ्च मेरुञ्च नीलं निषधमेव च । कैलासं मुञ्जवन्तञ्च तथाऽद्रिं गन्धमादनं ।
पुण्यं त्रिशिखरं चैव कान्तं मन्दरमेव च । उदयञ्च गिरिश्रेष्ठं विन्ध्यमस्तञ्च पर्व्वतं ।
एते देवगणानाञ्च सिद्धानाञ्च महात्मनां । आश्रयाः सर्व्वभूतानां पुण्याः कामदुघोऽद्रयः ।
एतेषामन्तरो देशो जम्बूद्वीप इति स्मृतः । जम्बूद्वीपस्य संस्थानं याज्ञिका यत्र कुर्व्वते । ११८५०
गर्भाद्यत् स्रवते तोयं देवामृतरसोपमं । दिव्यतीर्थशतापाङ्गास्ता दिव्याः सरितः स्मृताः ।
यान्येतानि तु पद्मस्य केशराणि समन्ततः । असंख्याताः पृथिव्यास्तु सर्व्वे ते धातुपर्व्वताः ।
यानि पद्मस्य पत्राणि भूरीण्यूर्द्ध्वं नराधिप । ते दुर्गमाः शैलचिता म्लेच्छदेशा विकल्पिताः ।
यान्यधः पद्मपत्राणि निवासार्थं विभागशः । दैत्यानामुरगाणाञ्च पातालं तन्महात्मना ।
तेषामधोगतं यत्तदुदकेत्यभिसंज्ञितं । महापातककर्म्माणो मज्जन्ते यत्र मानवाः । ११८५५
पद्मस्यान्ते कुशं यत्तदेकार्णवजलं महत् । प्रोक्तास्ते दिक्षु संघाताश्चत्वारो जलसागराः ।
एष नारायणस्याद्यो महापुष्करसम्भवः । प्रादुर्भावोऽव्यक्तस्यात्मनो पुष्करसंज्ञितः ।
एतस्मात् कारणात्तज्ज्ञैः पुराणैः परमर्षिभिः । याज्ञिकैर्वेददृष्टार्थैर्यज्ञे पद्मविधिः स्मृतः ।
एवं भगवता पद्मविधया परया विधिः । पर्व्वतानां नदीनाञ्च देशानाञ्च विनिर्म्मितः ।
विभुस्तथा चाप्रतिमप्रभावः प्रभाकरो योगिवरोऽमितद्युतिः । स्वयं स्वयम्भूः शयनेऽसृजत्तदा जगन्मयं पद्मनिधिं महार्णवे । ११८६०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सर्व्वभूतोत्पत्तौ द्व्यधिकद्विशतोऽध्यायः ॥ २०२ ॥
॥ वैशम्पायन उवाच ॥ चतुर्युगादिसम्भूतौ सहस्रयुगपर्य्यये । विष्णुतमसि संभूतो मधुर्नाम महासुरः ।
तस्यैव तु सहायोऽन्यो भूतो रजसि कैटभः । तौ रजस्तमसाविष्टौ सम्भूतौ कामरूपिणौ ।
एकार्णवजलं सर्व्वं क्षोभयन्तौ महाबलौ । कृष्णरक्ताम्बरधरौ श्वेतदीप्तोग्रदंष्ट्रिणौ ।
किरीटमुकुटोदग्रौ केयूरवलयोज्ज्वलौ । महोद्वृत्तताम्राक्षौ पीनोरस्कौ महाभुजौ ।
महद्भिः संहननौ जङ्गमाविव पर्व्वतौ । नीलमेघाभसङ्काशावादित्यप्रतिमाननौ । ११८६५
विद्युदाभोद्यताग्राभ्यां कराभ्यामतिभीषणौ । पादसञ्चारवेगाभ्यामुत्क्षिपन्ताविवार्णवं ।
कम्पयन्ताविव हरिं शयानममरिसूदनं । तौ तत्र विचरन्तौ स्म पुष्करं विश्वतोमुखं ।
पश्यतां दीप्तवपुषं योगिनां श्रेष्ठमव्ययं । नारायणसमाज्ञप्तं सृजन्तमखिलाः प्रजाः ।
दैवतानि च विश्वानि मानसांश्च सुतानृषीन् । ततस्तावूचतुस्तत्र ब्रह्माणमसुरोत्तमौ ।
क्रुद्धौ युयुत्सया क्रूरौ क्रोधसंरक्तलोचनौ । कस्त्वं पुष्करमध्यस्थः सितोष्णीषश्चतुर्भुजः । ११८७०
आवां न गणयेन्मोहादास्से त्वं विगतज्वरः । एह्यावयोर्व्वा युद्धं प्रयच्छ कमलोद्भव ।

आवाभ्यां परमेशाभ्यां न मर्त्यं ख्यातुमर्हसे । कस्मात् कमलोद्भवस्त्वं केन चासीश्च चोदितः ।
कः स्रष्टा कश्च ते गोप्ता केन नाम्नाऽभिधीयसे ।
॥ ब्रह्मोवाच ॥ यः क इत्युच्यते लोके अविज्ञातः सहस्रशः । तत्सकाशे योगवन्तं तं किं मां नाधिगच्छथः ।
॥ मधुकैटभावूचतुः ॥ नावयोः परमं लोके किञ्चिदस्ति महामते । आवाभ्यां छाद्यते विश्वं रजसा तमसा तथा ।   ११४७५
रजस्तमोमयावावां यतीनां दुःखलक्षणौ । छलकौ धर्मशीलानां दुस्तरौ सर्व्वदेहिनां ।
आवाभ्यां मुह्यते लोको युक्तिताभ्यां युगे युगे । आवामर्थश्च कामश्च यज्ञाः सर्गपरिग्रहाः ।
सुखं यत्र मुदो यत्र यत्र श्रीः सन्नतिर्यतः । एषां यत् काङ्क्षितं किञ्चित्तदुभयस्व विचिन्तयन् ।
॥ ब्रह्मोवाच ॥ यत्तद्योगवतां श्रेष्ठं यत्र पूर्व्वं मयार्चितं । तत् समाधाय गुणवान् सत्त्वे चास्मि प्रतिष्ठितः ।
यत् परं योगयुक्तानां योऽक्षरं सत्त्वमेव च । रजसस्तमसश्चापि यः स्रष्टा जीवसम्भवः ।   ११४८०
यतो भूतानि जायन्ते सात्त्विकानीतराणि च । स एव युवां समरे वशी वां शमयिष्यति ।
॥ वैशम्पायन उवाच ॥ ततः प्रयातं श्रीमन्तं वज्रयोजनविस्तृतं । पद्मनाभं हृषीकेशं प्रणम्यावोचतामुभौ ।
जानीवस्त्वां विश्वयोनिमेकं पुरुषमुत्तमं । तवोपायनदेहार्थमिति नौ विद्धि कारणं ।
अमोघदर्शनं सत्यं यतस्त्वां विद्म ईश्वरं । ततस्त्वामभितो देव काङ्क्षावः प्रतिवीक्षितुं ।
तदिच्छावो वरं दत्तं त्वया त्वावामरिन्दम । अमोघदर्शनायैव नमस्तेऽस्त्वजिताय च ।   ११४८५
॥ भगवानुवाच ॥ कानिच्छतो कृतं मूढं वरानसुरसत्तमौ । दत्तायुषौ मया भूयस्त्वौ जीवितुमिच्छथः ।
तस्मादद्य वां यत्सत्न् प्राप्नुतं महाबलौ । वध्यौ भवन्तौ तु ख्यातौ तावित्येवाब्रवीद्धरिः ।
उभावपि महात्मानावूर्ज्जितौ सत्यतत्परौ ।
॥ मधुकैटभावूचतुः ॥ यस्मिन् कश्चिन्न मृतवान् देशे तस्मिन् प्रभो वधं । इच्छावः पुत्रतां चैव तव यातुं सुरारिहन् ।
॥ भगवानुवाच ॥ वाढं सुतौ मे प्रवरौ भविष्ये कल्पसंभवे । भविष्यथो न सन्देहः सत्यमेतद्ब्रवीमि वां ।   ११४९०
॥ वैशम्पायन उवाच ॥ वरं प्रदायाथ महासुराभ्यां सनातनो विश्वहरो महाद्युतिः । रजस्तमोभ्यां भवभावनोपमौ ममन्थ
तावूरुतले सुरारिहा ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे मधुकैटभवधे त्र्यधिकद्विशततोऽध्यायः ॥ २०३ ॥
॥ वैशम्पायन उवाच ॥ स्थित्वा तस्मिंस्तु कमले ब्रह्मा ब्रह्मविदाम्वरः । ऊर्द्ध्वबाहुर्महाबाहुस्तपो घोरं समाश्रितः ।
ज्वलन्निव स तेजस्वी भाभिः स्वाभिस्तमोनुदः । बभासे सर्व्वधर्मज्ञः सहस्रांशुरिवांशुमान् ।
अथान्यद्रूपमास्थाय शम्भुर्नारायणोऽव्ययः । द्विधाकृत्वात्मनात्मानमचिन्त्यात्मा सनातनः ।
आजगाम महातेजा योगाचार्य्यो महातपाः । सांख्याचार्य्यश्च मतिमान् कपिलो ब्रह्मणाम्वरः ।   ११४९५
देवर्षिभिः स्तुतावेतौ युक्तौ ब्रह्मविदाम्वरौ । उभावपि महात्मानावूर्ज्जितौ सत्यतत्परौ ।
तौ प्राप्तावूचतुस्तत्र ब्रह्माणममितौजसं । परावरविशेषज्ञौ पूजितौ परमर्षिभिः ।
बद्धत्वाद्दृढपादश्च विश्वात्मा जगतः स्थितिः । ग्रामणीः सर्व्वभूतानां ब्रह्मा लोकगुरुः स्वयंरः ।
तयोस्तद्वचनं श्रुत्वा स स्थितो व्याहृतीर्जपन् । योनिमान् जनवान् लोकान् यथाह ब्राह्मणी श्रुतिः ।

पुत्रं भूःसंश्रयश्चैव समुत्पादितवानृषि । ततो गतागतं सम्यक् ब्रह्मा आत्मसमुद्भवं । ११५००
योत्पन्नश्चाग्रे ब्रह्माणमुवाच मानसः सुतः । करोमि किमिति सर्व्वार्थं ब्रवीतु भगवानिति ।
॥ ब्रह्मोवाच ॥ स एव कपिलो नाम ब्रह्मा नारायणस्तथा । वदते तौ समयाच्य तत् कुरुष्व महामते ।
॥ वैशम्पायन उवाच ॥ ब्रह्मणोक्तो तदा सोऽथ भूयस्तावुपस्थितः । प्रभुमुपेत्य बुधयोः किं कुर्वीति कृताञ्जलिः ।
॥ परमेश्वरावूचतुः ॥ यत् सत्यमक्षरं ब्रह्म ह्यष्टादशविधं स्मृतं । सत्यस्थलमहानैव यत्नात् समनुस्मर ।
॥ वैशम्पायन उवाच ॥ एतदुक्तो निगन्नाय स जगौ दिशमुत्तरां । गत्वा च तत्र ब्रह्मत्वमगमज्ज्ञानचक्षुषा । ११५०५
ततो ब्रह्मा भुवर्न्नाम द्वितीयमसृजत् प्रभुः । सङ्कल्पयित्वा च पुनर्मनसैव महात्मनः ।
ततः सोऽप्यब्रवीद्वाक्यं किं कुर्वीति पितामहं । पितामहसमाज्ञप्तो ब्रह्मार्थं समुपस्थितः ।
ब्रह्मभ्यां सहितः सोऽपि भूयो माधवतीं गतः । प्राप्तश्च परमं स्थानं च तयोः पार्श्वमागतः ।
तस्मिन्नपि गते पुत्रे तृतीयमसृजत् प्रभुः । भूयोऽपि पितृसुश्रवं भूर्भुवं नाम तं विदुः ।
आसाद्य सोऽपि तं धर्म्मं तयोरेवागमद्गतिं । एवं पुत्रत्रयोऽप्येति शोकार्त्तः प्रभोर्ब्बरात्मनः । ११५१०
तान् गृहीत्वा सुतांस्तत्र प्रयातौ स्वार्च्चितां गतिं । नारायणश्च भगवान् कपिलश्च यतीश्वरः ।
यं कालं तौ गतौ मुक्तिं ब्रह्मा तं कालमेव तु । तपो घोरतरं भूयः स तेपे संशितव्रतः ।
न रराम ततो ब्रह्मा प्रभुरेकस्तपश्चरन् । शरीरार्द्धात्ततो भार्य्यां समुत्पादितवान् शुभां ।
तपसा तेजसा चैव वर्चसा नियमेन च । सदृशीमात्मनो देवीं समर्थां लोकसर्ज्जने ।
स तया सहितस्तत्र रेमे ब्रह्मा महातपाः । सृजन् प्रजापतीन् सर्व्वान् अनन्यानेकशस्तथा । ११५१५
ततोऽसृजद्वै त्रिपदां गायत्रीं वेदमातरं । अकरोच्चैव चतुरो वेदान् गायत्रिसम्भवान् ।
आत्मार्थं चासृजत् पुत्रान् लोककर्त्तॄन् पितामहः । विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः ।
विश्वेशं प्रथमं नाम महातपसमात्मजं । सर्व्वाश्रमपदं पुत्रं नाम्ना धर्म्मं च सृष्टवान् ।
दक्षं मरीचिमत्रिञ्च पुलस्त्यं पुलहं क्रतुं । वशिष्ठं गौतमञ्चैव भृगुमङ्गिरसं मनुं ।
अथर्व्वभूता इत्येते ख्याताश्चैव महर्षयः । त्रयोदश सुता येषां वंशा वै संप्रतिष्ठिताः । ११५२०
अदितिर्द्दितिर्द्दनुः काला अनायुः सिंहिका तथा । प्राधा क्रोधा च सुरसा विनता कद्रुरेव च ।
दक्षस्यैता दुहितरः कन्या द्वादश भारत । नवचापि च भद्रं ते सप्तविंशतिरर्च्चिताः ।
मरीचेः कश्यपः पुत्रस्तपसा निर्म्मितः किल । तस्मै कन्या द्वादशैमा दक्षस्ता अभ्यमन्यत ।
नक्षत्राख्याश्च सोमाय तदा वै दत्तवान्नृप । रोहिण्यादीनि पुण्यानि सर्व्वाणि जनमेजय ।
लक्ष्मीः कीर्त्तिस्तथा साध्या विश्वा कामानुगा शुभा । देवी सरस्वती चैव ब्रह्मणा निर्म्मिता पुरा । ११५२५
एताः पञ्च वरिष्ठा वै सुरश्रेष्ठाय भारत । दत्ता धर्म्माय भद्रन्ते ब्रह्मणा दृष्टधर्म्मणा ।
या रूपार्द्धमयी पत्नी ब्रह्मणः कामरूपिणी । सुरभिः सा तु गोर्भूत्वा ब्रह्माणं समुपस्थिता ।
ततस्तामगमद्ब्रह्मा मैथुने लोकपूजितः । लोकसर्ज्जनहेतुज्ञो गवामर्थाय भारत ।
जज्ञे चैकादश सुतान् विपुलान् धर्म्मसंहितान् । एकादशाभवन् रुद्रान् इहलोकोऽतितेजसा ।

एष पौष्करको नाम प्रादुर्भावो महात्मनः । पुराणे कीर्त्तितो राजन् व्यासद्वैपायनेरितः ।
यथा तथानुपूर्व्येण संस्तुतः परमर्षिभिः । ११४९०
यश्चेदमग्र्यं प्रवरं पुराणं सदाऽप्रमत्तः शृणुयात् स्वयोगी । अवाप्य कामानिह वीतशोकः परत्र च स्वर्गफलानि भुङ्क्ते ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सर्व्वभूतोत्पत्तौ चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥
॥ जनमेजय उवाच ॥ श्रुतं नः परमं ब्रह्मन् सर्व्वमाचरितं महत् । दिव्यमत्यद्भुतं भूतमर्चितं बहुभिर्गुणैः ।
छन्दोभिर्वृत्तसंस्थानैः समासैश्च सविस्तरैः । चतुर्भिर्मधुराभावैर्ग्रथितं पदविग्रहैः ।
त्रिवर्गेणाभिसम्पन्नं धर्म्मेणार्थेन योजितं । कामेन बहुरूपेण शरीरान्वर्त्तिना च ।
ब्राह्मणानां प्रभावैश्च चौर्यानाश्च पराक्रमैः । वैरनिर्यातनैश्चैव प्रतिज्ञानाश्च पारगैः । ११४९५
रिपुष्वपि संपक्वैर्णानुबन्धः प्रबोधितः । संयोगानविनाशाय नृपेण यत्र विग्रहात् ।
ये च तस्मिन्महारौद्रे संग्रामे निहता नृपाः । तेषां सर्व्वाणि राज्ञानि पुत्राः सर्व्वे प्रपेदिरे ।
कौरवः प्रथितो राजा भगवच्छासनानुगः । धर्म्मश्च बहुधा मोक्षकथायां सर्वसम्प्रहा ।
शूद्राणामपि विख्यातः स्वर्गहेतुर्द्विजर्षभ । सनुष्यार्थं भूतानां मोक्षकाय कथयन् ।
चतुर्णां वर्णसंस्थानां पृथक् पृथगनेकधा । मर्गकार्थं यमनाय भूतानां संप्रबोधिताः । ११५००
प्रच्छन्ना देवसंस्थाने चीर्णे चीर्णे च कर्म्मणि । स्थाने यत्रापि संयोगः स चापि बहुधा कृतः ।
द्वाभ्यां संयोगविहिता मधुवाक्सवनस्यये । नैतत्फलं समाख्यातुं भारताध्ययनं महत् ।
एकाहेन महाग्रन्थमपि दिव्येन चक्षुषा । ब्रह्मणोऽस्य विस्तारं संक्षेपश्च सुसंयतं ।
श्रोतुमिच्छामि भगवन् परं कौतूहलं हि मे ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे जनमेजयवाक्ये पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥
॥ वैशम्पायन उवाच ॥ शृणुष्वैकमना राजन् पञ्चेन्द्रियसमाहितः । कथां कथयतो राजर्षिर्विकारेण चेतसा । ११५०५
ब्रह्मसम्भवमस्मत्तुमनद्धं कर्म्मभिर्नृप । पुरस्ताद्ब्रह्म सम्पन्नं ब्रह्मणो यददर्शितं ।
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकं । निष्कलः पुरुषस्तस्मात् संबभूवात्मयोनिजः ।
दिव्यो दिव्येन वपुषा सर्व्वभूतपतिर्विभुः । अचिन्त्यश्चाप्ययश्चैव युगानां प्रभवोऽव्ययः ।
अभूतश्चाप्यजातश्च सर्व्वस्य समतावृतः । अव्यक्तात्परतरं यत्तत्पुराणविदो विदुः ।
सर्व्वतः पाणिपादान्तं सर्व्वतोऽक्षिशिरोमुखं । सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति । ११५१०
असतश्च सतश्चैव विज्ञेयं यच्च कारणं । अव्यक्तो व्यक्तिरूपस्य परस्यापि न दृश्यते ।
विकारपुरुषोऽव्यक्तो स्वरूपी रूपमाश्रितः । चरत्यचिन्त्यः सर्व्वेषु गूढोऽग्निरिव दारुषु ।
भूतभव्योद्भवो नाथः परमेष्ठी प्रजापतिः । प्रभुः सर्व्वस्य लोकस्य नाम चाक्षेति तत्त्वतः ।
अपदात्तु पदो जातस्तस्मान्नारायणोऽभवत् । अव्यक्तो व्यक्तिमापन्नो ब्रह्मयोगेन शाश्वतः ।
ब्रह्मभावे च तं विद्धि स ब्रह्म सम्भवान् प्रभुः । प्रभुः सर्व्वस्य लोकस्य स्थावरस्येतरस्य च । ११५१५

अहन्त्विति स होवाच प्रजाः स्रक्ष्यामि भारत । प्रभवः सर्व्वभूतानां यस्य तनुरिमाः प्रजाः ।
स्वभावाज्जायते सर्व्वं स्वभावाच्च तथाऽभवत् । अहङ्कारः स्वभावाच्च स च सर्व्वमिदं जगत् ।
सर्व्वव्यापी निरालम्बो ममात्मोऽव्ययो भुवः । एष ब्रह्ममयो ज्योतिर्विश्वकर्मेन सञ्चितः ।
अव्यक्तो व्यक्तिमापन्नः पञ्चभिः कल्पकर्म्मभिः । धारयन् ब्रह्मणा व्यक्तं विविधं वितस्तरम् ।
अथ मूर्त्तिं समाधाय स्वभावाद्ब्रह्मचोदितः । ससर्ज्ज सलिलं ब्रह्मा येन सर्व्वमिदं ततं । ११५८०
वायुं पूर्व्वमथो सृष्ट्वा यो धातुर्भावसत्तमः । धारणाद्गुरुत्वाच्च लभते लोकसंज्ञितं ।
तदेतत् वायुसम्भूतं कृत्स्नं जगदभूत् पुरा । एतद्वैरतिक्रान्तं पूर्व्वमेव सरस्वति ।
पृथक्त्वं गमितं तोयं पृथिवीमव्यक्तमिच्छता । घनत्वाच्च द्रवत्वाच्च निखिलमोपलभ्यते ।
फलत्वात् सीदमानाच्च सलिले सलिलोद्भवः । व्याजहार शुभां वाणीं समन्तात् पूरयन्निव ।
ऊर्द्धं वै स्थातुमिच्छामि सम्मोदान्मुद्धरस्व मां । गम्भीरतोयविवरमूर्च्छितविक्षोभिताकरं । ११५८५
तेजोमूर्त्तिधरा देवी सर्व्वभूतशरीरिणी । यथायोगेन सम्भूता सर्व्वेण विषयैषिणी ।
श्रुत्वा तु गदितां तस्य गिरं तां सुसुभाषितां । वाराहं रूपमास्थाय निपपात महार्णवे ।
उद्धृत्य सोऽर्व्वानं तोयात् कृत्वा कर्म सुदुष्करं । समाधौ प्रलयं गत्वा प्रलीनो न च दृश्यते ।
यत्तद्ब्रह्ममयं ज्योतिराकाशमिति संज्ञितं । तत्र ब्रह्मा समुद्भूतः सर्व्वभूतपितामहः ।
अद्यापि मनसा धाता धार्य्यते ब्रह्मयोगिना । ध्यानयोगेन सूक्ष्मेण भूतानां हितकाम्यया । ११६००
भित्त्वा तु पृथिवीं मध्यमुपयाति समुद्भवं । तपनस्तूर्द्धमालिख्य रश्मिभिः प्रदहन्निव ।
तस्य मण्डलमध्यात्तु निःसृतं प्रतिमण्डलं । स सनातनजो ब्रह्मा सौम्यं सोमलमन्वगात् ।
सोममण्डलपर्य्यन्तात् पवनः समजायत । तदक्षरमयं ज्योतिस्तेजसो योनिवर्द्धनं ।
स तु योगमथास्थानात् स्वभावाज्ज्योतिरुद्भवात् । सृजते पुरुषं दिव्यं ब्रह्मयोनिं सनातनं ।
द्रवं यत् सलिलं तस्य घनं यत् पृथिवी भवत् । छिद्रं तत्र तदाकाशं ज्योतिर्यच्चक्षुरेव तत् । ११६०५
वायुना स्पन्दते चैव संघाताज्ज्योतिरुद्भवः । पुरुषात् पौरुषो भावः पञ्चभूतमयो महान् ।
भूतात्मा वै समे तस्मिंस्तस्मिन्देहे सनातनः । गुहायां निहितं ज्ञानं योगाख्यः सनातनः ।
तपनस्यैव तद्रूपं योऽग्निर्व्वसति देहिनां । शरीरे नित्यशो युक्ते धातुभिः सह सङ्गतः ।
स्वभावात् क्षयमायाति स्वभावाच्चयमेति च । स्वभावाद्विन्दते शान्तिं स्वभावाच्च न विन्दति ।
इन्द्रियैर्व्यतिमूढात्मा मोहितो ब्रह्मणः पदे । सम्भवं निधनञ्चैव कर्म्मभिः प्रतिपद्यते । ११६१०
यावत्तद्ब्रह्मविषयं नोपजानाति तत्त्वतः । तावत् संसारमाप्नोति सम्भवांश्च पुनः पुनः ।
इन्द्रियैर्व्यतिरिक्तो वै यदा भवति योगवित् । तदा ब्रह्मत्वमापन्नः प्रलयाय प्रतिष्ठति ।
प्रतिबुद्धमभुं लोकं ब्रह्मवांश्च भवत्युत । न च रागव्ययैर्याति न च सज्जति कर्हिचित् ।
आगतिञ्च गतिञ्चैव निधनं सम्भवन्तथा । भूतेभ्यो वेत्ति सर्व्वज्ञः परां सिद्धिमुपागतः ।
आत्मनो गतयश्चैव तथा विषयगोचरं । पुरस्तात् कर्म्मभिर्वृत्ते पदे ब्रह्म प्रतिष्ठितं । ११६१५

चित्तग्रन्थीश्च मनसा चक्षुषा पूर्व्वाश्च पावनाः । भिद्यमानाः प्रकोपेन वायुनिव इवार्णवः ।
पश्यते हृदयं नीलं परेभ्यो ज्ञानचक्षुषा । ब्रह्मप्रोक्तमिदात्मा वै विमुक्तो देहबन्धनात् ।
सृजेदपि परं लोकं संहरेदपि विश्वधा । तेजोमूर्त्तिरिवाविद्धमिव लोकश्च संक्षयेत् ।
तिर्य्यग्योनौ गतानाञ्च कर्म्मभिर्न्निरयोपमैः । तानपि प्रतिमुच्येत ब्रह्मयुक्तेन चेतसा ।
अचरञ्च चरैश्चैव योगं कर्म्मभिर्व्विन्दति । न परं विद्यते तत्र यद्गत्वा कर्म्मभिर्ध्रुवं । ११।२०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥
॥ वैशम्पायन उवाच ॥ पृथिव्यां यत् कृतं छिद्रं तपनेन विवर्द्धता । तस्मिन् न्यग्रोधश्च मैनाकः स्वभावविहितोऽचलः ।
पर्व्वभिः पर्व्वतत्वञ्च लभते नाम संश्रितं । अचलादचलत्वञ्च स्वभावान्मेरुरेव च ।
तस्य पृष्ठे सुविस्तीर्णे नगस्य सुमहर्द्धिमान् । तस्मिंस्तु पुरुषो व्यक्तो वसति ज्योतिरम्बरः ।
विहितस्य स्वभावेन तेनैव परमात्मना । यत्तद्ब्रह्ममयं तेजो निहितं शिरसोऽम्बरे ।
तस्य ज्योतिर्म्मयं रूपं दीप्तं पुरुषविग्रहं । वदनादभिनिष्क्रान्तं ज्वलन्तमिव तेजसा । ११।२५
चतुर्भिर्व्वदनैर्युक्तं चतुर्भिश्च भुजोत्तमैः । वक्त्रं ब्रह्ममयमुद्भूतं ब्रह्मा ब्राह्मणपुङ्गवः ।
तदेवैतन्महाभूतं पुनर्भावत्वमागतं । उद्धृता पृथिवी देवी पुरस्तात् सलिलाश्रयात् ।
ब्रह्मत्वं ब्रह्मणः स्थानाद्लोको लोकनाकृतः । पद्मश्चैव ब्रह्मलोकं स्पृष्टं मेरोस्तदाऽभवत् ।
उच्छ्रितं योजनशतं सहस्रशतमेव च । एवमेव च विस्तारं चतुर्भिर्गुणितं मुने ।
अथवा नैव संख्यातुं शक्यं भूतेन केनचित् । समासहस्रैर्ब्बहुभिरपि दिव्येन तेजसा । ११।३०
चतुर्भिः पार्श्वविस्तारैः शिलाभिरभिसंवृतैः । नगस्य तस्य राजेन्द्र विस्तारैः शतयोजनैः ।
कोटिकोटीशतगुणैर्गुणितं ब्रह्मवादिभिः । योगयुक्तैः सदा सिद्धैर्नित्यं ब्रह्मपरायणैः ।
मरुद्भिः सह देवेन्द्रैरुद्रैर्व्वसुभिरेव च । आदित्यैर्व्विश्वसहितैररक्ष वसुधाधिपान् ।
एवं पृथिवीश्चैव भगवान् विष्णुना सह । विवस्वद्वरुणाभ्याञ्च संघातं गमितं नृप ।
तेन ब्राह्मेण वपुषा ब्रह्मप्राप्तेन भारत । यत्ताद्विष्णुमयं तेजः सर्व्वत्र समतां गतं । ११।३५
यत्तद्ब्रह्मेति च प्रोक्तं ब्राह्मणैर्व्वेदपारगैः । नियमैर्ब्बहुभिः प्राप्तैः सत्यव्रतपरायणैः ।
एवमेते त्रयो लोका ब्राह्मेऽहनि प्रतिष्ठिताः । अहनि ब्रह्म चाव्यक्तं व्यक्तं प्राणैः प्रतिष्ठितं ।
ब्रह्मणो नियतं कर्म्म प्रभावेण प्रचोदितं । प्रवर्त्तमानं भावेन प्रसद ब्रह्मवादिनां ।
एतद्भूतमिति प्रोक्तं ब्राह्मणैर्व्वेदपारगैः । यदेकं ब्रह्मणः पादं विश्वत्वं गमितं परं ।
बहुत्वाद्धि प्रभावाणां विश्वशब्दः प्रयुज्यते । ब्राह्मणैर्ब्रह्मभूतात्मा सत्यव्रतपरायणैः । ११।४०
विश्वरूपं मनोरूपं बुद्धिरूपत्वमागतत् । एवं द्वन्द्वं स भगवान् प्रथमं मिथुनेऽसृजत् ।
स एव भगवान् विश्वं देव्या सह सनातनः । विधाय विपुलान् भोगान् ब्रह्मा चरति सानुगः ।
स एव भगवान् ब्रह्मा नित्यं ब्रह्मविदाम्वरः । निर्व्वाणपथगन्तॄणामकिञ्चनपथैषिणां ।
सोमात् सोमः समुत्पन्नो धारासलिलविग्रहात् । यथाऽभिषिक्तो भूतानां सैनापत्ये महेश्वरः ।

अभिषिच्य च भूतेशं कृत्वा कर्म्म स्वभावतः । नदति स्म तदा नादं तेन वा क्षुभ्यते मही । ११६४५
सा ब्रह्मलोकं सम्प्राप्यमभिभूय सहस्रशः । नाकृता गगनाद्देवी सप्तधा प्रचचार च ।
सहस्रधा वा राजेन्द्र बहुधा च पुनः पुनः । इमं लोकमनुप्रेत्य भावयन् धारयन् भवं ।
ततो भूतानि रोहन्ति महाभूतफलानि च । ततः सर्व्वे क्रियारम्भाः प्रावर्त्तन्त मनीषिणां ।
चतुर्भिर्व्वदनैस्तस्य मुखपद्माद्विनिःसृता । तदाऽक्षरमयी सिद्धिर्द्दिव्यत्वं समुपागता ।
तस्य ज्ञानमयं पुण्यं चतुष्पादं सनातनं । पतित्वेनाभवद्देवो ब्रह्मा चापि पितामहः । ११६५०
पादा धर्म्मस्य चत्वारो यैरिदं धार्य्यते जगत् । ब्रह्मचर्य्येण धर्म्मेण गार्हस्थेन च पावने ।
गुरुभावेन वाक्येन गुह्यगामिनगामिना । इत्येते धर्म्मपादाः स्युः स्वर्गहेतोः प्रचोदिताः ।
न्यायाद्धर्म्मेण गुह्येन सोमो वर्द्धति मण्डले । ब्रह्मणो ब्रह्मचर्य्याद्दिवा वर्त्तन्ति शाश्वताः ।
गृहस्थानभिवाक्येन तृप्यन्ति पितरस्तथा । चक्रमोऽपि च धर्म्मेण नगस्य शिरसि स्थिताः ।
नगस्य तस्य संस्पृश्य मेरोः शिखरमुत्तमं । पद्भ्यां संपीड्य वृषणौ चर्षिभिस्तैर्विचार्य्यते । ११६५५
ग्रीवां निगृह्य पृष्ठस्य विनाम्य प्रचलन्निव । नाभिदेशे करौ न्यस्य सर्व्वशोऽङ्गानि सङ्क्षिपन् ।
मूर्द्ध्नि ब्रह्म समुत्क्षिप्य मनसा स पितामहः । अप्रज्ञमनसा विष्णुं योगाद्योगेश्वरस्य च ।
व्यतिरिक्तेन्द्रियो विष्णुर्विम्बाद्बिम्बमिवोत्थितः । तेजोमूर्त्तिधरो देवो नभसोन्दुरिवोत्थितः ।
रराज ब्रह्मयोगात् स सहस्रांशुरिवापरः । विराजमभवो मध्ये प्रभाभिरतुलं प्रभुः ।
नोपलभ्यति मूढात्मा प्रत्यक्षं ब्रह्म शाश्वतं । ललाटमध्ये तिष्ठन्तं द्विधाभूतं क्रियां प्रति । ११६६०
ज्योतिश्चक्षुषि सम्बद्धं विम्बं भास्करसोमयोः । बुद्ध्या पूर्व्वन्तु पश्यन्ति अध्यात्मविषये रताः ।
ब्राह्मणा वेदविद्वांसः सत्यव्रतपरायणाः । नेतरे यातु पश्यन्ति अध्यात्मं नावबुध्यते ।
हिंसायोगैरयोगात्मा सर्व्वप्राणिचरैर्नृप । भूतयो भुवि भूतेभ्यो मोक्षप्राप्तेन चेतसा ।
कर्म्मभिः कुत्सितैरन्यैः सर्व्वप्राणिवधैषिणां । नराणां योगमास्थाय स्वेषु गात्रेषु भारत ।
समाहितमना ब्रह्मा मोक्षप्राप्तेन हेतुना । चन्द्रमण्डलसंस्थानाज्ज्योतिस्तेजो महत्तदा । ११६६५
प्रविश्य हृदयं क्षिप्रं गायत्र्या नयनान्तरे । गर्भस्य सम्भवो यस्य चतुर्द्धा पुरुषात्मकः ।
ब्रह्मतेजोमयोऽव्यक्तः शाश्वतोऽथ ध्रुवोऽव्ययः । न चेन्द्रियगुणैर्युक्तो युक्तस्तेजोगुणेन च ।
चन्द्रांशुविमलप्रख्यो भ्राजिष्णुर्व्वर्णसंस्थितः । नेत्राभ्यां जनयद्देवो ऋग्वेदं यजुषा सह ।
सामवेदञ्च जिह्वाग्रादथर्व्वाणञ्च मूर्द्धतः । जातमात्रास्तु ते वेदाः क्षेत्रं विन्दन्ति तत्त्वतः ।
तेन वेदत्वमापन्ना यस्माद्विन्दन्ति तत्पदं । ते सृजन्ति तदा वेदा ब्रह्मपूर्व्वं सनातनं । ११६७०
पुरुषं दिव्यरूपाभं स्वैः स्वैर्भावैर्मनोभवैः । अथर्व्वणस्तु यो भागः शीर्षं यज्ञस्य तत् स्मृतं ।
ग्रीवा बाह्वन्तरे चैव ऋग्भागः समन्वितः । हृदयञ्चैव पार्श्वञ्च सामभागस्तु निर्म्मितः ।
वस्तिशीर्षकटीदेशजङ्घोरुचरणैः सह । एवमेव यजुर्भागः संघातो यज्ञकल्पितः ।
पुरुषो दिव्यरूपाभः सम्भूतो ह्यपरात् पदात् । स हि वेदमयो यज्ञः सर्व्वसत्त्वसुखावहः ।

उभयोर्लोकयोस्तात हितार्थः सनातनः । योगारम्भं सर्व्वसाध्यं ब्रह्मचर्यं सनातनं । ११८७५

प्रभवं सर्व्वभूतानां यो विन्दति स वेदवित् । स सिद्धः प्रोच्यते लोके सिद्धिरेव न संशयः ।

निर्मुक्तैः सर्व्वकर्म्मभ्यो मुनिभिर्नीरजस्कैः । वैष्णवं ब्रह्मनिर्वाणं सुवते वेदपारगाः ।

ब्राह्मणा नियमश्रान्ताः कर्म्मोपरमिते पदे ।

॥ जनमेजय उवाच ॥ येनायं ब्रह्मणो हि मनोपायश्च साधनः । कारणं श्रोतुमिच्छामि यथातत्त्वं महामुने ।

॥ वैशम्पायन उवाच ॥ न तस्य कारणं किञ्चिदाद्यं भवति भारत । सर्व्वगतं कारणन्तु शारीरं मानसं नृप । ११८८०

येन वेद्यं विदुर्मर्त्या ब्राह्मणाः संशितव्रताः । अवेद्यमपि वेद्यस्य सर्वं वेत्तुं न शक्यते ।

ब्राह्मणेन विनीतेन सदा ब्रह्मनिषेविणा । सदा विदितवेद्येन सिद्धिर्वेद्योपरोपते ।

सदा चैव शुचिर्भूत्वा नियतो ब्रह्मकर्म्मणा । उपतिष्ठेत स गुरुं बद्धाञ्जलिपुटो द्विजः ।

सायम्प्रातश्च तत्त्वज्ञो मोक्षकर्म्माणि कारयेत् । विनीतो ब्रह्मभावेन समाहितमतिर्मुनिः ।

सम्प्रपद्येत मनसा वैष्णवं पदमुत्तमं । ध्यायन्नेव प्रवीक्षेत समाहितमतिर्द्विजः । ११८८५

गच्छेत परमं ब्रह्म निर्व्विकारेण चेतसा । अपुनर्भावमत्यन्तं निर्ममो भावबन्धनात् ।

तदेवाक्षरमित्याहुर्यत्तद्ब्रह्म सनातनं । न हि तत् कर्म्मयोगेन विद्यायोगेन दर्शितं ।

ब्राह्मणानां विनीतानां वैष्णवे पदसंश्रये । सर्व्वत्र अतिरिक्तानां ज्ञानयोगविमर्शिनां ।

अपुनर्भाविनो लोकाः कर्म्मयोगे प्रतिष्ठिताः । अनाहतेन मनसा राजन् कर्म्माणि कर्म्मणि ।

आदानाद्बध्यते जन्तुरनादानात् प्रमुच्यते । ब्राह्मणेभ्यः क्रियाप्राप्तिर्जन्तोः पूर्व्वा जनाधिप । ११८९०

मुक्तस्त्विन्द्रियबन्धेन प्राप्तश्च परमं पदं । न भूयः पुनरायाति मानुषं देहविग्रहं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

॥ जनमेजय उवाच ॥ उपसर्गांश्च योगस्य ख्यातव्यश्चैव यत् पदं । सिद्धिं सिद्धिगुणांश्चैव श्रोतुमिच्छामि तत्त्वतः ।

॥ वैशम्पायन उवाच ॥ शृणु विस्तरतः सर्व्वं यथा पृच्छसि मेधया । उपपन्नेन मनसा ब्रह्मादीनामनेकधा ।

पञ्चेन्द्रियगुणांस्त्यक्त्वा पश्यतो ब्रह्मणो नृप । योगयुक्तेन मनसा पञ्चेन्द्रियनिवासिनः ।

ब्रह्मणश्चिन्तयानस्य ब्रह्मपदं सनातनं । बहुरूपमनैश्वर्यात् प्रवक्ष्यामि निबोध तत् । ११८९५

पञ्चेन्द्रियस्य ग्रामस्य नवद्वारस्य भारत । कामक्रोधस्य मोहस्य संनिरुद्धस्य मेधया ।

तेजसा मूर्द्ध्नि चाधाय धूमो दोधूयते महान् । नीललोहितवर्णाभैः पीतैः श्वेतैश्च धातुभिः ।

मञ्जिष्ठारागवर्णाभैः कपोतसदृशैस्तथा । शुकवैदूर्य्यवर्णाभैः पद्मरागसमप्रभैः ।

स्फाटिकैर्मणिवर्णाभैर्नागेन्द्रसदृशैस्तथा । इन्द्रगोपकवर्णाभैश्चन्द्रांशुसलिलप्रभैः ।

बहुवर्णैः स धूमौघैरिन्द्रायुधसमप्रभैः । सम्पतद्भिश्च युगपन्मेघैरिव समागमे । ११९००

निरुध्यत इवाकाशं पतद्भिरिवाद्रिभिः । ते धूमवर्णाः संघाता घनाः सलिलधारिणः ।

निर्व्वमुश्चैव तोयौघान् विविधांश्च वसुधातलं । मूर्द्ध्नि चैव महानग्निर्ज्वलितो धूयते प्रभुः ।

युक्तः परमयोगेण शतशोऽर्च्चिभिरावृतः । तस्याग्नेर्विस्फुलिङ्गानां सहस्राणि शतानि च ।

एतस्य मोक्षविषये सर्व्वज्ञानमये पदे । यस्मात् पदप्रवृत्ताधि प्रभवन्मुदृशन्ति च ।
ब्रह्माप्रदन्तु यजतो योगात् वेदात्मकं सदा । ब्रह्मणो विपुलं स्थानमैश्वर्य्यञ्च प्रवर्त्तते ।
ततः प्रथममैश्वर्य्यं युञ्जानेन प्रवर्त्तितं । तन्मयत्वं प्रभूतेन भूतानां चिन्तितव्यता । ११६९५
तदा त्वाकाशमैश्वर्य्यं युञ्जानस्य प्रवर्त्तते । ब्रह्मणो ब्रह्मभूतस्य निर्व्विकारेण कर्म्मणा ।
तदाऽन्तरीक्षं संप्राप्तं ब्रह्म निर्म्मलमव्ययं । संहारः सर्व्वभूतानां नराणां ब्रह्मवादिनां ।
ध्रुवमैश्वर्य्ययोगाणां प्रतिपद्यन्ति देहिनः । आकाशैश्वर्य्यभूतेन संयोगे ब्रह्मवादिनां ।
प्रवर्त्तमानमैश्वर्य्यं वायुभूतं करोति च । विकारैरष्टभिः प्राप्तैः सप्ततन्त्रैर्ब्बहावशैः ।
एतैर्व्विकारैः संदृष्टैर्निरुद्धैरेव सर्व्वशः । ध्रुवमैश्वर्य्यमापन्नः सिद्धो भवति ब्राह्मणः । ११७००
शरीरादभिनिष्क्रम्य आकाशेन प्रधावति । निराकाशो निराकाशमात्मस्थः मनसा ततः ।
ऐश्वर्य्यभूतो भूतात्मा चरन् दिवि न दृश्यते । चतुर्भिर्न्नरभिर्लोके पुरन्दरवरैरपि ।
ओङ्कारं ये त्वधीयन्ते मनसा ब्रह्मतत्पराः । विमुक्ताः सर्व्वकर्म्मभ्यो ते पश्यन्ति माधवः ।
एतद्धि परमं ब्रह्म ब्राह्मणानां मनीषिणां । अन्तश्चरति भूतानां विद्धि चेतनया सह ।
एष शब्दो महानादः पुराणो ब्रह्मसम्भवः । वायुभूतोऽक्षरं प्राणो वदन्त्येवं द्विजातयः । ११७०५
अरूपी रूपसम्पन्नो धातुभिः सह संवृतः । अन्तश्चरति भूतेषु कामचारकरो वशी ।
ततः परमनुध्याय मनसा पूर्व्वमेव । वेदात्मकं तदा यज्ञं चिन्तयन्तो मनीषिणः ।
ब्राह्मणाः ऋषयो दान्ता यज्ञेऽयुञ्जंस्तदव्ययात् । ब्रह्मलोकं काङ्क्षमाणा वैष्णवं पदमुत्तमं ।
यद्धेतोः क्रियाः सर्व्वाः कुर्व्वन्ति विगतज्वराः । न च्यवते प्रधाद्दाने भवमिच्छन्ति भारत ।
त्रिभिर्म्माल्योपहारैश्च प्रतिभागैश्च वै द्विजाः । यजन्ति परमात्मानं विष्णुं सत्यपराक्रमं । ११७१०
यजनं विक्रमश्चैव ब्राह्मणाः संप्रचक्रिरे । ब्रह्मा च वैष्णवं तेजो वेदैर्मन्त्रैर्नृप ।
ब्राह्मणैर्ब्रह्मविद्भिश्च ब्रह्मणैर्ब्रह्मवादिभिः । ऋषिभिः कर्म्मनिर्मुक्तैः सत्यव्रतपरायणैः ।
धातुभिर्म्मोक्षकाले च महात्मा सम्प्रदृश्यते । तदेव परमं ब्रह्म वैष्णवं परमाद्भुतं ।
रसात्मकं तदैश्वर्य्यं विकारास्ते प्रदृश्यते । घोररूपा विकारास्ते व्यथयन्ति महात्मनः ।
सज्जाद्यतीव तोयेन मुच्यमानो विचेतनः । ऊर्म्मिभिर्म्मज्जयते चैव शीतोष्णाभिर्विकारतः । ११७१५
महार्णवगतश्चैव दह्यते न च सज्यते । अग्राश्चैव महानद्यः सलिले चैव सीदति ।
सीदमानश्च सलिले स शीतात्यात्यते बलात् । आसनाच्छादनाचैव मुच्यमानो विचेतनः ।
श्वभ्रे प्रपद्यमानश्च तोयेन परिषिच्यते । ऋज्ञवर्णेन बहुधा स्रोतसा मूर्द्ध्नि सर्व्वशः ।
ऊर्द्ध्वं ज्योतिरवेक्षंश्च ऋषिभिः पोतैश्च क्राम्यते । वारिपूरैः सुगम्भीरैर्व्विघुद्भिरिव भाषितैः ।
एतैर्व्विकारैः संदृष्टैर्निरुद्धैरेव सर्व्वशः । ध्रुवमैश्वर्य्यमासाद्य सिद्धो भवति ब्राह्मणः । ११७२०
रसात्मकं तदैश्वर्य्यं जिह्वाग्रादभिनिःसृतं । सहस्रधारं विततं मेघलं समुपागतं ।
रसांश्च विविधान् योगात् संसिद्धः सृजते प्रभुः । धात्वर्थं सर्व्वभूतानां योगमात्रेण हेतुना ।

तेजसो रूपमैश्वर्य्यं विकारैः कथ वर्त्तते । आत्मनो विप्रलम्भं स कृतो ज्ञानप्रकाशयेत् ।
उग्ररूपैर्व्विकारैश्च चन्यते ब्रह्मपार्थिवैः । घोररूपैः सुगन्धोरैः पिशाचैर्ब्बलविक्रमैः ।
नैवं समुद्धरन्तीमं जिज्ञासन्ताश्च विश्वसि । गर्ज्जन्ति सुमहानादं नृत्यमानाः पुनः पुनः । ११७६५
पुनरेव तदा भूत्वा बहुरूपास्तदाऽभवन् । नृत्यमानाः प्रगायन्ति तर्पयन्तो विशेषतः ।
स्त्रीभूताश्च ततः सर्व्वे युवत्यो ह्याश्चलन्निरे । सर्व्वेषु बहुरूपत्वात् विश्रेव प्रलोभयन् ।
मधुरैरभिधानैश्च व्याहरन्ति समीततः । सवन्ति सुमहत् सर्व्वे पादयोर्मूर्द्धभिर्नताः ।
प्रसादं काङ्क्षमाणाश्च योगस्थानरक्षिताः । बहुप्रकारं कथयन् नृत्यन्ति च रमन्ति च ।
एभिर्व्विकारैर्व्विडम्बैर्निर्द्दहन्नेव सर्व्वशः । ध्रुवमैश्वर्य्यमापन्नः सिद्धो भवति मानवः । ११७७०
तदर्च्चिष इवाग्नेया आदित्यस्येव रश्मयः । तेजोरूपमनेकं यं ज्वालाभिः सविस्तरः ।
ज्योतींषि चैव संवृत्ता आकाशे गुणसंस्तुताः । चरन्ति सततं लोके सूर्य्याचन्द्रमसोर्गतिं ।
चन्द्रसूर्य्यात्मकं दिव्यं ज्योतिश्चक्रमनुत्तमं । एतद्विरच्यते लोके कालचक्रं सुदुस्तरम् ।
अर्द्धमासाश्च मासाश्च ऋतुः संवत्सरास्तथा । कला काष्ठा मुहूर्त्ताश्च कलाः काष्ठास्तथैव च ।
अहोरात्रप्रमाणञ्च निमेषोन्मेषणं तथा । ताराणां शतशश्चैव ग्रहाणाञ्च विशेषतः । ११७७५
अथ पार्थिवमैश्वर्य्यं विकारयच्छसंभवं । योगयुक्तस्त्वभिध्याताः ध्यायन्ते ब्रह्मवादिनाम् ।
अलोभाच्छिद्यते लोके वेपमानोऽनुकीर्त्त्यते । मोहते बहुधा मध्ये भिद्यमानः पुनः पुनः ।
भूतानां बहुरूपैश्च अन्यैश्च तत्त्ववासिभिः । विषयैर्मुच्यते क्षिप्रं संक्षेपात् संप्रयच्छते ।
ततः पार्थिवमैश्वर्य्यं सेवमानस्य सर्व्वतः । मूर्त्तिमद्भिश्च बहुधा धातुभिः स च हन्यते ।
शक्तितोमरनिस्त्रिंशैर्गदाभिश्चाप्यनेकधा । ऋषिभिः पात्यते चैव क्षुरधारैः सहस्रशः । ११७८०
भिद्यते चैव वाणाग्रैः सुतीक्ष्णैर्म्मर्म्मभेदिभिः । एभिर्व्विकारैर्विद्धस्तैर्निर्द्दहन्नेव सर्व्वशः ।
ध्रुवमैश्वर्य्यमापन्नः सिद्धो भवति मानवः । ततः पार्थिवमैश्वर्य्यं निर्मुक्तस्य विकारतः ।
प्रादुर्भवति युञ्जाने समाधौ प्रलयङ्गते । दिव्यं तद्दृश्यमानाय दिव्याश्चैतान् प्रपश्यति च ।
दिव्यरूपैश्च विविधैश्छिद्यते न च भिद्यते । गच्छन् प्रकृतिना चान्तः प्रधानात्मा चरन्निव ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे नवाधिकद्विशततोऽध्यायः ॥ २०९ ॥

॥ वैशम्पायन उवाच ॥ ततोऽन्यां धारणां गत्वा मनसा स पितामहः । सङ्कल्पसमारम्भनिर्धुतेनान्तरात्मना । ११७८५
सर्व्वाङ्गधारणां कृत्वा मनसा प्रहसन्निव । ब्रह्मयोगेण योगज्ञः सृजते मनसा प्रजाः ।
चक्षुषो रूपसम्पन्ना अप्सराः सृजते प्रभुः । नासिकायाश्च गन्धर्व्वान् सुचित्राम्बरवाससः ।
तुम्बुरुप्रमुखान् सर्व्वान् शतशोऽथ सहस्रशः । नृत्यवादित्रकुशलान् कुशलान् सामगीतिषु ।
ब्रह्मयोगेण योगज्ञः स्वयम्भूर्भगवान् प्रभुः । चारुनेत्रां सुकेशान्तां सुभ्रूं चारुनिभाननां ।
पद्मेन शतपत्रेण चारुणा च विराजितां । धन्यां चतुर्व्विगरं सेव्यां ब्राह्मीं मूर्त्तिमतीं श्रियं । ११७९०
असृजन्मनसा ब्रह्मा सम्यक् प्रोक्तेन चेतसा । भावयोगेन भूतात्मा सर्व्वभावसुतां ततः ।

प्रभया तेजसा योगात्तस्मात् प्राचेतसः प्रभुः। विष्णुरेव महायोगी कर्म्मणामन्तरं गतः।
ततो निर्व्वाणसंभूताः शूद्राः कर्म्मविवर्ज्जिताः। तस्मान्नार्हन्ति संस्कारं न ह्यत्र ब्रह्म विद्यते।
यथाऽग्नौ धूमसंघातो ह्यरण्या मथ्यमानया। प्रादुर्भूतो विसर्पन् वै नोपयुज्यति कर्म्मणि।
एवं शूद्रा विसर्पन्तो भुवि कार्त्स्न्येन जन्मना। नासंस्कृतेन धर्म्मेण वेदप्रोक्तेन कर्म्मणा।
ततोऽन्ये दक्षपुत्रास्तु संभूता ब्रह्मयोनयः। यजन्तो महोत्साहा महावीर्य्या महौजसः। ११८२५
पित्रा प्रोक्ता महात्मानो दक्षेणाव्यक्तकर्म्मणा। यत्नमिच्छाम्यहं श्रोतुं धात्र्याः पुत्राऽवनौ खरं।
ततो विधास्ये तत्त्वज्ञः प्रजानां विपुलं बलं। येनायं विपुलत्वाद्धि ममापि विपुलाः प्रजाः।
न तेषां दर्शयद्देवी चक्षुषा रूपमात्मनः। प्रजापतिसुतानां वै विपुला मार्गमिच्छतां।
आत्मनो भावनिर्वृत्ते भाव्ये ह्यतपुषे तदा। जनित्री सर्व्वभूतानामव्यक्तानुकूलकारया।
संवेदजननी धात्री चेति माता प्रचोदिता। जनुतां तनुताश्चैव जन्तूनां कर्म्मभोगिनां। ११८३०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे एकादशाधिकद्विशततमोऽध्यायः॥ २११॥
॥ जनमेजय उवाच ॥ साध्वहं श्रोतुमिच्छामि त्वेतायां ब्राह्मणोत्तम। यं ज्ञात्वा सर्व्वविद्यानां परं पश्येयमव्ययं।
॥ वैशम्पायन उवाच ॥ दक्षस्तु पुरा गत्वा स्त्रीभावं पुरुषोत्तमः। योगाद्योगेश्वरात्मानं निषण्णो गिरिमूर्द्धनि।
सुजानुः पीनजघना सुभ्रूः पद्मनिभानना। रक्तान्तनयना कान्ता सर्व्वभूतमनोरमा।
दक्षः प्राचेतसस्तस्यां कन्यायां जनयत् प्रभुः। देहाद्धि योगविधिना कन्याः पद्मनिभाननाः।
दक्षः पुरुषरूपेण स्त्रीरूपमपहाय च। दर्शने सर्व्वभूतानां कान्तः कान्ततरोऽभवत्। ११८३५
ताः कन्याः प्रददौ दक्षः स्वयं प्राचेतसः प्रभुः। ब्राह्मदैवेन विधिना ब्रह्मप्राप्तेन भारत।
प्रददौ दश धर्म्माय कश्यपाय त्रयोदश। सप्तविंशति सोमाय पत्नीर्वेनोः समाहितः।
दक्षो दत्त्वाऽथ ताः कन्याः ब्रह्मचर्य्यं प्रपद्य च। ब्रह्मणाऽध्युषितं पुण्यं समाहितमना मुनिः।
तप्यमानो मृगैः सार्द्धं चचार वसुधां नृप। तृणमूलफलैर्हृष्टो वृद्धश्च तपसा महत्।
मृगास्तु तस्य चरितं फलं भोदन्ति ब्राह्मणाः। दीक्षिताः पुण्यकर्म्माणस्तपसा दग्धकिल्बिषाः। ११८४०
संग्रामकाले कालज्ञः शस्त्रिणाऽह्रियते मुनिः। कर्म्म यस्यकृतं तात सिद्धिं पश्यन्ति चक्षुषा।
दानमानप्रवीराश्च निरुद्वेगा निरामिषाः। मृगैः सह जरां यान्ति सपत्नीकाः सपुत्रिणः।
ब्राह्मणास्तोत्रसंसिद्धा जनिषे प्रथमे पदे। ब्राह्मणाऽध्युषितत्वाच्च ब्रह्मचर्य्यमिहोच्यते।
यतिभिः कर्म्मभिर्युक्तैर्ज्जितक्रोधैर्ज्जितेन्द्रियैः। चरद्भिर्व्वसुधां विप्रैरकिञ्चनपथैर्षिभिः।
या प्रजा पूर्व्वमारूढा मानसी ब्रह्मचारिणी। सैवैषा व्यक्तमापन्ना स्वभावदुरतिक्रमा। ११८४५
अव्यक्ता व्यक्तमापन्ना स्वभावदुरतिक्रमा। व्यक्ताव्यक्तं गमित्वैषां कालधर्म्माभ्युदीयते।
स्थावरा जङ्गमाश्चैव स्थूलाः सूक्ष्माश्च भारत। कालयोगेन कालज्ञा भवन्ति न भवन्ति च।
एतास्त्वेताः प्रजाः सर्व्वा दक्षकन्यासु जज्ञिरे। कश्यपेनाव्ययेनेह संयुक्ताः कालधर्म्मणा।

आदित्या वसवो रुद्रा विश्वे च समरुद्गणाः । नानाकामिकशिरसः साध्या वै पन्नगास्तथा ।
गन्धर्वाः किन्नरा यक्षाः सुपर्णाश्च तथाऽपरे । नदसमान्वर पर्वेश्च किन्नराश्च सुराश्च ह । ११८५०
गावः पशुगणैः सार्द्धं नराश्च वसुधाधिप । धाराधराश्च वसुधा धातवश्च धराधराः ।
गजाः सिंहाश्च व्याघ्राश्च हयाः पक्षधरास्तथा । अश्वा विनाशिनश्चैव तुरगाश्च तथा तथा ।
चतुर्व्विषाणा नागेन्द्राः पद्माभा वर्णतः शुभाः । सर्वाङ्गसुन्दरतमाः प्राणिनः कामरूपिणः ।
तथारूपैस्तथायामा वैत्तैः शीलैः परायणैः । मुनयः पुण्यकृतास्ते धर्मविद्धे सनातने ।
येऽचरन्ननघा लोके धर्म्मिणो वेदगोचराः । यथोक्तास्ते सुराः सर्व्वे दिवि लोके प्रतिष्ठिताः । ११८५५
ये चान्ये तपसा सिद्धा मुदृश्या मनुजाधिप । ब्रह्मचर्य्येण संसिद्धाः परिचर्य्यारता गुरोः ।
ये च योगगतिं प्राप्ताः सिद्धिहेतोर्यथोपगे । होमाधिकैः कर्म्मकाण्डैर्दिवं गच्छन्ति वै द्विजाः ।
त्रिलोकक्लृप्ततयः चान्ताः सप्तलोका दृढव्रताः । सर्व्वे मेते दिवि चरा भवन्ति चरितव्रताः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥
॥ वैशम्पायन उवाच ॥ पितामहं पुरस्कृत्य मेरुपृष्ठे समाश्रिताः । जटाजिनधरा विप्रास्त्यक्तक्रोधा जितेन्द्रियाः ।
पर्व्वतान्तरसंसिद्धे वज्रपादपसंकुले । धातुसंरञ्जितशिले वने निसृष्टकण्टके । ११८६०
चयाणां ब्रह्मवेदानां पञ्चस्वरविराजिते । मन्त्रयज्ञपरा नित्यं नित्यं ब्रह्मचिते रताः ।
एकमेवाग्निमाधाय सर्व्वे ब्राह्मणपुङ्गवाः । विभिदुर्मन्त्रविधयैः सुधर्मा हितमानसाः ।
त्रिधा प्रणीतो ज्वलनो मुनिभिर्व्वेदपारगैः । अतस्त्रेताग्निमापन्नो यदेकस्त्रिविधः कृतः ।
एक एव महानग्निस्त्रेधा संप्रवर्त्तते । स्वाहाकारेण धर्म्मेण मन्त्राणां कार्य्यसिद्धये ।
स्वयञ्च दक्षः सम्प्राप्तो भगवान् भूतभावनः । ब्रह्मा ब्राह्मणनिर्म्मोता सर्व्वभूतपितामहः । ११८६५
दण्डी चर्म्मी शरी खड्गी शिखी पद्मनिभाननः । अभवद्ब्रह्मसमाप्तो जितक्रोधो जितेन्द्रियः ।
यजते पुष्करे ब्रह्मा मेधया सह संवृतः । ऋक्प्रोक्तानि सामानि गीयन्ते ब्रह्मवादिभिः ।
घृतं क्षीरं यवा व्रीहिः सर्व्वं परमकं हविः । वेदप्रोक्तं मध्ये न्यस्तं कल्पितं ब्रह्मणः पदे ।
निर्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थितां । स ब्रह्मा प्रथमं तस्मिन्नग्निमन्थं प्रवर्त्तयत् ।
न ह्यन्यद्विहितं द्रव्यं यथाऽग्निर्यज्ञकर्म्मणि । प्रवर्त्तते विभागैश्च हुतहव्यमयं यजं । ११८७०
फलानि तैः प्रयुक्तानि हवींषि विततेऽध्वरे । प्रयुज्यन्ते विशेषज्ञा मुनयो ब्रह्मवादिनः ।
पश्चाद्ये चतुरो वेदान् संप्रभाषद्बृहस्पतिः । ब्रह्मज्ञो ब्राह्मणो यज्ञे परया ब्रह्मसम्पदा ।
त्रिस्वरसमेताया मधुरायाः समन्ततः । सानुस्वरितरागायाः सरस्वत्याः प्रभाषते ।
तेन ब्राह्मणशब्देन ब्रह्मप्रोक्तेन भारत । विभाति स महो यज्ञो ब्रह्मलोक इवापरः ।
मुखैर्ब्रह्मा महोत्तीर्णो ब्रह्मशब्दैरनामयैः । प्रयोगैः सम्प्रयुक्तैश्च अध्यक्षिव प्रवर्त्तते । ११८७५
समिद्भिः सोमकलशैः पात्रैश्च बहुविस्तरैः । यवैर्व्रीहिभिराज्यैश्च पूर्णैश्च बहुभाजनैः ।

क्रमप्राप्तैश्च षड्भिः कर्म्मभिश्च परार्च्चितैः। गोभिः पयस्विनीभिश्च पावितैश्च सोमपैः।
ब्रह्मवृद्धो वयोवृद्धस्तपोवृद्धश्च भारत। ब्रह्मज्ञानमयो देवो विद्यया च समन्वितः।
मानसैश्च क्रियामूर्त्ता ये च भूताः स्वयं नृप। ब्रह्मा जुहोति तांस्तत्र महर्षिभिः सुचिन्तया।
तेजोमूर्त्तिधरैरूपैश्च तत्कर्म्मण्यग्रजम्। वेदप्रोक्तेन विधिना सर्व्वमावर्त्तता नृप। ११८८०
निर्मथ्यारणिमाग्नेयीं अग्नीगर्भमनुत्तमं। यजते क्रतुना पूर्व्वमग्निष्टोमेन स प्रभुः।
सदस्यैस्तत्सदो व्यक्तं शुशुभे यज्ञकर्म्मणि। जपन्ते मधुरा वाचः वागुच्चारविशारदाः।
कर्म्मभिश्च तपोयुक्तैर्वेदवेदाङ्गपारगैः। सूर्य्येन्दुसदृशैराजन् विरराज महाक्रतुः।
ब्रह्मघोषेण महता ब्रह्मवास इवापरः। वसुधामिह संप्राप्तैः स्वर्गैरिव दिवौकसैः।
वेदवेदाङ्गविद्भिश्च विनीतैर्ब्रह्मवादिभिः। सतामतैस्तपःशान्तैः स्वर्गलोके महीयते। ११८८५
ज्वलद्भिरिव विप्रैस्तैस्त्रिभिरेवाध्वरेऽग्निभिः। ब्रह्मलोक इवाभाति ब्रह्मणः स महाक्रतुः।
इन्द्रप्रोक्तानि सामानि गायन्ति ब्रह्मवादिनः। वचनानि प्रयुक्तानि यजूंषि विततेऽध्वरे।
तपःश्रान्ता ब्रह्मपराः सत्यव्रतसमाश्रिताः। श्रावयन्मुनयः सर्व्वे मनोभिः श्रोत्रवादिभिः।
होता चैवाभवद्राजन् ब्रह्मान्ते च बृहस्पतिः। सर्व्वधर्म्मविदां श्रेष्ठः पुराणो ब्रह्मसम्भवः।
यजमानस्य यज्ञान्ते विष्णोः पूजां प्रगृह्य च। अदित्याः पश्चिमे गर्भे तपसा संहृते नृप। ११८९०
परं विष्णुरजो ब्रह्मा निर्द्वन्द्वो निष्परिग्रहः। यतः परश्च भूतानि भविष्यन्त्युद्भवन्ति च।
अवध्यस्याप्रमेयस्य व्यतिरिक्तस्य कर्म्मभिः। आत्माऽपि यस्य मुनयो भवन्ति निष्परिग्रहाः।
परिग्रहाश्च विषया दोषग्रामा महीपते। दोषाश्च युगपत् सर्व्वे कारयन्ति मनो बलात्।
इन्द्रियग्रामविषये चरन्तो निष्परिग्रहाः। परिग्रहं शुभं धर्म्ममविद्यालक्षणं विदुः।
विद्यालक्षणसंयोगाच्च सम्भाव्यते नृप। यदि चैषु निमन्त्रेण यज्यते ब्रह्मवादिभिः। ११८९५
वेदविद्याव्रतस्नातैर्नियतैः कुरूत्तम। दिवि लोकः सतां स्थानं लोकानां लोक उच्यते।
यत्र देवा हव्ययुक्ता न क्षयं यान्ति भारत। यजमानश्च भोगैः स्वैः कर्म्मप्राप्तोऽश्नुते पदे।
मोदते सह पत्नीभिर्विज्वरो वसुधाधिप। यज्ञावसाने शैलेन्द्रं द्विजेभ्यः प्रददौ विभुः।
दयया सर्व्वभूतानां निर्म्मलेनान्तरात्मना। ते शैलसर्व्वगात्राणि परस्परविशेषिणः।
न शेकुः प्रविभागार्थं भेत्तुं सर्व्वोद्यमैरपि। ततस्ते ब्राह्मणगणा विविशुर्व्वसुधातले। ११९००
श्रमेणाभिहताः सर्व्वे विवर्णवदना नृप। सुपार्श्वो गिरिमुख्यस्तु वाग्भिर्मधुरभाषिताः।
अब्रवीत् प्रणतः सर्व्वान् कृत्वा तान् द्विजसत्तमान्। न हि शक्यो मया भेत्तुं युष्माभिरल्पशक्तिभिः।
अपि वर्षशतैर्दिव्यैः परस्परविरोधिभिः। एकीभूता यदा सर्व्वे भविष्यथ समाहिताः।
अविरोधेन युगपद्विभजिष्यथ निश्चिताः। सर्व्वं हि रागदोषाभ्यां वर्द्धते ब्राह्मणोत्तमाः।
विमुक्तं रागदोषाभ्यां ब्रह्म वर्द्धति शाश्वतं। यदाऽहं भेदयिष्यामि स्वगैं भिन्नैः शिलातलैः। ११९०५
धातुभिश्च विचर्ण्णैः शिखरैश्चावपातितैः। विशीर्णैः पार्श्वविवरैर्नागैश्चागलितैर्भुवि।

बहुभिर्व्याहृत्यैश्च चोद्यमानो मुहुर्मुहुः । प्रतिवक्तुं च तद्वाक्यं नैवेशक्नुवन्नराधिपं ।
तूष्णीमभूवंस्ते सर्व्वे तदा ब्राह्मणसत्तमाः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥
॥ वैशम्पायन उवाच ॥ वर्त्तिष्यामास धर्म्मेण चतुर्युगं भारत । द्विजानां तपसा ब्राह्मणानां गृहस्थधर्मेषु तिष्ठतां ।
देवताश्चास्य पूज्यन्ते तदाप्रभृति भारत । तेषां ब्रह्मविदां राजन् ऋषीणां ब्रह्मवादिभिः । ११९१०
तत्रैव ब्रह्मसदने समे निष्कण्टकस्थले । प्राग्नेः भगवद्गणे देशे पुण्ये पर्व्वतरोधसि ।
वासं यत्र प्रकुर्व्वन्ति दृष्ट्वा भगवतः क्रियां । तपोऽर्थिनो महाभागा ब्रह्मचर्य्यव्रते स्थिताः ।
गृहस्थधर्म्मे निरता दानप्रदानेन चेतसा । मुनयश्चापि कायन्ति धर्मेण चविकाङ्क्षिणः ।
अन्ये कर्म्मफले चैव रता ब्राह्मणपुङ्गवाः । अग्निहोत्ररतात्मानो जितक्रोधाः समाहिताः ।
दैवयुक्तेन चायुक्ताः कर्म्मणा ब्रह्मसत्तमाः । चीरवल्कलसंवीता नियता निर्जितेन्द्रियाः । ११९१५
चरन्तो ब्रह्मचर्य्यञ्च यत्समाख्याय द्वादशं । अनेन विधिना राजन् क्रमप्राप्तेन सर्व्वशः ।
क्रमाद्यो वेद संस्कारं पुण्यं प्राप्ताः सनातनं । पूर्व्वैराचरितं राजन् मुनिभिर्ब्रह्मवादिभिः ।
अवेदविद्यो नागच्छेन्नापि रौद्रं व्रतञ्चरेत् । न च त्यागेन गच्छेत गृहधर्मांश्च न त्यजेत् ।
एतन्न गच्छेदध्यानमप्राप्तो वेदसञ्चयं । अयश्च मन्त्रयः सर्व्वाः यागगानश्च भारत ।
ये चापि पुत्त्रिणो न स्युः स्युलाऽप्यप्राप्नुयुः फलं । ब्राह्मणास्तु तपःआत्मा परिचर्य्यागता गुरोः । ११९२०
यस्य नैवं श्रुतं ब्रह्म न गृहीतं विधास्यते । कामं तं धार्म्मिको राजा दासकर्म्माणि कारयेत् ।
अथवा नैव विद्येत यो ब्रह्म नाद्रियेद्द्विजः । गोचारीणामविषये मनः पूर्व्वं समाचरेत् ।
एवं सर्व्वेन्द्रियारम्भं वेदपूर्व्वं समाचरेत् । आत्मनो भूतिकामस्तु य इच्छेद्भूतिमात्मनः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे चतुर्द्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥
॥ वैशम्पायन उवाच ॥ ते तु गोब्राह्मणानाञ्च चक्रादित्यपुरस्कृताः । ब्राह्मणान् पूजयामास वसुभिर्ब्रह्मसम्भवैः ।
नारदप्रमुखाश्चैव गन्धर्व्वा ऋषयो नृप । कुर्व्वन्ति सततं यज्ञैः क्रमप्राप्तं पितामहं । ११९२५
वचोभिर्म्मधुराभाषैः पञ्चेन्द्रियनिवासिभिः । सर्व्वभूतप्रियकरैः सर्व्वभूतहितैषिभिः ।
स्तूयमानस्य यज्ञान्ते पञ्चेन्द्रियसमाहितैः । प्रोवाच भगवान् ब्रह्मा दिष्ट्या दिष्ट्येति भारत ।
ततः कश्यपमाभाष्य प्रोवाच भगवान् प्रभुः । भवानपि सुतैः सार्द्धं यक्ष्यते वसुधातले ।
क्रतुभिः परमप्राप्तैः संपूर्णवरदक्षिणैः । यक्ष्यसुराश्च ते सर्व्वे यथाप्रतिगुणैः प्रभो ।
वयं यक्ष्यामहे सर्व्वे पूर्व्वं यक्ष्यामहे वयं । एवमन्योन्यसंरम्भाद्भिद्यन्ते बलदर्पिताः । ११९३०
दैतेयाश्चाप्यदैतेयाः परस्परजयैषिणः । युद्धायैव प्रतिष्ठन्ति प्रगृह्य विपुलां भुवं ।
निवार्य्यमाणा ऋषिभिस्तपसा दग्धकिल्बिषैः । अन्यैश्च बहुभिर्व्विप्रैर्व्वेदवेदाङ्गपारगैः ।
निवार्य्यमाणा युध्यन्ते वृषभा इव गोकुले । प्रयुद्धारम्भसंक्रान्ताः सर्व्वप्राणैर्जयैषिणः ।
पश्यतां सर्व्वभूतानां मृत्योर्व्विषयमागताः । ततः शब्देन महता परं कृत्वा महाबलाः ।

हन्यन्ति बाहुभिः क्रुद्धाः चपला इव वर्षिणः । चकार चक्षुषा चैव ज्वालामाला च रोचिभिः । ११८३५

गौर्यथा पुरुषाक्रान्ता निषीदति महार्णवे । पर्व्वतास्तु विशीर्य्यन्ते वज्रहता द्रुमा इव ।

चुक्षुभुश्च महाम्भस्ताडिता मातरिश्वना । ततः समभवद्युद्धं मधोर्विष्णोश्च भारत ।

युगान्तकरणं घोरं सर्व्वप्राणिभयङ्करं । प्रममाथ बलं विष्णुः समयज्ञस्य वीर्य्यवान् ।

वह्नेरिव बलं दीप्तं समवाप्याम्बुना यथा । तथा प्रशमितं तेन भगवद्व्यपकारिणा ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

॥ वैशम्पायन उवाच ॥ बलवान् स तु दैतेयो मधुर्भीमपराक्रमः । बबन्ध पाशैर्निशितैर्देवेन्द्रं पर्व्वताम्बरे । ११८४०

तं वै प्रह्लादवचनाद्बलवच्च भारत । ऐश्वर्य्यमैन्द्रमाक्रम्य भविष्यद्बुद्धिसंश्रयात् ।

बद्ध्वेन्द्रं सहसा मध्ये पाशैर्वज्रविवर्ज्जितैः । आयसैर्भुजगाभिख्यैर्बलवद्भिर्विदारणैः ।

विष्णुमेवाग्रणीरुग्रमाह्वयन् युद्धकोविदः । मध्ये गणानां सर्व्वेषां कालस्य वशमागतः ।

द्वैधीभूताः काश्यपेया मधोरर्थमुपागताः । युद्धार्थमभ्यधावन्त प्रगृह्य विपुला गदाः ।

गन्धर्व्वाः किन्नराश्चैव वाद्ये गीते च कोविदाः । प्रनृत्यन्ति प्रगायन्ति प्रहसन्ति च सर्व्वशः । ११८४५

तन्त्रीभिः सुप्रयुक्ताभिर्मधुराभिः समन्ततः । मनो मधोर्विधुन्वन्ति युध्यमानस्य रागिणः ।

मधोश्चलितमधुना नियोगात् पद्मयोनिनः । एतान् विकारान् कुर्व्वन्ति गन्धर्व्वाः सत्यवादिनः ।

तत्र शक्ता हि गान्धर्व्वे तस्मिन् सर्व्वे द्विजर्षभ । दानवाश्च सुराश्चैव मध्यगं यान्ति प्रापदन् ।

मधोश्च मन आविश्य पश्यन् योगेन चक्षुषा । मन्दरं प्रापतद्विष्णुर्मूढोऽग्निरिव दारुषु ।

ऋषयो दीप्तमनसः किञ्चिद्व्यथितमानसाः । पितामहं पुरस्कृत्य शब्देनाम्बरघोषयत । ११८५०

विष्णुं सोऽभ्यहनत् क्रुद्धो मधुर्मधुनिभेक्षणः । भुजेन शक्रदेवान्ते न चचाल पदात् पदं ।

विष्णुश्चाभ्यहनद्दैत्यं कराग्रेण स्तनान्तरे । स पपात महीं तूर्णं जानुभ्यां रुधिरं वमन् ।

न चैनं पतितं हन्ति विष्णुर्युद्धविशारदः । बाहुयुद्धे हि समयं मत्वाऽचिन्त्यपराक्रमः ।

इन्द्रध्वज इवोत्तिष्ठज्जानुभ्यां स महीतलात् । मधू रोषपरीतात्मा निर्दहन्निव चक्षुषा ।

परुषाभिस्ततो वाग्भिरन्योन्यमभिगर्ज्जतः । समीयतुर्बाहुयुद्धे परस्परजयैषिणौ । ११८५५

उभौ तौ बाहुबलिनावुभौ युद्धविशारदौ । उभौ च तपसा श्रान्तावुभौ सत्यपराक्रमौ ।

दृढप्रहारिणौ वीरावन्योन्यं तौ चकर्षतुः । शैलेन्द्राविव युध्यन्तौ पक्षैः पाषाणसन्निभैः ।

विकर्षन्तौ च मत्तौ च अन्योन्यं वसुधातले । गजाविव विषाणाग्रैर्नखाग्रैश्च विचेरतुः ।

ततो व्रणमुखेभ्यश्च सुस्राव रुधिरं बहु । यथान्ते धातुसंसृष्टं शैलेभ्य इव काञ्चनं ।

संसिक्तौ रुधिरौघैश्च स्रवद्भिः समरञ्जितौ । अयोघातैः पदाघैश्च तौ व्यदारयतां महीं । ११८६०

अभिहत्य तु तौ वीरौ परस्परमनेकधा । पतङ्गाविव युध्येतां पक्षाभ्यां मांसगृद्धिनौ ।

ध्रुवमुखान्तरीक्षेऽथ सर्व्वभूतानि पुष्करे । सिद्धाश्च वदनोन्मुखाः परया सर्व्वसम्पदा ।

स्तुतयो विष्णुसंयुक्ताः सत्याः सत्यपराक्रमे । शरीरं धातुसंयुक्तं संयुक्तं चेतनेन च ।

मेदिनीत्येव शब्दश्च लब्धः पृथ्व्या नरोत्तम । नामानुरूपरूपेण धरण्याः संप्रतिष्ठितं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

॥ वैशम्पायन उवाच ॥ मधोर्निधनं दृष्ट्वा सर्व्वभूतानि पौष्करे । प्रहृष्टानि प्रगायन्ति प्रनृत्यन्ति च सर्व्वशः । ११९९५

सुपार्श्वो गिरिमुख्यश्च काञ्चनैः शिखरोत्तमैः । बहुधातुविचित्रैश्च खं लिखन्निव चाबभौ ।

गिरयश्चाभिशोभन्ते धातुभिः समरञ्जिताः । शृङ्गैः शिखराग्रैश्च सविद्युत इवाम्बुदाः ।

पद्मवातोद्धुतो रेणुचूर्णैः काञ्चनवालुकैः । छादयन् पर्व्वताग्राणि महामेघ इवाबभौ ।

मेघसंश्लिष्टशिखराः पद्मविचित्रपादपाः । काञ्चनोन्नद्धपक्षास्ते खे तिष्ठन्तीव पर्व्वताः ।

पक्षवन्तः सशिखरा हेमधातुभिरञ्जिताः । पवनेन समुद्धूतास्ता नयन्ति विहङ्गमान् । १२०००

काञ्चनाः पर्व्वताः सर्व्वे स्फाटिकैर्व्वविभिश्रिताः । सूर्य्यकान्तैश्च बहुभिश्चन्द्रकान्तैश्च निर्मलैः ।

हिमवांश्च महाशैलः श्वेतैर्धातुभिरार्चितः । काञ्चनैः शिखराग्रैश्च सूर्य्यपादप्रकाशितैः ।

मणिभिश्च प्रकाशाढ्यैः पद्मरागविनिःसृतैः । तालपुष्पैश्च शिखरैर्दीप्यमानैः सतेजसा ।

मन्दरश्चोग्रशिखरः स्फाटिकैर्व्वविभिश्रितः । वज्रगर्भैर्निराकम्पैः स्वर्गोपम इवाबभौ ।

सह शृङ्गैश्च कैलासः शिलाधातुविभूषितः । तोरणैश्चैव विविधैः प्रांशुभिश्चैव पादपैः । १२००५

प्रवादयद्भिर्गन्धर्व्वैः किन्नरैश्च प्रगायिभिः । देवकन्याप्सरोभिश्च सक्रीडित इवाबभौ ।

मधुरैर्व्वाद्यगीतैश्च नृत्यैश्चाभिनयोद्धतैः । शृङ्गारैः सुप्रहारैश्च कैलासो महनायते ।

आदित्याभासिभिः शृङ्गैर्भिन्नाञ्जनचयप्रभैः । विन्ध्यो नीलाम्बुदश्यामो विभिन्न इव तोयदः ।

धान्यार्थं सर्व्वभूतानां मेरुपृष्ठे महाचले । निर्व्वमुर्न्निर्म्मलं तोयं मेघजालैरिवोत्तमैः ।

शिलाभिर्व्वहुवर्णाभिर्धातुभिर्व्वहुचित्रितैः । प्रस्रवद्भिर्गुहाद्वारैः सलिलं स्फाटिकप्रभं । १२०१०

शोभन्ते वायुसंभूता घना इव सविद्युतः । चित्रैः पुष्पैस्तरुगणाः शोभन्त इव भूषिताः ।

नगाः कनकसंभूतैर्व्विचित्रैरिव भूषणैः । विहङ्गमाभिलीनाश्च लतागृहसमाश्रिताः ।

विलम्बन्त्यः सपुष्पाश्च नृत्यन्ते वायुघट्टिताः । पवनेन समुद्धूता महता माधवेऽहनि ।

मुमुचुः पुष्पसंघातं तोयवेलेव वर्षति । फलवद्भिश्च विपुलैः शाखास्कन्धावरोहिभिः ।

पादपैः पर्णबहुलैर्भिर्वृते च वसुन्धरा । मधुप्रिया मधुकरा मधुमत्तविहङ्गमाः । १२०१५

घोषयन्तीव गायन्तः कामस्यागमनं स्वयं । विष्णुर्मधुनिहन्ता च चकार मधुवाहिनीं ।

नदीं प्रस्रवनिर्भेदां सुतीर्थां बहुलोदकां । शृङ्गारवर्णसिकतां मधुतोयां मनोरमां ।

विमलैरम्बुभिः पूर्णां पुष्पसञ्चयवाहिनीं । विवेश पुष्करं सा तु ब्रह्मणो वाक्यचोदिता ।

सर्व्वविभिश्चानुचरिता ब्रह्मतत्त्वं निवेदिभिः । धात्री कपिलरूपेण गोभूत्वा चरते पयः ।

मधुरं वितते यज्ञे ब्रह्मणो वाक्यचोदिता । सरश्च पृथिवीभूतं सन्धातुं प्राप्तवान्हरिं । १२०२०

प्रद्युम्नश्च भजते लोकं शाश्वतं परमाद्भुतं । सरस्वत्याः समुद्भूतं ब्रह्मवेत्तमनोमुदं ।

महातीर्थमतिक्रम्य पुष्करेषु विसर्पति । सुचारुरूपा धर्म्मज्ञा प्रजारूपेण च्छादयत् ।

रूपं कनकवर्णाभं तपोयुक्तेन वर्चसा । [illegible] संवृतः सर्वतो व्रतम् ।
गुरुद्वारगुणप्रायः प्राज्ञः शिष्यैरुपासितः । वेदिकाभिः सुचित्राभिः [illegible]र्विराजितः ।
दुष्कराणि परीत्यैव स्थिता विपुलदर्शिनः । [illegible] रूपं बहुभिर्धातुभिर्वृतम् । १२०२५
चेतनयाऽभिसम्पन्नो रूपेणाद्भुतदर्शनः । एवं रूपं करिष्यामि मनसा धर्मचारिणा ।
रूपं बहुविधं लोके पार्थिवीं चेतनां तथा । [illegible] बहुभिर्धातुसम्भवैः ।
वष्टेन च स सर्व्वेयं मनसा धर्म्मचारिणी । [illegible] भावयोगाभ्यां [illegible] ।
विमुक्तः सर्व्वसङ्गेभ्यो धारयन्निष्परिग्रहः । न च [illegible] मां कश्चिज्जगता कामचारिणीं ।
पञ्चधातुनिबद्धाञ्च नानाभावविचेष्टिताम् । ये च विष्णुपदोत्पन्ने बहुधा [illegible] ।
ते मां पश्येयुरव्यक्तां तपसा दग्धकिल्बिषाः । ये च [illegible] धर्मपथि स्थिताः ।
तेऽपि स्वर्गजितः स्वर्गे पश्येयुर्मां गतक्लमाः । यथैव पर्व्वतः [illegible] प्रतिष्ठितः ।
एतमारुह्य पश्येयुः प्राकाश्यामिषु निर्ग्गताः । [illegible] विचरेयुर्यथेप्सिताः ।
नन्दनं वनमासाद्य [illegible] । रमा [illegible] समासाद्य मद्गताः पुष्करेष्विव ।
शरीरं क्षपयिष्यन्ति व्रतैर्बहुविधैः क्षमाः । सिद्धिं प्राप्य गमिष्यन्ति कामैर्बहुविधैर्नराः । १२०३५
इमं लोकममुं चैव सम्पतेयुर्यथासुखं । गौरी सिद्धेति विख्याता त्रिषु लोकेषु विश्रुता ।
प्रभावं तपसो वृत्तं दर्शयन्ति समाहिताः । यथा [illegible] ।
भवेयुस्ते निरारम्भा धातुभिर्मुक्तबन्धनाः । [illegible] दत्त्वा दानफलानि च ।
अविमानेन विप्राणां मनःशुद्धेन कर्म्मणा । सर्व्वे [illegible] अत्यर्थं फलमाप्नुयुः ।
अमुष्मिन् लोके धर्म्मज्ञाः सह सर्व्वकुलोद्भवैः । येषामिह च सान्निध्यं [illegible] ब्राह्मणसंकुले । १२०४०
ते भूयो यजमानाद्या अभिषिच्य पुनः पुनः । तथा तां मन्यसे गौरीं मनसा धर्म्मचारिणीं ।
अनुग्रहाय भूतानां मामजस्र तपोधने । सत्य एव वरो विप्रे भविता नात्र संशयः ।
नाफलो विद्यते धर्म्मश्चरितो ब्रह्मचारिणा ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सप्तदशाधिकद्विशततोऽध्यायः ॥ २१७ ॥

॥ वैशम्पायन उवाच ॥ दिशं निर्गमिषुर्दिव्यामुत्तरां सत्यवाग्धनः । तथा स धातुनिचये पुण्ये पर्व्वतरोधसि ।
विष्णुः परमधर्म्मात्मा एकपादेन तस्थिवान् । दशवर्षसहस्राणि पुष्करे पुष्करेक्षणः । १२०४५
आत्मन्यात्मानमाधाय तपसा ब्रह्मसम्भवः । घटते कर्म्मयोगेन लोकमुत्पादनकारणात् ।
भास्करो भस्मनाच्छाद्य [illegible] स्वयमात्मनः । [illegible] वर्षसहस्राणि [illegible] तपोधनः ।
तेजसा तेन ज्योतींषि विभाव्य ब्राह्मणर्षभः । तिष्ठते मनसो मध्ये योगात्मा भावयन् जगत् ।
सोमो विषयमाक्षिप्य मनसा धारयन्मनः । मुक्तः परमधर्म्मात्मा शाश्वतीं सिद्धिमुपागतः ।
सम्प्रदृश्यति सर्व्वत्र दिवि भूम्यम्बरे तथा । ज्योतिषः [illegible] कुर्व्वाणो बहुरूपः [illegible] । १२०५०
महेश्वरो निगूढात्मा वृषरूपेण तिष्ठति । उद्धृत्य दक्षिणं पादं वायुभक्षः समाहितः ।

षष्टी वर्षसहस्राणि सततं व्रतमेव च । महायोगी महादेवो नियमाद्[illegible] ।
अथ वायुर्घनीभूतो अन्ते चरति गोपतेः । फेनीभूतं समुद्गारैः पवनं निर्जिगमुखात् ।
स निष्क्रान्तस्ततो वक्त्रात् प्राणेन परमात्मवान् । निर्यासभूतः पतितो नैवार्द्रो नैव पार्थिवः ।
स फेनो वारिमाविश्य चचार वसुधातले । नैवार्द्रो नैव शुष्काङ्गो वायुः संघातमागतः । ११९५५
तत्काले फेनमुत्क्षिप्य पवनः सह वारिणा । निरालम्बे निरालम्बस्तम्भापि समपद्यत ।
ते क्षिपन्ति पयो भूमावात्मानं स्वेन वह्निना । नीलमेघारुणप्रख्या नैवार्द्रा नैव पार्थिवाः ।
ब्राह्मीं मूर्त्तिं समाधाय वायुः सर्व्वगो वशी । समाः सहस्रं संपूर्णं चचार विपुलं तपः ।
वह्निर्व्वद्धजटो भूत्वा चीरवल्कलवासकः । तपस्ताप्यदनाहारो मौनमास्थाय पुष्करे ।
वर्षाणाञ्च सहस्राणि त्रीणि चैकश्च यत्नतः । तस्याग्नेस्तेजःसंभूतो महानग्निः प्रवर्त्तते । ११९६०
स्वर्गप्रकाशकश्चैव स्वर्गवासी तमोनुदः । द्वितीयो भूतप्रकाशाख्यस्तपसा ब्रह्मसम्भवः ।
तपश्चरति धूमाग्निर्लोकानां भूतभावनः । तत्तमो भुवि राजेन्द्र मानुषेषु प्रतिष्ठितं ।
भास्करस्तेजसंहारी यतो भवति सत्तम । मर्त्यानां सर्व्वभूतानां तेज आक्षिप्य वर्त्तते ।
न तु योगबले राजन् ब्राह्मणस्य विशेषतः । तत्तमो नाशयेद्राजौ नाश्यहो भविता ह्ययं ।
पुष्पमित्रो महातेजा यक्षः सर्व्वत्रगो वशी । तपश्चरति धर्म्मात्मा पुष्करेषु समाहितः । ११९६५
महेन्द्रशिखराङ्गारा यावत्यो यान्ति मेदिनीं । तावत्स्वरूपमास्थाय तिष्ठते निखिलाः समाः ।
जानुभ्यां पतितो भूमौ ज्योतिर्नभसि पश्यति । समाः सहस्रं निखिलं मेषैरनिमिषैर्जगत ।
नेत्राणि बहुधा तस्य नेत्रान्तैरभिनिःसृताः । मध्यं दिनकरे प्राप्ते रश्मिवान् स परिग्रहे ।
ते रश्मयः प्रभानन्तैः शतशोऽथ सहस्रशः । रराज तेजःसंयोगाज्ज्वलद्भिरिव पावकः ।
सविस्फुलिङ्गैर्नेत्रान्तैरादित्यमनुवर्त्तते । कर्म्मणोऽन्ते युगान्ते वा जगतो बहुरूपिणः । ११९७०
बहुधा तु पुनर्भूत्वा निषण्णो वसुधातले । समाः सहस्रं संपूर्णं तपस्तेपे सुदारुणं ।
निगृहीतेन्द्रियो भूत्वा नाप्सरोभिर्ललाम च । मेरोः शिखरमासाद्य कामं कामेन पीडयन् ।
तपःकामः स यक्षस्तु कुबेरो नरवाहनः । विष्णुरेव तपोऽध्यक्षस्तेजसोऽन्तेन जृम्भते ।
न हि कश्चित् पुमानस्ति य एतत्तप आचरेत् । त्रिषु लोकेषु राजेन्द्र ऋते विष्णुं सनातनं ।
वासुकिर्व्वहुशीर्षश्च नागेन्द्रो मौनमास्थितः । तप आचरते सम्यक् निधाय मनसा मनः । ११९७५
शेषः सत्यधृतिर्नागो बलवान् ब्रह्मसम्भवः । वृक्षमारुह्य धर्म्मात्मा अवाक्शीर्षोऽवलम्बते ।
जिह्वाभिर्लेलिहानाभिर्गोवज्जं विषमुत्सृजन् । समासहस्रं संपूर्णं निराहारस्तपोधनः ।
कालकूटं विषं तद्धि सुमहत् समपद्यत । येन लोको ह्यभिग्रस्तो न सुखं विन्दते नृप ।
सर्व्वत्रानुगतं तीक्ष्णं भुजगेषु महीतले । जङ्गमं स्थावरञ्चैव सर्व्वत्रानुगतं विषं ।
परस्परं विरुद्धेन हिंसायुक्तेन भारत । नाशयत्यात्मनोऽङ्गानि तेन तीक्ष्णेन भारत । ११९८०
अथ ब्रह्मा महाभागो भूतानां हितकाम्यया । मन्त्रं विसृजते राजन् ब्रह्माक्षरमयं हितं ।

गरुत्मान् विततैः पक्षैर्नखाग्रैः चखिलं महीं । समायस्तं संपूर्णं बलायोपावगम्यते ।
पर्णभारैश्च विकचैर्विशीर्णैर्व्वसुधातले । रराज वसुधा चैव तैः पर्णैर्व्वप्रविचितैः ।
येन वित्तेन जीवेयुः सर्व्वभूतानि भारत । इह लोके मनुष्येषु देवलोके च भारत ।
द्यौरिवाचितनक्षत्रा महीतलविसर्पिभिः । भगवान् विमलवपाते तपस्विकचरो वशी । १२०८५
पुष्करान्मपि धर्म्मात्मा मतूर्ध्वोल्लिखितमूर्द्धजः । अथ खलसमाक्रम्य पृथिवी प्रांशुदेहिनी ।
तपश्चरति धर्म्मात्मा वाङ्मुखस्य दक्षिणं । वायं वर्षशतस्य मनमेकस्य सुव्रता ।
तपश्चरति संयोगाद्वायुभक्षा समाहिता । समाधियोगात् सुश्रान्ता मन्त्रयोगस्य भारत ।
येनेयं पृथिवी राजन् धार्य्यते मन्त्रयोगिना । अनाद्यमतमनिर्देश्य सर्व्वेव विवर्धेषिषा ।
योऽसौ विष्णुरगाधात्मा परमात्मा निराकृतिः । दिवैऽनिमिषो भवति रात्रौ भवति वै स्थिरः । १२०९०
सत्यसन्धः स धर्म्मात्मा कामकारकरोऽभवत् । तस्य च शोभनः पाणिः धृतिर्व्वा पृथिवीसमः ।
रात्रौ तपनो भवति मण्डलं विपुलं नभः । स चन्द्रविषयं राजन्ममथामाय गच्छति ।
ग्रहाणां गतयश्चैव ताराणाञ्च विशेषतः । तां छायामाश्रितन् सोमात् सर्व्वाङ्गिर्व्वायुखलेन वै ।
पृथिव्यां दक्षिणे हस्ते महायोगी महामनाः । सैषा च्छाया मनीभूता मन्निमण्डलमाविशत् ।
अलिङ्गा पृथिवी लिङ्गादद्भुताद्यथा दिवि । सर्व्वैरङ्गान्युपगुह्य तपश्चरति दुश्चरं । १२०९५
निश्चयात् प्रोक्ष्य पादौ तु पृथ्वी वाक्यमुपागता । सूर्य्यार्चिभिः पीयमानाद्रात्रिष्यति महीतलात् ।
महीव चान्नुवसनाशुमान्ते विच्युतेजसा । रराज सूर्य्यरश्मिभिर्व्यतिषक्ता महानदी ।
स्फाटिकेव शुभा येषा काञ्चनैर्धातुभिर्वृता । आदित्येन समादत्ता रश्मितेजोऽभिसंभवैः ।
मण्डलान्तर्गता देवी चक्षुषा नोपलभ्यते । रश्मिभिः पुनरुत्तीर्णा ततो योगेन धावति ।
आकाशगङ्गा संवृत्ता विपुलैरम्बुविप्लवैः । शीतच्छायैश्च तरुभिर्लताभिश्च सुगन्धिभिः । १२१००
पद्मषण्डैश्च विविधैः शुभ्रशुभ्रे दिव्यगन्धिभिः । काञ्चनापीडजघना स्फाटिकान्तरमेखला ।
पद्मरेणुभिरापीता चक्रवाकावतंसिका । नीलगर्भसुकेशान्ता पुष्पमञ्जरीसंकुला ।
शोभते विप्रसर्पन्ती प्रमदेव विभूषिता । सैषा गङ्गाफलं लेभे पुष्करेण समागता ।
सुतपाश्चन्द्रविहिता लोकानां धारणे रता । सरस्वती स्वरैर्व्याप्तमधीते ब्रह्मवादिनी ।
पृष्ठात्प्रयाता शैलेन्द्रे मन्दरे मन्दगामिनी । सम्प्रयाता चतुरो वेदान् पादैश्चतुर्भिराहृतान् । १२१०५
यजुर्भिः सामभिश्चैव पठिताञ्छिक्षया तथा । ऋग्भिर्भिर्व्वेदनप्रख्यैस्तपसा दग्धकिल्बिषैः ।
सुपार्श्वस्य गिरेः पादैः परिदायैः सुपारगैः । निखनन् सर्व्वभूतानि नियमेन च शृण्वते ।
मन्दराग्रे त्रिपर्य्यन्तं जगत्तत्त्वमतीन्द्रियं । विरामनियमे प्राप्ते तूष्णीम्भूता बभूव ह ।
न वाचमीरयेद्देवी नियामत् सत्यवादिनी । अथ भूतानि सर्व्वाणि तूष्णीम्भूतानि सर्व्वशः ।
न शेकुरभिधानार्थं व्याहर्त्तुं वदनैर्व्वलात् । विभज्य योगं मनसा सर्व्वभूतेष्वनुग्रहं । १२११०
सरस्वती स्वरयुता व्याजहार महाद्युतं । सरस्वत्या समायुक्तां गिरां म्रक्षन्ति देहिनः ।

अग्निमेवाथ ते सर्व्वे गानं गायन्ति नित्यशः। आदित्या वसवो रुद्रा अश्विनावश्विभिः सह।
जटिलाश्चीरवसना मुञ्जमेखलधारिणः। गन्धर्व्वाः किन्नराश्चैव पन्नगाः सह चारणैः।
तपश्चरन्ति सहिताः पुष्करेषु मनीषिणः। अपि कीटपतङ्गैश्च सह सर्व्वैः सरीसृपैः।
शोषयन्ति शरीराणि तपसैकेन पावनाः। विष्णुर्निष्कुलमापन्नो देहान्तरविवर्द्धनात्। ११११५
संरक्षति महायोगी सर्व्वांस्तान् व्रतचारिणः। पुष्करे रमते विष्णुः पुनरेव द्विधाकृतः।
दीप्यमानः स्वतेजोभिर्विधूम इव पावकः। सोऽग्निर्भूतःसमुद्भूतः पृथिवीं तापयन्निव।
प्रधावति समं तेन मण्डलं दशयोजनं। विस्फुलिङ्गार्च्चिभिर्दीप्तैः शुक्लतालावलम्बिभिः।
विशीर्णपार्श्वविभवैर्म्मयूखैरिव दीपितः। तस्याग्नेर्विस्फुलिङ्गानां न शेकुर्लङ्घने रताः।
विप्रकीर्णस्य वासुधामध्यादामिव भास्करः। सोऽग्निर्दीप्यति सर्व्वांश्चिर्विधूम इव पावकः। १११२०
ज्वलितैर्ज्वलनप्रख्यैर्व्विकृतो वा महाम्बरे। सोऽग्निर्धूमगतश्चैव तिष्ठते विपुलस्तदा।
यावद्विष्णुः क्रमप्राप्तो नियमस्य समापनात्। रक्षां कृत्वा न तं विद्याद्विष्णुर्विष्णुपराक्रमः।
भूत्वा शतशरीरो वै नागो वालाहकोऽभवत्। तमग्निमात्मसंवृद्धं ज्वलितानं महामतिः।
प्रतिप्रवृद्धं तेजोभिर्भूतानां हितकाम्यया। वारिणा सुखशीतेन प्राणिनां प्राणवर्द्धनः।
न्यषिञ्चद्दहनं तत्र नागो वालाहकस्तदा। ततः सिद्धगणैर्जुष्टः पुष्करे तप्यते तपः। १११२५
संहृत्य मनसात्मानं महायोगी महाबलः। संहृत्य पादगात्राणि मनो मूर्द्ध्नि विधारयन्।
अचलं स्थानमासाद्य तूष्णीम्भूतो बभूव ह। एष धर्म्मो हि धर्म्माणां योगध्यानविकल्पितः।
हितः सर्व्वेषु भूतेषु इह चामुत्र चोभयोः। अथ दैत्या हतास्तत्र समागम्योद्यतायुधाः।
मायाप्राप्तैर्व्वहुविधैर्नगरैरभिसंहताः। अग्निं दैत्याः पर्व्वताग्रैरभिघ्नन्ति परन्तप।
ज्वलन्तं ज्वलनप्रख्या महाकाया महाबलाः। मेघीभूताश्च मायाभिर्व्वर्षन्ति बलदर्पिताः। १११३०
तस्मिन्नेवाग्निसंघाते संघातं तं महाबलाः। ते शैलास्सर्व्वशो दग्धाः शतशोऽथ सहस्रशः।
युगान्ते प्रभुरादित्यो जनानिव दिधक्षति। न शेकुरग्निं दैत्यास्ते मायाभिमुखमुद्यतं।
आदित्यमिव दीप्यन्तं नभः सूर्य्योदये यथा। विहतैस्तपसा सर्व्वैर्दैत्या भग्नपराक्रमाः।
गन्धमादनमासाद्य निषण्णा नगमूर्द्धनि। स चाग्निर्वैष्णवैर्लोकैर्विधुक्तिः सह सङ्गतः।
अन्तरीक्षचरान्दैत्यान्निर्दहन् विचरन्दिवि। नागो वालाहकश्चैव मेघैः संघातमागतः। १११३५
मुमोच सलिलं भूमौ पर्ज्जन्य इव वृष्टिमान्। मन्त्रैः सञ्चोदितो नागो द्विजेभ्यो वदनोद्धृतैः।
मुमोच तोयसंघातं मानयन्विप्रजं जलं।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे अष्टादशाधिकद्विशततोऽध्यायः ॥ २१८ ॥
॥ जनमेजय उवाच ॥ संयुक्ता तपसा देवाः किं कुर्व्वन्त ततः परं। न हि तद्विद्यते लोके तपसा यन्न लभ्यते।
॥ वैशम्पायन उवाच ॥ अथ दीक्षां समास्थाय सर्व्वे विष्णुमया गणाः। पुष्करादग्निमुद्धृत्य प्रणीय च यथाविधि।
जुहुवुर्व्वर्ज्जविधिना ब्राह्मणा मन्त्रचोदिताः। हविषा मन्त्रपूतेन यथा वै विधिरेव च। १११४०

स चाग्निर्विविधैश्चास्य वर्द्धते ब्रह्मतेजसा । तेजोभिर्व्यक्तकोभूतः प्रभुः प्रहरणैस्तथा ।
ब्रह्मदण्ड इति ख्यातो वपुषा निर्दहन्निव । दिव्यरूपप्रहरणो ह्यसिचर्म्मधनुर्द्धरः ।
सगदो लाङ्गली चक्री शरी चर्म्मी परश्वधी । शूली वज्री खड्गपाणिः शक्तिमान् वरकार्मुकी ।
विष्णुश्चक्रधरः खड्गी मुषली लाङ्गलायुधः । शरी लाङ्गलमाजघ्ने मुषलञ्च महाबलः ।
वज्रमिन्द्रस्तपोयोगात्कृतपर्व्वाणमाक्षिपत् । रुद्रः शूलं पिनाकञ्च मनसा धारयन् प्रभुः । ११२४५
मृत्युर्द्दण्डं सपाशञ्च कालः शक्तिमगृह्णत । जग्राह परशुं त्वष्टा कुवेरश्च परश्वधं ।
निर्व्विकारैः समायुक्ताः शतशोऽथ सहस्रशः । विश्वकर्म्मा च त्वष्टा च चक्राते ह्यायुधं बहु ।
इन्द्रायाग्नेरथं प्रादात् सूर्य्याय च प्रतापिने । परमात्मा ददौ विष्णू रुद्राय च महात्मने ।
छन्दोभिरेव त्वष्टा च स चकाराथ वाहिनीं । विश्वकर्म्मा विमानानि चकार बहुभिः क्रमैः ।
शरीरांशं समुद्धृत्य विष्णुः सत्यपराक्रमः । पुष्करात् पर्व्वणि घनात् पृतनार्थं प्रवर्त्तयत् । ११२५०
यास्त्वेव सूर्य्यरश्मीनां त्वरया समकल्पयत् । ययाऽभियुज्य संग्रामे प्रभुं निर्व्विभिदे रणे ।
स तं दण्डं समुचितं निर्व्विकारं समाहितं । ब्रह्मा जग्राह विधिना अन्तर्द्धानगतः प्रभुः ।
स्वैः प्रभावैश्च विधिना सोऽस्त्रग्रामञ्चतुर्व्विधं । ऐन्द्रमाग्नेयवायव्यं रौद्रं रौद्रेण वर्धसा ।
एभिर्व्विकारैः संयुक्ता दितेः पुत्रा महाबलाः । तपसा क्रियया चैव शस्त्रैः प्रहरणैरपि ।
बलेन चतुरङ्गेण वीर्य्येण सुसमाहिताः । अप्रधृष्या रणे सर्व्वे दानवैवाभवंस्तदा । ११२५५
ते विहाय गुहामध्ये सभाण्डोपस्करे रथे । मन्दरस्य गिरेः पादे विचेरुर्व्वसुधातले ।
चतुरङ्गं बलं सर्व्वं संहृत्य तपसः प्रभुः । विष्णुरेव महायोगी चचार वसुधातले ।
भूयोऽन्यत्तप आसिदुग्रतन्तो ब्राह्मणैः सह । तैश्च सर्व्वैः सुरगणैस्सर्व्वचोरनिवासिभिः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे ऊनविंशत्यधिकद्विशततोऽध्यायः ॥ २१९ ॥
॥ जनमेजय उवाच ॥ वर्त्तमाने खिले ब्रह्मन्निर्व्यथादे महायज्ञे । अविनाशे च भूतानां कथमासन् प्रजास्तदा ।
॥ वैशम्पायन उवाच ॥ पृथुं वैण्यं प्रजापालमभ्यषिञ्चत् प्रजापतिः । राज्याय ऋषिभिः सार्द्धं प्रजा धर्म्मपरायणः । ११२६०
एष नः परमो राजा सानुरागो व्यजायत । त्रेतायां संप्रवृत्तायामन्योन्यमनुजल्पिरे ।
एष नो वृत्तिदाता च क्रियाणाञ्च समर्पिता । निर्म्माता सर्व्वभूतानां सत्यप्राप्तेन कर्म्मणा ।
एतस्मिन्नन्तरे देवा गन्धमादनसानुषु । बहुभिर्न्नियमैः श्रान्ता निषण्णा गिरिसानुषु ।
अथ गन्धं समासाद्य समन्ताद्देवदानवाः । माधवे समये प्राप्ते तेन गन्धेन हर्षिताः ।
पुष्पमात्रस्य यद्वीर्य्यं मारुतेन विसर्पितं । मनोग्राहि सुखं सर्व्वं पार्थिवं गन्धमुत्तमं । ११२६५
ते दैत्यास्तेन गन्धेन किञ्चिद्विस्मयमागताः । प्रसन्नमनसो भूत्वा परं सौख्यमुपागताः ।
ऊचुश्च सहिताः सर्व्वे तेन गन्धेन हर्षिताः । पुष्पमात्रस्य यद्वीर्य्यं किं तस्य फलतो भवेत् ।
अनुमानेन विज्ञेया विविधाः कर्म्मवृद्धयः । शुभाश्चैवाशुभाश्चैव बुद्धिप्राप्तेन देहिनां ।
तस्मादयं पयोमध्य ओषधीर्निर्म्मथामहे । मन्दरेण विशालेन बलिना कामरूपिणा ।

समुद्रमभिसंरब्धा मथ्नीमः क्षीरमर्णवं । पीत्वा च सहिताः सर्व्वे भविताः कामरूपिणः । १२१७०
विष्णुरेवाग्रणीस्तेषां भविष्यति महाबलः । दिवञ्च वसुधाञ्चैव मोक्ष्यामः सह वसुभिः ।
समूलपत्रशाखाश्च सपुष्पाः सफलाश्रिताः । सर्व्वपर्णांश्च रत्नौघान् वसुधां वसुधातले ।
उद्धृत्य गिरिपादेभ्यो गन्धमादनसानुजान् । प्रक्षाय वचनं दैत्या मन्दरस्य प्रकम्पने ।
समुद्धर्त्तुं प्रधावन्तः कम्पयन्ति स्म मेदिनीं । निश्चयेन महावीर्य्या बाहुभिः परिघोपमैः ।
न शेकुस्ते समुद्धर्त्तुं शैलेन्द्रं दनुवंशजाः । निपेतुर्बाहुभिर्भृष्टा विपुले पर्वतान्तरे । १२१७५
समाधायात्मनात्मानं तपसा दग्धकिल्बिषाः । पितामहं प्रपन्नाश्च शिरोभिः कामरूपिणः ।
तेषां मनोऽभिलषितं ब्रह्मा सर्व्वगतो वशी । ज्ञात्वा सर्व्वविधैर्व्वाक्यैर्व्याजहार सरस्वतीं ।
अशरीरां शरीरस्थः परया वर्णसम्पदा । सर्व्वलोकपतिर्ब्रह्मा लोकानां हितकाम्यया ।
आदित्यैर्व्वसुभिश्चैव रुद्रैश्च समरुद्गणैः । देवैर्यक्षैः सगन्धर्व्वैः किन्नरैश्च महर्षिभिः ।
समेत्य सहितैः सर्व्वैरुद्धर्त्तुं शक्यते गिरिः । अमृतार्थे महातेजा धातुभिः समरञ्जितः । १२१८०
सुरासुरगणाः सर्व्वे समुत्पाट्य महागिरिं । रसाक्रान्ताः प्रपद्यन्ति क्षीरोदं हि नवं रवं ।
एतच्छ्रुत्वा तु वचनं सर्व्वेषामन्तिके तदा । दैतेया बाहुबलिनो मनोभिर्व्वाग्भिरेव च ।
विक्रीडभूता बहुधा बभूवुर्बलवत्तमाः । यत्र पुष्करविन्यस्तं सहितैर्द्देवदानवैः ।
सुरासुरगणाः सर्व्वे सहिता बलवत्तमाः । मन्दरं पुष्करं कृत्वा नेत्रं वासुकिमेव च ।
समाः सहस्रं मथितं जलमोषधिभिः सह । क्षीरभूतं समायोगादमृतं समपद्यत । १२१८५
तज्जह्रुरसुराः पूर्व्वमाक्रान्ता लोभमन्युना । तदा प्रत्याजह्रुर्द्देवाः कामक्रोधवशान्विताः ।
धन्वन्तरिस्तथा मद्यं श्रीर्द्देवी कौस्तुभो मणिः । शशाङ्को विमलश्चापि समुत्तस्थुः समन्ततः ।
उच्चैःश्रवा हयो रम्यः पीयूषं तदनन्तरं । पश्चाद्दिव्यास्तदा पातुमुद्यता राहुमब्रुवन् ।
न च केचित् पिबन्त्यन्ये दैत्या नैव च दानवाः । चिच्छेदाथ हरिः संख्ये राहोश्चक्रेण कं मृधे ।
अभियुक्तं पितृगणैर्म्मुनिभिश्च सनातनैः । तदिन्द्रहस्तादमृतं जहार पृथिवी स्वयं । १२१९०
जगामान्तर्गता देवी ब्रह्मवाक्यप्रचोदिता ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥
॥ जनमेजय उवाच ॥ निहते दैत्यसंघाते विष्णोश्चातिपराक्रमे । दैतेया दानवाश्च किमिच्छन्ति पराक्रमात् ।
॥ वैशम्पायन उवाच ॥ दानवा राज्यमिच्छन्ति पराक्रम्य महाबलाः । तप इच्छन्ति सहिता देवाः सत्यपराक्रमाः ।
॥ जनमेजय उवाच ॥ कथं कालस्य महतो हिरण्यकशिपुस्तदा । यजते ब्राह्मणः केचे प्राप्तैश्वर्य्यः स कामदः ।
॥ वैशम्पायन उवाच ॥ यजेद्बहुसुवर्णेन राजसूयेन पार्थिवः । क्रतुना दानवश्रेष्ठो वसुधायां महाबलः । १२१९५
गङ्गायमुनयोर्म्मध्ये यदभूद्विपुलं तपः । समेयुस्तत्र सहिता यजमाने महासुरे ।
ब्राह्मणा वेदविद्वांसो महाव्रतपरायणाः । शतशश्चापरे सिद्धा योगधर्म्मेण भारत ।
मुनयो वालखिल्याश्च नानाधर्म्मेण भाविताः । बहवो हि द्विजा मुख्या नित्यं धर्म्मपरायणाः ।

ऋषयश्च महाभागा विप्रैः पूज्याः सहस्रशः । विपुले रत्नविभवे ध्रियमाण इतस्ततः ।
शुक्रस्तु सह पुत्रेण दैत्यं याजयते प्रभुः । हिरण्यकशिपुं मध्ये मघानां ज्वलनप्रभः । १२२००
हिरण्यकशिपुश्चैव व्याजहार सरस्वतीं । कामाद्वरं ददामीति तद्वै सम्प्रतिपद्यतां ।
विष्णुर्वामनरूपेण भिक्षां तां प्रतिगृह्णाति । हिरण्यकशिपोर्दैत्यात् पदे पदमेव च ।
ततः क्रमितुमारेभे विष्णुः सत्यपराक्रमः । त्रीन् लोकांस्त्रिपदैः क्रान्तैर्दिव्यं वपुरधारयत् ।
हृतराज्यास्तु दैतेयाः पातालविवरं ययुः । ससैन्यगणसङ्घाः सप्रासाः सासितोमराः ।
सयन्त्रलगुडाश्चैव सपताकरथध्वजाः । सचर्मवर्मकोपाश्च सायुधाः सपरश्वधाः । १२२०५
तथेन्द्रं विष्णुसहिताः सहस्रेऽभ्युत्थिता गणाः । अभ्यषिञ्चन् प्रमुदिता लोकानामधिपं सुराः ।
स तान् स्वधामृतेनाशु पितॄन् वै समतर्पयत् । ब्रह्मा तदमृतं दिव्यं महेन्द्राय प्रयच्छति ।
अव्ययस्याव्ययश्चैव संवृत्तस्तेन कर्म्मणा । ततः शङ्खमुपाध्मासीत् द्विषतां लोमहर्षणं ।
पितामहकरोद्भूतं जनितं प्रथमे पदे । तं श्रुत्वा शङ्खशब्दं तु त्रयो लोकाः समाहिताः ।
निर्वृतिं परमां प्राप्ता इन्द्रं नाथमवाप्य च । सर्वैः प्रहरणैश्चैव संयुक्ता वह्निवर्चसैः । १२२१०
मन्दराग्रे सुविहितैर्ज्वलद्भिरिव पावकैः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥
॥ वैशम्पायन उवाच ॥ ततो महति वृत्तान्ते स्थिते राज्ये महोदये । देवानां मानुषाणाञ्च सहवासोऽभवत्तदा ।
एकतः समधीयन्त सहिताः प्रवदन्ति च । स्वयञ्च भागं गृह्णन्ति यज्ञकर्म्मणि भारत ।
प्राचेतसं ततो दक्षं दीक्षित्वा वै बृहस्पतिः । वाजिमेधाय भगवानृषिभिः परिवारितः ।
तस्मिन् पितामहे यज्ञे दक्षस्य विदितात्मनः । आभिचारमकरोद्रुद्रो भागार्थं सह नन्दिना । १२२१५
रुद्रस्यैव हि तद्रूपं द्विधाभूतं तदोजसा । जातः परमधर्मात्मा नन्दी पुरुषविग्रहः ।
तेन योगेन राजेन्द्र यत्तद्ब्रह्म सनातनं । विहितं सत्यवचनैस्तेनैव परमात्मना ।
स्वरूपैश्चाप्यरूपैश्च विरूपाक्षैर्घटोदरैः । ऊर्द्धनेत्रैर्महाकायैर्विकटैर्वामनैस्तथा ।
शिखिभिर्जटिभिश्चैव व्यक्तैश्च मकुटार्च्चिभिः । चीरिभिश्चर्मिभिश्चैव कूटमुद्गरपाणिभिः ।
सघण्टाचीरिभिश्चैव मुञ्जमेखलधारिभिः । सहस्रकटकैश्चैव स्वर्णकुण्डलधारिभिः । १२२२०
सडिण्डिमैः सभेरीकैः सशङ्खैः सवेणुभिः । एतैः परिवृतो देवो मखं तं समुपाव्रजत् ।
सशङ्खमुरजैश्चापि सतालतलपाणिभिः । उग्रायुधधरो देवः सपिनाक इवान्तकः ।
विरराजार्च्चिभिर्दीप्तैर्मखे मखवतां वरः । कालाग्निरिव दीप्तार्च्चिर्जगद्दग्धुमिवोद्यतः ।
नन्दी पिनाकपाणिश्च जग्मतुर्मखमुत्तमं । युगान्त इव कालाग्निः क्षिप्रं दग्धुमिवोद्यतः ।
यूपमुत्क्षिप्य धावन्ति निशाचरगणास्ततः । त्रासयन्मुनिसंघांश्च घोरचर्मनिवासिनः । १२२२५
हवींष्यन्ये पिबन्त्येवं जिह्वाभिस्ताम्रलोचनाः । भक्षयन्ति पशूनन्ये रसनाद्यैः प्रजल्पिभिः ।
मुमुचुश्चापरे यूपान् प्रसभं प्रहरन्ति च । वह्निमन्ये प्रसिञ्चन्ति वारिभिः प्रहसन्ति च ।

सोमसन्ये जहुः केचिद्वैदेस्ताश्चवोपमैः। दर्भान् केचित् प्रकुर्वन्ति चक्रैः पद्मदलप्रभैः।
बभञ्जिरे च यूपाग्रान् कलशांश्चैव चिक्षिपुः। चिच्छिदुः काञ्चनान् वृक्षान् शोभार्थं संप्रकल्पितान्।
विभिदुश्चैव वाणैश्च मुमुचुश्च हिरण्मयान्। लुलुपुश्चैव पात्राणि ममन्थुश्चारणीमथ। १२२३०
चरूंश्चैव प्राश्यंश्च लुलुपुश्च समाहिताः। चखादिरे पुरोडाशान्स्वादयैश्चावकर्त्तिरे।
एवं दिवा च रात्रौ च भिद्यमानो महामखः। चुक्रोश च महानादं भिद्यमान इवार्णवः।
धनुः सशरमादाय पूर्व्वदत्तं स्वयम्भुवा। कृतं कौशिकवेणुभ्यां समरेषु महाबलं।
प्रतिगृह्य महादेवः स शरैः समयोजयत्। धनुर्विस्फार्य्य बाणभ्यां जघान सुमहाक्रतुं।
स विद्धस्तेन वाणेन खं समुत्पतितः क्रतुः। मृगो भूत्वा गर्द्दमानो ब्रह्माणमुपधावति। १२२३५
शरेणाभिहतस्त्राणं न लेभे प्रशमं भुवि। शरणार्थी स्वयं प्राप्तः शरेणान्तर्गतेन च।
तमुवाच मृगं ब्रह्मा शुभं सानुनयं वचः। स्वरेणोत्तमवीर्य्येण गम्भीरेण सुभाषिणा।
एवंरूपो नभसि त्वं भविष्यसि महामृग। विजितस्य त्रिपर्व्वेण शरेणानतपर्व्वणा।
तिष्ठ नक्षत्रशिरसि सह रुद्रेण नित्यशः। सोमेन सह संयुक्तो ह्यवयेणाव्ययेन च।
दिवि सञ्चारभूताभिस्ताराभिः सह सङ्गतः। ज्योतिषां ज्योतिर्भूतस्त्वं ध्रुवस्त्वं शाश्वतो भव। १२२४०
यच्चैतद्रुधिरं दिव्यं क्षतात् मर्मभिन्निःसृतं। नभस्युत्पतितश्चैव प्रवेगेण प्रधावतः।
क्षतजं बहुवर्णञ्च केतुमण्डलसंस्थितं। निमित्तभूतं भूतानां वर्षे वर्षप्रदं तथा।
सुखं दुःखञ्च भूतानां दर्शनात् संप्रवर्त्तते। दक्षिणश्रवणाच्चैव नभसोऽप्यायुधोऽभवत्।
चक्षुषी मानुषे राजन् विस्मयात् समैक्षतां। अद्भुतं बहुचित्रञ्च मनसा संप्रकल्पितं।
न तु रात्रौ प्रदृश्येत खे तु समरसंस्थितं। दिनस्यैव सदा लग्ने महत् कार्य्यं प्रदृश्यते। १२२४५
भूमावेव समुत्तिष्ठेदाकाशे प्रविलीयते। शतशश्च समं सर्व्वे प्रधावन्ति प्रचेतसः।
भयाद्रुद्रस्य महतो धन्विनो वाणपाणयः। नन्दी रुद्रगणैः सार्द्धं पिनाकी समतिष्ठत।
युगान्तकाले ज्वलितो ब्रह्मदण्ड इवोद्यतः। विष्णुः शार्ङ्गाख्यसंभूतं प्रगृह्य विपुलं धनुः।
प्रातिष्ठत महाबाहुः पाणिना चक्रमादधत्। गदां सघण्टामन्येन खड्गमन्येन पाणिना।
प्रगृह्य सोऽग्रतोऽतिष्ठद्रुद्रायोद्यतपाणये। ततः शार्ङ्गाख्यसंभूतं प्रगृह्य विपुलं धनुः। १२२५०
शङ्कुश्चाप्रतिमं लोके शरांश्चानतपर्व्वणः। विष्णुरग्रे स्थितो भाति सबलः संहताञ्जलिः।
बद्धगोधाङ्गुलित्राणः सचन्द्र इव तोयदः। आदित्या वसवश्चैव दिव्यैः प्रहरणैः सह।
विष्णुमेवाभितः सर्व्वे प्रतिष्ठन् ज्वलनप्रभाः। मरुतश्चैव विश्वे च रुद्रेणैवाभिपद्यत।
गन्धर्व्वाः किन्नराश्चैव नागा यक्षाः सपन्नगाः। ऋषयो न्यस्तदण्डाश्च उभयोः पक्षयोर्हिताः।
जपन्ति शान्त्यर्थे नित्यं लोकानां हितकाम्यया। रुद्रः शरेणाभ्यहनद्विष्णुं नारायणं रणे। १२२५५
हृदि सर्व्वाङ्गसन्धौषु तीक्ष्णाग्रेण च पत्रिणा। न चकम्पे तदा विष्णुः सर्व्वात्मा ब्रह्मसंभवः।
न च रोषमना देवं वृतं बिभ्रत् षडिन्द्रियैः। विष्णुश्च धनुरादाय शरेण समयोजयत।

जघुरेमे मुमे च यु मधुदंष्ट्रचिरोचनं । स विद्वतेन कायेन मधुर्दैवो न भासते ।
वज्रेणेव महाचक्रैर्निर्भिन्नरथ न चाशते । ततः प्रचममासुम युद्धं विष्णुः सनातनः ।
जघान कण्ठे भगवान्नीलकण्ठस्वनेऽभवत् । यथाहि निधनो देवः सर्व्वार्थो भगवानज ।
सर्व्वभूतागमाचार्य्यः कर्म्मणा च न चाशते । कर्मणाचैव कर्त्ता च विकर्त्ता चैव भारत ।
अरेपलाश भूतानां सर्व्वभूतेषु चोत्तमः । स्वयमेव हि तत्कर्म्म विधत्ते कर्मयोनिषु ।
तयोः शुभतमो राजन् स्वयमेव तथाऽकरोत् । चक्रादीनात्कुशा चाघः शूलनो मधुराचराः ।
विष्णूनां वदनोन्मुखाः सनातन नमोऽस्तु ते । मन्दो विनाशमुपाय बलवानुद्भवः ।
मूर्द्धन्यभिजघानाजौ विष्णुं क्रोधेन मूर्च्छितः । ततः मर्षितो विष्णुर्नन्दिं दृष्ट्वा सुरोत्तमः । १२२६५
स्तम्भयामास भगवान् सर्व्वभूतपतिर्हरिः । विष्णुर्मस्तपरो भूत्वा तेजसा सम्प्रकाशित ।
क्षमया च समायुक्तः स्थितः स्थाणुरिवाचलः । सर्पिमन्धस्य प्रभेदस्य सर्वेषामरिन्दमः ।
युगान्ताग्निसमो भूत्वा ज्ञानात्मा हरिरव्ययः । मधवः कल्पयामास भागं रुद्राय धीमते ।
विष्णुर्द्धर्म्मपरो नित्यं त्यक्तकामः सुरर्षभः । विष्णुना चैव राजेन्द्र स यज्ञः कल्पितः पुनः ।
यथापचन्न ते सर्व्वे गणा भागमहीमते । तस्मिन् युद्धे महाघोरे विष्णोरद्भुत चैव ह । १२२७०
यथापंन भवेद्युद्धं दक्षयज्ञविनाशने । विनाशश्चैव यज्ञस्य तदा लोके प्रतिष्ठितः ।
सर्व्वभूतेषु राजेन्द्र स्थितो यज्ञः सनातनः । दक्षो यज्ञफलश्चैव प्राप्तवान् स प्रजापतिः ।
एष पौष्करको नाम प्रादुर्भावो महात्मनः । पुराणे पुष्करे चैव यथा द्वैपायनेरितः ।
यथावदनुपूर्व्व्येण संस्तुतः परमर्षिभिः ।
यश्चैनमग्र्यं प्रवरं पुराणं सदाऽप्रमत्तः शृणुयाद्यथोक्तं । अवाप्य कामानिह वीतशोकः परत्र स स्वर्गफलानि भुङ्क्ते । १२२७५
इमाश्चोदाहृतां दिव्यां कथाममितबुद्धिमान् । श्रावयेत्तु विप्रेभ्यः शुचिः प्रयतमानसः ।
अधीत्य सर्व्वमध्यात्मं देवलोके महीयते ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे द्वाविंशत्यधिकद्विशततोऽध्यायः ॥ २२२ ॥

॥ जनमेजय उवाच ॥ प्रादुर्भावः पुराणेषु विष्णोरमिततेजसः । सतां कथयतां विप्र वाराह इति नः श्रुतं ।
न जाने तस्य चरितं न विधिं न च विस्तरं । न कर्म्मगुणसन्तानं न हेतुं न मनीषितं ।
किमात्मको वराहोऽसौ का मूर्त्तिः काऽस्य देवता । किमाचारः किम्प्रभावः किं वा तेन पुरा कृतं । १२२८०
एतन्मे संश तत्त्वेन वाराहं श्रुतिविस्तरं । यज्ञार्थन्तु समेतानां द्विजातीनां महात्मनां ।
॥ वैशम्पायन उवाच ॥ हन्त ते कथयिष्यामि पुराणं ब्रह्मसम्मितं । नानाश्रुतिसमायुक्तं कृष्णद्वैपायनेरितं ।
महावराहचरितं कृष्णस्याद्भुतकर्म्मणः । यथा नारायणो राजन् वाराहं वपुरास्थितः ।
दंष्ट्रया गां समुद्रस्थामुज्जहारारिसूदनः । शाखाभिरुदाराभिः श्रुतिभिः समलङ्कृतः ।
शुचिः प्रयतवाग्भूत्वा निबोध जनमेजय । इदं पुराणं परमं पुण्यं वेदैश्च सम्मितं । १२२८५
नानाश्रुतिसमायुक्तं नास्तिकाय न कीर्त्तयेत् । पुराणमेतदखिलं सांख्यं योगं तथैव च ।

कार्त्स्न्येन विधिना प्रोक्तं योऽस्यार्थं वेदयिष्यति। विश्वेदेवास्तथा साध्या रुद्रादित्यास्तथाऽश्विनौ।
प्रजानां पतयश्चैव सप्त चैव महर्षयः। मनःसङ्कल्पजाश्चैव पूर्व्वजाश्च महर्षयः।
वसवोऽप्सरसश्चैव गन्धर्व्वा यक्षराक्षसाः। दैत्याः पिशाचा नागाश्च भूतानि विविधानि च।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा म्लेच्छादयो भुवि। चतुष्पदानि सत्त्वानि तिर्य्यग्योनिगतानि च। १२२८०
जङ्गमानि च सत्त्वानि यच्चान्यज्जीवसंज्ञितं। पूर्णे युगसहस्रान्ते ब्राह्मेऽहनि तथा गते।
निर्व्वाणे सर्व्वभूतानां सर्व्वोत्पातसमुद्भवे। हिरण्यरेतास्त्रिशिखस्ततो भूत्वा वृषाकपिः।
शिखाभिर्व्विधमँल्लोकान् शोषयति देहिनः। दह्यमानास्ततस्तस्य तेजोरश्मिभिरर्द्दिताः।
विवर्णवर्णा दग्धाङ्गा हतार्च्चिष्मच्छिराननैः। साङ्गोपनिषदा वेदा इतिहासपुरोगमाः।
सर्व्वविद्याः क्रियाश्चैव सत्यधर्म्मपरायणाः। ब्रह्माणमग्रतः कृत्वा प्रभवं विश्वतोमुखं। १२२८५
सर्व्वे देवगणाश्चैव त्रयस्त्रिंशच्च छन्दजाः। तस्मिन्नहनि संप्राप्ते तं हंसं महदक्षरं।
प्रविशन्ति महायोगं हरिं नारायणं प्रभुं। तेषां तत्र प्रविष्टानां प्रलयोत्पत्तिरुच्यते।
यथा सूर्य्यस्य सततमुदयास्तमने प्रभो। पूर्णे युगसहस्रान्ते कल्पो निःशेष उच्यते।
यस्मिन् जीवकृतं सर्व्वं निःशेषं नावतिष्ठते। संहृत्य लोकान्निखिलान् ससुरासुरपन्नगान्।
कृत्वात्मगर्भे भगवानास्ते एको जगद्गुरुः। स स्रष्टा सर्व्वभूतानां कल्पान्तेषु पुनः पुनः। १२२९०
अव्यक्तः शाश्वतो देवस्तस्मिन् सर्व्वमिदं जगत्। नष्टार्कंकिरणे लोके चन्द्ररश्मिविवर्ज्जिते।
त्यक्तधूमाग्निपवने क्षीणयज्ञतपःक्रिये। अपक्षिगणसंपाते सर्व्वप्राण्यचरे पथि।
अमर्य्यादाकुले रौद्रे सर्व्वतस्तमसा वृते। अदृश्ये सर्व्वलोकेऽस्मिन्नभावे सर्व्वकर्म्मणां।
प्रशान्ते सर्व्वसम्पाते नष्टवैरपरिग्रहे। गते स्वभावसंस्थानं लोके नारायणात्मके।
परमेष्ठी हृषीकेशः शयनायोपचक्रमे। पीतवासा लोहिताक्षः कृष्णजीमूतसन्निभः। १२२९५
शिखासहस्रविकचं जटाभारं समुद्वहन्। श्रीवत्सकलिलं पुण्यं रक्तचन्दनभूषितं।
वक्षो बिभ्रन्महाबाहुः सविद्युदिव तोयदः। पुण्डरीकसहस्रस्य मालाऽस्य शुशुभे तदा।
पत्नी चैव स्वयं लक्ष्मीर्देहमावृत्य तिष्ठति। ततः स्वपिति धर्म्मात्मा सर्व्वलोकपितामहः।
कमप्यमितविक्रान्तो निद्रायोगमुपागतः। ततो वर्षसहस्रे तु पूर्णे स पुरुषोत्तमः।
स्वयमेव विभुर्भूत्वा बुध्यते विबुधाधिपः। ततश्चिन्तयते भूयः सृष्टिं लोकस्य लोककृत्। १२३००
पितृदेवासुरनरान् पारमेष्ठ्येन कर्म्मणा। ततश्चिन्तयते कार्य्यं देवेषु समितिञ्जयः।
सम्भवं सर्व्वलोकस्य विदधाति स वाक्पतिः। कर्त्ता चैव विकर्त्ता च संहर्त्ता च प्रजापतिः।
धाता विधाता च तथा संयमो नियमो यमः। नारायणपरा वेदा नारायणपराः क्रियाः।
नारायणपरो यज्ञो नारायणपरा श्रुतिः। नारायणपरो मोक्षो नारायणपरा गतिः।
नारायणपरो धर्म्मो नारायणपरः क्रतुः। नारायणपरं ज्ञानं नारायणपरं तपः। १२३०५
नारायणपरं सत्यं नारायणपरं परं। नारायणात् परो देवो न भूतो न भविष्यति।

स स्वयम्भूरिति ज्ञेयः स ब्रह्मा भुवनाधिपः । स वायुरिति विज्ञेय एव चन्द्रः प्रजापतिः ।
सदसच्च स विज्ञेयः सर्व्वज्ञः स प्रजाकरः । यदेहितव्यं विद्वांसस्तदेव परिविन्दन्ति ।
यच्च वेद्यं भगवतो देवा अपि न तद्विदुः । प्रजानां पतयः सर्व्व ऋषयश्च सहामरैः ।
नास्यान्तमधिगच्छन्ति तेनानन्त इति श्रुतिः । यदस्य परमं रूपं तन्न पश्यन्ति दैवताः । १२२२०
प्रादुर्भावेषु संभूतं यत्तदर्चन्ति देवताः । दर्शितं यदनेनैव तदवेक्षन्ति देवताः ।
यन्न दर्शितवानेष कस्तदन्वेष्टुमर्हति । ग्रामणीः सर्व्वभूतानामग्निमारुतयोर्गतिः ।
तेजसस्तपसश्चैव निधानममृतस्य च । चतुराश्रमधर्म्मज्ञश्चातुर्होत्रफलाशनः ।
चतुःसागरपर्य्यन्तश्चतुर्युगनिवर्त्तकः । तदेव संहृत्य जगत् कृत्वा गर्भस्थमात्मनः ।
मुमोचाण्डं महायोगी धृत्वा वर्षसहस्रकं । १२२२५
सुरासुरद्विजभुजगाप्सरोगणैर्द्रुमौषधिक्षितिधरयक्षगुह्यकैः । प्रजापतिः श्रुतिधरसत्तमं कुलं तदाऽसृजज्जगदिदमात्मना प्रभुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे प्रादुर्भावे त्र्योविंशत्यधिकद्विशततोऽध्यायः ॥ २२२ ॥
॥ वैशम्पायन उवाच ॥ जगदण्डमिदं पूर्व्वमासीत् सर्व्वं हिरण्मयं । प्रजापतेर्मूर्त्तिमयमितीयं वैदिकी श्रुतिः ।
तद्वै वर्षसहस्रान्ते बिभेदोर्द्ध्वमुखं विभुः । लोकोद्भवनहेतुश्च बिभेदाधोमुखं पुनः ।
भूयोऽष्टधा बिभेदाण्डं विभुर्वै लोकयोनितः । चकार जगतश्चात्र विभागं सर्व्वभागवित् ।
यच्छिद्रमूर्द्ध्वमाकाशं परा सुकृतिनां गतिः । विहितं विश्वयोगेन यदधस्ताद्रसातलं । १२२३०
यदण्डमकरोत् पूर्व्वं देवलोकसिसृक्षया । समन्तादष्टधा योगी छिद्राणि कृतवांश्च सः ।
दिशश्च विदिशः सर्व्वा समन्तेवाकरोद्द्विधा । नानारागविरागाणि यान्यण्डशकलानि वै ।
बहुवर्णधराश्चित्रा बभूवुस्ते बलाहकाः । यदण्डमध्ये स्नेहन्तु द्रवमासीत् समाहितं ।
जातरूपं समभवत्तत् सर्व्वं पृथिवीतले । तस्य तोयार्णवेनेव प्राच्छाद्यत समन्ततः ।
पृथिवी निखिला राजन् युगान्ते सागरैरिव । यथाण्डमकरोत्पूर्व्वं देवलोकचिकीर्षया । १२२३५
तत्र यत् सलिलं स्कन्नं सोऽभवत् काञ्चनो गिरिः । तेनावृता सुताः सर्व्वा दिशश्चोपदिशस्तु च ।
अन्तरीक्षञ्च नाकञ्च यच्चान्यत् किञ्चिदन्तरं । यत्र यत्र जलं स्कन्नं तत्र तत्रोत्थितो गिरिः ।
सहस्रशैलगहना विषमा मेदिनी त्वभूत् । तैः सा पर्व्वतजालौघैर्ब्बहुयोजनविस्तृतैः ।
पीडिता गुरुभिर्द्देवी पृथिवी व्यथिताऽभवत् । महीतले भूरिजलं दिव्यं नारायणात्मकं ।
हिरण्मयं समुत्सृज्य तेजश्च अलक्ष्यपि तत् । अशक्ता वै धारयितुमधस्तात् प्राविशत्तया । १२२४०
पीड्यमाना भगवतस्तेजसा तेन सा क्षितिः । पृथिवीं विशन्तीं दृष्ट्वा तामधो मधुसूदनः ।
उद्धारार्थं मनश्चक्रे लोकानां हितकाम्यया ।
॥ भगवानुवाच ॥ एषा मत्तेजसो वीर्य्यं समासाद्य तपस्विनी । रसातलं प्रविशति पङ्के गौरिव दुर्बला ।
॥ पृथिव्युवाच ॥ त्रिविक्रमायामितविक्रमाय महानृसिंहाय चतुर्भुजाय । श्रीशार्ङ्गचक्रासिगदाधराय नमोऽस्तु ते काम वरप्रदाय ।

त्वयात्मा धार्य्यते दिवं त्वया संधार्य्यते जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च । १२२४५
यत्त्वया धार्य्यते किञ्चित्तेजसा च बलेन च । ततस्तव प्रसादेन मया पश्चात्तु धार्य्यते ।
त्वया धृतं धारयामि नाधृतं धारयाम्यहं । न हि तद्विद्यते भूतं यत्त्वया नेह धार्य्यते ।
त्वमेव कुरुषे वीर नारायण युगे युगे । मम भारावतरणं जगतो हितकाम्यया ।
दानवैस्तेजसा क्रान्तां रसातलतलं गतां । भयार्त्तां मां सुरश्रेष्ठ त्वामेव शरणं गता ।
दानवैः पीड्यमानाऽहं राक्षसैश्च दुरात्मभिः । त्वामेव शरणं नित्यमुपयामि सनातनं । १२२५०
तावन्मेऽस्ति भयं भूयो यावन्न त्वां ककुद्मिनं । शरणं मनसा यामि शतशोऽप्युपलक्षये ।
॥ भगवानुवाच ॥ माभैर्द्धरणि कल्याणि शान्तिं व्रज समाहिता । एष त्वामुचितं स्थानमानयामि मनीषितं ।
॥ वैशम्पायन उवाच ॥ ततो महात्मा मनसा दिव्यं रूपमचिन्तयत् । किं नु रूपमहं कृत्वा उद्धरेयं वसुन्धरां ।
जले निमग्नां धरणीं येनाहं वै समुद्धरे । इति सञ्चिन्त्य मनसा हरिर्नारायणः प्रभुः ।
जलक्रीडारुचिस्तस्माद्वाराहं वपुरस्मरत् । हरिरुद्धरणे युक्तस्तदाऽभूदस्य भूमिपक् । १२२५५
अदृश्यं सर्व्वभूतानां वाङ्मयं ब्रह्मसंज्ञितं । दशयोजनविस्तारमुच्छ्रितं शतयोजनं ।
नीलजीमूतसङ्काशं मेघस्तनितनिस्वनं । गिरिसंहननं भीमं श्वेतदीप्तोग्रदंष्ट्रिणं ।
विद्युदग्निप्रकाशाक्षमादित्यसमतेजसं । पीनवृत्तायतस्कन्धं दृप्तशार्दूलविक्रमं ।
पीनोन्नतकटीदेशं वृषलक्षणलक्षितं । रूपमास्थाय विपुलं वाराहममितं हरिः ।
पृथिव्युद्धरणार्थाय प्रविवेश रसातलं । वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः । १२२६०
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः । अहोरात्रेक्षणधरो वेदाङ्गश्रुतिभूषणः ।
आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् । सत्यधर्म्ममयः श्रीमान् क्रमविक्रमसत्कृतः ।
क्रियासत्रमहाघोणः पशुजानुर्महाकृतिः । उद्गात्रन्त्रो होमलिङ्गो बीजौषधिमहाफलः ।
वाय्वन्तरात्मा मन्त्रस्फिक् विकृतः सोमशोणितः । वेदिस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरन्वितः । दक्षिणाहृदयो योगी महासत्रमयो महान् । १२२६५
उपाकर्म्मोष्ठरुचकः प्रवर्ग्यावर्त्तभूषणः । नानाच्छन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः । भूत्वा यज्ञवराहोऽसौ द्रागधः प्राविशद्विभुः ।
अद्भिः सञ्छादितामुर्व्वीं स तामार्च्छत् प्रजापतिः । रसातलतले मग्नां रसातलतलं गतः ।
प्रभुर्लोकहितार्थाय दंष्ट्राग्रेणोज्जहार गां । ततः स्वस्थानमानीय पृथिवीं पृथिवीधरः ।
मुमोच पूर्व्वं मनसा धारयित्वा धराधरः । ततो जगाम निर्व्वाणं मेदिनी तस्य धारणात् । १२२७०
चकार च नमस्कारं तस्मै देवाय विष्णवे । एवं यज्ञवराहेण भूत्वा लोकहितार्थिना ।
उद्धृता पृथिवी देवी सागराम्बुधरा पुरा । अथोद्धृत्य क्षितिं देवो जगतः स्थापनेच्छया ।
पृथिवीप्रविभागाय मनश्चक्रेऽम्बुजेक्षणः । रसातलगतामेवं विचिन्त्य स सुरोत्तमः ।

ततो विभुः प्रवरवराहरूपधृक् वृषाकपिः प्रसभमथैकदंष्ट्रया । समुद्धरद्धरणिमतुल्यविक्रमो महायशा लोकहितार्थमच्युतः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे पृथिव्युद्धरणे चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

॥ वैशम्पायन उवाच ॥ तस्योपरि जलौघस्य महती नौरिव स्थिता । विततत्वात्तु देहस्य न ययौ संप्लवं मही । ११९७५

ततः स चिन्तयामास प्रविभागं क्षितेर्विभुः । समुत्सृजत्स सर्व्वेषां पर्व्वतानां समन्ततः ।

विलेखनं प्रमाणञ्च गतिं प्रभवमेव च । माहात्म्यञ्च विशेषञ्च नदीनामन्वचिन्तयत् ।

चतुरस्रां धरां कृत्वा कृत्वा चैव महार्णवान् । मध्ये पृथिव्याः सौवर्णमकरोन्मेरुपर्व्वतं ।

शतयोजनविस्तारं सहस्रञ्च समुच्छ्रितं । जातरूपमयैः शृङ्गैस्तरुणादित्यसन्निभैः ।

आत्मतेजोगुणमयं वेदिकाभोगकल्पितं । विविधांश्च महास्कन्धान् काञ्चनान् पुष्करेक्षणः । ११९८०

नित्यपुष्पफलान् वृक्षान् कृतवांस्तत्र पर्व्वते । प्राचीं दिशमथो गत्वा चकारोदयपर्व्वतं ।

शतयोजनविस्तारं तावद्द्विगुणमुच्छ्रितं । चकार स महादेवः पुनः सौमनसं गिरिं ।

नानारत्नसहस्राणां कृत्वा तत्र तु सञ्चयान् । वेदिकां बहुवर्णाञ्च सन्ध्याभ्राभामकल्पयत् ।

सहस्रशृङ्गञ्च गिरिं नानामणिशतार्चितं । कृतवान् वृक्षगहनं शतयोजनमुच्छ्रितं ।

आसनं तत्र परमं सर्व्वभूतनमस्कृतं । कृतवान् स्वामनः स्थानं विश्वकर्म्मा प्रजापतिः । ११९८५

शैशिरञ्च महाशैलं तुषारचयसन्निभं । चकार दुर्गमहनं कन्दरान्तरमण्डितं ।

शिशिरप्रभवाञ्चैव नदीं द्विजगणाकुलां । चकार पुलिनोपेतां वसुधारामिति श्रुतिः ।

सा दिशं निखिलां प्राचीं पुण्यैर्वृक्षशतैर्युता । शोभयत्यम्लानपङ्कजैर्नानाकुञ्जविभूषितैः ।

नित्यपुष्पफलोपेतैश्छादयद्भिः सुसंहतैः । भूषिताऽभ्यधिकं कान्तैः सा नदी तीरजैर्द्रुमैः ।

कृत्वा प्राचीविभागन्तु दक्षिणायामथो दिशि । चकार पर्व्वतं रम्यमद्धं काञ्चनराजतं । ११९९०

एकतः सूर्य्यसंकाशमेकतः शशिसन्निभं । स विभ्रत् शुशुभेऽतीव द्वौ वर्णौ पर्व्वतोत्तमः ।

तेजसा युगपद्व्याप्तं सूर्य्याचन्द्रमसोरिव । वपुष्मन्तमथो तत्र भानुमन्तं महागिरिं ।

सर्व्वकामफलैर्वृक्षैर्वृतं दिव्यैर्मनोरमैः । चकार कुञ्जरञ्चैव कुञ्जरप्रतिमाकृतिं ।

सर्व्वतः काञ्चनगुहं बहुयोजनविस्तृतं । वृषभतिमञ्चैव वृषभं नाम पर्व्वतं ।

हेमचन्दनवृक्षाढ्यं पुष्पहासं स सृष्टवान् । महेन्द्रमथ शैलेन्द्रं शतयोजनमुच्छ्रितं । ११९९५

जातरूपमयैः शृङ्गैः सुपुष्पितमहाद्रुमं । मेदिन्यां कृतवान्देवः प्रतिच्छोभमिवाचलं ।

नानारत्नसमाकीर्णं सूर्य्येन्दुसदृशप्रभं । चकार मलयञ्चाद्रिं चित्रपुष्पितपादपं ।

मैनाकञ्च महाशैलं शिलाजालसमाकुलं । दक्षिणस्यां दिशि शुभं चकाराचलमायतं ।

सहस्रशिखरं विन्ध्यं नानाद्रुमलताकुलं । नदीश्च विपुलावर्त्ताः पुलिनश्रोणिभूषिताः ।

क्षीरसंकाशसलिलां पयोधारामिति श्रुतिः । सुरम्यां तोयकलिलां निर्मितां दक्षिणां दिशं । १२०००

दिव्यतीर्थशतापाङ्गीं स्रावयन्तीं शुभाम्भसा । दिशं याम्यां प्रतिष्ठाप्य प्रतीचीं दिशमागमत् ।

चकारोत्तरं शैलेन्द्रं शतयोजनमुच्छ्रितं। शोभितं शिखरैश्चित्रैः कुमुदैर्विविधैस्तथा।
काञ्चनीभिः शिलाभिश्च गुहाभिश्च विभूषितं। लताकुलं सूर्य्यनिभैः शालैस्तालैश्च भास्वरैः।
धातुभिर्जातरूपैश्च श्रीमद्भिश्चित्रवेदिकैः। षष्टिं गिरिसहस्राणि तथान्यान् संन्यवेशयत्।
मेरुप्रतिमरूपाणि वपुषा प्रभया च ह। सहस्रजलधारञ्च पर्व्वतं मेरुसन्निभं। १२४०५
पुण्यतीर्थगुणोपेतं भगवान् संन्यवेशयत्। षष्टियोजनविस्तारं तावदेव समुच्छ्रितं।
जातरूपोपमं तत्र वाराहं नाम नामतः। निवेशयामास विभुर्दिव्यं वैदूर्य्यपर्व्वतं।
राजताः काञ्चनाश्चैव यत्र दिव्याः शिलोच्चयाः। तथैव चक्रकूटञ्च चक्रवन्तं महाचलं।
सहस्रकूटं विपुलं भगवान् संन्यवेशयत्। शङ्खप्रतिमरूपञ्च राजतं पर्व्वतोत्तमं।
सितद्रुमलताकीर्णं शङ्खं नाम न्यवेशयत्। सुवर्णरत्नसम्भूतं पारिजातं महाद्रुमं। १२४१०
महतः पर्व्वतस्याग्रे पुष्पहासं न्यवेशयत्। शुभामतिरसाञ्चैव घृतधारेति विश्रुतां।
वराहः सरितं पुण्यां प्रतीच्यामकरोत् प्रभुः। प्रतीच्यां स विधिं कृत्वा पर्व्वतं काञ्चनोज्ज्वलं।
गुणोत्तरञ्चोत्तरस्यां संन्यवेशयदच्युतः। ततः सौम्यगिरिं सौम्यमन्तरीक्षमाप्लुतः।
रुक्मधातुप्रतिच्छन्नमकरोद्भास्करप्रभं। स च देशो विसूर्य्योऽपि तस्य भासा प्रकाशते।
तस्य लक्ष्म्याऽधिकं भाति तपता रविणा यथा। सूर्य्यलक्ष्मविशेषस्तपतीव दिवाकरः। १२४१५
सहस्रशिखरञ्चैव नानातीर्थसमाकुलं। चकार रत्नसंकीर्णं भूयोऽस्तं नाम पर्व्वतं।
मनोहरगुणोपेतं मन्दरञ्चाचलोत्तमं। उद्दामपुष्पगन्धञ्च पर्व्वतं गन्धमादनं।
चकार तस्य शृङ्गेषु सुवर्णरजतप्रभां। जम्बूं जाम्बूनदमयीमत्यन्ताद्भुतदर्शनां।
गिरिं त्रिशिखरञ्चैव तथा पुष्करपर्व्वतं। शुभ्रं पाण्डरमेघाभं कैलासञ्च नगोत्तमं।
हिमवन्तञ्च शैलेन्द्रं दिव्यधातुविभूषितं। निवेशयामास हरिर्व्वाराहीं तनुमाश्रितः। १२४२०
नदीं सर्व्वगुणोपेतामुत्तरस्यां दिशि प्रभुः। मधुधारां स कृतवान् दिव्यां सुखशताकुलां।
सर्व्वे चैव क्षितिधराः सपक्षाः कामचारिणः। तदा कृता भगवता विधात्रा परमेष्ठिना।
स कृत्वा प्रविभागन्तु पृथिव्या लोकभावनः। देवासुराणामुत्पत्तौ कृतवान् बुद्धिमव्ययां।
सर्व्वासु दिक्षु जलजोपमांश्चकार शैलान् विविधाभिरामान्। हिताय लोकस्य स लोकनाथः पुण्या नदीश्चापि जलोपगूढाः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे पञ्चविंशत्यधिकद्विशततमोऽध्यायः॥ २२५॥

॥ वैशम्पायन उवाच॥ जगत्स्रष्टुमना देवश्चिन्तयामास पूर्व्वतः। तस्य चिन्तयतो वक्त्रान्निःसृतः पुरुषः किल। १२४२५
ततः स पुरुषो देवं किं करोमीत्युपस्थितः। प्रत्युवाच स्मितं कृत्वा देवदेवो जगत्पतिः।
विभजात्मानमित्युक्त्वा गतोऽन्तर्द्धानमीश्वरः। अन्तर्हितस्य देवस्य सशरीरस्य भास्वतः।
प्रदीपस्येव शान्तस्य गतिस्तस्य न विद्यते। ततस्तेनेरितां वाणीं सोऽन्वचिन्तयत प्रभुः।
हिरण्यगर्भो भगवान् य एष च्छन्दसा स्तुतः। एकः प्रजापतिः पूर्व्वमभवद्भुवनाधिपः।
तदाप्रभृति तस्याद्यो यज्ञभागो विधीयते। १२४३०

विरोचनस्य जम्भस्य कुजम्भश्चेति विश्रुताः । बलिर्विरोचनसुतो बाण एको बलेः सुतः ।
बाणस्य चेन्द्रदमनः पुत्रः परपुरञ्जयः । दनोस्तु पुत्रा बहवो वंशे ख्याता महाबलाः ।
विप्रचित्तिः प्रथमजस्तेषां राजा बभूव ह । गणः प्रजज्ञे क्रोधायाः पुत्रपौत्रमनन्तकं ।
रौद्राः क्रोधवशा नाम क्रूरकर्माण एव ते । सिंहिका सुषुवे राहुं घोरं चन्द्रार्कमर्द्दनं ।
ग्रस्तारश्चैव चन्द्रस्य सूर्य्यस्य च महाप्रभं । काद्रवाः काद्रवेयास्तु गणः परमदारुणः । १२४६५
अभवद्दीप्तसूर्य्याक्षो नीलमेघसमप्रभः । बहुशीर्षः शेषस्तु वासुकिस्तक्षकस्तथा ।
बहूनां कद्रुपुत्राणामेते प्राधान्यमागताः । धर्म्मात्मानो वेदविदः सदा प्राणिहिते रताः ।
लोकतन्त्रधराश्चैव वरदाः कामरूपिणः । तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महाबलः ।
अरुणश्चारुणिश्चैव विनतायाः सुताः स्मृताः । इमास्त्वप्सरसः पुण्या विविधाः पुण्यलक्षणाः ।
सुषुवेऽष्टौ महाभागाः प्राधा देवर्षिपूजिताः । अनवद्यामनूकाञ्च अनूनामरुणप्रियां । १२४७०
अनुगां सुभगाश्चैव स्त्रियः प्राधा व्यजायत । अलम्बुषा मिश्रकेशी पुण्डरीका तिलोत्तमा ।
सुरूपा लक्ष्मणा क्षेमा तथा रम्भा मनोरमा । असिता च सुबाहुश्च सुवृत्ता सुमुखी तथा ।
सुप्रिया च सुगन्धा च सुरसा च प्रमाथिनी । काश्या शारद्वती चैव मौनेयाऽप्सरसः स्मृताः ।
विश्वावसुर्भरण्यश्च गन्धर्व्वाश्चैव विश्रुताः । मेनका सहजन्या च पर्णिनी पुञ्जिकस्थला ।
घृतस्थला घृताची च विश्वाची चोर्व्वशी तथा । अनुम्लोचेति विख्याता प्रम्लोचेति च ता दश । १२४७५
मनोवती चापि तथा वैदिक्योऽप्सरसः स्मृताः । प्रजापतेस्तु संकल्पात् संभूता भुवनप्रियाः ।
अमृतं ब्राह्मणा गावो रुद्राश्चेति चतुष्टयं । सुरभ्यपत्यमित्येवं पुराणे निश्चयं गतं ।
एतद्वै कश्यपापत्यं मनोऽन्वंशं निबोधत । संक्षेपेणैव तत् सर्व्वं कीर्त्तयिष्यामि तेऽनघ ।
विश्वेदेवास्तु विश्वायाः साध्या साध्यान् व्यजायत । मरुत्वत्या मरुत्वन्तो वसोस्तु वसवस्तथा ।
भानोस्तु भानवस्तात मुहूर्त्तास्तु मुहूर्त्तजाः । लम्बा घोषं विजज्ञेऽथ नागवीथी च जामिजा । १२४८०
पृथिवीविषयं सर्व्वमरुन्धत्या व्यजायत । संकल्पायास्तु कौरव्य जज्ञे संकल्प एव च ।
धर्म्मस्य पुत्रो लक्ष्म्यास्तु जज्ञे कामो जगत्प्रियः । हर्षो यशश्च कामस्य रत्याः पुत्रद्वयं स्मृतं ।
सोमस्य पुत्रो रोहिण्यां जज्ञे वर्च्चा महाप्रभः । उदयन्नेव भगवान् वर्च्चस्वी येन जायते ।
एवं पुत्रसहस्राणि स्त्रीणाञ्चैव परस्परं । एतावन्तु जगन्मूलं यत्र लोकाः प्रतिष्ठिताः ।
प्रजापतिस्तु भगवान् गुणतः प्रेक्ष्य देहिनः । आधिपत्येषु मुख्येषु न्ययोजयत योगवित् । १२४८५

दिशो दश क्षितिमपयोऽर्णवान् खगान् द्रुमौषधीरुरगवरान्सुरासुरान् । प्रजापतीन् भुवनपतीन् नभो भुवः क्रिया मखानथ
कृतवान् गिरींश्च सः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे जगत्सर्गे षड्विंशत्यधिकद्विशततोऽध्यायः ॥ २२६ ॥

॥ वैशम्पायन उवाच ॥ यथाक्रममथ लोकानामादित्यानाञ्च भारत । चकार शक्रं राजानमादित्यसमतेजसं ।
स वज्री कवची जिष्णुरित्यामथ जज्ञिवान् । स्तुतः सहस्राक्षो भगवान् यथा योऽध्वर्य्युभिः स्तुतः ।

जातमात्रस्तु भगवानदित्यां स सुरेश्वरः । तदा प्रभृति देवेशो लोकानन्वशासतः ।
अभिषिच्याधिराज्ये तु सहस्राक्षं पुरन्दरं । ब्रह्मा क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे । १२४९०
यज्ञानां तपसाञ्चैव नक्षत्राणामथौषधां । द्विजानामोषधीनाञ्च सोमं राज्येऽभ्यषेचयत् ।
दक्षं प्रजानान्तु पतिमपां वरुणं पतिं । पितृणां धर्म्मनिधनं कालं वैश्वानरं प्रभुं ।
गन्धानाञ्चैव सर्व्वेषां भूतानाञ्चाशरीरिणां । शब्दस्याकाशयानानाञ्च वायुरीश्वरः कृतः ।
सर्व्वभूतपिशाचानां मातृणाञ्च तथा गवां । उत्पातज्वररोगाणां व्याधीनामीतिनां तथा ।
प्रेतानाञ्चैव सर्व्वेषां महादेवः कृतः प्रभुः । यक्षाणां राक्षसानाञ्च गुह्यकानां धनस्य च । १२४९५
रत्नानाञ्चैव सर्व्वेषां कृतो वैश्रवणः प्रभुः । सर्व्वेषां दंष्ट्रिणां शेषो नागानाञ्च वासुकिः ।
सरीसृपाणां सर्व्वेषां प्रभुत्वे तक्षकः कृतः । सागराणां नदीनाञ्च मेघानां वर्षितस्य च ।
आदित्यानामवरजः पर्ज्जन्योऽधिपतिः कृतः । गन्धर्व्वाणामधिपतिस्तथा चित्ररथः कृतः ।
सर्व्वाप्सरोगणानाञ्च कामदेवः कृतः प्रभुः । चतुष्पदानां सर्व्वेषां वाहनानाञ्च सर्व्वशः ।
महेश्वरध्वजः श्रीमान् गोवृषोऽधिपतिः कृतः । दैत्यानाञ्च महातेजा हिरण्याक्षः कृतः प्रभुः । १२५००
हिरण्यकशिपुश्चैव यौवराज्येऽभिषेचितः । दानवानाञ्च सर्व्वेषामसुराणां महाबलः ।
विप्रचित्तिः प्रथमजस्तेषां राज्येऽभिषेचितः । गणानां कालकेयानां महाकालः कृतः प्रभुः ।
अनायुषायाः पुत्त्राणां वृत्रो राजा तदा कृतः । सिंहिकातनयो यस्तु राहुर्नाम महाग्रहः ।
उत्पातानामनेकेषामशुभानां पतिः कृतः । ऋतूनामथ मासानां युगानाञ्चैव भारत ।
पक्षाणाञ्च क्षपाणाञ्च तथाऽहस्तिथिपर्व्वणां । कलाकाष्ठामुहूर्त्तानां गतेरयनयोस्तथा । १२५०५
कृतः संवत्सरो राजा योगस्य गणितस्य च । पक्षिणामथ सर्व्वेषां सत्त्वपाञ्च महाबलः ।
सुपर्णो भोगिनाञ्चैव गरुडोऽधिपतिः कृतः । अरुणो गरुडभ्राता जपापुष्पसमप्रभः ।
योगानाञ्चैव सर्व्वेषां साध्यानामधिपः कृतः । पुत्त्रोऽस्य विरजो नाम कश्यपस्य प्रजापतेः ।
राजा प्राच्यां दिशि तथा वासवेनाभिषेचितः । आदित्यस्य विभोः पुत्त्रो धर्म्मराजो महायशाः ।
दक्षिणस्यां दिशि यमो महेन्द्रेणाभिसत्कृतः । कश्यपस्यौरसः पुत्त्रः सलिलान्तर्गतः पुरा । १२५१०
अम्बुराज इति ख्यातः प्रतीच्यां दिशि पार्थिवः । पुलस्त्यपुत्त्रो द्युतिमान् महेन्द्रप्रतिमः प्रभुः ।
एकाक्षः पिङ्गलो नाम सौम्यायां दिशि पार्थिवः । एवं विभज्य राज्यानि स्वयम्भूर्लोकभावनः ।
लोकांश्च त्रिदिवे दिव्यानददत् स पृथक् पृथक् । कस्यचित् सूर्य्यसङ्काशान् कस्यचिदग्निसप्रभान् ।
कस्यचिद्विद्युदुद्योतान् कस्यचिच्चन्द्रनिर्म्मलान् । नानावर्णान् कामगमाननेकशतयोजनान् ।
सतां सुकृतिनां लोकान् पापदुष्कृतिदुर्लभान् । ये च भासा विभान्त्यपि सौम्याकाररागणा इव । १२५१५
एते सुकृतिनां लोका यत्र पुण्यकृतो गताः । ये यजन्ते मखैः पुण्यैः समाप्तवरदक्षिणैः ।
स्वदारनिरता दान्ता ऋजवः सत्यवादिनः । दीनानुग्रहकर्त्तारो ब्रह्मण्या लोभवर्ज्जिताः ।
ते त्यक्तरजसः सन्तो यान्ति तत्र तपोऽन्विताः । एवं नियोज्य तनयान् ब्रह्मा लोकपितामहः ।

पुष्करं ब्रह्मसदनमारुरोह प्रजापतिः । सर्व्वे स्वयम्भूदत्तेषु पालनेषु दिवौकसः ।
रेमिरे स्वेषु लोकेषु महेन्द्राभिपालिताः ।   १२५१०

स्वयम्भुवा शक्रपुरःसराः सुराः कृता यथार्हे प्रतिपालनेषु ते । यथा दिवञ्च प्रतिपेदिरे शुभं मुदञ्च जग्मुर्मखभागभोजिनः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे अधिपतिस्थापने सप्तविंशत्यधिकद्विशततोऽध्यायः ॥ २२७ ॥

॥ वैशम्पायन उवाच ॥ कदाचित्तु सपक्षास्ते पर्व्वता धरणीधराः । प्रस्थिता धरणीं त्यक्त्वा नूनं तस्यैव मायया ।
ततोऽसुराणां निलयं हिरण्याक्षेण पालितं । दिशं प्रतीचीमागम्य ह्रदेऽमज्जन् यथा गजाः ।
तत्रासुरेभ्यः शंसन्त आधिपत्यं सुरालये । तच्छ्रुत्वाऽथासुराः सर्व्वे चक्रुरुद्योगमुत्तमं ।
क्रूराश्च बुद्धिमतुलां पृथिवीहरणे रताः । आयुधानि च दिव्यानि जगृहुर्भीमविक्रमाः ।   १२५२५
चक्राशनी तथा खड्गान् भुशुण्डीश्च धनूंषि च । प्रासान् पाशांश्च शक्तीश्च मुषलानि गदास्तथा ।
केचित् कवचिनः सज्जा मत्तानागान् समास्थिताः । केचिदश्वरथायानानपरेऽथान्महासुराः ।
केचिदुष्ट्रान् वृषानन्ये महिषान् गर्द्दभानपि । स्वबाहुबलमास्थाय केचिच्चैव पदातयः ।
परिवार्य्य हिरण्याक्षं तस्थुर्बद्धाः पताकिनः । इतश्चेतश्च निर्व्वेदहृष्टाः सर्व्वे युयुत्सवः ।
ततो देवगणाः सर्व्वे पुरन्दरपुरोगमाः । दैत्यानां विदितोद्योगाश्चक्रुरुद्योगमुत्तमं ।   १२५३०
महता चतुरङ्गेण बलेन सुसमाहिताः । बद्धगोधाङ्गुलित्राणास्तूणवन्तः समार्गणाः ।
उग्रायुधधरा देवाः स्वेष्वनीकेष्ववस्थिताः । ऐरावतगतं शक्रमन्वगच्छन्त पृष्ठतः ।
ततस्तूर्य्यनिनादैश्च भेरीणाञ्च महास्वनैः । अभ्यद्रवद्धिरण्याक्षो देवराजं पुरन्दरं ।
तीक्ष्णैः परशुनिस्त्रिंशैर्गदातोमरशक्तिभिः । मुषलैर्भिन्दिपालैश्च छादयामास वासवं ।
ततोऽस्त्रबलवेगेन अर्च्चिष्मत्यः सुदारुणाः । घोररूपा महावेगा निपेतुर्ब्बाणवृष्टयः ।   १२५३५
भिण्डिपालैश्च दैत्या बलिनः शितधारैः परश्वधैः । परिघैरायसैः खड्गैः क्षेपणीयैश्च मुद्गरैः ।
गण्डशैलैश्च विपुलैरश्मभिश्चाद्रिसन्निभैः । घातनीभिश्च गुर्व्वीभिः शतघ्नीभिस्तथैव च ।
युगैर्यन्त्रैश्च निर्युक्तैरर्गलैश्च विदारणैः । सर्व्वान्देवगणान्दैत्याः संनिजघ्नुः सवासवान् ।
धूम्रकेशं हरिश्मश्रुं नानाप्रहरणायुतं । रक्तसन्ध्याभ्रसंकाशं किरीटोत्तमधारिणं ।
नीलपीताम्बरधरं सितोद्वृत्तोर्द्ध्वदंष्ट्रिणं । आजानुबाहुं हर्य्यक्षं वैदूर्य्याभरणोज्ज्वलं ।   १२५४०
समुद्यतायुधं दृष्ट्वा सर्व्वतस्ते महासुरं । हिरण्याक्षं महावीर्य्यं दैत्यानामभयप्रदं ।
युगान्ताग्निसमं भीमं स्थितं मृत्युमिवापरं । प्रविव्यथुः सुराः सर्व्वे तदा शक्रपुरोगमाः ।
दृष्ट्वायान्तं हिरण्याक्षं महाद्रिमिव जङ्गमं । ततः संविग्नमनसः प्रस्टहीतशरासनाः ।
सहस्राक्षं पुरस्कृत्य तस्थुस्ते रणमूर्द्धनि । सा तु दैत्यचमू रेजे हिरण्यकवचोज्ज्वला ।
प्रवृद्धनक्षत्रगणा शारदी द्यौरिवामला । तेऽन्योन्यमभिसंपेतुः पातयन्तः परस्परं ।   १२५४५
बभञ्जुर्बाहुभिर्बाहून् द्वन्द्वमन्ये युयुत्सवः । गदानिपातैर्भग्नाङ्गा बाणैश्च मथितोरसः ।
विनिपेतुः पृथक्केचित्तथाऽन्ये विजुघूर्णिरे । बभञ्जिरे रथान् केचित् केचित् संमर्द्दिता रथैः ।

सम्बाधमन्ये संप्राप्ता न शेकुश्चलितुं रथाः । दानवोत्तमनामैव देवाश्चलितविद्युति ।
अन्योन्यबाणवर्षेण युद्धदुर्द्दिनमाबभौ । हिरण्याक्षश्च बलवान् क्रुद्धः स दितिनन्दनः ।
व्यवर्द्धत महातेजाः समुद्र इव पर्व्वणि । तस्य क्रुद्धस्य वदना मुखान्निश्चेरुरर्चिषः । १२५५०
साग्निधूमश्च पवनो ववौ तस्य समीपतः । सोऽस्त्रजालैर्व्वहुविधैर्व्वहुभिः परिघैरपि ।
सर्व्वमाकाशमावव्रे पर्व्वतशृङ्गैरिव । बहुभिः शितनिस्त्रिंशैश्छिन्नभिन्नशिरोरथः ।
न शेकुश्चलितुं देवा हिरण्याक्षार्द्दिता युधि । तेन विद्राविता देवा हिरण्याक्षेण संयुगे ।
न शेकुर्य्यत्नवन्तोऽपि यत्नं कर्त्तुमचेतसः । सर्व्वे विचालिता देवा हिरण्याक्षेण संयुगे ।
तेन शक्रः सहस्राक्षः स्तम्भितोऽस्त्रेण धीमता । ऐरावतगतः सञ्जी नाशकच्चलितुं भयात् । १२५५५
सर्व्वांश्च निखिलान्देवान् पराजित्य स दानवः । स्तम्भयित्वा च देवेशमात्मस्थं मन्यते जगत् ।
स तोयमेघप्रतिमोग्रनिस्वनं प्रभिन्नमातङ्गविलासविक्रमं । धनुर्विधुन्वन्तमुदारवर्चसं तदाऽसुरेन्द्रं ददृशुः सुराः स्थितं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि शक्रस्तम्भने अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥
॥ वैशम्पायन उवाच ॥ निश्चयत्ने सुरपतौ निर्ज्जितेषु सुरेषु च । हिरण्याक्षवधे बुद्धिं चक्रे चक्रगदाधरः ।
वाराहः पर्व्वतो नाम्ना पूर्व्वं यः समुदाहृतः । स एव भूत्वा भगवानाजगामासुरान्तकृत् ।
ततश्चन्द्रप्रतीकाशमग्र्यं शङ्खमुत्तमं । सहस्रारञ्च तच्चक्रं चक्रपर्व्वतसन्निभं । १२५६०
महादेवो महाबुद्धिर्महायोगी महेश्वरः । पठ्यते योऽमरैः सर्व्वैर्गुह्यैर्नामभिरव्ययः ।
सदा सर्व्वात्मनि श्रेष्ठः सद्भिर्यः सेव्यते सदा । दृश्यते च पुराणेषु यो लोके लोकभावनः ।
यो वैकुण्ठः सुरेन्द्राणामनन्तो भोगिनामपि । विष्णुर्यो योगविदुषां यो यज्ञो यज्ञकर्म्मणां ।
मखे यस्य प्रसादेन भुवनस्था दिवौकसः । आज्यं महर्षिभिर्द्दत्तमश्नुवन्ति त्रिधाकृतं ।
यो नैधनोऽग्निर्द्दैत्यानां यः सुराणां परा गतिः । यः पवित्रं पवित्राणां स्वयम्भोरपि यो विभुः । १२५६५
यस्य चक्रं प्रविष्टानि दानवानां युगे युगे । कुलान्याकुलतां यान्ति यानि दृप्तानि वीर्य्यतः ।
ततो दैत्यद्रवकरं पौराणं शङ्खमुत्तमं । दध्मौ प्राणेन बलवानाक्षिपन्दैत्यजीवितं ।
श्रुत्वा शङ्खस्वनं घोरमसुराणां भयावहं । क्षुभिता दानवाः सर्व्वे दिशो दश व्यलोकयन् ।
ततः संरक्तनयनो हिरण्याक्षो महासुरः । कोऽयं स्थिति ब्रुवन्नोच्चान्नारायणमुदैक्षत ।
वराहरूपिणं देवं स्थितं पुरुषविग्रहं । शङ्खचक्रोद्यतकरं देवानामार्त्तिनाशनं । १२५७०
रराज शङ्खचक्राभ्यां ताभ्यामसुरसूदनः । सूर्य्याचन्द्रमसोर्मध्ये यथा नीलपयोधरः ।
ततोऽसुरगणाः सर्व्वे हिरण्याक्षपुरोगमाः । उद्यतायुधनिस्त्रिंशा दृष्ट्वा देवमुपाद्रवन् ।
पीड्यमानोऽतिबलिभिर्द्दैत्यैः सर्व्वायुधोद्यतैः । न चचाल हरिर्युद्धे कम्पमान इवाचलः ।
ततः प्रज्वलितां शक्तिं वराहोरसि दानवः । हिरण्याक्षो महातेजाः पातयामास वीर्य्यवान् ।
तस्याः शक्त्याः प्रहारेण ब्रह्मा विस्मयमागतः । समीपमागतां दृष्ट्वा महाशक्तिं महाबलः । १२५७५
हुङ्कारेणैव निर्भर्त्स्य पातयामास भूतले । तस्यां प्रतिहतायान्तु ब्रह्मा साध्विति चाब्रवीत् ।

यः प्रभुः सर्व्वदेवानां वराहरूपेण ताडितः । ततो भगवता चक्रमादित्यादित्यसन्निभं ।
पातितं दानवेन्द्रस्य शिरश्छेत्तुमनन्यधा । ततः छिन्नं तत्र शिरस्तस्य भूमौ पपात ह ।
दैत्येन्द्रस्याशनिहतं मेरोः शृङ्गमिवोत्तमं । हिरण्याक्षे हते दैत्ये ये शेषास्तत्र दानवाः ।
सर्व्वे तस्य भयत्रस्ता जग्मुरातु दिशो दश । १२५८०
स सर्व्वलोकाप्रतिचक्रचक्रो महावराहप्रतिमोग्रचक्रः । बभौ वराहो युधि चक्रपाणिः कालो युगान्तेष्विव दण्डपाणिः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे ऊनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥
॥ वैशम्पायन उवाच ॥ विद्राव्य तु रणे सर्व्वानसुरान् पुरुषोत्तमः । मुमोच तत्र बद्धांस्तान् पुरन्दरमुखान् सुरान् ।
ततः प्रकृतिमापन्नाः सर्व्वे देवगणास्तदा । पुरन्दरं पुरस्कृत्य नारायणमुपस्थिताः ।
॥ देवा ऊचुः ॥ तव प्रसादाद्भगवंस्तव बाहुबलेन च । मोक्षिताः स्म महाबाहो विमुक्तास्तान्तकाननात् ।
त्वत्प्रसादाद्धि भगवन् किं कुर्व्वन्त्वदितेः सुताः । इच्छामः पादशुश्रूषां तव कर्त्तुं सनातन । १२५८५
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा वचनं तेषां पुण्डरीकनिभेक्षणः । उवाच वचनं देवान्मुदा युक्तो हतद्विषः ।
॥ भगवानुवाच ॥ यो यस्य भवतां लोको मयैव विहितः पुरा । पाल्यतां स तु यत्नेन नियोगस्य कश्चित् कश्चित् ।
ऐश्वर्यं प्रतिपन्नाः स्थ क्रतुभागपुरस्कृतं । मयैव पूर्व्वं निर्द्दिष्टो नियोगः प्रतिपाल्यतां ।
शक्रश्चोवाच भगवान् वचनं दुन्दुभिस्वनः । इदं यथावत्कर्त्तव्यं सत्यं चासत्यं च तथा ।
गच्छन्तु तपसा स्वर्गं मुनयः संशितव्रताः । यज्ञैरिष्ट्वा यायजूकाः फलन्ति प्राप्नुवन्तु च । १२५९०
भावः सद्धर्म्मशीलानामभावः पापकर्म्मणां । सन्तः स्वर्गजितः सन्तु सर्व्वाश्रमनिवासिनः ।
सत्यशूरा दानशूरा रणशूराश्च ये नराः । ते स्वर्गफलमश्नन्तु सदा ये चानसूयवः ।
अश्रद्दधानाः पुरुषाः कामिनोऽर्थपराः शठाः । अनन्ताया नास्तिकाश्च नरकं यान्तु मानवाः ।
एतावत् क्रियतां वाक्यं मयोक्तं त्रिदशेश्वराः । ततो मयि स्थिते सर्व्वे वो बाधिष्यन्ति नारयः ।
इत्युक्त्वाऽन्तर्हितो देवः शङ्खचक्रगदाधरः । देवतानाञ्च सर्व्वेषामभवद्विस्मयो महान् । १२५९५
एतदत्यद्भुतं दृष्ट्वा वराहचरितं सुराः । नमस्कृत्य वराहाय नाकपृष्ठमितो गताः ।
ततः स्वान्याधिपत्यानि प्रतिपन्नानि दैवतैः । सर्व्वलोकाधिपत्ये च प्रतिष्ठां वासवो गतः ।
विमुक्ता दानवगणैः प्रकृतिं धरणी गता । स्थैर्य्यहेतोर्द्धरण्याश्च ज्ञात्वा चागस्त्यान् गिरीन् ।
तेषु स्थानेषु संस्थाप्य पर्व्वतानां पुरन्दरः । चिच्छेद भगवान् पक्षान् वज्रेण शतपर्व्वणा ।
सर्व्वेषामेव पक्षास्तु छिन्नाः शक्रेण धीमता । एकः सपक्षो मैनाकः सुरेशस्याभयः कृतः । १२६००
एष नारायणस्याद्यः प्रादुर्भावो महात्मनः । वाराह इति विप्रेन्द्रैः पुराणे परिकीर्त्तितः ।
कृष्णद्वैपायनमतं नानाश्रुतिसमाहितं । नाशुचये न पापाय न नृशंसाय कीर्त्तयेत् ।
न क्षुद्राय न नीचाय न गुरुद्वेषकारिणे । नाशिष्याय तथा राजन् कृतघ्नाय चैव हि ।
आयुष्कामैर्य्यशःकामैर्धनकामैश्च मानवैः । जयैषिभिश्च श्रोतव्यो देवानामेष वै जयः ।
पुराणो वेदसम्बद्धः शिवः स्वस्त्ययनो महान् । पावनः सर्व्वभूतानां सात्त्विको विजयप्रदः । १२६०५

एतच्छ्रुत्वा सुराः सर्व्वे वाक्यं पद्मजजन्मनः । स्वानि स्थानानि दिव्यानि प्रतिजग्मुर्मुदा युताः । ११६३५

लब्धमात्रे वरे तस्मिन् सर्व्वाः सोऽबाधत प्रजाः । हिरण्यकशिपुर्दैत्यो वरदानेन दर्पितः ।

आश्रमेषु मुनीन् सर्व्वान् ब्राह्मणान् संशितव्रतान् । सत्यधर्म्मरतान् दान्तान् धर्षयामास वीर्य्यवान् ।

देवांस्त्रिभुवनस्थांश्च पराजित्य महासुरः । त्रैलोक्यं वशमानीय स्वर्गे वसति दैत्यराट् ।

यदा वरमदोन्मत्तश्चोदितः कालधर्म्मणा । यज्ञियानकरोद्दैत्यान् देवतांश्चाप्ययज्ञियाः ।

तदादित्याश्च साध्याश्च विश्वे च वसवस्तथा । रुद्रा देवगणा यक्षा देवद्विजमहर्षयः । ११६४०

शरण्यं शरणं विष्णुमुपतस्थुर्महाबलं । देवं देवमयं यज्ञं ब्रह्मदेवं सनातनं ।

भूतं भव्यं भविष्यञ्च प्रभुं लोकनमस्कृतं ।

॥ देवा ऊचुः ॥ नारायण महाभाग देवास्त्वां शरणं गताः । त्रायस्व जहि दैत्येन्द्रं हिरण्यकशिपुं प्रभो ।

त्वं हि नः परमो धाता त्वं हि नः परमो गुरुः । त्वं हि नः परमो देवो ब्रह्मादीनां सुरोत्तम ।

त्वं पद्मामलपत्राक्ष शत्रुपक्षभयावह । क्षयाय दितिवंशस्य शरणं भव नः प्रभो । ११६४५

॥ विष्णुरुवाच ॥ भयं त्यजध्वममरा अभयं वो ददाम्यहं । तथैव त्रिदिवं यूयमचिरात् प्रतिपत्स्यथ ।

एषोऽहं सगणं दैत्यं वरदानेन दर्पितं । अवध्यममरेन्द्राणां दानवेन्द्रं निहन्मि वै ।

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु भगवान् विसृज्य त्रिदिवौकसः । वधं संकल्पयामास हिरण्यकशिपोः प्रभुः ।

सोऽचिरेणैव कालेन हिमवत्पार्श्वमागतः । किं नु रूपं समास्थाय निहन्म्येनं महासुरं ।

यत्सिद्धिकरमाद्यं स्यादवध्यस्य विबुधद्विषः । अनुत्पन्नस्ततस्तस्य सोत्पन्नो रूपमीदृशं । ११६५०

नारसिंहमनाधृष्यं दैत्यदानवरक्षसां । सहायन्तु महाबाहुरोङ्कारमेव च ।

अथोङ्कारसहायो वै भगवान् विष्णुरच्युतः । हिरण्यकशिपोः स्थानं जगाम प्रभुरीश्वरः ।

तेजसा भास्कराकारः कान्त्या चन्द्र इवापरः । नरस्य कृत्वाऽर्द्धतनुं सिंहस्यार्द्धतनुं तथा ।

नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना । ततोऽपश्यत विस्तीर्णां दिव्यां रम्यां मनोरमां ।

सर्व्वकामयुतां शुभ्रां हिरण्यकशिपोः सभां । विस्तीर्णां योजनशतं पञ्चयोजनमुच्छ्रितां । ११६५५

वैहायसीं कामगमां शतमध्यर्द्धमायतां । जराशोकक्लमत्यक्तां निष्प्रकम्पां शिवां शुभां ।

शुभ्रासनवतीं रम्यां ज्वलन्तीमिव तेजसा । अन्तःसलिलसंयुक्तां विहितां विश्वकर्म्मणा ।

दिव्यरत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युतां । नीलपीतासितश्यामैः श्वेतैर्लोहितकैरपि ।

अवतानैस्तथा गुल्मैर्मञ्जरीशतधारिभिः । सिताभ्रघनसंकाशा प्लवन्तीवाप्सु दृश्यते ।

धन्यासनवती हृद्या द्योतमाना च सा शुभा । प्रभावती भास्वरा च दिव्यगन्धा मनोरमा । ११६६०

सुसुखा न च दुःखा सा न शीता न च घर्म्मदा । न क्षुत्पिपासे ग्लानिं वा प्राप्य तां प्राप्नुवन्ति हि ।

नानारूपैर्विरचिता विचित्रैरतिभास्वरैः । स्तम्भैर्मणिमयैर्दिव्यैः शाश्वती चाक्षया च सा ।

अतिचन्द्रञ्च सूर्य्यञ्च पावकञ्च स्वयम्प्रभा । दीप्यते नाकपृष्ठस्था भर्त्सयन्तीव भास्करं ।

सर्व्वे च कामाः प्रचुरा ये दिव्या ये च मानुषाः । रसवन्तः प्रभूताश्च भक्ष्यभोज्यं तथाऽक्षयं ।

पुष्पगन्धाः स्रजश्चैव नित्यपुष्पफला द्रुमाः । उष्णे शीतानि तोयानि शीते चोष्णानि सन्ति वै । १२९६५

पुष्पिताग्रान्महाशाखान् प्रवालाङ्कुरधारिणः । लतावितानसंछन्नान् नगेषु च नदीषु च ।

द्रुमान् बहुविधांस्तत्र मृगेन्द्रो ददृशे प्रभुः । गन्धवन्ति च पुष्पाणि रसवन्ति फलानि च ।

नानि शीतानि तोयानि तत्र तत्र सरांसि च । अपश्यत् सर्वतीर्थानि सभायां तत्र स प्रभुः ।

नलिनैः पुण्डरीकैश्च शतपत्रैः सुगन्धिभिः । रक्तैः कुवलयैर्नीलैः कुमुदैः सन्ततानि च ।

सुकान्तैर्धार्त्तराष्ट्रैश्च राजहंसैः सरःप्रियैः । कारण्डवैश्चक्रवाकैः सारसैः कुररैरपि । १२९७०

विमलस्फाटिकाभानि पाण्डुरच्छदनानि च । कलहंसोपगीतानि सारसाभिरुतानि च ।

गन्धयुक्ताः शुभास्तत्र पुष्पमञ्जरिधारिणीः । दृष्टवान् पादपाग्रेषु नानापुष्पधरा लताः ।

केतक्यशोकसरलाः पुन्नागतिलकार्जुनाः । चूतनीपकदम्बाश्च नागपुष्पाः प्रियङ्गवः ।

शाल्मल्यः पाटलीरक्ता वञ्जुलाः खदिरद्रुमाः । शालास्तालाः पियालाश्च चम्पकाश्च मनोहराः ।

तथैवान्ये व्यराजन्त सभायां पुष्पिता द्रुमाः । वैद्रुमाश्च द्रुमा दिव्या ज्वलिताग्निसमप्रभाः । १२९७५

स्कन्धवन्तः सुशाखाश्च बहुतालसमुच्छ्रयाः । अर्जुनाशोकवर्णाश्च भान्ति वकुलकद्रुमाः ।

वरुणा वत्सनाभाश्च पनसाः सह चन्दनैः । नीपाः सुमनसश्चैव नीलाशोकाश्च तिन्दुकाः ।

प्राचीनामलका लोध्रा मल्लिका भद्रदारवः । आम्रातकास्तथा जम्बू लकुचाः शैलवालुकाः ।

सर्जरसाः कुन्दुरवः पुन्नागाः कुटजास्तथा । रक्ताः कुरबकाश्चैव नीपाश्चागुरुभिः सह ।

कदम्बाश्चैव भव्याश्च दाडिमा बीजपूरकाः । काकोलिकाः कुकुभाश्च बिल्वाश्चैव पर्णिकाः । १२९८०

खर्जूरा नारिकेलाश्च चर्मवृक्षा हरीतकी । मधूकाः सप्तपर्णाश्च बिल्वाः पारावतास्तथा ।

पनसाश्च तमालाश्च नानागुल्मलतावृताः । लताश्च विविधाकाराः पत्रपुष्पफलोपगाः ।

एते चान्ये च बहवस्तत्र काननजा द्रुमाः । नानापुष्पफलोपेता व्यराजन्त समन्ततः ।

चकोराः शतपत्राश्च मत्तकोकिलसारिकाः । पुष्पितान् फलितांश्चैव संपतन्ति महाद्रुमान् ।

रक्तपीतारुणास्तत्र पादपाग्रगताः शिवाः । परस्परमवेक्षन्त प्रहृष्टा जीवजीवकाः । १२९८५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्वणि नारसिंहे हिरण्यकशिपुसभावर्णने एकविंशदधिकद्विशततमोऽध्यायः॥२

॥ वैशम्पायन उवाच ॥ तस्यां सभायां दैत्येन्द्रो हिरण्यकशिपुः प्रभुः । आसीन आसने रम्ये नल्वमात्रे प्रमाणतः ।

दिवाकरनिभे दीप्ते दिव्यास्तरणसंवृते । रराज सुचिरं राजन् ज्वलत्कालानलोपमः ।

तस्य दैत्यपतेर्मन्दं विरजस्कः समन्ततः । दिव्यगन्धवहस्तत्र मारुतः सुसुखो ववौ ।

तत्र देवाः सगन्धर्वा गन्धैरप्सरसां वृताः । दिव्यतालेन दिव्यानि जगुर्गीतानि गायनाः ।

विश्वाची सहजन्या च प्रम्लोचेति च विश्रुता । दिव्या च सौरभेयी च समीची पुञ्जिकस्थला । १२९९०

मिश्रकेशी च रम्भा च चित्रलेखा शुचिस्मिता । चारुनेत्रा घृताची च मेनका चोर्वशी तथा ।

एताः सहस्रशश्चान्या नृत्यगीतविशारदाः । उपातिष्ठन्त राजानं हिरण्यकशिपुं तदा ।

हिरण्यकशिपुस्तत्र विचित्राभरणाम्बरः । श्रीमांश्चाङ्गदः शूरवली अजितसुप्रभः ।

तत्रासीनं महाबाहुं हिरण्यकशिपुं प्रभुं। उपासन्ति दितेः पुत्राः सर्व्वे लब्धवराः पुरा।

बलिर्व्वैरोचनिस्तत्र नरकः पृथिवीसुतः। प्रह्लादो विप्रचित्तिश्च गविष्ठश्च महासुरः। ११९९५

सुरहन्ता दुःखहन्ता सुनामा सुमतिस्तथा। घटोदरो महापार्श्वः क्रथनः पिठरस्तथा।

विश्वरूपः सुरूपश्च विरूपश्च महाबलः। दशग्रीवश्च वाली च मेघवासा महाबलः।

घटाभो विकटाभश्च संह्रादश्चेन्द्रतापनः। दैत्यदानवसंघाश्च सर्व्वे ज्वलितकुण्डलाः।

स्रग्विणो वाग्मिनः सर्व्वे सर्व्वे चरितव्रताः। सर्व्वे लब्धवराः शूराः सर्व्वे विगतमृत्यवः।

एते चान्ये च बहवो हिरण्यकशिपुं प्रभुं। उपासन्त महात्मानं सर्व्वे दिव्यपरिच्छदाः। १२०००

विमानैर्व्विविधाकारैर्भ्राजमानैरिवाग्निभिः। स्रग्विणो भूषिताः सर्व्वे गमनागमने रताः।

विचित्राभरणोपेता विचित्रवसनाम्बराः। विचित्राङ्गदधरा विचित्रध्वजवाहनाः।

महेन्द्रचापसदृशैर्व्विचित्रैरङ्गदैर्व्वरैः। भूषिताङ्गा दितेः पुत्रास्तमुपासन्त निर्भयाः।

तस्यां सभायां दिव्यायामसुराः पर्व्वतोपमाः। हिरण्यमुकुटाः सर्व्वे दिवाकरकरप्रभाः।

कनकमणिविचित्रवेदिकायामुपचितनिर्मलवज्रवीथिकायां। स तु मृगपतिरोचितः सभायां सुरुचिरदन्तगवाक्ष
संवृतायां। १२००५

कनकविमलहारभूषिताङ्गं दितितनयं मृगाधिपो ददर्श। दिवसकरकरप्रभं ज्वलन्तं दितिजसहस्रगणैर्निषेव्यमाणं।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे द्वाविंशदधिकद्विशततमोऽध्यायः ॥ २२२ ॥

॥ वैशम्पायन उवाच ॥ ततो दृष्ट्वा महाबाहुं कालचक्रमिवागतं। नारसिंहवपुश्छन्नं भस्मच्छन्नमिवानलं।

विकुञ्चितसटान्तस्य नरसिंहस्य भारत। रूपौदार्य्यं प्रभो तव ससत्त्वं प्रविवेशितं।

अहो रूपमिदं चित्रं शङ्खकुन्देन्दुसन्निभं। अब्रुवन् दानवाः सर्व्वे हिरण्यकशिपुश्च सः।

एवं हि ब्रुवतां तेषां सिंहरूपां महात्मनां। नरसिंहेन चक्षुर्भ्यां चोदिताः कालधर्म्मणा। १२०१०

हिरण्यकशिपोः पुत्रः प्रह्लादो नाम वीर्य्यवान्। दिव्येन चक्षुषा सिंहमपश्यद्देवमागतं।

तं दृष्ट्वा रुक्मशैलाभमपूर्व्वां तनुमाश्रितं। विस्मिता दानवाः सर्व्वे हिरण्यकशिपुश्च सः।

॥ प्रह्लाद उवाच ॥ महाराज महाबाहो दैत्यानामादिसम्भव। न श्रुतं नैव नो दृष्टं नारसिंहमिदं वपुः।

अव्यक्तप्रभवं दिव्यं किमिदं रूपमद्भुतं। दैत्यान्तकरणं घोरं शंसतीव मनांसि नः।

अस्य देवाः शरीरस्थाः सागराः सरितस्तथा। हिमवान् पारियात्रश्च ये चान्ये कुलपर्व्वताः। १२०१५

चन्द्रमाः सह नक्षत्रैरादित्यो रश्मिभिः सह। धनदो वरुणश्चैव यमः शक्रः शचीपतिः।

मरुतो देवगन्धर्व्वा ऋषयश्च तपोधनाः। नागा यक्षाः पिशाचाश्च राक्षसा भीमविक्रमाः।

ब्रह्मा देवः पशुपतिर्ललाटस्थो विभाति वै। स्थावराणि च भूतानि जङ्गमानि तथैव च।

भवांश्च सहितोऽस्माभिः सर्व्वैर्दैत्यगणैर्वृतः। विमानशतसंकीर्णा तथैवाभ्यन्तरा सभा।

सर्व्वं त्रिभुवनं राजन् लोकधर्म्माश्च शाश्वताः। दृश्यन्ते नरसिंहेऽस्मिन् यथेन्दौ विमले जगत्। १२०२०

प्रजापतिश्चात्र मनुर्महात्मा ग्रहाश्च योगाश्च मही नभश्च। उत्पातकालश्च धृतिः स्मृतिश्च रजश्च सत्त्वञ्च तपो दमश्च।

सनत्कुमारश्च महानुभावो विश्वे च देवा ऋषयश्च सर्व्वे । क्रोधश्च कामश्च तथैव हर्षो धर्म्मश्च मोहः पितरश्च सर्व्वे ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे प्रह्लादवाक्ये एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

॥ वैशम्पायन उवाच ॥ प्रह्लादस्य वचः श्रुत्वा हिरण्यकशिपुस्ततः । उवाच दानवान् सर्व्वान् सगणान्सगणाधिपः ।
मृगेन्द्रो गृह्यतां शीघ्रमपूर्व्वां तनुमास्थितः । यदि वा संशयः कश्चिद्वध्यतां वनगोचरः ।
तच्छ्रुत्वा दानवाः सर्व्वे मृगेन्द्रं भीमविक्रमं । परिक्षिपन्तो मुदितास्त्रासयामासुरोजसा । ११०२५
सिंहनादं विमुच्याथ नरसिंहो महाबलः । बभञ्ज तां सभां दिव्यां व्यादितास्य इवान्तकः ।
सभायां भज्यमानायां हिरण्यकशिपुः स्वयं । चिक्षेपास्त्राणि घोराणि सिंहायातुलविक्रमः ।
सर्व्वास्त्राणामथ श्रेष्ठं दण्डमस्त्रं सुभैरवं । कालचक्रं तथाऽत्युग्रं विष्णुचक्रं तथाऽपरं ।
धर्म्मचक्रं महाचक्रमजितं नाम नामतः । चक्रमैन्द्रं तथा घोरमृषिचक्रं तथैव च ।
पैतामहं महच्चक्रं तथा त्रैलोक्यसंवृतं । विचित्रामशनिञ्चैव शुष्कार्द्रं चाशनिद्वयं । ११०३०
रौद्रं तदुग्रं शूलञ्च कङ्कालं मुषलं तथा । अस्त्रं ब्रह्मशिरश्चैव ब्राह्ममस्त्रं तथैव च ।
ऐषीकमस्त्रमैन्द्रञ्च आग्नेयं शैशिरन्तथा । वायव्यं मथनं नाम कापालमथ किङ्करं ।
तथाऽप्रतिहतां शक्तिं क्रौञ्चमस्त्रं तथैव च । अस्त्रं हयशिरो नाम सौम्यास्त्रं शिशिरप्रभं ।
पैशाचमस्त्रमजितं सर्पमस्त्रं तथाऽद्भुतं । मोहनं शोषणञ्चैव सन्तापनविलापनं ।
जृम्भणं पातनञ्चैव त्वाष्ट्रञ्चापि सुदारुणं । कालमुद्गरमक्षोभ्यं क्षोभणञ्च महाप्रभं । ११०३५
संवर्त्तं मोहनञ्चैव तथा मायाधरं परं । गान्धर्व्वमस्त्रं दयितमसिरत्नञ्च नन्दकं ।
प्रस्वापनं प्रमथनं वारुणञ्चास्त्रमुत्तमं । अस्त्रं पाशुपतञ्चैव यस्याप्रतिहता गतिः ।
एतान्यस्त्राणि सर्व्वाणि हिरण्यकशिपुस्तदा । चिक्षेप नरसिंहस्य दीप्तस्याग्नेरिवाहुतिः ।
अस्त्रैः प्रज्वलितैः सिंहमावृणोदसुराधिपः । विवस्वान् घर्म्मसमये हिमवन्तमिवांशुभिः ।
स ह्यमर्षानिलोद्धूतो दैत्यानां सैन्यसागरः । क्षणेनाप्लावयत् सिंहं मैनाकमिव सागरः । ११०४०
प्रासैः पाशैश्च खड्गैश्च गदाभिर्मुषलैस्तथा । वज्रैरशनिभिश्चैव शिलाभिश्च महाद्रुमैः ।
मुद्गरैः कूटपाशैश्च शूलोलूखलपर्व्वतैः । शतघ्नीभिश्च दीप्ताभिर्दण्डैरपि सुदारुणैः ।
परिवार्य्य समन्तात्तु निघ्नन्तस्ते हरिं तदा । स्वल्पमप्यस्य न तु समूर्च्छितस्य महात्मनः ।

ते दानवाः पाशगृहीतहस्ता महेन्द्रवज्राशनितुल्यवेगाः । समन्ततोऽभ्युद्यतबाहुदण्डाः स्थितास्त्रिशीर्षा इव नागपोताः ।
सुवर्णमालाकुलभूषिताङ्गाः पीनांशुका भूषितभीमभासः । मुक्तावलीदामविभूषिताङ्गा हंसा इवाभान्ति विशालपक्षाः । ११०४५
तेषान्तु वायुप्रतिमौजसां वै केयूरमालावलयोत्कटानां । तान्युत्तमाङ्गान्यभितो विभान्ति प्रभातसूर्य्यांशुसमप्रभाणि ।
क्षिप्तैः समन्ताज्ज्वलितानलप्रभैर्महास्त्रपूगैः स समावृतो बभौ । गिरिर्यथा सन्ततवर्षिभिर्घनैः कृतान्धकारोऽन्तनिकन्दरद्रुमः ।
तैर्हन्यमानोऽपि महास्त्रजालैर्महाबलैर्दैत्यगणैः समेतैः । नाकम्पताजौ भगवान् प्रतापवान् स्थितः प्रकृत्या हिमवानिवाचलः ।
सन्त्रासितास्ते नरसिंहरूपिणा दितेः सुताः पावकतुल्यवर्चसः । भयाद्विचेलुः पवनोद्धुता यथा महोर्म्मयः सागरवारिसम्भवाः ।

शतैर्बहुभिः युगान्ताग्निवर्णा युगान्तकालानलितज्वलन् शरीरान् । दृष्ट्वा तदा ते तु मृगेन्द्रमीशं महासुराः क्रोधविदीपिताक्षाः । ११७५०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

॥ वैशम्पायन उवाच ॥ खराः शशमुखाश्चैव मकराशीविषाननाः । ईहामृगमुखाश्चान्ये वराहमुखसंस्थिताः ।

बालसूर्य्यमुखाश्चैव धूमकेतुमुखास्तथा । चन्द्रार्द्धचन्द्रवक्त्राश्च महोज्ज्वलमुखास्तथा ।

हंसकुक्कुटवक्त्राश्च व्यादितास्या भयावहाः । कचाग्रा लेलिहानाश्च काकगृध्रमुखास्तथा ।

विद्युज्जिह्वास्त्रिशीर्षाश्च तथोल्कामुखसंस्थिताः । महाग्राहनिभास्त्वन्ये दानवा बलदर्पिताः ।

कैलासवपुषस्तस्य शरीरे शरवृष्टिभिः । अवध्यस्य मृगेन्द्रस्य न व्यथां जनयन् रणे । ११७५१

एवं भूयोऽपरान् घोरानसृजन् दानवाः शरान् । मृगेन्द्रोरसि संक्रुद्धा निःश्वसन्त इवोरगाः ।

ते दानवशरा घोरा मृगेन्द्राय समीरिताः । विलयं जग्मुराकाशे खद्योता इव पर्व्वते ।

ततश्चक्राणि घोराणि दैत्याः क्रोधसमन्विताः । मृगेन्द्रायासृजंस्तत्र प्रज्वलन्ति समन्ततः ।

तैरासीद्गगनं चक्रैः संपतद्भिः समावृतम् । युगान्ते संप्रकाशद्भिश्चन्द्रादित्यग्रहैरिव ।

तानि सर्व्वाणि चक्राणि मृगेन्द्रेण महात्मना । निगीर्णानि प्रदीप्तानि पावकार्चिःसमानि वै । ११७६०

तानि चक्राणि वदनं प्रविशन्ति विभान्ति वै । मेघोदरदरीं घोरां चन्द्रसूर्य्यग्रहा इव ।

हिरण्यकशिपुर्दैत्यो भूयः प्रास्यदूर्ज्जितां । शक्तिं प्रज्वलितां घोरां धौताग्निशिखप्रभां ।

तामापतन्तीं संप्रेक्ष्य मृगेन्द्रः शक्तिमुत्तमां । हुङ्कारेणैव रौद्रेण बभञ्ज भगवांस्तदा ।

रराज भग्ना सा शक्तिर्मृगेन्द्रेण महीतले । सविस्फुलिङ्गा ज्वलिता महोल्केव नभश्च्युता ।

नाराचपंक्तिः सिंहस्य प्राप्ता रेजे विदूरतः । नीलोत्पलपलाशानां मालेवोज्ज्वलदर्शना । ११७६५

गर्ज्जित्वा स यथाकामं विक्रम्य च यथासुखं । तत्सैन्यमुत्सारितवांस्तृणाग्राणीव मारुतः ।

ततोऽश्मवर्षं दैत्येन्द्रा व्यसृजन्त नभोगताः । नगमात्रैः शिलाखण्डैर्गिरिकूटैर्महाप्रभैः ।

तदश्मवर्षं सिंहस्य गात्रे निपतितं महत् । दिशो दश प्रकीर्णं हि खद्योतप्रकरो यथा ।

तमश्मौघैर्दितिसुतास्तदा सिंहमरिन्दमं । प्राच्छादयन् यथा मेघा धाराभिरिव पर्व्वतं ।

न च तं चालयामासुर्दैत्यौघा देवमास्थितं । भीमवेगाचलश्रेष्ठं समुद्रा इव मन्दरं । ११७७०

ततोऽश्मवर्षे विहते जलवर्षमनन्तरं । धाराभिरक्षमात्राभिः प्रादुरासीत् समन्ततः ।

नभसः प्रच्युता धारास्तिग्मवेगाः सहस्रशः । आवृण्वन् सर्व्वतो व्योम दिशश्चोपदिशस्तथा ।

धाराणाञ्च निपातेन वायोर्विस्फूर्ज्जितेन च । वर्द्धता चैव वर्षेण न प्राज्ञायत किञ्चन ।

धारा दिवि च संयुक्ता वसुधायाञ्च सर्व्वशः । न स्पृशन्ति स्म तं तत्र निपतन्त्योऽनिशं भुवि ।

वाह्यतो ववृषुर्व्वर्षं नोपरिष्टात्तु तोयदाः । मृगेन्द्रप्रतिरूपस्य स्थितस्य युधि मायया । ११७७५

हतेऽश्मवर्षे तुमुले जलवर्षे च शोषिते । असृजन् दानवा मायामग्निवायुसमीरितां ।

नभसः प्रच्युतश्चैव तिग्मवेगः समन्ततः । ज्वालामाली महारौद्रो दीप्ततेजा हुताशनः ।

स सृष्टः पावकस्तेन दैत्येन्द्रेण महात्मना । न शशाक महातेजा दग्धुमप्रतिमौजसं ।

पुरोहितं तदा शुक्रं वचनमेतदब्रवीत्। किमर्थं भगवन्नेते महोत्पाताः समुत्थिताः।
श्रोतुमिच्छामि कार्त्स्न्येन परं कौतूहलं हि मे।
॥ शुक्र उवाच ॥ शृणु राजन्नवहितो वदतो मे महासुर। यदर्थमेते दृश्यन्ते महोत्पाता महाभयाः। १२८१०
यदैते सम्प्रदृश्यन्ते राष्ट्रे राजन्महासुर। देशो वा ह्रियते तस्य राजा वा वधमृच्छति।
तच्च बुद्ध्या समीक्ष्य यथा कर्म करिष्यसि। भवद्वधं हि नचिराद्भविष्यति न संशयः।
एतावदुक्त्वा शुक्रस्तु हिरण्यकशिपुं तदा। साध्वित्युक्त्वा च दैत्येन्द्रं जगाम स्वं निवेशनम्।
तस्मिन् गते तु दैत्येन्द्रो ध्यात्वा सुचिरं तदा। आबभाषे सुदीनात्मा शुक्रवाक्यमनुस्मरन्।
असुराणां विनाशाय सुराणां विजयाय च। दृश्यन्ते विविधोत्पाता घोरा घोरनिदर्शनाः। १२८१५
एते चान्ये च बहवो घोरा उत्पातसंभवाः। दैत्येन्द्रस्य विनाशाय दृश्यन्ते कालनिर्मिताः।
ततो हिरण्यकशिपुर्गदामादाय सत्वरं। अभ्यद्रवत वेगेन धरणीमनुकम्पयन्।
हिरण्यकशिपुर्दैत्यः पदा संस्पृष्टवान्महीं। सन्दष्टौष्ठपुटः क्रोधाद्वराह इव पूर्व्वजः।
मेदिन्यां कम्पमानायां दैत्येन्द्रेण महात्मना। महीधरेभ्यो नागेन्द्रा निपेतुर्भयविह्वलाः।
विषज्वालाकुलैर्वक्त्रैर्विमुञ्चन्तो हुताशनं। चतुःशीर्षाः पञ्चशीर्षाः सप्तशीर्षाश्च पन्नगाः। १२८२०
वासुकिस्तक्षकश्चैव कर्क्कोटकधनञ्जयौ। एलापत्रः कालियश्च महापद्मश्च वीर्य्यवान्।
सहस्रशीर्षधृङ्नागो हेमतालध्वजः प्रभुः। शेषोऽनन्तो महाभागो दुष्प्रकम्प्यः प्रकम्पितः।
दीप्तान्यन्तर्जलस्थानि पृथिवीधरणानि वै। क्रुद्धेन तत्र दैत्येन कम्पितानि समन्ततः।
पातालतलवासिन्यो नागतेजोधराः शिवाः। आपश्च सहसा क्षुब्धा दुष्प्रकम्पतराः शुभाः।
नदी भागीरथी चैव सरयूः कौशिकी तथा। यमुना चैव कावेरी कृष्णवेणा तथैव च। १२८२५
तुङ्गवेणा महाभागा नदी गोदावरी तथा। चर्म्मण्वती च सिन्धुश्च तथा नदनदीपतिः।
मेकलप्रभवश्चैव शोणो मणिनिभोदकः। सुस्रोता नर्म्मदा चैव तथा वेत्रवती नदी।
गोमती गोकुलाकीर्णा तथा पूर्व्वा सरस्वती। मही कालमही चैव तमसा पुष्पवाहिनी।
सीता चेक्षुमती चैव देविका च महानदी। जाम्बूनदो रत्नचितः सर्व्वरत्नोपशोभितः।
सुवर्णकुड्यकश्चैव सुवर्णाकरमण्डितः। महानदश्च लौहित्यः शैलकाननभूषितः। १२८३०
पत्तनं कौशिकाराणां द्रविडा रजताकराः। मगधाश्च महाग्रामा पौण्ड्रा वङ्गास्तथैव च।
सुह्माः मल्ला विदेहाश्च मालवाः काशिकोसलाः। भवनं वैनतेयस्य सुपर्णस्य च कम्पितं।
कैलासशिखराकारं यत्कृतं विश्वकर्म्मणा। रक्ततोयो भीमवेगो लौहित्यो नाम सागरः।
शुभ्रः पाण्डरमेघाभः क्षीरोदश्चैव सागरः। उदयश्चैव शैलेन्द्र उच्छ्रितः शतयोजनं।
सुवर्णवेदिकः श्रीमान्मेघपंक्तिनिषेवितः। भ्राजमानोऽर्कसदृशैर्जातरूपमयैर्द्रुमैः। १२८३५
शालैस्तालैस्तमालैश्च कर्णिकारैः सुपुष्पितैः। अयोमुखश्च विपुलः पर्व्वतो धातुमण्डितः।
तमालवनगन्धश्च पर्व्वतो मलयः शुभः। सुराष्ट्राश्चैव वाह्लीका शूराभीरास्तथैव च।

भोजाः पाण्ड्याश्च अङ्गाश्च कलिङ्गाश्चाथ सिंहलाः । तथैव चोड्राः पौण्ड्राश्च वामचूलाः सकेरलाः ।
क्षोभितास्तेन दैत्येन सदेवाः साप्सरोगणाः । अगस्त्यभवनञ्चैव यदगस्त्यकृतं पुरा ।
सिद्धचारणसंघैश्च सेवितं सुमनोरमं । विचित्रनानाविहगं पुष्पितलताद्रुमं । १२८४०
जातरूपमयैः शृङ्गैरप्सरोगणसेवितं । गिरिः पुष्पितकश्चैव लक्ष्मीवान् प्रियदर्शनः ।
उत्थितः सागरं भित्त्वा विश्रामश्चन्द्रसूर्य्ययोः । रराज सुमहाशृङ्गैर्गगनं विलिखन्निव ।
चन्द्रसूर्य्यांशुसंकाशैः सागराम्बुसमावृतः । विद्युत्वान् पर्व्वतः श्रीमानायतः शतयोजनं ।
विद्युतां यत्र सम्पाता निपात्यन्ते नगोत्तमे । ऋषभः पर्व्वतश्चैव श्रीमान् वृषभसंज्ञितः ।
कुञ्जरः पर्व्वतश्चैव यत्रागस्त्यगृहं शुभं । विशालाक्ष्या दुर्द्धर्षा सर्पाणामालया पुरी । १२८४५
तथा भोगवती चापि दैत्येन्द्रेण प्रकम्पिता । महासेनगिरिश्चैव पारियात्रश्च पर्व्वतः ।
चक्रवांश्च गिरिश्रेष्ठो वाराहश्चैव पर्व्वतः । प्राग्ज्योतिषपुरञ्चैव जातरूपमयं शुभं ।
यस्मिन्वसति दुष्टात्मा नरको नाम दानवः । मेघश्च पर्व्वतश्रेष्ठो मेघगम्भीरनिस्वनः ।
यत्र षष्टिः सहस्राणि पर्व्वतानां विशाम्पते । तरुणादित्यसंकाशो मेरुश्चैव महागिरिः ।
देवावासः शुभः पुण्यो गिरिराजो हिरण्मयः । हेमशृङ्गो महाशैलस्तथा मेघसखो गिरिः । १२८५०
कैलासश्चापि शैलेन्द्रो दानवेन्द्रेण कम्पितः । यक्षराक्षसगन्धर्व्वैर्नित्यं सेवितकन्दरः ।
श्रीमान्मनोहरश्चैव नित्यं पुष्पितपादपः । हेमपुष्करसञ्छन्नं तेन वैखानसं सरः ।
कम्पितं मानसञ्चैव राजहंसनिषेवितं । त्रिशृङ्गः पर्व्वतश्चैव कुमारी च सरिद्वरा ।
तुषारचयसंकाशो मन्दरश्चैव पर्व्वतः । उशीरबीजश्च गिरी रुद्रोपमस्तथाऽद्रिराट् ।
प्रजापतेश्च निलयस्तथा पुष्करपर्व्वतः । देवाहृत्पर्व्वतश्चैव तथा वै वालुको गिरिः । १२८५५
क्रौञ्चः सप्तर्षिशैलश्च धूमवर्णश्च पर्व्वतः । एते चान्ये च गिरयो देशा जनपदास्तथा ।
नद्यश्च सागराः सर्व्वे दानवेन्द्रेण कम्पिताः । कपिलश्च महीपुत्रो व्याघ्राक्षश्चैव कम्पितः ।
खेचराश्च निशापुत्राः पातालतलवासिनः । गणस्तथाऽपरो रौद्रो मेघनामाऽङ्कुशायुधः ।
ऊर्द्धगो भीमवेगश्च सर्व्व एवाभिकम्पिताः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे षट्विंशदधिकद्विशततोऽध्यायः ॥ २२६ ॥

॥ वैशम्पायन उवाच ॥ ततादित्याश्च साध्याश्च विश्वे च वसवस्तथा । रुद्रा देवा महात्मानो मरुतश्च महाबलाः । १२८६०
आगम्य ते मृगेन्द्रस्य सकाशं सूर्य्यवर्च्चसः । ऊचुः संयतमनसो देवा लोकक्षयार्दिताः ।
जहि देव दितेः पुत्रं दानवं लोकनाशनं । दुर्वृत्तमसदाचारं सह सर्व्वैर्महासुरैः ।
त्वं ह्येषामन्तको नान्यो दैत्यानां दैत्यनाशन । तस्मादद्य हितार्थाय लोकानां स्वस्ति वै कुरु ।
त्वं गुरुः सर्व्वलोकानां त्वमिन्द्रस्त्वं पितामहः । ऋते त्वदन्यच्छरणं न भूतं न भविष्यति ।
तच्छ्रुत्वा वचनं देवो देवानामादिसम्भवः । ननाद सुमहानादमतिघोरनिस्वनः । १२८६५
पाटितान्यसुरेन्द्राणां मृगेन्द्रेण महात्मना । सिंहनादेन महता हृदयानि मनांसि च ।

गणः क्रोधवशो नाम कालकेयस्तथाऽपरः । वेगश्च वेगवेगश्च वैद्युतश्चैव वीर्य्यवान् ।
मंह्रादीयो महानादो विदेहश्च तथा गणः । कपिलश्च महीपुत्रो व्याघ्राक्षः क्षितिकम्पनः ।
खेचराश्च निशापुत्राः पातालतलवासिनः । गणस्तथाऽपरो रौद्रो मेघनादोऽश्मायुधः ।
ऊर्द्ध्वगो भीमवेगश्च भीमकर्म्माऽर्कलोचनः । वज्री शूली करालश्च हिरण्यकशिपुस्ततः । ११८७०
जीमूतघनसंकाशो जीमूतघनवेगवान् । जीमूतघननिर्घोषो जीमूतसदृशद्युतिः ।
देवारिर्दितिजो दृप्तो नृसिंहं समुपाद्रवत् । समुत्पत्य ततस्तीक्ष्णैर्मृगेन्द्रेण महानखैः ।
तदोङ्कारसहायेन विदार्य्य निहतो युधि ।
मही च लोकश्च शशी नभश्च ग्रहाश्च सूर्य्यश्च दिशश्च सर्व्वाः । नद्यश्च शैलाश्च महार्णवाश्च गताः प्रसादं दितिपुत्रनाशात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे हिरण्यकशिपुवधे सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२७ ॥
॥ वैशम्पायन उवाच ॥ ततः प्रमुदिता देवा ऋषयश्च तपोधनाः । तुष्टुवुर्विविधैस्तोत्रैरादिदेवं सनातनं । ११८७५
॥ देवा ऊचुः ॥ यत्त्वया विहितं देव नारसिंहमिदं वपुः । एतदेवार्च्चयिष्यन्ति परावरविदो जनाः ।
मृगेन्द्रत्वञ्च लोकेषु सर्व्वसत्त्वेषु वा विभो । गायन्ति च त्वां मुनयो मृगेन्द्र इति नित्यशः ।
त्वत्प्रसादात् स्वकं स्थानं प्रतिपन्नाः स्म वै विभो । इत्युक्तवत्सु देवेषु नृसिंहस्य महात्मनः ।
ब्रह्मा च परमप्रीतो विष्णोः स्तोत्रमुदैरयत् ।
॥ ब्रह्मोवाच ॥ भवानक्षरमव्यक्तमचिन्त्यं गुह्यमुत्तमं । कूटस्थमकृतं कर्त्तृ सनातनमनामयं । ११८८०
सांख्ये योगे च या बुद्धिस्तत्त्वार्थपरिनिष्ठिता । तां भवान् वेद विश्वात्मा पुरुषः शाश्वतो ध्रुवः ।
व्यक्ताव्यक्तश्च भगवांस्त्वत्तः सर्व्वमिदं जगत् । भवानेव वयं देवा भवानात्मा भवान् प्रभुः ।
चतुर्विभक्तमूर्त्तिस्त्वं सर्व्वलोकगुरुर्विभुः । चतुर्युगसहस्रेशः सर्व्वलोकान्तकान्तकः ।
चतुर्व्वेदश्चतुर्होत्रश्चतुरात्मा सनातनः । प्रतिष्ठा सर्व्वलोकानामनन्तबलपौरुषः ।
कपिलप्रभृतीनाञ्च त्वं यतीनां परा गतिः । अनादिमध्यनिधनः सर्व्वात्मा पुरुषोत्तमः । ११८८५
स्रष्टा त्वं त्वञ्च संहर्त्ता त्वमेको लोकभावनः । भवान् ब्रह्मा च रुद्रश्च महेन्द्रो वरुणो यमः ।
भवान् कर्त्ता विकर्त्ता च लोकानां प्रभवोऽव्ययः ।
पराञ्च सिद्धिं परमञ्च देवं परञ्च मन्त्रं परमन्तपश्च । परञ्च धर्म्मं परमं यशश्च त्वामाहुरग्र्यं पुरुषं पुराणं ।
परञ्च सत्यं परमं हविश्च परं पवित्रं परमञ्च मार्गं । परञ्च यज्ञं परमञ्च होत्रं त्वामाहुरग्र्यं पुरुषं पुराणं ।
परं शरीरं परमञ्च धाम परञ्च योगं परमाञ्च वाणीं । परं रहस्यं परमां गतिञ्च त्वामाहुरग्र्यं पुरुषं पुराणं । ११८९०
परं परस्यापि परं पदं यत् परं परस्यापि परञ्च देवं । परं परस्यापि परं प्रभुञ्च त्वामाहुरग्र्यं पुरुषं पुराणं ।
परं परस्यापि परं प्रधानं परं परस्यापि परञ्च तत्त्वं । परं परस्यापि परञ्च धातृ त्वामाहुरग्र्यं पुरुषं पुराणं ।
परं परस्यापि परं यशो यत् परं परस्यापि परं परं यत् । परं परस्यापि परं पवित्रं त्वामाहुरग्र्यं पुरुषं पुराणं ।
परं परस्यापि परं पुराणं परञ्च गुह्यं परमञ्च मन्त्रं । परेण योगेन परं सुगुप्तं त्वामाहुरग्र्यं पुरुषं पुराणं ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु भगवान् सर्व्वलोकपितामहः । स्तुत्वा नारायणं देवं ब्रह्मलोकं गतः प्रभुः । ११८९५

॥ दैत्या ऊचुः ॥ विदितं तव दैत्येन्द्र हिरण्यकशिपोर्यथा। त्रैलोक्यमासीद्वशगं यत् स्थावरजङ्गमं। १२९२५

पितामहस्तु ते हत्वा सुरैः सुरनिसूदन। हृतं तदेव त्रैलोक्यं प्रकर्षेणाभिषेचितं।

तत्त्वं पैतामहं राज्यं प्रत्याहर्त्तुमिहार्हसि। अस्माभिः सहितो नाथ त्रैलोक्यमिदमव्ययं।

प्रत्यानयस्व भद्रं ते राज्यं पैतामहं विभो।

असुरगणसहस्रसंवृतस्त्वं जय दिवि देवपतिं सहानुगं तं। अमितबलपराक्रमोऽपि राज्यमतिबलवान् स्वगुणैः पितामहं त्वं।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने बलेरभिषेके ऊनचत्वारिंशदधिकद्विशततोऽध्यायः॥ २१९ ॥

॥ वैशम्पायन उवाच ॥ निशम्य तेषां वचनं महामतिर्बलिस्तदा प्रीतमना महाबलः। आज्ञापयामास च दैत्यकोटीस्त्रैलोक्य मद्यैव जयेम सर्व्वं। १२९३०

तस्य तद्वचनं श्रुत्वा बलेर्वैरोचनेस्तदा। उद्योगं परमञ्चक्रुर्दानवा युद्धदुर्म्मदाः।

महापद्मो निकुम्भश्च पूर्णकुम्भश्च वीर्य्यवान्। काञ्चनाक्षः कपिस्कन्धो व्याघ्राक्षः क्षितिकम्पनः।

सितकेशोर्द्ध्वकेशश्च वज्रनाभः शिखो जटी। सहस्रबाहुर्विकचो मीनाक्षः प्रियदर्शनः।

एकाक्ष एकपान्मुण्डो विद्युद्वक्त्रश्चतुर्भुजः। गजोदरो गजशिरा गजस्कन्धो गजेक्षणः।

अष्टदंष्ट्रश्चतुर्दंष्ट्रो मेघनादो महास्वनः। करालो ज्वालजिह्वश्च शताक्षः शतलोचनः। १२९३५

सहस्रपात् कृष्णमुखः कृष्णश्चैव महासुरः। रणोत्कटो दानपतिः शैलकम्पो कुलाकुलः।

समुद्रो रभसश्चण्डो धूम्रश्चैव प्रियङ्करः। गोमुखो गोखुरो रौद्रो गोदन्तः खनिको ध्रुवः।

मांसपो मांसभक्षश्च वेगवान् केतुमान् शिविः। पद्मदिग्धशरीरश्च हृतकीर्त्तिर्महाहनुः।

समप्रभो विकुष्माण्डो विरूपाक्षो हराहरौ। श्वेतग्रीवस्त्र्यम्बकश्च चन्द्रहा चन्द्रतापनः।

विक्षरो दीर्घकण्ठश्च मद्यपो मारुताशनः। कालकक्षो महाक्रोधः शरभः शलभः क्रथः। १२९४०

समुद्रमथनो नादी विरूपश्च महाबलः। प्रलम्बो नरको बाणो वृषभः कालकोपनः।

वरिष्ठश्च गविष्ठश्च भूतलोन्मथनो विभुः। सुप्रसादः किरीटी च सुग्रीवश्च महासुरः।

सुबाहुः खड्गबाहुश्च वरुणः कलशोदरः। सोमपो देवयाजी च प्रवरो वीरमर्द्दनः।

शुम्भनिशुम्भप्रमुखाश्च कुम्भनेत्रः शक्तिध्वजः। यथाश्रुतिमया प्रोक्ता मारीचेः कीर्त्तिवर्द्धनाः।

एते चान्ये च बहवो नानाभूषणभूषिताः। रथैर्वैश्रवणस्येव युद्धाय दंशिताः। १२९४५

दिव्यमाल्याम्बरधरा दिव्यस्रगनुलेपनाः। दिव्यैश्च कवचैर्गुप्ता दिव्यैश्चैवाप्लुतैर्ध्वजैः।

दिव्याम्बरधरा दैत्या गर्ज्जमाना रणोत्सुकाः। रुद्रद्भिः सन्नादघोषैश्चालयन्तो वसुन्धरां।

महाबला दिव्यबलाश्चधारिणो भुजङ्गभोगप्रतिमैर्महाभुजैः। सुदुर्ज्जया दैत्यवराः सुरारयो दितिप्रिया लोहितलोहितेक्षणाः।

ते त्वसुरर्क्षवनेन्दुवीर्य्या महेन्द्रवज्राशनितुल्यवेगाः। विद्युद्द्युतः हरिधूम्रकेशा विनर्द्दमानाः शरदीव मेघाः।

सहस्रबाहुर्बाणस्तु बलेः पुत्रो महाबलः। रथातिरथकोट्याढ्यो संनद्धश्च वीर्य्यवान्। १२९५०

सर्व्वे मायाधराः शूराः सर्व्वे दिव्यास्त्रयोधिनः। सर्व्वे बलमदोत्सिक्ताः सर्व्वे लब्धवरास्तथा।

सर्व्वे काञ्चनसङ्काशाः सर्व्वे कौशेयवाससः । किरीटोष्णीषमुकुटा दिव्यभूषणभूषिताः ।

हिरण्यकवचाः सर्व्वे हिरण्यध्वजकेतवः । चन्दनाक्ता वराजक्ता शारदा इव ते घनाः ।

तापनीयैर्व्वरैर्निष्कैः कालाग्निज्वलितप्रभैः । हेमपर्व्वतशृङ्गाभाः पुष्पिता इव किंशुकाः ।

तेषां मध्यगतो बाणः प्रावृषीवोत्थितो घनः । स्थितः शक्तिगदापाणिश्छिन्नाभ्रप्रतिमे रथे । १२८६६

चित्राशेषध्वजयुगे चित्रभक्तिविराजिते । गदापरिघसम्पूर्णे हेमजालविभूषिते ।

शुश्रूयमाणो दितिजैर्वालिखिल्यैरिवांशुमान् । नानाप्रहरणैर्घोरैर्दीप्तदंष्ट्रैरिवोरगैः ।

पञ्च तस्य महावीर्य्या दानवा युद्धदुर्म्मदाः । रक्षन्तूरथमव्यग्रा आदित्याश्च भयानकाः ।

सुबाहुर्म्मेघनादश्च भीमवेगश्च वीर्य्यवान् । तथा गगनमूर्द्धा च वेगवान् केतुमानपि ।

कनकरजतभक्तिचित्रपार्श्वे पतगपतिप्रतिमे रथे स्थितोऽभूत् । जलदनिनदतुल्यनेमिघोषे सुरगणसैन्यवधाय दानवेन्द्रः ।१२८६०

स्वनायुवायाः पुत्रस्तु बलो नाम महासुरः । स्तुतः शतसहस्रेण रथानां भीमवर्च्चसां ।

युक्तस्तुरगसहस्रेण रथमारुह्य वीर्य्यवान् । नीलायसमयं घोरं वायसाङ्कं सुदुर्ज्जयं ।

नीलाम्बरधरः श्रीमान् वैदूर्य्याचलसन्निभः । महता रथवृन्देन प्रययौ दानवस्तदा ।

तच्चैकार्णवसंकाशे सैन्यमध्ये व्यराजत । प्रभातसमये श्रीमान् समुद्रस्य इवांशुमान् ।

स तप्तजाम्बूनदतुल्यवर्च्चसा निशाकराकारतडिद्गुणारुणः । किरीटमुख्येन विभाति शोभिना यथा गिरिः शृङ्गवरेण भास्वता ।१२८६५

षष्टीरथसहस्राणि नमुचेरसुरस्य वै । खरयुक्तानि सर्व्वाणि मेघतुल्यरवाणि च ।

नानाप्रहरणाः सर्व्वे सर्व्वे ते चित्रयोधिनः । महाभ्रघनसंकाशा वेगवन्तो महाबलाः ।

रथो व्याघ्रसहस्रेण युक्तः परमवीर्य्यवान् । नमुचेरसुरेन्द्रस्य सर्व्वरत्नविभूषितः ।

शार्द्दूलचिह्नः शुशुभे तस्य केतुर्हिरण्मयः । रथमध्येऽसुरेशस्य दिनमध्ये रविर्यथा ।

स भीमवेगस्य महाबलस्य प्रगृह्य चापं हिमवानिव स्थितः । नीलाम्बरः काञ्चनपट्टनद्धो दिशागजो मदमुपेतकल्पः । १२८७०

किङ्किणीजालनिर्घोषं तपनीयपरिष्कृतं । सपताकध्वजोपेतं सचन्द्रमिव तोयदं ।

चक्रैश्चतुर्भिः संयुक्तमष्टनल्वायताम्बरं । हेमजालाकुलं दीप्तं कालचक्रमिवोद्यतं ।

नानायुधधरं दिव्यं व्याघ्रचर्म्मपरिच्छदं । ईहामृगगणाकीर्णं चित्रभक्तिविराजितं ।

तूणीरशतसंपूर्णं शक्तितोमरसङ्कुलं । गदामुद्गरसम्बाधमारुरोह मयो रथं ।

युक्तस्तुरगसहस्रेण लम्बकेशरवर्च्चसा । राजतेनेव शैलेन शोभितं सिंहकेतुना । १२८७५

स तदा शुशुभे दैत्यो विश्वकर्म्मा हते बली । रथस्थो स्थितः श्रीमानुदयस्थ इवांशुमान् ।

विमलरजतबिन्दुशोभिताङ्गं मणिकनकोज्ज्वलचारुभक्तिचित्रं । अयुतशतसहस्रमूर्च्छितानां सममनुयाति महाहवे रथानां ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

॥ वैशम्पायन उवाच ॥ पुलोमा तु महादैत्यस्तिमिराकारसन्निभः । आरोहायसं घोरं रथं पररथारुजं ।

पर्व्वतोत्करसंकाशं लोहजालान्तराम्बरं । नेमिघोषेण महता क्षुभ्यन्तमिव सागरं ।

गदापरिघनिस्त्रिंशशक्तितोमरैः सपरश्वधैः । शक्तिमुद्गरसम्पूर्णं सतोयमिव तोयदं । १२८८०

रथमुष्टसहस्रेण संयुक्तं वायुवेगिना । पुलोमारथ्य युद्धाय प्रस्थितो युद्धदुर्मदः ।

षष्टीरथसहस्राणि पुलोमानं महाबलं । अन्वयुः सूर्य्यवर्णानि भ्राजमानानि तेजसा ।

खड्गध्वजेन महता तप्तकाञ्चनवर्च्चसा । शुशुभे रथमध्यस्थः पर्व्वतस्थ इवांशुमान् ।

सुचारुचामीकरपट्टनद्धां महागदां कालनिभां महात्मा । प्रगृह्य बभ्राज स सैन्यमध्ये कार्ष्णायसीं केतुरिवोच्छ्रितोऽग्र्यः ।

हयग्रीवस्तु बलवान् हयग्रीवैर्महासुरैः । वृतः शतसहस्रेण रथानां रथसत्तमः । ११९८५

धराधरनिभाकारं सपत्नानीकमर्द्दनं । स्यन्दनं भीममास्थाय युद्धायाभिमुखः स्थितः ।

श्वेतशैलप्रतीकाशः श्वेतकुण्डलभूषणः । शुशुभे रथमध्यस्थः श्वेतशृङ्ग इवाचलः ।

महता सप्तशीर्षेण राजता नागकेतुना । वैदूर्य्यमणिचित्रेण प्रवालाङ्कुरशोभिना ।

अमितबलपराक्रमद्युतीनां वररथिनामनुजग्मुरूर्ज्जितानां । असुरगणशतानि गच्छमानं त्रिदशगणा इव वासवं प्रयान्तं ।

प्रह्लादस्तु महाप्राज्ञः सर्व्वशास्त्रविशारदः । सर्व्वमायाधरः श्रीमान् यष्टा क्रतुशतैः प्रभुः । ११९९०

समनह्यत तेजस्वी पावकार्चिःसमप्रभः । रथानीकेन महता दुर्द्दिनाम्भोदनादिना ।

शूरेणामितवीर्य्येण हेमकुण्डलधारिणा । वृतो दैत्यसहस्रेण देवैरिव पितामहः ।

स्ववीर्य्यादयणीर्दृप्तो मत्तवारणविक्रमः । सुरसैन्यस्य सर्व्वस्य प्रतिचोभ इव स्थितः ।

स धैर्य्येणादधेस्तुल्यो वपुषाऽग्निरिव ज्वलन् । तेजसा भास्कराकारः चमया पृथिवीसमः ।

तालध्वजेन दीप्तेन रथेनातिविराजता । यान्तं तमनुयान्ति स्म दानवाः शतसंघशः । ११९९५

हिरण्यकवचाः सर्व्वे सर्व्वे रत्नविभूषिताः । दिव्याङ्गरागाभरणाः समरेष्वनिवर्त्तिनः ।

जाम्बूनदविचित्राङ्गा वैदूर्य्यरचिताङ्गदाः । दिव्यस्यन्दनमध्यस्थाः खस्था इव महाग्रहाः ।

आचारवांश्चैव जितेन्द्रियश्च धर्म्मे रतः सत्यपरोऽनसूयुः । स्थितोऽग्नितोयानुदवायुकल्पो रूपो यथा सर्व्वहरः कृतान्तः ।

शम्बरस्तु महामायो दैत्यानां रथयूथपः । आरुरोह रथं दिव्यं सर्व्वयुद्धविशारदः ।

लोहिताचो महाबाहुः प्रतप्तोत्तमकुण्डलः । जीमूतघनसंकाशो दिव्यस्रगनुलेपनः । १२०००

विद्युद्द्योतनिकाशेन मुकुटेनार्कवर्च्चसा । मणिरत्नविचित्रेण वैदूर्य्यान्तरशोभिना ।

तपनीयेन महता कवचेन विराजता । सन्ध्याभ्रेणेव सञ्छन्नः श्रीमानस्तशिलोच्चयः ।

त्रिंशच्छतसहस्राणि दैत्यानां चित्रयोधिनां । बलिनां कालकल्पानामन्वयुः शम्बरं तदा ।

युक्तं हयसहस्रेण शुक्लवर्णेन राजता । क्रौञ्चध्वजेन दीप्तेन रथेनाहवशोभिना ।

व्यासक्तवैदूर्य्यसुवर्णजालं नानाविहङ्गोज्ज्वलभक्तिचित्रं । विद्युत्प्रभं भीमरवं सुवेगं रथं समारुह्य रराज दैत्यः । १२००५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने प्रदुर्भावे दैत्यसन्नहने एकचत्वारिंशदधिकद्विशततोऽध्यायः ॥२४१॥

॥ वैशम्पायन उवाच ॥ अनुह्रादस्तु तत्रैव दैत्यः परपुरञ्जयः । हिरण्यकशिपोः पुत्त्रः प्रययौ युद्धलालसः

चतुश्चक्रेण यानेन त्रिनल्वप्रतिमेन च । युक्तेनाश्वैर्महावीर्य्यैः सिंहवक्त्रैरजिह्मगैः ।

भीमगम्भीरघोषेण नेमिघोषेण वल्गुना । चालयन् वसुधां सर्व्वां सशैलवनकाननां ।

विनर्द्दमाना दैत्यास्तं समन्तात् पर्य्यवारयन् । शतं शतसहस्राणां रथानां हेममालिनां ।

परिघैर्भिन्दिपालैश्च प्रासैः पाशैः परश्वधैः । विविधायुधहस्ताश्च शूलमुद्गरपाणयः ।                    ११०९०

सुवर्णजालनिर्युक्तैर्वर्मभिश्च समलङ्कृताः । रथैश्च कवचैश्चान्ये शोभमाना महासुराः ।

ततो विमानोच्छ्रितशैलरूपे बभौ रथे काञ्चनरत्नचित्रे । दैत्याधिपः सत्त्वबलानुरूपः समास्थितश्चाप्रतिमैकरूपे ।

विरोचनश्च बलवान् वैश्वानरसमद्युतिः । महता रथवंशेन सर्वाङ्गकुशलः शुचिः ।

व्यूहानां विनियोगज्ञो ज्ञानविज्ञानतत्त्ववित् । बलेः पिताऽसुरवरः सुराणामिव वासवः ।

सर्वायुधधरोपेतं किङ्किणीजालभूषितं । युक्तं वाजिसहस्रेण मनसोऽप्यनुगामिना ।                    ११०९५

रथमारुह्य दैत्येन्द्रो बभौ मेरुरिवापरः । किङ्किणीजालपर्यन्तं गजेन्द्रध्वजशोभितं ।

सन्ध्याभ्रसमवर्णाभिः पताकाभिरलङ्कृतं ।

प्रवालजाम्बूनदभक्तिचित्रं व्यालम्बिमुक्ताफलशोभितञ्च । रथं समारुह्य किरीटमाली ययौ च युद्धाभिमुखोऽसुरेन्द्रः ।

विरोचनानुजश्चैव कुजम्भो नाम वीर्यवान् । स्यन्दनैर्नागवाहैश्च विचित्राभरणभूषितैः ।

वृतो मदबलोत्सिक्तैर्देवारिभिररिन्दमः । प्रासपाशमहाशक्तिहेमालङ्कृतकार्मुकैः ।                    १११००

स पर्वतनिभाकारो भिन्नाञ्जनचयप्रभः । महता भ्राजमानेन किरीटेनार्कवर्चसा ।

सर्वरत्नविचित्रेण कवचेन सुसंवृतः । महता दीप्तवपुषा स्वर्गद्वार इवांशुमान् ।

शातकौम्भेन महता तालवृक्षेण केतुना । रराज रथमध्यस्थो मेरुस्थ इव भास्करः ।

रणपटुरतिवीर्यसत्त्वबुद्धिः सुरसमराभिमुखः प्रयाति दृप्तः । असुरगणसमावृतः कुजम्भस्त्रिदशगणैरिव वृत्रहाऽमरेन्द्रः ।

अग्निलोमा च तत्रैव दानवः पर्वतायुधः । दारुणं वपुरास्थाय दारुणो दारुणाननः ।                    १११०५

रौद्रः शकटचक्राक्षो महाकायो महाबलः । कृष्णवासा महादंष्ट्रः किरीटी लोहिताननः ।

वृतो दैत्यसहस्रौघैर्गिरिपादपयोधिभिः । नानारूपधरैर्दीप्तैर्दैत्यैस्त्रिदशशत्रुभिः ।

ते शूलहस्ता गगने चरन्त इतस्ततस्तोयदभीमनादाः । खं छादयन्तस्तपनीयचित्राः यथोत्थिता प्रावृषि कालमेघाः ।

अनायुषायाः पुत्रस्तु वृत्रो नाम महासुरः । देवशत्रुर्महाकायस्ताम्राक्षो निर्गतोदरः ।

दीप्तजिह्वो हरिश्मश्रुरूर्ध्वरोमा महाबलः । नीलाङ्गो लोहितग्रीवः किरीटी लोहिताम्बरः ।                    १११००

आजानुबाहुर्विकृतः श्वेतदंष्ट्रो विभीषणः । महामायाधरो भीमो हेमकेयूरभूषणः ।

महता मणिचित्रेण कवचेन सुसंवृतः । हेममालाधरो रौद्रश्चक्रकेतुरमर्षणः ।

किङ्किणीशतसंघुष्टं तपनीयपरिष्कृतं । युक्तं हयसहस्रेण रक्तध्वजपताकिना ।

रथानीकेन महता युद्धायाभिमुखो ययौ । दिव्यं स्यन्दनमास्थाय दैत्यानां नन्दिवर्द्धनः ।

तपितकनकबिन्दुपिङ्गलाक्षो दितिसुतभोऽसुरसैन्यपुङ्गनेता । विकसितकमलाभचारुवक्त्रः सितदशनः शुशुभे तदा रथस्थः ।                    १११०५

एकचक्रस्तु तत्रैव सूर्यचक्र इवोदितः । कालचक्रोपमो रौद्रश्चक्रायुध इवोद्यतः ।

सर्वायुधमयं दिव्यं रथमास्थाय भास्वरं । वृतो दैत्यगणैर्दृप्तैः कालायसविभायुधैः ।

तथाशीतिसहस्राणि रथिनां चित्रयोधिनां । आयसैः काञ्चनैश्चैव वज्रहा वरवर्मिणः ।

व्यराजन्तान्तरीक्षस्था नीला इव पयोधराः । सर्व्वे कालानलप्रख्या रुधिराक्षा महाबलाः ।
सन्दष्टोष्ठपुटा घोरा महाकाया महासुराः । वधाय सुरसैन्यस्य संनद्धाश्च महाबलाः । ११०४०
सर्व्वे कालानलप्रख्या वीराः समरदुर्ज्जयाः । सागरोदरगम्भीरा नीलवस्त्रा सुरारयः ।
नेदुर्यान्तोऽसुरवरा वेलातीता इवार्णवाः ।

ते भूरिमायाः सुविशुद्धकायाः किरीटिनः काञ्चनभूषिताङ्गाः । ययुस्तदा स्वायुधदीप्तहस्ता नभः सपक्षा इव पर्व्वतेन्द्राः ।

संदिष्टो बलिपुत्रेण वृत्रभ्राता बलोऽसुरः । वधाय सुरसैन्यस्य संनद्धोऽस्मीति वीर्य्यवान् ।
हेममाली महादंष्ट्रः स्रग्वी रुचिरकुण्डलः । रक्तमाल्याम्बरधरश्चण्डः समरदुर्ज्जयः । ११०४५
सुमहाद्रक्तनयनः सकिरीटो धनुर्द्धरः । प्रभिन्न इव मातङ्गः शार्दूलसमविक्रमः ।
महातालनिभञ्चापं महद्रुचिरसायकं । विस्फारयन्महावेगं वज्रनिर्घोषनिस्वनं ।
रथेन खरयुक्तेन ध्वजेन भुजगेन च । शुशुभे स्यन्दनस्थः स सन्ध्यागत इवांशुमान् ।
रथैश्च बहुसाहस्रैर्हेमपट्टविभूषितैः । शुक्लमुद्गरसंकीर्णैस्तोयपूर्णैरिवाम्बुदैः ।
स दैत्येन्द्रोऽभिचक्राम युद्धकाल उपस्थिते । ११०५०

पवनसमगतिर्विशालवक्षा विकसितपङ्कजचारुगर्भगौरः । प्रवररथगतो ययौ स तूर्णं दितिजगणैरभिलक्षितप्रभावः ।

सिंहिकातनयश्चैव राहुर्नाम महासुरः । विकटः पर्व्वताकारः शतशीर्षः शतोदरः ।
पीतमाल्याम्बरधरो जाम्बूनदविभूषितः । स्निग्धवैदूर्य्यसङ्काशः पद्मपत्रनिभेक्षणः ।
सर्व्वकाञ्चनसंयुक्तं मणिजालपरिष्कृतं । पताकाशतसम्बाधं युक्तं परमवाजिभिः ।
आरुरोह रथं तूर्णं दैत्यः परमवीर्य्यवान् । ननाद च महाघोरं कम्पयन् वसुधातलं । ११०५५
मयेन विहितो दिव्यस्तस्य केतुर्हिरण्मयः । मयूरपक्षसङ्काशं कवचञ्चायसं महत् ।
भीमवेगरवैश्चान्यैरथैर्दिव्यैः सुभास्वरैः । नानाप्रहरणाकीर्णैः सेव्यमानो महाबलः ।

अमरगणपतिर्गजेन्द्रगामी गतिरभवत् सुगतिर्महासुराणां । अरिगणमभितो विभुः प्रयातो गिरिवरमस्तमिवांशुमान् सुदीप्तः ।

विप्रचित्तिस्तु तत्रैव दनोर्वंशविवर्द्धनः । कश्यपस्यात्मजः श्रीमान् मन्मथस्तेजसा समः ।
यष्टा क्रतुसहस्राणां वेदविद्यशसाऽन्वितः । स्वयम्भुवा दत्तवरो वरदश्च स्वयं प्रभुः । ११०६०
ईशित्वञ्च वशित्वञ्च महत्त्वञ्च महाद्युतेः । ऐश्वर्य्यगुणसम्पन्नो ब्रह्मेव स्वयमूर्ज्जितः ।
सार्द्धं पुत्रैश्च पौत्रैश्च सनप्तृभिर्महाबलः । सर्व्वे मायाधराः शूराः कृतास्त्रा रणदुर्ज्जयाः ।
सर्व्वे कमलगर्भाभा मेरुशृङ्गोच्छ्रयोच्छ्रिताः । सर्व्वे रजतसङ्काशाः कैलासशिखरोपमाः ।
मयेन निर्म्मितास्तेषां रथाः पररथारुजः । विचरन्तो व्यराजन्त शारदा इव तोयदाः ।
सर्व्वे हंसध्वजाः श्वेताः श्वेतदण्डसमुच्छ्रयाः । श्वेताम्बरधरा दैत्याः श्वेतमाल्यविभूषिताः । ११०६५
श्वेतातपत्राः सर्व्वे वै श्वेतकुण्डलमण्डिताः । मुक्ताहारावृतोरस्का भान्ति नाकेश्वरा इव ।
महापद्मनिभाकाराः शत्रूणां लोमहर्षणाः । रक्तचित्राम्बरधराश्चित्राभरणभूषिताः ।

त्रैलोक्यविजयं नाम रथमास्थाय वीर्य्यवान्। कैलासशिखराकारमहन्नत्वाघतान्तरं।
युक्तं वाजिसहस्रेण सितेन शशिवर्च्चसा। पताकाशतसङ्कुलं नानायुधविकल्पितं।
हंसेन्दुकुन्दप्रतिमं विशालं श्वेतातपत्रं दनुजेश्वरस्य। विभाति तस्योपरि धार्य्यमाणं श्वेताद्रिमूर्द्धीव गतः शशाङ्कः। ११०७०
केशी दानवमुख्यस्तु दीप्तताम्रविलोचनः। नीलमेघचयप्रख्यः कालः परबलच्छिदः।
महापर्वतनिभाकारः शत्रूणां लोमहर्षणः। चित्रमाल्याम्बरधरो रत्नाभरणभूषितः।
शताक्षः शतबाहुश्च हरिश्मश्रुर्महाबलः। शङ्कुकर्णो महानादो वपुष्मान्वीरदर्शनः।
संयुक्तैर्दिव्यमहिषैर्घण्टाकोटिकृतस्वनं। महावारिधराकारमास्थाय रथमुत्तमं।
ध्वजेनोग्रेण महता नीलकेशरवर्च्चसा। नानारागविचित्राभिः पताकाभिर्विभूषितं। ११०७५
द्वापञ्चाशत्सहस्राणि रथानामुग्रतेजसां। ययुस्तस्यासुरेन्द्रस्य प्रयातस्य सुरान् प्रति।
भान्ति भिन्नाञ्जननिभाः प्रयातस्य महात्मनः। दंष्ट्रार्द्धचन्द्रवदनाः सबलाका इवाम्बुदाः।
तत्तस्य वैदूर्य्यसुवर्णचित्रं विद्युत्प्रभं भास्करसन्निकाशं। किरीटमाभात्यसुरेश्वरस्य दावाग्निदीप्तं शिखरं यथाऽद्रेः।
वृषपर्व्वाऽसुरश्चैव श्रीमान् सुरनिसूदनः। आरुरोह रथं दीप्तं मेरुशृङ्गमिवांशुमान्।
प्रतप्तजाम्बूनदचित्रकूवरं महारथं भारसहं महार्हं। स्वलङ्कृतं राजतनेमिमण्डलं गभस्तिमच्चन्द्रतडित्प्रकाशं। ११०८०
केयूरमुक्ताङ्गदनद्धबाहुः सहस्रतारेण च वर्म्मणा सः। सांग्रामिकैराभरणैश्च चित्रैर्मध्याह्नसूर्य्यप्रतिमो बभूव।
महाबलो वद्धतलाङ्गुलित्रो बलोत्कटः किंशुकलोहिताक्षः। विकृष्य चामीकरचारुचित्रं चापं स्थितो वृत्तविशालनेत्रः।
महासुरेन्द्रस्तु महासुरैर्वृतो बलिस्तदा स्यन्दनमारुरोह। वैदूर्य्यहेमोपचितं विशालं विद्युत्प्रभं षोडशनल्वमात्रं।
युक्तं सहस्रेण दितेः सुतानां गजाननानां विकृताकृतीनां। चामीकरोरश्छदभूषितानां विनर्द्दतां प्रावृडिवाम्बुदानां।
महारथं देवरथप्रकाशं सहस्रमायेन मयेन सृष्टं। ईहामृगाक्रीडितभक्तिचित्रं दिव्यं रथं वीररथानुयातं। ११०८५
सकिङ्किणीकां विमलां सुचित्रां हिरण्मयैः पद्मशतैरलङ्कृतां। अभ्याददे वैजयिकीं जयाय स्रजं बलिर्हेमविचित्रपुष्पां।
आमुच्य मालां प्रभया विचित्रां बलिस्तदा भाति भुजैर्विशालैः। रराज तैः सर्व्वसमृद्धियुक्तैर्महार्च्चिषा सूर्य्य इवाम्बरस्थः।
स्रजं तदा बध्यति चारुशुभ्रां सर्व्वासुराणामिव हारभूतां। वैरोचनिः सर्व्वश्रियाऽभिजुष्टो विभ्राजतेऽसौ शरदीव चन्द्रः।
मेरोस्तटैः काञ्चनरागरक्तैरादित्यसंसक्तमिवाभ्रजालं। प्रासाश्च पाशाश्च हिरण्यनद्धाश्चर्म्माणि खड्गाश्च परश्वधाश्च।
धनूंषि चेन्द्रायुधसप्रभाणि दिव्या गदा वज्रमुखाश्च शक्त्यः। दिव्याश्च शूला विशिखाश्च दीप्ता नाराचपूर्णा विविधाश्च तूणाः। ११०९०
धृता रथे दैत्यवृषस्य तस्य चकाशिरे प्रज्वलिता यथोल्काः। तच्चामरापीडधराः सुदंष्ट्राः सुवर्णमुक्तामणिहेमचित्राः।
वीजन्ति बालव्यजनैर्विनीताः स्वलङ्कृताः स्यन्दनवेदिकास्थाः। अयःशिरा वाजिशिरा दुरापः शिविर्मतङ्गो विकचः शताक्षः।
जयो निकुम्भः कुपथश्च दानवो ररक्षुरेते दश दानवाधिपं। पुरःसराश्चैव सहस्रशोऽसुराः पदातयो दानवराजरक्षिणः।
शतघ्निचक्राशनिशक्तिपाणयः संजग्मुरेतेऽनिलतुल्यवेगिनः। घण्टाः समन्तात्तपनीयनद्धाः साडम्बरा झर्झरडिण्डिमाश्च।
महारवा दुन्दुभयश्च नेदुः प्रयाणकाले दितिजेश्वरस्य। तस्योच्छ्रितः काञ्चनवेदिकाढ्यो हिरण्मयो दिव्यमहापताकः। ११०९५

स्तुवन्ति यान्तं विपुलैर्वचोभिर्व्यासाग्रिया येऽर्चितसत्त्ववीर्याः । ऋषिर्वसिष्ठो जमदग्निरत्रिर्बृहस्पतिर्नारदपर्वतौ च ।।१११५

समन्वयुर्देवगणा महेन्द्रं प्रयान्तमादित्यसमप्रभावं । विश्वे च देवा मरुतश्च सर्वे साध्यास्तथादित्यगणाश्च सर्वे ।

ते देवराजस्य पुरन्दरस्य ययाश्च ते मातलिसंप्रणीताः । प्रयान्ति देवेश्वरमुद्वहन्तो नभस्तलं पक्षिरिवाक्षिपन्तः ।

महर्षयश्चैव सुरर्षयश्च राजर्षयश्चाप्ययपुण्यलोकाः । सर्वेऽनुजग्मुः सहसा ज्वलन्तं तेजोऽन्वितं शक्रमभिप्रयान्तं ।

प्रगृह्य शूलानि परश्वधांश्च दीप्तानि चापानि तथाऽसनीश्च । वर्माणि चामुच्य हिरण्मयानि प्रयान्ति सूर्याग्निसमप्रभाणि ।

तथा कुबेरोऽश्वसहस्रयुक्तं श्रेष्ठं रथं सर्वसहं महार्हं । दिव्यं समारुह्य रणाय यातो धनेश्वरो दीप्तगदाग्रहस्तः । ११२०

निशाचराः पावकधूम्रकाया रक्षोरूपा यक्षगणास्तथैव । विशालनानायुधदीप्तहस्ता धाम्नपतो वैश्रवणस्य राज्ञः ।

ते लोहिताक्षाः परिपार्श्वे देवं व्रजन्ति भिन्नाञ्जनचूर्णवर्णाः । यथोत्तमा यक्षपतिं धनेशं रक्षन्ति वै प्रासगदासिहस्ताः ।

पुण्यः प्रभुः प्राणपतिर्यतात्मा वैवस्वतो धर्मभृतां वरिष्ठः । तडिद्गुणाभं शतवाजियुक्तं रथं समारोहत सूर्यकल्पं ।

तं लोकपालं पितरोऽनुजग्मुर्निर्निमकाया ज्वलितास्तपोभिः । सर्वे च भूता भुजगप्रधाना नानायुधव्यग्रकराः सुभीमाः ।

दण्डं महास्त्रं प्रतिगृह्य देवो लोकाङ्कुशं विग्रहनिश्चितार्थं । हिरण्मयानां कमलोत्पलानां मालां मनोज्ञामवसज्य कण्ठे ।१११२५

स्थितोऽग्निमेदामिषलोहिताक्षः सर्वासुराणां निधनं विकाङ्क्षन् । तेजोमयं मुद्गरमुग्ररूपं विकर्षमाणोऽरुणधूम्रनेत्रः ।

समन्वितो व्याधिगणैरनेकैर्ययौ हरिश्मश्रुरुदारसत्त्वः । महासुराणां निधनाय बुद्धिं चक्रे तथा व्याधिपतिः कृतान्तः ।

ततस्त्रिशीर्षैर्भुजगैर्दशद्भिर्युक्तं रथं हेमचितं महात्मा । आस्थाय कुन्देन्दुनिभं जलेशो ययौ रणायासुरदर्पहन्ता ।

वैदूर्यमुक्तामणिभूषिताङ्गस्तेजोमयः पाशगृहीतहस्तः । महासुराणां निधनाय देवः प्रयाति रूप्याङ्गदनद्धबाहुः ।

अन्वीयमानो जलदेवताभिर्निषेव्यमाणो जलजैश्च सत्त्वैः । संस्तूयमानश्च महर्षिवृन्दैः संपूज्यमानश्च महाभुजङ्गैः । १११३०

कैलासशृङ्गप्रतिमोऽप्रमेयः समुद्रनाथोऽमृतपो महात्मा । महोरगैः खेचरनैश्च गुप्तो ययौ रथेनार्कसमप्रभेण ।

युद्धाय तं यान्तमदीनसत्त्वं नभस्तले चन्द्रमिवातिकान्तं । पश्यन्ति भूतानि महानुभावं संहृष्टरोमाणि कृताञ्जलीनि ।

धाताऽर्यमांऽशोऽथ भगो विवस्वान् पर्जन्यमित्रौ च शशी च देवः । त्वष्टा तथैवोर्जितविश्वकर्मा पूषा च वातादिव देवराजः ।

सोरस्छदैः सध्वजकिङ्किणीकैर्वैदूर्यनिष्काञ्चितहेमकण्ठैः । रथोत्तमैः शक्रसमप्रकाशैर्युक्ताश्च यानारुरुहुः सुरास्ते ।

दिवाकराकारनिभानि केचिद्धुताशनार्चिःप्रतिमानि केचित् । निशाकरांशुप्रतिमानि केचित्तडिद्गुणोद्योतनिभा केचित् । १११३५

नीलाम्बुमेघप्रतिमानि केचित्काष्ठायसाकारनिभानि केचित् । वर्माणि दृश्यानि महाप्रभाणि सद्यः कृतान्युत्तमभानुमन्ति ।

आमुच्य मालाश्च सुवर्णपद्माः प्रयान्ति तोयानिलतुल्यवेगाः । द्वावश्विनौ चापि महानुभावौ रूपोत्तमौ धर्मभृतां वरिष्ठौ ।

रथं समारुह्य सुवर्णचित्रं रणं गतौ काञ्चनगौरवर्णौ । मनोः सुता वै वसवश्च सर्वे बलोत्कटा दैत्यवधाय देवाः ।

रथांश्च नागांश्च महाप्रमाणानास्थाय जग्मुः सुगिताभिहस्ताः । रुद्राश्च सर्वेऽरुणधूम्रकायाः श्वेतैर्वृषैर्गोपतिभिर्दृढाङ्गैः ।

महौजसः सत्त्वगुणोपपन्ना दीप्तास्त्वतेजोभिरभिज्वलन्तः । नानायुधव्यग्रकराः सुरास्ते लोकान् समस्तानिव निर्दहन्तः। १११४०

ययुः ससैन्यास्तपनीयकण्ठाः सविद्युतस्तोयधरा यथैव । विश्वे च देवास्तपसा ज्वलन्तो वीर्योत्तमाः सूर्यमरीचिवर्णाः ।

ययुः ससैन्या युधि दुर्निवार्या बलोत्कटाः पुष्करमालिनश्च । रथैः सुयुक्तैस्तपनीयवर्णैर्वैदूर्यमुक्तामणिदामचित्रैः ।

नानायुधाकारसमाकुलास्ते पारिप्लवैश्चैव वितातपत्रैः। तेजोमयैः काञ्चनजालचित्रैः सुनिर्म्मलैः पावकसन्निभैस्ते।
उरश्छदैः सध्वजकिङ्किणीकैर्हयैश्च वाधाः समवेगवद्भिः। दिव्यागजेन्द्रैश्च महाबलैस्ते शैलाग्रकूटप्रतिमैर्महद्भिः।
प्रजग्मुरुग्रायुधदीप्तहस्तास्तुरङ्गमास्ते ज्वलिता इवोल्काः। साध्याश्च देवाः सुमहाप्रभावाः स्वाधीनपक्षाः प्रतिदीप्तवक्त्राः॥१११५५
ययुः सजाम्बूनदभूषिताङ्गा गन्धर्वमायैर्गगनैर्वरेण्यैः। विद्योतयन्तो विदिशो दिशश्च महाबलास्ते जयतां वरिष्ठाः।
वरिष्ठपुष्टाष्टभुजाः सुदृप्ता वैश्वानरार्कप्रतिमप्रभावाः। ते यज्ञविद्भिश्च नमस्यमानाः संपूज्यमानाश्च सुरैः सयक्षैः।
गन्धर्व्वसंघैरनुगम्यमाना वधाय तेषामसुराधिपानां। वैदूर्य्यरत्नस्फटिकाग्रचित्रैर्ध्वजैः सुवर्णैश्च परिष्कृतानां।
रूपं बभूवोत्कटभूषणानां दैत्येन्द्रनाशाय विभूषितानां। श्यामप्रभाभिश्च बलोत्कटाभिर्व्वर्णप्रभाभिश्च तमोनुदाभिः।
ध्वजोत्तमाभिः स्वशरीरभाभिर्महाप्रभाभिश्च महोज्ज्वलाभिः। विभान्ति ते देववराः ससाध्याः प्रभातसञ्जातखनर्दितंह नादाः। १११६०

महारथस्थास्तु दिवौकसस्ते महाबलाः सुजवं प्रयान्ति। महास्त्रहस्ता ययुरुग्ररूपा महासुराणां निधनाय देवाः।
तथैव सर्व्वे मरुतोऽतिवीर्य्या बलोत्कटास्ते समरं प्रतीताः। ययुर्महामेघसमानवर्णा बह्वायुधास्तोयदनादनादाः।
महेन्द्रकेतुप्रतिमा महाबला गदां प्रगृह्यासुरसूदनां युधि। रणोत्कटा लोहितचन्दनाक्ताः सुगन्धिमाल्याम्बरभूषिताङ्गाः।
ते युद्धशौण्डाः सुभुजाः सुदीप्ता वीर्य्योत्कटाः क्रोधविलोहिताक्षाः। ययुः सजाम्बूनदपद्ममाला यथेष्टनानायुधकामरूपाः।
खड्गप्रभाश्यामलितांसपीठाः पुरन्दरं वै परिवार्य्य देवाः। वैदूर्य्यचामीकरचारुचित्राण्याबध्य गात्रेषु महाप्रभाणि। १११६५
वर्म्माणि दैत्यास्त्रनिवारणानि प्रयान्ति युद्धाय सपक्षसाहाः। तैरङ्कितैः काञ्चनवेदिकाढ्यैर्न्नरध्वजैर्भास्कररश्मिवर्णैः।
यथौ सुराणां पृतनोग्रतेजाः समुन्नदन्तो युधि सिंहनादान्। इत्येतदुग्रं त्रिदशेश्वरस्य सैन्यं तदासीत् सुमहाप्रभावं।
युद्धं प्रयातस्य जयावहस्य वधाय तेषामसुराधिपानां।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवसन्नहने त्रिचत्वारिंशदधिकद्विशततोऽध्यायः॥ २४३ ॥

॥ वैशम्पायन उवाच ॥ ततः प्रवृत्तोऽसुरदेवविग्रहस्तदाऽद्भुतो वै त्रिदशासुराकुलः। वेलामतिक्रम्य युगान्तकाले महार्णवानामिव सङ्गमो महान्।
नानायुधोद्योतविदीपिताङ्गा महाबला व्यायतकार्मुकास्ते। मदोत्कटा वारणहस्तहस्ताः सुदुर्ज्जयास्तोयदनादनादाः। १११७०
विस्फारयन्तः सहसा धनूंषि चक्राणि चादित्यसमप्रभाणि। समुत्क्षिपन्तो ह्यशनीश्च घोराः खड्गांश्च ते वज्रमुखांश्च शक्तीः।
महागदाः काञ्चनपट्टनद्धास्तथायसान् कार्म्मुकमुद्गरांश्च। शूलानि वृक्षांश्च विसृज्य दीप्तान्नदन्ति शूराः शतशो रणस्थाः।
एतस्मिन्नन्तरे तेषामन्योन्यमभिनिघ्नतां। द्वन्द्वयुद्धान्यवर्त्तन्त देवानां दानवैः सह।
मरुतां पञ्चमो यस्तु वायं सोऽयुध्यतासुरं। महाबलः सुरवरः सावित्र इति यं विदुः।
अनायुषायाः पुत्रस्तु बलो नाम महासुरः। सोऽयुध्यत रणेऽत्युग्रो ध्रुवेण वसुना सह। १११७५
पुलोमा तु महादैत्यो बलिना वायुना सह। ससैन्यः पर्व्वताकारो रणेऽयुध्यत दंशितः।
नमुचिश्चासुरश्रेष्ठो धरेण समयुध्यत। सार्द्धं सर्व्वेण सैन्येन व्यादितास्य इवान्तकः।
विश्वकर्म्मा सुरश्रेष्ठो मयेन समयुध्यत। प्रवरौ शिल्पकर्म्माणौ ख्यातौ देवासुरेश्वरौ।
हयग्रीवश्च दितिजः सह पूष्णा त्वयुध्यत। शूरेणामितवीर्य्येण भास्कराकारतेजसा।

योगेश्वराः षट् च दिवाकराभा वाय्वम्बरैर्भूषितसर्व्वदेहाः । समर्च्चिता वै हृदयं गताश्च नारायणस्यैव नरस्य देवः ।
वक्त्रैश्चतुर्व्वेदधरैश्चतुर्भिः संपूर्णचन्द्रप्रतिमैः सुकान्तैः । सर्व्वा दिशो विविधमिरलञ्चकार क्षीरोदितोऽसौ शरदीव चन्द्रः । १२२१०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

॥ वैशम्पायन उवाच ॥ उभयोः सेनयोराजन् भूयो युद्धमवर्त्तत । यत्राचिन्त्येन तेजोबलेन त्रैलोक्यमिदमव्ययं ।
गोमुखाडम्बराणाञ्च भेरीणां मुरजैः सह । झर्झरीडिण्डिमानाञ्च व्यसृजन्त महास्वनाः ।
प्रवृत्तो युद्धयज्ञस्तु तुमुलो लोमहर्षणः । रणभूमौ महानादः स्वर्गीयः शूरसम्मतः ।
युद्धयज्ञस्य नेताऽभूत् प्रह्लादो नाम दानवः । विरोचनस्तथाऽध्वर्य्युर्युद्धयज्ञप्रवर्त्तकः ।
होता चैवात्र नमुचिर्दैत्यस्तत्रोपकल्पकः । मन्त्राश्च दैत्याः प्रथिता यज्ञकर्म्मणि तत्र वै । १२२१५
अनुयातास्तु पितरमधिका वा पराक्रमैः । यष्टा वै तत्र बाणस्तु सम्यगेवावतिष्ठते ।
ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं सुदुर्जयं । मन्त्रास्तत्राभ्यवर्त्तन्त बाणप्रह्लादयोर्जिताः ।
उद्गाता च मयः श्रीमान् स्थितः शत्रुभयङ्करः । विनदन् दितिजश्रेष्ठो देवानीकान्यवारयत् ।
बलिस्तु बलवान् राजा वैश्वानरसमद्युतिः । सर्व्वैर्गुणैश्च संयुक्तो ब्रह्मत्वमकरोत् प्रभुः ।
रणाग्निर्ज्वलितो घोरो वैरेन्धनसमीरितः । हूयते ह्यसुरैस्तत्र रथवेद्यां सुसंस्कृतः । १२२२०
शङ्खशब्दः सुविपुलो भेरीणाञ्च महास्वनः । उद्धुष्टं तुमुलञ्चैव सामान्यत्र प्रयुज्यते ।
बलश्च बलकश्चैव पुलोमा च महासुरः । प्रशस्तं चमसं कृत्वा सवं सम्यक् प्रचक्रिरे ।
कल्माषदण्डा विमला विपुला रथपङ्क्तयः । यूपाश्च समकल्पन्त युद्धयज्ञे महाफले ।
कर्णिनालीकनाराचवत्सदन्तोपबृंहकाः । तोमराः सोमकलशा विचित्राणि धनूंषि च ।
अस्थीन्यन्त्रकपालानि पुरोडाशाः शिरांसि च । आज्यञ्च रुधिरं रौद्रं तस्मिन् युद्धेऽभिहूयते । १२२२५
इध्माः परिघयस्तत्र प्रस्तारा विपुला गदाः । हयग्रीवोऽसिलोमा च राहुः केशी च दानवः ।
विरोचनश्च जम्भश्च कुजम्भश्च महाबलः । सदस्यास्तत्र तु मखे विप्रचित्तिश्च वीर्य्यवान् ।
द्रवन्तस्तु सुरास्तत्र रथाश्चमसगाः शुभाः । धनुष्कोट्यो धनुर्ज्याश्च स्रुचस्तत्र महामखे ।
प्रतिप्रास्थानिकं कर्म्म वृषपर्व्वाऽकरोत्तदा । बलिस्तु दीक्षितस्तत्र तस्य पत्नी महाचमूः ।
शम्बरस्तत्र शामित्रमकरोद्दितिनन्दनः । अतिरात्रे महाबाहुर्विततं यज्ञकर्म्मणि । १२२३०
दक्षिणा तस्य यज्ञस्य कालनेमिः प्रतापवान् । वैताने कर्म्मणि तते यः ख्यातो हव्यवाडिव ।
त्रिदशानान्तु सैन्यस्य शरीरैर्गतजीवितैः । तस्मिन् यज्ञे तु सवनं वर्द्धते दैत्यनिर्म्मितं ।
देवानां रुधिरं संख्ये पपुरुग्राः दितेः सुताः । नर्द्दमानाः प्रमुदिताः सोमपानं रणाध्वरे ।
यदा बलिर्म्महादैत्यो विजेता समरे सुरान् । तदा त्ववभृथो यज्ञे भविता वै न संशयः ।
महासुरेन्द्रपतयो यज्वानो भूरिदक्षिणाः । वेदवन्तो वृत्तवन्तः शूराः सर्व्वे तनुत्यजः । १२२३५
त्रैलोक्यहरणे सज्जा युद्धयज्ञाय दीक्षिताः । बद्धकृष्णाजिनाः सर्व्वे व्रतिनो मुञ्जधारिणः ।
एकनिश्चयकार्य्याश्च त्रैलोक्यजयकाङ्क्षिणः । सुरदानवसैन्यानां शब्दः समभवन्महान् ।

महातेजा महाबाहुर्महावेगो महारथः । विव्याधातिरथो दैत्यो नवभिर्निशितैः शरैः ।
स तोत्त्रैरिव मातङ्गो वार्य्यमाणः पतत्त्रिभिः । अभ्यधावत संक्रुद्धो नमुचिं वसुसत्तमः ।
तमापतन्तं वेगेन नमुचीरभसाद्रुषा । दैत्यः प्रत्यग्रहीद्देवं मत्तो मत्तमिव द्विपं ।
ततः प्राभ्रापयच्छृङ्गं मेरोर्मत्तमिवाहितं । विक्षोभ्य सहसा सर्वादुद्गार्णवसप्रभं । १२२००
अश्वान्व्यसवर्णांश्च हंसवर्णैः स वाजिभिः । निघ्नयन् समरे दैत्यो वसुं प्राच्छादयच्छरैः ।
समाश्लिष्टौ तथाऽन्योन्यं वसुदानवयो रथौ । दृष्ट्वा प्राकम्पत मुहुस्त्रिदशानां महद्बलं ।
क्रोधसंरम्भरक्ताक्षौ प्रेक्षमाणौ परस्परं । गर्जन्ताविव शार्दूलौ प्रभिन्नाविव वारणौ ।
यमराष्ट्रोपमं रौद्रमासीदायोधनं तयोः । नराश्वरथसम्बाधं गजवारणसंकुलं ।
समाजमिव तं दृष्ट्वा प्रेक्षमाणा महारथाः । आशंसन्तो जयं ताभ्यां योधास्ते गगने स्थिताः । १२२०५
तयोः प्रैक्षन्त समरं सन्निकृष्टं महात्मयोः । सिद्धगन्धर्व्वभुजगा देवदानवयोस्तदा ।
तौ च्छादयन्तावन्योन्यं समरे निशितैः शरैः । शरजालावृतं व्योम चक्रतुश्च महाबलौ ।
तावन्योन्यं जिघांसन्तौ शरैस्तीक्ष्णैर्महारथौ । प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ ।
सुवर्णविकृतान् बाणान् प्रमुञ्चन्तावरिन्दमौ । भास्कराभं तदाकाशमुल्काभिरिव चक्रतुः ।
तयोः शराः प्रकाशन्ते देवदानवयोस्तदा । पंक्तयः शरदि मत्तानां सारसानामिवाम्बरे । १२२१०
छिद्यमानगजानां हि शरीरैर्गतजीवितैः । क्षणेन संवृता भूमिर्मेघैरिव नभस्तलं ।
ततः सुधारं ज्वलितं सूर्य्यमण्डलसन्निभं । धराय वसवे मुक्तं चक्रं नमुचिना रणे ।
पतता तेन चक्रेण धरस्य स्यन्दनोत्तमः । सध्वजः सायुधः साश्वो दग्धोऽर्ककिरणप्रभः ।
स त्यक्त्वा तं रथं देवः प्रदीप्तं चक्रतेजसा । भयात्तस्यासुरेन्द्रस्य गतः खं वसुसत्तमः ।
पराजित्यासुरो देवं नमुचिर्बलगर्व्वितः । प्रयातः स्वेन सैन्येन भूयः सुरचमूं प्रति । १२२१५
अथ त्वष्टा मयश्चैव देवदैत्यौ सुविश्रुतौ । प्रवरौ विश्वकर्म्माणौ मायाशतविशारदौ ।
तयोः प्राणहरस्त्वासीत् संप्रहारो महात्मनोः । अन्योन्यस्पर्द्धिनोस्तत्र चिरात्प्रभृति दीप्तयोः ।
त्वष्टा तु निशितैर्बाणैर्दैत्यं तं बलगर्व्वितं । पराक्रान्तं पराक्रम्य विव्याध बहुभिः शरैः ।
मयस्तु प्रतिविव्याध त्वष्टारं निशितैः शरैः । महावेगैः प्रसन्नाग्रैः शातकुम्भविभूषितैः ।
ननाद दितिजश्रेष्ठं हत्वा त्वष्टा शरैर्भृशं । संक्रुद्धो दैत्यसैन्यस्य विधिन्वन्निव जीवितं । १२२२०
शक्तिं कनकवैदूर्य्यचित्रदण्डां महाप्रभां । देवो [illegible] समरे दैत्येन्द्रे प्रत्यवासृजत् ।
भीमां सर्व्वायसीं त्वष्टा पुरन्दर इवाशनिं । तां वहुभुजनिर्मुक्तामर्कवैश्वानरप्रभां ।
मयश्चिच्छेद तीक्ष्णाग्रैः शीघ्रं सप्तभिराशुगैः । ततः क्षिपन्निव प्राणांस्त्वष्टुः कोपान्महासुरः ।
प्रेषयामास संरब्धः शरान् बर्हिणवाससः । चिच्छेद बाणांस्त्वष्टा तान् ज्वलितैर्नतपर्व्वभिः ।
दैत्यस्य सुमहावेगैः सुवर्णविकृतैः शरैः । तौ वृषाविव नर्द्दन्तौ नखिनौ वाशितान्तरे । १२२२५
शार्दूलाविव चान्योन्यं प्रसक्तावभिजघ्नतुः । अन्योन्यं प्रतिविध्यन्तावन्योन्यस्यान्तरैषिणौ ।

अन्योन्यमभिवीक्षेतां क्रुद्धावाशीविषाविव। महागजाविवासाद्य विषाणाग्रैः परस्परं।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः। ततः सुविपुलां दीप्तां मयो रुक्माङ्गदां गदां।
त्वष्टरि प्राहिणोत् क्रुद्धः सर्व्वप्राणहरां रणे। तथा जवानातिरथस्त्वष्टुरुत्तमवाजिनः।
गदया दानवः क्रुद्धो वज्रेणेन्द्र इवाचलान्। अथ क्रुद्धो महादैत्यः क्षुराभ्यां तस्य संयुगे। ११११०
पुनर्द्वाभ्यां शराभ्यान्तु निशिताभ्यां महारणे। ध्वजं त्वष्टुरथ च्छित्त्वा सूतं प्रैष्य यमक्षयं।
महाकायान्महावेगान् सदश्वान् गदयाऽहनत्। दृष्ट्वा त्वष्टा तु समरे ध्वजं सूतञ्च पातितं।
हताश्वस्तमुत्सृज्य रथं भूमौ व्यवस्थितः। विस्फार्य्य सुमहच्चापं युद्धाय कृतनिश्चयः।
हताश्वन्तं विरथं कृत्वा रिपुमवस्थितः। जयश्रिया सेव्यमानो दीप्यमान इवानलः।
मयः कालान्तकप्रख्यश्चापपाणिरदृश्यत। निर्द्दहन्देवसैन्यानि दावाग्निरिव काननं। ११११५
त्वष्टुः सोऽक्षिपतात्युग्रो नाराचांस्तिग्मतेजसः। चतुर्द्दश शिलाधौतान् सायकान् शिविधाकृतीन्।
ते पपुस्तस्य देवस्य शोणितं रुक्मभूषणाः। आशीविषा इव क्रुद्धा भुजगाः कालचोदिताः।
ते तु श्वितं समासाद्य शोभन्ते स्वासृगुक्षिताः। अर्द्धप्रविष्टाः संरब्धा बिलानीव महोरगाः।
तं प्रत्यविध्यत्त्वष्टा तु जाम्बूनदविभूषितैः। चतुर्द्दशभिरत्युग्रैर्नाराचैरभिदारयन्।
ते तस्य दैत्यस्य भुजं सव्यं निर्भिद्य पत्रिणः। विदार्य्य प्राविशन् भूमिं भुजङ्गा इव वेगिताः। १११२०
ते व्यकाशन्त नाराचाः प्रविशन्तो वसुन्धरां। अस्तं गच्छन्तमादित्यं प्रविशन्त इवांशवः।
मयस्तु त्रिभिरत्युग्रैस्त्वष्टारन्तु पतत्रिभिः। अर्द्दयामास दैत्येन्द्रो ज्वलितैः शोणिताशनैः।
त्वष्टाऽथ मयनिर्मुक्तैः सायकैरर्द्दितो भृशं। अपायाद्रथमुत्सृज्य व्रीडयाऽभिसमन्वितः।
तं तत्र हतसूताश्वं भुजङ्गमिव निर्विषं। त्वष्टारं विरथं कृत्वा मुदितः स तु दानवः।
विस्फारयन् सुरुचिरं चापं रुक्माङ्गदं दृढं। रणे व्यतिष्ठद्दैत्येन्द्रो ज्वलन्निव हुताशनः। १११२५
पुलोमा तु बलश्लाघी दृप्तो दानवसत्तमः। रणे श्वेताश्वयुक्तेन रथेन प्रत्यदृश्यत।
ततो वै सर्व्वभूतानां शरीरान्तरचारिणा। बलिना कालकल्पेन समायुध्यत वायुना।
पुलोमस्तत्र पवनः श्रुत्वा व्यातत्य निस्वनं। नामृष्यत यथा मत्तो गजः प्रतिगजस्वनं।
दैत्यचापच्युतैर्व्बाणैः प्राच्छाद्यन्त दिशो दश। रश्मिजालैरिवार्कस्य विततं साम्बरं जगत्।
स ताम्रनयनः क्रुद्धः श्वसन्निव महोरगः। बभौ दैत्यशरैर्व्वायूरश्मिवानिव भास्करः। १११३०
दैत्यचापभुजोत्सृष्टाः शरा बर्हिणवाससः। रुक्मपुङ्खा व्यकाशन्त हंसाः श्रेणीकृता इव।
चापध्वजपताकाभ्यश्च वाहेशामुखाद्युगात्। प्रपतन्तः स्म दृश्यन्ते दैत्यस्यायतशः शराः।
एवं सुतीक्ष्णान् खचरान्कलभानिव पावके। सुवर्णविकृतांश्चित्रान्मुमोच दितिजः शरान्।
तमन्तकमिव क्रुद्धमापतन्तं स मारुतः। त्यक्त्वा प्राणानतिक्रम्य विव्याध नवभिः शरैः।
तस्य वेगमसंहार्य्यं दृष्ट्वा वायुः सनातनः। उत्तमं जवमास्थाय व्यधमत्सायकव्रजान्। १११३५
ततो विधम्य बलवान् शरजालानि मारुतः। विव्याध दैत्यं विंशत्या विशिखैर्नतपर्व्वभिः।

मरुद्गणानां प्रवरा इव दिव्या महौजसः। वायुं वाध्मिति वेगेन सिंहनादं प्रचक्रिरे।
तस्मिन् समुत्थिते शब्दे तुमुले लोमहर्षणे। अभ्यधावन्त दितिजाः पौलोमाः क्रोधमूर्च्छिताः।
ततः प्रच्छादयामासुः पवनं शरवृष्टिभिः। पर्व्वतं वारिधाराभिः प्रावृषीव बलाहकाः।
ते पीडयन्तः पवनं क्रुद्धाः सप्त महारथाः। प्रजासंहरणे घोराः सोमं सप्तग्रहा इव। १२२६०
ततो दक्षिणमक्षोभ्यं नानारत्नविभूषितं। करं करिकराकारमुद्यम्य युधि मारुतः।
तेषां मूर्द्धसु दैत्यानां पातयामास वीर्य्यवान्। निहता वायुवेगेन तेन सप्त महारथाः।
त्यक्त्वा प्राणान् पुलोमा तु विव्याध नवभिः शरैः। तस्यापि तमभिप्रायं दृष्ट्वा वायुः सनातनः।
अपच्छिन्द्य शरौघांस्तान् ज्वलितान् वै पुलोमतः। तेषां विदार्य्य तेजांसि दानवानां महात्मनां।
शोणितक्लिन्नमुकुटा गैरिकाक्ता इवाद्रयः। ते छिन्नमर्म्मास्थिभुजाः पतन्तो भान्ति दानवाः। १२२६५
मातङ्गयूथपा रुग्णाः पुष्पिता इव पादपाः। तेषां विदारितैर्देहैर्दानवानां महात्मनां।
ततः प्रावर्त्तत नदी रौद्ररूपा भयावहा। प्रवहन्ती रणे रक्तं भीरूणां भयवर्द्धिनी।
देवदैत्यगजाश्वानां रुधिरौघपरिप्लुता। रणभूमिरभूद्रौद्रा तत्र तत्र सहस्रशः।
संवृता गतसत्त्वैश्च यक्षराक्षसखेचरैः। सानुकर्षपताकैश्च पातितैश्च ध्वजै रथैः।
शीर्णकुम्भैस्तथा नागैर्घण्टाभिः सुविभूषितैः। सुवर्णपुङ्खैर्ज्वलितैर्नाराचैस्तिग्मतेजितैः। १२२७०
देवदानवनिर्मुक्तैः सविषैरुरगैरिव। प्रासतोमरभल्लैश्च शक्तिखड्गपरश्वधैः।
सुवर्णविकृतैश्चापैर्गदामुषलपट्टिशैः। कनकाङ्गदकेयूरैर्मुकुटैः कुण्डलैः शुभैः।
तनुत्रैः सतलत्रैश्च हारैर्निष्कैश्च शोभनैः। छत्रैश्च दितिजैर्भिन्नैः प्रशस्तचन्दनचर्च्चितैः।
पातितैरपविद्धैश्च प्रबभौ द्यौरिव ग्रहैः। निपातितध्वजरथो हतवाजिरथद्विपः।
विमर्द्दो देवदैत्यानां सदृशः कर्म्मणा बभौ। अथ दैत्यबलेनेव पौलोमेन महारथः। १२२७५
संवृतः पवनः श्रीमान् गदामुषलपाणिना। ते जघ्नुः शतशश्चैव पवनं दानवोत्तमाः।
तैर्वध्यमानश्च बभौ तोयार्द्रित इव द्विपः। हत्वाऽष्टौ तत्र दैत्यानां शतानि पवनः प्रभुः।
कृत्वा मार्गं महाबाहुः प्रयातः स महारथः। अद्यापि च सुविस्तीर्णः पन्थाः संदृश्यते दिवि।
नाम्ना वायुपथो नाम सिद्धाः पश्यन्ति तं सदा।
॥ वैशम्पायन उवाच ॥ हयग्रीवस्तु दितिजः पूषणमासाद्य वीर्य्यवान्। ननाद सुमहानादं सिंहवत्सुमहाबलः। १२२८०
विस्फार्य्य सुमहाचापं हेमजालविभूषितं। पूषणं दितिजोऽपश्यत् क्रुद्धो घोरेण चक्षुषा।
भुजाभ्यामाददानस्य सन्दधानस्य सायकान्। मुञ्चतः कर्षतो वाऽपि ददृशे तत्र नान्तरं।
अग्निचक्रोपमं दीप्तं मण्डलीकृतकार्म्मुकं। तत्रासीद्दानवेन्द्रस्य सव्यदक्षिणमस्यतः।
रुक्मपुङ्खैस्ततस्तस्य चापमुक्तैः शितैः शरैः। प्राच्छाद्यन्त शिलाधौतैर्दिशः सूर्य्यस्य च प्रभाः।
ततः काञ्चनपुङ्खानां शराणां नतपर्व्वणां। नभश्चराणां नभसि दृश्यन्ते बहवो व्रजाः। १२२८५
गिरिशृङ्गनिभाश्चापात्प्रभवन्तः शरोत्तमाः। श्रेणीकृताः प्रकाशन्ते यान्तः क्रौञ्चा इवाम्बरे।

गार्द्ध्रपत्रान् शिलाधौतान् कार्त्तस्वरविभूषितान् । प्रसन्नाग्रान्महावेगान्मुमोच दितिजः शरान् ।
ततश्चापबलोद्भूताः शातकुम्भविभूषिताः । देहे समवकीर्य्यन्त पूष्णः सुनिशिताः शराः ।
ते व्योम्नि रुक्मविकृताः संप्रकाशन्त सर्व्वशः । खद्योता इव वर्षान्ते खे चरन्तः सहस्रशः ।
शिलाधौताः प्रसन्नाग्राः पूषणं विव्यधुः शराः । दैत्यः प्रच्छादयामास पूषणं शरवृष्टिभिः । १२३९०
पर्व्वतं वारिधाराभिश्छादयन्निव तोयदः । ततस्तु पूष्णो देवस्य बलवीर्य्यपराक्रमं ।
व्यवसायञ्च सत्त्वञ्च ददृशुस्त्रिदशाऽद्भुतं । तां समुद्रादिवोद्भूतां शरवृष्टिं समुत्थितां ।
नाचिन्तयत्तदा पूषा दैत्यञ्चाप्यद्रवद्रुषा । हेमपृष्ठं महानादं पूष्ण आसीन्महद्धनुः ।
विकृष्टं मण्डलीभूतं शक्रायुधमिवापरं । ततः शराः प्रादुरासन् पूरयन्त इवाम्बरं ।
सुवर्णपुङ्खाः पूष्णस्ते प्रभवन्तः शरासनात् । मालेव रुक्मपुङ्खानां वितता व्योम्नि पत्रिणां । १२३९५
प्रादुरासीन्महाघोरा बृहती पूषकार्म्मुकात् । ततो व्योम्नि विमुक्तानि शरजालानि सर्व्वशः ।
आहतानि व्यशीर्य्यन्त शरैः सन्नतपर्व्वभिः । ततः कनकपुङ्खानां शराणां कङ्कवाससां ।
पततां पात्यमानानां खमासीत् संहतं शतैः । पूषाच्छादयद्बाणैर्हयग्रीवं शिलाशितैः ।
नामाङ्कैरर्कसदृशैर्दिव्यैर्हेमपरिष्कृतैः । ततो व्यसृजदुग्राणि शरवर्षाणि दानवः ।
अमर्षी बलवान् क्रुद्धो दिधक्षन्निव पावकः । पूष्णस्त्वाजौ ध्वजञ्चैव पताकां धनुरेव च । १२४००
रश्मीन् योक्त्राणि चाश्वानां हयग्रीवो रणेऽच्छिनत् । अथाश्वान् पुनर्भित्त्वा चतुर्भिः सायकोत्तमैः ।
सारथिं सुमहातेजा रथोपस्थादपातयत् । हतस्तु विरथः पूषा हयग्रीवेण संयुगे ।
समकम्पत भीतोऽसौ सिन्धोरिव महोर्म्मयः । गतः शक्ररथाभ्याशं मुक्तो मृत्युमुखादिव ।
तत्राद्भुतमिदं भूयो युद्धमासीत् सुदारुणं । कृतप्रतिकृतं घोरं शम्बरस्य भगस्य च ।
सप्तकिष्कुपरीणाहं द्वादशारत्निकार्म्मुकं । वासवाशनिनिर्घोषं दृढज्यं भारसाधनं । १२४०५
कर्षन्नथाशनिसदृशान् व्यसृजत् सायकान् बहून् । क्रोधसंरक्तनयनः शम्बरः सर्व्वयोगवित् ।
तेन वित्रास्यमानानि देवसैन्यानि सर्व्वशः । समकम्पन्त भीतानि सिन्धोरिव महोर्म्मयः ।
तमापतन्तं संप्रेक्ष्य विरूपाक्षं विभीषणं । भगः प्रस्फुरमाणोष्ठस्त्वरमाणो न्यवारयत् ।
ततो भगो महेष्वासो दिव्यं विस्फारयन्धनुः । अवाकिरद्दिशः सर्व्वा ज्याविक्षेपेण नादयन् ।
तमभ्ययाद्भगो दैत्यं तूर्णमस्यन्तमन्तिकात् । मातङ्गमिव मातङ्गो वृषं प्रतिवृषो यथा । १२४१०
तौ प्रगृह्य महावेगौ धनुषी भारसाधने । प्रच्छादयेतामन्योन्यं तक्षमाणौ महेषुभिः ।
तयोः सुतुमुलं युद्धमासीद्घोरं महारणे । भगशम्बरयोर्भीममप्रमेयं महात्मनोः ।
अथ पूर्णायतोत्सृष्टैः शरैः सन्नतपर्व्वभिः । व्यदारयेतामन्योन्यं कांस्ये निर्भिद्य वर्म्मणी ।
तौ तु विक्षतसर्व्वाङ्गौ शोणितौघपरिप्लुतौ । संप्रेक्षमाणौ रथिनावुभौ परमदुर्म्मदौ ।
तक्षमाणौ शितैर्बाणैर्न वीक्षितुमशक्नुतां । ततो विव्याध समरे त्वरमाणोऽसुरो भगं । १२४१५
नाराचैः क्रोधताम्राक्षः कालान्तकयमोपमः । गरुत्मानिव चाकाशे पोथयानो महोरगान् ।

नाराचा न्यपतन्देहे तूर्णं शम्बरचोदिताः । अप्राप्तानन्तरीक्षे तान् भगश्चिच्छेद पत्रिभिः ।
ज्वलितान् सुमहावेगान् दिवाकरसमप्रभान् । ततो भगं चतुःषष्ट्या विव्याधासुरसत्तमः ।
सायकानां सुतीक्ष्णानां सुमुखानां सुवेगिनां । तयोस्तु सुचिरं कालं युद्धं सममिवाभवत् ।
शम्बरस्य च मायाभिर्नादृश्यत ततोऽन्तरं । दोर्भ्यां विक्षिपतश्चापं रथं विष्टभ्य तिष्ठतः । १२४२०
श्रूयते धनुषः शब्दो विस्फूर्जितमिवाशनेः । स भगस्य हयान् हत्वा छित्त्वा च ध्वजमाहवे ।
अभ्यवर्षच्छरैर्दैत्यः पर्जन्य इव वृष्टिमान् । न तस्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरं ।
भगादित्यस्य देवस्य शम्बरेणास्त्रयोधिना । दैत्यस्य चाद्भुतं दिव्यमस्त्रेणास्त्रमवारयत् ।
मायायुद्धेन मायावी शम्बरस्तु महाबलः । अवध्यमस्त्रं दैत्यो मायाभिर्लाघवेन च ।
सहस्रनायो द्युतिमान्देवसेनानिसूदनः । शम्बरोऽदृश्यत पुनः सञ्छन्नः शतधा शरैः । १२४२५
पतितोऽदृश्यत पुनर्व्यसुर्भूमौ महाबलः । अथ स्म दृश्यते भूयः शतधा शैलसन्निभः ।
दिग्नागजेन्द्रमारूढो दृश्यते च पुनर्बली । प्रादेशमात्रश्च पुनर्भूत्वा भवति शैलवत् ।
महामेघनिभः श्रीमांस्तिर्य्यगूर्द्ध्वञ्च सोऽभवत् । पुनः कृत्वा विरूपाणि घोराणि विकृतानि वै ।
सर्व्वां भीषयते सेनां देवानां भीमदर्शनः । ते भीताः प्रपलायन्ते सिंहं दृष्ट्वा मृगा इव ।
ततश्चान्यं नवं देहं कृत्वा प्रांशुतरं पुनः । गर्जत्यूर्द्ध्वगतिर्घोरो दिशः शब्देन पूरयन् । १२४३०
नभस्तलगतश्चापि वर्षते वासवो यथा । सम्वर्त्तकाम्बुदप्रख्यः पूरयन् पृथिवीमिमां ।
संवर्त्तकोऽनलश्चैव भूत्वा भीमपराक्रमः । शतावर्त्तः शतशिखो ददाह च पुनः सुरान् ।
मुहूर्त्ताच्च महाशैलः शतवर्ष्मा शतोदरः । अदृश्यत दिवं स्पृशन् कैलास इव पर्व्वतः ।
यान्यादित्याश्च साध्याश्च यानि विश्वे च देवताः । क्षिपन्त्यस्त्राणि दिव्यानि तान्यसौ ग्रसतेऽसुरः ।
युध्यमानस्य समरे सरथः सोऽसुरोत्तमः । गन्धर्व्वनगराकारस्तत्रैवान्तरधीयत । १२४३५
तं भीताः समुदैक्षन्त त्रिदशा भीमविक्रमं । सहस्रमायं समरे शम्बरं चित्रयोधिनं ।
भगोऽपि भयसंत्रस्तो दानवेन्द्रस्य संयुगे । रथं त्यक्त्वा महाभागो महेन्द्रं शरणं गतः ।
पराजित्य तु तं देवं दानवेन्द्रः प्रतापवान् । गतो यत्र महातेजा जातवेदा महाप्रभः ।
स वह्निं वाग्भिरुग्राभिः क्रुद्धो ऽतर्ज्जयतासकृत् । भवान्येष हि ते मृत्युरित्युक्त्वाऽभ्यर्द्दयच्च सः ।
एतस्मिन्नन्तरे चैव ब्राह्मणेन्द्रो महाबलः । जघान सोमः शीतास्त्रो दानवानां चमूं रणे । १२४४०
कैलासशिखराकारो द्युतिमद्भिर्हयैर्वृतः । अवधीद्दानवान्दृप्तो दण्डपाणिरिवान्तकः ।
पोथयन्रथवृन्दानि वाजिवृन्दानि वै प्रभुः । दैत्येषु व्यचरत्सोमान् युगान्ते कालवद्बली ।
स कर्षन्रथवृन्दानि जवेन चन्द्रमाः । ददाह दानवान् सर्व्वान् दावाग्निरिव चोदितः ।
स्यन्दनेभ्यो रथिनो गजेभ्यो गजयोधिनः । सादिनश्चाश्वपृष्ठेभ्यो भूमौ चैव पदातिनः ।
हिमेन व्यधमत् सर्व्वान् वायुर्वृक्षानिवोजसा । चन्द्रमाः सुमहातेजा दानवानां महाचमूं । १२४४५
तदाऽस्त्रमभवत्तस्य प्रदिग्धं शत्रुशोणितैः । पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् ।

युगान्तकोपमः श्रीमान् दैत्येषु व्यचरद्बली । आवार्य्य महतीं सेनां प्राद्रवन्तीं पुनः पुनः ।
चन्द्रं मृत्युमिवायान्तं दृष्ट्वा योधा विविव्यथुः । यतो यतः प्रविशति शिशिरांशुस्तमोनुदः ।
ततस्ततो व्यशीर्य्यन्त दैत्यसैन्यानि सर्व्वशः । व्यदारयत सैन्यानि खबलेनाभिसंवृतः ।
पद्मन्नमरिसैन्यानि व्यादितास्यमिवान्तकं । तं तथा भीमकर्म्माणं प्रदीप्ताख्यं महाहवे ।  १२७३०
दृष्ट्वा समाद्रुमायान्तं दैत्यानां चन्द्रभास्करौ । तावुभावपि चापानि कर्षमाणौ महाबलौ ।
छादयेतां शरैश्चन्द्रं वृष्टिमन्ताविवाम्बुदौ । अथ विस्फार्य्यमाणानां कार्म्मुकाणां सुरासुरैः ।
अभवत्सुमुलः शब्दो दिशः संनादयन्निव । विनदद्भिर्धावमानैर्हेषमाणैश्च वाजिभिः ।
भेरीशङ्खमृदङ्गैश्च वाद्यमानैर्नभस्तले । युयुत्सवस्ते संहृष्टा जयगृद्धा यशस्विनः ।
अन्योन्यमभिगर्ज्जन्तो गोष्ठेष्विव महावृषाः । शिरसां पात्यमानानां समरे निशितैः शरैः ।  १२७३५
अश्मवृष्टिरिवाकाशे अभवत् सेनयोस्तयोः । कुण्डलोष्णीषधारीणि जातरूपस्रजांसि च ।
पतितानि स्म दृश्यन्ते शिरांसि रणमूर्द्धनि । विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्म्मुकैः ।
सहस्ताभरणैश्चान्यैः प्रच्छिन्नैरुधिरोक्षितैः । कवचैराहतैर्गात्रैर्ध्वजैरभिश्चापि भास्वरैः ।
मुखैश्च चन्द्रसङ्काशैस्सत्कुण्डलभूषणैः । गजवाजिमनुष्याणां सर्व्वगात्रैः समन्ततः ।
आसीत्सर्व्वा समाकीर्णा मुहूर्त्तेन वसुन्धरा । चापमेघास्तु विपुलाः शस्त्रविद्युत्प्रकाशिनः ।  १२७४०
वाहनानाञ्च निर्घोषः स्तनयित्नुसमोऽभवत् । स संप्रहारस्तुमुलः कटुकः शोणितोदकः ।
प्रावर्त्तत सुराणाञ्च दानवानाञ्च संयुगे ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

॥ वैशम्पायन उवाच ॥ तस्मिन्महाहवे रौद्रे तुमुले लोमहर्षणे । ववर्षुः शरवर्षाणि संरब्धा देवदानवाः ।
व्यक्रोशन्त गजास्तत्र शरवर्षप्रपीडिताः । अश्वाश्च पर्य्यधावन्त हतारोहा दिशो दश ।
उत्पत्य निपतन्त्यन्ये शरवर्षप्रपीडिताः । देवानां दानवानाञ्च गजाश्वरथिनां तदा ।  १२७४५
समरे तत्र शूराणां प्रवराणां तरस्विनां । धनुर्ज्यातलशब्देन न प्राज्ञायत किञ्चन ।
शरशक्तिगदाभिस्तु खड्गैश्चामिततेजसः । निजघ्नुर्द्दारुतां सेनामन्योन्यस्य परन्तपाः ।
बाहूनामुत्तमाङ्गानां कार्म्मुकाणाञ्च संयुगे । राशयः समदृश्यन्त देवदैत्यसमागमे ।
अश्वानां कुञ्जराणाञ्च रथानाञ्च वरूथिनां । अन्तं स्म नाधिगच्छन्ति निहतानां सुरासुरैः ।
गदाभिरर्गलैः प्रासैर्बाणैः संनतपर्व्वभिः । योधास्तत्राभ्यहन्यन्त हस्त्यश्वाश्चापि तद्वत् ।  १२७५०
प्रावर्त्तत ततो घोरा शोणितौघतरङ्गिणी । नदी मध्येन सैन्यानां केशशैवलशाद्वला ।
हाहाकारमहाशब्दो योधानामभवत्तदा । दानवैर्वध्यमानानां त्रिदशानां महारणे ।
एवं तदभवद्युद्धं देवानामसुरैः सह । विभीषणं महारौद्रं विकृतं भीमदर्शनं ।
विरोचनस्तु तत्रैव विष्वक्सेनं महारणे । जघान रुधिराभाभं साध्यं परमधन्विनं ।
तमायान्तमभिप्रेक्ष्य विष्वक्सेनः शरैस्त्रिभिः । धर्म्मात्मा सुरश्रेष्ठः प्रत्यविध्यत् स्तनान्तरे ।  १२७५५

साध्यस्य बाणाभिहतस्तोत्रार्द्दित इव द्विपः । विरोचनः प्रजज्वाल क्रोधेनाग्निरिवाध्वरे ।
स कार्म्मुकविनिर्मुक्तैर्भिन्नन्दानवसत्तमः । विष्वक्सेनं बिभेदाजौ दीप्तैः सप्तभिराशुगैः ।
सोऽतिविद्धो बलवता दानवेन सुरोत्तमः । मूर्च्छामभिजगामाशु ध्वजमापाश्रयत्तदा ।
ततः स पुनराश्वस्य साध्यो युद्धे मनो दधे । विस्फार्य्य सुमहच्चापं दैत्यमध्ये व्यवस्थितः ।
विरोचनस्तु बलवानभ्ययुध्यत सर्व्वशः । क्षोभयन् सुरसैन्यानि समन्तान्निशितैः शरैः । १२४८०
ततस्तस्यासुरेन्द्रस्य युध्यमानस्य संयुगे । श्रूयते तुमुलः शब्दो जीमूतस्येव गर्ज्जतः ।
स जगर्ज्ज महाघोरो विनिघ्नन्देववाहिनीं । यथा मेघोऽम्बरगतः सविद्युत्स्तनयित्नुमान् ।
दिशो विद्रावयामास शरवर्षेण दानवः । सर्व्वसैन्यानि देवानामुद्यतास्त्रो महाहवे ।
ते प्राद्रवन्त वित्रस्ता रथेभ्यो रथिनस्तदा । सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः ।
श्रुत्वा कार्म्मुकनिर्घोषं विस्फूर्जितमिवाशनेः । सर्व्वसैन्यानि भीतानि व्यवालीयन्त संयुगे । १२४८५
विरोचनभयत्रस्ता रथेभ्यो रथिनस्तदा । पदातीनां चमूः संख्ये यत्र देवः शचीपतिः ।
विष्वक्सेनस्य साध्यस्य सर्व्वतः सुमहाबलः । पादरक्षचक्रापि निजघान चतुर्द्दश ।
अश्ववृन्देषु नागेषु रथानीकेषु वा विभुः । पदातीनाञ्च संघेषु विनिघ्नन् प्रत्यदृश्यत ।
वितत्य श्येनवत् पक्षौ सर्व्वतः स वरूथिनीं । भित्त्वा भित्त्वा महाबाहुः शिरांस्याजावकृन्तत ।
सादिनश्च पदाताश्च हतशेषास्तथा रथाः । विष्वक्सेनेन सहिता विरोचनमभिद्रवन् । १२४९०
तेऽसिचर्म्मगदाशक्तिपरिघप्रासतोमरैः । तमेवानुप्रधावन्तः सिंहनादं विनेदिरे ।
अथ सोऽसिं समुद्यम्य अवमास्थाय दानवः । चकर्त्त रथिनामाजौ शिरांसि च धनूंषि च ।
रथनागाश्ववृन्देषु बलवानरिमर्द्दनः । विरोचनश्चरन् मार्गान् प्रकारानेकविंशतिं ।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतं । सम्पातं समुदीर्णञ्च दर्शयामास दानवः ।
केचिद्धतासिना रुग्णा दानवेन महात्मना । विनेदुर्भिन्नमर्म्माणो निपेतुश्च गतासवः । १२४९५
छिन्नपृष्ठा हतारोहा दानवेन महात्मना । विद्रुताः स्वान्यनीकानि अनुच्छिद्य सवारणाः ।
निपेतुरूर्व्यामाकाशान्निकृत्ता दृढधन्वना । विविधास्तोमराश्चापा महामात्रशिरांसि च ।
प्रतीपमाहरन्नागानश्वांश्च भृशविक्षतान् । चकर्त्त रथिनामाजौ शिरांसि च धनूंषि च ।
आप्लुत्य रथिनः कांश्चित् परामृश्य महाबलः । सूतांश्चिच्छेद खड्गेन ध्वजानपि च दानवः ।
मुहुरुत्पततो दिक्षु धावतश्च यशस्विनः । मार्गांश्च चरतश्चित्रान् व्यस्मयन्त ततोऽसुराः । १२५००
निजघान पदा कांश्चिदाक्षिप्यान्यानपोथयत् । खड्गेनान्यांश्च चिच्छेद नादेनान्यानभीषयत् ।
ऊरुस्तम्भगृहीताश्च प्रपतन्त्यपरे भुवि । अपरे चैनमालोक्य भयात् प्राणानवासृजन् ।
तस्मिंस्तु वर्त्तमाने वै युद्धे महति दारुणे । रथौघवाजिनागानां सुराणाञ्च महाक्षये ।
कुजम्भो दितिजश्रेष्ठो संयममादित्यमाहवे । योधयामास समरे वृषः प्रतिवृषं यथा ।
जघानाचलसंकाशो मत्तवारणविक्रमः । क्षुरार्द्धैर्निशितैस्तीक्ष्णैः शरैरष्टभिराशुगैः । १२५०५

देवसेनासहस्राणि सरथानि महाहवे। तस्य बाणपथं प्राप्य नाभ्यवर्त्तन्त सर्व्वशः।
प्रणेदुः सर्व्वभूतानि बभूवुस्तिमिरा दिशः। देवानामभयश्चात्र प्रत्यदृश्यत दारुणः।
अंशस्तु दानवेन्द्रस्य जघानोत्तमविक्रमः। अनीकं दशसाहस्रं कुञ्जराणां तरस्विनां।
आपतन्तं गजानीकं कुजम्भो वीक्ष्य दानवः। गदापाणिरवारोहद्रथोपस्थादरिन्दमः।
अद्रिसारमयीं गुर्व्वीं प्रगृह्य महतीं गदां। अभ्यद्रवद्गजानीकं व्यादितास्य इवान्तकः। ११५१०
स गजान् गदया निघ्नन् व्यचरत् समरे बली। कुजम्भो दानवश्रेष्ठो दण्डपाणिरिवान्तकः।
विशीर्णदन्तांश्च बहून् भिन्नकुम्भांश्च वारणान्। अकरोद्दानवश्रेष्ठ उद्दिश्योद्दिश्य तान् बली।
विशीर्णदन्ता बहवो भिन्नकुम्भास्तथाऽपरे। कुजम्भेनार्द्दिता नागा व्यद्रवन्त दिशो दश।
कुजम्भस्य च येऽमात्या दानवा घोरदर्शनाः। नाराचैर्विमलैस्तीक्ष्णैरभ्यघ्नन् गजयोधिनः।
क्षुरैः क्षुरप्रभल्लैश्च दात्रैरञ्जलिकैस्तथा। चिच्छेद चोत्तमाङ्गानि कुजम्भो दानवोत्तमः। ११५१५
शिरोभिः प्रपतद्भिश्च गगनं समपूर्य्यत। अश्मवृष्टिरिवाभाति बाहुभिश्च सहाङ्कुशैः।
कृत्तोत्तमाङ्गाः स्कन्धेषु गजानां गजयोधिनः। अदृश्यन्त महाराज ताला विशिरसो यथा।
आपतन्तं महानागमंशस्यासुरसत्तमः। विव्याधैकेषुणा क्रुद्धस्ततः स विमुखोऽभवत्।
विगाह्यैवं गजानीकं कुजम्भो दानवोत्तमः। विनिघ्नन् प्रवरान् सैन्यान् गदया गदिनाम्बरः।
एकप्रहाराभिहतान् कुजम्भेन महागजान्। अपश्यन्त सुराः सर्व्वे पर्व्वतानिव पातितान्। ११५२०
कुजम्भस्य च मार्गेषु विशीर्णास्ते महागजाः। वज्राहता इवेन्द्रेण विशीर्णा इव पर्व्वताः।
अमन्यन्त सुरास्तञ्च मूर्त्तिमन्तमिवान्तकं। गन्धादेव व्यशीर्य्यन्त सिंहस्येवेतरे मृगाः।
स शायसीं गदां बिभ्रद्रुचितां अगशोणितैः। व्यादितास्यो मदन् क्रुद्धो रौद्रं रूपमधारयत्।
यथा हि भगवान् क्रुद्धः प्रजानां संक्षये पुरा। प्रक्रीडमानो गदया रणमध्ये महासुरः।
गोपाल इव दण्डेन कालयत् स महागजान्। क्रुद्धं कालमिवाकाशे दण्डमुद्यम्य दानवं। ११५२५
अपश्यन्त सुराः सर्व्वे कुजम्भं भीमविक्रमं। हतारोहास्तु तत्रान्ये प्रभिन्ना वारणोत्तमाः।
गदया हन्यमानाश्च वार्णेश्च भृशविक्षताः। असहन्तः कुजम्भस्य गदावेगं महाहवे।
तान्यनीकानि मृद्नन्तः प्राद्रवन्त महागजाः। महावात इवाभ्राणि विधम्य गदया गजान्।
अतिष्ठत् समरे दैत्यः कालः संवर्त्तको यथा।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे सप्तचत्वारिंशदधिकद्विशततोऽध्यायः॥२४७॥
॥ वैशम्पायन उवाच ॥ ततः सर्व्वाणि सैन्यानि देवराजस्य शासनात्। अभ्यद्रवन्त दितिजानदतो भैरवान्रवान्। ११५३०
तं बलौघमपर्य्यन्तं देवानां सुदुरासदं। रथनागाश्वकलिलं शङ्खदुन्दुभिनादितं।
आपतन्तं सुदुष्पारं रजसा सर्व्वतो वृतं। दैत्यसागरमक्षोभ्यं समुद्रमिव पर्व्वणि।
तदाश्चर्य्यमपर्य्यन्तमश्रद्धेयमिवाद्भुतं। रथनागाश्वकलिलं समुदीर्णं महाबलं।
आवार्य्य तरसा सर्व्वं कुजम्भो बलिनाम्बरः। अतिष्ठत् समरे दैत्यो गिरिर्मेरुरिवाचलः।

अनीकानि कुजम्भस्तु गदया संन्यवारयत्। अनीकिनी कुजम्भेन वारिताऽभूद्विहायसा। १२५३५
तस्मिंस्तथावर्त्तमाने संप्रहारे सुदारुणे। तेषान्तु संप्रहारे वै वर्त्तमाने महात्मनां।
असिलोमा हरिश्चैव अग्नतुर्व्वै परस्परं। असिलोमा तु बलवान् संक्रुद्धो दानवाधिपः।
देवसैन्यस्य सर्व्वस्य धूमकेतुरिवोत्थितः। तमांस्यर्क इवापोहत् सुरसैन्यानि संयुगे।
सहस्ररश्मिप्रतिमो दानवस्य रथोत्तमः। शरैश्चैव इवावर्षत् देवानीके प्रतापवान्।
शरौघैरंशुभिर्दीप्तैः प्रतपन् घोरदर्शनः। रौद्रः क्रूरो दुराधर्षो दुर्न्निवार्य्यो ध्वजिनीमुखे। १२५४०
युध्यते हरिणा सार्द्धं ग्रसमान इव प्रभुः। उग्रेषुदृढदंष्ट्रो मृद्नमानो महागजान्।
सुराणामुत्तमाङ्गानि प्राच्छिनोत् सुमहाबलः। ग्रसमानः स सैन्यानि शरदंष्ट्रः प्रतापवान्।
असिजिह्वो दुराधर्षश्चापव्यात्ताननोऽसुरः। परश्वधधरः श्रीमान् महाशङ्खापूरितध्वनिः।
अतिष्ठद्दानवव्याघ्रः संयुगे व्याघ्रवद्बली। मौर्व्वीघोषस्तनयित्नुः पृषत्कपृषतो महान्।
धनुर्विद्युद्गुणाटोपो महामेघ इवापरः। शक्तीग्रहवागरो घोरो बाहुग्राहो दुरासदः। १२५४५
कार्म्मुकोर्म्मितरङ्गौघो बाणावर्त्तमहाह्रदः। गदासिमकरो रौद्रो व्याक्लेशः शिरोयाकुतः।
नाराचमीनः सुमहान् गर्ज्जितातकुरघोषवान्। हयान् गजान् पदातींश्च रथांश्च तरसा बहून्।
न्यमज्जयत संग्रामे परवीरान्महारथान्। अग्रावयच्च देवौघान् दारुणो दानवेश्वरः।
प्रामर्द्दत युधि श्रीमान्दैत्यश्रेष्ठो महाबलः। अपश्यंस्त्रिदशाः सर्व्वे युगान्तानलसप्रभं।
सन्नद्धं तत्र युध्यन्तं ज्वलन्तमिव पावकं। मध्यन्दिनगतं सूर्य्यं तपन्तमिव तेजसा। १२५५०
न शेकुः सर्व्वसैन्यानि दानवं प्रसमीक्षितुं। यथा प्रवृद्धो घर्म्मान्ते दहेत्कक्षं हुताशनः।
तथा सुरवरान्दैत्यो दहति स्म स्वतेजसा। देवानां दानवानाञ्च बलं मर्द्दति दारुणं।
विमूढमभवत्सर्व्वमाकुलञ्च समन्ततः। ततः शूरा बलोदग्रा हस्त्यश्वरथधूर्गताः।
आर्य्यां बुद्धिं समास्थाय न त्यजन्ति महाहवं। तदुत्पिञ्जलकं युद्धमभवद्रोमहर्षणं।
देवदानवयोर्घोरं रुधिरस्रावकर्द्दमं। न दिशः संप्रजानन्ति भयपांशुनिपीडिताः। १२५५५
शस्त्रघातांश्च विविधान्दानवानां महारणे। अन्योन्यं मूढचित्तास्ते निघ्नन्तुर्व्याकुलीकृताः।
स्वान् परांश्चाभ्यजानन्त विमूढाः शस्त्रतेजसा। शिरोरुहेषु संगृह्य कश्चित् क्रूरश्च संयुगे।
शूरश्छिनत्ति मूर्द्धानं सन्दष्टौष्ठपुटाननः। बाहुभिर्मुष्टिभिश्चैव वज्रकल्पैः सुदारुणैः।
प्रहरन्ति रणे वीरा न्यस्तशस्त्राः परस्परं। योधप्राणहरे रौद्रे स्वर्गद्वारविघट्टने।
सङ्कुले तुमुले युद्धे वर्त्तमाने भयावहे। हयो हयं गजो नागं वीरो वीरं महाहवे। १२५६०
अभिदुद्राव वेगेन न्यहनच्चैवमन्तिकात्। असुराश्च सुराश्चैव विक्रमाढ्या महारथाः।
उत्सृजन्तो रणे प्राणान्निजघ्नुरितरेतरं। मुक्तकेशा विकवचा विरथाश्छिन्नकार्म्मुकाः।
हस्तैः पादैरयुध्यन्त दानवास्त्रिदशैः सह। हरिस्तु निशितं भल्लं प्रेषयामास संयुगे।
स तस्य धनुषः कोटिं छित्त्वा भूमावपातयत्। पुनश्चापि पृषत्कानां शतानि नतपर्व्वणां।

प्राहिणोत्सहसा तस्य दानवेन्द्रस्य संयुगे । तस्य देहे विमुक्तास्ते मारुतेन समीरिताः । ११५६५
मग्नार्द्धकाया विबभुः पन्नगा इव पर्व्वते । स तैर्निपातितैर्गात्रैः शरञ्चिरखगव्ययं ।
बभौ दैत्यो महाबाहुर्न्नीरद्धान्तुमिवोत्सृजन् । ततोऽसिलोमा संक्रुद्धः प्रगृह्यान्यन्महद्धनुः ।
रुक्मपुङ्खांश्च निशितान् प्रेषयामास सायकान् । तैस्तं मर्म्मसु विव्याध सर्पानलविषोपमैः ।
गात्रं सञ्छादयामास महाभ्रैरिव पर्व्वतं । भूयः सन्धाय च शरं मुमोचान्तकसन्निभं ।
सुपुङ्खं सूर्य्यसङ्काशं बाणमप्रतिमं रणे । तेन विद्धः स बाणेन संयुगे भीमकर्म्मणा । ११५७०
मुमोह सहसा देवो भूमौ च निपपात ह । ततो हाहाकृतं सर्व्वं देवे भूतलमास्थिते ।
जगत्सदेवमाविग्नं यथाऽर्कपतने तथा । परिवारांस्तु समरे जघानास्य महासुरः ।
एकत्रिंशत्सहस्राणि योधानां दानवोत्तमः । जयश्रिया सेव्यमानो दीप्यमान इवानलः ।
प्रगृह्य कार्म्मुकं घोरं गतः शक्ररथं प्रति । तत्रैव तु महायुद्धे वर्त्तेयातामिमावुभौ ।
प्रद्युम्नो सह वृत्रेण बलिना देवतारिणा । बाणवृष्टिमनुप्राप्य समरे त्यक्तजीवितः । ११५७५
आसाद्य सोऽश्विनौ वृत्रः स्थितो गिरिरिवाचलः । ततः शङ्खमुपाध्माय द्विषतां लोमहर्षणं ।
ज्याघोषतलनिर्घोषैः सर्व्वभूतान्यमोहयत् । ततः संहृष्टरोमाणः शङ्खशब्दं विशुश्रुवुः ।
यक्षराक्षसदेवौघास्तस्यार्णवसमस्वनं । गदापरिघनिस्त्रिंशशक्तिशूलपरश्वधाः ।
प्रगृहीता व्यराजन्त यक्षराक्षसबाहुभिः । तैः प्रमुक्तान्महाकायैः शूलशक्तिपरश्वधान् ।
शरैर्वृत्रः प्रचिच्छेद भीमवेगरवैस्तया । सोऽन्तरीक्षचराणाञ्च भूमिष्ठानाञ्च गर्ज्जतां । ११५८०
शरैर्विव्याध गात्राणि देवानां प्रियदर्शनः । वृत्रासुरभुजोत्सृष्टैर्बहुभिर्व्वरवर्म्मणां ।
भिन्नान्येव दृश्यन्ते शरीराणि शिरांसि च । अथ रक्तमहावृष्टिरभ्यवर्षत मेदिनीं ।
गदापरिघभिन्नानां देवानां गात्रसम्भवा । प्रच्छाद्यमानं देवौघैर्वृत्रं भीमपराक्रमं ।
ददृशुः सर्व्वभूतानि सूर्य्यमभ्रगणैरिव । स रश्मिभिरिवादित्यः प्रतपन् सर्व्वदेवताः ।
अविध्यद्बलवान् क्रुद्धः सायकैर्म्मर्म्मभेदिभिः । नदतो विविधान्नादान्नर्द्दितस्यापि सायकैः । ११५८५
न मोहमसुरेन्द्रस्य ददृशुस्त्रिदशा रणे । तेऽसिशक्तिगदाभिश्च परिघप्रासतोमरैः ।
परश्वधैस्त्रिशूलैश्च प्रववर्षुर्म्महारथाः । ततो वृत्रः सुसंक्रुद्धस्तैस्तदाऽभ्यर्द्दितो बली ।
अभ्यवर्षच्छितैर्बाणैस्तान् सर्व्वान् सत्यविक्रमः । ते वै विप्रहता देवा विप्रकीर्णमहायुधाः ।
घोरमार्त्तस्वरं चक्रुर्वृत्रासुरभयार्द्दिताः । उत्सृज्य ते गदाशक्तिशूलासिपरशून् रणे ।
उत्तरां दिशमाजग्मुस्त्रासिता दृढधन्वना । ततः शूलगदापाणिर्व्यूढोरस्को महाभुजः । ११५९०
प्रावल्गत रणे दैत्यस्त्रासयन् सचराचरं । तत्रैकस्तु महाबाहुरग्नी शूलधरः प्रभुः ।
अभ्यधावत दैत्येन्द्रं वृत्रमप्रतिमं रणे । गृहीतचापो वेगेन प्रभिन्न इव वारणः ।
वत्सदन्तैस्त्रिभिः पार्श्वे विव्याधासुरसत्तमं । सोऽतिविद्धो महेष्वासो वृत्रः परमकोपनः ।
गदां जग्राह बलवान् गदायुद्धविशारदः । तां प्रगृह्य गदां भीमामद्रिसारमयीं दृढां ।

अश्विनं सहसागम्य ताडयामास वीर्य्यवान्। दीप्यमानं ततः शूलमश्वी सुविपुलं दृढं। ११५९९
प्राहिणोद्वृत्रदैत्याय समरे लोमहर्षणं। भङ्क्त्वा शूलं गदयैव गदायुद्धविशारदः।
अश्विनं सहसाऽभ्यर्च्छत्क्रुद्धस्त्वानिव पन्नगं। सोऽन्तरीक्षं समुत्पत्य विधूय महतीं गदां।
नासत्योरसि चिक्षेप गिरिशृङ्गोपमां बली। गदयाऽभिहतोऽथाश्वी त्यक्त्वा शूलमनुत्तमं।
प्रययौ सहसा तत्र यत्रायुध्यत वासवः। पराजित्य तु संग्रामे सोऽश्विनं भीमविक्रमं।
जयश्रिया सेव्यमानो वृत्रो युद्धे व्यवस्थितः। ११६००

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः॥२४८॥

॥ वैशम्पायन उवाच ॥ तत्रैव सुमहायुद्धे रथाभिर्द्विजसत्तमः। युध्यते सह दैत्येन एकचक्रेण धीमता।
प्रच्छाद्य रथपन्थानमुत्क्रोशन्तं महारवं। एकचक्रस्य सैन्यन्तु शरवर्षैरवाकिरत्।
महासुरा महावीर्य्या महापट्टिशयोधिनः। शूलानि च भुशुण्डीश्च चिक्षिपुस्ते महारणे।
तच्छूलवर्षं सुमहद्गदाशक्तिसमाकुलं। अश्विवै दितिजैर्मुक्तं दुर्निवार्य्यं चराचरैः।
अन्योन्यमभ्यवर्त्तन्त देवासुरगणा युधि। महाद्रिशिखराकारा वीर्य्यवन्तो महारथाः। ११६०५
शतं शताश्च तुरगास्तस्य युक्ता महारथे। महासुरवरस्येव हिरण्यकशिपोर्युधि।
तेषां चरणपातेन चक्रनेमिस्वनेन च। तस्य बाणनिपातैश्च हता वै शतशः सुराः।
ततः स लघुभिस्तीक्ष्णैः शरैः सन्नतपर्व्वभिः। आयुधान्यच्छिनत् क्रुद्धः शतशोऽथ सहस्रशः।
बध्यमानाः शरैस्तीक्ष्णैरश्विद्विरदवाजिनः। गमिताः प्रलयं केचित्केचिद्भग्ना रणे।
ततः प्रक्षीयमाणांस्तानुपलभ्य दितेः सुताः। त्यक्त्वा प्राणान् न्यवर्त्तन्त प्रस्फुटीतशरासनाः। ११६१०
ते दिशो विदिशश्चैव प्रतिरुध्य प्रहारिणः। अभ्यवर्षन् शितैः शस्त्रैर्देवान्दितिसुता रणे।
रणाजिर्ज्वलितं घोरं परमं तिग्मतेजसं। मुमोचास्त्रं महाबाहुर्मोहनं नाम संयुगे।
ततः शस्त्राणि शूलानि निशितानि सहस्रशः। अस्त्रवीर्य्येण महता दितिजः संप्रचिच्छिदे।
छित्त्वा शूलांश्च तान् सर्व्वानेकचक्रो महासुरः। प्रत्यविध्यत तं साध्यं दशभिर्निशितैः शरैः।
अस्त्रवेगं निहत्यैवं सोऽश्वेयाश्चानु सैनिकान्। ज्वलितैरपरैः शोषैस्तानविध्यत् सहस्रशः। ११६१५
तेषां छिन्नानि गात्राणि विसृजन्ति स्म शोणितं। पाटलीवातिहृष्टानि शृङ्गाणि धरणीभृतां।
इन्द्राशनिसमस्पर्शैर्वेगवद्भिरजिह्मगैः। दितिजैर्बध्यमानाश्च विनेशुः सुरसत्तमाः।
एकचक्रो रणे तिष्ठन्नपश्यद्गजयूथपान्। घनाभ्रवरनिर्ह्रादान् समुद्रसलिलस्वनान्।
मत्तान् सुकल्पितान् दृप्तान्महामात्रैरधिष्ठितान्। कुलीनान् वीर्य्यसम्पन्नान् प्रतिद्विरदघातिनः।
शिक्षितान् गजशिक्षायामैरावणसमान् युधि। न्यहनत् परसैन्यस्य गजान् गज इवासुरः। ११६२०
विचरन्तो महानागान् भीमरूपांस्त्रिधा मदं। मेघस्तनितनिर्घोषान् महाद्रीनिव चोच्छ्रितान्।
सहस्रशश्चितान् दिव्यान् जाम्बूनदपरिष्कृतान्। सुवर्णजालैर्विततांस्तथादित्यवर्च्चसः।
एकचक्रो गदापाणिर्व्वारणान् गदिनाम्वरः। उत्सारयामास गजान् महाभ्राणीव मारुतः।

निहत्य गदया सर्व्वांस्तान् गजान् गजमर्द्दनः। भूयोऽश्वसंघान् स बलो निरैच्छत महासुरः।
शुकवर्णानृक्षवर्णांश्च मयूरसदृशांस्तथा। पारावतसवर्णांश्च हंसवर्णांस्तथैव च। ११६२५
मल्लिकाक्षान् विरूपाक्षान् कौशवर्णान् मनोजवान्। अश्वसैन्यं महाबाहुस्तदप्रतिमपौरुषः।
निसूदयामास बलो गदया भीमविक्रमः। रणाजिरस्थ समरे कर्म्म दृष्ट्वा सुरद्विषः।
अचिन्त्यविक्रमः श्रीमान् स युद्धाद्विरराम ह। गदायुद्धेषु कुशलो रथेन रथयूथपः।
हृष्टसैन्यो महाबाहुः प्रस्थितः शक्रसन्निधौ। विंशच्छतसहस्राणि प्राणिनां विनिहत्य च।
रणेऽतिष्ठत् स दैत्येन्द्रो विधूम इव पावकः। तस्मिन्नेव तु संग्रामे बलो नाम महासुरः। ११६३०
मृगव्याधं महात्मानं योधयत्यजितं रणे। मृगव्याधस्य रुद्रस्य महापारिषदास्ततः।
समुत्पेतुर्बलं दृष्ट्वा हुताग्निसमतेजसः। गजैर्मत्तैरथैर्दिव्यैर्वाजिभिश्च महाजवैः।
अश्वैश्च निशितैस्तीक्ष्णैर्भल्लैश्चोपचिता रणे। ततस्ते ददृशुर्वीरा दीप्यमानं महासुरं।
रश्मिवन्तमिवोद्यन्तं सुतेजोरश्मिमालिनं। संग्रामस्थं महावेगं महासत्त्वं महाबलं।
महामतिं महोत्साहं महाकायं महारथं। तं समीक्ष्य महायोधं दिक्षु सर्व्वास्ववस्थितं। ११६३५
ततः प्रहरणैर्घोरैरभिपेतुः समन्ततः। तस्य सर्व्वायसाः पीताः शरास्तीक्ष्णमुखाः शिताः।
शिरस्यद्रिप्रतीकाशे मृगव्याधेन पातिताः। तैरर्पितैरथाविष्टः शरैः शिरसि दानवः।
उत्पपात तदा व्योम दिशो दश विनादयन्। ततस्तं त्रिदशो वीरः सरथः सज्यकार्म्मुकः।
अनुवव्राज संहृष्टः खे तदा सुमहाबलः। असुरं छादयामास तं व्योम्नि शरवृष्टिभिः।
वृष्टिमानिव जीमूतो निदाघान्ते धराधरं। अर्द्यमानस्ततस्तेन मृगव्याधेन दानवः। ११६४०
चकार निनदं घोरमम्बरे जलदो यथा। स दूरं सहसोत्पत्य मृगव्याधरथेऽसुरः।
निपपात महावेगः पक्षवानिव पर्व्वतः। बभञ्ज च ततो दैत्यो भग्नेषाकूवरं रथं।
मृगव्याधः परित्यज्य स्थितो भूमौ महाबलः। विरथं प्रेक्ष्य रुद्रन्तु तस्य पारिषदाः शुभाः।
उत्थिता रोषताम्राक्षा व्योम्नि मुद्गरपाणयः। स तु तैः सहसोत्थाय विष्ठितो विमलेऽम्बरे।
मुद्गरैरर्द्दितो भीमैर्वृक्षः परशुभिर्यथा। तेषां वेगवतां वेगान्निहत्य स महासुरः। ११६४५
निपपात पुनर्भूमौ सुपर्णसमविक्रमः। स शालवृक्षमुत्पाट्य महाशाखं महाबलः।
सर्व्वान् पारिषदान् संख्ये सूदयामास दानवः। स तैर्विततदेहस्तु रुधिरौघपरिप्लुतः।
शुशुभे दानवश्रेष्ठो बालसूर्य्य इवोदितः। अथोत्पाट्य गिरेः शृङ्गं स मृगव्यालपादपं।
जघान तान् पारिषदान् समरे दानवेश्वरः। ततस्तेष्ववसन्नेषु महापारिषदेषु वै।
बलं तदशेषं स नाशयामास वीर्य्यवान्। अश्वैरश्वान् गजैर्नागान् योधैर्योधान्रथैरथान्। ११६५०
दानवः सूदयामास युगान्तेऽन्तकवत् प्रजाः। हतैरश्वैश्च नागैश्च भग्नैश्च महारथैः।
छिदशैश्चाभवद्भूमी रुद्धमार्गा समन्ततः। एवं बलश्च दैत्येन्द्रो मृगव्याधश्च वीर्य्यवान्।
युधि प्रयुद्धौ बलिनौ प्रभिन्नाविव वारणौ। तत्रैव युध्यते रुद्रो द्वितीयो राहुणा सह।

विश्रुतस्त्रिषु लोकेषु क्रोधात्मा चज एकपात्। ततस्तयोस्तुमुलं युद्धं सुमहल्लोमहर्षणं।
आसीत् प्रतिभयं रौद्रं वीराणां जयमिच्छतां। देवदानवदैत्यैस्तु दुस्तरा केशशाद्वला। ११९५५
शरीरसंघातवहा प्रवृत्ता शोणितापगा। निजघानासुरं क्रुद्धो रुद्रो रौद्राकृतिः प्रभुः।
राहुं प्रमुखं युद्धे शत्रुसैन्यविदारणं। तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिं।
जघान समरे श्रीमान् क्रुद्धो दैत्यश्च सायकैः। तस्य पारिषदो श्रेष्ठो रथघ्नस्तथा महाबलः।
विभेद समरे हृष्टो दानवं तं रणान्तरे। विभिन्नगात्रो रुद्रेण तथा पारिषदैरपि।
रुद्रस्य रथमायान्तं राहुर्दानवसत्तमः। प्रममाथ तलेनाशु सहसा क्रोधमूर्च्छितः। ११९६०
भिन्नगात्रः शरैस्तीक्ष्णैः स रुद्रममितौजसं। रुद्रपारिषदांश्चापि जघानाशु पराक्रमी।
सृजन्तं शरवर्षाणि दानवं घोरदर्शनं। विभेद समरे रुद्रो बाणैः सन्नतपर्व्वभिः।
वर्त्तमाने तथा रौद्रे संग्रामे लोमहर्षणे। रुधिरौघप्रवाहिन्यो महानद्यः प्रसुस्रुवुः।
दानवः समरे रुद्रं नीलाञ्जनचयोपमः। निर्बिभेद शरैस्तीक्ष्णैर्दीप्तैः सूर्य्य इवांशुभिः।
हतैर्दानवमुख्यैस्तु शूलशक्तिपरश्वधैः। पतितैः पर्व्वताभैश्च दानवैः कामरूपिभिः। ११९६५
वर्त्तमाने महाघोरे संग्रामे लोमहर्षणे। महाभेरीमृदङ्गानां पणवानां तथैव च।
शङ्खानां पटहानाञ्च सम्बभूव महास्वनः। हतानां स्वनतां तत्र दैत्यानाञ्चापि निस्वनः।
देवानाञ्च तथा तत्र शुश्रुवे दारुणो महान्। तुरङ्गमखुरोत्कीर्णं रथनेमिसमुद्धतं।
रुरोध मार्गं योधानां चक्षूंषि च धरारजः। शस्त्रपुष्पोपहारा सा तत्रासीद्युद्धमेदिनी।
दुर्दर्शा दुर्विगाह्या च मांसशोणितकर्द्दमा। भग्नैः खड्गैर्गदाभिश्च शक्तितोमरपट्टिशैः। ११९७०
अपविद्धैश्च शतशो रथैः सांग्रामिकैर्हतैः। निहतैः कुञ्जरैश्चैव तथा छिन्नैश्च दानवैः।
चक्राक्षयुगशस्त्रैश्च भग्नैरवनिमाश्रितैः। बभूवायोधनं घोरं पिशिताशनसङ्कुलं।
उत्पेतुश्च कबन्धानि दिक्षु सर्व्वासु संयुगे। अन्योन्यबद्धवैराणां शूराणां जयमिच्छतां।
संप्रहारस्तदा युद्धे वर्त्तते स्म भयङ्करः। सैन्यानां संप्रयुक्तानां शूराणामनिवर्त्तिनां।
अजस्य चैकपादस्य राहोश्चैव महात्मनः। तेषान्तु तत्रापततां सैन्यानामतिनिस्वनः। ११९७५
उद्वर्त्ततामन्तकाले समुद्राणामिव स्वनः। तत्रैकस्तु स धूम्राक्षो भीमो रुद्रो महाबलः।
विभेद केशिनं शक्त्या महापट्टिशशूलभृत्। घोरा नानाप्रहरणा भीमाख्या भीमदर्शनाः।
निष्पेतू रुद्रदयिता महापारिषदास्तथा। रथमास्थाय च श्रीमांस्तप्तकाञ्चनकुण्डलः।
दानवैः संवृतः केशी युध्यते युधि दुर्ज्जयः। तस्य चैकपदोऽजस्य संग्राममपि युयुत्सतः।
निष्पेतुरुग्रवीर्य्यस्य ज्वालाः प्रवितता मुखात्। स तु सिंहाश्रितस्कन्धः शार्दूलसमविक्रमः। ११९८०
महाजलदसंकाशो मृदङ्गसमनिस्वनः। तस्य निष्पतमानस्य दानवैः संवृतस्य वै।
बभूव सुमहानादः क्षोभयंस्त्रिदिवं तथा। तेन शब्देन वित्रस्ता सिद्धानां महाचमूः।
द्रुमशैलप्रहरणा योद्धुमेवाभ्यवर्त्तत। तेषाञ्च देवदैत्यानां युयुत्सूनां परस्परं।

सन्निपातः सुतुमुलो रौद्रो लोकभयावहः। तेषां युद्धं महाघोरं संजज्ञे लोमहर्षणं।
देवदानवसंघानां प्राणांस्त्यक्त्वा महाहवे। सर्व्वे ह्यतिबलाः शूराः सर्व्वे पर्व्वतसन्निभाः। १२६८५
सर्व्वे सर्व्वास्त्रविद्वांसः सर्व्वे सर्व्वायुधोद्यताः। त्रिदशा दानवाश्चैव परस्परजिघांसवः।
तेषां विनदतां शब्दः संयुगे मेघनिस्वनः। शुश्रुवेऽतिमहाघोरस्त्रस्तावरकम्पनः।
रेणुश्चारुणसङ्काशः सुभीमः समपद्यत। उद्धूतो देवदैत्यौघैः संरुरोध दिशो दश।
अन्योन्यं रजसा तेन कौशेयारुणपांशुना। संवृता बहुरूपेण ददृशुर्नैव संयुगे।
न ध्वजो वा पताका वा न वर्म्म तुरगोऽपि वा। आयुधं स्यन्दनो वाऽपि ददृशे नैव सारथिः। १२६९०
स शब्दस्तुमुलस्तेषामन्योन्यमभिधावतां। श्रूयते तुमुले युद्धे न रूपाणि चकाशिरे।
दानवा एव संरब्धा दानवान् अघ्नुराहवे। त्रिदशांस्त्रिदशाश्चापि निजघ्नुस्तुमुले तदा।
ते परांश्च विनिघ्नन्तः स्वांश्च युद्धे सुरासुराः। रुधिरार्द्रां तथा चक्रुर्मेदिनीन्ते सुरासुराः।
ततस्तु रुधिरौघेण संसिक्तं शमितं रजः। शरीरशतसंकीर्णो बभूव स महारणः।
शूलशक्तिगदाखड्गपरिघप्रासतोमरैः। त्रिदशा दानवाश्चैव जघ्नुरन्योन्यमाहवे। १२६९५
बाहुभिः परिघाकारैर्निघ्नन्तः पर्व्वतैस्तथा। रुद्रपारिषदाः सर्व्वे सूदयन्ति स्म दानवान्।
रुद्रपारिषदांश्चैव महाद्रुममहाश्मभिः। निजघ्नुः समतिक्रम्य शरैश्चाशाश्च दानवाः।
एतस्मिन्नन्तरे क्रुद्धः केशी दानवसत्तमः। संग्रामहर्षी घोरः स स्वान्यनीकानि हर्षयन्।
तेषां परमसंक्रुद्धो वज्रमस्त्रमुदैरयत्। वज्रेणास्त्रेण दिव्येन दैत्येन सुमहात्मना।
महापारिषदाः सर्व्वे हता युधि सुदुर्जयाः। वज्रास्त्रपीडिता भ्रान्ता रुद्रपारिषदा युधि। १२७००
विप्रकीर्णद्रुमाः पेतुः शैला वज्रहता इव। एवं तत्तुमुलं युद्धमभवल्लोमहर्षणं।
केशिनः सह रुद्रेण तदद्भुतमिवाभवत्।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामनप्रादुर्भावे देवासुरयुद्धे ऊनपञ्चाशदधिकद्विशततोऽध्यायः॥ २४९॥
॥ वैशम्पायन उवाच॥ वृषपर्व्वा तु दैत्येन्द्रो विस्मयाद्भुतविक्रमं। निष्कम्भुं योधयामास लोहितार्कसमद्युति।
क्रोधमूर्च्छितवक्त्रस्तु धुन्वन् परमकार्मुकं। ध्वजिनीं प्रेक्ष्य शत्रूणां सारथिं त्वरितोऽब्रवीत्।
अत्रैव तावत्त्वरितं नय मे सारथे रथं। एते हि देवाः सहिता घ्नन्ति नः समरे बलं। १२७०५
एतानिहन्तुमिच्छामि समरश्लाघिनो रणे। एतैर्हि दानवानीके कृतं छिद्रमिदं महत्।
ततः प्रजविताश्वेन रथेन रथिनाम्वरः। शरौघैरवहनत् क्रुद्धः शरजालैर्महासुरः।
न स्थातुं देवताः शक्ताः किं पुनर्युद्धमाहवे। वृषपर्व्वेषुभिर्भिन्नाः सर्व्व एवाभिदुद्रुवुः।
तान्मृत्युवशमापन्नान् वैवस्वतवशङ्गतान्। समीक्ष्य भ्रातो निष्कम्भुरवतस्थे महाबलः।
दृष्ट्वा तं तत्र निष्कम्भुं सर्व्वशस्त्रिदशोत्तमाः। समेत्य सहिताः सर्व्वे तं द्रुतं पर्य्यवारयन्। १२७१०
व्यवस्थितश्च निष्कम्भुं दृष्ट्वा ते त्रिदशोत्तमाः। बभूवुर्बलवन्तो वै तथास्त्रबलतेजसा।
वृषपर्व्वा तु शैलाभं निष्कम्भुं समरे स्थितं। महेन्द्र इव धाराभिः शरवर्षैरवाकिरत्।

अचिन्तयित्वा बाणांस्तान् शरीरे पतितान् बहून्। स्थितश्चमूमुखे श्रीमान् सबैन्यः स महाबलः।
संप्रहृष्य महातेजा वृषपर्व्वाणमाहवे। अभिदुद्राव वेगेन कम्पयन्निव मेदिनीं।
तस्य त्वाधावमानस्य दीप्यमानस्य तेजसा। बभूव रूपं दुर्द्धर्षं दीप्तस्येव विभावसोः। १२०१५
रथं त्यक्त्वा स तु श्रीमान् सक्रोधः कमलेक्षणः। वृक्षमुत्पाटयामास महाशाखं महोच्छ्रयं।
ततश्चिक्षेप तं वृक्षं निष्कुम्भुर्वृषपर्व्वणः। तं गृहीत्वा महावृक्षं पाणिनैकेन दानवः।
विनद्य सुमहानादं भ्रामयित्वा च वीर्य्यवान्। सगजांश्च गजारोहान् सरथान् रथिनस्तदा।
जघान दानवस्तेन शाखिना त्रिदशांस्तथा। तमन्तकमिव क्रुद्धं समरे प्राणहारिणं।
वृषपर्व्वाणमासाद्य त्रिदशा विप्रदुद्रुवुः। तमापतन्तं संक्रुद्धं त्रिदशानां भयावहं। १२०२०
ददर्श वीरो निष्कुम्भुश्चुकोप च ननाद च। स तत्र निशितैर्बाणैश्छिन्नशता मर्म्मभेदिभिः।
निर्ब्बिभेद महावीर्य्यो निष्कुम्भुर्दानवाधिपं। दैत्यानामथ निष्कुम्भुः शरशक्तिभिरर्द्दितः।
विद्धः समरमूर्द्धस्थो रुधिरं प्रास्रवद्बहु। उद्विग्ना मुक्तकेशाश्च भग्नदर्पाः पराजिताः।
स्रवन्तो दुद्रुवुः सर्व्वे भयार्त्ता वृषपर्व्वणः। अन्योन्यं प्रसमभ्युत्ते बाधिता वृषपर्व्वणा।
पृष्ठतस्त्राससंमूढाः प्रेक्षमाणा मुहुर्म्मुहुः। त्यक्तप्रहरणाः सर्व्वे हतास्ते वृषपर्व्वणा। १२०२५
संग्रामे युद्धशौण्डेन तदा निष्कुम्भुसैनिकाः। तत्रैव तु महावीर्य्यः प्रह्लादः कालमाहवे।
योधयामास रक्ताक्षो हिरण्यकशिपोः सुतः। तस्य दानववीरस्य युद्धकाले जयक्रियाः।
चकार त्वरया युक्तो भार्गवो विजयावहाः। हुताशनं तर्पयतो ब्राह्मणांश्च नमस्यतः।
आज्यगन्धं प्रतिवहन् मारुतः सुरभिर्ववौ। स्रजश्च विविधाकारा यथार्थमभिमन्त्रिताः।
प्रह्लादस्य शुभे मूर्द्ध्नि आबबन्धोशना स्वयं। कालेन सह संग्रामे प्रयुद्धस्य महात्मनः। १२०३०
प्रह्लादस्यातिवीर्य्यस्य शान्तिश्चक्रे स भार्गवः। दश शिष्यसहस्राणि भार्गवस्य महात्मनः।
यानि दानवमुख्यानां जेपुः शान्तिमनुत्तमां। अथर्व्वाणमथो दिव्यं ब्रह्मसंस्तवचोदितं।
रणप्रवेशसदृशं कर्म्म वैजयिकं कृतं। ततः सर्व्वास्त्रविद्वांसः समरेष्वनिवर्त्तिनः।
विद्याव्रतसमायुक्ताः कृतस्वस्त्ययनक्रियाः। धनुर्हस्ताः कवचिनो वेगेनाप्लुत्य दानवाः।
बलिमभ्यर्च्च्य राजानं प्रह्लादं पर्य्यवारयन्। आस्थाय दिव्यं विपुलं रथं परवाहकं। १२०३५
नानाप्रहरणाकीर्णं सचक्रमिव पर्व्वतं। तद्बभूव मुहूर्त्तेन शोभितास्फोटिताकुलं।
मेरोः शिखरमापूर्णं यैरिवाम्बुधरागमे। ध्वजाः पद्मपलाशानामामुच्य सुविभूषिताः।
बान्धवान् संपरिष्वज्य संपतन्ति रणप्रियाः। महायुधधरः श्रीमान् शुभवर्म्मधरः प्रभुः।
शतनुर्च्चशिरस्त्राणो धन्वी परमदुर्ज्जयः। सिंहशार्दूलसदृशानां महतां किङ्किणीकिनां।
तस्य सैन्यसहस्राणि प्रयान्त्यग्रे महारणे। सैन्यपञ्चशतान्यस्य रथाः परमदुर्ज्जयाः। १२०४०
सप्ततिर्व्वै महाभाग गजास्तावन्त एव च। मध्ये व्यूहवरस्यास्तु कालनेमिर्महासुरः।
धनुर्विस्फारयन् घोरं ननाद प्रजहास च। तस्मिन् शतसहस्राणि पुरो यान्ति महाद्युतेः।

दानवानां बलवतां शक्रप्रतिमतेजसां। स समं वर्द्धमानस्तु पञ्चाभ्यां विस्तृतो महान्।
अभवद्दानवव्यूहो दुर्भेद्यः सर्व्वदैवतैः। ततः शतसहस्राणि दानवानां धनुर्भृतां।
नानाप्रहरणानाञ्च परिमाणं न विद्यते। गदापरिघनिस्त्रिंशशूलपट्टिशमुद्गरैः। ११७४५
प्रगृहीतैर्व्वराजन्त दानवाः पर्व्वता इव। गर्ज्जन्तो विनदन्तश्च विक्रोशन्तश्च दानवाः।
अयुध्यन्त महावीर्य्याः समरेष्वनिवर्त्तिनः। ततस्तूर्य्यसहस्राणां संजज्ञे निस्वनो महान्।
हयानाञ्च गजानाञ्च गर्ज्जतामतिवेगिनां। दुन्दुभीनाञ्च निर्घोषः पर्ज्जन्यनिनदोपमः।
शुश्रुवे शङ्खशब्दश्च पटहानाञ्च निस्वनः। तेन शङ्खनिनादेन भेरीतूर्य्यरवेण च।
निर्घोषेण रथानाञ्च क्रोशतीव नभस्तलं। सागरप्रतिमौघेन बलेन महता वृतः। ११७५०
प्रह्रादोऽयुध्यत क्रुद्धः कालान्तकयमोपमः। तस्य नादेन रौद्रेण घोरेणाप्रतिमौजसः।
विनेदुः सर्व्वभूतानि त्रैलोक्यविततैः स्वरैः। अन्तरीक्षात् पपातोल्का वायुश्च परुषो ववौ।
वमन्त्यः पावकं घोरं शिवाश्चैव ववाशिरे। प्रह्रादस्तु महावीर्य्यः प्रहसन् युद्धदुर्म्मदः।
उवाच वचनं श्रीमांस्तत्कालक्षममुत्तमं। अद्याहं दर्शयिष्यामि स्वबाहुबलमूर्ज्जितं।
अद्य मद्बाणनिहतान् देवान् द्रक्ष्यथ संयुगे। बान्धवा निहता येषां त्रिदशैरिह सङ्गरे। ११७५५
अद्य ते निर्व्वपिष्यन्ति शत्रुमांसानि दानवाः। रक्तमद्य समुद्भूतं रेणुं समरमूर्द्धनि।
अहं संशमयिष्यामि शत्रुशोणितविस्रवैः। तिमिरौघहतार्कञ्च सैन्यरेणुहतीकृतं।
आकाशं संपतिष्यन्ति खद्योता इव मे शराः। हृष्टाः संपरिमोदध्वं देवेभ्यस्त्यज्यतां भयं।
अद्याहं निहनिष्यामि कालेन्द्रं धनुषा रणे। तोषयिष्यामि राजानं बलिं बलवतां वरं।
त्रिदशान् समरे जित्वा बाणैरन्तकसन्निभैः। अक्षयाः सन्ति मे तूणाः शराश्चाशीविषोपमाः। ११७६०
स्थातुं मे पुरतः शक्ताः के रणे जीवितेप्सवः। हत्वा रिपुगणांस्तुष्टिरनुरागश्च राजसु।
हतस्य त्रिदिवे वासो नास्ति युद्धसमा गतिः। ते भयं मुञ्चतः कृत्वा रणे दानवसत्तमाः।
निहत्येमानरीन् सर्व्वान् मोदध्वं नन्दने वने। एवमुक्त्वा महासैन्यं प्रह्रादो दानवोत्तमः।
कालस्य समरे सैन्यं तरसाऽमर्द्दतासुरः। सर्व्वास्त्रविच्च शूरश्च नित्यञ्चाप्यपराजितः।
युद्धेष्वभिमुखो नित्यं स्वबाहुबलदर्पितः। षष्टीरथसहस्राणि विविधायुधधारिणां। ११७६५
प्रह्रादस्यातिवीर्य्यस्य ये तस्य तनया निजाः। तैस्तु क्रतुशतैरिष्टं विपुलैराप्तदक्षिणैः।
शान्ता धर्म्मपरा नित्यं नित्यं शमपरायणाः। दातारः प्रियवक्तारो वक्तारः शास्त्रवस्तुषु।
स्वदारनिरता दान्ताः शरण्याः सत्यसङ्गराः। यष्टारः क्रतुभिर्नित्यं नित्यं स्वाध्ययने रताः।
इष्वस्त्रकुशलाः सर्व्वे बलिनो दृढविक्रमाः। मत्तवारणविक्रान्ताः शत्रुसैन्यविमर्द्दकाः।
ईरयन्तः पदाक्षेपैः सुघोरान् वातरेचकान्। युद्धोत्सुकधियो नित्यं क्रोधरक्तितलोचनाः। ११७७०
सन्दष्टौष्ठपुटा दैत्या विनेदुर्भीमविक्रमाः। क्ष्वेडितास्फोटितरवैर्हर्षयन्तः परस्परं।
रेणुशङ्खरवैश्चैव सिंहनादैश्च पुष्कलैः। आप्लुत्याप्लुत्य सहसा रणे वव्रुरनेकशः।

तालमात्राणि चापानि विकृष्य सुमहाभुजाः । सन्नह्यमानाः सहसा दंशिता बाणपाणयः ।
सुरासुरैरप्यजितं योधयन्ति रणेऽन्तकं । प्रतप्तहेमाभरणाः सर्व्वे ते श्वेतवाससः ।
दानवा मानिनः सर्व्वे सर्व्वे स्वर्गाभिकाङ्क्षिणः । सर्व्वे अनेकविधा वीराः सर्व्वे शत्रुवधोद्यताः । ११७७५
शुशुभे सा चमूर्दृप्ता पताकाध्वजमालिनी । गजाश्वरथसम्बाधा स्वर्गमार्गाभिकाङ्क्षिणी ।
ततः कालस्तु निर्यातो भीमो भीमपराक्रमः । विनदन् सुमहाकायो व्याधिभिर्व्वहुभिर्वृतः ।
ददर्श महतीं सेनां दानवानां बलीयसां । अभिसंजातहर्षाणां कालं समभिगच्छतां ।
आपतन्तं तदाऽनीकं दानवानां तरस्विनां । प्रतिलोमं चकाराशु व्याधिभिः वेष्टितोऽन्तकः ।
प्रविश्य ध्वजिनीं तेषां घातयामास वीर्य्यवान् । कालो रुधिररक्ताक्षः सेनानीकेन संवृतः । ११७८०
प्रह्लादबलमत्युग्रं प्रह्लादश्च महासुरं । आजघान रणे कालो दण्डमुद्गरपट्टिशैः ।
शरशक्त्यृष्टिखड्गांश्च शूलानि मुषलानि च । गदाश्च परिघांश्चैव विविधांश्च परश्वधाः ।
धनूंषि च विचित्राणि शतघ्न्यश्च शिलायसाः । पात्यन्ते व्याधिभिर्युद्धे दानवानां चमूमुखे ।
बहवो व्याधयो युद्धे बहूनसुरपुङ्गवान् । व्याधीनपि च दैतेया निजघ्नुर्व्वहवो बहून् ।
शूलेन मथिताः केचित् केचिच्छिन्नाः परश्वधैः । परिघैराहताः केचित् केचिच्च परमायुधैः । ११७८५
केचिद्द्विधाकृताः खड्गैः स्फुरन्तः पतिता भुवि । व्याधयो दानवैरेवं नानाशस्त्रैर्विदारिताः ।
ते चापि व्याधिभिः सर्व्वे विविधैरायुधोत्तमैः । खड्गैश्च विमलैस्तीक्ष्णैः प्रासतोमरमुद्गरैः ।
विभिन्ना दानवाः शूलैर्निकृत्ताश्च परश्वधैः । मुद्गरैः पट्टिशैश्चैव व्याधिभिश्च हता भृशं ।
हताः शस्त्रैरनेकैश्च मुष्टिभिश्च हता भृशं । वेमुः शोणितमक्षोभ्यं विष्टब्धहतलोचनाः ।
आर्त्तस्वरश्च नदतां सिंहनादश्च गर्ज्जतां । बभूव तुमुलः शब्दः संग्रामे लोमहर्षणः । ११७९०
मुष्टिभिश्चोत्तमाङ्गानि तलैर्गात्राणि चाहनत् । वादितानि महीं अमुक्षितानामिव संयुगे ।
वस्त्रफेना ध्वजावर्त्ता छिन्नबाहुमहोरगा । शूलशक्तिमहामत्स्या चापग्राहसमाकुला ।
रथैश्चोपलसम्बाधा ध्वजद्रुमसमावृता । शब्दघोरविस्तारा लोहितोदाऽभवन्नदी ।
स्वधनुःशक्रधनुषौ काञ्चनाङ्गदविद्युतौ । तौ दैत्यकालजलदौ शरधारां ववर्षतुः ।
तौ महामेघसङ्काशौ रथनागगतौ तदा । बभूवतुरतिक्रुद्धौ साम्बुगर्भाविवाम्बुदौ । ११७९५
तप्तकाञ्चनसन्नाहौ दिव्यहारविभूषितौ । तौ विरेजतुरायत्तौ सूर्य्यवैश्वानराविव ।
तौ महाचलसंकाशावन्योन्यस्य चमू तदा । वज्राशनिसमस्पर्शैर्व्विभेदतुराहवे ।
परस्परं समासाद्य तयोर्युधि दुरासदे । नाशंसन्त तदा योधा जीवितान्यपि संयुगे ।
शरनिर्भिन्नसर्व्वाङ्गा युधि प्रक्षीणजीविताः । निपेतुर्योधमुख्याश्च रुधिरोक्षितवक्षसः ।
पतितैर्निपतद्भिश्च पात्यमानैश्च संयुगे । बभूव भूः समाकीर्णा योधैरुद्गतजीवितैः । ११८००
न त्यजतोः शरान् घोरान् न च सन्दधतोस्तयोः । अन्तरं ददृशे कश्चित् प्रयत्नादपि संयुगे ।
लघुत्वाच्च महाबाहू युद्धशौण्डौ महाबलौ । मण्डलीकृतचापौ तु सततैव बभूवतुः ।

प्रह्लादस्य तु वाणौघैर्द्रावमानकवाहिनी । तुद्यमाना बलवता वायुनेवाभ्रमण्डलं ।
हतदर्पन्तु विज्ञाय प्रह्लादः कालमाहवे । अपयातञ्च यमराड्विषयं संप्रतर्क्य तं ।
मत्वा वशगतञ्चैव प्रह्लादो युद्धदुर्मदः । तथैवान्यां चमूं भूयः प्रामर्द्दत महासुरः । १२८०५
कालप्रह्लादयोर्युद्धमभवद्यादृशं तदा । तादृशं सर्व्वभूतेषु न भूतं न भविष्यति ।
एवमद्भुतवीर्य्यौजा महारणजनक्षयः । प्रह्लादः परिहृष्टोऽथ कालश्चापगतो रणात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

॥ वैशम्पायन उवाच ॥ अनुह्रादो धनाध्यक्षं प्रह्लादस्यानुजो बली । ससैन्यो योधयामास क्षोभयन् यक्षवाहिनीं ।
महता च बलौघेन अनुह्रादः सुरोत्तमं । अर्द्दयामास संक्रुद्धो धनाध्यक्षं प्रतापवान् ।
अभ्यस्यमाणस्त्रिदशानाहवस्थान्महायुधान् । चकार कदनं घोरं धनुष्पाणिर्महासुरः । १२८१०
आवर्त्त इव संजज्ञे बलस्य महतो महान् । क्षुभितस्याप्रमेयस्य सागरस्येव संभ्रमः ।
त्रिदशानां शरीरैश्च दानवानाञ्च मेदिनी । बभूव निचिता सर्व्वा पर्व्वतैरिव संवृता ।
मेरुपृष्ठन्तु रक्तेन रञ्जितं संप्रकाशते । सर्व्वतो माधवे मासि पुष्पितैरिव किंशुकैः ।
हतैर्वीरैर्गजैरश्वैः प्रावर्त्तत महानदी । शोणितोदा महाघोरा यमराष्ट्रविवर्द्धिनी ।
शस्त्रमेदोमहापङ्का विप्रकीर्णान्त्रशैवला । छिन्नकायशिरोमीना अङ्गावयवशर्करा । १२८१५
गृध्रहंसगणाकीर्णा कङ्कसारसनादिनी । वसाफेनसमाकीर्णा प्रेतक्रुष्टस्तनितस्वना ।
तां कापुरुषदुर्द्धर्षां युद्धभूमिमहानदीं । नदीमिवातपापाये हंससारसशोभितां ।
त्रिदशा दानवाश्चैव तेरुस्तां दुस्तरां तदा । यथा पद्मरजोध्वस्तां नलिनीं गजयूथपाः ।
ततः सृजन्तं वाणौघाननुह्रादं रथे स्थितं । ददर्श तरसा देवो निघ्नन्तं यक्षवाहिनीं ।
क्रुद्धस्ततो दैत्यबलं सूदयामास वित्तपः । विक्षिपन्निव खे वायुर्महाभ्रपटलं बलात् । १२८२०
समीक्ष्य तुमुलं युद्धमनुह्रादश्चमूपतिः । रथेनादित्यवर्णेन कुवेरमभिदुद्रुवे ।
स धनुर्द्धन्विनां श्रेष्ठो विकृष्य रणमूर्द्धनि । उत्ससर्ज्ज शितान् वाणान् वित्तेशस्य महात्मनः ।
कुवेरं प्राप्य ते वाणा निर्भिद्य सुसमाहिताः । अपरान् पृष्ठतो अन्वर्थांश्चक्रान् यक्षराक्षसान् ।
देवः शरैरभिहतो निशितैर्ज्वलनोपमैः । अनुह्रादं प्रत्युदियात्संक्रुद्धः परमाहवे ।
ततो वैश्रवणो राजा क्रुद्धो यक्षगणैः सह । ववर्ष शरवर्षाणि दानवान् प्रति वीर्य्यवान् । १२८२५
तद्यथा शारदं वर्षं गोवृषः शीघ्रमागतं । अपारयन् वारयितुं प्रतिगृह्णाति मीलितः ।
एवमेव कुवेरस्य शरवर्षं महासुरः । निमीलिताक्षः सहसा दैत्योऽसहत दारुणं ।
रोषितः शरवर्षेण धनदेन महाबलः । इन्द्रकेतुप्रतीकाशमभितोऽपश्यत द्रुतं ।
प्रवृद्धशाखाविटपं तरुणाङ्कुरपल्लवं । उत्पाट्य कुपितो दैत्यस्तरुं फलसमाकुलं ।
निजघान हयश्रेष्ठान् कुवेरस्य महाजवान् । तच्च कर्म्म महाघोरं दृष्ट्वा सर्व्वे महासुराः । १२८३०
सिंहनादं नदन्ति स्म अनुह्रादप्रहर्षिताः । तयोः सुतुमुलं युद्धं संजज्ञे देवदैत्ययोः ।

ततस्तौ क्रोधरक्ताक्षावन्योन्यवधकाङ्क्षिणौ । अन्योन्यं विविधैः शस्त्रैर्घोरैर्जघ्नतुराहवे ।
विद्धैर्द्दानवा युद्धे मथिताः प्राणवत्तरैः । दानवैस्त्रिदशाश्चापि क्रुद्धैर्भुवि निपातिताः ।
दानवास्त्वथ संक्रुद्धास्त्रिदशाञ्छिशितैः शरैः । विव्यधुर्व्वज्रसंकाशैः कङ्कपत्रैरजिह्मगैः ।
विदार्य्यमाणा दैत्यैर्धैस्त्रिदशास्तु महाबलैः । समर्पिततरा भूयश्चक्रुः कर्म्माण्यभीतवत् । ११८३५
ते गदाभिः सुभीमाभिः पट्टिशैः शूलमुद्गरैः । परिघैश्च सुतीक्ष्णाग्रैर्द्दानवाः पीडिताः शरैः ।
शरनिर्भिद्यमानाश्च वज्रविच्छिन्नवक्षसः । अगृह्णन्त शिलाश्चैव द्रुमांश्चासुरसत्तमाः ।
ते भीमवेगा दितिजा मर्द्दमानाः पुनः पुनः । समभ्यस्त्रिदशान् वीर्य्याच्छतशोऽथ सहस्रशः ।
ततः सुतुमुलं युद्धं तेषां तत्र समवर्त्तत । शिलाभिर्विपुलाभिश्च वज्रैश्चैव च पादपैः ।
परिघैः पट्टिशैश्चैव भिन्दिपालैः परश्वधैः । केचिच्छिन्नशिरसः केचिच्च विदलीकृताः । ११८४०
केचिद्विनिहता भूमौ रुधिरार्द्राः सुरासुराः । केचिद्विद्राविता बद्धाः परस्परवधार्द्दिताः ।
विभिन्नहृदयाः केचिच्छिन्नपादाश्च सेरते । विदारितास्त्रिशूलैश्च केचित्तत्र गतासवः ।
तद्युद्धं सुमहद्घोरं देववदानवसंकुलं । बभूव सुतुमुलं शिलापादपसंकुलं ।
धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितं । आर्त्तस्तनितनिर्घोषं युद्धगान्धर्वमाबभौ ।
कुबेरस्तु धनुष्पाणिर्द्दानवानामनमूर्द्धनि । डिम्भो विद्रावयामास संक्रुद्धः शरवृष्टिभिः । ११८४५
कुबेरेणार्द्दितं सैन्यं विद्रुतं प्रेक्ष्य दानवः । अभ्यद्रवदनुह्रादः प्रगृह्य विपुलां शिलां ।
क्रोधाद्द्विगुणरक्ताक्षः पितुस्तुल्यपराक्रमः । शिलां तां पातयामास कुबेरस्य रथोत्तमे ।
आपतन्तीं शिलां दृष्ट्वा गदापाणिर्द्धनाधिपः । रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत ।
सचक्रकूवरहयं सध्वजं सपताकिनं । भंक्त्वा रथोत्तमं तस्य निपपात शिला भुवि ।
प्रमथ्य तु कुबेरस्य प्रह्लादस्यानुजो रथं । सुराणां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः । ११८५०
प्रभिन्नशिरसो भग्नास्त्रिदशाः शोणितोक्षिताः । द्रुमैः प्रमथिताश्चैव निपेतुर्धरणीतले ।
विद्राव्य विपुलं सैन्यमनुह्रादो महासुरः । गिरिशृङ्गं समुद्यम्य कुबेरमभिदुद्रुवे ।
तमापतन्तं धनदो गदामुद्यम्य वीर्य्यवान् । विनर्द्दन्नाह्वयामास दानवेन्द्रं महाबलः ।
तस्य क्रुद्धस्य संक्रुद्धो गदां तां वज्रकल्पकां । न्यपातयत वित्तेशो दानवस्योरसि प्रभुः ।
दैत्यस्तु क्रोधरक्ताक्षस्तं प्रहारमचिन्तयन् । वित्तेशस्योपरि तदा गिरिशृङ्गमपातयत् । ११८५५
स विह्वलितसर्व्वाङ्गो गिरिशृङ्गेण ताडितः । पपात सहसा भूमौ स पिङ्गाक्षो महाबलः ।
रराज पतितो भूमौ विकीर्ण इव पर्व्वतः । वित्तेशं विह्वलं दृष्ट्वा सर्व्वे ते यक्षराक्षसाः ।
परिवार्य्य महात्मानं ररक्षुर्भीमविक्रमाः । मुहूर्त्तं विह्वलो भूत्वा प्रभुर्वैश्रवणः पुनः ।
उत्थितः सहसा देवः पिङ्गलाक्षो महाबलः । ननाद च महानादं त्रैलोक्यमभिनादयन् ।
जनयन्निव निर्घोषं विधमन्निव पर्व्वतान् । तमवध्यन्तु विज्ञाय निहतं पुनरुत्थितं । ११८६०
प्रेक्ष्य पिङ्गाक्षमायान्तं दानवा विप्रदुद्रुवुः । तांश्च विद्रवतो दृष्ट्वा अनुह्रादोऽसुरोऽब्रवीत् ।

कालनेमिं सुनेमिञ्च महानेमिञ्च दानवं । आत्मानञ्चैव वीर्य्येण विख्यात्याभिजनं तथा ।
क गच्छथ भयत्रस्ताः प्राकृता इव दानवाः । निवर्त्तध्वं महावीर्य्याः किं प्राणान् परिरक्षथ ।
नालं युद्धाय यत्नोऽयं महतीयं विभीषिका । एतां समुत्थितामद्य दानवानां विभीषिकां ।
विक्रम्य विधमिष्यामि निवर्त्तध्वं महासुराः । तेऽसुराः संनिवृत्याथ समदा इव कुञ्जराः ।　११८६५
निजघ्नुः परमक्रुद्धा देवसैन्यं महासुराः । चापप्रहरणाः केचिन्मेघगम्भीरनिस्वनाः ।
दर्पोत्कटा भुजैरेव संप्रहारं प्रचक्रिरे । प्रांशुभिश्चैव काष्ठैश्च शिलाभिश्च महाबलाः ।
बाहुभिश्च तथाऽन्योन्यमाक्षिपन्ति स्म वेगिताः । मुष्टिभिश्च तलैश्चैव नखपातैर्महाबलाः ।
पादपैश्च महाशाखैरयुध्यन्त महारणे । अनुह्लादस्तु संक्रुद्धो देवतानां महाचमूं ।
ममन्थ परमायस्तो वनान्यग्निरिवोत्थितः । रुधिराक्रान्ताश्च बहवः शेरते योधसत्तमाः ।　११८७०
निकृत्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः । अनुह्लादस्य विक्रान्तो देवत्वाग्रौ विषोपमान् ।
युध्यमानस्य समरे व्यसृजन्निशितान् शरान् । धनाधिपेन विद्धस्य अनुह्लादस्य संयुगे ।
अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः । अथ बाणसहस्रेण विस्तीर्णं दानवोत्तमः ।
विव्याध समरे क्रुद्धो दण्डपाणिरिवान्तकः । कुबेरस्तु शरैर्भिन्नः समन्तात् क्षतजोक्षितः ।
रुधिरं परिसुस्राव गिरिः प्रस्रवणैरिव । लब्ध्वा स तु पुनः संज्ञां रोषरक्तेक्षणः सुरः ।　११८७५
गदामथ समासाद्य भीमां भीमपराक्रमः । चिक्षेप दैत्यमुद्दिश्य बलवान् क्रोधमूर्च्छितः ।
अप्राप्तामन्तरे सोऽथ तां गदां गदयाऽसुरः । बभञ्ज विनदन् क्रुद्धस्तदाश्चर्य्यमभूत्तदा ।
प्रगृह्य तु गदां भूयो अभिदुद्राव दानवं । तमापतन्तं दृष्ट्वैव अनुह्लादो महाबलः ।
गिरिशृङ्गमथोत्पाट्य कैलासाचलसन्निभं । धनाधिपं प्रदुद्राव व्यादितास्य इवान्तकः ।
तमन्तकमिवायान्तमजय्यं सकलैः सुरैः । ग्रसन्तमिव दैतेयं त्रैलोक्यमखिलं तथा ।　११८८०
तमालोक्य तथारूपं धनाध्यक्षो रणं भयात् । अपहाय ययौ तत्र यत्र देवः शचीपतिः ।
तस्य चातिमहत् कर्म्म दृष्ट्वा वित्तपतिस्तदा । जगाम भयसंत्रस्तो यत्र देवः शचीपतिः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे एकपञ्चाशदधिकद्विशतोऽध्यायः ॥ २५१ ॥

॥ वैशम्पायन उवाच ॥ विप्रचित्तिस्तु वरुणं दैत्यानामधिपोऽव्ययः । अवाकिरच्छरैः क्रुद्धो दीप्तैरिव महोरगैः ।
संदह्यमानो दैत्येन दीप्तैः शरगभस्तिभिः । नाभ्यजानत कर्त्तव्यं संग्रामे स जलेश्वरः ।
सर्व्वलोकेश्वरस्यैव परमेष्ठी प्रजापतिः । नाशक्नोद्यतः स्रातुं विप्रचित्तेर्जलाधिपः ।　११८८५
वज्रो नाम महाव्यूहो निर्भयः सर्व्वतोमुखः । संव्यूह्य प्रत्ययुध्यन्त दानवा देववाहिनीं ।
अग्निज्वालासमन्तत्र रविमण्डलसन्निभं । मुखमाभाति दैत्यस्य विप्रचित्तेर्महात्मनः ।
वरुणस्तु महातेजा विप्रचित्तिं महासुरं । प्रदहन्निव तेजोभिर्जिगीषुः प्रत्यवैक्षत ।
स्रग्दाममालाभरणं दत्तपञ्चाङ्गुलान्तरं । जग्राह परिघं दैत्यः कैलासशिखरोपमं ।
पिनद्धं काञ्चनैः पट्टैर्हेममालिनमायसं । यमदण्डोपमं घोरं दैत्यानां भयनाशनं ।　११८९०

भ्रामयामास तं क्रुद्धो महाशक्रध्वजोपमं । विननाद विवृत्ताक्षो विप्रचित्तिर्महासुरः ।
स कण्ठस्थेन निष्केण भुजस्थैरपि चाङ्गदैः । कुण्डलाभ्यां विचित्राभ्यां स्रजा चैव विचित्रया ।
दानवो भूषणैर्भाति परिघेणायसेन च । यथेन्द्रधनुषा मेघः स विद्युत्स्तनयित्नुमान् ।
प्रस्फोट्य परिघाग्रेण वायुस्कन्धं महात्मनः । प्रजज्वाल सधूमार्चिः वायुजनितो ऽनलः ।
विद्याधरगणैः सङ्घैर्गन्धर्व्वनगरैरपि । सह चैवामरावत्या सिद्धलोकैस्तथा सह । ११८९५
ग्रहनक्षत्ररचितं सार्कचन्द्रविभूषितं । दैत्येन्द्रपरिघोद्धूतं भ्रमतीव नभस्तलं ।
दुरासदः स संजज्ञे परिघाभरणः प्रभुः । सुरेन्धनोऽसुरेन्द्राग्निर्युगान्ताग्निरिवोत्थितः ।
त्रिदशा वरुणश्चैव न शेकुः स्पन्दितुं भयात् । तथावीतिर्मघवांश्च कौशिको वासवः प्रभुः ।
भास्करप्रतिमं घोरं परिघं रौद्रदर्शनं । पातयामास सेनायां जलेशस्य स दानवः ।
पतता तेन संग्रामे जलेशस्य महात्मनः । भूतानां दशसाहस्रं परिघेण समाहतं । ११९००
तेषां गात्राणि चासाद्य व्यशीर्य्यत सहस्रधा । विशीर्य्यमाणो विबभावुल्कापातमिवाम्बरे ।
भूयस्तेनं तदा भ्राम्य वरुणायाभ्यपातयत् । पात्यमाने तदा तस्मिन् शरीरे वरुणस्य च ।
स भिन्नः परिघो घोरो देवगात्रे व्यशीर्य्यत । शीर्य्यमाणस्य चूर्णानि खद्योता इव चाम्बरे ।
स तु तेन प्रहारेण न चचाल जलाधिपः । परिघेणाहतः संख्ये यथा भूमिचलेऽचलः ।
स्वसैन्येष्वथ भग्नेषु भिन्नदेहेषु चाहवे । मुहूर्त्तमगमत् क्षोभमपाम्पतिरमर्षणः । ११९०५
सोऽमर्षवशमापन्नो वरुणोऽमितविक्रमः । सर्व्वसंहारमकरोत् स्वपक्षस्थोऽरिमर्द्दनः ।
स सागरैश्चतुर्भिश्च वृतो दीप्तैश्च पन्नगैः । शङ्खमुक्तामणिनिभो बिभ्रत्तोयमयं वपुः ।
पाण्डरोद्धूतवसनो नानारत्नचिताङ्गदः । वरुणः पाशहस्तः श्रीमान् कूर्म्ममीनगणाकुलः ।
वरुणस्तु तदा क्रुद्धस्तान्निरीक्ष्य स्वसैनिकान् । उवाच दृष्ट्वा युध्यध्वं दानवानां जिघांसया ।
अहमेनं हनिष्यामि भयं मुक्त्वा तु युध्यत । ततस्ते पन्नगाः सर्व्वे महार्णवसमाश्रयाः । ११९१०
जघ्नुर्दैत्यान् रणमुखे नर्द्दन्तो जयगृद्धिनः । ते तु नालीकनाराचैर्गदाभिर्मुषलैस्तथा ।
अभ्यघ्नन्दानवान्दीप्ता मुदिता वरुणानुगाः । विप्रचित्तिस्तु संक्रुद्धो महाबलपराक्रमः ।
पन्नगानां शरीराणि व्यधमद्रणमूर्द्धनि । गारुडेन च सोऽस्त्रेण पन्नगान्दानवोत्तमः ।
घातयामास समरे गारुडैः पन्नगाशनैः । स शरैः सूर्य्यसंकाशैः शातकुम्भविभूषितैः ।
पन्नगान् समरे वीरः प्रममाथ सुदुर्ज्जयः । ते भिन्नगात्राः समरे पन्नगाः शरपीडिताः । ११९१५
पेतुर्व्यथितसर्व्वाङ्गा गजा इव महागजैः । तं तपन्तमिवादित्यं दीप्तैर्व्यालगभस्तिभिः ।
अभ्यधावत संक्रुद्धः समरे वरुणः प्रभुः । ततस्ते दानवाश्चैव भिन्नदेहाः सहस्रशः ।
व्यथिता विद्रवन्ति स्म दिशो दश विचेतसः । इन्द्रस्यार्थे पराक्रम्य वरुणस्तत्रकोपितः ।
विमर्द्दमानो युयुधे समरे पाशधृग्धरः । वारुणाः पर्व्वताभैश्च मुष्टिभिश्च बलोत्कटाः ।
अभ्यवर्त्तन्त समरे विप्रचित्तिं महासुरं । तांश्चक्षेपैश्च शिलाभिश्च प्रहरन्तो बलोत्कटान् । ११९२०

अपोहत महातेजा विप्रचित्तिर्महासुरः । ततः पावकसङ्काशैः सपुङ्खैः शीघ्रगामिभिः ।
वरुणस्य महावेगान् बिभेद समरे हयान् । कर्म्मणा तेन महता विप्रचित्तेर्महात्मनः ।
अघोराख्याकृतस्येव तेजः समभिवर्द्धत । स शरैः सूर्य्यसङ्काशैः सुपुङ्खैः शीघ्रगामिभिः ।
वारुणीं तां महासेनां निर्म्ममन्थ महाबलः । योधास्तां सायकाक्रान्तां शरजालेन मोहितां ।
शूलपट्टिशभिन्नाश्च चकार रुधिरोक्षितां । अभिद्रुतस्तु दैत्येन ससैन्यः सलिलाधिपः ।    ११८२५
महेन्द्रं शरणं प्राप्तो विप्रचित्तेर्भयार्द्दितः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

॥ वैशम्पायन उवाच ॥ पराजयन्तु दैत्यानां दृष्ट्वाऽग्निस्त्रिदशोत्तमः । चकार बुद्धिं दैत्यानां वधे ब्रह्मर्षिभिः स्तुतः ।
स्वयम्प्रभायाः शाण्डिल्या यः पुत्रो हव्यवाहनः । हिरण्यरेताः पिङ्गाक्षो देवदूतो हुताशनः ।
लोहितो लोहितग्रीवो हर्त्ता दाता हविः कविः । पावको विश्वभुग्देवः सर्व्वदेवाननः प्रभुः ।
सुमनात्मा सुवर्च्चस्कः सहस्रार्च्चिर्विभावसुः । कृष्णवर्त्मा चित्रभानुर्देवाग्र्यश्चैव स्वराट् ।    ११८३०
लोकसाक्षी द्विजहुतप्रियोऽर्च्चिष्मान् वषट्कृतः । हव्यभवः शमीगर्भः स्वयोनिः सर्व्वकर्म्मकृत् ।
पावनः सर्व्वभूतानां विदग्धानां तपोनिधिः । शमनः सर्व्वपापानां लेलिहानस्तनूनपात् ।
प्रदक्षिणावर्त्तशिखः शुचिरोमा महाद्युतिः । हव्यभुग्भूतभव्येशो हव्यभागहरो हरिः ।
सोमपः स महातेजा भूतेशः सर्व्वभूतपात् । अच्युतः पावको भूतिर्भूतात्मा वै स्वधाधिपः ।
स्वाहापतिः सामगीतः सोमपूताशनोऽर्च्चिभुक् । देवदेवो महाक्रोधो रुद्रात्मा ब्रह्मसंस्तुतः ।    ११८३५
लोहिताश्वं वायुचक्रं रथमास्थाय भूतकृत् । धूमकेतुर्धूमशिखो नीलवासाः सुरोत्तमः ।
उद्यम्य दिव्यमाग्नेयमस्त्रं देवो रणे महत् । दानवानां सहस्राणि प्रयुतान्यर्बुदानि च ।
समरे विजयाकाङ्क्षी ददाहानिलसारथिः । प्राणो यः सर्व्वभूतानां देहे तिष्ठति पञ्चधा ।
दत्ता यस्य हुताशस्य सखा च प्रभुरीश्वरः । प्रभञ्जनो यो लोकानां युगान्ते सर्व्वनाशनः ।
सप्तस्वरगता यस्य योनिर्गीर्भिरुदीर्य्यते । यो ह्याकाशमयो देवो दूरगः शब्दसंभवः ।    ११८४०
यः कर्त्ता च विकर्त्ता च गतिर्मतिमतां प्रभुः । वेदकर्त्ता समो लोके ब्रह्मणा यः सनातनः
अमूर्त्तिमन्तं यं प्राहुर्महाभूतं महत्तरं । सोऽग्निं समीरयामास शमीगर्भं समीरणः ।
त्रिदिवारोहिभिर्ज्वालैर्धूमभासो दिशो दश । दानवानामभावाय युगान्ताग्निरिवाभवत् ।
मेदोमज्जानदीपङ्कां केशशैवलसंवृतां । योधशीर्षोपलवतीं हतद्विपतटोत्कटां ।
शोणितोदां रणे दृष्ट्वा संग्रामसरितं विभुः । वह्निः प्रस्कन्दयामास दैत्यानां भयवर्द्धनः ।    ११८४५
ततोऽग्निर्द्दैतिजान् सर्व्वान् प्रह्लादप्रमुखांस्तदा । पराजयामास विभुः क्रोशमानान्महाहवे ।
केचित्प्रदीप्तैर्मुकुटैः केचिद्दीप्तैः शिरोरुहैः । केचिद्गात्रैः प्रदीप्तैश्च केचिद्दीप्तैर्मुखाननैः ।
केचित् प्रदीप्तैरुरुभिः केचिच्छत्रैर्ध्वजैरथैः । असुरास्तत्र दृश्यन्ते प्रदीप्तेनाग्निना वृताः ।
असुरा भयवित्रस्ता विद्रुताश्च दिशो दश । त्यक्तायुधानि सर्व्वाणि विप्रकीर्णरथध्वजाः ।

ततः प्रयान्तं त्रिदशेन्द्रवज्जितो महासुरेन्द्रं बलिमुत्तमार्चिषं। तमन्वगच्छन्नसुरा महारथाः दिशश्च मुख्याः पद्मवक्त्र
मज्जुलाः।

महाजटाभारधरास्तपस्विनस्तदा समाधिविधिमन्नमन्दुलेः। अभिष्टुवन्तः कवयः समन्ततः बलिं प्रयान्तं रणमूर्द्धनि
स्थिताः। १२९८०

प्रतप्तजाम्बूनदचित्रभूषणैर्दिव्यैश्च रत्नैर्विविधैरलङ्कृतः। विराजमानः परमेण वर्चसा रथे विभात्यग्निरिवाऽसुरेश्वरः।
स वै तदा प्रत्युपयादितं बलं बलिर्ददर्शातुलवीर्य्यविक्रमः। जलागमे भीमदिवाभ्रमण्डलं विकीर्य्यमाणं नभसीव
वायुना।

ततो ददर्शाथ बलानि सर्व्वतो रथी सुराणां रिपुराट् प्रतापवान् वै। अनुप्लुतान्यप्यरराणि तत्र वै धनुर्द्धराणाञ्च सर्व्वसैन्यपु।
स शूलशक्त्यृष्टिगदासिसायकान् विपर्ययं समरे महात्मा। जगाद सिंहवन्नदन्नागराजतामसे नीयदस्य वीर्य्यवान्।
दिव्यास्त्रधूमो भुजवेगवायुर्महाबलः शोषयन्निव चैव। महादिवसमिव कालवह्निः सुधीरघोषो विभ्रमो रथी बलिः ॥१२९८५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

॥ वैशम्पायन उवाच ॥ बलिना तु सुराः सर्व्वे सर्व्वशिला सुराधिपं। रणे शरवर्षैर्भिन्नाः सर्वे वै पराजिताः।

विमुखा या तु दैत्येन्द्रैर्वध्यमाना महाचमूः। जितास्तु बलिना देवाः शक्रमाक्रन्दवान्वयं।

॥ देवा ऊचुः ॥ भवानिन्द्रश्च धाता च लोकानां प्रभुरव्ययः। नमस्ते नितमस्कार्य्य च तथैवाप्रतिमद्युतिः।

विद्रुतानीह सैन्यानि बलाश्माभिः सुरेश्वर। रथवक्त्रध्वजाग्राणि छिन्नानि महासुरैः।

रथहस्त्यश्वयौधाश्च पादाताश्च सहस्रशः। निर्व्वचनाश्च शतशो गदामुसलपट्टिशैः। १२९९०

महाभैरवरूपं हि दैत्येन्द्रैश्च कृतं रणे। किमुपेक्षसि दैत्येन्द्रैर्वध्यमानां महाचमूं।

त्रायस्व त्रिदशश्रेष्ठ शरणं शरणागतान्। श्रुत्वा तु वचनं तेषां देवानाममराधिपः।

सम्वर्त्तकाग्निवत् क्रुद्धः सर्व्वानदहतासुरान्। दिवाकरकराकारं किरीटं धारयन् प्रभुः।

वैदूर्य्योत्करसंकाशो नानारत्नचिताङ्गदः। मयूररामा धूमाश्च शतवाङ्कः सहस्रदृक्।

हरिरेको हरिश्मश्रुर्नागकेतुर्महाबलः। वज्रमहरः श्रीमान् योगी शतशिरोधरः। १२९९५

सधनुर्व्वज्रहस्ताभः शतादित्यसमप्रभः। देवमुख्यैश्च देवैश्च मनुयातः सहस्रशः।

सामगैः सजपैश्चापि स्तूयमानो महर्षिभिः। शतपर्व्व महारौद्रं स्फोटनं सर्व्वतोमुखं।

प्रगृह्य विततं वज्रं दीप्तं रौद्रमसहाशिनं। दैत्यान्योधयत् सर्व्वान्महेन्द्रः पाकशासनः।

अधृष्यः सर्व्वभूतानामदित्या दयितः सुतः। ततः प्रवृत्तः संग्रामो बलेरिन्द्रेश्वरस्य च।

उभाभ्यामतिवीर्य्याभ्यां तुमुलो लोमहर्षणः। अतिवीर्य्यबलोदग्रं तुमुलं लोमहर्षणं। १३०००

प्रह्लादेन स्तुतिशतैः कर्म्मभिर्व्यवस्थितैः। प्रबोधितो दैत्यपतिरश्विरिन्द्र इवाचभौ।

सुरासुरेन्द्रयोर्दृष्ट्वा संग्रामं लोमहर्षणं। देवानां दानवानाञ्च भूयो युद्धमभूत्तदा।

ततोऽविध्यन्महेन्द्रस्तं बलिमस्त्रैर्महासुरं। तान्यस्त्राणि महानाऽविच्छेद शतधा बलिः।

ततः क्रुद्धः पुनस्तत्र सोऽस्त्रं दुर्वारणं महत्। आग्नेयमथ सन्धाय चिक्षेपेन्द्रो महाबलः।

तद्दृष्ट्वा खे समागच्छत् प्रज्वलानलसन्निभं । भ्रमयामास दैत्येन्द्रो बाहुवेगेन बुद्धिमान् । १४००५
संक्रुद्धो मघवान् वज्रमग्रहीत् पर्व्वतोपमं । हन्तुकामो रणश्लाघी बलिं दैत्याधिपं रणे ।
ततः शुश्राव देवेन्द्रः कौशिको हरिवाहनः । अशरीरां तदा वाणीं तस्मिन् शृण्वति वासवे ।
निवर्त्तस्व महाबाहो सुराणां नन्दिवर्द्धन । पुरन्दर सुरश्रेष्ठ न जेष्यसि बलिं रणे ।
तपसा युक्तमो दैत्यो वरदानेन चाधिकः । स्वयम्भूपरितोषाच्च बलाद्वीर्य्याच्च वासव ।
नैव शक्यस्त्वया जेतुं चिरद्भिर्वा सुरेश्वर । यो ह्यस्य भगवान् जेता तं शृणुष्व सनातनं । १४०१०
ब्रह्मणो यो हि सर्व्वस्वं देवानां वै परा गतिः । परं रहस्यं धर्म्मस्य परस्य च परा गतिः ।
परात्परतरः श्रीमान् परावरगतिः प्रभुः । व्यक्ताव्यक्तो महाभूतो भूतभव्यभवत्प्रभुः ।
सहस्रशीर्षः पुरुषः सहस्राक्षः सहस्रपात् । शङ्खचक्रगदापाणिः पीतवासाः सुरारिहा ।
जेताऽजय्यो जयः श्रीमान् सोऽस्य जेता भविष्यति । श्रुत्वा दिव्यान्तु परमां वाणीं तामशरीरिणीं ।
अपयातो रणाच्छक्रः सह सर्व्वैर्मरुद्गणैः । अपयाते तु देवेन्द्रे कौशिके हरिवाहने । १४०१५
सिंहनादो महानासीद्दानवानां महाहवे । ततः किलकिलाशब्दः क्ष्वेडितास्फोटनिस्वनः ।
शङ्खानां निनदश्चैव योधानां वल्गितस्वनः । वादित्राणाञ्च निर्घोषस्तुमुलश्चाभवत्तदा ।
जयशब्दश्चैव देवानान्तु पराजये । ससैन्यो दैत्यराजस्तु प्रयातः ससुहृद्गणैः ।
महेन्द्रो विबभौ दैत्यो हिरण्यकशिपुर्यथा ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे शक्रापयाने पञ्चपञ्चाशदधिकद्विशततोऽध्यायः॥२५५॥

॥ वैशम्पायन उवाच ॥ निष्प्रयत्नेषु देवेषु त्रैलोक्ये दैत्यपालिते । अथ बलेर्व्बलवतो मयशम्बरपोषिते । १४०२०
शुद्धासु दिक्षु सर्व्वासु प्रवृत्ते धर्म्मकर्म्मणि । यथावृते धर्म्मपथे त्वयनस्थे दिवाकरे ।
प्रह्लादशम्बरमयैरनुह्लादेन चैव ह । दिक्षु सर्व्वासु गुप्तासु गगने दैत्यपालिते ।
दैत्येषु मखशोभायै स्वर्गार्थं दर्शयत्सु च । प्रकृतिस्थे तदा लोके वर्त्तमाने च सत्पथे ।
अभावे सर्व्वपापानां भावे चैव तदा स्थिरे । भावे तपसि सिद्धानामभावे पापकर्म्मणां ।
चतुष्पादे स्थिते धर्म्मे अधर्म्मे पादविग्रहे । प्रजापालनयुक्तेषु भ्राजमानेषु राजसु । १४०२५
स्वधर्म्मसंप्रयुक्तेषु सर्व्वाश्रमनिवासिषु । अभिषिक्तोऽसुरैः सर्व्वैर्दैवराज्ये बलिस्तदा ।
हृष्टेष्वसुरसंघेषु नदत्सु मुदितेषु च । अथाभ्युपगता लक्ष्मीर्बलिं पद्मासने स्थिता ।
पद्मोद्यतकरा देवी वरदा शुभवेशिनी ।

॥ श्रीरुवाच ॥ बले बलवतां श्रेष्ठ दैत्यराज महाद्युते । प्रीताऽस्मि तव भद्रं ते देवतानां पराजये ।
यत्त्वया युधि विक्रम्य देवराजः पराजितः । दृष्ट्वा ते परमं सत्त्वं ततोऽहं स्वयमागता । १४०३०
नाश्चर्य्यं दानवश्रेष्ठ हिरण्यकशिपोः कुले । प्रसूतस्यासुरेन्द्रस्य तव कर्म्मेदमीदृशं ।
विशेषितस्त्वया राजन्दैत्येन्द्रः स पितामहः । येन भुक्तं हि निखिलं त्रैलोक्यमिदमव्ययं ।
विशेषतस्तव विभो सर्व्वो धर्म्मः स्थितः पथि । तेन त्रैलोक्यमव्यग्रं भोक्ष्यस्यमितविक्रम ।

एवमुक्ता तु सा देवी तस्यो दैत्यस्य वलिं । प्रविष्टा वरदा सौम्या सर्व्वभूतमनोरमा ।

शिष्टाश्च देव्यः प्रवरा ह्रीः कीर्त्तिर्द्युतिरेव च । प्रभा धृतिः क्षमा भूतिर्नीतिर्विद्या दया मतिः । १४०३५

स्मृतिर्मेधा तथा तुष्टिः पुष्टिर्मुक्तिस्तथैव च । श्रुतिः प्रीतिरिडा कान्तिः शान्तिः पुष्टिः क्रिया तथा ।

सर्व्वाश्चाप्सरसो दिव्या नृत्यगीतविशारदाः । उपतस्थुर्महात्मानं बलिमिन्द्रं महारथं ।

प्रतिपन्नन्तु दैतेयैस्त्रैलोक्यं सचराचरं । प्राप्तश्चैश्वर्य्यमतुलं बलिना ब्रह्मवादिना ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे षट्पञ्चाशदधिकद्विशततोऽध्यायः ॥ २५६ ॥

॥ जनमेजय उवाच ॥ पराजिताः सुरा दैत्यैः किमकुर्व्वत वै मुने । कथञ्च त्रिदिवं लब्धं भूयो देवैर्द्विजोत्तम ।

॥ वैशम्पायन उवाच ॥ श्रुत्वा वाणीन्तु तां दिव्यां सह देवैः सुराधिपः । प्राग्दिशं प्रस्थितः श्रीमानदित्यालयमुत्तमं । १४०४०

प्राप्यादित्यालयं शक्रः कथयामास तां गिरं । अदित्या या तदा युद्धे तेन दिव्या पुरा श्रुता ।

॥ अदितिरुवाच ॥ यद्येवं पुत्र युष्माभिर्न शक्यो हन्तुमाहवे । बलिर्विरोचनसुतः सर्व्वैरेव मरुद्गणैः ।

सहस्रशिरसा हन्तुं केवलं शक्यतेऽसुरः । तेनैकेन सहस्राक्ष न ह्यन्येन शतक्रतो ।

तदः पृच्छामि पितरं कश्यपं ब्रह्मवादिनं । पराजयार्थं दैत्यस्य बलेस्तस्य महात्मनः ।

ततोऽदित्या सह सुराः सम्प्राप्ताः कश्यपान्तिकं । अपश्यन् कश्यपं तत्र मुनिं दीप्ततपोनिधिं । १४०४५

आद्यं देवगुरुं दिव्यं क्लिन्नं चिपववाम्बुभिः । तेजसा भास्कराकारं गौरमग्निशिखाप्रभं ।

न्यस्तदण्डं तपोयुक्तं बद्धकृष्णाजिनोत्तरं । वल्कलाजिनसंवीतं जटामण्डलभूषितं ।

हुताशमिव दीप्यन्तं साज्यमन्त्रपुरस्कृतं । स्वाध्यायनिरतं नित्यं वपुष्मन्तमिवानलं ।

तं ब्रह्मवादिनां श्रेष्ठं सुरासुरगुरुं प्रभुं । प्रतपन्तमिवादित्यं मारीचं दीप्ततेजसं ।

यः स्रष्टा सर्व्वभूतानां प्रजानां पतिरुत्तमः । आत्मभावविशेषेण तृतीयो यः प्रजापतिः । १४०५०

ततः प्रणम्य ते वीराः सहादित्या सुरर्षभाः । ऊचुः प्राञ्जलयः सर्व्वे ब्रह्माणमिव मानसाः ।

यच्छ्रुतं युधि शक्रेण सरस्वत्या समीरितं । अजेयस्त्रिदशैः सर्व्वैर्बलिर्दानव इत्युत ।

श्रुत्वा तु वचनं तेषां पुत्राणां कश्यपस्तदा । चकार बुद्धिं गमने ब्रह्मलोकाय लोककृत् ।

॥ कश्यप उवाच ॥ पुत्रा गच्छाम सदनं ब्रह्मणः परमाद्भुतं । यथाश्रुतञ्च तत्रैव ब्रह्मणे वदतानघाः ।

॥ वैशम्पायन उवाच ॥ ततो दित्या सह सुरा यान्तं कश्यपमन्वयुः । प्रस्थितं ब्रह्मसदनं देवर्षिगणसेवितं । १४०५५

ते मुहूर्त्तेन संप्राप्ता ब्रह्मलोकं दिवौकसः । दिव्यैः कामगमैर्यानैर्यथार्हं सुमहाबलाः ।

ब्रह्माणं द्रष्टुमिच्छन्तस्तपसो राशिमव्ययं । अभ्यगच्छन्त विस्तीर्णां ब्रह्मणः परमां सभां ।

षट्पदोद्गीतमधुरां सामगीतविमिश्रितां । श्रेयस्करीममित्रघ्नीं दृष्ट्वा संजहृषुर्मुदा ।

ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः । ऋचो बह्वृचमुख्यैश्च प्रेर्य्यमाणपदाक्षराः ।

शुश्रुवुस्तेऽमरव्याघ्रा विततेषु च कर्म्मसु । यज्ञवेदाङ्गविदुषां पदक्रमविदां तथा । १४०६०

ब्रह्मर्षीणाञ्च घोषेण सा बभूव निनादिता । यज्ञसंस्तवविद्भिश्च शिक्षावद्भिस्तथा द्विजैः ।

शब्दनिर्व्वचनार्थज्ञैः सर्व्वविद्याविशारदैः । मीमांसाहेतुवाक्यज्ञैः सर्व्ववादविशारदैः ।

हृष्टपुष्टस्वरैस्तत्र द्विजेन्द्रैर्व्वेदभाषितैः । नादितं ब्रह्मसदनं प्रवरं देवसद्मवत् ।
ते तत्र समनुप्राप्ताः शृण्वन्तो वै ध्वनिं सुराः । पूताव्यात्मशरीराणि मेनिरे तु न संशयः ।
तूष्णीम्भूता एकचित्ता ब्रह्माणं गन्तुमानसाः । विस्मयोत्फुल्लनयना निरैक्षन्त परस्परं । १४०६५
नमस्कुर्व्वन्ति च पुनर्ब्रह्माणं परमं प्रभुं । मनसैव सुरश्रेष्ठाः पुरस्कृत्य तु कश्यपं ।
पुनः संघुष्टपरमं वेदोद्धरणनिस्वनं । गम्भीरोदारमधुरं सुस्वरं हंसगद्गदं ।
ऐकाग्र्यानाम्नसंयोगसमवायविशारदैः । लोकायतिकमुख्यैश्च शुश्रुवुः स्वरमीरितं ।
तत्र तत्र च विप्रेन्द्रान् नियतान् संशितव्रतान् । जपहोमपरान्मुख्यान् ददृशुः कश्यपात्मजाः ।
तस्यां सभायामास्ते वै ब्रह्मा लोकपितामहः । सुरासुरगुरुः श्रीमान् विदधद्देवमायया । १४०७०
उपासते च तत्रैनं प्रजानां पतयः प्रभुं । दक्षः प्रचेताः पुलहो मरीचिश्च द्विजोत्तमः ।
भृगुरत्रिर्वशिष्ठश्च गौतमो नारदस्तथा । विद्या मनोऽन्तरीक्षञ्च वायुस्तेजो जलं मही ।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च । प्रकृतिश्च विकारश्च यथान्यत् कारणं भुवः ।
साङ्गोपाङ्गाश्चतुर्व्वेदाः सरहस्यपदक्रमाः । क्रियाश्च क्रतवश्चैव संकल्पः प्राण एव च ।
एते चान्ये च बहवः स्वयम्भुवमुपस्थिताः । अर्थो धर्म्मश्च कामश्च द्वेषो हर्षश्च सर्व्वदा । १४०७५
शुक्रो बृहस्पतिश्चैव संवर्त्तो बुध एव च । शनैश्चरश्च राहुश्च ग्रहाः सर्व्वे तथैव च ।
मरुतो विश्वकर्म्मा च नक्षत्राणि च भारत । दिवाकरश्च सोमश्च ब्रह्माणं समुपासते ।
सावित्री दुर्गतरणी वाणी सप्तविधा तथा । सर्व्वाणि स्मृतिशास्त्राणि गाथाश्च निगमास्तथा ।
भाष्याणि सर्व्वशास्त्राणि देहवन्ति विशाम्पते । क्षणा लवा मुहूर्त्ताश्च दिवा रात्रिश्च भारत ।
अर्द्धमासाश्च मासाश्च ऋतवः षट् तथैव च । संवत्सराश्चतुर्युगं सन्ध्या रात्रिश्चतुर्विधा । १४०८०
कालचक्रञ्च यद्दिव्यं नित्यमं ध्रुवमव्ययं । एते चान्ये च बहवः स्वयम्भुवमुपस्थिताः ।
तां प्रविष्टः सभां दिव्यां ब्रह्मणः सर्व्वकामदां । कश्यपस्त्रिदशैः सार्द्धं पुत्रैर्धर्म्मविदाम्वरः ।
सर्व्वतेजोमयं दिव्यं ब्रह्मर्षिगणसेवितं । ब्राह्म्या श्रिया दीप्यमानमचिन्त्यं विगतक्लमं ।
ब्रह्माणं वीक्ष्य ते सर्व्वे परमासनमास्थितं । शिरोभिः प्रणता दूरं परमेष्ठिनमव्ययं ।
शिरोभिः स्पृश्य चरणौ नियताः परमात्मनः । विमुक्ताः सर्व्वपापेभ्यः शान्ता विगतकल्मषाः । १४०८५
दृष्ट्वा तु तान् सुरान् सर्व्वान् कश्यपेन सहागतान् । आह ब्रह्मा महातेजा देवानां प्रभुरीश्वरः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने ब्रह्मलोकागमने सप्तपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५७ ॥

॥ ब्रह्मोवाच ॥ यदर्थमिह संप्राप्ता भवन्तः सर्व्व एव हि । विज्ञातान्वयमव्ययमेनमर्थं महाबलाः ।
भविष्यति च वः सोऽर्थः काङ्क्षितो यः सुरोत्तमाः । बलेर्दानवमुख्यस्य यो विजेता भविष्यति ।
न केवलं सुरारीणामेको जेता स विश्वकृत् । त्रैलोक्यस्यापि जेताऽसौ देवानामपि च प्रभुः ।
यो धाता सर्व्वभूतानां विश्वं यस्य सनातनः । पूर्व्वजं यं सदा प्राहुर्वेदगर्भनिदर्शनं । १४०९०
आत्मा वै येन विभुना कृतोऽजेयो महात्मना । बलेरतुलवीर्य्यस्य विश्वस्य जगतस्तथा ।

प्रभवः स हि सर्व्वेषामस्माकमपि पूर्व्वजः । अचिन्त्यः स हि विश्वात्मा योगयुक्तः परन्तपः ।
तं देवापि महात्मानं न विदुः कोऽप्ययमिति । देवान् सर्व्वांश्च विश्वश्च स वेत्ति पुरुषोत्तमः ।
तस्यैव तु प्रसादेन प्रवक्ष्ये परमां गतिं । यत्र योगं समास्थाय तपश्चरति दुश्चरं ।
क्षीरोदस्योत्तरे कूले उदीच्यां दिशि देवताः । अमृतं नाम परमं स्थानमाहुर्मनीषिणः । १४०९५
भवन्तस्तत्र वै गत्वा तपसा शंसितव्रताः । अमृतं स्थानमासाद्य तपश्चरत दुश्चरं ।
ततः श्रोष्यथ विस्पष्टां स्निग्धगम्भीरनिस्वनां । उष्णान्ते तोयपूर्णस्य तोयदस्य समस्वनां ।
दिव्यां स्पष्टाक्षरपदां रम्यामभयदां शिवां । वाणीं परमसंस्कारां वरदां ब्रह्मवादिनीं ।
दिव्यां सरस्वतीं सत्यां सर्व्वकल्मषनाशिनीं । सर्व्वदेवातिदेवस्य भाषितां भावितात्मनः ।
तस्य व्रतसमाप्तौ तु यावद्व्रतविसर्ज्जनं । अमोघस्य तु देवस्य विश्वरूपं महात्मनः । १४१००
स्वागतं वः सुरश्रेष्ठा मत्सकाशमिहागताः । कस्य वा कं वरं देवा ददानि वरदः स्थितः ।
तं दितिः कश्यपश्चैव गृह्णीयातां वरं ततः । प्रणम्य शिरसा पादौ तस्मै योगात्मने तदा ।
भगवानेव नः पुत्रो भवत्विति न संशयः । उक्तश्च परया भक्त्या तथाऽस्त्विति स वक्ष्यति ।
देवा ब्रुवन्तु ते सर्व्वे भ्राता नस्त्वं भवेति च । तथाऽस्त्विति च स श्रीमान् वक्ष्यते सर्व्वलोककृत् ।
तस्माद्देवं गृहीत्वा तु वरं त्रिदशसत्तमाः । कृतकृत्याः पुनः सर्व्वे गन्तार्ध्वं स्वं समालयं । १४१०५
तथाऽस्त्विति सुराः सर्व्वे कश्यपोऽदितिरेव च । ब्रह्माणं वन्द्य चरणौ गताः सौम्यां दिशं प्रति ।
तेऽचिरेणैव संप्राप्ताः क्षीरोदं सरितां पतिं । यथोद्दिष्टं भगवता ब्रह्मणा ब्रह्मवादिना ।
तेऽतीत्य सागरान् सर्व्वान् पर्व्वतांश्च सकाननान् । नदीश्च विविधा दिव्याः पृथिव्यां सुरसत्तमाः ।
अपश्यंस्ते सुघोराश्च सर्व्वसत्त्वविवर्ज्जितां । अभास्कराममर्य्यादां तमसा संवृतां दिशं ।
अमृतं स्थानमासाद्य कश्यपेन सुराः सह । दीक्षिताः कामदं दिव्यं व्रतं वर्षसहस्रिकं । १४११०
प्रसादार्थं सुरेशाय तस्मै योगाय धीमते । नारायणाय देवाय सहस्राक्षाय भूतये ।
ब्रह्मचर्य्येण मौनेन स्थानवीरासनेन च । क्रमेण च सुराः सर्व्वे तपो दुश्चरमाश्रिताः ।
कश्यपस्तत्र भगवान् प्रसादार्थं महात्मनः । उदैरयत वेदोक्तं यमाहुः परमं स्तवं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने अष्टपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५८ ॥

॥ कश्यप उवाच ॥ नमोऽस्तु ते देवदेवेश एकशृङ्ग वराह वृषार्च्चिष सिन्धुवृष वृषाकपे सुरवृष सुरनिर्म्मित अनिर्म्मित भद्र कपिल विष्वक्सेन ध्रुव धर्म्म धर्म्मराज वैकुण्ठ वेतावर्त्त अनादिमध्यनिधन धनञ्जय शुचिश्रवः पृश्निज तृष्णिज अज अजय अमृतेशय सनातन विधातस्त्रिकाम त्रिधाम त्रिककुत्ककुद्मिन् दुन्दुभे महानाभ लोकनाभ पद्मनाभ लोकनाथ विरिञ्चे वरिष्ठ बहुरूप अक्षय अव्यय विरूप विश्वरूप सत्याक्षर हंसाक्षर हव्यभुक् खण्डपरशो शुक्र मुञ्जकेश हंस महाहंस महदक्षर हृषीकेश सूक्ष्म परमसूक्ष्म तुराषाट् विश्वमूर्त्ते सुराग्रज नील निस्तमो विरजस्तमो रजः सत्त्व सत्त्वधाम सर्व्वलोक सर्व्वलोकप्रतिष्ठ शिपिविष्ट सुतपस्तपोमय अज अग्रज धर्म्मनाभ गभस्तिनाभ धर्म्मनेमे सत्यधाम सत्याक्षर गभस्तिनेमे

यज्ञरथ विपाप्मन् त्वमेव समुद्रवास अजैकपात्सहस्रशीर्ष सहस्रचक्षित महाशीर्ष सहस्रदृक् सहस्रपात् अधोमुख महामुख महापुरुष पुरुषोत्तम सहस्रबाहो सहस्रमूर्त्ते सहस्रास्य सहस्रभुज सहस्राज सहस्रप्रभ सहस्रप्रख्यामाहुर्मेदाः ।

विश्वदेव विश्वसम्भव सर्व्वेषामेव देवानां योऽभग आद्योगतिः विश्वं त्वमात्ययनं विश्वं त्वामाहुः पुष्पहास परम वरद त्वमेव वषट्कार वौषट् ओङ्कारं त्वामेकमाहुरग्र्यं मखभागप्राशिनं ॥ १४।११५

शतधार सहस्रधार भूः भुवः स्वः भूर्भुवस्वः त्वमेव भूतभुक्च स्वधा त्वमेव ब्रह्ममय ब्रह्ममय ब्रह्मादिस्त्वमेव ॥

द्यौरसि पृथिव्यसि पूषाऽसि मातरिश्वाऽसि धर्म्मोऽसि मघवाऽसि होता पोता हन्ता नेता मन्ता होम्यहोता पर स्परस्त्वं होम्यहोता त्वमेव ॥

आपाऽसि विश्ववाक् धाता परमेण धाम्ना त्वमेव दिग्भ्यः स्रुक् स्रुवश्च इध्मोऽसि यज्ञ त्वमसि समिद्धस्त्वं गतिर्गतिमताम सि मोक्षोऽधिधाताऽसि गुह्योऽसि सिद्धोऽसि धन्योऽसि योगोऽसि परमोऽसि यज्ञोऽसि सोमोऽसि यूपोऽसि दीक्षाऽसि दक्षि णाऽसि विश्वमसि ।

स्थविष्ठ स्थविर विश्वतुराषाट् हिरण्यगर्भ हिरण्यनाभ हिरण्यनारायण नारायणाक्षर नृणामयन आदित्यवर्ण आ दित्य तेजो महापुरुष सुरोत्तम । आदिदेव पद्मनाभ पद्मेशय पद्माक्ष पद्मगर्भ हिरण्याप केशशुक्ल विश्वदेव विश्वतोमुख विश्वाक्ष स्थिवसम्भव विश्वभुक् त्वमेव ॥

भूर्विक्रम भुवर्विक्रम स्वर्विक्रम कमलावभुक्कनाकम सुविभुः प्रभाकरशम्भुः स्वयम्भूश्च भूतादिः । भूतात्मन् षड्ञ्चतुर्महा भूत विश्वभूत विश्वं त्वमेव विश्वगोप्ताऽसि विश्वसम्भव । पवित्रमसि होत्रमसि सत्यमसि तेजोऽसि सर्व्वमसि हविर्विश्वभुक् ऊर्द्ध कर्म्मन् अमृतेन्धन अमृतन्धम दिवस्पते ओतप्रोत विश्वसृक् विश्वपते घृतार्चिः अग्ने रोहित सुरासुरगुरो महादेव मृदेवदेवस्तु त द्रुहिन अनन्तकर्म्मन् वंश प्राग्वंश विश्वपास्त्वं त्वमेव विश्वं विभर्षि वरार्थिनो मत्वायस्वेति । १४।१२०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने महापुरुषस्तवे ऊनषष्ट्यधिकद्विशततोऽध्यायः ॥ २५९ ॥

॥ वैशम्पायन उवाच ॥ नारायणस्तु भगवान् श्रुत्वैतत्परमं स्तवं । ब्रह्मज्ञेन द्विजेन्द्रेण कश्यपेन समीरितं ।

स्निग्धगम्भीरनिर्घोषं जीमूतघननिःस्वनं । मनसा प्रीतियुक्तेन विबुधानां महात्मनां ।

उवाच वचनं सम्यक् हृष्टपुष्टपदाक्षरं । अकामात् षड्गुणे शब्दो दर्शनं नोपलभ्यते ।

श्रीमान् प्रीतमना देवः प्रोवाच प्रभुरीश्वरः ।

॥ विष्णुरुवाच ॥ प्रीतोऽस्मि वः सुरश्रेष्ठाः सर्व्वेषामेव निश्चयात् । वरं वृणुत भद्रं वो वरदोऽस्मि सुरोत्तमाः । १०।१८

॥ कश्यप उवाच ॥ यदेव भगवान् प्रीतः सर्व्वेषाममरोत्तम । तदेव जयतत्याः सर्व्वं हि नः परमा गतिः ।

यदि प्रसन्नो भगवान् दातव्यश्च वरो यदि । वासवस्यानुजो भ्राता ज्ञातीनां नन्दिवर्द्धनः ।

अदित्यामेव वै श्रीमान् भगवानस्तु मे सुतः ।

॥ वैशम्पायन उवाच ॥ अदितिर्देवमाता च एतमेवार्थमुत्तमं । पुत्रार्थे वरदं प्राह भगवन्तं वरार्थिनी ।

याचे त्वां पुत्रकामा वै भवान् पुत्रो भवत्विति । १५।१०

॥ देवा ऊचुः ॥ निःश्रेयसार्थं सर्व्वेषां देवानां हि महातपाः । भ्राता भर्त्ता च धाता च शरणं त्वं भवस्व नः ।

अदित्याः पुत्रतां याते त्वयि देवाः सवासवाः । देवशब्दं वदिष्यन्ति काश्यपश्चात्मजो भव ।
॥ वैशम्पायन उवाच ॥ ततस्तानब्रवीद्विष्णुर्देवान् काश्यपमेव च । एवं भवतु भद्रं वो यथेष्टं काममाप्नुत ।
सर्व्वेषामेव युष्माकं ये भविष्यन्ति शत्रवः । मुहूर्त्तमपि ते सर्व्वे न स्थास्यन्ति ममाग्रतः ।
हत्वाऽसुरगणान् सर्व्वान् ये चान्ये देवशत्रवः । करिष्ये देवताः सर्व्वा यज्ञभागाग्रभोजनाः । १४१३५
हव्यादांश्च सुरान् सर्व्वान् कव्यादांश्च पितॄनपि । करिष्ये विबुधश्रेष्ठाः पारमेष्ठ्येन कर्म्मणा ।
यथागतेन मार्गेण निवर्त्तध्वं सुरोत्तमाः । देवमातुस्तथाऽदित्याः कश्यपस्यामितात्मनः ।
यथामनीषितं कर्त्ता गच्छध्वं स्वं स्वमालयं ।
॥ वैशम्पायन उवाच ॥ एवमुक्ते तु वचने विष्णुना प्रभविष्णुना । देवाः प्रहृष्टमनसः पूजयन्ति स्म सर्व्वशः ।
विश्वेदेवा महात्मानः कश्यपोऽदितिरेव च । साध्या मरुद्गणाश्चैव शक्रश्चैव महाबलः । १४१४०
नमस्कृत्य सुरेशाय तस्मै देवाय रंहसे । प्रयाताः प्राग्दिशं पुण्यं विपुलं कश्यपाश्रमं ।
ते कश्यपाश्रमं गत्वा ब्रह्मर्षिगणसेवितं । चेरुः स्वाध्यायनिरता अदित्या गर्भमोक्षणः ।
अदितिर्देवमाता च गर्भं दध्रेऽतितेजसं । भूतात्मानं महात्मानं दिव्यं वर्षसहस्रिकं ।
पूर्णे वर्षसहस्रे तु प्रसूता गर्भमुत्तमं । सुराणां शरणं देवमसुराणां विनाशनं ।
गर्भस्थेन तु तेनैव परित्रातास्तदा सुराः । आददानेन तेजांसि त्रैलोक्यस्य महात्मना । १४१४५
तस्मिन् जाते तु देवेशे त्रैलोक्यस्य सुखावहे । भयदे दैत्यसंघानां सुराणां नन्दिवर्द्धने ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने वामनप्रसूतौ षष्ट्यधिकद्विशततोऽध्यायः ॥ २६० ॥
॥ वैशम्पायन उवाच ॥ प्रजानां पतयः सप्त सप्त चैव महर्षयः । तस्य देवस्य जातस्य नमस्कारं प्रचक्रिरे ।
भरद्वाजः कश्यपो गौतमश्च विश्वामित्रो जमदग्निर्वशिष्ठः । यश्चोदितो भास्करेऽभूत् प्रनष्टे सोऽप्यत्रात्रिर्भगवानाजगाम ।
मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः । दक्षः प्रजापतिश्चैव नमस्कारं प्रचक्रिरे ।
और्व्वो वशिष्ठपुत्रश्च स्तम्बः कश्यप एव च । कपीवानकपीवांश्च दत्तोलिश्च्यवनस्तथा । १४१५०
वशिष्ठपुत्राः सप्तासन् वाशिष्ठा इति विश्रुताः । हिरण्यगर्भस्य सुता ऊर्ज्जजाताः सुतेजसः ।
गार्ग्यः पृथुस्तथैवाग्र्यो जन्यो वामन एव च । देवबाहुर्यदुध्रश्च पर्ज्जन्यश्चैव सोमजः ।
हिरण्यरोमा वेदशिराः सत्यनेत्रस्तथैव च । विश्वेऽतिविश्वच्यवनः सुधामा विरजास्तथा ।
यतिनामा महिष्णुश्च नमस्कारमकुर्व्वत । विद्योतमानवपुषः सर्व्वाभरणभूषिताः ।
उपानृत्यन्त देवेशं विष्णुमप्सरसां गणाः । ततो गन्धर्व्वतूर्य्येषु प्रणदत्सु विहायसि । १४१५५
बहुभिः सह गन्धर्व्वैः प्रागायत च तुम्बुरुः । महाश्रुतिश्चित्रशिरा ऊर्णायुरनघस्तथा ।
गोमायुः सूर्य्यवर्चाश्च सोमवर्चाश्च सप्तमः । युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा ।
त्रयोदशः शालिशिराः पर्ज्जन्यश्च चतुर्द्दशः । कलिः पञ्चदशश्चात्र नारदश्चैव षोडशः ।
हाहाहूहूश्च गन्धर्व्वौ हंसश्चैव महाद्युतिः । इत्येते देवगन्धर्व्वा उपागायन्त केशवं ।
तथैवाप्सरसो हृष्टाः सर्व्वालङ्कारभूषिताः । उपानृत्यन्त देवेशं सर्व्वाः शुभदर्शनाः । १४१६०

ननृतुश्च महाभागा जगुश्चायतलोचनाः । सुमध्या चारुमध्या च प्रियमुख्या वरानना ।
अनूका च तथा याम्यी मिश्रकेशी ह्यलम्बुषा । मरीचिः शुचिका चैव विद्युत्पर्णा तिलोत्तमा ।
अद्रिका लक्ष्मणा चैव रम्भा तद्वन्मनोरमा । असिता च सुबाहुश्च अविशा सुभगा तथा ।
उर्व्वशी चित्रलेखा च सुग्रीवी च सुलोचना । पुण्डरीकसुगन्धा च सुरसा च प्रमाथिनी ।
काम्या शारद्वती चैव तथाऽन्यास्तत्र संघशः । मेनका सहजन्या च पर्णिका पुञ्जिकस्थला । १४१६५
एताश्चाप्सरसोऽन्याश्च प्रनृत्यन्ति सहस्रशः । धाताऽर्य्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रः पूषा विवस्वांश्च त्वष्टा च सविता तथा । कथितो विष्णुरित्येष काश्यपेयो गणस्तथा ।
आदित्या द्वादशैते तु ज्वलन्तो वह्निवर्च्चसः । चक्रुस्तस्य सुरेशस्य नमस्कारं महात्मनः ।
मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः । अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ।
दहनोऽथेश्वरश्चैव कपाली च विशाम्पते । स्थाणुर्भवश्च भगवान्रुद्रास्तत्राऽवतस्थिरे । १४१७०
अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः । विश्वेदेवाश्च साध्याश्च तस्य प्राञ्जलयः स्थिताः ।
शेषानुजा महाभागा वासुकिप्रमुखास्तथा । कच्छपश्चापकुञ्जश्च धृतराष्ट्रबलाहकौ ।
अधृष्यास्तेजसा दीप्ता महाक्रोधा महाबलाः । एते नागा महात्मानः सर्व्वे प्राञ्जलयः स्थिताः ।
एते चान्ये च बहवो नागास्तस्य महात्मनः । तस्थुः प्राञ्जलयः सर्व्वे नमस्कारं प्रचक्रिरे ।
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महाबलः । अरुणश्चारुणिश्चैव तस्य प्राञ्जलयः स्थिताः । १४१७५
पितामहश्च भगवान् स्वयमागम्य लोककृत् । प्राह देवगुरुः श्रीमान् सह सर्व्वैर्महात्मभिः ।
॥ ब्रह्मोवाच ॥ यस्मात् प्रसूयते लोकः प्रभविष्णुः सनातनः । तस्माल्लोकेश्वरः श्रीमान् विष्णुरेव भवत्वयं ।
एवमुक्त्वा तु भगवान् सार्द्धं देवर्षिभिः प्रभुः । नमस्कृत्य सुरेशाय जगाम त्रिदिवं पुनः ।
स तु जातः सुरेशानः कश्यपस्यात्मजः प्रभुः । नवदुर्द्दिनमेघाभो रक्ताक्षो वामनाकृतिः ।
श्रीवत्सेनोरसि श्रीमान् रोमजातेन राजता । उत्फुल्लनयनाः सर्व्वाः पश्यन्त्यप्सरसस्तदा । १४१८०
दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ।
सुरर्षिप्रतिमः श्रीमान् भूर्भुवोभूतभावनः । शुचिरोमा महोरस्कः सर्व्वतेजोमयः प्रभुः ।
यो गतिः पुण्यशीलानामगतिः पापकर्म्मणां । योगयुक्ता महात्मानो यं विदुर्योगवित्तमं ।
यस्याष्टगुणमैश्वर्य्यं यमाहुर्द्देवसत्तमं । यं प्राप्य शाश्वतं विप्रा निवृत्ता मोक्षकाङ्क्षिणः ।
जन्मतो मरणाच्चैव मुच्यन्ते योगभाविताः । यदेतत्तप इत्याहुः सर्व्वाश्रमनिवासिनः । १४१८५
सेवन्ते यं यताहारा दुश्चरं व्रतमास्थिताः । योऽनन्त इति नागेषु सेव्यते सर्व्वभोगिभिः ।
सहस्रमूर्द्धा रक्ताक्षः शेषादिभिरनुत्तमैः । यो यज्ञ इति विप्रेन्द्रैरिज्यते स्वर्गलिप्सुभिः ।
नानास्थानगतः श्रीमानेकः कविरनुत्तमः । यं वेदा गान्ति वेत्तारं यज्ञभागप्रदायिनं ।
दृषार्चिश्चन्द्रसूर्य्याद्यं देवमाकाशविग्रहं । स उवाच सुरान् सर्व्वान् वाचा वै परया विभुः ।
जानन्नपि महातेजा गतो योगेन बालतां । किं करोमि सुरश्रेष्ठा वरं कस्य ददामि वः । १४१९०

यत् काङ्क्षितं वः सर्व्वेषां तद्ब्रूत मुदा युताः । तस्य तद्वचनं श्रुत्वा वामनस्य महात्मनः ।
सर्व्वे ते हृष्टमनसो देवाः कश्यपनन्दनं । ऊचुः प्राञ्जलयो विष्णुं सुराः ब्रह्मपुरोगमाः ।
ब्रह्मणो वरदानेन हृतं नो निखिलं जगत् । तपसा महता चैव विक्रमेण बलेन च ।
बलिना दैत्यमुख्येन सर्व्वशेन महात्मना । अवध्यः किल सोऽस्माकं सर्व्वेषां देवसत्तम ।
भवान् प्रभवते तस्य नान्यः कश्चन सुव्रत । तत् प्रपद्यामहे सर्व्वे भवन्तं शरणार्थिनः ।  १४१९५
शरण्यं वरदं देवं सर्व्वभूतभयापहं । त्वमेषाञ्च हितार्थाय लोकानाञ्च सुरेश्वर ।
प्रियार्थञ्च तथाऽदित्याः कश्यपस्य तथैव च । कव्यं पितॄणामुचितं सुराणां हव्यमुत्तमं ।
प्रवर्त्ततां महाबाहो यथा पूर्व्वं सुरोत्तम । आनृण्यार्थं सुरेशस्य वासवस्य महात्मनः ।
प्रत्यानय सुरेन्द्रस्य त्रैलोक्यमिदमव्ययं । क्रतुना वाजिमेधेन यजते स हि दानवः ।
यत्प्रत्यानयने युक्तं लोकानां तद्विचिन्तय ।  १४२००
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने ब्रह्मवाक्ये एकनवत्यधिकद्विशततोऽध्यायः ॥ २९१ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्ते तदा देवैर्विष्णुर्वामनरूपधृक् । प्रहर्षयन्नुवाचाथ सर्व्वान्देवानिदं वचः ।
॥ वामन उवाच ॥ तस्य यज्ञसकाशं मां महर्षिर्वेदपारगः । बृहस्पतिर्महातेजा नयत्वङ्गिरसः सुतः ।
तस्याहं समनुप्राप्तो यज्ञवाटं सुरोत्तमाः । विधास्ये यथायुक्तं त्रैलोक्यहरणाय वै ।
॥ वैशम्पायन उवाच ॥ ततो बृहस्पतिः श्रीमाननयद्वामनं प्रभुं । यज्ञवाटं महातेजा दानवेन्द्रस्य धीमतः ।
मौञ्जी यज्ञोपवीती च छत्री दण्डाजिनी तथा । वामनो धूसरकाशो भगवान् बालरूपधृक् ।  १४२०५
लोकेश्वरेश्वरः श्रीमान् सुरैर्ब्रह्मपुरोगमैः । अन्वास्यमानो भगवानदृष्टोऽप्यथ दृष्टवत् ।
दानवाधिपतेस्तस्य बलेर्वैरोचनस्य ह । यज्ञवाटमचिन्त्यात्मा जगाम सुरसत्तमः ।
पालितेऽपि हि दैतेयैः सांग्रामिकपरिच्छदैः । द्वारे दानवसम्बाधे सहसैव विवेश ह ।
ऋत्विग्भिश्चैव मन्त्राढ्यैः सर्व्वतः परिवारितं । दैत्यदानवराजेन्द्रमुपतस्थे बलिं बली ।
तं गत्वा यज्ञवाटन्तु ब्रह्मर्षिगणसंकुलं । आत्मानमेव भगवान् वर्णयामास तं क्रतुं ।  १४२१०
वर्णयित्वा यथान्यायं यज्ञं यज्ञः सनातनः । विस्तरेणामरश्रेष्ठः प्रयोगैर्विविधैस्तथा ।
शुक्रादीनृत्विजश्चापि यज्ञकर्मविचक्षणः । सर्व्वानेव निजग्राह चकार च निरुत्तरान् ।
आराद्य बलेस्तस्य ऋत्विजामभितस्तथा । यज्ञमात्मानमेवासौ हेतुभिः कारणं विभुः ।
वैदिकैरप्रकाशैश्च पुनरप्यथ भारत । प्रत्यक्षमृषिसंघानां दर्शयामास चित्रगुः ।
ततो निरुत्तरान् दृष्ट्वा सोपाध्यायानृषीन् कृतान् । अदृष्टेनापि दृष्टांस्तान् वामनेन महौजसा ।  १४२१५
अद्भुतश्चापि मेने स विरोचनसुतो बलिः । मूर्द्ध्ना कृताञ्जलिश्चेदमब्रवीद्विस्मितो वचः ।
कुतस्त्वं कोऽसि कस्यासि किञ्चेहास्ति प्रयोजनं । नैवंविधपरिज्ञानो दृष्टपूर्व्वो मया द्विजः ।
बालो मतिमतां श्रेष्ठो ज्ञानविज्ञानकोविदः । शिष्टवाग्रूपसम्पन्नो मनोज्ञः प्रियदर्शनः ।
नेदृशाः सन्ति देवानामृषीणाञ्चापि सूनवः । न नागानां न यक्षाणां नासुराणां न रक्षसां ।

न पितॄणां न सिद्धानां गन्धर्व्वाणां तथैव च। योऽसि सोऽसि नमस्तेऽस्तु ब्रूहि किं करवाणि ते। १४२१०

॥ वैशम्पायन उवाच ॥ उक्त एवमचिन्त्यात्मा बलिना वामनस्तदा। प्रोवाचोपायतत्त्वज्ञः स्मितपूर्व्वमिदं वचः।

॥ विष्णुरुवाच ॥ अहो यज्ञोऽसुरेन्द्रस्य बहुभक्ष्यः सुसंस्कृतः। पितामहस्येव पुरा यजतः परमेष्ठिनः।

सुरेश्वरस्य शक्रस्य यमस्य वरुणस्य च। विप्रचित्तेस्तथा यज्ञो दानवेन्द्र महाबल।

यजता वाजिमेधेन क्रतूनां प्रवरेण तु। सर्व्वपापविनाशाय स्वर्गमार्गप्रदर्शिना।

सर्व्वकाममयो ह्येष सम्मतो ब्रह्मवादिनां। क्रतूनां प्रवरः श्रीमानश्वमेध इति स्मृतः। १४२१५

सुवर्णशृङ्गो हि महानुभावो लोहखुरो वायुजवो महात्मा। सत्येजसः काञ्चनगर्भगौरः स विश्वयोनिः परमो हि मेध्यः।

आस्थाय वै वाजिनमश्वमेधमिष्ट्वा नरा दुष्कृतमुत्तरन्ति। आहुश्च यं वेदविदो द्विजेन्द्रा वैश्वानरं वाजिनमश्वमेधं।

यथाश्रमाणां प्रवरो गृहाश्रमो यथा नराणां प्रवरा द्विजातयः। यथाऽसुराणां प्रवरो भवानिह तथा क्रतूनां प्रवरोऽश्वमेधः।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु दैत्येन्द्रो वामनेन समीरितं। मुदा परमया युक्तः प्राह दैत्यपतिर्ब्बलिः।

॥ बलिरुवाच ॥ कच्चाचि ब्राह्मणश्रेष्ठ किमिच्छसि ददामि ते। वरं वरय भद्रं ते यथेष्टं काममाप्नुहि। १४२२०

॥ वामन उवाच ॥ न राज्यं न च यानानि न रत्नानि न च स्त्रियः। कामये यदि तुष्टोऽसि धर्म्मे च यदि ते मतिः।

गुर्व्वर्थं मे प्रयच्छस्व पदानि त्रीणि दानव। ममाग्निशरणार्थाय एष मे परमो वरः।

॥ बलिरुवाच ॥ त्रिभिः किं तव विप्रेन्द्र पदैः प्रवदतांवर। शतं शतसहस्राणां पदानां मार्गतां भवान्।

॥ शुक्र उवाच ॥ मा ददस्व महाबाहो न त्वं वेत्सि महासुर। एष मायाप्रतिच्छन्नो भगवान् प्रवरो हरिः।

वामनं रूपमास्थाय शक्रप्रियहितेप्सया। त्वां वञ्चयितुमायातो बटुरूपधरो हरिः। १४२२५

एवमुक्तः स शुक्रेण चिरं सञ्चिन्त्य वै बलिः। प्रहर्षेण समायुक्तः किमतः पात्रमिष्यते।

गृह्य हस्तेन संभ्रान्तो भृङ्गारं कनकोद्भवं।

॥ बलिरुवाच ॥ विप्रेन्द्र प्राङ्मुखस्तिष्ठ स्थितोऽस्मि कमलेक्षण। प्रतीच्छ देहि किं भूमिं का माया भोः पदत्रयं।

दत्तं वः पातय जलं नैव मिथ्या भवेद्गुरुः।

॥ शुक्र उवाच ॥ भो न देयं कुतो दैत्य विज्ञातोऽयं मया ध्रुवं। कोऽयं विष्णुरहो मोहितैर्वञ्चितस्त्वं न वञ्चितः। १४२३०

कथं स नाथो यद्विष्णुर्यज्ञे स्वयमुपस्थितः। दास्यामि देवदेवाय यद्यदिच्छत्ययं प्रभुः।

को वाऽन्यः पात्रभूतोऽस्मात् विष्णोः परतरं भवेत्। एवमुक्त्वा बलिः शीघ्रं पातयामास वै जलं।

॥ वामन उवाच ॥ पदानि त्रीणि दैत्येन्द्र पर्य्याप्तानि ममानघ। अन्यथा पूर्व्वमुक्तं हि तत्तथा न तदन्यथा।

॥ वैशम्पायन उवाच ॥ इत्येतद्वचनं श्रुत्वा वामनस्य महौजसः। कृष्णाजिनोत्तरीयं स कृत्वा वैरोचनिस्तदा।

एवमस्त्विति दैत्येशो वाक्यमुक्त्वाऽरिसूदनः। ततो वारिकमापूर्य्य भृङ्गारं स पराम्मृशत्। १४२३५

वामनो ह्यसुरेन्द्रस्य चिकीर्षुः कदनं महत्। क्षिप्रं प्रसारयामास दैत्यस्यचकरं करं।

प्राङ्मुखस्यापि दैत्यस्य तस्मै सुमनसा जलं। दातुकामः करे यावत्तावत्तं प्रत्यवेक्षत।

तस्य तद्रूपमालोक्य ह्यचिन्त्यस्यामितौजसः। अभूतपूर्व्वं देवारेर्विरोचेः सिचमासुरीं।

दर्शितश्च महाप्राज्ञः प्रह्लादश्चाब्रवीद्वचः।

॥ प्रह्लाद उवाच ॥ मा ददस्व जलं हस्ते वटोर्वामनरूपिणः । स देवो येन ते पूर्व्वं निहतः प्रपितामहः ।  १४२५०
विष्णुरेष महाप्राज्ञस्त्वां वञ्चयितुमागतः ।
॥ बलिरुवाच ॥ धन्य तस्मै प्रदास्यामो देवायेमं प्रतिश्रयं । अनुग्रहकरं देवमीदृशन्तु कुतः प्रभुं ।
ब्राह्मणोऽपि गरीयांसं पात्रं लप्स्यामहे वयं । अवश्यञ्चासुरश्रेष्ठ दातव्यं दीक्षितेन वै ।
इत्युक्त्वाऽसुरसंघानां मध्ये वैरोचनिस्तदा । देवाय प्रददौ तस्मै पदानि त्रीणि विष्णवे ।
॥ प्रह्लाद उवाच ॥ दानवेश्वर माहास्त्वं विप्रायास्मै प्रतिश्रयं । नैनं विप्रमहं मन्ये नेदृशो भवति द्विजः ।  १४२५५
रूपेणानेन दैत्येन्द्र सत्यमेतद्ब्रवीमि ते । नरसिंहमहं मन्ये तमेव पुनरागतं ।
एवमुक्तस्तदा तेन प्रह्लादेनामितौजसा । प्रह्लादमब्रवीद्वाक्यमिदं निर्भर्त्सयन्निव ।
॥ बलिरुवाच ॥ देहीति याचते यो हि प्रत्याख्याति च योऽसुर । उभयोरप्यलक्ष्म्या वै भाजनं विद्यते नरं ।
प्रतिश्रुत्य तु यो विप्रे न ददाति प्रतिश्रयं । स याति नरकं पापी मित्रगोत्रसमन्वितः ।
अलक्ष्मीभयभीतोऽहं ददाम्यस्मै वसुन्धरां । प्रतिग्रहीता वाऽप्यन्यः कश्चिदस्माद्द्विजोऽस्य वै ।  १४२६०
नाधिको विद्यते यस्मात्तद्ददामि वसुन्धरां । ददतश्च मे तुष्टिः परा भवति दानव ।
दृष्ट्वा वामनरूपेण याचन्तं द्विजपुङ्गवं । एष तस्मात् प्रदास्यामि न स्थास्यामि निवारितः ।
भूयश्च प्राब्रवीदेनं वामनं वटुरूपिणं । स्वल्पैः स्वल्पमते किन्ते पादैस्त्रिभिरनुत्तम ।
कृत्स्नां ददामि ते विप्र पृथिवीं सागरैर्वृतां ।
॥ वामन उवाच ॥ न पृथ्वीं कामये कृत्स्नां सन्तुष्टोऽस्मि पदैस्त्रिभिः । एष एव रुचिरो मे वरो दानवसत्तम ।  १४२६५
॥ वैशम्पायन उवाच ॥ तथाऽस्त्विति बलिः प्रोक्त्वा स्पर्शयामास दानवः । पदानि त्रीणि देवाय विष्णवेऽमिततेजसे ।
तोये तु पतिते हस्ते वामनोऽभूदवामनः । सर्व्वदेवमयं रूपं दर्शयामास वै प्रभुः ।
भूः पादौ द्यौः शिरश्चास्य चन्द्रादित्यौ च चक्षुषी । पादाङ्गुल्यः पिशाचाश्च हस्ताङ्गुल्यश्च गुह्यकाः ।
विश्वेदेवाश्च जानुस्था जंघे साध्याः सुरोत्तमाः । यक्षा नखेषु संभूता रेखाश्चाप्सरसस्तथा ।
विद्युतो विपुला दृष्टिः केशाः सूर्य्यांशवस्तथा । तारका रोमकूपाणि रोमाणि च महर्षयः ।  १४२७०
बाहवो विदिशस्तस्य दिशः श्रोत्रे तथैव च । अश्विनौ श्रवणे चास्य नासा वायुर्महाबलः ।
प्रसादश्चन्द्रमाश्चैव मनो धर्म्मस्तथैव च । सत्यमस्याभवद्वाणी जिह्वा देवी सरस्वती ।
ग्रीवाऽदितिर्महादेवी तालुः सूर्य्यश्च दीप्तिमान् । द्वारं स्वर्गस्य नाभिर्वै मित्रस्त्वष्टा च वै भ्रुवौ ।
मुखं वैश्वानरश्चास्य वृषणौ तु प्रजापतिः । हृदयं भगवान् ब्रह्मा पुंस्त्वं वै कश्यपो मुनिः ।
पृष्ठेऽस्य वसवो देवा मरुतः सर्व्वसन्धिषु । सर्व्वच्छन्दांसि दशना ज्योतींषि विपुलाः प्रभाः ।  १४२७५
उरो रुद्रो महादेवो धैर्य्यञ्चास्य महार्णवः । उदरञ्चास्य गन्धर्व्वा भुजङ्गाश्च महाबलाः ।
लक्ष्मीर्मेधा धृतिः कान्तिः सर्व्वविद्याश्च वै कटिः । ललाटमस्य परमं यत् स्थानं परमात्मनः ।
सर्व्वज्योतींषि यानीह तपः शक्रश्च देवराट् । तस्य देवातिदेवस्य तेजो ह्यासीन्महात्मनः ।
स्तनौ कक्षौ च वेदाश्च ओष्ठौ चास्य मखास्तथा । इष्टयः पशुबन्धाश्च द्विजानां चेष्टितानि च ।

तस्य देवमयं रूपं दृष्ट्वा विष्णोर्महासुराः । उपासर्पन्त संक्रुद्धाः पतङ्गा इव पावकं । १४२८०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने विश्वरूपप्रकाशे द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

॥ वैशम्पायन उवाच ॥ शृणु नामानि सर्व्वेषां रूपाण्याभरणानि च । आयुधानि च मुख्यानि दानवानां महात्मनां ।

विप्रचित्तिः शिविः शङ्कुरयःशङ्कुस्तथैव च । अयःशिरा अश्वशिरा हयग्रीवश्च वीर्य्यवान् ।

वेगवान् केतुमानुग्रः सोमव्यग्रो महासुरः । पुष्करः पुष्कलश्चैव साश्वोऽश्वपतिरेव च ।

प्रह्लादोऽश्वशिराः कुम्भः संह्लादो गगनप्रियः । अनुह्लादो हरिहरौ वराहः संहरोऽरुजः ।

वृषपर्व्वा विरूपाक्षो सुनीन्द्रश्चन्द्रलोचनः । निष्प्रभः सुप्रभः श्रीमांस्तथैव च निरूदरः । १४२८५

एकवक्त्रो महावक्त्रो द्विवक्त्रः कालसन्निभः । बृहत्कीर्त्तिर्महाजिह्वः शङ्कुकर्णो महाध्वनिः ।

शरभः शलभश्चैव कुपथः कापथः क्रथः । दीर्घजिह्वोऽर्कनयनो मृदुचापो मृदुप्रियः ।

वायुर्गरिष्ठो नमुचिः शम्बरो विज्वरो महान् । चन्द्रहन्ता क्रोधहन्ता क्रोधवर्द्धन एव च ।

कालकः कालकोपश्च वृत्रः क्रोधो विमोचनः । गरिष्ठश्च वरिष्ठश्च प्रलम्बो नरकः पृथुः ।

इन्द्रतापनवातापी केतुमान् बलदर्पितः । असिलोमा पुलोमा च वाष्कलः प्रमदो मदः । १४२९०

खसृमः कालवदनः करालः केशिरेव च । एकाक्षश्चैव राहुश्च तुहुण्डः समलः स्वपः ।

एते चान्ये च बहवः क्रममाणं त्रिविक्रमं । उपतस्थुर्महात्मानं विष्णुं दैत्यगणास्तदा ।

पाशोद्यतकराः केचिद्व्यादितास्याः खरस्वनाः । शतघ्नीचक्रहस्ताश्च परश्वधधरास्तथा ।

प्रासमुद्गरहस्ताश्च तथा परिघपाणयः । महाशिलायुधकराः शूलहस्ता महाबलाः ।

महावृक्षोद्यतकरास्तथैव च धनुर्द्धराः । महापट्टिशहस्ताश्च तथा मुषलपाणयः । १४२९५

गदाभुशुण्डीहस्ताश्च वज्रहस्तास्तथाऽपरे । असिकम्पनहस्ताश्च दानवा युद्धदुर्म्मदाः ।

नानाप्रहरणा घोरा नानावेषा महाबलाः । कूर्म्मकुक्कुटवक्त्राश्च शशवक्त्रास्तथाऽपरे ।

खरोष्ट्रवदनाश्चैव वराहवदनास्तथा । भीमा मकरवक्त्राश्च शिशुमारमुखास्तथा ।

मार्ज्जारशूकवक्त्राश्च अश्ववक्त्राश्च दानवाः । गोवक्त्रा वभ्रुवक्त्राश्च घोरा खगमुखास्तथा ।

उद्रमत्स्यक्रिवक्त्राश्च गजवक्त्राश्च दानवाः । नकुलश्येनवक्त्राश्च पारावतमुखास्तथा । १४३००

आखुमृगाननाः शूराश्छागाविमहिषाननाः । सारमेयमुखा रौद्राः क्रोष्टुवक्त्राश्च दानवाः ।

चक्रवाकमुखाश्चैव गोधावक्त्रास्तथाऽपरे । नक्रघोराननाः क्रूरा व्याघ्रशार्दूलवक्त्रकाः ।

खड्गिसिंहमुखाश्चैव मयूरवदनास्तथा । गजेन्द्रचर्म्मवसनास्तथा कृष्णाजिनाम्बराः ।

चीरसंवृतगात्राश्च तथा फलकवाससः । उष्णीषिणो मुकुटिनस्तथा कुण्डलिनोऽपरे ।

किरीटिनो लम्बशिखाः कम्बुग्रीवाः सुवर्च्चसः । नानावेशधरा दैत्या नानामाल्यानुलेपनाः । १४३०५

स्वान्यायुधानि दीप्तानि प्रगृह्यासुरसत्तमाः । क्रममाणं हृषीकेशमुपातिष्ठन्त दानवाः ।

प्रमथ्य सर्व्वान् दैतेयान् पादहस्ततलैः प्रभुः । जहार त्रिदिवं देवस्त्रिभिर्विक्रमणैर्हरिः ।

रूपं कृत्वा महाकायं जहाराशु स मेदिनीं । त्रैलोक्यं क्रममाणस्य स्तुतिरादित्यसन्निभा ।

तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे। नभः प्रक्रममाणस्य सक्थिदेशे महात्मनः।

परं विक्रममाणस्य पादमूले व्यवस्थितौ। विष्णोरमितवीर्य्यस्य वदन्त्येवं द्विजातयः। १४२१०

जित्वा लोकांस्ततः सर्व्वान् हत्वा चासुरपुङ्गवान्। ददौ शक्राय वसुधां हरिर्लोकनमस्कृतः।

सुतलं नाम पातालमधस्ताद्वसुधातले। बलेर्दत्तं निवासाय विष्णुना प्रभविष्णुना।

तदवाप्यासुरश्रेष्ठश्चकार मतिमुत्तमां। रसातलतले वासमकरोदसुराधिपः।

तत्रस्थश्च महातेजा ध्यानं परममास्थितः। उवाच वचनं धीमान् विष्णुं लोकनमस्कृतं।

किं मया देव कर्त्तव्यं ब्रूहि सर्व्वमशेषतः। ततो दैत्याधिपं प्राह देवो विष्णुः सुरोत्तमः। १४२१५

॥ विष्णुरुवाच ॥ ददामि ते महाभाग वरं वरय सुव्रत। परितुष्टोऽस्मि भद्रं ते यथेष्टं काममाप्नुहि।

मा च शक्रस्य वचनं पर्य्यवस्थाः कथञ्चन। अहमाज्ञापयामि त्वां श्रेयश्चैवमवाप्स्यसि।

एवमुक्त्वा ततो विष्णुरथ भूयोऽसुराधिपं। वाचा परमया प्राह सान्त्वयन् सर्व्वलोककृत्।

यत्त्वया सलिलं दत्तं गृहीतं पाणिना मया। तस्मात्ते दैत्य देवेभ्यो नास्ति जीवितसङ्क्षयः।

सुतलं नाम पातालं तत्र त्वं सानुगो व्रज। सर्व्वदैत्यगणैः सार्द्धं मत्प्रसादान्महासुर। १४२२०

न च ते देवदेवस्य शक्रस्यामिततेजसः। शासनं प्रतिहन्तव्यं स्मरता मम शासनं।

देवताश्चापि ते सर्व्वाः पूज्या एव महासुर। प्राप्स्यस्येवं महाभाग दिव्यान् कामान् यथेप्सितान्।

इह चामुत्र च सुखं विविधांश्च परिच्छदान्। दैत्याधिपत्यञ्च पुनर्मत्प्रसादादवाप्स्यसि।

भोगांश्च विविधान् सम्यक् यज्ञांश्चैव सदक्षिणान्। यदा चैतां मया प्रोक्तां मर्य्यादां लङ्घयिष्यसि।

बन्धिष्यन्ति तदा हि त्वां नागा भोगैर्महौजसः। नमस्कार्य्यश्च ते नित्यं महेन्द्रस्त्रिदशाधिपः। १४२२५

मम ज्येष्ठः सुरश्रेष्ठः शासनं प्रतिगृह्यतां।

॥ बलिरुवाच ॥ देवदेव महाभाग शङ्खचक्रगदाधर। सुरासुरगुरुश्रेष्ठ सर्व्वलोकमहेश्वर।

तत्रासतो मे पाताले भागं ब्रूहि सुरोत्तम। कथं तत्र मया स्थेयं विबुधानां महेश्वर।

मम किं त्रिदशश्रेष्ठ प्राशनार्थं भविष्यति। तद्वदस्व सुरश्रेष्ठ वृत्तिर्येन ममाव्यया।

॥ त्रिविक्रम उवाच ॥ अश्रोत्रियं श्राद्धमधीतमव्रतमदक्षिणं यज्ञमनृत्विजा हुतं। अश्रद्धया दत्तमसंस्कृतं हविर्भागाः षडेते तव दैत्यसत्तम। १४२३०

पुण्यं मद्द्वेषिणां यच्च मद्भक्तद्वेषिणां तथा। क्रयविक्रयसक्तानां पुण्यं यच्चाग्निहोत्रिणां।

अश्रद्धया यच्च दानं ददतां यजतां तथा। तत्सर्व्वं तव दैत्येन्द्र मत्प्रसादाद्भविष्यति।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु वचनं बलिर्विष्णोर्महात्मनः। एवमस्त्विति तं प्रोक्त्वा पातालमसुरोत्तमः।

प्रविवेश महाभागो देवाज्ञां प्रतिपालयन्। एतस्मिन्नन्तरे चापि विष्णुस्त्रिदशपूजितः।

भगवानपि राज्यानां प्रविभागं चकार ह। ददौ चैन्द्रीं दिशं पूर्व्वां शक्रायामिततेजसे। १४२३५

याम्यां यमाय देवाय पितृराजे महात्मने। पश्चिमाञ्च दिशं देवो वरुणाय ददौ प्रभुः।

उत्तरान्तु कुबेराय यक्षाधिपतये दिशं। अधस्तान्नागराजाय सोमायोर्द्ध्वं दिशं ददौ।

एवं विभज्य त्रैलोक्यं विष्णुर्बलवतां वरः। लोकापवर्जनं चक्रे देवानामजितः प्रभुः।
वामनः सर्व्वभूतेषु प्रतिष्ठाप्य स वासवं। जगाम त्रिदिवं देवः पूज्यमानो महर्षिभिः।
तस्मिन् प्रयाते दुर्द्धर्षे वामनेऽमिततेजसि। सर्व्वे मुमुदिरे देवाः पुरस्कृत्य शतक्रतुं। १५२४०
॥ वैशम्पायन उवाच ॥ गते तु त्रिदिवं कृष्णे बद्धा वैरोचनिं बलिं। नागैः सप्तशिरोभिश्च कम्बलाश्वतरादिभिः।
नागबन्धनदुःखार्त्तं बलिं वैरोचनिं ततः। बहुकृत्वाऽथो देवर्षिर्नारदः प्रत्युपस्थितः।
स तं कृच्छ्रगतं दृष्ट्वा कृपयाऽभिपरिप्लुतः। उवाच दानवश्रेष्ठ मोक्षोपायं वदामि ते।
स्तवं देवातिदेवस्य वासुदेवस्य धीमतः। अनादिनिधनस्यास्य अव्ययस्याव्ययस्य च।
तमधीष्वाद्य दैत्येन्द्र विष्णुर्येनान्तरात्मना। तद्गतेनान्तरात्मा भूत्वा द्रुतं मोक्षमवाप्स्यसि। १५२४५
ततो विरोचनसुतः प्रयतः प्राञ्जलिः शुचिः। मोक्षविंशकमव्यग्रो नारदात् समधीतवान्।
तमधीत्य स्तवं दिव्यं नारदेन समीरितं। पृथिवी येनोद्धृता येन तं जजाप महासुरः।
नमोऽस्त्वनन्तपतये भवाय महात्मने। अक्षयाय देवाय पद्मनाभाय विष्णवे।
सप्त सूर्य्यं वपुः कृत्वा त्रीन् लोकान् दग्धवानसि। भगवान् कालकालस्त्वं तेन सत्येन मोचय।
नष्टचन्द्रार्कगगने लोकत्रयतपःक्षिते। पुनस्त्विमांस्त्वं लोकांस्तेन सत्येन मोचय। १५२५०
ब्रह्मरुद्रेन्द्रवाय्वग्निसरित्सागरपर्वताः। त्वत्स्था दृष्टा त्रिविष्टपे तेन सत्येन मोचय।
मार्कण्डेन पुरा कल्पे प्रविश्य जठरं तव। चराचरगतं दृष्टं तेन सत्येन मोचय।
एको विश्वाम्बुराशयस्थो योगी योगमुपागतः। पुनस्त्रैलोक्यमुत्सृज्य तेन सत्येन मोचय।
जलशय्यामुपासीनो योगनिद्रामुपागतः। लोकांस्त्रिभुवने भूयस्तेन सत्येन मोचय।
वाराहं रूपमास्थाय वेदयज्ञपुरस्कृतं। धरा जलोद्धृता येन तेन सत्येन मोचय। १५२५५
उद्धृत्य दंष्ट्रया यज्ञं त्रीन् पिण्डान् कृतवानसि। त्वं पितॄणामपि हरे तेन सत्येन मोचय।
प्रदुद्रुवुः सुराः सर्व्वे हिरण्याक्षभयार्द्दिताः। परित्रातास्त्वया देव तेन सत्येन मोचय।
दीर्घवक्त्रेण रूपेण हिरण्याक्षस्य संयुगे। शिरो जहार चक्रेण तेन सत्येन मोचय।
भग्नमूर्द्धाक्षिनासिक्यो हिरण्यकशिपुः पुरा। नखरेण हतो दैत्यस्तेन सत्येन मोचय।
दानवाभ्यां हृता देवा ब्रह्मणः पश्यतः पुरा। परित्रातास्त्वया देव तेन सत्येन मोचय। १५२६०
कृत्वा हयशिरोरूपं हत्वा तु मधुकैटभौ। ब्रह्मणे तेऽर्पिता वेदास्तेन सत्येन मोचय।
देवदानवगन्धर्व्वा यक्षसिद्धमहोरगाः। अन्तं तव न पश्यन्ति तेन सत्येन मोचय।
अपान्तरतमा नाम जातो देवस्य वै सुतः। कृताश्च तेन वेदार्थास्तेन सत्येन मोचय।
वेदयज्ञाग्निहोत्राणि पितृयज्ञहवींषि च। रहस्यं तव देवस्य तेन सत्येन मोचय।
ऋषिर्दीर्घतपा नाम जात्यन्धो गुरुशापतः। त्वत्प्रसादाच्च चक्षुष्मांस्तेन सत्येन मोचय। १५२६५
ग्राहग्रस्तं गजेन्द्रञ्च दीनं मृत्युवशे स्थितं। भक्तं मोचितवांस्त्वं हि तेन सत्येन मोचय।
अजयस्याव्ययस्य त्वं ब्रह्मणो मानसात्मजः। उत्कृष्टात्मा विधानाऽपि तेन सत्येन मोचय।

शंखचक्रगदाहस्तं शार्ङ्गं गरुडमेव च। प्रसादयामि शिरसा ते बन्धान्मोचयन्तु मां।
ततः प्रसन्नो भगवानादिदेश खगोत्तमं। गरुडं नागहन्तारं बलिं मोचय बन्धनात्।
ततो निश्चित्य गरुडः पन्नगानतुलविक्रमः। जगाम वसुधामूलं यत्रास्ते संयतो बलिः। १४३७०
आगमं तस्य विज्ञाय नागा मुक्ता महासुरं। ययुः पुरीं भोगवतीं वैनतेयभयार्दिताः।
मुक्तं विष्णुप्रसादेन चिन्तयानमधोक्षजं। भ्रष्टश्रियमुवाचेदं गरुत्मानपपन्नगं।
॥ गरुड उवाच ॥ दानवेन्द्र महाबाहो विष्णुस्त्वामब्रवीत् प्रभुः। मुक्तो निवस पाताले सपुत्रजनबान्धवः।
इतस्त्वया न गन्तव्यं गव्यूतिमपि दानव। समयं यदि भिन्द्यास्त्वं मूर्द्धा ते शतधा भवेत्।
पक्षीन्द्रवचनं श्रुत्वा दानवेन्द्रोऽब्रवीदिदं। स्थितोऽस्मि समये तस्य अनन्तस्य महात्मनः। १४३७५
जीव्योपायन्तु भगवान्मम किञ्चित् करोतु सः। इहस्थोऽहं सुखासीनो येनाप्याये खगेश्वर।
बलेस्तु वचनं श्रुत्वा गरुत्मानिदमब्रवीत्। पूर्व्वमेव कृतस्तेन जीव्योपायो महात्मना।
वर्त्तयिष्यन्ति ये यज्ञं विधिहीना ह्यनृत्विजः। प्रायश्चित्तमजानन्तो यज्ञभागं ततस्तव।
नैतेषां यज्ञभागं वै प्रतिग्रह्णन्ति देवताः। अनेनाप्यायितो बले सुखमत्र निवत्स्यसि।
॥ वैशम्पायन उवाच ॥ सन्दिश्यैतं भगवान्दत्तवान् काश्यपात्मजः। दानवेन्द्रे महाबाहो विष्णुस्त्रैलोक्यभावनः। १४३८०
इमं स्तवमनन्तस्य सर्व्वपापप्रमोचनं। यः पठेत नरो भक्त्या तस्य नश्यति किल्बिषं।
गोहत्यायाः प्रमुच्येत ब्रह्मघ्नो ब्रह्महत्यया। अपुत्रो लभते पुत्रं कन्या चैवेप्सितं पतिं।
लग्नगर्भा प्रमुच्येत गुर्व्विणी जनयेत् सुतं। ये च मोक्षैषिणो लोके योगिनः सांख्यकापिलाः।
स्तवेनानेन गच्छन्ति श्वेतद्वीपमकल्मषाः। सर्व्वकामप्रदो ह्येष स्तवोऽनन्तस्य कीर्त्यते।
यः पठेत् प्रातरुत्थाय शुचिः प्रयतमानसः। सर्व्वकामवाप्नोति मानवो नात्र संशयः। १४३८५
एष वै वामनो नाम प्रादुर्भावो महात्मनः। वेदविद्भिर्द्विजैरेतत् पठ्यते वैष्णवं यशः।
यश्चेमं वामनं दिव्यं प्रादुर्भावं महात्मनः। शृणुयान्नियतो भक्त्या नरः पर्व्वसु पर्व्वसु।
परान् विजयते राजा यथा विष्णुर्महाबलः। यज्ञस्य महदाप्नोति प्रेत्य सद्गतिमाप्नुयात्।
प्रियो भवति भूतानां सर्व्वेषां नात्र संशयः। पुत्रांश्च लभते धन्यान् मेधागुणसमन्वितान्।
प्रीयते पठतश्चास्य देवदेवो जनार्द्दनः। सर्व्वकामयुतश्चैव कृष्णद्वैपायनोऽब्रवीत्। १४३९०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने प्रादुर्भावे त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥
॥ जनमेजय उवाच ॥ किमर्थं भगवान् विष्णुर्देवदेवो जनार्द्दनः। गतः कैलासशिखरमालयं शङ्करस्य च।
नारदाद्यैस्तपोवृद्धैर्मुनिभिस्तत्त्वदर्शिभिः। तत्र दृष्टो महादेवः शङ्करो नीललोहितः।
केशवेन पुरा विप्र कुर्व्वता तप उत्तमं। अर्च्चितो देवदेवेन शङ्करस्येति नः श्रुतं।
देवौ तत्र जगन्नाथौ दृष्टवन्तौ पुरातनौ। अर्च्चयाञ्चक्रिरे देवा इन्द्राद्याः शङ्करं हरिं।
तौ हि देवौ महादेवावेकीभूतौ द्विधाकृतौ। एकात्मानौ जगद्योनी सृष्टिसंहारकारकौ। १४३९५
परस्परसमावेशाज्जगतः पालने स्थितौ। तयोस्तत्र यथा वृत्तं कैलासे पर्व्वतोत्तमे।

ऋषय: किमचेष्टन्त दृष्ट्वा तौ पुरुषोत्तमौ । एतत् सर्व्वमशेषेण वक्तुमर्हसि सत्तम ।
यथा गतो हरिर्विष्णु: कृष्णो जिष्णु: पुरातन: । यथा च शङ्कर: साक्षात्कृत्तिवासा नगभूषण: ।
एतत् सर्व्वं विप्रवर्य्य ब्रूहि तत्त्वेन यत्नत: ।
॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजन् यथा कृष्णो गतो नगं । यथा च दृष्टो देवेश: शङ्करो वृषवाहन: । १४४००
यथा चचार स तपो यथा ते मुनयो गता: । एवं तयोर्यथा वृत्तं तथा शृणु नरोत्तम ।
द्वैपायनोऽथ भगवान् यथा प्रोवाच मां तथा । नमस्कृत्वा प्रवक्ष्यामि केशवं खगवाहनं ।
यथाशक्ति यथायुक्तं शृणु यत्नेन सुव्रत । न चाशुश्रूषवे वाच्यं नृशंसायातपस्विने ।
नानधीताय वक्तव्यं पुण्यं पुण्यवतां सदा । स्वर्ग्यं यशस्यं धन्यञ्च बुद्धिशुद्धिकरं सदा ।
ध्येयं पुण्यात्मनां नित्यमिदं वेदार्थनिश्चितं । अनेकाख्यानसंयुक्तं वेदान्ते नित्यमीदृशं । १४४०५
मुनयो वेदनिरता नारदाद्यास्तपोधना: । अत्यद्भुतं महापुण्यं वृत्तं कैलासपर्व्वते ।
शिवयोर्द्देवयोस्तत्र हरेश्चैव भवस्य च । हतेष्वसुरसंघेषु नरकादिषु भूमिप ।
हतेष्वथ नृपेष्वेवं किञ्चिच्छिष्टेषु शत्रुषु । शासति स्म सदा विष्णु: पृथिवीं पुरुषोत्तम: ।
द्वारवत्यां जगन्नाथो वसन् वृष्णिभिरीश्वर: । रुक्मिण्या सङ्गतो देवो वसंस्तत्र पुरे हरि: ।
कदाचिच्च तया सार्द्धं शेते रात्रौ जगत्पति: । विहरंश्च यथायोगं प्रीत: प्रीतियुजा तया । १४४१०
अथोवाच तदा देवी रुक्मिणी रुक्मभूषणं । पुत्रमिच्छामि देवेश त्वत्तो माधव नन्दनं ।
बलिनं रूपसम्पन्नं त्वयैव सदृशं प्रभो । वृष्णीनामपि नेतारं वीर्य्यवन्तं तपोनिधिं ।
सर्व्वशास्त्रार्थकुशलं राजविद्यापुरस्कृतं । एवमादिगुणैर्युक्तं दातुमर्हसि सत्तम ।
त्वयि सर्व्वस्य दातृत्वं नित्यमेव प्रतिष्ठितं । त्वं हि सर्व्वस्य कर्त्ता च दाता भोक्ता जगत्पति: ।
विशेषतस्तु भृत्यानां शुश्रूषानियतात्मनां । वक्तव्यं किमु देवेश यदि भक्तोऽस्मि केशव । १४४१५
अनुग्रहो यदि स्यान्मे देवदेव जगत्पते । दातुमर्हसि पुत्रं त्वं वीर्य्यवन्तं जनार्द्दन ।
॥ वैशम्पायन उवाच ॥ इत्युक्तो देवदेवेश: प्रियया प्रीयमाणया । तया महिष्या रुक्मिण्या रुक्मिशत्रुर्यदूद्वह: ।
प्रोवाच वचनं काले रुक्मिणीं यादवेश्वर: । दाताऽस्मि तादृशं पुत्रं यं त्वमिच्छसि मानिनि ।
नित्यभक्ताऽसि मे देवि नात्र कार्य्या विचारणा । अवश्यं तव दास्यामि पुत्रं शत्रुनिवर्हणं ।
पुत्रेण लोकान् जयति सतां कामदुघा हि ये । नरकं पुदिति ख्यातं दु:खञ्च नरकं विदु: । १४४२०
पुदस्त्राणात्तत: पुत्रमिहेच्छन्ति परत्र च । अनन्ता: पुत्रिणो लोका: पुरुषस्य प्रिये शुभा: ।
पतिर्ज्जायां प्रविशति गर्भो भूत्वा स मातरं । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ।
पुत्रवन्तं बिभेतीन्द्र: किन्नु तेनाजितं भवेत् । नापुत्रो विन्दते लोकान् कुपुत्राद्वन्ध्यता वरा ।
कुपुत्रो नरके यस्मात् सुपुत्रात् स्वर्ग एव हि । तस्माद्विनीतं सत्पुत्रं श्रुतवन्तं दयापरं ।
विद्यया विनयो यस्माद्विद्यायुक्तं सुधार्म्मिकं । इच्छेत् पुत्रं पुत्रकाम: पुरुषो यत्नवान् बुध: । १४४२५
तस्माद्दास्यामि ते पुत्रं विद्यावन्तं सुधार्म्मिकं । एष गच्छामि पुत्रार्थं कैलासं पर्व्वतोत्तमं ।

तत्रोपास्य महादेवं शङ्करं नीललोहितं । ततो गन्ताऽस्मि पुत्रस्ते भवाद्भूतहिते रतात् ।
तपसा ब्रह्मचर्य्येण भवं शङ्करमव्ययं । तोषयित्वा विरूपाक्षमादिदेवमजं विभुं ।
गमिष्याम्यहमद्यैव द्रष्टुं शङ्करमव्ययं । स च मे दास्यते पुत्रं तोषितस्तपसा मया ।
तत्र गत्वा महादेवं नमस्कृत्य प्रणम्य वा । प्रविश्य बदरीं पुण्यां मुनिजुष्टां तपोमयीं । १४४३०
अग्निहोत्राकुलां दिव्यां गङ्गाम्बुप्लाविता सदा । मृगपक्षिसमायुक्तां सिंहद्विपशताकुलां ।
बदरीफलसंपूर्णां वानरैः शोभितद्रुमां । वेत्राढ्यमहावृक्षां कदलीखण्डमण्डितां ।
मुनिभिर्वेदतत्त्वार्थविचारनिपुणैः सदा । वेदनिश्चिततत्त्वार्थैः प्रमाणकुशलैर्युतां ।
इदमेकमिदं तत्त्वमिति निश्चितमानसैः । उपास्यमानामन्यत्र सिद्धैः सिद्धार्थतत्परैः ।
इतिहासपुराणज्ञैः सेव्यमानां महर्षिभिः । गच्छद्भिः स्वर्गनिलयं परित्यज्य कलेवरं । १४४३५
प्रसिद्धां महतीं देवीं यास्यामि सुकृतालयां । इत्युक्त्वा विरराभैव देवदेवो जनार्द्दनः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां चतुःसप्तधिकद्विशततोऽध्यायः ॥ २९४ ॥
॥ वैशम्पायन उवाच ॥ प्रभातायान्तु शर्व्वर्यां गन्तुमैच्छज्जनार्द्दनः । कृताग्निः कृतकल्याणः समाप्तवरदक्षिणः ।
गाश्च दत्त्वाऽथ विप्रेभ्यो नमस्कृत्य द्विजोत्तमान् । आस्थानमण्डपं कृष्णः प्रविवेश जगत्पतिः ।
आसनं महदास्थाय तूष्णीमाहूय सर्व्वशः । बलभद्रं शिनेः पुत्रं हार्द्दिक्यं शटसारणौ ।
उग्रसेनं महाबुद्धिमुद्धवं नीतिमत्तरं । यस्य बुद्धिं समाश्रित्य जीवन्ति यादवाः सुखं । १४४४०
नेता च यदुवृष्णीनां स तु धर्म्मपरः सदा । यस्य बिभ्यति देवाश्च नीतेस्तस्य महात्मनः ।
यस्य बुद्धिवशाद्विष्णुः शशास पृथिवीं तदा । तञ्च हृत्प्रियवरं वीरमुद्धवं देवसप्रभं ।
अन्यानपि यदून् सर्व्वानुवाच भगवान् हरिः । शृण्वन्तु मम वाक्यानि यादवाः सर्व्व एव हि ।
शृणु चापि वचो मह्यं पितुरुद्धव मे सखे । बाल्यात् प्रभृति यो यत्नो मम दुष्टनिबर्हणे ।
प्रत्यक्षं भवता दृष्टं पूतनानिधनं नृप । केशी च निहतो बाल्ये मया बालेन यादवाः । १४४४५
गोवर्द्धनो धृतः शैलो गावश्च परिपालिताः । अभिषिक्तोऽस्मि शक्रेण देवानामग्रतः स्थितः ।
कंसोऽपि निधनं नीतो मया चाणूरमुष्टिकौ । उग्रसेनोऽभिषिक्तश्च कृता द्वारवती मया ।
अन्ये चापि नृपा राजन् बलिनो निहता मया । योऽपि वीरो जरासन्धो निगृहीतो बलान्मया ।
भीमेन बलिना राजन्नयेन मम यादवाः । शृगालो निहतः संख्ये गोमन्ताद्गच्छता मया ।
योऽपि वीरो दुरात्माऽसौ दानवो नरको हतः । निष्कण्टकमिमं लोकं कृतवान् राजसत्तमाः । १४४५०
किन्तु वीरो नृपो जज्ञे सखा भीमस्य यादवाः । पौण्ड्रो वीर्य्यवतां नेता द्वेष्टा चाधो सदा मम ।
शिष्यो द्रोणस्य राजेन्द्रो बली शस्त्रास्त्रवित् कृती । शास्त्रज्ञो नीतिमान् साक्षान्नेता सर्व्वस्य यत्नवान् ।
योद्धा इन्द्रप्रियो राजा जामदग्न्य इवापरः । एकान्तशत्रुरस्माकं छिद्रान्वेषी सदा मम ।
बाधिष्यते पुरीं योद्धा छिद्रं यदि लभेत सः । न ह्यल्पसाध्यो बलवान् पुण्ड्रेशो नृपोत्तमाः ।
यत्ता भवन्तस्तिष्ठन्तु प्रगृहीतशरासनाः । यथा न बाधते राजा पुरीं यदुकुलाश्रयां । १४४५५

अहन्तु यास्ये कैलासं कुतश्चित् कारणान्नृपाः। शङ्करं द्रष्टुकामोऽस्मि भूतभावनभावनं।
यावदागमनं मह्यं तावद्यत्ता भवन्त्विह। मया विरहितां चेमां यदि जानाति पुण्ड्रकः।
आगमिष्यति राजेन्द्रा योत्स्यते च पुरीमिमां। इमां निर्यादवां कर्त्तुं शक्नोतीति च मे मतिः।
यत्ता भवत राजेन्द्राः खड्गैः पाशैः परश्वधैः। पाषाणैः कर्षणीयैश्च सन्नद्धा भवत सर्व्वकैः।
पिधाय च कपाटानि महाद्वाराणि यत्नतः। एक एव महाद्वारो गमनागमने सदा। १४४६०
मुद्रया सह गच्छन्तु राज्ञो ये गन्तुमीश्वराः। न चामुद्रः प्रवेष्टव्यो द्वारपालस्य पश्यतः।
यावदागमनं मह्यं तावदेवं भविष्यति। मृगया नात्र कर्त्तव्या न च क्रीडा वहिः पुरात्।
ज्ञातव्यास्य परे स्वे च गमनागमने सदा। एवमादिक्रिया कार्य्या यावदागमनं मम।
इत्युक्ता यादवान् सर्व्वान् सात्यकिं पुनराह च।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां पञ्चषष्ट्यधिकद्विशततमोऽध्यायः॥ २६५ ॥

॥ भगवानुवाच ॥ सात्यके शृणु मद्वाक्यं यत्तो भव युधाम्बर। त्वन्तु खड्गी गदी भूत्वा चापी वाणी तलत्रवान्। १४४६५
तिष्ठ यत्नेन रक्षस्व पुरीं बहुनृपाश्रयां। न च निद्रा त्वया कार्य्या रात्रौ यदुद्वह प्रभो।
न च व्याख्या त्वया कार्य्या शास्त्राणां शास्त्रतत्पर। न च वादस्त्वया कार्य्यो वादिभिः सह वृष्णिप।
त्वं हि योद्धा बली चैव धनुर्वेदस्य वेदवित्। तथा कुरु यथा वीर नोपहास्या भवेमहि।
॥ सात्यकिरुवाच ॥ करिष्यामि वचस्तुभ्यं यथाशक्ति जनार्द्दन। आज्ञा तव जगन्नाथ धार्य्या यत्नेन मे सदा।
भृत्यवत् प्रचरिष्यामि कामपालस्य माधव। यावदागमनं तुभ्यं तावत् स्थास्यामि यत्नतः। १४४७०
प्रसादस्तव गोविन्द यदि स्यान्मयि माधव। किं नाम मम दुःसाध्यं शत्रूणां निग्रहे रणे।
यदि शक्रं यमं वाऽपि कुवेरमपि पाशिनं। सर्व्वानेतान् विजेष्यामि किमु पौण्ड्रं नृपोत्तमं।
गच्छ कार्य्यं कुरुष्वेदं यत्तोऽहं सततं हरे। उद्धवं पुनराहेदं कृष्णः पद्मनिभेक्षणः।
शृणूद्धव त्वं वाक्यं मे कुर्य्यास्तत् प्रयत्नवान्। रक्ष्या नयेन राजेन्द्र पुरी द्वारवती त्वया।
यत्तो भव सदा तात कुरु साहाय्यमत्र नः। लज्जा मम समुत्पन्ना वदतस्तव साम्प्रतं। १४४७५
त्वं हि नेता समस्तस्य विद्यापारस्य सर्व्वतः। को नु शक्ष्यति मेधावी वक्तुं विद्यावतः पुरः।
यत्कार्य्यं तद्भवान् वेत्ति ह्यकार्य्यञ्चापि सर्व्वतः। अतोऽहं विरमे तात वक्तुं सम्प्रति वृष्णिप।
॥ उद्धव उवाच ॥ किमदं तव गोविन्द वर्त्तते साम्प्रतं प्रभो। अहो प्रसन्नता मह्यं किन्नु प्रीतिरियं तव।
जानाम्यहं जगन्नाथ प्रसादस्यैष विस्तरः। यस्य प्रसन्नो भवसि तस्य किं नास्ति केशव।
त्वं हि सर्व्वस्य जगतः कर्त्ता हर्त्ता प्रधानतः। प्रभवः सर्व्वकार्य्याणां वक्ता श्रोता प्रमाणवित्। १४४८०
ध्याता ध्यानमयो ध्येय इति ब्रह्मविदो विदुः। जेता देवरिपूणाञ्च गोप्ता नाकसदां भवान्।
त्वन्नाथा वयमेवेति क्रोशामो निहतद्विषः। इयं नीतिरता मन्ये नेता नीतेर्यतो भवान्।
को नु नाम नयं वेद त्वामृते साम्प्रतं वद। नीतिस्त्वं सर्व्वकार्य्याणामिति मे निश्चिता मतिः।
दुर्गाढो नयमार्गोऽयमित्याङ्कस्तद्विदो जनाः। चतुर्द्धा प्रोच्यते नीतिः सामदाने जनार्द्दन।

दण्डो भेदो मनुष्याणां निग्रहावग्रहे सदा। दण्डेषु दण्डमिच्छन्ति सामान्यन्तु नये हरे। १४४८५

बलवत्स्वथ दानन्तु त्रयाणामप्यगोचरे। प्रयोक्तव्यो महाभेद इति नीतिमतां मतं।

तेषु तेष्वथ सर्व्वेषु प्रमाणं त्वां विदुर्बुधाः। किमत्र बहुनोक्तेन सर्व्वं त्वयि समर्पितं।

॥ वैशम्पायन उवाच ॥ इत्युक्त्वा विररामैव उद्धवो नीतिमत्तरः। ततः स भगवान् विष्णुरेवमेव नृपोत्तम।

कामपालं महाबाहुमुवाच यदुसंसदि। उग्रसेनं नृपं राजंस्तथा हार्द्दिक्यमेव च।

कामपालं पुनर्विष्णुरिदं प्रोवाच तत्त्ववित्। न प्रमादस्त्वया कार्य्यः सर्व्वदा यत्नवान् भव। १४४९०

स्थिते त्वयि महाबाहो का पीडा जगतो भवेत्। गदी भव सदा त्वार्य्य न क्रीडा सर्व्वदा भवेत्।

रक्ष त्वं सर्व्वदा यत्नात् पुरीं द्वारवतीं प्रभो। नोपयात्रा यथा स्याम तथा कुरु गदी भव।

उत्साहः सर्व्वदा कार्य्यो निरुत्साहो न यत्नतः। वाढमित्यब्रवीद्रामः कृष्णं वृष्णिकुलोद्भवं।

वृष्ण्यादयः सर्व्व एवैते स्वं स्वं सद्म समाययुः। गन्तुमैच्छज्जगन्नाथः कैलासं पर्व्वतोत्तमं।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

॥ वैशम्पायन उवाच ॥ ततः सञ्चिन्तयामास गरुडं पक्षिपुङ्गवं। आगच्छ त्वरितं तार्क्ष्य इति विष्णुर्जगत्पतिः। १४४९५

ततः स भगवांस्तार्क्ष्यो वेदराशिरिति स्मृतः। बलवान् विक्रमी योगशास्त्रनेता कुरूद्वह।

यज्ञमूर्त्तिः पुराणात्मा साममूर्द्धा च पावनः। ऋग्वेदपक्षवान् पक्षी पिङ्गलो जटिलाकृतिः।

ताम्रतुण्डः सोमहरः प्रभुजेता महाशिराः। पन्नगारिः पद्मनेत्रः साक्षाद्विष्णुरिवापरः।

वाहनं देवदेवस्य दानवीगर्भकृन्तनः। राक्षसासुरसङ्घानां जेता पक्षबलेन यः।

प्रादुरासीन्महावीर्य्यः केशवस्याग्रतस्तदा। जानुभ्यामपतद्भूमौ नमो विष्णो जगत्पते। १४५००

नमस्ते देवदेवेश हरे स्वामिन्निति ब्रुवन्। पस्पर्श पाणिना कृष्णः स्वागतं तार्क्ष्य पुङ्गव।

इत्युवाच तदा तार्क्ष्यं यास्ये कैलासपर्व्वतं। शूलिनं द्रष्टुमिच्छामि शङ्करं शाश्वतं शिवं।

वाढमित्यब्रवीत्तार्क्ष्य आरुरोह जनार्द्दनः। तिष्ठध्वमिति होवाच यादवान् पार्श्ववर्त्तिनः।

ततो ययौ जगन्नाथो दिशं प्रागुत्तरां हरिः। रवेण महता तार्क्ष्यस्त्रैलोक्यं समकम्पयत्।

सागरं क्षोभयामास पक्षौ पक्षी व्रजंस्तदा। पक्षेण पर्व्वतान् सर्व्वान् वहन् देवं जनार्द्दनं। १४५०५

ततो देवाः सगन्धर्व्वा आकाशेऽधिष्ठितास्तदा। तुष्टुवुः पुण्डरीकाक्षं वाग्भिरिष्टाभिरीश्वरं।

जय देव जगन्नाथ जय विष्णो जगत्पते। जयाजय नमो देव भूतभावन भावन।

नमः परमसिंहाय दैत्यदानवनाशन। जयाजेय हरे देव योगिध्येय परागते।

नारायण नमो देव कृष्ण कृष्ण हरे हर। आदिकर्त्तः पुराणात्मन् ब्रह्मयोने सनातन।

नमस्ते सकलेशाय निर्गुणाय गुणात्मने। भक्तिप्रियाय भक्ताय नमो दानवनाशन। १४५१०

अचिन्त्यमूर्त्तये तुभ्यं नमस्ते सकलेश्वर। इत्यादिभिस्तदा देवं वाग्भिरीशानमव्ययं।

तुष्टुवुर्देवगन्धर्व्वा ऋषयः सिद्धचारणाः। शृण्वन्नेव जगन्नाथः स्तुतिवाक्यानि तानि च।

ययौ सार्द्धं सुरगणैर्मुनिभिर्वेदपारगैः। यत्र पूर्व्वं स्वयं विष्णुस्तपस्तेपे सुदारुणं।

अन्तरीक्षस्य देवेशं स्थितमीक्ष्यमुहुर्मुहुः । पिशाचौ विकटाकारौ करालौ लोमहर्षणौ ।
युगपच्च समापेतुर्यत्र तिष्ठति केशवः । अपश्यामास राजेन्द्र यत्रैव तत्र तत्र तौ ।
ततः स भगवान् विष्णुः सर्व्वमालोक्य विस्मितः । विस्मयं परमं गत्वा पद्मनाभो वा केशवः ।
कस्यैष विस्तृतो नादः कस्य वाऽयं क्रोशोऽभवत् । को नु मां स्तौति सततं तु भक्त्या प्रीतिमानहं । १४५७८
कस्य मुक्तिः समायाता प्रीते मयि सुदुर्लभा । इति सञ्चिन्त्य भगवानास्ते प्राज्ञतमो हरिः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां जगन्नाथाधिकारिकप्रस्तावेऽध्यायः ॥ २६९ ॥
॥ वैशम्पायन उवाच ॥ तेषामनु महाघोरौ पिशाचौ विकृताननौ । पांशुपिङ्गलरोमाणौ दीर्घजिह्वौ महाहनू ।
लम्बकेशौ विरूपाक्षौ घोरौ घोरवेति वादिनौ । खादन्तौ मांसपिण्डं च पिबन्तौ रुधिरं बहु ।
आन्त्रवेष्टितसर्व्वाङ्गौ दीर्घौ कृशकृतोदरौ । लम्बमानमहाप्राज्ञशूलमोमध्विरोधरौ ।
कर्षन्तौ शवयूथानि बाहुभ्यां तत्र तत्र ह । दृश्यन्तौ विविधं हास्यं सर्व्वातिबहुधा नृप । १४५८०
वदन्तौ बहुरूपाणि वचांसि प्राकृतानि च । कम्पयन्तौ महावृक्षानूरुपादस्य बहुशः ।
सृक्किणी लेलिहन्तौ च दन्तान् कटकटायिनौ । घण्टिकाकुसुमाकीर्णौ धमनीरज्जुसन्ततौ ।
वदन्तौ कृष्ण कृष्णेति माधवेति च सन्ततं । कदा नु द्रक्ष्यसे विष्णुः स इदानीं क तिष्ठति ।
स्वामी नः कुत्र वसति कुतो द्रष्टुं यतामहे । अथ वा कुत्र देवेशः कुतो नु साम्प्रतं हरिः ।
कुतः पद्मपलाशाक्षः साक्षादिन्द्रानुजो हरिः । यमाहुः पुण्डरीकाक्षं ब्रह्म ब्रह्मविदो जनाः । १४५८५
तमजं पुरुषं विष्णुं द्रष्टुमभ्युद्यता वयं । अन्तकाले जगत्सर्वं प्रविवेश जगन्मयं ।
तमजं विश्वकर्त्तारं कुतो द्रक्ष्याम साम्प्रतं । यस्य विस्तार एवैष लोकः प्राणिनिवासितः ।
तं द्रष्टुं देवमीशानं यतामः साम्प्रतं हरिं । इमा घोरतमा लोके विदिष्टा सर्व्वजन्तुभिः ।
पैशाचीयं समुत्पन्ना कथं नौ प्राविशद्भवात् । नरमांसाशिकलुषा सर्व्वभीतिप्रदायिनी ।
अहो नौ दुष्कृतं कर्म्म प्राक्तनं कर्म्मसञ्चये । अत्रैव महती प्रीतिर्निर्वर्त्तते सर्व्वदा तथा । १४५९०
यावन्तो दुष्कृतं कर्म्म तावत् स्मरति तादृशी । इमा सा सर्व्वविद्विष्टा प्राणिपीडनकारिणी ।
सर्व्वथा दुष्कृतं कर्म्म बहुभिर्ज्जन्मसञ्चयैः । तथापि तत् फलं घोरं कदापि न निवर्त्तते ।
यतः स्म प्राणिनो हन्तुं सगणैः सह साम्प्रतं । तथाहि प्राणिनो लोके बाल्यमादौ समाश्रिताः ।
अज्ञानावृतचित्तास्तु कार्य्याकार्य्यं न जानते । तथा यौवनिनो मत्ता विषयैर्बहुलीकृताः ।
यतन्ते श्रेयसे नैव ततो विषयसंस्थिताः । विषयाकृष्टचित्ता हि मनुष्या न विजानते । १४५९५
तथा च वृद्धभावे तु व्याधिभिर्बहुभिर्वृताः । जरादिभिर्महाघोरैर्नानादुःखविधायिभिः ।
यतन्ते न हि वै श्रेयो विनष्टेन्द्रियगोचराः । ततो मृता गर्भवासे वसन्ति सततं नराः ।
विण्मूत्रकलिले घोरे दुःखैर्बहुभिराचिताः । च्यवन्ते तु ततो घोराद्गर्भात् संसारमण्डले ।
परस्परं विहिंसन्तः कुर्व्वन्तः कर्म्मसञ्चयं । मरन्त्येवं सदा घोरे संसारे दुःखसङ्कुले ।
पापानि बहुरूपाणि कुर्व्वते प्राकृतास्तदा । संसारस्यैव महिमा विस्तृतः सर्व्वजन्तुषु । १४६००

अच्छेद्यः शस्त्रसंपातैरपाध्यैर्वऊर्मिभिः सदा । एतस्मान्न निवर्त्तन्ते मर्त्याः भ्रातनशुद्धयः ।
इमं हत्वा मनुष्येन्द्रमिदमस्माद्धराम्यहं । चोरयित्वा धनमिदं हरिष्येऽभ्याहदाम्यहं ।
निर्भर्त्स्यैनमिमं शान्तं हरिष्यामि धनं बली । इत्यादिव्याकुला मूर्खा यतन्ते प्राणिपीडनं ।
अथैव दुःखमूलस्य संसारस्य सदा हरिः । भेषजं सर्व्वथा देवः शङ्खचक्रगदाधरः ।
आदिदेवः पुराणात्मा आत्मा ब्रह्मविदां सदा । ते वयं सर्व्वयत्नेन द्रक्ष्यामः सर्व्वथा हरिं ।　　१४९०५
इत्थं पिशाचौ भाषन्तौ प्रादुरास्तां हरेः पुरः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां सप्तत्यधिकद्विशततोऽध्यायः ॥ २७० ॥
॥ वैशम्पायन उवाच ॥ ततः स भगवान् विष्णुः पिशाचौ मांसभक्षकौ । ददर्शाथ महाघोरौ दीपिकाधारिणौ हरिः ।
विलोकयाञ्चक्रतुस्तौ पिशाचौ देवकीसुतं । स्थितं सुखासने विष्णुं दृष्ट्वा लोकेश्वरेश्वरं ।
तौ च गत्वा समुद्देशं पिशाचौ केशवस्य ह । ततस्तावूचतुर्विष्णुमन्तरीक्षस्य केशवं ।
को भवान् कस्य वा मर्त्य कुतस्त्वागम्यते त्वया । किमर्थमिह संप्राप्तो वने घोरे मृगाकुले ।　　१४९१०
निर्मनुष्ये दीपिष्टते पिशाचगणसेविते । श्वापदैः सेव्यमाने च विपिने व्यालसंकुले ।
सुकुमारोऽनवद्याङ्गः साक्षाद्विष्णुरिवापरः । पद्मपत्रेक्षणः श्यामः पद्माभः श्रीपतिः स्वयं ।
अस्मत्प्रीतिकरः साक्षात् प्राप्तो विष्णुरिवापरः । देवो वा यदि वा यक्षो गन्धर्व्वः किन्नरोऽपि वा ।
इन्द्रो वा धनदो वाऽपि यमोऽथ वरुणोऽपि वा । एकाकी विपिने घोरे ध्यानार्पितमना इव ।
ब्रूहि मर्त्य यथातत्त्वं ज्ञातुमिच्छामि मानव । एवं पृष्टः पिशाचाभ्यामाह विष्णुरुरुक्रमः ।　　१४९१५
क्षत्रियोऽस्मीति मामाहुर्मनुष्याः प्रकृतिस्थिताः । यदुवंशे समुत्पन्नः क्षात्रवृत्तमनुष्ठितः ।
लोकानामथ पाताऽस्मि शास्ता दुष्टस्य सर्व्वदा । कैलासं गन्तुकामोऽस्मि द्रष्टुं देवमुमापतिं ।
इत्येवं मम वृत्तान्तः कथ्यतां कौ युवामिति । युवामिह समायातौ किमर्थं ब्राह्मणाश्रमं ।
एषा हि महती पुण्या नानाविप्रनिषेविता । वदरीयं समाख्याता न क्षुद्रैराश्रिता क्वचित् ।
तपस्विभिस्तपोयुक्तैर्जुष्टा सिद्धनिषेविता । मृगया नात्र दृश्यन्ते पिशाचा मांसभोजनाः ।　　१४९२०
न हन्तव्या मृगास्त्वात्र मृगया नात्र वर्त्तते । न तु क्षुद्रैः प्रवेष्टव्या न कृतघ्नैर्न नास्तिकैः ।
आश्रमस्य तु देशस्य रक्षिता नात्र संशयः । व्यतिक्रमो यदि भवेत्तस्य शास्ताऽस्मि यत्नतः ।
कौ भवन्तौ क्व नु युवां कस्येयं महती चमूः । नातः परं प्रवेष्टव्यमृषयस्तत्र संस्थिताः ।
विघ्नस्तत्र प्रवर्त्तेत तपःसु च तपस्विनां । इहैव स्थीयतां तावत्कथ्यन्न ततः सुखं ।
अन्यथाऽहं निषेद्धा त्वां बलादाकर्षयैव च ।　　१४९२५
॥ वैशम्पायन उवाच ॥ एवं पृष्टौ पिशाचौ तु वक्तुमेवोपचक्रतुः । तयोरेको महाघोरः पिशाचो दीर्घबाहुकः ।
उवाच वचनं तत्र यथा हृदि समर्पितं ।
॥ पिशाच उवाच ॥ श्रूयतामभिधास्यामि समाहितमना भव । नमस्कृत्य जगन्नाथं हरिं कृष्णं जगत्पतिं ।
आदिदेवमजं विष्णुं वरेण्यमनघं शुचिं । वक्ष्यामि सकलं यदन्यथा शृणु यदीच्छसि ।

घण्टाकर्णोऽस्मि नाम्नाऽहं पिशाचो घोरदर्शनः । मांसादो विकृतो घोरः पापात्मा पुरिवासरः । १४:१०

धनदस्यानुगन्ताऽहं साक्षाद्रुद्रसखस्य च । ममायमनुजः साक्षात् मत्समानो महान् ।

भृगयेयं सुमहती विष्णोः पूजार्थमित्युत । ममैव वर्तते सेना मम चाऽपि ममैव तु ।

आगतोऽहं महाशैलात् कैलासाद्भूतसेवितात् । सर्वं पिशाचवेषेण संवृत्तः पापकर्मणाम् ।

सततं दूषयन् विष्णुं घण्टामाबध्य कर्णयोः । मम न प्रविशेन्नाम विष्णोरिति विचिन्तयन् ।

अहं कैलासनिलयमासाद्य वृषभध्वजं । आराध्य तं महादेवमस्तुवं सततं शिवं । १४:१५

ततः प्रसन्नो मामाह वृणीष्वेति वरं वरः । ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ ।

मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः । मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः ।

तस्माद्गत्वा च वदरीं तत्राराध्य जनार्दनं । मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रमे ।

इत्युक्तो देवदेवेन शूलिना ज्ञातवानहं । तमेव परमं मत्वा गोविन्दं गरुडध्वजं ।

तस्मात् प्रार्थयमानः सन्मुक्तिं देशमिमं गतः । अन्यच्च शृणु मे वाक्यं यदि कौतूहलं तव । १४:४०

पुरी द्वारवती नाम पश्चिमोदधिसंकटे । यदुवृष्णिसमाकीर्णा सागरोर्मिसमाकुला ।

अध्यास्ते स हरिर्विष्णुस्तां पुरीं पुरुषोत्तमः । द्रष्टुं लोकहितार्थाय वसन्तं द्वारकापुरे ।

निर्गताः साम्प्रतं मर्त्यं वयमेतैः सहानुगैः । विष्णुः सर्वेश्वरः साक्षाद्दृष्टव्योऽस्माभिरद्य वै ।

लोकानां प्रभवः पाता कर्त्ता हर्त्ता जगत्पतिः । आदेरादिः समस्तस्य प्रभवः कारणं हरिः ।

कर्त्ता समस्तस्य हरिः पुरातनः प्रभुः प्रभूणामपि यः सहात्मकः । तमादिदेवं वरदं वरेण्यं द्रष्टुं हरिं संप्रति संयताः स्मः । १४:४५

यस्य प्रसादाज्जगदेवमासीत् सप्राणिसत्त्वं सचराचरं च । देवं जगद्योनिमजं जनार्दनं द्रष्टुं हरिं संप्रति संयताः स्मः ।

यस्योदरादिश्वमिदं प्रभूतं लयञ्च यस्मिन् समुपैति कल्पे । यस्यैव साक्षात्प्रभवन्ति विश्वं द्रक्ष्याम देवं पुरुषोत्तमं हरिं ।

स्रष्टा च योऽसौ सकलस्य देवः पाता च हर्त्ता च हरिः स एव । द्रक्ष्याम नित्यं भुवनेश्वरं हरिं पुराणमाद्यं प्रभविष्णुमव्ययं ।

अजस्य कर्त्ता भुवनस्य गोप्ता भुवस्य कर्त्ता हरिरेक एव । संयोगिते योगविदः सुबुद्धिं समेन तेनैव मतिः समाकुला ।

निगीर्य्य विश्वं सकलं जगत्पतिः शेते शिशुः समवाप्य साक्षात् । वटस्य पत्रे जगतां निवासः पादौ च विक्षिप्य करौ धुन्वन् । १४:५०

यस्योदरे देवमुनिः पुरातनो ददर्श लोकानखिलान् समायया । प्रविश्य विश्वं सकलं यथावद्विपर्ययादस्तमभूदिदं महत् ।

निगीर्य्य विश्वं जगदादिकाले शेते महात्मा जलधेर्जलौघे । देव्या श्रिया चामरलोलहस्तया निषेव्यमाणः पुरुषोत्तम सदा ।

नाभस्य यस्याविरभूत् सपद्मं पद्मं महत् काञ्चनसप्रभं प्रभोः । अस्माकरं लोकगुरोर्महात्मनो विस्तारि पद्मं जगदादिसृष्टौ ।

दधार यो भूतपतिर्महामहीं दंष्ट्राग्रसंस्थापितरूढमूलां । महार्णवाम्भस्युदवादिकाले कुर्वन् वराहो मुनिगीतमूर्त्तिः ।

हरिः पुराणः पुरुषोत्तमः प्रभुः कर्त्ता समस्तस्य समस्तसाक्षी । यज्ञात्मको यज्ञपतिर्जगत्पतिर्द्रष्टुं तमीशं वयमुद्यताः स्मः । १४:५५

कश्चिद्द्वित्वेन वदन्ति देवमेकात्मना केचिदिमं पुराणं । वेदान्तसंस्थापितसत्त्वयुक्तं द्रष्टुं तमीशं वयमुद्यताः स्मः ।

अनेकमेके बहुधा वदन्ति श्रुतिस्मृतिन्यायविनिविष्टचित्ताः । आश्चर्य्यमात्मानममं पुराविदो द्रष्टुं तमीशं वयमुद्यताः स्मः ।
यं प्राहुराद्यं वरदं वरेण्यमेकान्ततत्त्वं मुनयः पुराणाः । यं सर्व्वगं देवमजं जनार्द्दनं द्रष्टुं हरिं संप्रति उद्यताः स्मः ।

यस्मिन् विश्वमिदं प्रोतमाद्यिकाले जगत्पतौ । तं द्रष्टुमत्र संप्राप्ताः किं नु वक्ष्याम साम्प्रतं ।
गच्छामो वयमन्यत्र गच्छ त्वं काममन्यतः । यदि ते रोचते सर्व्वं यथेष्टं गच्छ सांप्रतं । १४६६०
रात्रिमध्यमनुप्राप्तं नात्र कार्य्या विचारणा । इत्युक्ता घोरकर्म्माऽसौ पिशाचो विकृताननः ।
तस्मिन्नेव समे देशे पीत्वा च रुधिरं बहु । भक्षयित्वा यथाकामं मांसराशिं विशेषतः ।
अपः संस्पृश्य तत्रैव पार्श्वे संस्थाप्य वाहनं । आत्मपार्श्वे महाघोरं संस्थाप्य विपुलं महत् ।
आसनं कुशसंयुक्तं कृत्वा चाभ्युक्ष्य वारिणा । उत्सार्य्य खगणान् सर्व्वान् यत्नेन महता तदा ।
सुखासनं समास्थाय समाधौ यतते नृपः । एकचित्तस्तदा भूत्वा नमस्कृत्य च केशवं । १४६६५
इमं मन्त्रं पठन् घोरः पिशाचो भक्तवत्सलं । नमो भगवते तस्मै वासुदेवाय चक्रिणे ।
नमस्ते गदिने तुभ्यं वासुदेवाय धीमते । नमो नारायणायास्तु विष्णवे प्रभविष्णवे ।
मम भूयान्मनःशुद्धिः कीर्त्तनात्तव केशव । जन्मेदमीदृशं घोरं माभून्मम दुरासदं ।
देवदूतो भविष्यामि त्वत्प्रसादाच्च मापते । तव चक्रप्रहारेण कायो नश्यतु मामकः ।
मम भूयो भवो माभूदेषा मे प्रार्थना विभो । प्रार्थनां कल्पवृक्षोऽपि दाता सर्व्वस्य सर्व्वदा । १४६७०
यत्र यत्र भवेज्जन्म तत्र तत्र भवान् हृदि । वर्त्ततां मम देवेश प्रार्थनैषा मम परा ।
नमस्तुभ्यं नमस्तुभ्यं भवत्वेव सदा मम । निर्विघ्ना प्रार्थना देव नमस्तेऽस्तु सदा मम ।
यदा मे मरणं भूयात्तदा माभूत् स्मृतिभ्रमः । दिने दिने मम चित्तं त्वयि संस्थं भवत्विति ।
एवं प्रेरय मां देव माभूत्ते चित्तमीदृशं । नृशंसोऽयं पिशाचोऽयं कथाऽस्मिन् का भवेदिति ।
एवं चिन्तय मां देव भक्तो भक्तमिति प्रभो । परपीडा न मत्तोऽस्तु नमोऽस्तु भगवन् प्रभो । १४६७५
इन्द्रियाणीन्द्रियार्थेषु माभूवन् संप्रतं हि मे । अन्तकाले ममाप्येवं प्रसादात्तव केशव ।
पृथिवी पातु मे घ्राणं रसनां पातु मे पयः । सूर्य्यश्च पातु मे चक्षुः स्पर्शं पातु च मारुतः ।
श्रोत्रमाकाशमप्येतु मनः प्राणश्च गच्छतु । जलं मां रक्षतां नित्यं पृथिवी रक्षतां हरे ।
सूर्य्यो मां रक्षतां विष्णो नमस्ते सूर्य्यतेजसे । वायुर्मां रक्षतां दुःखादाकाशश्च जनार्द्दन ।
न मनः सर्व्वगं देव रक्षतां विषयान्तरे । मनो विपर्य्यये घोरं पुरुषान् हन्ति निश्चयः । १४६८०
पापेषु योजयेत् पुंसः परपीडात्मकेषु च । मनस्तद्रक्षतां देव भूयो भूयो जनार्द्दन ।
माभून्मनसि कालुष्यं मनो मे निर्म्मलं भवेत् । कलुषं यस्य तच्चित्तं नरके पातयत्यमुं ।
बाह्यानि निर्म्मलान्येवमिन्द्रियाणि भवन्तु त । न तानि कार्य्यवन्तीह मनश्चेत् कलुषं भवेत् ।
नाङ्गानि कुष्ठिनाऽमेध्यं गृहीत्वा यो व्यवस्थितः । बहिः प्रक्षालनं कुर्व्वन् किं भवेत्तस्य केशव ।
व्यर्थो हि केवलं तस्य प्रयत्नो बाह्यगोचरः । तस्मात् सर्व्वप्रयत्नेन चित्तं रक्ष जनार्द्दन । १४६८५
बलवानिन्द्रियग्रामो वारयैनं जनार्द्दन । परिवादाज्जगन्नाथ वाचं रक्ष दुरुद्दर ।

परद्रव्यात्मनो रक्ष परदाराज्जनार्द्दन । सर्व्वत्र मे दया भूयात् प्रसादात्तव केशव ।
त्वय्येव भक्तिरचला भूयाद्भूतेषु मे दया । बहुनाऽत्र किमुक्तेन शृणुष्वेदं वचो मम ।
सुखे दुःखे च रागे च भोजने गमने तथा । जाग्रत्स्वप्नेषु सर्व्वत्र त्वय्येव रमतां मनः ।
मामकं देवदेवेश नमस्तेऽस्तु जनार्द्दन । इति ब्रुवन् घोरतमो जात्वा क्षीणोऽन्यचिन्तकः । १४६९०
पिशाचो भगवद्भक्तः समाधिं समपद्यत । दृढं बद्धात्मनः कायमात्मपाशेन मांसपः ।
निश्चलेनैव मनसा सुखमास्ते स्म संयतः । ध्यायन् हरिं जगद्योनिं विष्णुं पीताम्बरं शिवं ।
मुकुन्दमादिपुरुषमेकाकारमनामयं । नित्यशुद्धं ज्ञानगम्यं कारणं सर्व्वदेहिनां ।
नासिकाग्रं समालोक्य पठन् ब्रह्म सनातनं । निर्वातस्थो यथा दीपः प्रोच्चरन् प्रणवं सदा ।
प्रणवं वाचकं मत्वा वाच्यं ब्रह्मेति निश्चितः । एकाग्रं सततं कृत्वा चित्तं विष्णौ समर्पितं । १४६९५
विकल्परहितं चित्तं हृदि मध्ये न्यवेशयत् । पुण्डरीके शुभदले समावेश्य जगत्पतिं ।
आस्ते सुखं महायोगी पिशितांशस्तदा महान् । त्रिधामानं जपंस्तत्र स्मरन् विष्णुं सनातनं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां घण्टाकर्णसमाधौ एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

॥ वैशम्पायन उवाच ॥ ततः स भगवान् विष्णुः पिशाचं दृष्टवांस्तदा । चिन्तयन्तं स्वमात्मानं शुद्धं शुद्धिसमन्वितं ।
आत्मन्येव स्थितं साक्षात् पठन्तं प्रणवं सकृत् । प्रार्थयन्तं स्वमात्मानमेकान्ते नियतं हरिः ।
अचिन्तयज्जगन्नाथः कारणं पुण्यसञ्चयं । ध्यात्वा तु सुचिरं विष्णुः कारणं पुण्यकर्म्मणः । १४७००
धनदस्योपदेशेन पठन् स्वकुक्षः स्थितो । वासुदेवेति कृष्णेति माधवेति च मां सदा ।
जनार्द्दन हरे विष्णो भूतभावन भावन । नरकारे जगन्नाथ नारायण परायण ।
इति मां नामभिर्नित्यं पठत्येव दिवानिशं । स्वपन् आसंस्तथा तिष्ठन् भुञ्जन् गच्छंस्तथा वदन् ।
भक्षयन्मांसपिटकं पिबन् शोणितमेव च । बाधमानश्च सुचिरं हत्वा चापि मृगान् बहून् ।
हनने भोजने चैव जाग्रत्स्वप्ने तथैव च । सर्व्वेष्वपि च कार्य्येषु कर्त्ताऽहमिति मन्यते । १४७०५
एतस्य कर्म्मणः पाक एष घोरस्य कर्म्मणः । निश्चित्यैवं जगन्नाथः प्रीतस्तस्य बभूव ह ।
अदर्शयत् स्वमात्मानमनन्यस्य जगत्पतिः । शुद्धेऽन्तःकरणे तस्य पिशाचस्याथ भूमिप ।
स च घोरः पिशाचोऽपि ददर्शात्मनि केशवं । पीतकौशेयवसनं पद्माक्षं श्यामलं हरिं ।
शंखिनं चक्रिणं विष्णुं खड्गिणं गदिनं विभुं । किरीटिनं कौस्तुभिनं श्रीवत्साङ्कादितोरसं ।
नीलमेघनिभं कान्तं गरुडस्थं प्रभञ्जनं । चतुर्भुजं शुभगिरं निष्कलं सर्व्वगं शिवं । १४७१०
अनादिनिधनं नित्यं मायाविनममायिनं । सत्ययुक्तं सदा शुद्धं बुद्धिगम्यं सदाऽमलं ।
मनस्येवं जगन्नाथं दृष्ट्वा विष्णुमनेकधा । अनुमीत्यैव नयने कृतार्थोऽस्मीत्यमन्यत ।
अद्य दृष्टो हरिर्विष्णुः साक्षात् सर्व्वगतः प्रभुः । प्रसन्नो हि हरिर्मह्यं तेनाहं दृष्टवान् हरिं ।
सिद्धं मे जन्मनः कृत्यं किमतः कृत्यमस्ति मे । ग्रन्थयो मम निर्भिन्ना वश्यान्येवेन्द्रियाणि मे ।
प्रायेण जितमित्येव मनो मन्ये स्थिते हरौ । ईर्षणा च निरस्ता मे प्रसन्नोऽहं तथाऽभवं । १४७१५

एतेभ्योऽपि पिशाचेभ्यो निर्मुक्तः संप्रति तथा। सोऽसौ ममानुजः साक्षात् स च भक्तस्तथा हरौ।
कालेन चैव निर्म्मुक्तो विष्णोः सायुज्यमाप्नुयात्। इत्येवं चिन्तयित्वा स आत्मपाशं विभिद्य च।
क्रमेण प्राणानुन्मुच्य विलोक्य च दिशस्तथा। शरीरं सुसमं कृत्वा प्राविशत् सुमुखेन ह।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां घण्टाकर्णस्य विष्णुसाक्षात्कारे द्विसप्तत्यधिकद्विशतोऽध्यायः ॥ २७२ ॥

॥ वैशम्पायन उवाच ॥ पिशिताशो जगन्नाथं ददर्शाथ जगद्गुरुं। समाधौ च यथा दृष्टं भूमौ चापि तथा हरिं।
अयं विष्णुरयं विष्णुरित्यूचे पिशिताशनः। समाधौ च यथा दृष्टः सोऽयमत्रापि दृश्यते। १४७१०
इत्युवाच पुनर्ब्रूते नृत्यन्निव हसन्निव।
अयं स चक्री शरशार्ङ्गधन्वा गदी रथी शङ्खजलजपाणिः। सहस्रमूर्द्धा सकलामरेशो जगत्प्रसूतिर्ज्जगतां निवासः।
विष्णुर्ज्जिष्णुर्जगन्नाथः पुराणः पुरुषोत्तमः। विश्वेशो विश्वकर्त्ता च सोऽयमेव सनातनः।
अस्यैव देवस्य हरेः स्तनान्तरे विराजते कौस्तुभरत्नदीपः। यस्य प्रसादाज्जगदेतदादौ विराजते चन्द्रमसेव रात्रिः।
योऽसौ पृथ्वीं दधाराशु दंष्ट्रया जलसम्प्लवात्। सोऽयमेव हरिः साक्षाद्वाराहं वपुरास्थितः। १४७१५
बद्ध्वा तदा दानवमुग्रपौरुषं ददौ च शक्राय ततोऽनु राज्यं। बलिं बलादेव हरिः स वामनस्तुतश्च भक्त्या मुनिभिः पुरातनैः।
दंष्ट्राकरालः सुमहान् हत्वा यो दानवान् रणे। निःशोकमखिलं लोकं चकारासौ जनार्द्दनः।
आदौ दधारैकभुजेन मन्दरं निर्म्मिथ्य सर्व्वामसुरान्महार्णवे। ददौ च शक्राय सुधामयं महान् स एष साक्षादिह मामव स्थितः।
यः शेते जलधौ नागे देव्या लक्ष्म्या सुखावहं। हत्वा तौ दानवौ घोरौ मधुकैटभसंज्ञितौ।
यमाद्यं विपुलं जगत्पतिं सर्व्वस्य धातारमजं अजितं। अणोरणीयांसमतिप्रमाणं स्थूलात् स्थविष्ठं हरिमेव विष्णुं। १४७२०
यत्र स्थितमिदं सर्व्वं प्राप्ते लोकस्य नाशने। आदौ यस्मात् समुत्पन्नं सोऽयं विष्णुरितः स्थितः।
यस्येच्छया सर्व्वमिदं प्रवर्त्तते निवर्त्तते चापि जनार्द्दनस्य। अयं स विष्णुः पुरुषोत्तमः शिवः प्रवर्त्तते मामिह यद्वदीश्वरः।
भृगोर्वंशे समुत्पन्नो जामदग्न्य इति श्रुतः। शिष्यत्वं समवाप्यैव त्र्यम्बकस्य यः स्थितः।
जघान वीर्य्यादबलिनं महारणे कुठारशस्त्रेण गिरीशशिष्यः। सहस्रबाहुं कृतवीर्य्यसम्भवं हयैश्च नागैश्च रथैश्च निर्गतं।
कुरुक्षेत्रं समासाद्य यश्चकार पितृक्रियां। निःक्षत्रियमिमं लोकं कृतवानेकविंशतिं। १४७२५
रघोरथ कुले जातो रामो नाम जनार्द्दनः। सीतया च श्रिया युक्तो लक्ष्मणानुचरः कृती।
कृत्वा च सेतुं जलधौ जनार्द्दनो हत्वा च रक्षःपतिमाशुगैः शरैः। दत्त्वा च राज्यं स विभीषणाय दशाश्वमेधैरयजच्च योऽसौ।
वसुदेवकुले जातो वासुदेवेति शब्दितः। गोकुले क्रीडते योऽसौ सङ्कर्षणसहायवान्।
उत्तानशायी शिशुरूपधारी पीत्वा स्तनं पूतनिकाप्रदत्तं। व्यसुं चकाराशु जनार्द्दनस्तदा दनोः सुतां तामवधत् स्म हरिः।
पयःपानं तथा कुर्व्वन् भक्षयन्दधिपिण्डकं। दाम्ना बद्धोदरो विष्णुर्माता रुषितया दृढं। १४७४०
ततश्च दाम्ना सुदृढेन बद्धो जघान योऽसौ यमलार्ज्जुनौ च। क्रीडन् हरिर्गोकुलवासवासो गोपीभिराक्रन्द्य मुखं सनम्रं।

विक्रीडते नागफणे जनार्द्दनो निषेव्यमाणः सह गोपदारकैः। महाह्रदे नागपतिं जगत्पतिर्ममर्द्द वीर्य्यातिशयं प्रदर्शयन्।
 यो धेनुकं तालवने तरुस्थैः समभ्यछिनत्। हत्वा दानवमुग्रं तं गोपान् विस्मापयत्ययो।
दधार योऽसौ धरमुग्रपौरुषो महामतिर्वासवमागमे सति। विजृम्भयन् शक्रबलं प्रमोदयन् गोपांश्च गोपीश्च सगोकुलं हरिः।
 गोपीनां स्तनमध्ये तु क्रीडते काममोश्वरः। योऽसौ पिबंस्तदधरं मायामानुषदेहवान्। १४७४५
गोपीभिराखाद्य मुखं विविक्ते शेते स्म रात्रौ सुखमेव केशवः। स्तनान्तरेष्वेव तदा च तासां कामीव कान्ताधरपल्लवं पिबन्।
 अक्रूरेण समाहूतस्तेन गच्छन् हि यामुने। जले यो दर्शितस्तेन नागलोके स एव हि।
ततश्च गच्छन् बलवान् जनार्द्दनो हत्वा तमुग्रं रजकं बलात् पथि। हत्वा च वस्त्राणि यथेष्टमीश्वरो ययौ सरामो मथुरां पुरीं हरिः।
लब्ध्वा च दामानि बहूनि कामदो दत्त्वा वरं मालिकसत्तये महान्तं। लब्ध्वाऽनुलेपं सुरभिञ्च यादवः कुब्जां चकाराशु महार्हरूपां।
 योऽसौ चापं समादाय मध्ये छित्त्वा महद्धनुः। सिंहनादं महच्चक्रे कल्पान्ते जलदो यथा। १४७५०
हत्वा गजं घोरमुदग्ररूपं विषाणमादाय ततो नु केशवः। ननर्त्त रङ्गे बहुरूपमीश्वरः कंसस्य दत्त्वा भयमुग्रवीर्य्यः।
 योऽसौ हत्वा महामल्लं चाणूरं निहतद्विषं। यादवेभ्यो ददौ प्रीतिं कंसस्यैव तु पश्यतः।
जघान कंसं रिपुपक्षघातिनं पितृद्विषं यादवनामधेयं। संस्थाप्य राज्ये हरिरुग्रसेनं सान्दीपनिं काश्यमुपागमच्च।
 विद्यामवाप्य सकलां दत्त्वा पुत्रं महामुनेः। साग्रजोऽथ जगामाशु मथुरां यादवीं पुरीं।
 हत्वातिघोरं नरकं महामतिः कृत्वा सुघोरं कदनं जनार्द्दनः। ररक्ष विप्रान्मुनिगोरसंघान् देवांश्च सर्व्वान् जगतो जगत्पतिः। १४७५५
 स एव भगवान् विष्णुरद्य दृष्टो जनार्द्दनः। कृतकृत्योऽस्मि सञ्जातः सायुज्यं प्राप्तवानहं।
 येन दृष्टो हरिः साक्षात्तस्य मुक्तिः करे स्थिता। सोऽयमेव हरिः साक्षात् मत्यक्षमिह वर्त्तते।
 को नु जन्मान्तरे पूर्व्वं धर्म्मः सञ्चित एव मे। यस्य पाकः समुत्पन्नो येनासौ दृश्यते मया।
 सर्व्वथा पुण्यवानस्मि नष्टसंसारबन्धनः। किमस्मै दीयते वस्तु किन्नु वक्ष्यामि सांप्रतं।
 करिष्ये किमहं विष्णो वदस्वाद्य यथेप्सितं। १४७६०
 ॥ वैशम्पायन उवाच ॥ इत्युक्त्वा विस्वरं नादं ननर्द्द बहुशस्तदा। जहास विकृतं भूयो ननर्त्त पिशिताशनः।
 नमो नमो हरे कृष्ण यादवेश्वर केशव। प्रत्यक्षञ्च हरेस्तस्य ननर्त्त विविधं नृप।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां घण्टाकर्णकृतविष्णुस्तवे त्रिसप्तत्यधिकद्विशततोऽध्यायः ॥ २७३ ॥
 ॥ वैशम्पायन उवाच ॥ विहस्य विकृतं भूयः प्रहस्य च यथाबलं। भ्रातुश्चैव हतस्याथ शवमादाय सत्वरः।
 द्विधाकृत्य महाघोरं पिशितं केशवादकं। ततः खण्डं समादाय चक्रिरभ्युक्ष्य यत्नतः।
 निधाय पात्रे सुशुभे नमस्कृत्य जनार्द्दनं। इदं प्रोवाच देवेशं प्राञ्जलिः प्रयतः स्थितः। १४७६५
 इदमाद्य मे जगन्नाथ भक्ष्यं योग्यं तव प्रभो। भवादृशैर्भक्षणाय यांश्च सर्व्वात्मना हरे।

भक्तिमता वयं विष्णो नात्र कार्य्या विचारणा। दत्तं यद्भक्तिमत्त्वेन पात्रं तत्स्वामिना हरे।
नवं सुसंस्कृतं भक्ष्यं ब्राह्मणं प्रवमुत्तमं। अस्माकं पिशिताशानां शास्त्रे नियतमेव हि।
तस्माद्गृहाण भगवन् यदि दोषो न विद्यते। इत्युक्त्वा विहितं भूयो विहस्य स तु कामतः।
दातुमैच्छत्तदा खण्डमस्पृश्यमनु प्रवस्य ह। ततः प्रीतोऽभवत्तस्मै मनसाऽपूजयच्च तं। १४७७०
अहोऽस्य स्नेहकारुण्यं मयि सर्व्वत्र वर्त्तते। इति संचिन्त्य मनसा प्रोवाच यदुपुङ्गवः।
अलमेतेन सर्व्वत्र पिशाच पिशिताशन। अस्पृश्यं माहृशैरेतद्ब्राह्मणं प्रवमुत्तमं।
ब्राह्मणः सर्व्वथा पूज्यो जन्तुभिर्द्धर्मकाङ्क्षिभिः। पिशाचा घोरकर्म्माणो यतन्ते ब्रह्महिंसने।
न हन्तव्याः सदा विप्रास्तद्धिंसा नरकावहा। तस्मादस्पृश्यमस्माभिर्नात्र कार्य्या विचारणा।
भक्त्या प्रीतोऽस्मि भद्रन्ते मनोनिर्म्मलता यथा। मनः शुद्धिं सदापन्नं ततः प्रीतोऽस्मि मानद। १४७७५
अस्मात् संकीर्त्तनाच्छ्रवस्वच्छुद्धं हि करणं तव। अतीव मनसा प्रीत इत्युक्त्वा भगवान् हरिः।
पस्पर्शाङ्गं तदा विष्णुः पिशाचस्याथ सर्व्वतः। करेण मृदुना देवः पापान्निर्मोचयद्धरिः।
ततस्तस्याभवद्रूपं कामरूपसमप्रभं। दीर्घकुञ्चितकेशाढ्यो दीर्घबाहुः सुलोचनः।
समाङ्गुलिः समनखः समवक्त्रः समुन्नसः। पद्माक्षः पद्मवर्णाभः पद्मकेशरभूषणः।
केयूरी चाङ्गदी चैव कौशेयवसनस्तदा। ज्ञानवान् सत्त्वसम्पन्नः साक्षादिन्द्र इवापरः। १४७८०
गन्धर्व्व इव गायंस्तु सिद्धः सिद्ध इव स्वयं। साक्षात् स्पृष्टं तदा विष्णोः करेण मृदुपूर्व्वकं।
न नूनं तादृशं रूपमासीत् कालान्तरेष्वपि। अद्यापि नैव मुनयो लभन्ते तादृशं वपुः।
कृत्वा सुबहुशो घोरं तपः परमदारुणं। यच्च लब्धं तदा तेन पिशाचेन नृपोत्तम।
को नु नाम जगन्नाथमाश्रितः सीदते नृप। स हि सर्व्वत्र कल्याणी यो हि नित्यं जनार्द्दनं।
ध्यायन् पठन् जपन् वापि तस्य किं नास्ति भूपते। ततः प्रोवाच भगवान् स्थितं काममिवापरं। १४७८५
अक्षयः स्वर्गवासस्ते यावदिन्द्रो वसिष्यति। तावत् स्वर्गे भवानस्तु शासनान्मम नान्यतः।
नष्टे शक्रे ततः स्वर्गात् सायुज्यं समगच्छतु। योऽयं भ्राता तव स्वर्गे यावदिन्द्रो भवेत्तदा।
वरं वरय भद्रन्ते यत्ते मनसि वर्त्तते। दाताऽस्मि सर्व्वं सर्व्वत्र नात्र कार्य्या विचारणा।
॥ घण्टाकर्ण उवाच ॥ यश्चेमं सङ्गमं देव संस्मरेन्नियतात्मवान्। भक्तिस्तस्याचला देव त्वयि भूयाज्जनार्द्दन।
मनःशुद्धिर्भवेत्तस्य माभूत् कलुषता हरे। कालुष्यं मनसस्तस्य माभूदेष वरो मम। १४७९०
एवमस्त्विति देवेशः स्वर्गं गच्छेति केशव। इन्द्रातिथिर्भवानस्तु त्वां प्रतीक्ष्य हरिः स्थितः।
इत्युक्त्वा भगवान् कृष्ण उत्थाप्य ब्राह्मणं तदा। तेन स्तुतो जगन्नाथः पूजयित्वा च तं द्विजं।
ततो विसृज्य गोविन्दस्तस्माद्देशादुपागमत्। यत्र ते मुनयः सिद्धा अग्निहोत्रसमन्विताः।
स च स्वर्गी ततः स्वर्गमाज्ञया केशवस्य ह। तस्मात् पठ सदा राजन् मनःशुद्धिं यदीच्छसि।
मनश्च शुद्धं भवति पठतस्ते जगत्पते। १४७९५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां घण्टाकर्णमोक्षे चतुःसप्तत्यधिकद्विशतोऽध्यायः ॥२७४॥

॥ वैशम्पायन उवाच ॥ ततः स भगवान् विष्णुर्मुनिभ्यस्तत्समादितः । कथयामास यद्वृत्तं पिशाचस्य महात्मनः ।
तच्छ्रुत्वा मुनयः सर्व्वे विस्मयं परमं गताः । अहोऽस्य कर्म्मणः पाकस्तव सन्दर्शनादिति ।
अर्च्चितो मुनिभिः सर्व्वैः प्रीतः प्रीतिमतां प्रियः । ततः प्रभाते विमले सूर्य्ये चाभ्युदिते सति ।
आरुह्य गरुडं विष्णुर्ययौ कैलासमुत्तमं । भवद्भिस्तत्र गन्तव्यमित्युक्त्वा मुनिसत्तमान् ।
यत्र विश्वेश्वराः सिद्धास्तपस्यन्ति यतव्रताः । यत्र वैश्रवणः साक्षादुपास्ते शङ्करं सदा । १४८८०
यत्र तन्मानसं नाम सरो हंसालयं महत् । यत्र भृङ्गिरिटिर्देवमुपास्ते शङ्करं शिवं ।
गाणपत्यमवाप्याथ हरपार्श्वचरः सदा । यत्र सिंहा वराहाश्च द्विपद्वीपिमृगैः सह ।
क्रीडन्ति वन्यरतयः परस्परहिते रताः । यत्र नद्यः समुत्पन्ना गङ्गाद्याः सागरङ्गमाः ।
यत्र विश्वेश्वरः शम्भुरच्छिनद्ब्रह्मणः शिरः । यत्रोत्पन्ना महावेशा भूतानां हरतां वपुः ।
उमया यत्र सहितः शङ्करो नीललोहितः । ऋषिभिः प्रार्थितः पूर्व्वं ददौ यत्र गिरिः सुतां । १४८८५
शङ्कराय जगद्धात्रे शिवाय जगतीपते । यत्र लेभे हरिश्चक्रमुपास्य बहुभिर्दिनैः ।
पुष्करैः शतपत्रैश्च नेत्रेण च जगत्पतिं । गुहां यत्र समाश्रित्य क्रीडन्ते सिद्धकिन्नराः ।
प्रियाभिः सह मोदन्ते पिबन्ते मधु चोत्तमं । समुद्धृत्य भुजैः सर्व्वैः पौलस्त्यो विरराम ह ।
तमारुह्य महाशैलं देवकीनन्दनो हरिः । मानसस्योत्तरं तीरं जगाम यदुनन्दनः ।
तपश्चर्त्तुं किल हरिर्विष्णुः सर्व्वेश्वरः शिवः । जटी चीरी जगन्नाथो मानुषं वपुराश्रितः । १४८९०
तपसे धृतचित्तस्तु शुचौ भूमावुपाविशत् । अवरुह्य ततो यानाद्गरुडाद्देवसम्मितात् ।
द्वादशाब्दं तपश्चर्त्तुं मनो दध्रे ततो हरिः । फाल्गुनेन तु मासेन समारब्धे जगत्पतिः ।
शाकभक्षः कृतजपो वेदाध्ययनतत्परः । किमुद्दिश्य जगन्नाथस्तपश्चरति मानवः ।
तं न विद्मो यथाकामं दुर्ज्ञेयेश्वरचिन्तनात् । तपस्यति तदा विष्णौ पर्व्वते भूतसेविते ।
गरुडः कश्यपसुत इन्धनानि समाचिनोत् । होमार्थं वासुदेवस्य चरतस्तप उत्तमं । १४८९५
चक्रराजोऽथ पुष्पाणि सञ्चिनोति तदा हरेः । दिक्षु सर्व्वासु सर्व्वत्र ररक्ष जलजस्तदा ।
खड्ग आहृत्य यत्नेन कुशान् सुवङ्कस्तदा । गदा कौमोदकी चैव परिचर्य्यां चकार ह ।
धनुःप्रवरमत्युग्रं शार्ङ्गं दानवभीषणं । स्थितं हि पुरतस्तस्य यथेष्टं भृत्यवत् स्वयं ।
जुहोति भगवान् विष्णुरेधोभिर्व्वह्निभिः सदा । आज्यादिभिस्तदा हव्यैरग्निं सम्पूज्य माधवः ।
सप्तार्च्चिषः समासिञ्च समस्तव्यस्ततः कृति । एकस्मिन्नेकदा मासे भुञ्जानो नियतात्मवान् । १४९००
द्वितीये त्वथ षण्मासे भुञ्जन्नेकेन केशवः । एकस्मिन् वत्सरे भुञ्जंस्तथैवैकेन केनचित् ।
समाप्य तु ततः सर्व्वमेवमेव जगत्पतिः । द्वादशाब्दे तथा पूर्णे ऊनमासे जगत्पतिः ।
जुह्वन् वह्निं समाध्यायन् पठन्मन्त्रं जनार्द्दनः । आरण्यकं पठन् विष्णुः साक्षात् सर्व्वेश्वरो हरिः ।
आस्ते ध्यानपरस्तत्र पठन् प्रणवमुत्तमं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

॥ वैशम्पायन उवाच ॥ ततः इन्द्रः स्वयं तत्र आरुह्य गजमुत्तमं । द्रष्टुं सर्व्वेश्वरं विष्णुं तपस्यन्तं समाययौ ।  १४८२५
ततो यमस्तु भगवानारुह्य महिषं वरं । किङ्करैश्च स्वयं साक्षाद्ययौ गजमुत्तमं ।
प्रचेता हंसमारुह्य वारुणैश्च समन्वितः । श्वेतच्छत्रसमायुक्तः श्वेतव्यजनवीजितः ।
ययौ कैलासशिखरं द्रष्टुं केशवमञ्जसा । अन्ये चापि तथा देवा आदित्या वसवस्तथा ।
रुद्राश्चैव तथा राजन् द्रष्टुं केशवमाययुः । सिद्धाश्च मुनयश्चैव तथाऽन्ये मुनिसत्तमाः ।
सर्व्वाश्चाप्सरसो राजन् नृत्यगीतविशारदाः । ततो देवगणाः सर्व्वः कैलासं समपद्यत ।  १४८३०
पर्व्वतो नारदश्चैव तथाऽन्ये ऋषिसत्तमाः । विस्मयस्मितलोलाक्षाः सर्व्वे देवगणास्तथा ।
आश्चर्यं खलु पश्यध्वं न भूतं न भविष्यति । योगिध्येयः स्वयं कृष्णो यत्तप्यति गुरुः स्वयं ।
को न्वत्र समयो भूयादिति ते मेनिरे गणाः ।
ततः समाप्ते सकले जगत्पतेर्व्रते समूले सकलेश्वरः शिवः । द्रष्टुं हरिं लोकहितैषिणं प्रभुं ययौ भवान्या सह भूतसंघैः ।
सार्द्धं कुवेरेण सगुह्यकेन सख्या प्रियेण प्रभुरीश्वरः शिवः । स्वयं जटी भूतपिशाचसंवृतः शरो च खड्गी शशिखण्डशेखरः । १४८३५
करेण बिभ्रत् सह दर्भकुण्डिकां करेण साक्षादपरेण दीपिकां । अन्येन बिभ्रन्महतीं स डिण्डिमां शूलञ्च बिभ्रन्नपरेण बाहुना ।
गुणान् स रुद्राक्षकृतान् समुद्वहन् जटाभिरापिङ्गलताम्रमूर्त्तिः । विराजमानः प्रभुरिन्दुशेखरो वृषेण युक्तः सुषितेन शङ्करः ।
उमास्तनद्वन्द्वसमर्पिताननस्तया समाश्लिष्य निपीडिताधरः । गङ्गाम्बुविक्षालितचन्द्रशेखरस्तांश्चापि वीचन् वहुशस्तदा शिवः ।
भस्माङ्गरागैरनुलेपिताननो महोरगैर्व्वद्धजटः सनातनः । शिरःकपालैः परिशोभितस्तदा द्रष्टुं हरिं केशवमभ्ययाच्छिवः ।
यमाहुरग्र्यं पुरुषं महान्तं पुरातनं सांख्यनिबद्धहृदयः । यस्यापि देवस्य गुणान् समग्रांस्तत्त्वांश्चतुर्विंशतिमाहुरेके ।  १४८४०
यमाहुरेकं पुरुषं पुरातनं कणादनामानमजं महेश्वरं । इन्द्रस्य यज्ञं विनिहत्य यो वै विनाश्य देवानसुरान् सनातनः ।
यं विदुर्भूततत्त्वज्ञं भूतेशं भूतभावनं । वामदेवं विरूपाक्षमाहुस्तत्त्वविदो जनाः ।
महादेवं सहस्राक्षं कालमूर्त्तिं चतुर्भुजं । रुद्रं रोदननामानमाहुर्विश्वेश्वरं शिवं ।
अप्रमेयमनाधारमाहुर्माहेश्वरा जनाः । नग्नं नागोपवीतन्तु नागिनं अग्निवर्चसं ।
आहुर्विश्वेश्वरं शान्तं शिवमादिं सनातनं । यस्य मूर्त्तिरिमाः सर्व्वा धराद्याः सकला नृप ।  १४८४५
भूमिरापोऽनलो वायुः खं सूर्य्यश्च तथा शशी । तथैव यजमानश्च प्रकृतिश्चैवमष्टधा ।
महादेवो महायोगी गिरिशो नीललोहितः । आदिकर्त्ता महीभर्त्ता शूलपाणिरुमापतिः ।
द्रष्टुं विश्वेश्वरं विष्णुं भूतसंघैः समाययौ ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥
॥ वैशम्पायन उवाच ॥ तस्याग्रे समपद्यन्त भूतसंघाः सहस्रशः । घण्टाकर्णो विरूपाक्षः कुण्डधारः कुमुद्वहः ।
दीर्घरोमा दीर्घभुजो दीर्घबाहुर्निरञ्जनः । उरुवक्त्रः शतमुखः शतग्रीवः शतोदरः ।  १४८५०

कुण्डोदरो महाग्रीवः स्थूलजिह्वो त्रिबाहुकः । पार्श्ववक्त्रः पिंगमुख उष्ट्रग्रीवो महाहनुः ।
त्रिबाहुः पञ्चबाहुश्च व्याघ्रवक्त्रः सिताननः । एते चान्ये च बहवो दीर्घाङ्गा दीर्घलोचनाः ।
नृत्यन्तः प्रहसन्तश्च स्फोटयन्तः परस्परं । तथाऽन्ये घोररूपाश्च तथाऽन्ये विकृताननाः ।
प्रेतभक्ष्याः प्रेतवाहा मांसशोणितभोजनाः । शवानि सुबहून्याशु भक्षयन्तस्ततस्ततः ।
पिबन्तो रुधिरं घोरं खण्डयन्तः शवान् बहून् । कराला विनता दीर्घा धमनिसुसन्तताः । १४८५५
नानाविधाः सुवीराश्च शूलाग्रप्रोतमानुषाः । शिरोमालावृताः केचिद्दामपाशावपाश्रिताः ।
डिण्डिमैरट्टहासैश्च नादयन्तो वसुन्धरां । कपालिनो भैरवाश्च जटिला मुण्डिनस्तथा ।
एवं बहुविधा घोराः पिशाचा विकृताननाः । तथाऽन्ये मुनिवीराश्च ध्यायन्तः परमेश्वरं ।
पठन्तो वेदवाक्यानि शास्त्राणि विविधानि च । कुण्डिकाहस्तकराः केचित् केचित् कुशविचीरिणः ।
कौपीनवसनाः केचित् केचित् काषायसंवृताः । स्तुवन्तः शङ्करं भक्त्या स्तोत्रैर्माहेश्वरैस्तथा । १४८६०
एकत्र ते मुनिगणा अपरत्र गणास्तथा । अन्यत्र सिद्धगन्धर्व्वाः प्रियाभिः प्रियसङ्गताः ।
नृत्येऽपि कुशलाः सर्व्वे गायन्ति स्म च कन्यकाः । विद्याधरास्तथाऽन्यत्र स्तुवन्तः शङ्करं शिवं ।
ननृतुस्तस्य पुरतो गच्छतोऽप्सरसां गणाः । एवमेतैर्महाघोरैः पिशाचैर्भूतकिन्नरैः ।
मुनिभिश्चाप्सरोभिश्च समं शर्व्वः समाययौ । यत्र विश्वेश्वरो विष्णुस्तपस्तेपे सुदारुणं ।
यत्र ते लोकपालाश्च तिष्ठन्ति स्म दिदृक्षया । उमया लोकभाविन्या गङ्गया चन्द्रशेखरः । १४८६५
स सर्व्वलोकप्रभवो हरिः शिवो जटी च साक्षात् प्रणवात्मकः शूली । द्रष्टुं हरिं विष्णुमुदारविक्रमो ययौ यथेष्टं पिशिताश्च नैर्ऋतः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां महादेवागमने सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥२७७॥

॥ वैशम्पायन उवाच ॥ एवं बहुविधैर्भूतैः पिशाचैरुरगैः सह । आगत्य भगवान् रुद्रः शङ्करो वृषवाहनः ।
ददर्श विष्णुं देवेशं तपन्तं तप उत्तमं । जुह्वानमग्निं विधिवद्दध्यैर्मेध्यैर्जगत्पतिं ।
गरुडाहृतकाष्ठन्तु जटिलं चीरवाससं । पक्षिणानीतकुसुमं खगानीतकुशं तथा ।
गदाकृतसमाचारं देवदेवं जनार्द्दनं । इन्द्राद्यैर्देवसंघैश्च वृतं मुनिगणैः सह । १४८७०
अचिन्त्यं सर्व्वभूतानां ध्यायन्तं किमपि प्रभुं । अवरुह्य वृषात् शर्व्वो भगवान् भूतभावनः ।
ततः प्रीतः प्रसन्नात्मा ललाटाच्च उमापतिः । ततो भूताः पिशाचाश्च राक्षसा गुह्यकास्तथा ।
मुनयो विप्रवर्य्याश्च जयशब्दं प्रचक्रिरे । जय देव जगन्नाथ जय रुद्र जनार्द्दन ।
जय विष्णो हृषीकेश नारायण परायण । जय रुद्र पुराणात्मन् जय देव हरेश्वर ।
आदिदेव जगन्नाथ जय शङ्कर भावन । जय कौस्तुभदीप्ताङ्ग जय भस्मविराजित । १४८७५
जय चक्रगदापाणे जय शूलिन् त्रिलोचन । जय मौक्तिकदीप्ताङ्ग जय नागविभूषण ।
इति ते मुनयः सर्व्वे प्रणामं चक्रिरे हरिं । तत उत्थाय भगवान् दृष्ट्वा देवमवस्थितं ।
वृषध्वजं विरूपाक्षं शङ्करं नीललोहितं । ततो हृष्टमना विष्णुस्तुष्टाव हरमीश्वरं ।

॥ भगवानुवाच ॥ नमस्ते शितिकण्ठाय नीलग्रीवाय वेधसे । नमस्ते शोचिषे अस्तु नमस्ते उपवासिने ।
नमस्ते मीढुषे अस्तु नमस्ते गदिने हर । नमस्ते विश्वतनवे वृषाय वृषरूपिणे । १४८८०
अमूर्त्ताय च देवाय नमस्तेऽस्तु पिनाकिने । नमः कुब्जाय कूप्याय शिवाय शिवरूपिणे ।
नमस्तुष्टाय तुष्याय नमस्तुटितुटाय च । नमः शिवाय शान्ताय गिरिशाय च ते नमः ।
नमो हराय विप्राय नमो हरिहराय च । नमोऽघोराय घोराय घोरघोरप्रियाय च ।
नमोऽघण्टाय घण्टाय नमो घटिघटाय च । नमः शर्व्वाय शान्ताय भूताधिपतये नमः ।
नमो विरूपरूपाय पुराय पुरहारिणे । नम आद्याय बीजाय शुचयेऽष्टस्वरूपिणे । १४८८५
नमः पिनाकहस्ताय नमः शूलासिधारिणे । नमः खट्वाङ्गहस्ताय नमस्ते कृत्तिवाससे ।
नमस्ते देवदेवाय नम आकाशमूर्त्तये । हराय हरिरूपाय नमस्ते तिग्मतेजसे ।
भक्तप्रियाय भक्ताय भक्तानां वरदायिने । नमोऽभ्रमूर्त्तये देव जगन्मूर्त्तिधराय च ।
नमश्चन्द्राय देवाय सूर्य्याय च नमो नमः । नमः प्रधानदेवाय भूतानां पतये नमः ।
करालाय च मुण्डाय विकृताय कपर्द्दिने । अजाय च नमस्तुभ्यं भूतभावन भावन । १४८९०
नमोऽस्तु हरिकेशाय पिङ्गलाय नमो नमः । नमस्तेऽभीषुहस्ताय तीरुभीरुहराय च ।
हराय भीतिरूपाय घोराणां भीतिदायिने । नमो दक्षमखघ्नाय भगनेत्रापहारिणे ।
उमापते नमस्तुभ्यं कैलासनिलयाय च । आदिदेवाय देवाय भवाय भवरूपिणे ।
नमः कपालहस्ताय नमो यमघनाय च । त्र्यम्बकाय नमस्तुभ्यं त्र्यक्षाय च शिवाय च ।
वरदाय वरेण्याय नमस्ते चन्द्रशेखर । नम इध्माय हविषे ध्रुवाय च कृशाय च । १४८९५
नमस्ते शक्तियुक्ताय नागपाशप्रियाय च । विरूपाय सुरूपाय मद्यपानप्रियाय च ।
श्मशानरतये नित्यं जयशब्दप्रियाय च । खरप्रियाय खर्व्वाय खराय खररूपिणे ।
भद्रप्रियाय भद्राय भद्ररूपधराय च । विरूपाय सुरूपाय महाघोराय ते नमः ।
घण्टाय घण्टभूषाय घण्टाभूषणभूषिणे । तीव्राय तीव्ररूपाय तीव्ररूपप्रियाय च ।
नग्नाय नग्नरूपाय नग्नरूपप्रियाय च । भूतवास नमस्तुभ्यं सर्व्वावास नमो नमः । १४९००
नमः सर्व्वात्मने तुभ्यं नमस्ते भूतिदायक । नमस्ते वामदेवाय महादेवाय ते नमः ।
का नु वाक् स्तुतिरूपा ते को नु स्तोतुं प्रशक्नुयात् । कस्य वा स्फुरते जिह्वा स्तुतौ स्तुतिमतां वर ।
क्षमस्व भगवन्देव भक्तोऽहं त्राहि मां हर । सर्व्वात्मन् सर्व्वभूतेश त्राहि मां सततं हर ।
रक्ष देव जगन्नाथ लोकान् सर्व्वात्मना हर । त्राहि भक्तान्महादेव भक्तप्रिय सदा हर ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां ईश्वरस्तुतौ अष्टसप्तत्यधिकद्विशततोऽध्यायः ॥ २७८ ॥

॥ वैशम्पायन उवाच ॥ ततो वृषध्वजो देवः शूली साक्षादुमापतिः । करं करेण संस्पृश्य विष्णोश्चक्रधरस्य ह । १४९०५
प्रोवाच भगवान्रुद्रः केशवं गरुडध्वजं । शृण्वतां सर्व्वदेवानां मुनीनां भावितात्मनां ।
किमिदं देवदेवेश चक्रपाणे जनार्द्दन । तपश्चर्य्या किमर्थन्ते प्रार्थना तव का विभो ।

स्वयं विष्णुर्भवामित्थं तपश्चक्रे तपतां हरे। पुत्रार्थं प्रति ते देव तपश्चर्य्या जनार्द्दन।
पुत्रो दत्तो मया देव पूर्व्वमेव जगत्पते। शृणु तथापि भगवान् कारणं कारणात्मक।
तपस्तप्तुं प्रवृत्तोऽहं कुतश्चित् कारणाद्धरे। वर्षायुतं महाघोरं पुरा कृतयुगे तदा। १४९१०
भवानी तत्र मे देव परिचर्त्तुं तदाऽभवत्। पित्रा नियुक्ता देवेश उमैषा वरवर्णिनी।
भीत इन्द्रस्तदा देव मारं मां प्रेषयत्तदा। मधुना सह संयुक्तो मारो मामागतस्तदा।
लक्ष्यं मामकरोत्तत्र बाणस्य सेवितस्य च। एषा मां सेवते तत्र दानात् पुष्पादीनां हरे।
ततः क्रुद्धोऽहमभवं दृष्ट्वा मारं तथाविधं। क्रुध्यतो मम देवेश नेत्राद्वह्निः पपात च।
सोऽयमग्निस्तदा मारं भस्मसात् कृतवान् हरे। अचिन्तयं तदा विष्णो प्रकाश्यैतत् चिकीर्षितं। १४९१५
ततः प्रभृति देवेश दया तं प्रति वर्त्तते। ब्रह्मणा च नियुक्तोऽस्मि प्रीतस्तत्र जनार्द्दन।
नियुक्तः पुत्ररूपेण स तं देव जगत्पते। ज्येष्ठस्तव सुतो देवः प्रद्युम्नोऽप्यभिविश्रुतः।
स्मरं तं विद्धि देवेश नात्र कार्य्या विचारणा। इत्युक्त्वा पुनराहेदं याथात्म्यं दर्शयन्निव।
मुनीनां श्रोतुकामानां याथात्म्यं तत्र सत्तम। अञ्जलिं संपुटं कृत्वा विष्णुमुद्दिश्य शङ्करः।
उमया सार्द्धमीशानो याथात्म्यं वक्तुमैहत। हरे कुर्व्वति तत्रैवमञ्जलिं कुरुसत्तम। १४९२०
मुनयो देवगन्धर्व्वाः सिद्धाश्च सहकिन्नराः। अञ्जलिं चक्रिरे विष्णो देवदेवेश्वरे हरौ।
॥ महेश्वर उवाच ॥ यत्तत् कारणमाहुस्तत् सांख्याः प्रकृतिसंज्ञकं। त्रिधाभूतं जगद्योनि प्रधानं कारणात्मकं।
सत्त्वं रजस्तमो विष्णो जगद्धेतु जनार्द्दन। तच्च कारणमाहुस्त्वां सांख्यास्तत्त्वविदो हरे।
ततो महान् समुत्पन्नः प्रकृतिर्यच्च कारणं। तद्रूपेण भवान् विष्णो परिणम्याधितिष्ठति।
तस्मात्तु महतो घोरादहङ्कारो महानभूत्। सत्त्वमादौ जगन्नाथ परिणामस्तथा वहिः। १४९२५
अहङ्कारात् प्रभो देव कारणानि महान्ति च। तन्मात्राणि तथा पञ्च भूतानि प्रभवन्त्युत।
तानि त्वमाहुरीशानं भूतानीह जगत्पते। पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं।
चक्षुर्घ्राणं तथा स्पर्शो रसना श्रोत्रमेव च। मनः षष्ठं तथा देव प्रेरकं तत्र तत्र ह।
कर्म्मेन्द्रियाणि चान्यानि वागादीनि जनार्द्दन। त्वमेव तानि सर्व्वाणि करोषि नियतात्मवान्।
स्वेषु स्वेषु जगन्नाथ विषयेषु तथा हरे। निवेशयसि देवेश योग्यामिन्द्रियपद्धतिं। १४९३०
यदा त्वं रजसा युक्तस्तदा भूतानि सृष्टवान्। यदा च सत्त्वयुक्तोऽसि तदा पाता जगत्त्रयं।
यदा त्वं तमसाक्रान्तस्तदा संहरसे जगत्। त्रिभिरेव गुणैर्युक्तः सृष्टिरक्षाविनाशनं।
वर्त्तसे त्रिविधां भूतिमामाद्दाय नियतात्मवान्। इन्द्रियाणीन्द्रियार्थेषु नियोजयसि माधव।
प्राणिनामुपभोगार्थमन्नं सृष्ट्वा जगद्गुरो। तस्मात् सर्व्वत्र भूतेषु वर्त्तसे सर्व्वभोगवान्।
ब्रह्मा त्वं सृष्टिकालेषु स्थितौ विष्णुरसि प्रभो। संहारे रुद्रनामाऽसि त्रिधात्मा भवसि प्रभो। १४९३५
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। एताः प्रकृतयो देव भिन्नाः सर्व्वत्र ते हरे।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सहस्रधा सहस्राक्ष सहस्रात्मा दिवस्पतिः।

भूमिं सर्व्वामिमां व्याप्य सप्तद्वीपां ससागरां । अणुः सर्व्वगो भूत्वा अत्यतिष्ठद्दशाङ्गुलं ।
त्वमेवेदं जगत् सर्व्वं यद्भूतं यच्च भविष्यति । त्वत्तो विराट् प्रादुरभूत् सम्राट् चैव जनार्द्दन ।
तव वक्त्राज्जगन्नाथ ब्राह्मणो लोकरक्षकः । प्रादुरासीत् पुराणात्मन् षट्कर्म्मनिरतः सदा । १४८४०
राजन्यस्तु तथा बाह्वोरासीत् संरक्षणे रतः । ऊर्व्वोर्वैश्यस्तथा विष्णो पादाच्छूद्र उदाहृतः ।
एवं वर्णा जगन्नाथ तव देहाज्जनार्द्दन । मनसस्तव देवेश चन्द्रमाः समपद्यत ।
सुखकृत् सर्व्वभूतानां शीतांशुरमृतप्रभः । अक्ष्णोः सूर्य्यः समुत्पन्नः सर्व्वप्राणिविलोचनः ।
यस्य भासा जगत्सर्व्वं भासते भानुमानसौ । मुखादपश्च अग्निश्च प्राणाद्वायुरजायत ।
पद्भ्यां भूमिः समुत्पन्ना दिशः श्रोत्रात् जगत्पते । एवं सृष्ट्वा जगत् सर्व्वं व्याप्य चैवमवस्थितः । १४८४५
व्याप्य सर्व्वानिमान् लोकान् स्थितः सर्व्वत्र केशव । ततश्च विष्णुनामाऽसि धातोर्व्याप्तेश्च दर्शनात् ।
नारा आपः समाख्यातास्तासामयनमादितः । यतस्त्वं भूतभव्येश तस्मान्नारायणश्रुतिः ।
हरसि प्राणिनो देव ततो हरिरिति स्मृतः । शं करोषि सदा देव ततः शङ्करतां गतः ।
बृहत्त्वाद्बृंहणत्वाच्च तस्माद्ब्रह्मेति शब्दितः । मधुरिन्द्रियनामेति ततो मधुनिषूदनः ।
हृषीकाणीन्द्रियाण्याहुस्तेषामीशो यतो भवान् । हृषीकेशस्ततो विष्णो ख्यातो देवेषु केशव । १४८५०
क इति ब्रह्मणो नाम ईशोऽहं सर्व्वदेहिनां । आवां तवाङ्गसम्भूतौ तस्मात्केशवनामवान् ।
मा विद्या च हरे प्रोक्ता तस्या ईशो यतो भवान् । तस्मान्माधवनामाऽसि धवः स्वामीति शब्दितः ।
गौरेषा श्रूयते वाणी तां च वेद यतो भवान् । गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान् ।
त्रिरित्येव त्रयो वेदाः कीर्त्तिता मुनिसत्तमैः । क्रमते तांस्तथा सर्व्वान् त्रिविक्रम इति स्मृतः ।
अणुर्वामननामाऽसि यतस्त्वं वामनाख्यया । मननान्मुनिरेवासि यमनात् यतिरुच्यसे । १४८५५
तपश्चरसि यस्मात्त्वं तपस्वीति च शब्दितः । वसन्ति त्वयि भूतानि भूतावासस्ततो हरे ।
ईशस्त्वं सर्व्वभूतानामीश्वरोऽसि ततो हरे । प्रणवः सर्व्ववेदानां गायत्री छन्दसां प्रभो ।
अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः । रुद्राणामहमेवासि वसूनां पावको भवान् ।
अश्वत्थो वृक्षजातीनां ब्रह्मा लोकगुरुर्भवान् । मेरुस्त्वं पर्व्वतेन्द्राणां देवर्षीणाञ्च नारदः ।
ज्ञानवान् दैत्यमध्ये तु प्रह्लादो भक्तवत्सलः । सर्पाणामेव सर्व्वेषां भवान् वासुकिसंज्ञितः । १४८६०
गुह्यकानाञ्च सर्व्वेषां भवान् धनद एव च । वरुणो यादसां राजा गङ्गा त्रिपथगा भवान् ।
आदिस्त्वं सर्व्वभूतानां मध्यमन्तस्तथा भवान् । त्वत्तः समभवद्विश्वं त्वयि सर्व्वं प्रलीयते ।
अहं त्वं सर्व्वगो देव त्वमेवाहं जनार्द्दन । आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ।
नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्य्या विचारणा ।
त्वदुपासा जगन्नाथ सैवास्तु मम गोपते । यश्च त्वां द्वेष्टि देवेश स मां द्वेष्टि न संशयः । १४८६५
त्वद्विस्तारो यतो देव अहं भूतपतिस्ततः । न तदस्ति विना देव यत्ते विरहितं हरे ।
यदासीद्वर्त्तते यच्च यच्च भावि जगत्पते । सर्व्वं त्वमेव देवेश विना किञ्चित्त्वया न हि ।

स्तुवन्ति देवाः सततं भवन्तं स्वगुणैः प्रभो । वाक् च त्वं यजुरेवासि समाधि सततं प्रभो ।
किमुच्यते मया देव सर्व्वं त्वं भूतभावन । नमः सर्व्वात्मना देव विष्णो माधव केशव ।
नमस्करोमि सर्व्वात्मन्नमस्तेऽस्तु सदा हरे । नमः पुष्करनाभाय वन्दे त्वामहमीश्वर । १४९७०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां विष्णुस्तवे अशीत्यधिकद्विशततोऽध्यायः ॥ २७९ ॥

॥ वैशम्पायन उवाच ॥ इत्युक्त्वा देवदेवेशं मुनीनाह पुनः शिवः । एवं जानीत हे विप्रा ये भक्ता द्रष्टुमागताः ।
एतदेव परं वस्तु नैतस्मात् परमस्ति वः । एतदेव विजानीध्वमेतद्वः परमं तपः ।
एतदेव सदा विप्रा ध्येयं सततमानसैः । एतद्वः परमं श्रेय एतद्वः परमं धनं ।
एतद्वो जन्मनः कृत्यमेतद्वस्तपसः फलं । एष वः पुण्यनिलयः एष धर्म्मः सनातनः ।
एष वो मोक्षदाता च एष मोक्ष उदाहृतः । एष पुण्यप्रदः साक्षादेतद्वः कर्म्मणां फलं । १४९७५
एतदेव प्रशंसन्ति विद्वांसो ब्रह्मवादिनः । एष चर्य्यागतिर्व्विप्रा प्रार्थ्या ब्रह्मविदां सदा ।
एतदेव प्रशंसन्ति सांख्ययोगसमाश्रिताः । एष ब्रह्मविदां मार्गः कथितो वेदवादिभिः ।
एवमेव विजानीत नात्र कार्य्या विचारणा । हरिरेकः सदा ध्येयो भवद्भिः सत्त्वमास्थितैः ।
नान्यो जगति देवोऽस्मिन् विष्णोर्नारायणात् परः । ओमित्येव सदा विप्राः पठत ध्यात केशवं ।
ततो निःश्रेयसप्राप्तिर्भविष्यति न संशयः । एवं ध्यातो हरिः साक्षात् प्रसन्नो वो भविष्यति । १४९८०
भवनाशमयं देवः करिष्यति दृढं हरिः । सदा ध्यात हरिं विप्रा यदीच्छा प्राप्तुमच्युतं ।
एष संसारविभवं विनाशयति वो गुरुः । स्मरध्वं सततं विष्णुं पठध्वं चिरशोरिणं ।
मनःसंयमनं विप्राः कुरुध्वं यत्नतः सदा । शुद्धेऽन्तःकरणे विष्णुः प्रसीदति तपोधनाः ।
ध्यात्वा मां सर्व्वयत्नेन ततो जानीत केशवं । उपास्योऽहं सदा विप्रा उपास्येऽस्मिन् हरौ स्थितः ।
उपायोऽयं मया प्रोक्तो नात्र सन्देह इत्यपि । अयं मार्गो सदा विप्रा यतध्वमघनाशने । १४९८५
यथा वो बुद्धिरखिला शुद्धा भवति यत्नतः । तथा कुरुत विप्रेन्द्रा यथा देवः प्रसीदति ।
॥ वैशम्पायन उवाच ॥ एवमुक्तास्ततः सर्व्वे मुनयः पुण्यशीलिनः । यथावदुपलब्धज्ञाना निरस्य संशयं नृप ।
एवमेवेति तं विप्राः प्राहुः प्राञ्जलयो हरं । छिन्नो नः संशयः सर्व्वो गृहीतोऽर्थः स तादृशः ।
एतदर्थं समायाता वयमद्य तवाश्रयं । अस्माकमायुवयोः सर्व्वो नष्टो मोहो महानिह ।
यथा वदसि देवेश तथा नः श्रेयसं परं । यथाह भगवान् रुद्रो यतामः सततं हरौ । १४९९०
इति ते मुनयः प्रीताः प्रणेमुः केशवं हरिं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां रुद्रोपदेशे अशीत्यधिकद्विशततोऽध्यायः ॥ २८० ॥

॥ वैशम्पायन उवाच ॥ ततः स भगवान् रुद्रः सर्व्वान् विस्मापयन्निव । स्तुत्या प्रचक्रमे स्तोतुं विष्णुं विश्वेश्वरं हरिं ।
अर्थ्याभिः श्रुतियुक्ताभिर्मुनीनां शृण्वतां तदा ।
॥ महेश्वर उवाच ॥ नमो भगवते तुभ्यं वासुदेवाय धीमते । यस्य भासा जगत् सर्व्वं भासते नित्यमच्युत ।
नमो भगवते देव नित्यं सूर्य्यात्मने नमः । यः प्रीतयति शीतांशुर्लोकान् सर्व्वानिमान् प्रभुः । १४९९१

नमस्ते विष्णवे देव नित्यं सोमात्मने नमः । यः प्रजाः प्लावयत्येको विश्वात्मा भूतभावनः ।
नमः सर्व्वात्मने देव नमो वाय्वात्मने हरे । यो दधार करेणासौ कुशचीरादि यत् सदा ।
दधार वेदान् सर्व्वांश्च तस्मै ब्रह्मात्मने नमः । सर्व्वान् संहरते यस्तु संहारे विश्वकृत् सदा ।
क्रोधात्माऽसि विरूपोऽसि तुभ्यं रुद्रात्मने नमः । स्रष्टा स्रष्टा समस्तानां प्राणिनां प्राणदायिने ।
अजाय विष्णवे तुभ्यं स्रष्ट्रे विश्वसृजे नमः । आदौ प्रकृतिमूलाय भूतानां प्रभवाय च । १५०००
नमस्ते देवदेवेश प्रधानाय नमो नमः । पृथिव्यां गन्धरूपेण संस्थितः प्राणिनां हरे ।
दृढाय दृढरूपाय तुभ्यं गन्धात्मने नमः । अपां रसाय सर्व्वेष प्राणिनां सुखहेतवे ।
नमस्ते विश्वरूपाय रसाय च नमो नमः । तेजसा भास्वरो यस्तु घृणी जन्तुस्थितः सदा ।
तस्मै देव जगन्नाथ नमो भास्वररूपिणे । वायौ स्पर्शो गुणो यत्र शीतोष्णसुखदुःखदः ।
नमस्ते वायुरूपाय नमः स्पर्शात्मने हरे । आकाशेऽवस्थितः शब्दः सर्व्वशोभनिवेशनः । १५००५
नमस्ते भगवन् विष्णो तुभ्यं शब्दात्मने नमः । यो दधार जगत् सर्व्वं मा यामानुषदेहवान् ।
नमस्तुभ्यं जगन्नाथ मायिने ऽमायदायिने । नम आद्याय बीजाय निर्गुणाय गुणात्मने ।
अचिन्त्याय सुचिन्त्याय तस्मै चिन्तात्मने नमः । हराय हरिरूपाय ब्रह्मणे ब्रह्मदायिने ।
नमो ब्रह्मविदे तुभ्यं तुभ्यं ब्रह्मात्मने नमः । नमः सहस्रशिरसे सहस्रकिरणाय च ।
नमः सहस्रवक्त्राय सहस्रनयनाय च । विश्वाय विश्वरूपाय विश्वकर्त्रे नमो नमः । १५०१०
विश्वकर्त्रे नमो नित्यं भूतावास नमो नमः । इन्द्रियार्थस्वरूपाय विषयाय सदा हरे ।
नमोऽश्वशिरसे तुभ्यं वेदाभरणरूपिणे । अग्नये ऽग्निपते तुभ्यं ज्योतिषां पतये नमः ।
सूर्य्याय सूर्य्यवपुषे तेजसां पतये नमः । नमः सोमाय सौम्याय नमः शीतात्मने हरे ।
नमो वषट्कृते तुभ्यं स्वाहास्वधास्वरूपिणे । नमो यज्ञाय ईज्याय हविषे हव्यसंस्कृते ।
नमः स्रुवाय पात्राय यज्ञाङ्गाय पराय च । नमः प्रणवदेहाय परायाप्यपराय च । १५०१५
वेदरूपाय वेदाय शास्त्राय शास्त्ररूपिणे । गदिने खड्गिने तुभ्यं शङ्खिने चक्रिणे नमः ।
शूलिने चर्म्मिणे नित्यं वरदाय नमो नमः । बुद्धप्रियाय बुद्धाय प्रबुद्धाय सुखाय च ।
हरये विष्णवे तुभ्यं नमः सर्व्वात्मने गुरो । नमस्ते सर्व्वलोकेश सर्व्वकर्त्रे नमो नमः ।
नमः स्वभावशुद्धाय नमस्ते यज्ञसूकर । नमो विष्णो नमो विष्णो नमो विष्णो नमो हरे ।
नमस्ते चास्तु देवाय वासुदेवाय धीमते । नमः कृष्णाय सर्व्वाय सर्व्वावास नमो नमः । १५०२०
नमो भूयो नमस्तेऽस्तु पाहि लोकान् जनार्द्दन । इति स्तुत्वा जगन्नाथमुवाच मुनिसत्तमान् ।
इमं स्तोत्रमधीयाना नित्यं भजत केशवं । शरण्यः सर्व्वभूतानां स वः श्रेयो विधास्यति ।
ये चेमं धारयिष्यन्ति स्तवं पापविमोचनं । तेषां प्रीतः प्रसन्नात्मा पठतां शृण्वतां हरिः ।
श्रेयो दास्यति धर्म्मात्मा नात्र कार्य्या विचारणा । अवश्यं मनसा ध्यात केशवं भक्तवत्सलं ।
श्रेयः प्राप्तुं यदीच्छन्त भवन्तः शंसितव्रताः । इत्युक्त्वा भगवान् रुद्रस्तत्रैवान्तरधीयत । १५०२५

सगणः शङ्करः साक्षादुमया भूतभावनः । ततस्ते मुनयः सर्व्वे परां निर्वृतिमाययुः ।
तमेव परमं तत्त्वं मत्वा नारायणं हरिं । विस्मयं परमं गत्वा मेनिरे सफलार्थतां ।
लोकपालास्तदा विष्णुं नमस्कृत्य हरिं तदा । जग्मुः स्वान्यथ वेश्मानि गणैः सर्व्वैर्नृपोत्तम ।
आरुह्य भगवान् विष्णुर्गरुडं पक्षिपुङ्गवं । शङ्खी चक्री गदी खड्गी शार्ङ्गी तूणी तनुत्रवान् ।
यथागतं जगन्नाथो ययौ वदरिकामनु । सर्व्वाश्रमे पुण्डरीकाक्षो नित्यं मुनिनिषेवितं । १५३१०
तत्र गत्वा यथायोगं विश्रम्य हरिरीश्वरः । अर्च्चितो मुनिभिः सर्व्वैर्निषसाद सुखासने ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां कृष्णप्रत्यागमने एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु पौण्ड्रो नृपवरोत्तमः । बलवान् सत्त्वसम्पन्नो योद्धा विपुलविक्रमः ।
वृष्णिशत्रुस्तदा राजा कृष्णद्वेषी बलात् सदा । नृपान् सर्व्वान् समाहूय प्रोवाच नृपसंसदि ।
जिता च पृथिवी सर्व्वा जिताश्च नृपसत्तमाः । कृष्णश्चैव बलोन्मत्ताः कृष्णमाश्रित्य गर्व्विताः ।
दास्यन्ति मे करं सर्व्वे न हि ते मम बान्धवः । कृष्णश्चक्रबलान्मत्तो मामवज्ञाय तिष्ठति । १५३१५
अहं चक्रीति गर्व्वोऽभूत्तस्य गोपस्य सर्व्वदा । शङ्खी चक्री गदी शार्ङ्गी शरी तूणी सहायवान् ।
एवमादिर्महागर्व्वस्तस्य संप्रति वर्त्तते । लोके च मम यन्नाम वासुदेवेति विश्रुतं ।
अस्मद्धाम्नम तन्नाम गोपो मद्बलान्वितः । तस्य चक्रस्य चक्रं ममापि निर्म्मितं महत् ।
गर्व्वहन्तृ सदा तस्य नाम्ना चापि सुदर्शनं । सहस्रारं महाघोरं तस्य चक्रस्य नाशनं ।
अनेकप्रहृतं चक्रं गोपकस्य नृपोत्तमाः । ममाप्येतद्दुर्निरीक्ष्यं शार्ङ्गं नाम महारवं । १५३२०
गदा कौमोदकी नाम्ना ममेयं महती दृढा । कालायसमयस्यास्य सारेण सुकृता मया ।
खड्गो नन्दकनामाऽसौ ममायं विपुलो दृढः । अन्तकस्यान्तको घोरस्तस्य खड्गस्य नाशकः ।
ततश्चाहं गदी खड्गी शार्ङ्गी शङ्खी तनुत्रवान् । युधि जेता च कृष्णस्य नात्र कार्य्या विचारणा ।
मास्म ब्रूत नृपाश्चैनं गदिनं चक्रिणं तथा । शंखिनं शार्ङ्गिणं वीरं ब्रूत नित्यं नृपोत्तमाः ।
वासुदेवेति मां ब्रूत न तु गोपं यदूत्तमं । एकोऽहं वासुदेवो हि हत्वा तं गोपदारकं । १५३२५
सख्युर्मम बलाद्धत्वा नरकस्य महात्मनः । मां तथा यदि न ब्रूत दण्ड्या भारशतैः शतं ।
सुवर्णस्य च निष्कस्य धान्यस्य बहुशस्तथा । तथा शृणुत राजेन्द्रे मनसा दुःसहं यथा ।
केचित्सभ्यासमायुक्ता आसते वीर्य्यवत्तराः । एवमाह बलवीर्य्यस्य केशवस्य सदा नृपाः ।
अपरे तु नृपा राजन्नेवमेवेति चुक्रुशुः । अन्ये बलमदोन्मत्ता जेष्यामः केशवं रणे ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥
॥ वैशम्पायन उवाच ॥ ततः कैलासशिखरान्निर्गतो मुनिसत्तमः । नारदः सर्व्वलोकज्ञः पौण्ड्रस्य नगरं प्रति । १५३३०
अवतीर्य्य नभोभागात् प्रत्यागम्य नरोत्तमं । द्वाःस्थेन च समाहूतः प्रविवेश गृहोत्तमं ।
अर्घ्यादिसमुदाचारं नृपाल्लब्ध्वा महामुनिः । निषसादासने शुभ्रे स्वास्तृते शुभवाससा ।
कुशलं पृष्टवान् भूयो नृपः स मुनिसत्तमं । उवाच नारदं भूयः पौण्ड्रको बलगर्व्वितः ।

भवान् सर्व्वत्र कुशलः सर्व्वकार्य्येषु पण्डितः । पूजितो देवसिद्धेषु गन्धर्व्वेषु महात्मसु ।
सर्व्वत्रगो निराबाधो गन्ता सर्व्वत्र सर्व्वदा । अगम्यं तव विप्रेन्द्र ब्रह्माण्डेऽत्र न किञ्चन । १५०५५
नारदेदं वद त्वं हि यत्र यत्र गतो भवान् । तत्र तत्र तपःसिद्धो लोकप्रथितवीर्य्यवान् ।
पौण्ड्र एव च विख्यातो वासुदेवेति शब्दितः । शङ्खी चक्री गदी शार्ङ्गी खड्गी तूणी तलत्रवान् ।
विजेता राजसिंहानां दाता सर्व्वस्य सर्व्वदा । भोक्ता राज्यस्य सर्व्वस्य शास्ता राजा बलाहलो ।
अजेयः शत्रुसैन्यानां रक्षिता स्वजनस्य ह । योऽस्य गोपकनामाऽसौ वासुदेवेति शब्दितः ।
तस्य वीर्य्यबले न स्तो नाम्नो हि मम धारणे । स हि गोपो वृथा बाल्यादुच्चारयत्येव नाम मे । १५०६०
इदं निश्चिनु विप्रेन्द्र एक एव भवाम्यहं । वासुदेवो जगत्यस्मिन्निर्जित्य बलिनं यदुं ।
वृष्णीन् सर्व्वान् बलात् छित्त्वा निर्द्दहिष्ये च तां पुरीं । द्वारकां वृष्णिनिलयां योद्धा चाहं महामते ।
एते च बलिनः सर्व्वे नृपा मम समागताः । अश्वाश्च वेगिनः सन्ति रथा वायुजवा मम ।
उष्ट्रा मत्ताः सहस्रञ्च गजा नियुतमेव च । एतेनैव बलेनाशौ हनिष्ये केशवं रणे ।
तस्मादेवं सदा विप्र वद ब्रह्मन् पुरे मम । इन्द्रस्यापि सदा विप्र वद नारद सांप्रतं । १५०६५
प्रार्थनैषा मम विभो नमस्ये त्वां तपोधन ।
॥ नारद उवाच ॥ सर्व्वत्रगः सदा चास्मि यावद्ब्रह्माण्डसंस्थितिः । अवार्य्यः सर्व्वकार्य्येषु गमने केनचिन्नृप ।
किन्तु वक्तुं तथा राजन्नोत्सहे नृपसत्तम । सत्यं शासति देवेशे चक्रपाणौ जनार्द्दने ।
विष्णौ सर्व्वत्रगे देवे दुष्टान् हत्वा सबान्धवान् । वासुदेवेति को नाम तिष्ठत्यस्मिन् धराविति ।
को नाम वक्तुमेवेदं कृष्णे शासति गोमती । अज्ञानाद्वक्तुमेवञ्च समर्थाः प्राकृता नराः । १५०७०
हरिः सर्व्वत्रगो विष्णुर्द्दर्पं ते व्यपनेष्यति । अचिन्त्यविभवो विष्णुः शार्ङ्गधन्वा गदाधरः ।
आदिदेवः पुराणात्मा दर्पन्ते व्यपनेष्यति । हास्यमेतन्महाराज यच्च वै तव संस्थितं ।
शार्ङ्गं खड्गं तथा राजन् महाघोरं न दृश्यते । अतीव हासकालोऽयं तव संप्रति वर्त्तते ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकनारदसंवादे त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥
॥ वैशम्पायन उवाच ॥ ततः क्रुद्धो महाराज पौण्ड्रो मदबलान्वितः । नारदं विप्रवर्य्यं तं प्रोवाच नृपसंसदि ।
किमिदं विप्र विप्रर्षे राजाऽहं वो द्विजैः सह । गच्छ त्वं काममथवा मुने शापप्रदः सदा । १५०७५
भीतस्त्वत्तो महाबुद्धे गच्छ त्वं काममद्य हि । इत्युक्तो नृपवर्य्येण तूष्णीमेव स नारदः ।
जगामाकाशगमनो यत्र तिष्ठति केशवः । स गत्वा विष्णुमङ्काशं विष्णोः सर्व्वं शशंस ह ।
तच्छ्रुत्वा भगवान् विष्णुर्यथेष्टं वदतामिति । दर्पं तस्यापनेष्यामि श्वोभूते द्विजसत्तम ।
इत्युक्त्वा विररामैव तस्मिन् बदरिकाश्रमे । ततः पौण्ड्रो महाबाहुर्बलैर्बहुभिरीश्वरः ।
अश्वैरनेकसाहस्रैर्गजैर्बहुभिरन्वितः । शस्त्रकोटिसमायुक्तः स राजा सत्यसङ्गरः । १५०८०
अनेकशतसाहस्रैः पत्तिभिः स समन्वितः । एकलव्यप्रभृतिभीराजभिश्च समन्ततः ।
अष्टौ रथसहस्राणि नागानामयुतं तथा । अर्बुदं पत्तिसंघानां तद्बलं समपद्यत ।

एतेन तु बलेनाजौ प्रस्फुरन्नृपसत्तमः । विरराज महाराजन्नुद्यन्स्रो यथा रविः ।
स ययौ मध्यरात्रेण नगरीं द्वारकामनु । ततो दीपिकाहस्ता रात्रौ तमसि दारुणे ।
ययुर्विविधशस्त्राढ्याः संपतन्तो महाबलाः । द्वारकां वीर्य्यसम्पन्नां महाघोरां नृपोत्तमाः । १५५८५
रथं महात्मनारुह्य शस्त्रौघैश्च समावृतं । पट्टिशासिसमाकीर्णं गदापरिघसंकुलं ।
शक्तितोमरसंकीर्णं ध्वजमालासमाचितं । किङ्किणीजालसंयुक्तं शराचिप्राससंयुतं ।
महाघोरं महारौद्रं युगान्तजलदोपमं । धनुर्गदासमाकीर्णं महामेघोपमं महत् ।
अभ्यर्कसदृशाकारं ययौ द्वारवतीमनु । गृहीतदीपिको राजा वीर्य्यवान् बलवान्नृप ।
हन्तुमैच्छज्जगन्नाथं वृष्णींश्चैव समन्ततः । आकर्षन् बलमुख्यांस्तान् राज्ञः सर्व्वान्महाद्युतिः । १५५९०
पुरद्वारं समासाद्य बलं संस्थाप्य यत्नतः । इदं प्रोवाच राजा तु नृपान् सर्व्वानवस्थितान् ।
ताड्यतामत्र भेरी तु नाम विश्राव्य मामकं । युध्यतां युध्यतामत्र देयं वा प्रतिदीयतां ।
आगतः पौण्ड्रको राजा युद्धार्थी वीर्य्यवत्तरः । हन्तुकामः समयागतः कृष्णबाहुबलाश्रयान् ।
इति ते प्रेषिताः सर्व्वे समीयुः सुचका यदून् । दीपिकाश्च प्रदीप्यन्ते बहुः शतसहस्रशः ।
इतश्चेतश्च राजानो युध्यन्ते युद्धलालसाः । पुरीं ते पुरतस्तत्र क्षत्रिणः क्षत्रियास्तथा । १५५९५
सिंहनादं प्रकुर्व्वन्तः शस्त्रधारासमाकुलाः । कुतोऽयं वृष्णिप्रवरः कुतो राजा जगत्पतिः ।
कुतोऽयं सात्यकिर्व्वीरः कुतो हार्द्दिक्य एव च । कुतो नु बलभद्रश्च सर्व्वयादवसत्तमः ।
इत्येवं कथयन्तो वै राजानः सर्व्व एव ते ।
आदाय शस्त्राणि बहूनि सर्व्वतः शरांश्च चापानि बहूनि सर्व्वे । युद्धाय सन्नाहनिबद्धशो ययुर्हरेः पुरीं द्वारवतीं नृपोत्तमाः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकस्य द्वारकागमने चतुरशीत्यधिकद्विशततोऽध्यायः ॥ २८४ ॥
॥ वैशम्पायन उवाच ॥ ततश्च यादवाः सर्व्वे दृष्ट्वा सैनिकसञ्चयं । रात्रौ च व्यसनं प्राप्तं महाशस्त्रसमाकुलं । १५६००
महावातसमुद्धूतकल्पान्तसागरोपमं । सन्नद्धाः समपद्यन्त क्षत्रियो युद्धलालसाः ।
गृहीतदीपिकाः सर्व्वे यादवाः शस्त्रयोधिनः । सात्यकिर्व्वलभद्रश्च हार्द्दिक्यो निशठस्तथा ।
उद्धवोऽथ महाबुद्धिरुग्रसेनो महाबलः । अन्ये च यादवाः सर्व्वे कवचग्रथने रताः ।
समस्तयुद्धकुशला रात्रौ सन्नाहयोधिनः । क्षत्रियाः क्षत्रियाश्चैव सर्व्वे शस्त्रसमाकुलाः ।
युद्धाय समपद्यन्त बहवो बाहुशालिनः । रथिनो गजिनश्चैव सादिनः सायुधास्तथा । १५६०५
नित्ययुक्ता महात्मानो धन्विनः पुरुषोत्तमाः । निर्ययुर्नगरात्तूर्णं दीपिकाभिः समन्ततः ।
कुतः पौण्ड्रक इत्येवं वदन्तः सर्व्वसात्वताः । दीपिकादीपितो देशो निस्तमाः समपद्यत ।
ततो वितिमिरो देशः समन्तात् प्रत्यपद्यत । युद्धं समभवद्घोरं वृष्णिभिः शत्रुभिः सह ।
ततो महान् समभवत्स नादो रोमहर्षणः । हया हयैः समायुक्ता गजाश्च गजयूथपैः ।
रथा रथैः समायुक्ताः सादिभिः सादिनस्तथा । खड्गिनः खड्गिभिः सार्द्धं गदिभिर्गदिनस्तथा । १५६१०
परस्परव्यतीकारो रण आसीत् सुदारुणः । महाप्रलयसंक्षोभः सर्व्वेषां महात्मनां ।

धावन्तः प्रहरन्त्येतान् सर्व्वतो नृप घ्नन्ति नः। अयमेष महाबाहुः खड्गी पतति वीर्य्यवान्।
अयमेव शरो घोरो वर्त्ततेऽतिसुदारुणः। गदी चायं महावीर्य्यः सर्व्वान्नो बाधते नृप।
अयं रथी शरी चापी गदी तूणी तनुत्रवान्। पट्टिशी सर्व्वतो याति कुन्तपाणिरयं बली।
अयमत्र महाशूली संस्थितः सर्व्वतो दिशं। गजोऽयं सविशाणाग्रो वर्त्तते सर्व्वतः प्रति। १५११५
अयं सर्व्वगः शूरो वेगवान् वातसन्निभः। शरान् शरैः समाहन्ति दण्डान् दण्डैर्व्यसत्यते।
कुन्तान् कुन्तैः समाजघ्नुर्गदाभिश्च गदास्तथा। परिघान् परिघैः शार्ङ्गं शूलान् शूलैः समन्ततः।
एवं तेषां महाराज कुर्व्वतां रणमुत्तमं। संग्रामः सुमहानासीच्छब्दश्चापि महानभूत्।
भूतानि सुबहून्याजौ शब्दयन्ति महान्ति च। प्रादुरासन् समस्तानि शङ्खानाञ्चैव निस्वनः।
रात्रौ प्रादुरभूच्छब्दः संग्रामे लोमहर्षणः। प्रावर्त्तत महायुद्धं वृष्णीनाञ्चैव तैः सह। १५१२०
केचिद्धताः समापेतुः पृथिव्यां पृथिवीक्षितः। केचित् पतितमास्थिष्टा विप्रकीर्णशिरोधराः।
पेतुरुर्व्व्यां महावीर्य्या राजानः शस्त्रपाणयः। केचित्तु भिन्नमर्म्माणः समापेतुः सहस्रशः।
परस्परं समाश्रित्य परस्परवधैषिणः। न्यस्तशस्त्रा महात्मानः समन्तात् क्षतविग्रहाः।
पेतुर्गतासवः केचित् यमराष्ट्रविवर्द्धनाः। एवन्ते निहता राजन् पार्थिवाः सर्व्व एव तु।
एतस्मिन्नन्तरे शूर एकलव्यो निषादपः। धनुर्गृह्य महाघोरं कालान्तकयमोपमः। १५१२५
शरैरनेकसाहस्रैरर्द्दयामास यादवान्। परःशतैः शराणान्तु निशितैर्मर्म्मभेदिभिः।
वृष्णीनाञ्च बलं सर्व्वं पीडयामास सर्व्वतः। युध्यतः शस्त्रपाणींश्च क्षत्रियान् वीर्य्यवत्तरान्।
निशठं पञ्चविंशत्या शराणां नतपर्व्वणां। सारणं दशभिर्विद्ध्वा हार्द्दिक्यं पञ्चभिः शरैः।
उग्रसेनं नवत्या तु वसुदेवञ्च सप्तभिः। उद्धवं दशभिश्चैव अक्रूरं पञ्चभिः शरैः।
एवमेते दृशः सर्व्वे निहता निशितैः शरैः। विद्राव्य यादवीं सेनां नाम विश्राव्य वीर्य्यवान्। १५१३०
एकलव्यो यदुवृषान् वीर्य्यवान् बलवानहं। इदानीं सात्यकिर्वीरः क यास्यति महाबलः।
मदमत्तो हली साक्षात् क यातीह गदाधरः। इत्याह सिंहनादेन सिंहान् विस्मापयन्निव।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे रात्रियुद्धे पञ्चाशीत्यधिकद्विशततोऽध्यायः॥ २८५॥

॥ वैशम्पायन उवाच॥ निवृत्तेष्वथ सैन्येषु वृष्णिवीरेषु चैव हि। भीतेष्वथ महाराज हतेषु युधि सर्व्वतः।
दीपिकासु प्रशान्तासु निःशब्दे सति सर्व्वतः। जितमित्येव तन्मत्वा वृष्णीनां बलमुत्तमं।
ततः पौण्ड्रो महावीर्य्यो बभाषे सैनिकान् स्वकान्। शीघ्रं गच्छत राजेन्द्राष्टङ्कैः कुन्तैः पुरीमिमां। १५१३५
कुठारैः कुन्तलैश्चैव पाषाणैः सर्व्वतो दिशं। कर्णपत्रैः सुघोरैस्तान् सर्व्वतो यात भूमिपाः।
भिद्यन्तां प्राकारचयाः प्रासादाश्च समन्ततः। गृह्यन्तां कन्यकाः सर्व्वा दास्यश्चैव समन्ततः।
गृह्यन्तां रत्नमुख्याश्च धनानि सुबहून्यथ। ते तथेति महात्मानो राजानः सर्व्व एव तु।
कुठारैः सर्व्वतश्चैव चिच्छिदुः पौण्ड्रकाज्ञया। प्राकारांश्चैव सर्व्वत्र प्रासादान् वरसद्मयाम्।
अथ तत्र महान् शब्दः प्रादुरासीत् समन्ततः। टङ्कैषु पात्यमानेषु प्राकारेषु महाबलैः। १५१४०

पूर्व्वद्वारे महाराज भिन्नाः प्राकारसंश्रयाः । श्रुत्वा शब्दं महाघोरं सात्यकिः क्रोधमूर्च्छितः ।
मयि सर्व्वं समारोप्य केशवो यादवेश्वरः । गतः कैलासशिखरं द्रष्टुं शङ्करमव्ययं ।
अवश्यं हि मया रक्ष्या पुरी द्वारवती स्थिरं । इति सञ्चिन्त्य मनसा धनुरादाय सत्वरं ।
रथं महान्तमारुह्य दारुकस्य महात्मनः । पुत्त्रेण संकृतं घोरं यन्ता च स्वयमेव हि ।
धनुर्महत्तदादाय शरं चाशीविषोपमान् । आमुच्य कवचं घोरं दृढं संपातदुःसहं । १५१४५
अङ्गदी कुण्डली तूणी शरी चापी गदासिमान् । ययौ युद्धाय शैनेयः संस्मरन् केशवं वचः ।
दीपिकादीपिते देशे ययौ सात्यकिरुत्तमः । तथैव बलदेवोऽपि रथमारुह्य भास्वरं ।
गदी शरी महावीर्य्यः प्रायाद्रणचिकीर्षया । सिंहनादं प्रकुर्व्वन् वै मुञ्चन् वै भैरवं रवं ।
उद्धवोऽपि बली साक्षाद्गजमारुह्य सम्मतं । कृत्वा महारवं घोरं सर्व्वयादवसत्तमः ।
ययौ नीतिं विचिन्वानः परां प्रीतिं महाबलः । अन्ये च वृष्णयः सर्व्वे ययुः संग्रामलालसाः । १५१५०
रथान् गजान् समारुह्य हार्द्दिक्यप्रमुखास्तदा । दीपिकाभिश्च सर्व्वत्र पुरोद्धृताभिरीश्वराः ।
सिंहनादं प्रकुर्व्वन्तः स्मरन्तः केशवं वचः । पूर्व्वद्वारं समागम्य वृष्णयो युद्धलालसाः ।
ते समेत्य यथायोगं स्थितास्तत्र महाबलाः । स्थिते सैन्ये महाघोरे दीपिकादीपिते तथा ।
शिनिर्व्वीरः शरी चापी गदी तूणीरवान् विभो । वायव्यास्त्रं समादाय योजयित्वा महाशरं ।
आकर्णपूर्णमाकृष्य धनुःप्रवरमुत्तमं । मुमोच परसैन्येषु शिनिर्वीरः प्रतापवान् । १५१५५
वायव्यास्त्रेण ते सर्व्वे तत्रस्था नरसत्तमाः । विजिता शस्त्रवीर्य्येण यत्र तिष्ठति पौण्ड्रकः ।
तत्र गत्वा स्थिताः सर्व्वे निर्द्धूता वातरंहसा । यत्र पूर्व्वं स्थिताः सर्व्वे विद्रुता राजसत्तमाः ।
तत्र स्थित्वा च शैनेयः शरमादाय सत्वरः । निश्चितं सर्पभोगाभं बभाषे सात्यकिस्तदा ।
क्व इदानीं महाबुद्धिः पौण्ड्रको राजसत्तमः । स्थितोऽस्मि व्यवसायेन शरी चापी महाबलः ।
यदि द्रष्टा दुरात्मानं ततो हन्ता नृपाधमं । भृत्योऽस्मि केशवस्याहं जिघांसुः पौण्ड्रकं स्थितः । १५१६०
छित्त्वा शिरस्तु तस्याथ सर्व्वक्षत्रस्य पश्यतः । बलिं दास्यामि भूतेभ्यः सभ्यस्यैव दुरात्मनः ।
को नाम ईदृशं कर्म्म चौरवच्च समाचरेत् । सुप्तेषु निशि सर्व्वेषु यादवेषु महात्मसु ।
चौरोऽयं सर्व्वथा राजा न हि राजबलान्वितः । यदि शक्तो न कुर्य्याच्च चौर्य्यमेवं नृपाधमः ।
अहोऽस्य बलिता राज्ञश्चौर्य्यकार्य्यं प्रकुर्व्वतः । सर्व्वथा गमनं तस्य न हि पश्यामि सांप्रतं ।
इत्युक्त्वा सात्यकिर्व्वीरः प्रजहास महाबलः । विस्फार्य्य सुदृढं चापं सन्दधे कार्म्मुके शरं । १५१६५
आकर्ण्य वचनं वीरः सात्यकेस्तस्य धीमतः । क्व नु कृष्णः क्व गोपालः कुतः सोऽद्य प्रवर्त्तते ।
स्त्रीहन्ता पशुहन्ता च क्व च स्वामीति सेवितः । स इदानीं क्व वर्त्तेत गृहीत्वा मम नाम तत् ।
हत्वा मल्लान्महावीर्य्यो नरकस्य महात्मनः । ममैव तात युद्धेऽस्मिन् हते तस्मिन् दुरात्मनि ।
गच्छ त्वं कामतो वीर योद्धुं न क्षमते भवान् । अथवा तिष्ठ किञ्चित्तु ततो द्रष्टाऽसि मे बलं ।
शिरस्ते पातयिष्यामि शरैर्घोरैर्दुरासदैः । हतस्य तव वीरेह भूमिः पास्यति शोणितं । १५१७०

श्रोष्यते स तथा गोपो हतः सात्यकिरित्यपि। यो गर्व्वस्तस्य गोपस्य सर्व्वदा वर्त्तते महान्।
विनश्यतु स तु क्षिप्रं हते त्वयि यदूत्तम। त्वयि रक्षां समादिश्य गोपः कैलासपर्व्वतं।
गत इत्येवमस्माभिः श्रुतं पूर्व्वं महामते। शरं मुहाण निशितं यदि शक्तोऽसि सात्यके।
इत्युक्ता वाणमादाय ययौ योद्धुं व्यवस्थितः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे रात्रियुद्धे षडशीत्यधिकद्विशततोऽध्यायः॥ २८६॥

॥ वैशम्पायन उवाच॥ ततः क्रुद्धो महाराज सात्यकिर्वृष्णिपुङ्गवः। उवाच वचनं राजन् वासुदेवं स्मरन्निव। ११९७७
श्रवोचदीदृशं वाक्यं वासुदेवं नृपाधमः। को नाम जगतां नाथमित्थं ब्रूयाद्विजीविषुः।
मृत्युसंज्ञा सर्व्वथा याति वदन्तं तादृशं वचः। जिह्वा ते शतधा दीर्य्योदवदस्तादृशं वचः।
एष ते पातयिष्यामि शिरः कायाच्च पौण्ड्रक। यन्नाम वासुदेवेति तव संप्रति वर्त्तते।
यावत् पतति कायात्ते शिरस्तावत् प्रवर्त्तते। स एव श्वो नु भगवान् वासुदेवो भविष्यति।
एक एव जगन्नाथः कर्त्ता सर्व्वस्य सर्व्वगः। दुरात्मन् सर्व्वथा देवो भविष्यति न संशयः। ११९८०
एष तेऽहं शिरः कायात् पातयिष्यामि राजक। यद्यसौ भगवान् विष्णुर्नागमिष्यति सांप्रतं।
अस्त्रवीर्य्यं बलञ्चैव सर्व्वं दर्शय साम्प्रतं। नातः परतरं राजन् वीर्य्यं तव च वर्त्तते।
सर्व्वं दर्शय यत्नेन स्थितोऽस्मि व्यवसायवान्। शरी चापी गदी खड्गी सर्व्वथाऽहमुपस्थितः।
नैतज्जगन्नाथाद्यो: सत्येनैतद्ब्रवीम्यहं। सर्व्वथा कृतकृत्योऽस्मि दृष्ट्वा त्वां वासुदेवक।
तवाङ्गं तिलशः कृत्वा स्वभ्यो दास्यामि राजक। इत्युक्ता वाणमादाय वासुदेवं महाबलः। ११९८५
आकर्णपूर्णमाकृष्य विव्याध निशितं शरं। स तेन विद्धो यदुना वासुदेवः प्रतापवान्।
नवभिर्दशभिश्चैव शरैः सन्नतपर्व्वभिः। विव्याध सात्यकिं राजा नदंश्च बहुधा क्रिय।
ततो नाराचमादाय निशितं यमसन्निभं। धनुराकृष्य भगवान् वासुदेवो नृपोत्तम।
विव्याध सात्यकिं भूयो निशि प्रह्लादयन् स्वकान्। नाराचेन समाविद्धः सात्यकिः सत्यसङ्गरः।
ललाटे सुदृढं वीरो वृष्णीनामग्रणीस्तदा। निषसाद रथोपस्थे निश्चेष्ट इव सत्तम। ११९९०
ततः स पौण्ड्रको राजाऽविध्यद्दशभिराशुगैः। सारथिं पञ्चविंशत्या हयांश्च चतुरो नृप।
ते हया रुधिराक्ताङ्गाः सारथिश्च समन्ततः। विकलाः समपद्यन्त सासुदेवस्य पश्यतः।
वासुदेवो रथे चापि सिंहनादं समाददे। तेन नादेन तत्राभूद्विबुद्धः सात्यकिर्नृप।
विद्वान् हयांस्तथा दृष्ट्वा सारथिञ्च तथा गतं। शैनेयोऽथ महावीर्य्यो रुषितो नृपसत्तम।
बलं द्रक्ष्यामि ते वीर्य्यमित्युक्ता वाणमाददे। विव्याध तेन वाणेन वक्षस्येनं महाबलं। ११९९५
ततश्चचाल तेनाजौ वासुदेवः शरेण ह। सुस्रुवे रुधिरं घोरमत्युग्रं वक्षसा नृप।
रथोपस्थे पपाताशु निमग्नश्चुरगो यथा। कृत्यञ्चापि न जानाति केवलं निषसाद ह।
सात्यकिस्तु रथं विद्धा दशभिः सायकैस्तथा। ध्वजं चिच्छेद भल्लेन वासुदेवस्य दृष्णिपः।
हयांश्च चतुरो हत्वा वाणैः सारथिमेव च। युयुधानोऽथ राजेन्द्र वाणैः सारथिमेव च।

धारयन्ते शिरः कायत्राणं च रथान्तरा । रथपञ्जरञ्च चिच्छेद पताका ध्वजतो ऽभवन्। ११२००

चक्रञ्च तिलशः कृत्वा बाणैर्दशभिरञ्जसा । जघान विपुलं राजन् वासुदेवं महाबलः ।

ततः परं महत्प्रायं सात्यकिर्वृष्णिनन्दनः । धन्वं कृत्वा बली चापात् सर्वसैन्यस्य पश्यतः ।

शरैः सप्ततिसंख्याकैरर्दयामास संगरं । ते शराः शलभाकारा निपेतुः सर्वतस्तदा ।

शिरसः पार्श्वतश्चैव पृष्ठतः पुरतस्तथा । केवलं धैर्यनिश्चयसुपार्श्वः शरावन् यथा ।

यथा मस्तकी रिमन्ध तथा तिष्ठति पौण्ड्रकः । ततश्चुक्रोध बलवान् वासुदेवः प्रतापवान् । ११२०५

अर्द्धचन्द्रं समादाय चिच्छेद युधि सात्यकिं । विद्धा सप्तभिरायान्तं क्रोधेन प्रस्फुरन्निव ।

विद्धोऽथ सात्यकिस्तेन शरैः पञ्चभिराशुगैः । चापं चिच्छेद पौण्ड्रस्य सिंहनादं तथाऽनदत् ।

वासुदेवो गदां गृह्य भ्रामयित्वा पश्चात् परं । त्वरितं पातयामास सात्यकेर्वक्षसि प्रभो ।

सव्येन तां समाकृष्य करेण यदुनन्दनः । शरं प्रगृह्य चिक्षेप सात्यकिर्युधि पौण्ड्रकं ।

तदन्तरे गृहीत्वाऽऽशु वासुदेवः प्रतापवान् । शक्तिभिर्दशभिश्चैव सात्यकिं निजघान ह । ११२१०

ताभिर्विद्धो रणे वीरः सात्यकिः सत्यसङ्गरः । अपास्य धनुरन्यत्तु धनुरादाय संगरं ।

आजघान गदापाणिर्वृष्णीनामग्रणीर्नृप ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्वणि पौण्ड्रकसात्यकियुद्धे सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

॥ वैशम्पायन उवाच ॥ ततः क्रुद्धो महापाणिः सात्यकिर्वृष्णिनन्दनः । वासुदेवं जघानाशु गदया तोस्त्वया नृप ।

सात्यकिं वासुदेवस्तु गदयाऽभ्यहनद्बली । तावुद्यतगदौ वीरौ शुशुभाते युधांवरौ ।

वृषौ वने यथा सिंहौ परस्परवधैषिणौ । ततः स सात्यकिः क्रुद्धः मध्यं मण्डलमागमत् । ११२१५

दक्षिणं वासुदेवस्तु तं जघान स्तनान्तरे । युयुधानोऽथ वीरस्तु वक्षस्यभ्यताडयत् ।

दृढं स ताडितो वीरो जानुभ्यामपतद्भुवि । तत उत्थाय वीरस्तु ललाटेऽभ्यहनत् गदां ।

विषण्णः किञ्चिदायस्तस्तत उत्थाय संगरं । गदयाऽभ्यहनद्वीरः सात्यकिः पौण्ड्रसत्तमं ।

वासुदेवो बली वीरः साक्षान्मृत्युरिवापरः । जघान गदया वृष्णिं निर्दहन्निव चक्षुषा ।

स तया ताडितो वृष्णिर्गदया बाहुमुक्तया । आलम्ब्य भूमिं सहसा मृत्योरन्तगतो यथा । ११२२०

संज्ञां पुनः समालम्ब्य पाणिभ्यां दृढमेव च । गदां तस्य महाराज गृहीत्वा प्रपदेन च ।

द्विधा कृत्वा महागुर्वीं गदां कालायसीं शुभां । उत्सृज्य सहसा वीरः सिंहनादं व्यनोनदत् ।

तत उत्सृज्य राजा तु वासुदेवो महाबलः । सव्येन सात्यकिं गृह्य दक्षिणेन करेण च ।

मुष्टिं कृत्वा महाघोरां वासुदेवः प्रतापवान् । ताडयामास मध्ये तु स्तनयोः सात्यकेर्नृप ।

शैनेयो वृष्णिवीरस्तु गदामुत्सृज्य संगरं । तलेनाभ्याहनद्वीरो वासुदेवं रणाजिरे । ११२२५

तलेन वासुदेवोऽपि सात्यकिं सत्यसङ्गरं । तयोरेवं महाघोरं तलयुद्धं प्रवर्त्तत ।

जानुभ्यां मुष्टिभिश्चैव बाहुभ्यां शिरसा तदा । उरसोरः समाहत्य जानुभ्यां जानुनी तथा ।

कराभ्यां करमाहत्य तौ युद्धं संप्रचक्रतुः । तत्राभूच्च राजेन्द्र वृषयोः बलिकर्षयोः ।

वने यथाऽग्निरुत्पन्नस्तथैवामून्महाहवम्(?)। तावाजौ प्रथितौ वीरावुभौ पौण्ड्रकसात्यकी ।
निशि स्तिमितमूकायां शक्तं त्यक्त्वा महाबलौ । युयुधाते महारङ्गे मत्तौ द्वाविव विष्णुवौ । १५२२०
उभे सेने महाराज संशयं जग्मतुस्तदा । किन्तु स्यात् सात्यकिर्वीरो हतस्तेन भविष्यति ।
आहोस्विद्वासुदेवस्तु हतस्तेन महात्मना । अथवा तौ महावीरौ परस्परवधैषिणौ ।
युध्यमानौ महावीरौ नरौ स्वर्गं गमिष्यतः । अन्यथा नोपरम्येतां युद्धाद्वीरौ सुनिश्चितौ ।
अहो वीर्य्यमहो धैर्य्यमेतयोर्व्वलशालिनोः । एतौ महाबलौ लोके एतौ शक्तिसमन्वितौ ।
नैवं युद्धं महाघोरमासीद्देवासुरेष्वपि । न श्रुतो न च वा दृष्टः संग्रामोऽयं कदाचन । १५२२५
एवं ते सैनिका ऊचुः सेनयोरुभयोरपि । रात्रौ निशीथे सैन्यौघे दृष्ट्वा युद्धं सुदारुणं ।
अथ तौ बाहुभिर्वीरौ सन्निपेततुरुल्बणौ । दशभिर्मुष्टिभिर्ज्जघ्ने सात्यकिः पौण्ड्रकं तदा ।
पञ्चभिः सात्यकिं पौण्ड्रः समाजघ्ने महाबलः । तयोस्तटस्तटाशब्दो मुष्टिपातोद्भवो महान् ।
प्रादुरासीत्तु सर्व्वत्र सर्व्वान् विस्मापयन्निव ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकसात्यकियुद्धे अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

॥ वैशम्पायन उवाच ॥ एतस्मिन्नन्तरे क्रुद्ध एकलव्यो निषादपः । बलभद्रमभिप्रेक्ष्य धनुरादाय सत्वरं । १५२३०
नाराचैर्दशभिर्विद्धा बाणैश्च दशभिः परैः । चिच्छेद धनुरुद्धं तत् सर्व्वलोकस्य पश्यतः ।
सूतं दशभिराहत्य रथं चिच्छेद चैव च । ध्वजं चिच्छेद भल्लेन निषादस्य जगत्पतिः ।
ततोऽपरं महच्चापं निषादो वीर्य्यवत्तरः । दृढमौर्व्वीसमायुक्तं दशतालप्रमाणतः ।
कामपाले शरेणाशु जघान जनमध्यतः । बलदेवो महावीर्य्यः प्रेषयन् इव पावकं ।
दशभिस्तद्धनुर्दिव्यं शरैः सर्व्वाङ्गभेदिभिः । चिच्छेद मुष्टिदेशे तु माधवो माधवाग्रजः । १५२३५
एकलव्यो निषादेशः खड्गमादाय सत्वरः । प्राहिणोद्बलदेवाय निशितं घोरविग्रहं ।
तमन्तरे यदुर्वीरो वृष्णिवीरः प्रतापवान् । तिलशः पञ्चभिर्बाणैश्चकार यदुनन्दनः ।
ततो महत् परं खड्गं सर्व्वकालायसं शुभं । प्राहिणोत् सारथेः कायमालोक्याथ निषादपः ।
तच्चापि दशभिर्वीरो माधवो यदुनन्दनः । बाणैरन्तरयोश्चैव निर्व्विभेद महारणे ।
ततः शक्तिं समादाय घण्टामालाकुलां नृप । निषादो बलदेवाय प्रेषयित्वा महाबलः । १५२४०
सिंहनादं महाघोरमकरोत् स निषादपः । सा शक्तिः प्रेषिता तेन बलदेवमुपागमत् ।
उत्पतन्तीं महाघोरां बलभद्रः प्रतापवान् । आदायाथ निषादेशं सर्व्वान् विस्मापयन्निव ।
तयैव तं जघानाशु वक्षोदेशे स माधवः । स तया ताडितो वीरः स्रस्ताङ्ग इव निषादपः ।
विह्वलः सर्व्वगात्रेषु निपपात महीतले । प्राणसंशयमापन्नो निषादो रामताडितः ।
निषादास्तस्य राजेन्द्र शतशोऽथ सहस्रशः । अष्टाशीतिसहस्राणि निषादास्तस्य योधिनः । १५२४५
गदिनः खड्गिनश्चैव महेष्वासा महाबलाः । शरैरनेकसाहस्रैः शक्तिभिश्च परश्वधैः ।
गदाभिः पट्टिशैः शूलैः परिघैः प्रासतोमरैः । कुन्तैश्च कुठारैश्च यादवानां महोजसं ।

शलभा इव राजेन्द्र दीप्यमानं हुताशनं । ते शतं पातयाञ्चक्रू रामं राजन्निवापरे ।
केचित् कुठारैराजघ्नुः केचित् कुन्तैः परश्वधैः । गदाभिः केचिदाघ्नन्ति शक्तिभिश्च तथाऽपरे ।
निजघ्नुः सहसा रामं प्रस्फुरन्तं यथा यथा । ततः क्रुद्धो हली साक्षात् हलमुद्यम्य सत्वरं । १५१९०
सर्व्वानाकर्षयामास मुषलेन चि पीडयन् । ते हन्यमाना राजेन्द्र निषादाः पर्व्वताश्रयाः ।
निपेतुर्धरणीपृष्ठे शतशोऽथ सहस्रशः । शरैश्च तान्महाराज हत्वा सर्व्वान्महाबलान् ।
सिंहवन्ननदंश्चैव तस्थौ रामो महाबलः । ततो रात्रौ महाघोराः पिशाचाः पिशिताशनाः ।
आकृष्य मांसयूथानि भक्षयन्तः समापतन् । पिबन्तः शोणितं कोष्ठात् संछिद्य च शवं बहु ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि एकलव्यसैन्यवधे ऊननवत्यधिकद्विशततोऽध्यायः ॥ २८९ ॥
॥ वैशम्पायन उवाच ॥ क्रव्यादाः सर्व्व एवाशु भक्षयन्तस्तदा शवं । हसन्तो विविधं घोरं नादयन्तो वसुन्धरां । १५१९५
राक्षसाः पिशिताशाश्च पिबन्तः शोणितं बहु । आमिषं भुञ्जते राजन् शवस्य पिशिताशनाः ।
नृत्यन्ति स्म तदा राजन्गन्धर्वा रक्षतोषिताः । काका बलाका गृध्राश्च श्येना गोमायवस्तथा ।
भक्षयन्तः प्रवर्त्तन्ते राक्षसाश्चैव दारुणाः । एतस्मिन्नन्तरे वीरो निषादो रुष्यसंज्ञकः ।
हतान् सर्व्वान् समालोक्य निषादाञ्चनचारिणः । गदामादाय कुपितो राममेव जगाम ह ।
जघान गदया राजन् मुर्द्धेशे निषादपः । ततो रामो दृढं राजन्निषादं चाजुमालिनं । १५२००
आजघ्ने गदया क्रूरं मदमत्तो हलायुधः । तयोश्च तुमुलं युद्धं गदाभ्यां समवर्त्तत ।
आकाशे शब्द आसीत्तु तयोर्युद्धे महाभुज । समुद्राणां यथा घोषः सर्व्वेषां सन्निगच्छतां ।
कल्पक्षये महाराज शब्दः सुतुमुलोऽभवत् । क्षोभितो नागराजश्च नागाः क्षोभं समाययुः ।
पृथिवी चान्तरीक्षञ्च सर्व्वं शब्दमयं बभौ । ततः स पौण्ड्रको राजा वार्ष्णेयं वृष्णिनन्दनं ।
गदयैव जघानाशु सत्वरं रणकोविदः । युयुधानो बली राजन् वासुदेवं जघान ह । १५२०५
तयोश्च तुमुलः शब्दः प्रादुरासीन्महारवे । चतुर्णां युध्यतां राजन् परस्परवधैषिणां ।
शस्त्राघातोद्भवो राजन् शब्द आसीत् सुदारुणः । ततो रजः प्रादुरभूत्तस्मिन् संग्राममूर्द्धनि ।
तारका निष्प्रभा राजंस्तमश्चैवं क्षयं गते । उषसि प्रतिबुद्धानां तमो निःशेषतां ययौ ।
उदितो भगवान् सूर्य्यश्चन्द्रश्च क्षयमाययौ । तयोर्युद्धं प्रादुरभूच्चतुर्णां बाहुशालिनां ।
देवासुरसमं राजन्नुदिते भास्करे महत् । १५२१०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे नवत्यधिकद्विशततोऽध्यायः ॥ २९० ॥
॥ वैशम्पायन उवाच ॥ ततः प्रभाते विमले भगवान् देवकीसुतः । गन्तुमैच्छज्जगन्नाथः पुरीं बदरिकाश्रमात् ।
नमस्कृत्य मुनीन् सर्व्वान् ययौ द्वारवतीं नृप । आरुह्य गरुडं विष्णुर्वेगेन महता प्रभुः ।
सुमहान् शुश्रुवे शब्दस्तेषां युद्धं प्रकुर्व्वतां । गच्छता देवदेवेन पुरीं द्वारवतीं नृप ।
अचिन्तयज्जगन्नाथः को न्वयं शब्द उत्थितः । संग्रामसम्भवो घोर आर्य्यशैनेयसंयुतः ।
व्यक्तमागतवान् पौण्ड्रो नगरीं द्वारकामनु । तेन युद्धं समभवत् पौण्ड्रकेण महात्मना । १५२१५

यदूनां वृष्णिवीराणां युध्यतामितरेतरं । शब्दोऽयं सुमहान् व्यक्तो नात्र कार्य्या विचारणा ।
इत्येवं चिन्तयित्वा तु दध्मौ शङ्खं महारवं । पाञ्चजन्यं हरिः साक्षात् प्रीणयन् वृष्णिपुङ्गवान् ।
रोदसी पूरयामास तेन शब्देन केशवः । यादवा वृष्णयश्चैव श्रुत्वा शङ्खस्य तं रवं ।
व्यक्तमायाति भगवान् पाञ्चजन्यरवो ह्ययं । इति ते मेनिरे राजन् वृष्णयो यादवास्तथा ।
निर्भयाः समपद्यन्त वृष्णयो यादवाश्च ते । तस्मिन्नेव क्षणे दृष्टस्तार्क्ष्यश्च पततांवरः ।　　१५२९०
ततश्च देवकीसूनुर्हृष्टैर्यादवेश्वरः । सूताश्च मागधाश्चैव पुरो यान्ति जगत्पतेः ।
स्तुत्या स्तुतं हरिं विष्णुमीश्वरं कमलेक्षणं । ततश्च यादवाः सर्व्वे परिवव्रुर्जनार्द्दनं ।
कृष्णस्तु गरुडं भूयो गच्छ त्वं नाकमुत्तमं । इत्युक्त्वा गरुडं विष्णुर्विसृज्य यदुनन्दनः ।
दारुकं पुनराहेदं रथमानय मे प्रभो । स तथेति प्रतिज्ञाय रथमादाय सत्वरं ।
रथोऽयं भगवन् देव किमतः कृत्यमस्ति मे । इत्युक्त्वा रथमादाय प्रणम्याग्रे स्थितो हरेः ।　　१५२९५
गते च गरुडे विष्णू रथमारुह्य सत्वरं । यत्र युद्धं समभवत्तत्र याति स्म केशवः ।
तत्र गत्वा महाराज युध्यतांश्च महात्मनां । पाञ्चजन्यं महाशङ्खं दध्मौ यदुवृषोत्तमः ।
पौण्ड्रोऽथ वासुदेवस्तु कृष्णं दृष्ट्वा रणोत्सुकं । सात्यकिं पृष्ठतः कृत्वा वासुदेवमुपागमत् ।
क्रुद्धोऽथ सात्यकी राजन् वारयामास पौण्ड्रकं । न गन्तव्यमितो राजन् नैष धर्म्मः सनातनः ।
जित्वा मां गच्छ राजेन्द्र परं योद्धुं महारणे । क्षत्रियोऽसि महावीर स्थिते मयि रणोत्सुके ।　　१५३००
एष ते गर्व्वमखिलं नाशयिष्यामि संयुगे । इत्युक्त्वा चापतस्तस्थौ गच्छतो यादवेश्वरः ।
पौण्ड्रकस्य शिनेर्नप्ता पश्यतः केशवस्य ह । अवज्ञाय शिनेः पौत्रं कृष्णमेव जगाम ह ।
निर्भर्त्स्य सहसा भूयः सात्यकिः क्रोधमूर्च्छितः । गदया प्राहरत् पौण्ड्रं वासुदेवस्य पश्यतः ।
यथाप्राणं यथायोगं सात्यकिः सत्यविक्रमः । दृष्ट्वाऽथ भगवानेवं सात्यकिं प्रशशंस ह ।
निवार्य्य सात्यकिं कृष्णो यथेष्टं क्रियतामसौ । उपारमद्यथायोगं सात्यकिः कृष्णवारितः ।　　१५३०५
स ततः पौण्ड्रको राजा वासुदेवमुवाच ह । भो भो यादव गोपाल इदानीं क्व गतो भवान् ।
त्वां द्रष्टुमद्य संप्राप्तो वासुदेवोऽस्मि साम्प्रतं । हत्वा त्वां सबलं कृष्ण बलैर्व्व्यङ्गभिरन्वितः ।
अहमेको भविष्यामि वासुदेवो महीतले । यच्चक्रं तव गोविन्द प्रथितं सुप्रभं महत् ।
अनेन मम चक्रेण पीडितोऽस्मि च तद्रणे । चक्रमस्तीति यद्वीर्य्यं तत्र माधव सांप्रतं ।
नाशयिष्यामि तत् सर्व्वं सर्व्वक्षत्रस्य पश्यतः । शार्ङ्गीति मां विजानीहि न त्वं शार्ङ्गीति शिष्यते ।　　१५३१०
शङ्खी चाहं गदी चाहं चक्री चाहं जनार्द्दन । मामेव हि सदा शत्रुर्जानन्तो वीर्य्यशालिनः ।
आदौ त्वबलवृद्धाश्वान् हत्वा स्त्रीबालकान् बहून् । गाश्च हत्वा महागर्व्वस्तव संप्रति वर्त्तते ।
तत्तेऽहं व्यपनेष्यामि यदि तिष्ठसि मत्पुरः । शस्त्रं गृहाण गोविन्द यदि योद्धुं व्यवस्थितः ।
इत्युक्त्वा बाणमादाय तस्थौ पार्श्वे जगत्पतेः । एतद्वचनमाकर्ण्य वासुदेवस्य भाषितं ।
स्मितं कृत्वा हरिः कृष्णो बभाषे पौण्ड्रकं नृपं । कामं वद नृप त्वं हि पातक्यसि सदा नृप ।　　१५३१५

गोघाती बालघाती च स्त्रीहन्ता सर्व्वथा नृप । चक्री भव गदी राजन् शार्ङ्गी च सततं भव ।
नामधेयं वृथा मह्यं वासुदेवेति च प्रभो । शार्ङ्गी चक्री गदी शङ्खीत्येवमादि यथा मम ।
किन्तु वक्ष्यामि किञ्चित्तु शृणुष्व यदि मन्यसे । चत्वारो बलिनो ये तु स्थिते मयि जगत्पतौ ।
तथाऽनुशुवते त्वां हि जीवत्येव मयि प्रभो । यच्च चक्रं महाघोरमसुरान्तकरं महत् ।
तत्तुल्यं मम चक्रस्य वृत्ततो न तु वीर्य्यतः । आयुधेष्वथ सर्व्वेषु शब्दसादृश्यमस्ति ते । १५२१०
गोपोऽहं सर्व्वदा राजन् प्राणिनां प्राणदः सदा । गोप्ता सर्व्वेषु लोकेषु शास्ता दुष्टस्य सर्व्वदा ।
कत्थनं सर्व्वदा कार्य्यं जित्वा राजनृपाधम । अजित्वा किं भवान् ब्रूते स्थिते मयि च शस्त्रिणि ।
हत्वा मां ब्रूहि राजेन्द्र यदि शक्तोऽसि पौण्ड्रक । स्थितोऽहं चक्रमाश्रित्य रथी चापी गदासिमान् ।
रथमारुह्य युद्धेऽस्मिन् सन्नद्धो भव मानद । इत्युक्त्वा भगवान् विष्णुः सिंहनादं व्यनीनदत् ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कृष्णपौण्ड्रकयुद्धे एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥

॥ वैशम्पायन उवाच ॥ ततः शरं समादाय वासुदेवः प्रतापवान् । पौण्ड्रं जघान सहसा निशितेन शरेण ह । १५२१५
पौण्ड्रोऽथ वासुदेवस्तु शरैर्दशभिराशुगैः । वासुदेवं जघानाशु वार्ष्णेयं वृष्णिनन्दनं ।
दारुकं पञ्चविंशत्या हयान् दशभिरेव च । सप्तत्या वासुदेवन्तु यादवं वासुदेवकः ।
ततः प्रहस्य सुचिरं केशवः केशिसूदनः । हृष्टोऽसाविति मनसा संपूज्य यदुनन्दनः ।
आकृष्य शार्ङ्गं बलवान् सन्धाय रिपुसूदनः । नाराचेन सुतीक्ष्णेन ध्वजं चिच्छेद केशवः ।
सारथेश्च शिरः कायादाहृत्य यदुनन्दनः । अश्वांश्च चतुरो हत्वा चतुर्भिः सायकोत्तमैः । १५२२०
रथं राज्ञः समाहत्य तयोभौ पार्ष्णिसारथी । चकार तिलशः क्रुद्धः हसन् किञ्चिदवस्थितः ।
पौण्ड्रको वासुदेवस्तु रथादाप्लुत्य सत्वरः । आदाय निशितं खड्गं प्राहिणोत् केशवाय सः ।
स खड्गं शतधा कृत्वा तूष्णीमासीच्च केशवः । ततोऽपरं महाघोरं परिघं कालसन्निभं ।
गृहीत्वा वासुदेवाय वासुदेवः प्रतापवान् । प्राहिणोद्वृष्णिवीराय सर्व्वक्षत्रस्य पश्यतः ।
तद्द्विधा जगतां नाथश्चकार यदुनन्दनः । ततश्चक्रं महाघोरं सहस्रारं महाप्रभं । १५२२५
विंशद्धारसमायुक्तमायसस्सर्मभिच्छिदा । आदायाथ महाराज केशवं वाक्यमब्रवीत् ।
पश्येदं निशितं घोरं तव चक्रविनाशनं । अनेन तव गोविन्द दर्पं दर्पवताम्वर ।
अपनेष्यामि वार्ष्णेय सर्व्वक्षत्रस्य पश्यतः । त्वामुद्दिश्य महाघोरं कृतमन्यदुरासदं ।
यदि शक्तो हरे कृष्ण दारयेदं महास्त्रदं । इत्युक्त्वा तच्छतगुणं भ्रामयित्वा महाबलः ।
चिक्षेपाथ महावीर्य्यः पौण्ड्रको नृपसत्तमः । अवप्लुत्य ततो देशात्तदुत्सृज्य महाबलः । १५२३०
सिंहनादं महाघोरं व्यनदद्वीर्य्यवांस्तदा । ततो विस्मयमापन्नो भगवान् देवकीसुतः ।
अहो वीर्य्यमहो धैर्य्यमस्य पौण्ड्रस्य दुःसहं । इति मत्वा जगन्नाथ उत्थितश्च रथोत्तमात् ।
ततः शिलां समादाय प्रेषयामास केशवे । तां शिलां प्रेषयामास तस्मै यदुकुलोद्वहः ।
पौण्ड्रेण सुचिरं कालं विक्रीड्य भगवान् हरिः । ततश्च चक्रमादाय निशितं रक्तभोजनं ।

दैत्यमांसप्रदिग्धाङ्गं नारीगर्भविमोचनं । शातकुम्भमयं घोरं दैत्यदानवनाशनं । ११२४५
सहस्रारं शतारन्तदद्भुतं दैत्यभीषणं । ऐश्वर्य्यवच्च परमं नित्यं सुरगणार्चितं ।
विष्णुः कृष्णस्तथा शार्ङ्गी नित्यं युक्तः सदा हरिः । जघान तेन गोविन्दः पौण्ड्रकं नृपसत्तमं ।
तस्य देहं विदार्य्याशु चक्रं पिशितभोजनं । कृष्णस्याथ करं भूयः प्राप सर्व्वेश्वरस्य ह ।
ततः स पौण्ड्रको राजा गतासुः प्रापतद्भुवि । निहत्य भगवान् विष्णुर्दुर्विज्ञेयगतिः प्रभुः ।
प्रतिपेदे सुधर्म्मान्तु यादवैः पूजितो हरिः । ११२५०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे द्विनवत्यधिकद्विशततोऽध्यायः ॥ २९२ ॥
॥ वैशम्पायन उवाच ॥ निषादेशं ततो रामः शक्त्या वीर्य्यवताम्वरः । आजघान रणे दन्ते सिंहनादं तथाऽनदत् ।
ततः क्रुद्धो निषादेशो रामं मत्तं महाबलं । गदया लोकविख्यातो जघान स्तनवक्षसि ।
आहतः स तु तेनाशु बलभद्रो महाबलः । उभाभ्याञ्चैव रामस्तु कराभ्यां वृष्णिपुङ्गवः ।
गदां गृह्य महाघोरामायान्तीं प्राणहारिणीं । दुद्रावाथ निषादेशः समुद्रं मकरालयं ।
धावत्येवं तदा राज्ञि एकलव्ये निषादपे । धावत्येव च रामोऽपि यत्र यातो निषादपः । ११२५५
सागरं स प्रविश्याशु गत्वा योजनपञ्चकं । भीत एव तदा राजन्नेकलव्यो निषादपः ।
कञ्चिद्द्वीपान्तरं राजन् प्रविश्य न्यवसत्तदा । ततो रामो निषादेशं जिगाय यदुनन्दनः ।
तां सभां मणिरत्नाढ्यां प्रविवेश हलायुधः । सात्यकिर्युद्धसंसक्तस्तां सभां प्रविवेश ह ।
अन्ये च यादवा राजन् यथायोगमुपस्थिताः । आसीनेषु च सर्व्वेषु वृष्णिवीरेषु सर्व्वतः ।
अभिवाद्य यथायोगं वृष्णीन् सर्व्वांश्च केशवः । उवाच वचनं काले भगवान् देवकीसुतः । ११२६०
दृष्टं कैलासशिखरं शङ्करो नीललोहितः । स तु मह्यं यदुवरा प्रीतिमांश्च ददौ वरं ।
तत्र देवाः समायाता मुनयश्च तपोधनाः । दृष्ट्वा मां शङ्करश्चैव प्रीतः स्तुत्वा समाययौ ।
अत्यद्भुतं मया दृष्टं शृणुत यादवसत्तमाः । पिशाचौ द्वौ महाघोरौ वदन्तौ मामिकां कथां ।
मृगयां चक्रतुस्तौ तु चिन्तयन्तौ तु मां सदा । दृष्ट्वा मां तौ तु राजेन्द्राः प्रीतिमन्तौ तपस्विनौ ।
भक्तिमन्तौ महात्मानौ प्रणामं चक्रतुस्तदा । ततोऽहं सर्व्वया प्रीतस्तौ नीतौ स्वर्गमुत्तमं । ११२६५
तोषयित्वा महादेवं मया चाद्य समागतं ।
॥ वैशम्पायन उवाच ॥ ततस्ते वृष्णयः सर्व्वे देवदेवं शशंसिरे । सर्व्वथा कृतकृत्यास्ते वृष्णयः केशवाश्रयाः ।
यादवाः सर्व्व एवात्र स्वं स्वं जग्मुर्यथालयं । अभ्यन्तरं जगन्नाथः प्रविश्य हरिरीश्वरः ।
रुक्मिणीसत्यभामाभ्यामाचचक्षे यथाऽभवत् । ते प्रीते प्रीतियुक्तेन केशवेन समन्विते ।
एतत्ते सर्व्वमाख्यातं केशवस्य च चेष्टितं । शशास पृथिवीं कृत्स्नां दुष्टान् हत्वा महाबलान् । ११२७०
नरकं घोरकर्म्माणं पौण्ड्रकं नृपसत्तमं । हयग्रीवं निशुम्भञ्च तथा सुन्दोपसुन्दकौ ।
एवञ्च विप्रान् देवेशो मुनीन् मुनिवरार्चितः । विप्रेभ्यश्च ददौ वित्तं गाश्च दत्त्वा स केशवः ।
अग्निहोत्रं प्रयुञ्जानो ब्राह्मणांश्च सुतर्पयन् । मुनींश्च ब्रह्मचर्य्येण देवान् यज्ञैरनेकधा ।

स्वधया च पितॄन् सर्व्वान् प्रीणयन्नेव सर्व्वदा । तस्मिन् शासति देवेशे राज्यं निष्कण्टकं प्रभो ।
सुखमेव प्रजाः सर्व्वा जीवन्ति ब्राह्मणादयः । १५३७५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे त्रिनवत्यधिकद्विशतोऽध्यायः ॥ २९३ ॥

॥ जनमेजय उवाच ॥ भूय एव द्विजश्रेष्ठ शङ्खचक्रगदाधरः । चरितं श्रोतुमिच्छामि विस्तरेण तपोधन ।
न हि मे तृप्तिरस्तीह शृण्वतः केशवीं कथां । को नु नाम हरेर्विष्णोर्देवदेवस्य चक्रिणः ।
शृण्वन् स्तुवं स्मरन् वाऽपि तृप्तिं याति दिवानिशं । पुरुषार्थोऽयमेवैको यत्कथाश्रवणं हरेः ।
कथमासीज्जगद्वैरी हंसस्य डिम्भकस्य च । समितिः सर्व्वभूतानां सदा विस्मयदायिनी ।
विचक्रस्य कथं युद्धं दानवस्य महात्मनः । स तयोर्निधनो यात इत्येवमनुशुश्रुम । १५३८०
तौ सुतौ वीर्य्यसम्पन्नौ विप्रौ ब्रह्मसुतस्य च । सर्व्वास्त्रकुशलौ वीरौ वराढ्यवरौ किल ।
संग्रामः सुमहानासीदित्युक्तं भवता पुरा । तयोश्च नृपयोर्विप्र केशवस्य जगत्पतेः ।
कस्य पुत्रौ समुत्पन्नौ यथाऽभूद्विग्रहो महान् । अष्टाशीतिसहस्राणि दानवानां तरस्विनां ।
बलान्यथ विचक्रस्य शितशूलधराणि च । आसन् युद्धे महाराज दानवस्य जयैषिणः ।
दद्रू नामन्तरप्रेप्सुर्यदूनां युद्धकाङ्क्षया । देवासुरे महायुद्धे देवान् जयति दुर्द्धरः । १५३८५
तद्वधार्थं सदा यत्नमकरोच्चैव केशवः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने जनमेजयवाक्ये चतुर्नवत्यधिकद्विशतोऽध्यायः ॥ २९४ ॥

॥ वैशम्पायन उवाच ॥ आसीत् शाल्वेषु राजेन्द्र ब्रह्मदत्तो नृपोत्तमः । नाम्ना राजन् स पूतात्मा सर्व्वभूतदयापरः ।
पञ्चयज्ञपरो नित्यं जितात्मा विजितेन्द्रियः । ब्रह्मविद्देदविच्चैव सदा यज्ञपरः शिवः ।
तस्य भार्य्ये महीपाल रूपौदार्य्यगुणान्विते । बभूवतुः सुसंयत्ते अनपत्ये नृपोत्तम ।
स ताभ्यां मुमुदे राजा शच्या शक्र इवाम्बरे । नाम्ना मित्रसहो नाम सखा चासीन्महामते । १५३९०
तस्य राज्ञो महायोगी वेदवेदान्ततत्परः । अनपत्यः स विप्रेन्द्रो यथा राजा बभूव ह ।
स राजा सहितस्ताभ्यामर्च्चयामास शङ्करं । पुत्रार्थं शूलिनं शर्व्वं दशवर्षाण्यनन्यधीः ।
स विप्रो वैष्णवं सत्रं पुत्रार्थं समयोजयत् । अर्च्चितस्तेन राजेन्द्र शङ्करो नीललोहितः ।
आत्मानं दर्शयामास स्वप्ने राजानमब्रवीत् । प्रीतोऽस्मि तव भद्रन्ते वरं वरय सुव्रत ।
अथ राजा जगन्नाथमुवाचेदं कथञ्चिन । पुत्रौ मम भवेतां हि तथेत्युक्त्वा वृषध्वजः । १५३९५
अन्तर्द्धानं गतः शम्भुः प्रतिबुद्धस्ततो नृपः । सोऽपि मित्रसहो विद्वान् देवं केशवमव्ययं ।
पञ्चवर्षं जगन्नाथमर्च्चयामास भक्तितः । अर्च्चितस्तेन विप्रेण देवदेवो जनार्द्दनः ।
पुत्रमेकं ददौ तस्मै स्वात्मना सदृशं हरिः । ते भार्य्ये गर्भमाधत्तां तेजसा शङ्करस्य च ।
विप्रभार्य्या महाराज वैष्णवं तेज आदधत् । महिष्यौ ते महावीर्य्यौ पुत्रौ शङ्करनिर्म्मितौ ।
असूयतां महीपाल क्रमेणैव नृपस्य ह । स तयोश्च महाराज नामकर्म्मादिकाः क्रियाः । १५४००

चकार विधिवत् सर्व्वं विप्रेभ्यो ऽदात्सहस्रकम्। स च विप्रो विनीतात्मा पुत्रमेकं हि लब्धवान्।
साक्षादिव जगन्नाथं स्थितं पुत्रात्मना नृप। जातकर्म्मादिकं सर्व्वं ब्राह्मणः स चकार ह।
तौ कुमारावयं चैव त्रयः सुवपुषोऽभवन्। वेदानधीत्य ते सर्व्वान् श्रुत्वा चान्वीक्षिकीं तथा।
धनुर्व्वेदे तथाऽस्त्रे च निपुणास्त्वभवंस्तदा। हंसो ज्येष्ठो नृपसुतो डिम्भकोऽनन्तरोऽभवत्।
स च विप्रसुतो राजन् जनार्द्दन इति स्मृतः। अन्योन्यमित्रतां याताः सर्व्वे चैव कुमारकाः। ११४०५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने पञ्चनवत्यधिकद्विशततोऽध्यायः ॥ २९५ ॥

॥ वैशम्पायन उवाच ॥ हंसश्च डिम्भकश्चैव तपश्चर्तुं महामते। मनश्चक्रतुरासीनौ शङ्करस्य नृपोत्तम।
गत्वा तु हिमवत्पार्श्वं तपश्चक्रतुरञ्जसा। उद्दिश्य शङ्करं शर्व्वं नीलग्रीवमुमापतिम्।
वीर्य्यास्त्रे चैव नौ स्यातामित्याधाय तु मानसे। एकाग्रौ प्रयतौ भूत्वा वाय्वम्बुप्राशिनौ नृप।
नमस्ते देवदेवेति शङ्करेति दिवानिशम्। हर शर्व्व शिवानन्द नीलग्रीव उमापते।
वृषध्वज विरूपाक्ष हर्य्यक्ष जगतांपते। भक्तिप्रिय गिरीशेश वामदेव शिवाच्युत। ११४१०
सद्योजात महादेव देवदेव गुहाश्रय। भूतभावन भूतेश प्रणवात्मन् सदाशिव।
इत्यादिनामभिर्नित्यं स्तुवन्तौ शङ्करं भवम्। हृदि कृत्वा विरूपाक्षं तपस्तेपतुरञ्जसा।
निर्म्ममौ निरहङ्कारौ मौनव्रतसमास्थितौ। वर्षाणि च तदा राजन् पञ्च चक्रतुरोजसा।
ततः प्रीतो ऽभवच्छर्व्वस्ताभ्यां संयमनेन च। स ददौ दर्शनं मैत्रं व्याघ्रचर्म्माम्बरो हरः।
त्रियक्षः शङ्करः शर्व्वः शूलपाणिरुमापतिः। चपलः संस्थितं शर्व्वं चन्द्रार्द्धकृतशेखरम्। ११४१५
तौ दृष्ट्वा प्रीतमनसौ नमश्चक्रतुरञ्जसा।

॥ श्रीभगवानुवाच ॥ वरं वरय भद्रं वो यथेच्छा वां तथाऽस्तु वौ। तावूचतुस्तदा राजन् प्रीतस्त्वं भगवन् यदि।
देवासुरचमूमुख्यैरुरगगन्धर्व्वदानवैः। आवामजय्यौ सर्व्वास्त्रेष नौ प्रथमो वरः।
द्वितीयो नौ विरूपाक्ष रौद्रास्त्राणाञ्च संग्रहः। माहेश्वरं तथा रौद्रमस्त्रं ब्रह्मशिरो महत्।
अभेद्यं कवचं दिव्यमच्छेद्यञ्चापि कार्म्मुकम्। परश्शुञ्च तथा शर्व्व सदा रक्षार्थमेव च। ११४२०
सहायौ द्वौ महादेव भूतौ युद्धे हि गच्छताम्। एवमस्त्विति देवेश आह श्रृङ्गिरिटो हरः।
कुण्डोदरं विरूपाक्षं सर्व्वप्राणिहिते रतम्। युवामथ च भूतेशौ सहायौ सततं रणे।
सङ्ग्रामं गच्छतां घोरमेतयोर्व्वलशालिनोः। इत्युक्त्वा भगवान् शर्व्वस्तत्रैवान्तरधीयत।
ततस्तौ वीर्य्यसम्पन्नौ हंसो डिम्भक एव च। कृतास्त्रौ शस्त्रसम्पन्नौ चापिनौ वीर्य्यवत्तरौ।
आमुक्तकवचौ वीरावजय्यौ देवदानवैः। अत्यन्तभक्तौ देवेशे शङ्करे नीललोहिते। ११४२५
नित्योत्सवकरौ देवे भस्मोद्धूलनशोभिनौ। कृतत्रिपुण्ड्रकौ नित्यं जटामुकुटशिरोधरौ।
रुद्राक्षार्पितसर्व्वाङ्गौ व्याघ्रचर्म्मावृताम्बरौ। नमः शिवाय शान्ताय महादेवाय धीमते।
इत्यादिभिर्म्महादेवं स्तुवन्तौ नामभिः शिवम्। साक्षादिव महादेवौ रेजतुर्भस्मधारिणौ।
ततः स्वभवनं गत्वा पितुः पादावगृह्णताम्। पितुश्च सख्युर्ब्बलिनो मातुश्च चरणौ तदा।

जनार्द्दनोऽपि धर्म्मात्मा कालेन महता नृप । विद्याचारं महाबुद्धिर्योगेनाथाग्र्यवेदविद्वान् । १५४३०
स च विष्णुं हृषीकेशं पीतकौशेयवाससं । भक्तस्तत्परो नित्यमुपास्ते विजितेन्द्रियः ।
हंसश्च डिम्भकश्चैव कृतदारौ बभूवतुः । जनार्द्दनोऽपि धर्म्मात्मा कृतदारो बभूव ह ।
सर्व्वे ते यज्ञनिरताः पञ्चयज्ञपरायणाः । स्वदारनिरताः सर्व्वे गुरुशुश्रूषणे रताः ।
धर्म्म एव परं श्रेय इति ते मेनिरे नृप ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने षण्णवत्यधिकद्विशततोऽध्यायः ॥ २९६ ॥

॥ वैशम्पायन उवाच ॥ ततः कदाचित्तौ वीरौ मृगयामाटतुः किल । जनार्द्दनेन सहितौ रथैरश्वैर्गजैरपि । १५४३५
वनं गत्वा तु तौ वीरौ सिंहव्याघ्रांश्च जघ्नतुः । शितैर्बाणैर्महाराज वराहांश्च सर्व्वशः ।
व्यालानन्यान्मृगान् हिंस्रान् सभिद्य सहितौ नृप । एष आयाति विपुलो वराहो दीर्घलोचनः ।
एनं बाणेन सञ्छिन्धि याति स्वायं मृगाधिपः । अयमन्योऽत्र महिषः शृङ्गप्रोतपरोक्षपः ।
एते खलु मृगाः शार्द्दूं शावैर्धावन्ति सर्व्वशः । एतद्धसति सर्व्वेन चितं शशकुलं महत् ।
शावैस्तनं पिबन् शार्द्दूं न हन्तव्यमिदं शुभं । धर्मोत्सर्व्यमिदं सर्व्वैर्गवत्थ नमस्यैरिह । १५४४०
इत्यादिशब्दः सुमहान् मृगयां कुर्व्वतां नृप । क्षत्रियाणां नृपश्रेष्ठ व्याधानां चैव धावतां ।
हत्वा मृगान् सुबहुशो व्याघ्रान् सिंहान्नृपोत्तमौ । श्रमश्च जग्मतुर्वीरौ मध्यं याते दिवाकरे ।
अलं हि मृगयाऽस्माकं श्रमः समुपजायते । इत्यूचतुर्महाराज पुष्करं जग्मतुः सरः ।
सरःसमीपमागम्य मुनिसिद्धनिषेवितं । शीतमारुतसानूपं श्रमात्तत्र सुखं स्थितौ ।
ततो जनाः सरः सर्व्वे विगाह्य श्रमकर्षिताः । बिसान् प्रवालान् पद्मानां भक्षयामासुरार्त्तवत् । १५४४५
जनार्द्दनेन सहितो हंसो डिम्भक एव च । सरः कञ्चित् समाश्रित्य श्रमं संत्यज्य तिष्ठतः ।
विश्रम्य सरसस्तीरे तदाऽवाते सुखं नृपौ । शुश्रुवतुः परं ब्रह्म मुनिमुख्यैः समीरितं ।
माध्यन्दिनं तदा सर्व्वैः सवनं सुस्वरं नृपा । ततः प्रीतौ नृपौ भूत्वा श्रुत्वा वेदध्वनिं तदा ।
ऐच्छतां तौ तदा द्रष्टुं यज्ञं मुनिकृतं तदा । स्थापयित्वा ततः सेनां सर्व्वां मृगसमन्वितां ।
आदाय च महावीर्य्याः शरान् कतिचिदेव च । जनार्द्दनस्तदा वीरो हंसो डिम्भक एव च । १५४५०
पदातिनो महाराज जग्मुश्चैवाश्रमं किल । महर्षेः कश्यपस्याथ सवं वैष्णवसंज्ञितं ।
यजतो मुनिभिः सार्द्धं जपहोमपरायणैः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने सप्तनवत्यधिकद्विशततोऽध्यायः ॥ २९७ ॥

॥ वैशम्पायन उवाच ॥ जनार्द्दनश्च धर्म्मात्मा हंसो डिम्भक एव च । सदः प्रविश्य सहसा नमश्चक्रुर्मुनीश्वरान् ।
तानागतान् महात्मानो मुनयः शिष्यसंयुताः । अर्घ्यपाद्यासनादीनि चक्रुः पूजाञ्च यत्नतः ।
तौ नृपौ स च विप्रेन्द्रः सपर्य्यां प्रतिगृह्य च । प्रीतात्मानो महात्मान आसते सुसुखं नृप । १५४५५
ततो हंसो बभाषे तान्मुनीन् संयतवाङ्नृप । पिता हि नौ मुनिश्रेष्ठा यष्टुमैच्छत् ससाधनं ।
गन्तव्यं तत्र युष्माभिः सर्व्वैर्मुनिसत्तमाः । राजसूयेन यज्ञेन कृत्वा दिग्विजयं वयं ।

याजयिष्यामहे विप्राः पितरं धार्म्मिकं नृपं। आयान्तु तत्र विप्रेन्द्राः सशिष्याः सपरिच्छदाः।
वयमद्यैव सहिता द्विजो जेष्यामहे भुवं। शक्तावहयमवैतत् कर्त्तुं सैनिकसञ्चयैः।
आवयोः पुरतः स्थातुं न शक्ता देवदानवाः। कैलासनिलयाद्देवादरं लब्धा स्म यत्नतः। ११४६०
अजेय्या शत्रुसंघानामस्त्राणि विविधानि च। इत्युक्त्वा विररामैव हंसो महबलान्वितः।
॥ मुनय ऊचुः ॥ यदि स्यात्तत्र गच्छामो वयं शिष्यैर्नृपोत्तम। आस्महे चान्यथा राजन्नित्यूचुः किल तापसाः।
॥ वैशम्पायन उवाच ॥ ततो देशान्महाराज गन्तुं निश्चितमानसौ। पुष्करस्योत्तरं तीरं दुर्व्वासा यत्र तिष्ठति।
यतयो नियता भूत्वा मन्त्रशास्त्रनिषेविणः। ब्रह्मसूत्रपदे यत्नात्सदर्थालोकतत्पराः।
निर्म्ममा निरहङ्काराः कौपीनाच्छादनव्रताः। तमात्मानं जगद्योनिं विष्णुं विश्वेश्वरं विभुं। ११४६५
ब्रह्मरूपं शुभं शान्तमक्षरं सर्व्वतोमुखं। वेदान्तमूर्त्तिमव्यक्तमनन्तं शाश्वतं शिवं।
नित्ययुक्तं विरूपाक्षं भूताधारमनामयं। ध्यायन्तः सर्व्वदा देवं मनसा सर्व्वतोमुखं।
दुर्व्वाससा सदोपास्यं वेदान्तैकरसं प्रभुं। तर्कनिश्चिततत्त्वार्थाः सुविनिर्म्मलचेतसः।
हंसाः परमहंसाश्च शिष्या दुर्व्वाससः प्रभो। तत्र गत्वा महात्मानौ तौ दृष्ट्वा तूर्द्ध्वरेतसं।
दुर्व्वाससं महाबुद्धिं विचिन्वानं परं पदं। क्रुद्धो यदि स दुर्व्वासा दग्धुं लोकानिमान् क्षमः। ११४७०
देवा अपि च यं द्रष्टुं क्रुद्धं वै न क्षमाः सदा। रोषमूर्त्तिः सदा यस्तु रुद्रात्मा विश्वरूपधृक्।
रक्तकौपीनवसनो हंसः परम एव च। दृष्ट्वैनस्य तयोरेवं बुद्धिरासीन्महामते।
को नामायं महाभूतः काषायी वर्णवित्तमः। कस्यायमाश्रमो नाम विहाय च गृहाश्रमं।
गृहस्थ एव धर्म्मात्मा गृहस्थो धर्म्मवित्तमः। गृहस्थो धर्म्मरूपस्तु गृहस्थो वर्ण एव च।
गृहस्थश्च सदा माता प्राणिनां जीवनं सदा। तं विनाऽन्येन रूपेण वर्त्तते यो हि मूर्खवत्। ११४७५
उन्मत्तोऽयं विरूपोऽयमथ वा मूर्ख एव च। ध्यायन्निव सदा चायमास्ते वञ्चयिताऽपि वा।
किन्नेते प्राकृतज्ञाना ध्यायन्त इव किञ्चन। वयमेतान् दुरारोहानाश्रमान्तरकल्पकान्।
स्थापयिष्यामहे सर्व्वान्मन्दबुद्धीनिमान् गृहे। बलादेव द्विजानेतान्मूढविज्ञानतत्परान्।
असद्गृहगृहीतांश्च बालिशान्दुर्मतीनिमान्। एषां शास्ता च को मूढो न विप्रो वयमत्र ह।
धर्म्मवर्त्मनि संस्थाप्य पुनर्यास्याव निर्वृतौ। इति सञ्चिन्त्य तौ वीरौ विप्रेण सहितौ नृप। ११४८०
जनार्द्दनेन राजानौ मोहाद्गाम्भवयान्नृप। समीपं तस्य राजेन्द्र यतेर्जग्मतुरञ्जसा।
गत्वा च प्रोचतुरुभौ दुर्व्वाससमतीन्द्रियं। यतींश्च नियतान् क्रुद्धौ राजानौ राजसत्तम।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने अष्टनवत्यधिकद्विशततोऽध्यायः ॥ २९८ ॥

॥ हंसडिम्भकावूचतुः ॥ ज्ञानलेशादिहीनात्मन् किन्ते व्यवसितं द्विज। कस्यायमाश्रमो विप्र भवता यः समाश्रितः।
गृहमेधं परित्यज्य किन्त्वया साधितं पदं। दम्भ एव भवान् व्यक्तं लोके नास्त्यत्र कारणं।
लोकानिमान् सदा मूढ नाशयिष्यसि निर्वृतः। एतान् सर्व्वान् विनेताऽसि नरके पातयिष्यसि। ११४८५
स्वयं नष्टः परान्मूर्ख नाशयिष्यसि यत्नतः। अहो शास्ता कथं नास्ति तव मन्दमतेर्द्विज।

सर्व्वथा त्वद्विनेता च पापं नास्त्यत्र संशयः । त्यक्त्वेममाश्रमं विप्र गृही भव यतात्मवान् ।
पञ्चयज्ञान् सदा विप्र कुरु यत्नपरो भव । ततः स्वर्गं परं गत्वा स्वर्गे हि सुमहत्सुखं ।
एष श्रेयः परो विप्र जीविते चेत् स्पृहा तव । इत्युक्तवन्तौ धर्म्मात्मा श्रुत्वा विप्रो जनार्द्दनः ।
उवाच च यतिं दृष्ट्वा प्रणम्याशु सुभीतवत् । मा भूतामीदृशं वाक्यं राजानौ मन्दचेतसौ । ११४९०
अश्राव्यमीदृशं घोरं लोकयोरुभयोरपि । को वक्तुमीशो मन्दात्मा यदि जीवेत् सबान्धवः ।
सर्व्वथा काल एवायं युवयोर्मन्दचेतसोः । समाप्तं चायुषः शेषं ब्रह्मदण्डहतौ युवां ।
एते हि यतयः शुद्धा ज्ञानदीपितचेतसः । ज्ञानाग्निदग्धकर्म्माणः प्राणान् प्राणेषु जुह्वति ।
कृते वामीदृशं वाक्यं कः समर्थो ह्यनुब्रुवन् । सर्व्वथा ज्ञातमस्माभिः समाप्तमिह जीवितं ।
चत्वार आश्रमाः पूर्व्वमृषिभिर्व्विहिता नृपौ । ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । ११४९५
तेषामग्र्यस्तुर्य्योऽयमाश्रमो भिक्षुकः स्मृतः । आस्थे तस्मिन्नरावृद्धिः स हि पुण्यतमः स्मृतः ।
नोपासिता भवद्भ्यां च दृष्ट्वा सम्यग्विनीतवत् । ज्ञानं ज्ञात्वा ततस्तेभ्यस्तथा चैवं वदेत कः ।
अश्राव्यमीदृशं घोरं मया प्राणभृता नृप । किं करिष्यामि मन्दात्मन् निवनाद्भवतो नृप ।
ज्ञानं यदाप्तं भवता गुरुभ्यस्तदृत दुःखाय हि केवलं नृप । ज्ञानं हि धर्म्मप्रभवं यथेष्टं ज्ञानाद्धि पापस्य विघातरूपं ।
युवां विहाय यास्ये वा पतेयं वा शिलातले । पिबे वाऽपि विषं घोरं पतेयं वा महोर्म्मिषु । ११५००
आत्मानं वाऽत्र संत्यक्ष्ये पश्यतां ब्रुवतां पुनः । इत्युक्त्वा विललापैवं मा भूतामिति तौ वदन् ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने नवनवत्यधिकद्विशततोऽध्यायः ॥ २९९ ॥
॥ वैशम्पायन उवाच ॥ ततः क्रुद्धोऽथ दुर्व्वासा ज्वलन्निव तयोरग्रतः । एकेनाक्ष्णाऽथ दुर्व्वासा रौद्रेणाग्नियुजा सदा ।
पश्यंस्तौ च दुरात्मानौ रोषव्याकुलितेन्द्रियः । कुर्व्वन्निव तदा लोकान् भस्मभूतानिमान्नृप ।
ब्राह्मणं चक्षुषा पश्यन् सौम्येनान्येन केवलं । उवाच वचनं राजन् ध्वंसत ध्वंसतेति च ।
इतो गच्छत राजानौ किं विलम्बत माचिरं । न वां वचनसंभूतं रोषं धारयितुं क्षमे । ११५०५
अन्यथा वो महीपालान् सर्व्वान्दग्धुमहं क्षमः । किमतः साहसं वक्तुं कश्च शक्नोति मत्पुरः ।
दर्पं वो लोकविख्यातः शङ्खचक्रगदाधरः । व्यपनेष्यति मन्दौ वा किं वा वक्ष्यामि साम्प्रतं ।
तत उत्थाय धर्म्मात्मा मन्तुमिच्छन्यतीश्वरः । तस्य चाङ्गं समादाय हंसो नृपवरोत्तमः ।
कौपीनं चिच्छिदे क्रूरः कृतान्त इव सत्तम । यतयोऽन्येऽपलायन्त दिशो दश विचेतसः ।
कष्टं चेति वदन् विप्रो निजभावाज्जनार्द्दनः । न्यवारयद्यथाशक्ति किमिदं साहसमिति । ११५१०
दुर्व्वासा सत्यधर्म्मस्तु हन्तुमीशोऽपि तं ततः । मन्दं मन्दमुवाचेदं हंसं डिम्भकमेव च ।
शापेनाहं समर्थोऽपि हन्तुं राजकुलाधमौ । तथाऽपि न करोम्यन्तं यतस्तो ज्ञात ते वधं ।
यो हि देवो जगन्नाथः केशवो यादवेश्वरः । शङ्खचक्रगदापाणिर्गर्व्वं ते व्यपनेष्यति ।
लोके तस्मिन् यदुश्रेष्ठे रक्षत्येव जगत्पतौ । युवयोः सर्व्वथा जीवः स्वजीव इति मे मतिः ।
जरासन्धेऽपि वां बन्धुः स च वक्तुं न चेच्छति । ईदृशं लोकविद्विष्टं स हि धर्म्मपरः सदा । ११५१५

एतावता स वां बन्धुर्न हि भूयो भविष्यति । विद्वेषोऽप्यस्तु वां तस्य मागधस्य महीपतेः ।
शुलेदं घोररूपन्तु स हि बन्धुः सहेत चेत् । धर्म्मनाशो भवेत्तस्य नात्र कार्य्या विचारणा ।
इत्युक्त्वा गच्छ गच्छेति हंसं प्राह पुनः पुनः । जनार्द्दनमुवाचेदं दुर्व्वासा यतिसत्तमः ।
स्वस्त्यस्तु तव विप्रेन्द्र भक्तिरस्तु जनार्द्दने । सङ्गतिस्तव तस्यास्तु शङ्खचक्रगदाभृतः ।
अद्य श्वो वा परश्वो वा साधुरेव सदा भवान् । न हि साधोर्विनाशोऽस्ति लोकयोरुभयोरपि । ११५१०
गच्छ सर्व्वं पितुर्ब्रूहि ज्ञात्वा वृत्तं यथाखिलं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने त्रिशततमोऽध्यायः ॥ २०० ॥
॥ वैशम्पायन उवाच ॥ ततस्तौ हंसडिम्भकौ क्रुद्धौ कालेन चोदितौ । शिक्यं कमण्डलुञ्चैव द्विदलं दारुमेव च ।
दण्डान् पात्रविशेषांश्च छित्त्वा भित्त्वा च सर्व्वशः । तस्मिन् देशे महाराज व्याधर्म्मांसान्यदीदहन् ।
भर्त्सयित्वा च तद्देशात् स्वपुरीं तौ प्रजग्मतुः । जनार्द्दनश्च धर्म्मात्मा स्नेहादनुययौ तयोः ।
नष्टाविमाविति तदा स मेने दुःखितः परं । गतेषु तेषु सर्व्वेषु दुर्व्वासा यतिसत्तमः । ११५१५
पलायनपरान् सर्व्वानिदमाह यतीश्वरान् । इतो देशाद्विनिर्गत्य पुष्करात् पुण्यसंयुतात् ।
मन्दं मन्दं समाश्वस्य विश्रम्य च ततस्ततः । प्रविश्य द्वारकां देवं शङ्खचक्रगदाधरं ।
दृष्ट्वा च तस्मै प्रभवे वक्ष्यामो यतिसत्तमाः । स हि रक्षन् जगदिदं धर्म्मवर्त्मनि संस्थितः ।
आद्यो लोकगुरुर्विष्णुर्यतात्मा तत्त्ववित्प्रियः । उद्धृत्य कण्टकान् सर्व्वान् शशास पृथिवीमिमां ।
स च पापान्महाघोरान् पापकर्म्मरतान् प्रभुः । रक्षेन्नः सकलान् सर्व्वान् स्थानेषु नियतात्मनः । ११५२०
इदमद्य क्षमं विप्रा यानमद्य विधीयतां । साहसं यत् कृतं ताभ्यां पात्रभेदादि सत्तमाः ।
एतत् सर्व्वमशेषेण दर्शयामो जनार्द्दनं । तथेति ते प्रतिज्ञाय यतयो ज्ञानचक्षुषः ।
छिन्नांस्ताभ्यां समादाय शिक्यं दारुमयं तथा । द्विदलं कर्पटञ्चैव कौपीनमथ वल्कलं ।
कमण्डलुं तथा राजञ्छुद्धं शीतकपालकं । एतानन्यान् समादाय द्रष्टुं केशवमाययुः ।
पञ्च चैव सहस्राणि पुरस्कृत्य महामुनिं । दुर्व्वाससं तपोयोनिमीश्वरस्यात्मसम्भवं । ११५२५
अहोरात्रेण ते सर्व्वे द्वारकां कृष्णपालितां । ययुर्दान्ता महात्मानो लोमशाः केशवर्ज्जिताः ।
प्रातः प्रविश्य राजेन्द्र वापिकायां यतीश्वराः । स्नात्वोपस्पृश्य ते सर्व्वे यत्नेन महता तदा ।
द्रष्टुमभ्युद्यता विष्णुं कण्टकोद्धृतितत्परं । एकरूपं समास्थाय सुधर्म्मायामवस्थितं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने एकाधिकत्रिशततमोऽध्यायः ॥ २०१ ॥
॥ वैशम्पायन उवाच ॥ अथ सर्व्वेश्वरो विष्णुः पद्मकिञ्जल्कलोचनः । श्यामः पीताम्बरः श्रीमान् प्रलम्बाम्बरभूषणः ।
किरीटी श्रीपतिः कृष्णो नीलकुञ्चितमूर्द्धजः । अव्यक्तः शाश्वतो देवः सकलो निष्कलः शिवः । ११५३०
क्रीडाविहारोपगतः कदाचिदभवद्धरिः । कुमारैरपरैः सार्द्धं सात्यकिप्रमुखैर्नृप ।
गोलक्रीडां सुधर्म्मायाः मध्ये यादवसत्तमः । चकार प्रियकृष्णोऽपि युयुधानेन केशवः ।
ममायं प्रथमो गोलस्त्वत्र पश्चाद्भविष्यति । इति ब्रुवंस्तदा विष्णुः सात्यकिं मतङ्गजः ।

पार्श्वस्था यादवास्तस्य वसुदेवपुरोगमाः। उद्धवप्रमुखा राजन्नासेदुः कथिदच वै।
अन्यव्यापाररहितो भूतात्मा भूतभावनः। विजहार यथा रामः सुग्रीवेण पुरा नृप। १११४५
मध्यन्दिने महाविष्णुः शैनेयेन सहाच्युतः। विक्रीड्य सुचिरं कृष्ण उपारंसीत् स यादवः।
द्वाःस्थेन वारिताः पूर्व्वं द्वार्य्येव च समास्थिताः। इदमन्तरमित्येवं विविशुस्तां सभां नृप।
यतयो दीर्घतपसः पुरस्कृत्य तपोधनं। दुर्व्वाससं सुमनसो ददृशुर्यादवेश्वरं।
गोलक्रीडासमायुक्तं करसंस्थितगोलकं। पद्मपत्रविशालाक्षं विष्णुं तं सात्यकिं हरिं।
एकेनाङ्घ्रिणा छादयन्तं परेणान्येन गोलकं। यतयश्च महाराज प्रत्यदृश्यन्त तत्पुरः। १११५०
वृष्णयः पुण्डरीकाक्षः सात्यकिर्म्मुसलभद्रकः। वसुदेवस्तथाऽक्रूर उग्रसेनस्तथा नृपः।
अन्ये च यादवाः सर्व्वे संभ्रमं प्रतिपेदिरे। इदं किमिदमित्येवं व्याकुलमनसोऽभवन्।
पृष्ठतोऽप्यनुगच्छन्तं दिधक्षन्तं जगत्त्रयं। अर्द्धकौपीनवसनं स्मरन्तं कमपि द्विजं।
अन्तस्तापसमायुक्तं छिन्नदण्डधरं यतिं। अन्तर्ज्वलन्तं रोषेण हंसासादितकल्मषं।
नेत्रोत्थितमहार्वह्निं प्रेक्षन्तं यादवेश्वरं। दुर्व्वाससं ते ददृशुर्भीता यादवसत्तमाः। १११५५
किं करिष्यत्ययं क्रुद्धः किं वा वक्ष्यति नः प्रभुः। इति प्राञ्जलयः सर्व्वे यादवाः प्रतिपेदिरे।
इदमासनमित्येवं किञ्चिदूचुश्च वृष्णयः। ततः कृष्णो हृषीकेशः किञ्चिदुत्थाय तत्पुरः।
इदमासनमित्येवं स्थीयतामिह निर्वृतः। अहमत्र स्थितो विप्र किङ्करोऽस्मीति चाब्रवीत्।
ततः किञ्चिदिवासीत आसने यतिविग्रहः। आसने संस्थिते तस्मिन् यतयो वीतमत्सराः।
आसनानि यथायोगं भेजिरे निर्वृताः किल। अर्घ्यादिसमुदाचारं चक्रे कृष्णः किरीटभृत्। १११६०
आह भूयो हृषीकेशो यतिं दुर्व्वाससं प्रभुं। किमर्थं ब्रूहि विप्रेन्द्र अस्मिन् प्रत्यागमो हि वः।
दृष्टं वाऽप्यथ वा किञ्चित् कारणं वोऽस्ति वा महत्। संन्यासिनो द्विजश्रेष्ठा यूयं विगतकल्मषाः।
निस्पृहाश्च सदा यूयमसक्ता द्विजपुङ्गवाः। प्रार्थ्यं नाम न चैवास्ति स्पृहा नैवास्ति वो यतः।
स्पृहाप्रेरितकर्म्माणः क्षत्रियान् यान्ति सुव्रताः। निरूप्यमाणमस्माभिर्विप्र किञ्चिन्न दृश्यते।
न जाने कारणं ब्रह्मन् युष्मदागमनं प्रति। एतावता चानुमेयं किञ्चित् कारणमस्ति वै। १११६५
तद्ब्रूहि यदि विद्येत त्वत्तो ज्ञास्यामहे वयं। इत्युक्तवति देवेशे चक्रपाणौ जनार्द्दने।
तस्यापि राजन् विप्रस्य भूयः कोपो महानभूत्। तस्मादभ्यधिकः पूर्व्वात् कोपः कोपायते महान्।
दिधक्षन्निव लोकांस्त्रीन् भक्षयन्निव पश्यतः। रोषरक्तेक्षणः क्रुद्धो हसन्निव दहन्निव।
उवाच वचनं विष्णुं दुर्व्वासाः क्रोधमूर्च्छितः। न जाने इति कस्मात्त्वं ब्रूषे नो यादवेश्वर।
जानामि त्वां महादेवं वञ्चयन्निव भाषसे। पुरातना वयं विष्णो पूर्व्ववृत्तान्तवेदिनः। १११७०
तथाहि देवदेवोऽसि मायामानुषदेहवान्। निगूहसे प्रभुरतः कस्मात्त्वं जगतीपते।
सोऽसि ब्रह्मविदां मूर्त्तिस्तदेतत् परमं पदं। यदभाव्यं पुरा ब्रह्म यत्र ज्ञाता वयं पुरा।
यस्माद् विश्वमिदं भूतं तदेतत् परमं पदं। यत्र स्थूलं विजानन्ति पुरातत्त्वेन चेतसा।

पुराविदोऽथ विश्वेश तदेतत् परमं वपुः । कर्म्मणा प्राप्यते यत्तु यत् त्वत्ता निष्ठता वयं ।
प्रत्यक्षमपि यद्रूपं नैव जानन्ति मानुषाः । न हि मूढधियो देव न वयं तादृशा हरे । ११५७५
न जाने इति यद्ब्रूषे किमतः साहसं वचः । ये हि मूलं विजानन्ति तेषान्तु प्रविचेतनं ।
कुर्व्वतः किं फलं देव तव केशिनिषूदन । वेदान्ते प्रथितं तेजस्तव चेदं विचार्य्यते ।
ये च विज्ञानतत्त्वज्ञास्तु योगिनो वीतकल्मषाः । पश्यन्ति त्वत्प्रसादे हि तदेवेदं वपुः प्रभो ।
वेदैर्यच्छ्रूयते तेजो ब्रह्मेति प्रतिपाद्य वै । तदेवेदं विजानेऽहं रूपमैश्वरमेव च ।
वैष्णवं परमं तेज इति वेदेषु पठ्यते । श्रवणस्कान्त्यहं विष्णो तदेवेदं वपुस्तव । ११५८०
य ओमित्युच्यते शब्दो यस्य वागिति गीयते । स एवासि प्रभो विष्णो न जाने इति मा वद ।
परोक्षे यदि किञ्चित् स्यात्तव वक्तुं प्रयुज्यते । न जाने इति गोविन्द मा वादीः साहसं हरे ।
विश्वं यदा प्रादुरासीद्यस्मिन् लीनं क्षये सति । इदं तदैश्वरं तेजस्त्वत्तो गच्छामि केशव ।
कर्त्ता त्वं भूतभव्येश प्रतिभासि सदा हृदि । यद्यद्रूपं स्मरे नित्यं तत्तदेवासि मे हृदि ।
वायुरेव यदा विष्णुरिति मे धीयते मतिः । तदा तद्रूप एवासि हृन्मध्ये संस्थितो विभो । ११५८५
आकाशो विष्णुरित्येव कदाचिद्धीयते मतिः । तदा तद्रूप एवासि हृन्मध्ये संस्थितो विभो ।
पृथिवी विष्णुरित्येव कदाचिद्धीयते मतिः । तदा पार्थिवरूपस्त्वं प्रतिभासि सदा मम ।
रसोऽयं देव इत्येव कदाचिच्चिन्त्यते मया । तदा रसात्मना विष्णो हृन्मध्ये संस्थितो विभो ।
यदा त्वं तेज इत्येव स्मर्त्ता त्वां पुरुषोत्तम । तदा तद्रूपसम्पन्नः प्रतिभासि सदा हृदि ।
चन्द्रमा हरिरित्येव तदा चान्द्रमसं वपुः । निरीक्ष्य चक्षुषा देव ततः प्रीतोऽस्मि केशव । ११५९०
यदा सौरं वपुरिति स्मर्त्ता त्वां जगतोपते । तदा तद्भावनायोगात् सूर्य्य एव विराजसे ।
तस्मात् सर्व्वं त्वमेवासि निश्चिता मतिरीदृशी । अतो न जानेऽहमिति वक्तुं नेशो जनार्द्दन ।
इत्यर्थे संस्थितो विष्णो पीडां नो नैव चिन्त्यसे । अत्यन्तदुःखिता विष्णो वयं त्वामनुसंस्थिताः ।
ईदृशीयमवस्था नो नैतां स्मरसि केशव । तत्पुनर्भागधेयं नो नष्टमित्येव चिन्तये ।
मन्दभाग्या वयं विष्णो यतो नो न स्मरेः प्रभो । कौचित् क्षत्रियदायादौ गिरीशवरगर्व्वितौ । ११५९५
नाम्ना च हंसडिम्भकौ बाधेतां नो जनार्द्दन । गार्हस्थ्यं हि सदा श्रेयो वदन्ताविति केशव ।
इतस्ततश्च धावन्तौ वदन्तौ बहुकिल्विषं । अयुक्तं बहुभाषन्तौ धर्षयन्तौ च नः सदा ।
इदमन्यत् कृतं देव असङ्गं पापमुच्यते । पश्येदं बहुधा देव भिन्नं भिन्नं सहस्रशः ।
शिक्यञ्च दारवं पात्रं विदलान् वेणुकान् बहून् । इदमप्यपरं पश्य तयोः साहसचेष्टितं ।
कौपीनं बहुधा छिन्नं तदस्माकं सहस्रशं । कृतं कपालमात्रेण कमण्डलु जगत्प्रभो । ११६००
त्वन्तु नो रक्षसे नित्यं त्राता त्वं वै शतमाश्रिताः । चित्रं चित्रमिदं देव रक्षिष्यसि सदानिशं ।
किं करिष्यामि मन्दात्मा मन्दभाग्या वयं विभो । किन्तु शरणमद्यैव तद्ब्रूहि जगतां पते ।

जीवन्तौ तौ यदि स्यातां नष्टा लोका इमे त्रयः । न विप्रा न च राजानो न वैश्या न च पादजाः ।
अत्यन्तबलिनौ मत्तौ तीक्ष्णदण्डधरौ नृप । न तयोः पुरतः स्थातुं शक्ता देवाः सवासवाः ।
न च भीष्मो न वा राजा बाह्लीको भीमविक्रमः । यो हि वीरो जरासन्धः क्षत्रियाणां भयङ्करः । १५९०५
नैव च प्राग्यशः स्थातुं गिरीशवरदर्पितोः । तयोः कृष्ण हरे शक्तो नित्यमप्रतिमर्द्दिनोः ।
तस्मात्त्वं जहि तौ वीरौ रक्ष लोकानिमान् प्रभो । अन्यथा रक्षणोत्थेयं व्यर्थः शब्दोऽद्य जायते ।
बहुनाऽत्र किमुक्तेन रक्ष रक्ष जगत्त्रयं । इत्युक्त्वा विररामैव दुर्व्वासा क्रोधमूर्च्छितः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने द्व्यधिकद्विशततोऽध्यायः ॥ २०२ ॥
॥ वैशम्पायन उवाच ॥ यतेर्व्वचनमाकर्ण्य मन्दमुच्छ्रस्य केशवः । दुर्व्वाससं समालोक्य बभाषे यादवेश्वरः ।
क्षन्तव्यं भवता सर्व्वं दोष एवं ममैव हि । शृणु वाक्यं ममैतत्तु श्रुत्वा क्षमापरो भव । १५९१०
जेष्यामि तौ रणे विप्र हंसं डिम्भकमेव च । गिरीशो वा वरं दद्यात् शक्रो वा धनदोऽपि वा ।
यमो वा वरुणो वाऽपि ब्रह्मा वाथ चतुर्म्मुखः । सबलौ सानुजौ हत्वा पुनर्दास्यामि वो रतिं ।
सत्येनैव शपाम्यद्य मा रोषवशगो भव । रक्षां वोऽहं करिष्यामि हत्वा तौ च नृपाधमौ ।
जानामि तौ दुरात्मानौ सुमहादोषकरौ हि तौ । श्रुतञ्च पूर्व्वमस्माभिस्तीक्ष्णदण्डधराविति ।
अत्यन्तबलिनौ मत्तौ गिरीशवरदर्पितौ । नाल्पप्रयत्नसंसाध्यौ जरासन्धहितैषिणौ । १५९१५
प्राणानपि तयो राजा दास्यत्येव न संशयः । जरासन्धो महीपालो विना तेन यतेम हि ।
जये तयोर्विप्रवर्य्य तत्र श्रेयो भवेत्तु नः । यत्र यत्र च तौ गत्वा स्थितावित्यनुशुश्रुम ।
तत्र तत्र च हन्ताऽहं नात्र कार्य्या विचारणा । गच्छध्वं यतयः स्वैरं निजकार्य्यपरायणाः ।
अचिरेणैव कालेन जेष्यामि रणपुङ्गवौ । ततः प्रीतः प्रसन्नात्मा यादवेश्वरमाह सः ।
स्वस्त्यस्तु भवते कृष्ण जगतां स्वस्तिकुर्व्वते । किन्नु नाम जगन्नाथ दुःसाध्यं तव केशव । १५९२०
त्रिलोकेश त्रिधामाऽसि सर्गसंहारकारक । देवानामपि देवेश सर्व्वत्र समदर्शन ।
विष्णो देव हरे कृष्ण नमस्ते चक्रपाणये । नमः स्वभावशुद्धाय शुद्धाय नियताय च ।
शब्दगोचर देवेश नमस्ते भक्तवत्सल । अज्ञानादथ वा ज्ञानाद्यन्मयोक्तं क्षमस्व तत् ।
त्वमेवाह जगन्नाथ नावयोरन्तरं पृथक् । अतः क्षमस्व भगवन् क्षमासारा हि साधवः ।
॥ श्रीभगवानुवाच ॥ क्षन्तव्यं भवता विप्र क्षमासारा वयं सदा । संन्यासिनः क्षमासाराः क्षमा तेषां परं बलं । १५९२५
क्षमा मोक्षकरी नित्यं तत्त्वज्ञानमिव द्विज । क्षमा धर्म्मः क्षमा कर्म्म क्षमा सत्यं क्षमा यशः ।
क्षमा स्वर्गस्य सोपानमिति वेदविदो विदुः । तस्मात् सर्व्वप्रयत्नेन क्षमां पालयत स्वकां ।
प्रत्यक्षं ज्ञानसंयुक्ता यूयं सर्व्वे यतीश्वराः । त एते यतयो विप्राः पूजनीया मयाऽद्य वै ।
भोक्तव्या यतयो विप्रा भिक्षुकाः सर्व्व एव हि । तथेति ते प्रतिज्ञाय भोक्तुमैच्छन् हरेर्गृहे ।
ततः स्वभवनं विष्णुः प्रविश्य हरिरीश्वरः । चतुर्व्विधं तथाहारं कारयित्वा यथाविधि । १५९३०

भोजयामास तान् सर्व्वान् यतीन् यतिवरार्च्चितः । छित्त्वा छित्त्वा च देवेशो दुकूलानि मृदूनि च ।
ददौ तेभ्यस्तदा विष्णुः सर्व्वेभ्यो जनमेजय । ते च प्रीता यथायोगं यतः पूर्व्वं ततो गताः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने यतिभोजने त्र्यधिकद्विशततोऽध्यायः ॥ १०३ ॥

॥ वैशम्पायन उवाच ॥ दुर्व्वासास्त्वथ तत्रैव नारदेन महात्मना । चिन्तयन् ब्रह्मणस्तत्त्वं विजहार यथासुखं ।
भगवानपि गोविन्दस्तयोर्व्वाससमन्यत । ततस्तौ हंसडिम्भकौ तस्मिन् काले महीपते ।
ब्रह्मदत्तं महीपालं पितरं वीर्य्यशालिनं । प्रावोचतामिदं वाक्यं समन्ताज्जनसंसदि ।     १५६३५
राजसूयं महायज्ञं पितः कुरु सुयत्नतः । भक्षिष्यामि नृपश्रेष्ठ यतावो यज्ञसिद्धये ।
आवां तेऽद्य महाराज दिशो विजयतत्परौ । यतिष्यावो बलैः सार्द्धं गजैरश्वैरथैरपि ।
सम्भारा यज्ञसिद्ध्यर्थमानेतव्या नृपोत्तम । तथेति स महाबाहो ब्रह्मदत्तोऽब्रवीत्तदा ।
जनार्द्दनस्तु विप्रेन्द्रो दृष्ट्वा साहसतत्परौ । अशक्यमिति मन्वानो वयस्यं हंसमब्रवीत् ।
शृणु हंस वचो मह्यं श्रुत्वा निश्चित्य वीर्य्यवान् । आयुष्मन् साहसं कर्त्तुमुद्यतोऽसि नृपोत्तम ।     १५६४०
स्थिते भीष्मे जरासन्धे वाह्लीके च नृपोत्तमे । किञ्च वीरेषु सर्व्वेषु यादवेषु नृपोत्तम ।
भीष्मो हि बलवान् वृद्धः सत्यसन्धो जितेन्द्रियः । विप्रक्षत्रः पृथिवीं यो जिगाय भृगूत्तमः ।
तं युद्धे जितवान् भीष्मः सर्व्वक्षत्रस्य पश्यतः । जरासन्धस्य यद्वीर्य्यं तद्भवान् वेत्ति संयुगे ।
वृष्णिवीरास्तु ते सर्व्वे कृतास्त्रा युद्धदुर्मदाः । तत्र कृष्णो हृषीकेशो जितशत्रुः कृती सदा ।
जरासन्धेन सहितः सदा युद्धे जितश्रमः । प्रमुखे तस्य न स्थातुं शक्तो जीवन्नृपोत्तम ।     १५६४५
बलभद्रस्तथा मत्तः क्रुद्धो यदि भवेद्धली । लोकानिमान् समाहर्त्तुं शक्नोतीति मतिर्म्मम ।
तथा च सात्यकिर्व्वीरः शक्तो जेतुं रणे रिपून् । तथाऽन्ये यादवाः सर्व्वे कृष्णमाश्रित्य गर्व्विताः ।
अस्माभिश्च कृतः पूर्व्वं विरोधो यतिभिः सह । दुर्व्वासा यतिभिः सार्द्धं गतो द्रष्टुं स केशवं ।
इति श्रुतं नृपश्रेष्ठ ब्राह्मणाद्द्वारकामागतात् । तथा सति यथा सिद्धिस्तथा चिन्त्यश्च मन्त्रिभिः ।
ततः पश्चाद्विधास्यामो राजसूयं महाक्रतुं ।     १५६५०
॥ हंस उवाच ॥ को नाम भीष्मो मन्दात्मा वृद्धो हीनबलः सदा । आवयोः पुरतः स्थातुं शक्तः स किल वृद्धकः ।
यादवा इति चित्रं नः शक्ताः स्थातुं रणे द्विज । कश्च कृष्णः पुरः स्थातुं बलदेवश्च मत्तकः ।
शैनेयस्यापि विप्रेन्द्र स्थातुं न इति चिन्तय । जरासन्धस्तु धर्म्मात्मा बन्धुरेव सदा मम ।
गच्छ विप्र यदुश्रेष्ठं ब्रूहि मद्वचनात् त्वरन् । दीयतां करमर्व्वस्वं यज्ञार्थं सुन्दरं बहु ।
लवणानि बहून्याशु गृहाण केशव माचिरं । आगच्छ त्वरितं कृष्ण न ते कार्य्यं विलम्बनं ।     १५६५५
इति ब्रूहि यदुश्रेष्ठं याहि त्वरितविक्रमः । न ब्रूयास्त्वोत्तरं विप्र शपथं त्वां प्रियोऽसि मे ।
मित्रभावादिदं ब्रूहि शपामि त्वां पुनः पुनः । इति सञ्चोदितो विप्रो नोत्तरं प्रत्यभाषत ।
मित्रभावात्तथा राजन् स्नेहाच्च जनमेजय । जनार्द्दनस्तु धर्म्मात्मा नित्यं गन्तुं समुद्यतः ।
अद्य श्वो वा परश्वो वा गच्छामीति यतेत सः । देवं द्रष्टुं जगद्योनिं शङ्खचक्रगदाधरं ।

एक एव च धर्म्मात्मा हयमारुह्य सत्वरं । प्रातरेव जगामाशु द्रष्टुं द्वारवतीं द्विजः । ११६६०
हरिं कृष्णं हृषीकेशं मनसा संस्मरन् द्विजः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने द्वारकायां दूतप्रेषणे चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

॥ वैशम्पायन उवाच ॥ ततः प्रायाद्धरिं विष्णुं ब्राह्मणो ब्रह्मवित्तमः । हयेनैकेन राजेन्द्र त्वरितं स ययौ नृप ।
यथा निदाघसमये सूर्य्यांशुपरिपीडितः । पान्थो याति जलं दृष्ट्वा त्वरितं तत् पिपासया ।
धावत्येव तथा विप्रो हरिं द्रष्टुं जनार्द्दनं । गच्छन् स चिन्तयामास चोदयन् हयमुत्तमं ।
हंस एव प्रियो मह्यं कुर्य्यात् प्रियहितं मम । तथा हि प्रेषितस्तेन हरिं पश्याम्यहं प्रभुं । ११६६५
अहमेव सदा धन्यो मत्तो ह्यभ्यधिको नहि । यतो द्रक्ष्याम्यहं विष्णुं वसन्तं द्वारकापुरे ।
सा हि मे जननी धन्या हरिं दृष्ट्वा पुनर्गतं । कृतार्थं सर्व्वदा देवी द्रक्ष्यत्येषा मनस्विनी ।
मुखमुन्निद्रहेमाब्जकिञ्जल्कसदृशप्रभं । द्रक्ष्यामि देवदेवस्य चक्रिणः शार्ङ्गधन्वनः ।
वपुर्द्रक्ष्याम्यहं विष्णोर्नीलोत्पलदलच्छवि । शङ्खचक्रगदाशार्ङ्गवनमालाविभूषितं ।
नेत्रे ते देवदेवस्य पद्मकिञ्जल्कसप्रभे । पश्याम्यहमदीनात्मा नष्टदुःखोऽस्मि निर्वृतः । ११६७०
अपि द्रक्ष्यति योगात्मा सौम्येनैव स्वचक्षुषा । अपि वा मत्प्रियं ब्रूयात् स्वस्ति चेति च वा वदेत् ।
द्रक्ष्यामि चक्रिणो वक्षो ततस्तैलोक्यसन्निभं । पादाब्जं चक्रिणो द्रष्टुं त्वरत्येव च मे मनः ।
वक्षस्थलं सदा विष्णोः स्फुरद्रत्नसमावृतं । पश्यन्निव च गच्छामि स्मरंस्तान्निगमोत्तरं ।
पीतकौशेयवसनं लम्बहारविभूषितं । ईषत्स्मिताधरं विष्णुं पश्यामि च पुनः पुनः ।
स्मरतश्च हरेरूपं रोमहर्षोऽयमीदृशः । गच्छतश्च पुरो भाति शङ्खचक्रगदासिमान् । ११६७५
यातीव च पुरो भाति मह्यं देवो जगद्गुरुः । एषोऽयमिति मे वक्तुं जिह्वा प्रस्फुरतीव तं ।
इदं दुःखतरं मन्ये करं देहीति मद्वचः । इदं तत् साहसं मन्ये यद्वचस्तस्य भूपतेः ।
हंसस्य करदो विष्णुस्तदाज्ञापरिचारकः । तस्य सर्व्वं पुरो गत्वा वक्ताऽहं किल निर्दयः ।
मूढानामग्रणीरस्मि निर्लज्जस्य तथा वदन् । करं देहि हरे विष्णो हंसस्य यदुपुङ्गव ।
लवणानि बहून्याशु दातव्यानि करात्मना । इति वक्तुं न मे युक्तं पुरतस्तस्य शार्ङ्गिणः । ११६८०
तथाऽपि मित्रभावात्तु वक्तव्यं घोरमीदृशं । कष्टो ह्ययं मित्रभावो मनुष्याणां कृतात्मनां ।
अथवा सर्व्वविद्विष्णुः सर्व्वस्य हृदि संस्थितं । जानात्येव सदा भावं प्राणिनां शोभने रतः ।
तथा सति न मे दोषो मित्रभावो यतो ह्ययं । सर्व्वथा रक्ष्यतां विष्णुर्घोरं वक्तुं यतश्च मे ।
द्रक्ष्याम्यहं जगन्नाथं नीलकुञ्चितमूर्द्धजं । कुम्बुग्रीवाधरं विष्णुं श्रीवत्साच्छादितोरसं ।
स्फुरत्पद्ममहाबाहुं रत्नच्छायाविराजितं । द्रक्ष्यामि केशवं विष्णुं चक्रिणं यादवेश्वरं । ११६८५
अचिन्त्यविभवं देवं भूतभव्यभवत्प्रभुं । आत्मेच्छया जगद्रूपं द्रक्ष्यामि जलशायिनं ।
कृतार्थः सर्व्वथा चाहं भवामि विगतज्वरः । अद्य मे सफलं जन्म साक्षात् दृष्टवतो हरिं ।

अद्य मे सफला यज्ञाः साक्षाल्लब्धवतो हरिं । नेत्रे मे सफले विष्णुं पश्यतस्तु जगन्मयं ।
प्रीतिमानस्तु मे विष्णुर्व्यक्तुर्वीरस्य कर्म्मणः । उन्मिषन्नेत्रयुग्मेन द्रक्ष्यामि सकृदीश्वरं ।
आमूलमसकृद्विष्णुं पश्यामि च पुनः पुनः । पिबामि नेत्रयुग्मेन वपुः कृष्णस्य केवलं । १४९९०
धारयिष्याम्यहं पांशुं तत्पादप्रभवं शिवं । ततः कृतार्थतां यास्ये स्वर्गमार्गो हि तद्व्रजः ।
मेघगम्भीरनिर्घोषं श्रोष्यामि च हरेः स्वरं । पादाब्जं चक्रिणो विष्णोः पश्यामि च जगत्पतेः ।
पश्यामीव हरेर्वक्त्रं पूर्णेन्दुसदृशप्रभं । हरेरिदं जगद्रूपं पश्यामीव च सर्व्वतः ।
प्रसीदतु सदा विष्णुरयुक्तं वक्तुमिच्छतः । आलोलकुण्डलयुतं हरिचन्दनचर्चितं ।
स्फुरत्केयूररत्नार्चिर्वाङ्गदयविराजितं । मध्ये द्योतन्महाशङ्खं रश्मिजालविराजितं । १४९९५
प्रोद्यद्भास्करवर्णाभं वक्त्रज्वालाविराजितं । प्रोज्ज्वलत्कङ्कणयुतं तप्तजाम्बूनदाङ्गदं ।
पीतकौशेयवसनं विस्तीर्णोरस्कमच्युतं । कदा द्रक्ष्यामि देवेशमिदानीमथ वाऽन्यदा ।
सर्व्वथा कृतकृत्योऽहं यद्वपुर्द्रष्टुमुद्यतः । नमो मह्यं नमो मह्यं यतो द्रष्टुमहं हरिं ।
उद्यतोऽस्मि जगन्नाथं बलभद्रकृतास्पदं । द्रक्ष्याम्यवश्यमद्यैव विष्णुं जिष्णुं जगद्गुरुं ।

श्रीकौस्तुभोद्भवरुचिस्फुरितोरुवक्षः पीताम्बरं मकरकुण्डलपङ्क्तिजार्चं । कृष्णं किरीटवरचक्रगदाब्जहस्तं तेजोमयं मम हरेर्वपुरस्तु भूत्यै । १५०००

वेदोदधौ विषदशास्त्रमहाहियोगे निष्णातशुद्धमतिमन्दरमथ्यमाने । उद्योतमानममरैरनिशं निषेव्यं नारायणाख्यममृतं प्रपिबामि चाद्य ।

ध्येयं मुमुक्षुभिरमेयमनाद्यनन्तं स्थूलं सुसूक्ष्मतरमेकमनेकमाद्यं । ज्योतिस्त्रिलोकजननं चिदशैकवन्द्यमन्तर्णामिमास्तु सततं हृदयेऽच्युताख्यं ।

चिन्तयन्निति विप्रेन्द्रो ययौ द्वारवतीं पुरीं । मत्वा कृतार्थमात्मानं चोदयन् हयमुत्तमं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने जनार्द्दनस्य द्वारकागमने पञ्चाधिकत्रिशततोऽध्ययः ॥ ३०५ ॥

॥ वैशम्पायन उवाच ॥ स निवेदितसर्व्वस्थो द्वाःस्थेन हि जनार्द्दनः । अथ प्रविश्य धर्म्मात्मा सुधर्म्मां वै द्विजोत्तमः ।
अपश्यद्देवदेवेशं सुधर्म्माकृतिसंस्थितं । बलभद्रेण संयुक्तमध्यासितमहासनं । १५००५
अग्रतः स्थितशैनेयं पार्श्वतः स्थितनारदं । दुर्व्वाससा कृतकथमुग्रसेनपुरस्कृतं ।
गायद्गन्धर्व्वमुख्यैश्च नृत्यदप्सरसां गणैः । सेव्यमानं महाराज सूतमागधवन्दिभिः ।
उद्गीयमानयशसं माधवं मधुसूदनं । उद्गीयमानं विप्रैश्च सामभिः सामगैर्हरिं ।
दृष्ट्वा प्रीतमना विष्णुं प्रादुर्भूतपुलकच्छविः । नाम्ना जनार्द्दनोऽस्मीति ननाम चरणे हरे ।
बलभद्रं ततो देवं ववन्दे शिरसा द्विजः । दूतोऽस्मि देवदेवेश हंसस्य डिम्भकस्य च । १५०१०
इति ब्रुवाणं विप्रेन्द्रमिदमाह स माधवः । आस्वेदं विष्टरं पूर्व्वं पश्चाद्ब्रूहि प्रयोजनं ।
तथेति चाब्रवीद्विप्रो भद्रदासनमास्थितः । वाचा संपूज्य विप्रेन्द्रमपृच्छत् कुशलं हरिः ।

ब्रह्मदत्तस्य राजेन्द्र हंसस्य डिम्भकस्य च । श्रुतश्चापि तयोर्वीर्य्यं प्रयोजनमतो द्विज ।
अपि वा कुशलं विप्र पितुस्तव जनार्द्दन ।
॥ जनार्द्दन उवाच ॥ कुशलं ब्रह्मदत्तस्य पितुर्मम केशव । तथैरेव जगन्नाथ हंसस्य डिम्भकस्य च । १५०१५
॥ श्रीभगवानुवाच ॥ किमाहतुर्महीपालौ तौ हंसडिम्भकौ नृपौ । ब्रूहि सर्व्वमशेषेण नात्र शङ्का द्विजोत्तम ।
वाच्यं वाऽप्यथवाऽवाच्यं कर्त्तव्यमथ चेतरत् । श्रुत्वा तस्य विधास्यामो युक्तरूपं द्विजोत्तम ।
दूतोऽसि सर्व्वथा विप्र न वाच्यावाच्यकल्पना । यत्कथं राज्ञा निर्द्दिष्टं तद्वाच्यं दूतजन्मना ।
नात्र शङ्का त्वया कार्य्या कार्य्यस्येतरस्य च । अतो वद यथाप्रोक्तं ताभ्यामिह जनार्द्दन ।
केशवेनैवमुक्तस्तु प्रोवाच स जनार्द्दनः । अजानन्निव किं ब्रूषे सर्व्वं प्रत्यक्षदर्शिवान् । १५०२०
न चास्ति ते परोक्षन्तु जगद्वृत्तान्तमच्युत । सर्व्वं हि मनसा पश्यन् किं त्वमात्थ वदेति मां ।
विद्वद्भिर्गीयसे विष्णो त्वमेव जगतीपते । इच्छया सर्व्वमाप्नोषि दृष्टादृष्टविवेचनं ।
त्वमेवेदं जगत् सर्व्वं जगच्च त्वयि तिष्ठति । न त्वया रहितो लोकः पदार्थः सचराचरः ।
नास्ति किञ्चिदवेद्यन्ते सर्व्वगोऽसि जगत्पते । त्वमिन्द्रः सर्व्वभूतानां रुद्रः संहारकर्म्मकृत् ।
रक्षिताऽसि सदा विष्णुः सर्व्वलोकस्य माधव । संसारस्य भवान् स्रष्टा किं त्वमात्थ वदेति मां । १५०२५
विद्वद्भिर्गीयसे नित्यं ज्ञानात्मेति च माधव । प्राणं प्राणविदः प्राहुस्त्वामेव पुरुषोत्तम ।
शब्दं शब्दविदः प्राहुस्त्वामेव पुरुषोत्तम । तथा सति हृषीकेश किं त्वमात्थ वदेति मां ।
तथापि शृणु देवेश चोदितोऽस्मि यतस्त्वया । वदेत्यसकृद्देवेशस्तस्माद्वक्ष्यामि माधव ।
राजसूयेन यागेन ब्रह्मदत्तोऽद्य यक्ष्यते । तदर्थं प्रेषितस्ताभ्यां हंसेन डिम्भकेन च ।
करार्थं यदुमुख्येभ्यस्तव चामन्त्रणाय हि । लवणं बहुदेयं ते यज्ञार्थं तस्य केशव । १५०३०
इत्यर्थं प्रेषितस्ताभ्यां करं देहि मदाज्ञया । इदं त्वमपरं ताभ्यामुक्तं शृणु जगत्पते ।
लवणानि बहून्याशु प्रस्थाप्य त्वरितं भवान् । आगच्छतु तयोराज्ञा सेयं केशव वा विभो ।
इत्युक्तवति विप्रेन्द्रे दूते तत्र तयोर्नृप । प्रहस्य सुचिरं कृष्णो बभाषे दूतमीश्वरः ।
शृणु दूत वचो मह्यं युक्तमुक्तं द्विजोत्तम । करं ददामि ताभ्यान्तु करदोऽस्मि यतो नृपः ।
धार्ष्ट्यमेतत्तयोर्विप्र मत्तो यत्तु करग्रहः । अहो धार्ष्ट्यमहो धार्ष्ट्यं तयोः क्षत्रियवीरयोः । १५०३५
इदमश्रुतपूर्व्वं मे मत्तो वस्तु करग्रहः । इत्युक्त्वा केशवो दूतमिदमाह स्म यादवः ।
हास्यमेतद्यदुश्रेष्ठा मत्तो यत्तु करग्रहः । यष्टाऽसौ राजसूयस्य ब्रह्मदत्तो महीपतिः ।
तौ तं याजयितारौ हि हंसो डिम्भक एव च । वोढा किल यदुश्रेष्ठो लवणस्य दुरात्मनोः ।
करदो वासुदेवो हि जितोऽस्मि यदुसत्तमाः । हास्यं हास्यमिदं भूयः शृणुध्वं यादवा वचः ।
इत्युक्तवति देवेशे बलभद्रपुरोगमाः । यादवाः सर्व्व एवैते हासाय समवस्थिताः । १५०४०
करदः कृष्ण इत्येवं ब्रुवन्तः सर्व्वसात्वताः । हासं मुमुचुरत्यर्थं तालं दत्त्वा परस्परं ।
तालशब्दो हासशब्दो रोदसी पर्य्यपूरयत् । स च विप्रो नृपश्रेष्ठ निन्दयन्निव मात्मनः ।

अहो कष्टमहो कष्टं दौत्यं यत् कृतवानहं । इति चिन्तासमाविष्टश्चक्रेऽभाषीद्दिवाप्रभुः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने कृष्णवाक्ये षडधिकद्विशततोऽध्यायः ॥ १०६ ॥

॥ वैशम्पायन उवाच ॥ हासं कुर्व्वंस्तु तेनैवं केशवः केशिसूदनः । उवाच वचनं दूतं गच्छ मद्वचनादिह ।

तावित्थं हंसडिम्भकौ ब्रूहि त्वरितविक्रमः । वार्पैर्दास्यामि निशितैः शार्ङ्गमुक्तैः शिलाशितैः । ११७०५

असिना वाऽथ दास्यामि निशितेन महात्मनोः । शिरो वन्धोऽस्यते चक्रं मत्करप्रहितं बली ।

यो वरं दत्तवान् रुद्रो युवयोर्धार्ष्ट्यकारणं । स एव रक्षिता वां चापं जित्वा वां निहन्म्यहं ।

देशोऽयं स विधातव्यो यत्र नः सङ्गतिर्भवेत् । तत्र गन्ता तथा चास्मि सबलः सहवाहनः ।

भवन्तौ निर्भयौ भूत्वा गच्छेतां सबलौ नृपौ । पुष्करे वा प्रयागे वा मथुरायामथापि वा ।

तत्राहं सबलो याता नात्र कार्य्या विचारणा । अथवा मित्रभावाच्च वक्तुमेवं न ते क्षमं । ११७१०

न शक्यं यत्त्वया वक्तुं तच्च वक्ष्यति सात्यकिः । त्वया सह ततो गत्वा साक्षिभूतो भव द्विज ।

इदञ्च जाने विप्रेन्द्र स्नेहो मम सदा त्वयि । तेन त्वं विजयी भूत्वा संसार दुःखसंकुले ।

मत्कथापरमो नित्य सदा भव जनार्द्दन ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने कृष्णवाक्ये सप्ताधिकद्विशततोऽध्यायः ॥ १०७ ॥

॥ वैशम्पायन उवाच ॥ इत्युक्त्वा ब्राह्मणं कृष्णः सात्यकिं पुनराह सः । गत्वा शैनेय विप्रेण ब्रूहि मद्वचनात्तयोः ।

यन्मयोक्तमशेषेण वद गत्वा तयोः पुरः । यथा नः सङ्गतिर्युद्धे तथा वद बलात्तदा । ११७१५

धनुरादाय गच्छ त्वं बद्धगोधाङ्गुलित्रवान् । एकेनाश्वेन गच्छ त्वमसहायो यदूत्तम ।

सात्यकिस्तं तथेत्युक्त्वा हयमारुह्य शीघ्रगं । गन्तुमैच्छत्ततो राजन्महाबाहुः स सात्यकिः ।

जनार्द्दनं विसृज्याशु दूतं तं यादवेश्वरः । अहो धार्ष्ट्यमहो धार्ष्ट्यमित्युवाच जनार्द्दनः ।

नमस्कृत्य तदा दूतो माधवं यादवेश्वरं । स ययौ शाल्वनगरं शैनेयेन समन्वितः ।

ततः प्रविश्य धर्म्मात्मा ब्राह्मणो ब्रह्मवित्तमः । आसनं महदास्थाय विसृज्य यादवं पुनः । ११७२०

आस्ते सुखं सदा विप्रः शैनेयेन समन्वितः । अथ तं हंसडिम्भकयोर्दर्शयामास सात्यकिं ।

दूतोऽयं सात्यकिः प्राप्तः सख्यो वाञ्छरयं हरेः । तस्य तद्वचनं श्रुत्वा हंसः प्राह वचस्तदा ।

श्रुतः समागतः पूर्व्वमद्य दृष्टो मया त्वसौ । धनुर्वेदे च वेदे च शास्त्रे शस्त्रे तथैव च ।

निपुणो यः सदा शूर इत्येवमनुशुश्रुम । ततो दृष्टिपथं प्राप्तः प्रीतिं मे विदधात्यसौ ।

कुशलं वासुदेवस्य बलदेवस्य चापि वा । कुशलाः सात्वताः सर्व्वे उग्रसेनपुरोगमाः । ११७२५

तथेति सात्यकिः प्राह मन्दमुत्स्मितिताननः । ततो जनार्द्दनं प्राह हंसो वाक्यविशारदः ।

अपि दृष्टस्त्वया चक्री सिद्धं नः कार्य्यमीहितं । वद सर्व्वमशेषेण मा वृथा कालमत्यगाः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने हंसवाक्ये अष्टाधिकद्विशततोऽध्यायः ॥ १०८ ॥

॥ वैशम्पायन उवाच ॥ इत्युक्तवति हंसे च धर्म्मात्माऽथ जनार्द्दनः । उवाच प्रहसन् वीरः स्वकमारायणं तदा ।

॥ जनार्द्दन उवाच ॥ अद्राक्षमद्राक्षमहं जनार्द्दनं करस्थचक्रं वरशङ्खधारिणं । कानत्रजाम्बूनदभूषिताङ्गं स्फुरत्प्रभाद्योतितरत्न धारिणं ।

अद्राक्षमेनं ऋषिभिः पुरातनैः संसेव्यमानं मुनिवृन्दमुख्यैः । संस्तूयमानं वरबन्दिमागधैः स्मितप्रवालारुणपल्लवाधरं । ११०७०

अद्राक्षमेनं कविभिः पुरातनैर्विविच्य वेद्यं विधिवत् सहामरैः । प्रफुल्लनीलोत्पलशोभितं श्रिया विनिद्रहेमाब्जविराजितोदरं ।

भूयो ऽहमद्राक्षमजं जगद्गुरुं प्रसादयन्तं वचनेन यादवान् । निरूपयन्तं विधिवन्मुनीश्वरैः सहर्ग्वेदार्थनिधिं पुरातनैः ।

अद्राक्षमद्राक्षमहं पुनः पुनः समस्तलोकैकहितं प्रभुं हरिं । वसन्तमस्मिन् जगतो हिताय जगन्मयं तं परिभूय शत्रून् ।

भूयोऽप्यपश्यं सरसीरुहेक्षणं शार्ङ्गं तथा भीमतनूजया हरिं । वसन्तमम्भोनिधिशायिनं विभुं भक्तप्रियं भक्तजनार्त्तिहरं हरिं ।

भूयोऽप्यपश्यं सह यादवेश्वरैर्विक्रीड्य विक्रीड्य विहारकाले । रमन्तमीशं रमयन्तमीश्वरान् यदूत्तमान् यादवमुख्यमीश्वरं । ११०७५

अद्राक्षमद्राक्षमहं सुनिर्वृतः पिबन् पिबंस्तस्य वपुः पुनः पुनः । नेत्रेण नीलद्विरेण केवलं धन्योऽहमेवेति तदा व्यचिन्तयं ।

अद्राक्षमम्भोजयुगं दधानं प्रभुं विभुं भूतभवं प्रभावनं । स्मार्यं ककुद्मान्मुदं विभावसुं संस्मृत्य संस्मृत्य तमेव निर्वृतः ।

अद्राक्षं जगतामीशं वक्षोराजितकौस्तुभं । वीज्यमानं हरिं कृष्णं चामराणां शतैः सदा ।

युवां विद्वेषयुक्तेन चेतसा यादवेश्वरं । स्मरन्तं सर्वदा विष्णुं क्व वा तौ क्व च वेति वा ।

कुतो द्रक्ष्यामि तौ मन्दौ कुतो वा मत्पुरोगतौ । ध्यायन्तमित्थं देवेशं करसंश्रवणात्तदा । ११०८०

हंसं तमेवमद्राक्षं क्रूरं दैत्येश्वरं परं । वदन्तं नारदे वाचं दुर्वाससि यतीश्वरे ।

असम्बद्धपदां वाणीं दापयन्तं मुनीश्वरं । दृष्ट्वा दृष्ट्वा हरिं देवं पुनः पुनरचिन्तयं ।

असाध्यमिदमारब्धं ताभ्यामिति नृपोत्तम । नारब्धव्यमिदं कार्य्यमितः प्रभृति भूमिप ।

निवृत्ता सा कथा हंस यत्क्रयाचरणं तव । एष ते धर्म्ममखिलं वक्ष्यत्येव हि सात्यकिः ।

एतद्वचनमाकर्ण्य हंसः क्रुद्धोऽब्रवीद्वचः । ११०८५

॥ हंस उवाच ॥ अरे ब्राह्मणदायाद का नाम तव वागियं । आवयोः पुरतो वक्तुं त्रैलोक्यं जेतुमिच्छतोः ।

मायया त्वां भ्रामयति कृष्णो लीलाविधानवित् । तद्दृष्ट्वा भ्रम एवैष तव संजायते महान् ।

शङ्खचक्रगदाशार्ङ्गवनमालाविभूषितं । वृष्णिवीरसमावेशं समुद्भूतप्रबोधनं ।

सूतमागधसंलापप्रकटदीरवाङ्कं । अत्यद्भुतघोराम्बिविस्मयलोकमण्डलं ।

चतुर्भुजवत्साकारमदृष्णियादवसंस्तवं । अहोऽद्य भ्रम एवैष दर्शनात्तस्य चक्रिणः । ११०९०

इदानीम् महात्माऽसौ भ्रामयत्येव केशवः । त्वामेव विप्र मन्दात्मन्नेत्रजालोकता हि या ।

चापल्यमिदमेवैतत् तव विप्र समुद्भवं । अहो न खलु सादृश्यं कर्त्तव्यं भवता मम ।

अहमेव त्वया विप्र मर्त्तये प्रोदितं वचः । सखिभावाद्विजश्रेष्ठ अन्यथा कः सहेदिदं ।

गच्छ मन्दमते विप्र यथेष्टं सांप्रतं द्विज । गच्छ गच्छ यथेष्टं त्वं पृथिवीं पृथिवीं तव ।

जित्वा गोपालदायादं जित्वा यादवकान् बहून् । एष नः प्रथमः कल्पो जेष्याम इति यादवान् । ११०९५

गच्छ गच्छेति विप्रं तं हृष्टः परुषवादिनं । मधुपक्षस्तुतिपरः सह भुक्ता सदा मया ।
न मे विप्रवधः कार्य्यः कष्टादपि हि सर्व्वतः । इत्युक्ता ब्राह्मणं हंसो भूयः सात्यकिमब्रवीत् ।
अरे यादवदायाद किमर्थं प्राप्तवानिह । किमब्रवीन्नन्दसुतः किं वा मे नादिशत् करं ।
॥ सात्यकिरुवाच ॥ इदं तस्य वचो हंस शङ्खचक्रगदाभृतः । शरैर्निशितधाराग्रैः शार्ङ्गमुक्तैः शिलाशितैः ।
दास्यामि करसर्व्वस्वमसिना वा शितेन ते । शिरश्छेत्स्यामि वै हंस करदानस्य संग्रहं ।   ११८००
धार्ष्ट्यं धार्ष्ट्यं तव महन्मन्दात्मन् किमतोऽपि वा । नृपाधम जगन्नाथात् करमिच्छति यो नरः ।
तस्यैव करसंक्षेपो जिह्वाच्छेदो नराधम । तस्य शार्ङ्गरवं श्रुत्वा शङ्खस्य च हरेः पुरः ।
को नाम जीवनं काङ्क्षेत्तिष्ठेदानीं त्वमद्य वै । गिरीशवरदर्पेण को ब्रूयादीदृशं वचः ।
सहाया वयमेवैते बलभद्रपुरोगमाः । प्रथमो बलभद्रोऽसौ द्वितीयोऽहं च सात्यकिः ।
कृतवर्म्मा तृतीयस्तु चतुर्थो निशठो बली । पञ्चमोऽथ च बभ्रुश्च षष्ठश्चैवोल्मुकः स्मृतः ।   ११८०५
सप्तमस्सारणो धीमानस्त्रशस्त्रविशारदः । अष्टमस्त्वथ सारङ्गो नवमो विपृथुस्तथा ।
दशमश्चोद्धवो धीमान् वयमेते बलान्विताः । त एते पुरतो गोप्तुः शङ्खचक्रगदाभृतः ।
देवदेवस्य युद्धेषु तिष्ठन्त्येव दिवानिशं । तावेव वां उभौ युद्धे हन्तुं मदबलान्वितौ ।
यो गिरीशो गिरावेव वरं दत्त्वाऽधितिष्ठति । युवां हि केवलं युद्धे तिष्ठतः शशरं धनुः ।
गृहीत्वा शत्रुभिः सार्द्धं युद्धं कर्त्तुं समाहृतौ । ईदृशेष्वथ भृत्येषु युद्धं कुर्व्वत्सु शत्रुभिः ।   ११८१०
त्रैलोक्यं रक्षतस्तस्मात् करमिच्छन् व्रजेत कः । हनिष्यत्येव वां युद्धे त्रैलोक्यं योऽधिरक्षति ।
शरेण निशितेनाजौ शार्ङ्गमुक्तेन केवलं । क नः संग्राम इत्येव पुनरेव जगत्पतिः ।
पुष्करे पुण्यगे नित्यमुत गोवर्द्धने गिरौ । मथुरायां प्रयागे वा दर्शयेतां बलानि मे ।
शङ्खचक्रधरे देवे जगत्पालनतत्परे । राजसूयं महायज्ञं यष्टुमिच्छति कः स्वयं ।
वदन् वा स्वस्तिमान् मर्त्यस्तं विना को व्रजेत् सुखं । इदं जाड्यमिदं मौढ्यमिदमत्यद्भुतं वचः ।   ११८१५
इदमिच्छसि चेन्मूढ हास्यतां यासि भूतले । इत्युक्ता सात्यकिर्वीरो हसन्निव भुवि स्थितः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने सात्यकिवाक्ये नवाधिकत्रिशततोऽध्यायः ॥ ३०९ ॥

॥ वैशम्पायन उवाच ॥ ततः क्रुद्धौ महाराज हंसो डिम्भक एव च । इदं वै प्रोचतुर्वाक्यं रोषव्याकुलितेक्षणौ ।
दिधक्षन्तौ दिशः सर्व्वाः सर्व्वान् वीक्ष्य नृपोत्तमान् । करं करेण निष्पीड्य स्मरन्तौ तद्वचो महत् ।
क नु क वा नन्दसूनुः क च रामो बलोत्कटः । इति ब्रुवाणौ साक्षेपौ सात्यकिं सत्यसङ्गरं ।
अरे यादवदायाद किं ब्रूषे नः पुरोगतः । दूतो निर्गच्छ मन्दात्मन् दूतस्त्वमसि सांप्रतं ।   ११८२०
अन्यथा वध्य एव त्वं प्रलपन् परुषं वचः । सत्यं निर्लज्ज एवासि यद्ब्रूया ईदृशं वचः ।
आवामिदं जगत् सर्व्वं शासितुं संयतौ नृपौ । को नाम मानुषे लोके करदो नैव जीवति ।
हत्वा गोपालकान् सर्व्वान् बद्ध्वा यादवकान् बहून् । ग्रहीमः करसर्व्वस्वं ततो गच्छ नराधम ।
अवध्यो दूततां प्राप्तो बहुबद्धं प्रभाषसे । ईश्वरो नौ वरं दाता शस्त्राणामपि च प्रभुः ।

रक्षितारौ महाभूतौ संग्रामं गच्छतोस्तु तौ । पितरं याचयित्वा वै हत्वा गोपालकान् रणे । ११८२५
एते प्रोक्ता भृशं युद्धे कातराः सर्व्व एव हि । हत्वा तान् सबलान् युद्धे पुनर्जेष्याव केशवं ।
संहर्त्तव्या महासेना प्रगृहीतशरासना । गृहीतप्रासमुसला गृहीतकवचा सदा ।
आरूढरथनागाश्वगदापरिघसंकुला । सुप्रभूतेन्धनवती प्रभूतजलवाहना ।
प्रभूतबलसंयुक्ता सकुटीका सतोमरा । सच्छत्रा सध्वजा चैव सघण्टा सायुधाम्बरा ।
कथ्यतां वाहिनी घोरा बलाध्यक्षाः समन्ततः । अवध्य एव गच्छ त्वं न ते मरणतो भयं । ११८३०
संग्रामः पुष्करेऽस्माकं श्वः परश्वोऽपि वा नृप । ततो ग्राह्यावहे वीर्यं केशवस्य बलस्य च ।
ये त्वयोक्ता नृपाः संख्ये तेषां मयि च यद्बलं ।
॥ सात्यकिरुवाच ॥ एष गच्छामि वां हन्तुं श्वः परश्वोऽपि वा नृपौ । यद्येव हि मया वध्यौ न चेद्दूतो भवाम्यहं ।
न हि श्वो वा परश्वो वा युवां कटुकभाषिणौ । दौत्यं हि दुःखमखिलं भवत्येव सदा नृणां ।
अन्यथाऽहं युवां हत्वा ततो यास्यामि निर्वृतिं । कुवीर्य्यौ बाहुदर्पाञ्च दर्पयंश्च नृपाधमौ । ११८३५
शङ्खचक्रगदापाणिः शार्ङ्गधन्वा किरीटभृत् । नीलकुञ्चितकेशाग्रो लम्बबाहुः श्रिया वृतः ।
स सर्व्वलोकप्रभवो विश्वरूपः सुरूपवान् । दैत्यदानवहन्ताऽसौ योगिध्येयः पुरातनः ।
पद्मकिञ्जल्कवदनः श्यामलः सत्यविक्रमः । सृष्टिस्थितिलयस्यैककर्त्ता त्रिजगतां पतिः ।
शरेण निशितेनाशौ दर्पं वां व्यपनेष्यति । इत्युक्त्वा रथमारुह्य प्रतस्थे सात्यकिः किल ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने सात्यकिप्रतिप्रयाणे दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

॥ वैशम्पायन उवाच ॥ प्रविश्य च पुरं विष्णोः सात्यकिः शिनिपुङ्गवः । आचचक्षेऽथ कृष्णाय यथावृत्तं तयोस्तथा । ११८४०
ततः प्रभाते विमले केशवः केशिसूदनः । बलाध्यक्षानुवाचेदं कृतमङ्गलतत्परः ।
सन्नह्यतां बलं सर्व्वं रथकुञ्जरवाजिमत् । अनेकभेरीपणवप्रासासिपरिघाकुलं ।
सध्वजं सपताकञ्च सालङ्कारपरिच्छदं । तथेति ते प्रतिश्रुत्य सर्व्वं चक्रुरदीनगाः ।
वनमाली हली रामो नीलवासाः सितप्रभः । बभौ सैन्यायतो राजन् जगामेन्दुसमप्रभः ।
सात्यकिश्च तथा राजन् प्रगृहीतशरासनः । बभौ क्रोधसमायुक्तो जगामापि महाबलः । ११८४५
अन्ये च यादवाः शूराः प्रगृहीतमहायुधाः । सिंहनादं प्रकुर्व्वन्तो जग्मुरत्यर्थमुत्तमाः ।
आदाय सुदृढं चापं रथमारुह्य दंशिताः । अग्रतो जग्मुरत्यर्थं सेनायाः पुरुषोत्तमाः ।
हरिस्तु रथमारुह्य सन्नद्धं दारुकेण ह । शार्ङ्गं भारसहं घोरं गृहीत्वा सशरं धनुः ।
चक्रपाणिस्तदा शङ्खी गदाशूलशरासिमान् । बद्धगोधाङ्गुलित्राणः पीतवासा जनार्द्दनः ।
पद्ममालावृतोरस्को नवजीमूतसन्निभः । ययौ रथगतो विप्रैः स्तूयमानो मुदाऽन्वितैः । ११८५०
सूतैर्म्मागधपुण्ड्रैश्च गीयमानस्ततस्ततः । आसीच्च सेना सकला यथा काष्ठामथोत्तरां ।
पाञ्चजन्यं मुखे न्यस्य सर्व्वप्राणेन केशवः । दध्मौ महारवं कुर्व्वन् शत्रूणां भयवर्द्धनं ।
आध्मातस्तेन हरिणा स चक्रे शङ्खराट् रवं । रवः स रोदसी राजन् पूरयामास सर्व्वतः ।

तस्मिन् शङ्खे तथाध्माते दध्मुः शङ्खान् सहस्रशः । भेर्य्यश्चापि समाध्माता मृदङ्गा बहवो नृप ।
नेदुरत्यर्थमतुलं घर्मान्ते जलदा यथा । अथाययुर्महाराज पुष्करं पुण्यवर्द्धनं । ११८७५
सरसस्तस्य तीरे तु पुष्करस्य नृपोत्तमाः । प्रतीक्षन् हंसडिम्भकौ युद्धाय समवस्थिताः ।
निवेशं कारयामासुर्यादवाः सर्व्व एव हि । स्वं स्वं यथासुखं राजन् प्रगृहीतकुटीमठं ।
भगवानपि गोविन्दः सरो दृष्ट्वा सुशोभनं । उपस्पृश्य जले तस्मिन् प्रणम्य यतिपुङ्गवान् ।
तयोरागमनं जिष्णुरास्ते तीरे यथासुखं । शृण्वन् वेदध्वनिं विप्राणां ब्राह्मणानां समन्ततः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने कृष्णस्य पुष्करप्रवेशे एकादशाधिकत्रिशततोऽध्यायः
॥ ३११ ॥

॥ वैशम्पायन उवाच ॥ अथ तौ हंसडिम्भकौ जग्मतुः पुष्करं प्रति । प्रगृहीतमहाचापौ सरथौ सध्वजौ नृप । ११८८०
पुरःसरमहाभूतौ संहरन्ताविवोल्बणौ । प्रकुर्व्वन्तौ च वसुधां भस्मना परिवेष्टितौ ।
त्रिपुण्ड्रकललाटान्तौ रुद्राक्षपरिशोभितौ । अन्यौ द्वाविव रुद्रौ तौ लोकसंहारकारकौ ।
ततोऽनुजग्मुः शतशः सैन्यानि नृपसत्तम । अक्षौहिण्यो दशैवासंस्तयोरथ समागताः ।
विचक्रस्तु महाराज दानवो नगसन्निभः । तयोरेव सखा पूर्व्वमासीच्च बलशालिनोः ।
शक्रोऽपि तत्पुरमरः स्थातुं शक्तो न वज्रभृत् । यो हि वीरो महाबाहुर्देवदैत्यसमागमे । ११८८५
देवाश्चिन्नस्तथा राजन् देवेन्द्रमजयत्प्रभुः(?) । अकरोच्च पुरा युद्धं विष्णुना प्रभविष्णुना ।
यो हि द्वारवतीं प्राप्य बबाधे यदुपुङ्गवान् । स तदानीं महाराज श्रुत्वा युद्धमवस्थितः ।
अनेकशतसाहस्रैर्दानवैः परिघायुधैः । वृतः समभवद्दैत्यो दृप्तिदर्पोक्तनृपोत्तमः ।
हंसस्य डिम्भकस्याथ साहाय्यं कर्त्तुमुद्यतः । विचक्रस्याथ दैत्यस्य हिडिम्बो राक्षसेश्वरः ।
अतीव मित्रतां यातो दद्यात् प्राणांश्च संप्रति । राक्षसैरपरैः सार्द्धं शिलाशूलासिपाणिभिः । ११८९०
ययौ तस्य सहायार्थं हिडिम्बः पुरुषादपः । अष्टाशीतिसहस्राणि तस्य रक्षांसि चाभवन् ।
अनुयाता महाराज शिलापरिघपाणयः । तयोस्तत्र महासैन्यं गच्छतोः केशवं प्रति ।
मिश्रितं दैत्यसङ्घैश्च राक्षसैश्च समन्ततः । अत्यद्भुतं महारौद्रं त्रैलोक्यभयदायि च ।
दैत्येन तेन सहितौ जग्मतुः पुष्करं प्रति । तावेतौ हंसडिम्भकौ हन्तुं केशवमञ्जसा ।
ततः श्रुत्वा जरासन्धो विग्रहं यदुपुङ्गवैः । नाकरोन्नृप साहाय्यं शापो मे भवितेति ह । ११८९५
गच्छतोः संयुगं राजन् हंसस्य डिम्भकस्य च । अतित्वरितविक्रान्तास्ते ययुः पुष्करं नृपाः ।
सिंहनादं विमुञ्चन्तः कथयन्तः परस्परं । अहमेव नृपो युद्धं करोमि प्रथमं हरेः ।
इत्यन्नुवन्नृपा राजन् गच्छन्तः केशवं प्रति । संप्राप्तास्ते नृपश्रेष्ठाः पुष्करं पुण्यवर्द्धनं ।
मुनिजुष्टं तपोवृद्धैर्विविधैश्च निषेवितं । अत्यन्तभद्रं लोकेषु पुष्करं प्रथमं नृप ।
पुष्करं पुण्डरीकाक्षो द्वाविव जगतीपते । दर्शनात् स्पर्शनाद्वाऽपि किल्बिषच्छेदिनौ नृप । ११९००
पुष्करं पुण्डरीकाक्षो द्वावेव नृपसत्तम । सेव्यमानो मुनिश्रेष्ठैः सामघोषैर्महात्मभिः ।

द्वावेव हि नरश्रेष्ठ क्षत्रियाणाञ्च नाशकौ । तावुभौ यत्र सहितौ तत्र ते संस्थिता नृपाः ।
दृष्ट्वा तौ च हरिं विष्णुं विष्टरश्रवसं परं । पुष्करं पुण्यनिलयं तीर्थं ब्रह्मनिषेवितं ।
ताभ्यां कुरु नमस्कारं मनसा नृपसत्तम । अशो निःशेषमभवत्तव भूप न संशयः ।
सैन्यं तत्र च संप्राप्तं दैत्यरक्षःसमाकुलं । अनेकभेरीपणवझर्झरीडिण्डिमाकुलं । १५८८६
शाखसंमिश्रपणवं रथोनादसमाकुलं । प्रविश्य सरसस्तीरं पुष्करस्य विशाम्पते ।
दर्शयामास देवेशं युद्धाय समुपस्थितं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने युद्धार्थं हंसडिम्भक सैन्यानां पुष्करागमने द्वादशाधिकद्विशततोऽध्यायः ॥ २१२ ॥

॥ वैशम्पायन उवाच ॥ द्वे सेने सङ्गते राजन् सध्वजेषपरिच्छदे । महापरिघसंकीर्णे गदाशक्तिसमाकुले ।
भेरीझर्झरसंपूर्णे डिण्डिमारावसंकुले । प्रगृहीतमहाशस्त्रे शूलासिवरकार्मुके ।
परस्परकृतोत्साहे चक्राते युद्धमुल्बणं । ते शराः कार्मुकोत्सृष्टा निर्भिद्याथ शरीरिणां । १५८९०
शरीराणि महाराज जग्मुर्दूरं सहस्रशः । भटबाहुर्विनिर्मुक्ताः खड्गा निर्भिद्य वक्षसि ।
स्फुटितास्तु तदा राजन् शिरांस्याहृत्य संययुः । परिघाश्च तदा राजा बाहुभिः परिचोदिताः ।
तिलशस्त्वकुरतुलं शरीरं नृपरक्षसां । दैत्यानां कुर्व्वतां नादमन्योन्यवधकाङ्क्षिणां ।
दैत्यरक्षांसि राजेन्द्र राजानश्च समन्ततः । अन्योन्यं परिघैर्जघ्नुश्चापमुक्तैर्महाशरैः ।
नागा नागैर्महाराज हयाश्चाश्वैः समन्ततः । रथा रथैः समाजघ्नुः सादिनः सादिभिस्तथा । १५८९५
पट्टिशासिशरव्रातैः कुन्तसायककर्षणैः । शक्तिपरिघप्रासपरश्वधसमाकुलैः ।
भिन्दिपालैर्महारौद्रैर्जघ्नुरन्योन्यमाहवे । राक्षसा दानवा राजन् क्षत्रियाश्च समन्ततः ।
शरैश्च भोगिभोगाभैस्तीक्ष्णमन्ये महाबलाः । राक्षसा दानवाश्चान्ये मत्तमातङ्गविक्रमाः ।
अन्योन्यं जघ्निरे राजंश्चापमुक्तैः शिलाशितैः । इतश्चेतश्च धावन्तः कुर्व्वन्तो विस्वरं रवं ।
हताः केचिन्महाराज पेतुरुर्व्व्यां महासिभिः । केचिन्मथितमस्तिष्का गदाभिर्वीर्य्यवत्तमाः । १५९००
भग्नग्रीवा महाराज पट्टिशैः परिघैस्तथा । यमराष्ट्रं गताः केचित् केचित् स्वर्गं समाययुः ।
अप्सरोभिः समासेदुः पश्यन्तः स्वकलेवरं । केचित् स्वांश्च परांश्चैव हत्वा भ्रान्ता इवाभवन् ।
एतस्मिन्नन्तरे राजन् शङ्खा भेर्य्यः सहस्रशः । सस्वनुः सर्व्वतः सैन्यं मृदङ्गा बहवस्तथा ।
मध्यन्दिनगते सूर्य्ये तापं दधति चारवन् । ततः पिशाचा विकृताः कराला निर्णतोदराः ।
राक्षसाश्च महाघोराः पिबन्तः केशशाद्वलं । मुदिता भक्षयामासुः पिबन्तः शोणितं बहु । १५९०५
सञ्चितानि शवान्याशन् कबन्धाः खड्गपाणयः । विभज्य देशं बहुशो युद्धभूमौ शवार्थिनः ।
अथ श्येना बलाश्चैव कङ्का गृध्रास्तथाऽपरे । तुण्डैः शवानि निष्कृष्य भक्षयन्ति ततस्ततः ।
सप्ताशीतिसहस्राणि हता नागा नृपोत्तम । त्रिंशत्सहस्रमयुतं निहता हयसत्तमाः ।
हतं लक्षं महाराज रथानां रथिभिः सह । त्रिंशत्कोट्यो हतास्तत्र सादिनः सायुधा भृशं ।

मध्यन्दिनगते सूर्य्ये हताः केचिच्च निर्गताः । केचिच्च निहता राजन् पुष्करं प्राविशन् सरः । ११९१०
केचिद्भूमिं समालिङ्ग्य हता इत्यब्रुवन् रणे । मुक्तकेशाः पतन्ति स्म रथं सन्त्यज्य केचन ।
सन्दष्टोष्ठपुटाः केचित् सादिनः पुरतो हताः । अत्यद्भुतं महायुद्धमासीत् पुष्करतीर्थके ।
यथा देवासुरं युद्धं पूर्व्वमासीन्नृपोत्तम ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने सङ्कुलयुद्धे त्रयोदशाधिकत्रिशतोऽध्यायः ॥ ३१३ ॥

॥ वैशम्पायन उवाच ॥ एतस्मिन्नन्तरे राजन् द्वन्द्वयुद्धमवर्त्तत । विचक्रं योधयामास शार्ङ्गधन्वा गदाधरः ।
बलभद्रोऽथ हंसेन डिम्भकेन च सात्यकिः । वसुदेवोग्रसेनाभ्यां हिडिम्बः पुरुषादकः । ११९११
शेषाश्च शेषै राजेन्द्र चक्रुर्युद्धमदीनगाः । वासुदेवस्त्रिसप्तत्या दैत्यं वक्षस्यताडयत् ।
शरैर्निशितधाराग्रैर्विस्मयं दर्शयन् रणे । दानवो देवदेवेशं दृढेन निशितेन च ।
शरेणाकर्णमाकृष्य धनुःप्रवरमीश्वरं । जघान स्तनयोर्मध्ये पश्यतस्तु शचीपतेः ।
तेन विद्धोऽथ भगवान् वक्षोदेशे जनार्द्दनः । स्रावयच्छोणितं विष्णुरादिकाले यथा प्रजाः ।
ततः क्रुद्धो हृषीकेशः क्षुरप्रेणाहरद्ध्वजं । अश्वांस्तु चतुरो हत्वा सारथिञ्च शरैस्त्रिभिः । ११९२०
ततो दध्मौ शङ्खवरं यथा तारामये रणे । रथादुत्प्लुत्य सहसा दानवः क्रोधमूर्च्छितः ।
गदां गृह्य महाघोरां दुर्व्वहां वीर्य्यशालिनीं । तया जघान दैत्येन्द्रः किरीटे केशवस्य ह ।
ललाटे च पुनर्विष्णुं सिंहनादं तथाऽनदत् । ततः शिलाञ्च महतीं प्रगृह्य दनुजः किल ।
भ्रामयित्वा शतगुणं प्राहरत् केशवोरसि । तामापतन्तीं संप्रेक्ष्य हस्तेनादाय केशवः ।
जघान च तदा दैत्यं ताडितः स तदा क्षितौ । गतासुरिव संजज्ञे श्वसन्निव पपात ह । ११९२५
प्राप्य संज्ञां तदा दैत्यः क्रोधाद्द्विगुणमाबभौ । आदाय परिघं घोरमिदमाह जनार्द्दनं ।
अनेन तव गोविन्द दर्पं जातं निहन्म्यहं । विक्रमज्ञस्तदा चासि मम देवासुरे रणे ।
तावेव विपुलौ बाहू स एवास्मि जनार्द्दन । तथापि युध्यसे वीर न ज्ञात्वा मम केवलं ।
वारयैनं महाबाहो परिघं बाहुनिःसृतं । इत्युक्त्वा देवदेवेशं शङ्खचक्रगदाधरं ।
चिक्षेप दैत्यो लोकेशं सर्व्वलोकस्य पश्यतः । तं गृह्य बाहुना कृष्णो दुष्टोऽसीति वदन् हरिः । ११९३०
खण्डशः कारयामास खड्गेन निशितेन च । उत्पाट्य वृक्षं दैत्येन्द्रः शतशाखं महाशिखं ।
तेन तं पोथयामास विष्टरश्रवसं प्रभुं । गृह्य तच्चापि खड्गेन तिलशश्च चकार ह ।
विक्रीड्य सुचिरं कृष्णस्तेन दैत्येन माधवः । हन्तुमैच्छत्तदा दैत्यमादाय निशितं शरं ।
आग्नेयास्त्रेण संयोज्य जघानैनं स तेन ह । स सन्दह्य शरो दैत्यं सर्व्वलोकस्य पश्यतः ।
यथा पूर्व्वं जगामाशु करं भगवतः पुनः । हतशिष्टास्तदा दैत्याः पलायन्त दिशो दश । ११९३५
अद्यापि न निवर्त्तन्ते ते गच्छन्तो महोदधिं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने विचक्रवधे चतुर्द्दशाधिकत्रिशतोऽध्यायः ॥ ३१४ ॥

॥ वैशम्पायन उवाच ॥ बलदेवस्तु धर्मात्मा धनुरादाय सत्वरं । जघान हंसं दशभिर्वाणैर्बाणभृतां वरः ।

तं प्रत्यविध्यन्नाराचैर्हंसः पञ्चभिराशुगैः । तमन्तरे हली छित्वा नाराचैर्दशभिः पुनः ।
नाराचेनाशु विव्याध ललाटे हंसमोजसा । घूर्णं पतन् स नाराचस्तस्य संज्ञां समाददे ।
रथोपस्थे चिरं स्थित्वा तूणाद्बाणं समाददे । लब्ध्वा हंसः स संज्ञान्तु विद्धा तेन यदूत्तमं । ११९४०
सिंहवद्व्यनदद्धंसो देवान् विस्मापयन् रणे । ततः क्रुद्धो हली विद्धस्तेन बाणेन माधवः ।
वमन् शोणितमत्यर्थं निशश्वास रणाजिरे । लोहिताविष्टमापन्नः कुङ्कुमार्द्र इवाभवत् ।
नाराचैः सप्तधाहस्तैर्हारयामास माधवः । हंसं हंसगतिं वीरं नीलवासा हलायुधः ।
ते मुक्ता निशिता घोरा नाराचाश्च सुवाजिनः । रथे ध्वजे तथा चापे छत्रे तूणीद्वये नृप ।
पतिताः सर्व्वतो राजन् व्यथाश्चैव तथा दधुः । ततः क्रुद्धो महाराज हंसो वीर्य्यमदान्वितः । ११९४५
शरेण हलिनं विद्धा ध्वजं चिच्छेद केनचित् । शरैश्चतुर्भिरश्वांश्च सूतं प्रेताधिपे ददौ ।
ततः क्रुद्धो हली तस्माद्गदां गृह्य महारणे । अपातयत्स्वबाहुभ्यां हंसं शेष इव श्वसन् ।
तया ध्वजं रथं चक्रमीषां सूतं हलायुधः । बभञ्ज तिलशः सर्व्वं ननाद च पुनः पुनः ।
भूयश्च गदया हंसं चिक्षेप च बलः किल । सोऽपि हंसो गदां गृह्य रथात्तस्मादवापतत् ।
ततस्तौ हंसबलिनौ युयुधाते महारणे । महारथौ महाबाहू लोके प्रथिततेजसौ । ११९५०
अत्यद्भुतौ सुविक्रान्तौ परस्परवधैषिणौ । कृतश्रमौ महायुद्धे सिंहविक्रान्तगामिनौ ।
यथा देवासुरे युद्धे शक्रवृत्रौ पुराऽम्बरे । उभौ संसिक्तसर्व्वाङ्गौ शोणितेन महारणे ।
अत्यन्तखेदितौ युद्धे परस्परबलेन ह । ततश्च दक्षिणं मार्गं बलभद्रोऽभ्यगच्छत ।
सव्यन्तु हंसो राजेन्द्र प्राक्रमात् स्वयमेव हि । पोथयाञ्चक्रतुर्युद्धे गदाभ्यां गजविक्रमौ ।
यथाप्राणं महाबाहू जघ्नतुश्चेतराय वै । अतिप्रसक्तं संग्रामं देवासुररणोपमं । ११९५५
विदधाते महाराज पश्यतां त्रिदिवौकसां । देवाश्च मुनयश्चैव विस्मयं परिजग्मिरे ।
अहो खल्वीदृशं युद्धं दृष्टपूर्व्वं न च श्रुतं । इत्यूचुर्विस्मयवशाद्देवगन्धर्व्वकिन्नराः ।
परस्परकृतोत्साहौ कृतं युद्धं तथाऽद्भुतं । अथ हंसो महाराज दक्षिणं दक्षिणोत्तमः ।
व्यचरन्मार्गमत्यर्थं सव्यन्तु बलवान् बली । निकुञ्च्य जानुनी पूर्व्वं चक्रतुर्गदया भृशं ।
रणं रणविदां श्रेष्ठौ पश्यतां त्रिदिवौकसां । ११९६०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने हंसबलदेवयोर्युद्धे पञ्चदशाधिकद्विशतोऽध्यायः ॥ २१५ ॥

॥ वैशम्पायन उवाच ॥ युद्धं चक्रतुरत्यन्तं ततो डिम्भकसात्यकी । तावुभौ बलिनौ वीरौ प्रख्यातौ क्षत्रियेषु वै ।
कृतश्रमौ महायुद्धे सततं युद्धशोभिनौ । सात्यकिर्दशभिर्वीरो डिम्भकं सत्यविक्रमं ।
अविध्यन्निशितैर्बाणैस्तनमध्ये तथोरसि । स तेन विद्धो बलिना डिम्भकः क्षत्रियोत्तमः ।
नाराचैः पञ्चपञ्चाशैर्विव्याध युधि गर्व्वितः । तावन्तरे वृष्णिवीरो निषिद्धुं चिरमब्रवीत् ।
अथ क्रुद्धो नृपवरो विद्धा सप्तभिराशुगैः । पुनः शतसहस्रेण प्रत्यविध्यत् स सात्यकिं । ११९६५

सात्यकिस्तस्य विक्रान्तो धनुश्चिच्छेद तच्च तत् । अर्द्धचन्द्रेण तीक्ष्णेन डिम्भकस्य च यादवः ।
आजघ्ने डिम्भको राजन् युयुधानं युधाम्बरं । क्षुरप्रेणाथ रौद्रेण तैलधौतेन विक्रमी ।
स तेन विद्धो बाणेन वमन् शोणितकं नृप । अतीव शुशुभे राजन् वसन्ते किंशुको यथा ।
धनुश्चिच्छेद भूयस्तु गृहीतं यत् पुनर्न्नवत् । ततोऽन्यद्धनुरादाय डिम्भको वादवेश्वरं ।
जघान निशितैर्ब्बाणैः सर्व्वंलस्य पश्यतः । स धनुः पुनरत्यर्थं चिच्छेद युधि सात्यकिः । ११९७०
शरेण तीक्ष्णपुङ्खेन डिम्भकस्य दुरात्मनः । ततोऽन्यद्धनुरादाय सत्वरं स नृपोत्तमः ।
धनुषा तेन राजेन्द्र सात्यकिं विव्यधे पुनः । एवं धनूंषि राजेन्द्र शतं पञ्च च पञ्च च ।
छित्त्वा ननाद शैनेयः सर्व्वलस्य पश्यतः । धनुषी तौ परित्यज्य वीरौ डिम्भकसात्यकी ।
खड्गौ प्रगृह्य चात्युग्रौ युद्धाय समुपस्थितौ । तौ हि खड्गविदां श्रेष्ठौ वीरौ डिम्भकसात्यकी ।
द्रौणायनिर्म्महाराज सोमदत्तस्तथैव च । अभिमन्युश्च विक्रान्तो नकुलश्च तथैव च । ११९७५
एते खड्गविदां श्रेष्ठाः कीर्त्तिता युधि सत्तमाः । एतेष्वेतौ नृप श्रेष्ठौ षट्सु वै नृपसत्तमौ ।
तत्र तावसिना युद्धं चक्रतुर्युद्धलालसौ । भ्रान्तमुद्भ्रान्तमाविद्धं प्रविद्धं वर्ज्जितःस्तं ।
आकरं विकरं भिन्नं निर्म्मर्य्यादममानुषं । संकोचितं कुञ्चितं सव्यं आनुविशानु च ।
आच्छितं चित्रकं चित्रं कुद्रवं लवणं धुतं । सर्व्वबाहुर्विनिर्व्वाहुः सव्येतरमयोत्तरं ।
त्रिबाहुस्तुङ्गबाहु च सव्योत्सनमुदासि च । पृष्ठतः प्रथितश्चैव योधिकं प्रथितं तथा । ११९८०
इति प्रकारा द्वात्रिंशच्चक्रतुः खड्गयोधिनौ । पुनश्च प्रहरन्तौ तौ न च श्रममुपेयतुः ।
पुष्करस्थौ महाराज युद्धाय कृतनिश्चयौ । ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः ।
तुष्टुवुस्तौ महाराज जये कृतपरिश्रमौ । अहो वीर्य्यमहो वीर्य्यमनयोर्म्महात्मनोः ।
एतावेव रणे शक्तौ खड्गे धनुषि पारगौ । एकः शिष्यो गिरीशस्य द्रोणस्यान्यो हि धीमतः ।
अर्ज्जुनः सात्यकिश्चैव वासुदेवो जगत्पतिः । त्रय एते महाराज प्रथिताः खड्गे तथा । ११९८५
डिम्भकः शक्तिसत्त्वश्चैव चत्वार एते महारथाः । प्रसिद्धाः सर्व्व एवैते वीर्य्येषु च बलेषु च ।
इति ते देवगन्धर्व्वाः सिद्धा यक्षा महोरगाः । दिवि स्थिताः समं तुष्टुर्युद्धदर्शनलालसाः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने सात्यकिडिम्भकयोर्युद्धे षोडशाधिकशततमोऽध्यायः

॥ ११६ ॥

॥ वैशम्पायन उवाच ॥ वसुदेवोग्रसेनौ च वृद्धौ युद्धेषु निर्वृतौ । जराजरितसर्व्वाङ्गौ पलिताङ्गशिरोधरौ ।
ज्ञानविज्ञानसम्पन्नौ राजमार्गविशारदौ । युयुधाते महाराज राक्षसेन दुरात्मना ।
शरैरनेकसाहस्रैरर्द्दयामासतू रणे । राक्षसेन्द्रं महात्मानं हिडिम्बं पुरुषादकं । ११९९०
हिडिम्बो राक्षसेन्द्रस्तु भक्षयन् सर्व्वतो नरान् । अतिप्रवृद्धो दुष्टात्मा लम्बबाहुर्म्महाहनुः ।
लम्बोदरो विरूपाक्षः पिङ्गकेशो विलोचनः । श्येननासो महारौद्र ऊर्द्ध्वरोमा महाभुजः ।
पर्व्वताकारगात्रश्च दीर्घदंष्ट्रः शिवाननः । लम्बोदरो दीर्घदन्तो गजपायकरः सदा ।

उन्मुक्ताक्षो महोरस्को दीर्घग्रीवो गजोपमः । भक्षयन् मांसपिटकं पिबन् शोणितसञ्चयं ।
गजान् गजैः समाहत्य हयानश्वैर्नृपोत्तम । रथान् रथैः समाहत्य सादिनः सादिभिस्तथा । १४९९०
मनुष्यान् खपुरो दृष्ट्वा भक्ष्यायासं चकार सः । कांश्चिद्धत्वा महाराज वृष्णिपालान् समन्ततः ।
भक्षयामास सहसा हिडिम्बः पुरुषादकः । पातयन्नपुरी रक्षस्तान् जघान विरूपधृक् ।
भक्षयन्नपरान् वृष्णीन् पादातान् राक्षसेश्वरः । चिक्षेप सहसा कांश्चित् हिडिम्बः पुरुषादकः ।
अन्तकाले यथा क्रुद्धो रुद्रः प्राणभृतो नृप । क्षणेनैकेन सर्व्वांस्तान् भक्षयामास राक्षसः ।
केचिद्भीता दिशः प्रापुर्वृष्णयो वीर्य्यशालिनः । केचित्तु भक्षितास्तेन रक्षसा वृष्णिपुङ्गवाः । १५०००
कुम्भकर्णो यथा राजन् हरिसैन्यमभक्षयत् । निःशेषं वृष्णिसैन्यन्तु स्थितं चित्रपटे यथा ।
एतस्मिन्नन्तरे क्रुद्धौ वृद्धौ यादवपुङ्गवौ । धनुर्धृत्य महाघोरं राक्षसस्य पुरः स्थितौ ।
यथा क्रुद्धस्य सिंहस्य मेषौ क्रुद्धतमाविव । व्यादायास्यं महारक्षो दृष्ट्वाऽथ समधावत ।
चिखादिषु विरूपाक्षं पातालतलसन्निभं । पर्य्यधावत्ततो रक्षः खादत् खादत् कलेवरं ।
पूरयामासतुर्वीरौ शरैर्यदुवृषौ नृप । हिडिम्बाख्यं महाघोरं व्यादितास्यमिवान्तकं । १५००५
सर्व्वांस्तान् खादयामास देवशत्रुर्विरूपधृक् । धावति स्म ततो रक्षो व्यादितास्यं भयानकं ।
तयोर्धृत्वा धनुषी बभञ्ज युधि सत्वरं । प्रसार्य्य बाहू दुष्टात्मा राक्षसो विकृताननः ।
वसुदेवं महीपालं राजानं वृद्धसेविनं । ग्रहीतुं रक्षसां श्रेष्ठो यतते नृपसंसदि ।
॥ हिडिम्ब उवाच ॥ एष त्वां भक्षयिष्यामि वसुदेव नृपाधम । उग्रसेन किमर्थं त्वं तिष्ठसे मत्पुरोऽधम ।
आगत्य प्रविशास्यं मे ग्रासभूतौ युवां मम । विधिना निर्म्मितौ वृद्धौ वसुदेव हरेः पितः । १५०१०
बुभुक्षितः श्रमार्त्तश्च युद्धे त्वरितविक्रमः । मन्मुखास्येव गच्छेतां प्रविशन्तौ त्वरान्वितौ ।
युवयोः शोणितं पीत्वा तृप्तिं यास्यामि निर्वृतः । खादामि च पुनर्मांसं युवयोर्वृद्धयोः सुखं ।
इति ब्रुवंस्तदा क्रुद्धो व्यादितास्यो महाहनुः । धावति स्म तदा क्षिप्रं हिडिम्बो राक्षसेश्वरः ।
वसुदेवोग्रसेनौ च भीतौ विप्रेक्ष्य सर्व्वतः । दिशोऽभ्यभजतां राजन्भिःशङ्कौ वृष्णिपुङ्गवौ ।
एतस्मिन्नन्तरे दृष्ट्वा बलभद्रः प्रतापवान् । दृष्ट्वा च तौ तथाभूतौ वसुदेवोग्रसेनकौ । १५०१५
वासुदेवं समादिश्य हंसं युध्यन्तमीश्वरं । निर्गत्य चान्तरं तस्य राक्षसस्य दुरात्मनः ।
मा कृथाः साहसं रक्षो मुञ्चैतौ राजसत्तमौ । स्थितोऽस्मि युध्यतां रक्षो मया शत्रून् जिघांसता ।
अहमेव हनिष्ये त्वां कथं तव विभीषिका । इति ब्रुवाणं हलिनं विसृज्य तौ महारणे ।
महानयमसौ दुष्टो भक्ष्यार्थमिममग्रतः । विदार्य्य पूर्व्ववद्वक्त्रं बलभद्रमुपाद्रवत् ।
विसृज्य सशरं चापं राक्षसस्य पुरः स्थितः । मुष्टिं प्रगृह्य बलवान् स्फोटयन् बाहुमुत्तम । १५०२०
हिडिम्बस्त्वथ दुष्टात्मा मुष्टिं कृत्वा भयानकं । जघान वक्षो रामस्य व्यादितास्य इवान्तकः ।
क्रुद्धोऽथ बलभद्रस्तु मुष्टिना तेन ताडितः । जघान मुष्टिना रामो राक्षसेन्द्रमनिन्दितः ।
मुष्टियुद्धं समभवन्नरराक्षसवीरयोः । युध्यतोर्युद्धरङ्गेषु नरराक्षससिंहयोः ।

तयोस्तटपटाशब्दः प्रादुरासीद्भयानकः । अथ राक्षसराजस्तु मुष्टिना राममाहवे ।
जघान वक्षोदेशे तु वज्रेणेव पुरन्दरः । अथ रामो बली चापाम्मुष्टिं संवर्त्य यत्नतः । ११०२५
हिडिम्बं ताडयामास वक्षस्येवं महाद्विपं । तलाभ्यामथ रामस्तु वक्षे हत्वा स राक्षसं ।
स हतस्तलघातेन हिडिम्बो राक्षसेश्वरः । जानुभ्यामपतद्भूमौ गतासुरिव राक्षसः ।
तत उत्पाद्य रामस्तु दोर्भ्यां धंस्त्य राक्षसं । आदाय बाहुवेगेन भ्रामयित्वा पदात्पदं ।
व्याविध्य सुचिरं रामो दर्शयन्नात्मनो बलं । उल्लिख्य राक्षसेन्द्रन्तं सर्व्वलोकस्य पश्यतः ।
गव्यूतिमात्रं चिक्षेप ततो देशाद्धलायुधः । गतासू राक्षसश्रेष्ठस्ततो देशान्निराक्रमत् । ११०३०
ये केचिद्राक्षसास्तत्र हतशेषा महारणे । बलभद्रात्ततो भीता जग्मुश्चैव दिशो दश ।
अथांशुमाली भगवान् दिनेशः संहृत्य तेजांसि सहस्ररश्मिः । अस्तं ययौ चक्षुरपि प्रजानामीषत्तमश्चापि समाविवेश ।
तस्मिन् प्रविष्टेऽथ समुद्रतोयं प्रजापतौ विश्वमुखे जगद्गुरौ । नक्षत्रनाथः समुपाजगाम सन्ध्यातमोऽपि व्यनशन्नृपोत्तम ।
प्रभातकाले नृप सत्तमो रणो गोवर्द्धने किन्नरगीतनादिते । इति ब्रुवन्तो नृपसत्तमास्तदा व्युपारमंस्तत्र रणोत्सवं नृप ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने हिडिम्बवधे सप्तदशाधिकद्विशततोऽध्यायः ॥२१७॥
॥ वैशम्पायन उवाच ॥ उभौ तौ हंसडिम्भकौ रात्रावेव महागिरिं । जग्मतुः सहितौ राजन् गोवर्द्धनमथो नृप । ११०३५
अथ प्रभाते विमले सूर्य्ये चाभ्युदिते सति । गोवर्द्धनं जगामाशु केशवः केशिसूदनः ।
शैनेयो बलभद्रश्च यादवाः सारणादयः । गन्धर्व्वैरप्सरोभिश्च नादितं बहुधा गिरिं ।
तस्येतरं नृपश्रेष्ठ पार्श्वं संप्राप्य यादवाः । निकषा यमुनां राजंस्ततो युद्धमवर्त्तत ।
हंसेन डिम्भकेनाथ यादवैश्च समन्ततः । उग्रसेनस्त्रिसप्तत्या शराणां नतपर्व्वणां ।
विव्याध हंसडिम्भकौ वसुदेवश्च सप्तभिः । सारणः पञ्चविंशत्या दशभिः कङ्क एव च । ११०४०
निशठस्तु त्रिसप्तत्या सात्यकिश्चापि सप्तभिः । अशीत्या विपृथू राजन्नुद्धवो दशभिः शरैः ।
प्रद्युम्नस्त्रिंशता राजन् साम्बश्चापि च सप्तभिः । अनाधृष्टिस्त्रिकषष्ट्या शराणां नतपर्व्वणां ।
एवं ते सहिता राजंश्चक्रुर्युद्धमदीनवत् । अत्यद्भुतं महाघोरं यादवाः सर्व्व एव च ।
चक्रुस्ताभ्यां महायुद्धं वासुदेवस्य पश्यतः । सर्व्वानपि महाराज यादवान् बलदर्पितान् ।
तावुभौ हंसडिम्भकौ नृपांस्तान् प्रत्यविध्यतां । प्रत्येकं दशभिर्विद्धा बाणैर्निशितसत्तमैः । ११०४५
जघ्नतुश्च शरैस्तीक्ष्णैरत्यर्थं यादवेश्वरान् । व्यथिताः सर्व्व एवैते वमन्तः शोणितं बहु ।
माधवे किंशुका राजन् पुष्पिता इव ते बभुः । भीताश्च यादवा राजन् पलायनपरायणाः ।
एतस्मिन्नन्तरे राजन् वसुदेवात्मजो नृप । वासुदेवो हली युद्धे प्रमुखे धन्विनो तयोः ।
चक्रतुर्युद्धमतुलं स्कन्दशक्राविवाम्बरे । ततो देवाः सगन्धर्व्वाः सिद्धा यक्षा महर्षयः ।
विमानस्थाश्च ददृशुर्युद्धं देवासुरोपमं । ततः प्रादुरभूतां तौ दूतौ भूतेश्वरौ नृप । ११०५०
शूलिना प्रेषितौ युद्धे रक्षार्थं बलिनो तयोः । हंसोऽथ वासुदेवस्य युद्धं चक्रतुरीश्वरौ ।
रामस्य डिम्भकस्यैव संयुक्तौ युद्धकाङ्क्षया । विक्रान्ताः सर्व्व एवैते शस्त्रे शास्त्रे तथा बले ।

शङ्खान् दध्मुः पृथग्राजन् स्वे स्वे वर्गे रथे स्थिताः । ततः कृष्णो हृषीकेशः पाञ्चजन्यं महारवं ।
दध्मौ पद्मपलाशाक्षः सर्वान् विस्मापयन्निव । अथ भूतौ महाघोरौ कम्बोदरशरीरिणौ ।
दुद्रुवतुर्महाराज शङ्खमादाय केशवं । शङ्खेन पीयथा राजन् चक्रतुर्यादवेश्वरं । ११९८५
ताभ्यां समाहतो विष्णुर्हैमवन्मन्दसन्निभौ । ईषत्स्मिताधरो देवः किञ्चित्क्रुद्धश्च सत्वरं ।
रथाद्रथिवरश्रेष्ठौ प्रगृह्य जगत्पतिः । भ्रामयित्वा शतगुणमलातमिव केशवः ।
कैलासस्य समुद्दिश्य प्रचिक्षेप ततो हरिः । तावेत्य तु गिरेः शृङ्गं कैलासस्य महीपतः ।
दृष्ट्वा तत् कर्म देवस्य विस्मयं जग्मतुः परं । हंसस्य दृष्ट्वा तत् कर्म रोषतामायतेक्षणः ।
उवाच वचनं विष्णुं पश्यतां त्रिदिवौकसां । किमर्थं राजसूयस्य विघ्नं चरसि केशव । ११९९०
ब्रह्मदत्तो महीपालो यष्टा तस्य महाक्रतोः । करं दिश यथायोगं यदि प्राणान् प्रकाङ्क्षसे ।
अथ वा त्वं वयं तिष्ठ ततो ज्ञात्वा करं वह । ददासि मन्दपुत्र त्वं ततो यष्टा स मे गुरुः ।
ईश्वरोऽहं सदा राज्ञां देवानामिव शूलधृक् । एवन्ते वीर्यविभवं नाशयिष्यामि संयुगे ।
इत्युक्त्वा समरं चापं शक्रचापोपमं नृप । आकृष्य च यथाप्राणं नाराचेन स केशवं ।
ललाटे विविधे हंसो ललाम इव सोऽभवत् । उवाच सात्यकिं कृष्णो रथं वाहय मे प्रभो । ११९९५
दारुकं पृष्ठवाहन्तु कृत्वा केशव ईश्वरः । आग्नेयमस्त्रं संयोज्य शरे कश्चिच्चिदीश्वरः ।
अनेन त्वां दहाम्यद्य यदि शक्तोऽसि वारय । मत्तं ते बहुयुद्धेन क्षत्रियोऽसि यदा शठ ।
मत्तश्चेत् करमिच्छेस्त्वं दर्शयास्व पराक्रमं । पक्षयो बाधिता हंस पुष्करे संस्थिता त्वया ।
शास्ता त्वं खलु विप्राणां स्थिते मयि नराधम । स्थिते मयि जगन्नाथे हत्वा क्षत्रियकण्टकान् ।
शास्ताऽस्म्यथ सतां लोके दुष्टानां ब्रह्मविद्विषां । शापेन यतिमुख्यानां हत एव नराधम । १२०००
मृत्यवे त्वां निवेद्यास्य रक्षिता ब्राह्मणानहं । इति ब्रुवंस्तदस्त्रन्तु मुमोच युधि केशवः ।
तदस्त्रं वारुणेनाथ हंसोऽपि प्रत्यषेधयत् । वायव्यमथ गोविन्दो मुमोच युधि हंसके ।
तदस्त्रं वारयामास माहेन्द्रेण नृपोत्तमः । अथ माहेश्वरं कृष्णो मुमोचास्त्रं महाहवे ।
रौद्रेण तत्ततो हंसो वारयामास तत्क्षणं । गान्धर्वं राक्षसञ्चैव पैशाचमथ केशवः ।
ब्रह्मास्त्रमथ कौवेरमासुरं याम्यमेव च । चिक्षेपाऽथैतानि हंसस्तु मुमोच युधि सत्वरं । १२००५
वारणार्थं तदस्त्राणां चतुर्णां माधवस्य ह । अथ ब्रह्मशिरो नाम घोरमस्त्रविनाशनं ।
मुमोच हंसमुद्दिश्य केशवः क्रोधमूर्छितः । हंसोऽपि तेन राजेन्द्र वारयामास तं शरं ।
यमुनाप उपस्पृश्य देवदेवो जनार्दनः । अस्त्रं वैष्णवमादाय शरे सन्निहिते हरिः ।
योजयामास भूतात्मा भूतभावनभावनः । येन देवा रणे हत्वा राज्यमापुः पुराऽसुरान् ।
तदस्त्रं योजयामास वधार्थं तस्य भूपते । १२०१०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्वणि हंसडिम्भकोपाख्याने कृष्णस्य वैष्णवास्त्रत्यागे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

॥ वैशम्पायन उवाच ॥ अथ भीतो महारौद्रमकं दृष्ट्वा नृपोत्तम: । हंसो राजा महाराज निश्चेष्ट इव संबभौ ।
उत्प्लुत्य स रथात्तस्माद्यमुनामभ्यधावत । यत्र कृष्णो हृषीकेश: कालीयाहिं ममर्द ह ।
महाह्रदं महारौद्रं यावत्पातालसंस्थितं । तावद्दीर्घं महानीलं कालाञ्जननिभं हि यत् ।
तस्मिन् ह्रदे महाघोरे पपाताथ स हंसक: । हंसे पतति तस्मिंश्च महान् रावो बभूव ह ।
गिरीणां पात्यमानानां समुद्र इव वज्रिणा । रथादुत्प्लुत्य कृष्णोऽपि तस्योपरि पपात ह । ११०८५
देवदेवो जगन्नाथो जगद्विस्मापयन्निव । प्राहरत्तं महाबाहु: पदाभ्यामथ केशव: ।
पादक्षेपं नृपस्तस्मात्लब्ध्वा हंसो नृपोत्तम । ममार च नृपश्रेष्ठ केचिदेवं वदन्ति हि ।
अन्ये पातालमायातो भक्षित: पन्नगैरिति । अद्यापि नैव राजेन्द्र दृष्ट इत्यनुशुश्रुम ।
यथापूर्व्वं जगन्नाथो रथं समुपजग्मिवान् । हते तस्मिन् महाराज धर्म्मपुत्त्रो युधिष्ठिर: ।
अकरोद्राजसूयञ्च तव पूर्व्वपितामह: । यदि जीवेदसौ हंस: को समस्यति तं क्रतुं । ११०९०
स च सर्व्वास्त्रविन्नित्यं रुद्राल्लब्धवर: प्रभो । क्षणादेव महाराज वार्त्तेयं गाममगाहत ।
हतो हंसो ह्रदे दैत्य: कृष्णेन रिपुमर्द्दिना । जगुर्गन्धर्व्वपतयो देवलोके दिवानिशं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसवधे ऊनविंशत्यधिकद्विशततमोऽध्याय: ॥ ११९ ॥
॥ वैशम्पायन उवाच ॥ श्रुत्वा निहतमत्युग्रं भ्रातरं वीर्य्यशालिनं । बलदेवं परित्यज्य युध्यमानं महारणे ।
डिम्भको वीर्य्यसम्पन्नो यमुनामनुजग्मिवान् । तमन्वधावद्वेगेन बलभद्रो हलायुध: ।
हंसोऽपि यत्र पतितस्तत्रासौ निपपात ह । यमुनायां महाराज विलोड्य जलसञ्चयं । ११०९५
अथ क्रुद्धोऽथ डिम्भको भ्रामयित्वा जलं बहु । उन्मज्योन्मज्य सहसा निमज्य च पुन: पुन: ।
न ददर्श तदा राजन् भ्रातरं वीर्य्यशालिनं । उन्मज्याथ महाबाहुर्वासुदेवं विलोक्य च ।
उवाच वचनं राजन् डिम्भको वीर्य्यवत्तम: । अरे गोपालदायाद क्वासौ हंस इति स्थित: ।
वासुदेवोऽपि धर्म्मात्मा यमुनां पृच्छ राजक । इत्यब्रवीत् प्रसन्नात्मा वासुदेव: प्रतापवान् ।
तच्छ्रुत्वा यमुनां भूय: प्रविश्य डिम्भक: किल । बहुप्रकारमुद्वीक्ष्य सर्व्वतो भ्रातृवत्सल: । १११००
विललाप ततो राजा डिम्भको भ्रान्तमानस: । क्व नु गच्छसि राजेन्द्र विहायैकमबान्धवं ।
कुतो भ्रातरितो गच्छे: परित्यज्यैव मामिह । विलप्यैवं नृपश्रेष्ठ डिम्भको भ्रातृवत्सल: ।
आत्मत्यागे मन: कुर्व्वन् यमुनायां महाह्रदे । निमज्योन्मज्य सहसा मरणे कृतनिश्चय: ।
हस्तेन जिह्वामाकृष्य भूयो भूयो विलप्य च । तत: समूलमाकृष्य जिह्वां स ह सहसा स्वयं ।
ममार स जले राजन् डिम्भको नरकाय वै । तस्मिन्नराधमे हंसे डिम्भके च तथा हते । १११०५
आगमत् पुण्डरीकाक्षो भूतान् विस्मापयन्निव । तत: प्रीत: प्रसन्नात्मा वासुदेव: प्रतापवान् ।
गोवर्द्धनेऽथ विश्रम्य बलभद्रसहायवान् । किञ्चित् कालं महाराज पूर्व्वभुक्तमुवास ह ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि डिम्भकमरणे विंशत्यधिकद्विशततमोऽध्याय: ॥ १२० ॥
॥ वैशम्पायन उवाच ॥ यशोदा नन्दगोपश्च कृष्णदर्शनलालसौ । गोवर्द्धनगतं श्रुत्वा वासुदेवञ्च सायजं ।

नवनीतञ्च दधि च पायसं घृतं तथा । परित्यज्य महाराज मथुरामद्दमेव च ।
वत्सवैरपरैः सार्द्धं गोपीभिश्च समन्ततः । जग्मतुः सहसा प्रीतिं तत्र दृष्ट्वा महाबलौ । ११११०
दर्शयामासतुर्देवं पायसानि महान्ति च । नन्दगोपं यशोदाञ्च दृष्ट्वा प्रीतोऽभवद्धरिः ।
अवोचच्च ततो वाक्यं नन्दगोपं सबान्धवं । यशोदां मातरं पश्चाद्वासुदेवः परन्तपः ।
तात मातर्व्रजे कच्चित् कुशलं वाथ गोधने । अपि गावः क्षीरवत्यो वत्सा वत्सतराः पितः ।
अपि वा सुशुभं क्षीरमपि गावः सुशोभनाः । अपि वा दारका मातर्वत्सपालाः पिबन्ति च ।
बहूनि चापि दामानि कीलका अपि वा बहु । तृणानि बहुरूपाणि किं वा सन्ति पितः सदा । ११११५
शकटानि सुगन्धानि किं वा सन्ति पितर्ध्रुवं । अपि गोप्यः पुत्रवत्यो दारकान् किमजीजनन् ।
घाटाः किं बहवो मातरभिज्ञाः सर्व्वतो व्रजे । किं गावः क्षीरमतुलं स्रवन्त्यहरहः पितः ।
हैयङ्गवीनं क्षीराणि दधि वा किमजीजनम् । गोधनं सर्व्वमेवेदं नीरोगं प्रतिपद्यते ।
॥ नन्द उवाच ॥ सर्व्वमेतद्यदुश्रेष्ठ नीरोगं बहुशः प्रभो । कुशलं गोधनस्यैव सर्व्वकालेषु केशव ।
रक्षणात्तव देवेश सदा कुशलिनो वयं । सगोधनाः सवत्साश्च नीरोगा इव केशव । १११२०
एकमेव सदा दुःखं न त्वां द्रक्ष्यामि केशव । यदेतत् केवलं दुःखमिति धीः शोच्यते सदा ।
॥ वैशम्पायन उवाच ॥ एवमादि विलपन्तं गच्छेत्याह स केशवः । यशोदां पुनराहेदं मातर्गच्छ स्वर्गं प्रति ।
ये च त्वां कीर्त्तयिष्यन्ति ते च स्वर्गमवाप्नुयुः । ये केचित्त्वां नमस्यन्ति ते मे प्रियतराः सदा ।
मद्भक्ताः सर्व्वदा सन्तु गच्छेत्याह च तौ हरिः । इत्युक्त्वा पितरौ देवो वासुदेवः सनातनः ।
गाढमालिङ्ग्य तौ प्रीतौ प्रेषयामास केशवः । यशोदा नन्दगोपश्च जग्मतुः स्वर्गं प्रति । १११२५
ततः कृष्णो हृषीकेशो यादवैः सह वृष्णिभिः । गन्तुमैच्छत्तदा विष्णुः पुरीं द्वारवतीं किल ।
य एतच्छृणुयान्नित्यं पठेद्वाऽपि समाहितः । पुत्रवान् धनवांश्चैव अन्ते मोक्षञ्च गच्छति ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि यशोदानन्दगोपबलभद्रकृष्णसमागमे एकविंशत्यधिकद्विशततमोऽध्यायः
॥ २२१ ॥

॥ वैशम्पायन उवाच ॥ गच्छन्नथ महाविष्णुः पुष्करं प्राप्य यादवैः । अपश्यन्मुनिमुख्यांस्तु पुष्करस्थान्नृपोत्तम ।
ते समेता महादेवं ऋषयो वीतमत्सराः । अर्घ्यादिसमुदाचारं कृत्वेनं यादवोत्तमं ।
प्रोचुर्विश्वेश्वरं विष्णुं भूतभव्यभवत्प्रभुं । अत्यद्भुतमिदं विष्णो तव वीर्य्यं जनार्द्दन । १११३०
येन तौ निहतौ युद्धे हंसो डिम्भक एव च । यौ त्रिचक्रौ दुराधर्षौ देवैरपि सुदुःसहौ ।
सङ्गरे निहतौ देव दुःसाध्य इति नो मतिः । हंसो नः सर्व्वकार्य्येषु चरतां तप उत्तमं ।
निष्कल्मषा भविष्यामस्तव संस्मरणाद्धरे । त्वं हि सर्व्वस्य दुःखस्य हर्त्ता त्वां ध्यायतां सदा ।
त्वदनुस्मरणं जन्तोः सदा पुण्यप्रदं प्रभो । त्वं हि नः सततं धाता विधाता तपसो हरे ।
नमोङ्कारो वषट्कारस्त्वं यज्ञस्त्वं पितामहः । त्वं ज्योतिर्ब्राह्मणो मूर्त्तिस्त्वं ब्रह्मा रुद्र एव च । १११३५
प्राणस्त्वं सर्व्वभूतानामन्तरात्मेति कथ्यसे । उपास्यः सर्व्वभूतानां यज्ञेशानेशजगत्पते ।

नमो विश्वसृजे देव नमस्ते विश्वमूर्त्तये । पाहि लोकमिमं देव हत्वा शत्रुदिषः सदा ।
स तथेति हरिर्विष्णुर्ययौ द्वारवतीं पुरीं । अवसद्वृष्णिभिः सार्द्धं स्तूयमानः स मागधः ।
इयं हि देवदेवस्य चेष्टा हि जनमेजय । प्रोक्ता ते पृच्छते राजन् किमन्यच्छ्रोतुमिच्छसि ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कृष्णस्य द्वारकाप्रत्यागमने द्वाविंशत्यधिकत्रिशततोऽध्यायः ॥ ३२२ ॥

॥ जनमेजय उवाच ॥ भगवन् केन विधिना श्रोतव्यं भारतं बुधैः । फलं किं के च देवाश्च पूज्या वै पारणेष्विह । १६३४०
देयं समाप्ते भगवन् किञ्च पर्व्वणि पर्व्वणि । वाचकः कीदृशश्चात्र एष्टव्यस्तद्ब्रवीहि मे ।

॥ वैशम्पायन उवाच ॥ शृणु राजन् विधिमिमं फलं यच्चापि भारतात् । श्रुताद्भवति राजेन्द्र यत्त्वं मामनुपृच्छसि ।
दिवि देवा महीपाल क्रीडार्थमवनिं गताः । कृत्वा कार्य्यमिदञ्चैव ततश्च दिवमागताः ।
हन्त यत्ते प्रवक्ष्यामि तच्छृणुष्व समाहितः । ऋषीणां देवतानाञ्च सम्भवं वसुधातले ।
अत्र रुद्रास्तथा साध्या विश्वेदेवाश्च शाश्वताः । आदित्याश्चाश्विनौ देवौ लोकपाला महर्षयः । १६३४५
गुह्यकाश्च सगन्धर्व्वा नागा विद्याधरास्तथा । सिद्धा धर्म्मः स्वयम्भूश्च मुनिः कात्यायनो वरः ।
गिरयः सागरा नद्यस्तथैवाप्सरसां गणाः । ग्रहाः संवत्सराश्चैव अयनान्यृतवस्तथा ।
स्थावरं जङ्गमञ्चैव जगत् सर्व्वं सुरासुरं । भारते भरतश्रेष्ठ एकस्थमिह दृश्यते ।
तेषां श्रुत्वा प्रतिष्ठानं नामकर्म्मानुकीर्त्तनात् । कृत्वाऽपि पातकं घोरं सद्यो मुच्येत मानवः ।
इतिहासमिमं श्रुत्वा यथावदनुपूर्व्वशः । संयतात्मा शुचिर्भूत्वा पारं गत्वा च भारते । १६३५०
तेषां श्राद्धानि देयानि श्रुत्वा भारत भारतं । ब्राह्मणेभ्यो यथाशक्त्या भक्त्या च भरतर्षभ ।
महादानानि देयानि रत्नानि विविधानि च । गावः कांस्योपदोहाश्च कन्याश्चैव स्वलङ्कृताः ।
सर्व्वकामगुणोपेता यानानि विविधानि च । भवनानि विचित्राणि भूमिर्वासांसि काञ्चनं ।
वाहनानि च देयानि हया मत्ताश्च वारणाः । शयनं शिविकाश्चैव स्यन्दनाश्च स्वलङ्कृताः ।
यद्यद्गृहे वरं किञ्चिद्यद्यदस्ति महद्वसु । तत्तद्देयं द्विजातिभ्य आत्मा दाराश्च सूनवः । १६३५५
श्रद्धया परया दत्तं क्रमशस्तस्य पारगः । शक्तितः सुमना हृष्टः शुश्रूषुरविकल्पनः ।
सत्यार्ज्जवरतो दान्तः शुचिः शौचसमन्वितः । श्रद्दधानो जितक्रोधो यथा सिध्यति तच्छृणु ।
शुचिः शीलान्विताचारः शुक्लवासा जितेन्द्रियः । संस्कृतः सर्व्वशास्त्रज्ञः श्रद्दधानोऽनसूयकः ।
रूपवान् सुभगो दान्तः सत्यवादी जितेन्द्रियः । दानमानगृहीतश्च कार्य्यो भवति वाचकः ।
अविलम्बमनायस्तमद्रुतं धीरमूर्च्छितं । असंसक्ताक्षरपदं रसभावसमन्वितं । १६३६०
त्रिषष्टिवर्णसंयुक्तमष्टस्थानसमीरितं । वाचयेद्वाचकः स्वस्थः स्वासीनः सुसमाहितः ।
नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ।
ईदृशाद्वाचकाद्राजन् श्रुत्वा भारत भारतं । नियमस्थः शुचिः श्रोता शृण्वन् स फलमश्नुते ।
पारणं प्रथमं प्राप्य द्विजान् कामैश्च तर्पयन् । अग्निष्टोमस्य यागस्य फलं वै लभते नरः ।
अप्सरोगणसंकीर्णं विमानं लभते महत् । प्रहृष्टः स तु देवैश्च दिवं याति समाहितः । १६३६५

द्वितीयं पारणं प्राप्य अतिरात्रफलं लभेत् । सर्व्वरत्नमयं दिव्यं विमानमधिरोहति ।
दिव्यमाल्याम्बरधरो दिव्यगन्धविभूषितः । दिव्याङ्गदधरो नित्यं देवलोके महीयते ।
तृतीयं पारणं प्राप्य द्वादशाहफलं लभेत् । वसत्यमरसङ्काशो वर्षाण्ययुतशो दिवि ।
चतुर्थे वाजपेयस्य पञ्चमे द्विगुणं फलं । उदितादित्यसङ्काशं ज्वलन्तमनलोपमं ।
विमानं विबुधैः सार्द्धमारुह्य दिवि गच्छति । वर्षायुतानि भवने शक्रस्य दिवि मोदते । १११७०
षष्ठे द्विगुणमस्तीह सप्तमे त्रिगुणं फलं । कैलासशिखराकारं वैदूर्य्यमणिवेदिकं ।
परिक्षिप्तञ्च बहुधा मणिविद्रुमभूषितं । विमानं समधिष्ठाय कामगं साप्सरोगणं ।
सर्व्वान् लोकान् विचरते द्वितीय इव भास्करः । अष्टमे राजसूयस्य पारणे लभते फलं ।
चन्द्रोदयनिभं रम्यं विमानमधिरोहति । चन्द्ररश्मिप्रतीकाशैर्हयैर्युक्तं मनोजवैः ।
सेव्यमानो वरस्त्रीणां चन्द्रात्कान्ततरैर्मुखैः । मेखलानां निनादेन नूपुराणाञ्च निस्वनैः । १११७५
अङ्के परमनारीणां सुखसुप्तो विबुध्यते । नवमे क्रतुराजस्य वाजिमेधस्य भारत ।
काञ्चनस्तम्भनिर्व्यूहं वैदूर्य्यकृतवेदिकं । जाम्बूनदमयैर्दिव्यैर्गवाक्षैः सर्व्वतो वृतं ।
सेवितं चाप्सरःसंघैर्गन्धर्व्वैर्दिविचारिभिः । विमानं समधिष्ठाय श्रिया परमया ज्वलन् ।
दिव्यमाल्याम्बरधरो दिव्यचन्दनरूषितः । मोदते दैवतैः सार्द्धं दिवि देव इवापरः ।
दशमं पारणं प्राप्य द्विजातीनभिवन्द्य च । किङ्किणीजालनिर्घोषं पताकाध्वजशोभितं । १११८०
वसुवेदिकसंकाशं वैदूर्य्यमणितोरणं । हेमजालपरिक्षिप्तं प्रवालवलभीमुखं ।
गन्धर्व्वैर्गीतकुशलैरप्सरोभिश्च शोभितं । विमानं सुकृतावासं सुखेनैवोपपद्यते ।
मुकुटेनार्कवर्णेन जाम्बूनदविभूषिणा । दिव्यचन्दनदिग्धाङ्गो दिव्यमाल्यविभूषितः ।
दिव्यान् लोकान् विचरति दिव्यैर्भोगैः समन्वितः । विबुधानां प्रसादेन श्रिया परमया युतः ।
अथ वर्षगणानेवं स्वर्गलोके महीयते । ततो गन्धर्व्वसहितः सहस्राण्येकविंशतिं । १११८५
पुरन्दरपुरे रम्ये शक्रेण सह मोदते । दिव्ययानविमानेषु लोकेषु विविधेषु च ।
दिव्यनारीगणाकीर्णे निवसत्यमरो यथा । ततः सूर्य्यस्य भवने चन्द्रस्य भवने तथा ।
शिवस्य भवने राजन् विष्णोर्याति सलोकतां । एवमेतन्महाराज नात्र कार्य्या विचारणा ।
श्रद्दधानेन वै भाव्यमेवमाह गुरुर्म्मम । लेखकस्य तु दातव्यं मनसा यद्यदिच्छति ।
हस्त्यश्वरथयानानि वाहनञ्च विशेषतः । कटके कुण्डले चैव ब्रह्मसूत्रं तथाऽपरं । १११९०
वस्त्रञ्चैव विचित्रञ्च गन्धञ्चैव विशेषतः । दैववत् पूजयेत्तन्तु विष्णुलोकमवाप्नुयात् ।
अतः परं प्रवक्ष्यामि यानि देयानि भारते । वाच्यमाने तु विप्रेभ्यो राजन् पर्व्वणि पर्व्वणि ।
जातिं देशञ्च सत्त्वञ्च माहात्म्यं भरतर्षभ । धर्म्मवृत्तिञ्च विज्ञाय क्षत्रियाणां नराधिप ।
स्वस्तिवाच्य द्विजानादौ ततः कार्य्यं प्रवर्त्तते । समाप्ते पर्व्वणि ततः स्वशक्त्या पूजयेद्द्विजान् ।
आदौ तु वाचकं तत्र वस्त्रगन्धसमन्वितं । विधिवद्भोजयेद्राजन् मधुपायसमुत्तमं । १११९५

ततो मूलफलप्रायं पायसं मधुसर्पिषा । आस्तीके भोजयेद्राजन् दद्याच्चैव गुडौदनं ।
अपूपैश्चैव पूपैश्च मोदकैश्च समन्वितं । सभापर्व्वणि राजेन्द्र हविष्यं भोजयेद्द्विजान् ।
आरण्यके मूलफलैस्तर्पयेत्तु द्विजोत्तमान् । अरणीपर्व्व चासाद्य जलकुम्भान् प्रदापयेत् ।
तर्पणानि च मुख्यानि वन्यमूलफलानि च । सर्व्वकामगुणोपेतं विप्रेभ्योऽन्नं प्रदापयेत् ।
विराटपर्व्वणि तथा वासांसि विविधानि च । उद्योगे भरतश्रेष्ठ सर्व्वकामगुणान्वितं । ११९००
भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान् । भीष्मपर्व्वणि राजेन्द्र दत्त्वा यानमनुत्तमं ।
ततः सर्व्वगुणोपेतमन्नं दद्यात् सुसंस्कृतं । द्रोणपर्व्वणि विप्रेभ्यो भोजनं परमार्च्चितं ।
शराश्च देया राजेन्द्र चापान्यसिवरास्तथा । कर्णपर्व्वण्यपि तथा भोजनं सार्व्वकामिकं ।
विप्रेभ्यः संस्कृतं सम्यक् दद्यात् संयतमानसः । शल्यपर्व्वणि राजेन्द्र मोदकैः सगुडौदनैः ।
अपूपैस्तर्पणैश्चैव सर्व्वमन्नं प्रदापयेत् । गदापर्व्वण्यपि तथा मुद्गमिश्रं प्रदापयेत् । ११९०५
स्त्रीपर्व्वणि तथा रत्नैस्तर्पयेत्तु द्विजोत्तमान् । घृतौदनं पुरस्ताच्च ऐषीके दापयेत् पुनः ।
ततः सर्व्वगुणोपेतमन्नं दद्यात् सुसंस्कृतं । शान्तिपर्व्वण्यपि तथा हविष्यं भोजयेद्द्विजान् ।
आश्वमेधिकमासाद्य भोजनं सार्व्वकामिकं । तथाश्रमनिवासे तु हविष्यं भोजयेद्द्विजान् ।
मौषले सार्व्वगुणिकं गन्धमाल्यानुलेपनं । महाप्रास्थानिके तद्वत् सर्व्वकामगुणान्वितं ।
स्वर्गपर्व्वण्यपि तथा हविष्यं भोजयेद्द्विजान् । हरिवंशसमाप्तौ तु सहस्रं भोजयेद्द्विजान् । ११९१०
गामेकां निष्कसंयुक्तां ब्राह्मणाय निवेदयेत् । तदर्द्धेनापि दातव्या दरिद्रेणापि पार्थिव ।
प्रतिपर्व्वसमाप्तौ तु पुस्तकं वै विचक्षणः । सुवर्णेन च संयुक्तं वाचकाय निवेदयेत् ।
हरिवंश पर्व्वणि च पायसं तत्र भोजयेत् । पारणे पारणे राजन् यथावद्भरतर्षभ ।
समाप्य सर्व्वाः प्रयतः संहिताः शास्त्रकोविदः । शुभे देशे निवेश्याथ क्षौमवस्त्राभिसंवृताः ।
शुक्लाम्बरधरः स्रग्वी शुचिर्भूत्वा स्वलङ्कृतः । अर्च्चयेत यथान्यायं गन्धमाल्यैः पृथक् पृथक् । ११९१५
संहितापुस्तकान् राजन् प्रयतः सुसमाहितः । भक्ष्यैर्माल्यैश्च पेयैश्च कामैश्च विविधैः शुभैः ।
हिरण्यं गाश्च वस्त्रञ्च दक्षिणामथ दापयेत् । सर्व्वत्र त्रिपलं स्वर्णं दातव्यं प्रयतात्मना ।
तदर्द्धं पादशेषं वा वित्तशाठ्यविवर्ज्जितं । यद्यदेवात्मनोऽभीष्टं तत्तद्देयं द्विजातये ।
सर्व्वथा तोषयेद्भक्त्या वाचकं गुरुमात्मनः । देवताः कीर्त्तयेत् सर्व्वा नरनारायणौ तथा ।
ततो गन्धैश्च माल्यैश्च स्वलङ्कृत्य द्विजोत्तमान् । तर्पयेद्विविधैः कामैर्दानैरुच्चावचैस्तथा । ११९२०
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः । प्राप्नुयाच्च क्रतुफलं तथा पर्व्वणि पर्व्वणि ।
वाचको भरतश्रेष्ठ व्यक्ताक्षरपदस्वरः । भविष्यं श्रावयेद्विद्वान् भारतं भरतर्षभ ।
भुक्तवत्सु द्विजेन्द्रेषु यथावत् संप्रपूजयेत् । वाचकं भरतश्रेष्ठ भोजयित्वा स्वलङ्कृतं ।
वाचके परितुष्टे तु शुभा प्रीतिरनुत्तमा । ब्राह्मणेषु तु तुष्टेषु प्रसन्नाः सर्व्वदेवताः ।
ततो हि वरणं कार्य्यं द्विजानां भरतर्षभ । सर्व्वकामैर्यथान्यायं साधुभिश्च यथाक्रमं । ११९२५

इत्येष विधिरुद्दिष्टो मया ते द्विपदाम्बर। श्रद्दधानेन वै भाव्यं यन्मां त्वं परिपृच्छसि।
भारतश्रवणे राजन् पारणे च नृपोत्तम। सदा यत्नवता भाव्यं श्रेयस्तु परमिच्छता।
भारतं शृणुयान्नित्यं भारतं परिकीर्त्तयेत्। भारतं भवने यस्य तस्य हस्तगतो जयः।
भारतं परमं पुण्यं भारते विविधाः कथाः। भारतं सेव्यते देवैर्भारतं परमं पदं।
भारतं सर्व्वशास्त्राणामुत्तमं भरतर्षभ। भारतात् प्राप्यते मोक्षस्तत्त्वमेतद्ब्रवीमि ते। १११९०
महाभारतमाख्यानं क्षितिं गाञ्च सरस्वतीं। ब्राह्मणान् केशवञ्चैव कीर्त्तयन्नावसीदति।
वेदे रामायणे पुण्ये भारते भरतर्षभ। आदौ चान्ते च मध्ये च हरिः सर्व्वत्र गीयते।
यत्र विष्णुकथा दिव्याः श्रुतयश्च सनातनाः। तच्छ्रोतव्यं मनुष्येण परं पदमिहेच्छता।
एतत् पवित्रं परममेतद्धर्म्मनिदर्शनं। एतत् सर्व्वगुणोपेतं श्रोतव्यं भूतिमिच्छता।
क्रियतेऽसारसंसारे वाञ्छितस्यैककारणं। हरिवंशस्य श्रवणमिति द्वैपायनोऽब्रवीत्। १११९५
अश्वमेधसहस्रेण वाजपेयशतैस्तथा। यत्फलं प्राप्यते पुंसा तद्धरेर्वंशपारणात्।
अजरममरमेकं ध्येयमाद्यन्तशून्यं सगुणमगुणमाद्यं स्थूलमत्यन्तसूक्ष्मं। निरुपममनुमेयं योगिनां ज्ञानगम्यं त्रिभुवनगुरुमीशं त्वां प्रपन्नोऽस्मि विष्णो।
सर्व्वस्तरतु दुर्गाणि सर्व्वो भद्राणि पश्यतु। सर्व्वेषां वाञ्छिता अर्था भवन्त्वस्य च पारणात्।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि सर्व्वपर्व्वानुकीर्त्तने त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

॥ जनमेजय उवाच ॥ त्वत्प्रसादान्महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः। त्रयाणां पुरसंज्ञानां खेचराणां समासतः।
॥ वैशम्पायन उवाच ॥ शृणु विस्तरतः सर्व्वं यन्मां पृच्छसि नैधनं। दैत्यानां बाहुबलिनां सर्व्वप्राणिविरोधिनां। ११२००
शङ्करेण वधं राजन् शरैस्त्रिभिरजिह्मगैः। कृतं पुराऽसुरेन्द्राणां सर्व्वभूतवधैषिणां।
त्रिपुरं पुरुषव्याघ्र वृहद्धातुसमीरितं। विक्रामति नभोमध्ये मेघवृन्दमिवोत्थितं।
प्राकारेण प्रवृद्धेन काञ्चनेन विराजता। मणिभिश्च प्रकाशद्भिः सर्व्वरत्नैश्च तोरणैः।
बभासे नभसो मध्ये श्रिया परमया ज्वलत्। मन्दराणामिवोदग्रं कर्म्मणा साधितं पुरं।
वाजिनः पक्षसंयुक्ता वहन्ति बलदर्पिताः। पुरं प्रभाकरं श्रेष्ठं मनोभिः कामचारिणः। ११२०५
धावन्तो हेषमाणाश्च विक्रान्तैः प्राणसंभृतैः। आक्रमन्त इवाकाशं खुरैः सम्यद्गसप्रभैः।
वायुवेगसमैर्वेगैः कम्पयन्त इवाम्बरं। सर्व्वतः समदृश्यन्त चक्षुर्भिर्विदितात्मभिः।
ऋषिभिर्ज्वलनप्रख्यैस्तपसा दग्धकिल्बिषैः। गीतवादित्रबहुलं गन्धर्व्वनगरोपमं।
चित्रायुधसमाकीर्णैः प्रतप्तकनकप्रभैः। भवनैर्बहुवर्णैश्च प्रांशुभिः समलङ्कृतैः।
देवेन्द्रभवनाकारैः शुशुभे तन्महाद्युति। प्रासादाद्यैः प्रवृद्धैश्च कैलासशिखरप्रभैः। ११२१०
शुशुभे दैत्यनगरं बहुसूर्य्यमिवाम्बरं। चर्य्याट्टालकसम्बाधं तप्तकाञ्चनसप्रभं।
क्ष्वेडितोत्कुष्टबहुलं सिंहनादविनादितं। बभौ वल्गुजनाकीर्णं वनं चैत्ररथं यथा।
समुच्छ्रितपताकं तद्ध्वजैश्च विराजितं। रराज त्रिपुरं राजन् महाविद्युदिवाम्बरे।

सूर्य्यनाभश्च विक्रान्तश्चन्द्रनाभश्च भारत । तथाऽन्ये च महावीर्य्या दानवा बलदर्पिताः ।
मन्दरश्च बभञ्जुश्च मोहिताः परमेष्ठिना । पन्थानं देवगमनं पितृयानञ्च भारत । ११९१५
तैरेवमसुराग्र्यैस्तु प्रगृहीतशरासनैः । दानवैर्नरशार्दूल देवयाने महापथे ।
पितृवह्निपथोपेते हृते भरतसत्तम । ब्रह्माणमभ्यधावन्त सर्व्वे सुरगणास्तदा ।
विवर्णवदना दीनाश्छिन्ने च गतिकर्म्मणि । अब्रुवंस्तापतः स्थित्वा स्वरेणार्त्तनिनादिना ।
हन्यामहे शत्रुगणैर्भागोच्छेदेन भागद । तेषाञ्चैव वधोपायं वदस्व वदताम्वर ।
यं ज्ञात्वा बाहुबलिनो वधेम समरे परान् । सान्त्वयित्वाऽथ वरदो ब्रह्मा प्रोवाच देवताः । ११९२०
शृणुध्वं देवताः सर्व्वाः शत्रुप्रतिकृतिं परां । अवध्या दानवाः सर्व्वे ऋते शङ्करमव्ययं ।
प्रतिगृह्य च तद्वाक्यं मनोभिर्वाग्भिरेव च । भूयो प्रपेदिरे सर्व्वे सहरुद्रैश्च भारत ।
विन्ध्यपादे च मेरौ च मध्ये च पृथिवीतले । तपसोग्रेण योगज्ञाः सर्व्वे ते मुनयो नृप ।
काश्यपेया हरं प्राप्ता जपन्तो ब्रह्मसंहितां । तेषां परमनारीणामभवद्वन्ध्यता जने ।
विन्यस्तदर्भनिचये तासां सोढश्च भूषणं । परिधानानि चर्म्माणि मृदूनि च शुभानि च । ११९२५
स्वयंमृतानां कृष्णानां मृगाणां कुरुसत्तम । गृहीतानि विमुक्तानि देहेभ्यो वनचारिणां ।
अन्तरीक्षमथोपेत्य विविधच्छायया हृताः । हरालयं सुराः सर्व्वे व्याघ्रचर्म्मनिवासिनः ।
प्रणिपत्याथ ते दीना भगवन्तं जगत्पतिं । सुव्यक्तेनाभिधानेन प्रभाषन्ते हरं ततः ।
हविर्हृतमिवाज्ञानाद्भस्मच्छन्नेषु वह्निषु । वरदानं कृथाऽस्मासु भगवन् विमुखे त्वयि ।
यथादेशं यथाकालं क्रियतां ब्रह्मणो वचः । यदुक्तं देवदेवेन खेचराणां समीपतः । ११९३०
एवं देववचोभिश्च भाविनोऽर्थस्य वै बलात् । समनह्यन्महादेवो देवैः सह सवासवैः ।
आदित्या रथमास्थाय सन्नद्धाः समलङ्कृताः । सर्व्वे काञ्चनवर्णाभा बभुर्दीप्ता इवाग्नयः ।
रुद्रेण सहिता रुद्रा दहन्त इव तेजसा । सन्नद्धाश्चारुमुकुटाः प्रांशवः पर्व्वता इव ।
विश्वे विश्वेन वपुषा बलिनः कामरूपिणः । समनह्यन्महात्मानो दानवान्तं विधित्सवः ।
एभिः सह बलाध्यक्षैः समन्तात् परिवारितः । त्रिपुरं योधयन्नुग्रः प्रगृह्य सशरं धनुः । ११९३५
अथ दैत्या भिन्नदेहाः पुराट्टालगता इव । न्यपतन् भुवि देहैस्ते विशीर्णा इव पर्व्वताः ।
अतिविद्धाः सुविद्धाश्च चयाट्टालगता नृप । न्यपतन् दैत्यसंघाश्च वज्रेणेव हता नगाः ।
असिभिश्च हता देवैः शक्तिचक्रपरश्वधैः । बाणैश्च भिन्नमर्म्माणो दैत्येन्द्रा युद्धगोचरे ।
प्रपेतुः सहिता उर्व्यां छिन्नपक्षा इवाचलाः । तत्र सर्व्वा व्यमुह्यन्त तेन दीप्तेन तेजसा ।
एवं तेऽन्योन्यसंबाधे चीयन्ते जयकर्म्मणा । नोपालभ्यन्त चक्षुर्भ्यामपि दिव्येन चक्षुषा । ११९४०
अस्तं प्राप्ते दिनकरे सुरेन्द्रास्ते निशामुखे । छिन्नभिन्नक्षतमुखा निपेतुर्व्वसुधातले ।
अथ दैत्या जयं प्राप्ता निशायां निशितैः शरैः । विनेदुर्विपुलैर्नादैर्मेघा इव महारवाः ।
जयं प्राप्यासुराश्चैव तेऽन्योन्यमभिजल्पिरे । त्रासितास्त्रिदशाः सर्व्वे संग्रामे जयकाङ्क्षिणः ।

अश्माभिर्वज्रसम्पन्नैः सह प्रासासितोमरैः। विरेजुश्च जयं प्राप्ता जम्भोद्यमबोधिताः।
समरे बलसम्पन्नाः सायुधा दैत्यसत्तमाः। सुरैश्च सहितः सर्व्वैरप्रमाणाश्च प्रहरः। १४१८५
दर्पितानभिनद्दैत्यान् प्रभिन्दन्निव वै दिशः। युगान्तकाले विततो रश्मिवानिव निर्द्दहन्।
सर्व्वभूतानि भूताग्र्यः प्रलये समुपस्थिते। स रथो वाजिभिः शीघ्रैरुह्यमानो मनोजवैः।
विबभौ नभसो मध्ये सविद्युदिव तोयदः। स्वनेन महता चैव गर्ज्जमानेव भारत।
भाति स्म स रथो राजन् सेन्द्रायुध इवाम्बुदः। ततोऽम्बरगताः सिद्धाश्चतुर्मुखभवध्वजं।
कर्म्मभिः पूर्व्वजं पूर्व्वैः स्तुतिभिस्तमयकं तदा। ऋषयश्च तपःश्रान्ताः सत्यव्रतपरायणाः। १४१९०
अमृतप्राशिनश्चैव सुरसंघाः सहस्रशः। गन्धर्व्वाश्चोपगायन्ति गान्धर्व्वेण स्वरेण वै।
प्रहृष्टवदनाः सौम्याः पेठुश्च स्थानान्तरे नृप। यथाप्रकाशकसंपन्ने प्रतप्तोन्नतसंकुले।
तस्मिंस्तु दैत्यनगरे सर्व्वभूतभयावहे। ततस्तु शरवर्षाणि मुमुचुर्द्दैत्यदानवाः।
सुराणामरयो मध्ये तीक्ष्णाग्राणि समन्ततः। प्रतप्तोभिश्च निघ्नन्तो मल्लैः शूलैश्च भारत।
ते चक्रिरे महत् कर्म्म दानवा युद्धकोविदाः। गदाभिश्च गदा अन्ये भल्लैर्भल्लांश्च चिच्छिदुः। १४१९५
अस्त्रैरस्त्राण्यबाधन्त मायां मायाभिरेव च। ततोऽपरे समुद्यम्य शरशक्तिपरश्वधान्।
अशनीश्च तथा घोरान् भुशुण्डीन् शतघ्न्यस्तथा। ऋषिभिर्म्मायाविहितैर्द्दैत्यैर्विषयगोचरैः।
ते वध्यमाना विबुधाः शरवर्षैरवस्थिताः। गन्धर्व्वनगराकारः सोऽसीदत् सहसा रथः।
हन्यमानोऽसुरगणैः सार्द्धं प्रासासितोमरैः। दैत्यप्रहरणैश्चैव गुरुभिर्भारसाधिभिः।
चितैश्च बहुभिः शस्त्रैरतिष्ठत शचीपतिः। ततो मध्ये दिव्यशब्दः प्रादुरासीन्महीपते। १४२००
ऋषीणां ब्रह्मपुत्राणां महतामपि भारत। स एष ब्रह्मरत्नाग्र्ये रथो भूमिं प्रतिष्ठितः।
अजेयो जयतां प्राप्तः सर्व्वलोकस्य पश्यतः। तस्मिन्निपतिते राजन् रथानां प्रवरे रथे।
निपेतुः सर्व्वभूतानि वसुधां वसुधाधिप। विचेलुः पर्व्वताग्राणि चेलुश्चैव महाद्रुमाः।
चुक्षुभुः समुद्राश्च न रेजुश्च दिशो दश। शुद्धाश्च ब्राह्मणास्तत्र जजपुः परमं जपं।
यत्तद्ब्रह्ममयं तेजः सर्व्वत्र विजयैषिणां। शान्त्यर्थं सर्व्वभूतानामिह लोके परत्र च। १४२०५
समाधायात्मनात्मानं योगप्राप्तेन हेतुना। रथान्तरेण चाक्राऽप्य ब्रह्मभूतेन भारत।
तेजसा ज्वलयन् विष्णोस्तस्य च महात्मनः। सर्व्वेषां चैव देवानां बलिनां कामरूपिणां।
ऋषीणां तपसाढ्यानां वसतां विजने वने। अथ विष्णुर्म्महायोगी सर्व्वतोदृश्यतत्त्वतः।
वृषरूपं समास्थाय प्रोज्जहार रथोत्तमं। समाक्रान्तं देवगणैः समघवज्रायोधनैः।
स जवात्तोलयित्वा तु विषाणाभ्यां महाबलः। ननाद प्राणयोनिश्च मथ्यमान इवार्णवः। १४२१०
हतौघं वायुविषयं समाक्रम्य विषाणवान्। ननाद सलिलाकारं समुद्र इव पर्व्वणि।
ततो नादेन वित्रस्ता दैतेया युद्धदुर्म्मदाः। पुनस्ते शतशस्तत्र युयुधुः सुरदानवाः।
सर्व्वे वै बाहुशालिनः समर्थबलपौरुषाः। सुरसैन्यं समासन्नाः प्रगृहीतशरासनाः।

अग्निं सन्धाय धनुषि तस्य बाणं सुपत्रितं। ब्रह्मास्त्रेणाभिसंयोज्य ब्रह्मदण्डं शिवोऽव्ययः।

मुमुचे दैत्यनगरे त्रिधा शब्देन संश्रितं। तं बाणं त्रिविधं वीर्य्यात् सन्धाय मनसा प्रभुः। १४११५

सत्येन ब्रह्मयोगेन तपसोग्रेण भारत। मुमुचे दैत्यनगरे सर्व्वप्राणहरान् शरान्।

दीप्तान् कनकवर्णाभान् सुपर्णांश्च सुनिर्म्मलान्। मुक्ता शरवरान् घोरान् स विषानिव पन्नगान्।

सुप्रदीप्तैस्त्रिभिर्बाणैर्वेगिभिस्तद्विदारितं। शतघातप्रदीप्तानि विन्ध्याग्राणीव भारत।

गोपुराणि पुरैः सार्द्धं दह्यमानानि भारत। विशीर्य्यन्त इवाभान्ति मनुजेन्द्र धराधराः।

अग्निना संप्रदीप्तानि वज्रगर्भाणि भारत। धरणीं संप्रपद्यन्त पुराणि वसुधाधिप। १४१२०

तानि वैदूर्य्यवर्णानि शिखराणि गिरेरिव। शङ्करेण प्रदग्धानि ब्रह्माग्रेणापतन्नृप।

हते च त्रिपुरे देवैर्वाचो हर्षात् किलेरिताः। सर्व्वान् जहीति शत्रूंस्त्वं प्रवृद्धान् पुरुषोत्तम।

विष्णुरेव महायोगी योगेन प्रशमयन्निव। स्तूयते ब्रह्मसदृशैर्ऋषिभिः शङ्करेण च।

ब्रह्मणा सहितैर्देवैः सम्पन्नबलपौरुषैः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि त्रिपुरवधे चतुर्विंशत्यधिकद्विशततमोऽध्यायः॥ १२४॥

॥ वैशम्पायन उवाच ॥ हरिवंशेऽत्र वृत्तान्ताः कीर्त्यन्ते क्रमशोदिताः। तत्राद्यमादिसर्गस्तु भूतसर्गस्ततः परः। १४१२५

पृथोर्वैण्यस्य चाख्यानं मनूनां कीर्त्तनं तथा। वैवस्वतकुलोत्पत्तिर्द्धुन्धुमारकथा तथा।

गालवोत्पत्तिरिक्ष्वाकुवंशस्याप्यनुकीर्त्तनं। पितृकल्पस्तथोत्पत्तिः सोमस्य च बुधस्य च।

अमावसोरन्वयस्य कीर्त्तनं कीर्त्तिवर्द्धनं। धुतिप्रतिष्ठे शक्रस्य प्रसवः क्षत्रवृद्धिजः।

दिवोदासप्रतिष्ठा च विश्वङ्गोः क्षत्रियस्य च। ययातिचरितञ्चैव पुरुवंशस्य कीर्त्तनं।

कीर्त्तनं कृष्णसम्भूतेः स्यमन्तकमणेस्तथा। सङ्क्षेपात् कीर्त्तिता विष्णोः प्रादुर्भावास्ततः परं। १४१३०

तारकामययुद्धञ्च ब्रह्मलोकस्य वर्णनं। योगनिद्रासमुत्थानं विष्णोर्वाक्यञ्च वेधसः।

पृथ्वीवासश्च देवानामंशावतरणं तथा। ततो नारदवाक्यञ्च स्वप्नगर्भविधिस्तथा।

आर्य्यास्तवः पुनः कृष्णसमुत्पत्तिः प्रपञ्चतः। गोव्रजे गमनं विष्णोः शकटस्य निवर्त्तनं।

पूतनाया वधो भङ्गो यमलार्ज्जुनयोरपि। वृकसन्दर्शनञ्चैव वृन्दावननिवेशनं।

प्रावृषो वर्णनञ्चापि यमुनाह्रददर्शनं। कालियस्यापि दमनं धेनुकस्य वधस्तथा। १४१३५

प्रलम्बनिधनञ्चैव शरद्वर्णनमेव च। गिरियज्ञप्रवृत्तिश्च गोवर्द्धनविधारणं।

गोविन्दस्याभिषेकञ्च गोपीसंक्रीडनं तथा। रिष्टासुरस्य निधनमक्रूरप्रेषणं तथा।

अन्धकस्य च वाक्यानि केशिनो निधनं तथा। अक्रूरागमनञ्चैव नागलोकस्य दर्शनं।

धनुर्भङ्गस्य कथनं कंसवाक्यमतः परं। कुवलयापीडवधश्चाणूरान्ध्रवधस्तथा।

कंसस्य निधनञ्चापि विलापः कंसयोषितां। उग्रसेनाभिषेकश्च यादवाश्वासनन्तथा। १४१४०

प्रत्यागतिर्गुरुकुलाद्योक्ता रामकृष्णयोः। मथुरायाश्चोपरोधो जरासन्धनिवर्त्तनं।

विकद्रुवाक्यं रामस्य दर्शनं भाषणं तथा। गोमन्तारोहणञ्चापि जरासन्धगतिस्तथा।

गोमन्तस्य गिरेर्दाहः करवीरपुरे गतिः । शृगालस्य बधश्चाथ मथुरागमनं ततः ।
यमुनाकर्षणञ्चैव मथुराधर्षणं तथा । उपायेन बधः कालयवनस्य प्रकीर्त्तितः ।
निर्माणं द्वारवत्यास्तु रुक्मिणीहरणं तथा । विवाहश्चैव रुक्मिण्या रुक्मिणो निधनं तथा । ११२०८
बलदेवाह्निकं पुण्यं बलमाहात्म्यमेव च । नरकस्य बधः पारिजातस्य हरणं तथा ।
निकुम्भस्य बधाख्यानं प्रपञ्चेनैव कीर्त्तितं । प्रभावत्याश्च हरणं वज्रनाभबधस्तथा ।
द्वारवत्या विशेषेण पुनर्निर्माणकीर्त्तनं । द्वारकायां प्रवेशश्च सभायाश्च प्रवेशनं ।
नारदस्य च वाक्यानि वृष्णिवंशानुकीर्त्तनं । षट्पुरस्य बधाख्यानमन्धकस्य निबर्हणं ।
समुद्रयात्रा कृष्णस्य जलक्रीडाकुतूहलं । तथा भैमप्रवीराणां मधुपानप्रवर्त्तनं । ११२१०
ततश्छालिक्यगान्धर्व्वसमुदाहरणं हरेः । भानोश्च दुहितुर्भानुमत्या हरणकीर्त्तनं ।
शम्बरस्य बधश्चैव धन्योपाख्यानमेव च । वासुदेवस्य माहात्म्यं बाणयुद्धं प्रपञ्चितं ।
भविष्यं पुष्करञ्चैव प्रपञ्चेनैव कीर्त्तितं । वाराहं नारसिंहञ्च वामनं बहुविस्तरं ।
कैलासयात्रा कृष्णस्य पौण्ड्रकस्य बधस्ततः । हंसस्य डिम्भकस्यैव बधश्चैव प्रकीर्त्तितः ।
पुरत्रयस्य संहार इति वृत्तान्तसंग्रहः । कथितो नृपशार्दूल सर्व्वपापप्रणाशनः । ११२१२
वृत्तान्तं शृणुयाद्यस्तु सायम्प्रातः समाहितः । स याति वैष्णवं धाम लब्धकामः कुरूद्वह ।
धन्यं यशस्यमायुष्यं भुक्तिमुक्तिफलप्रदं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हरिवंशवृत्तान्तसंग्रहे पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥
॥ जनमेजय उवाच ॥ हरिवंशे पुराणे तु श्रुते मुनिवरोत्तम । किं फलं किञ्च देयं वै तद्ब्रूहि त्वं समासतः ।
॥ वैशम्पायन उवाच ॥ हरिवंशे पुराणे तु श्रुते च भरतोत्तम । कायिकं वाचिकञ्चैव मनसा यदुपार्ज्जितं ।
तत्सर्व्वं नाशमायाति हिमं सूर्य्योदये यथा । अष्टादशपुराणानां श्रवणाद्यत् फलं लभेत् । ११२१४
तत्फलं समवाप्नोति वैष्णवो नात्र संशयः । श्लोकार्द्धं श्लोकपादं वा हरिवंशसमुद्भवं ।
शृण्वन्ति श्रद्धया युक्ता वैष्णवं पदमाप्नुयुः । जम्बूद्वीपं समाश्रित्य श्रोतारो दुर्लभाः कलौ ।
भविष्यन्ति नरा राजन् सत्यं सत्यं वदाम्यहं । स्त्रीभिश्च पुत्रकामाभिः श्रोतव्यं वैष्णवं यशः ।
दक्षिणा चात्र देया वै निष्कत्रयसुवर्णकं । वाचकाय यथाशक्त्या यथोक्तफलमिच्छता ।
स्वर्णशृङ्गीञ्च कपिलां सवत्सां वस्त्रसंयुतां । वाचकाय प्रदद्याद्वै आत्मनः श्रेयकाङ्क्षया । ११२१६
अलङ्कारं प्रदद्याच्च पारणे भरतर्षभ । कर्णस्याभरणं दद्याद्धानञ्च सविशेषतः ।
भूमिदानं समादद्याद्ब्राह्मणाय नराधिप । भूमिदानसमं दानं न भूतं न भविष्यति ।
शृणोति श्रावयेद्वाऽपि हरिवंशन्तु यो नरः । सर्व्वपापविनिर्मुक्तो वैष्णवं पदमाप्नुयात् ।
पितृनुद्धरते सर्व्वानेकादश समुद्भवान् । आत्मानं ससुतञ्चैव स्त्रियञ्च भरतर्षभ ।
दशांशश्चात्र होमो वै कार्य्यः श्रोता नराधिप । इदं मया तवाग्रे च सर्व्वं प्रोक्तं नरर्षभ । ११२१८
स्य श्रवणमात्रेण सर्व्वपापैः प्रमुच्यते । अपुत्रः पुत्रमाप्नोति अधनो धनमाप्नुयात् ।

नरमेधाश्वमेधाभ्यां यत्फलं प्राप्यते नरैः। तत् फलं लभते नूनं पुराणश्रवणान्नरैः।

ब्रह्महा भ्रूणहा गोघ्नः सुरापो गुरुतल्पगः। सकृत्पुराणश्रवणात् पूतो भवति नान्यथा।

इदं मया ते परिकीर्त्तितं महत् श्रीकृष्णमाहात्म्यमपारमद्भुतं । शृण्वन् पठन्वापि समाप्नुयात् फलं यच्चापि लोकेषु सुदुर्लभं महत् ।

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां खिलेषु हरिवंशे भविष्यपर्व्वणि हरिवंशश्रवणफलकीर्त्तने षड्विंशत्यधिकत्रिशततोऽध्यायः ॥ २२६ ॥

॥ समाप्तोऽयं खिलसंज्ञको हरिवंशभट्टारकः ॥

॥ समाप्ता चेयं महाभारतसंहिता ॥

अत्र व्यासोक्ताध्यायश्लोकसंख्यान्यूनाधिक्यं लिपिकरप्रमादात्तद्दोषं ॥

---